# THE KĀDAMBARĪ

OF

## BĀṆABHAṬṬA

AND HIS SON

## (BHUṢAṆABHAṬṬA)

WITH

THE COMMENTARIES OF

## BHĀNUCHANDRA AND HIS DISCIPLE SIDDHACHANDRA

(PROTEGES OF THE EMPEROR AKBAR)



EDITED BY

KĀS'ĪNĀTH PĀṆḌURANG PARAB

Eighth Edition.

REVISED WITH HIS OWN COMMENTARY NAMED CHAṢAKA

BY

MATHURĀNĀTH S'ĀSTRĪ,

PROFESSOR, MAHARAJA SANSKRIT COLLEGE, JAIPUR.

PUBLISHED BY

PĀṆḌURANG JĀWAJĪ,

PROPRIETOR OF THE "NIRṆAYA SĀGAR" PRESS,

BOMBAY.

1940.

*Price 7 Rupees.*

# THE KĀDAMBARĪ

OF

## BĀṆABHAṬṬA

AND HIS SON

## (BHUṢAṆABHAṬṬA)

WITH

THE COMMENTARIES OF

## BHĀNUCHANDRA AND HIS DISCIPLE SIDDHACHANDRA

(PROTEGES OF THE EMPEROR AKBAR)



EDITED BY

KĀS'ĪNĀTH PĀṆḌURANG PARAB

**Eighth Edition.**

REVISED WITH HIS OWN COMMENTARY NAMED CHAṢAKA

BY

MATHURĀNĀTH S'ĀSTRĪ,

PROFESSOR, MAHARAJA SANSKRIT COLLEGE, JAIPUR.

PUBLISHED BY

PĀṆḌURANG JĀWAJĪ,

PROPRIETOR OF THE "NIRṆAYA SĀGAR" PRESS,

BOMBAY.

1940.

*Price 7 Rupees.*

महाकविश्रीबाणभट्ट-तत्तनयविरचिता

# कादम्बरी



महोपाध्यायभानुचन्द्रसिद्धचन्द्राभ्यां कृतया टीकयानुगता

काशीनाथ पाण्डुरङ्ग परब-प्रमुखैः

शोधितपूर्वेयं

जयपुरमहाराजसंस्कृतकॉलेजसाहित्यमहाध्यापक-साहित्याचार्य-

मञ्जुनाथोपाह्व-कविशिरोमणि-

भट्टश्रीमथुरानाथशास्त्रिणा

सम्यक् संस्कृत्य

निजनिर्मितेन 'चषक' नामकटिप्पणेनोपोद्घातेन च संयोजिता

अष्टमं संस्करणम्



सा च

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः

स्वीये निर्णयसागरयन्त्रालये मुद्राप्य प्रकाशिता

सन् १९४०

मूल्यं [illegible]।

श्रीः

विनन्दतु नीलसरोरुहचारु पदद्वयं[1]मुक्तिविकासनकारु ।
यतः किल कीलितकुण्डलिधा[2]म व्यभादिव मञ्जुलमौक्तिकदा[3]म ॥ १ ॥

## उपोद्घातः

'गद्यं कवीनां निकषं वदन्ति ।'

कवेः काव्यकौशलं गद्येनैव पूर्णतया परीक्ष्यत इति हि सर्वथा सत्यम् । पद्यं ह्येकचरणस्यापि सौन्दर्येण संवहत्येव कामप्यभिख्याम् । किन्तु गद्यं सर्वतः सौन्दर्यं विना निजरचयितुः प्रददाति पाण्डित्यपरिचयमनायासादेव । किञ्च पद्ये छन्दोबन्धानुरोधेन न स्वच्छन्दमभिरुचितशब्दशय्या यथावन्निर्वाहयितुं सुशका । किन्तु गद्ये नाऽयं प्रतिबन्धः । अत्र हि यथास्थलविनिवेशितैर्मौक्तिकानुकारिभिः प्रसन्नमधुरैः पदैर्हार इव निजभावोद्गारः सहृदयानां हृदि सुकरतया स्थापयितुं शक्यो यदि हि काव्यसामग्रीदारिद्र्यं न पुरः प्रतिबन्धकं भवति । पद्ये छन्दसोऽनुरोधेन कल्पनायाः शरीरं बलादेवाऽऽकुञ्चनीयं भवति । पुरः प्रदृश्यमानेऽपि हि विस्तृते कल्पनाऽङ्गणे, छन्दःप्रतिबन्धवशात्पङ्गूक्रियते कविरयम् । गद्ये तु हृदयोत्थितं कल्पनोद्गारं यथामनोरथमविकृतरूपेणैव प्रकटयितुं नान्तरायः कश्चित् ।

पद्ये हि नियताक्षरबन्धेनोत्पादिता संगीतानुगामिनी कापि गतिर्निभृततरमुत्पादयति माधुर्यं मानसे, येन हि मनाग्भावशैथिल्येऽपि श्लोकः श्लोक[4]मुपयाति । गद्यं तु पुनरनाविष्कृतभावमाधुर्यं पुर एव पिशुनयति कार्पण्यं कवेः । पदान्तानुप्रास( 'तुक' 'काफिया' )सापेक्षे छन्दसि तु निबद्धार्थनिर्वाहो मन्ये न यस्यकस्यचित्कवेः कार्यम् । तत्र ह्यनुप्रासपरवशो बलादेव स्वाभिप्रेतमर्थं विरूपयति, अप्रचलितशब्दबन्धेन लाञ्छयति वा पदबन्धमात्मीयम् । अत एवाऽक्षराणां विरूपकरणं[5] कविसंप्रदायेनाऽप्यनुमतमेतस्मिन् । एवंविधे छन्दसि विवशतया विरूढेपि वैगुण्ये समालोचकपुंगवस्यापि मनो मनाङ् मार्दवमुपयात्येव । भवति च कश्चिदर्पदेशः कवेरपि स्वकीयामशक्तिं गोपयितुम् । किन्तु गद्ये किञ्चिदप्यवद्ये संघटिते निर्वचनमभ्युपगन्तव्या भवति स्वीयैव स्थूलता । पाशकक्रीडायां पराजितः प्रमादमात्मीयं पाशकानामुपरि निपातयितुमासादयत्यवसरम् । परं बुद्धिबल( शतरञ्ज )क्रीडायां विजितस्य कः स्यादपदेशोऽन्यः? अत एव गद्यगुम्फः पूर्णपरिनिष्ठितस्यैव कवेः कार्यमित्यधिगन्तव्यं भवति । गद्ये हि स्वच्छदर्पण इवाऽविकलं प्रतिफलिता विभाति कवयितुः प्रतिभा । तत एव हि चिरात्प्रसिद्धं कविगोष्ठ्याम्—'गद्यं कवीनां निकषं वदन्ति' इति ।

भारतीयकवीनां सर्वविदितेऽपि सामर्थ्ये, संस्कृतसाहित्यमिदं गद्यकाव्यैर्भूयस्तरां शून्यमिति प्रत्यक्षमीक्ष्यतेऽस्माभिः । प्रसिद्ध्यनुसारम्—भगवतो वाल्मीकेर्यथैव सेयं छन्दोबन्धरीतिर्लोकेऽस्मिन् प्रसृता, तथैवास्या माधुर्यप्रभावस्तथा कविषु बद्धास्पदो बभूव यथा गद्यगुम्फः शनैःशनैर्विरलतामवाप वराकः । पद्यबन्धश्चावश्यकतातोऽप्यधिकमासादयामास प्रसारम् । नाट्यम्, गीतम्, वादित्रम्, काव्यम्, कोषः, आयुर्वेदः, इतिहासः, पुराणम्, धर्मः, दर्शनम्, एतदादिषु सर्वत्र पद्यबन्धस्यैव प्रसारो बभूव । किं बहुना—एकमेकं च मिलित्वा द्वे भवत इति हि गणितशास्त्रमपि पद्यबद्धमेवाऽत्राविरभूत् । पद्यकवितायाः मादकता भारतमात्रस्य वातावरणे तथा दृढतया व्याप्ताऽभूद् यथा व्यतीतेऽपि बहुतिथे समये मदोऽसौ

---

१ उक्तीनां विकासने कारु ( शिल्पि, निपुणम् ) उपास्यदेवतायाः पदद्वयम् । २ सर्पाणां तेजः । ३ छन्दोऽप्येतन्नामकम् । ४ प्रशंसाम् । श्लोकोयं प्रशस्यो भवतीत्यर्थः । ५ 'रलयोर्डलयोश्चैव शषयोर्बवयोस्तथा' इत्यादि । 'अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेत्' इत्यादिः किंवदन्ती च । ६ 'बहाना' ।

*

नास्माकं मस्तिष्काद्व्यपयाति । अधुनापि हि पद्यानां प्रवाहः प्रकामं प्रसृतो विलोक्यते, कामं तानि पद्यानि पद्याभासान्येव भवेयुः परं गद्यनिषद्यायां नास्माकं मनो रमते । यानि किल गद्यकाव्यानि निर्मितानि तान्यपि पद्यमयानि कृत्वा मन्ये प्रमादपरिशोधनमिव क्रियतेऽस्माभिः । अत एव हि कादम्बर्या अपि 'पद्यकादम्बरी'नाम्ना पुनःसंस्करणं पुनर्जन्म वा भवति । श्लोकबद्धं दशकुमारचरितमाविर्भूतमेव पुरा जयपुरात् । अन्यत्किम्, या सिद्धान्तकौमुदी स्वच्छन्दगतिना गद्येन निबद्धाप्यन्तेवासिनां यथावद्बुद्धिगता न भवति, नागेशाद्याः प्रगाढपण्डिता यां टीकाशतैस्तुन्दिलयन्तोपि न तृप्यन्ति सैव पुनः पद्यबन्धे निगडयितुं काम्यते इति किं न्यूनाऽस्माकं पद्यभक्तिः ?

संस्कृतभाषायां गद्यसाहित्यं नासीदिति तु न कथञ्चिद्वक्तुं शक्यते । संहिता–ब्राह्मणकालादेवाऽस्योद्भवो नाम । सूत्र–भाष्याणां काले तु प्राचुर्यमविन्दत गद्यलेख एव । किन्तु सा शैली दार्शनिकं प्रवाहमन्वसरत्, न काव्यसौन्दर्यम् । ततः पक्षधरमिश्र–गदाधरभट्टाचार्यादीनामनन्तरं समुज्जृम्भमाणे शास्त्रार्थयुगेऽवच्छेदकताच्छिन्नैः समासाच्छन्नपदगुच्छकैरेवाऽऽच्छाद्यत संस्कृतगद्याङ्गमिदम् । न केवलं तर्कशास्त्रीया एव, व्याकरणादीनामपि ग्रन्थास्तमेव वीरवेषं वहन्तः पुरा प्रादुरभवन् । महाभारतसंबद्धाद् गद्यभागात्, महाभाष्ये दृष्टेभ्यः 'वासवदत्ता' 'सुमनोत्तरा' 'भैमरथी'त्यादिकथाऽऽख्यायिकानामभ्यश्च बहोः कालात्पूर्वमेव यद्यपि गद्यकाव्यानां प्रादुर्भूतिरनुमातुं शक्या किन्तु साहित्यनियमानुसारी सर्वविदितस्तद्विकासो दण्डिपण्डितादेव प्रारभ्यते । एवं तु ख्रिष्टजन्मतः पूर्वं शतकद्वयमारभ्य ख्रिष्टीयषष्ठशतकपर्यन्तमुपलब्धेषु शिलालेखेष्वपि काव्यशैलीभुक्तानि गद्यानि प्राप्यन्ते किन्तु गद्यकाव्यानां व्यवस्थितं रूपं दण्डिकवेरेव प्रारभ्यत इति वक्तव्यमापतति ।

## दण्डी

कविर्दण्डी दशकुमारचरितं नाम गद्यकाव्यं निर्ममौ यद्धि सर्वत्र सुप्रसिद्धं नात्मपरिचयमपेक्षते । बाणभट्टस्य कादम्बर्यां पदमाधुर्ये वर्णनाचातुर्ये सत्यपि, विशेषणानां बाहुल्यात् सुदीर्घदीर्घैर्वर्णनाऽऽटोपैः कथांशे व्याघातो भवतीति बहूनां कथनम् । दशकुमारचरिते न तथा । परमत्र कथानामत्यन्तमेवाधिक्यं येन हि तासां मनःस्वीकरणमत्यन्तं कठिनम् । दण्डिनः पदलालित्यमपि बहूनां मते प्रसिद्धम् [ एतद्विषये परस्तादालोच्येत ] । अयं हि अनुमानतः ख्रि. षष्ठशताब्द्यामजायत ।

## सुबन्धुः

एतस्य किञ्चिदेवाऽनन्तरं सुबन्धुर्वासवदत्तां नाम 'कथां' निबबन्ध, या हि पदे पदे श्लेष–यमकादिभिर्विभूषिता । अत्र हि शब्दचमत्कारः कामं भवेत्परं विचारमार्मिकतायामर्थस्यौचित्यं बहुत्रैव त्रिस्खलति । शब्दालंकारनिर्वाहे निमीलितनयनो ग्रन्थकृत् कथागतानामर्थानामौचित्योल्लङ्घनमपि नावेक्षते । कथापि न किञ्चित् । परस्परं स्वप्ने विलोकयन्तौ नायिका–नायकौ मिथोऽनुरज्यतः । तदनन्तरं मित्रसहचरो नायकोऽन्विष्यन्नायिकामवाप्नोति । न कथायामाकर्षकं किञ्चिद्वैचित्र्यम् । एकस्मिन्पृष्ठ एव सर्वापि कथा समापयितुं शक्यते । केवलं शब्दचातुर्येणैव ग्रन्थाभोगः पूरितः कविना । किन्तु नेतः पूर्वमेवंविधशैलीभुक्तं किञ्चिदपि 'कथा' काव्यमासीदिति भूयसी प्रशंसा समभूत्साहित्ये । एतस्य समयः ख्रि.षष्ठशतकादुत्तरं सप्तमशतकस्य प्रथमः पादः । यतो हि वासवदत्तावर्णने—'न्यायस्थितिमिव उद्द्योतकरस्वरूपाम्, बौद्धसंगतिमिव अलंकारभूषितां······वासवदत्तां ददर्श' इति वाक्यमुपलभ्यते । अत्र हि न्यायवार्तिककार उद्द्योतकराचार्यः, प्रसिद्धो बौद्धनैयायिको धर्मकीर्तिश्चापि निर्दिष्टोऽस्ति । अनयोः समयः ख्रिष्टस्य षष्ठं शतकमेवैतिहासिकैः स्वीकृतः । अत एव सप्तमशतकस्यादिभाग एव सुबन्धुर्जात इति सामञ्जस्येनोपपद्यते ।

---

१ देवीप्रसादकविचक्रवर्तिमहोदयेन प्रकाशयितुमुपक्रान्ता 'सुप्रभात' पत्रे दृष्टा पुरा । २ नेयं सुबन्धोर्वासवदत्ता । अतिप्राचीनो हि महर्षिः पतञ्जलिः । सुबन्धुस्तु षष्ठशतकोत्पन्नः । ३ 'कवीनामगलद्दर्पो नूनं वासवदत्तया' (हर्षचरितम् ) ।

## कादम्बरीकारः श्रीबाणभट्टः

श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरे-
ऽलंकारे कतिचित्सदर्थविषये चान्ये कथावर्णने ।
आ सर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरी-
संचारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः ॥

एतदुत्तरम्—गद्यकवीनामेव किम्, महाकवीनां चूडामणिर्बाणभट्टः प्रादुर्बभूव । महाकविर्बाणो महाराजाधिराजश्रीहर्षस्य समकालिकः । यतो ह्ययं हर्षचरितनाम्ना श्रीहर्षस्य चरितं वर्णयामास । महाराजः श्रीहर्षवर्धनः ६०६ तमं खिष्टसंवत्सरमारभ्य ६४८ तमं वर्षं यावद्राज्यशासनं कृतवानित्यैतिहासिकानां समयः । अयं हि स्थानेश्वरजनपदनायकस्य प्रभाकरवर्धनस्य पुत्रः । अयं भाग्यशाली महावीरो राजनैतिकश्च सर्वानन्यान्विजित्य उत्तरभारते आत्मनश्चक्रवर्तित्वमास्थापयामास । ६२९ तमं खिष्टीयवत्सरमारभ्य ६४५ तमं यावद्भारते भ्रमन् चीनदेशीयो यात्री 'हाँग्कॉंग्' इत्याख्यो लिखति—'उत्तरभारते तस्मिन्काले श्रीहर्ष एवैकमात्रोऽधिपतिर्बभूव । नासीत्कश्चिदन्यः प्रशासकः ।'

श्रीहर्षस्य राजसभायां मातङ्गदिवाकरो बाणो मयूरश्चेति प्रथिततमाः कवयो बभूवुरिति राजशेखरेणोल्लिखितम् । बाणो मयूरकवेर्भगिनीपतिरासीदिति केचित् । अन्ये तु मयूरो बाणस्य श्वशुर आसीदिति वदन्ति । परं बाणमयूरौ समसामयिकावित्यत्र न संदेहः । मयूरः किल सूर्यशतकस्य निर्माता, यो हि शतकेनानेन सूर्यं स्तुत्वा कुष्ठरोगान्मुक्तो बभूवेति सुप्रसिद्धम् । केचिदिमामपि किंवदन्तीमाहुर्यत्—मयूरवत् बाणोपि विकलाङ्गो बभूव, ततश्च चण्डीशतकेन भगवतीं स्तुत्वा रोगान्मुक्तिमवाप । तदिदं शतकं काव्यमालागुच्छकेषु मुद्रितम् । हर्षचरितम्, कादम्बरीपूर्वार्धम्, चण्डीशतकम्, पार्वतीपरिणयनाटकं चेति बाणस्य कृतिमाहुः । मुकुटताडिकापि बाणकृतेति केचित् । किन्तु नात्र प्रमाणमुपलब्धम् । बहवस्तु—हर्षचरितं कादम्बरी चेत्येव बाणस्य कृतिरित्यसाधयन् ।

अतिसमर्थो बाणकविः । 'गद्यं कवीनां निकषं वदन्ती'ति यन्महत्त्वमारम्भप्रघट्टक एव मया सूचितम्, यस्य च गद्यस्य वासवदत्ता कादम्बरी चेत्येव सर्वोपादेयं संस्कृतसाहित्ये काव्यद्वयमाहुस्तयोरपि च कादम्बरी सर्वोत्तमं गद्यकाव्यमिति मार्मिकाणामुक्तिः । तत्त्वपरीक्षका अभिप्रयन्ति यद् गद्यस्य गुम्फनपाटवं बाणस्यालौकिकम् । यद्धि गद्यं पद्यतोपि सुमधुरम्, लोकानां हृदयाकर्षकम्, कर्णयोः संगीतस्येव सुस्वरलहरीप्रस्तावकं च स्यादेवंविधस्य जन्मदाता बाणमन्तरा नान्यः कश्चन सफलो दृष्टः । दण्डिनो लेखानुसारम्—कथायामोजःप्राधान्यस्पर्शेपि बाणः कादम्बर्यां वर्ण्यमानरसानुरोधेन पाञ्चालीरीतिं सुमधुरतया निरुवाह । वर्णानां गुम्फो मौक्तिकगुम्फमपि भृशमतिशेते—'कमलिनीपलाशानि जललवलाञ्छितान्यादाय, गर्भधूलिकषायपरिमलमनोहराणि च कुमुदकुवलयकमलानि गृहीत्वाऽऽगत्य तस्मिन्नेव लतागृहशिलातले शयनमस्याकल्पयम् ।' इत्यादिभिरेवाक्षरैः को वाऽपरः संपूर्णं प्रकरणं समापयितुं शक्नुयात् ?

अत एव साक्षात्सरस्वतीरूपोऽयमिति प्रशशंसुर्मार्मिकाः—'जाता शिखण्डिनी प्राक् यथा शिखण्डी तथाऽवगच्छामि । प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूव ॥' इति । बाणपरिधृतस्य प्रत्येकपात्रस्य चरित्रचित्रणमतिस्वाभाविकं कथारसानुरूपं च । चातुर्यपूर्वकमालोचनेऽस्य पात्राणां प्रत्येकं चरित्रं परस्परं पृथक्प्रकारकमपि अकृत्रिमं सुस्वाभाविकम् । नामान्यप्यनुकूलानि । सेनापतिर्वीरतोचितो मेघनादः । ब्राह्मणो मन्त्री शुकनासस्तत्पुत्रो वैशम्पायनः, पत्नी मनोरमा । तस्य चरित्रमात्रे महानादरः । पुत्रोत्पत्तौ स्वयं राजा पूर्णपात्रमाहरति । युवराजश्चन्द्रापीडः पितरमिव तमभ्युत्तिष्ठति । तेनौचित्याद्दत्तासनोपि तत्स-

१ शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरिष्यते । शीलाभट्टारिकावाचि बाणोक्तिषु च सा यदि ॥ ( सरस्वतीकण्ठाभरणम् ) ।

विधे भूमावुपविशति। भृत्याश्च तं तारापीडादनन्तरमवबुध्यन्ते। अप्सरःसंभूतानां विद्याधरपत्नीनां गौरी–कादम्बरी–मदिरेत्यादीनि नामानि। एतासां सेवकाः शृङ्गारानुकूलाक्षराः केयूरकमदलेखादयः। देशदेशान्तरेषु संवादवाहकः 'करभकः'।

शृङ्गारमनश्लीलं प्रेक्षामहे। 'औचित्योपनिबन्धस्तु रसस्योपनिषत्परा' इति ध्वनिकृत्। तत्रापि शृङ्गारो रसः परमोज्वलः। अस्यौचित्येन निर्वाहोऽनेन सफलतया कृतः। यद्यपि कुमारीपुरे 'अतिरिक्तं सुरतमिवाभ्यस्यन्तीनाम्' इत्याद्युच्यते, (पृ. ३८१) किन्तु शृङ्गारभूमिकारम्भाय, कुमारीणां प्राप्तयौवनत्वसूचनाय, तन्न तथाऽश्लीलम्। प्रत्युत कुमारस्य शृङ्गारोद्भवाय उपयुक्तमेव तत्।

## लोकचरित्रावेक्षणम्

लोकावेक्षणमपूर्वं बाणस्य। श्रूयते यदयं स्वतन्त्रचरित्रैर्मित्रैः सह भूयांसं कालं स्वतन्त्रतया लोकानां वचनीयतामिवावहन् पर्यन्ततो यथेच्छं बभ्राम। एतस्य मित्रेषु सर्वविधा एव कलाज्ञातारोऽभूवन्। आक्षिक–नर्तक–संवाहक–ताम्बूलिकानारभ्य महाकविप्रभृतयः सर्वे एवाऽभवन्। ज्ञानानुभवाय सोयं प्रघट्टक उल्लिख्यतेऽधस्तात्—

"अभवंश्चास्य वयसा समानाः सुहृदः सहायाश्च। तद्यथा—भ्रातरौ पारशवौ चन्द्रसेनभ्रातृषेणौ, भाषाकविरीशानः परं मित्रम्। प्रणयिनौ रुद्रनारायणौ। विद्वांसौ वारवाणवासवानौ। वर्णकविर्वेणीभारतः प्राकृतकृत्कुलपुत्रो वायुविकारः। वन्दिनावभङ्गबाणसूचीबाणौ। कात्यायनिका चक्रवाकिका। जाङ्गुलिको मयूरकः। ताम्बूलदायकश्चण्डकः। भिषक्पुत्रो मन्दारकः। पुस्तकवाचकः सुदृष्टिः। कलादश्चामीकरः। हैरिकः सिन्धुसेनः। लेखको गोविन्दकः। चित्रकृद्वीरवर्मा। पुस्तककृत्कुमारदत्तः। मार्दङ्गिको जीमूतः। गायनौ सोमिलग्रहादित्यौ। सैरन्ध्री कुरङ्गिका। वांशिकौ मधुकरपारावतौ। गान्धर्वोपाध्यायो दर्दुरकः। संवाहिका केरलिका। लासकयुवा ताण्डविकः। आक्षिक आखण्डलकः। कितवो भीमकः। शैलालियुवा शिखण्डकः। नर्तकी हरिणिका। पाराशरी सुमतिः। क्षपणको वीरदेवः। कथको जयसेनः। शैवो वक्रघोणः। मन्त्रसाधकः करालः। असुरविवरव्यसनी लोहिताक्षः। धातुवादविद्विहङ्गमः। दार्दुरिको दामोदरः। ऐन्द्रजालिकश्चकोराक्षः। मस्करी ताम्रचूडः।" [पीटर्सन इन्ट्रोडक्शन]

कविः किल गुणदोषादीनां सर्वेषामेव मार्मिको भवतीति प्रसिद्ध्यनुसारं सर्वमेव लोकचरित्रमयमेतेषां संगत्या संजग्राह। एतस्य प्रतिफलमस्य काव्येषु स्पष्टमुपलभ्यते। गृहस्थस्य कार्याणि [जन्मारभ्य पालनपर्यन्तानि—यथा प्रसूतायाः किं किं संविधानकमिति मन्ये अतिप्रगल्भाः कुलवृद्धाः स्त्रियोपि न जानीयुर्यानि किल बाणेन चन्द्रापीडप्रसवे वर्णितानि]। संतानार्थं के के व्रत–देवताभ्यर्थनादिकाः क्रियन्ते तेषां सर्वाङ्गपूर्णः कोष इव दर्शितः (चन्द्रापीडकथायाम्)। रुग्णस्य कथमुपचर्या, कानि कान्यरिष्टलक्षणानि, रुग्णावस्थायां रोगिणः का परिस्थितिश्चेष्टा चेति सर्वमविकलं चित्रयामास (हर्षचरिते)। तान्त्रिकाः स्वस्य सिद्धिप्राप्तये, निध्यादीनामुपलम्भाय च कीदृशीमुत्कटां लालसां वहन्ति, कश्च तेषामुपायसंरम्भ इति सर्वाण्यपि साकल्येनोपनिबबन्ध ('जरद्द्रविडधार्मिकस्य' चरिते)। एतदेव सर्वविधं लोकनैपुण्यमवेक्ष्य बाणस्याग्रे कस्यापि कवेः प्रतिभा नाधिकं प्रतिभासते। न च कादम्बर्याः संमुखे किंचिदपि 'कथा'काव्यमुत्कर्षं लभते, लेभे च। एतस्य रोचकतामुपलक्ष्यैव हि 'कादम्बरीरसज्ञेभ्य आहारोपि न रोचते' इति सहृदयसमाजे प्रासिध्यत्।

## बाणश्चान्ये गद्यकाराश्च

गद्यकाव्यकृत्सु सुबन्धुर्दुरूहश्लेषयमकादिशब्दचमत्कारविषये कदाचित्प्रभवेत्परम् औचित्यनिर्वाहे कथासंघटनायां च न बाणतः कथमप्युत्कृष्यत इति पूर्वमुक्तमेव, अतो न पुनः प्रपञ्चनमावश्यकम्। ये पुनर्दण्डिरचनां बाणलेखनीत उत्कृष्टामुल्लपन्तः श्रूयन्ते ते तु रचनापरीक्षणे न मार्मिका इति प्रतिभाति। अत

एव तेषां मतालोचनमनावश्यकमिव। ते हि 'दण्डिनः पदलालित्यम्' इत्याभाणकं श्रुत्वैव तथा जल्पन्ति। किन्तु बाणात्पूर्वं तदिदं सूक्तं कदाचित्संघटितं स्यात्। कादम्बरीसंमुखे तु सेयमुक्तिः 'श्रोतुर्वितन्त्रीरिव ताड्यमाना'। तत्रापि कथाकल्पनबाहुल्यम्, वर्णने विशेषणानामनाधिक्यात्कथानिर्वाहसौकर्यम्, इत्यादिगुणश्चेद्दण्डिनः (दशकुमारचरितस्य) गीयेत तदपि स्यात्सह्यम्। किन्तु पदलालित्यमादाय बाणापेक्षया दण्डी चेदुत्कृष्यते तर्हि समाप्ता काव्यपरीक्षा। न केनचिद्रचनामर्मविदा तदिदं कथंचिन्मृष्येत।

'स्वर्लोकशिखरोरुरुचिररत्नरत्नाकरवेलामेखलायितधरणीरमणीसौभाग्यभोगभाग्यवान्, शरदिन्दुकुन्दघनसारनीहारहारमृणालमरालसुरगजनीरक्षीरगिरिशाट्टहासकैलासकाशनीकाशमूर्त्या रचितदिगन्तरालपूर्त्या कीर्त्याऽभितः सुरभितः, (राजहंसो नाम भूपो बभूव)।' इत्यादिपदबलेनैव किं दण्डी बाणं विजयेत? एवंविधोत्कलिकाप्रायगद्यलेखे हि सिद्धहस्तो बाणः। स्थाने स्थाने च दत्तः परिचयस्तस्य, कियद्वा इहोल्लिख्यताम्? किन्तु 'कथाकाव्यम्' वर्तमानकालिक'उपन्यास Novel'स्थानीयमिति न विस्मर्तव्यं स्यात्। अत एवात्र प्राक्तनसाहित्यकारकृत'कथाख्यायिका'लक्षणानुरोधेन दीर्घसमासताद्योजोगुणस्पर्शेऽपि माधुर्यमेकान्तत एव न गलहस्तयितव्यं भवेत्। मधुराक्षरैरेवोपनिबद्धा कथा सहृदयानां हृदि दृढतरं पदमादधातीति स्वाभाविकी वार्ता। बाणश्च नेदं क्षणमपि विस्मरति। अत एव दीर्घसमासतायामपि 'द्वीपान्तरागतानेकभूमिपालमौलिमालालालितचरणयुगलो वलयमिव लीलया भुजेन भुवनभारमुद्वहन्…… (शूद्रकः प्रथमे वयसि सुखमतिचिरमुवास)' इत्यादिमधुरतरैरक्षरैरुपनिबध्नाति। द्वयोरपि राजवर्णनाक्षरेषु माधुर्यस्य कियत्तारतम्यमिति सहृदयानां हृदयमेव साक्षि।

किञ्च दृश्यताम्—एकमात्रं पद्यं यथा रसस्य कस्यचित्प्रकटनाय प्रभवति तथा गद्यस्य एकमात्रं वाक्यं रसस्य परिपोषे प्रभवेदिति न यत्रकुत्रचिद्दृश्येत। बाणस्यैव लेखनी तदेतस्मिन्प्रकर्षे प्रभवति। विन्ध्याटव्यामगस्त्याश्रमवर्णने आह—'अधुनापि यत्र जलधरसमये गम्भीरमभिनवजलधरनिवहनिनादमाकर्ण्य भगवतो रामस्य त्रिभुवनविवरव्यापिनश्चापघोषस्य स्मरन्तो न गृह्णन्ति शष्पकवलमजस्रमश्रुजललवलुलितदृष्टयो वीक्ष्य शून्या दश दिशो जराजर्जरितविषाणकोटयो जानकीसंवर्धिता जीर्णमृगाः'। (पृ. ४६) अनेन हि कारुण्यार्द्रं हृदयं भवति न वेति कश्चित्सहृदयः पृच्छ्यताम्। 'जललवलुलितदृष्टयो वीक्ष्य शून्या दश दिशः' इत्यनेन मृगाणां कीदृशं प्रत्यक्षं प्रणयदैन्यं चित्रितम्?

अन्यदप्यालोक्यताम्—'तातस्तु तं महान्तमकाण्ड एव प्राणहरमप्रतीकारमुपप्लवमुपनतमालोक्य द्विगुणतरोपजातवेपथुर्मरणभयादुद्भ्रान्ततरलतारको विषादशून्यामश्रुजलप्लुतां दृशमितस्ततो दिक्षु विक्षिपन्, उच्छुष्कतालुरात्मप्रतीकाराऽक्षमस्त्रासस्रस्तसंधिशिथिलेन पक्षसंपुटेनाच्छाद्य मां तत्कालोचितं प्रतीकारं मन्यमानः, स्नेहपरवशो मद्रक्षणाकुलः किंकर्तव्यताविमूढः क्रोडविभागेन मामवष्टभ्य तस्थौ।' (पृ. ७२) अत्र हि मुमूर्षतो जराजीर्णस्य शुकस्य निजशावकोपरि कीदृशमसामान्यं वात्सल्यमङ्कितम्।

हास्यरसस्याऽवतारणं यथा जरद्द्रविडधार्मिकवर्णने—'असकृदभिमन्त्रितसिद्धार्थकाहतिधावितैः पिशाचगृहीतकैः करतलताडननिबिडीकृतश्रवणनासापुटेन [ पिशाचाविष्टानामुपरि अभिमन्त्रितान् सर्षपान्यथैवायं विकिरति तथैवैते धावित्वाऽस्य श्रवणयोर्नासिकायां च चपेटां प्रददति येन चिपिटीकृतश्रवणनासिकोऽयम् ], दिवसमेव मशकक्वणितानुकारि किमपि कम्पितोत्तमाङ्गं गायता, गृहीततुरगब्रह्मचर्यतयाऽन्यदेशागतोषितासु जरत्प्रव्रजितासु बहुकृत्वः संप्रयुक्तस्त्रीवशीकरणचूर्णेन [ अनेन घोटकवत् प्रतिबन्धवशादेव ब्रह्मचर्यं गृहीतं न तु वास्तवम्। अत एव याः प्रदेशाऽऽगता जरत्संन्यासिन्यस्तद्दुर्गामन्दिरे रात्रौ निवसन्ति तदुपरि जरद्द्रविडधार्मिकमहाभागो वशीकरणचूर्णस्य प्रयोगं करोति! ], असकृदुत्सन्नदेवमातृगृहवास्यृक्षनखजर्जरितकपोलेन [ अलीककामुकत्वाभिनयवशात् अभिसारलीलया आरण्यकेषु निर्जन—भग्नदेवगृहेषु महाभागोऽयं प्रविशति यत्र हि तद्गृहवासिभिर्ऋक्षैः शतशोऽयं जर्जरितकपोलो जातः ], शतशः श्रीफलतरुशिखरच्युतिचूर्णितोत्तमाङ्गेन [ लोलुपतया बिल्वफलाहरणाय तद्वृक्षमारोहति। चापल्य-

वशाच्च ततोऽप्यधोमुखः पतति येन निष्क्लेशतया चमत्कुर्वन्मस्तकमस्य चूर्णीभवति ],...जरद्द्रविडधार्मिकेणाधिष्ठितां चण्डिकामपश्यत् ।' (पृ. ४६१-६३)

यस्मादियं किंवदन्ती ('दण्डिनः पदलालित्यम्') लोके प्राचरत्, मूलप्रस्रवणभूतस्य तस्य पद्यस्योपर्यपि किञ्चिदालोचनादृग् दीयते । पद्यं हि—'उपमा कालिदासस्य भारवेरर्थगौरवम् । दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥' इति । अवश्यं महाकवेः कालिदासस्य विषये यदुच्येत तन्न्यूनम् । सिद्धसारस्वतवैभवो महाकविचूडामणिः कालिदासो ह्यनिर्वचनीयेन काव्यगुणगौरवेण गरिष्ठः । अर्थगाम्भीर्यं पदलालित्यं प्रौढिरित्यादिः सर्वोऽप्यभिनन्दनीयः काव्यगुणगणस्तस्मिन्वर्तत इत्युपमापि तस्याऽन्यकविभ्योऽतिशायिनीति न कस्यचिद्विमतिः । प्रतिपदमुपलभ्यते हि तादृशमेवोपमासामञ्जस्यम् । भारवेरर्थगौरवमपि 'स्यादेतत्' इति भङ्ग्या तावत्स्वीकुर्मः । समयान्तरेऽस्य विचारः प्रस्तूयेत । किन्तु 'माघे सन्ति त्रयो गुणाः' इति यच्चतुर्थं चरणं तत्र मन्ये बहूनामेव मार्मिकाणां विचारः प्रसज्येत ।

माघस्य सुन्दरं शिशुपालवधम् । 'नवसर्गे गते माघे नवशब्दो न विद्यते' इति किंवदन्त्यनुसारमपि शब्दगुम्फे प्रौढाऽस्य लेखनी । अलंकारादिविन्यासेन शब्दार्थयोश्चमत्कारोऽपि स्थाने स्थानेऽभिनन्दनीय एव । किन्तु कालिदासस्य पाटवमेकदेशि, यतो हि स उपमाप्रयोगे एव सिद्धहस्तः । भारविरर्थगाम्भीर्यगवेषणायामेव, दण्डी पदलालित्य एव, इति सर्वेऽप्येकैकदेशिकाव्यसौष्ठवे पटिष्ठाः । परं माघः सर्वैरप्येतैर्गुणैर्युक्त इति सार्वदेशिककाव्यसौन्दर्येणाभिनन्दनीय इति यदि पद्यस्यास्य तात्पर्यं तर्हि मन्ये स्पष्टमेव सर्वेषां प्रतीयेत यन्माघस्यातिभक्तिसूचकः प्ररोचनापरोऽयमर्थवाद एव । यतो हि कालिदासतुलनायामपि सर्वथोत्कृष्टो माघः । यतो हि यदर्थं कालिदासस्य प्रशंसा कविसमाजे प्रसक्ता तदेतत् उपमाप्रयोगपाटवम्, तत्त्वस्त्येव माघे । तदधिको गुणस्त्वयं यत्कालिदासः केवलमुपमापटिष्ठ एव, अयं तु अर्थगाम्भीर्यपदलालित्यादिगुणैरप्यभ्यर्हितः । एवं सति कालिदासापेक्षयापि काव्यसौष्ठवसामग्रीसमृद्धत्वं माघस्य, मार्मिकविचारसापेक्षं सिध्येत् ।

बहवः किल संगिरन्ते यन्माघः केवलं 'शब्दकविः' । यथाकथा शब्दगुम्फ एवायं पटुः । अर्थे गाम्भीर्यस्य का कथा, सामान्यत औचित्यमपि तत्र मृग्यमेव । नारदमुनेः कुथ('झूल')धारिणा न केवलं हस्तिना, अपि तु पर्वतानां राज्ञा हिमालयेन सादृश्यं कियदौचित्यमावहति ? मुनेरागमने शान्तिमयी चित्तवृत्तिर्भवेत्, दिव्यप्रभावपूर्णं च सर्वतो वातावरणं स्यादित्येव हि मुनिसमागमवर्णनस्य सौन्दर्यं नाम ।

यथा भारवेः—'मधुरैरवशानि लम्भयन्नपि तिर्यञ्चि शमं निरीक्षितैः ।
परितः पटु बिभ्रदेनसां दहनं धाम विलोकनक्षमम् ॥ १ ॥
प्रसादलक्ष्मीं दधतं समग्रां वपुःप्रकर्षेण जनातिगेन ।
प्रसह्य चेतःसु समासजन्तमसंस्तुतानामपि भावमार्द्रम् ॥ २ ॥'

अत्र तु मुनेरागमने भूमिः कम्पते—('धुते कथंचित्फणिनां गणैरधः') । कुलाचला दोलायन्ते, इत्यादिः खण्डप्रलयस्येव समयः समुपस्थितो भवति । कुतो वा न स्यात्, स्वयं कविः कृष्णनारदयोर्वर्णने आह—'तुषाराञ्जनपर्वताविव !' यत्र हि द्वयोः काल-धवलयोः पर्वतयोः संघर्ष उपतिष्ठति तत्र का वा प्रलये न्यूनता ? भगवतो रामस्य (बलभद्रस्य) यत्स्वरूपं चित्रितं तद्भयंकरं मद्यपायिनमप्यतिशेते । अस्य सभामध्ये आगमन एव घोरेण मद्यगन्धेन व्याप्तोऽभूत्सर्वोपि स्थानोद्देशः । अस्तु. एवं माघस्य वर्णनापाटवमालोचनाचक्रे वक्रेण दृष्टिकोणेन चेत्परीक्ष्यते तर्हि 'माघे सन्ति त्रयो गुणाः' इत्येष प्रस्तावो न किल सर्वसंमत्या स्वीकर्तव्यः सिध्येत्तश्च तत्पद्यगता अन्येप्यंशा विचारणीया एवेत्यलमन्यत्र विचारणीयेन प्रसक्तानुप्रसक्तेन ।

उपर्युक्तेन प्रघट्टकेन बाणरचनायां पदमाधुर्यं त्वसाधारणं सिद्धमेव, किन्तु तत्तद्रसानुकूलं गद्यनिबन्धनचातुर्यमप्यसामान्यं सिध्यति । एतदादिकमेव सर्वमालोच्य प्रोक्तं जयदेवेन—'हृदयवसतिः पञ्चबाणस्तु बाणः' इति । अर्थात् सर्वासामपि कविताकामिनीनां हृदयदत्तस्थानतया सर्वा अपि कविगिरो बाणमाद-

र्शत्वेन उन्नतत्वेन वा सर्वदा स्मरन्तीति रसपरिपोषपाटवमसाधारणं सूच्यते । एतस्मिन्विषये नान्यः कश्चित्कविर्बाणस्य प्रातिद्वन्द्वये स्थातुमशकत् । अत एवालोचनामार्मिकैः प्रोक्तम्—

'युक्तं कादम्बरीं श्रुत्वा कवयो मौनमागताः ।
बाणध्वनावनध्यायो भवतीति श्रुतिर्यतः ॥' [ कीर्तिकौमुदी भा. २ ]

सप्तमशताब्दीत उत्तरं तादृशस्य नवीनगद्यकाव्यस्योत्पत्तिरेव न जातेति वेबरपण्डितादीनां मतम् । बाणसदृशैः समर्थैः पद्यकविताप्रभावो यः किञ्चिल्लोकानां हृदयादपसारितः स पुनर्यथावत्प्रबभूव । किन्तु संस्कृतसाहित्यस्य विगुणदैववशाद्बाणस्य कृतिः कादम्बरी न बाणस्य लेखनीतः पूर्णा बभूव ।

## उत्तरकादम्बरी

पूर्वभागमेव समाप्य लोकान्तरमुपगते महाकवौ बाणे, एवंविधमधुरकथाया अकाण्डे विच्छेदो महते रसविघाताय, पितुः कीर्तिप्रसारप्रतिबन्धाय चेति भावयन् बाणपुत्रस्तदुत्तरभागं विनिर्माय कथां पूरयामास । एतस्य नाम केषांचिन्मतेन 'भूषणभट्टः' इति । अपरे 'पुलिन्दः' इत्याहुः—

'केवलोपि स्फुरन् बाणः करोति विमदान्कवीन् ।
किं पुनः क्लृप्तसंधानः पुलिन्दकृतसंनिधिः ॥' ( धनपालस्य तिलकमञ्जरी )

अन्ये 'पुलिनः' इति नाम निरदिशन् । केषांचन मतेन 'निचुलः' इत्यपि नामधेयम् । एतदपि कथयन्तः केचन श्रुता यत्—

'स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥'

इति मेघदूते महाकविकालिदासेन निर्दिष्टः सोयमेव निचुल इति । सोयं भ्रम एव तेषाम् । महाकविर्बाणस्तत्पुत्रश्च कालिदासस्य बहोः कालादनन्तरं जातः । न तस्य स्मरणं पूर्वभाविना कालिदासेन कर्तुं शक्यते । मेघदूतं चादिमकालिदासस्यैवेति तु क्षेमेन्द्रेण 'कविकण्ठाभरणे' मन्दाक्रान्ताच्छन्दो महाकवेः कालिदासस्यैव सर्वापेक्षया मधुरमिति प्रस्तावे प्रोक्तम् । किञ्च मेघदूते निर्दिष्टेन—चित्रकूटादारभ्य कैलासपर्यन्तेन मेघगमनमार्गेण 'महाकविः कालिदासो भूगोलविषयेपि परममार्मिकोऽभूत्' इति गवेषकैः साध्यते । ततश्च सर्वथा सोऽयमकाण्डसंलाप एव केषांचिदिति निश्चितम् ।

यत्किञ्चिदस्तु, एवंविधः पुत्रो विरलैरेव महाकविभिरवाप्तः स्याद् येन हि अकाण्डे विच्छिन्ना पितुः कृतिरेवमविभावितविभागं संयोजिता स्यात् । सर्वतः काठिन्यमिदमेव यत्पूर्वार्धे नाधिकः कथाभागः सूचितश्च संगृहीतश्च कविना । तत्र हि राज्ञः शूद्रकस्य सविधे शुकस्यागमनम्, तन्मुखेन चन्द्रापीडस्य जन्म, दिग्विजययात्राप्रसङ्गेन महाश्वेताश्रमे गमनम्, तन्मुखात्तस्याः पुण्डरीकेण प्रणयः, समागमात्पूर्वमेव पुण्डरीकस्य देहत्यागः, आकाशवाण्या पुनःसमागमसूचनात्तत्प्रत्याशायां तपश्चरणम्, ततो महाश्वेतानुरोधेन कादम्बरीदर्शनम्, तत्प्रणयः, चन्द्रापीडेन कादम्बरीसविधे पूर्वं प्रापितायाः पत्रलेखायाः कादम्बरीसंदेशं तदुपालम्भं चादाय चन्द्रापीडसविधे आगमनम्, अस्मिन्स्थान एव पूर्वभागस्य समाप्तिर्भवति । पुण्डरीकस्य शापवशाद् वारद्वयं भूमौ चन्द्रमसो जन्मना भाव्यमिति कथासंघटनाय चन्द्रापीडस्य हृदयस्फोटः, पुनस्तेनैव देहेन कादम्बरीसमागमः, पुण्डरीकस्य वैशम्पायननाम्ना जन्म, महाश्वेताशापेन शुकदेहप्राप्तिः, तस्यैव शुकस्य शूद्रकसविधे गमनम्, चन्द्रापीडस्य शूद्रकनाम्ना भूमौ संभवः, शापविमुक्तौ च चन्द्रापीड–पुण्डरीकादीनां सर्वेषां स्वस्वाभीष्टप्राप्तिरिति सर्वोप्यकाण्डविच्छिन्नः कथाभागो बाणपुत्रेणैव संघटित इति महदेव मेधावत्त्वं संघटयितुः सोयं सूचयति ।

अवश्यं बाणो बाण एव, तत्पुत्रश्च तत्पुत्रः । इतिहासपुराणादिषु बाणस्य यद्व्यापकं पाण्डित्यम्, व्याकरणादिषु या व्युत्पत्तिः, रचनायां प्रसादः, अक्षरसंघटनायां माधुर्यम्, एतदादिगुणेषु उत्तरकादम्ब-

र्यामवश्यं न्यूनता विलोक्येत। रचनायाः प्रौढिः, परिपाकश्च वयःक्रमेणैव जायते। श्रीमतो बाणस्यैव हर्षचरिते या रचना तदपेक्षया कादम्बर्यामसाधारण्येव प्रौढिः, प्रौढताप्रकर्षेऽपि अभूतपूर्वमेव माधुर्यम्, प्रतिपदं प्रस्फुरत्प्रसादश्चाप्यवलोक्येत। एष किल परिपाकोऽनुभवेन वयसा च समुत्पद्यते, यौवने न तस्योद्भवः सुसंभवी। अत एवैतत्कृता त्रुटिर्न किञ्चिद् गणनीया। तस्मादेव—'अपि चेदानीमानीतस्यापि कुमारस्य०' इत्यादिः प्रारम्भिक एव वाक्यसंदर्भः परस्परमन्वयेऽर्थांशसंघटने च वाचयितुः काठिन्यमुत्पादयति। किन्तु सर्वतो विकीर्णा विच्छिन्ना च कथा ह्यनेन तथा संघटिता यथा तत्प्रवाहपतिताः सर्वा अपि त्रुटयो न सहृदयस्य मनस्यास्खलन्ति।

वर्तमानकालिकाः 'उपन्यास'कारा घटनावैचित्र्यस्याभिमानमावहन्ति। किन्तु कादम्बरीकथायां घटनागतं तादृशमाश्चर्यं यस्य हि पूर्वापरसंघटनपूर्वकं मार्मिकतयाऽऽलोचने कृते संघटनचतुरस्यापि चेतश्चित्रीयेत। यः शुको यश्च शूद्रकः कथायाः प्रारम्भिके दृश्येऽस्मत्संमुखमायाति, एतदेव दृश्यमन्तिमतया परिणमति। शुकपञ्जरमादाय या 'चाण्डालदारिका' राजसभां प्रविशति तस्या वर्णने—'किरातवेषामिव भवानीम्, नारायणदेहप्रभाश्यामलितामिव श्रियम्, रुधिररक्तचरणामिव कात्यायनीम्, इत्यादीनि पूज्यदेवतासाम्यसूचकानि चाण्डालकन्यकाविशेषणानि हृदये किञ्चिदाश्चर्यम्, कवीनां निरङ्कुशतां च निर्विशङ्कमङ्कुरयन्ति। किन्तु सत्यमेव सा अन्ते लक्ष्मीः परिणमति! किं वर्तमानकालिकोपन्यासघटनातो न्यूनमिदम्? एवंकथानिर्माणपाटवेऽपि कवयितुर्विनयः पितृभक्तिश्च किञ्चिदालोच्यतां यत् कृतिसमाप्तौ स्वस्य नामपर्यन्तमपि न निर्दिष्टम्। 'बाणतनयः' इति संकेतेनैव स्वपरिचयो दत्तः।

## बाणस्य वंशश्चरित्रं च

कान्यकुब्जप्रदेशे शोणनदस्य पश्चिमतटे प्रीतिकूटनामा ग्रामो, बाणभट्टस्य पारम्परिको वासः। वात्स्यगोत्रजातो वैदिकक्रियाकुशलो वैदिकप्रवरः कुबेरनामा पण्डितः सर्वतः पूर्वमिमं ग्राममध्यवात्सीत्। तस्य पुत्रः पाशुपतः, तत्तनयश्चार्थपतिरासीत्। अर्थपतेरेकादश पुत्रा अभूवन्। तेषामष्टमाच्चित्रभानोः राजदेव्यभिधानायां भार्यायामस्माकं चरितनायकस्य महाकविशिरोमणेः श्रीमतो बाणस्य जन्माऽभवत्। बाणस्य जननी शैशव एव परलोकमगात्। चित्रभानुरेव तनयं बाणं मातृवत्परमप्रेम्णा परिपोषयन्, उपाध्यायवदावश्यकं पाठ्यजातं शिक्षयन्, पौगण्डं प्रापयामास। यथाविधिसंस्कारोत्तरं बाणस्य चतुर्दशे वर्षे चित्रभानुर्लोकान्तरमगात्। यौवनसमये संगदोषेण बाणस्य चरित्रे स्वातन्त्र्यमधिकमुदियाय। एतस्य ये ये सहचराः समभवन् तेषां नाम–परिचयादिकं पूर्वं सूचितवानस्मि। तैः साकं स्वदेशान्निर्गतोऽयं नानाविधान्देशान्पर्यटन्, बहूनां नरपालानां सभामुपतिष्ठमानः, नानाविधैः पण्डितैश्च सह सख्यं च संवादं च संवध्नन्नयं बहुतरमेवानुभवं ज्ञानं चोपार्जयामास।

मध्ययौवने देशाटनजन्यं बहुतरं लाभमुपार्ज्य सोयं स्वदेशं प्रत्यावृते। पितृपरम्परातो बाणस्याश्रयदाता कान्यकुब्जेश्वरो हर्षवर्धनो बाणस्यागमनं परिज्ञाय दूतमुखेन तमाजुहाव। लोकानां मुखाद्बाणस्य स्वातन्त्र्यादिविगुणचरितानि पूर्वत एव श्रुतवान् कान्यकुब्जाधिपतिः 'महाभुजङ्गः खल्वयमागतः' इति समीपस्थं सदस्यं प्रति व्याजहार। अतीव मार्मिको बाणो निभृतजल्पितमपि तदाकर्ण्य ज्ञानगौरवान्निजापमानमाकलयन् मनसि परमं चुकोप। 'निजविचारेण निर्णीयतामखिलम्' इति जल्पन् मनस्वी सोयं सगौरवं सभामिमामातस्थौ। अथ प्रसङ्गेन सभास्थितैः परमप्रगल्भैरपि पण्डितैः सह शास्त्रविचारे सर्वाधिकं वैचक्षण्यं ख्यापयन् सोयं कान्यकुब्जेश्वरस्य हृदि परमं गौरवमास्थापयामास। राजा बाणं प्रधानोपाध्यायपदमध्यारोपयामास।

हर्षवर्धनस्य सभायाम् 'मयूरभट्ट–मातङ्गदिवाकर'नामानावन्यावपि राजकवी आस्ताम्। शनैःशनैराभ्यां सह बाणस्य सुदृढः संबन्धोऽभूत्। एनयोरनुरोधेन बाणो हर्षवर्धनस्य चरितं 'हर्षचरित'नाम्ना आख्यायिकाकाव्येन मधुरं निबबन्ध। वयसोऽन्तिमभागे 'कादम्बरी'नामिकामिमां कथामारेभे, यां हि अर्धमात्रामेव निर्माय बाणः परलोकपथिको बभूव। तत्तनयेन 'भूषणभट्टेन' पूरिता साऽस्माकं संमुखगा वर्तते।

अयं बाणभट्टस्य वंशवृक्षः—




## बाणसमये सामाजिकी परिस्थितिः

तस्मिन्समये वेषविन्यासो विचित्र एव प्राप्यते । राज्ञः शूद्रकस्य वर्णनेन ज्ञायेत यद् राजापि केवलं विसंस्थुलप्रायं श्वेतवस्त्रं शिरसि वेष्टयति । अङ्गे च केवलमुत्तरीयं स्कन्धयोर्वहति । यतो ह्यङ्गरागः शरीरे विलिप्यमानः स्फुटमवभासते । सर्वेषामेव पात्राणां वर्णने अङ्गरागस्य सुमहद्बाहुल्यम्, वस्त्रस्य च वैरल्यम् । कादम्बरीप्रेरितः केयूरकनामा वीणावाहकः केवलमधोवस्त्रमेव धारयति, नोत्तरीयमपि–'अधरवास एव केवलं वसानेन······' (पृ. १७४)

वेषविन्यासादिषु वैचित्र्येऽपि बह्व्यः सामाजिकप्रथा वर्तमानकाल इव तदाऽप्यासन् । होलिकायां नानोपद्रवाः, विरूपरूपक(स्वाँग)निःसारणादिप्रथा यथा साम्प्रतमस्ति तथा बाणसमयेऽप्यासीदिति चित्रम् । द्रविडधार्मिकपरिचये यथा—'सर्वदा वसन्तक्रीडिना जनेनोत्क्षिप्तखण्डखट्वारोपितवृद्धदासीविवाहप्रासविडम्बनेन' (पृ. ४६३)

बाणस्य समये आन्ध्रद्रविडसिंहलादिदेशीयाः (आदिमनिवासिनः) मध्यदेशीयै राजभिर्विजित्य स्वाधीना अक्रियन्त । अत एव कृष्णसुदृढगात्रा वीरप्रायास्ते राज्ञां सेवाकार्येषु बहुलतया उपायोज्यन्त । प्रतिष्ठा शोभा च तादृशैः सेवकवर्गैस्तदा भूपालानामज्ञायत । सूच्यते तदिदमैतिहासिकं वृत्तमुज्जयिनी-राजभवनवर्णने—'धवलचन्दनस्थासकखचितभुजोरुदण्डेन बद्धासिधेनुकेनान्ध्रद्रविडसिंहलप्रायेण सेवकजनेन··· '(पृ. १९४)

एवमादयस्तत्सामयिक्यो भूयस्यो घटनाः सूच्यन्तेऽस्मिन् ग्रन्थे, यासां गवेषणेन बहुतरमैतिहासिकं सामाजिकं च तथ्यमवगतं भवति । किन्तु भूमिकायां भूयान् विस्तरः स्यादिति समयान्तरार्थं तत्परित्यज्य वर्णिका('बानगी')मात्रमिह दर्शितम् ।

---

१ 'स्वयं वात्स्यस्तु पुलहात्' इति ब्रह्मवैवर्तपुराणम् । वात्स्यादनन्तराणां बहूनामेव पुरुषाणां नामानि न लभ्यन्ते ।

२ हर्षचरिते स्फुटमिदम् ।

## वर्णनायामत्युक्तयः

सौन्दर्यवर्णनादिष्वत्युक्तयः प्रायः पूर्वत एव प्रचलिताः कवीनां स्वभावसिद्धा इव। 'मुखं दृष्ट्वा चन्द्रोऽयमिति बुद्ध्या पूर्णिमाव्रतकारिणस्तदग्रत एव कुसुमार्घ्यं व्यतरन्।' 'तस्या मुखकान्त्या तत्प्रतिवेशे सर्वास्तिथयः पूर्णिमा एव भवन्ति। अन्यास्तिथयस्तु पञ्चाङ्गेनैव बोध्याः' इत्यादि। एवमुदात्तालंकारविधया राजादीनां समृद्ध्यतिशयोपि पुरातनैः प्रचुरं प्रख्यापित एव। 'राजाश्रितानां कवीनामपि सदनेषु महार्घमुक्तामणयः संमार्जनीभिर्दूरमवक्षिप्यन्ते।' 'वृक्षाणामालवालाश्चन्द्रकान्तमणिभिर्निर्मिताः। अत एव चन्द्रकिरणसंस्पर्शात्प्रस्रवज्जलपूर्णेषु तेषु स्वतः सिच्यन्ते पादपाः।'

बाणोऽप्यस्मिन्विषये न कस्माच्चित्प्रहीणः। कादम्बर्याः शीतोपचाराय मौक्तिकानि संचूर्ण्य प्रतिक्षणं जलं विकिरतां यन्त्रवृक्षाणामालवाला विरचिताः। हरिचन्दनद्रवस्य दीर्घिकाः पूरिताः। गन्धोदकपूरितेषु कूपेषु घटीयन्त्राणि (अरहट) तादृशानि कृतानि यत्र केतकपत्रमयानि पुटकान्येव जलाधारपात्राणि। कुवलयावलीनां रज्जुः' इत्यादि (पृ. ४३९)। कादम्बरी गन्धर्वराजपुत्री। अत एव दिव्यमिदं वैभवं संभवेत्। किन्तूज्जयिनीराजभवनेपि निष्कुटेषु मणिभिः क्रीडापर्वता एव निर्मिताः। येषां मणिशिलासु अबलानां चरणालक्तकैरद्भुतैव शोभा भवति। जालवातायनविवरेभ्यो महार्घरत्नकिरणास्तथा निष्पतन्ति ये मणिखचितकनकशृङ्खला इव बहिर्निःसरन्तः प्रतीयन्ते (पृ. १९०)।

एतत्सर्वं धनसमृद्धिप्राचुर्यम्। प्राकृतशोभाप्राचुर्यमपि समृद्धिशालिषु भूपभवनेष्वत्यद्भुतमेव। गृहोद्यानेषु चकोरकादम्बहारीतादयस्तु वृक्षेषु विहरन्तः शोभन्त एव। किन्तु कस्तूरिकाकुरङ्गा अपि तत्रेतस्ततः संचरन्ति। ते च नैकद्वाः, अपि तु अपरिमिताः, गृहवासिनां च परिचिताः। येषां नाभिपरिमलेन दिङ्मुखान्येव सुरभितानि भवन्ति (पृ. १९५)। कस्तूरिकामृगो न यत्रकुत्रचित्स्थातुं शक्नोति। हिमालयस्य हिमाच्छादितस्थलेष्वेव स प्रकृतिनियमतः प्राप्यते इत्यभिज्ञा वदन्ति। किन्तु कविप्रतिभा तमपि राजभवने निगडयामास।

समृद्धिमिव राज्ञां संमानमप्यसामान्यं कविरेष चित्रयामास। न केवलमाश्रिता एव, अपि तु मूर्द्धाभिषिक्ता राजानोपि तारापीडस्य चरणौ मौलिमालाभिरुपरञ्जयन्ति। राजकीयपुरुषं दृष्ट्वैव सर्वे ससंमानमभिगच्छन्ति। राजा, राजसचिवादयोऽपि राजधर्मे परिनिष्ठिताः, सद्व्यवहारिणः। अतीवनम्रा उपचारचतुराश्च। राजकुमारश्चन्द्रापीडोऽप्युपचारस्य चरमसीमानं स्पृशति। चरणरजोरूपाः दासानुदासा वयमित्यादीनि विनम्रवचनानि प्रसिद्धान्येव। यवनभाषापटवोपि 'खाकसार' इत्यात्मानं व्यपदिशन्तो विनयातिशयमसामान्यमभिनयन्ति। किन्तु बाणेन तत्सीमाप्यतिलङ्घिता। चन्द्रापीडः स्वविनयमभिव्यनक्ति—'असज्जनकथाकीर्तनेषु स्मर्तव्यः खलु चन्द्रापीडचण्डालः।' [पृ. ४५२]।

## कादम्बरीकथा

सेयं कादम्बरीकथा बाणभट्टेन तत्समयसुप्रसिद्धाया बृहत्कथाया आधारेण गुम्फिता। यतो हि तद्गतमकरन्दिकोपाख्यानमेतस्या मूलम्। तदीयपात्राणां नामान्तराणि विधाय, कथायाश्च रसानुकूल्येन किञ्चिद्व्यत्यासमारचय्य सेयं कथोद्भाविता। महाकविक्षेमेन्द्रसोमदेवयोः समयपर्यन्तम् (ख्रि. १०६३ वर्षपर्यन्तम्) गुणाढ्यरचिता बृहत्कथा सुलभासीत्। अत एव हि तदाधारेण ताभ्यां बृहत्कथामञ्जरीकथासरित्सागरौ रचितौ। एवं च ख्रि. षष्ठशतकोत्पन्नस्य बाणस्य सा समुपजीव्या स्यादत्र किमाश्चर्यम्।

---

१ 'हसितः प्रशंसता सखि विरमावसथिकजनः पत्या। विधुरिति तव किल वदने वितीर्णकुसुमाञ्जलिविलक्षः॥' (गाथासप्त० ४।४६) २ 'पत्रा ही तिथि पाइये वा घरके चहुँपास। नितप्रति पूनोंही रहत आनन ओप उजास॥' (बिहारी) 'तद्गृहमभितस्तिथिमहो पञ्चाङ्गादवयाति। वदनविभाप्रतिभासतः प्रतितिथि पूर्णा भाति॥' [साहित्यवैभवम्] ३ 'संमार्जनीभिः परतः क्रियन्ते विस्रस्तहारावलिमौक्तिकानि॥' (नवसाहसाङ्कचरितम्) ४ नैषधीयचरिते प्रसिद्धमेव।

किञ्च बृहत्कथाधारेणैव कादम्बरी व्यरच्यतेत्यस्याऽन्यदपि चिह्नमधिगम्यते। कथाभागेन सह क्वचित्कश्चिच्चमत्कारकोऽर्थोऽलंकारादिकश्चापि बाणेनाविकलं बृहत्कथाया एवोपजीवितः। यतो हि बृहत्कथामञ्जर्यां यो बृहत्कथागतो वर्णनाचमत्कारः संक्रान्तः कादम्बर्यामपि सोऽविकलमुपलभ्यते। यथा 'कर्णीसुतश्च कटकः स्तेयशास्त्रप्रवर्तकः। ख्यातौ तस्य सखायौ द्वौ विपुलाचलसंज्ञकौ॥ शशो मन्त्रिवरस्तस्य'......इति (मकरन्दिकोपाख्याने बृहत्कथामञ्जरी)। एवं विन्ध्याटवीवर्णने—'कर्णीसुतकथेव संनिहितविपुलाचला, शशोपगता च।' (कादम्बरी)। 'यस्यां वसति विश्वेशो महाकालवपुः स्वयम्। शिथिलीकृतकैलासनिवासव्यसनो हरः॥' इति (कथासरित्सागरः)। 'प्रलयानलशिखाकलापकपिलजटाभारभ्रान्तसुरसिन्धुरन्धकारातिर्भगवानुत्सृष्टकैलासवासप्रीतिर्महाकालाभिधानः स्वयं निवसति' इति (उज्जयिनीवर्णनकादम्बरी)। 'पुरा मुनयः किन्नरराज्ये द्रुमनामकं नृपमभिषेचयामासुः' इति बृहत्कथा। 'किंपुरुषाधिराज्यमिव मुनिजनगृहीतकलशाभिषिच्यमानद्रुमम्' इति जाबाल्याश्रमवर्णनकादम्बरी।

कथासरित्सागराधारेण कादम्बरी विरचितेति वदतां श्रीहरिदाससिद्धान्तवागीशादीनां मन्ये कथासरित्सागरपदेन बृहत्कथातस्तात्पर्यम्। अन्यथा सुतरां प्राचीनः खि. षष्ठशतकोत्पन्नो बाण एकादशशतकोत्पन्नं कथासरित्सागरं कथंकारमुपजीवेत्? अस्तु. बृहत्कथागता कादम्बरीमूलकथा संप्रति कथासरित्सागरस्य ऊनषष्टितमतरङ्गान्तर्मकरन्दिकोपाख्याने द्रष्टुं शक्या। तत्र हि कानि नामानि, बाणभट्टेन च कानि परिवर्तितानीत्यधो दीयन्ते—

| कथासरित्सागरे | कादम्बर्याम् |
|---|---|
| काञ्चनपुरी | विदिशा |
| सुमनाः | शूद्रकः |
| मुक्तालता | चाण्डालदारिका |
| शास्त्रगञ्जः (शुकः) | वैशम्पायनः |
| हिमालयपादे रोहिणतरुः | विन्ध्याटव्यां शाल्मलीतरुः |
| मरीचिः | हारीतः |
| पौलस्त्यः | जाबालिः |
| रत्नाकरं पुरम् | उज्जयिनी नगरी |
| ज्योतिष्प्रभः | तारापीडः |
| हर्षवती | विलासवती |
| सोमप्रभः | चन्द्रापीडः |
| प्रभाकरः | शुकनासः |
| प्रियङ्करः | वैशम्पायनः |
| आशुश्रवाः (उच्चैःश्रवसः पुत्रः) | इन्द्रायुधः |
| पद्मकूटः | हंसः |
| हेमप्रभा | गौरी |
| मनोरथप्रभा | महाश्वेता |
| दीधितिमान् | श्वेतकेतुः |
| रश्मिवान् | पुण्डरीकः |
| सिंहविक्रमः (विद्याधरराजः) | चित्ररथः (गन्धर्वराजः) |
| मकरन्दिका | कादम्बरी |
| देवजयः | केयूरकः |
| सिंहविक्रमः शुको जातः | पुण्डरीको मध्ये वैशम्पायननामा मन्त्रिपुत्रः परस्ताच्च तन्नामक एव शुकोभवत् |
| रश्मिवान् सुमना अभूत्। | चन्द्रापीडः शूद्रकोऽभवत्। |

## वर्णनायामत्युक्तयः

सौन्दर्यवर्णनादिष्वत्युक्तयः प्रायः पूर्वत एव प्रचलिताः कवीनां स्वभावसिद्धा इव । 'मुखं दृष्ट्वा चन्द्रोऽयमिति बुद्ध्वा पूर्णिमाव्रतकारिणस्तदग्रत एव कुसुमार्घ्यं व्यतरन् ।' 'तस्या मुखकान्त्या तत्प्रतिवेशे सर्वास्तिथयः पूर्णिमा एव भवन्ति । अन्यास्तिथयस्तु पञ्चाङ्गेनैव बोध्याः' इत्यादि । एवमुदात्तालंकारविधया राजादीनां समृद्ध्यतिशयोपि पुरातनैः प्रचुरं प्रख्यापित एव । 'राजाश्रितानां कवीनामपि सदनेषु महार्घमुक्तामणयः संमार्जनीभिर्दूरमवक्षिप्यन्ते ।' 'वृक्षाणामालवालाश्चन्द्रकान्तमणिभिर्निर्मिताः । अत एव चन्द्रकिरणसंस्पर्शात्प्रस्रवज्जलपूर्णेषु तेषु स्वतः सिच्यन्ते पादपाः ।'

बाणोऽप्यस्मिन्विषये न कस्माच्चित्प्रहीणः । कादम्बर्याः शीतोपचाराय मौक्तिकानि संचूर्ण्य प्रतिक्षणं जलं विकिरतां यन्त्रवृक्षाणामालवाला विरचिताः । हरिचन्दनद्रवस्य दीर्घिकाः पूरिताः । गन्धोदकपूरितेषु कूपेषु घटीयन्त्राणि (अरहट) तादृशानि कृतानि यत्र केतकपत्रमयानि पुटकान्येव जलाधारपात्राणि । कुवलयावलीनां रज्जुः' इत्यादि (पृ. ४३९) । कादम्बरी गन्धर्वराजपुत्री । अत एव दिव्यमिदं वैभवं संभवेत् । किन्तूज्जयिनीराजभवनेपि निष्कुटेषु मणिभिः क्रीडापर्वता एव निर्मिताः । येषां मणिशिलासु अबलानां चरणालक्तकैरद्भुतैव शोभा भवति । जालवातायनविवरेभ्यो महार्घरत्नकिरणास्तथा निष्पतन्ति ये मणिखचितकनकशृङ्खला इव बहिर्निःसरन्तः प्रतीयन्ते (पृ. १९०) ।

एतत्सर्वं धनसमृद्धिप्राचुर्यम् । प्राकृतशोभाप्राचुर्यमपि समृद्धिशालिषु भूपभवनेष्वत्यद्भुतमेव । गृहोद्यानेषु चकोरकादम्बहारीतादयस्तु वृक्षेषु विहरन्तः शोभन्त एव । किन्तु कस्तूरिकाकुरङ्गा अपि तत्रेतस्ततः संचरन्ति । ते च नैकद्वाः, अपि तु अपरिमिताः, गृहवासिनां च परिचिताः । येषां नाभिपरिमलेन दिङ्मुखान्येव सुरभितानि भवन्ति (पृ. १९५) । कस्तूरिकामृगो न यत्रकुत्रचित्स्थातुं शक्नोति । हिमालयस्य हिमाच्छादितस्थलेष्वेव स प्रकृतिनियमतः प्राप्यते इत्यभिज्ञा वदन्ति । किन्तु कविप्रतिभा तमपि राजभवने निगडयामास ।

समृद्धिमिव राज्ञां संमानमप्यसामान्यं कविरेष चित्रयामास । न केवलमाश्रिता एव, अपि तु मूर्द्धाभिषिक्ता राजानोपि तारापीडस्य चरणौ मौलिमालाभिरुपरञ्जयन्ति । राजकीयपुरुषं दृष्ट्वैव सर्वे ससंमानमभिगच्छन्ति । राजा, राजसचिवादयोऽपि राजधर्मे परिनिष्ठिताः, सद्व्यवहारिणः । अतीवनम्रा उपचारचतुराश्च । राजकुमारश्चन्द्रापीडोऽप्युपचारस्य चरमसीमानं स्पृशति । चरणरजोरूपाः दासानुदासा वयमित्यादीनि विनम्रवचनानि प्रसिद्धान्येव । यवनभाषापटवोपि 'खाकसार' इत्यात्मानं व्यपदिशन्तो विनयातिशयमसामान्यमभिनयन्ति । किन्तु बाणेन तत्सीमाप्यतिलङ्घिता । चन्द्रापीडः स्वविनयमभिव्यनक्ति— 'असज्जनकथाकीर्तनेषु स्मर्तव्यः खलु चन्द्रापीडचण्डालः ।' [पृ. ४५२] ।

## कादम्बरीकथा

सेयं कादम्बरीकथा बाणभट्टेन तत्समयसुप्रसिद्धाया बृहत्कथाया आधारेण गुम्फिता । यतो हि तद्गतमकरन्दिकोपाख्यानमेतस्या मूलम् । तदीयपात्राणां नामान्तराणि विधाय, कथायाश्च रसानुकूल्येन किञ्चिद्व्यत्यासमारचय्य सेयं कथोद्भाविता । महाकविक्षेमेन्द्रसोमदेवयोः समयपर्यन्तम् (खि. १०६३ वर्षपर्यन्तम्) गुणाढ्यरचिता बृहत्कथा सुलभासीत् । अत एव हि तदाधारेण ताभ्यां बृहत्कथामञ्जरी–कथासरित्सागरौ रचितौ । एवं च खि. षष्ठशतकोत्पन्नस्य बाणस्य सा समुपजीव्या स्यादत्र किमाश्चर्यम् ।

---

१ 'हसितः प्रशंसता सखि चिरमावसथिकजनः पत्या । विधुरिति तव किल वदने वितीर्णकुसुमाञ्जलिविलक्षः ॥' (गाथासप्त० ४।४६) २ 'पत्रा ही तिथि पाइये वा घरके चहुँपास । नितप्रति पून्योंही रहत आनन ओप उजास ॥' (विहारी) 'तद्गृहमभितस्तिथिमहो पञ्चाङ्गादवयाति । वदनविभाप्रतिभासतः प्रतितिथि पूर्णा भाति ॥' [साहित्यवैभवम्] ३ 'संमार्जनीभिः परतः क्रियन्ते विसूत्रहारावलिमौक्तिकानि ॥' (नवसाहसाङ्कचरितम्) ४ नैषधीयचरिते प्रसिद्धमेव ।

किञ्च बृहत्कथाधारेणैव कादम्बरी व्यरच्यतेत्यस्याऽन्यदपि चिह्नमधिगम्यते। कथाभागेन सह क्वचित्क्वचिच्चमत्कारकोऽर्थोऽलंकारादिकश्चापि बाणेनाविकलं बृहत्कथाया एवोपजीवितः। यतो हि बृहत्कथामञ्जर्यां यो बृहत्कथागतो वर्णनाचमत्कारः संक्रान्तः कादम्बर्यामपि सोऽविकलमुपलभ्यते। यथा 'कर्णीसुतश्च कटकः स्तेयशास्त्रप्रवर्तकः। ख्यातौ तस्य सखायौ द्वौ विपुलाचलसंज्ञकौ॥ शशो मन्त्रिवरस्तस्य'...... इति (मकरन्दिकोपाख्याने बृहत्कथामञ्जरी)। एवं विन्ध्याटवीवर्णने—'कर्णीसुतकथेव संनिहितविपुलाचला, शशोपगता च।' (कादम्बरी)। 'यस्यां वसति विश्वेशो महाकालवपुः स्वयम्। शिथिलीकृतकैलासनिवासव्यसनो हरः॥' इति (कथासरित्सागरः)। 'प्रलयानलशिखाकलापकपिलजटाभारभ्रान्तसुरसिन्धुरन्धकारातिर्भगवानुत्सृष्टकैलासवासप्रीतिर्महाकालाभिधानः स्वयं निवसति' इति (उज्जयिनीवर्णनकादम्बरी)। 'पुरा मुनयः किन्नरराज्ये द्रुमनामकं नृपमभिषेचयामासुः' इति बृहत्कथा। 'किंपुरुषाधिराज्यमिव मुनिजनगृहीतकलशाभिषिच्यमानद्रुमम्' इति जाबाल्याश्रमवर्णनकादम्बरी।

कथासरित्सागराधारेण कादम्बरी विरचितेति वदतां श्रीहरिदाससिद्धान्तवागीशादीनां मन्ये कथासरित्सागरपदेन बृहत्कथातस्तात्पर्यम्। अन्यथा सुतरां प्राचीनः ख्रि. षष्ठशतकोत्पन्नो बाण एकादशशतकोत्पन्नं कथासरित्सागरं कथंकारमुपजीवेत्? अस्तु. बृहत्कथागता कादम्बरीमूलकथा संप्रति कथासरित्सागरस्य ऊनषष्टितमतरङ्गान्तर्मकरन्दिकोपाख्याने द्रष्टुं शक्या। तत्र हि कानि नामानि, बाणभट्टेन च कानि परिवर्तितानीत्यधो दीयन्ते—

| कथासरित्सागरे | कादम्बर्याम् |
|---|---|
| काञ्चनपुरी | विदिशा |
| सुमनाः | शूद्रकः |
| मुक्तालता | चाण्डालदारिका |
| शास्त्रगञ्जः (शुकः) | वैशम्पायनः |
| हिमालयपादे रोहिणतरुः | विन्ध्याटव्यां शाल्मलीतरुः |
| मरीचिः | हारीतः |
| पौलस्त्यः | जाबालिः |
| रत्नाकरं पुरम् | उज्जयिनी नगरी |
| ज्योतिष्प्रभः | तारापीडः |
| हर्षवती | विलासवती |
| सोमप्रभः | चन्द्रापीडः |
| प्रभाकरः | शुकनासः |
| प्रियङ्करः | वैशम्पायनः |
| आशुश्रवाः (उच्चैःश्रवसः पुत्रः) | इन्द्रायुधः |
| पद्मकूटः | हंसः |
| हेमप्रभा | गौरी |
| मनोरथप्रभा | महाश्वेता |
| दीधितिमान् | श्वेतकेतुः |
| रश्मिवान् | पुण्डरीकः |
| सिंहविक्रमः (विद्याधरराजः) | चित्ररथः (गन्धर्वराजः) |
| मकरन्दिका | कादम्बरी |
| देवजयः | केयूरकः |
| सिंहविक्रमः शुको जातः | पुण्डरीको मध्ये वैशम्पायननामा मन्त्रिपुत्रः परस्ताच्च तन्नामक एव शुकोभवत् |
| रश्मिवान् सुमना अभूत्। | चन्द्रापीडः शूद्रकोऽभवत्। |

विद्यार्थिनां कृते काव्यस्वरूप-नायकादिनिरूपणमधस्ताद्दीयते—

कादम्बरीनामेदं कथाकाव्यम् । यथा साहित्यदर्पणे—

'कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ।
क्वचिदत्र भवेदार्या क्वचिद् वक्त्रापवक्त्रके ।
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ॥'

अस्मिन्काव्ये साहित्ये लक्षितानि चतुर्विधान्येव गद्यानि दृश्यन्ते । किन्तु, उत्कलिकाप्रायमेव गद्यमाधिक्येन । क्वचिच्चूर्णकमपि । तेषां लक्षणानि यथा—

'वृत्तबन्धोज्झितं गद्यम्—'मुक्तकम्', 'वृत्तगन्धि' च ।
भवेत् 'उत्कलिकाप्रायम्' 'चूर्णकं' च चतुर्विधम् ॥
आद्यं समासरहितं वृत्तभागयुतं परम् ।
अन्यद्दीर्घसमासाढ्यं तुर्यं चाल्पसमासकम् ॥'

अत्र अनुकूलो धीरोदात्तश्चन्द्रापीडो नायकः । लक्षणं यथा—

'अनुकूल एकनिरतः'

'अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥'

नायिका कन्या ( परकीया ) मुग्धा कादम्बरी । यथा—

'कन्या त्वजातोपयमा सलज्जा नवयौवना'
'परकीया द्विधा प्रोक्ता परोढा कन्यका तथा ।'
'प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥'

परिणयोत्तरं स्वकीया मध्यापि च नायिका, किन्तु ( उत्तरार्द्धे ) तत्प्रसङ्गः स्वल्प एव ।

काव्येऽस्मिन् विप्रलम्भशृङ्गारोऽङ्गी रसः । तस्यापि भेदेषु—पूर्वार्धे, उत्तरार्धस्य कियदंशे च पूर्वरागाख्यः । उत्तरार्धशेषे तु करुणविप्रलम्भाख्यः । संभोगशृङ्गारोप्यस्ति, परं परिणयोत्तरं तत्सूचनमात्रमेव । लक्षणादि यथा—

'यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ।'
'श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥'
'यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः ॥'

अङ्गतया हास्यादयोऽन्येपि रसाः सन्ति ।

बाहुल्येनात्र माधुर्यं गुणः । यथा—

'चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते ।
संभोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ॥'

प्रसादगुणोपि बहुत्र । रीतिरत्र 'पाञ्चाली' बाहुल्येन यथा—

'वर्णैः शेषैः पुनर्द्वयोः ( वैदर्भीगौडीययोः परिगृहीतेभ्यो वर्णेभ्यः शेषैरित्याशयः ) ।
समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ॥'

अन्या अपि रीतयो यथास्थानं सन्ति, परं न प्रधानं ताः ।

विद्यार्थिनां सौकर्याय सर्वसंग्रहश्लोकोयम्—

'चन्द्रापीडोऽनुकूलः सकलगुणधरो नायकोऽस्मिन्नुदात्तो
नेत्री कन्याऽन्यदीया मृदुललिततनुर्मुग्धकादम्बरी च ।
पाञ्चाली नाम रीतिर्विलसति बहुला, विप्रलम्भो रसोऽङ्गी
माधुर्याख्यो गुणो वा, कविमुकुटमणेः काव्ययोरन्त्यमेतत् ॥'

## टीका

श्रीभानुचन्द्रगणि—तच्छिष्यसिद्धचन्द्रगणिमहोदयाभ्यां विरचिता सेयं व्याख्या मोगलसम्राजोऽकबरस्य समये निरमीयत । यतो हीमौ अकबरसम्राजा सभाजिताविति ताभ्यामेव पुष्पिकायां स्वहस्तेन लिखितम् । गुरवे भानुचन्द्रगणिने सम्राजा महोपाध्यायपदमर्पितम् । महाभागेन चानेन 'शत्रुंजय' करो मोचितः । शिष्योपि सम्राजा 'षुस्युदमा' इत्युपपदेनालङ्कृतः । सेयं व्याख्या प्रत्येकपदस्य पर्यायप्रकटन एव व्यग्रा, कामं स पर्यायशब्दः 'इन्द्रस्य टीका बिडौजाः' एव किं न भवेत् । एको यः शब्दः पर्यायत्वेनादौ परिगृहीतः, अन्तपर्यन्तमपि स एव पदे पदे व्यवह्रियते । यथा–ग्रन्थे यत्र यत्रापि सुखपदमायातं तत्र तत्र 'सातम्' इत्यनेनैव व्याख्यातं महाभागेन । 'भ्रान्तिः आरेका, जरा विस्रसा, कुवलयं कुवेलम्' इत्यादिरूपेणैव सर्वत्र व्याख्यातवानयम् । पर्यायशब्दनिवेशो हि जिज्ञासूनां सारल्येन बोधनायैव भवति । सरलस्यापि पर्यायपदनिवेशः करणीय एवेति न ब्रह्मवाक्यम्, किन्त्वेतस्योपरि न मनागपि दृष्टिनिक्षेपष्टीकाकर्तुः । स्नानप्रकरणे आगतं 'स्नान'पदं कादम्बरीमारभमाणस्य कृते न वज्रसारं स्यात्, किन्तु स्नानपीठस्य पर्यायपदम् 'आप्लवनचतुष्किकाम्' इत्येव कृत्वाऽयं कृती भवति । कुत्रचित्तु मूलपदं सर्वैर्बोध्यं भवति, टीकाकर्तुर्व्याख्या तु ज्ञातमप्यर्थं भ्रमिचक्रे निपातयति । यथा 'इन्द्रगोपैः (वर्षाकीटैः)' इत्यस्य व्याख्या 'अग्निरजोभिः' इति । कोऽस्यार्थ इति हि विदन्तु विद्वांस एव । 'विन्ध्यः जलबालकः, निगडः अन्दुकः, मदनः जराभीरुः, धूमो दहनकेतनः, जानु नलकीलकः, इत्यादिरूपेण कृता व्याख्या क्रियते उपकारायेति विमृशन्तु मनीषिण एव ।

कुत्रचित्तु व्याख्यापाटवं तथा प्रकाशयति यथा कृतबुद्धिरपि वराको ग्रन्थस्वारस्यं विहाय व्याख्यापदानामर्थबोधायैव व्यग्रो भवति । नगरं 'द्रङ्गम्' इति कृत्वा व्याख्याति । 'लता'पदस्य हि सुप्रसिद्धोर्थः । किन्तु टीकाकारस्तदर्थमाह—'सरलवृक्षः' । अत्र हि तन्नामको वृक्षविशेषः सर्वस्यैव बुद्धिनिष्ठो भवेत् । भूयस्सु स्थलेषु तु टीकाकारस्य व्याख्यामालोक्य क्षमाशीलस्यापि मानसमुद्वेलं भवति । 'निर्लक्षणा पाण्डुरपृष्ठा', 'दावानलशङ्का वनवह्निद्वापरः', 'वसन्त इव इभ्य इव', इत्यादिव्याख्या कस्य क्षोभाय न भवेत् ?

काव्ये च साहित्ये च टीकाकारमहोदयस्य कियत्पाण्डित्यमिति त्वग्रे निवेदयिष्यामि, किन्तु पर्यायशब्दान्वेषणे सर्वमपि वैदुष्यमेष निःशेषयतीति तु प्रत्येकमार्मिकस्यैवाऽवगतं भवेत् । 'निष्पतन्तीम्' इत्यस्य टीकां करोति 'अधःसंयोगफलिकां क्रियां कुर्वन्तीम्' । 'श्वसन्ती' इत्यस्यार्थमाह 'एतनं गृह्णन्ती' । 'एतनं गृह्णन्ती' इत्यस्यार्थं एतस्मिन्काले किमु सहसैवोदयेत् ? परं सर्वस्यापि पदस्य यत्किञ्चित्पर्यायपदमवश्यं निवेश्यम् । पर्यायस्थापनेनैव टीका सुटीका भवतीति महोदयस्यास्य विचारः । किन्तु पर्यायनिरपेक्षस्य पदस्य बलात्पर्यायसंनिवेशे कुत्रचित्कुत्रचित्कीदृशोऽनर्थः संभवतीति तु नास्य महाभागस्य विचारशक्तिरपि ।

सूक्ष्ममीक्ष्यतां तावत्—गद्यकाव्यं हि कवीनां कृतित्वपरीक्षायै निकषो नाम । गद्यकाव्येष्वपि 'कथा'-काव्यमतिमनोहरम्, यद्धि वर्तमानकालिक'उपन्यास(Novel)'स्थानीयम् । तत्रापि–वाचयतामाहाररुचिमपि तिरोदधत्तदिदं काव्यमस्ति यस्य लेखको मार्मिकाणां शिरोमणिः श्रीमान्बाणः । तस्यैव काव्यस्य नायिकायाः सौन्दर्यसारसंघटितायाः देवाङ्गनायाः (कादम्बर्याः) सौन्दर्यवर्णने महोदयोयं 'नाभिम्'

---

१ महामहोपाध्यायहरिदाससिद्धान्तवागीशभट्टाचार्यटीकाभूमिकायाः सोयं संदर्भ उद्धृतः ।

व्यपदिशति 'तुन्दकूपीम्' इति। तुन्दपदं हि प्रचण्डोदरायाः कस्याश्चित्प्रफुल्यमानमुदरं सूचयत् (यतः प्रफुल्लोदरस्तुन्दिल इत्युच्यते) गहनान्धकारितं महान्तं नाभीगर्तं चेतसि चित्रयतीति मन्ये न वक्तव्यं भवेन्मार्मिकाणां कृते। किन्तु सर्वतो निमीलितनयनोऽयं न किञ्चित्पश्यति। येन केनापि रूपेण पर्यायपदस्थापनायैव सहस्रनयनः सन् सोयं जागरूकः। अन्यदपि व्याख्यानं दृश्यताम्—'तडिद्भिः ऐरावतीभिः' 'शुष्काणि दानानि,' 'पिपासा उदन्या,' 'वल्कलोपान्तेन चोचाञ्चलेन'। वल्कलोपान्तमित्यस्य योऽर्थं न ज्ञातवान् तदर्थं ह्येषा व्याख्याऽपेक्षिता, तस्य कृते चोचाञ्चलमिति किं सुखबोध्यं भवेत्? प्रसिद्धाऽप्रसिद्धयोरन्तरं न विदन्नेव किं 'निरन्तरव्याख्या'कारो भवति?

टीकाकारमहाभागस्य व्याकरणज्ञानमप्यलौकिकम्। कर्म-कर्तृवाच्ययोः सर्वत्रापि निरर्गलं प्रयोगः। 'कृतान्तमुखकुहरादिव विनिर्गतमात्मानं मन्यमानः (अहम्)' इत्यत्र 'मन्यमानः' इति कर्तृवाच्यक्रियायाः 'ज्ञायमानः' (पृ. ७४) इति व्याख्या। एवं प्रायः सर्वत्रैव। आत्मनेपद-परस्मैपदव्यत्ययाः पदे पदे। 'व्रजमानानीव संचरमाणानीव' (तृतीयान्तयोगं विनापि)। 'निमज्जमानम्' 'कम्पति सति' 'उत्पश्यमानः' (पृ. ७५) 'अजनिषम्' इत्यादीनि स्थाने स्थाने। लिङ्गव्यत्ययाः प्रतिपदम्—'बाहुवल्लयालिङ्गनान्' 'दन्तक्षतान्' 'कर्णावतंसानि' 'त्यज्यमानासु सत्सु,' 'श्वेतायमानासु सत्सु' (पृ. ५४७)। ध्वनिशब्दस्य, 'रक्तिमा' इत्यादिइमनिच्प्रत्ययान्तानां च प्रायः स्त्रीत्वमेव प्रयुक्तम्। 'पुस्तकान् शास्त्रान्' (२०५)। 'अप्रापम्, अप्रार्थयत,' इत्याद्यपि बहुत्र। शिष्या इत्यस्य लोकोत्तरा व्याख्या 'शिष्यिणी' इति (पृ. २२०)। 'पराभवितस्य' 'रुदनम्' (पृ. ६८२) 'कार्यताम्' इत्येतस्य व्याख्या 'काराय्यताम्' इत्यादि ('कराइये' इति 'हिन्दीं दृष्ट्वा') (पृ. ६६३)।

अलौकिकं व्याख्यानपाण्डित्यं तु स्थाने स्थाने, यस्य शोधनं 'चषक' टिप्पण्या कर्तुमाचेष्टितम्। इह वस्तूल्लेखे मुधैव भूमिकाकायवृद्धिः स्यात्। यथा—'दिग्विजयमङ्गलध्वजेन,······त्रिभुवनमलङ्घयत रजसा' अर्थात् सैन्यसंघर्षोत्थं रजश्चन्द्रापीडकृतदिग्विजयस्य मङ्गलध्वजः (माङ्गलिककेतुदण्डस्वरूपः)। ध्वजवदुत्थानसादृश्यात् रजसि ध्वजत्वरूपणम्। टीकाकारमहाभागो व्याचष्टे—'दिशां ककुभां यो विजयः तत्र यन्मङ्गलं विघ्ननिवारकदधिदूर्वादि तस्य ध्वजेन केतुना' (पृ. २४९)। '(इयं लक्ष्मीः) पुस्तमय्यपि (अचेतनपुत्तलिकारूपापि) इन्द्रजालमाचरति [अकस्मात् लक्ष्या विलोपात्]।' 'पुस्त'पदस्य पुत्तलिकार्थे प्रयोगो यथा—'पुस्तस्त्रीहस्तनिर्यत्०' इत्यादि वाग्भटे। टीकाकारो व्याख्याति—'पुस्तकमय्यपि ज्ञानमय्यपि'। निन्दां कुर्वाणस्य ज्ञानमयीति निर्देशः कियत्स्वाभाविक इति न विचारितं वराकेण (पृ. २२९)। 'अपि च अनेन (कामेन) अधिष्ठितानां चिन्तया (चिन्तावशात्) प्रियमुखचन्द्रसहस्राणि पश्यन्तीनां कामिनीनां कृते संकटमम्बरतलम् (मुखचन्द्रसहस्रसंकीर्णतया) संबाधं भवति। 'लिखन्तीनां दयिताकारानविस्तीर्णं महीमण्डलम्,' [अनेनाधिष्ठितानाम् अत एव विनोदार्थं दयितस्य प्रतिकृतीर्लिखन्तीनां (कामिनीनां हृदये) महीमण्डलमविशालम्, यतो हि तच्चित्रिता दयिताकारास्तत्र न मान्ति]। 'वल्लभगुणान् गणयन्तीनामल्पीयसी संख्या' (गुणगणनाकाले परार्धान्तापि संख्या अपर्याप्ता भवतीत्यर्थः)। 'शृण्वतीनां प्रियतमकथामबहुभाषिणी सरस्वती' (प्रियकथां शृण्वतीनां कृते वाग्देवतात्वेन प्रसिद्धापि सरस्वती न्यूनभाषिणी। अनन्तयापि कथया तासां श्रवणेच्छा न पूर्यत इत्यर्थः)। 'ध्यायन्तीनां प्राणसमसमागमसुखानि ह्रसीयान् कालो हृदयस्यापतति' [ध्यानवेलायां कालः सहसैव समाप्यत इत्यर्थः]। टीकाकारमहाशयो व्याख्याति—'अनेन कन्दर्पेणाधिष्ठितानाम् आश्रितानां कामिनीनां हृदयस्य ह्रसीयान् ह्रासकृत्काल आपतति, अकस्मादागच्छति [अयं महाभागः ह्रसीयान् कालइति सर्ववाक्येषु योजयति]। 'अथ कामिनीनां विशेषणानि—किं कुर्वन्तीनाम्। चिन्ताजनितं यत्प्रियमुखसहस्रं तेन संकटं संकीर्णं यदम्बरतलं तत्पश्यन्तीनां विलोकयन्तीनाम्···' इत्यादि। (पृ. ४७७)।

## पाठपरिवर्तनम्

सर्वमौलिभूतो दोषस्त्वयमस्याष्टीकाया यन्मूलपाठस्तथा धृतोस्ति येन कादम्बर्याः शोभायाः का कथा वराकी सा लज्जेत । अवश्यं ग्रन्थपाठः प्राग्लिखित पुस्तकाधीनः किन्तु यष्टीकां लेखितुं परिकरमाबध्नाति तस्यापि बुद्धेः किञ्चिन्मूल्यं जनसमाजेनाशंसनीयं भवति । गुरुतरं ह्यासनं टीकायाः । यद्धि वाक्यं सामान्यशिक्षितोपि न लेखितुं पारयति तादृशं वाक्यं बाणसदृशो मार्मिकचूडामणिः कथं वा कविमण्डलमण्डनभूते स्वग्रन्थे विलिखेदित्यक्षरमुखस्यापि विचारो भवत्येव । किन्त्वाश्चर्यं नास्यात्र गन्धोपि । नापि चात्र लेखक-मुद्रकदोषोपि संभावयितुं शक्यः, व्याख्याक्षराणां तथैवाऽभिप्रायात् । ग्रन्थस्य प्रायः प्रतिपदमेव सेयं दशा । टिप्पण्यां च सूचितमिदं स्थाने स्थाने । अत्र तदुद्धरणे मुधा विस्तरः स्यात् ।

किन्तु मार्मिका द्वित्रैरुदाहरणैस्तद्वर्णिकाम् ( बानगी ) परीक्षितुं पारयेयुः ।

'विबुधसद्मन्यप्सरसो नाम कन्यकाः सन्तीति' मन्ये सर्वबोध्योयं विषयः । किन्तु टीकाकारेण मूलपाठः परिगृहीतोऽस्ति-'विबुधसद्मन्यप्सरसेना नाम कन्यकाः सन्तीति' । व्याख्यानं चास्य दृश्यताम्—'विबुधसद्मनि किंनरगृहे । अप्सरसेनाः । नामेति कोमलामन्त्रणे । कन्यकाः पुत्र्यः सन्तीति' । 'किंनरगृहे' इति समीक्षणीयं तावत् । अविवाहितत्वात् 'कन्यकाः' इति बाणलेखन्योत्कीर्णम्, तस्य 'पुत्र्यः' इति पर्यायः कियत्स्वारस्यवाहीति सर्वैर्बुध्येतैव ( पृ. २९३ ) ।

'हेमकूटधाम्नां किरातानां सुवर्णपुरं नाम निवासस्थानम्' इत्यस्य स्थाने पाठोऽस्ति 'हेमजकूटनाम्नां किरातानाम्' । व्याख्यानं दृश्यताम्—'हेमजकूट इति नाम येषामेवंविधानां किरातानां भिल्लानां म्लेच्छानां वा ( पृ. २५७ ) ।

गन्धर्वराजधान्यां हेमकूटे ( कादम्बरीनिवासस्थाने ) यदा चन्द्रापीडो जगाम तदाऽनुरक्ता कादम्बरी प्रेमोपायनं शेषाख्यं रत्नहारं तस्मै प्रजिघाय । तदेतदुपायनमादाय कादम्बर्याः प्राणप्रिया सखी मदलेखा तरलिकया सह चन्द्रापीडमुपजगाम । प्रणयमार्गोचितमिदम् । न हि स्वयं नायिकाया इदमौचित्यमावहति । बाणोपि तथैवोपनिबबन्ध । अत एव हारसमर्पणे तत्प्रशंसायामाह—'( सोयं हारः ) अम्भसां पत्या प्रचेतसे दत्तः । पाशभृता गन्धर्वराजाय । गन्धर्वराजेन कादम्बर्यै' इति । न हि कादम्बरी स्वयमेवं ब्रूयात् । अत एव तदागमनावसरे पाठोऽस्ति—"...कादम्बरीप्रतीहार्यां दक्षिणकरेण दत्तहस्तावलम्बां मदलेखाम्, तरलिकाम्...अद्राक्षीत्" इत्यादिः । किन्तु टीकाकारः पाठमाह—'कादम्बरीं प्रतीहार्या दत्तहस्तावलम्बाम्' इत्यादिः । न हि लेखक-मुद्रकदोषोऽत्र संभाव्यः । पदच्छेदपूर्वकं स्पष्टं व्याख्याति—'चन्द्रापीडः कादम्बरीम्, अथ चागच्छन्तीं मदलेखाम्, तस्याः समीपे तरलिकाम्,...पात्रविशेषे गृहीतं हारं चाद्राक्षीत्' इति । पुनरपि स्पष्टयति—'अथ कादम्बरीं विशिनष्टि' इत्यादिना (पृ. ४१४) ।

केयूरकश्चन्द्रापीडसविधे कादम्बर्याः प्रणय-विह्वलतादिकं निवेदयति—'निर्गते त्वयि हृदयसहस्रप्रयाणपटहकलकलमिव नूपुरक्वणितेन कन्यकान्तःपुरे कुर्वति' । 'कन्यकान्तःपुरे नूपुरक्वणितेन, हृदयसहस्राणां यत्प्रयाणम् ( गृहं प्रत्यागच्छता त्वया सह प्रस्थानम् ) तस्य पटहकलकलमिव कुर्वति सति' इति सप्तम्यन्तः पाठः । अर्थात् कन्यकानां नूपुरशब्दा नासन्, मन्ये त्वया सह प्रस्थितानां कन्यकाहृदयसहस्राणां प्रयाणे पटहध्वनय एवाऽभूवन्निति । किन्तु टीकाकारपाठोऽस्ति—'...पटहकलकलमिव नूपुरक्वणितेन कुर्वन्ती देवी कादम्बरी...' इत्यादि । एकस्यास्तस्या नूपुराभ्यां पटहकोलाहलः कथमिति न विचारयितुमिच्छति टीकाकारपुंगवः । न चात्रापि लेखक-मुद्रकदोषः । 'कुर्वन्ती सृजन्ती' इति स्फुटं व्याख्यानात् । लेखकदोषेण ह्रस्वदीर्घयोर्व्यत्ययो न जात इत्येतस्य साक्षी नुमागमः, नहि सप्तम्यां नुमः स्पर्शशङ्कापि ( पृ. ४३३ ) ।

कुत्रचित्कुत्रचित्त दुष्पाठपरिग्रहणेन तथा ग्रन्थस्य सर्वनाशः कृतोऽस्ति यं दृष्ट्वैव सभ्यताऽवगुण्ठने

गोपितोपि दुःखप्रेरितोऽमर्षो बलात्प्रकटीभवत्येव । अत एव टिप्पण्यां लेखनीमुखाद्दुःशब्दा अपि विवशं निःसृता इति क्षम्यासुः सहृदयमहोदयाः । घोरदुःखमिदं यज्जानतापि मया हन्त कविधृतः पाठो निरस्यते । मूलटीकयोः संवादानुरोधेन ग्रन्थभ्रंशकरो दुष्पाठ एव च स्वकरेण निवेश्यते । परं क्वचित्तु तथा मे मनो विवशमभूद् यथा भ्रष्टतमं तं पाठं लेखितुं लेखन्येव न प्रचचाल । अत एव मूलटीकयोः संवादनियममुल्लङ्घ्यापि समुचितं पाठं मूले बलान्न्यवेशयम्, तं च घोरपाठं नीचैः पाठान्तरे । यथा—शबरसेनापतिवर्णने—'रचिताभरणेन···वक्षःस्थलेनोद्भासमानम्···शबरसेनापतिमपश्यम्' इति । अत्र टीकाकारमहाभागेन पाठो दत्तोऽस्ति—'चक्षुःस्थलेनोद्भासमानम्' । अस्यैव साक्षात्संनिधौ यद्यपि विशेषणमस्ति 'विन्ध्यशिलाविशालेन' इति । न हि चक्षुः शिलाविशालं भवति । किन्तु लोके शिलाविशालमीदृशं हृदयमवश्यमस्ति यद्धि वक्षःस्थलस्थाने चक्षुःस्थलं क्लिश्नाति । नात्रापि लेखक-मुद्रकदोषशङ्का । स्पष्टमस्ति व्याख्यानम्—'चक्षुःस्थलेन नेत्रस्थानेनोत्प्राबल्येन भासमानम्' इति । नैतदेव, अग्रे पुनरस्ति—'चक्षुस्थलं विशिनष्टि' इति । यदि 'नेत्रस्थानेन' इति पर्यायकरणमपि लेखकमुद्रकदोष एव तर्हि मन्ये न क्वचिन्नीलपीतादिष्वपि लोके मिथो भेदः (पृ. ६५) ।

टीकायाः स्थाने स्थाने-समासविग्रहादिषु भ्रामिका अशुद्धयोऽवलोक्यन्ते । तत्र तत्र कोष्ठके समुचिताक्षरनिर्माणेन शोधनस्य चेष्टा कृता । यथा—'स्वीकृता यतिजनानामुचिता यात्रा उपवरणम्' इत्यत्र 'उपव(क)रणम्' इति । 'आबद्धं मण्डलं यस्याः' इत्यत्र (यया) इति कोष्ठके दत्तम् । यत्र तु किञ्चिदधिकं वर्तते तदपि कोष्ठके निबद्धम् । पाठका विवेकेन उभयोरुपयोगं जानीयुः ।

महाकविर्बाणः पुराण-महाभारतादिषु परिनिष्ठितः । स्थाने स्थानेऽयं रामायणमहाभारतादीनामुपाख्यानानि स्वरचनायां सूचितवान् । किन्तु जैनष्टीकाकारमहोदयस्तेषामपरिचितः । अत एव बहुत्र विपरीतं जल्पति । यथा-शुक-करिणामग्निशापवशाज्जिह्वापरिवर्तनस्य कथा टीकाकारेण महाभारततो वैपरीत्येन केवलं प्रवाद इति स्थूलैरक्षरैर्गदिता । अस्तु. टिप्पण्यां स्थाने स्थाने तत्कथानां परिचयाय प्रयतितम् । एवम्-बाणस्य स्फुटं सनातनधर्मावलम्बित्वेऽपि टीकाकारो व्याख्यायां बहुत्र स्वसंप्रदायप्रणयं पिशुनयत्येव । यथा—'न प्रणमन्ति देवताभ्यः' इत्यत्र 'हरिहरादिदेवेभ्यः' इति स्फुटेऽप्यर्थे 'अर्हद्भ्यः' इति व्याख्याति (पृ. २३५) । एवं महाश्वेतावर्णने—'त्र्यम्बकस्य अम्बिकायाः कार्तिकेयस्य विश्रवणस्य कृष्णस्य···पुण्याः स्तुतीः पठन्तीभिः' इत्यत्र 'कृष्णस्य जिनस्य' इति व्याख्यातवान् (पृ. ४२७) ।

किमधिकं परिवादेन, अनुपमकाव्यस्यास्य कादम्बर्या यादृशी व्याख्याऽपेक्षिता न तत्सीमस्पर्शिन्यपि सेयम् । बहवो हि व्याख्याकारा मूलकारस्य कल्पनां तथा प्रगुणयन्ति यथा कवेश्चमत्कारातिशयेन सह व्याख्याया अप्यलौकिकी काचिदभिख्या प्रस्फुरति । दूरे सा संकथा, इह तु ग्रन्थस्यार्थस्पर्शोपि दुर्लभो बहुत्र । किन्तु यस्मिन्काले सेयमिदंतया प्रथमममुद्र्यत तस्मिन्काले न प्रसृताभूत्काचिदन्या विस्तृता व्याख्या । प्रतिपदव्याख्यैव च प्रारम्भतः पठतां विद्यार्थिनामुपयोगिनीति बहूनां दृष्टिः । सेयं च व्याख्या स्वयमात्मानमपदिशति 'निरन्तरव्याख्या' 'प्रतिपदव्याख्या' इत्यादि । अत एवान्तेवासिनामधिकोपकारमालक्ष्य सेयमारम्भतोऽद्यावधि सप्तभिः संस्करणैः प्राकाश्यत । प्रथमतष्टीकाकारेणानेन मूलपाठ एव विरूपोऽधिगतः, ततोपि स्वयमेतद्व्याख्यापुस्तकमप्यशुद्धमेवासादितं प्रकाशकैः । अत एवाद्यावधिसंस्करणेषु यथाजातैव सेयं टीका प्रकाशिताभूत् । अष्टमसंस्करणावसरे त्वस्मिन् नवीनटीकाप्रकाशनाय सूचिता अपि मुद्रायन्त्राध्यक्षाः पूर्वतः प्रचलिताया अस्याष्टीकायाः प्रक्रमस्य प्रणयस्य च भङ्गं नान्वमन्यन्त । अत एव हि मत्संमतिमग्रिमसंस्करणार्थमुपेक्ष्य, इमामेव टीकां संस्कर्तुमाज्ञापयन् ।

अस्तु. मूलटीकयोः पाठसंवादनियमे जाग्रति किमप्यन्यत्कर्तुं परवशोहं टिप्पण्याऽनया स्थाने स्थाने मूलस्य टीकायाश्च विषये आवश्यकं संशोधनं विवक्षितं च किञ्चिदभिव्यञ्जितवानस्मि । नैतस्योपयोगिताविषये मम वक्तव्यं शोभते । गुणगृह्याः स्वयमनुगृह्णासुः कृपाकटाक्षदानेन ।

कादम्बरीयं चिरात्पाठ्यपुस्तकत्वेन परिगृहीता । अतएव पठतामुपयोगाय—

१—गद्यकाव्यानां विकासक्रमः ।

२—बाणस्य समयः, जीवनचरितम्, वंशवृक्षादिकं च ।

३—बाणसमये सामाजिकी परिस्थितिः ।

४—बाणकृतेस्तत्त्वविमर्शः ।

५—अन्यकविभिः सह तुलनात्मकमालोचनम् ।

६—कादम्बरीबृहत्कथयोः कथानकस्य पात्राणां च मिथोविमर्शः ।

७—ग्रन्थे वर्णितानां नायकनायिका-रस-गुण-रीत्यादीनां निरूपणम् ।

८—'कादम्बरीसार'नाम्ना पूर्वोत्तरकादम्बर्योः कथासंक्षेपः ।

९—विषयानुक्रमणिका ।

एवमादयो विषयाः संनिवेशिताः । पूर्वार्धसंशोधने उपोद्घाते च महामहोपाध्यायश्रीहरिदाससिद्धान्तवागीशभट्टाचार्यटीकापुस्तकात्, उत्तरार्धे च श्रीजीवानन्दविद्यासागरपुस्तकाच्च भूयसी सहायताधिगता । सिद्धान्तवागीशमहोदयस्य वैदुष्यमभिनन्दन्नुपकारभारमिममसामान्यमधिमानयामि ।

बाणादुद्भूय भूमानमभीमेष्वपि[१] विन्दती ।
सेयं कादम्बरीगङ्गा रसलङ्गान्निषेव्यताम् ॥

मकरसंक्रान्तिः १९९६
जयपुरम्

मञ्जुनाथोपनामा (कविशिरोमणि)भट्टश्रीमथुरानाथशास्त्री.



१ अर्जुनशरादुद्भूय भीष्मे एव महिमानं प्रकाशयन्त्याः प्रसिद्ध(बाण)गङ्गातः अभीष्मेषु (काव्यभावनाकोमलहृदयेषु) महत्त्वं प्राप्नुवती बाणरचनारूपा गङ्गा विशिष्टेति सेवनीयेत्याशयः ।

॥ श्रीः ॥

# कादम्बरीसारः ।



विद्वत्कृपासनाथेन मञ्जुनाथेन निर्मितः ।
सोयं कादम्बरीसारो हृदि हारोऽस्तु धीमताम् ॥ १ ॥



## [ पूर्वकादम्बरी ]

विदिशेतिख्यातनाम्न्यां राजधान्यामासीत्समस्तगुणाकरो राजा शूद्रको नाम । सभास्थानमलंकुर्वति तस्मिन्नेकदा तत्प्रतीहारी कस्याश्चिच्चाण्डालदारिकाया आगमनमावेदयामास । अथ कौतुकिना भूमिपतिना दत्तानुमतिः सा पुरोयायिना वृद्धेन, पञ्जरवाहिना शिशुना चैकेन समागत्य राजानं प्रणनाम । वृद्धस्त्वसौ वैशम्पायनाभिधानं शुकमेकं पञ्जरगतं राज्ञः पुरो निधाय, तद्गुणावलीं चाभिधाय सहसाऽपससार । गते तु तस्मिन् स शुको दक्षिणं चरणमुन्नमय्य—

'स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥'

इत्यार्यया नरपतिमेनमभिननन्द । सह सदस्यैर्विस्मयमापन्नो राजा शुकमेनमन्तःपुरे प्रवेशयितुमाज्ञाप्य सभास्थानादुदतिष्ठत् । कृताह्निककृत्यस्तु राजा परमबुद्धिमता कुमारपालिताभिधानेन मन्त्रिवरेण सह सुखोपविष्टः शुकमेनमानाय्य समग्रं तद्वृत्तान्तमावेदयितुमाज्ञापयामास । शुकोऽप्येवं कथयामास—"विन्ध्याटव्यां विशाल एकस्मिन् शाल्मलीवृक्षे कृतनीडौ मत्पितरौ न्यवास्ताम् । मां प्रसूय लोकान्तरमुपगतायां जनन्यां वृद्धो मे पिता मामपालयत् । एकदा मृगयार्थमागतस्य मतङ्गनामकस्य शबरसेनापतेरनुगतः कश्चिद्वृद्धशबरः शाल्मलीवृक्षमेनमारुह्य स्नेहवशात्पक्षपुटेन मामाच्छादयन्तं जनकं मे व्यापाद्य, मामपि वृक्षादधः शुष्कपल्लवपुञ्जोपरि न्यपातयत् । भाग्यवशाज्जीवितोहं जलान्वेषणार्थं प्रचलन् स्नानागतेन हारीतनाम्ना मुनिकुमारेण निजपितुर्जाबालेराश्रममुपनीतः । स मुनिर्मामालोक्य हसन्, कौतुकादन्यैर्मुनिभिः पृष्टो मद्वृत्तान्तमेवं निशि निजगाद— [ इति कथामुखम् ]

"अवन्तिदेशे उज्जयिन्यां राजधान्यां महाप्रतापस्तारापीडो नाम राजासीत्, यस्य महिषी विलासवती । निखिलगुणाकरो मन्त्री तु तस्य शुकनासाख्योभूत् यस्य पत्नी मनोरमा । निःसंतानतया परमविषण्णा विलासवती यावदपत्यार्थं व्रतादिकमाचरति तावदकस्मादेकदा राज्या मुखे प्रविशन्तं चन्द्रं ददर्श स्वप्ने राजा । शुकनासोपि, विप्रेण केनचिन्मनोरमायाः क्रोडे निहितं पुण्डरीकमेकमालोकयामास स्वप्ने । ततश्च विलासवत्याश्चन्द्रापीडः, मनोरमायाश्च पुण्डरीकाभिधानः सुतोऽभवत् । मिथः सौहार्दमापन्नौ द्वावप्येतौ कुमारौ राज्ञा सकलविद्यासु पारगामितामुपनीतौ । ततो विद्यास्नातकोसौ चन्द्रापीडो राजाज्ञया बलाहकाभिधानेन सेनाध्यक्षेण समानीतमिन्द्रायुधना-

मानं तुरगवरमारुह्य विद्यागृहाद्राजधानीमाययौ । जनकजनन्योः संदर्शनेनानन्दितः, मृगयां विधाय नगरमुपागतो जनन्या प्रेषितां पत्रलेखामवाप्य मुदितः शुकनासोपदेशेन प्रगुणीकृतः, तारापीडेन यौवराज्येभिषिक्तोसौ दिग्विजयाय प्रातिष्ठत । त्रिभिः संवत्सरैः सर्वा दिशो विदिशश्च विजित्य, हेमकूटवासिकिरातानामावासं सुवर्णपुरमधितिष्ठन्नेकाकी चन्द्रापीडः कदाचिदिन्द्रायुधमारुह्य मृगयार्थमटन् किंनरयुगलानुसरणप्रसङ्गेन पञ्चदशयोजनानि ययौ । किंनरमिथुने गिरिशिखरमारूढे, भृशमनुतप्तः श्रमेण तृषातुरो जलमन्विष्यन् विशाल-मनोरममच्छोदाख्यं सरः प्राप्तवान् । जलावगाहनपानोत्तरं तत्तटे विश्राम्यन्, वीणाक्वणसहितं गानमाकर्ण्य तदनुसरन्, अतिगौरमनोरमामेकां कन्यकां शिवालयगतां ददर्श । अथ प्राप्तातिथिसत्कारेण तेन पृष्टा सा निजतपोवृत्तमेवमाह स्म—

"अरिष्टातनयो गन्धर्वराजो हंसः सोममयूखसंभवकुलजातां गौरीं परिणीतवान् । तयोस्तनया महाश्वेतानाम्न्यहमतिक्रान्तशैशवा कदाचिदस्मिन् सरसि स्नातुमागत्य कुतोप्यलौकिकं सौरभमाजिघ्रती तदनुसरणं च विदधती केनचिदन्येन कुमारेण सहितं मूर्तिमन्तमिव मन्मथं मुनिकुमारमेकमवलोक्य 'कोयं युवा, किंनामकस्य तरोरियं सुरभिता मञ्जरी' इति तत्सहचरं कुमारमप्राक्षम् । स प्रत्युवाच—'महर्षेः श्वेतकेतोः सौन्दर्यमोहितायां—लक्ष्मीदेव्यामुत्पन्नः पुण्डरीकमध्ये जाततया पुण्डरीकनामा सोयं कुमारः । नन्दनवनदेवतया सादरमुपहृता सेयं पारिजातस्य मञ्जरी ।' निर्जितमारः स तु कुमारः—'कुतूहलिनि ! किं वा प्रश्नायासेन । यदि रुचिता तर्हि गृह्यतामियम्' इत्यभिधाय मञ्जरीं तां मे कर्णे कुर्वन् हस्तान्निपतितामक्षमालामपि न ज्ञातवान् । अहं तु मालामिमामगृह्णाम् । मन्मथविकारमिममालोक्य कुपितेन द्वितीयेन कुमारेण तिरस्क्रियमाणः कुमारोसौ ( पुंडरीकः ) मामुपेत्य मालामयाचत् । अहं तु मुक्तामयं निजहारमेव कण्ठादुन्मुच्य तस्मै समर्प्य, तां च स्फटिकमयीं जपमालां कण्ठे वहन्ती जनन्या सह कृतस्नाना गृहमुपागच्छम् । ततो मत्परिचारिका तरलिका तेन कुमारेण कृतं मत्परिचयादिप्रश्नवृत्तं मह्यमावेद्य पत्रमेकमर्पितवती, यत्र चेयमार्याऽऽसील्लिखिता—

'दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे ।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥'

सायं तु तत्सहचरः कुमारः ( कपिञ्जलः ) कामविह्वलां मां तस्य कुमारस्य मन्मथव्यथां यावदावेदयति तावदेव समागच्छन्तीं मज्जननीं ज्ञात्वा स त्वरितं परावर्तत । प्रतिगतायां जनन्याम्, उपस्थितायां च रजन्याम्, समुदिते चन्द्रमसि, उत्कण्ठिताहं तरलिकाद्वितीया निभृतं गृहान्निर्गत्य तमभिसरन्ती दूरात्कपिञ्जलविलापमाकर्ण्य द्रुततरमभिपतन्ती मन्दभाग्या महाभाग्यं तं कुमारमुपरतमद्राक्षम् । शोकात्कृतमरणव्यवसायां माम्—'वत्से महाश्वेते ! न त्वया त्याज्याः प्राणाः, पुनरपि ते भविष्यत्यनेन सह समागमः' इति चन्द्रमण्डलादवतीर्णः कश्चिन्महापुरुषोऽभिधाय तं कुमारदेहं कराभ्यामुत्क्षिपन् नभसि न्यलीयत । 'क मे सुहृदमपहरसि' इति रोषाद्बद्धपरिकरः कपिञ्जलोऽपि तमन्वसरत् । विस्मयविषादाभ्यां गृहीताऽहं तु संसारान्निर्विण्णा व्रतमेतद्व्यालम्बिषि" । इति

अथ 'परिचारिका सा तरलिका क गता' इति चन्द्रापीडेन जिज्ञासिते सा पुनरवदत्—"गन्धर्वराजाच्चित्ररथान्मदिरादेव्यां जाता कुमारी कादम्बरी मम द्वितीयं हृदयम् । सा ममाऽनेन शोकवृत्तान्तेन प्रतिज्ञामकरोत्—'सशोकायां महाश्वेतायां नाहमात्मनः पाणिं ग्राहयिष्यामि' । कादम्बरीपाणिग्रहणायाऽनुनेतुं गन्धर्वराजेन कृतानुरोधाहमद्यैव कादम्बरीसकाशे तां प्राहैषम्" इति ।

द्वितीयेऽहनि प्रातरेव तरलिकया सह समागतः केयूरकनामकः कादम्बरीवीणावाहकः पाणिग्रहणे तस्या असंमतिमावेदयत् । कादम्बरीबोधनाय हेमकूटं प्रयान्त्या महाश्वेताया अनुरोधेन चन्द्रापीडोपि गन्धर्वराजधानीं गतोऽलौकिकसौन्दर्यशालिनीं कादम्बरीमालोक्य प्रणयपरतन्त्रोऽभवत् । कादम्बर्यपि तत्प्रणयवशंवदा दिव्यं दुकूलयुगं शेषनामकं रत्नहारं च निजसख्या मदलेखाया हस्तेन तस्मै प्रजिघाय । अथ प्रीतिपरतन्त्रः स कादम्बर्या हृदयमादाय निजस्कन्धावारं प्रत्यागतः सुहृदे वैशम्पायनाय सर्वं वृत्तमाचख्यौ । द्वितीयेऽहनि प्रत्यूष एव समुपेतेन कादम्बरीवैकल्यनिवेदकेन केयूरकेण सह पत्रलेखामादाय हेमकूटं गतश्चन्द्रापीडो हिमगृहगतां मदनपरवशां कादम्बरीं ददर्श । तया सह व्यङ्ग्यार्थगर्भं ललितमालप्य, तदनुरोधात्पत्रलेखां तत्रैवावस्थाप्य निजस्कन्धावारं परावृते । तत्र च पितुः पत्रमवाप्य, 'पत्रलेखामादाय त्वया परस्तादागन्तव्यम्' इति सेनापतिसुतं मेघनादमादिश्य, तत्रैव चावस्थाप्य, मार्गे द्रविडधार्मिकाधिष्ठितां चण्डिकां पश्यन्नुज्जयिनीमाजगाम । कतिचिद्दिनानन्तरं मेघनादेन सहागता पत्रलेखा कादम्बर्या विरहावस्थामुपालम्भोक्तिं च चन्द्रापीडाय न्यवदेयत् ।

[ कादम्बरीपूर्वभागः ]

---

## उत्तरकादम्बरी

हेमकूटात्प्रत्यागता पत्रलेखा चन्द्रापीडविरहनिमित्तं कादम्बर्याः परमं वैकल्यमावेदयांबभूव । तेन हि कादम्बर्याः प्रेमणि संदिहानश्चन्द्रापीडो भृशमात्मानमुपालेभे । तद्दिनादारभ्य बहिरप्रकाशयन्नपि हृदये वियोगवह्निनाऽतितरामदूयत । एकदा मनोविनोदाय सायं नगराद्बहिर्भ्रमन् बहुभिस्तुरगैः सह दूरादायान्तं केयूरकमकस्माद्ददर्श । नगरे आगत्य केयूरको रहसि कादम्बर्याः सुभृशमुपचितं मदनसंतापं तथाऽऽवेदयद् यथा शोकेन मूर्च्छितप्रतिबुद्धश्चन्द्रापीडः प्रत्युवाच—'किमित्यहं नाहूतो देव्या । संप्रत्यहं प्राणपणेनापि तत्तापनिवृत्तये संनद्धः ।' केयूरकः शीघ्रगमनाय चन्द्रापीडं प्रार्थयत । निशि चन्द्रापीडः—'पित्रादीननिवेद्य गमनं नोचितम् । आज्ञाग्रहणे तु इदानीमेव दिग्विजयप्रत्यागताय मे तौ गमनानुमतिं दास्यतो न वेति संदेह एव । वैशम्पायनोपि अच्छोदसरस्तटे त्यक्तः । कोऽधुना मे सहायकः' इति नानाचिन्तामकरोत् ।

प्रातः सहसा शुश्राव 'दशपुरं यावत्परागतः स्कन्धावारः' इति । ततश्चात्र प्रत्यागतेन वैशम्पायनेन सह कादम्बरीमनुसरिष्यामीति हृदि संतुतोष चन्द्रापीडः । केयूरकस्तु 'यावद्वैशम्पायनेन सह देवो हेमकूटाय प्रतिष्ठते ततः पूर्वं भवदागमननिवेदनाय विसर्जयतु मां देवः' इति गमनानुमतिं ययाचे । चन्द्रापीडस्तु स्वागमनप्रत्ययार्थं पत्रलेखामपि तेन सह पुरतो विससर्ज ।

चन्द्रापीडश्चिरवियुक्तस्य प्रियसुहृदो वैशम्पायनस्य मार्ग एव प्रत्युद्गमनाय पितृभ्यां शुकनासाच्चानुमतिमाचकाङ्क्ष । तारापीडश्चन्द्रापीडस्य यौवनारोहमालोक्य विवाहस्य प्रस्तावमाकलयन् शुकनासमुखेन प्रत्युद्गमनानुमतिं ददौ । अथ चन्द्रापीडस्तुरगसैन्यमादाय वैशम्पायनाभिमुखं प्रतस्थे । मार्गे च निजं स्कन्धावारमागच्छन्तमालोकयत् । सुहृद्दर्शनप्रत्याशया तत्र गतोपि शुश्राव यत् "वैशम्पायनोऽच्छोदसरस्तटे आगत्य सहसैव विकृतचित्तोऽभवत् । स्नानभोजनादिकं परित्यज्य लतामण्डपैकदत्तदृष्टिरस्मान् गन्तुमाज्ञापयत । आगमनाय कृतानुरोधस्तु सोत्तेजनमवादीत्—'नाहं गन्तुं शक्नोमि । न मे देहो मनो वा वशे । अत एव कुमारस्य कार्योपरोधहरणाय यूयं गच्छत इति' । दिनत्रयं तत्सान्त्वनचेष्टायां निष्प्रत्याशाः संप्रति वयं तत्प्रबन्धं तत्रैव विधाय कुमारसूचनाय परावृत्ताः स्मः" इति ।

कथमकस्मादिदं तस्य चित्तवैकृत्यमभूदिति विषण्णचित्तो बहुधा विकल्पयँस्तुरङ्गसैन्येनोज्जयिनीं परावृते कुमारः । तारापीडो वैशम्पायनवैराग्ये चन्द्रापीडस्य कञ्चिदपराधमाशशङ्के, किन्तु शुकनासः सर्वमिदमपममार्ज । परतस्तु —वैशम्पायनानयनाय अच्छोदतटे गमनानुज्ञामयाचच्चन्द्रापीडः । प्रवासाय प्रेषयन्ती माता हृदयेऽभूतपूर्वं विषादमकस्मादनुभूय अतिशीघ्रमागन्तुमाज्ञाप्य यथाकथंचिद्विससर्ज । मनसि नानामनोरथानावर्तयंश्चन्द्रापीडो मार्गे यात्राविघ्नकरं प्रावृट्कालं यापयामास । त्रिभागमात्रावशिष्टे चाध्वनि अच्छोदात्परावर्तमानं मेघनादम् ( सेनाध्यक्षम् ) अलोकयत् । उत्कण्ठितेन चन्द्रापीडेन—'अच्छोदसरस्तटे दृष्टस्त्वया वैशम्पायनः?' इति पृष्टः सेनाध्यक्षो व्यजिज्ञपत्—'अच्छोदसरःसमीपे वैशम्पायनागमनस्य कथैव न श्रुता मया । विशेषतश्च पत्रलेखाकेयूरकाभ्यामहमुज्जयिनीं विसर्जितो यत्त्वरितमागमनाय कृतप्रतिज्ञोपि कुमारः प्रावृष्यस्यां न राजदम्पतिभ्यां प्रेषितः । तत्तवानुपदमावामप्यागतावेव' इति ।

चन्द्रापीडस्तु विरहविकलायाः कादम्बर्याः का दशा स्यादस्यां प्रावृषि, इति नानाविचारसंतप्तो यथाकथंचिदच्छोदमासाद्य तत्र च सर्वतो विचिन्वन्नपि वैशम्पायनमनासाद्य तद्वृत्तान्तोपलम्भाशया महाश्वेतामुपजगाम । तत्र च तरलिकया यथाकथंचिदवस्थाप्यमानशरीरामतिविकलां तां ददर्श । 'हन्त न किञ्चिदनिष्टं स्याद्देव्याः कादम्बर्याः' इति मनसि विषीदन्कुमारो वैकल्यस्य कारणं पप्रच्छ । गद्गदकण्ठा सा जगाद—"महाभाग, मन्दभाग्याहं हेमकूटाद्यावदिह परावृत्ता तावदेव भवत्तुल्याकृतिमेकं ब्राह्मणयुवानं प्रनष्टमिव किञ्चिद्विचिन्वन्तमितस्ततो व्यलोकयम् । स तु मां दृष्ट्वैव परिचित इव स्निग्धया दृष्ट्या विलोकयन्, भूयसा निवार्यमाणोपि चाटूनि वदन् कामाकूतेन मुहुरभ्यसरत् । अहं तु तमनभिवीक्ष्यैवोपेक्षयाऽन्यतोऽगच्छम् । अथैकदा ज्योत्स्नापूरप्लावितायां गाढयामिन्यां सर्वेषु सुप्तेषु निभृतपदसंचारी, मदनाविष्टतया युक्तायुक्तविचारशून्योसौ मामागत्य—'चन्द्रमुखि ! हन्तुमुद्यतो मामेष कुसुमशरसहायश्चन्द्रमाः । तत्त्वां शरणमागतोऽस्मि' इत्यादि शुक इव नाना प्रलपन् मुहुर्निवार्यमाणोपि यदा न व्यरमत्तदा प्रियतमशोकोद्दीसमन्युश्चन्द्राभिमुखी भूत्वा 'सकलभुवनचूडामणे ! यदि मया देवस्य पुण्डरीकस्य दर्शना-

त्प्रभृति न मनागप्यपरः पुमांश्चिन्तितस्तर्हि शुक इव परप्रणोदितं जल्पन्नयं तस्यामेव जातौ पततु' इत्यशपम् । स तु मद्वचनानन्तरमेव छिन्नमूलस्तरुरिवाचेतनः क्षितावपतत्' ।

एतदाकर्ण्यैव कादम्बरीविरहदुःखेन पूर्वमेव भेदोन्मुखं चन्द्रापीडस्य हृदयं सहसाऽस्फुटत् । अनेनानर्थेन हा किमिदमिति मुक्ताक्रन्दायां तरलिकायाम्, स्तब्धदृष्टिनिश्चेष्टायां महाश्वेतायाम्, नानाविधं विलपत्सु चन्द्रापीडपरिजनेषु, केयूरकाच्चन्द्रापीडागमनमाकर्ण्य तद्दर्शनोत्कलिकावगृहीता कादम्बरी पत्रलेखाहस्तावलम्बिनी तत्रैवाजगाम । सा तून्मुक्तजीवितं तमालोक्य निश्चलस्तब्ध-दृष्टिर्न व्यलपन्न रुरोद । अनुमरणाय कृताध्यवसाया सा यावच्चन्द्रापीडचरणौ स्पृशति तावदेव तत्करस्पर्शादुच्छ्वसत इव चन्द्रापीडदेहात्किमपि चन्द्रधवलं ज्योतिरुज्जगाम, अन्तरिक्षे चाशरीरिणी वागश्रूयत—'वत्से महाश्वेते, पुनरपि त्वं मयैव समाश्वासयितव्या वर्तसे । तत्ते पुण्डरीकशरीरं मल्लोके मत्तेजसाऽऽप्याय्यमानं भूयस्त्वत्समागमाय तिष्ठत्येव । इदमपरं मत्तेजोमयं चन्द्रापीडस्य शरीरं शापदोषादात्मशून्यमपि, कृतशरीरान्तरसंक्रान्तेर्योगिन इवाऽत्रैव भवत्योः प्रत्ययार्थमा शाप-क्षयादास्ताम् । नेदमग्निना संस्कर्तव्यम् । यत्नतः पालनीयमा समागमप्राप्तेः' ।

अथ किमेतदिति विस्मयाक्षिप्तहृदयेषु सर्वेषु, आविष्टेव पत्रलेखा 'विना वाहनमेकाकिनि प्रस्थिते देवे, न क्षणमपि शोभसे त्वम्' इतीन्द्रायुधमाकर्षन्ती सह तेनाच्छोदसरस्यपतत् । तत्क्षणमेव च तस्मादच्छोदाम्भसो निर्गत्य कपिञ्जलो महाश्वेतामुपजगाम । सप्रहर्षं कृतवन्दनया तया सर्वं वृत्तजातं पृष्टोसौ जगाद—"-'क्व मे प्रियसुहृदमपहृत्य गच्छसि' इत्यभिधाय पुण्डरीकशरीरमुत्क्षिपन्तं तं पुरुषमनुबध्नन्नहं तेन सह चन्द्रलोकं गतोऽस्मि । पुरुषोसौ स्वयं चन्द्रमाः । असौ तच्छरीरं पर्यङ्के स्थापयित्वा मामवादीत्—"कपिञ्जल ! जानीहि मां चन्द्रमसम् । अनेन (पुण्ड.)हि स्वव्यापारमनुतिष्ठन्नहम् 'यथाहमप्राप्तप्रियासमागम एव त्वया प्राणैर्वियोजितस्तथा त्वमपि कर्मभूमिभूतेऽस्मिन्भारते जन्मनि जन्मन्येवोत्पन्नानुरागोऽप्राप्तप्रियासमागमो जीवितमुत्स्र-क्ष्यसि' इति निरपराधमेव शप्तः । शापक्रोधाज्ज्वलितोहम् 'त्वमपि मत्तुल्यदुःखसुख एव भवि-ष्यसि' इति प्रतिशापमस्मै प्रायच्छम् । अपगतामर्षश्च महाश्वेताव्यतिकरं विवेकेन विचार्य दय-मानहृदयोहम्, मद्दत्तशापदोषमोचनपर्यन्तमस्य शरीरं मा व्यनशदिति शरीरमिदमानैषमहम् । वत्सा च महाश्वेता समाश्वासिता । तदनेन स्वयंकृतादात्मदोषान्मया सह मर्त्यलोके जन्मनि जन्म-नीति वीप्सावशाद्, वारद्वयमवश्यमुत्पत्तव्यम् । त्वमिदं वृत्तं प्रतिकारं कर्तुं श्वेतकेतवे निवेदय" ।

अहं तु वयस्यशोकान्धतया सुरवर्त्मनि धावनेन वैमानिकमेकं लङ्घयन्, क्रोधोद्दीप्तेन तेन—'तुरङ्गम इव मामवहेलयन् तुरङ्गम एव भूत्वा त्वं मर्त्यलोकेऽवतर' इति शप्तोऽस्मि । शापप्रति-संहाराय बहुशः कृतानुनयोसौ जगाद—'उज्जयिन्यामपत्यहेतोस्तपस्यतस्तारापीडनाम्नो राज्ञश्चन्द्र-मसा तनयत्वमुपगन्तव्यम् । वयस्येनापि ते पुण्डरीकेण तन्मन्त्रिण एव शुकनासस्य (तनयत्वम्.) । त्वमपि तस्य चन्द्रात्मनो राजपुत्रस्य वाहनतामुपगत्य सहचारी भविष्यसि ।' अहं तु तद्वचनान-न्तरमेव महोदधौ निपत्य तुरगीभूयोदतिष्ठम् । पूर्वजन्मप्रभावात्सर्वं स्मरन्नहमेव किन्नरयुग्मानु-सरणप्रसङ्गेन चन्द्रावतारं चन्द्रापीडमिहाऽऽनयम् । योसौ प्राक्तनसंस्कारात्त्वामभिलषन् त्वया शापाग्निना दग्धः सोपि मे सुहृदः पुण्डरीकस्यावतारः" ।

'हन्त पुनरपि निर्घृणया मयैव देवः पुण्डरीको निपातितः' इति सोरस्ताडं विलपन्तीं महाश्वेताम् 'अचिरादेव पुनः समागमो भवेत्' इत्याश्वास्य कपिञ्जलः श्वेतकेतोः समीपमुदपतत् । गते तस्मिन् पुनः समागमोपदेशेन समाश्वास्यमाना कादम्बरी शिलातले चन्द्रापीडतनुमवस्थाप्य प्रयता देवोचितं पूजयन्ती तस्थौ । इतो जलदकालात्यये चन्द्रापीडवार्तामादाय प्रतिगतदूतमुखेन 'शापच्युतदिव्यप्रकृतीनामखिलं मङ्गलोदर्कं भविष्यतीति' समाश्वासेन मरणव्यवसायान्निवार्यमाणा अपि तारापीडशुकनासादयः सान्तःपुरपरिजनाः स्नेहवशादखिलप्रजाभिरनुगम्यमानाश्चन्द्रापीडदर्शनाय तत्राजग्मुः । तत्र च शयानस्येवाऽविकृतां चन्द्रापीडस्य तनूमालोक्य विस्मिताः सर्वे सौन्दर्य—पातिव्रत्याधिदेवतामन्वहमुपचरन्तीं कादम्बरीमभिननन्दुः । कादम्बरी-महाश्वेताप्रबन्धेन राजोचितसपर्ययोपचर्यमाणोपि सप्रजापरिजनो राजा तपस्विजनचर्ययाऽऽश्रमभूमिमिमामधितष्ठौ ।

हारीतप्रमुखानामृषीणां सविधे सर्वमिमं वृत्तान्तं कथयित्वा भगवान् जाबालिः सस्मितमवादीत्—'योयं कामोपहततया दिव्यलोकात्परिभ्रश्य वैशम्पायननामा शुकनाससूनुरभूत्स एवैष कुपितस्य पितुराक्रोशान्महाश्वेताशापाच्चास्यां शुकजातौ पतितोऽस्ति'—।"

राज्ञः शूद्रकस्य सविधे शुकः स्ववृत्तान्तं कथयति यत्—'एवं वदत्येव जाबालौ सुप्तप्रबुद्धस्येव मे सकलविद्यानां पूर्वपरिचितवस्तूनां च परिचयो यथावदभूत्, आसीच्च मनुजस्येव वाक् । जाबालिपुत्रेण हारीतेन स्नेहादुपचर्यमाणोपि चन्द्रापीड—महाश्वेतादीनां स्मरणवशादुत्कण्ठया ताम्यन् पक्षोद्भेदपर्यन्तं कालं तत्र यथाकथंचिदगमयम् । पितुः ( श्वेतकेतोः ) समीपादागतेन कपिञ्जलेन दुर्दैवावसानं यावत्तत्रैवावस्थातुमागृहीतोऽपि उत्पतनसामर्थ्योदये एव महाश्वेतादीनां दर्शनार्थमुत्तरदिङ्मुखो नभस्युदपतम् । अशक्ततया क्षुत्तृड्भ्यां परीतोहं विश्रमार्थं यावन्निशि मार्गतरौ विश्राम्यामि तावदेव प्रातस्तन्तुपाशैर्बद्धं चाण्डालहस्तगतं चात्मानमालोकयम् । ततः पक्कणाधिपतिदुहित्रा चाण्डालदारिकया पञ्जरे निबध्य मुनिभोजनोचितैः फलादिभिरेव यौवनमुपनीतोऽस्मि । कियत्कालानन्तरमेकदा प्रातरकस्मादात्मानं सुवर्णपञ्जरगतं तां च चाण्डालदारिकामीदृशीमपश्यं यादृशी देवेनाद्य दृष्टा । यावदहमाश्चर्यमिदं जिज्ञासितुं मौनमुत्सृजामि तावदेव सेयं मामादाय देवपादमूलमायाता । तत्केयम्, किमर्थं वाऽहमाबध्य इहानीत इत्यस्मिन्विषये भवानिवाहमप्यनपगतकुतूहल एवास्मि" इत्युक्त्वा शुको विरराम ।

प्रवृद्धकुतूहलेन राज्ञाऽऽहूता चाण्डालकन्यका त्वागत्य स्वतेजसा राजानमभिभवन्ती प्रागल्भ्येन बभाषे—'कादम्बरीलोचनानन्द चन्द्र ! सर्वस्त्वयाऽस्य दुर्मतेरात्मनश्च पूर्वजन्मवृत्तान्तः श्रुत एव । अस्मिन् शुकजन्मन्यपि पित्रा निषिद्धेपि सोयं परिचितप्रणयाय प्रस्थित इत्यनेन स्वयं कथितम् । अहमस्य दुरात्मनो जननी श्रीः । दुर्दैवशमनपर्यन्तं मर्त्यलोके एवैनमभिरक्षितुं पित्राऽस्य समादिष्टा, तथाप्रस्थितमेनमिहानीतवती । भवतश्चास्य च शापावसानसमयः । तद् द्वावपि दुःखबहुले तनू परित्यज्य सममेव स्वेष्टजनसमागमसुखमनुभवतम्' इति कथयन्त्येव विद्युदिव चमत्कृत्य क्षितेर्गगनमुदपतत् ।

जन्मान्तरस्मरणेन द्वयोरपि (शूद्रकवैशम्पायनयोः) शरीरं काष्ठीभूतमभूत् । इतो मनोवृत्तिमुद्दीपयतो वसन्तस्य विजृम्भणेन सहसैव प्रोद्दीपितरागा कादम्बरी आत्मानं धारयितुमपारयन्ती तां चन्द्रापीडतनुं रागाद्यावत्कण्ठे गृह्णाति तावदेव कादम्बरीस्पर्शतो निवृत्तशापस्यास्य पुनः परावत्तृते जीवः । सुप्तप्रबुद्ध इवायमवादीत्—'प्रत्युज्जीवितोस्मि तवानेन कण्ठग्रहेण । निवृत्ता सा शूद्रकाख्या तनुः । तव प्रियसख्या महाश्वेताया अपि प्रियतमो मयैव सह निवृत्तशापः' । इत्यभिदधत्येव कपिञ्जलकरावलम्बी गगनादवतरन्पुण्डरीकोपि संमुखमदृश्यत ।

यावत्कादम्बरी प्रियसखीं महाश्वेतां प्रियसमागमप्रियाख्यानेनाभिवर्द्धयति तावदेव विलासवतीतारापीडादयोऽपि समागत्य परमं प्रमोदमन्वभवन् । चन्द्रात्मकत्वेपि तारापीडादीनां पूर्ववत्पादयोः प्रणमंस्तैश्चाशीर्भिरभिवर्द्धितश्चन्द्रापीडः स्वपित्रोस्तत्पित्रोश्च 'एष वो वैशम्पायनः' इति विनयविलक्षवदनं पुण्डरीकमदर्शयत् । अस्मिन्नवसरे कपिञ्जलः समुपसृत्य शुकनासमवादीत्—'एवं संदिष्टमार्यस्य श्वेतकेतुना—अयं पुण्डरीकः केवलं संवर्द्धितो मया, आत्मजः पुनस्तव । अस्यापि भवत्स्वेव लग्नः स्नेहः । तद्वैशम्पायन इत्येवावगत्याऽयमविनयेभ्यो निवारणीयः' ।

अपरेद्युः सकलगन्धर्वानुगतौ मदिरा-गौरीभ्यां सह चित्ररथहंसौ गन्धर्वराजावपि तत्रैवाजग्मतुः । चित्ररथश्चन्द्रापीडविवाहाय स्वराजधानीं नेतुं तारापीडं प्रार्थयत । तारापीडस्तं प्रत्यवादीत्—'गन्धर्वराज ! मदीयं सर्वस्वमपि मया ते जामातरि संक्रमितम् । संप्रत्यहं सर्वं सुतसात्कृत्य तपोवन एव निवस्तुमिच्छामि ।' सर्वैः सह हेमकूटं गतश्चित्ररथः कादम्बर्या सह समग्रमेव स्वं राज्यं चन्द्रापीडाय न्यवेदयत् । हंसोपि पुण्डरीकाय समं महाश्वेतया निजपदमदात् । एकदा विषण्णमुखी कादम्बरी चन्द्रापीडमूर्तिं चन्द्रमप्राक्षीत्—'आर्यपुत्र ! सर्वे वयं वियुक्ताः परस्परं संघटिताः । सा पुनर्वराकी पत्रलेखा न दृश्यते ।' चन्द्रापीडः प्रत्यवादीत्—'सा खलु मद्दुःखदुःखिता रोहिणी । शापवशान्महीमागतेन मया सह स्नेहादवतीर्णा । संप्रति मया साऽऽत्मलोकं विसर्जिता, तत्रैव तां पुनर्द्रक्ष्यसि ।'

एवं पुण्डरीके समारोपितराज्यभारः परित्यक्तस्वकार्ययोः पित्रोः पादावनुचरन्, कदाचिदुज्जयिन्यां कदाचिद्धेमकूटे कदाचिच्च पुण्डरीकप्रीत्या लक्ष्मीनिवाससरसि, यथेच्छं विहरंश्चन्द्रापीडमूर्तिश्चन्द्रः कादम्बर्या सह, कादम्बरी महाश्वेतया सह, महाश्वेता पुण्डरीकेण सह, पुण्डरीकोपि चन्द्रमसा सह परस्परावियोगेन सुखान्यनुभवन्तः सर्वे परां कोटिमानन्दस्याऽध्यगच्छन् ।

भट्टश्रीमथुरानाथशर्मनिर्माणमुद्रितः[१] ।
सोयं कादम्बरीसारः सतां मदयतान्मनः ॥

---

१ निर्माणस्यैव मुद्रा ( चिह्नम् ) संजाता यस्य सः । कादम्बरीनिर्यासः पात्रमुखे लाक्षादिमुद्राङ्कितो रसिकानां मनो मादयति । अयं कथानिष्कर्षो मथुरानाथकृतनिर्माणेनाङ्कितः सज्जनमनो हर्षयेदित्युभयोऽर्थः ।

श्रीः

# विषयानुक्रमणिका ।

## पूर्वभागे

## उत्तरभागे

# कादम्बरी ।



## पूर्वभागः ।

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे ।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥ १ ॥

---

श्रेयःश्रीललनाविलासकुशलः पायादपायात्स वः
श्रीमन्नाभिनरेन्द्रसूनुरमरैः संसेव्यमानान्तिकः ।
रेजे यस्य कचावली भुजशिरोदेशे लुठन्ती प्रभो-
र्लग्ना शैवलमञ्जरी भवसरित्पारं प्रयातुः किमु ॥
सर्वेऽन्ये जनतानिषेविततया मानाभिभूता भृशं
मन्यन्ते तृणवत्रिलोकमखिलं दुर्बुद्धिबद्धाशयाः ।
कृत्स्नैश्वर्यजुषापि येन सुधिया देवेन्द्रसेव्याङ्घ्रिणा
नैवाकारि कदापि गर्वमलिनं चेतः स शान्तिः श्रये ॥
यत्कीर्तिर्धवलीचकार सहसा ब्रह्माण्डभाण्डोदरं
दाशार्होऽपि तदन्तरा निपतितः सद्यो न संलक्षितः ।
तेनाद्यापि निरीश्वरं जगदिदं जल्पन्ति सांख्यादयः
स श्रीनेमिजिनेश्वरो भवभृतां देयादमन्दां मुदम् ॥
मूर्ध्नि न्यस्तद्विजिह्वाधिपतिफणगणस्पष्टसंरम्भदम्भा-
द्धत्ते यः सप्तविश्वाद्भुतपरममनोहारिसाम्राज्यलक्ष्मीम् ।
नम्रालुस्वर्गिमौलिप्रकरमणिलसत्कान्तिभिश्चित्रिताङ्घ्रिः
स श्रीपार्श्वाधिराजो भवतु भवभिदे पार्श्वसंसेव्यमानः ॥
यद्वाचामधिकां विलासपदवीमीहेद् भृशं भारती
यत्सत्त्वैकपरम्परां कलयितुं सिंहोऽङ्कदम्भादियात् ।
यत्सौन्दर्यदिदृक्षयेव समभूदक्ष्णां सहस्रं हरेः
स श्रीवीरविभुर्ददातु भविनां शश्वन्मनोवाञ्छितम् ॥
श्रीमत्तपःपक्षसहस्रदीधितिः श्रीहीरसूरिः समभून्महोदयः ।
यद्वक्त्रसौन्दर्यगुणं विलोकयन्ययौ सुरौघः किमु निर्निमेषताम् ॥
अनन्यसौजन्यगुणैर्गरीयान्विशिष्टशिष्टाचरणैर्वरीयान् ।
तत्पट्टपाथोनिधिपूर्णचन्द्रो विराजते श्रीविजयादिसेनः ॥
तत्पट्टोदयचूलावलम्बिपूर्णेन्दुसंनिभः श्रीमान् ।
श्रीविजयतिलकसूरिर्भूरिगुणैर्भूषितो जयति ॥
तत्संप्रदाये प्रथितप्रभावो बभूव दानर्षिरतिप्रसिद्धः ।
यदीयवैराग्यकथां प्रवक्तुं प्राप्तो गुरुः किं हरिसंनिधानम् ॥

जयन्ति बाणासुरमौलिलालिता दशास्यचूडामणिचक्रचुम्बिनः ।
सुरासुराधीशशिखान्तशायिनो भवच्छिदस्त्र्यम्बकपादपांसवः ॥ २ ॥

---

तद्दीक्षितानेकविनेयवर्गमुक्तालतामध्यमणिप्रकारः ।
श्रीवाचकेन्द्रः सकलादिचन्द्रो बभूव विश्वाद्भुतवाग्विलासः ॥
श्रीसूरचन्द्रः समभूत्तदीयशिष्याग्रणीर्न्यायविदां वरेण्यः ।
यत्तर्कयुक्त्या त्रिदिवं निषेवे तिरस्कृतश्चित्रशिखण्डिजोऽपि ॥
तदीयपादाम्बुजचञ्चरीको विराजतेऽद्धा हरिधीसखाभः ।
श्रीवाचकः संप्रति भानुचन्द्रो ह्यकब्बरक्ष्मापतिदत्तमानः ॥
श्रीशाहिचेतोब्जषडङ्घ्रितुल्यः श्रीसिद्धचन्द्रोऽस्ति मदीयशिष्यः ।
कादम्बरीवृत्तिरियं तदीयमनोमुदे तेन मया प्रतन्यते ॥

इह हि विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं प्रारिप्सितविघ्नविघातफलकं हिरण्यगर्भनमस्कारात्मकं मङ्गलमाचरति—**रजोजुष इति** । अजाय स्वयंभुवे नम इत्यन्वयः । किंभूताय । प्रजानां जन्मनि सृष्टिकाले रजोजुषे रजोगुणयुक्ताय । पुनः किंविशिष्टाय । प्रजानां स्थितौ स्थितिकाले सत्त्ववृत्तये सत्त्वस्य वृत्तिर्यस्मिन् । सत्त्वगुणयुक्तायेत्यर्थः । पुनः किंलक्षणाय । प्रजानां प्रलये विनाशकाले तमःस्पृशे तमोगुणयुक्ताय । अमीषां च गुणानां लक्षणम् 'सत्त्वं लघु प्रकाशकं च, चलमवष्टम्भकं च रजः, गुर्वावरणं च तमः' इति द्रष्टव्यम् । जन्मनि स्थितौ प्रलये चेति निमित्तसप्तमी वा । पुनः किंविशिष्टाय । सर्गस्थितिनाशहेतवे प्रजानामित्यस्य सर्वत्रानुषङ्गः । तेन प्रजानां सर्गः स्थितिश्च नाशश्च तेषां हेतवे कारणीभूताय । पुनः किंलक्षणाय । त्रयीमयाय । त्रयी ब्रह्मविष्णुमहेशानाम् । वेदानां वा त्रयी । तन्मयाय तत्स्वरूपाय । पुनः किंविशिष्टाय । त्रिगुणात्मने ब्रह्मविष्णुमहेशात्मकत्वेन तत्तद्गुणयोगात्त्रिगुणात्मकाय । सत्त्वरजस्तमोगुणस्वरूपायेत्यर्थः । तादृशाय पितामहाय नम इति प्राचीनव्याख्या ॥ अत्र च व्याख्याने विधेः सृष्टिमात्रकर्तृत्वेन केवलं रजोगुणस्यैव संबन्धात्त्रिगुणात्मकत्वमतिविरुद्धम् । किं च विधेस्तमोगुणवत्त्वे सत्त्वगुणवत्त्वे वा शिवत्वं विष्णुत्वं च व्यपदिश्येत । एतेषां त्रयाणां गुणभेदादेव मूर्तिभेद इति पौराणिकाः । अपि च पूर्वार्धे जन्मस्थितिप्रलयकर्तृत्वस्य रजोजुषे सत्त्ववृत्तये तमःस्पृश इत्यनेन त्रिगुणात्मकत्वस्यापि चोक्तत्वेन पुनरुत्तरार्धे सर्गस्थितिनाशहेतव इति त्रिगुणात्मन इति च पुनरुक्तं स्यादिति प्रकारान्तरेण व्याख्यास्यामः—अजाय कूटस्थनित्याय परब्रह्मणे नम इत्यन्वयः । किंभूताय । प्रजानां सर्गस्थितिनाशहेतवे । प्रजानामित्यनित्यमात्रपदार्थोपलक्षकम् । तेनानित्यपदार्थानां सर्गस्थितिनाशकारणायेत्यर्थः । अनित्यपदार्थानां सृष्टिस्थितिनाशहेतुत्वं च श्रुतिसिद्धम् । 'जगत्कारणं ब्रह्म' इति श्रुतेः । पुनः किंभूताय । त्रयीमयाय । त्रयी वेदानां त्रयी तत्स्वरूपाय । 'वेद एव परं ब्रह्म' इत्युक्तत्वात् । यद्वा । त्रयी ब्रह्मविष्णुमहेशानां त्रयी तत्स्वरूपाय । यथा मृद उत्पन्नेऽपि घटे मृन्मय इति व्यवहारस्तथा ब्रह्मणस्त्रयाणामुत्पादकत्वेऽपि त्रयीमयत्वव्यवहारः समुचितः । ब्रह्मविष्णुमहेशास्त्रयो जीवा एवेति वेदान्तिनः । अत एव त्रिगुणात्मकाय । भेदाभेदविवक्षयेत्यर्थः । तस्य परब्रह्मणः कथं ब्रह्मविष्णुमहेशात्मकत्वमत आह—प्रजानां जन्मनि सृष्टौ रजोजुट् प्रजापतिस्तत्स्वरूपायेत्यर्थः । पुनः प्रजानां स्थितौ सत्त्ववृत्तिर्विष्णुस्तत्स्वरूपाय । पुनः प्रजानां प्रलये तमःस्पृक् शिवस्तत्स्वरूपाय । यथैकस्यैव स्फटिकस्य नीलपीतादिगुणसंबन्धान्नीलः पीत इति व्यवहारस्तथैकस्यैव परब्रह्मणः सृष्टिकाले रजोगुणसंबन्धाद्ब्रह्मेति, स्थितिकाले सत्त्वसंबन्धाद्विष्णुरिति, प्रलये तमःसंबन्धादीश्वर इति व्यवहारः । तेन परब्रह्मण एवायं नमस्कार इति किं बहुना ॥ १ ॥

**जयन्तीति** । त्र्यम्बकस्य शिवस्य पादपांसवश्चरणरेणवो जयन्ति । सर्वोत्कर्षेण वर्तन्त इत्यर्थः । कथंभूताः । **बाणासुरेति** । बाणो बाणनामासुरस्तस्य मौलिना मुकुटेन मस्तकेन वा लालिताः परिचिताः । पुनः किंविशिष्टाः ।

जयत्युपेन्द्रः स चकार दूरतो विभित्सया[1] यः क्षणलब्धलक्ष्यया[2] ।
दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम् ॥ ३ ॥
नमामि भर्त्सो[3]श्चरणाम्बुजद्वयं सशेखरैर्मौखरिभिः कृतार्चनम् ।
समस्तसामन्तकिरीटवेदिकाविटङ्कपीठोल्लुठितारुणाङ्गुलि ॥ ४ ॥
अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते ।
विषं महाहेरिव यस्य दुर्वचः सुदुःसहं संनिहितं सदा मुखे ॥ ५ ॥
कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव ।
मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव ॥ ६ ॥

---

**दशास्येति ।** दशास्यो रावणस्तस्य चूडामणयः शिरोमणयस्तेषां चक्रं समूहं चुम्बन्ति स्पृशन्तीत्येवंशीलाः । पुनः किंविशिष्टाः । **सुरेति ।** सुराश्चासुराश्च तेषामधीशाः स्वामिनस्तेषां शिखाः चूडास्तासामन्तः प्रान्तस्तत्र शेरत इत्येवंशीलाः । पुनः किंविशिष्टाः । भवच्छिदः । संसारविच्छेदिन इत्यर्थः । अत्र पूर्वविशेषणत्रयेण परमेश्वरचरणरजसः परमैश्वर्यं भवच्छिद इत्यनेन च संसारिणां संसारदुःखनिवारकत्वमुक्तमिति ॥ २ ॥

**जयतीति ।** स उपेन्द्रो विष्णुर्नृसिंहावतारी जयति सर्वोत्कृष्टत्वेन वर्तते । स कः । यो नृसिंहो विभित्सया भेत्तुमिच्छया दूरतो दूरादिव क्षणं लब्धं लक्ष्यमवलोकनैकाग्रत्वं यया अत एव कोपेन रोषेण अरुणया आरक्तया दृशैव दृष्ट्यैव रिपोः शत्रोर्हिरण्यकशिपोः उरो वक्षःस्थलमस्रं रुधिरं तद्वत्पाटलमारक्तं चकार । भयाद्विदारणभीत्या स्वयमेव भिन्नमिवेति कवेरुत्प्रेक्षा ॥ ३ ॥

शश्वद्गुरोर्नमस्कारं कुर्वन्नाह—**नमामीति ।** भर्त्सुरिति गुरोर्नाम । क्वचित्तु 'भर्त्सुः' इति पाठः । तस्य चरणाम्बुजद्वयं पादकमलयुगलं नमामि नमस्करोमि । किंभूतम् । सशेखरैः समुकुटैर्मौखरिभिः क्षत्रियविशेषैः कृतं विहितमर्चनं पूजनं यस्य तत्तथा । पुनः किंविशिष्टम् । **समस्तेति ।** समस्ताः समग्रा ये सामन्ता विषयान्तरराजानस्तेषां किरीटानि कोटीराण्येव वेदिका परिष्कृता भूमिः । विस्तीर्णत्वात्तत्साम्यम् । तस्या विटङ्को मध्य उन्नतप्रदेशः । विटङ्कशब्दस्य कपोताद्याधारभूतकाष्ठवाचित्वेऽप्यत्र लक्षणयोन्नतत्वमात्रवाचित्वम् । विटङ्क एव पीठं स्थलं तत्रोल्लुठिता घृष्टा अत एवारुणा रक्ताः । तत्रत्यरक्तादिसंबन्धात्स्वभावेन चारुणा अङ्गुलयः करशाखा यस्येति तत्तथा ॥ ४ ॥

**अकारणेति ।** असज्जनात्खलात्कस्य साधोर्भयं साध्वसं न जायते न भवति । अपितु सर्वस्यापि भवतीत्यर्थः । कथंभूतादसज्जनात् । **अकारणेत्यादि ।** अकारणमनिमित्तमेवाविष्कृतं प्रकटीकृतं यद्वैरं विरोधः तेन दारुणात् क्रूरान्निष्ठुरात् । यस्य खलस्य सदा निरन्तरं मुख आनने संनिहितं निकटस्थं दुर्वचो दुष्टवचनं सुदुःसहमत्यन्तोद्वेगजनकं भवति । यथा महाहेर्महोरगस्य विषं गरलं मुखे संनिहितं परमसंतापकत्वाद्दुःसहमित्युपमा ॥ ५ ॥

**कट्विति ।** खला दुर्जनाः साधून्सज्जनानलमत्यर्थं तुदन्ति पीडयन्ति । किं कुर्वन्तः । क्वणन्तो रटन्तः । किम् । कटु । अर्थाद्दुर्वचनमित्यर्थः । पुनः किंविशिष्टाः । मलदायकाः मलो मिथ्याकलङ्कस्तस्य दायकाः । आरोपका इत्यर्थः । क इव । बन्धनशृङ्खला इव । बन्धनं मनुष्यादेस्तदर्थं शृङ्खला लोहनिगडा इव । तेऽपि कटु कुत्सितं शब्दायमाना मलः स्वसंपर्कात्स्वमालिन्यं तस्यारोपकाः स्वाच्छन्द्येन गतागतावरोधका भवन्तीति । उत्तरार्धेन साधून्स्तौति—सन्तः सुजनास्तु साधुध्वनिभिर्मनोहारिशब्दैर्वचनैः पदे पदे शब्दे शब्दे प्रतिक्षणं वा, मनश्चित्तं हरन्ति गृह्णन्ति । क इव । यथा मणिखचिता नूपुरा मञ्जीराणि पदे पदे अर्थात्कामिनीनां चरणप्रक्षेपे प्रक्षेपे साधुध्वनिभिर्मञ्जुलसिञ्जितैर्हृदयहारिणो भवन्तीत्युपमा ॥ ६ ॥

---

१. 'वद्ध'. २. 'लक्षया'. ३. 'भर्त्सो'.

सुभाषितं हारि विशत्यधो गलान्न दुर्जनस्यार्करिपोरिवामृतम्।
तदेव धत्ते हृदयेन सज्जनो हरिर्महारत्नमिवातिनिर्मलम्॥ ७॥
स्फुरत्कलालापविलासकोमला करोति रागं हृदि कौतुकाधिकम्।
रसेन शय्यां स्वयमभ्युपागता कथा जनस्याभिनवा वधूरिव॥ ८॥
हरन्ति कं नोज्ज्वलदीपकोपमैर्नवैः पदार्थैरुपपादिताः कथाः।
निरन्तरश्लेषघनाः सुजातयो महास्रजश्चम्पककुड्मलैरिव॥ ९॥
बभूव वात्स्यायनवंशसंभवो द्विजो जगद्गीतगुणोऽग्रणीः सताम्।
अनेकगुप्तार्चितपादपङ्कजः कुबेरनामांश इव स्वयंभुवः॥ १०॥

---

**सुभाषितमिति।** सुभाषितं सुकाव्यादि हारि मनोहार्यपि दुर्जनस्य खलस्य गलात् कण्ठान्निगरणादधो न विशति न गच्छति। हृदयशून्यत्वादिति भावः। कस्येव। अर्करिपोः पीयमानममृतं यथा न हृदयं विशति पूर्वोक्तहेतोरेव। तदेव सुभाषितं सज्जनो गुणग्राहको हृदयेन स्वान्तेन धत्ते धारयति। स हृदयगतत्वान्न कदाचिद्विस्सरतीति भावः। यथा हरिः विष्णुर्नारायणो हृदयेन वक्षःस्थलेनातिनिर्मलं स्वच्छं महारत्नं कौस्तुभं दधाति॥ ७॥

**स्फुरदिति।** अभिनवा कथा गद्यपद्यमयी रसेन शृङ्गारादिना कृत्वा जनस्य सहृदयजनस्य हृद्यन्तःकरणे कौतुकं कुतूहलमधिकं यस्मिंस्तत्कौतुकाधिकम्। कौतुकपूर्णमित्यर्थः। तादृशं रागं प्रीतिं करोति जनयति। किंभूता। **स्फुरदिति।** स्फुरच्चञ्चत्कलो मधुरो य आलापः शब्दरचना तस्य विलासो माधुर्यं तेन कोमला मृद्वी। अन्यत्रापि कथायामालापादिकं भवत्येवेति ध्वनिः। पुनः किंविशिष्टा। शय्यामभ्युपागता प्राप्ता। 'शय्या तल्पे शब्दगुम्फे' इत्यनेकार्थः। यथाभिनवा नवोढा वधूः रसेन प्रेम्णा स्वयमेव अर्थाद्भर्तृजनस्य शय्यां पल्यङ्कमागता कौतुकमनुरागं च करोति। किंभूता वधूः। स्फुरन् प्रसर्पन्यः कलो मन्द्र आलापविलासो वचनव्यापारस्तेन कोमला सुन्दरा। 'कोमलं मृदु सुन्दरे' इति विश्वः॥ ८॥

**हरन्तीति।** नवैः स्वबुद्ध्यैव रचितैः पदार्थैः पदानां शब्दानामर्थैरभिधेयैः उपपादिता निर्मिता रचिताः कथा गद्यपद्यादिप्रबन्धाः कं सहृदयं जनं न हरन्ति न वशीकुर्वन्ति। सर्वस्यापि मनोहारिण्यो भवन्तीति भावः। कीदृशैः पदार्थैः। उज्ज्वलदीपकोपमैरुज्ज्वलः प्रकटो दीपकोऽलंकारविशेष उपमा च येषु ते तथा तैः। 'शृङ्गारः शुचिरुज्ज्वलः' इत्यमरः। कीदृश्यः कथाः। **निरन्तरेति।** निरन्तरमव्यवधानं प्रतिपदं वा। उपमानोपमेययोरर्थसाम्यरूपः शब्दसाम्यरूपो वा यः श्लेषस्तेन घना बहुलतराः। पुनः किंभूताः। **सुजातय इति।** सुष्ठु जातिश्छन्दोविशेषो यासु। यद्वा। सुष्ठु जातिः स्वरूपं यासां ता इव। यथा नवैरम्लानैश्चम्पककुड्मलैर्हेमपुष्पकमुकुलैरुपपादिता महास्रजो महामाला मनो हरन्ति। अत्र यद्यपि कुड्मलैर्मालानिर्माणे नातीव रम्यत्वं तथाप्यग्रिमक्षणे विकासोन्मुखकुड्मलैर्मालानिर्माणे स्वौचित्यमेव। कीदृशैश्चम्पककुड्मलैः। उज्ज्वलो यो दीपकः प्रदीपस्तदुपमैस्तत्तुल्यैः। किंभूताः स्रजः। निरन्तरं यः श्लेषो ग्रथना तेन घना निबिडाः। पुनः किंभूताः। सुष्ठु जातयो जातीपुष्पाणि यासु ताः॥ ९॥

कीर्त्यनुवृत्त्यर्थं स्ववंश्यानाह—**बभूवेति।** कुबेरनामा द्विजो ब्राह्मणो बभूवासीत्। कथंभूतः। **वात्स्यायन इति।** वात्स्यायननामा ऋषिस्तस्यायं वात्स्यायनो वंशोऽन्वयस्तस्मिन्संभवः समुत्पन्नः। वत्सगोत्रीय इत्यर्थः। द्विज इति च द्विजोत्कृष्टत्वसूचनार्थम्। यथा गजमात्रस्य दन्तवत्त्वेऽप्युत्कृष्टदन्ते दन्तीति प्रयोगः। पुनः कीदृशः। **जगदिति।** जगति विश्वस्मिन्नुद्गीता उत्प्राबल्येन गानविषयीकृता गुणाः शौर्यादयो यस्य स

उवास यस्य श्रुतिशान्तकल्मषे सदा पुरोडाशपवित्रिताधरे ।
सरस्वती सोमकषायितोदरे समस्तशास्त्रस्मृतिबन्धुरे मुखे ॥ ११ ॥
जगुर्गृहेऽभ्यस्तसमस्तवाङ्मयैः ससारिकैः पञ्जरवर्तिभिः शुकैः ।
निगृह्यमाणा बटवः पदे पदे यजूंषि सामानि च यस्य शङ्किताः ॥ १२ ॥
हिरण्यगर्भो भुवनाण्डकादिव क्षपाकरः क्षीरमहार्णवादिव ।
अभूत्सुपर्णो विनतोदरादिव द्विजन्मनामर्थपतिः पतिस्ततः ॥ १३ ॥
विवृण्वतो यस्य विसारि वाङ्मयं दिने दिने शिष्यगणा नवा नवाः ।
उषःसु लग्नाः श्रवणेऽधिकां श्रियं प्रचक्रिरे चन्दनपल्लवा इव ॥ १४ ॥

---

तथा । पुनः कीदृशः । सताम् अग्रणीः साधूनामग्रेसरः । किंभूतः । **अनेकेति** । अनेकेऽसंख्या ये गुप्ता गुप्तनामाङ्किता वैश्यशूद्रादयः । तदुक्तम्—'शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु । गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥' इति । तैरर्चितं पादपङ्कजं चरणसरोजं यस्य स तथा । पुनः कीदृश इव । स्वयंभुवो ब्रह्मणोंऽशोऽवतार एकदेशरूप इव । अतिवैदिकत्वादिति भावः ॥ १० ॥

**उवासेति** । यस्य कुबेरद्विजस्य मुख आनने सरस्वती वाग्देव्युवास । वसति स्मेत्यर्थः । किंभूते मुखे । **श्रुतीति** । श्रुतिभिर्वेदाध्ययनैः शान्तमुपशमितं कल्मषं पापं यस्य तत्तथा । परमपवित्र इत्यर्थः । पुनः कथंभूते । **सदेति** । सदा सर्वकालं पुरोडाशेनाग्निहोत्रे देवेभ्यो दत्तहविःशेषेण पवित्रितः पावनीकृतोऽधर ओष्ठो यस्य तत्तथा तस्मिन् । पुनः किंविशिष्टे । **सोमेति** । सोमेन सोमयागे सोमसंज्ञकलतारसेन कषायितं किंचित्कटुकीभूतमुदरं मध्यभागो यस्य तत्तथा तस्मिन् । सोमस्य किंचित्कटुत्वादिति भावः । पुनः कीदृशे । **समस्तेति** । समस्तानि समग्राणि यानि शास्त्राणि व्यासादिप्रणीतसूत्ररूपाणि स्मृतयश्च मन्वादिप्रणीता धर्मनिबन्धास्तैर्बन्धुरम् । मनोहरमित्यर्थः । तस्मिन् ॥ ११ ॥

**जगुरिति** । यस्य कुबेरविप्रस्य गृहे बटवः शिष्यभूता ब्रह्मचारिणः शङ्किताः सत्रासाः सन्तो यजूंषि यजुर्वेदान् सामानि सामवेदांश्च जगुः । पठन्ति स्मेत्यर्थः । शङ्कितत्वे बीजमाह—किंभूता बटवः । निगृह्यमाणा निग्रहो निर्भर्त्सनं तेन त्रास्यमानाः । कस्मिन् । पदे पदे शुद्धपाठकैः शुकैः कीरैः । कथंभूतैस्तैः । ससारिकैः सारिकाभिः सह वर्तमानैः । अनेन सारिकाणामपि विद्यावत्त्वं सूचितम् । पुनः कथंभूतैः । **पञ्जरवर्तिभिरिति** । पञ्जरो लोहशलाकानिर्मितं पक्षिगृहं तत्र वर्तिभिः । तन्निष्ठैरित्यर्थः । पुनः कीदृशैः । **अभ्यस्तेति** । अभ्यस्तं जिह्वाग्रवर्ति समस्तं समग्रं चतुर्दशविद्यात्मकं वाङ्मयं येषां ते तथा तैः । समस्तविद्यापारंगतैरित्यर्थः । 'भवद्भिरशुद्धं पठ्यते । वयं गुरुनिकटे कथयित्वा ताडनं कारयिष्यामः ।' ईदृशं शुकवचनमाकर्ण्य ते भीताः सन्तः पठन्ति बटवः । यद्गृहे शुकानामप्येतादृशज्ञानमिति तन्महिमोपवर्णनम् ॥ १२ ॥

**हिरण्येति** । ततः कुबेरादर्थपतिनामा पुत्रोऽभूत् । किंभूतः । द्विजन्मनां ब्राह्मणानां पतिः श्रेष्ठः । कः कस्मादिव । यथा भुवनस्याण्डकं ब्रह्माण्डं तस्माद्धिरण्यगर्भः स्वयंभूः । हिरण्यगर्भोपमया वेदपारगत्वं सूचितम् । पुनः कः कस्मादिव । क्षीरमहार्णवाद्दुग्धोदधेः क्षपाकरः शशाङ्कः । क्षीरसमुद्रोत्थचन्द्रोपमया च समस्तजनाह्लादकत्वं सूचितम् । पुनः कः कस्मादिव । विनता पक्षिणी तस्या उदरात्कुक्षेः सुपर्णो गरुड इव । अनेन नारायणपरायणत्वं सूचितम् । गरुडपक्षे द्विजन्मनां पक्षिणाम् । ब्रह्मपक्षे चन्द्रपक्षे च द्विजन्मनां ब्राह्मणानां पतिरित्यपि योज्यम् ॥ १३ ॥

**विवृण्वत इति** । नवा नवा नूतनाः । उत्तरोत्तरं बुद्धिशालिन इति यावत् । एतादृशाः शिष्यगणाश्छात्रचया यस्य अर्थपतेर्गुरोरधिकां श्रियं शोभां प्रचक्रिरे वितेनिरे । पुनः किंभूतस्य यस्य । दिने दिन उषःसु

---

१. 'ग्रस्त'.

विधानसंपादितदानशोभितैः स्फुरन्महावीरसनाथमूर्तिभिः ।
मखैरसंख्यैरजयत्सुरालयं सुखेन यो यूपकरैर्गजैरिव ॥ १५ ॥
स चित्रभानुं तनयं महात्मनां सुतोत्तमानां श्रुतिशास्त्रशालिनाम् ।
अवाप मध्ये स्फटिकोपलोपमं[1] क्रमेण कैलासमिव क्षमाभृताम् ॥ १६ ॥
महात्मनो यस्य सुदूरनिर्गताः कलङ्कमुक्तेन्दुकलामलत्विषः ।
द्विषन्मनः प्राविविशुः कृतान्तरा गुणा नृसिंहस्य नखाङ्कुरा[2] इव ॥ १७ ॥
दिशामलीकालकभङ्गतां गतस्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसंचयो मलीमसः[3] शुक्लतरं निजं यशः ॥ १८ ॥

---

प्रातःसमयेषु विसारि विसरणशीलं वाङ्मयं चतुर्दशविद्यात्मकं विवृण्वतः । अध्यापयत इत्यर्थः । किंभूताः शिष्याः । श्रवणे गुरोर्वचनाकर्णने लग्नाः सावधानाः । यद्वा । श्रवणे कर्णे लग्नाः । जगद्विदिता इत्यर्थः । क इव । यथा चन्दनवृक्षस्य मलयजतरोः पल्लवाः किसलयानि नवा नवाः प्रतिदिनमम्लानाः श्रवणे कर्णे लग्नाः सन्तः शोभां कुर्वन्ति । रमण्या इति शेषः ॥ १४ ॥

**विधानेति** । योऽर्थपतिरसंख्यैरगण्यैर्मखैर्यज्ञैः सुखेनाप्रयासेन सुरालयं स्वर्गमजयत् । आचक्रामेत्यर्थः । किंभूतैर्मखैः । **विधानेति** । विधानेन विध्युक्तमार्गेण संपादितं विहितं यद्दानं ब्राह्मणेभ्यः स्वर्णादिप्रतिपादनं तेन शोभितैः । विशिष्टदक्षिणैरित्यर्थः । पुनः किंभूतैः । **स्फुरदिति** । स्फुरन्त उज्ज्वलन्तो ये महावीराः श्रौताग्नयस्तैः सनाथा सहिता मूर्तिः स्वरूपं येषां ते तथा तैः । अग्नित्रयसहितैरित्यर्थः । 'होमाग्निस्तु महाज्वालो महावीरः प्रवर्गवत्' इति कोशः । पुनः किंभूतैः । **यूपकरैरिति** । यूपा यज्ञे पशुबन्धनार्थं स्तम्भविशेषास्त एव करा हस्ता येषां ते तथा तैः । कैरिव गजैरिवेति यज्ञगजयोः शब्दसाम्येनोपमा । किंभूतैर्गजैः । विधानेन मदोद्रेकार्थं गजादीनां दीयमानभक्ष्यविशेषेण । अत एव '...विधानपिण्डस्नेहस्रुतिस्नपितबाहुरिभाधिराजम्' इति माघे । तेन संपादितं निष्पन्नं यद्दानं मदजलं तेन शोभितैः । पुनः पक्षे स्फुरन्तः शूरा ये महावीरा योद्धारस्तैः सनाथमूर्तिभिः । अधिष्ठितैरित्यर्थः । पुनः पक्षे यूपवद्यज्ञस्तम्भवत्करः शुण्डादण्डो येषां ते तथा तैः ॥ १५ ॥

**स इति** । सोऽर्थपतिः क्रमेण । वंशक्रमेणेत्यर्थः । महात्मनां जितेन्द्रियाणां श्रुतिशास्त्रशालिनां श्रुतिशास्त्राध्यापकानां सुतोत्तमानां पुत्राणां मध्ये चित्रभानुसंज्ञकं पुत्रमवाप लेभे । किंभूतम् । **स्फटिकेति** । स्फटिकोपलः क्षीरतैलस्फटिकाभ्यामन्यः स्वच्छस्फटिकस्तद्वदुपमा यस्य स तथा तम् । निष्कलङ्कमित्यर्थः । किंभूतानां सुतोत्तमानाम् । क्षमाभृतां क्षान्तिमताम् । किंभूतमिव । कैलासमिव । पक्षे क्षमाभृतां भूधराणां मध्ये वरमित्यर्थः । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । पक्षे स्फटिकाश्मभिर्निर्मितं स्फटिकमयत्वात्कैलासस्येति ॥ १६ ॥

**महेति** । महात्मनो यस्य चित्रभानोर्गुणाः । अपिशब्दाध्याहारेण पितुः समाना अपि द्विषन्मनः शत्रूणामप्यन्तःकरणं प्राविविशुः प्रवेशं चक्रुः । किं पुनः सज्जनानामिति । किंभूता गुणाः । सुदूरनिर्गताः । दिगन्तं गता इत्यर्थः । पुनः कीदृशा । **कलङ्केति** । कलङ्केनाङ्कलक्षणेन मुक्तो वर्जितो य इन्दुश्चन्द्रस्तस्य कला षोडशोंऽशस्तद्वदमला विशदा त्विट् कान्तिर्येषां ते तथा । पुनः कीदृशाः । **कृतेति** । कृतं निष्पादितमन्तरमवकाशः प्रवेशपद्धतिरिति यावत्, यैस्ते तथा । कस्य क इव । नृसिंहस्य विष्णोर्नखाङ्कुराः पुनर्भवाग्रभागा इव । यथा नृसिंहस्य नखाङ्कुरा द्विषद्धृदयं प्रविष्टास्तथैतेऽपीति भावः ॥ १७ ॥

**दिशामिति** । यस्य चित्रभानोर्मलीमसोऽप्यध्वरधूमसंचयो यज्ञधूमसमूहो निजं स्वकीयं यशः शुक्लतरमतिशयेनोज्वलं चकार विदध इति विशेषोक्तिः । किंविशिष्टोऽध्वरधूमसंचयः । **दिशामिति** । दिग्वधूनाम-

---

१. 'पलामलं'. २. 'नखाङ्कुशा'. ३. 'मलीमसं'.

सरस्वतीपाणिसरोजसंपुटप्रमृष्टहोमश्रमशीकराम्भसः ।
यशोंऽशुशुक्लीकृतसप्तविष्टपात्ततः सुतो बाण इति व्यजायत ॥ १९ ॥
द्विजेन तेनाक्षतकण्ठकौण्ठ्यया महामनोमोहमलीमसान्धया ।
अलब्धवैदग्ध्यविलासमुग्धया धिया निबद्धेयमतिद्वयी कथा ॥ २० ॥

---

आसीदशेषनरपतिशिरःसमभ्यर्चितशासनः पाकशासन इवापरः, चतुरुदधिमालामेखलाया भुवो भर्ता, प्रतापानुरागावनतसमस्तसामन्तचक्रः, चक्रवर्तिलक्षणोपेतः, चक्रधर

---

लीके ललाटदेशेऽलकभङ्गतामलकाश्चूर्णकुन्तलास्तेषां भङ्गो रचनाविशेषस्तस्य भावस्तत्ता तां गतः प्राप्तः। एतेनाजस्रं क्रतुसमूहविधानेन धूमस्य दिगन्तव्यापित्वं सूचितमिति। पुनः किंविशिष्टः। **त्रयीति**। त्रयी वेदत्रयी सैव वधूस्तस्याः कर्णे श्रोत्रे तमालपल्लव इव तमालपल्लवः। श्यामत्वसाधर्म्यात्तमालकिसलयेनोपमानम् ॥ १८ ॥

**सरस्वतीति**। ततश्चित्रभानोर्बाण इति बाणाभिधानः सुतः पुत्रो व्यजायताभवत्। किंविशिष्टात्ततः। **सरस्वतीति**। सरस्वत्या भारत्याः पाणिसरोजसंपुटेन हस्तकमलयुग्मेन स्वयमेव प्रमृष्टं प्रोञ्छितं होमादिकर्मसंबन्धि श्रमस्य खेदस्य शीकराम्भः प्रस्वेदजलं यस्य स तथा तस्मात्। पुनः कथंभूतात्। **यश इति**। यशसः कीर्तेरंशवो दीप्तयस्तैः शुक्लीकृतानि शुभ्रीकृतानि सप्त रवितुरगप्रमितानि विष्टपानि भुवनानि येन स तथा तस्मात्। 'विष्टपं भुवनं जगत्' इत्यमरः ॥ १९ ॥

**द्विजेनेति**। इदानीं बाणः कथां चिकीर्षुरतितीक्ष्णबुद्धिरप्यहंकारं निराकुर्वन्नाह—**तेनेति**। तेन बाणेन द्विजेनेयं कादम्बरीरूपा कथा धिया बुद्ध्यैव निबद्धा ग्रथिता। पूर्वं बुद्ध्यारूढीकृत्य पश्चाल्लिखितेति भावः। समुद्रसमकादम्बरीकथोपबन्धने धियः सामर्थ्यं ज्ञात्वापि 'मन्दः कवियशःप्रार्थी' इत्यादिवद्धियो मान्द्यमेवारोपयति—**अक्षतेति**। अक्षतमच्छिन्नं कण्ठे गले कौण्ठ्यं कुण्ठता यस्याः सा तथा तया। कण्ठेऽपि कुण्ठिता किमुत सभायामपीति भावः। पुनः कथंभूतया। **महेति**। महानुत्कृष्टो यो मनोमोहश्चित्तविकलता तेन मलीमसा मलिना चासावन्धा चेति तया। पुनः कथंभूतया। **अलब्धेति**। अलब्धोऽप्राप्तो यो वैदग्ध्यविलासश्चातुर्यलीला तेन मुग्धाऽप्रगल्भा तया। एतादृश्यापि बुद्ध्या रचिता कथा। अतिद्वयीति विशेषणबलाद्बुद्धेरतितीक्ष्णत्वं फलितम्। द्वयीं बृहत्कथां वासवदत्तां चातिक्रान्तेत्यर्थः ॥ २० ॥

'प्रसिद्धो वापि वर्ण्यः स्यान्महीपालोऽथवा......।..........................॥' दशरूपकेऽपि—'प्रख्यातोत्पाद्यमिश्रत्वभेदात्त्रेधापि तत्त्रिधा। प्रख्यातमितिहासादेरुत्पाद्यं कविकल्पितम्। मिश्रं च संकरात्' इत्यादेरुक्तभेदानां काव्यनाटकचम्पूनां मध्ये 'गद्यपद्यमयी चम्पूर्द्विधा श्लेषवती च या। राजवर्णनमादौ स्यान्नगरीवर्णनं ततः। तया चामुकमन्यस्मिन्न तु तन्नृषु कुत्रचित् ॥' यथा—'शूलसंबन्धो देवतायतनेषु न नृषु' इति नलचम्प्वाम्। तथात्रैवाग्रे 'चित्रकर्मसु वर्णसंकरो न मनुष्येषु' इत्यादिचम्पूलक्षणयुक्तां कादम्बरीसंज्ञिकां कथामारचयति—**आसीदिति**। शूद्रको नाम राजासीदिति दूरेणान्वयः। अथ राजानं विशेषयन्नाह—**अशेषेति**। अशेषाः समग्रा ये नरपतयो राजानस्तेषां शिरांस्युत्तमाङ्गानि तैः समभ्यर्चितं सादरतया गृहीतं शासनमाज्ञा यस्य स तथा। सर्वेषामाज्ञापको न त्वाज्ञाकरः। अत एवापरो भिन्नः पाकशासन इव। इन्द्रसाम्यम्। **चतुरिति**। चत्वारश्च त उदधयश्च चतुरुदधयस्तेषां माला पङ्क्तिः सैव मेखलावधिर्यस्यास्तादृश्या भुवः पृथिव्या भर्ता नायकः। **प्रताप इति**। प्रतापः कोशदण्डजं तेजः, अनुरागः स्नेहः ताभ्यामवनतं नम्रीभूतं समस्तं समग्रं सामन्तचक्रं सामन्तमण्डलं स्वदेशपर्यन्तवर्ति राजचक्रं यस्य तथा। अन्यदपि लोहचक्रमग्निप्रतापादवनतं भवतीति ध्वन्यते। **चक्रेति**। चक्रवर्ती सार्व-

इव करकमलोपलक्ष्यमाणशङ्खचक्रलाञ्छनः, हर इव जितमन्मथः, गुह इवाप्रतिहतशक्तिः, कमलयोनिरिव विमानीकृतराजहंसमण्डलः, जलधिरिव लक्ष्मीप्रसूतिः, गङ्गाप्रवाह इव भगीरथपथप्रवृत्तः, रविरिव प्रतिदिवसोप[1]जायमानोदयः, मेरुरिव स[2]कलोपजीव्यमानपादच्छायः, दि[3]ग्गज इवानवरतप्रवृत्तदानार्द्रीकृतकरः, कर्ता महाश्चर्याणाम्, आहर्ता क्रतूनाम्, आदर्शः सर्वशास्त्राणाम्, उत्पत्तिः कलानाम्, कुलभवनं गुणानाम्, आगमः काव्यामृतरसानाम्, उदयशैलो मित्रमण्डलस्य, उत्पातकेतुरहितजनस्य, प्रवर्त-

---

भौमस्तस्य यानि लक्षणानि सामुद्रिकशास्त्रप्रतिपादितानि तैरुपेतः सहितः। पुनस्तमेव विशेषयन्नाह—**चक्रधर इति।** करकमले हस्तपद्म उपलक्ष्यमाणं दृश्यमानं शङ्खचक्राकारं च रेखोपरेखास्वरूपं लाञ्छनं चिह्नं यस्य स तथा। क इव। चक्रधर इव विष्णुरिव। सोऽपि शङ्खचक्रायुधलाञ्छितकरः स्यादित्युपमानोपमेयभावः। **हर इवेति।** जितो निर्जितो मन्मथजनकत्वान्मन्मथानीन्द्रियाणि येन स तथा। क इव। हर इव शंभुरिव। सोऽपि जितमन्मथः स्यादित्युभयोः साम्यम्। **गुह इवेति।** अप्रतिहताऽकुण्ठिता शक्तिः सामर्थ्यं यस्येति स तथा। क इव। गुह इव कार्तिकेय इव। सोऽप्यप्रतिहतशक्तिः स्यादित्युभयोः साम्यम्। एतत्पक्षे शक्तिरस्त्रविशेषः। अत एव 'षाण्मातुरः शक्तिधरः' इत्यमरः। **विगतेति।** विगतो मानो दर्पो यस्य तद्विमानं तथा कृतं राजहंसानां श्रेष्ठनृपाणां मण्डलं वृन्दं येन स तथा। क इव। कमलयोनिरिव विधातेव। एतत्पक्षे विमानं देवयानं तत्स्वरूपीकृतं राजहंसानां पक्षिविशेषाणां मण्डलं येन स तथा। हंसाधिरूढत्वादिति भावः। 'देवयानं विमानं स्यात्' इत्यमरः। 'राजहंसास्तु ते चञ्चुचरणैरतिलोहितैः' इत्यमरः। **जलधीति।** लक्ष्मीः संपत्तिः शोभा वा। 'लक्ष्मीश्छाया च शोभायाम्' इति हैमः। तस्याः प्रसूतिरुत्पत्तिस्थानं शोभाया वा। क इव। जलधिरिव समुद्र इव। सोऽपि लक्ष्म्या रमायाः शोभाया वोत्पत्तिस्थानं समुद्रमथनादेव तन्निर्गमात्। तथा च जगद्विभूषितमिति शोभाजनकत्वमिति भावः। **गङ्गेति।** भगीरथस्य राज्ञः पन्थाः पितॄणामुद्धारस्तत्र प्रवृत्तो लग्नः। क इव। गङ्गाप्रवाह इव स्वर्धुनीरय इव। सोऽपि भगीरथपथप्रवृत्तः स्यात्तदनुयायित्वादित्युभयोः साम्यम्। **रविरिति।** प्रतिदिवसं प्रत्यहम् उपजायमान उत्पद्यमान उदयः संपत्तेरुद्रेको यस्य स तथा। क इव। रविरिव भानुरिव। सोऽपि निरन्तरमुदयाचलाज्जायमानोद्गमः स्यादित्युपमा। **मेरुरिति।** सकलैः समग्रैरर्थाल्लोकैरुपजीव्यमाना सेव्या पादच्छाया कान्तिर्यस्य स तथा। क इव। मेरुरिव स्वर्णाद्रिरिव। स कथंभूतः। सकलैरर्थाद्देवैः। अन्येषां तत्र प्रवेशाभावात्। उपजीव्याः पादाः प्रत्यन्तपर्वतास्तेषां छायाऽऽतपाभावो यस्य स तथा। 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः। **दिग्गज इति।** अनवरतं निरन्तरं प्रवृत्तं कृतं यद्दानं जलसहितं देयद्रव्यं तेनार्द्रीकृतः स्तिमितः करो हस्तो यस्य स तथा। क इव। दिग्गज इव दिङ्नाग इव। एतत्पक्षे निरन्तरप्रवृत्तं प्रचलितं यद्दानं मदः। 'मदो दानं प्रवृत्तिश्च' इति कोशः। तेन स्तिमितः करः शुण्डादण्डो यस्य स तथेत्युपमा। **कर्तेति।** महाश्चर्याण्यनन्यकृतयुद्धादीनि तेषां कर्ता निष्पादकः। **आहर्तेति।** क्रतूनां यज्ञानामाहर्ता कारकः। **आदर्श इति।** सर्वशास्त्राणां समग्रवाङ्मयानामादर्शो मुकुरः। तत्र तेषां प्रतिबिम्बितत्वादिति भावः। **उत्पत्तिरिति।** कलानामिति द्विसप्ततिप्रमिता याः कलाः शिल्पादिरूपास्तासामुत्पत्तिर्जन्मभूः। **गुणानामिति।** गुणा गाम्भीर्यादयस्तेषां कुलभवनं परम्परास्थानम्। **आगम इति।** काव्यामृतेति। काव्यं कविकर्म तत्संबन्धिनो येऽमृतरसास्तेषामागम उद्गमरूपः। **उदयेति।** मित्राणि सुहृदस्तेषां मण्डलं समुदायस्तस्योदयशैलोऽभ्युन्नतेः स्थानम्। पक्षे मित्रमण्डलस्य सूर्यबिम्बस्योदयशैल उदयाचलः। **उत्पातेति।** अहितजनस्य

---

१. 'पचीयमानो'. २. 'सकलभुवनो'; 'सकलभुवनतलो'. ३. 'बृहस्पतिरिव सकलशास्त्रार्थतत्त्वज्ञः, दिग्गज'.

दूरतः परिहरति तपोवनम्। एते च पवनलोल[1]पुञ्जीकृतशिखाकलापा रचिताञ्जलय इवात्र मन्त्रपूतानि हवींषि गृह्[2]न्त्येतत्प्रीत्याशुशुक्षणयः। तरलितदुकूलवल्कलोऽयं चाश्रमलताकुसुम-सुरभिपरिमलो म[3]न्दमन्दचारी सशङ्क इवास्य समीपमुपसर्पति गन्धवाहः। प्रायो महाभूता-नामपि दुरभिभवानि भवन्ति तेजा[4]ंसि। सर्वतेजस्विनामयं चाग्रणीः। द्विसूर्यमिवाभाति जगदनेनाधिष्ठितं महात्मना। निष्कम्[5]पेव क्षितिरेतद[6]वष्टम्भात्। एष प्र[7]वाहः करुणारसस्य, संतरणसेतुः संसारसिन्धोः, आधारः क्ष[8]माम्भसाम्, परशुस्तृष्णालतागहनस्य, सागरः संतोषाम[9]ृतरसस्य, उपदेष्टा सिद्धिमार्गस्य, अस्तगिरि[10]रसद्ग्रहकस्य, मूलमुपशमतरोः, ना[11]भिः प्रज्ञाचक्रस्य, स्थिति[12]वंशो धर्मध्वजस्य, तीर्थ[13] सर्वविद्यावताराणाम्, व[14]डवानलो लोभार्णवस्य, निकषोपलः शास्त्ररत्नानाम्, दावानलो रागपल्लवस्य, म[15]न्त्रः क्रोध[16]भुजंगस्य, दिवसकरो मोहा-

---

**एते चेति।** एते समीपवर्तिन आशुशुक्षणयो वह्नयः। **पवनेति।** पवनेन वायुना लोलश्चपलः पुञ्जी-कृतः समूहीकृतः शिखाकलापो ज्वालासमूहो येषां ते तथा। तथा रचिताञ्जलय इव विहिताञ्जलय इव। एतत्प्रीत्यैतन्मुनिस्नेहेन मन्त्रपूतान्यृचापवित्राणि हवींषि होतव्यानि गृह्णन्ति स्वीकुर्वन्ति। 'अग्निर्वैश्वानरो वह्निः शिखावानाशुशुक्षणिः' इत्यमरः। **गन्धेति।** गन्धवाहो वायुरस्य मुनेः समीपं पार्श्वं सशङ्क इव भीताशय इवोपसर्पति गच्छति। अथ साशङ्कत्वे हेतुं प्रदर्शयन्नाह—**तरलितेति।** तरलितानि कम्पितानि दुकूलवल्क-लानि येन स तथा। अयमिति स्पार्शनप्रत्यक्षः। **आश्रमेति।** आश्रमलताकुसुमानां सुरभिः परिमलो यस्मि-न्नत एव मन्दमन्दचारी शनैः शनैः संचरमाणः। **प्राय इति।** प्रायो बाहुल्यार्थेऽव्ययम्। महाभूतानामपि पृथिव्यादीनामपि तेजांसि महांसि दुरभिभवानि दुःखेनाभिभवितुं शक्यानि भवन्ति। **अयं चेति।** अयं च मुनिः सर्वतेजस्विनां समग्रधामवतामग्रणीर्मुख्यः। **अनेनेति।** अनेन मुनिना महात्मना प्रकृष्टस्वरूपेणाधिष्ठि-तमाश्रितं जगद्द्विसूर्यमिव द्वौ सूर्यौ यत्र तद्वदिव। **निष्कम्पेति।** एतस्य मुनेरवष्टम्भादालम्बात्क्षितिर्व-सुधा निष्कम्पेव निर्वेपथुरिव। अथ च कियन्ति विशेषणानि रूपकालंकृतिद्वारा प्रदर्शयन्नाह—**एषेत्यादि।** एष मुनिः करुणारसस्य प्रवाह ओघः। संसारसिन्धोर्भवाम्भोधेः संतरणे सेतुः सेतुबन्धः। क्षमाम्भसां क्षान्तिसलि-लानामाधारोऽम्भसां बन्धः। तृष्णैव लता तद्गहनस्य परशुः कुठारः। संतोष एवामृतरसः पीयूषद्रवस्तस्य सागरः समुद्रः। सिद्धिमार्गस्य मोक्षपदव्या उपदेष्टोपदेशकः। असद्ग्रहकस्याशुभग्रहस्यास्तगिरिरस्ताचलः। उप-शमतरोः शमद्रुमस्य मूलं बुध्नः। प्रज्ञाचक्रस्य प्रतिभाचक्रस्य नाभिर्मध्यप्रदेशः। धर्मध्वजस्य सुकृतकेतोः स्थितिवंशोऽवस्थानवेणुः। सर्वविद्यावताराणां समग्रविद्याप्रवेशानां तीर्थं घट्टः। लोभार्णवस्य लिप्सासमुद्रस्य वडवानल और्वः। शास्त्ररत्नानां सिद्धान्तमणीनां निकषोपलः कषणपट्टः। रागपल्लवस्येच्छाकिसलयस्य दावानलो वनवह्निः। क्रोधभुजंगस्य कोपसरीसृपस्य मन्त्रः। मोहान्धकारस्याज्ञानतिमिरस्य दिवसकरः सूर्यः। नरकद्वाराणां दुर्गतिद्वाराणामर्गलाबन्धः प्रतिबन्धः। आचाराणां चरितानां कुलभुवनं मूलगृहम्। मङ्गलानां श्रेयसामायतनं

---

**टिप्प०—1** 'असद्ग्रहस्य' इत्येव कविसंमतः पाठः।

---

**पाठा०—१** पुञ्जितशिखाकलापाः शिखाजटिला. २ प्रतिगृह्णन्त्याशुशुक्षणयः; प्रतिगृह्णन्त्येतत्प्रदत्तान्याशुशुक्षणयः. ३ मन्दसंचारी; मन्दमन्दसंचारी; मन्दमन्दसंचारः. ४ तेजांसि यतः. ५ निष्कण्टकेव. ६ अवष्टम्भादेव; अवष्टम्भेन. ७ प्रभवः. ८ कृपाम्भसाम्. ९ अमृतस्य. १० असद्ग्रहस्य. ११ नेमिः. १२ प्रसादः. १३ तीर्थः. १४ वाडवानलः. १५ महामन्त्रः. १६ भुजंगमस्य.

न्धकारस्य, अर्गलाबन्धो [1]नरकद्वाराणाम्, कुलभवनमाचाराणाम्, आयतनं मङ्गलानाम्, अभूमिर्मदविकाराणाम्, द[2]र्शकः सत्पथानाम्, उत्पत्तिः साधुतायाः, नेमिरुत्साहचक्रस्य, आश्रयः सत्त्वस्य, प्रतिपक्षः कलिकालस्य, कोशस्तपसः, सखा सत्यस्य, क्षेत्रमार्जवस्य, [3]प्रभवः पुण्यसंचयस्य, अदत्तावकाशो मत्सरस्य, अरातिर्विपत्तेः, अस्थानं परिभूतेः, अननुकूलोऽभिमानस्य, असंमतो दैन्यस्य, अनायत्तो रोषस्य, [4]अनभिमुखः सुखानाम् । अस्य भगवतः [5]प्रसादादेवो[6]पशान्तवैरमपगतमत्सरं तपोवनम् । अहो प्रभावो महात्मनाम् । अत्र हि शाश्वतिकमपहाय विरोधमु[7]पशान्तात्मानस्तिर्यञ्चोऽपि तपोवनवसतिसुखमनुभवन्ति । तथा हि । एष विकचो[8]त्पलवनरचनानुकारिणमुत्पतच्चारुचन्द्रकशतं हरिणलोचनद्युतिशबलमभिनवशाद्वलमिव वि[9]शति शिखिनः [10]कलापमातपाहतो निःशङ्कमहिः । अयमुत्सृज्य मातरम[11]जातकेसरैः केसरिशिशुभिः सहोपजातपरिचयः [12]क्षरत्क्षीरधारं पि[13]बति कुरङ्गशावकः सिंहीस्तनम् । एष

---

गृहम् । मदविकाराणामहंकारवृत्तीनामभूमिरूषरक्षेत्रम् । सत्पथानां शोभनमार्गाणां दर्शक उपदेष्टा । साधुतायाः शुभावस्थोत्पत्तिः । उत्साहः प्रगल्भता स एव चक्रं तस्य नेमिर्धारा । सत्त्वस्य धैर्यस्याश्रय आधारः । कलिकालस्य कलियुगस्य प्रतिपक्षः शत्रुः । तपसः प्रसिद्धस्य कोशो भाण्डागारम् । सत्यस्य सखा मित्रम् । आर्जवस्य मार्दवस्य क्षेत्रं सस्योत्पत्तिस्थलम् । पुण्यसंचयस्य धर्मसमूहस्य प्रभव उत्पत्तिस्थलम् । मत्सरस्येर्ष्याया अदत्तावकाशः । विपत्तेरापदोऽरातिः शत्रुः । परिभूतेः पराभवस्यास्थानमपदम् । अभिमानस्याहंकृतेरननुकूलोऽहितकारकः । दैन्यस्यासंमतोऽस्वीकृतः । रोषस्यानायत्तोऽनधीनः । सुखानामनभिमुखः पराङ्मुखः । **अस्येति** । अस्य भगवतो मुनेः प्रसादादेव माहात्म्यादेव उपशान्तं शान्तिं प्राप्तं वैरं विरोधो यस्मिन् । **अपेति** । अपगतो दूरीभूतो मत्सरः परगुणोत्कर्षासहनं यस्मिन्नेवंभूतं तपोवनम् । वर्तत इति क्रियाध्याहारः । अत्रार्थे साधारणं कारणमाह—**अहो इति** । अहो इत्याश्चर्ये । महात्मनां महानुभावानां प्रभावो माहात्म्यम् । एतदेव विशेषतो दर्शयन्नाह—**अत्रेति** । हि निश्चितम् । अत्र तपोवने शाश्वतिकं सदातनं विरोधं वैरमपहाय दूरीकृत्योपशान्तात्मानः प्रशान्तात्मानस्तिर्यञ्चोऽपि पशवोऽपि तपोवनवसतिसुखं मुनिस्थाननिवाससातमनुभवन्त्यनुभवविषयीकुर्वन्ति । तदेव दर्शयन्नाह—**तथेति** । तथा हि । एषोऽहिः सर्पो विकचं विकसितं यदुत्पलं नीलकमलं तस्य वनं तस्य या रचना निर्मितिस्तदनुकरोत्येवंशीलं तत्तथा । **उत्पतदिति** । उत्पतदूर्ध्वं गच्छच्चारु मनोहारि चन्द्रकशतं मेचकशतं यस्मिन् । **हरिणेति** । हरिणस्य मृगस्य या लोचनद्युतिर्नेत्रकान्तिस्तद्वच्छबलं कर्बुरमेवंभूतं शिखिनो मयूरस्य कलापं प्रचला[1]कमातपेन सूर्यालोकेनाहतः पीडितो निःशङ्कं निर्भयं विशति प्रविशति । कमिव । अभिनवः प्रत्यग्रः शादाः शष्पाणि सन्त्यत्रेति शाद्वलो हरितप्रदेशस्तमिव । **अयमिति** । अयं कुरङ्गशावको मातरमम्बामुत्सृज्य विहायाजातकेसरैरनुत्पन्नसटैः केसरिशिशुभिरिभारिबालकैः सह समुपजातः समुत्पन्नः परिचयः संस्तवो यस्यैवंभूतः सिंहीस्तनं पिबति पानं करोति । **क्षरन्तीति** । क्षरन्ती स्रवन्ती क्षीरधारा यस्मिन् । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । **एष इति** । एष समीप-

टिप्प०—1. बर्हभारमित्यर्थः ।

---

पाठा०—१ नरकपुरद्वाराणाम्. २ आदर्शः; सर्वविद्यानामुत्पत्तिः. ३ प्रसवः; प्रभावः. ४ अवशो विषयाणामनभिमुखः; अनवकाशो विषयाणामनभिमुखः. ५ प्रभावात्. ६ एतदपि. ७ उपशान्तान्तरात्मानः. ८ उत्पलिनीवनानुकारिणम्. ९ अधिवसति; आवसति. १० कलापमाहतः. ११ अनुपजात. १२ प्रक्षरत्. १३ आपिबति.

मृणालकलापाशङ्किभिः[1] शशिकरधवलं[2] सटाभारमामीलितलोचनो[3] बहु मन्यते द्विरदकलभैरा-[4]कृष्यमाणं मृगपतिः। इदमिह कपिकुलमपगतचापलमुपनयति मुनिकुमारकेभ्यः[5] स्नातेभ्यः फलानि। एते च न निवारयन्ति मदान्धा अपि गण्डस्थलीभाञ्जि मदजलपाननिश्चलानि मधुकरकुलानि संजातदयाः[6] कर्णतालैः करिणः। किं बहुना,[7] तापसाग्निहोत्रधूमलेखाभिरु-[8]त्सर्पन्तीभिरनिशमुपपादितकृष्णाजिनोत्तरासङ्गशोभाः[9] फलमूलभृतो वल्कलिनो[10] निश्चेतनास्तरवोऽपि सनियमा इव[11] लक्ष्यन्तेऽस्य भगवतः। किं पुनः सचेतनाः प्राणिनः'[12] इति।

एवं चिन्तयन्तमेव मां तस्यामेवाशोकतरोरधश्छायायामेकदेशे[13] स्थापयित्वा हारीतः पादावुपगृह्य कृताभिवादनः पितुरनतिसमीपवर्तिनि कुशासने समुपाविशत्। आलोक्य तु मां[14] सर्व एव मुनयः[15] 'कुतोऽयमासादितः शुकशिशुः' इति तमासीनमपृच्छन्। असौ तु तानब्रवीत् 'अयं मया स्नातुमितो गतेन कमलिनीसरस्तीरतरुनीड[16][17]निपतितः शुकशिशुरातप-

---

वर्ती। **मृणेति**। मृणालानां बिसानां कलापं समूहमाशङ्कत इत्येवंशीलास्तैः। **द्विरदेति**। द्विरदा गजास्तेषां कलभा बालकास्तैराकृष्यमाणमवकृष्यमाणं शशिकरश्चन्द्रस्तद्वद्धवलं शुभ्रं सटाभारं केसरकलापम्। **आमीलीति**। आ ईषन्मीलिते लोचने येनैवंभूतो बहुमन्यते सुखत्वेन जानातीत्यर्थः। **इदमिति**। इहास्मिंस्तपोवन इदम्। **अपेति**। अपगतं चापलं चाञ्चल्यं यस्यैवंभूतं कपिकुलं वानरयूथम्। स्नातेभ्यः कृताप्लवेभ्यः। **मुनीति**। मुनीनां तपस्विनां कुमारका बालास्तेभ्यः फलानि सस्यान्युपनयति ढौकयति। **एते चेति**। एते करिणो हस्तिनो मदान्धा अपि मदोन्मत्ता अपि गण्डस्थलीभाञ्जि करटस्थलभाञ्जि। **मदेति**। मदजलस्य दानवारिणः पानं प्राशनं तेन निश्चलानि स्थिराणि मधुकराणां भ्रमराणां कुलानि समूहान् संजातदयाः समुत्पन्नकरुणाः कर्णतालैः श्रवणचपेटैर्न निवारयन्ति न दूरीकुर्वन्ति। **किं बह्विति**। किं बहुना किं बहु जल्पितेन। स्तोकेनैवोच्यत इति भावः। **तापसेति**। उत्सर्पन्तीभिरूर्ध्वं व्रजन्तीभिस्तापसानां यदग्निहोत्रं तस्य या धूमलेखा दहनकेतनराजयस्ताभिरनिशं निरन्तरम्। **उपेति**। उपपादिता विहिता कृष्णं श्यामं यदजिनं चर्म तस्योत्तरासङ्गो वैकक्ष्यं तस्य शोभा येषां ते तथा फलमूलभृतो वल्कलिनो निश्चेतना ज्ञानरहिता अस्य भगवतस्तरवोऽपि वृक्षा अपि सनियमा इव व्रतिन इव लक्ष्यन्तेऽवलोक्यन्ते। सचेतना ये प्राणिनो मनुजादयस्तेषां किं पुनः किं भण्यते किं कथ्यते। ते त्वेतादृशा भवन्त्येवेति भावः।

अथ हारीतः किं कृतवानित्याह—**एवमिति**। एवं पूर्वोक्तप्रकारेण चिन्तयन्तं विचारयन्तं मां तस्यामेवाशोकतरोरधश्छायायामेकदेश एकस्मिन्प्रदेशे स्थापयित्वा संस्थाप्य हारीतः हारीतनामा मुनिः। **पादाविति**। पादौ चरणावुपगृह्य पादयोः पतित्वा। **कृतेति**। कृतं विहितमभिवादनं येनैवंभूतः पितुर्जनकस्यानतिसमीपवर्तिनि नातिनिकटवर्तिनि कुशासने दर्भविष्टरे समुपाविशदुपविष्टवान्। **आलोक्येति**। आलोक्य निरीक्ष्य। तु पुनरर्थे। मां सर्वे एव समग्रा एव मुनयो ऋषयः कुतः कस्मात्प्रदेशादयं शुकशिशुरासादितः प्राप्त इति तमासीनमुपविष्टं हारीतं मुनिमपृच्छन्नप्राक्षुः। असौ हारीतः। तु पुनरर्थे। तान्मुनीनब्रवीदुवाचेत्यर्थः। किमुवाचेत्याह—**अयमिति**। अयं शुकशिशुर्मया स्नातुं स्नानार्थमितोऽस्मात् प्रदेशात् गतेन प्राप्तेन। **कमलिनीति**। कमलिनीसरः पद्मसरस्तस्य तीरतरुः प्रतीरवृक्षस्तस्मिन्यो नीडः कुलायस्तस्मान्निपतितः स्रस्तः। **आतपेति**। आतपेनालोकेन जनितोदिता क्लान्तिः श्रमाधिक्यं यस्य स तथा।

---

**पाठा०**—१ मृणालशङ्किभिः. २ शिशिरकर; शिशिरकलापकर. ३ जटा. ४ कलभकैः. ५ कुमारेभ्यः. ६ जातदयाः. ७ तपसा. ८ उत्सर्पन्तीभिरुपपादित; सर्पन्तीभिरहर्निशमुपपादित. ९ शोभनाः. १० वल्कलिनस्तरवः. ११ इवास्य भगवतः समीपवर्तिनोऽत्र लक्ष्यन्ते; इव लक्ष्यन्तेऽस्य भगवतः समीपवर्तिनः. १२ प्राणिन एवम्. १३ तस्यैव रक्ताशोकतरोश्छायायाम्. १४ मां ते. १५ मुनयः सर्व एव. १६ शिरस्तरु; सरसस्तीरतरु. १७ नीडपतितः.

जनितक्लान्तिरुत्तप्तपांसुपटलमध्यगतो दूरनिपतनविह्वलतनुरल्पावशेषायुरासादितस्तपस्विदुरारोहतया च तस्य वनस्पतेर्न शक्यते स्वनीडमारोपयितुमिति जातदयेनानीतः । तद्यावदयमप्ररूढपक्षतिरक्षमोऽन्तरिक्षमुत्पतितुं तावदत्रैव कस्मिंश्चिदाश्रमतरुकोटरे मुनिकुमारकैरस्माभिश्चोपनीतेन नीवारकणनिकरेण फलरसेन च संवर्ध्यमानो धारयतु जीवितम् । अनाथपरिपालनं हि धर्मोऽस्मद्विधानाम् । उद्भिन्नपक्षतिस्तु गगनतलसंचरणसमर्थो यास्यति यत्रास्मै रोचिष्यते । इहैव वोपजातपरिचयः स्थास्यति' इत्येवमादिकमस्मत्संबद्धालापमाकर्ण्य किंचिदुपजातकुतूहलो भगवाञ्जाबालिरीषदावलितकंधरः पुण्यजलैः प्रक्षालयन्निव मामतिप्रशान्तया दृष्ट्या दृष्ट्वा सुचिरमुपजातप्रत्यभिज्ञान इव पुनःपुनर्विलोक्य 'स्वस्यैवाविनयस्य फलमनेनानुभूयते' इत्यवोचत् । स हि भगवान्कालत्रयदर्शी तपःप्रभावाद्दिव्येन चक्षुषा सर्वमेव

---

**उत्तप्तेति** । उत्तप्त उष्णीभूतो यः पांसुपटलो धूलीसमूहस्तस्य मध्यगतोऽभ्यन्तरवर्ती । **दूरेति** । दूराद्विष्टाद्यन्निपतनमधःसंयोगफलिका क्रिया तेन विह्वला व्याकुला तनुर्देहो यस्य स तथा । **अल्पेति** । अल्पं स्वल्पमवशेषमायुर्जीवितं यस्यैवंभूत आसादितो लब्धः । **तपस्वीति** । तपस्विभिर्मुनिभिर्दुरारोहतया दुःखेनारोढुं शक्यतया तस्य वनस्पतेः शाल्मलीवृक्षस्य स्वनीडं स्वकुलायमारोपयितुं स्थापयितुं न शक्यते न समर्थीभूयत इति हेतोः । **जातदयेनेति** । जातोत्पन्ना दया करुणा यस्यैवंभूतेनानीतोऽत्रानीतः । मयेति पूर्वोक्तमेवेति न पुनरुच्यते । **तद्यावदिति** । तदिति हेत्वर्थे । यावत् यावत्कालम् । अयमिति पूर्वोक्तः । **अप्ररूढेति** । अप्ररूढाऽनुत्पन्ना पक्षतिः पक्षमूलं यस्य सः । **अक्षमेति** । अन्तरिक्षमाकाशमुत्पतितुमक्षमोऽसमर्थः । **तावदिति** । तावत्कालम् । **अत्रैवेति** । अत्रैवकारोऽन्ययोगव्यवच्छेदार्थः । **कस्मिंश्चिदिति** । कस्मिंश्चित् अनिर्दिष्टनामन्याश्रमतरुकोटरे मुनिवसतिवृक्षनिष्कुहे मुनिकुमारकैस्तापसशिशुभिरस्माभिश्चोपनीतेन आनीतेन । **नीवारेति** । नीवारो वनव्रीहिस्तस्य कणनिकरेण सस्यसमूहेन फलरसेन सस्यद्रवेण च संवर्ध्यमानो वृद्धिं प्राप्यमानो धारयतु दधातु जीवितं प्राणितम् । **अनाथेत्यादि** । हि यस्माद्धेतोरस्मद्विधानां तपस्विनामनाथपरिपालनं दीनजनरक्षणं धर्म आचारः । तु पुनरर्थे । **उद्भिन्नेति** । उद्भिन्ना प्रकटीभूता पक्षतिर्यस्यैवंभूतः । **गगनेति** । गगनतलमाकाशतलं तत्र संचरणं गमनं तत्र समर्थः क्षमः । **यत्रेति** । यत्र यस्मिन्देशेऽस्मै शुकशिशवे रोचिष्यते रुचिरभिलाष उत्पत्स्यते तत्र यास्यति गमिष्यति । रुच्यर्थानां धातुभिर्योगे चतुर्थी । इहैवेत्यनास्थायाम् । उपजातपरिचयः संजातसंस्तवः स्थास्यत्यवस्थानं करिष्यति । इत्येवमादिकमस्मत्संबद्धमिति मद्विषयकमालापं प्रश्नोत्तररूपमाकर्ण्य श्रुत्वा । **किंचिदिति** । किंचिदीषदुपजातमुत्पन्नं कुतूहलमाश्चर्यं यस्य स तथा भगवान्माहात्म्यवान् जाबालिः जाबालिनामा मुनिः । **ईषदिति** । ईषत्किंचिदावलिता नमिता कंधरा ग्रीवा यस्य स तथा । इदं तु सावधानलक्षणम् । **पुण्येति** । पुण्यजलैः पवित्रपानीयैः प्रक्षालयन्निव धावयन्निव मामतिप्रशान्तयातिप्रसन्नया दृष्ट्या दृशा सुचिरं चिरकालं दृष्ट्वा विलोक्य । **उपेति** । उपजातं समुत्पन्नं प्रत्यभिज्ञानम् 'सोऽयं देवदत्तः' इत्याकारकं ज्ञानं यस्य स तथा तद्वदिव पुनःपुनर्वारंवारं विलोक्य निरीक्ष्य स्वस्यैवात्मन एवाविनयस्याशिष्टाचारस्य फलं भोगोऽनेन शुकशिशुनानुभूयते साक्षात्क्रियत इति तानवोचदब्रवीत् । कथं मुनिर्जानातीत्याशयेनाह—**स हीति** । यतः । हि निश्चितम् । स भगवान् । **कालेति** । कालत्रयस्यातीतानागतवर्तमानलक्षणस्य दर्शी पश्यकः । **तप इति** । तपःप्रभावाद्दिव्येन

टिप्प०—1 'दर्शकः' इत्युचितम् ।

पाठा०—१ निपतित. २ तपस्विदुरारोहतया तस्य. ३ अन्तरिक्ष. ४ विविधफलरसेन. ५ धर्मोऽस्ति. ६ संचलन. ७ चास्मै. ८ समुपजात. ९ विस्रम्भः. १० संबद्धमालापम्. ११ कौतूहलः. १२ दृष्ट्या सुचिर. १३ अभिजातप्रत्यभिज्ञः. १४ त्रिकाल.

करतलगतमिव जगदवलोकयति[1] । वेत्ति[2] जन्मान्तराण्यतीतानि । कथयत्यागामिनमप्यर्थम् । ईक्षणगोचरगतानां च प्राणिनामायुषः संख्या[3]मावेदयति । सर्वैव[4] सा तापसपरिषच्छ्रुत्वा[5] विदिततत्प्रभावा 'कीदृशोऽनेनाविनयः कृतः, किमर्थं वा कृतः, क्व वा कृतः, जन्मान्तरे[6] वा कोऽयमासीत्' इति कौतूहलि[7]न्यभवत् । उपनाथितवती[8] च तं भगवन्तम् 'आवेदय, प्रसीद भगवन्, कीदृशस्याविनयस्य फलमनेनानुभूयते[9] । कश्चायमासीज्जन्मान्तरे । विहगजातौ[10] वा कथमस्य संभवः । किमभिधानो वायम् । अपनयतु नः कुतूहलम् । आश्चर्याणां हि सर्वेषां भगवान्प्रभवः' ।

इत्येवमुप[11]याच्यमानस्तपोधनपरिषदा स महामुनिः प्र[12]त्यवदत्—'अतिमहदिदमाश्चर्यमाख्यातव्यम् । अल्पशेषमहः । प्रत्यासीदति च नः स्नानसमयः । भवतामप्यतिक्रामति देवा[13]र्चनविधिवेला । तदुत्तिष्ठन्तु भवन्तः । सर्व ए[14]वाचरन्तु यथोचितं दिवसव्यापारम् । अपराह्ण-

---

ज्ञानात्मकेन चक्षुषा दृष्ट्या सर्वमेव समग्रमेव जगत्करतलगतमिव हस्तन्यस्तमिवावलोकयति पश्यति । **वेत्तीति** । अतीतानि गतानि जन्मान्तराणि भवान्तराणि वेत्ति जानाति । **कथयतीति** । आगामिनं भाविनमर्थमपि कथयति ब्रवीति । **ईक्षणेति** । ईक्षणगोचरगतानां नयनपथप्राप्तानां प्राणिनां सत्त्वानामायुषो जीवितव्यस्य संख्यां परिमाणमावेदयति निवेदयति । **सर्वैवेति** । सर्वैव समग्रैव सा तापसपरिषन्मुनिसभा श्रुत्वाकर्ण्य । पूर्वोक्तमिति शेषः । **विदितेति** । विदितो ज्ञातस्तस्य जाबालिमुनेः प्रभावो माहात्म्यं यया सा तथेति कौतूहलिनी कौतुकवत्यभवदित्यन्वयः । इतिशब्दवाच्यमाह—**कीदृश इति** । कीदृशः कीदृगविनयोऽपराधविशेषोऽनेन शुकशिशुना कृतो विहितः । किमर्थं किंप्रयोजनं वा कृतः । क्व वा कस्मिन्प्रदेशे कृतः । जन्मान्तरे भवान्तरेयं क्व आसीदभवत् । सर्वत्र वाशब्दो विकल्पार्थः । **उपेति** । उपनाथितवती[1] । 'नाथृ याचने' इत्यस्य धातो रूपम् । याचितवतीत्यर्थः । च पूर्वोक्तसमुच्चये । तं भगवन्तं जाबालिमुनिम् । किं याचितवतीत्याशयेनाह—**आवेदयेति** । हे भगवन्, आवेदय कथय । प्रसीद प्रसन्नो भव । पूर्वोक्ताभिप्रायस्थप्रश्नाननुवदन्नाह—**कीदृशस्येति** । कीदृशस्य किंरूपस्याविनयस्य फलमनेनानुभूयते । **कश्चेति** । जन्मान्तरेऽयं क्व आसीत् । **विहगेति** । विहगजातौ पक्षिजातौ कथमिति केन प्रकारेण अस्य संभव उत्पत्तिः । **किमिति** । अयं किमभिधानः किंनामा । **अपनयत्विति** । नोऽस्माकं कुतूहलमाश्चर्यमपनयतु दूरीकरोतु । **आश्चर्याणामिति** । हि भगवान्, सर्वेषां समग्राणामाश्चर्याणां कुतूहलानां प्रभव उत्पत्तिस्थानम् । अपूर्वार्थज्ञापक इति यावत् ।

**इत्येवमिति** । इत्येवं अनेन प्रकारेण तपोधनपरिषदा मुनिसभयोपयाच्यमानः प्रार्थ्यमानः स महामुनिः प्रत्यवदत्प्रत्यवोचत् । **अतीति** । इदमाश्चर्यमतिमहदतिमहीयस्तयाख्यातव्यं कथनीयम् । मयेति शेषः । **अल्पेति** । अहर्दिनमल्पशेषमल्पावशिष्टम् । **प्रत्येति** । नोऽस्माकं स्नानसमय आप्लवकालः प्रत्यासीदति विलम्बितो भवति । **भवतामिति** । भवतामपि युष्माकमपि देवार्चनविधिवेला देवपूजाक्षणोऽतिक्रामत्युल्लङ्घिता भवति । तदिति हेत्वर्थे । उत्तिष्ठन्तूत्थानं कुर्वन्तु भवन्तो यूयम् । **सर्व एवेति** । यथोचितं यथायोग्यं

---

**टिप्प०—1** 'असकृदुपयाचितवती' इत्येव ग्रन्थाक्षराणि ।

---

**पाठा०—**१ आलोकयति. २ वेत्ति च जन्मान्तराण्यपि. ३ प्रमाणम्. ४ यतः सर्वैव; ततः सर्वैव. ५ तापसपरिषत्; सतापसंपरिषत्. ६ जन्मान्तरे को. ७ कुतूहलिनी. ८ असकृदुपयाचितवती; इत्युपनाथितवती; उपेत्यार्थितवती. ९ भुज्यते. १० जातौ कथम्; जातौ च कथम्. ११ उपयाच्यमानस्तु; उपयाचितः. १२ अवदत्. १३ देवार्चनवेला. १४ एव तावत्.

समये भवतां पुनः [1]कृतमूलफलाशनानां विस्रब्धोपविष्टानामादितः प्रभृति सर्वमा[2]वेदयिष्यामि योऽयम्, [3]यश्चानेन कृतमपरस्मिञ्जन्मनि, इह च[4] लोके यथास्य संभूतिः । अयं च तावदपगतक्लमः क्रियतामाहारेण । नियतमयमप्यात्मनो ज[5]न्मान्तरोदन्तं स्वप्नोपलब्धमिव मयि कथयति सर्वमशेषतः स्मरिष्यति' इत्यभिदधदेवोत्थाय सह मु[6]निभिः स्ना[7]नादिकमुचितदिवसव्यापारमकरोत् ।

[8]अनेन च समयेन परिणतो दिवसः । स्नानोत्थितेन मुनिजनेनार्घविधिमुपपादयता यः क्षितितले द[9]त्तस्तमम्ब[10]रतलगतः साक्षादिव रक्तचन्दनाङ्गरागं रविरुदवहत् । ऊर्ध्वमुखैरर्कबिम्बविनिहि[11]तदृष्टिभि[12]रूष्मपैस्तपोधनैरिव परिपीयमानतेजःप्रसरो विरलातप[13]स्तनिमानमभ-

---

दिवसव्यापारं दिनकृत्यमाचरन्तु समाचरन्तु । **अपराह्णेति** । अपराह्णसमये द्विप्रहरानन्तरसमये भवतां युष्माकम् । **पुनरिति** । पुनः द्वितीयवारं कृतं विहितं मूलफलयोरशनं भक्षणं यैस्ते तथा तेषाम् । **विस्रब्धेति** । विस्रब्धं सावधानं यथा स्यात्तथोपविष्टानां स्थितानाम् । **आदित इति** । आदितः प्रारम्भतः प्रभृति सर्वं वृत्तान्तमावेदयिष्यामि निवेदयिष्यामि । **योऽयमिति** । यश्चायं पूर्वजन्मन्यासीत् । यच्चानेनापरस्मिञ्जन्मनि परभवे कृतम् । **इह चेति** । इह लोके यथा येन प्रकारेणास्य संभूतिरुत्पत्तिः । **अयं चेति** । तावदादावयं शुक आहारेणाशनेनापगतक्लमो व्यपगतपरिश्रमः क्रियतां विधीयताम् । **नियतेति** । नियतं निश्चितं मयि कथयत्ययं शुकः अपि आत्मनः स्वकीयस्य जन्मान्तरोदन्तं परभववृत्तान्तं स्वप्नोपलब्धमिव स्वप्नदृष्टवत्सर्वं समग्रमशेषत आमूलचूलतः स्मरिष्यति स्मरणविषयीकरिष्यति । **इतीति** । इति पूर्वोक्तमभिदधदेव कथयन्नेवोत्थायोत्थानं कृत्वा । **सहेति** । सह समं मुनिभिस्तपस्विभिरुचितं योग्यं दिवसव्यापारं स्नानादिकमकरोन्निर्ममे ।

**अनेन चेति** । अनेन समयेन मध्याह्नसमयकर्तव्यकर्मणा परिणतः परिपाकं गतो दिवसः । परिणते दिवसे सूर्यस्य रक्तत्वात्तद्वर्णनमाह—**स्नानोत्थितेनेति** । अम्बरतलगतो रविस्तं रक्तचन्दनाङ्गरागं साक्षादिव प्रत्यक्षसिद्धमुनिप्रत्यर्पितमूर्तिरूपेणैवोदवहदधारयत् । तं कम् । यः स्नानोत्थितेन मुनिजनेन तपस्विवर्गेणार्घविधिं रक्तचन्दनरक्तपुष्पादिना पूजाविधिमुपपादयता निष्पादयता क्षितितले दत्तोऽर्पितः । सूर्यायेति शेषः । सायंकाले सूर्यस्य रक्तत्वान्मुनिप्रदत्तो रागः किमनेन साक्षादिव गृहीत इत्युत्प्रेक्षा । **ऊर्ध्वमुखैरिति** । ऊर्ध्वमुखैरूर्ध्वाननैः । **अर्केति** । अर्कबिम्बे सूर्यबिम्बे विनिहिता स्थापिता दृष्टिर्यैस्ते तथा तैरूष्मपैरूष्मा वह्निज्वाला तस्यानुकारिभिस्तपोधनैरिव परिपीयमान आस्वाद्यमानस्तेजःप्रसरः कान्तिप्रचारो यस्य स तथा । **विरलेति** । विरलः स्वल्प

---

**टिप्प०**—1 विश्वस्ततया, सुस्थभावेन उपविष्टानामित्यर्थः । 2 सायंकाले मन्दातपः सूर्यो यत्कृशतां भजते तत्र हेतुरुत्प्रेक्ष्यते—सूर्यनिहितदृष्टिभिः सूर्योत्तापपायिभिर्मुनिभिः समग्रं दिनं यावत् स ऊष्मा पीतः, अत एव सायं रविस्तनुतामभजदिति । टीकार्थस्तु भ्रमात्मक एव ।

---

**पाठा०**—१ कृतफलमूलाशनानाम्. २ आवेदयिष्यामः. ३ कृतमनेन. ४ लोके च यथा; लोके यथा. ५ जन्मान्तरवृत्तम्. ६ तैर्मुनिभिः. ७ स्नानादिकमुचितं दिवस; स्नानादिकं दिवस. ८ अनेन समयेन. ९ अधोदत्तः. १० अम्बरतलम्; अस्ताचल. ११ निहित. १२ ऊष्मपैः. १३ विरलातपो दिवसः.

जत्। उद्यत्सप्तर्षि[1]सार्थस्पर्शपरिजिहीर्षयेव[2] संहृतपादः पारावत[3]पादपाटलरागो रविरम्बरतला-[4]दवालम्बत। आलोहितांशुजालं जलशयन[5]मध्यगतस्य [6]मधुरिपोर्विगलन्मधुधारमिव [7]नाभिनलिनं प्रतिमागतमपरार्णवे सूर्यमण्डलम[8]लक्ष्यत। विहायाम्ब[9]रतलमु[10]न्मुच्य च कमलिनीव[11]नानि शकुनय इव दिवसावसाने [12]तरुशिखरेषु पर्वताग्रेषु च रविकिरणाः स्थितिमकुर्वत। आलग्न[13]लोहितातपच्छेदा मुनिभि[14]रालम्बि[15]तलोहितवल्कला इव [16]तरवः क्षणमदृश्य[17]न्त। अस्तमुपगते च भगवति सहस्रदीधितावपरार्ण[18]वतला[19]दुल्लसन्ती विद्रुमलतेव [20]पाटला संध्या समदृश्यत। यस्यामावध्यमानध्यानम्, एकदेशदुह्यमानहोमधेनुदुग्धधाराध्वनितधन्यतराति[21]मनोहरम्, [22]अग्नि-

---

आतप आलोको यस्य स तथा तनिमानं तनोर्भावस्तनिमा तमभजत्। क्षीणत्वं प्रापेत्यर्थः। **उद्यदिति।** उद्यदुदयं प्राप्नुवन्यः सप्तर्षिसार्थः सप्तर्षिसमूहस्तेन यः स्पर्शः संबन्धस्तस्य या परिजिहीर्षा परिहर्तुमिच्छा तया संहृताः संकोचिताः पादा येन स तथा। **पारावत इति।** पारावतः कलरवस्तस्य पादौ चरणौ तद्वत्पाटलः श्वेतरक्तो रागो यस्मिन्नेवंविधो रविः सूर्यः। अम्बरतलादित्यवधौ पञ्चमी। अवालम्बताललम्बे। तदनन्तरमालोहितांशुजालमीषद्रक्तकिरणसमूहं सूर्यमण्डलं रविबिम्बमलक्ष्यतैक्ष्यत। कमिव। **अपरेति।** अपरार्णवे पश्चिमसमुद्रे प्रतिमागतं स्वमूर्तिरूपेणागतं बहिर्निःसृतं जलशयनमध्यगतस्य मधुरिपोः कृष्णस्य नाभिनलिनमिव नाभिपद्ममिव। तदेव विशिनष्टि—**विगलदिति।** विगलन्ती स्रवन्ती मधुधारा परागश्रेणिर्यस्मात्स तत् तथा। **विहायेति।** अम्बरतलमाकाशतलं विहाय त्यक्त्वा कमलिनीवनानि नलिनीखण्डान्युन्मुच्य च शकुनय इव पतत्रिण इव दिवसावसाने सायंकाले तरुशिखरेषु वृक्षाग्रेषु पर्वताग्रेषु च रविकिरणाः सूर्यरश्मयः स्थितिमवस्थानमकुर्वत कृतवन्तः। तत्कालीनतरुशोभामाह—**आलग्नेति।** आलग्नेषत्संबन्धं प्राप्ता लोहितातपस्य रक्तालोकस्य मध्ये मध्ये छेदा रचनाविशेषा येषां ते तथा। अतएव 'भक्तिच्छेदैरिव विरचितां भूमिमङ्गे गजस्य' इति। मुनिभिस्तपस्विभिरालम्बिता आश्रिता अत एव लोहित[3]वल्कला इव तरवो वृक्षाः क्षणं स्वल्पकालमदृश्यन्तावालोक्यन्त। संध्यावस्थां प्रदर्शयन्नाह—**अस्तेति।** अस्तमुपगतेऽदृश्यतां प्राप्ते भगवति सहस्रदीधितावपरार्णवतलात्पश्चिमसमुद्रतलादुल्लसन्त्यूर्ध्वमागच्छन्ती विद्रुमलतेव रक्तकन्दवल्लीव पाटला श्वेतरक्ता संध्या सायंकालः समदृश्यत समालोक्यत। **यस्यामिति।** यस्यां संध्यायामेवंविधमाश्रमपदमभवत्। बभूवेत्यर्थः। कीदृशम्। **आबध्येति।** आवध्यमानं क्रियमाणं ध्यानमेकप्रत्ययसंततिर्यस्मिन्। अनस्तं गत एव सूर्ये संध्यावन्दनार्घ्योरुक्तत्वाद्ध्यानग्रहणम्। **एकेति।** एकदेश एकस्मिन्प्रदेशे दुह्यमाना या होमधेनवो होमार्थं गावस्तासां दुग्धधारा पयःश्रेणी तत्र यद्ध्वनितं शब्दितं तेन धन्यतरं सदतिमनोहरमतिचारु। **अग्नीति।**

---

**टिप्प०**—1 पाद( किरण )द्वारा पूज्यानामृषीणां स्पर्शजनितोऽपराधो माऽस्त्विति हेतुना उपसंहृतपादः ( किरणः ) सूर्योऽम्बरादलम्बतेत्युत्प्रेक्षा। किरण–चरणयोर्भेदेऽपि 'पाद'शब्दश्लेषेणाऽभेदाध्यवसायादतिशयोक्तिः। पारावतपादवत् पाटलो रागो यस्येत्युपमा च। जगद्वन्द्यस्य रवेः कान्तौ पारावतपादसादृश्यकल्पनादुपमाऽनौचित्यं तु न शङ्कनीयम्, सायं तेजोविरहितरक्तिमसादृश्येन रवेर्मन्दप्रभताऽतिशयव्यञ्जनात्। 2 प्रतिबिम्बरूपेण पतितं सूर्यमण्डलं मधुरिपोर्नाभिपद्ममिवाऽऽलक्ष्यतेत्यर्थः। 3 आलग्नाः लोहितातपच्छेदा येषु ईदृशा आश्रमतरवः, मुनिभिरालम्बितानि उपरिस्थापितानि लोहितवल्कलानि येषु ईदृशा इव अलक्ष्यन्तेत्युत्प्रेक्षा।

---

**पाठा०**—१ सार्थपरि. २ एव. ३ चरण. ४ अलम्वत. ५ शयनगतस्य. ६ मधुभिदः. ७ नलिनम्. ८ आलक्ष्यत; अवैक्ष्यत; अद्रक्ष्यत. ९ धरणितलम्; धरातलम्. १० उन्मुच्य कमलिनी. ११ वनानि च. १२ तपोवनतरु. १३ रक्तातप; रक्तातपगभस्ति. १४ आलम्बिताः. १५ आलोहित. १६ आश्रमतरवः. १७ अशोभन्त; अलक्ष्यन्त. १८ तटात्. १९ उपसर्पन्ती. २० आपाटला. २१ ध्वनितमनोहरम्; ध्वनिमनोहरम्. २२ अग्निहोत्रवेदी.

वेदिविकीर्यमाणहरित्कुशम्[1], ऋषिकुमारिकाभिरितस्ततो विक्षिप्यमाणदिग्देवताबलिसिक्थमाश्रमपदमभवत्[2]। क्वापि विहृत्य दिवसावसाने[3] लोहिततारका तपोवनधेनुरिव कपिला परिवर्तमाना संध्या तपोधनैरदृश्यत[4]। अचिरप्रोषिते[5] सवितरि शोकविधुरा कमलमुकुलकमण्डलुधारिणी हंससितदुकूलपरिधाना मृणालधवलयज्ञोपवीतिनी[6] मधुकरमण्डलाक्षवलयमुद्वहन्ती[7] कमलिनी दिनपतिसमागमव्रतमिवाचरत्[8]। अपरसागराम्भसि पतिते दिवसकरे[9] वेगोत्थितमम्भः[10]सीकरनिकरमिव तारागणमम्बरमधारयत्[11]। अचिराच्च सिद्धकन्यकाविक्षिप्तसंध्यार्चनकुसुमशबलमिव तारकितं[12] वियदराजत। क्षणेन चोन्मुखेन मुनिजनेनोर्ध्वविप्रकीर्णैः प्रणामाञ्जलिसलिलैः क्षाल्यमान[13] इवागलदखिलः संध्यारागः।

क्षयमुपागतायां संध्यायां[14] तद्विनाशदुःखिता कृष्णाजिनमिव विभावरी तिमिरोद्गममभिनव-

---

अग्निवेद्यां वह्निस्थापनचतुरस्रभूमिकायां विकीर्यमाणा विक्षिप्यमाणा हरित्कुशा नीलदर्भा यस्मिन्। **ऋषीति**। ऋषिकुमारिकाभिर्मुनिपुत्रीभिरितस्ततो विक्षिप्यमाणानि समन्ताद्विकीर्यमाणानि दिग्देवतानां बलिसिक्थानि बलिसंबन्धिसिद्धान्नानि यस्मिंस्तत्तथा। पुनरवस्थान्तरमाह—**क्वापीति**। क्वापि कुत्रचित्प्रदेशे विहृत्य पर्यटनं कृत्वा दिवसावसाने दिनपर्यन्ते कपिला तपोवनधेनुरिव लोहिततारका परिवर्तमाना तपोधनैः मुनिभिः संध्यादृश्यतालोक्यत। गौरपि कपिलत्वाल्लोहिततारका रक्तकनीनिका। संध्या तु लोहिततारका रक्तनक्षत्रा तत्कालीनोद्गतनक्षत्राणां रक्तत्वात्। अतः संध्याधेन्वोः सादृश्यादुपमानोपमेयभावः। कमलिनीसूर्ययोर्नायिकानायकत्वेन तौ वर्णयन्नाह—**अचिरेति**। अचिरप्रोषिते तत्कालीनप्रोषिते गते सवितरि श्रीसूर्ये शोकेन विरहेण विधुरा विह्वला कमलिनी दिनपतिसमागमार्थं स्वकीयनायकस्यागमनहेतोर्व्रतं नियमविशेषमाचरदिवाकरोदिव। **कमलेति**। संकुचितमुखसाम्यात्कमलमुकुलान्येव कमण्डलूनि तान्येव दधातीत्येवंशीला सा तथा। **हंसेति**। श्वेतसाम्याद्धंसा एव सितदुकूलानि परिधानमधोंशुकं यस्याः सा तथा। **मृणालेति**। श्वेततन्तुसारूप्यान्मृणालान्येव धवलं शुभ्रं यज्ञोपवीतं यज्ञसूत्रं यस्याः सा तथा। **मधुकरेति**। नीलतीक्ष्णमुखसाम्यान्मधुकराणां भ्रमराणां यन्मण्डलं तदेवाक्षवलयं रुद्राक्षजपमालिका तदुद्वहन्ती धारयन्ती। अपरामवस्थां वर्णयन्नाह—**अपरेति**। अपरसागराम्भसि पश्चिमसमुद्रपानीये पतिते दिवसकरे सूर्ये वेगेन रभसोत्थितं प्रादुर्भूतमम्भःसीकरनिकरं पानीयपृषत्समूहं तारागणमिव नक्षत्रवृन्दमिवाम्बरमाकाशमधारयद्दधार। अतिश्वेतरूपत्वसाम्यात्ताराजलबिन्द्वोरुपमानोपमेयभावः। **अचिराच्चेति**। अचिरात् स्वल्पकालेन सिद्धा विद्यासिद्धास्तेषां कन्यकाः पुत्र्यस्ताभिर्विक्षिप्तानि विकीर्णानि यानि संध्यार्चनकुसुमानि सायंकालीनपूजार्थमानीतानि पुष्पाणि तैः शबलमिव कर्बुरमिव तारकितम्। 'तारकादिभ्य इतच्'। संजाततारकोदयं वियदाकाशमराजताशोभत। अतीतसंध्यावस्थां प्रकटयन्नाह—**क्षणेनेति**। क्षणेन सपद्येव। च समुच्चये। उन्मुखेनोर्ध्वमुखेन मुनिजनेन तापसजनेनोर्ध्वविप्रकीर्णैरूर्ध्वं विक्षिप्तैः प्रणामाञ्जलिसलिलैर्नमस्कृतिसमयाञ्जलिपानीयैः क्षाल्यमान इव प्रक्षाल्यमानोऽखिलः समग्रोऽपि संध्यारागोऽगलत्तत्स्थानात्प्रच्युतः।

**क्षयमिति**। संध्यायां क्षयमुपगतायां विनाशं प्राप्तायाम्। **तदिति**। तस्याः स्वसांनिध्यात्सखी-

---

**टिप्प०—1 भ्रान्तोऽत्र टीकाकृत्। अम्बरम् (कर्तृ) तारागणम् अम्भःसीकरमिवाऽधारयदित्युत्प्रेक्षा।**

---

पाठा०—१ विप्रकीर्यमाण. २ दिग्देवतार्चनबलिसिक्थकम्. ३ दिनावसाने. ४ मुनिभिः; मुदितैस्तपोधनैः. ५ प्रोषिते च सवितरि. ६ यज्ञोपवीता. ७ अक्षमालावलयम्. ८ रवि. ९ दिनकरे; दिवाकरे पतन; तत्पतन. १० पवनवेगोत्थितम्; पतङ्गवेगोत्थितम्; पतनवेगोत्थितम्. ११ अम्बरतलम्. १२ सतारम्. १३ प्रक्षाल्यमानः. १४ उपागतायां च संध्यायाम्; उपगतायां च संध्यायाम्.

मवहत्। [1]अपहाय [2]मुनिहृदयानि सर्वमन्यदन्धकारतां तिमिरमनयत्। क्रमेण च रविरस्तं [3]गत इत्युदन्तमुपलभ्य [4]जातवैराग्यो धौतदुकूलवल्कलधवलाम्बरः सता[5]रान्तःपुरपर्यन्तस्थि[6]ततनुस्तिमिरतमाल[7]वृक्षलेखं सप्तर्षिमण्डलाध्युषितमरुंधतीसंचरणपू[8]तमुपहिताषाढमालक्ष्य[9]माणमूलमेकान्तस्थितचारुता[10]रकामृगममरलोकाश्रममिव [11]गगनतलममृतदीधितिरध्यतिष्ठत्। चन्द्रा-

---

रूपायाः संध्याया विनाशो ध्वंसस्तेन दुःखिता कष्टं प्राप्ता विभावरी रजन्यभिनवं प्रत्यग्रं तिमिरोद्गमं ध्वान्तोदयं कृष्णाजिनमिवासितचर्मेवदवहत्। नीलसाम्यात्तिमिरोद्गमस्य कृष्णाजिनसाधर्म्यम्। तिमिरोद्गमस्य कृत्यं व्याख्यापयन्नाह—**अपहेति**। तिमिरं ध्वान्तं मुनिहृदयानि तपस्विचेतांसि स्वप्रकाशात्मकप्रकाशवन्तीत्यतस्तिमिरस्यावकाशाभावादन्यत्सर्वं प्रौढप्रकाशहीनं वस्तुजातमन्धकारतामचाक्षुषतामनयत्प्रापयत्। तदुत्तरकालं चन्द्रेऽपि मित्रवियोगावस्थां वर्णयन्नाह—**क्रमेणेति**। क्रमेण परिपाट्या रविः सूर्योऽस्तं गतोऽदृश्यतां प्राप्त इत्युदन्तमिति वृत्तान्तमुपलभ्य प्राप्तोऽमृतदीधितिश्चन्द्रः। **अमरेति**। अमरा वसिष्ठादयो मुनयस्तेषां लोकः समुदायस्तस्याश्रमो मुनिस्थानं तदिव गगनतलमम्बरतलमध्यतिष्ठदधितस्थौ। कीदृक्सूर्यः। **जातेति**। जातं समुत्पन्नं वैराग्यं विरक्तता यस्मिन्स तथा तम्। पक्षे विशिष्टो रागो विरागस्तस्य भावस्तत्त्वम्। **धौतेति**। धौतं क्षालितं दुकूलवल्कलमेव धवलं शुभ्रमम्बरं वस्त्रं यस्मिन्। पक्षे दुकूलवल्कलवत् धवलं शुभ्रमम्बरमाकाशं यस्मिन्। **सतारेति**। तारः शक्तिविशेषः प्रणवो ब्रह्म च। तदुक्तमन्यत्र 'इदं तारत्रयं प्रोक्तमगम्यागमनादृते'। एतद्वृत्तौ 'तारत्रयं प्रणवशतत्रयम्' इत्याह विज्ञानेश्वरः। तया सहवर्तमानं यदन्तःपुरमिति पुरस्य शरीरस्यान्तर्मध्यं कुण्डलिनी नाडीविशेषः। 'क्वचिदमाद्यन्तस्य परत्वम्' इति पुरस्य परनिपातः। तस्याः पर्यन्तः सहस्रारं कमलं तत्र योगसामर्थ्यात्स्थितं लैङ्गिकं तनुर्यस्य स तथा। पक्षे तारा अश्विन्यादयस्ताभिः सहवर्तमानं यदन्तःपुरमवरोधस्तस्य पर्यन्तः संनिधिस्तत्र स्थिता तनुः शरीरं यस्य स तथा। अथाश्रमसाम्येन गगनतलं विशेषयन्नाह—**तिमिरेति**। श्यामत्वसाम्यात्तिमिरवच्छ्यामा ये तमालवृक्षास्तेषां लेखा पङ्क्तिर्यस्मिन्। पक्षे तिमिराण्येव तमालवृक्षा इति विग्रहः। शेषं पूर्ववत्। **सप्तर्षीति**। सप्तर्षिसदृशा ये ऋषयो नारदाद्यास्तेषां मण्डलं समूहः। 'मण्डलं श्वसमूहयोः' इति धरणिः। तेनाध्युषितमाश्रितम्। पक्षे सप्तर्षयः सप्ततारकाः। शेषं प्राग्वत्। **अरुंधतीति**। अरुंधती वसिष्ठपत्नी तस्याः संचरणं परिभ्रमणं तेन पूतं पवित्रम्। पक्षेऽरुंधती ताराविशेषः। शेषं प्राग्वत्। **उपहितेति**। उपहितः संनिहित आषाढः पालाशदण्डो यस्मिन्। 'पालाशो दण्ड आषाढः' इत्यभिधानचिन्तामणिः। पक्ष अषाढा पूर्वाषाढानक्षत्रम्। **आलक्ष्येति**। आसमन्तादालक्ष्यमाणानि विलोक्यमानानि मूलानि वसुधान्तर्गतवृक्षप्रदेशा यस्मिन्। पक्षे मूलं मूलनक्षत्रम्। शेषं प्राग्वत्। **एकान्तेति**। एकान्ते विजने स्थिताश्चारवो मनोहराकृतयस्तारकामृगाः श्वेतमृगा यस्मिन्। पक्षे तारकारूपं मृगो मृगनक्षत्रम्। तस्यामेव विभावर्यां चन्द्रे जातवैराग्योपमानमम्बरमण्डले चाश्रमरूपकमुक्त्वा ज्योत्स्नायां गङ्गारूपकोपयोगिगगनतले त्र्यम्बकोत्तमाङ्गोपमानमाह—**चन्द्रेति**। चन्द्रम् एवाभरणं बिभर्तीति

---

**टिप्प०—1 'सतारान्तःपुरः, पर्यन्तस्थिततनुतिमिरतमालवनलेखम्' इत्येव पाठः साधुः। सतारं सप्रणवम् अन्तःपुरं हृदयमध्यं यस्य सः ध्याननिष्ठ इत्यर्थः। पक्षे—ताराः (अश्विन्यादयः) एव अन्तःपुराणि स्त्रियः तैः सहितः (अमृतदीधितिः)। पर्यन्ते प्रान्तभागे स्थिता तनुतिमिरवत् स्वल्पान्धकारवत् तमालवनानां लेखा यस्मिन् तम् (आश्रमम्), पक्षे—पर्यन्ते स्थितं तनुतिमिरं निजोदयेन विरलमन्धकारं तमालवनरेखेव यत्र तत् (गगनतलम्) इति तद्व्याख्या।**

---

**पाठा०**—१ शापदग्धमिव भयाद्विहायेव. २ मुनिजनहृदयानि, ३ उपगतः; उपागत. ४ समुपजात. ५ अन्तःपुर. ६ तनुतिमिर. ७ वन. ८ पवित्रितम्; पवित्रम्. ९ उपलक्ष्यमाण. १० तारकमृगम्. ११ गगनम्.

भरणभृतस्तारकाकपालशकलालंकृतादम्बरतलात्र्यम्बकोत्तमाङ्गादिव गङ्गा सागरानापूरयन्ती हंसधवला धरण्यामपतज्ज्योत्स्ना । हिमकरसरसि विकचपुण्डरीकसिते चन्द्रिकाजलपानलोभादवतीर्णो निश्चलमूर्तिरमृतपङ्कलग्न इवादृश्यत हरिणः । तिमिरजलधरसमयापगमानन्तरमभिनवसितसिन्दुवारकुसुमपाण्डुरैरर्णवागतैरवगाह्यन्त हंसैरिव कुमुदसरांसि चन्द्रपादैः । विगलितसकलोदयरागं रजनिकरबिम्बमम्बरापगावगाहधौतसिन्दूरमैरावतकुम्भस्थलमिव तत्क्षणमलक्ष्यत । शनैःशनैश्च दूरोदिते भगवति हिमँततिस्रुति, सुधाधूलिपटलेनेव धँवलीकृते

---

चन्द्राभरणभृत्तस्मात् । **तारकेति** । तारका एव कपालशकलानि कर्परखण्डानि तैरलंकृतं भूषितं यस्मात् । अम्बरतलादित्यवधौ पञ्चमी । त्र्यम्बकोत्तमाङ्गादिवेश्वरमौलेरिव गङ्गा जाह्नवी । **सागरानिति** । अगस्त्यगण्डूषेण शुष्कान् सागरान् समुद्रानापूरयन्ती परिपूर्णीकुर्वती । चन्द्रोदयेन सागराणां पूरणं प्रसिद्धम् । हंसवद्धवला शुभ्रा ज्योत्स्ना चन्द्रिका धरण्यां पृथिव्यामपतत्पपातेत्यर्थः । अथ च चन्द्रमृगोऽप्येतादृशोऽभूदित्याह—**हिमकरेति** । हिमकरश्चन्द्रः स एव सरस्तस्मिन् । तदेव विशिनष्टि—**विकचेति** । विकचानि विकस्वराणि यानि पुण्डरीकाणि तद्वत्सिते शुभ्रे । अन्यदपि सरो विचकपुण्डरीकैः सितं भवति अतस्तदुपमानम् । **चन्द्रिकेति** । चन्द्रिका ज्योत्स्ना सैव जलं पानीयं तस्य पानमास्वादनं तस्य लोभो गर्धस्तस्मादवतीर्णो मध्यप्रविष्टः । **निश्चलेति** । निश्चला निस्पन्दा मूर्तिर्यस्य स तथा । **अमृतेति** । कृष्णत्वसाम्यात्कलङ्क एवामृतपङ्कस्तत्र लग्न इवान्तर्निगीर्ण इव हरिणो मृगोऽदृश्यतालक्ष्यत । चन्द्रोदयजनितं शोभातिशयं वर्णयन्नाह—**तिमिरेति** । कृष्णत्वसाम्यात्तिमिरमेव जलधरसमयस्तस्यापगमानन्तरं निवृत्त्यनन्तरम् । **अभीति** । अभिनवानि प्रत्यग्राणि सितानि शुभ्राणि यानि सिन्दुवारस्य निर्गुण्ड्याः कुसुमानि पुष्पाणि तद्वत्पाण्डुरैः शुभ्रैरर्णवः समुद्रस्तत्रागतैः प्राप्तैश्चन्द्रपादैः शशिकिरणैर्हंसैरिव मरालैरिव कुमुदसरांसि कैरवोपलक्षिततटाकान्यवागाह्यन्तालोड्यन्त । अतः श्वेतत्वसाधर्म्याद्धंसचन्द्रपादयोरुपमानोपमेयभावः । पुनरवस्थान्तरं वर्णयन्नाह—**विगलीति** । विगलितो विलयं प्राप्तो यः सकलः समग्र उदयसंबन्ध्युद्गमनक्षणजन्मा रागो रक्तिमा यस्मिन्नेवंभूतं रजनिकरबिम्बं चन्द्रमण्डलं तत्क्षणमिव तत्काल इवालक्ष्यत जनैरैक्ष्यत । किमिव । **अम्बरेति** । अम्बरस्य व्योम्नो या आपगा नदी तस्या अवगाह आलोडनं तेन धौतं क्षालितं सिन्दूरं नागजं यस्यैवंविधं यदैरावतस्य हस्तिमल्लस्य कुम्भस्थलं तदिव । अतिवर्तुलत्वसाम्याच्चन्द्रबिम्बस्य कुम्भस्थलोपमानम् । अथ मुनिवृत्तं निरूपयन्नाह—**शनैरिति** । हारीतो मुनिः कृताहारं विहितभोजनं मां वैशम्पायनमादाय गृहीत्वा पितरं जाबालिमुनिमित्यवोचदित्यन्वयः । कस्मिन्सति । शनैः शनैः स्वल्पप्रयत्नेन दूरोदिते दूरं गते भगवति चन्द्रे । **हिमेति** । हिमं प्रालेयं तस्य ततिर्वीथी तस्याः स्रुति स्राविणि । चन्द्रस्य विशेषणम् । **सुधेति** । श्वेतत्वसाम्यात्सुधैव धूलिपटलं पांसुसमूहस्तेनेव चन्द्रातपेन शशिन आलोकेन जगति लोके धवलीकृते सति शुभ्रीकृते सति । पुनः केषु सत्सु । निशामुखसमीरणेषु प्रदोषकालीनवायुषु प्रवहत्सु वहमानेषु सत्सु । अथ

---

टिप्प०—1—'रगाह्यन्त' इत्येव पाठः । अन्यथा तु 'अवागाह्यन्त' इति वक्तव्यमुचितं स्यात् । 2—निश्चलमूर्तिर्हरिणः चन्द्रबिम्बगतचिह्नरूपो मृगः अमृतमेव पङ्कस्तत्र लग्न इव अलक्ष्यत । अन्योऽपि जलपानलोभादवतीर्णो मृगः पङ्कमग्नो निश्चलमूर्तिस्तिष्ठति । इत्येव व्याख्योचिता । कलङ्क एव हरिणत्वाऽऽरोपात् । 3 'हिमस्रुति' इत्येव पाठः । हिमं स्रवति इति हिमस्रुत् ( क्विप् ) तस्मिन्निति विग्रहः ।

---

पाठा०—१ सागरम्. २ आलक्ष्यत. ३ समयादनन्तरम्. ४ सिन्धुवार. ५ गगनागतैः. ६ अगाह्यन्त; अगृह्यन्त. ७ हिमद्युति; हिमदीधितौ. ८ धवलीकृते जगति.

चन्द्रातपेन जगति, अवश्यायजलबिन्दुमन्दगतिषु विघटमानकुमुदवनकषायपरिमलेषु समुपोढनिद्राभरालसतारकैरन्योन्यग्रथितपक्ष्मपुटैरारब्धरोमन्थमन्थरमुखैः सुखासीनैराश्रममृगैरभिनन्दितागमनेषु प्रवहत्सु निशामुखसमीरणेषु, अर्धयाममात्रावखण्डितायां विभावर्यां हारीतः कृताहारं मामादाय सर्वैस्तैर्महामुनिभिरुपसृत्य चन्द्रातपोद्भासिनि तपोवनैकदेशे वेत्रासनोपविष्टमनतिदूरवर्तिना जालपादनाम्ना शिष्येण दर्भपवित्रधवित्रपाणिना मन्दमुपवीज्यमानं पितरमवोचत्—'हे तात, सकलेयमाश्चर्यश्रवणकुतूहलाकलितहृदया समुपस्थिता तापसपरिषदाबद्धमण्डला प्रतीक्षते। व्यपनीतश्रमश्च कृतोऽयं पतत्रिपोतः। तदावेद्यतां यदनेन कृतम्।

---

वायूनां विशेषणानि—**अविश्येति**। अवश्यायो हिमं तस्य जलबिन्दवः पानीयविप्रुषस्तैर्मन्दा मन्थरा गतिर्गमनं येषां ते। **विघटेति**। विघटमानानि विकासं प्राप्यमाणानि यानि कुमुदवनानि तेषां कषायस्तुवरो गन्धो येषु ते। **अभिनन्दितमिति**। अभिनन्दितं श्लाघितमागमनं येषां ते तथा। कैः। आश्रममृगैर्मुनिस्थानस्थहरिणैः। अथ च तेषां विशेषणानि—**समुपोढेति**। समुपोढा सम्यक्प्रकारेणोपोढा या निद्रा प्रमीला तस्या भरः संभारस्तेनालसा मन्थरा तारका कनीनिका येषां ते तथा तैः। **अन्योन्येति**। अन्योन्यं परस्परं ग्रथितानि मिलितानि पक्ष्म नेत्ररोम तेषां पुटानि येषां ते तथा तैः। **आरब्ध इति**। आरब्धो यो रोमन्थश्चर्वणं तेन मन्थराण्यलसानि मुखानि येषां ते तथा तैः। **सुखेति**। सुखेन यदृच्छयासीनैरुपविष्टैः। **अर्धेति**। त्रियामाशयेनार्धयाममात्रमर्धप्रहरमात्रमवखण्डितं खण्डनां प्राप्तं यस्याः सा तथा। तस्यामर्धप्रहरन्यूनायामित्यर्थः। एवंविधायां विभावर्यां रजन्यां सर्वैस्तैर्महामुनिभिर्महातपस्विभिरुपसृत्यागत्य। कस्मिन्। **चन्द्रेति**। चन्द्रातपेन निशापतिप्रकाशेनोद्भासत उत्प्राबल्येन शोभत इत्येवंशीलः स तथा तस्मिन्। **तप इति**। तपोवनस्य मुनिस्थानस्यैकदेशोऽन्यतरप्रदेशस्तस्मिन्नधिकरणीभूते। अथ जाबालिमुनिं विशेषयन्नाह—**वेत्रेति**। वेत्रासनमासन्दी तत्रोपविष्टमासीनम्। **अनतीति**। अनतिदूरवर्तिना नातिसमीपवर्तिना। **जालेति**। जालपाद इति नाम यस्य स तथा तेन शिष्येण विनेयेन। **दर्भेति**। दर्भः कुशस्तद्वत्पवित्रं यद्धवित्रं मृगचर्मनिर्मितं तालवृन्तं पाणौ हस्ते यस्य स तथा तेन। 'धवित्रं मृगचर्मणः' इति कोशः। मन्दं यथा स्यात्तथोपवीज्यमानं दूरीक्रियमाणमक्षिकम्। अन्वयस्तु पूर्वमुक्तः। तदनुसारेण किमुवाचेत्याह—हे तात हे पितः, सकला समग्रेयं प्रत्यक्षगता तापसपरिषत्तपस्विसंसत्समुपस्थितागता। **आश्चर्येति**। आश्चर्यस्याद्भुतवस्तुनो यच्छ्रवणमाकर्णनं तत्र यत्कुतूहलं चित्तवृत्तिविशेषस्तेनाकलितं व्याप्तं हृदयं चेतो यस्याः सा। परिषद्विशेषणम्। **आबद्धेति**। आबद्धमारचितं मण्डलं यया सा। प्रतीक्षत इति। भवन्तमिति शेषः। भवद्विलम्बेन विलम्ब इत्यर्थः। कदाचिच्छुकक्लतोऽपि स्यादित्यत आह—**व्यपनीतेति**। अयं पतत्रिपोतः शुकशिशुर्व्यपनीतो दूरीकृतः श्रमो ग्लानिर्यस्यैवंभूतः कृतो विहितः। चेति पूर्वोक्तसमुच्चये। तदिति हेत्वर्थे। **आवेद्यतामिति**। यदनेन शुकेन कृतं विहितं तदावेद्यतां निवेद्यताम्।

---

**टिप्प०—1 'सर्वैस्तैः सह मुनिभिः' इत्येव पाठः। अन्यथा महामुनिभिरिति पाठस्वीकारे सहार्थस्याऽऽक्षेपः कर्तव्यः स्यात्। किञ्च महामुनिस्तत्र जाबालिरेव, न सर्वे। 2 'दर्भपवित्रपाणिना' इत्येव ग्रन्थशय्याक्षराणि। यदि तु 'पवित्रधवित्र' इति सहृदयलवित्रपदसंग्रहः प्रिय एव तद्यपि 'दूरीक्रियमाणमक्षिकम्' इति व्याख्यानं तु विचित्रमेव, रात्रौ मक्षिकाणामभावात्।**

---

पाठा०—१ बिन्दुपतनमन्द; बिन्दुपतनशीतेषु मन्द. २ खण्ड. ३ आगमेषु. ४ प्रवात्सु. ५ समीरेषु. ६ सह मुनिभिः. ७ वेत्रासने सुखोपविष्टम्. ८ नातिदूर. ९ पवित्रपाणिना. १० मन्दमन्दम्. ११ उवाच. १२ तात. १३ आकुलित. १४ प्रतीक्ष्यते. १५ किमनेन.

अपरस्मिञ्जन्मनि कोऽयमभूद्भविष्यति च' इति । एवमुक्तस्तु स महामुनिरग्रतः स्थितं मामवलोक्य तांश्च सर्वानेकाग्राञ्छ्रवणपरान्मुनीन्बुद्ध्वा शनैःशनैरब्रवीत्—'श्रूयतां यदि कौतूहलम्'—

## कथारम्भः ।

अस्ति सकलत्रिभुवनललामभूता, प्रसवभूमिरिव कृतयुगस्य, आत्मनिवासोचिता भगवता महाकालाभिधानेन भुवनत्रयसर्गस्थितिसंहारकारिणा प्रमथनाथेनेवापरेव पृथिवी समुत्पादिता, द्वितीयपृथिवीशङ्कया जलनिधिनेव रसातलगम्भीरेण परिखावलयेन परिवृता, पशुपतिनिवासप्रीत्या गगनपरिसरोल्लेखिशिखरमालेन कैलासगिरिणेव सुधासितेन प्राकारमण्डलेन परिवृता, प्रकटशङ्खशुक्तिमुक्ताप्रवालमरकतमणिराशिभिश्चामीकरचूर्णसिकतानिकरनिचितैरायामि-

---

अस्माकमिति शेषः । **अपरस्मिन्निति** । एतद्भवापेक्षयापरजन्मनि भूते भविष्यति च कोऽयमभूत्कोऽयमग्रे भविष्यति चेति । **एवमिति** । एवं पूर्वोक्तप्रकारेणोक्तः प्रश्नविषयीकृतः । तु पुनरर्थे । स महामुनिः जाबालिमुनिरग्रतः पुरतः स्थितमासीनं मामवलोक्य निरीक्ष्य तान्सर्वान्समग्रानेकाग्रानेकतानान् । **श्रवणेति** । श्रवणमाकर्णनं तस्मिन्परान्मुनींस्तपस्विनो बुद्ध्वा ज्ञात्वा च अतिवृद्धत्वात्क्षीणत्वाच्च शनैः शनैर्मन्दस्वरेणाब्रवीदुवाच । किमुवाचेत्याह—**श्रूयतामिति** । यदि चेत्कौतूहलमाश्चर्यं तर्हि श्रूयतामाकर्ण्यताम् । अनेनात्यादरः सूचितः ।

**अस्तीति** । उज्जयिनी नाम नाम्नी नगर्यस्तीति दूरेणान्वयः । अग्रे प्रथमान्तानि सर्वाण्यपि नगरीविशेषणानि । अन्येषां त्वन्यविभक्तिकानीति बोध्यम् । **सकलेति** । सकलं समग्रं यत्त्रिभुवनं त्रिविष्टपं तस्य ललामभूता तिलकभूता । **प्रसवेति** । कृतयुगस्य सत्ययुगस्य प्रसवभूमिरिव जन्मभूरिव । **आत्मेति** । भगवतेश्वरेणात्मनः स्वस्य यो निवासोऽवस्थानं तत्रोचिता योग्याऽपरेवैतद्भूभिन्नैव पृथिवी वसुधा समुत्पादिता कृता । अथेश्वरं विशेषयन्नाह—**महेति** । महाकाल इत्यभिधानं नाम यस्य स तथा तेन । **भुवनेति** । भुवनत्रयस्य विष्टपत्रयस्य यः सर्गः सर्जनम्, स्थितिरवस्थानम्, संहारो विनाशः एतेषां कारिणा करणशीलेन । **प्रमथेति** । प्रमथा गणास्तेषां नाथेन स्वामिना । **द्वितीयेति** । द्वितीयैतद्व्यतिरिक्ता या पृथिवी तस्याः शङ्का आरेका तया जलनिधिनेव समुद्रेणेव परिखावलयेन खातिकामण्डलेन परिवृता परिवेष्टिता । परिखावलयं विशिनष्टि—**रसेति** । रसातलं पृथ्व्या अधोभागं यावद्गम्भीरेणालब्धमध्येन । पुनर्विशेषतो नगरीं विशिनष्टि—**प्राकारेति** । प्राकारो वप्रस्तस्य मण्डलेन वलयेन परिवृता परिवेष्टिता । **पशुपतिरिति** । पशुपतिरीश्वरस्तस्य निवासोऽवस्थितिस्तेन या प्रीतिः स्नेहस्तया कैलासगिरिणेव रजताद्रिणेवेत्युपमानम् । वप्रकैलासौ युगपद्विशेषयन्नाह—**गगनेति** । गगनस्याकाशस्य यः परिसरः पर्यन्तभूः । 'पर्यन्तभूः परिसरः' इत्यभिधानचिन्तामणिः । तदुल्लेखिनी तत्संघर्षकारिणी शिखरमाला सानुश्रेणिर्यस्य स तथा । पक्षे गगनोल्लेखिनी शिखरमालाप्रमाला अर्थात्कपिशीर्षाणि यस्मिन् । 'शिखरं पुलकाग्रयोः' इत्यनेकार्थः । **सुधेति** । सुधा गृहधवलीकरणद्रव्यं तेन सितेन शुभ्रेण । पक्षे सुधावच्छुभ्रेणेत्यर्थः । **प्रकटेति** । प्रकटाः स्पष्टाः शङ्खः कम्बुः, शुक्तिरब्धिमण्डूकी, मुक्ता मौक्तिकम्, प्रवालं हेमकन्दलः, मरकतमणिरश्मगर्भः; एतेषां राशयः समूहा येषु तैः । **चामीकरेति** । चामीकरचूर्णं पर्वतादौ 'चूकी' इति प्रसिद्धं तदेव सितानिकरो वालुकासमूहस्तेन

---

पाठा०—१ अन्यस्मिन्. २ क्रो वायम्. ३ वा. ४ अग्रस्थितम्. ५ श्रवणतत्परान्. ६ शनैः ७ कुतूहलम्. ८ अस्ति किल. ९ निवासोच्चिता महा. १० कारणेन. ११ नाथेनापरेव. १२ शङ्कया च जल. १३ गम्भीरेण. १४ जलपरिखा. १५ प्रीत्या च गगन. १६ गगनतलोल्लेखि. १७ गिरिणा सुधा. १८ परिगता. १९ वालुका. २० रचितैः.

भिरगस्त्यपरिपीतसलिलैः सागरैरिव महाविपणिपथैरुपशोभिता, सुरासुरसिद्धगन्धर्वविद्याधरोरगाध्यासिताभिश्चित्रशालाभिर[1]विरतो[2]त्सवप्रमदावलोकनकुतूहलादम्बरतलादवतीर्णाभिर्दिव्यविमानपङ्क्तिभिरिवालंकृता, [3]मथनोद्धत[4]दुग्धधवलितमन्दरद्युतिभिः कनकमयामलकलशशिखरैरनिलदोलायितसितध्वजैरुपरिपतदभ्रगङ्गैरिव तुषारगिरिशिखरैरमरमन्दिरैर्विराजितशृङ्गाटका, सुधावेदिकोपशोभितोदपानैरनवरतचलितजलघटीयन्त्रसिच्यमानहरितोपवनान्धकारैः केतकीधूलिधूसरैरुपशल्यकैरु[5]पशोभिता, मदमुखरम[6]धुकरकुलान्धकारितनिष्कुटा, स्फुरदुपवनलताकुसुमपरिमलसुरभिसमीरणा, रणितसौभाग्यघण्टैरालोहितांशुकपताकैराबद्धर-

---

निचितैर्व्याप्तैः। **आयेति**। आयामो विस्तारो विद्यते येषु तैः। **अगस्त्येति**। अगस्त्यो घटोद्भवस्तेन परिपीतं सलिलं जलं येषां तैः सागरैरिव समुद्रैरिव। **महेति**। महत्यतिदीर्घा या विपणिः पण्यवीथिका तस्या ये पन्थानो मार्गास्तैरुपशोभिता विराजमाना। 'ऋक्–' इति सूत्रेण पथोऽकारान्तत्वम्। **सुरेति**। सुरा देवाः, असुरा दानवाः, सिद्धा विद्यासिद्धाः, गन्धर्वा देवगायनाः, विद्याधरा व्योमचारिणः, उरगा नागाः एतैरध्यासिताभिराश्रिताभिश्चित्रोपलक्षितशालाभिरलंकृता भूषिता। काभिरिव। दिव्यविमानपङ्क्तिभिरिव देवयानश्रेणिभिरिव। तस्याः कथमत्रागम इत्यारेकायामाह—**अविरतेति**। अविरतं निरन्तरं य उत्सवो महस्तस्मिन्याः प्रमदा योषितस्तासां यदवलोकनं निरीक्षणं तदेव यत्कुतूहलमाश्चर्यं तस्मादिति हेत्वर्थे पञ्चमी। अम्बरतलादाकाशादवतीर्णाभिरुत्तीर्णाभिः। आगताभिरिति यावत्। **अमरेति**। अमरमन्दिराणि देवप्रासादास्तैर्विराजितानि शोभमानानि शृङ्गाटकानि[1] त्रिमार्गाश्लेषरूपाणि यस्यां सा तथा। 'त्रिमार्गाश्लेषः शृङ्गाटः' इति कोशः। कैरिव। तुषारगिरिर्हिमाद्रिस्तस्य शिखरैः सानुभिरिव। देवगृह-गिरिशिखरयोः साम्यं प्रदर्शयन्नाह—**मथनेति**। मथनं विलोडनं तत्रोद्धतः कृतप्रयत्नो दुग्धेन पयसा धवलितो धवलीकृतो यो मन्दरो मेरुस्तद्वद्द्युतिः कान्तिर्येषां तैः। **कनकेति**। कनकमयाः स्वर्णमया अमला निर्मला ये कलशा लघुकुम्भास्त एव शिखराण्यग्राणि येषां ते तथा तैः, पक्षे कलशवच्छिखराणि येषामिति विग्रहः। **अनिलेति**। अनिलैर्वायुभिर्दोलायिताः प्रेङ्खावदाचरिताः सितध्वजाः श्वेतवैजयन्त्यो येषु तैः। कैरिव। उपरिपतदभ्रगङ्गैरिवोपरिष्टात्पतन्ती स्रवन्त्यभ्रगङ्गा स्वर्धुनी येषु तैरिव। **सुधेति**। सुधा प्रागेव व्याख्याता तयोपलक्षिता या वेदिका पीठबन्धस्तयोपशोभिताः शोभां प्रापिता उदपानाः कूपा येषु तैः। 'कूपः स्यादुदपानोऽन्धुः' इति कोशः। **अनवरतेति**। अनवरतं निरन्तरं चलितं भ्रामितं यज्जलघटीयन्त्रमरघट्टस्तेन। कारणेन कार्योपचारात्। सिच्यमानानि प्रोक्ष्यमाणानि यानि हरितानि नीलान्युपवनान्येवान्धकाराणि येषु तैः। **केतकीति**। केतक्या[2] मालत्या या धूलिः परागस्तेन धूसरैर्मलिनैरेवंभूतैरुपशल्यकैर्ग्रामसीमाभिः उपशोभिता विभूषिता। 'ग्रामसीमा तूपशल्यम्' इति कोशः। **मदेति**। मदेन मधुपानेन मुखराणि वाचालानि यानि मधुकरकुलानि भ्रमरसमूहाः तैरन्धकारिता जनितान्धकारा निष्कुटा गृहारामा यस्यां सा। अनेनारामाणां शोभातिशयः सूचितः। **स्फुरेति**। स्फुरन्त्य उल्लसन्त्यो या उपवनलता उपवनव्रतत्यस्तासां कुसुमानि सुमनसस्तेषां परिमलेनामोदेन सुरभिर्घ्राणतर्पणः समीरणो वायुर्यस्यां सा। पुनः प्रकारान्तरेण नगरीं विशिनष्टि—**सदनेति**। सदनस्य[3] गृहस्य यष्टयः प्रसिद्धास्तासु स्थिताः केतवो वैजय-

---

**टिप्प०—1 चतुष्पथानि ('चौराहे' हिन्दी)। 2 कण्टकयुक्तवृक्षविशेषः केतकी, यो हि सीमान्तभागे आरोप्यते। मालती तु 'जातिः,' न सा कण्टकिनी, नापि वा सीमनि रोप्यते। न च तस्यां परागधूलिर्भवति। 3 'मदनयष्टिकेतुभिः' इत्येव पाठः। तद्व्याख्या तु—मदनवृक्षनिर्मितकन्दर्पध्वजैः प्रकाशिता सूचिता मकरध्वजस्य कामस्य पूजा यस्यां सा, कामपूजायां तादृशध्वजोच्छ्रयणस्य शास्त्रोक्तत्वात्।**

**पाठा०—१** अनवरत. २ उत्सवावलोकन. ३ मन्थन. ४ दुग्धसिन्धुधवल. ५ विभूषिता. ६ मधुकरपटलान्धकारित.

क्तचामरैर्विद्रुममयैः [1]प्रतिगृहमुच्छ्रितै[2]र्मकराङ्कैः स[3]दनयष्टिकेतुभिः प्रकाशितमकरध्वजपूजा, सततप्रवृत्ताध्ययनध्वनिधौतकलमषा, स्तिमितमुरजरवगम्भीरगर्जितेषु सलिलसीकरासारस्त[4]व-करचितदुर्दिनेषु प[5]र्यस्तर[6]विकिरणरचितसुरचापचा[7]रुषु धारागृहेषु [8]मत्तमयूरैर्मण्डलीकृतशि-खण्डैस्ताण्डवव्यसनिभिराबध्यमानकेका[9]कोलाहला, विकचकुवलयकान्तैरुत्फुल्लकु[10]मुदधवलोद-रैरनिमिषदर्शनरमणीयैराखण्डललोचनैरिव सहस्रसंख्यैरुद्भासिता सरोभिः, अविरलकदलीव-

---

न्यस्तैः प्रकाशिता प्रकटीकृता मकरध्वजस्य कंदर्पस्य पूजार्चा यस्यां सा। अथ च सदनयष्टिमदनयष्ट्योः साम्यं प्रदर्शयन्नाह—**रणितेति** । रणिताः रणरणशब्दं कुर्वाणाः सौभाग्यघण्टाः सुभगताहेतोर्न्यस्ता घण्टा बृहत्किङ्किण्यो येषु तैः । **आलोहीति** । आलोहितं रक्तमंशुकं तस्य पताका वैजयन्त्यो येषु तैः । **आबद्धेति** । आबद्धानि बद्धानि रक्तचामराणि लोहितवालव्यजनानि येषु तैः । **विद्रुमेति** । विद्रुमसयैः विद्रुमं प्रवालं प्रचुरं येषु तैः । प्रतिगृहं प्रतिसद्मोच्छ्रितैरूर्ध्वांकृतैः । मकरो मत्स्यस्तस्याङ्कश्चिह्नं येषु तैः। एवंप्रकारेणैव वसन्ते कामपूजा जनैः क्रियत इति तदुत्प्रेक्षा । **सततमिति** । सततं निरन्तरं प्रवृत्तः प्रसृतोऽध्ययनस्य शास्त्रपाठस्य ध्वनिः शब्दस्तेन धौतं क्षालितं कल्मषं पातकं यस्यां सा । पुनः प्रकारान्तरेण तां विशिनष्टि—**धारेति** । धारागृहेषु यन्त्रगृहेषु मत्तमयूरैरुन्मदकलापिभिराबध्यमानोऽन्योन्याश्लिष्टतया क्रियमाणः केका मयूरस्य वाण्यस्तासां कोलाहलः कलकलो यस्याम् । यन्त्रगृहाणां जलधरसादृश्यं विशेष-णमुखेन दर्शयन्नाह—**स्तिमितेति** । स्तिमितो निश्चलो यो मुरजस्य मृदङ्गस्य रवः शब्दः स एव गम्भीरं घोरं गर्जितं स्तनितं येषु । **सलिलेति** । सलिलस्य जलस्य सीकरा वातास्तवारिविप्रुषस्तेषामासारो वेग-वान्वर्षो येष्वेवंविधाः स्तबका गुच्छकास्तै रचितं प्रारब्धं दुर्दिनं येषु ते तथा तेषु । आसारस्य स्तबका इति समासो वा । **पर्यस्तेति** । पर्यस्ता निपतिता ये रविकिरणाः सूर्यरश्मयस्तै रचितं, विहितं यत्सुरचा-पमिन्द्रधनुस्तेन चारुषु मनोहरेषु । रविकिरणानां द्रव्यान्तरसंयोगेन विविधवर्णत्वोपपत्तेरुत्प्रेक्षा । अथ मयू-रान्विशिनष्टि—**मण्डलेति** । मण्डलीकृता वर्तुलीकृताः शिखण्डा बर्हाणि यैः । नृत्यप्रारम्भे मयूरकलापो मण्डलाकृतिः स्यादिति सर्वप्रसिद्धिः । अतएव ताण्डवव्यसनिभिर्नृत्यरसिकैः । पुनः कीदृशी । सरोभिस्तटा-कैः उद्भासिता उपशोभिता । अथ च सरोविशेषणानि—**विकचेति** । विकचानि विकस्वराणि कुवल-यान्युत्पलानि तैः कान्तैर्मनोहरैः । **उत्फुल्लेति** । उत्फुल्लानि विनिद्राणि यानि कुमुदानि कमलानि तद्वद्धवलं शुभ्रमुदरं मध्यभागो येषां तैः । कैरिव । सहस्रसंख्यैराखण्डलस्येन्द्रस्य लोचनैरिव । अथोभौ विशेषयन्नाह—**अनिमिषेति** । अनिमिषा मत्स्यास्तेषां दर्शनं विलोकनं तेन रमणीयैर्मनोहरैः । पक्षेऽनिमिषं पक्ष्मपातरहितं यद्दर्शनमीक्षणं तेन रमणीयैः मनोहरैः । गृहवर्णनद्वारा तां पुनर्विशिनष्टि—**दिशीति** । दिशि दिशि प्रतिदिशं दन्तवलभिकाभिर्गजदन्तनिर्मितच्छ[3]दिभिराधारभूताभिर्धवलीकृता । अथ वलभीवि-शेषणानि—**अविरलेति** । अविरलानि निबिडानि यानि कदलीवनानि रम्भावनानि तैः कलिताभिः ।

---

**टिप्प०—1 पर्यस्तैः काचकपाटादिषु निपतितै रविकिरणैर्नानावर्णशालिनः सुरपतिधनुषः संसिद्धिः स्वाभाविक्येव, न तत्र संभावनेति नोत्प्रेक्षा। किन्तु समग्रे वाक्यार्थे—अन्योन्याश्लिष्टकेकाकोलाह-लेन मयूराणां मुरजरवादौ मेघगर्जनादिभ्रान्तिः प्रतीयत इति वस्तुना भ्रान्तिमदलंकारध्वनिः । 2 अत्र हि आखण्डलोचनैः सह सरसां साम्यात्पूर्णोपमा । तेन सर्वाणि विशेषणान्युभयसंबद्धानि । ततश्च—विक-चकुवलयवत्कान्तैः ( इति लोचनपक्षे ), उत्फुल्लैः कुमुदैर्धवलानि मध्यस्थलानि येषां तैः ( इति सरःपक्षे ) व्याख्यानमप्यत्र योजनीयम् । 3 अविरलं यत्कदलीवनं पताकासमूहस्तेन कलिताभिः फेनपुञ्जपाण्डुराभिः दन्तवलभिकाभिः उपरितलगवलघुगृहैः (‘अटारी’ हिन्दी) ‘शुद्धान्ते वलभी चन्द्रशाले सौधोर्ध्ववेश्मनि’ इति रभसः । ‘यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः’ इति माघश्च । कदली पताका । ‘कदली वैजयन्त्यां च रम्भायां हरिणान्तरे’ इति विश्वः । उपरितनटीका तु असंबद्धत्वात्प्रामादिकी ।**

---

**पाठा०**—१ प्रतिभवनम्. २ मकराङ्कितैः. ३ मदन. ४ आसाररचित. ५ पर्यन्त. दिवसकरकिरणस्तबकरञ्जित. ७ चारुधारा. ८ मयूरमण्डलैरामण्डलीकृत. ९ केकारव. १० कमल.

नैकलिताभिरमृतफेनपुञ्जपाण्डुराभिर्दिशि[2] दिशि दन्तवलभिकाभिर्धवलीकृता, यौवनमदमत्त-मालवीकुचकलशलुलितसलिलया[3] भगवतो महाकालस्य शिरसि सुरसरितमालोक्योपजातेर्ष्ययेव[4][5] सततसमाबद्धतरंगभृकुटिलेखया[6] खमिव क्षालयन्त्या सिप्रया परिक्षिप्ता, सकलभुवनख्यातयशसा[7] हरजटाचन्द्रेणेव कोटिसारेण मैनाकेनेवाविदितपक्षपातेन मन्दाकिनीप्रवाहेणेव प्रकटितकनकपद्मराशिना स्मृतिशास्त्रेणेव सभावसथकूपप्रपारामसुरसदनसेतुयन्त्रप्रवर्तकेन[8] मन्द-

---

**अमृतेति** । अमृतस्य पीयूषस्य यः फेनपुञ्जो डिण्डीरपिण्डस्तद्वत्पाण्डुराभिः शुभ्राभिः । सिप्रावर्णनद्वारा नगरीं वर्णयन्नाह—**यौवनेति** । यौवनमदेन तारुण्याभिमानेन मत्ता उच्छृङ्खला या मालव्यो मालवदेशोद्भवाः स्त्रियस्तासां कुचा एव कलशास्तैर्लुलितमान्दोलितं सलिलं यस्याः सा तया । **भगवत इति** । भगवतो महाकालस्य महाकालाभिधानस्येश्वरस्य शिरसि मस्तके सुरसरितं गङ्गामालोक्य निरीक्ष्य सततं निरन्तरं समाबद्धा सम्यक्प्रकारेणाबद्धा बन्धं प्रापिता ये तरंगाः कल्लोलास्त एव भृकुटिलेखा भृकुटिपङ्क्तिर्यया सा तथोपजातेर्ष्ययेवोत्पन्नासूययेव । एतेन सपत्नीदर्शनेन भृकुटिविकारो दर्शितः । **खमिति** । खमाकाशं क्षालयन्त्येव निर्मलं कुर्वत्येवंविधया सिप्रया सिप्रानद्या परिक्षिप्ता परिवेष्टिता । इभ्यजनवर्णनद्वारा नगरीं विशेषयन्नाह—विलासिजनेनाधिष्ठितेति दूरेणान्वयः । तत्र विलासिनीनां जनो, विलासी यो जन इत्येवं समासभेदेन द्वयोर्ग्रहणम् । अथ विलासिजनविशेषणानि—कीदृशेनेव विलासिजनेन । हरजटाचन्द्रेणेवेश्वरजटास्थनिशानाथेनेव । उभयं विशिनष्टि—**सकलेति** । सकलं समग्रं यद्भुवनं विश्वं तत्र ख्यातं प्रसिद्धं यशः कीर्तिर्येषां ते तथा । पक्षे यशः कान्तिर्यस्येति विग्रहः । **कोटीति** । कोटिः संख्याविशेषस्तावत्प्रमाणं सारं द्रव्यं येषां ते तथा । 'सारो द्रव्यं बलं सारम्' इत्यनेकार्थः । पक्षे कोटिरग्रभागस्तेन सारः प्रधानः । पुनः केनेव । मैनाकेनेव हिमाचलात्मजेनेव । उभयं विशिनष्टि—**अविदितेति** । अविदितोऽननुभूतः पक्षयोः पातश्छेदो येन स तथा तेन । इन्द्रेण सर्वेषां भूभृतां पक्षच्छेदो विहितः; परं मैनाकस्य न कृत इति प्रसिद्धिः । पक्षेऽविदितोऽज्ञातः पक्षपातोऽसदङ्गीकारो येन । **मन्दाकिनीति** । मन्दाकिनी गङ्गा[2] तस्याः प्रवाहो रयस्तेनेव । उभयं विशेषयन्नाह—**प्रकटितेति** । प्रकटिता प्रकाशिता कनकस्य सुवर्णस्य । **पद्मेति** । पदैकदेशे पदसमुदायोपचारात्पद्मरागमणीनां राशयः समूहा येन स तथा तेन । पक्षे कनकपद्मानां राशयः कमलसमूहाः । **स्मृतीति** । स्मृतिर्धर्मसंहिता तल्लक्षणेन शास्त्रेणेव । उभयं विशिनष्टि—**सभेति** । सभा संसदावसथं छात्रव्रतिनां वेश्म सामान्यतो गृहं वा, कूप उदपानः, प्रपा पानीयशाला, आरामः कृत्रिमं वनम्, सुरसदनं देवगृहम्, सेतुः पालिः, यन्त्रोऽरघट्टकादिगृहाद्याश्रमस्थत्वात् एतेषां प्रवर्तकेन प्रयोजकेन । पक्षे धर्मजनकत्वात्तद्वि-

---

टिप्प०—1 'उपजातेर्ष्ययेव आबद्धतरंगभ्रुकुटिलेखया' इति क्रमेण व्याख्यानमुचितम्, सेर्ष्यत्वे एव भ्रुकुटिबन्धौचित्यात् । अत्र कार्येण ( भ्रुकुटिबन्धेन ) शिप्रायां सपत्नीव्यवहारसमारोपात् रूपकगर्भा समासोक्तिः, 'समुपजातेर्ष्ययेव' 'खमिव क्षालयन्त्या' इत्युत्प्रेक्षाद्वयेन अङ्गभूतेन संकीर्यते । 2 स्वर्गङ्गा इत्यर्थः, तस्यामेव कनककमलसद्भावात् । ३ वस्तुतस्तु—प्रकटितः कनकानां सुवर्णानां पद्मराशिः 'पद्म' संख्यकपुञ्जो येन । कोटि-अर्बुदवत् 'पद्म' इति संख्या । एतेन अप्रकटः ( गुप्तः ) धनराशिस्तु विलासिजनस्य न जाने कियान् स्यादिति व्यङ्ग्यम् ।

---

पाठा०—१ कदलिताभिः. २ दिशि दन्त. ३ क्षुभित. ४ आलोक्यमुपजात. ५ समुपजातेर्ष्यया. ६ समावद्धभ्रुकुटि; आवद्धतरंगभ्रुकुटी. ७ निखिलभुवनतल. ८ सदने.

रेणेवोद्धृत[1]समग्रसागररत्नसारेण संगृहीतगारुडेनापि भुजंगभीरुणा[2] खलोपजीविनापि[3] प्रणयिजनोपजीव्यमानविभवेन वीरेणापि विनयवता प्रियंवदेनापि सत्यवादिनाभिरूपेणापि स्वदारसंतुष्टेनातिथिजनाभ्यागमार्थिनापि परप्रार्थनानभिज्ञेन कामार्थपरेणापि धर्मप्रधानेन महासत्त्वेनापि परलोकभीरुणा सकलविज्ञानविशेषविदा[4] वदान्येन[5] दक्षेण[6] स्मितपूर्वाभिभाषिणा परिहासपेशलेनोज्ज्वलवेषेण शिक्षिताशेषदेशभाषेण वक्रोक्तिनिपुणेनाख्यायिकाख्यानपरिचयचतु-

---

धायकेनेत्यर्थः । **मन्दरेति** । मन्दरो मेरुस्तेनेव । तदुभयं विशिनष्टि—**उद्धृतेति** । उदूर्ध्वं धृतानि समग्राण्यखिलानि सागरवत्[1]समुद्रवद्रत्नेषु साराणि मुख्यरत्नानि येन । पक्ष उद्धृतानि बहिर्नीतानि समग्राणि सागरात्समुद्राद्रत्नसाराणि चतुर्दशरत्नानि येन । **संगृहीतेनेति** । संगृहीतं गारुडं रत्नं गारुडशास्त्रं वा येनैवंभूतेनापि भुजंगभीरुणेति विरोधः । तत्परिहारस्तु भुजंगो गणिकापतिर्धूर्तो वेत्यर्थात् । **खलेति** । खलं दुर्जनमुपजीवतीत्येवंशीलेनापि प्रणयिजनेन सज्जनजनेनोपजीव्यमानो भोग्यमानो विभवो यस्येति विरोधः । तत्परिहारस्तु खलं नवीनधान्यस्थापनस्थलमित्यर्थात्तदुपजीविना तदाश्रयेणाजीविकां कुर्वाणेत्यर्थः । **वीरेति** । वीरेणापि सुभटेनापि विनयवता नमनशीलेनेति विरोधः । तत्परिहारस्तु वीरेण विराज[2]मानेनेत्यर्थात् । **प्रियमिति** । प्रियमेव वदतीति प्रियंवदस्तेनैवंभूतेनापि सत्यवादिनेति विरोधः । तत्परिहारस्तु प्रियो वल्लभो वदो[3] वक्ता यस्येत्यर्थात् । 'अनुस्वारः श्लेषभङ्गकृन्न भवति' इति प्राञ्चः । **अभीति** । अभिरूपेणाप्यतिसुन्दरेणापि स्वस्य दाराः स्त्रियस्तेष्वेव ( स्त्री तस्यां ) संतुष्टेन संतोषिणेति विरोधः । तत्परिहारस्त्वभिरूपेण पण्डितेनेत्यर्थात् । 'कृतिकृष्ट्यभिरूपधीराः' इति कोशः । **अतिथीति** । अतिथिजनोऽभ्यागतजनस्तस्याभ्यागम आगमनं तदर्थिनापि परेषु यत्प्रार्थनं याचनं तत्रानभिज्ञेनाकुशलेनेति विरोधः । तत्परिहारस्तु साधुजनाभ्यागमस्यार्थिना वाञ्छकेनेत्यर्थात् । **कामेति** । कामः स्त्रीषु रतिः, अर्थो द्रव्यम् तत्परेण तदासक्तेनापि धर्मप्रधानेनेति विरोधः । तत्परिहारस्तु कामो वाञ्छितो योऽर्थः पदार्थस्तत्परेण तत्साधकेनेत्यर्थात् । **महेति** । महासत्त्वेनापि महासत्त्ववतापि परे शत्रवस्तेषां लोकः समूहस्तस्माद्भीरुणा साशङ्केनेति विरोधः । तत्परिहारस्तु परलोको भवान्तरमित्यर्थात् । **सकलेति** । सकलं समग्रं यद्विज्ञानं शिल्पादि तस्य यो विशेषस्तारतम्यं तद्विदा तद्वेत्रा । वदान्येन दानतत्परेण प्रियंवदेन च । 'प्रियंवदो दानशीलः स वदान्यः' इति कोशः । दक्षेण चतुरेण । **स्मितेति** । अदृष्टरदं हास्यं स्मितं तत्पूर्वं यथा स्यात्तथाभिभाषिणा जल्पकेन । **परीति** । परिहासो नर्मवचस्तेन पेशलेन सुन्दरेण । 'पेशलं हृद्यसुन्दरम्' इति कोशः । **उज्ज्वलेति** । उज्ज्वलो निर्मलो वेषो नेपथ्यं यस्य स तेन । **शिक्षितेति** । शिक्षिताभ्यस्ताशेषाणां समग्राणां देशानां जनपदानां भाषा वाग्येन स तथा तेन । **वक्रोक्तीति** । वक्रोक्तिः कुटिला वचनपद्धतिस्तत्र निपुणेन दक्षेण । **आख्यायीति** । 'आख्यायिका पुरावृत्तमाख्यानं सांप्रतं च तत्' इति कोशः । तत्र यः परिचयः संस्तवस्तत्र

---

**टिप्प०**—1 उद्धृतं धनद्वारा संगृहीतं समस्तसागररत्नानां सारमुत्कृष्टांशो येन ( विलासि० ), इति तु सरला व्याख्या । 2 वीरेणापि विनयवता शिक्षावतेति परिहार उचितः । 3 प्रियंवदत्वेपि मितभाषित्वात्परिहारः सरलः । 4 अभि अभिमतं रूपं यस्य तेन ( रूपपक्षपातिना ) । रूपैकपक्षपातिनः कुरूपभार्यत्वे सति सुरूपाऽन्यस्त्रीगामितया स्वदारसंतुष्टत्वं विरुद्धमिति व्याख्यानमुचितम् । 5 अतिथयोपि परे एवेति विरोधः, परेषु अर्थप्रार्थनाऽनभिज्ञेनेति तत्परिहारः ।

---

**पाठा०**—१ उद्धतसमस्त. २ भुजंग; भुजंगसङ्ग. ३ सकलोपजीविना; कलोपजीविना. ४ विज्ञानविदा. ५ विद्यावदातेन दानशीलेनादीनेन. ६ दक्षिणेन.

रेण सर्वलिपिज्ञेन महाभारतपुराणरामायणानुरागिणा बृहत्कथाकुशलेन द्यूतादिकलाकलापपारगेण श्रुतरागिणा सुभाषितव्यसनिना प्रशान्तेन सुरभिमासमारुतेनेव सततदक्षिणेन हिमगिरिकाननेनेवान्तःसरलेन लक्ष्मणेनेव रामाराधनानिपुणेन शत्रुघ्नेनेवाविष्कृतभरतपरिचयेन दिवसेनेव मित्रानुवर्तिना बौद्धेनेव [1]सर्वास्तिवादशूरेण सांख्यागमेनेव प्रधानपु[2]रुषोपेतेन जिनधर्मेणेव जीवा[3]नुकम्पिना विलासिजनेनाधिष्ठिता, सशैलेव प्रासादैः, [4]सशाखानगरेव महा-

---

चतुरेणाभिज्ञेन । **सर्वेति** । सर्वाः समग्रा या लिपयोऽक्षरविन्यासास्तासां ज्ञेन तज्ज्ञानवता । **महेति** । महाभारतं प्रसिद्धम्, पुराणं पञ्चलक्षणम्, रामायणं रामचरित्रम्, तत्रानुरागिणा कृतस्नेहेन । **बृहदिति** । बृहत्कथा वासिष्ठा[1]दिकथा तत्र कुशलेन तद्रहस्यवेदिना । **द्यूतादीति** । द्यूतादयो दुरोदरप्रभृतयो याः कला विज्ञानैकदेशास्तासां कलापः समूहस्तस्य पारगेण पारदृश्वना । श्रुतं शास्त्रमात्रं तत्र रागिणाभ्यन्तरप्रीतिमता । **सुभाषितेति** । सुभाषितानि नाटकादीनि तत्र व्यसनिनासक्तचित्तेन प्रशान्तेन क्रोधनिर्मुक्तेन । केनेव । **सुरभीति** । सुरभिमासो वसन्तमासस्तस्य मारुतो वायुस्तेनेव । **सततेति** । सततं निरन्तरं दक्षिणा त्या[2]गो यस्य स तथा तेन । पक्षे सततं दक्षिणेन दक्षिणदिग्गामिना । **हिमेति** । हिमगिरिस्तुहिनाचलस्तस्य काननं वनं तेनेव । **अन्तरिति** । अन्तर्मध्ये सरलेनाकुटिलेन । पक्षे सरला वृक्षविशेषाः । **लक्ष्मणेति** । लक्ष्मणः सौमित्रिस्तेनेव । **रामेति** । रामस्य दाशरथेर्यदाराधनं समुपासनं तत्र निपुणेन कुशलेन । पक्षे रामाणां स्त्रीणामाराधनं सेवनम् । **शत्रुघ्नेति** । शत्रुघ्नो रामानुजस्तेनेवाविष्कृतः प्रकटीकृतो भरते नाट्यशास्त्रे परिचयः परिचितिर्येन स तथा । पक्षे भरतः शत्रुघ्नभ्राता । दिवसेनेव वासरेणेव । **मित्रमिति** । मित्रं सुहृत्तदनुवर्तिना तच्चित्ताराधकेनेत्यर्थः । पक्षे मित्रः सूर्यस्तदनुवर्तिना तदायत्तेनेत्यर्थः । **बौद्धेति** । बौद्धः सुगतस्तेनेव । **सर्वेति** । सर्वस्य वस्तुनो योऽस्तिवादः सर्वमस्तीति जल्पनं तत्र शूरेण धीरेण । कदाचिदपि नास्तीति न ब्रुवतेति भावः । पक्षे सर्वास्तिवादो बौद्धानां निकायभेदः स च शूरो यस्मिन् । अतः परं सिद्धान्ताभावात् । यद्वा सर्वेषां पदार्थानां सर्ववादिनां वा योऽस्तिवादोऽक्षणिकवादस्तत्र शूरेण तदवक्षेपके[3]ण । **सांख्येति** । सांख्याः कापिलास्तेषामागमः सिद्धान्तस्तेनेव । **प्रधानेति** । प्रधाना मुख्या ये पुरुषाः पुमांसस्तैरुपेतेन सहितेन । पक्षे प्रधानं सत्त्वादीनां साम्यावस्था, पुरुषश्चेतनारूप आत्मा । यदुक्तम्—'अजामेकां लोहितशुक्लकृष्णाम्' 'अजो ह्येकः' इत्यादि । प्रधानश्चासौ पुरुषश्च तेनोपेतेन । **जिनेति** । जिनः सर्वज्ञस्तस्य धर्मो वृषस्तेनेव । **जीवेति** । जीवे प्राणिन्यनुकम्पा यस्येत्यभ[4]ङ्गश्लेषः । पुनः प्रकारान्तरेण नगरीं वर्णयन्नाह—**सशैलेति** । सशैलेव सपर्वतेव । कैः । प्रासादैर्देवभूपसदनैः । अतिमहत्त्वाच्छैलसाम्यम् । **सशाखेति** । शाखानगरमुपपुरं तेन सह वर्तमानेव ।

---

**टिप्प०**—1 गुणाढ्यकृतः प्राकृतग्रन्थ इति व्याख्योचिता । 2 सततं दक्षिणः उदारचरितस्तेनेति सरलोऽर्थः । 3 सर्वेषां भूतभौतिकानां बाह्यानां चित्तचैत्तानाञ्चाभ्यन्तराणां पदार्थानाम् अस्तिवादे अस्तित्वभाषणे शूरेण, तदस्तित्वस्य युक्त्यादिना समर्थनान्नितान्तदक्षेण । तथाच शारीरकभाष्यम्—'बौद्धसिद्धान्ते एते त्रयो वादिनो भवन्ति । केचित् सर्वास्तित्ववादिनः, केचिद्विज्ञानास्तित्वमात्रवादिनः, अन्ये पुनः सर्वशून्यत्ववादिनः । तत्र ये सर्वास्तित्ववादिनो बाह्यमाभ्यन्तरं च वस्त्वभ्युपगच्छन्ति भूतं भौतिकं चित्तं चैत्तं चेति तांस्तावत् प्रति ब्रूमः ।' 4 इदं विशेषणमुभयत्रापि सममित्यर्थः ।

---

**पाठा०**—१ सर्वदा नास्तिवादशूरेण; सर्वास्तिवादशून्येन. २ पुरुषगुणोपेतेन विलासि. ३ सर्वजीवानुकम्पिना; सर्वभूतानुकम्पिना. ४ सशाखेव.

भवनैः, सकल्पवृक्षेव सत्पुरुषैः, दर्शितविश्वरूपेव चित्रभित्तिभिः, संध्येव पद्मरागानुरागिणी, अमराधिपमूर्तिरिव मखशतानलधूमपूता, पशुपतिलास्यक्रीडेव सुधाधवलाट्टहासा, वृद्धेव जातरूपक्षया, गरुडमूर्तिरिवाच्युतस्थितिरमणीया, प्रभातवेलेव प्रबुद्धसर्वलोका, शबरवसतिरिवावलम्बितचामरनागदन्तधवलगृहा, शेषतनुरिव सदासन्नवसुधाधरा, जलधिमथनवेलेव महाघोषपूरितदिगन्तरा, प्रस्तुताभिषेकभूमिरिव संनिहितकनकघटकसहस्रा, गौरीव महासिंहासनोचितमूर्तिः, अदितिरिव देवकुलसहस्रसेव्या, महावराहलीलेव दर्शितहि-

---

कैः । महाभवनैरुत्तुङ्गगृहैः । सद्मनामतिदैर्घ्येण शाखापुरोपमानम् । **सकल्पेति** । सह कल्पवृक्षेण पारिजातेन वर्तमानेव । कैः । सत्पुरुषैर्महापुरुषैः । दातृत्वातिशयसाम्यात्कल्पवृक्षसाम्यम् । **दर्शितेति** । दर्शितानि प्रकाशितानि विश्वरूपाणि समग्ररूपाणि यया सेव । काभिः । चित्रभित्तिभिरालेख्यसहितकुड्यैः । चित्रस्य सकलवस्तुप्रकटनसामर्थ्यात्तदुत्प्रेक्षा । संध्येव पितृप्रसूरिव । **पद्मेति** । पद्मरागो मणिस्तस्यानुरागो रक्तिमा यस्यां सा । अनेन रत्नबाहुल्यं दर्शितम् । पक्षे पद्मरागवदनुरागो यस्यामिति विग्रहः । **अमरेति** । अमराधिपः शतमखस्तस्य मूर्तिरिव मखानां शतं तस्य योऽनलो वह्निस्तस्य यो धूमो दहनकेतनस्तेन पूता पवित्रा । एतेन याज्ञिकानां बाहुल्यमाविष्कृतम् । पक्षे मखशतं शताश्वमेधाः । शेषं पूर्ववत् । **पश्विति** । पशुपतिरीश्वरस्तस्य लास्यक्रीडेव । नृत्यक्रीडेव । **सुधेति** । सुधा गृहधवलीकरणद्रव्यं तेन धवला विपर्यय एव अट्टहासो हास्यं यस्यां सा । पक्षे सुधामृतं तद्वद्धवलः शुभ्रोऽट्टहासो महाहासो यस्यामिति विग्रहः । वृद्धेव स्थविरेव । **जातेति** । जातरूपस्य सुवर्णस्य क्षया गृहाणि यस्यां सा । 'वसतिः शरणं क्षयः' इति कोशः । पक्षे जातो रूपस्य क्षयो नाशो यस्यामिति विग्रहः । **गरुडेति** । गरुडो गरुत्मांस्तस्य मूर्तिरिव । **अच्युतेति** । न च्युताच्युता सर्वदा स्थिरा या स्थितिर्मर्यादा तया रमणीया मनोहारिणी । पक्षेऽच्युतस्य कृष्णस्य या स्थितिरवस्थानं तेन रमणीया । **प्रभातेति** । प्रभातं प्रत्यूषस्तस्य वेलाम्भसो वृद्धिः (?) सेव । **प्रबुद्धेति** । प्रबुद्धा विशेषाभिज्ञाः सर्वलोकाः समग्रजना यस्यां सा । पक्षे प्रबुद्धाः सुप्तोत्थिताः । शेषं पूर्ववत् । **शबरेति** । शबरा भिल्लास्तेषां वसतिर्निवासस्थलं सेव । **अवलेति** । अवलम्बितान्यालम्बितानि चामराणि वालव्यजनानि येष्वेवंविधा नागदन्ता दन्तका येष्वेवंभूतानि धवलगृहाणि राजगृहाणि यस्यां सा । पक्षेऽवलम्बितानि चामराणि नागदन्ता गजदन्तास्तैर्धवलीकृतानि गृहाणि यस्यामिति विग्रहः । **शेषतनुरिति** । शेषो नागाधिपस्तस्य तनुरिव शरीरमिव । **सदेति** । सन्तः शोभना आसन्नाः समीपस्था वसुधाधराः पर्वता यस्यां सा । पक्षे सदा सर्वकालमासन्नां समीपवर्तिनीं वसुधां पृथ्वीं धारयति सा तथा । **जलधीति** । जलधिः समुद्रस्तस्य मथन आलोडने या वेला सेव । **महेति** । महाघोषा महत्य आभीरपल्लिकास्ताभिः पूरितानि चितानि दिगन्तराणि यस्यां सा । 'घोषस्त्वाभीरपल्लिका' इति कोशः । पक्षे महाघोषो महारवः । शेषं पूर्ववत् । **प्रस्त्विति** । प्रस्तुतः प्रारब्धो योऽभिषेकोऽभिषिञ्चनं तस्य या भूमिः पृथ्वी सेव । **संनिहितेति** । संनिहिता समीपस्थाः कनकघटकाः सौवर्णिकास्तेषां सहस्रं यस्यां सा तथा । एतेन जनालंकारबाहुल्यं सूचितम् । पक्षे संनिहिता आसन्नवर्तिनः कनकघटकसहस्राः सुवर्णकुम्भसहस्रा यस्यामिति विग्रहः । **गौरीवेति** । गौरी पार्वती सेव । **महेति** । महासिंहासनं महासुवर्णासनं तत्रोचिता योग्या मूर्तिर्यस्या इति विग्रहः । **अदीति** । अदितिर्देवमाता सेव देवकुलानां देवगृहाणां सहस्रं सेव्यं यस्यां सा, देवकुलसहस्रैः सेव्या सेवनीया । देवमातृत्वात् । **महावराहेति** । महावराह आदिवराहस्तस्य लीला क्रीडा सेव । **दर्शितेति** । दर्शितो दृग्विषयीकारितो हिरण्यस्य

---

**टिप्प०—1 सुधया धवलानाम् अट्टानामट्टालिकानां हासः प्रकाशो यस्यां सा, इत्यर्थः । 2 'कनकघटसहस्रा' इति पाठे तु अभिषेकभूमौ स्नानीयघटसहस्रम्, नगर्यां तु मङ्गलार्थं द्वारेषु स्थापितं घटसहस्रं बोध्यम् । 3 गौरीपक्षे—महासिंहरूपे आसने उचितेत्यर्थः ।**

---

**पाठा०**—१ रागारुणा. २ आलम्बित. ३ चारुचामर. ४ जलनिधि. ५ भूमी; वेलेव. ६ सदासंनिहित. ७ घट; कलश.

रण्याक्षपाता, कद्रूरिवानन्दितभुजंगलोका, हरिवंशकथेवानेकबालक्रीडारमणीया, प्रकटाङ्गनोपभोगाप्यखण्डितचरित्रा, रक्तवर्णापि सुधाधवला, अवलम्बितमुक्ताकलापापि विहारभूषणा, बहुप्रकृतिरपि स्थिरा, विजितामरलोकद्युतिरवन्तीषूज्जयिनी नाम नगरी ।

यस्यामुत्तुङ्गसौधोत्सङ्गसंगीतसङ्गिनीनामङ्गनानामतिमधुरेण गीतरवेणाकृष्यमाणाधोमुखरथतुरंगः पुरःपर्यस्तरथपताकापटः कृतमहाकालप्रणाम इव प्रतिदिनं लक्ष्यते गच्छन्दिवसकरः । यस्यां च संध्यारागारुणा इव सिन्दूरमणिकुट्टिमेषु, प्रारब्धकमलिनीपरिमण्डला इव

---

सुवर्णस्य येऽक्षाः पाशास्तेषां पातो यस्यां सा । पक्षे हिरण्यदैत्यस्याक्षाणामिन्द्रियाणां पातो नाशो यस्याम् । **कद्रूरिति** । कद्रूर्नागमाता सेव । **आनन्दितेति** । आनन्दितः प्रमोदं प्रापितो भुजंगलोको गणिकापतिजनो यस्यां सा । पक्षे भुजंगलोकः सर्पसमुदायः । **हरिवंशेति** । हरिवंशनाम्नो ग्रन्थस्य या कथा प्रबन्धः सेव । **अनेकेति** । अनेकेषां बालानां शिशूनां या क्रीडा खेलनं तया रमणीया मनोहरा । पक्षेऽनेका बह्व्यो बालनाम्नो नृपस्य क्रीडोद्यानगमनादिरूपा तया मनोहरा चित्ताकर्षिणी । प्रकारान्तरेण पुनस्तामेव वर्णयन्नाह—**प्रकटेति** । प्रकटं स्पष्टमङ्गनायाः स्त्रिय उपभोगो यस्यामेवंभूताप्यखण्डितचरित्रेति विरोधः । तत्परिहारस्तु प्रकटाङ्गनानामुपभोगस्ताम्बूलादिरित्यर्थादखण्डितं चरित्रं लोकप्रशंसारूपमस्यामित्यर्थाद्वा । **रक्तेति** । रक्तवर्णाप्यरुणवर्णापि सुधा पूर्वव्याख्यातवद्धवलेति विरोधः । तत्परिहारस्तु रक्ता अनुरक्ता वर्णा ब्राह्मणादयो यस्यामित्यर्थात् । **अवेति** । अवलम्बित आलम्बनीकृतो मुक्ताकलापो मुक्ताप्रालम्बो ययैवंभूतापि विगतत्रुटितो रतादौ यो हारः स एव भूषणमलंकृतिर्यस्यामिति विरोधः । तत्परिहारस्तु विहारा जैनप्रासादा इत्यर्थात् । 'विहारो जिनसद्मनि' इति कोशः । **बह्विति** । बह्वी प्रकृतिर्यस्यामेवंविधापि स्थिरेति विरोधः । तत्परिहारस्तु बह्वयः प्रकृतयः पौरलोकाः । **विजीति** । विशेषेण जिता अमरलोकस्य देवलोकस्य द्युतिः कान्तिर्यया सा । अवन्तीषु मालवेषु । अन्वयस्तु प्रागेवोक्तः ।

**यस्यामिति** । यस्याम् उज्जयिन्याम् । **उत्तुङ्गेति** । उत्तुङ्गमुच्चं सौधं धवलं गृहं तस्योत्सङ्ग उपरिप्रदेशस्तस्मिन्यत्संगीतं गीतनृत्यादि तत्र सङ्गिनीनां व्यासक्तानामङ्गनानां स्त्रीणामतिमधुरेणातिमिष्टेन गीतरवेण गानस्वरेणाकृष्यमाणा अधोमुखा अवाङ्मुखा रथस्य स्यन्दनस्य तुरंगा अश्वा यस्य सः । पुरोऽग्रे पर्यस्तः क्षिप्तो रथस्य पताकापटो वैजयन्तीपटो येनैवंभूतो गच्छन्व्रजन्दिवसकरः सूर्यः । आकृष्यमाणाधोमुखरथतुरगव्याजेन कृतो विहितो महाकालस्य ज्योतिर्लिङ्गात्मकशंकरस्य प्रणामो येनैवंभूत इव प्रतिदिनमहर्निशं लक्ष्यते दृश्यते । जनैरिति शेषः । **यस्यां चेति** । यस्यामुज्जयिन्यां रविगभस्तयः सूर्यकिरणाः । **सिन्दूरेति** । सिन्दूरमणयो मणिविशेषास्तेषां कुट्टिमेषु तदारुण्यप्रतिबिम्बात्संध्यारागेणारुणा इव । संलक्ष्यन्त इति क्रियायाः पूर्वतः परतो वा राजन्त इति क्रियायाः सर्वत्रानुषङ्गः । किरणेषु मरकतहरितप्रतिबिम्बादाह—**प्रारब्धेति** । प्रारब्धमाचरितं कमलिनीषु परिमण्डलं लुठनं यैस्ते तादृशा इव । मरकतवेदिकाश्मगर्भघटित-

---

**टिप्प०**—1 दर्शितो हिरण्याक्षस्य तदाख्यस्य दैत्यस्य पातो विनाशो यस्यामित्यर्थ उचितः । 2 विटजन इति सरलोऽर्थः । 3 यदुवंशीयानां बालानां नानाविधक्रीडाकथाभी रमणीयेति स्पष्टोऽर्थः । 4 दुश्चरित्रत्वेन लज्जासंकोचाद्यभावादभिव्यक्तः अङ्गनानामुपभोगो यस्यामेवं सत्यपि अखण्डितचरित्रत्वं विरुद्धम् । परिहारस्तु—प्रकटः सौरभोद्गारादिना अङ्गनानां ताम्बूलाद्युपभोग इति ।

---

**पाठा०**—१ आस्तीकतनुरिव उत्संगीतसंगिनीनाम्; उत्सङ्गसंगिनीनाम्. २ कृष्यमाणा. ४ पुरपर्यस्त. ५ प्रतिदिवसम्. ६ आलक्ष्यते. ७ भगवान्दिवस. ८ नीलकमलिनी. ९ परिमलिनी; परिमिलना; परिमलना; परिमला; परिमीलना.

मरकतवेदिकासु, गगनपर्यस्ता[1][2] इव वैडूर्यमणिभूमिषु, तिमिरपटलविघटनोद्यता इव कृष्णागुरुधूम[3]मण्डलेषु, अभिभूततारकापङ्क्तय इव मुक्ता[4]प्रालम्बेषु, विकचकमलचुम्बिन इव नितम्बिनीमुखेषु, प्रभातचन्द्रिकामध्यपतिता इव स्फटिक[5]भित्तिप्रभासु, गगनसिन्धुतरंगा[6]वलम्बिन इव सितपताकांशुकेषु, पल्लविता इव सूर्यकान्तोपलेषु, राहुमुखकुहरप्रविष्टा इवेन्द्रनीलवातायनविवरेषु विराजन्ते[1] रविगभस्तयः ।

यस्यां[7] चानुपजाततिमिरत्वादविघटितचक्रवाकमिथुना [8]व्यर्थीकृतसुरतप्रदीपाः संजातम-

---

पीठिकासु वैडूर्यमणिनैर्मल्यप्रतिबिम्बादाह—**गगनेति** । अधःप्रसृता अपि नैल्यसाम्याद्गगन आकाशे पर्यस्ता विस्तीर्णा इव दृश्यन्ते । वैडूर्यमणयो बालवायजानि तेषां भूमिषु । तन्मणिबद्धस्थलीष्वित्यर्थः । किरणेषु धूमरूपप्रतिबिम्बादाह—**तिमिरेति** । तिमिरपटलस्य ध्वान्तसमूहस्य यद्विघटनं भेदनं तत्रोद्यता इव कृतप्रयत्ना इव । केषु । कृष्णागुरुः काकतुण्डस्तस्य धूमस्तेषां मण्डलेषु पटलेषु । मुक्तानां स्वच्छताविशेषसंक्रमादाह—**अभिभूतेति** । अभिभूतास्तारकत्वेनानिर्धार्यमाणास्तारकाणां नक्षत्राणां पङ्क्त्यो लेखा यैस्तादृशा इव मुक्ताप्रालम्बेषु मुक्ताकलापेषु । मुखस्य विकचकमलसाम्यादाह—**विकचेति** । विकचानि विकस्वराणि यानि कमलानि तच्चुम्बिन इव नितम्बिनीमुखेषु प्रमदावदनेषु । अत्र सिन्दूरमरकतवैडूर्यधूमेषु तद्रूपविशेषातिशयो व्यज्यते । मुखेऽभङ्गुरगुणवत्त्वकमलापेक्षया कमलस्य भङ्गुरगुणवत्त्वात्स्फटिकरूपसंक्रमादाह—**प्रभातेति** । प्रभातस्य प्रत्यूषस्य या चन्द्रिका चन्द्रगोलिका तन्मध्यपतिता इव तदन्तःपातिन इव स्फटिकस्य चान्द्रोपलस्य भित्तयः कुड्यानि तासां प्रभासु कान्तिषु । उदये चन्द्रिकाया रक्तत्वात्, मध्ये च पाण्डुरत्वात्, प्रातस्तु स्फटिकसाम्यात्प्रभातपदम् । अत्रातिशयो व्यज्यते । तरंगसादृश्यात्सितपताकानां तत्संबन्धवशादाह—**गगनेति** । गगनसिन्धुः स्वर्धुनी तस्यास्तरंगाः कल्लोलास्तानवलम्बत इत्येवंशीला इव सितपताकांशुकेषूज्ज्वलवैजयन्तीपटेषु । पताकायां श्वेतातिशयो व्यज्यते । सूर्यकान्तेषु संक्रमवशादाह—**सूर्येति** । पल्लववदाचरन्तीति पल्लविता अङ्कुरितास्तादृशा इव सूर्यकान्ता एवोपलाः प्रस्तरास्तेषु । इन्द्रनीलसंपर्कवशादाह—**राह्विति** । राहुः सैंहिकेयस्तस्य मुखमिव कुहरं बिलं तत्र प्रविष्टास्तदन्तर्गता इवेन्द्रनीलमणीनां ये वातायना गवाक्षास्तेषां विवरेषु छिद्रेषु विराजन्ते । अन्वयस्तु प्रागेवोक्तः ।

**यस्यां चेति** । यस्यामुज्जयिन्यां रजन्यो रात्रय एवंभूताः सत्यो यान्ति । कीदृशाः । न विघटितं न विभिन्नं चक्रवाकानां कोकानां मिथुनं द्वन्द्वं याभिस्ताः । तत्र हेतुमाह—**अनुपजातेति** । अनुपजातं तिमिरं यस्यां तस्या भावस्तत्त्वं तस्मात् । **व्यर्थीकृतेति** । व्यर्थीकृता निष्प्रयोजनीकृताः सुरतप्रदीपा रतप्रयोजका

---

**टिप्प०**—1 रविगभस्तयः सिन्दूरमणि( प्रवाल )कुट्टिमेषु ( पतिताः सन्तः ) सन्ध्यारागारुणा इव विराजन्ते । मरकत( हरितमणि )वेदिकासु ( पतिताः ) प्रारब्धं नीलकमलिनीषु परिमण्डलं मण्डलाकारेणाऽवलुण्ठनं यैस्ते इव विराजन्ते इत्यादिः तत्तदाधारसंबन्धाद्रविकिरणेषु नानाविधगुणक्रियादेरुत्प्रेक्षा । एवं सर्ववाक्येषु व्याख्याऽनुसंधेया । 2 भूषणप्रभाभिरन्धकाराभावाद्दिवस एवायमिति चक्रवाकानां भ्रमः । तथा चात्र भ्रान्तिमानलंकारो व्यज्यते, ( वाच्यत्वाभावात् ) ।

---

पाठा०—१ गगनतल. २ प्रसृता. ३ धूप. ४ मुक्ताफल. ५ स्फटिकमणि. ६ तरंगसङ्गिनः. ७ यस्यामनु. ८ प्रकटीकृत.

दनानलदिग्दाहा इव यान्ति कामिनीनां भूषणप्रभाभिर्बालातपपिञ्जरा इव[1] रजन्यः। यां च संनिहितविषमलोचनामनवरतमतिमधुरो रतिप्रलाप इव[2] प्रसर्पन्मुखरीकरोति मकरकेतुदाहहेतुभूतो भवनकुल[3]हंसकुल[4]कोलाहलः। यस्यां च निशि निशि पवन[5]विलोलैर्दुकूलपल्लवैरुल्लसद्भिर्मालवीमुखकमलकान्तिलज्जितस्येन्दोः कलङ्कमिवापनयन्तो दूरप्रसारित[6]ध्वजभुजाः प्रासादा लक्ष्यन्ते। यस्यां[7] च सौधशिखर[8]शायिनीनां पश्यन्मुखानि पुरसुन्दरीणां मदनपरवश इव पतितः प्रतिमाच्छलेन लुठति बहलचन्दनजलसेकशिशिरेषु[9] मणिकुट्टिमेषु मृगलाञ्छनः।

यस्यां च निशा[10]वसानप्रबुद्धस्य तारतारमपि[11] पठतः पञ्जरभाजः शुकसारिकासमूहस्या[12]-

---

गृहमणयो यस्यां सा। अनुपजाततिमिरत्वादेवेति भावः। तत्रापि हेतुमाह—**कामिनीति**। कामिनीनां योषितां भूषणान्याभरणानि तेषां प्रभाभिः कान्तिभिः। अत्र भूषणप्रभालक्षणेन हेतुनानुपजाततिमिरत्वम्। तेन चाविघटितचक्रवाकमिथुनत्वं व्यर्थीकृतदीपकत्वं चेति भावः। प्रभाभिः कीदृशा इव। **संजातेति**। संजातः समुत्पन्नो यो मदनानलो मदनवह्निः स एव दिग्दाहो यासु तादृशा इव बालातपो नवीनसूर्यातपस्तेन पिञ्जराः श्वेतरक्तास्तादृशा इव। **यां चेति**। यां नगरीं भवनं गृहं तस्य कुलं समुदायस्तत्र हंसकुलानि तेषां कोलाहलो मुखरीकरोति वाचालीकरोति। 'अभूततद्भावे च्विः'। कीदृशः। अतिमधुरोऽतिमिष्टः अनवरतं प्रसर्पन्प्रसरन्। कीदृश इव। **रतीति**। रतिर्मदनस्त्री तस्याः प्रलाप इव विलाप इव। **मकरेति**। मकरकेतुना मदनेन दाहस्तस्य हेतुभूतः। अन्यत्र मकरकेतोर्दाहो हेतुभूतोऽस्य रतिप्रलापस्येति विग्रहः। रतिप्रलापसाम्यं कोलाहले वक्तुमाह—**संनिहितेति**। संनिहितः समीपस्थो विषमलोचनः शंभुर्यस्यां सा। **यस्यां चेति**। यस्यां नगर्यां प्रासादा आवासा ईदृशा लक्ष्यन्त इत्यन्वयः। तान्विशिनष्टि—**दूरेति**। दूरमूर्ध्वं प्रसारिता विसारिता ध्वजा वैजयन्त्य एव भुजा येषां ते तथा। किं कुर्वन्त इव। इन्दोश्चन्द्रस्य कलङ्कं मालिन्यमपनयन्त इव दूरीकुर्वन्त इव। चन्द्रं विशिनष्टि—**मालवीति**। मालव्यः मालवदेशोद्भवाः तासां मुखकमलानि तेषां कान्तिस्तया लज्जितस्य त्रपितस्य। तत्करणे कारणं दर्शयन्नाह—**निशि निशीति**। निशि निशि प्रतिनिशमुल्लसद्भिः शोभमानैः पवनेन वायुना विलोलैश्चपलैर्दुकूलपल्लवैर्वस्त्राञ्चलैः। **यस्यां चेति**। यस्यां नगर्यां मृगलाञ्छनश्चन्द्रो मणिकुट्टिमेषु प्रतिमाच्छलेन प्रतिबिम्बमिषेण लुठति प्रसरति। कीदृशः। मदनेन कंदर्पेण परवशः परायत्त इव। हेतुमाह—किं कुर्वन्। पश्यन्विलोकयन्। कानि। सौधशिखरशायिनीनां गृहप्रान्तस्थायिनीनां पुरसुन्दरीणां नगरनारीणां मुखानि वदनानि। कीदृशेषु मणिकुट्टिमेषु। **बहलेति**। बहलं यच्चन्दनजलं मलयजद्रवमिश्रिताम्भस्तेन सेकः सिञ्चनं तेन शिशिरेषु शीतलेषु। अत एव पतित इति विशेषणं शिशिरवाञ्छकत्वात्कामार्तस्येति भावः।

**यस्यां चेति**। प्रभाते प्रत्यूषे मङ्गले नैमित्तिका गीतयो व्यर्थीभवन्ति निष्फलीभवन्ति। व्यर्थीभवने हेतुद्वयं प्रदर्शयन्नाह—**शुकेति**। शुकः कीरः, सारिका पीतपादा, तयोः समूहः संघातस्तस्य। अभिभूतानि

---

**टिप्प०—1 अत्र चक्रवाकानां विघटनसंबन्धेऽपि तदसंबन्धात्, प्रदीपानां व्यर्थीकरणाऽसंबन्धेपि तत्संबन्धोक्तेरतिशयोक्तिद्वयम्। संजातदिग्दाहा इव पिञ्जरा इव चेत्युत्प्रेक्षाद्वयम्। एतेषामलंकाराणामेकस्मिन्वाक्ये निरपेक्षतयाऽवस्थानात्संसृष्टिः। 2 संनिहितविषमलोचना ( पुरी ), अत एव तत्कर्तृकमकरकेतुकर्मकदाहकारणात् रतेः प्रलापः ( विलापः ) इव हंसकोलाहलो यां पुरीं मुखरयति। वस्तुतस्तु—मकरकेतुना यो दाहः ( कामकर्तृको यो लोकानां संतापः हंसरवस्योद्दीपकत्वात् ) तस्य हेतुभूतः हंसकोलाहलो यां मुखरीकरोति। इत्याशयः।**

---

**पाठा०—**१ पिञ्जरत्वं रजन्यः. २ इव प्रतिवासरं प्रसर्पन्. ३ कल. ४ हंसकोलाहलः. ५ पवनवश. ६ ऊर्ध्वध्वज. ७ यस्यां सौध. ८ शिखरोत्सङ्ग. ९ शिशिरेषु मृग. १० निशावसाने. ११ तारतरमतिपठतः. १२ रवेणाभिभूता गृहसारविरुतेन.

भिभूतगृहसारसस्वरामृतेन विस्तारिणा विलासिनीभूषणरवेणाविभाव्यमाना व्यर्थीभवन्ति प्रभातमङ्गलगीतयः । यस्यां चानिवृत्तिर्मणिप्रदीपानाम्, अन्तस्तरलता हारा-णाम्, अस्थितिः संगीतमुरजध्वनीनाम्, द्वन्द्ववियोगश्चक्रनाम्नाम्, वर्णपरीक्षा कन-कानाम्, अस्थिरत्वं ध्वजानाम्, मित्रद्वेषः कुमुदानाम्, कोशगुप्तिरसीनाम् । किं बहुना । यस्यां सुरासुरचूडामणिमरीचिचुम्बितचरणनखमयूखः, निशितशूलदारितान्धकमहा-

---

तिरस्कृतानि गृहसारसानि येन । सारसानीत्यत्र लक्षणया सारसस्वरस्तादृशेन स्वरामृतेन । **विलासिनीति ।** विलासिन्यः स्त्रियस्तासां भूषणरवेणाभरणनिनादेन विस्तारिणा प्रसरणशीलेनाविभाव्यमानाः पराभूयमानाः । अथ शुकसारिकासमूहं विशिनष्टि—**निशेति ।** निशाया रजन्या अवसाने प्रान्ते प्रबुद्धस्य जागृतस्य । **तारेति ।** तारतारमप्युच्चैस्तरमपि पठतः पठनं कुर्वतः । **पञ्जरेति ।** पञ्जरं भजतीति तथा तस्य । पञ्जरस्था-यिन इत्यर्थः । **यस्यां चेति ।** पूर्ववत् । अनिवृत्तिरनिर्वाणता मणिप्रदीपानाम् । न तु लोकानामनिवृत्तिरनु-परमः । 'निवृत्तिः स्यादुपरमे' इति कोशः । क्वचित् 'अनिर्वृतिः' इति पाठः । तत्र निर्वृतिः सुखम् । शेषं पूर्ववत् । **अन्तरिति ।** अन्तर्मध्ये तरलो मध्यमणिस्तस्य भावस्तस्य । हाराणां मुक्ताप्रालम्बानाम् । 'नायकस्तरलः' इति कोशः । न तु लोकानामन्तश्चित्ते तरलता चाञ्चल्यम् । 'तरलं कम्पनं कम्प्रम्' इति कोशः । **अस्थितिरिति ।** अस्थितिस्तालल‌यादिष्वनवस्थानं संगीतमुरजध्वनीनां प्रेक्षणार्थप्रयुक्तगीतनृत्य-वाद्यमृदङ्गशब्दानाम् । न तु लोकानामस्थितिरमर्यादा । **द्वन्द्ववियोग इति ।** द्वन्द्वस्य स्त्रीपुरुषरूपस्य वियोगो विघटनं चक्रनाम्नां द्वन्द्वचराणाम् । न तु लोकानां द्वन्द्वेन युद्धेन वियोगः स्त्रीपुरुषविश्लेषः । **वर्ण इति ।** वर्णो वर्णिका तस्याः परीक्षा परीक्षणं कनकानां सुवर्णानाम् । न तु लोकानां वर्णा ब्राह्मणादयस्तेषां परीक्षा वर्णसांकर्याभावात् । **अस्थिरत्वमिति ।** अस्थिरत्वं चञ्चलत्वं ध्वजानां केतूनाम् । न तु लोकानां चाञ्चल्यम् । **मित्रद्वेष इति ।** मित्रः सूर्यस्तेन सह द्वेषोऽप्रीतिः कुमुदानां कैरवाणाम् । चन्द्रविकासि-त्वात् । न तु लोकानां मित्रेण सुहृदा द्वेषः । **कोश इति ।** कोशः प्रतीकार (?) स्तत्र गुप्तिर्गोपनमसीनां खड्गानाम् । न तु लोकानां कोशस्य भाण्डारस्य गुप्तिः । **किं बहुनेति ।** किं बहुजल्पितेनेत्यर्थः । यस्यां नगर्यां महाकाल इत्यभिधानं यस्य स देवः स्वयं साक्षाद्वसति । तं विशिनष्टि—**सुरेति ।** सुरासुराणां यश्चूडामणिः शिरोरत्नं तस्य मरीचयः किरणास्तैश्चुम्बिताः स्पृष्टाश्चरणनखानां मयूखा यस्य सः । **निशितेति ।** निशितं

---

**टिप्प०—**1 निशावसाने जागरितस्य तारं पठतश्च पञ्जरस्थशुकसारिकासमूहस्य प्रभातमङ्गलगीतयः (अर्थात् शुकसारिकाभिर्गीताः प्राभातिकगीतयः) गृहसारसमधुरस्वराभिभाविना विलासिनीभूषणझण-त्कारेण अज्ञायमानाः सत्यः व्यर्थीभवन्ति, इत्याशयः । टीकाकारस्तु विचित्रं व्याख्याति येन पौरकृतप्रा-भातिकगीतीनां भ्रमो भवति । 2 'अन्तस्तरलता हारलतानाम्' इत्येव ग्रन्थोचितान्यक्षराणि । अन्तस्त-रलो मध्यमणिर्येषां तद्भावः अन्तस्तरलता (मध्यमणिशालिता) इति च व्याख्या । 3 संगीतस्य मुरजस्तस्य च ध्वनीनां अस्थितिः इतस्ततः प्रसरणशीलत्वम्, इत्यर्थः (अस्थितिः तृतीयक्षणे अविद्य-मानता वा) । ताल-लयादिषु अनवस्थानम् (अर्थात् तालल‌याद्युल्लङ्घनम्) तु गीतवाद्यानां भ्रष्ट-तैव । 4 वर्णः (रूपम् 'रङ्गः') तस्य परीक्षा (वह्नितापनिकषकषणादिद्वारा) । 5 प्रसिद्धः, चर्ममयमावरणगृहम् ।

---

**पाठा०—**१ रवेण च. २ अभिभाव्य. ३ दीपानाम्. ४ तरलता. ५ हारलतानाम्. ६ चक्रनाम्नः; चक्रवाक-नाम्नाम्. ७ यस्यां च. ८ मरीचिचय. ९ त्रिशूल.

सुरः, गौरीनूपुरकोटिघृष्टशेखर[1]चन्द्रशकलः, त्रिपुरभस्मरजःकृताङ्गरागः, मकरध्वजध्वंस-विधुरया रत्या प्रसादयन्त्या प्रसारितकर[2]युगविगलित[3]वलयनिकरार्चितचरणः, प्रलयानलशि-खाकलापकपिलजटाभारभ्रान्तसुर[4]सिन्धुरन्ध[5]कारातिर्भगवान्, उत्सृष्टकैलासवासप्रीतिर्महा-कालाभिधानः स्वयं [6]वसति ।

तस्यां चैवंविधायां नगर्यां [7]नलनहुषययातिधुन्धुमारभरतभगीरथ[8]दशरथप्रतिमः, भुजब[9]-लार्जितभूमण्डलः, फलितशक्तित्रयः, मतिमान्, उत्साहसंपन्नः, नीतिशास्त्राखिन्नबुद्धिः, अधीतधर्मशास्त्रः, तृतीय इव तेजसा कान्त्या च सूर्याचन्द्रमसोः, अनेकसप्ततन्तुपूतमूर्तिः, उपशमितसकलजगदुपप्लवः, विहाय कमलवनान्यवगणय्य नारायणवक्षःस्थलवसतिसुखमु-

---

तीक्ष्णं यच्छूलं शस्त्रविशेषस्तेन दारितो भिन्नोऽन्धकमहासुरो येन स तथा । **गौरीति** । गौरी मानवती तस्याः सान्त्वनावसरे तन्नूपुरस्य या कोटिस्तस्य घृष्टं घर्षणां प्रापितं शेखरेऽवतंसे चन्द्रशकलं यस्य स तथा । **त्रिपुरेति** । त्रिपुरस्य त्रिपुरदैत्यस्य यद्भस्मरजस्तेन कृतो विहितोऽङ्गरागो भस्मोद्धूलनं येन सः । तं स्वय-मेव भस्मीकृत्य तेनाङ्गरागो विहित इति भावः । **मकरेति** । मकरध्वजस्य कंदर्पस्य यो ध्वंसो दाहस्तेन विधु-रया दुःखितया रत्या मदनस्त्रिया प्रसादयन्त्या प्रसन्नीकुर्वत्या ईश्वरमिति शेषः । तया प्रसारितं विस्तारितं यत्करयुगं हस्तयुगं तस्माद्विगलितानि निपतितानि यानि वलयानि कङ्कणानि तेषां निकरः समूहस्तेनार्चितौ पूजितौ चरणौ पादौ यस्य सः । **प्रलयेति** । प्रलयसंबन्ध्यनलो वह्निस्तस्य शिखा ज्वालास्तासां कलापः समू-हस्तेन कपिलः पिङ्गलो यो जटाभारः जटासमूहस्तेन[2] भ्रान्ता त्रस्ता सुरसिन्धुर्गङ्गा यस्मात्स तथा । अन्धकारा-तिरन्धकनाम्नो दैत्यस्यारातिः शत्रुर्भगवान्माहात्म्यवान् । **उत्सृष्टेति** । उत्सृष्टा त्यक्ता कैलासवासप्रीतिः रजताद्रिवस्थानस्नेहो येन सः ।

**तस्यां चेति** । तस्यां नगर्यां उज्जयिन्याम् । **एवमिति** । एवंविधायां पूर्वोक्तप्रकारेण व्यावर्णित-स्वरूपायां तारापीडो नाम राजाभूदिति दूरेणान्वयः । अथ च तमेव विशिनष्टि—तत्र प्रथमान्तानि सर्वा-ण्यपि राजविशेषणानि । नलो नैषधः; नहुषो नृपविशेषो योऽगस्तिशापादजगरो जातः, ययातिर्यदु-पिता, धुन्धुमारः कुवलाश्वः, भरतो दौष्यन्तिः, भगीरथः सगरपौत्रः, दशरथो रामपिता, एतेषां प्रतिमः सदृशः । 'प्रख्यः प्रकारः प्रतिमः' इति कोशः । **भुजेति** । भुजबलेन बाहुबलेनार्जितमुपार्जितं भूमण्डलं पृथ्वीमण्डलं येन स तथा । फलितं संजातफलं शक्तित्रयं यस्य स तथा । प्रभुशक्तिर्मन्त्रशक्तिरुत्साह-शक्तिश्चेति शक्तित्रयम् । मतिमान्बुद्धिमान् । उत्साहः प्रगल्भता तेन संपन्नः सहितः । **नीतीति** । नीति-शास्त्रे व्यवहारग्रन्थेऽखिन्ना अरीणा[3] बुद्धिः प्रतिभा यस्य स तथा । **धर्म इति** । अधीतं पठितं धर्मशास्त्रं येन स तथा । **सूर्येति** । सूर्याचन्द्रमसोः शशिभास्करयोस्तृतीय इव । 'देवताद्वन्द्वे पूर्वपदस्य दीर्घः' इति दीर्घः । केन । तेजसा कान्त्या च । तत्र तेजः प्रकाशः कान्तिश्चन्द्रिका । राज्ञि तेजः प्रतापः, कान्तिः शोभा देहदीप्तिर्वा । **अनेकेति** । अनेके ये सप्ततन्तवो यज्ञास्तैः पूता पवित्रा मूर्तिः शरीरं यस्य स तथा । प्रयाजादीनि षडङ्गानि सप्तमः प्रधानमिति सप्ततन्तवः । **उपशमितेति** । उपश-मितः शान्तिं प्रापितः सकलजगतः समग्रविष्टपस्योपप्लव उपद्रवो येन स तथा । प्रकारान्तरेण तमेव विशेषयन्नाह—**विहायेति** । कमलवनानि नलिनखण्डानि विहाय त्यक्त्वा । नारायणस्य कृष्णस्य यद्वक्षः-

---

**टिप्प०**—1 तेन घृष्टं शेखर( 'शिरोभूषण )भूतं चन्द्रशकलं यस्येति स्पष्टोऽर्थः । 2 तस्मिन् भ्रान्ता घूर्णमाना सुरसिन्धुर्यस्य स इति स्फुटोऽर्थः । 3 अश्रान्तेत्यर्थः ।

---

**पाठा०**—१ चन्द्रशकलशेखरः. २ करयुगल. ३ वलयततिकरम्बित. ४ अमरसिन्धु. ५ अन्धकारिः. ६ निवसति; प्रतिवसति, ७ नृगनल; नृग. ८ दशरथजनमेजयार्जुन. ९ उपार्जित.

त्फुल्लारविन्दहस्तया शूरसमागमव्यसनिन्या[1] निर्व्याजमालिङ्गितो लक्ष्म्या, महामुनिजनसंसेवितस्य मधुसूदनचरण इव सुरसरित्प्रवाहस्य प्रभवः सत्यस्य, शिशिरस्यापि रिपुजनसंतापकारिणः स्थिरस्यापि नित्यं[2] भ्रमतो निर्मलस्यापि मलिनीकृताराातिवनितामुखकमलद्युतेरतिधवलस्यापि सर्वजनरागकारिणः सुधासूतेरिव सागर[3] उद्भवो यशसः, पाताल[4] इवाश्रितो निजपक्षक्षति[5]भीतैः क्षितिभृत्कुटिलैः[6], ग्रहगण इव बुधानुगतः, मकरध्वज इवोत्सन्नविग्रहः,

---

स्थलं भुजान्तरस्थलं तत्र या वसतिर्निवासस्तत्सुखं सातं तदवगण्यावगणनां कृत्वा । **उदिति ।** उत्फुल्लं विकसितं यदरविन्दं कमलं तद्वद्धस्तौ यस्याः सा तया । **शूरेति ।** शूरेण सुभटेन यः समागमः संबन्धस्तस्मिन्व्यसनमासक्तिर्विद्यते यस्याः सा तया लक्ष्म्या श्रिया निर्व्याजं निष्कपटमालिङ्गित उपगूहितः । सत्यस्य प्रभव उत्पत्तिस्थानम् । तत्रोपमानमाह—**महेति ।** महामुनिजना वसिष्ठादयस्तैः संसेवितस्य पर्युपासितस्य सत्यस्य प्रभवः । कस्य क इव । सुरसरित्प्रवाहस्य स्वर्धुनीरयस्य मधुसूदनचरण इव हरिपाद इव । यथा हरेः पादः स्वर्धुन्या उत्पत्तिस्थानं तथायमपि सत्यस्येति भावः । विरोधोक्त्या तमेव विशेषयन्नाह—**यश इति ।** यशसः श्लोकस्योद्भव[1] उत्पत्तिस्थानम् । तत्रोपमानमाह—**सुधासूतेरिति ।** सुधासूतेश्चन्द्रस्य सागरः समुद्र इव । 'अब्धिजश्चन्द्रः' इति कविरूढिः । अथ च चन्द्रयशसोः साम्यं प्रदर्शयंस्तद्विशेषणान्याह—**शिशिरेति ।** शिशिरस्यापि शीतलस्यापि रिपुजना वैरिजना विरहिजना वा तेषां संतापो दाहस्तत्कारिण इति विरोधः । तत्परिहारस्तु संतापश्चित्तोद्वेग इत्यर्थात् । **स्थिरेति ।** स्थिरस्यापि निश्चलस्यापि नित्यं सर्वकालं भ्रमतो गच्छतः । 'सर्वदिग्गामुकं यशः' इति कविरूढेर्विरोधः । तत्परिहारस्त्वाकल्पान्तस्थायित्वात्स्थिरो[2] नित्य इत्यर्थात् । **निर्मलेति ।** निर्मलस्यापि गतमलस्यापि मलिनीकृता कश्मलीकृता अरातिवनितामुखान्येव कमलानि मुखवत्कमलानि वा तेषां द्युतिर्येनेति विरोधः । तत्परिहारस्तु निर्मलस्य स्वच्छस्येत्यर्थात् । अत्र यशःशब्दस्य नित्यनपुंसकत्वात्तद्विशेषणे द्युतिपदे न नुमागमः[3] । 'दधिदूर्वादौ मङ्गले इतिवद्बहुव्रीहिः । **अतीति ।** अतिधवलस्याप्यतिशुक्लस्यापि सर्वजनानां समग्रलोकानां रागकारिण इति विरोधः । तत्परिहारस्तु रागः स्नेहस्तत्कारिण इत्यर्थात् । अत्र सर्वत्रापिशब्दो विरोधद्योतको विशेषोक्तिर्वा । **पातालेति ।** पातालं रसातलं तद्वदिव । उभयोः साम्यं प्रदर्शयन्नाह—**आश्रित इति ।** क्षितिभृतो राजानः पर्वताश्च तेषु कुटिलैः[4] वक्रास्तैराश्रित आसेवितः । उभयं विशिनष्टि—**निजेति ।** निजा आत्मीया ये पक्षाः स्वजना वाजाश्च[5] तेषां क्षितिः क्षयस्तया भीतास्त्रस्तास्तैः । नृपाः स्वराज्यक्षयभीत्या तमाश्रिताः । पर्वतास्तु पक्षक्षयभीता रसातलमिति भावः । **ग्रह इति ।** ग्रहा नक्षत्राणि तेषां गणः समूहस्तद्वदिव । सर्वत्रैकविशेषणेन विशेषयन्नाह—**बुधेति ।** बुधाः पण्डितास्तैरनुगतः सहितः । तदुक्तम्—'व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह' इति । पक्षे बुधः सौम्यः । **मकरेति ।** मकरध्वजः कन्दर्पस्तद्वदिव । **उत्सन्नेति ।** उत्सन्न उच्छेदं प्राप्तो विग्रहः शरीरं यस्य

---

**टिप्प०—1 कीर्तेरित्यर्थः । 2 स्थिरं नित्यमिति बोध्यम् । 3 प्रलापोऽयं टीकाकृतः । नित्यनपुंसकस्य यशसो विशेषणीभूतस्यापि 'मलिनी०···द्युतेः' इति पदस्य भाषितपुंस्कतया पुंवद्भावान्न नुम्, अपि तु घित्वेन गुण इति तस्य तात्पर्यम् । 4 'क्षितिभृत्कुलैः' इत्येव ग्रन्थोचितः पाठः । क्षितिभृतां राज्ञां पर्वतानां च कुलैरिति च तदर्थः । कुटिलैस्तु नाश्रयितुं शक्यते, इति तदाश्रयणवर्णनं न स्वरसाय । 5 गरुतः 'पंख' इति हिन्दी ।**

---

**पाठा०—**१ एकव्यसनिन्या. २ अनवरतम्; अविरतम्. ३ जलनिधिः. ४ पातालवत्. ५ क्षति. ६ क्षितिभृतां कुलैः; क्षितिभृत्कुलैः; क्षितिभृतः कुलैः.

दशरथ इव सुमित्रोपेतः, पशुपतिरिव महासेनानुयातः[1], भुजगराज इव क्षमाभरगुरुः, नर्मदाप्रवाह इव महावंशप्रभवः, अवतार इव धर्मस्य, प्रतिनिधिरिव पुरुषोत्तमस्य, परिहृ[2]-तप्रजापीडो राजा तारापीडोऽभूत्[3]।

यस्तमःप्रसरमलिनवपुषा पापबहुलेन कलिकालेन चालितमामूलतो धर्मं दशाननेनेव कैलासं[4] पशुपतिरिवावष्टभ्य पुनरपि स्थिरीचक्रे[5]। यं च रतिप्रलापजनित[6]दयार्द्र-हृदयहरनिर्मितमपरं[7] मकरकेतुममंस्त लोकः। यं च जलनिधितरङ्गधौतमेखलात्पत्रा[8]न्तर्विचारितारागणद्विगुणिततटतरुकुसुमप्रकराद्ुदयदिन्दुबिम्बविगलद्[9]मृतबिन्द्वासारार्द्र[10]चन्द-

स तथा। पक्षे विग्रहो युद्धादिकलहः। दशरथ इव दशरथो रामपिता तद्वदिव। **सुमित्रेति**। सुष्ठु शोभनं यन्मित्रं सुहृत्तेनोपेतः सहितः। पक्षे सुमित्रा लक्ष्मणजननी। **पश्विति**। पशुपतिरीश्वरस्तद्वदिव। **महेति**। महती या सेना सैन्यं तयानुयातोऽनुगतः। पक्षे महासेनः षण्मुखः। **भुजगेति**। भुजगराजोऽनन्तस्तद्वदिव। **क्षमेति**। क्षमा क्षान्तिस्तस्या भरो भारस्तेन गुरुर्गरीयान्। पक्षे क्षमा पृथ्वी। शेषेण स्वपृष्ठे वसुधा धृतेति लोकरूढिः। **नर्मदेति**। नर्मदा मेकलाद्रिजा तस्याः प्रवाहो रयस्तद्वदिव। **महेति**। महावंशो महत्कुलं तस्मात्प्रभव उत्पत्तिर्यस्य स तथा। पक्षे महावंशो महावेणुः। वंशमूलान्नर्मदाप्रवाहः प्रादुर्भूत इति लोकोक्तिः। अवतार इव धर्मस्य श्रेयसोऽवतार इव जन्मान्तरमिव। **प्रतीति**। पुरुषोत्तमस्य विष्णोः प्रतिनिधिः प्रतिभास इव। **परीति**। परि सामस्त्येन हृता ध्वस्ता प्रजापीडा प्रकृतिपीडा येन स तथा। अन्वयस्तु प्रागेवोक्तः।

**स य इति**। यः तारापीडः पशुपतिरिव कलिकालेन दशाननेनेवा मूलतः मूलं बुध्नं आ मर्यादीकृत्य चालितं कम्पितं धर्ममवष्टभ्यावष्टम्भं दत्त्वा कैलासमिव पुनरपि स्थिरीचक्रे दृढीचकार। अथ कलिकालविशेषणानि—**तम इति**। तमोऽज्ञानं तस्य प्रसरः प्रसरणं तेन मलिनं कश्मलं वपुः शरीरं यस्य स तथा तेन। **पापेति**। पापेनैनसा बहुलेन दृढेन। 'बहुलं दृढम्' इति कोशः। **यं चेति**। यं तारापीडं लोको जनोऽपरं भिन्नं मकरकेतुं मदनममंस्ताभिमतवान्। तमेव विशिनष्टि—**रतीति**। रतेः प्रलापेन परिदेवनेन जनितोत्पादिता या दया करुणा तयार्द्रं स्विन्नं हृदयं चेतो यस्यैवंभूतो यो हरः शंभुस्तेन निर्मितं विहितम्। **यं चेति**। यं राजानम्। **आशैलेति**। उदयनाम्न आ शैलात् उदयाचलं शैलं आ मर्यादीकृत्य। **आसेत्विति**। आ सेतुबन्धात् सेतुबन्धं आ मर्यादीकृत्य। **आ मन्दरादिति**। मन्दरं मेरुमा मर्यादीकृत्य। **आगन्धमादनादिति**। गन्धमादनं पर्वतमा मर्यादीकृत्य। पूर्वदक्षिणपश्चिमोत्तरमवधीकृत्येति भावः। अवनिपा राजानः प्रणेमुर्नमश्चक्रुरित्यन्वयः। अथोदयाद्रिं विशेषयन्नाह—**जलेति**। जलनिधिः समुद्रस्तस्य तरंगाः कल्लोलास्तैर्धौता क्षालिता मेखला मध्यभागो यस्य स तथा तस्मात्। **पत्रेति**। पत्राणां पर्णानामन्तर्मध्ये विचारी गमनशीलो यस्तारागणो नक्षत्रसमूहस्तेन द्विगुणितोऽधिकीभूतस्तटतरूणां भृगुवृक्षाणां कुसुमप्रकरः पुष्पसमूहो यस्मिन्स तथा तस्मात्। **उद्यदिति**। उद्यदुदयं प्राप्नुवद्यदिन्दुबिम्बं तस्माद्विगलन्तः स्रवन्तो येऽमृतबिन्दवः पीयूषविप्रुषस्तल्लक्षणो य आसारो मेघजं

**टिप्प०—1 मेकलाचलस्थवेणुनिकरान्नर्मदाप्रवाहः पूर्वमुद्गत इति प्रसिद्धिरित्याशयः। 2 पापमेव बहुलम् अधिकं यस्मिन् ( आहिताग्न्यादि ) इति तु स्पष्टोऽर्थः।**

पाठा०—१ अनुगतः. २ परिहृत. ३ नामाभूत्; अभवत्. ४ कैलासमिव. ५ चकार. ६ उपजनित. ७ अपरमिव. ८ पत्रान्तर. ९ गलत्. १० बिन्दुदुर्दिनार्द्र.

नादशिशिरकररथतुरगखुरशिखरोल्लेखखण्डितोल्लसल्लविङ्गपल्लवादैरावतकरलूनसल्लकीकिसलयदलादाशैलादुदयनाम्नः, कपिबलविलुप्तविरललवलीलताफलादुदधिविनिर्गतजलदेवतावन्द्यमानराघवपादादचलपातदलितशङ्खकुलशकलतारकितशिलातलात् नलकरतलाकलितशैलसहस्रसंभूतादासेतुबन्धात्, अच्छनिर्झरजलधौततारकासार्थादमृतमथनोद्यतवैकुण्ठकेयूरपत्रमकरकोटिकषणमसृणितग्रावणः सुरासुरहेलावलयितवासुकिसमाकर्षणप्रारम्भचलितचरणभरदलितनितम्बकटकादमृतसीकरतिक्तसानोरामन्दरात्, नरनारायणचरणमुद्राङ्कितबदरिकाश्रम-

पयस्तेनार्द्रा अशुष्काश्चन्दना मलयजा यस्मिन्स तथा तस्मात् । **अशिशिरेति** । अशिशिरकरः सूर्यस्तस्य ये रथतुरगाः स्यन्दनहयास्तेषां खुराः शफास्तेषां शिखरेण प्रान्तेन य उल्लेखः संबन्धस्तेन खण्डिता द्विधाकृता इव उल्लसन्तो लविङ्गपल्लवा यस्मिन्स तथा तस्मात् । **ऐरावतेति** । ऐरावतो हस्तिमल्लस्तस्य यः करः शुण्डा तेन लूनानि छिन्नानि सल्लकी गजप्रिया तस्याः किसलयदलानि यस्मिन्नेवंविधादाशैलादुदयनाम्न इति प्रागेवोक्तम् । इतः सेतुबन्धविशेषणानि । **कपीति** । कपिबलेन वानरसैन्येन विलुप्तानि लोपं प्राप्तानि विरला तुच्छा या लवलीनाम्नी लता वल्ली तस्याः फलानि यस्मिन्स तथा तस्मात् । **उदधीति** । उदधेः समुद्राद्विनिर्गता या जलदेवता जलाधिष्ठात्री तया वन्द्यमानौ नमस्क्रियमाणौ राघवस्य रामचन्द्रस्य पादौ चरणौ यस्मिन्स तथा तस्मात् । अचलानां पर्वतानां यः पातस्तेन दलितानि भिन्नानि यानि शङ्खकुलानि जलजसमूहास्तेषां शकलैः खण्डैः तारकितं संजाततारकं शिलातलं यस्मिन्स तथा तस्मात् । **नलेति** । नलेत्युपलक्षणं नीलजाम्ववत्प्रमुखानाम् । तेन नलादीनां वानराणां यानि करतलानि तैराकलितं व्याप्तं यच्छैलसहस्रं पर्वतसहस्रं तेन संभूतान्निष्पन्नात्सेतुबन्धात् । समुद्रबन्धादित्यर्थः । लङ्कायां गच्छता रामचन्द्रेण समुद्रबन्धनं विहितमिति लौकिकाः । अथ मन्दरविशेषणानि—**अच्छमिति** । अच्छं निर्मलं यन्निर्झरजलमिति निर्झरो झरस्तस्य जलं पानीयं तेन धौताः क्षालितास्तारकासार्था नक्षत्रसमूहा यस्मिन्स तथा तस्मात् । **अमृतेति** । अमृतं पीयूषं तदर्थं यन्मथनम् । समुद्रस्येति शेषः । तत्र उद्युक्तो यो वैकुण्ठः कृष्णः । स हि मथनवेलायां पुरः स्थितं मन्दरमालिङ्ग्य स्थितः तस्य यत्केयूरपत्रमङ्गदपत्रं तस्य या मकरकोटिस्तया यत्कषणं घर्षणं तेन मसृणिताः श्लक्ष्णीकृता ग्रावाणः शिला यस्मिन्स तथा तस्मात् । **सुरेति** । सुरा देवाः, असुरा दैत्याः तैर्हेलया क्रीडया एकोत्साहेन वा वलयितो वलयाकारतां प्रापितो यो वासुकिर्नागराजस्तस्य यत्समाकर्षणं तस्य यः प्रारम्भ उपक्रमस्तस्माच्चलितः स्वस्थानाच्च्युतो यश्चरणभरः पादसमूहस्तेन दलितश्चूर्णितो नितम्बकटको यस्मिन्स तथा तस्मात् । **अमृतेति** । अमृतस्य पीयूषस्य ये सीकराः पृषतास्तैः सिक्तानि सिचितानि सानूनि शिखराणि यस्य स तथा तस्मात् । आमन्दराचलादिति प्रागेव व्याख्यातम् । अथ गन्धमादनं विशेषयन्नाह—**नरेति** । नरनारायणौ नामार्जुनवासुदेवौ तयोर्या चरणमुद्रा पादन्यासस्तयाङ्कितश्चिह्नितो यो

**टिप्प०—1 घर्षणमित्युचितोऽर्थः। 2 कपिबलेन विलोपं प्रापितानि (भक्षणायेत्यर्थः) अत एव विरलानि अल्पीभूतानि लवलीलतानां फलानि यस्मिन्निति व्याख्योचिता । एकस्या लतायास्तत्रापि तुच्छायाः सैन्येन फलभक्षणवर्णनं तु दारिद्र्यमेव टीकाकर्तुः। 3 तस्मात् चलितानां चरणानां भरेण- (भारेण) दलित इति व्याख्योचिता ।**

**पाठा०**—१ तुरंग. २ लवङ्ग. ३ करतल; करलूनरोध; करलूनलोध. ४ कवलात्. ५ कुल. ६ पुष्पात्. ७ निर्गत. ८ अभिवन्द्यमान. ९ निपात. १० तलकलित. ११ ग्रावाणः. १२ सुरासुरावलयित. १३ आरम्भ. १४ चलावलित. १५ नितम्बात्. १६ आमन्दराचलात्.

रमणीयात्कुबेरपुरसुन्दरीभूषणरवमुखरशिखरात्सप्तर्षिसंध्योपासनपूतप्रस्रवणाम्भसो वृकोदरोद्दलितसौगन्धिकखण्डसुगन्धिमण्डला[1]द्गन्धमादनात्, सेवाञ्जलिकमलमुकुल[3]दन्तुरैः शिरोभिश्चरणनखमयूख[4]ग्रथित[5]मुकुटपत्रलताग्रन्थयो भयचकिततरल[6]तारदृशो भुजबलविजिताः प्रणेमुरवनिपाः[7]।

येन चानेक[8]रत्नांशुपल्लविते [9]व्यालम्बिमुक्ता[10]फलजालके दिग्गजेनेव कल्पतरावाक्रान्ते सिंहासने भरेण शिलीमुखव्यतिकरकम्पिता लता इव नेमुरायामिन्यः [11]सर्वदिशः। यस्मै च [12]मन्ये सुरपतिरपि स्पृहयांचकार। यस्माच्च धवलीकृतभुवनतलः सकललोकहृदयानन्दकारी

---

बदरिकाश्रमस्तेन रमणीयात्सुन्दरात्। **कुबेरेति**। कुबेरपुरमलकापुरी तस्याः सुन्दर्यः स्त्रियस्तासां भूषणरवेणाभरणशब्देन मुखराणि वाचालानि शिखराणि यस्मिन्स तथा तस्मात्। **सप्तर्षीति**। सप्तर्षीणां संध्योपासनेन संध्यावन्दनेन पूतं पवित्रं प्रस्रवणाम्भो निर्झराम्भो यस्मिन्स तथा तस्मात्। **वृकोदरेति**। वृकोदरेण भीमेनोद्दलितं छेदितं सौगन्धिकखण्डं सौगन्धिकाभिधं वनं तेन सुगन्धि सुरभि मण्डलं भूमिभागो यस्य स तथा तस्मात्। अत्र कथा—पाण्डवा द्यूते जिताः सन्तो विन्ध्याटवीं प्रविष्टाः। तत्र द्रौपद्या दोहद उत्पन्नः सौगन्धिककुसुमेषु। ततो भीमसेनेन गत्वा सरस्तदध्यासीनं नागराजं जित्वा तत्कन्यकां चोलूप्याख्यां परिणीय सौगन्धिककुसुमानि गृहीत्वा स्वाश्रममा[1]याययौ। गन्धमादनादिति प्रागेव व्याख्यातम्। अथ नृपान्विशेषयन्नाह—**शिरोभिरिति**। शिरोभिर्मस्तकैरुपलक्षिताः। कीदृशैः। **सेवेति**। सेवार्थं योऽञ्जलिः स एव कमलमुकुलं तेन दन्तुरैर्विषमैः। **चरणेति**। तस्य राज्ञश्चरणौ पादौ तयोः नखा नखरास्तेषां मयूखाः किरणास्तैर्ग्रथिता मुकुटे या पत्रलता तस्या ग्रन्थयो येषां ते तथा। **भयेति**। भयेन साध्वसेन चकिता त्रस्ता तरला कम्पना तारा कनीनिका यासामेवंविधा दृशो येषां ते तथा। **भुजेति**। भुजबलेन बाहुबलेन विजिता निर्जिताः। अन्वयस्तु प्रागेवोक्तः।

**येन चेति**। येन च राज्ञा दिग्गजेनेव कल्पतरौ सिंहासने नृपासन आक्रान्ते सति भरेण भारेणायासिन्यो विस्तारवत्यः सर्वदिशो नेमुः प्रणता बभूवुः। का इव। लता इव व्रतत्य इव। कीदृश्यः। शिलीमुखा भ्रमरास्तेषां व्यतिकरः संबन्धस्तेन कम्पिता धूताः। दिक्पक्षे शिलीमुखा बाणाः। अथ च सिंहासनविशे[2]षणानि—**अनेकेति**। अनेकानि रत्नानि तेषामंशवः किरणास्तैः पल्लविते किसलयिते। **व्यालम्बीति**। व्यालम्बी-व्यालम्बमानानि मुक्ताफलानां रसोद्भवानां जालकानि समूहा यस्मिन्। **यस्मै चेति**। अहमिति मन्ये। यस्मै राज्ञे सुरपतिरिन्द्रोऽपि स्पृहयांचकार सस्पृहोऽभूत्। 'स्पृहेरीप्सितः' इति संप्रदानसंज्ञायां चतुर्थी। इन्द्रस्पृहणीय[3]तामाह—**यस्मादिति**। यस्माद्राज्ञो गुणाः शौर्यादयस्तेषां गणः समूहो निर्जगाम बहिर्निर्ययौ। यस्मादित्यवधौ पञ्चमी। गुणान्विशिनष्टि—**धवलीति**। धवलीकृतं शुभ्रीकृतं भुवनतलं विष्टपतलं येन स तथा। **सकलेति**। सकललोकानां समग्रजनानां यानि हृदयानि चेतांसि तेषामान-

---

टिप्प०—1 भीमसेनः स्वाश्रममाययौ इति तात्पर्यम्। 2 न केवलं सिंहासनविशेषणानि। इदं विशेषणद्वयं कल्पतरावप्यन्वेति। संजाता अनेकरत्नांशव एव पल्लवा यस्मिन्निति तत्पक्षेऽर्थः। व्यालम्बिमुक्ताफलेत्यादिविशेषणव्याख्या तूभयत्र समाना। 3 इन्द्रस्पृहणीयतायां नाग्रिमो हेतुः, किन्तु 'यस्मै च मन्येऽनन्यसाधारणशक्तिसंपदे......' इत्यादिरेव ग्रन्थानुकूलः पाठः। अनन्यसाधारणी शक्तिसंपद् यस्य ईदृशाय यस्मै इन्द्रोऽपि स्पृहयांचकारेति तदर्थः। ईदृशी शक्तिसंपद् ममापि स्यादितीन्द्रस्पृहायास्तात्पर्यम्।

---

पाठ०—१ खण्डमण्डलात्. २ मेकलात्. ३ मुकुलैर्दन्तुरैः. ४ मयूखाग्र. ५ ग्रथिता. ६ तारकदृशो. ७ अवनीपतयः. ८ रक्तांशुक; रत्नांशुजात. ९ व्यलम्बि. १० मुक्ताजालके. ११ सर्वा दिशः. १२ मन्येऽनन्यसाधारणशक्तिसंपदे सुरपतिः.

क्रौञ्चादिव हंसनिवहो निर्जगाम गुणगणः । यस्य चामृतामोदसुरभिपरिमलया मन्दरोद्धत[1]-बहुलदुग्धसिन्धुफेनलेखयेव धवलीकृतसुरासुरलोकया दशसु दिक्षु मुखरितभुवनमभ्रम्यत[2] कीर्त्या । यस्य चातिदुःसहप्रतापसंतापखिद्यमानेव क्षणमपि न मुमोचातपत्रच्छायां[3] राजलक्ष्मीः । तथाच यस्य[4] दिष्टिवृद्धिमिव[5] शुश्राव, उपदेशमिव जग्राह, मङ्गलमिव बहु मेने[6], मन्त्रमिव जजाप, आगममिव[7] न विसस्मार चरितं जनः । यस्मिंश्च राजनि गिरीणां विपक्षता, प्रत्ययानां परत्वम्, दर्पणानामभिमुखावस्थानम्[8], शूलपाणिप्रतिमानां दुर्गाश्लेषः, जलधराणां

---

न्दकारी प्रमोदकृत् । कः कस्मादिव । क्रौञ्चात्क्रौञ्चनाम्नः पर्वतैकप्रदेशाद्धंसनिवहः[1] सितच्छदसमूह इव । **यस्येति** । चः पूर्वोक्तसमुच्चये । यस्य राज्ञः कीर्त्याभिख्यया दशसु दिक्षु मुखरितभुवनं यथा स्यात्तथाभ्रम्यतागम्यत । भावे रूपम् । अथ कीर्तिविशेषणानि—**अमृतेति** । अमृतस्य पीयूषस्य य आमोदस्तद्वत्सुरभिः प्रकटितः प्रकटः सुगन्धिश्च परिमलो यस्याः सा तया । 'कीर्त्याः सौगन्ध्यं वर्ण्यते' इति कविसमयः । **धवलीति** । धवलीकृतः शुभ्रीकृतः सुरासुरलोको देवदानवलोको यया सा तया । कयेव । **मन्देति** । मन्दरेण स्वर्णाद्रिणोद्धतो दुर्दान्तो[2] यो बहुलो दृढो दुग्धसिन्धुः क्षीरसमुद्रस्तस्य फेनोऽब्धिकफस्तस्य लेखयेव वीथ्येव । मन्थनक्षणे तयापि सुरासुरलोकः शुभ्रीकृत इति तदुपमानमिति भावः । **यस्य चेति** । यस्य राज्ञो राजलक्ष्मी राज्यश्रीरातपत्रस्य छत्रस्य छायामातपाभावलक्षणं क्षणमपि निमेषमात्रमपि न मुमोच न तत्याज । तपआक्रान्तायास्तत्र शीतलस्थलाश्रयणं स्यादित्याशयेनाह—**अतीति** । अतिदुःखेन सोढुं शक्योऽतिदुःसहः एवंविधो यः प्रतापः कोशदण्डजनितं तेजस्तस्माद्यः संतापो घर्मस्तेन खिद्यमानेव पीड्यमानेव । अथ पञ्चक्रियाणामेकेनैव कर्त्रा संबन्धं दर्शयन्नाह—**तथाचेति** । यस्य राज्ञश्चरितं शौर्यविस्फूर्जितं दिष्टिवृद्धिमिव भाग्याभ्युदयमिव[3] जनो लोकः शुश्रावाकर्णितवान् । उपदेशमिव गुरुनिदेशमिव[4] जग्राह गृहीतवान् । मङ्गलमिव श्वोवसीयमिव बहु मेने सर्वाधिकत्वेन[5] ज्ञातवान् । मन्त्रो देवताधिष्ठातृकस्तमिव जजाप जपितवान्[6] । आगमः सिद्धान्तस्तमिव[7] न विसस्मार न विस्मृतवान् । जन इत्यस्य सर्वत्र संबन्धः । **यस्मिंश्चेति** । यस्मिंस्तारापीडे राजनि । 'ङिश्योर्वा' इति वाकारलोपः । इदं पृथिव्यामासीत् । तदेव दर्शयति—**गिरीत्यादि** । गिरीणां पर्वतानां विपक्षता पक्षराहित्यम् । इन्द्रेण पक्षाश्छिन्ना गिरीणामिति प्रागेवोक्तम् । न तु लोकानां विपक्षता दस्युता । प्रत्ययानां स्वादीनां परत्वं प्रकृत्युपरिवर्तमानत्वम् । न तु लोकानां परत्वं भिन्नत्वं शत्रुत्वं वा । अभिमुखं जनानामवस्थीयतेऽनेनेत्यभिमुखावस्थानम् । कर्मणि ल्युट् । दर्पणानां मुकुराणाम् । न तु लोकानां कस्यचित्पुरतः कस्याप्यवस्थानम् । सर्वेषां लक्ष्मीवत्त्वादिति भावः । शूलपाणिरीश्वरस्तस्य प्रतिमाया मूर्तेर्दुर्गा पार्वती तयाश्लेषोऽभिष्वङ्गः । न तु लोकानां दुर्गं विषमस्थलं तेन श्लेषः संबन्धः । राजग्रहाभावात् । जलधराणां मेघानां चापधारणमिन्द्रधनुर्धारणम् । न तु लोकानाम् । भयाभावान्न धनुरादा-

---

**टिप्प०**—1 पुरा किल परशुरामो महेश्वराद्धनुर्वेदशिक्षणावसरे क्रौञ्चदारकस्य स्कन्दस्य स्पर्धया बाणेन क्रौञ्चाद्रिं बिभेद यद्विवराद्धंससमूहो निर्जगामेति पुराणम् । 2 मथितः क्षोभित इत्याशयः । 3 दैवज्ञमुखात्स्वभाग्योदयं लोको यथा शृणोति तथा शुश्राव । उभयत्रापि लालसा कौतुकातिशयश्च हेतुः । 4 उभयत्र अभ्युदयसंपादकत्वप्रत्याशा हेतुः । 5 उभयत्रापि सुखजनकत्वं हेतुः । 6 असकृज्जपेन (उच्चारणेन) तादृशानुकरणसिद्धिः (चरितपक्षे), अभीष्टसिद्धिः (मन्त्रपक्षे) । 7 वेदादिविस्मरणे पापं स्यात्, यशस्तु मनोहरतया स्वत एव न विस्मर्यते ।

---

पाठा०—१ उद्धत; उद्धते. २ अभ्राम्यत. ३ आतपच्छायाम्. ४ अस्य. ५ दिष्टवृद्धिम्. ६ बहुमङ्गलमिव मेने. ७ आगमवचनम्. ८ दर्पाणाम्.

चापधारणम्, [१]ध्वजानामुन्नतिः, धनुषामवनतिः, वंशानां शिली[२]मुखमुखक्षतिः, देव[३]तानां यात्रा, कुसुमानां बन्धनस्थितिः, इन्द्रियाणां निग्रहः, वनकरिणां वारिप्रवेश[४]ः, तै[५]क्ष्ण्यमसिधाराणाम्, [६]व्रतिनामग्निधारणम्, ग्रहाणां तुलारोहणम्, अगस्त्योदये विष[७]शुद्धिः, केशनखानामायतिभङ्गः, [८]जलददिवसानां मलिनाम्बरत्वम्, रत्नोपलानां भेदः, मुनीनां योग[९]साधनम्, कुमारस्तुतिषु तारकोद्धरणम्, उष्णरश्मेर्ग्रह[१०]णशङ्का, शशिनो ज्येष्ठातिक्रमः, महाभारते [११]दुःशासनापराधाकर्णनम्, वयःपरिणामे दण्डग्रहणम्, [१२]असिपरिवारेष्वकुशल-

---

नम्। ध्वजानां वैजयन्तीनामुन्नतिरूर्ध्वमुखत्वेन। न तु लोकानाम्। अहंकृतेरभावात्। धनुषां चापानामवनतिरवनमनम्। न तु लोकानां बलात्कारेण नतिः। सर्वेषां स्वाधीनवृत्तित्वात्। वंशानां वेणूनां शिलीमुखा भ्रमरास्तेषां मुखैराननैः क्षतिश्छेदः। न तु लोकानां शिलीमुखा बाणास्तैः क्षतिः पीडा। युद्धाभावात्। 'पत्रिष्वजिह्मगशिलीमुखकङ्कपत्राः' इति कोशः। देवतानां यात्रा क्षणविशेषः। न तु लोकानां यात्रा भयादन्यत्र गमनम्। 'यात्रा स्याद्यापने गतौ' इत्यनेकार्थः। कुसुमानां पुष्पाणां बन्धनेन ग्रथनेन स्थितिः। न तु लोकानां बद्धत्वेनावस्थानम्। सर्वेषां निरपराधित्वात्। इन्द्रियाणां करणानां निग्रहो निरोधः। न तु लोकानां निग्रहो दण्डः। वनकरिणामरण्यवासिगजानां वारिप्रवेशः। यया गजबन्धनं क्रियते सा वारी[1]। 'वारी तु गजबन्धनी' इति कोशः। न तु लोकानां दिव्यार्थं वारिप्रवेशः। तैक्ष्ण्यं छेदशक्तिरसिधाराणां खड्गाग्रभागानाम्। न तु लोकानां तैक्ष्ण्यं क्रौर्यम्। व्रतिनां योगिनामग्निधारणम्। न तु लोकानामग्नौ[2] धारणम्। ग्रहाणां नक्षत्राणां तुलारोहणं तुला राशिस्तस्यामारोहणं संक्रमः। न तु लोकानां दिव्यार्थं तुलारोहणम्। अगस्त्योदयेऽगस्त्यस्य मुनेरुदये विषशुद्धिर्विषं पानीयं तस्य शुद्धिः स्वच्छता। न तु लोकानां विषेण शुद्धिः कलङ्कापहारः। तदुक्तम्—'सप्तयवप्रमाणं वत्सनाभविषं तेन शुद्धिर्वैश्यानाम्' इति। केशनखानामायतिर्विस्तारस्तस्या भङ्गो विच्छेदः। न तु लोकानामायतिरुत्तरः कालस्तस्य भङ्गो लक्षणया दुःखजनकत्वम्। नित्येन तद्विच्छेदायोगात्। 'आयतिस्तूत्तरः कालः' इति कोशः। जलदो घनाघनस्तत्कालीना ये दिवसा वासरास्तेषां मलिनं कश्मलमम्बरमाकाशं येषु तेषां भावस्तत्त्वम्। न तु लोकानां मलिनाम्बरत्वं मलोपयुक्तवसनत्वम्। रत्नोपलानां मण्यश्मनां भेदः स्फोटनम्। न तु लोकानां मन्त्रभेदः। मुनीनां तपस्विनां योगश्चित्तवृत्तिनिरोधस्तस्य साधनं यमादि। न तु लोकानां योगो विषाग्निप्रयोगः कार्मणं वा तस्य साधनं दुष्टमन्त्रादि। कुमारः षण्मुखस्तस्य स्तुतयो नुतयस्तासु तारकस्य दैत्यस्योत्प्राबल्येन हरणं नाशनम्। न तु लोकानां तारका कनीनिका तस्या उद्धरणमुत्कर्षणम्[3]। उष्णरश्मेः सूर्यस्य ग्रहणशङ्कोपरागशङ्का। न तु लोकानां ग्रहणं नियन्त्रणं तस्य शङ्कारेका। शशिनश्चन्द्रस्य ज्येष्ठा नक्षत्रं तस्यातिक्रमस्तदुल्लङ्घनम्। न तु लोकानां ज्येष्ठो भ्रात्रादिस्तन्निदेशोल्लङ्घनम्। महाभारते शास्त्रे दुःशासनो दुर्योधनलघुभ्राता तस्य योऽपराधः दुर्योधनाज्ञया दुःशासनेन द्यूते जितेषु पाण्डवेषु द्रौपदी केशेषु गृहीत्वाकृष्टेत्यपराध आगस्तस्याकर्णनं श्रवणम्। न तु लोकानां दुष्टं शासनं येषां ते दुःशासना दुष्टमनुजास्तेषामपराधश्रवणम्। वयोऽवस्था तस्य परिणामः पक्वता तस्मिन्दण्डो यष्टिस्तस्य ग्रहणम्। न तु लोकानां दण्डः करस्तदादानम्। असिपरिवारेषु खड्गपिधानेष्वकुशलयोगो न विद्यते

---

**टिप्प०—1** वारिः इति ह्रस्व उचितः वारि(जल)प्रवेश इति श्लेषाय। 'वारि ह्रीबेरनीरयोः। वारिर्घट्यां सरस्वत्यां गजबन्धनभुव्यपि।' हैमः। 2 अग्नेर्धारणम्, अग्निदिव्यम् 'यद्यहं पापी स्यां तदाऽग्निना दग्धहस्तो भवेयमिति' पापाभावात्। 3 उत्पाटनमित्यर्थः।

---

**पाठा०—१** पद्मानां जलदिव्यं प्रतीहाराणामसिधारणं तैक्ष्ण्यमसिधाराणां ध्वजानाम्. २ शिलीमुखक्षतिः. ३ देवानाम्. ४ प्रवेशाः. ५ असिधाराणां तैक्ष्ण्यम्. ६ व्रतिनामसिधाराधारणम्. ७ विषविशुद्धिः. ८ जलधर. ९ धारणम्. १० ग्रहणाशङ्का. ११ दुःशासनापराधः. १२ असिधारासु कोशगुप्तिः.

योगः, [1]कामिनीकु[2]चभङ्गेषु वक्रता, करिणां दानविच्छित्तिः, अक्षक्रीडासु शून्यगृहदर्शनं पृथिव्यामासीत् ।

[3]तस्य च राज्ञो निखिलशास्त्रक[4]लावगाहगम्भीरबुद्धिः, आशैशवादुपारूढनिर्भरप्रेमरसः, नीतिशास्त्रप्रयोगकुशलः, भुवनराज्यभा[5]रनौकर्णधारः, महत्स्वपि कार्यसंकटेष्वविषण्णधीः, धाम धैर्यस्य, स्थानं स्थितेः, से[6]तुः सत्यस्य, गुरुर्गुणानाम्, आचार्य आचाराणाम्, धाता धर्मस्य, शेषाहिरिव म[7]हीभारधारणक्षमः, सलिलनिधिरिव [8]महासत्त्वः, जरासंध इव घ[9]टित-

---

कुशलं यस्मात्सोऽकुशलः खड्गस्तेन योगः संबन्धः । न तु लोकानां परिवारेषु परिच्छदेष्वकुशलमपुण्यं तस्य योगः । 'पर्याप्तिक्षेमपुण्येषु कुशलम्' इत्यनेकार्थः । अकुत्सितं शोभनं चर्म तस्य योगः । अन्यत्राकुशलमक्षेम-जरादि तेन योगो नास्तीति वा । केचित् 'असिपरिवारेषु कलङ्कयोगः' इति पठन्ति । कलङ्कः श्यामिका । अन्यत्र दोष इत्यर्थः । कामिनीनां स्त्रीणां कुचभङ्गेषु पयोधरपत्ररचनायां वक्रतारालता । करिणां हस्तिनां दानं मदः । 'मदो दानप्रवृत्तिश्च' इति कोशः । तस्य विच्छित्ती रचना । न तु लोकानां दानं वितरणं तस्य विच्छि-त्तिर्नाशः । अक्षक्रीडासु द्यूतक्रीडासु शून्यगृहदर्शनं शून्यगृहावलोकनम् । खेलिन्या शून्यमित्यर्थः । न तु लोकानां शून्यस्थलदर्शनम् । अन्वयस्तु प्रागेवोक्तः ।

**तस्य चेति ।** तस्य राज्ञोऽमात्यः शुकनासो नाम ब्राह्मण आसीद्बभूव । अथ प्रथमान्तानि तस्य विशेष-णानि । **निखिलेति ।** निखिलानि यानि शास्त्राणि कलाश्च तासामवगाहस्तदभिप्रायाकलनं तेन गम्भीरा-ऽलब्धमध्या बुद्धिः प्रतिभा यस्य स तथा । आ शैशवादा बाल्यादुपारूढ आश्रितो निर्भरो निबिडः प्रेमरसः स्नेहरसो यस्मिन्स तथा । **नीतीति ।** नीतिशास्त्रं व्यवहारग्रन्थस्तस्य प्रयोगस्तदर्थपरीक्षणं तत्र कुशलो दक्षः । **भुवनेति ।** भुवनानां राज्यमाधिपत्यं तस्य भा[1]रो वीवधस्तल्लक्षणा या नौर्द्रोणी तस्याः कर्णधारो नाविकः । **महत्स्वपीति ।** महत्स्वपि गुरुष्वपि कार्यसंकटेषु कृतकष्टेष्वविषण्णाऽविषादवती धीर्बुद्धिर्यस्य स तथा । **धामेति ।** धैर्यस्य धीरिमायाः[2] धाम गृहम् । स्थितेर्मर्यादायाः स्थानं स्थलम् । सत्यस्यावितथस्य सेतुः पालिः । गुणानां शौर्यादीनां गुरुर्हितोपदेष्टा । आचाराणां शिष्टजनाचीर्णमार्गाणामाचार्य उपदेष्टा । धर्मस्य वृषस्य धाता प्रजापतिः । **शेषेति ।** शेषाहिरनन्तस्तद्वदिव मह्याः पृथ्व्या भारो वीवधस्तस्य धारणमुद्वहनं तत्र क्षम इत्यभङ्गश्लेषः । **सलिलेति ।** सलिलनिधिः समुद्रस्तद्वदिव । सर्वत्रैकविशेषणेनोभयं विशेषयन्नाह— **महेति ।** महत्सत्त्वं साहसं यस्मिन् । पक्षे महासत्त्वा[3] जलचारिणः । **जरेति ।** जरा राक्षसी तया साक्षात्सं-धितत्वाज्जरासंधस्तद्वदिव । कथा चात्र—राजगृहे जरासंधपित्रा बृहद्रथेन राज्ञीभ्यां पुत्रार्थमाराधितेन महर्षिणा चण्डकौशिकेनाम्रफलं प्रदत्तम् । तच्च सोऽर्धार्धं कृत्वा राजमहिषीभ्यां दत्तवान् । तयोश्चार्धार्धशरीरं बालकद्वयं जातम् । तद्दृष्ट्वा तयोः कुपितेन राज्ञा श्मशानभूमौ मुक्तम् । तत्र च जरया संधितमेकत्र योजितमिति जरा-संधनाम संवृत्तमस्येति वार्ता । उभयं विशिनष्टि—**घटितेति ।** घटितौ विहितौ संधिविग्रहौ येन । तत्र संधिः साम, विग्रहो युद्धम् । पक्षे जरया पिशाच्या घटितः संधिः संघटनं यस्य संधिविग्रहस्य शरीरस्येति

---

**टिप्प०—1 राज्यभारग्रहणमेव नौका तस्याः कर्णधार इति सरलोऽर्थः । 2 धीरतायाः ( अविचल-चित्ततायाः ) इत्युचिता व्याख्या । 3 सलिलनिधिपक्षे महान्तः सत्त्वाः ( जलजन्तवः ) यस्मिन्नित्यर्थः । वस्तुतस्तु–'महासत्त्वनिवासः' इत्येव पाठः । महासत्त्वस्य( उत्कृष्टाध्यवसायस्य ) आश्रयः ( राजपक्षे ) । समुद्रपक्षे तु महतां जलजन्तूनां निवासः ।**

---

**पाठा०—**१ वक्रता कामिनीनां कुचभङ्गेषु. २ कुचपत्र. ३ तस्य राज्ञो. ४ कलाकलापावगाहनगभीर; कलापाव-गाहनगभीर. ५ भारैक. ६ सिन्धुः. ७ सकलमही. ८ महासत्त्वनिवासः. ९ प्रकटित.

संधिविग्रहः । त्र्यम्बक इव प्रसाधितदुर्गः, युधिष्ठिर इव धर्मप्रभवः, सकलवेदवेदाङ्गवित्, अशेषराज्यमङ्[1]गलैकसारः, बृहस्पतिरिव सुनासीरस्य, कविरिव वृषपर्वणः, वसिष्ठ इव दशरथस्य, विश्वामित्र इव रामस्य, धौम्य इवाजातशत्रोः, [2]दमनक इव नलस्य, सर्वकार्येष्[3]वाहितमतिरमात्यो ब्राह्मणः शुकनासो नामा[4]सीत् ।

यो नरका[5]सुरशस्त्रप्रहारभीषणे भ्रमन्[6]मन्दरनितम्बनिर्दयनिष्पेषकठिनांसपीठे नारायणवक्षःस्थलेऽपि स्थितामदुष्करलाभाममन्यत प्रज्ञाबलेन लक्ष्मीम् । यं [7]चासाद्य दर्शितानेकराज्यफला लतेव [8]पादपमनेकप्रतानगहना विस्तार[9]मुपययौ प्रज्ञा । [10]यस्य चानेकचारपुरुषसहस्रसं[11]चार-

---

घटितसंधिविग्रहं यस्य जरासंधस्येति[1] द्वितीयाबहुव्रीहिः । **त्र्यम्बकेति** । त्र्यम्बक ईश्वरस्तद्वदिव । **प्रसाधितेति** । प्रसाधितं स्वायत्तीकृतं दुर्गं विषमस्थलं येन । पक्षे प्रसाधिता प्रसन्नीकृता दुर्गा पार्वती येन स तथा । **युधिष्ठिर इति** । युधिष्ठिरो धर्मपुत्रस्तद्वदिव । धर्मस्य नीतिधर्मादेः प्रभव उत्पत्तिर्यस्मात् । पक्षे धर्मात्प्रभवो यस्येति विग्रहः । **सकलेति** । सकलानि समग्राणि यानि वेदवेदाङ्गानि शिक्षादीनि तेषां विज्ञाता । **अशेषेति** । अशेषं समग्रं यद्राज्यं तत्र मङ्गलैकसारः कल्याणैकरहस्यभूतः । प्रकारान्तरेण तमेव विशेषतो विशेषयन्नाह—सुनासीरस्येन्द्रस्य बृहस्पतिः सुरगुरुस्तद्वदिव । वृषपर्वणो दैत्यस्य कविः शुक्रस्तद्वदिव । दशरथस्य रामपितुर्वसिष्ठोऽरुन्धतीजानिस्तद्वदिव । रामस्य दशरथात्मजस्य विश्वामित्रः कौशिकस्तद्वदिव । अजातशत्रोर्धर्मपुत्रस्य धौम्यः सचिवस्तद्वदिव । नलस्य नैषधेर्दमनकाभिधानोऽमात्यस्तद्वदिव । अयं तारापीडस्य राज्ञ इति भावः । **सर्व इति** । सर्वकार्येषु समग्रकृत्येष्वाहिता स्थापिता मतिर्बुद्धिर्येन स तथा । अन्वयस्तु प्रागेवोक्तः ।

**य इति** । यः शुकनासः प्रज्ञाबलेन बुद्धिसामर्थ्येनादुष्करलाभां स्वल्पप्रयासलभ्यां लक्ष्मीं श्रियममन्यत ज्ञातवान् । कीदृशीम् । नारायणस्य कृष्णस्य यद्वक्षःस्थलं भुजान्तरं तत्र स्थितामासेदुषीमपि । एतेन तत्प्राप्तेरतिकाठिन्यं सूचितम् । वक्षःस्थलं विशिनष्टि—**नरकेति** । नरकासुरो दैत्यस्तस्य शस्त्राणि तेषां प्रहारोऽभिघातस्तेन भीषणे भयानके । **भ्रमदिति** । भ्रमं[2]श्चासौ मन्दरश्च भ्रमन्मन्दरस्तस्य यो नितम्बः कटकस्तस्य यो निर्दयं निरनुकम्पं निष्पेषश्चूर्णीभावस्तत्कर्तव्यतायां कठिनं कठोरमंसपीठं स्कन्धपीठं यस्मिन् । अथवा निष्पेषेणावनतिविशेषेणेति बोध्यम् । मथनावसरे हि मन्दरनितम्बा अंसयोर्लग्ना इति भावः । एतेन मन्दरादप्यंसयोरधिककाठिन्यमिति ध्वनितम् । **यमिति** । यं शुकनासाख्यमासाद्य प्राप्य प्रज्ञा विस्तारं विस्तीर्णतामुपययौ प्राप्तवती । तां विशिनष्टि—**दर्शितेति** । दर्शितानि प्रकटितान्यनेकराज्यान्येव फलानि यया सा तथा । केवलमेव यथा लता पादपं वृक्षं प्राप्य विस्तारं याति । कीदृशी । **अनेकेति** । अनेकैः प्रतानैर्लतागहनैर्गहना निबिडा । **यस्येति** । यस्य मन्त्रिणो धरणीतले जगतीतले राज्ञां समुच्छ्वसितमप्युच्छ्वसितमात्रमप्यहरहः प्रतिदिनमविदितमज्ञातं नासीत् । न बभूवेत्यर्थः । कस्मिन्निव । भवन इव गृह इव । यथा सद्मनि किमप्यज्ञातं न स्यात् । भुवनतलं विशेषयन्नाह—**अनेकेति** । अने[3]का ये चारपुरुषाः प्रणिधिपुरुषास्तेषां सहस्रं तस्य

---

**टिप्प०—1** घटितो विहितः सन्धिः ( उभयखण्डयोः संयोगः ) यस्य तादृशो विग्रहः शरीरं यस्य स इति स्पष्टोऽर्थः । 2 भ्रमंश्चासौ इत्यर्थः । 3 अनेके इत्यत्रगन्तव्यम् ।

---

**पाठा०—१** मण्डलैक. २ दमनक इव भीमस्य, सुमतिरिव नलस्य. ३ अप्रतिहत. ४ नामाभवत्. ५ शस्त्रभीषण. ६ मन्दरनिर्दय. ७ समासाद्य. ८ महापादपमनेकगहना. ९ उपाययौ. १० यस्यानेक. ११ परिचिते; विचिते.

निचिते चतुरुदधिवलयपरिधिप्रमाणे[1] धरणीतले[2] भवन इवाविदितमहरहः समुच्छ्वसितमपि राज्ञां नासीत्।

स राजा बाल एव सुरकुञ्जरकरपीवरेण[3] राज्यलक्ष्मीलीलोपधानेन[4] सकलजगदभयदानयज्ञदीक्षायूपेन[5][6] स्फुरदसिलतामरीचिजालजटिलेन निखिलारातिकुलप्रलयधूमकेतुदण्डेन[7] बाहुना विजित्य सप्तद्वीपवलयां वसुंधरां तस्मिञ्छुकनासनाम्नि मन्त्रिणि सुहृदीव राज्यभारमारोप्य सुस्थिताः प्रजाः कृत्वा कर्तव्यशेषमपरमपश्यत्[8]। प्रशमिताशेषविपक्षतया[9] विगताशङ्कः[10] शिथिलीकृतवसुंधराव्यापारः[11] प्रायो[12] यौवनसुखान्यनुबभूव[13]।

तथा हि—कदाचिदुल्लसत्कठोरकपोलपुलकजर्जरितकर्णपल्लवानां प्रणयिनीनां चन्दनजलच्छटाभिरिव स्मितसुधाच्छविभिरभिषिच्यमानः, कर्णोत्पलैरिव लोचनांशुभिस्ताड्यमानः,

---

संचारः परिभ्रमणं तेन निचिते पूरिते। **चतुरिति**। चतुरुदधीनां चतुःसमुद्राणां वलयं कङ्कणं तस्य या किंचिदधिका त्रिगुणिता परिधिः[1] परिक्षेपः स एव प्रमाणं यस्य स तस्मिन्।

**स इति**। स राजा तारापीडो बाल एव। **सुरेति**। सुरकुञ्जरो हस्तिमल्लस्तस्य करः शुण्डा तद्वत्पीवरेण पुष्टेन। **राज्येति**। राज्यलक्ष्मीराधिपत्यश्रीस्तस्या लीलोपधानेन लीलोपबर्हेण। **सकलेति**। सकलजगतः समग्रविष्टपस्य यदभयदानं तदेव यज्ञदीक्षा तत्र यूपेन यज्ञस्तम्भेन। **स्फुरदिति**। स्फुरन्ती देदीप्यमाना याऽसिलता खड्गलता तस्या मरीचिजालं कान्तिसमूहस्तेन जटिलेन व्याप्तेन। **निखिलेति**। निखिलाः समग्रा येऽरातयः शत्रवस्तेषां यानि कुलानि तेषां प्रलयो विनाशस्तत्र धूमकेतुर्ग्रहविशेषस्तस्य दण्डेन[2] पुच्छेन। दण्डाकृतिरूपत्वात्पुच्छस्येति भावः। एवंविधेन बाहुना भुजेन। **सप्तेति**। जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कराः सप्तद्वीपा एव वलयं कङ्कणं यस्या एवंभूतां वसुंधरां विजित्य तस्मिञ्छुकनासनाम्नि मन्त्रिणि सुहृदीव मित्र इव राज्यभारमारोप्य निधाय सुस्थिताः सुखेन स्थायिन्यः प्रजाः प्रकृतीः कृत्वा निष्पाद्य कर्तव्यशेषमितः परं किं कर्तव्यमस्तीत्यपरं विचारविषयं कार्यमपश्यदित्यन्वयः। **प्रशमितेति**। प्रशमिताः शान्तिं प्रापिता अशेषाः समग्रा विपक्षा दस्यवो येन तस्य भावस्तत्ता तया। अत एव विगताशङ्को निर्भयः। **शिथिलीति**। शिथिलीकृतः श्लथीकृतो वसुंधरायाः क्षितेर्व्यापारो व्यापृतिर्येन स तथा। प्रायो बाहुल्येन यौवनस्य तारुण्यस्य सुखानि स्त्रीसंभोगादीन्यनुबभूवानुभवविषयीचक्रे। तदेव दर्शयति—**तथा हीति**। **कदाचिदिति**। कदाचित् कस्मिंश्चित्समयेऽनङ्गपरवशः कामपरायत्तः सुरतं मैथुनमाततान विस्तारयामासेत्यन्वयः। किं क्रियमाणः। अभिषिच्यमानः सिच्यमानः। काभिः। स्मितमीषद्धसितं तदेव सुधामृतं तस्याश्छविभिः कान्तिभिः। काभिरिव। प्रणयिनीनां कामिनीनां चन्दनजलच्छटाभिरिव। कीदृशीनाम्। उल्लसन्तो विकसन्तः कठोराः कठिनाः कपोलेषु पुलका रोमाञ्चास्तैर्जर्जरिताः श्लथीभूताः कर्णपल्लवाः श्रोत्रकिसलयानि यासाम्। पुनः किं क्रियमाणः। ताड्यमानः पीड्यमानः। कैः। लोचनांशुभिः नेत्रकान्तिभिः। कैरिव। कर्णोत्पलैरिव श्रवणकुवलयै-

---

**टिप्प०—1 परिधिशब्दस्य पुंस्त्वमेवावगन्तव्यम्। 2 'निखिलारातिकुलप्रलयधूमकेतुना बाहुदण्डेन' इत्येवोचितः पाठः। निखिलस्य अरातिकुलस्य प्रलये विनाशे धूमकेतुरिव धूमकेतुः (विनाशसूचकः) तेन इति तदर्थः।**

---

**पाठा०**—१ परिक्षेपप्रमाणे; परिखाप्रमाणे. २ धरणितले. ३ कुञ्जरपीवरेण. ४ राजलक्ष्मी. ५ जगदीक्षाभयप्रदान. ६ प्रदानशौण्डेन रणयज्ञदीक्षा. ७ धूमकेतुना बाहुदण्डेन विजित्य सकलद्वीप. ८ अपश्यन्. ९ विपक्षतया तया. १० विगलिताशङ्कः. ११ शिथिलितपृथिवीव्यापारः. १२ प्रायशो. १३ सुखम्.

कुङ्कुमधूलिभिरिवाभरणप्रभाभिराकुलीक्रियमाणलोचनः, धवलांशुकैरिव करनखमयूखजालकैराहन्यमानः, चम्पककुसुमदलमालिकाभिरिव भुजलताभिराबध्यमानः, दष्टाधराधूतकरतलचलन्मणिवलयकलकलरमणीयम्, अतिरभसदलितदन्तपत्रदलदन्तुरशयनम्, उत्क्षिप्तचरणतलगलदलक्तकरक्तशेखरम्, सरभसकचग्रहचूर्णितमणिकर्णपूरम्, उल्लसितकुचकृष्णागुरुपङ्कपत्रलताङ्कितप्रच्छदपटम्, अच्छश्रमजलकणिकालुलितगोरोचनतिलकपत्रभङ्गम्, अनङ्गपरवशः सुरतमाततान । कदाचिन्मकरकेतुकनकनाराचपरम्पराभिरिव कामिनीकरपुटविनिर्गताभिः कुङ्कुमजलधाराभिः पिञ्जरीक्रियमाणकायो लाक्षाजलच्छटाप्रहारपाटलीकृतदुकूलो मृगमदजलविन्दुशबलचन्दनस्थासकः कनकशृङ्गकोशैश्चिरं चिक्रीड ।

---

रिव । **कुङ्कमेति** । कुङ्कुमं केसरं तस्य धूलिभिश्चूर्णैरिवाभरणप्रभाभिर्भूषणरश्मिभिराकुलीक्रियमाणे लोचने यस्य स तथा । **धवलेति** । धवलांशुकैरिव शुभ्रवसनैरिव करयोर्हस्तयोर्नखाः पुनर्भवास्तेषां मयूखाः किरणास्तेषां जालकैः समूहैराहन्यमान आघातविषयीक्रियमाणः । **चम्पकेति** । चम्पको हेमपुष्पकस्तस्य कुसुमानां पुष्पाणां दलानि खण्डानि तेषां मालिका मालास्ताभिरिव भुजलताभिर्बाहुवल्लीभिराबध्यमानः संयम्यमानः । इतः सुरतविशेषणानि । **दष्टेति** । दष्टः खण्डितो योऽधरो रदनच्छदस्तेनाधूतं कम्पितं यत्करतलं तेन चलन्ति यानि मणिवलयानि तेषां यः कलकलोऽव्यक्तध्वनिस्तेन रमणीयं मनोहरमत एवातिरभसमतित्वरं दलितानि द्वैधीकृतानि यानि दन्तपत्राणि कर्णाभरणानि तेषां दलानि तैर्दन्तुरं विषमं शयनीयं शय्या यस्मिन् । **उत्क्षिप्तेति** । उत्क्षिप्तावूर्ध्वीकृतौ यौ चरणौ पादौ ताभ्यां गलत्स्रवद्योऽलक्तको यावकरसस्तेन रक्तो रञ्जितः शेखरोऽवतंसो यस्मिन् । **सरेति** । सरभसं ससंभ्रमं यः कचग्रहः केशग्रहस्तेन चूर्णितं भग्नं मणिकर्णपूरं रत्नोपेतं श्रवणभूषणं यस्मिन् । **उल्लसितेति** । संभोगावस्थायामुल्लसिता उल्लासं प्राप्ता ये कुचाः पयोधरास्तेषु कृष्णागुरुः काकतुण्डस्तस्य यः पङ्कः कर्दमस्तस्य पत्रलताः पत्रभङ्गयस्ताभिरङ्कितश्चिह्नितः प्रच्छदपट उत्तरच्छदो यस्मिन् । **अच्छेति** । अच्छं निर्मलं यच्छ्रमजलं रतक्लान्तिपानीयं तस्य कणिकाः पृषन्ति तैर्लुलितो विलुप्तो गोरोचनातिलकपत्राणां भङ्गो यस्मिन् । अन्वयस्तु प्रागेवोक्तः । **कदाचिदिति** । स राजा कनकशृङ्गकोशैः सुवर्णघटितशृङ्गसंघातैः चिरं चिरकालं यावच्चिक्रीड क्रीडां कृतवान् । 'क्रीड क्रीडने' धातुः । लिटि रूपम् । कीदृशः । कुङ्कुमस्य या जलधारास्ताभिः पिञ्जरीक्रियमाणः कायो यस्य स तथा । कीदृशीभिरिव । मकरकेतुर्मदनस्तस्य कनकस्य स्वर्णस्य ये नाराचा बाणास्तेषां परम्पराभिरिव । कीदृशीभिः । कामिन्यः स्त्रियस्तासां करपुटा हस्तसंपुटास्तेभ्यो विनिर्गताभिर्निःसृताभिः । पुना राजानं विशिनष्टि—**लाक्षेति** । लाक्षाजलं यावकजलं तस्य छटास्तासां प्रहारोऽभिघातस्तेन पाटलीकृतं श्वेतरक्तीकृतं दुकूलं दुगूलं यस्य स तथा । **मृगमदेति** । मृगमदो गन्धधूली तस्य जलमम्भस्तस्य विन्दुना पृषतेन शबलाः कर्बुराश्चन्दनस्थासका मलयजहस्तका यस्य स तथा । अन्वयस्तु प्रागेवोक्तः ।

---

**टिप्प०—1** गलन् स्रवन् योऽलक्तक इत्यर्थः । **2** फाल्गुने जायमानस्य रङ्गजलक्रीडामयस्य मदनोत्सवस्य वर्णनमिदम् । अत एव तत्र नारीभिः कुङ्कुमजलेन पिञ्जरीकृतोऽयम् । गात्रवस्त्रोपरि दत्तेषु चन्दनस्थासकेषु कस्तूरीजलबिन्दुभिः शबलीकरणम् । अयमपि च कनकनिर्मितैः शृङ्गाकारैर्जलनिक्षेपपात्रैः (डोलची) तासु रङ्गजलं निक्षिपन् चिरं चिक्रीड । 'कीर्णैः पिष्टातकौघैः' इत्यादिना रत्नावल्यां सोयमुत्सवो वर्णितः । सातवाहनेनापि गाथासप्तशत्याम्—'घेत्तूण चुण्णमुट्ठिं हरिसूससिआएँ वेपमाणाए । भिसिणेमित्ति पिअअमं हत्थे गंधोदअं जाअं ॥ (४-१२) । इत्यादिना वर्णितः । एतद्गाथाया मत्कृतोऽनुवादः—'आदाय चूर्णमुष्टिं हर्षौत्सुक्येन वेपमानायाः । प्रियमवकिरामि पुर इति हस्ते गन्धोदकं जातम् ॥' इति ।

---

पाठा०—१ कुङ्कुमपटवास; कुङ्कुमवास. २ लोललोचनः. ३ नखर. ४ दष्टाधरकरतल. ५ धुत; आधूत. ६ कलकलरव. ७ रतिरभस. ८ दन्तुरित. ९ चरणगलद्. १० अश्रमजल. ११ गोरोचना; रोचना. १२ विनिर्गताभिरिव.

कदाचित्कुचचन्दनचूर्णधवलितोर्मिमालम्, चटुलतुलाकोटिवाचालचरणालक्तकसिक्तहंसमिथुनम्, अलकनिपतितकुसुमसारम्, प्लवमानकर्णपूरकुवलयदलम्, उन्नतनितम्बक्षोभजर्जरिततरंगम्, उद्दलितनालपर्यस्तनलिननिपतितधूलिपटलम्, अनवरतकरास्फालनस्फुरत्फेनबिन्दुचन्द्रकितं सावरोधजनो जलक्रीडया गृहदीर्घिकाणामम्भश्चकार ।

कदाचित्संकेतवञ्चिताभिः प्रणयिनीभिराबद्धभङ्गुरभ्रूकुटिभिरारणितपारिहार्यमुखरभुजलताभिर्बकुलकुसुमावलीभिः संयतचरणो नखकिरणविमिश्रैः कुसुमदामभिः कृतापराधो दिवसमताड्यत । कदाचिद्बकुलतरुरिव कामिनीगण्डूषसीधुधारास्वादमुदितो विकाशमभ-

---

**कदाचिदिति ।** सहावरोधजनैरन्तःपुरलोकैर्वर्तमानः स राजा जलक्रीडया गृहदीर्घिकाणां भवनवापीनामम्भः पानीयमेतादृशं चकार निर्ममे । अथ चाम्भोविशेषणानि—**कुचेति ।** कुचानां स्तनानां यानि चन्दनचूर्णानि मलयजक्षोदास्तैर्धवलिता शुभ्रीकृतोर्मिमाला कल्लोलपङ्क्तिर्यस्य तत् । **चटुलेति ।** चटुला मनोहरा ये तुलाकोटयस्तैर्वाचाला मुखरा ये चरणाः पादास्तेषां योऽलक्तकस्तेन सिक्तं सिञ्चितं हंसमिथुनं सितच्छदद्वन्द्वं यस्मिंस्तत्तथा । **अलकेति ।** अलकाच्चूर्णकुन्तलान्निपतितं स्रस्तं कुसुमसारं पुष्परहस्यं यस्मिंस्तत्तथा । **प्लवेति ।** प्लवमानं निमज्जमानं कर्णपूररूपं कुवलयदलं यस्मिन् । **उन्नतेति ।** उन्नता उच्चा ये नितम्वा आरोहास्तैः क्षोभ आस्फालनं तेन जर्जरिताः क्षीणास्तरंगाः कल्लोला यस्मिंस्तत् । **उद्दलितेति ।** उद्दलितान्युच्छिन्नानि नालानि विसानि येषामेवंभूतानि पर्यस्तानि नलिनानि कमलानि तेभ्यो निपतितं स्रस्तं धूलिपटलं परागसमूहो यस्मिन् । **अनवरतेति ।** अनवरतकरास्फालनेन निरन्तरहस्तास्फोटनेन स्फुरन्तो देदीप्यमाना ये फेनबिन्दवोऽब्धिकफद्रुषतास्तैरेव संजाता चन्द्रका मेचका यस्मिन् । 'तारकादिभ्य इतच्' इति । चन्द्रकितं मेचकितम् । अन्वयस्तु पूर्वोक्तः ।

**कदाचिदिति ।** स दिवसं प्रतिदिवसं प्रणयिनीभिर्मानिनीभिरताड्यत ताडितोऽभूदित्यन्वयः । 'ताड व्यथने' इति धातुः । लुङन्तप्रयोगः । अत्र यद्यपि प्रथमतः कर्तृत्वेन निर्देशादितश्च कर्मत्वेनेति कारकप्रक्रमभङ्गस्तथापि वाक्यभेदाददोषः । कीदृशः । **कृतेति ।** कृतो विहितोऽपराध आगो येन स तथा । पुनः कीदृक् । संयतौ बद्धौ चरणौ पादौ यस्य स तथा । कैः । कुसुमदामभिः पुष्पमालाभिः । किंविशिष्टाभिः । **बकुलेति ।** वकुलः केसरस्तस्य कुसुमानां पुष्पाणामावलिः श्रेणिर्येषु तैः । **नखेति ।** नखानां पुनर्भवानां किरणा मयूखास्तैर्विमिश्रैः संपृक्तैः । अथ च प्रणयिनीनां विशेषणानि—**संकेतेति ।** अमुकस्थले मयावश्यमागन्तव्यमिति संकेतस्तेन वञ्चिताभिर्निष्फलीभूताभिः । सागता, स्वयं तु नागत इति भावः । अत एवाबद्धा विरचिता भङ्गुरा वक्रा भृकुटयो याभिस्ताः । **आरणितेति ।** आरणितं शब्दायमानं यत्पारिहार्यं कङ्कणं तेन मुखरा वाचाला भुजलता यासां ताभिः । **कदाचिदिति ।** वकुलतरुः केसरवृक्षस्तद्वदिव विकाशं विकस्वरतामभजत प्राप्तवान् । तमेव विशिनष्टि—**कामिनीति ।** कामिनीनां स्त्रीणां यो गण्डूषश्चुलुकस्तस्य यत् सीधु मद्यं

---

**टिप्प०**—1 चटुलाभ्यां चलिताभ्यां तुलाकोटिभ्यां नूपुराभ्यां वाचालयोः चरणयोः अलक्तकेन सिक्तं हंसमिथुनम् (नूपुररवाकृष्टौ हंसदम्पती) यस्मिन् तत् । इति व्याख्यानमुचितम् । 2 'कुसुमनिकरशारम्' इत्येव पाठः । अलकनिपतितैः कुसुमनिकरैः शारं चित्रमिति तद्व्याख्या । 3 प्लवमानानि जलोपरि संतरन्ति कर्णपूराणाम् आकण्ठमग्नमहिलाकर्णाभरणीकृतानां कुवलयानां नीलोत्पलायनां दलानि यस्मिन् तत् । इति व्याख्योचिता । 4 उच्छिन्ननालत्वाज्जलोपरि पतितानि यानि कमलानि, इत्यर्थः । 5 समस्तं दिवसमभिव्याप्येत्यर्थः । प्रतिदिनताडनार्थस्तु टीकाकारस्य राजनि परमानुग्रह एव ।

---

**पाठा०**—१ धवलोर्मि. २ अलक्त. ३ कुसुमनिकरसारम्. ४ कर्णकुवलय. ५ संक्षोभ. ६ करतल. ७ विस्फुरत्. ८ भृकुटीभिः, भ्रुकुटिभिः, भ्रकुटीभिः. ९ मणिपारिहार्य. १० आवलीसंयत. ११ कामिनीनां गण्डूष. १२ आस्वादन.

जत । कदाचिदशोकपादप इव युवतिचरणतलप्रहारसंक्रान्तालक्तको रागमुवाह[1] । कदाचिन्मुसलायुध इव चन्दनधवलः[2] कण्ठावसक्तोल्लसल्लोलकुसुममालः[3] पानमसेवत । कदाचिद्गन्धगज इव मदरक्तकपोलदोलायमानकर्णपल्लवो[4] मदकलः काननं विकचवनलताकुसुमसुरभिपरिमलं जगाहे । कदाचित्क्वणितमणिनूपुरनिनादानन्दितमानसो हंस इव कमलवनेषु रेमे । कदाचिन्मृगपतिरिव स्कन्धावलम्बिकेसरमालः क्रीडार्पर्वतेषु विचचार । कदाचिन्मधुकर इव विजृम्भमाणकुसुममुकुलदन्तुरेषु लतागृहेषु बभ्राम । कदाचिन्नीलपटविरचितावगुण्ठनो बहुलपक्षप्रदोषदत्तसंकेताः सुन्दरीरभिससार । कदाचिच्च विघटितकनककपाटं प्रक-

---

तस्य धारा पङ्क्तिस्तस्या यः स्वादस्तेन मुदितो हर्षितः । **कदाचिदिति** । अशोकपादपः कङ्केल्लिवृक्षस्तद्वदिव । अशोकसाम्यं प्रदर्शयन्नाह—**युवतीति** । युवतीनां स्त्रीणां यश्चरणतलप्रहारः पादतलाभिघातस्तेन संक्रान्तो लग्नोऽलक्तको यस्य स तथा रागमनुरागमुवाहावहत् । 'वह प्रापणे' इति धातोरभ्याससंप्रसारणे लिटि रूपम् । **कदाचिदिति** । पूर्ववत् । मुसलायुधो बलभद्रस्तद्वदिव । तत्साम्यमाह—**चन्दनेति** । चन्दनेन हरिचन्दनाङ्गरागेण धवलः शुभ्रः । पक्षे चन्दनवद्धवलः । **कण्ठेति** । कण्ठावसक्तोल्लसन्ती लोला कुसुममाला यस्य स तथा पानं मद्यपानमसेवताभजत । **कदाचिदिति** । गन्धगजो गन्धहस्ती तद्वदिव काननं वनं जगाहे विलोडयामासेत्यन्वयः । कीदृशः । **मदेति** । मदेन रक्तो यः कपोलस्तस्मिन्दोलायमानः कर्णपल्लवो यस्य स तथा । मदकलो मदेन कलो मनोहरो विकचानि विकस्वराणि यानि वनलताकुसुमानि तेषां सुरभिः परिमलो यस्मिन् । **कदाचिदिति** । हंस इव मराल इव कमलवनेषु नलिनकाननेषु रेमेऽरमत । कीदृशः । **क्वणितेति** । क्वणितानि शब्दितानि यानि मणिनूपुराणि रत्नपादाङ्गदानि तेषां निनादः शब्दस्तेनानन्दितं मुदितं मानसं यस्य तथा । पक्षे क्वणितमणिनूपुरवद्यो निनादस्तेनानन्दितं मानसं सरो येनेति विग्रहः । **कदाचिदिति** । मृगपतिरिव महानाद इव क्रीडापर्वतेषु क्रीडाशैलेषु विचचार व्यहार्षीत् । तमेव विशिनष्टि—**स्कन्धेति** । स्कन्धावलम्बिनी केसरोपयुक्ता माला स्रग्यस्य स तथा । पक्षे स्कन्धावलम्बिनी केसरमाला सटापङ्क्तिर्यस्येति विग्रहः । **कदाचिदिति** । मधुकर इव भ्रमर इव लतागृहेषु वल्लीगृहेषु बभ्राम भ्रमणं चकार । कीदृशेषु लतागृहेषु । **विजृम्भेति** । विजृम्भमाणानि यानि कुसुममुकुलानि तैर्दन्तुरेषु विषमेषु । **कदाचिदिति** । सुन्दरीः प्रमदा अभिससार सेवितवान् । कीदृक् । **नीलेति** । नीलपटेन श्यामपटेन विरचितं विहितमवगुण्ठनं शिरोवेष्टनं येन स तथा । सुन्दरीर्विशिनष्टि—**बहुलेति** । बहुलपक्षस्य कृष्णपक्षस्य यः प्रदोषो यामिनीमुखं तत्र दत्तः संकेतो याभिस्ताः । **कदाचिच्चेति** । अवरोधस्यान्तःपुरस्य संगीतकं नृत्यादि ददर्शाद्राक्षीदित्यन्वयः । केषु । प्रासादा भूपगृहास्तेषां कुक्षयो मध्यभागास्तेषु । तानेव विशिनष्टि—**विघटितेति** । विघटितमुद्घाटितं कनककपाटं स्वर्णकपाटं यथा स्यात्तथेति क्रियाविशेषणम् । प्रकटा वातायनाः स्पष्ट-

---

**टिप्प०**—1 रत्ननिर्मितानि पादभूषणानि ( मञ्जीराः ) इत्यर्थः । अङ्गदस्तु भुजे प्रसिद्धः । 2 वास्तवे तु हंसपक्षेऽप्ययमेवार्थः । कामिनीनुपूररवेण तस्यापि मनःप्रहर्षस्य प्रसिद्धत्वात् । 3 बकुलमाला, इत्यर्थः ।

---

**पाठा०**—१ अलक्तकरसो रागम्. २ धवलकण्ठ. ३ कण्ठावसक्तलोल; कण्ठावसक्तसमुल्लसल्लोल. ४ पल्लवः कुसुमसुरभि. ५ विकस्वर. ६ क्वणन्. ७ स्कन्धावलम्बित. ८ पर्वतकेषु. ९ कदाचिद्वनलताग्रथितमौलिर्नक्तमालकुसुमस्तवकरचितशेखरः शुकपक्षरागमधरयता नलिनीदलकोमलेन हरितकञ्चुकेनावच्छिन्नशरीरावयवः कोदण्डदण्डसनाथीकृतवामेतरांसदेशः पुरः प्रधावितानेकश्वगणिवागुरिकैरुपदिश्यमानवर्त्मानेकपक्षिजातिसमालम्बनव्यग्रपाणिभिः परिहासपेशलं सवयोभिरनुगम्यमानो मृगयारसविद्धचेताः सुचिरं गिरिनदिकारण्यप्रसरेषु परिबभ्राम । कदाचिन्नीलपटकृतावगुण्ठनः. १० पटावगुण्ठनः पटरचितावगुण्ठनः. ११ बहुलनिशाप्रदोष. १२ कदाचिद्विघटित. १३ कपाटप्रकट.

टवातायनेष्वनवरतदह्यमानकृष्णागुरुधूमरक्तैरिव पारावतैरधिष्ठितविटङ्केषु प्रासादकुक्षिषु कतिपयाप्तसुहृत्परिवृतो वीणावेणुमुरजमनोहरमवरोधसंगीतकं ददर्श । किं बहुना यद्यदतिरमणीयमविरुद्धमायत्यां तदात्वे च तत्तदनाक्षिप्तचेताः परिसमाप्तत्वादन्येषां पृथिवीव्यापाराणां सिषेवे, न त्वतिव्यसनितया । प्रमुदितप्रजस्य परिसमाप्तसकलमहीप्रयोजनस्य नरपतेर्विषयोपभोगलीला भूषणम् । इतरस्य तु विडम्बना । प्रजानुरागहेतोरन्तरान्तरा दर्शनं ददौ । सिंहासनं च निमित्तेष्वारुरोह ।

शुकनासोऽपि महान्तं राज्यभारमनायासेनैव प्रज्ञाबलेन बभार । यथैव राजा कार्याण्यकार्षीत्तद्वदसावपि द्विगुणीकृतप्रजानुरागो राजकार्याणि चक्रे । तमपि चलितचूडामणिमरीचि-

---

गवाक्षा येषु । **अनवरतेति** । अनवरतं निरन्तरं दह्यमानो यः कृष्णागुरुः काकतुण्डस्तस्य धूमो दहनकेतनस्तेन रक्तैरिव रञ्जितैरिव । एवंभूतैः पारावतैः कलरवैरधिष्ठिता आश्रिता विटङ्काः कपोतपाल्यो येषु । **कतीति** । कतिपयाः कियन्तो य आप्ताः प्रत्ययिताः । 'आप्तप्रत्ययितौ समौ' इति कोशः । एवंविधाः सुहृदो मित्राणि तैः परिवृतः सहित इति राज्ञो विशेषणम् । वीणा वल्लकी, वेणुर्वंशः, मुरजो मृदङ्गः, तैर्मनोहरमतिरमणीयम् । संगीतविशेषणम् । **किं बहुनेति** । किं बहुवक्तव्येन । यद्यदनिर्दिष्टनामकं वस्त्वतिरमणीयमायत्यामुत्तरकाले । 'आयतिस्तूत्तरः कालः' इति कोशः । **तदात्वे चेति** । 'तत्कालस्तु तदात्वं स्यात्' इति कोशः । अविरुद्धं नीतिशास्त्राप्रतिषिद्धं तत्तत्सिषेवे सेवितवान् । अतिसुन्दरेण वस्तुनाक्षिप्तश्चेत्तदा व्यसनमेवेत्याह—**अनाक्षिप्तेति** । अनाक्षिप्तमनाकुलं चेतो यस्य स तथा । अत्रार्थे हेतुं प्रदर्शयन्नाह—**परीति** । अन्येषां पृथिवीव्यापाराणां परिसमाप्तत्वात्परिपूर्णीभूतत्वात् न त्वतिव्यसनितया तदासक्ततयेत्यर्थः । एतदेवार्थान्तरन्यासेन विवृणोति—**प्रमुदितेति** । प्रमुदिता मुदं प्रापिताः प्रजाः प्रकृतयो येन स तथा तस्य । **परीति** । परिसमाप्तं परिपूर्णीकृतं सकलं समग्रं महीप्रयोजनं वसुधाकृत्यं यस्यैवंभूतस्य नरपतेः । **विषयेति** । विषयाः स्रक्चन्दनादयस्तेषामसक्तदुपभुज्यन्त इत्युपभोगास्तेषां लीला क्रीडा भूषणमलंकारः । आदरातिशयाभावेनेत्यर्थः । 'असक्तः सुखमन्वभूत्' इत्युक्तत्वात् । इतरस्य त्वेतद्भिन्नस्य तु विडम्बना राजकृत्यासाधकत्वेन व्यसनमेव । **प्रजेति** । प्रजायाः प्रकृतेरनुरागः स्नेहस्तस्य हेतोस्तदर्थमन्तरान्तरा मध्ये मध्ये दर्शनं जनानां सौधावलोकनं ददौ दत्तवान् । असकृद्बहिर्गमनमनादरहेतुरिति भावः । **सिंहेति** । निमित्तेषु तथाविधकारणेषु[1] सिंहासनं नृपासनमारुरोहारूढवान् । **शुकनासोऽपीति** । शुकनासनामा मन्त्री[2]रपि महान्तं गरिष्ठमपि राज्यभारमाधिपत्यधुरमनायासेनैव प्रयासं विना प्रज्ञाबलेन राजनीतिबलेन बभार दध्रे । **यथैवेति** । यथा येन प्रकारेण राजा नृपः कार्याणि कृत्यान्यकार्षीत्कृतवांस्तद्वदसौ शुकनासोऽपि । **द्विगुणीति** । पूर्वस्माद्द्विगुणीकृतोऽधिकीकृतः प्रजायाः प्रकृतेरनुरागः स्नेहो येन स तथा राजकार्याणि स्वस्वामिकृत्यानि चक्रेऽकार्षीत् । **तमपीति** । तं शुकनासमपि राजकं राजसमूह आननाम नमश्चक्रे । कैः । मौलिभिर्मस्तकैः कीदृशैः । चलिताः कम्पिता ये चूडामणयः शिरोमणयस्तेषां या मरीचिमञ्जर्यस्तासां जालं येषु तैः ।

---

**टिप्प०**—1 विचारसापेक्षेषु शासनव्यापारेषु, पर्वोत्सवादिषु वा । 2 मन्त्रीत्यर्थः ।

---

**पाठा०**—१ पारापतैः. २ अध्यासित. ३ महाप्रासाद. ४ मनोहरतममन्तःपुरसंगीतकम्; मनोहरमन्तःपुरसंगीतकम्. ५ किं च बहुना. ६ अभिमतमविरुद्धम्. ७ आयत्या. ८ न तु व्यसनितया. ९ प्रजस्य हि. १० महीमण्डलप्रयोजनस्य. ११ विषयसंभोग. १२ हेतोश्चान्तरान्तरा; हेतोश्चान्तरा. १३ शुकनासोऽपि राज्यभारम्. १४ महान्तं तम्; महान्तमपि. १५ यथैव च. १६ सर्वकार्याणि. १७ द्विगुणीकृतः प्रजानुरागश्चक्रे. १८ चकार. १९ चावलित.

मञ्जरीजालिभिर्मौलिभिरावर्जितकुसुमशेखरच्युतमधुसीकरसिक्त[1]नृपसभं दूरावनतिप्रेङ्खोलित[2]मणिकुण्डलकोटिसंघट्टिताङ्गदं राजकमाननाम । तस्मिन्नपि चलिते[3] चलितचटुलतुरगबलमुखरखुररवबधिरीकृतभुवना[4]न्तरालाः, बलभरप्रचल[5]वसुधातलदोलायमानगिरयः, गलन्मदान्धगन्धगजदानधारान्धकाराः, संसर्पदतिबहुल[6]धूलिपटल[7]धूसरितसिन्धवः, प्रचलत्पदातिब[8]लकलकलरवस्फोटित[9]कर्णविवराः[10], सरभसोद्घुष्यमाणजयशब्दनिर्भराः[11], प्रोद्धूयमानधवलचामरसहस्रसंछादिताः, पुञ्जितनरेन्द्रवृन्दकनकदण्डातपत्रसंघट्ट[12]नष्टदिवसा दश दिशो बभूवुः ।

एवं तस्य राज्ञो मन्त्रिविनिवेशित[13]राज्यभारस्य यौवनसुखमनुभवतः कालो[14] जगाम । भूयसा च कालेनान्येषामपि जीवलोकसुखानां प्रायः सर्वेषामन्तं ययौ । एकं तु सुत[15]मुखदर्शनसुखं न लेभे । तथोप[16]भुज्यमानमपि निष्फलपुष्पदर्शनं शरवणमिवान्तःपुरम[17]भूत् । यथा[18] यथा

---

राजकं विशेषयन्नाह—आवर्जितो धृतो यः कुसुमशेखरः पुष्पावतंसस्तस्माच्च्युताः स्रस्ता ये मधुसीकरा रसविन्दवस्तैः सिक्ता सिञ्चिता नृपसभा राजपरिषद्येन तत् । **दूरेति** । दूराद्दूरप्रदेशाद्यावनतिः प्रणामस्तत्र प्रेङ्खोलितान्यान्दोलितानि यानि मणिकुण्डलानि रत्नकर्णाभरणानि तेषां कोटयोऽग्रभागास्तैः संघट्टितं संघर्षितमङ्गदं बाहुकटकं यस्य तत्तथा । **तस्मिन्निति** । तस्मिन्नपि शुकनासे चलिते प्रस्थिते सत्येवंभूता दश दिशो बभूवुः । कीदृशाः । **चलितेति** । चलिताः प्रस्थिताश्चटुलाश्चपलास्तुरगा अश्वा यस्मिन्नेवंभूतं यद्बलं सैन्यं तस्य मुखरा वाचाला ये खुराः शफास्तेषां रवः शब्दस्तेन बधिरीकृतानि भुवनान्तरालानि मध्यभागा यासु ताः । **बलेति** । बलभरेण सैन्यभारेण प्रचलं कम्पितं यद्वसुधातलं पृथ्वीतलं तेन दोलायमानाः कम्पायमाना[1] गिरयः पर्वता यासु ताः । **गलदिति** । गलन्तः स्रवन्तो ये मदान्धा मदोन्मत्ता गन्धगजा गन्धेभास्तेषां दानधारा मदपङ्क्तय एवान्धकारा यासु ताः । **संसर्पदिति** । संसर्पदूर्ध्वं गच्छद्यदतिबहुलमतिदृढं धूलिपटलं रजःसमूहस्तेन धूसरिता धूसरवर्णीकृताः सिन्धवो नद्यो यासु ताः । **प्रचलदिति** । प्रचलद्गच्छद्यत्पदातीनां पत्तीनां बलं सैन्यं तस्य कलकलः कोलाहलस्तल्लक्षणो यो रवः शब्दस्तेन स्फोटितानि भेदं प्रापितानि कर्णविवराणि श्रवणविवराणि यासु ताः । **सरभसेति** । सरभसं वेगेनोद्घुष्यमाणो यो जयजयेति शब्दस्तेन निर्भराः । भृता इत्यर्थः । **प्रोद्धूयेति** । प्रोद्धूयमानानि वीज्यमानानि यानि धवलचामरसहस्राणि तैः संछादिता आच्छादिताः । **पुञ्जितेति** । पुञ्जितं संघीभूतं यन्नरेन्द्रवृन्दं तस्य यानि कनकदण्डा[2]न्यातपत्राणि छत्राणि तैः संघट्टो विमर्दस्तेन नष्टा दिवसा यासु ताः ।

**एवमिति** । एवं पूर्वोक्तप्रकारेण तस्य राज्ञस्तारापीडस्य मन्त्रिण्यमात्ये विनिवेशितः स्थापितो राज्यभारो येन स तथा तस्य यौवनसुखं तारुण्यसौख्यमनुभवतोऽनुभवविषयीकुर्वतः कालोऽनेहा जगाम गतवान् । भूयसा भूयिष्ठेन कालेन प्रायो बाहुल्येनान्येषामपि जीवलोकसुखानां प्रजालोकसुखानां सर्वेषामन्तं पारं ययौ । लोकानामपि सर्वविषयानुभवो जात इत्यर्थः । **एकं त्विति** । तु पुनरर्थे । सुतमुखदर्शनजनितं यत्सुखं तदेकं न लेभे न प्राप । **तथेति** । तथा तेन प्रकारेणोपभुज्यमानमुपभोगविषयीक्रियमाणमपि शरवणमिवान्तःपुरमभूत् । उभयं विशिनष्टि—**निष्फलेति** । निर्गतं फलं यस्मादेवंभूतं पुष्पं प्रसूनं रजश्च स्त्रीणां तस्य दर्शनं यस्मिन् । **यथेति** । यथा यथा येन येन प्रकारेण यौवनं तारुण्यमतिचक्रामातिक्रमितवान् ।

---

**टिप्प०**—1 कम्पमाना इत्याशयः । 2 कनकनिर्मिता दण्डा येषां तानीत्यर्थः ।

---

**पाठा०**—१ सिक्तनृपसभदूरावनतिम्; सिक्तसभं दूरावनति. २ प्रेङ्खित. ३ चलति चटुलतुरंग. ४ भुवनाः. ५ बलप्रचल. ६ बहल. ७ धूलिप्रबलपदातिबल. ८ प्रबलपदाति. ९ कलकलस्फोटित. १० श्रवणविवराः. ११ निरन्तराः. १२ संघट्टन. १३ मन्त्रिनिवेशित. १४ कश्चित्कालो. १५ तनय; तोक. १६ संभुज्यमानम्. १७ अभवत्. १८ यथा यथा यौवनम्.

च यौवनमतिचक्राम, तथा तथा विफलमनोरथस्यानपत्यताजन्मावर्धतास्य संतापः । विषयोपभोगसुखेच्छाभिश्च मनो विजज्ञे । नरपतिसहस्रपरिवृतमप्यसहायमिव, चक्षुष्मन्तमप्यन्धमिव, भुवनालम्बनमपि निरालम्बमिवात्मानममन्यत ।

अथ तस्य चन्द्रलेखेव हरजटाकलापस्य, कौस्तुभप्रभेव कैटभारातिवक्षःस्थलस्य, वनमालेव मुसलायुधस्य, वेलेव सागरस्य, मदलेखेव दिग्गजस्य, लतेव पादपस्य, पुष्पोद्गतिरिव सुरभिमासस्य, चन्द्रिकेव चन्द्रमसः, कमलिनीव सरसः, तारापङ्क्तिरिव नभसः, हंसमालेव मानसस्य, चन्दनवनराजिरिव मलयस्य, फणामणिशिखेव शेषस्य, भूषणमभूत्त्रिभुवनविस्मयजननी जननीव वनिताविभ्रमाणां सकलान्तःपुरप्रधानभूता महिषी विलासवती नाम । एकदा च स तदावासगतस्तां चिन्तास्तिमितदृष्टिना शोकमूकेन परिजनेन परिवृताम्, आदरावस्थितैश्च ध्यानानिमिषलोचनैः कञ्चुकिभिरुपास्यमानाम्, अनतिदू-

---

तथा तथा तेन तेन प्रकारेण । **विफलेति** । विफलो निष्फलो मनोरथो यस्य स तथा तस्यास्य तारापीडस्य राज्ञः संतापो मानसी व्यथाऽवर्धत वृद्धिं प्राप । संतापं विशिनष्टि—**अनपत्येति** । अनपत्यताऽसंतानत्वं तस्माज्जन्मोत्पत्तिर्यस्य स तथा । **विषयेति** । विषयाणां स्रक्चन्दनादीनां य उपभोगोऽसक्तृद्भोगस्तज्जनितं यत्सुखं सातं तस्येच्छा अभिलाषास्ताभिर्मनश्चित्तं विजज्ञे विरक्तं बभूव । **नरेति** । नरपतीनां राज्ञां यत्सहस्रं तेन परिवृतं सहितमप्यसहायमद्वितीयमिव[1] चक्षुष्मन्तं सनेत्रमप्यन्धमिव गताक्षमिव भुवनालम्बनमपि निरालम्बमिव निराधारमिवात्मानं स राजामन्यताज्ञासिष्ट ।

**अथेति** । तस्य राज्ञो विलासवती नाम महिषी पट्टराज्ञी भूषणमलंकृतिरभूदित्यन्वयः । कस्य केव । हरजटाकलापस्य शंभुजटाजूटस्य चन्द्रलेखेव शशिकलेव । **कैटभेति** । कैटभारातिर्विष्णुस्तस्य वक्षस्थलं भुजान्तरं तस्य कौस्तुभो मणिस्तस्य प्रभा कान्तिस्तयेव । मुसलायुधस्य बलभद्रस्य वनमालाभरणविशेषः सेव । सागरस्य समुद्रस्य वेलेव जलवृद्धिरिव । दिग्गजस्य दिङ्नागस्य मदलेखेव दानराजिरिव । पादपस्य वृक्षस्य लतेव वल्लीव । सुरभिमासस्य वसन्तमासस्य पुष्पोद्गतिरिव कुसुमोद्गम इव । चन्द्रमसः शशिनश्चन्द्रिकेव ज्योत्स्नेव । सरसः कासारस्य कमलिनीव नलिनीव । नभस आकाशस्य तारापङ्क्तिरिव नक्षत्रश्रेणिरिव । मानसस्य मानसाभिधसरसो हंसमालेव चक्राङ्गपङ्क्तिरिव । मलयस्य मलयाद्रेश्चन्दनवनराजिरिव मलयजवनश्रेणिरिव । शेषस्य नागाधिपस्य फणामणिशिखेव स्फुटरत्नज्वालेव । **त्रिभुवनेति** । त्रिभुवनस्य विष्टपत्रयस्य यो विस्मय आश्चर्यं तस्य जननी कारिणी । **वनितेति** । वनिताः स्त्रियस्तासां विभ्रमाणां भ्रूसमुद्भवानां[2] जननीव मातेव । **सकलेति** । सकलं समग्रं यदन्तःपुरमवरोधस्तस्मिन्प्रधानभूता मुख्या । **एकदेति** । एकदा एकस्मिन्समये स तारापीडस्तस्या विलासवत्या आवासं निवासस्थलं तत्र गतः संस्तां ददर्शाद्राक्षीत् । अथ च तस्या विशेषणानि—**चिन्तेति** । चिन्ता मानसी व्यथा तया स्तिमिता निश्चला दृष्टिर्दृग्यस्य स तेन । शोकेन शुचा मूकेन जडेनैवंभूतेन परिजनेन परिच्छदेन[3] परिवृतां सहिताम् । **आरादिति** । आराद्दूरादवस्थितैः कृतावस्थानैर्ध्यानेन चिन्तया निमिषरहिते लोचने येषां तैरेवंभूतैः कञ्चुकिभिः सौविदल्लैरुपास्यमानां सेव्यमानाम् । **अनतीति** । नातिदूरवर्तिनीभिरन्तःपुरवृद्धाभिरवरोधवृद्धस्त्रीभिराश्वास्यमानां भावि-

---

**टिप्प०**—1 द्वितीयेन सहायकेन शून्यम्, 'शून्यमपुत्रस्य गृहम्' इति न्यायादित्यर्थः । 2 विलासानामित्याशयः । 3 परिवारजनेन ।

---

**पाठा०**—१ निष्फल. २ महानवर्धत. ३ विजहे, विजगाहे. ४ भुवनालग्वनम्; भुवनावलम्ब्नम्. ५ निरालम्बनम्. ६ अनपत्यममन्यत. ७ अस्य. ८ कैटभारि. ९ कल्पपादपस्य. १० कुसुमोद्गतिः; कुसुमोन्नतिः. ११ तारका. १२ च तदावासमुपगत; च तदावासगत. १३ राजा राज्ञीमिव समुपागतः. १४ दीनदृष्टिना.

रवर्तिनीभिश्चान्तःपुरवृद्धाभिराश्वास्यमानाम्, अविरला[1]श्रुपातार्द्रीकृतदुकूलाम्, अनलंकृताम्, वामकरतलविनिहितमुखकमलाम्, असंयताकुलालकाम्, सुनिबिड[2]पर्यङ्किकोपविष्टाम्, रुदतीं[3] ददर्श। कृता[4]भ्युत्थानां च तां तस्यामेव पर्यङ्किकायामुपवेश्य[5] स्वयं चोपविश्याविज्ञातबाष्प[6]कारणो भीतभीत इव करतलेन विगतबाष्पाम्भःकणौ कुर्वन्कपोलौ भूपाल[7]स्तामवादीत्—

'देवि, किमर्थमन्तर्गतगुरुशोकभारमन्थरमशब्दं रुद्यते। ग्रथ्नन्ति हि मुक्ताफलजालकमिव बाष्पबिन्दुनिकरमेतास्तव[8] पक्ष्मपङ्क्तयः। किमर्थं च कृशोदरि, नालंकृतासि। बालातप इव रक्तारविन्दकोशयोः[9] किमिति न पातितश्चरणयोरयमलक्तकरसः[10]। कुसुमशरसरःकलहंसकौ कस्मात्पादपङ्कजस्पर्शेन नानुगृहीतौ मणिनूपुरौ। किंनिमित्तमयमपगत[11]मेखलाकलापमूको मध्यभागः।

---

फलप्रशंसया विश्वास्यमानाम्। **अविरलेति**। अविरला निबिडा येऽश्रुपाता नेत्रजलपातास्तैरार्द्रीकृतं क्लिन्नीकृतं दुकूलं दुगूलं यया सा ताम्। अनलंकृतामविभूषितां वामकरतलेऽपसव्यपाणितले विनिहितं स्थापितं मुखकमलमाननपद्मं यया सा ताम्। अनेन खेदातिशयद्योतकः स्त्रीजातिस्वभावोऽभिहितः। **असंयतेति**। असंयता असंबद्धा आकुला इतस्ततः पर्यस्ता अलकाः कचा यस्यास्ताम्। क्षुद्रः पर्यङ्कः पर्यङ्किका। सुनिबिडा दृढा या पर्यङ्किकोपवेशनमञ्चिका तस्यामुपविष्टामासेदुषीं रुदतीं रुदनं कुर्वाणाम्। अन्वयस्तु प्रागेवोक्तः। **कृतेति**। कृतं विहितमभ्युत्थानं संमाननं यया सा ताम्। तां विलासवतीं तस्यामेव पूर्वोक्तायामेव पर्यङ्किकायामुपवेश्य संस्थाप्य स्वयं चात्मनान्यत्रोपविश्य। स्त्रीपुंसोरेकत्रावस्थितेरयोग्यत्वात्। तदनन्तरं च भूपालस्तामवादीदित्यन्वयः। स्वयं चेत्यनेन विलासवत्या उपवेशानन्तरं स्वस्योपवेशनेन शोकनिवारक आदरातिशयः सूचितः। **अविज्ञातेति**। अविज्ञातमविदितं बाष्पस्याश्रुपातस्य कारणं नियामकं[1] येन स तथेति राज्ञो विशेषणम्। भीतभीत इव त्रस्तत्रस्त इव। स्नेहातिशयद्योतनार्थं वीप्सा। करतलेन पाणितलेन विगतौ दूरीभूतौ बाष्पाम्भसो नेत्रजलस्य कणौ ययोरेवंभूतौ कपोलौ कुर्वन्निति राजविशेषणम्। अन्वयस्तु प्रागेवोक्तः। किं तदित्याह— **देवीति**। हे देवि, किमर्थं किंप्रयोजनम्। **अन्तरिति**। अन्तर्गतो गूढपथगतो यो गुरुशोको गरिष्ठशुक्तस्य भारो भरस्तेन मन्थरमनुद्भटमशब्दं शब्दवर्जितं रुद्यते रोदनं क्रियते। अत्राशब्दमित्यनेन धीरायाः स्वभावः प्रदर्शितः। अधीरायास्तु[2] सशब्दं रोदनं स्यादिति भावः। श्वेतवर्तुलत्वसाम्यात्तदुपमानमाह—**ग्रथ्नन्तीति**। एतास्तव पक्ष्मपङ्क्त्यो नेत्ररोमराजयो मुक्ताफलजालकमिव मुक्ताकलापमिव बाष्पबिन्दुनिकरमश्रुकणसमूहं ग्रथ्नन्ति ग्रथनं कुर्वन्ति। हे कृशोदरि क्षामकुक्षि, किमर्थं किंनिमित्तं नालंकृतासि न भूषितासि। किमिति प्रश्ने। रक्तारविन्दकोशयोर्लोहितकमलमुकुलयोर्बालातप इव तत्कालोदितसूर्यालोक इव चरणयोः पादयोरयमलक्तकरसो यावकद्रवो न पातितो न न्यस्तः। कोमलमुकुलाकारसाम्याच्चरणयोः कोशसाम्यम्। आरक्तसाम्यादलक्तकरसे बालातपसाम्यम्। **कुसुमेति**। कुसुमशरस्य मदनस्य यत्सरः कासारस्तस्य कलहंसाविव कलहंसावनुरणनसाम्यान्मणिनूपुरौ पादकटके कस्माद्धेतोः पादपङ्कजस्पर्शेन चरणकमलसंस्पर्शेन नानुगृहीतौ न प्रसादपात्रीकृतौ। **किंनिमित्तमिति**। किंनिमित्तं किंनिदानमयमपगतो यो मेखला कटिसूत्रं तस्य कलापः समूहस्तेन मूको जडो[3] मध्यभागो मध्यप्रदेशः। मेखलाया एकत्वेऽपि किङ्किण्यपेक्षया कलापेत्युक्तं विवि-

---

**टिप्प०**—1 हेतुरित्यर्थः। 2 अत्र धीराऽधीरादिभेदगवेषणं साहित्यज्ञताऽभिनयमात्रं टीकाकारस्य। प्रणयकोपे एव धीराधीरादिभेदानां प्रयोगदर्शनात्। किञ्च–मानेऽपि सशब्दं रोदनं न अधीरायाः स्वभावः, अपि तु धीराऽधीराया एव। यथाहि साहित्यदर्पणे—'प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा। धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः॥' 3 निःशब्द इत्यर्थः।

---

**पाठा०**—१ अश्रुबिन्दु. २ निबिड. ३ देवीम्; रुदतीं देवीम्. ४ कृतप्रत्युत्थानाम्; कृतप्रत्यभ्युत्थानाम्. ५ उपविश्य. ६ बाष्पवेग. ७ भूमिपालः. ८ तवायताः. ९ कोशयोरयम्. १० चरणयोरलक्तक. ११ किंनिमित्तमपगत.

किमिति[1] च हरिण इव हरिणलाञ्छने न लिखितः[2] कृष्णागुरुपत्रभङ्गः[3] पयोधरभारे। केन कारणेन तन्वीयं हर[4]मुकुटचन्द्रलेखेव गङ्गास्रोतसा न विभूषिता[5] हारेण वरोरु[6], शिरोधरा[7]। किं वृथा वहसि विलासिनि स्रवदश्रुजललवधौतपत्रलतं[8] कपोलयुगम्[9]। इदं च कोमलाङ्गुलिदलनिकरं[10] रक्तोत्पलमिव करतलं किमिति कर्णपूरतामारोपितम्। इमां च केन हेतुना[11] मानिनि, धारयस्यनुपरचितगोरोचनाबिन्दुतिलकामसंयमितालकिनीं[12] ललाटरेखाम्। अयं च[13] ते बहुलपक्षप्रदोष इव चन्द्रलेखाविरहितः करोति मे दृष्टिखेदमतिबहुलतिमिरपटलान्धकारः[14] कुसुमरहितः केशपाशः[15]। प्रसीद, निवेदय[16] देवि, दुःखनिमित्तम्। एते हि पल्लवमिव सरागं मे[17] हृदयमाकम्पयन्ति[18] तरलीकृतस्तनांशुकास्तवायताः[19] श्वासमरुतः[20]। कच्चिन्मयापरा-[21]

---

धमणिद्युतिसाम्यात्। मेखलैव कलापः प्रचलाक इति वा। **किमिति चेति**। हरिणलाञ्छने चन्द्रे हरिण इव पयोधरभारे स्तनाभोगे कृष्णागुरुः काकतुण्डस्तस्य द्रवेण यः पत्रभङ्गो रचनाविशेषः किमिति हेतोर्न लिखितो न लिपीकृतः। अत्र गौरत्ववर्तुलत्वकिंचित्कृष्णत्वसाम्याच्चन्द्रस्तनभारयोः साम्यम्। गौरकृष्णत्वसाम्याच्च हरिणकृष्णागुर्वोः साम्यम्। **केनेति**। हे वरोरु, केन कारणेनेयं तन्वी शिरोधरा ग्रीवा हारेण मुक्ताकलापेन न विभूषिता नालंकृता। केनेव गङ्गास्रोतसा स्वर्धुनीप्रवाहेण हरमुकुटो जटाजूटस्तस्मिन्या चन्द्रलेखा शशिकलेव। **किं वृथेति**। हे विलासिनि, स्रवत्क्षरद्यदश्रुजलं नेत्रजलं तस्य लवा बिन्दवस्तैर्धौता क्षालिता पत्रलता पत्रभङ्गिर्यस्मिन्नेवंभूतं यत्कपोलयुगं वृथा मुधा किं वहसि किं धारयसि। **इदं चेति**। कोमलानि मृदूनि यान्यङ्गुलिदलानि तेषां निकरः समूहो यस्मिन्नेवंभूतं करतलं हस्ततलं रक्तोत्पलमिव कोकनदमिव। किमिति हेतोः कर्णपूरतां श्रवणाभरणतामारोपितं स्थापितम्। **इमां चेति**। हे मानिनि हे गर्वयुक्ते, केन हेतुना केन कारणेन इमां प्रत्यक्षगतां ललाटरेखामलिकराजीं धारयसि धत्से। तां विशेषयन्नाह—**अन्विति**। अनुपरचितमविहितं गोरोचना प्रसिद्धा तस्या बिन्दुभिस्तिलकं पुण्ड्रं यस्याः सा ताम्, असंयमिता असंबद्धा अलकाः केशा विद्यन्ते यस्याः सा ताम्। **अयं चेति**। अयं ते तव कुसुमरहितः पुष्पशून्यः केशपाशः कुन्तलकलापो मे मम दृष्टिखेदं करोति प्रणयतीत्यन्वयः। क इव। बहुलपक्षप्रदोष इव बहुलपक्षः कृष्णपक्षस्तस्य प्रदोषो यामिनीमुखं तद्वदिव। अत्र प्रदोषेऽपि शुक्लपक्षे चन्द्रलेखादर्शनाद्बहुलग्रहणम्। बहुलपक्षेऽपि पश्चिमरात्रौ चन्द्रनक्षत्राणां दर्शनात्प्रदोषग्रहणम्। कीदृक्। चन्द्रलेखा शशिकला तया विरहितः। प्रदोषं विशेषयन्नाह—**अतीति**। अतिबहुलान्यतिदृढानि यानि तिमिरपटलानि तमोमण्डलानि तैरन्धकारो नेत्ररश्मीनामप्रसरो यस्मिन्स तथा। अत्र शुक्लत्वसाम्यात्कुसुमचन्द्रलेखयोः साम्यम्। कृष्णत्वसाधर्म्यात्केशकलापप्रदोषयोः साम्यम्। सान्त्वनोपक्रमेण चाटुवचनविस्तारमुपसंहरन्नाह—**देवीति**। हे देवि हे राज्ञि, प्रसीद प्रसन्ना भव। दुःखनिमित्तं मानसिकव्यथाकारणं निवेदय कथय। **एते हीति**। हि निश्चितम्। एते दृश्यमानास्तवायता विस्तीर्णाः श्वासमरुतो निःश्वासाः पल्लवमिव किसलयमिव सरागम्। राग आरुण्यं प्रीतिश्च तेन सह वर्तमानमित्यर्थः। एतेन पल्लवसाम्यता सूचिता। मे मम हृदयं चित्तमाकम्पयन्ति धूनयन्ति। श्वासमरुतो विशिनष्टि—**तरलीति**। तरलीकृतं चञ्चलीकृतं

---

**टिप्प०—1 अतिबहुलेत्यादिकं विशेषणं केशपाशेऽप्यन्वेति। कुसुमरहितः अत एव अतिबहुलतिमिरपटलवत् अन्धकारः केवलकृष्णवर्णः, इति तद्व्याख्या।**

---

**पाठा०**—१ किमिति हरिण. २ आलिखितः. ३ पङ्कपत्रभङ्गः. ४ मुकुटे. ५ भूपिता. ६ वरारोहे. ७ कंधरा. ८ धौतकुङ्कुमपत्रलतम्. ९ युगलम्. १० कोमलाङ्गुलिनिकरम्. ११ केन हेतुना. १२ असंस्कृतालकिनीमलिकलेखाम्. १३ च बहुल. १४ दृष्टिवेदनाम्. १५ अन्धकारः केशपाशः. १६ आवेदय. १७ मम. १८ कम्पयन्ति. १९ तवाधिजाः २० निःश्वासमारुताः. २१ कच्चित.

द्वमन्येन वा केनचिदस्मदनुजीविना[1] परिजनेन? अतिनिपुणमपि[2] चिन्तयन्न पश्यामि खलु स्खलितमप्यात्मनस्त्वद्विषये[3]। त्वदायत्तं हि मे जीवितं राज्यं[4] च। कथ्यतां सुन्दरि, शुचः कारणम्' इत्येवमभिधीयमाना[5] विलासवती यदा न किंचित्प्रतिवचः[6] प्रतिपेदे[7] तदा विवृद्ध-बाष्पहेतुमस्याः परिजनमपृच्छत्।

अथ तस्यास्ताम्बूलकरङ्क[8]वाहिनी[9] सततप्रत्यासन्ना मकरिका नाम राजानमुवाच—देव, कुतो देवादल्पमपि परिस्खलितम्। अभिमुखे च देवे का शक्तिः परिजनस्यान्यस्य वा कस्यचिदपराद्धुम्। किंतु[10] महाग्रहग्रस्तेव विफलराज[11]समागमासीत्ययमस्या देव्याः संतापः। महांश्च[12] कालः संतप्यमानायाः। प्रथममपि स्वामिनी दानवश्रीरिव सततनिन्दितसुरता शयनस्नान[13]भोजनभूषणपरिग्रहादिषु समुचितेष्वपि[14] दिवसव्यापारेषु कथंकथ-

---

स्तनांशुकं पयोधरवस्त्रं यैस्ते तथा। **कच्चिदिति**। कच्चित्प्रश्ने। मयास्मदनुजीविनास्मत्सेवकेन परिजनेन परिच्छदेनान्येन केनचिद्वापराद्धमपराधः कृतः। **अतीति**। अतिनिपुणमतिचतुरं चिन्तयन्नपि विचारयन्नपि त्वद्विषये। खलु निश्चयेन। आत्मनः स्वकीयस्य स्खलितम्[1]मपि वैगुण्यमपि न पश्यामि नावलोकयामि। **त्वदिति**। हि निश्चितम्। मे मम जीवितं प्राणितं राज्यं च त्वदायत्तम्। त्वदधीनमित्यर्थः। हे सुन्दरि, शुचः शोकस्य कारणं नियामकं कथ्यतां प्रतिपाद्यताम्। **इतीति**। इत्येवं पूर्वोक्तप्रकारेणाभिधीयमाना पृच्छ्यमाना विलासवती राजपत्नी यदा न किंचित्प्रतिवचः प्रत्युत्तरं प्रतिपेदे प्रतिपन्नवती। **तदेति**। तदा तेन प्रकारेणास्या विलासवत्या विवृद्धो वृद्धिं प्राप्तो यो बाष्पो नेत्राम्बु तस्य हेतुं कारणं परिजनमपृच्छदप्राक्षीत्। धातोर्द्विकर्मकत्वात्कर्मद्वयम्।

**अथेति**। नृपप्रश्नानन्तरं तस्यास्ताम्बूलकरङ्कः स्थगी तद्वाहिका मकरिकेति नाम यस्याः। अनुकरणशब्दत्वान्न ङीप्। राजानं तारापीडमुवाचाब्रवीदित्यन्वयः। कीदृशी। सततं निरन्तरं प्रत्यासन्ना निकटस्थायिनी। किमुवाचेत्याह—**देवेति**। हे देव हे स्वामिन्, देवात्तारापीडादधिपतेरल्पमपि स्वल्पमपि परिस्खलितं कुतः स्यात्। एतस्याः प्रीतिविषयेऽत्यन्तं सावधानत्वादिति भावः। अतश्चाभिमुख एतद्विषये लोकेनानुकूले ज्ञाते देवे राज्ञि परिजनस्यान्यस्य कस्यचित्तद्भिन्नस्यापराद्धुमपराधं कर्तुं का शक्तिः सामर्थ्यम्। न कापीत्यर्थः। तर्हि किमस्तीत्याशयेनाह—**किं त्विति**। महाग्रहो भूतादिग्रहस्तद्ग्रस्तेव तद्गृहीतेव। **विफलेति**। विगतं फलं पुत्रादिरूपं यस्मादेवंभूतो राजसमागमो राजसंभोगो यस्याः सा तथा। या महाग्रहग्रस्ता स्यात्सापि विफलराजसमागमा स्यात्। राजर[2]ङ्कयोर्विभेदं न जानातीत्यर्थः। अहमस्मीत्यस्या देव्या अयं संतापश्चित्तोद्वेगः। संतप्यमानायाः संतापं कुर्वत्या महान्कालो भूयाननेहा। गत इत्यध्याहार्यम्। प्रथममपि पूर्वमपि स्वामिनीयं सशोकेवासीदित्यन्वयः। तामेव विशिनष्टि—**दानवेति**। दानवस्यासुरस्य श्रीरिव लक्ष्मीरिव। उभयं विशिनष्टि—सततं निन्दितं सुरतं मैथुनं यया सा। पक्षे सुराणां समूहः सुरता। शेषं पूर्ववत्। **शयनेति**। शयनं स्वापः, स्नानमाप्लवः, भोजनमशनम्, भूषणपरिग्रह आभरणस्वीकारः, इत्यादिषु समुचितेष्वपि

---

**टिप्प०—1 'स्खलितमल्पमप्यात्मनः' इत्येत्र समुचितः पाठः। अल्पमपि आत्मनः स्खलितमिति अपिपदस्वारस्यात्। 2 न किञ्चित्स्वारस्यमस्मिन्नर्थे। वास्तवे तु 'विफलनरेन्द्रसमागमा' इत्येवोचितः पाठः। महाग्रहेण पूतनादिना उत्कटभूतेन ग्रस्ता (आविष्टा) नारी विफलो नरेन्द्रस्य (भूतचिकित्सकस्य) समागम उपस्थितिर्यस्यास्तादृशी भवति (भूतापसारणस्याशक्यत्वात्)। इयं तु पुत्रजननाभावाद्विफलो राज्ञः समागमो यस्यास्तादृशीत्यर्थः।**

---

**पाठा०—१** उपजीविना. २ अतिनिपुणं चिन्तयन्. ३ स्खलितमल्पमपि. ४ जीवितं च राज्यं च. ५ अभिधीयमानापि यदा. ६ प्रतिवचनम्. ७ प्रपेदे. ८ करण्डक. ९ वाहिनी मकरिका. १० महाग्रह. ११ नरेन्द्र. १२ सुमहांश्च. १३ शयनाशनस्नान; शयनासनस्नान. १४ समुचितेषु दिवसव्यापारेषु.

मपि परिजनप्रयत्नात्प्रवर्त्यमाना[1] सशोकेवासीत् । देवहृदयपीडापरिजिहीर्षया[2] च न दर्शितवती विकारम् । अद्य[3] तु चतुर्दशीति भगवन्तं महाकालमर्चितुमितो[4] गतया तत्र महाभारते वाच्यमाने श्रुतम्—'अपुत्राणां[5] किल न सन्ति लोकाः शुभाः । पुंनाम्नो नरकात्त्रायत इति पुत्रः' इत्येतच्छ्रुत्वा भवनमागत्य परिजनेन सशिरःप्रणाममभ्यर्थ्यमानापि नाहारमभिनन्दति, न भूषणपरिग्रहमाचरति, नोत्तरं प्रतिपद्यते । केवलमविरलबाष्प[6]दुर्दिनान्धकारितमुखी रोदिति । एकदाकर्ण्य देवः प्रमाणम्' इत्येतदभिधाय[7] विरराम । विरतवचनायां तस्यां[8] भूमिपालस्तूष्णीं मुहूर्तमिव स्थित्वा दीर्घमुष्णं च निश्वस्य निजगाद—'देवि, किमत्र क्रियतां दैवायत्ते वस्तुनि । अलमतिमात्रं रुदितेन[9] । न[10] वयमनुग्राह्याः प्रायो देवतानाम् । आत्मजपरिष्वङ्गामृतास्वादसुखस्य नूनमभाजनमस्माकं हृदयम् । अन्यस्मिञ्जन्मनि न कृतमवदातं कर्म । जन्मान्तरकृतं[11] हि कर्म फलमुपनयति पुरुषस्येह-

---

योग्येष्वपि दिवसव्यापारेषु दिनकृत्येषु कथंकथमपि महता कष्टेन परिजनः परिच्छदस्तस्य प्रयत्न आग्रहस्तेन प्रवर्त्यमाना प्रेर्यमाणा । अन्वयस्तु प्रागेवोक्तः । तर्हि मया कथं न ज्ञातेत्याशयेनाह—**देवेति** । देवो भवांस्तस्य या हृदयपीडा चेतसोऽस्वास्थ्यं तस्याः परिजिहीर्षा परिहर्तुमिच्छा तया च विकारं शोकज्ञसिलक्षणं न दर्शितवती न ज्ञापितवती । तर्ह्यद्य कथं तत् (स) प्रदर्शित इत्याशयेनाह—**अद्येति** । तु पुनरर्थे । अद्य चतुर्दशीति कृत्वा भगवन्तं माहात्म्यवन्तं महाकालमर्चितुं पूजितुमितो गृहाद्गतया तत्र महाकालप्रासादे महाभारते शास्त्रे वाच्यमाने पठ्यमाने श्रुतमाकर्णितम् । किमित्याशङ्कायामाह—**अपुत्राणामिति** । अपुत्राणां सुतवर्जितानाम् । किलेति सत्ये । शुभा लोका देवलोका न सन्ति न विद्यन्ते । अत्रार्थे पुत्रशब्दव्युत्पत्तिं प्रदर्शयन्नाह—**पुंनाम्न इति** । पुंनाम्नो नरकात्त्रायत इति पुत्रः । एतेन पुत्रोऽपि नरकत्रायको भवतीति ज्ञापितम् । **इत्येतदिति** । इति पूर्वोक्तप्रकारेणैतच्छ्रुत्वाकर्ण्य भवनं गृहमागत्यैत्य परिजनेन परिच्छदलोकेन सशिरःप्रणामं शिरोवनतिपूर्वकं यथा स्यात्तथाभ्यर्थ्यमानापि प्रार्थ्यमानाप्याहारं भोजनं नाभिनन्दति नाभिलषति । भूषणानामाभरणानां परिग्रहं स्वीकारं नाचरति न करोति । उत्तरं प्रतिवचो न प्रतिपद्यते । न ददातीत्यर्थः । तर्हि किं करोतीत्याशयेनाह—**केवलेति** । केवलं रोदिति रोदनमेव करोति । नान्यत्किमपीति भावः । कीदृशी । अविरलो घनो बाष्पो नेत्राम्बु स एव दुर्दिनं मेघजं तमस्तेनान्धकारितं संजातान्धकारं मुखं यस्याः सा । एतन्मदुक्तं वच आकर्ण्य श्रुत्वा देवः प्रमाणमिति । देवो भवान्यदाज्ञापयिष्यति तदेव सर्वैर्वेदवाक्यवत्स्वीकरिष्यत इति भावः । इति पूर्वोक्तप्रकारेणाभिधायोक्त्वा विरराम विरता बभूव ।

विरतवचनायां तस्यां मकरिकायां भूमिपालो राजा मुहूर्तमिव मुहूर्तमात्रं तूष्णीं मौनं स्थित्वा । तदवस्थतयास्थायेत्यर्थः । दीर्घं लम्बायमानमुष्णं तप्तं निश्वस्य निश्वासं मुक्त्वा निजगादाब्रवीत् । हे देवि । **किमत्रेति** । दैवायत्ते दैवाधीने वस्तुनि कृत्ये किं क्रियतां किं कर्तुं शक्यम् । अतएवातिमात्रं रुदितेनात्यन्तरोदनेनालं कृतम् । प्रायो बाहुल्येन देवतानां सुराणां न वयमनुग्राह्या अनुग्रहविषयाः । नूनम् अस्माकं हृदयं वक्ष आत्मजस्य पुत्रस्य यः परिष्वङ्ग उपगूहनं तदेवामृतं पीयूषं तस्यास्वादसुखमुपभोगसुखं तस्याभाजनमनाधारस्थलम् । अत्रार्थे हेतुमाह—**अन्यस्मिन्निति** । अन्यस्मिञ्जन्मनि भवान्तरेऽवदातं कर्म शुद्धं कर्म न कृतं न विहितम् । हि निश्चये । जन्मान्तरकृतं कर्म पूर्वभवार्जितं कर्म फलं शुभाशुभरूपमुपनयति प्रापयति

---

**पाठा०**—१ प्रवर्तमाना. २ परिजिहीर्षया न. ३ अथ चतुर्दशी; अद्य चतुर्दशी. ४ महाकालाभिधानम्. ५ अपुत्राणां न सन्ति; अपुत्राणां किल गतिर्नास्ति न वा सन्ति. ६ बाष्पबिन्दु. ७ इत्यभिधाय. ८ च तस्याम्. ९ अतिमात्रमलं रुदितेन; अलमतिरुदितेन. १० वयमननुग्राह्याः. ११ विहितम्.

जन्मनि । न हि शक्यं दैवमन्यथा कर्तुमभियुक्तेनापि । यावन्मानुष्यके[1] शक्यमुपपादयितुं तावत्सर्वमुपपाद्यताम् । अधिकां कुरु देवि, गुरुषु[2] भक्तिम् । द्विगुणामुपपादय देवतासु[3] पूजाम् । ऋषिजनसपर्यासु[4] दर्शितादरा भव । परं हि दैवतमृषयो यत्नेनाराधिता यथासमीहितफलानां दुर्लभानामपि[5] वराणां दातारो भवन्ति । श्रूयन्ते[6] हि पुरा चण्डकौशिक[7]प्रभावान्[8]मगधेषु[9] बृहद्रथो नाम राजा जनार्दनस्य[10] जेतारमतुल[11]भुजबलमप्रतिरथं जरासन्धं नाम तनयं लेभे । दशरथश्च राजा परिणतवया[12] विभाण्डकमहामुनिसुतस्यर्ष्यशृङ्गस्य प्रसादान्नारायणभुजानिवाप्रतिहतानुदधीनिवाक्षोभ्यानवाप चतुरः पुत्रान् । अन्ये च राजर्षयस्तपोधनानाराध्य पुत्रदर्शनामृतस्वाद[13]सुखभाजो बभूवुः । अमोघफला हि महामुनिसेवा[14] भवन्ति । अहमपि खलु[15] देवि, कदा समुपारूढगर्भभरालसामापाण्डु[16]मुखी-

---

पुरुषस्य मनुष्यस्य । अत इहजन्मन्यस्मिन्भवे दैवमदृष्टमन्यथाकर्तुमनिष्टफलदं इष्टफलदं कर्तुमेव न शक्यमभियुक्तेनापि पण्डितेनापि । किं पुनर्मन्दमेधसा । अत्र दैवं द्विविधम् । प्रतिबन्धकमप्रतिबन्धकं च । प्रतिबन्धकं तदपि द्विविधम् । स्वतःप्रतिषेधरूपं वन्ध्यस्त्रीपुंयोगादौ । द्वितीयं तु सहकारिविघटनद्वारा राज्यप्राप्त्यादौ कार्योत्पत्तिप्रतिबन्धकम् । अप्रतिबन्धकं तदपि द्विविधम् । स्नानदानादिसामग्रीसमवधानेन प्रतिबन्धकं न भवति । तदभावे तु प्रतिबन्धकम् । अतोऽदृष्टस्याप्रत्यक्षत्वेन विविच्य ज्ञातुमशक्यत्वात् । द्वितीयसंभावनं चेतसिकृत्याह—**यावदिति** । मानुष्यके मनुष्यजन्मनि यावदुपपादयितुं कर्तुं शक्यं स्वकृतिसाध्यं तावत्सर्वमुपपाद्यतां क्रियताम् । एतदेव दर्शयति—**अधिकेति** । हे देवि, हिताहितप्राप्तिपरिहारोपदेष्टारो गुरवस्तेषु पूर्वावस्थातोऽधिकामाधिक्येन भक्तिमाराध्यत्वेन ज्ञानं कुरु विधेहि । देवतासु हरिहरादिषु द्विगुणां द्विगुणितां पूजामर्चामुपपादय निष्पादय । ऋषिजनसपर्यासु मुनिजनसेवासु दर्शितः प्रकटित आदरः सत्कारो यया सैवंभूता भव । हि निश्चितम् । ऋषयो मुनयः परमुत्कृष्टं दैवतं भाग्यम् । एतदेव प्रपञ्चयन्नाह—**यत्नेति** । यत्नेन प्रयत्नेन । मनःशुद्ध्येत्यर्थः । आराधिताः प्रीणिता मुनयो यथासमीहितानि यथाभिलषितानि फलानि येष्वेवंभूतानां दुर्लभानामपि वराणां मार्गितानां दातारो दायका भवन्ति । अत्रार्थेऽन्यसंमतिं प्रदर्शयन्नाह—**श्रूयन्ते हीति** । हि निश्चितम् । श्रूयन्त आकर्ण्यन्ते । ग्रन्थान्तरेभ्य इति शेषः । मगधेषु कीकटेषु पुरा पूर्वं चण्डकौशिको मुनिस्तस्य प्रभावान्माहात्म्याद्बृहद्रथो राजा । नामेति कोमलामन्त्रणे । जनार्दनस्य कृष्णस्य जेतारं जयनशीलमतुलं निरुपमं भुजबलं बाहुबलं यस्य स तमप्रतिरथं महारथं जरासन्धं नाम जरासन्धाभिधं तनयं पुत्रं लेभे प्राप्तवान् । **दशरथेति** । चकारः पूर्वोक्तसमुच्चयार्थः । दशरथो राजा परिणतं पक्वं वयो यस्यैवंभूतः सन्विभाण्डकनामा यो महामुनिस्तस्य सुतस्यर्ष्यशृङ्गस्य प्रसादान्माहात्म्यान्नारायणभुजानिव कृष्णबाहूनिवाप्रतिहतानपराजितानुदधीनिव समुद्रानिवाक्षोभ्याननाकलनीयांश्चतुरः पुत्रानवाप प्राप्तवान् । **अन्ये चेति** । पूर्वोक्तव्यतिरिक्ता राजर्षयस्तपोधनांस्तपस्विन आराध्योपास्य पुत्रस्य सुतस्य यद्दर्शनमवलोकनं तदेवामृतं तस्यास्वाद उपभोगस्तज्जनितं यत्सुखं सातं तद्भाजो बभूवुर्जज्ञिरे । अत्रार्थे हेतुं प्रदर्शयन्नाह—**अमोघेति** । हि निश्चितम् । अमोघं निश्चितं फलं यासां ता महामुनिसेवाः महातपस्विसपर्या भवन्ति । हे देवि, खलु निश्चयेन । अहमपि कदा कस्मिन्काले देवीं त्वां द्रक्ष्यामि विलोकयिष्यामि । तामेव विशिनष्टि—**समुपेति** । समुपारूढः प्राप्तो यो गर्भो भ्रूणस्तस्य भरो भारस्तेनालसां मन्थरामा ईषत्पाण्डु शुक्लं मुखमाननं यस्याः

---

**टिप्प०—1 अभिलाषाणामित्यर्थः । 2 समग्रस्य वक्ष्यमाणवाक्यार्थस्य कर्मत्वादेकत्वमेव समुचितमिति 'श्रूयते' इत्येव पाठः ।**

---

**पाठा०**—१ यावत्तु. २ गुरुभक्तिम्. ३ देवतापूजाम्. ४ परिचर्यासु. ५ अतिदुर्लभानाम्. ६ श्रूयते. ७ कौशिका. ८ प्रसादात्; प्रसादप्रभावात्. ९ मगधेशो. १० जनार्दनप्रतिमम्. ११ अतुलबलपराक्रमम्; अमरतुल्यभुजबलम्. १२ यया अपि. १३ आस्वाद. १४ हि महामुनिजनसेवा; हि महामुनिसेवा भवति. १५ खलु कदा. १६ आपाण्डुर.

[1]मासन्नपूर्णचन्द्रोदयामिव पौर्णमासीनिशां देवीं [2]द्रक्ष्यामि ? कदा मे तनयजन्ममहोत्सवानन्दनिर्भरो हरिष्यति पूर्णपात्रं परिजनः ? कदा हारिद्रवसनधारिणी सुतसनाथोत्सङ्गा द्यौरिवोदित[3]रविमण्डला सबालातपा मामानन्दयिष्यति देवी । कदा सर्वौषधिपिञ्ज[4]र-जटिलकेशो निहितरक्षा[5]घृतबिन्दुनि तालुनि विन्यस्तगौरसर्षपोन्मिश्र[6]भूतिलेशो गोरोचनाचित्र[7]कण्ठसूत्रग्रन्थिरुत्तानशयो दशनशून्यस्मिताननः पुत्रको जनयिष्यति मे हृदयाह्लादम् । कदा गोरोचनाकपिलद्युतिरन्तःपुरिकाकरतलपरम्परासंचार्यमाणमूर्तिरशेष[8]जनवन्दितो मङ्गलप्रदीप इव मे शोकान्धकारमुन्मूलयिष्यति चक्षुषोः । कदा च क्षितिरेणु[9]धूसरो मण्डयिष्यति

---

सा ताम् । कामिव । **आसन्नेति** । आसन्नः समीपवर्ती पूर्णचन्द्रस्योदयो यस्यामेवंभूतां पौर्णमासीनिशामिव राकारात्रिमिव । **कदेति** । मे मम तनयजन्ममहोत्सवः पुत्रजननलक्षणस्तस्मिन्य आनन्दः प्रमोदस्तेन निर्भरः संभृतः परिजनः पूर्णपात्रं पूर्णानकं हरिष्यति ग्रहीष्यति । '[1]उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते । वस्त्रं माल्यं च तत्पूर्णपात्रं पूर्णानकं च' इति कोशः । **कदेति** । देवी विलासवती कदा मामानन्दयिष्यति प्रमोदं जनयिष्यति । तामेव विशेषयन्नाह—**हारिद्रेति** । हरिद्रया रजन्या रक्तं हारिद्रं यद्वसनं तस्य धारिणी धरणशीला । **सुतेति** । सुतेन पुत्रेण सनाथः सहित उत्सङ्गः क्रोडो यस्याः सा । केव । द्यौरिवाकाशमिव । तां विशिनष्टि—**उदितेति** । उदितमुदयं प्राप्तं रविमण्डलं सूर्यबिम्बं यस्यां सा । सह बालातपेन वर्तते या सा । हारिद्रवसनस्य कालेन पीतरक्तत्वाद्बालातपसाम्यम् । सूर्यबिम्बपुत्रयोश्च साम्यम् । **कदेति** । पुत्रकः सुतो मम हृदयं चेतस्तस्याह्लादं प्रमोदं जनयिष्यत्युत्पादयिष्यति । सुतं विशेषयन्नाह—**सर्वेति** । सर्वाश्च [2]ता ओषधयस्ताभिः पिञ्जराः पीतरक्ता जटिला अन्योन्यं मिलिताः केशाः कचा यस्य स तथा । निहितः स्थापितो रक्षया युतो घृतबिन्दुर्यस्मिन्नेवंभूते तालुनि काकुदे विन्यस्तः स्थापितो गौरसर्षपेणोन्मिश्रः संयुतो भूतिलेशो भस्मकणिका यस्य स तथा । अयं बालरक्षाविधिः । **गोरोचनेति** । गोरोचना तया चित्रो विचित्रः कण्ठसूत्रग्रन्थिर्यस्य स तथा । अयमपि रक्षाविधिः । **उत्तानेति** । उत्तानमूर्ध्वमुखं शेते यः स तथा । **दशनेति** । दशनैर्दन्तैः शून्यं रहितमेतादृशं स्मितं विकसितमाननं मुखं यस्य स तथा । **कदेति** । कदा कस्मिन्काले मे मम चक्षुषोर्नेत्रयोर्मङ्गलप्रदीप इव मङ्गलदीप इव शोक एवान्धकारं तिमिरमुन्मूलयिष्यति मूलतो दूरीकरिष्यति । कीदृक् । गोरोचनावत्कपिला पिङ्गला द्युतिः कान्तिर्यस्य स तथा । पुनस्तमेव विशिनष्टि—**अन्त इति** । अन्तःपुरे भवा अन्तःपुरिकाः पटाद्यन्त[3]रिताः स्त्रियस्तासां करतलानि हस्ततलानि तेषां परम्परा श्रेणिस्तया संचार्यमाणा हस्ताद्धस्तं प्रति[4] स्थाप्यमाना मूर्तिः शरीरं यस्य स तथा । **अशेषेति** । अशेषैः समग्रैर्जनैर्वन्दितो राजपुत्रत्वान्नमस्कृतः । **कदाचेति** । कदेति पूर्ववत् । क्षित्याः पृथिव्या यो रेणुर्धूलिस्तेन धूसरो मलिनो मम हृदयेन चित्तेन दृष्ट्या

---

**टिप्प०**—1 'वर्धापकं यदानन्दादलंकारादिकं पुनः । आकृष्य गृह्यते पूर्णपात्रं पूर्णानकं च तत् ॥' इति हारावलीपाठः । 2 'कुष्ठमांसी हरिद्राभिर्वचाशैलेयचन्दनैः । सुराचन्दनकर्पूरैर्मुस्तः सर्वौषधिः स्मृतः ॥' इति राजनिघंटः । 3 अन्तःपुरनिवासिन्य इत्यर्थः । 4 एकस्या हस्तादपरस्या हस्ते नीयमानेत्याशयः ।

---

**पाठा०**—१ आसन्नचन्द्रोदयाम्. २ प्रद्रक्ष्यामि. ३ उद्यत. ४ पिञ्जरित. ५ घृतमधुबिन्दुतालु. ६ लेखः. ७ चित्रित. ८ जनाभिनन्दिता. ९ क्षितितलरेणु.

मम हृदयेन दृष्ट्या च सह परिभ्रमन्भवनाङ्गणम्। कदा केसरिकि[1]शोरक इव संजातजानु-[2]चङ्क्रमणावस्थः संचरिष्यतीतस्ततः स्फटिक[3]मणिभित्त्यन्तरितान्भवनमृगशावकाञ्जि[4]घृक्षुः। कदा[5]न्तःपुरनूपुरनिनादसङ्गतान्गृ[6]हकलहंसकाननुसरन्क[7]क्षान्तरप्रधावि[8]तः कनकमेखलाघण्टिकारवानुसारिणीमायासयिष्यति धात्रीम्। कदा कृष्णागुरुपङ्कलिखितमदलेखालंकृतगण्ड[9]स्थलकः मु[10]खडिण्डिमध्वनिज[11]नितप्रीतिरूर्ध्वकरविप्रकीर्णचन्दनचूर्णधूलिधूसरः कुञ्चिताङ्गुलिशिखराङ्कुशाकर्षणविधूतशिराः करिष्यति म[12]त्तगजराजलीलाक्रीडाः। कदा मातुश्चरणयु[13]गलरागोपयुक्तशेषेण पिण्डालक्तकरसेन वृ[14]द्धकञ्चुकिनां विडम्बयिष्यति मुखानि। कदा कुतूहलच[15]ञ्चललोचनो मणिकुट्टिमेष्वधोदत्तदृष्टिरनुसरिष्यति स्खलद्गतिरात्मनः प्र[16]तिबिम्बानि।

---

च लोचनेन सह सार्धं परिभ्रमन्नितस्ततः पर्यटन्भवनाङ्गणं गृहाङ्गणं मण्डयिष्यति भूषयिष्यति। एतेन राज्ञश्चित्तनेत्रयोस्तृतीय एवायं सखेति ध्वनितम्। **कदेति**। कदेति पूर्ववत्। इतस्ततः संचरिष्यति संचरणं करिष्यति। क इव। केसरी सिंहस्तस्य किशोरकः शिशुस्तद्वदिव। **संजातेति**। संजाता समुत्पन्ना जातु कदाचित् चङ्क्रमणावस्था गमनयोग्यता यस्य स तथा। **स्फटिकेति**। स्फटिकमणीनां या भित्तयः कुड्यानि ताभिरन्तरितान्व्यवहितान्भवनमृगाणां गृहकुरङ्गाणां शावकान्पोतान्प्रतिबिम्बादिना दृश्यमानमूर्ताञ्जिघृक्षुर्ग्रहीतुमिच्छुः। **कदेति**। कदा कस्मिन्काले धात्रीमुपमातरमायासयिष्यति प्रयासं जनयिष्यति। कीदृक्। कक्षान्तरे गृहकोणान्तरे प्रधावित उच्चलितः। दर्शनविषयत्वाभावादाह—**कनकेति**। कनकस्य सुवर्णस्य या मेखला रसना तस्या घण्टिकाः किङ्किण्यस्तासां यो रवः शब्दस्तमनुसर्तुं शीलं यस्याः सा ताम्। किं कुर्वन्। अनुसरन्ननुलक्ष्यीकृत्य गच्छन्। कान्। गृहकलहंसकान्भवनसितच्छदान्। कीदृशान्। अन्तःपुरेऽवरोधे यो नूपुरस्य पादकटकस्य निनादः शब्दस्तेन संगतान्मिलितान्। **कदेति**। कदेति पूर्ववत्। मत्तो यो गजराजो हस्ती तस्य लीला विलासो यस्यामेवंविधाः क्रीडाः खेलनं करिष्यति रचयिष्यति। उभयोः साम्यप्रतिपादनार्थमाह—**कृष्णेति**। कृष्णागुरुः काकतुण्डस्तस्य पङ्को द्रवस्तेन लिखिता लिपीकृता या मदलेखावल्लेखा तयालंकृतं विभूषितं गण्डस्थलं यस्य स तथा। 'शेषाद्विभाषा' इति कप्प्रत्ययः। पक्षे कृष्णागुरुपङ्कवन्मदलेखा दानपद्धतिः। **मुखेति**। धात्र्यादीनां लालनार्थं मुखेन यो डिण्डिमध्वनिः, अथ चानुरक्तहस्तिपकानां मुखेन समाधानार्थं यो डिण्डिमध्वनिस्तेन जनितोत्पादिता प्रीतिर्यस्य स तथा। **ऊर्ध्वेति**। ऊर्ध्वकरेणोर्ध्वीकृतहस्तेन, तादृशशुण्डया च विप्रकीर्णा विक्षिप्ता चन्दनचूर्णस्य मलयजक्षोदस्य धूलिस्तया, च चन्दनचूर्णवद्धूलिः पांसुः तया धूसरो मलिनः। **कुञ्चितेति**। कुञ्चिता वक्रीकृता याङ्गुली तस्याः शिखरमग्रम्। 'शिखरं पुलकाग्रयोः' इत्यनेकार्थः। तदेवाङ्कुशः सृणिः। गजपक्षे कुञ्चिताङ्गुलिशिखरवदङ्कुशस्तेनाकर्षणं पृष्ठे पुरतो वा चालनं तेन विधूतं कम्पितं शिरो मस्तकं येन स तथा। **कदेति**। **मातुरिति**। माता जननी तस्याश्चरणयुगलं पादद्वन्द्वं तस्य रागो रञ्जनं तत्रोपयुक्तः सन् यः शेष उर्वरितस्तेन, पिण्डालक्तकः पिण्डीकृतो यो लाक्षाद्रवस्तस्य यो रसः तेन वृद्धकञ्चुकिनां स्थविरसौविदल्लानां मुखानि वदनानि विडम्बयिष्यति। तद्रसाश्लेषेण विरूपाणि करिष्यतीति भावः। **कदेति**। कदेति पूर्ववत्। कुतूहलेन कौतुकेन चञ्चले चपले लोचने नेत्रे यस्य स तथा। मणिकुट्टिमेषु रत्नबद्धभूमिषु संक्रान्तमात्मीयमुखारविन्दं द्रष्टुमधोदत्ता दृष्टिर्येन स तथा तदलाभखेदात्स्खलन्ती गतिर्यस्यैवंभूत आत्मनः स्वकीयस्य प्रति-

---

**पाठा०**—१ किशोर. २ चङ्क्रमणारम्भः. ३ मणिमय. ४ आजिघृक्षुः. ५ अन्तःपुरिकानूपुर. ६ गृहहंसकान्. ७ पक्षान्तर. ८ प्रधाविताम्. ९ गण्डस्थलः कोमल. १० मुखरवडिण्डिम. ११ जात. १२ मदमत्तगजराजलीलाम्; मत्तगजक्रीडाम्; मत्तगजराजलीलान्; मत्तगजराजलीलः क्रीडाम्; मत्तगजराजलीलाः. १३ चरणरागोपयुक्त. १४ कञ्चुकिनाम्. १५ लोक. १६ प्रतिबिम्बितानि.

कदा नरेन्द्रसहस्रप्रसारितभुजयुगलाभिनन्द्यमानागमनो भूषणमणि[1]मयूखाकुलीक्रियमाणलोलदृष्टिरास्थानस्थितस्य मे[2] पुरः स[3]र्पिष्यति सभान्तरेषु । इ[4]त्येतानि मनोरथशतानि चिन्तयतोऽन्तःसंतप्यमानस्य प्र[5]यान्ति रजन्यः । मामपि दहत्येवायमहर्निशमनल इवानपत्यतासमुद्भवः शोक[6]ः । शू[7]न्यमिव मे प्रतिभाति जगत् । अफलमि[8]व पश्यामि रा[9]ज्यम् । अप्रतिविधेये तु विधातरि किं करोमि । त[10]न्मुच्यतामयं देवि, शोकानुबन्धः । आधीयतां धैर्ये धर्मे च धीः । धर्मपरायणानां हि समीपसंचारिण्यः कल्याणसंपदो भवन्ति' इ[11]त्येवमभिधाय सलिलमादाय स्वयं करतलेनाभिनवपल्लवेनेव विकचकमलो[12]पमानमाननमस्याः साश्रुलेखं ममार्ज । पुनःपुनश्च प्रियशतमधुराभिः शोका[13]पनोदनिपुणाभिर्धर्मोपदेशगर्भाभिर्वाग्भिराश्वास्य सु[14]चिरं स्थित्वा नरेन्द्रो निर्जगाम ।

निर्गते च तस्मिन्मन्दीभूतशोका[15] विलासवती य[16]थाक्रियमाणाभरण[17]परिग्रहादिकमुचितं

---

बिम्बानि प्रतिरूपाण्यनुसरिष्यति तद्ग्रहणार्थमनुगमिष्यति । **कदेति** । कदेति पूर्ववत् । नरेन्द्राणां यत्सहस्रं तेन प्रसारितं विस्तारितं यद्भुजयुगलम् । जात्येकवचनम् । तेनाभिनन्द्यमानमपेक्ष्यमाणमागमनं यस्य स तथा । **भूषणेति** । भूषणानां ये मणयो रत्नानि तेषां मयूखाः किरणास्तैराकुलीक्रियमाणा लोला दृष्टिर्यस्य स तथा । आस्थानस्थितस्य सभोपविष्टस्य मे मम पुरोऽग्रे सभान्तरेषु परिषन्मध्यप्रदेशेषु सर्पिष्यति पुनः पर्यटनं करिष्यति । संतापनिवेदकानि चिन्तावाक्यानि त्रयोदशोपसंहरन्नाह—**इत्येतानीति** । एतानि पूर्वोक्तानि मनोरथशतानि मनोविकल्पितशतानि चिन्तयतो ध्यायतो राज्ञोऽन्तर्मध्ये संतप्यमानस्य प्रज्वल्यमानस्य रजन्यो रात्रयः प्रयान्ति गच्छन्ति । **ममापीति** । अनपत्यताऽसंतानता ततः समुद्भवः समुत्पन्नः शोकः शुगनल इव वह्निरिवाहर्निशं प्रतिदिनं मामपि दहत्येव ज्वालयत्येव । **शून्येति** । मे मम शून्यमिवोद्वसितमिव जगद्विश्वं प्रतिभाति प्रतिभासते । **अफलेति** । राज्यमाधिपत्यमफलमिव निरर्थकमिव पश्याम्यवलोकयामि । **अप्रतीति** । न विद्यते प्रतिविधेयमस्मान्प्रति यस्य विधातुस्तस्मिन्नप्रतिविधेये प्रतीकारानर्हे वा विधातरि किं करोमि किमनुतिष्ठामि । **तदिति** । तत् तस्मात्पूर्वोक्ताद्धेतोः । हे देवि, अयं शोकानुबन्धः शोकपरम्परा मुच्यतां त्यज्यताम् । धैर्ये धीरतायां धर्मे च धीर्बुद्धिराधीयतां स्थाप्यताम् । अत्रार्थे हेतुमाह—**धर्मेति** । हि निश्चितम् । धर्मपरायणानां सुकृततत्पराणां कल्याणसंपदः श्रेयोविभूतयः सदा सर्वकालं समीपसंचारिण्यः पार्श्ववर्तिन्यो भवन्ति संजायन्ते । इत्येवं पूर्वोक्तप्रकारेणाभिधायोक्त्वा । **सलिलमिति** । सलिलं पानीयमादाय गृहीत्वा स्वयमात्मनः करतलेन पाणितलेनाभिनवपल्लवेनेव प्रत्यग्रकिसलयेनेव विकचं विकस्वरं यत्कमलं नलिनं तदेवोपमानं यस्यैवंभूतमस्या विलासवत्याः साश्रुलेखमश्रुराज्या सहवर्तमानमाननं मुखं ममार्ज । शुद्धं चकारेत्यर्थः । 'मृजूष् शुद्धौ' इति धातोर्लिटि रूपम् । **पुनरिति** । पुनःपुनर्वारंवारम् । **प्रियेति** । प्रियमिष्टं तस्य शतं तेन मधुराभिर्मिष्टाभिः शोकस्य शुचो योऽपनोदो दूरीकरणं तत्र निपुणाभिः पण्डिताभिर्धर्मस्य पुण्यस्य य उपदेशः प्रतिपादनं स एव गर्भेऽभ्यन्तरे यासां ताभिरेवंभूताभिर्वाग्भिर्वचोभिराश्वास्याश्वासनां कृत्वा सुचिरं चिरकालं यावत्स्थित्वा नरेन्द्रो नृपो निर्जगाम गृहाद्बहिर्ययौ ।

निर्गते बहिर्गते च तस्मिन्मन्दीभूतशोका मन्दीभूतः क्षीणतां प्राप्तः शोको यस्याः सैवंभूता विलासवत्युचितं योग्यम् । **यथेति** । यथा पूर्वोक्तप्रकारेण क्रियमाणो विधीयमानो य आभरणपरिग्रहो विभूषणस्वीकारः स एवादौ

---

**पाठा०**—१ मयूखलेखाकुली. २ मम. ३ पर्यटिष्यति. ४ इत्येतानि चान्यानि; इत्येतानि च. ५ यान्ति. ६ संतापः. ७ शून्यमेव. ८ इवाखिलं पश्यामि. ९ जीवितं राज्यं च. १० मुच्यतां देवि. ११ इत्थम्; एवम्. १२ कमलतुल्यम्. १३ अपनोदन. १४ सुचिरं नरेन्द्रः. १५ शोकावेगा. १६ यथाक्रियमाणम्. १७ परिग्रहादिकं समुचितम्; परिग्रहादिकसमुचितम्.

दिवसव्यापारमन्वतिष्ठत्। ततःप्रभृति सुतरां देवताराधनेषु ब्राह्मणपूजासु गुरुजनसपर्यास्वादरवती बभूव। यद्यच्च किंचित्कुतश्चिच्छुश्राव गर्भतृष्णया तत्तत्सर्वं चकार। न महान्तमपि क्लेशमजीगणत्। अनवरतदह्यमानगुग्गुलुबहुलधूमान्धकारितेषु चण्डिकागृहेषु धवलाम्बरेण शुचिमूर्तिरुपोषिता हरितकुशोपच्छदेषु मुसलशयनेषु सुष्वाप। पुण्यसलिलपूर्णैर्विविधकुसुमफलोपेतैः क्षीरतरुपल्लवलाञ्छनैः सर्वरत्नगर्भैः शातकुम्भकुम्भैर्गोकुलेषु वृद्धगोपवनिताकृतमङ्गलानां लक्षणसंपन्नानां गवामधः सस्नौ। प्रतिदिवसमुत्थायोत्थाय सर्वरत्नोपेतानि हैमानि तिलपत्राणि ब्राह्मणेभ्यो ददौ। महानरेन्द्रलिखितमण्डलमध्यवर्तिनी विविधबलिदानानन्दितदिग्देवतानि बहुलचतुर्दशीनिशासु चतुष्पथे स्नपनमङ्गलानि भेजे। सिद्धायतनानि

---

यस्मिन्नेवंभूतं दिवसव्यापारं दिनकृत्यमन्वतिष्ठदकरोत्। **तत इति**। ततःप्रभृति तद्दिनादारभ्य सुतरामत्यर्थं देवताराधनेषु देवतानां देवीनामाराधनानि प्रसन्नीकरणानि तेषु, ब्राह्मणास्त्रयीमुखास्तेषां पूजा अर्चास्तासु, गुरुजनानां पूज्यजनानां सपर्याः सेवास्तास्वादरवत्यतिबहुमानवती बभूव जज्ञे। **यद्यच्चेति**। यद्यदश्रुतपूर्वमकृतपूर्वं च किंचिद्वस्तु कुतश्चिदनिर्दिष्टनामकेभ्यो जनेभ्यः शुश्रावाकर्णितवती गर्भतृष्णया भ्रूणलोभेन तत्तत्सर्वं समग्रं चकार कृतवती। **न महेति**। महान्तं महीयांसमपि क्लेशं कष्टं नाजीगणन्मनसि न गणितवती। **अनवरतेति**। अनवरतं निरन्तरं दह्यमानो यो गुग्गुलुः पलङ्कद्रवस्तस्य बहुलो निबिडो यो धूमस्तेनान्धकारः संजातो येष्वेवंविधेषु चण्डिका चामुण्डा तस्या गृहेषु सद्मसु। **धवलेति**। धवलाम्बरेण शुभ्रवाससा शुचिः पवित्रा मूर्तिः शरीरं यस्याः सा तथोपोषिता कृतोपवासा। **हरितेति**। हरिता नीला ये कुशा दर्भास्त एवोपच्छद उत्तरपटो येष्वेवंभूतेषु मुसलान्ययोग्राणि तेषां शयनेषु तलिनेषु[1] सुष्वाप शयनं चकार। **पुण्येति**। पुण्यानि पवित्राणि यानि सलिलानि जलानि तैः पूर्णैर्भृतैर्विविधानि विचित्राणि यानि कुसुमफलानि तैरुपेतैः सहितैः। क्षीरतरवो वटादयस्तेषां पल्लवाः किसलयानि। क्वचित् 'क्षीरपल्लव-' इति पाठः। तत्र क्षीरपल्लवः कोमलपल्लव इति व्याख्येयम्। त एव लाञ्छनं चिह्नं येषां तैः। सर्वाणि समग्राणि रत्नानि गर्भे मध्यभागे येषां तैः शातकुम्भं सुवर्णं तस्य कुम्भैर्निपैः (?) गोकुलेषु व्रजेषु। **वृद्धेति**। वृद्धगोपस्य मुख्यवल्लवस्य या वनिता स्त्री तया कृतं विहितं मङ्गलं तिलकादि याभिस्तासाम्[2]। लक्षणैर्मषीतिलकादिभिः संपन्नानां सहितानां गवां धेनूनामधोऽधोभागे सस्नौ स्नानं कृतवती। **प्रतीति**। प्रतिदिवसमहर्निशमुत्थायोत्थायोत्थानं कृत्वोत्थानं कृत्वेत्यर्थः। सर्वरत्नैः समग्रमणिभिरुपेतानि खचितानि हैमानि स्वर्णनिष्पन्नानि तिलपत्राणि[3] तिलपर्णाकृतिरूपाणि ब्राह्मणेभ्यो विप्रेभ्यो ददौ दत्तवती। अत्र संप्रदाने चतुर्थी। **महेति**। महानरेन्द्रेण[4] स्वकीयभर्त्रा लिखितमालिखितं यन्मण्डलं लोकप्रसिद्धं तन्मध्यवर्तिनी तदन्तःस्थायिनी। **विविधेति**। विविधमनेकप्रकारं यद्बलिदानं तेनानन्दिताः प्रमोदं प्राप्ता दिग्देवता येषु तानि। **बहुलेति**। बहुलस्य कृष्णपक्षस्य याश्चतुर्दश्यस्तासां निशासु रात्रिषु चतुष्पथे चत्वरे स्नपनमङ्गलानि स्नानभद्राणि भेजेऽभजत्। **सिद्धायतनानीति**। सिद्धा योगिनस्तेषामायतनानि चैत्यानि सिषेवे सेवितवती। कीदृशानि।

---

**टिप्प०—1 मुसलशयनेषु श्रेणीभावेन पातितमुसलशय्यासु, इत्याशयः। पुत्रार्थिनीभिरेवंविधानि तत्रमन्त्रानुष्ठानादीनि क्रियन्ते। 2 यासामित्युचितमाभाति। 3 तिलपात्राणीत्येव पाठः। सर्वरत्नोपेत(पूर्ण)त्वं पात्रेष्वेव घटते, रत्नखचितत्वार्थे तु नास्य स्वारस्यम्। 4 धन्यष्टीकाकारः! महानरेन्द्रोऽत्र प्रधानभूतो भूतोपचारकर्ता मान्त्रिकः।**

---

**पाठा०—**१ वासरव्यापारमकरोत्. २ परिचर्यासु च. ३ अधिकमादरवती. ४ शुश्राव व्रतम्. ५ अर्भक. ६ गुग्गुलु. ७ बहल. ८ धूपान्धकारितेषु. ९ धवलाम्बरा; धवलाम्बर. १० हरित्कुश. ११ उपच्छन्नेषु. १२ भूतल. १३ पूरितैः; पूतैः. १४ मङ्गला. १५ तिलपात्राणि. १६ बहुलपक्षचतुर्दशी. १७ चतुष्पथेषु. १८ स्नान.

कृतविचित्र[1]देवतोपयाचितकानि सिषेवे । दर्शित[2]प्रत्ययानि संनिधान[3]मातृकाभवनानि जगाम । प्रसिद्धेषु नागकुलह्रदेषु ममज्ज । अश्वत्थप्रभृतीनुपपादितपूजान्महावनस्पतीन्कृतप्रदक्षिणा ववन्दे । दोला[4]यमानवलयेन पाणियुगलेन स्नाता स्वयमख[6]ण्डसिक्[7]थसंपादितं रजतपात्र[8]परिगृहीतं वायसेभ्यो दध्योदनबलिमदात् । अ[9]परिमितकुसुमधूपविलेपापूपपललपायसब[10]लिलाजकलितामहरहरम्बा[11]देवीसपर्यामाततान । स्वयमुप[12]हृतपिण्डपात्रान्भक्तिप्रवणेन मनसा सिद्धादेशान्नग्नक्षपणकान्पप्रच्छ । विप्रश्निकादेशवचनानि बहु मेने । निमित्तज्ञानुपचचार । शकुनज्ञानविदामादरमदर्शयत् । अनेकवृद्धपरम्परा[13]गमागतानि रहस्या[14]न्यङ्गीचकार । द[15]र्शनागत-

---

**कृतेति** । कृतानि विहितानि विचित्राणि देवतानां प्रतिमानामुपयाचितकानि भैक्ष्य[1]चर्याणि येषु तानि । अथ च संनिधानानि[2] समवर्तीनि यानि मातृकाभवनानि माहेश्वरीप्रभृतिदेवीनां गृहाणि जगाम गतवती । कीदृशानि । दर्शितः प्रकाशितः प्रत्ययो विश्वासो यैस्तानि । प्रत्ययोऽनुष्ठानानुरूपं देवतावचनमिति वा । यद्वा मातृगृहाण्यभिमतमातॄणां भवनानि । **प्रसिद्धेति** । प्रसिद्धेषु जगद्विख्यातेषु नागकुलानि तेषां ह्रदा द्रहास्तेषु ममज्ज मज्जनं चकार । अश्वत्थः पिप्पलः प्रभृतिरादौ येषां तान्महावनस्पतीन्महावृक्षानुपपादिता विहिता पूजार्चा येषां तान्कृता विहिता प्रदक्षिणा यया सैवंभूता ववन्दे वन्दनं कृतवती । तथा दोलायमानं कम्पमानं वलयं कङ्कणं यस्य तत्तथा तेन पाणियुगलेन हस्तयुग्मेन दध्योदनबलिं दधियुक्तो य ओदनस्तल्लक्षणो यो बलिस्तं वायसेभ्यः काकेभ्यः स्वयमात्मना स्नाता कृतस्नाना सत्यदाद्दत्तवती । बलिं विशिनष्टि—**अखण्डेति** । अखण्डास्फुटितोदन[3]रूपेण पक्वैः सिक्थैरन्नकणैः संपादितं निष्पादितं रजतस्य रूप्यस्य यत्पात्रं भाजनं तस्मिन्परिगृहीतमात्तम् । अहरहरिति प्रतिदिनमम्बादेवी दुर्गा तस्याः सपर्या सेवामाततान विस्तारयामास । तामेव विशेषयन्नाह—**अपरिमितेति** । अपरिमितानि बहूनि कुसुमानि पुष्पाणि, धूपो गन्धपिशाचिका, विलेपो विलेपनम्, अपूपः पिष्टकः, पिष्टतिलयोजितमन्नं पललम्, पायसं परमान्नम् । बलिलाजा बल्यर्थमक्षताः, एतैः कलितां व्याप्ताम् । **स्वयमिति** । स्वयमात्मना । भक्तिः पूर्वं व्याख्याता, तया प्रवणेन युक्तेन मनसा स्वान्तेनोपहृतान्युपढौकितानि पिण्डपा[4]त्राणि येभ्यस्तान्सिद्धादेशान्सिद्ध[5]संज्ञितानग्ना वस्त्ररहिता ये क्षपणका दिगम्बरास्तान्पप्रच्छाप्राक्षीत् । **विप्रश्निकेति** । शुभाशुभप्रकाशिकाः स्त्रियो विप्रश्नि[6]कास्तासामादेशवचनान्याज्ञावचनानि बहु मेन आदरविशेषेणाङ्गीचकार । **निमित्तेति** । निमित्तं भौमाद्यष्टविधं जानन्तीति निमित्तज्ञास्तानुपचचार तेषां समीपे ययौ । शकुनज्ञानविदां वसन्तराजादिशास्त्रज्ञानविदामादरं बहुमानमदर्शयद्दर्शितवती । **अनेकेति** । अनेके ये वृद्धाः स्थविरास्तेषां परम्परा परिपाटी तस्यां य आगमः प्रसिद्धिस्तदागतानि यानि रहस्यानि तत्त्वान्यङ्गीचकार स्वीचक्रे । परिपाट्यां य आगमो मन्त्रशास्त्रं तदागतानि रहस्यानि वा । **दर्शनेति** । दर्शनार्थमागतं प्राप्तमेवंभूतं द्विजजनं ब्राह्मणलोकमात्मजः

---

**टिप्प०**—1 इदमप्यशुद्धम् । 'यदि मे पुत्रलाभः स्यात्तदा पुनरप्येवमेव समर्पयेयम्' इत्यङ्गीकारपूर्वमुपहारदानमुपयाचितकम् । 'दीयते यत्तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं दिव्यं दोहदं तद्विदुर्बुधाः' जटाधरः । 2 'संनिहितमातृकाभवनानि' इत्येव पाठः । संनिहितानि मातॄणाम् ( ब्राह्मीत्यादीनाम् ) भवनानीति तदर्थः । 3 अखण्डैः अक्षतैः सिक्थैः धान्यकणैः संपादितम् ( दध्योदनम् ) इति व्याख्यानमुचितम् । 4 अन्नभाजनानि । 5 सिद्धः सत्यः आदेशः आज्ञावाक्यं येषां तानित्यर्थः । 6 'विप्रश्निका त्वीक्षणिका दैवज्ञा' इत्यमरः ।

---

**पाठा०**—१ विविध. २ प्रत्यादेशानि. ३ संनिहितमातृभवनान्याजगाम; संनिधमातृभवनानि जगाम. ४ मणिवलयेन. ५ कृतस्नाना. ६ अखण्डित. ७ सिक्थकुसुमसंपादितम्. ८ पात्रे. ९ अ[illegible]मितधूपविलेपं पललपायसबलिम्. १० सलाज. ११ ज्येष्ठादेवी. १२ उपाहित उपाहृत. १३ समागतानि; गतानि. १४ चकार; अङ्गीकरोति स. १५ दर्शनागतम्.

द्विजजनसात्मजदर्शनोत्सुका वेदश्रुतीरकारयत्। अनवरतवाच्यमानाः पुण्यकथाः शुश्राव। गोरोचनालिखितभूर्जपत्रगर्भान्मन्त्रकरण्डकानुवाह। रक्षाप्रतिसरोपेतान्योषधीसूत्राणि बबन्ध। परिजनोऽपि चास्याः सततमुपश्रुत्यै निर्जगाम। तन्निमित्तानि च जग्राह। शिवाभ्यो मांसबलिपिण्डमनुदिनं निरुत्ससर्ज। स्वप्नदर्शनाश्चर्याण्याचार्याणामाचचक्षे। चत्वरेषु शिवबलिमुपजहार।

एवं च गच्छति काले कदाचिद्राजा क्षीणभूयिष्ठायां रजन्यामल्पावशेषपाण्डुतारके जरत्पारावतपक्षधूम्रे नभसि स्वप्ने सितप्रासादशिखरस्थिताया विलासवत्याः करिण्या इव बिसवलयमानने सकलकलापूर्णमण्डलं शशिनं प्रविशन्तमद्राक्षीत्। प्रबुद्धश्चोत्थाय हर्षविकाशस्फीततरेण चक्षुषा धवलीकृतवासभवनस्तस्मिन्नेव क्षणे शुकनासं समाहूय स्वप्नमकथयत्।

---

पुत्रस्तस्य दर्शनमवलोकनं तत्रोत्सुकोत्कण्ठिता वेदस्य श्रुतीः श्रवणमकारयद्ब्राह्मणद्वारा कारयामास। अकारयदिति 'हृक्रोरन्यतरस्याम्' इत्यण्यन्तस्य कर्ता द्विजजनः कर्मसंज्ञः। **अनवरतेति**। अनवरतं निरन्तरं वाच्यमाना उच्यमानाः पुण्यकथाः पवित्रकथाः शुश्रावाश्रौषीत्। **गोरोचनेति**। गोरोचनालिखितं भूर्जपत्रं गर्भे मध्ये यस्यैवंभूतान्मन्त्रकरण्डकान्पिटकानुवाहावहत्। 'वह प्रापणे' इति धातोरभ्याससंप्रसारणे लिटि रूपम्। **रक्षेति**। रक्षायाः प्रतिसरः कङ्कणं तेनोपेतान्योषधीसूत्राणि बबन्ध बन्धनं कृतवती। अस्या विलासवत्याः परिजनोऽपि परिच्छदोऽप्युपश्रुत्यै रजकादिवाक्यार्थं विलोकयितुं निर्जगाम बहिर्ययौ। 'देवप्रश्न उपश्रुतिः' इति कोशः। **तदिति**। तन्निमित्तानि तदुक्तशकुनानि जग्राहाग्रहीत्। **शिवेति**। शिवाभ्यः शृगालीभ्योऽनुदिनं प्रतिदिनं मांसबलिपिण्डं निशि रात्रावुत्ससर्जोत्सृष्टवती। स्वप्नदर्शनाश्चर्याणि स्वप्नालोकनकुतूहलान्याचार्याणां गुरूणामाचचक्षे कथितवती। चत्वरेषु शिवबलिमुपजहाराहृतवती।

**एवं चेति**। एवं पूर्वोक्तप्रकारेण गच्छति व्रजति कालेऽनेहसि कदाचित्कस्मिंश्चित्समये स्वप्ने राजा विलासवत्या आनने मुखे शशिनं विशन्तं प्रविशन्तमद्राक्षीद्ददर्श। कस्याम्। रजन्यां रात्रौ। किंविशिष्टायाम्। क्षीणं भूयिष्ठं यस्याः सा तस्याम्। स्तोकरात्रावित्यर्थः। कस्मिन्सति। नभस्याकाशे सति। आकाशं विशेषयन्नाह—**अल्पेति**। अल्पाः स्वल्पा एव शेषा अवशिष्टाः पाण्डुतारकाः श्वेतनक्षत्राणि यस्मिन्। जरीयान्यः पारावतः कपोतस्तस्य पक्षो वाजस्तद्वद्धूम्रे धूम्रवर्णे। विलासवतीं विशेषयन्नाह—**सितेति**। सितः शुभ्रो यः प्रासादस्तस्य शिखरमग्रं तत्र स्थिताया उपविष्टायाः। कस्याः किमिव। करिण्या हस्तिन्या आनने बिसवलयमिव मृणालवलयमिव। शशिनं विशिनष्टि—**सकलेति**। सकलाः समग्रा याः कलास्ताभिः पूर्णं मण्डलं यस्य स तथा तम्। प्रबुद्धो विगतनिद्रः सन्नुत्थायोत्थानं कृत्वा हर्षात्प्रमोदाद्यो विकाशो विमुद्रता तेन स्फीततरेणातिगरिष्ठेन विस्तारितेन चक्षुषा लोचनेन धवलीकृतं शुभ्रीकृतं वासभवनं निवासगृहं येन

---

**टिप्प०**—1 वेदानां श्रुतीः पाठानिति यावत्। 2 देवप्रश्नाय, दैवं मनुष्यादिद्वारा कीदृशं वचनं श्रावयतीति जिज्ञासायै 'नक्तं निर्गत्य यत्किञ्चिच्छुभाशुभकरं वचः। श्रूयते तद्विदुर्धीरा देवप्रश्नमुपश्रुतिम्॥' हारावली। 3 'शिवाबलिम्' इत्येव पाठः। अयमुपहारो दिवसे इति पूर्वेण न पौनरुक्त्यमाशङ्क्यम्।

---

**पाठा०**—१ द्विजगणान्. २ अनवरतम्. ३ पुण्याः कथाः. ४ गण्डकान्; दण्डकान्. ५ परिसरो. ६ औषधि; औषधी. ७ समुत्ससर्ज. ८ शिवाबलिम्. ९ एवं गच्छति. १० अल्पशेष. ११ पारापत. १२ धूसरे. १३ सौधशिखर. १४ बिसपल्लवम्; किसलयम्. १५ परिपूर्ण. १६ विशन्तम्. १७ सबहुमानं शुकनासमाहूय तम्; समाहूय शुकनासाय तम्.

स तं समुपजातहर्षः प्रत्युवाच—'देव, संपन्नाः सुचिरादस्माकं[1] प्रजानां च मनोरथाः । कतिपयैरेवाहोभिरसंदेहमनुभवति[2] स्वामी सुतमुखकमलावलोकनसुखम् । अद्य खलु मयापि निशि स्वप्ने धौत[3]सकलवाससा शान्त[4]मूर्तिना दिव्याकृतिना द्विजेन विकच[5]चन्द्रकलावदातदलशतमालोलकेसरसहस्र[6]जटालमकरन्द[7]बिन्दुसीकरवर्षि पुण्डरीकमुत्सङ्गे देव्या मनोरमाया निहितं दृष्टम् । आवेदयन्ति हि प्रत्यासन्नमानन्दम[9]ग्रेपातीनि[10] शुभानि[11] निमित्तानि । किं[12] चान्यदानन्दकारणमतो भविष्यति[13] । अवितथफला हि[14] प्रायो निशावसान[15]समयदृष्टा भवन्ति स्वप्नाः । सर्वथा नचिरेण[16] मान्धातारमिव धौरेयं सर्व[17]राजर्षीणां भुवनानन्दहेतुमात्मजं जनयिष्यति देवी । शरत्का[18]लकमलिनीवाभिनवकमलोद्गमेन गन्धगजमाह्लादयिष्यति देवम् ।

---

स तथा तस्मिन्नेव क्षणे समये । अत्रैवकारोऽन्ययोगव्यवच्छेदार्थः । शुकनासं समाहूयाह्वानं कृत्वा स्वप्नं निशादृष्टमकथयदुक्तवान् । 'कथ वाक्यप्रबन्धे' इत्यस्य लङि रूपम् । **स इति** । स शुकनासस्तं नृपं समुपजातः समुत्पन्नो हर्षः प्रमोदो यस्य स तथा प्रत्युवाच प्रत्यब्रवीत् । हे देव हे स्वामिन्, सुचिरादतिचिरकालेनास्माकं प्रजानां च मनोरथाश्चिन्तितानि संपन्ना निष्पन्नाः । **कतीति** । कतिपयैरेव स्तोकैरेवाहोभिर्दिवसैरसंदेहं निःसंदेहं स्वामी भवान्सुतस्यात्मजस्य यन्मुखकमलावलोकनमाननपद्मवीक्षणं तस्माद्यत्सुखं सातमनुभवति । अनुभविष्यतीत्यर्थः । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यत्यर्थे वर्तमानः । **अद्येति** । खलु निश्चयेन । अद्यास्यां निशायामेव मयापि निशि रात्रौ स्वप्ने धौतानि क्षालितानि सकलानि समग्राणि वासांसि वस्त्राणि येन स तथा तेन । शान्ता निरुपद्रवा मूर्तिः शरीरं यस्य स तथा तेन । दिव्या मनोहारिण्याकृतिराकारो यस्य स तथा तेन । द्विजेन ब्राह्मणेन विकचं विकस्वरं चन्द्रकलावदवदातं शुभ्रं दलशतं पत्रशतं यस्मिंस्तत् । 'पर्णं पत्रं छदं दलम्' इति कोशः । आलोलं चञ्चलं यत्केसरसहस्रं किञ्जल्कसहस्रं तेन जटालं जटिलम् । 'प्राणिस्थादात–' इति मत्वर्थे आलच् । मकरन्दो मरन्दस्तस्य बिन्दवः पृषतास्त एव सीकरा वातास्तवारिकणास्तद्वर्षणकार्येतादृशं यत्पुण्डरीकं सिताम्भोजं देव्या मनोरमायाश्चित्त[1]हारिण्या उत्सङ्गे क्रोडे निहितं स्थापितं दृष्टमवलोकितम् । मयेति पूर्वप्रतिपादितम् । अग्रेपातीनि पुरोजातानि शुभानि शिवानि निमित्तान्यक्षिस्फुरणादीनि प्रत्यासन्नं समीपवर्तिनमानन्दं प्रमोदमावेदयन्ति निवेदयन्ति । किं चेति युक्त्यन्तरे[2] । अतः पूर्वोक्तादन्यदधिकमानन्दकारणं प्रमोदनिदानं भविष्यति । अत्रार्थे हेतुमाह—**अवितथेति** । प्रायो बाहुल्येन निशावसानसमयदृष्टा रात्रिप्रान्तक्षणावलोकिताः स्वप्ना अवितथफलाः सत्यफला भवन्ति संपद्यन्ते । **सर्वथेति** । सर्वप्रकारेण नचिरेणेति स्वल्पकालेन मान्धातारमिव युवनाश्वजमिव सर्वराजर्षीणां समग्रराज्ञां मध्ये धौरेयं धुरीणम् । एतेनाधिपत्येऽपि सदाचारवत्त्वं सूचितम् । भुवनानन्दहेतुं जगत्प्रमोदकारणमात्मजं सुतं देवी जनयिष्यति प्रसविष्यति । **शरदिति** । शरत्कालकमलिनीव घनात्ययसमयनलिनीवाभिनवकमलोद्गमेन प्रत्यग्रनलिनप्रादु-

---

**टिप्प०—**1 पर्यायकरणं भ्रामकमिदं टीकाकर्तुः, मनोरमेति तन्नाम । 2 अत्रापि बभ्राम टीकाकारः । 'अतः अन्यत् आनन्दकारणं किं भविष्यति' इत्यन्वयः (पुत्रमुखदर्शनानन्दादन्यत् किं स्यादिति तदर्थः) ।

---

**पाठा०—**१ अस्माकं मनोरथाः. २ असंशयमनुभविष्यति. ३ धौतधवल; धौतसकलधवल. ४ प्रशान्त. ५ विकचम्. ६ जटिल; जटालम्. ७ मधु. ८ संदेह. ९ सितपुण्डरीक. १० अग्रेजातानि; आनन्दपातीनि; अग्रपातीनि. ११ शुभनिमित्तानि. १२ किं वान्यत्प्रियतरं परमानन्द; किं चान्यत्प्रियतरमधिकमानन्द; किं चान्यत्प्रियतरमधिकानन्द; किं चान्यत्प्रियतरमपरमधिकमानन्द. १३ विद्यते. १४ च. १५ समये दृष्टा. १६ नचिरेणैव; अचिरेण. १७ राजर्षीणाम्. १८ शरत्.

येनेयं दिग्गजमदलेखेवाविच्छिन्नसंताना क्षितिभारधारणोचिता भविष्यति कुलसंततिः स्वामिनः' इत्येवमभिदधानमेव तं करेण गृहीत्वा नरेन्द्रः प्रविश्याभ्यन्तरमुभाभ्यामपि ताभ्यां स्वप्नाभ्यां विलासवतीमानन्दयांचकार[1]।

कतिपयदिवसापगमे च देवताप्रसादात्सरसीमिव प्रतिमाशशी विवेश गर्भो विलासवतीम्। येन[2] नन्दनराजिरिव[3] पारिजातेन मधुसूदनवक्षःस्थलीव कौस्तुभमणिना सुतरामराजत सा[4]। दर्पणश्रीरिव[5] गर्भच्छलेन संक्रान्तमवनिपालप्रतिबिम्बमुवाह। सा[6] शनैः शनैश्च प्रतिदिनमुपचीयमानगर्भा[7] निर्भरपरिपीतसागरसलिलभरमन्थरेव मेघमाला[8] मन्दं मन्दं संचचार। मुहुरनुबद्ध[9]जृम्भिकमा[10]जिह्मितलोचना[11] सालसं निशश्वास। तथावस्थां[12] तामहरहः[13] स्वय-

---

भावेन गन्धगजं देवं भवन्तमाह्लादयिष्यति प्रमोदयिष्यति। पक्षेऽभिनवा कमला पुत्रसंपत्। अत एव देव्याः कमलिनीसाम्यं राज्ञो गन्धगजसाम्यं चेति भावः। **येनेति**। येन कारणेन इयं दिग्गजमदलेखेवा-विच्छिन्नमत्रुटितं संतानं पुत्रपौत्रादिप्रवाहरूपं च यस्याः सैवंभूता स्वामिनो राज्ञः कुलसंततिः क्षितिः पृथ्वी तस्या भारो वीवधस्तस्य धारणं वहनं तत्रोचिता भविष्यति। इत्येवं पूर्वोक्तरूपमभिदधानं ब्रुवाणमेव तं करेण गृहीत्वा हस्तेनादाय नरेन्द्रो नृपोऽभ्यन्तरं मध्यप्रदेशं प्रविश्य प्रवेशं कृत्वा ताभ्यामुभाभ्यामपि स्वप्नाभ्यां विलासवतीमानन्दयांचकार प्रमोदयांचकार।

**कतीति**। कतिपये कियन्तो ये दिवसास्तेषामपगमेऽतिक्रमे सति देवताप्रसादाद्देवतानुग्रहाद्विलासवतीं गर्भो विवेश प्रविष्टो बभूव। अत्रार्थे उपमानं प्रदर्शयन्नाह—**सरसीमिति**। सरसीं कासारं प्रतिमाशशीव प्रतिबिम्बरूपश्चन्द्र इव। **येनेति**। येन गर्भेण सा सुतरामतिशयेनाराजताशोभत। केनेव केव। पारिजातेन कल्पद्रुमेण। 'मन्दारः पारिजातकः' इति कोशः। नन्दनेतीन्द्रस्य काननम्। 'नन्दनं वनम्' इति कोशः। तस्य राजिः श्रेणिरिव। यथा कल्पपादपेन वनमतितरां शोभां प्राप्तं तथा गर्भेणेयमपीति भावः। उपमानान्तरं प्रदर्शयन्नाह—**कौस्तुभेति**। कौस्तुभमणिना प्रसिद्धेन मधुसूदनस्य जनार्दनस्य वक्षःस्थलीव भुजान्तरस्थलीव। अतिविस्तृतत्वेन गौरत्वेन च स्थल्या उपमानं वक्षसः। **दर्पणेति**। दर्पण आदर्शस्तस्य श्रीः प्रकाशरूपा सेव गर्भो भ्रूणस्तस्य छलेनोपधिना संक्रान्तमन्तःप्रविष्टमवनिपालो भूनेता तस्य प्रतिबिम्बं प्रतिरूपमुवाहावहत्। 'वह प्रापणे' इति धातोरभ्याससंप्रसारणे लिटि रूपम्। अयं भावः—यथा दर्पणः संक्रान्तं प्रतिबिम्बं वहति तथेयमपि राजप्रतिबिम्बमुवाह। अनेन राजराजसुतयोः सर्वथाऽभेदो दर्शितः। **सेति**। सा विलासवती मन्दं मन्दं संचचार चचालेत्यन्वयः। तामेव विशेषयन्नाह—**प्रतीति**। प्रतिदिनं प्रत्यहं शनैः शनैः। स्वल्पप्रयासेनेत्यर्थः। स्तोकं स्तोकम्। **उपचीयेति**। उपचीयमानोऽवयवैः पुष्टतां प्राप्यमाणो गर्भो यस्याः सा। **निर्भरेति**। निर्भरमतिशयं परिपीतमास्वादितं सागरस्य समुद्रस्य सलिलं जलं तस्य भरो भारस्तेन मन्थरालसा मेघमालेव कादम्बिनीव। समुद्राज्जलमादाय मेघो वर्षतीति लोकोक्तिः। अन्वयस्तु प्रागेवोक्तः। **मुहुरिति**। मुहुर्वारंवारमनुबद्धा कर्तुमारब्धा जृम्भा एव जृम्भिका। स्वार्थे कप्रत्ययः। यत्र यस्यां क्रियायां वा

---

**टिप्प०**—1 शरत्कालकमलिनी गन्धगजमिव देवमाह्लादयिष्यति' इति इवस्य गन्धगजोत्तरमन्वयो योग्यः। 2 दिग्गजस्य मदलेखा दानजलधारा इव। 3 न विच्छिन्नः संतानः (वंशः पुत्रपौत्रादिरूपः, इति संततिपक्षे), प्रवाहः (इति मदलेखापक्षे) यस्याः एवंभूता सती स्वामिनः कुलसंततिः क्षितिभारधारणे उचिता भविष्यतीत्युभयपक्षे व्याख्या। 4 कालक्रमेणेत्यर्थः।

---

**पाठा०**—१ विनोदयांचकार. २ येन च. ३ नन्दनवनराजिः. ४ देवी. ५. श्रीरिव च. ६ शनैः. ७ प्रतिदिवसमुपचीयमानगर्भा; प्रतिदिनमुग्धा द्विप्रमाणगर्भा. ८ घनमाला. ९ मुहुर्मुहुः. १० विजृम्भिक. ११ लोचनम्. १२ स तथावस्थां च. १३ तामनभिनन्दितपान.

मनेकरसवाञ्छितपानभोजनां प्रावृषमिव श्यामायमानपयोधरमुखीं केतकीमिव गर्भच्छविपाण्डुरामालोक्येङ्गितकुशलः परिजनो विज्ञातवान् ।

अथ तस्याः सर्वसेवकवर्गप्रधानभूता, सदा राजकुलसंवासचतुरा, सदा च राजसंनिकर्षप्रगल्भा, सर्वमङ्गलकुशला कुलवर्धना नाम महत्तरिका प्रशस्ते दिवसे प्रदोषोत्तरवेलायामभ्यन्तरास्थानमण्डपगतम्, गन्धतैलावसेकज्वलितदीपिकासहस्रपरिवारम्, उडुनिकरमध्यवर्तिनमिव पौर्णमासीशशिनम्, उरगराजफणामणिसहस्रान्तरालस्थितमिव नारा-

---

यथा भवति तथा । आ समन्ताज्जिह्मितं जडीकृतं विकृतं वा निमेषोन्मेषाभ्यां लोचनं यस्याः सा । अनेन गर्भवतीस्वभावः सूचितः । सालसमालस्यसहितं यथा स्यात्तथा निशश्वास निश्वासं मुक्तवती । गर्भानुभावान्निश्वासग्रहणेऽपि तादृशसामर्थ्याभावादिति भावः । निपूर्वस्य 'श्वस प्राणधारणे' इत्यस्य लिटि रूपम् । **तथेति** । तथा पूर्वोक्ता एवावस्था दशा यस्यास्तां विलासवतीमालोक्य वीक्ष्येङ्गितेष्वन्तर्गतभावावेदकचेष्टितेषु कुशलोऽभिज्ञः । चेष्टितज्ञानवानित्यर्थः । परिजनः संनिहितस्त्रीसौविदल्लजनो विज्ञातवान् । अन्तर्वत्नीरूपतया तां निश्चितवान् । तामेव विशेषयन्नाह—**अहरिति** । अहरहः प्रतिदिनम् । स्वयमित्यात्मनिर्देशः । अनेके बह्वस्तिक्तादयो रसा अन्ने स्वादहेतवो यस्मिन्नेवंभूतं वाञ्छितमीप्सितं पानं द्राक्षापानकादि, भोजनमशनं च यस्याः सा ताम् । श्यामायमानं कृष्णतां प्राप्यमाणं पयोधरयोः स्तनयोर्मुखं चूचुकं यस्याः सा ताम् । कामिव । प्रावृषमिव वर्षासमयमिव । सापि पयोधरैर्मेघैः श्याममुखी स्यात् । **केतकीति** । गर्भजनिता या छविर्देहदीप्तिस्तया पाण्डुरां शुक्लाम् । कामिव । केतकीमिव । सापि गर्भो मध्यभागस्तस्य छविः कान्तिस्तया पाण्डुरा स्यात् ।

अथ तस्याः कुलवर्धना नाम स्त्री भूमिपालं राजानमुपसृत्य समीपे गत्वा प्रशस्ते शोभने दिवसे रह एकान्ते कर्णमूले विलासवतीगर्भवृत्तान्तं तस्या गर्भोदन्तं विदितं ज्ञातमकार्षीदकरोदित्यन्वयः । कुलवर्धनां विशेषयन्नाह—**सर्वेति** । सर्वेषु सेवकवर्गेषु प्रधानभूता श्रेष्ठा । नीचस्य तादृशप्रवेशाभावाच्छ्रेष्ठत्वेऽप्यवसरानभिज्ञस्य तदभावादित्यत आह—**सदेति** । सदा सर्वदा राजकुले नृपपरम्परायां संवासोऽवस्थानं तत्र चतुरा दक्षा । तद्वत्त्वेऽप्यदृष्टस्य तदभावादित्याह—**सदेति** । सदा सर्वकालं च राज्ञा यः संनिकर्षः संबन्धस्तत्र प्रगल्भा पण्डिता । **सर्वेति** । सर्वाणि यानि मङ्गलानि श्रेयांसि तत्र कुशला । तत्कृत्यकरणेऽभिज्ञेत्यर्थः । वयसातिशयिता महती महत्तरिका । स्वार्थे कः । **प्रदोषेति** । प्रदोषोत्तरवेलायाम् । प्रदोषे सर्वनिषेधात् । अथवा प्रदोषो न संध्याकालः । वृत्तान्तस्य गोप्यकथनत्वाद्दिवसे तदभावादिति भावः । भूमिपालं विशेषयन्नाह—**अभ्यन्तरेति** । अभ्यन्तरे मध्ये य आस्थानमण्डप उपवेशनस्थलं तत्र गतं प्राप्तम् । बाह्ये तथाविधजनसंसर्गादिति भावः । **गन्धेति** । गन्धतैलं सुगन्धतैलं तस्यावसेकः संपातस्तेन ज्वलितं दीपिकानां सहस्रं यस्मिन्नेतादृशः परिवारो मण्डपस्थपरिच्छदो यस्य स तम् । दीपिकासहस्रमेव परिवारो यस्येति वा । तद्दीप्त्या लोकानां तिरोधानादिति भावः । तादृशतैलसंपर्काद्दीपिकाप्रभया नक्षत्रप्रभया अवशिष्टनियुक्तपरिकरस्योडुसाम्यं राज्ञश्चन्द्रसाम्यं च प्रतिपादयन्नाह—**उड्विति** । उडूनां नक्षत्राणां निकरः समूहस्तन्मध्यवर्तिनं तदन्तःपातिनं पौर्णमासीशशिनमिव राकाचन्द्रमिव । अन्यत्र दिने चन्द्रस्यासंपूर्णत्वात्पौर्णमासीग्रहणम् । तादृशपरिकरत्वादेवोपमानान्तरमाह—**उरगेति** । उरगराजो नागाधिपतिस्तस्य सहस्रमुखत्वात्फणामणिसहस्रं

---

**टिप्प०—1 शूद्रजातीया स्त्री, 'शूद्रः स्यात्पादजो दासो ग्रामकूटो महत्तरः'। इति त्रिकाण्डशेषः (इति केचित्)। वस्तुतस्तु 'कुलवर्द्धना नाम महत्तरिका' इति महत्तरिकापदेन राजान्तःपुरप्रधानप्रबन्धकर्त्री सूच्यते, 'बडारन' इति राजस्थानभाषायाम्।**

---

**पाठा०—**१ गर्भपाण्डुरान्. २ अन्तःपुरिकाजनः. ३ सर्वपरिजमप्रधान. ४ सर्वदा. ५ महान्तःपुरिका सा. ६ तैलाभिषेक. ७ परिवृतम्. ८ फण.

यणम्, मूर्धावसिक्तैः प्रधाननरेन्द्रैः[1] परिमितैः परिवृतम्, अनतिदूरावस्थितपरिजनम्, अनन्तरमुत्तुङ्गवेत्रासनोपविष्टेन धौतधवलाम्बरपरिधानेनानुल्बणवेषेण[2] जलनिधिनेवागाध-गाम्भीर्येण समुपारूढविश्रम्भनिर्भरास्तास्ताः कथाः शुकनासेन[3] कुर्वाणं भूमिपालमुपसृत्य रहः कर्णमूले [4]विदितं विलासवतीगर्भवृत्तान्तमकार्षीत् ।

तेन तु तस्या वचनेनाश्रुतपूर्वेणासंभाव्येनामृतरसेनेव सिक्तसर्वाङ्गस्य सद्यः प्र[5]रूढरो[6]मा-ञ्चनिकरकण्टकिततनोरानन्दरसेन विह्वलीक्रियमाणस्य स्मितविकसितकपोलस्थ[7]लस्य परि-पूरितहृदयातिरि[8]क्तहर्षमिव दशनांशुवितानच्छलेन विकिरतो राज्ञः शुकनासमुखे लोल-तारकमानन्दजलबिन्दुक्लिन्नपक्ष्ममालं तत्क्षणं पपात चक्षुः । [9]अनालोकितपूर्वं [10]तु हर्षप्रक-र्षम[11]भिसमीक्ष्य भूपतेः कुलवर्धनां च स्मितविकसितमुखीमागतां दृष्ट्वा तस्य चार्थस्य सततं मनसि वि[12]परिवर्तमानत्वादविदितवृत्तान्तोऽपि तत्कालोचितमपरमतिमहतो हर्षस्य कारण-

---

तस्यान्तरालं मध्यप्रदेशस्तत्र स्थितमासीनं नारायणमिव जनार्दनमिव । **मूर्धेति** । मूर्धावसिक्तैः कृताभिषेकैः प्रधाननरेन्द्रैः प्रकृष्टराजभिः परिमितैः स्तोकैः परिवृतं सहितम् । अभ्यन्तरे तादृशजनानामेव प्रवेशसंभवात् । **अनतीति** । न अति नातिदविष्ठप्रदेशेऽवस्थितः परिजनो यस्य स तम् । 'अम्खरे' इति नञोऽनादेशः (?) । पुनः कीदृशम् । शुकनासेन मन्त्रिणा तास्ताः कथाः कुर्वाणं तास्ता अनिर्वचनीयाः कथाः किंवदन्तीः कुर्वाणं विदधानम् । अथ शुकनासं विशेषयन्नाह—**अनन्तरमिति** । राज्ञः सिंहासनादनन्तरं यथा स्यात्तथोत्तुङ्ग-मुच्चं यद्वेत्रासनमासनविशेषस्तत्रोपविष्टेन स्थितेन । **धौतेति** । धौतं क्षालितं यद्धवलाम्बरं तदेव परिधान-मधोंशुकं यस्य स तथा तेन । 'परिधानं त्वधोंशुकम्' इति कोशः । **अन्विति** । अनुल्वणोऽनुत्कटो वेषो नेपथ्यं यस्य स तेन । जलनिधिनेव समुद्रेणेवागाधमलब्धमध्यं गाम्भीर्यं गम्भीरतागुणो यस्य स तेन । अथ कथा विशिनष्टि—**समुपेति** । समुपारूढः सम्यक्प्रकारेणोपारूढः प्राप्तो यो विश्रम्भो विश्वासः स निर्भरोऽति-शयो यासु ताः । अन्वयस्तु प्रागेवोक्तः ।

**तेनेति** । तु पुनरर्थे । तस्या महत्तरिकायास्तेन वचनेन पूर्वोक्तप्रतिपादितेन राज्ञो नृपस्य चक्षुर्नेत्रं शुकनासमुखे तत्क्षणं पपातापतदित्यन्वयः । वचनं विशेषयन्नाह—**अश्रुतेति** । अश्रुतपूर्वेणानाकर्णितपूर्वेण । संभावयितुं योग्यं संभाव्यम् । न संभाव्यमसंभाव्यं तेन । कीदृशस्य राज्ञः । सिक्तं सिञ्चितं सर्वाङ्गं समग्रं शरीरं यस्य स तथा तस्य । केनेव । अमृतरसेनेव पीयूषद्रवेणेव । मनोभीष्टत्वाद्दुःखनिवारकत्वाच्च वचनस्यामृतसाम्यम् । सद्यस्तत्कालं प्ररूढः प्रादुर्भूतो यो रोमाञ्चो रोमोद्गमस्तस्य निकरः समूहस्तेन कण्ट-किता संजातकण्टका तनुः शरीरं यस्य स तथा तस्य । **आनन्देति** । आनन्दः प्रमोदः स एव रसस्तेन विह्वलीक्रियमाणस्य व्याकुलीक्रियमाणस्य । **स्मितेति** । अदृष्टरदं यद्धसितं तत्स्मितम् । तेन विकसितं विस्तीर्णतां प्राप्तं कपोलस्थलं यस्य स तथा तस्य । अत्रोत्प्रेक्षां प्रदर्शयन्नाह—**परीति** । परिपूरितं पूर्णीकृतं हृदयं तस्मादतिरिक्तमुर्वरितं हर्षमिव दशनांशुवितानच्छलेन दन्तदीप्तिसमूहमिषेण विकिरतो बहिः क्षिपतः । चक्षुर्विशिनष्टि—लोला चञ्चला तारका कनीनिका यस्मिंस्तत् । **आनन्देति** । आनन्दजलबि-न्दुभिः प्रमोदजनितनेत्रजलपृषतैः क्लिन्नं खिन्नं पक्ष्ममालं नेत्ररोमसमूहो यस्मिंस्तत्तथा । **अनालोकितेति** । भूपते राज्ञोऽनालोकितपूर्वमवीक्षितपूर्वं हर्षप्रकर्षं प्रमोदातिशयमभिसमीक्ष्य निरीक्ष्य । च पुनरर्थे । कुलवर्धनां स्मितेन विकसितं विकस्वरं मुखमाननं यस्या एतादृशीमागतां समागतां दृष्ट्वा विलोक्य । **तस्येति** । तस्य

---

पाठा०—१ नरेन्द्रैः परिवृतम्. २ नात्युल्बण. ३ शुकनासेन सह. ४ संवाससंचारचतुरा विदित. ५ प्रकट. ६ रो-माङ्कुर. ७ मूलस्य. ८ रिक्तम. ९ अनालोचितः. १० तु तम्. ११ अभिसंवीक्ष्य. १२ वर्तमानत्वात्; परिवर्तमानत्वात्.

मपश्यञ्छुकनासः स्वयमुत्प्रेक्ष्य समुत्सर्पितासनः समीपतरमुपसृत्य नातिप्र[1]कटमाबभाषे— 'देव, अ[2]स्ति किंचि[3]त्तस्मिन्स्वप्नदर्शने सत्यम् ? अ[4]त्यन्तमुत्फुल्ललोचना हि कुलवर्धना दृश्यते । देवस्यापीदं प्रियवचनश्रवणकुतूहलादिव श्रवणमूलमुपसर्पदुपरचयदिव नीलकुवलयकर्णपूरशोभामानन्दजलपरि[5]प्लुतं तरलतारकं विकसदावेदयति महत्प्र[6]कर्षकारणमीक्षणयुगलम् । उपारूढमहोत्सवश्रवणकुतूहलमुत्सु[7]कोत्सुकं क्लाम्यति मे मनः । तदावेदयतु देवः किमिदम्' इत्युक्तवति तस्मिन्राजा विहस्याब्रवीत्—'यदि सत्यमनया यथा कथितं [8]तथा सर्वमवितथं स्वप्नदर्शनम् । अहं तु न श्रद्दधे । कुतोऽस्माकमियती भाग्यसंपत् । अभाजनं हि वयमीदृशानां प्रियवचनश्रवणानाम् । अवितथवादिनीमप्यहं कुलवर्धनामेवंविधानां कल्याणानामसंभावितमात्मानंमन्यमानो विपरीतामिवाद्य पश्यामि । तदुत्तिष्ठ । स्वयमेव गत्वा किमत्र सत्यमिति देवीं पृष्ट्वा ज्ञास्यामि' इत्यभिधाय वि[9]सृज्य सकलनरेन्द्रलोकमु[10]न्मुच्य

---

विलासवत्या समाचीर्णानि व्रतानि तन्महिम्नावश्यमेतस्या गर्भो भविष्यतीत्येतादृशस्यार्थस्य सततं निरन्तरं मनसि चित्ते विपरिवर्तमानत्वाद्दृढं स्मर्यमाणत्वादविदितोऽज्ञातो वृत्तान्तो गर्भधारणरूपो येन स तथैवंविधोऽपि शुकनासस्तत्कालोचितं तत्समययोग्यमपरमन्यदतिमहतोऽत्युत्कृष्टस्य हर्षस्य प्रमोदस्य कारणं नियामकमपश्यन्नवलोकयन्स्वयमात्मनोत्प्रेक्ष्य विचार्य समुत्सर्पितमूर्ध्वीकृतमासनमवस्थितिबन्धो येन स तथा । समीपतरमतिनिकटमुपसृत्य गत्वा । राज्ञ इति शेषः । नातिप्रकटं सुगोप्यं यथा स्यात्तथा बभाषेऽवोचत् । किं तदित्याह—**देवेति** । हे देव हे स्वामिन्, तस्मिन्पूर्वोक्तस्वरूपे स्वप्नदर्शने किंचित्सत्यमस्ति तद्देवो भवानावेदयतु निवेदयतु । कुत इत्यत आह—**अत्यन्तेति** । हि यस्मात्कारणादियं कुलवर्धनात्यन्तमुत्फुल्ललोचनोत्प्राबल्येन विकसितनेत्रा दृश्यतेऽवलोक्यते । देवस्यापि स्वामिनोऽपीदमीक्षणयुगलं नेत्रयुग्मं महत्प्रकर्षकारणम् । प्रमोदस्येति शेषः । आवेदयति निवेदयति । किं कुर्वत् । विकसद्विकासं प्राप्नुवत् । तदेव विशिनष्टि—**प्रियेति** । प्रियमिष्टं यद्वचनं वचस्तस्य श्रवणमाकर्णनं तस्य कुतूहलं कौतुकं तस्मादिव श्रवणमूलं कर्णमूलमुपसर्पद्गच्छत् । नीलं यत्कुवलयं कुवेलं तल्लक्षणं यत्कर्णपूरं कर्णाभरणं तस्य शोभां कान्तिमुपरचयदिव निष्पादयदिव । **आनन्देति** । आनन्दजलं प्रमोदबाष्पस्तेन परिप्लुता व्याप्ता तरला चपला तारका कनीनिका यस्य तत् । उपारूढं प्राप्तं महोत्सवस्य महामहस्य श्रवणकुतूहलं येन तत् । उत्सुकोत्सुकम् । अत्युत्सुकमित्यर्थः । मे मम मनश्चित्तं क्लाम्यति खेदं प्राप्नोति । अन्वयस्तु प्रागेवोक्तः । किमिदं प्रमोदनियामकम् । इति पूर्वोक्तप्रकारेण तस्मिञ्छुकनास उक्तवति कथितवति सति राजा नृपो विहस्य किंचित्स्मितं कृत्वाब्रवीदवोचत् । **यदीति** । यद्यनया यथा कथितं सत्यं तथा सर्वमवितथं यथार्हं स्वप्नदर्शनम् । धीरोदात्तत्वादाह—**अहमिति** । अहमित्यात्मनिर्देशः । न श्रद्दधे न विश्वासं करोमि । तन्नियामकमाह—**कुत इति** । अस्माकमियत्येतावती भाग्यस्य भागधेयस्य संपत्संपत्तिः कुतः स्यात् । ममेति शेषः । हि निश्चितम् । ईदृशानां पूर्वोक्तानां प्रियमिष्टं यद्वचनं तस्य श्रवणान्याकर्णनानि तेषां वयमभाजनमपात्रम् । अथ चाहमवितथवादिनीमपि सत्यप्रलापिनीमपि कुलवर्धनाम्, विपरीतामिवासत्यवादिनीमिवाद्यास्मिन्दिने पश्याम्यवलोकयामि । कीदृशोऽहम् । एवंविधानां पूर्वव्यावर्णितस्वरूपाणां कल्याणानां निःश्रेयसानामसंभावितमयोग्यमात्मानं मन्यमानो ज्ञायमानः । तदिति हेत्वर्थे । हे शुकनास, उत्तिष्ठोत्थानं कुरु । स्वयमेवात्मनैव गत्वा । अन्तःपुर इति शेषः । किमत्र सत्यमिति देवीं विलासवतीं पृष्ट्वापृच्छ्य ज्ञास्यामि निर्णेष्यामीत्यभिधायेत्युक्त्वान्तःपुरमयासीत् । लुङि 'या प्रापणे' एतस्मान्निद्धातो रूपम् । सकलनरेन्द्रलोकं समग्रराजसमूहं विसृज्य गृहाय गम्यतामित्यनुज्ञाप्य स्वाङ्गेभ्यः स्वकीयहस्तपा-

---

**टिप्प०**—1 समुत्सर्पितम् निकटे आकृष्टम् वेत्रासनं ( राज्ञः कर्णे वार्ताकथनार्थम् ) येनेति स्पष्टोऽर्थः ।

---

पाठा०—१ प्रकाशम्. २ किमस्ति. ३ किंचित्स्वप्न. ४ अत्यन्तोत्फुल्ल; उत्फुल्ल. ५ प्लुततरल. ६ प्रहर्ष. ७ उत्सुकम्. ८ तदा. ९ विसर्ज्य. १० उन्मुच्य च.

स्वाङ्गेभ्यो भूषणानि कुलवर्धनायै दत्त्वा तया च दत्तप्रसादानन्तरमवनितलाश्लिष्टललाटरेखया शिरःप्रणामेनाभ्यर्चितः सह शुकनासेनोत्थाय हर्षविशेषनिर्भरेण त्वर्यमाणो[1] मनसा पवनचलितनीलकुवलयदललीलाविडम्बकेन दक्षिणेनाक्ष्णा परिस्फुरताभिनन्द्यमानस्[2]तत्कालसेवासमुचितेन विरलविरलेन परिजनेनानुगम्यमानः पुरःसंसर्पिणीनामनिललोलस्थूलशिखानां[3] प्रदीपिकानामालोकेन[4] समुत्सार्यमाणकक्षान्तरतिमिरसंहतिरन्तःपुरमयासीत्[5]।

तत्र[6] च सुकृतरक्षासंविधाने, नवसुधानुलेपन[7]धवलिते, प्रज्वलितमङ्गलप्रदीपे[8], पूर्णकलशाधिष्ठित[9]पक्षके[10], प्रत्यग्रलिखितमङ्गल्यालेख्यो[11]ज्ज्वलित[12]भित्तिभाग[13]मनोहारिणि, उपरचित[14]सितविताने[15], वितानपर्यन्ताव[16]बद्धमुक्तागुणे[17], मणिप्रदीपप्रहत[18]तिमिरे वासभवने[19] भूति[20]लिखि-

---

दादिभ्यो भूषणान्याभरणान्युन्मुच्योत्तार्य कुलवर्धनायै महत्तरिकायै दत्त्वा वितीर्य। कीदृशो नृपः। **तया चेति**। तया कुलवर्धनयाभ्यर्चितः पूजितः। केन। शिरःप्रणामेनोत्तमाङ्गप्रणमनेन। तां विशिनष्टि—**दत्तेति**। दत्तो यः प्रीत्या प्रसादो वस्त्रपात्रादिरूपस्तस्यानन्तरं पश्चादवनितले वसुधातले श्लिष्टा संयोजिता ललाटरेखालिकरेखा यया सा तया। अनेन राज्ञोऽतिवदान्यत्वं स्वस्मिन्नभिनवोक्त्या राज्ञः संतोषकरणनिमित्तकोऽभिनिवेशश्च सूचितः। पुनः किं कृतवानित्याह—**सहेति**। सह समानकालं शुकनासेन उत्थाय उत्थानं कृत्वा हर्षविशेषस्य प्रमोदातिशयस्य निर्भरो यस्मिन्नेवंविधेन मनसा चित्तेन त्वर्यमाणस्त्वरां क्रियमाणः। **पवनेति**। पवनेन वायुना चलितं यन्नीलकुवलयं तस्य दलस्य या लीला तस्या विडम्बकेन तिरस्कारिणा दक्षिणेनापसव्येनाक्ष्णा चक्षुषा परिस्फुरता स्पन्दताभिनन्द्यमान आनन्द्यमानस्तत्कालीना या सेवा सपर्या तस्यां समुचितेन योग्येन। **विरलेति**। विरलविरलेन वीप्सया द्वित्वम्। यथा यथा वासभवनाभ्यन्तरगमनं राज्ञस्तथा तथा विरलविरलत्वं बोध्यम्। एवंविधेन परिजनेन परिच्छदेनानुगम्यमानोऽनुव्रज्यमानः। **पुर इति**। पुरोऽग्रे संसर्पिणीनां व्रजन्तीनाम्। **अनिलेति**। अनिलेन वायुना लोलास्तरलाः स्थूलशिखा यासां तास्तासाम्। **प्रदीपिकेति**। प्रदीप एव प्रदीपिका। स्वार्थे कः। 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' इति कात्पूर्वमिकारः। तासां प्रदीपिकानामालोकेन प्रकाशेन समुत्सार्यमाणा निराक्रियमाणा कक्षान्तर उत्तरोत्तरप्रदेशे तिमिरसंहतिर्ध्वान्तसमूहो यस्येति राज्ञो विशेषणम्। अन्वयस्तु प्रागेवोक्तः।

**तत्र चेति**। तत्र तस्मिन्नन्तःपुरे वासभवने शयनतलमधिशयानां विलासवतीं ददर्शेति दूरेणान्वयः। वासभवनं विशेषयन्नाह—**सुकृतेति**। सुष्ठु शोभनं कृतं रक्षासंविधानं पापपाखण्डशाकिनीडाकिनीप्रभृतीनां प्रवेशप्रतिबन्धकर्मणि मन्त्राद्यौषधप्रकारो यस्मिन्। नवा प्रत्यग्रा या सुधा तस्या अनुलेपनेन धवलिते शुभ्रीकृते। प्रज्वलितो मङ्गलाभिधः प्रदीपो यस्मिन्। पूर्णकलशैर्भृतकुम्भैरधिष्ठितं पक्षकं पक्षद्वारं यस्मिन्। 'पक्षद्वारं तु पक्षकं' इति कोशः। **प्रत्यग्रेति**। प्रत्यग्रलिखितानि नूतनलिपीकृतानि यानि मङ्गल्यानि मङ्गले हितान्यालेख्यानि चित्राणि तैरुज्ज्वलितो दीप्तिमान्यो भित्तिभागः कुड्यप्रदेशस्तेन मनोहारिण्यभिरामे। **उपेति**। उपरचितं निष्पादितं सितवितानं श्वेतकन्दको यस्मिन्। **वितानेति**। वितानमुल्लोचस्तत्पर्यन्तं तत्प्रान्तं यावदवबद्धो मुक्तागुणो मुक्ताजालं यस्मिन्। **मणीति**। मणय एव प्रदीपास्तैः प्रहतं ध्वस्तं तिमिरं तमो यस्मिन्। इतः परमेकादशभिः शयनतलं विशेषयन्नाह—**भूतीति**। भूत्या ऐश्वर्यार्थं लिखिता या पत्रलता पत्रफलान्विता लता कल्पलता तया कृतो रक्षाया गर्भरक्षायाः परिक्षेपो दार्ढ्यं यस्मिन्।

---

**पाठा०**—१ पूर्यमाणः. २ अभिवन्द्यमान. ३ लोलोच्छलच्छिखानाम्. ४ प्रदीपकानाम्. ५ तिमिरमन्तःपुरम्. ६ तत्र वसुकृत; तत्र बहुकृत. ७ सुधालेप. ८ दीपे. ९ अधिष्ठिते. १० द्वारपक्षके; द्वारपक्षक. ११ मङ्गल्यलेख्य. १२ उज्वल. १३ भागे. १४ समुपरचित. १५ सितवितान. १६ पर्यन्तस्थित. १७ मुक्तागणे. १८ प्रतिहत. १९ भुवने. २० भूमि; भित्ति.

तपत्रलताकृतरक्षापरिक्षेपम्, शयनशिरोभागविन्यस्त[1]धवलनिद्रामङ्गल[2]कलशम्, आबद्धविविधौषधिमूलयन्त्र[3]पवित्रम्, अवस्थापितरक्षाशक्तिवलयम्, इतस्ततो विप्रकीर्णगौरसर्षपम्, अव[4]लम्बितबालयोक्त्रग्रथितलोल[5][6]पिप्पलपत्र[7]म्, आसक्तहरितारिष्टपल्लवम्, उत्तुङ्गपादपीठ[8]प्रतिष्ठितम्, इन्दुदीधितिधवलप्रच्छदपटम्, अचलराजशिलातलविशालम्, गर्भोचितं शयनतलमधिशयानाम् कनकपात्रपरिगृहीतैरविच्छिन्न[9]विरलावस्थितदधिलवैर्जलतरङ्गतरलश्वेत[10]शालिसिक्थनिकरैरग्रथित[11]कुसुमसनाथैः पूर्णभाजनैरखण्डिताननमत्स्यपटलैश्च प्रत्यग्रपिशितपिण्डमिश्रै-

---

दृश्यते हि देशविशेषे सद्यो गर्भसंभूत्यर्थं प्रथमतो नवोढायाः फलपत्रान्वितकदलिकया क्रियते। गर्भानन्तरं च पर्यङ्क उत्तरच्छदे शयनीयगृहभित्तौ वा फलपत्रान्विता लिखिता कल्पलता गर्भस्य पुष्ट्यर्थं वृद्ध्यर्थं च क्रियते। **शयनेति**। शयनस्य शिरोभागे विन्यस्तः स्थापितो धवलश्चन्दनादिना निद्रासमये मङ्गलकलशो यस्मिन्। इयं च देशरीतिः। तदुक्तमन्यत्र—'निद्राकलशो रूप्यमयः सर्वश्वेतः शिरोभागेऽहर्निशं पूर्णजलः स्थाप्यते' इति। **आबद्धेति**। आबद्धानि संयतानि विविधानामनेकप्रकाराणामोषधीनां मूलानि यन्त्राणि चक्रव्यूहप्रभृतीनि पवित्राणि मन्त्रपूतगोरोचनाप्रभृतीनि यस्मिंस्तत्। **अवेति**। अवस्थापितानि पार्श्वे रक्षितानि रक्षार्थं शक्तीनां कात्यायन्यादीनां वलयानि बर्हनिर्मितानि यस्मिंस्तथा। **इतस्तत इति**। इतस्ततः समन्ताद्विप्रकीर्णा विक्षिप्ता गौरसर्षपाः श्वेतसिद्धार्था यस्मिन्। **अवेति**। अवलम्बितानि बालानां केशानां योक्त्रं मुखबन्धनं तेन ग्रथितानि गुम्फितानि लोलानि चञ्चलानि पिप्पलपत्राण्यश्वत्थदलानि यस्मिन्। आसक्ता अन्योन्यं संलग्ना हरिता नीला अरिष्टपल्लवा निम्बकिसलया यस्मिन्। **उत्तुङ्गेति**। उत्तुङ्गान्युच्चानि यानि पादपीठानि पल्यङ्कपादाधारभूतानि काष्ठविशेषाणि तेषु प्रतिष्ठितम्। **इन्द्विति**। इन्दोश्चन्द्रस्य या दीधितिः कान्तिस्तस्या धवलः शुभ्रः प्रच्छदपट उत्तरपटो यस्मिन्। **अचलेति**। अचलराजो हिमाचलस्तस्मिञ्छिलातलं तद्वद्विशालं विस्तीर्णम्। **गर्भेति**। गर्भवत्यवस्थायामुचितं योग्यमेवंविधं शयनतलं शयनीयतलमधिशयानां विहितस्वापाम्। पुनर्विलासवतीं विशेषयन्नाह—**अन्तरिति**। अन्तःपुरसक्ता या जरत्यो वृद्धा योषितस्तासां जनेन समुदायेन क्रियमाणं विधीयमानमवत[3]रणकमङ्गलं यस्यास्ताम्। अवतरणकमङ्गलमुत्तारणमिति देशाचारव्यवस्थया प्रसिद्धम्। कीदृशेन। आचारः कुलाचारस्तत्र कुशलेनाभिज्ञेन। तानेवाह—**कनकेति**। कनकस्य सुवर्णस्य पात्राणि भाजनानि तैः परिगृहीतैरात्तैरविच्छिन्ना अविच्छेदं प्राप्ता विरलावस्थिता अनिबिडतया स्थिता ये दध्नो लवाः खण्डास्तैः। **जलेति**। जलतरंगाः पानीयकल्लोलास्तद्वत्तरलाः शोभायमानाः श्वेतशालिसिक्थानां पक्वौदनानां शालिलाजानां वा निकराः समूहास्तैः। **अग्रथितेति**। अग्रथितान्यगुम्फितानि यानि कुसुमानि पुष्पाणि तैः सनाथैः सहितैः, पूर्णानि भृतानि भाजनानि तैः। शालिविशेषणम्। **अखण्डितेति**। अखण्डितमच्छिन्नमाननं मुखं येषामेवंविधैर्मत्स्यपटलैर्मीनसमूहैः। कीदृशैः। प्रत्यग्रं तत्कालीनं यत्पिशितं मांसं तस्य पिण्डाः प्रसिद्धास्तैर्मिश्रितैः। पुनः कैः। शीतलप्रदीपैः

---

**टिप्प०—1 तद्वद् धवलः शुभ्र इत्युचितम्। 2 तस्येत्युचितम्। 3 'अवतारणकमङ्गलाम्' इत्येवोचितः पाठः। दधिलव–शाल्योदनादिभृतैः पात्रैः भूताद्यपसारणार्थं कृतम् अवतारणकरूपं नीराजनरूपेण पात्रपरिभ्रामणरूपं मङ्गलं यस्यास्ताम्। 'उतारा' इति देशभाषा। 'अवतारणं भूतादिग्रहे वस्त्राञ्चलेऽर्चने' इति मेदिनी।**

---

**पाठा०**—१ विन्यस्तरल. २ मङ्गलम्. ३ मन्त्रपवित्रम्; पत्रम्. ४ अवलम्बि. ५ बालयोक्त्रबद्धग्रथित. ६ लोह; लोहित. ७ दलम्. ८ पादपीठी. ९ अविच्छन्न. १० सित. ११ कुसुमाञ्जलि.

रविच्छिन्नसलिलधारा[1]नुगम्यमानमार्गैः पटलक[2]प्रज्वलितैश्च शीत[3]लप्रदीपैर्गोरोचनामिश्रगौर-सर्षपैश्च सलिलाञ्जलिभि[4]श्चाचारकुशलेनान्तःपुरजरतीजनेन क्रियमाणा[5]वतरणकमङ्गलाम्, धवलाम्बरविविक्तवेषेण प्रमुदितेन प्रस्तु[6]तमङ्गलप्रायालापेन परिजनेनोपास्यमानाम्, उपारूढ-गर्भतयान्तर्गतकुलशैलामिव क्षितिम्, सलिलनिमग्नैरावतामिव मन्दाकिनीम्, गुहागतसिंहा-मिव गिरिराजमे[7]खलाम्, जलधरपटलान्तरितदिनकरामिव दिवस[8]श्रियम्, उदयगिरितिरो-हितशशिमण्डलामिव विभावरीम्, अभ्यर्णब्रह्मकमलविनिर्गमामिव नारायणनाभिम्, आस-न्नागस्त्योदयामिव दक्षिणाशाम्, फेनावृतामृतकलशामिव क्षीरोदवेलाम्, गोरो[9]चनाचित्रित-दशमनुपहत[10]मतिधवलं दुकूलयुगलं वसानां विलासवतीं ददर्श ।

---

कर्पूरप्रदीपैः । कीदृशैः । पटलके रक्तवस्त्रनिर्मितगृहे मण्डलके वा प्रज्वलितैरुद्दीपितैः । **अविच्छिन्नेति ।** अविच्छिन्नाऽत्रुटिता या सलिलधारा जलधारा तया अनुगम्यमानोऽनुष्ठीयमानो मार्गो यैस्ते तथा तैः । **गोरेति ।** गोरोचना प्रसिद्धा तया मिश्रैः संयुक्तैर्गौरसर्षपैः श्वेतसिद्धार्थैः । पुनः कैः । सलिलस्य जलस्या-ञ्जलयस्तैः । पुनर्विलासवतीं विशेषयन्नाह—**धवलेति ।** धवलाम्बरस्य श्वेतवाससो विविक्तो निश्चलो वेषो नेपथ्यं यस्य स तेन प्रमुदितेन हर्षितेन । **प्रस्तुतेति ।** प्रस्तुत उपक्रान्तो मङ्गलप्रायो बाहुल्येन मङ्गलरूप आलापः संलापो यस्यैवंविधेन परिजनेन परिच्छदजनेनोपास्यमानां सेव्यमानाम् । अथोपमानान्तरेण तां विशेषयन्नाह—**उपेति ।** उपारूढः प्राप्तो यो गर्भस्तस्य भावस्तत्ता तया हेतुभूतयान्तर्गतः कुलशैलो यस्यामेवं-भूतां क्षितिमिव वसुधामिव । सर्वेषामाधारभूतत्वेन कुलशैल-सुतयोः साम्यम् । सलिले पानीये निमग्नो ब्रुडित ऐरावतोऽभ्रमातङ्गो यस्यामेतादृशीं मन्दाकिनीं गङ्गामिव । गुहागतः कन्दराप्राप्तः सिंहो मृगारिर्यस्यामेवंवि-शिष्टां गिरिराजमेखलामिव हिमाचलमध्यमिव । जलधरपटलमभ्रवृन्दं तेनान्तरितो व्यवहितो दिनकरो दिवसकरो यस्यामेतादृशीं दिवसश्रियमिव वासरलक्ष्मीमिव । उदयगिरिणोदयाचलेन तिरोहितमाच्छादितं शशिमण्डलं यस्यामेवंभूतां विभावरीं रजनीमिव । अभ्यर्णं समीपे ब्रह्मकमलस्य धातृरू[4]पनलिनस्य विनि-र्गमो बहिर्भावो यस्यामेतादृशीं नारायणनाभिमिव दामोदरकूपिकामिव । आसन्नः समीपवर्त्यगस्त्यस्य पीता-ब्धेरुदय उद्गमनं यस्यामेवंभूतां दक्षिणाशामिवावाचीमिव । फेनेन डिण्डीरेणावृता आच्छादिता अमृतक[5]लशाः पीयूषकुम्भा यस्यामेतादृशीं क्षीरोदवेलामिव दुग्धोदधिजलवृद्धिमिव । गोरोचनया चित्रिता पिञ्जरीकृता दशाः प्रान्ता यस्यैवंभूतमनुपहतमच्छिद्रमतिधवलमतिशुभ्रं दुकूलयुगलं दुकूलयुग्मं वसानां दधानाम् । अन्व-यस्तु प्रागेवोक्तः । ततश्च पार्थिवः स राजा तां विलासवतीमुत्तिष्ठन्तीमुत्थानं कुर्वतीम् । हे देवि, अलमलं कृतं कृतमत्यादरेणातिप्रयत्नेन । नोत्थातव्यं नोत्थानं कर्तव्यमित्येवमभिधायेत्युक्त्वा तस्मिन्नेव शयनीये पर्यङ्के तया सह समुपाविशदासेदिवान् । केचित्तु स्त्रीपुरुषयोरेकत्रावस्थितिर्न युक्तेति तस्मिन्नेव शयनीये शयनसंब-

---

**टिप्प०—1 वस्त्रनिर्मिते दीपाधारे 'कन्दील' 'ढोल' इति भाषाख्याते । 2 केनचिज्जरतीजनेन पश्चात् पश्चात् क्रियमाणा अविच्छिन्ना जलधारा येषु तानित्यर्थः । 3 येनेत्युचितम् । 4 विरिञ्चिजन्मस्थानी-भूतपद्मस्येत्युचितम् । 5 अमृतकलश इत्येकवचनमेवोचितम्, उपमायां बिम्बभूतस्य सुतस्यैकत्वात् ।**

---

**पाठा०—१ गम्यमान. २ पटलप्र. ३ शीतलप्रदीपैश्च. ४ अभिचार. ५ अवतारणक. ६ मङ्गल्य. ७ मेखलामिव. ८ दिनश्रियम्. ९ गोरोचनातिलक. १० मणिधवलम्.**

ससंभ्रमपरिजनप्रसारितकरतलालम्बनावष्टम्भेन वामजानुविन्यस्तहस्तपल्लवां प्रचलित-भूषणमणिरवमुखरमुत्तिष्ठन्तीं विलासवतीम् 'अलमलमत्यादरेण । देवि, नोत्थातव्यम्' इत्यभिधाय सह तया तस्मिन्नेव शयनीये पार्थिवः समुपाविशत् । प्रमृष्टचामीकरचारुपादे धवलोपच्छदे चासन्ने शयनान्तरे शुकनासोऽपि न्यषीदत् ।

अथ तामुपारूढगर्भामालोक्य हर्षभरमन्थरेण मनसा प्रस्तुतपरिहासो राजा 'देवि, शुकनासः पृच्छति—यदाह कुलवर्धना किमपि तत्किं तथैव' इत्युवाच । अथाव्यक्तस्मितच्छुरितकपोलाधरलोचना लज्जया दशनांशुजालकव्याजेनांशुकेनेव मुखमाच्छादयन्ती विलासवती तत्क्षणमधोमुखी तस्थौ । पुनःपुनश्चानुबध्यमाना 'किं मामतिमात्रं त्रपापरवशां करोषि । नाहं किंचिदपि वेद्मि' इत्यभिदधाना तिर्यग्वलिततारकेण चक्षुषावनतमुखी राजानं साभ्यसूयमिवापश्यत् । अपरिस्फुटहासज्योत्स्नाविशदेन मुखशशिना भूभुजां पतिरेनां भूयो बभाषे—'सुतनु, यदि मदीयेन वचसा तव त्रपा वितन्यते तदयमहं स्थितो निभृ-

---

न्धिगृहे पृथगासने राजोपविशदित्यर्थमाहुः । तामेव विशिनष्टि—**ससंभ्रमेति** । ससंभ्रमं सचकितं सविलासं वा, परिजनेन सेवकजनेन प्रसारितं विस्तारितं यत्करतलं हस्ततलं तदेवालम्बनमाधारस्तस्यावष्टम्भेन सहायेन वामेऽपसव्ये जानौ नलकीले विन्यस्तः स्थापितो हस्त एव पल्लवो ययेति गर्भवतीज्ञापकं लक्षणम् । प्रचलितानि भूषणानि तेषां मणिरवेण मुखरं वाचालं यथा स्यात्तथेति क्रियाविशेषणम् । अलमित्यनेनादरातिशयः सूचितः । ततश्च शुकनासोऽपि शयनान्तर आसनान्तरे न्यषीददुपविष्टवान् । तदेव विशेषयन्नाह—**प्रमृष्टेति** । प्रमृष्टमुज्ज्वलीकृतं यत् चामीकरं सुवर्णं तस्य चारवो मनोहराः पादा यस्मिन् ( यस्य ) । क्वचित् 'चारुपट्टे' इति पाठः । तत्र चारुः सुन्दरः पट्टो दृढबन्धो यस्मिन्नित्यर्थः । धवलः श्वेत उपच्छद उत्तरपटो यस्मिन् । आसन्ने समीपवर्तिनि । अथेत्यानन्तर्ये । तां विलासवतीमुपारूढः प्राप्तो गर्भो ययैवंभूतामालोक्य निरीक्ष्य राजा पार्थिव इत्युवाचेत्यब्रवीत् । कीदृक् । प्रस्तुतः प्रारब्धः परिहासो नर्मवचनविन्यासो येन सः । केन । मनसा चित्तेन । कीदृशेन । हर्षस्य प्रमोदस्य यो भरः संभारस्तेन मन्थरेणालसेन, प्रस्तुतो गर्भधारणरूपो वृत्तान्तस्तत्र परिहासो हास्यमिति वा । एतदेव स्पष्टीकुर्वन्नाह—**देवीति** । हे देवि, शुकनासः पृच्छति । कुलवर्धना किमपि यदाह तत्किं तथैवेति सव्यङ्ग्यः प्रश्नः । **अथेति** । अथ प्रश्नानन्तरमव्यक्तमस्फुटं यत्स्मितं हास्यं तेन छुरितानि विकसितानि कपोलाधरलोचनानि यस्याः सा । लज्जया त्रपया दशना दन्तास्तेषामंशवः किरणास्तेषां जालकं समूहस्तस्य व्याजेन मिषेणांशुकेनेव वस्त्रेणेव मुखमाननमाच्छादयन्ती प्रच्छादनं कुर्वती विलासवती तत्क्षणं तस्मिन्समयेऽधोमुख्यवाङ्मुखी तस्थौ स्थिता । **पुनरिति** । अपश्यदित्यन्वयः । किं क्रियमाणा । पुनःपुनर्वारंवारमनुबध्यमाना सनिर्बन्धं पृच्छ्यमाना । पुनः किं कुर्वाणा । इत्यभिदधानेतिब्रुवाणा । इतिवाच्यमाह—**किमिति** । किमिति हेतुना मामतिमात्रमतिसंकटं त्रपापरवशां लज्जायत्तां करोषि निर्मासि । नेति प्रतिषेधे । अहमित्यात्मनिर्देशः । किंचिदपि स्वल्पमात्रमपि वेद्मि जानामि । **तिर्यगिति** । तिर्यग्वलिता तारका कनीनिका यस्मिन्नेवंभूतेन चक्षुषा नेत्रेणावनतमुख्यानम्रवदना राजानं नृपं साभ्यसूयमिव सहेर्ष्यया वर्तमानमिवापश्यदिति प्रागुक्तमेव । पतिव्रताया धीरायास्तादृशप्रश्नस्यानुचितत्वात्साभ्यसूयमिति भावः । अपरिस्फुटोऽप्रकटो यो हासः स एव ज्योत्स्ना चन्द्रिका तया विशदेन निर्मलेन मुखशशिना वदनचन्द्रेणोपलक्षितो भूभुजां पती राजैनां विलासवतीं भूयः पुनरपि बभाष उवाच । किं तदित्याह—**सुतन्विति** । सुष्ठु शोभना तनुः शरीरं यस्याः सेति संबोधनपदम् । यदिति यत्तदोः संबन्धः ।

**टिप्प०—1 छुरितं कपोलाधरलोचनं यस्या इत्येकवचनमेवोचितम्, प्राण्यङ्गत्वात् ।**

**पाठा०**—१ अवलम्बना. २ प्रचल. ३ चारुपदे. ४ चासन्नशयनान्तरे. ५ अव्यक्तच्छुरित. ६ दशनांशुकजाल. ७ अनुरुध्यमाना. ८ किं नाम माम्. ९ पतिर्भूयो. १० मदीयवचसा.

तम्। अस्य तु किं प्रतिविधास्यसि विघटमानदलकोशविशदचम्पकद्युतेः सवर्णतया परिमलानुमीयमानस्य[1] कुङ्कुमाङ्गरागस्य पाण्डुरतामापद्यमानस्य[2,3], अनयोश्च गर्भसंभवामृतावसेकनिर्वाप्यमाणशोकानलप्रभवं[4,5] धूममिव वमतोर्गृहीतनीलोत्पलयोरिव[6] चक्रवाकयोस्तमालपल्लवलाञ्छितमुखयोरिव कनककलशयोः[7] सकृदिवालिखितकृष्णागुरुपङ्कपत्रलतयोः[8] श्यामायमानचूचुकयोः पयोधरयोः, अस्य च प्रतिदिनमतिगाढतरतां[9] आपद्यमानेन[10] काञ्चीकलापेन दूयमानस्य नश्यत्त्रिवलिरेखा[11]वलयस्य कृशिमानमुज्झतो[12] मध्यभागस्य।' इत्येवं ब्रुवाणमवनिपालमन्तर्मुखहासः[13] शुकनासः 'देव, किमायासयसि देवीम्।

---

मदीयेन मदुक्तेन वचसा वाक्येन यदि तव त्रपा लज्जा वितन्यते विस्तार्यते। तदिति हेत्वर्थे। अयमहमिति सोऽहमिति यदिदन्ताविषयेणाहमित्यस्याभेदप्रत्यभिज्ञानम्। निभृतमयर्थं तूष्णींस्थितः। **अस्येति** । अस्य कुङ्कुमाङ्गरागस्येत्यन्वितम्। किमिति प्रश्ने प्रकारार्थे वा। प्रतिविधास्यसि। तस्य गोपनं कथं करिष्यसीत्याशयः। **विघटेति**। विघटमानानि भिद्यमानानि दलानि यस्यैवंभूतः कोशो मुकुलस्तेन विशदो निर्मलो यश्चम्पको हेमपुष्पकस्तस्य द्युतिः कान्तिस्तस्याः सवर्णतया सरूपतया। अतएव विशेषाज्ञाने परिमलानुमीयमानस्येत्युक्तम्। तथा च चम्पकपरिमलो न्यूनोऽङ्गरागपरिमलस्त्वधिक इति विशेषाद्विशिष्यानुमानं भवत्येवेत्याशयः। कुङ्कुमं काश्मीरं तेनाङ्गराग उद्वर्तनं तस्य। अन्तर्वत्नीत्वनियता पाण्डुरता तामापद्यमानस्य प्राप्यमाणस्येत्यर्थः। अथ चानयोः पयोधरयोरिति संबन्धः। कीदृशयोः। गर्भसंभव एवामृतं तस्यावसेकः सिञ्चनं तेन निर्वाप्यमाणो विलुप्यमानश्चिरकालीनपुत्रानुत्पत्तिनिमित्तकः शोक एवानलो वह्निस्तस्मात्प्रभव उत्पत्तिर्यस्यैवंभूतं स्तनवृन्तोपरि श्यामतालक्षणधूममिव वमतोस्त्यजतोः। पुनरुत्प्रेक्षां कुर्वन्नाह—**गृहीतेति**। गृहीतमात्तं नीलोत्पलं कुवलयं याभ्यामेवंभूतयोश्चक्रवाकयोरिव रथाङ्गाह्वययोरिव। पुनरुत्प्रेक्षां कुर्वन्नाह—**तमालेति**। तमालस्तापिच्छस्तस्य पल्लवाः किसलयास्तैर्लाञ्छितं चिह्नितं मुखं ययोरेवंभूतयोः कनककलशयोरिव सुवर्णकुम्भयोरिव। पुनः प्रकारान्तरेणोत्प्रेक्षां कुर्वन्नाह—**सकृदिति**। सकृदेकवारमालिखिता कृष्णागुरुपङ्केन पत्रलता पत्रवल्ली ययोरेतादृशयोरिव श्यामायमानं श्यामतामापद्यमानं चूचुकं स्तनवृन्तं ययोः पयोधरयोस्तयोर्गोपनं कथं करिष्यसि। स्तनाग्रश्यामता गर्भव्यतिरेकेणानुपपद्यमाना तद्भावमाविष्करोतीति भावः। **अस्य चेति**। मध्यभागस्येत्यनेनान्वितम्। प्रतिदिनं प्रत्यहमतिगाढतरतामतिदृढतामापद्यमानेन प्राप्यमाणेन काञ्चीकलापेन रशनाकलापेन दूयमानस्य पीड्यमानस्य। **नश्यदिति**। नश्यन्नश्यत्त्रिवल्यास्त्रिक[2]स्य रेखावलयं यस्मिन्स तथा तस्य। कृशस्य भावः कृशिमा कृशत्वमुज्झतस्त्यजतो मध्यभागस्य मध्यप्रदेशस्येत्येवमिति पूर्वोक्तप्रकारेण ब्रुवाणं वदन्तं अवनिपालं नृपं शुकनास इत्यब्रवीदित्यन्वयः। कीदृक्। अन्तर्मुखे मुखमध्ये हासो यस्य सः। एतेन महापुरुषत्वं सूचितम्। इतिशब्दार्थमाह—**देवेति**।

---

टिप्प०—1 अज्ञानं टीकाकारस्य। 'परिमलानुमीयमानकुङ्कुमरागस्य पाण्डुरतामापद्यमानस्य वर्णस्य', इत्येव पाठः। चम्पकपुष्पकान्तेस्तुल्यवर्णतया परिमलेन (सुगन्धेन) अनुमीयमानः काश्मीरजाङ्गरागो यस्मिन् तादृशस्य वर्णस्य तव शरीरकान्तेः किं प्रतिविधास्यतीत्यन्वयः। कुङ्कुमाङ्गरागः शरीरवर्णश्चेत्युभयमपि चम्पकसवर्णमिति पृथक्तया अनुपलक्ष्यमाणत्वात् परिमलेन केशरानुलेपनमनुमीयते इति भावः। उन्मीलितमलंकारः। 2 नश्यत् विलुप्यमानं त्रिवलिलेखानां वलयं मण्डलं यस्मिन्नित्यर्थः।

---

पाठा०—१ मानस्य कुङ्कुमरागस्य; मानकुङ्कुमाङ्गरागस्य. २ पाण्डुतामापाद्यमानस्य. ३ मानस्य वर्णस्य. ४ संभवावसेक. ५ हृदयशोका. ६ वमतोरन्तर्गृहीत; वहतोराननगृहीत. ७ कलशयोरिव. ८ लिखित. ९ अतिगाढताम्. १० आपाद्यमानेन. ११ लेखा. १२ उद्वहतः. १३ मुखविनिगूढहासः; मुखनिगूढहासः.

इयमनया कथयापि लज्जते । त्यज कुलवर्धनाकथितवार्तासंवद्धमालापकम्' इत्यब्रवीत् । एवंविधाभिश्च नर्मप्रायाभिः कथाभिः सुचिरं स्थित्वा शुकनासः स्वभवनमयासीत् । नरेन्द्रोऽपि तस्मिन्नेव वासगृहे तया सह तां निशामत्यवाहयत् ।

ततः क्रमेण समीहितगर्भदोहदसंपादनप्रमुदिता पूर्णे प्रसवसमये पुण्येऽहन्यनवरतगलन्नाडिकाकलितकालकलैर्बहिरागृहीतच्छायैर्गणकैर्गृहीते लग्ने प्रशस्तायां वेलायामिरंमदमिव मेघमाला सकललोकहृदयानन्दकारिणं विलासवती सुतमसूत । तस्मिञ्जाते सरभसमितस्ततः प्रधावितस्य परिजनस्य चरणशतसंक्षोभचलितक्षितितलो भूपालाभिमुखप्रसृतस्खल-

---

हे देव स्वामिन्, देवीं विलासवतीं किमायासयसि खेदयसि । इयं देव्यनया पूर्वोक्तया कथया वार्तयापि लज्जते त्रपां प्राप्नोति । त्यज दूरीकुरु । कुलवर्धना पूर्वोक्ता तया कथिता प्रोक्ता या वार्ता प्रवृत्तिस्तत्संवद्धमालापकं ज्ञातस्याप्यर्थस्यावेदने लज्जाकारिवाक्प्रयोगरूपम् । **एवमिति** । एवंविधाभिः पूर्वोक्ताभिर्नर्मप्रायाभिः परिहासवाहुल्याभिः कथाभिर्वार्ताभिः सुचिरं चिरकालं स्थित्वा तत्रावस्थानं कृत्वा शुकनासः स्वभवनं स्वगृहमयासीदाययौ । नरेन्द्रोऽपि नृपोऽपि तस्मिन्नेव वासगृहे तां निशां रात्रिं तया सह विलासवत्या सममत्यवाहयदनैषीत् ।

**तत इति** । ततः तदनन्तरं पुण्येऽहनि पवित्रवासरे प्रसवस्य जननस्य समयः कालस्तस्मिन्पूर्णे परिपक्के सति गणकैर्ज्योतिर्विद्भिर्गृहीते लग्ने मेषादिके प्रशस्तायां सर्वदोषराहित्येन मनोभीष्टायां वेलायां लग्नान्तर्वर्तिहोरायां विलासवती सुतं पुत्रमसूत सुषुवे । कीदृशी । समीहित ईप्सितो यो गर्भस्तन्निमित्तको दोहदो मनोरथः । नानारसविषयकोऽभिलाष इति यावत् । तस्य संपादनं परिपूर्णतापादनं तया प्रमुदिता संतुष्टा । अथ गणकान्विशिनष्टि—**आगृहीतेति** । बहिरङ्गणादावागृहीता पूर्वपश्चिमादिदेशविशेषेण निश्चिता छाया यैः । **अनवरतेति** । अनवरतं नित्यं गलन्ती जलं त्यजन्ती या नाडिका घटिका । नाडिकाशब्दस्य समयवाचित्वेऽपि नाडीबोधकं पात्रविशेषं लक्ष्यते । तया कलिता निश्चिता ज्ञाता कालकला सूक्ष्मकालो यैः । नित्यं चलन्ती या नाडिका मुहूर्तार्धं तस्मिन्कलिता कालकला यैरिति वा । का किमिव । मेघमाला कादम्बिनीरंमदमिव मेघवह्निमिव । 'मेघवह्निरिरंमदः' इति हैमः । सुतं विशेषयन्नाह—**सकलेति** । सकला समग्रा ये लोकास्तेषां हृदयानि चित्तानि तेषामानन्दकारिणं प्रमोदजनकम् । अथ च तस्मिन्पुत्रे जाते परिजनस्य बाह्याभ्यन्तरसेवकजनस्य राजकुले राज्ञां समुदाये राजगृहे वा दिष्टिरानन्दस्तस्य या वृद्धिस्तस्याः संभ्रमः सोत्साहकर्मातिमहानभूदित्यन्वयः । परिजनं विशेषयन्नाह—**सरभसमिति** । सरभसं त्वरितमितस्ततः समन्तात्प्रधावितस्योच्चलितस्य । दिष्टिसंभ्रमं विशेषयन्नाह—**चरणेति** । चरणानां पादानां शतं तस्माद्यः संक्षोभः प्रघातस्तेन चलितं कम्पितं क्षितितलं यस्मात्स तथा । **भूपालेति** । भूपालाभिमुखं नृपसंमुखं

---

**टिप्प०**—1 बहिः आगृहीता पादच्छाया शङ्कुच्छाया वा यैः । पादच्छायाग्रहणेन पूर्वं समयनिरूपणमक्रियत । यथा—'पच्छायां द्विगुणीकृत्य चतुर्दशसमन्विताम् । पक्षग्रहकराद्भागलब्धं दण्डादिकं भवेत् ॥' इति । 2 समयनिरूपकयन्त्रविशेषः । सार्धद्वादशपलपरिमितताम्रनिर्मितः सार्धद्वादशपलपरिमितजलपूरणीयः पञ्चरत्तिकापरिमितस्वर्णनिर्मितशलाकया अधश्छिद्रसंयुक्तो यन्त्रविशेष इत्यर्थः । तया च शलाकया जलबिन्दुपतनात्तज्जले च चिह्नविशेषोपगते समयनिरूपणं पूर्वमक्रियत ।

---

**पाठा०**—१ अनयापि कथया. २ आलापम्; आलापमपि. ३ वासगृहे ताम्. ४ यथासमीहित; समुचित. ५ पूर्णप्रसवः. ६ कलेः; कले. ७ जलधरमाला.

द्गतिशून्यकञ्चुकिसहस्रो जनसंमर्दनिष्पिष्यमाणपतितकुब्जवामनकिरातगणो विस्फार्यमाणान्तःपुरजनाभरणझङ्कारमनोहरः पूर्णपात्राहरणविलुप्यमानवसनभूषणः संक्षोभितनगरो राजकुले दिष्टिवृद्धिसंभ्रमोऽतिमहानभूत्। अनन्तरं च मन्दरमथ्यमानजलधिघोषगम्भीरदुन्दुभिध्वानपुरःसरेण प्रहतमृदुमृदङ्गशङ्खकाहलानकनिवहनिर्भरेण मङ्गलपटहपटुरवसंवर्धितेनानेकजनसहस्रकलकलबहुलेन त्रिभुवनमापूरयतोत्सवकोलाहलेन ससामन्ताः सान्तःपुराः सप्रकृतयः सराजलोकाः सवेश्यायुवतयः सबालवृद्धा ननृतुरागोपालमुन्मत्ता इव हर्षनिर्भराः प्रजाः। प्रतिदिनमवर्धत चन्द्रोदयेनेव जलधिः कलकलमुखरो राजसूनोर्जन्ममहोत्सवः।

---

प्रसृता विस्तृतास्तेषां हर्षोद्रेकात्स्खलन्ती या गतिर्गमनं तया शून्यं कञ्चुकिनां सौविदल्लानां सहस्रं यस्मिन्सः। अनेन सुतोत्पत्तिज्ञापनार्थं सर्वतः कञ्चुकिनः प्रवृत्ता इति ध्वनितम्। **जनेति**। जनानां संमर्देन समुदायेन निष्पिष्यमाणाः पीड्यमाना अतएव पतिताः स्रस्ताः। येषां शिरः शिरोधिपृष्ठिपादं लक्षणोपेतं न भवति पृष्ठ्युदरहृदयं च सुलक्षणं स्यात्ते कुब्जाः। एतद्विपरीतास्तु वामनाः। केवलं स्वल्पतनवः किराताः। 'किरातः स्यादल्पतनौ भूनिम्बे म्लेच्छभिल्लयोः' इत्यनेकार्थः। तेषां गणः समुदायो यस्मिन् सः। **विस्फार्येति**। विस्फार्यमाणो वृद्धिं प्राप्यमाणो योऽन्तःपुरजनानामाभरणझङ्कारोऽलंकारनिनादस्तेन मनोहरो हृदयहारी। **पूर्णेति**। उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते तत्पूर्णपात्रं तस्याहरणं ग्रहणं तेन विलुप्यमानानि गृह्यमाणानि बलादाकृष्यमाणानि वसनभूषणानि यस्मिन् सः। संक्षोभितं क्षोभं प्रापितं नगरं येन स तथा। **अनन्तरं चेति**। अनन्तरं सुतोत्पत्त्यनन्तरमुत्सवकोलाहलेन हर्षस्य निर्भरोऽतिशयो यास्त्वेवंविधाः प्रजा ननृतुर्नृत्यं चक्रुरित्यन्वयः। प्रजा विशिनष्टि—**ससामन्ता इति**। सामन्ताः स्वदेशपार्श्ववर्तिनो राजानस्तैः सहवर्तमानाः, सान्तःपुरा अन्तःपुरेण सहिताः, सप्रकृतयः प्रकृतिः पौरलोकस्तया सहवर्तमानाः, सराजलोकाः राजलोको नृपसंबन्धिजनस्तेन सहिताः, सवेश्यायुवतयो वेश्यायुवतिभिर्वाराङ्गनाभिरुपेताः, सबालवृद्धा बालवृद्धैः सहिताः। **आगोपालमिति**। आगोपालं वल्लवं मर्यादीकृत्य यथा स्यात्तथेति क्रियाविशेषणम्। क इव। उन्मत्ता इव क्षीवा इव। उत्सवकोलाहलेन किं कुर्वता। आपूरयता पूर्णीकुर्वता। किम्। त्रिभुवनं त्रिविष्टपम्। उत्सवकोलाहलं विशिनष्टि—**मन्दरेति**। मन्दरेण मेरुणा मथ्यमानो विलोड्यमानो यो जलधिः क्षीराब्धिस्तस्य घोषस्तद्वद्गम्भीरो यो मृदुर्मृदङ्गो मुरजः, शङ्खः कम्बुः, काहलो वाद्यविशेषः, आनको दुन्दुभिः तेषां निवहः समूहस्तेन निर्भरेण पूर्णेन। मङ्गलार्थं वाद्यते यः स मङ्गलपटहश्चर्मवाद्यं तस्य यः पटुरवः स्पष्टः शब्दस्तेन संवर्धितेन वृद्धिं प्रापितेन, अनेके ये जनास्तेषां सहस्रं तस्य यः कलकलः कोलाहलस्तेन बहुलेन दृढेन। अधिकीभूतेनेत्यर्थः। **प्रतीति**। प्रतिदिनं प्रत्यहं राजसूनोर्नृपात्मजस्य जन्ममहोत्सवो जनिक्षणोऽवर्धत वृद्धिं प्राप। केनेव।। चन्द्रोदयेन कुमुदबान्धवोद्गमनेन जलधिरिव समुद्र इव। कीदृग्जन्ममहोत्सवः।

---

**टिप्प०**—1 भूपालाभिमुखं प्रसृतं चलितं स्खलद्गतिशून्यम् (अन्यस्मिन् समये वार्धक्येन स्खलद्गतियुक्तमपि संप्रति हर्षोद्रेकवशात् तच्छून्यमित्यर्थः)। वस्तुतस्तु—'भूपालाभिमुखप्रसृतस्खलद्गतिविकलकञ्चुकिसहस्रः' इत्येव पाठः। भूपालाभिमुखं प्रसृतं, स्खलद्गति (स्खलन्ती गतिर्यस्य तत्), विकलम् आनन्दव्याकुलं च कञ्चुकिनां सहस्रं यस्मिन् स इति तदर्थः।

---

**पाठा०**—१ गतिकञ्चुकि; गतिविकलकञ्चुकि. २ घूर्णमान. ३ विलुप्यमान. ४ च मथ्यमान. ५ मन्दराराध्यमान. ६ जलनिधि. ७ स्वान. ८ प्रहतमृदङ्ग. ९ निवहनिनादनिर्भरेण. १० सान्तःपुरजनाः. ११ आगोपम्. १२ प्रतिक्षणम्. १३ जलनिधिः. १४ जन्मनो महोत्सवः.

पार्थिवस्तु तनयानन[1]दर्शनमहोत्सवहृतहृदयोऽपि दिवसवशेन मौहूर्तिकगणोपदिष्टे प्रशस्ते मुहूर्ते निवारितनिखिलपरिजनः शुकनासद्वितीयो म[2]णिमयमङ्गलक[3]लशयुगलाशून्येनासक्तबहुपु[4]त्रिकालंकृतेन विविधनव[5]पल्लवनिवहनिरन्तरनिचितेन संनिहितकनकमयहलमुसलयु[6]गेन विरलग्रथितसितकुसुममिश्रदूर्वाप्रवालमालालंकृतेना[7]वलम्बिताविकलव्याघ्रचर्मणा व[8]न्दनमालिकान्तरालघटितघण्टागणेन द्वा[9]रेण विराजमानम्, उभयतश्च द्वारपक्षकयोर्मर्यादानिपुणेन गोमयमयीभिरुत्तानविनिहितव[10]राटकदन्तुराभिरन्तरान्तराबद्धविविधवर्णरागरुचिरकू[11]र्पासकुसुमले-

---

कलकलेन कोलाहलेन मुखरो वाचालः । तदनन्तरं नृपतिर्यच्चकार तदाह—**पार्थिवस्त्विति** । पार्थिवो राजापि सूतिकागृहमरिष्टगृहमदर्शदिति दूरेणान्वयः । अथ राजानं विशिनष्टि—**तनयेति** । तनयः सुतस्तस्याननं मुखं तस्य दर्शनेनावलोकनेन यो महोत्सवस्तेन हृतं गृहीतं हृदयं चित्तं यस्यैवंभूतोऽपि । कदा ददर्शेत्यत आह—**दिवेति** । दिवसवशेन । शुभदिनानु[1]सारेणेत्यर्थः । मौहूर्तिकानां ज्योतिर्विदां गणस्तेनोपदिष्टे प्रशस्त उत्कटफलसूचके मुहूर्ते । निवारितो दूरीकृतो निखिलः समग्रः परिजनः परिच्छदो येनेति राज्ञो विशेषणम् । शुकनास एव द्वितीयो यस्य स तथा । गृहं विशेषयन्नाह—**द्वारेति** । द्वारेण प्रतीहारेण विराजमानं शोभमानम् । द्वारं विशेषयन्नाह—**मणीति** । मणिमयं रत्नमयं यन्मङ्गलकलशयुगलं तेनाशून्येन । सर्वदा तत्संयुक्तेनेत्यर्थः । पुत्रवत्या महाद्वारोपरि मणिमयकलशारोपणं क्रियत इति राजस्थितिः । आसक्ताः संश्लिष्टा बहुपुत्रिका मषीलिखितास्ताभिरलंकृ[2]तमिति गृहविशेषणम् । यस्मिन्गृहे प्रसूतिर्जायते तद्वारदेशे क्रमव्युत्क्रमाभ्यां मषीलिखिते संश्लिष्टे पुत्रिके क्रियते इति वृद्धाचारः । कैश्चित्तु बहुपुत्रिकानाम श्लक्ष्णफलैरुपेतो विटपिविशेषः कथ्यते । शतावरीत्यन्ये । विविधा भिन्नभिन्नजातीया ये नवपल्लवा नवकिसलयास्तेषां निवहः समूहस्तेन निरन्तरं नित्यं निचितेन व्याप्तेन । संनिहितानि समीपवर्तीनि कनकमयानि सुवर्णमयानि हलं सीरम्, मुसलमयोग्रम्, युगमीशान्तवन्धनम्, एतानि यस्मिन् । अयं च राज्ञां गृहे क्वचिद्देशाचारः । हलमुसलयोर्युगमिति समासो वा । **विरलेति** । विरलानि ग्रथितान्यन्तरान्तरा गुम्फितानि यानि सितकुसुमानि श्वेतपुष्पाणि तैर्मिश्रा संपृक्ता या दूर्वा बहुप्ररोहा तस्याः प्रवालमालया पल्लवश्रेण्यालंकृतं भूषितं तेन । **अवेति** । अवलम्बितमविकलं संपूर्णं व्याघ्रचर्म श्वेतपिङ्गलकृत्तिर्यस्मिंस्तत्तथा तेन । **वन्दनेति** । मङ्गल्यं पुष्पदाम वन्दनमालिका । 'तोरणार्थे तु मङ्गल्यं दाम वन्दनमालिका' इत्यभिधानचिन्तामणिः । तस्या अन्तराले मध्यविभागे घटितो रचितो घण्टागणो यस्मिन्स तेन । पुनस्तमेव विशेषयन्नाह—**उभयतश्चेति** । पुरंध्रिवर्गेण । 'पुरंध्री सुचरित्रा' इत्यमरः । समधिष्ठितमध्यमिति दूरेणान्वयः । किं कुर्वता । पुरंध्रिवर्गेण । आलिखितो लिपीकृतः स्वस्तिकः प्रसिद्धो यस्मिन्नेवंभूतं भक्तिजालं रचनासमूहमुपरचयता कुर्वता । कयोः । द्वारपक्षकयोः । उभयत उभयपार्श्वयोः । 'पक्षद्वारं तु पक्षकम्' इति कोशः । कीदृशेन । मर्यादानिपुणेन मर्यादा स्थितिस्तत्र निपुणेनाभिज्ञेनेति पुरंध्रिवर्गस्य विशेषणम् । काभिः । लेखाभिर्वर्तिभिः । अथ लेखा विशेषयन्नाह—**गोमयेति** । गोमयं छगणं तन्मयीभिः । **उत्तानेति** । उत्तानमूर्ध्वमुखं विनिहिताः स्थापिता ये वराटकाः कपर्दकास्तैर्दन्तुराभिर्विषमोन्नताभिः अन्तरान्तरा मध्येमध्य आबद्धा नियमिता विविधवर्णा नीलपीतादिधातवस्तेषां रागेण रुचिरं कूर्पासमेव कुसुमं तस्य लेशाश्छेदास्तैर्लाञ्छिताभिश्चिह्निताभिः ।

---

**टिप्प०—1 शुभसमयानुरोधेनेत्यर्थः । 2 आसक्ताभिः परस्पराश्लिष्टाभिः संमिलिताभिर्वा बहुपुत्रिकाभिः बहुपुत्रशालिनीभिर्नारीभिः अलंकृतेन इत्यर्थः । संतानरक्षाशकुनार्थं ता द्वारोपरि उपस्थिता भवन्तीत्याचारः ।**

---

**पाठ०—**१ दर्शनोत्सव. २ कनकमय. ३ कलशाशून्येन. ४ पुत्रिकाप्रतानेन. ५ वन. ६ युगलेन. ७ आलम्बितविरल; आलम्बिताविकट. ८ माला. ९ द्वारदेशेन. १० वराटकप्रकारदन्तुराभिः. ११ कार्पास; कर्पास.

शलाञ्छिताभिः कुसुम्भकेसरलवाश्लेषलोहिताभिर्लेखाभिरालिखितस्वस्तिकभक्तिजालमुपरचयता हारिद्रद्रावविच्छुरणपिञ्जरिताम्बरधारिणीं भगवतीं षष्ठीं देवीं कुर्वता विकचपक्षपुटविकटशिखण्डिपृष्ठमण्डलाधिरूढमालोललोहितपटघटितपताकमुल्लसितशक्तिदण्डप्रचण्डं कार्तिकेयं संघटयता विन्यस्तालक्तकपटलपाटलमध्यभागौ सूर्याचन्द्रमसावाबध्नता कुङ्कुमपङ्कपिञ्जरीकृतामूर्ध्वप्रोतकनकमययवनिकरकण्टकितामविरललग्नगौरसिद्धार्थकप्रकारतया काञ्चनरसखचितामिव मृन्मयगुटिकाकदम्बमालां विन्यस्यता चन्दनजलधवलितेषु भित्तिशिखरभागेषु पञ्चरागविचित्रचेलचीरकलापचिह्नामापीतपिष्टपङ्काङ्कितां वर्धमानपरम्परामन्यानि च सूतिकागृहमण्डनमङ्गलानि संपादयता पुरंध्रिवर्गेण समधिष्ठितम्, उपद्वारसंयतविविधगन्धकुसुम-

---

**कुसुम्भेति** । कुसुम्भं कमलोत्तरं तस्य केसरलवाः किञ्जल्कखण्डास्तैराश्लेषः रक्ताभिः संबन्धस्तेन लोहिताभी रक्ताभिः । पुनः किं कुर्वता । सृजता । हरिद्रा रजनी तस्या द्रवो रसस्तस्य विच्छुरणं प्रोक्षणं तेन पिञ्जरितं पीतरक्ततां प्राप्तं यदम्बरं वस्त्रं तद्धारिणीं भगवतीं षष्ठीं देवीम् । पुनः किं कुर्वता । संघटयता रचयता । कम् । उल्लसितावुल्लासं प्राप्तौ यौ शक्तिदण्डौ । तत्र शक्तिरायुधविशेषः, दण्डो लगुडः, ताभ्यां प्रचण्डो भीषणो यः कार्तिकेयो गुहस्तम् । तमेव विशेषयन्नाह—**विकचेति** । विकचपक्षपुटाभ्यां विस्तीर्णवाजपुटाभ्यां विकटो विपुलो यः शिखण्डी मयूरस्तस्य पृष्ठमण्डलं तत्राधिरूढमुपविष्टम् । आलोलाश्चञ्चला लोहितपटघटिता रक्तवस्त्रनिर्मिताः पताका वैजयन्त्यो यस्मिन्स तम् । पुनः किं कुर्वता । आबध्नता बन्धनविषयीकुर्वता । कौ । सूर्याचन्द्रमसौ पुष्पवन्तौ । देवताद्वन्द्वत्वात्पूर्वपदस्य दीर्घता । तौ विशेषयन्नाह—**विन्यस्तेति** । विन्यस्तं रचितं यदलक्तकपटलं तेन पाटलौ श्वेतरक्तौ मध्यभागौ ययोस्तौ । पुनः किं कुर्वता । विन्यस्यता स्थापयता । काम् । मृन्मयगुटिकाकदम्बमालां मृन्मय्यो मृत्तिकाभिर्निष्पन्ना या गुटिका गुलिकास्तासां कदम्बः समूहस्तस्य माला स्रक् ताम् । मालां विशेषयन्नाह—**कुङ्कुमेति** । कुङ्कुमस्य केशरस्य यः पङ्कस्तेन पिञ्जरीकृतां पीतरक्तीकृताम् । ऊर्ध्वप्रोताः स्यूता ये कनकमययवाः सुवर्णहैयप्रियास्तेषां निकरः समूहस्तेन कण्टकितां संजातकण्टकाम् । अविरलं निविडं लग्नाः संबद्धा ये गौरसिद्धार्थका गौरसर्षपास्तेषां प्रकारस्तस्य भावस्तत्ता तया हेतुभूतया । काञ्चनस्य सुवर्णस्य यो रसस्तेन खचितामिव संबद्धामिव । अनेन सुवर्णसर्षपयोः साम्यं प्रदर्शितम् । **चन्दनेति** । चन्दनं मलयजं तस्य जलं द्रवस्तेन धवलितेषु शुभ्रीकृतेषु भित्तिशिखरभागेषु कुड्यप्रान्तप्रदेशेषु वर्धमानपरंपरां शरावश्रेणीमन्यानि च सूतिकागृहमरिष्टगृहं तस्य मण्डनमङ्गलानि शोभाकारिरचनाविशेषास्तानि संपादयता निष्पादयता । वर्धमानपरम्परां विशेषयन्नाह—**पञ्चेति** । पञ्चरागैर्विचित्रा ये चेलचीरा वस्त्रखण्डास्तेषां कलापः समूहः स एव चिह्नं यस्यां सा ताम् । आ ईषत्पीतो यः पिष्टपङ्कस्तेनाङ्कितां चिह्निताम् । पुनः प्रकारान्तरेण गृहं विशिनष्टि—**उपेति** । उपद्वारे द्वारसमीपे संयता बद्धा विविधो गन्धो यास्वेवंविधाः कुसुममालाः पुष्पस्रजस्ताभिरलंकृतो भूषितो जरच्छागो वृद्धोऽजो यस्मिं-

---

**टिप्प०—1** महारजनपुष्पं 'कसूंभा' इति भाषा। 2 तण्डुलपिष्टद्वारा निर्मिमाणेन। 3 अथवा गुलिका एव कदम्बानि कदम्बकुसुमानि तेषां मालामित्यर्थः। 4 सुवर्णनिर्मिता यवा (यवधान्यानि)। सुवर्णघटितयवग्रथनेन कण्टकितत्वं प्रतीयत इत्याशयः। 5 प्रकरतया, इत्येव पाठः। अविरलं यथा स्यात्तथा संसक्तः श्वेतसर्षपाणां प्रकरः समूहो यस्मिन् तद्भावः, तत्तया। सा माला गौरसर्षपयुक्ता, अत एव सुवर्णलेपखचितेव प्रतीयत इत्याशयः।

---

**पाठा०—१** हरिद्र. २ परिपिञ्जराम्बर. ३ शिखण्डिमण्डल; शिखिपृष्ठमण्डल. ४ संघट्टयता. ५ प्रकरतया. ६ पिष्टक; पिष्टातक. ७ वर्धमानक. ८ प्रसवगृह.

मालालंकृतजरच्छागम्, अखिलव्रीहिमध्यावस्थापितार्यवृद्धाध्यासितशयनीयशिरोभागम्, अनवरतदह्यमानाज्यमिश्रभुजगनिर्मोकमेषविषाणक्षोदम्, अनलप्लुष्यमाणारिष्टतरुपल्लवोल्लसितरक्षाधूमगन्धम्, अध्ययनमुखरद्विजगणविप्रकीर्यमाणशान्त्युदकलवम्, अभिनवलिखितमातृपदपूजाव्यग्रधात्रीजनम्, अनेकवृद्धाङ्गनारब्धसूतिकामङ्गलगीतिकामनोहरम्, उपपाद्यमानस्वस्त्ययनम्, क्रियमाणशिशुरक्षाबलिविधानम्, आबध्यमानधवलकुसुमदामशतम्, अविच्छिन्नपठ्यमाननारायणनामसहस्रम्, अमलहाटकयष्टिप्रतिष्ठापितैरन्तःशुभशतानीव निश्चलशिखैर्ध्यायद्भिर्मङ्गलप्रदीपैरुद्भासितम्, उत्खातासिलतासनाथपाणिभिः सर्वतो रक्षापुरुषैः परिवृतं सूतिकागृहमदर्शत्।

अम्भः पावकं च स्पृष्ट्वा विवेश। प्रविश्य च प्रसवपरिक्षामपाण्डुमूर्तेरुत्सङ्गगतं विलासवत्याः, स्वप्रभासमुदयोपहतगर्भगृहप्रदीपप्रभम्, अपरित्यक्तगर्भरागत्वादुदयपरिपाटलमण्डलमिव सवितारम्, अपरसंध्यालोहितबिम्बमिव चन्द्रमसम्, अनुपजातकाठिन्यमिव कल्पतरु-

---

स्तत्। **अखिलेति**। 'क्षेत्रायप्रहितं खिलम्' इति कोशः। न विद्यते खिलं येषां तेऽखिलाः क्षेत्रोत्पन्ना ये व्रीहयो धान्यानि तन्मध्येऽवस्थापिता यार्यवृद्धा तयाध्यासितः शयनीयशिरोभागो यस्मिन्। 'आयुर्वृद्ध' इति पाठ आयुर्वृद्धा गोमयपुत्तलिका। शेषं पूर्ववत्। **अनवरतेति**। अनवरतं निरन्तरं दह्यमानः प्रज्वलमान आज्येन सर्पिषा मिश्रः संयुक्तो भुजगस्य सर्पस्य निर्मोकः कञ्चुकः, मेषस्योरणस्य विषाणं शृङ्गं तयोः क्षोदश्चूर्णं यस्मिन्। **अनलेति**। अनलेन वह्निना प्लुष्यमाणा दह्यमाना येऽरिष्टतरुपल्लवा निम्बवृक्षकिसलयास्तेषामुल्लसितो विकसितो रक्षार्थं धूमगन्धो यस्मिन्। **अध्ययनेति**। अध्ययनेन मुखरा वाचाला ये द्विजगणा विप्रसमूहास्तैर्विप्रकीर्यमाणा इतस्ततो विक्षिप्यमाणाः शान्त्यर्थमुदकलवाः पानीयपृषता यस्मिन्। **अभिनवेति**। अभिनवो नूतनो लिखितो यो मातॄणां पटो मातरो बालरक्षाकारिण्यो देव्यो यस्मिन्पटे लिख्यन्ते तस्य पूजायां व्यग्रो धात्रीजनो यस्मिन्। **सूतिकेति**। सूतिकामुद्दिश्य अनेकवृद्धाङ्गनाभिर्जरत्स्त्रीभिरारब्धा या सूतिकामङ्गलगीतिका तया मनोहरम्। उपपाद्यमानं क्रियमाणं स्वस्त्ययनमरिष्टनिवृत्त्युपायो यस्मिन्, क्रियते क्रियमाणं विधीयमानं शिशोर्बालस्य रक्षार्थं बलिविधानं यस्मिन्। **आबध्येति**। आबध्यमानं धवलकुसुमानां श्वेतपुष्पाणां दामशतं स्रक्शतं यस्मिन्। **अवीति**। अविच्छिन्नं निरन्तरं पठ्यमानं नारायणस्य कृष्णस्य नामसहस्रं यस्मिन्। **अमलेति**। अमलं निर्मलं यद्धाटकं सुवर्णं तस्य यष्ट्यो दण्डास्तेषु प्रतिष्ठापितैः सम्यक्तया स्थापितैः। **निश्चलेति**। निश्चला अकम्प्रा शिखार्चिर्येषां ते तथा तैः। अतएवान्तर्मध्ये शुभशतानि ध्यायद्भिरिव। एवंविधैर्मङ्गलप्रदीपैरुद्भासितं शोभितम्। **उत्खातेति**। उत्खाताः कोशाद्बहिः कर्षिता असिलताः खड्गलतास्ताभिः सनाथाः सहिताः पाणयो हस्ता येषामेवंविधैः सर्वतश्चतुर्दिक्षु रक्षार्थं नियुक्तसुभटैः परिवृतं परिवेष्टितम्। अन्वयस्तु प्रागेवोक्तः।

**अम्भ इति**। अम्भो जलं पावकं वह्निं च स्पृष्ट्वा तत्स्पर्शं विधाय विवेश गृहे प्रवेशं कृतवान्। बालकनिरीक्षणे दृष्टिदोषनिवारकमेतत्। **प्रविश्येति**। प्रविश्य प्रवेशं कृत्वात्मजं ददर्शेत्यन्वयः। अथात्मजं विशेषयन्नाह—**प्रसवेति**। प्रसवेन वैजननेन परिक्षामा कृशा पाण्ड्वी च मूर्तिः शरीरं यस्या एवंविधाया विलासवत्या उत्सङ्गः क्रोडस्तत्र गतं प्राप्तम्। **स्वेति**। स्वकीयप्रभायाः कान्त्याः समुदयेन समूहेनोपहता दूरं ध्वस्ता गर्भगृहस्य सूतिकागृहस्य प्रदीपप्रभा गृहमणिकान्तिर्येन स तम्। अपरित्यक्तो यो गर्भस्य रागो रक्तिमा तस्य भावस्तत्त्वं तस्मात्। उदयेनोद्गमनेन परिपाटलं श्वेतरक्तं मण्डलं यस्यैवंभूतं सवितारं सूर्यमिव। अपरसंध्या पश्चिमसायंकालस्तयालोहितमा ईषद्रक्तं बिम्बं यस्यैवंभूतं चन्द्रमसं निशानाथमिव। **अनुपेति**।

---

पाठा०—१ अवस्थित. २ शयन. ३ निम्बतरु. ४ उद्यत. ५ अपश्यत्. ६ प्रदीपक. ७ संध्यालोहित.

पल्लवम्, उत्फुल्लमिव रक्तारविन्दराशिम्, अवनिदर्शनावतीर्णमिव लोहिताङ्गम्, विद्रुमकिसल-यदलैरिव बालातपच्छेदैरिव पद्मरागरश्मिभिरिव रचितावयवम्[1], अनभिव्यक्तमुखपञ्चकमिव महासेनम्, सुरवनिताकर[2]परिभ्रष्ट[3]मिवामरपतिकुमारकम्[4], उत्तप्तकल्याणकार्तस्वरभास्वरया[5] स्वदेहप्रभया पूरयन्तमिव वासभवनम्, उद्भासमानैः सहजभूषणैरिव महापुरुषलक्षणैरुपेतम्, आगामिकालपालनप्रहृष्टयेव[6] श्रिया समालिङ्गितम्, आह्लादहेतुमात्मजं ददर्श। विगतनि-मेषनिश्चलपक्ष्मणा[7] च मुहुर्मुहुः प्रमृष्टसंघटिता[8]नन्दवाष्प[9]पटलप्लुततारकेण दूर[10]विस्फारितेन स्निग्धेन चक्षुषा पिबन्निवालपन्निव स्पृशन्निव मनोरथसहस्रप्राप्तदर्शनं सस्पृहं निरीक्ष्यमाण[11]-स्तनयाननं मुमुदे। कृतकृत्यं चात्मानं मेने।

समृद्धमनोरथः शुकनासस्तु शनैःशनैरङ्गप्रत्य[12]ङ्गान्यस्य निरूपयन्प्रीतिविस्ता[13]रितलोचनं भूमिपालमवादीत्—'देव, पश्य[14] पश्यास्य कुमारस्य गर्भसंपीडनवशादस्फु[15]टावयवशोभस्यापि

---

अनुपजातमनुत्पन्नं काठिन्यं जरठता यस्मिन्नेवंभूतं कल्पतरुपल्लवमिव पारिजातकिसलयमिव। उत्फुल्लं विक-सितं रक्तारविन्दराशिमिव कोकनदसमूहमिव, लोहिताङ्गं मङ्गलमवनिदर्शनं पृथिव्या अवलोकनं तदर्थमवती-र्णमागतमिव। **विद्रुमेत्यादि।** विद्रुमाणां हेमकन्द[1]लानां यानि किसलयदलानि तैरिव, बालातपस्य नवीना-तपस्य छेदैः खण्डैरिव, पद्मरागो लोहितमणिस्तस्य रश्मिभिरिव, रचिता निष्पादिता अवयवा अपघना यस्य स तम्। **अनेति।** अनभिव्यक्तमप्रकटितं मुखपञ्चकं यस्यैवंभूतं महासेनं कार्तिकेयमिव। **सुरेति।** सुरवनिता देवयोषितस्तासां कराद्धस्तात्परिभ्रष्टममरपतिरिन्द्रस्तस्य कुमारकं बालमिव। उत्तप्तं तापितं यत्कल्याणकारि कार्तस्वरं स्वर्णं तद्वद्भास्वरया दीप्यमानया स्वदेहप्रभया स्वशरीरकान्त्या वासभवनं पूरयन्तमिव परिपूर्णांकुर्वन्तमिव। **उद्भासेति।** उद्भासमानैः शोभमानैः सहजभूषणैरिव स्वाभाविकालंकारै-रिव महापुरुषाश्चक्रवर्त्यादयस्तेषां लक्षणैश्चिह्नैरुपेतं सहितम्। **आगामीति।** आगामिकाले भविष्यत्काले यत्पालनं रक्षणं तस्मात्प्रहृष्टया हर्षितयेव श्रिया लक्ष्म्या समालिङ्गितमुपगूहितम्। आह्लादस्य प्रमोदस्य हेतुं कारणम्। अन्वयस्तु प्रागेवोक्तः। **विगतेति।** स राजा चक्षुषा तनयाननं निरीक्षमाणो मुमुदे संतोषमवाप। अथ चक्षुर्विशेषयन्नाह—विगतो निमेषो यस्मादत एव निश्चलं स्थिरं पक्ष्म यस्य तत्तेन मुहुर्मुहुर्वारंवारं प्रमृष्टः प्रमार्जितः संघटितः प्रादुर्भूतो य आनन्दवाष्पः प्रमोदाश्रु तस्य पटलं तेन प्लुता क्लिन्ना तारका कनीनिका यस्मिंस्तत्तेन दूरमत्यर्थं विस्फारितेन विस्तारितेन स्निग्धेन चिक्कणेन। एतेनानन्दस्वरूपरसाभिव्यक्तिः सूचिता। पिबन्निव। अत्यादरेणावलोकनं पानमुच्यते। आलपन्निवालापं कुर्वन्निव। स्पृशन्निव स्पर्शं कुर्वन्निव। **मन इति।** मनोरथानां वाञ्छितानां यत्सहस्रं तेन प्राप्तं दर्शनं यस्य स तम्। सस्पृहं स्पृहासंयुक्तं यथा स्यात्तथेति क्रियाविशेषणम्। **कृतेति।** आत्मानं च कृतकृत्यं कृतार्थं मेने ज्ञातवान्।

शुकनासस्तु समृद्धः संपन्नो मनोरथो यस्यैवंभूतः शनैःशनैरस्य कुमारस्याङ्गं शरीरं प्रत्यङ्गानि हस्तपादादीनि निरूपयन्विलोकयन्। **प्रीतीति।** प्रीत्या स्नेहेन विस्तारिते लोचने नेत्रे येनैवंभूतं भूमिपालं नृपतिमवादीदभ्य-धात्। **देवेति।** हे देव हे स्वामिन्, पश्य पश्य विलोकय विलोकय अस्य कुमारस्य गर्भे यत्संपीडनं तद्वशा-

---

**टिप्प०**—1 प्रवालानां वा। 2 धन्यष्टीकाकारः। शुकनासस्य समृद्धमनोरथताहर्षसूचनाय प्रीति-विस्फारितलोचनं यथा स्यात्तथा निरूपयन्निति क्रियाविशेषणमिदम्।

---

**पाठा०**—१ विरचित. २ करतल. ३ भ्रष्ट. ४ अमरपतिकुमारम्; अमरकुमारकम्. ५ भास्वरतया. ६ प्रहृष्टया श्रिया. ७ पक्ष्मणा मुहुर्मुहुः. ८ संघट्टिता. ९ वाष्पबिन्दु. १० दूरम्. ११ ईक्षमाणः. १२ बालस्य. १३ विस्फारित-लोचनम्; विस्फारिताक्षः; विस्फारितलोचनः. १४ पश्यास्य. १५ अपरिस्फुट.

माहात्म्यमाविर्भावयन्ति[1] चक्रवर्तिचिह्नानि । तथाहि । अस्य संध्यांशुकरक्तबालशशिकलाकारे[2] ललाटपट्टे[3] नलिननालभङ्गतन्तुतन्वीयमूर्णा[4] परिस्फुरति । एतद्विकचपुण्डरीकधवलं कर्णान्तायतं मुहुर्मुहुरुन्मिषितैर्धवलयतीव वासभवनमरालपक्ष्म लोचनयुगलम् । विजृम्भमाणकमलकोश-[5]परिमलमनोहरमियमस्य सहजमाननामोदमाजिघ्रतीव दूरायता[6] कनकलेखेव नासिका । रक्तोत्पलकलिकाकारमुद्वहतीव[7][8] चास्याधररुचकम्[9] । रक्तोत्पलकलिकालोहिततलौ[10] भगवतो विष्टरश्रवस इव शङ्खचक्रचिह्नौ प्रशस्तलेखालाञ्छितौ करौ । अभिनवकल्पतरुपल्लवकोमलं लेखामयैर्ध्वजरथतुरगातपत्रकमलैरलंकृतमनेकनरेन्द्रसहस्रचूडामणिचक्रचुम्बनोचितं चरण-

---

दस्फुटानामव्यक्तानामवयवानामपघनानां[1] शोभा यस्यैवंभूतस्यापि चक्रवर्ती सार्वभौमस्तद्वच्चिह्नानि सामुद्रिक-शास्त्रोक्तानि माहात्म्यं महापुरुषत्वमाविर्भावयन्ति प्रकटीकुर्वन्ति । तदेव दर्शयन्नाह—**तथाहीति** । 'अस्य' इत्यारभ्य 'रुदतः श्रूयते' इतिपर्यन्तं प्रघट्टकः । संध्यांशव एव संध्यांशुकाः[2] । स्वार्थे कः । तै रक्ता लोहिता या बालशशिनः प्रतिपच्चन्द्रस्य कला तस्या आकार आकृतिर्यस्यैवंविधे ललाटपट्टे भालस्थले नलिननालं मृणालं तस्य भङ्गाच्छेदादन्तस्तन्तुर्निःसरति तद्वत्तन्वी सूक्ष्मा इयं ऊर्णा[3] रोमपद्धतिः परिस्फुरति । एतल्लक्षणद्वयं चक्रवर्तिन एव स्यादिति भावः । अरालं वक्रं पक्ष्म नेत्ररोम यस्मिन्नेवंभूतमेतल्लोचनयुगलं मुहुर्मुहुरुन्मिषितैर्निमेषोन्मेषैर्वास-भवनं धवलयतीव शुभ्रीकुर्वन्नि( करोती )व । कीदृशम् । विकचं यत्पुण्डरीकं सिताम्भोजं तद्वद्धवलम् । कर्णान्तं यावदायतं विस्तृतम् । **विजृम्भेति** । विजृम्भमाणः सर्वतः प्रसृतो यः कमलकोशस्तस्य परिमलस्त-द्वन्मनोहरं चार्वस्याननामोदं सहजं स्वारसि(भावि)कमियं नासिका नासा जिघ्रतीव गन्धोपादानं कुर्व(करो)तीव दूरायता दूरमत्यर्थमुच्छ्रिता । केव । कनकलेखेव सुवर्णलेखेव । रक्तोत्पलं कोकनदं तस्य या कलिका तस्या आकारो यस्मिन्नेवंभूतमधररुचकमधरलक्षणं[4] रुचकं मङ्गलद्रव्यं मणिविशेषं वोद्वहतीवोद्वहनं कुर्व( करो )तीव । 'रुचकं मङ्गलद्रव्ये बीजपूरे ससैन्धवे' इत्यनेकार्थः । चिह्नान्तरमाह—**रक्तेति** । रक्तोत्पलस्य कलिकावल्लोहितौ रक्तौ तलौ ययोस्तौ भगवतो माहात्म्यवतो विष्टरश्रवस इवेन्द्रस्येव[5] शङ्खः कम्बुः, चक्रं प्रसिद्धम्, एतयोश्चिह्नं ययोरेतादृशौ करौ हस्तौ । इन्द्रस्यापि करौ शङ्खचक्रलाञ्छितौ भवतः । विष्णोरनुजत्वादिति भावः । करयोरेव द्वितीयं चिह्नमाह—**प्रशस्तेति** । प्रशस्ता लक्षणोपेता या लेखा रेखा[6] तया लाञ्छितौ चिह्नितौ करौ हस्तौ । चरणयोरप्याह—**अभिनवेति** । अभिनवाः प्रत्यग्रा ये कल्पतरुपल्लवाः पारिजातकिसलयास्तद्वत्कोमलं मृदु । इत्येकं लक्षणम् । पञ्चभिर्द्वितीयमाह—**लेखेति** । लेखामयै रेखानिष्पन्नैः । **ध्वजरथतुरगातपत्रकमलै-रिति** । ध्वजः पताका, रथः स्यन्दनः, तुरगो ययुः, आतपत्रं छत्रम्, कमलं नलिनम्, एतैरलंकृतं भूषितम् । वैभवमाह—**अनेकेति** । अनेके ये नरेन्द्रा राजानस्तेषां सहस्रं तस्य चूडामणीनां चक्रं समूहस्तेन चुम्बनं

---

**टिप्प०**—1 पीडनवशादस्फुटा सर्वतोभावेन अव्यक्ता अवयवशोभा यस्य तादृशस्यापि । इत्युचितम् । 2 'सन्ध्यांशुरक्त' इत्येव पाठः, निरर्थक'क'प्रत्ययस्य कवेरनभिमतत्वात् । 3 भ्रूयुगलमध्यवर्तिनी 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः' इत्यमरः । 4 अस्य अधरो रुचकमिव अधररुचकम् ( बिम्बाकारं मङ्गलद्रव्यम् ) रक्तोत्पलस्य या कलिका तस्या आकारमुद्वहतीव, इति व्याख्योचिता । 5 'वैकुण्ठो विष्ट-रश्रवाः' इति विष्णुरेवार्थः । भगवत इति विशेषणस्वारस्यात्, शङ्खचक्रयोर्विष्णौ प्रसिद्धत्वाच्च, इन्द्रस्य विष्टरश्रवःपदेनाप्रयुक्तत्वाच्च सोयं प्रमाद एव । 6 प्रशस्ताः याः अङ्कुशादिरेखाः ताभिरिति बहुवचन-मुचितम् ।

---

**पाठा०**—१ आविर्भावयन्तीव. २ संध्यांशुरक्त. ३ ललाटपट्टे च. ४ नवनलिन. ५ विजृम्भमाणकोश. ६ दूरादायता. ७ रक्तोत्पलनिकरम्; रक्तोत्पलकलिकानुरागम्. ८इवास्य; एतस्य. ९ चास्याधरकम्; चास्याधरपुटकम्. १० कलिकाकारलोहित.

युगलम् । एष च दुन्दुभेरिवातिगम्भीरः स्वरयोगोऽस्य रुदतः श्रूयते ।' इत्येवं कथयत्येव तस्मिन्ससंभ्रमापसृतेन राजलोकेन द्वारिस्थितेन[1] दत्तमार्गस्त्वरितगतिरागत्य प्रहर्षोद्गमपुलकिततनुः स्फारीभवल्लोचनो मङ्गलकनामा[2] प्रहृष्टवदनः[3] पुरुषः पादयोः प्रणम्य राजानं व्यजिज्ञपत्—'देव, दिष्ट्या वर्धसे । प्रतिहतास्ते शत्रवः । चिरं जीव । जय[4] पृथिवीम्[5] । त्वत्प्रसादादत्रभवतः शुकनासस्यापि ज्येष्ठायां ब्राह्मण्यां मनोरमाभिधानायां राम इव रेणुकायां तनयो जातः, श्रुत्वा देवः प्रमाणम्' इति ।

अथ नृपतिरमृतवृष्टिप्रतिममाकर्ण्य[6] तद्वचनं प्रीतिविस्फारिताक्षः प्रत्यवदत्—'अहो कल्याणपरम्परा। सत्योऽयं लोकप्रवादो[7] यद्विपद्विपदं संपत्संपदमनुवध्नातीति[8] । सर्वथा समानसुखदुःखतां दर्शयता विधिनापि भवतेव वयमनुवर्तिताः' इत्यभिधाय प्रीतिविकसितमुखः सरभसमालिङ्ग्य विहसन्स्वयमेव शुकनासस्योत्तरीयं पूर्णपात्रं जहार । तस्मै च प्रीतमनाः प्रियवचनानुरूपं[9] पुरुषायापरिमितं पारितोषिकमादिदेश । उत्थाय च तथैव तेन चरणविकुट्टन[10]क्वणित[11]नू-

---

संश्लेषस्तत्रोचितं योग्यमेवंविधं चरणयुगलं पादद्वितयम् । चिह्नान्तरमाह—**एष चेति** । अस्य बालस्य रुदत एष समीपतरवर्ती दुन्दुभेरिव पटहस्येवातिगम्भीरोऽतिमन्द्रः स्वरयोगो ध्वनिसंबन्धः श्रूयत आकर्ण्यते । इत्येवं पूर्वोक्तप्रकारेण कथयत्येवेति क्रियासंगतेनैवकारेण सामानाधिकरण्यमुच्यत इति । तस्मिञ्शुकनासे कथयत्येव ब्रुवत्येव मङ्गलकनामा पुरुषो राजानं पादयोश्चरणयोः प्रणम्य व्यजिज्ञपद्विज्ञापनां चकार । मङ्गलकं विशेषयन्नाह—**दत्तेति** । दत्तो मार्गो यस्येति स तथा । केन । राजलोकेन राजसमूहेन । कीदृशेन । द्वारि स्थितेन प्रतीहारस्थितेन । पुनः कीदृशेन । ससंभ्रमं सत्वरमपसृतेन दूरीभूतेन । त्वरितं( ता ) शीघ्रं( घ्रा ) गतिर्गमनं यस्य स तथा । **प्रहर्षेति** । प्रहर्षोद्गमेन प्रमोदोद्गमेन पुलकितं(ता) कण्टकितं(ता) तनुर्यस्य सः । स्फारीभवती विस्तीर्णतां प्राप्यमाणे लोचने यस्य सः । प्रहृष्टं सहर्षं वदनं यस्य सः । देव स्वामिन्, त्वं दिष्ट्या भाग्येन वर्धस एधसे । ते शत्रवः प्रतिहताः क्षयं प्राप्ताः । चिरं बहुकालं जीव प्राणिहि । पृथिवीं वसुंधरां जय गृहाण । त्वत्प्रसादात्तव माहात्म्यादत्रभवतः पूज्यस्य शुकनासस्यापि ज्येष्ठायां ब्राह्मण्याम् । इत्यनेन हर्षातिशयः सूचितः । शूद्रायां त्वनौचित्यात् 'तत्रायं जायते स्वतः' इत्युक्तत्वात् । मनोरमेत्यभिधानं नाम यस्याः सा तस्याम् । कस्यां क इव । रेणुकायां तुलजायां राम इव परशुराम इव तनयः पुत्रो जातः समुत्पन्नः । **श्रुत्वेति** । श्रुत्वा एतदाकर्ण्य देवो भवान्प्रमाणमिति यदाज्ञापयति देवस्तदेव कर्तव्यमिति भावः ।

**अथेति** । अथ एतदाकर्णनानन्तरं नृपती राजाऽमृतस्य पीयूषस्य या वृष्टिर्वर्षणं तत्प्रतिमं तुल्यं तद्वचनं मङ्गलकवच आकर्ण्य श्रुत्वा । **प्रतीति** । प्रीत्या स्नेहेन विस्फारिते विस्तारिते अक्षिणी येनेति बहुव्रीहिः । ततो ङः समासान्तः डित्वाट्टिलोपः । प्रत्यवदत्प्रत्यवोचत् । अहो इत्याश्चर्ये । कल्याणपरम्परा श्रेयःसंततिः । अतो ज्ञायत इति । सत्योऽयमवितथोऽयं लोकप्रवादो जनानां चिरंतनो वचनव्यापारः । इतिवाच्यं दर्शयन्नाह—**यदिति** । यत् यस्माद्धेतोर्विपदं विपत्, सम्पदं सम्पदनुबध्नात्यनुगच्छति । सर्वथा सर्वप्रकारेण समानं सुखदुःखं ययोस्तयोर्भावस्तत्ता तां दर्शयता ज्ञापयता विधिनापि भवतेव वयमनुवर्तिताः पुत्रोत्पत्तिभ्यां निर्मिताः, यथा पुत्रप्राप्त्या मत्साम्यं तव, तथा भवतेव ममापि साम्यमिति भावः । इत्यभिधायेत्युक्त्वा प्रीत्याभ्यन्तरस्नेहेन विकसितं विमुद्रं मुखं यस्य सः । सरभसं वेगेनालिङ्ग्योपगूहनं कृत्वा विहसन्स्मितं कुर्वन्स्वयमेवात्मनैव शुकनासस्योत्तरीयं निवसनं पूर्णपात्रं पूर्वं व्याख्यातस्वरूपं जहार हृतवान् । तस्मै शुभशंसिने पुरुषाय नराय प्रीतमनाः संतुष्टचित्तः प्रियमिष्टं यद्वचनं तस्यानुरूपं योग्यमपरिमितं संख्यातीतं पारितोषिकं संतोषप्रयुक्तं दातुमादिदेशाज्ञां दत्तवान् । **उत्थाय चेति** । तथैव तेनैव प्रकारेण उत्थायोत्थानं कृत्वा शुकनासभवनं गत्वा द्विगुणतर-

---

**पाठा०**—१ द्वारस्थितेन. २ मङ्गल. ३ वदनपुरुषः. ४ जय च. ५ पृथिवीं प्रतिपालय. ६ भूपतिः. ७ जनप्रवादः. ८ अनुबध्नाति. ९ प्रियवचनश्रवणानुरूपम्. १० विघट्टन; कुट्टन. ११ मणिनूपुर.

पुरसहस्रमुखरितदिगन्तरेण सरभसोत्क्षेपचा[१]लितमणिवलयावलीवाचालितभु[२]जलतेनोर्ध्वीकृतैरुत्तानतलैः करपुटैरनिललु[३]लिता[४]माकाशकमलिनीमिव दर्शयता पर्यस्तमृदितकर्णपल्लवेन परस्पराङ्गदकोटिसंघट्टदष्टपाटितोत्तरीयांशुकेन श्रमजलधौताङ्गरागरञ्जितन[५]वीनवाससा किंचिदवशिष्टतमालपत्रेण विलसद्वारविलासिनीहसितैरुन्निद्रकैरववनानुकारं प्रथयता सरभसव[६]ल्गनस्खलल्लोलहारलतास्फालितकुचस्थलेन सिन्दूरतिलकलु[७]लितालकलेखेन विप्रकीर्णपिष्टातकपांसु[८]पुञ्जपिञ्जरितकेशपाशेन प्रनृ[९]त्तकलमूककुब्जकिरातवामनबधिरजडजनपुरःसरेणोत्तरीयांशुकग्रीवाबद्धावकृष्टवि[१०]डम्बितजरत्कञ्चुकिक[११]दम्बकेन वीणावेणुमुरजकांस्यताललयानुग[१२]तेन कल-

---

मुत्सवमकारयत्कारयामासेति दूरेणान्वयः । कीदृशो राजा । अन्तःपुरिकाजनेनानुगम्यमानोऽनु पश्चात्तदनन्तरं गन्तुं योग्य इत्यर्थः । अथ चान्तःपुरिकाजनं विशेषयन्नाह—**चरणेति** । चरणानां पादानां प्रमोदातिरेकाद्विकुट्टनमास्फालनं तेन क्वणितं शब्दितं यन्नूपुरसहस्रं पादकटकसहस्रं तेन मुखरितं वाचालितं दिगन्तरं दिङ्मध्यं येन स तेन । **सरभसेति** । सरभसेन[१] वेगेन य उत्क्षेपो भुजानां चालनं तेन चालिता कम्पिता या मणिवलयावली रत्नकङ्कणश्रेणी तया वाचालिता मुखरिता भुजलता बाहुलता यस्य सः तथा तेन । हर्षवशादूर्ध्वीकृतैरुच्चैर्विहितैरुत्तानतलैः संमुखतलैः करपुटैर्हस्तपुटैरनिललुलितां वायुना विलुठितामाकाशकमलिनीं व्योमपद्मिनीमिव दर्शयता[२] प्रकाशयता । **पर्यस्तेति** । पर्यस्ता विक्षिप्ता मृदिताश्चूर्णिताः कर्णपल्लवा येन स तथा तेन । **परस्परेति** । परस्परमन्योन्यमङ्गदानां बाहुवलयानां या कोटिरग्रभागस्तस्याः संघट्टोऽभिघातस्तेनैव[३] दष्टमिव पाटितं छिन्नमुत्तरीयांशुकं यस्य स तेन । संघट्टवशाच्छ्रमजलेन धौतः क्षालितो योऽङ्गरागो विलेपनं तेन रञ्जितानि नवीनवासांसि नव्यवस्त्राणि यस्य स तेन । **किंचिदिति** । किंचित् अवशिष्टं उर्वरितं तमालपत्रं[४] यस्य स तेन । इतरेषां भूषणानां वस्त्राणां च संमर्दवशान्निपतनमभूत् । तमालपत्रं तु महता क्लेशेन सौभाग्यमण्डननिमित्तकत्वाद्व्यवस्थापितमिति भावः । विलसन्त्यो या वारविलासिन्यो वारयोषितस्तासां हसितैर्हास्यैः । **उन्निद्रेति** । उन्निद्राणि विकसितानि यानि कैरववनानि तेषामनुकारं सादृश्यं प्रथयता विस्तारयता । **सरभसेति** । सरभसं सवेगं यद्वल्गनं परस्परमङ्गानामामोटनं तेन स्खलन्ती[५]र्लोलाश्चपला या हारलता मुक्तालतास्ताभिरास्फालितमाहतं कुचस्थलं यस्य स तेन । **सिन्दूरेति** । सिन्दूरं नागजं तेन जनितं यत्तिलकं पुण्ड्रं तत्र श्रमवशाल्लुलिता लुठिता अलकलेखा यस्य स तेन । अत्र लेखाशब्देन ततिरुच्यते । तेन कियतामलकानां तत्रावस्थितिर्न तु सर्वेषामिति भावः । **विप्रेति** । विप्रकीर्णो विक्षिप्तो यः पिष्टात एव पिष्टातकः । स्वार्थे कः । पटवासकस्तस्य पांसुपुञ्जो धूलिसमूहस्तेन पिञ्जरितः पीतरक्ततां प्राप्तः केशपाशो यस्य स तेन । **प्रनृत्तेति** । प्रनृत्ताः स्वयमेवारब्धताण्डवाः, कला[६] मनोज्ञाः, मूका अस्फुटवाचः, कुब्जाः पूर्वोक्तलक्षणाः; किराताः स्वल्पतनवः, वामनाः पूर्वव्याख्याताः, बधिरा अकर्णाः, जडा मूर्खाः, एवंविधा जनाः पुरःसरा अग्रगामिनो यस्य स तेन । **उत्तरीयेति** । उत्तरीयांशुकेन प्रच्छादनवस्त्रेण ग्रीवायां कन्धरायां बद्धं संयमितमवकृष्टमाकृष्टमत एव विडम्बितं विडम्बनां प्रापितं जरत्कञ्चुकिकदम्बकं येन स तेन । **वीणेति** । वीणा वल्लकी,

---

**टिप्प०**—1 सरभसं वेगेन इत्युचितम् । 2 संमुखतलानां हस्तानामुपरि उत्थापनात् आकाशकमलिनी ( कमलपुष्पयुक्ता कमलिनी, वृक्षः ) दर्शितेत्यर्थः । 3 संघट्टेन पूर्वं दष्टानि विद्धानि ततः पाटितानि उत्तरीयांशुकानि यस्य तेनेत्यर्थ उचितः । 4 तिलकम् । 'तमालपत्रं तिलके तापिच्छे पत्रकेऽपि च' इति हैमः । 5 स्खलन्त्य इत्यर्थः । 6 असौष्ठवं टीकाकृतः । 'प्रणृत्यविकल' इति पाठः । 'विशेषनर्तनेन विह्वला मूकाः' इति तदर्थः ।

---

**पाठा०**—१ चलित; वलित. २ भुजवलयेन. ३ लुण्ठिताम्. ४ आकाशगङ्गा. ५ चीन; स्वच्छचीन; चीर. ६ चलन. ७ लोलित. ८ पांसुपिञ्जरित. ९ प्रणत्यविकल; प्रनृत्तकल; प्रवृत्तकल. १० विलम्बित. ११ कदम्बेन. १२ अनुयातेन.

मधुरमुद्गायता हर्षनिर्भरतया मत्तेनेवोन्मत्तेनेव ग्रहगृहीतेनेवा[1]पगतवाच्यावाच्य[2]विवेकेन नृत्त[3]-क्रीडाप्रसक्तेनान्तःपुरिकाजनेन प्र[4]चलमणिकुण्डलाहतक[5]पोलभित्तिना च विघूर्णमानकर्णोत्पले-नाधोवि[6]गलितविलोलशेखरेण दोलायमानवै[7]कक्षककुसुममालेन निर्दयप्रहतभेरीमृदङ्गमर्दलप-टहनिनादानुगतका[8]हलाशङ्खरवजनितरभसेन चरणसंनिपातैर्दा[9]रयतेव व[10]सुधां राजपरिजनेन प्र[11]वृत्तनृत्येन च चारणगणेन विवि[12]धमुखवाद्यकृतकोलाहलेन पठता गा[13]यता चानुगम्यमानः शुकनासभवनं गत्वा द्विगुणतरमुत्सवमकारयत् ।

अतिक्रान्ते च षष्ठीजागरे प्राप्ते दशमेऽहनि पुण्ये मुहूर्ते गाः सुवर्णं च [14]कोटिशो ब्राह्म-णसात्कृत्वा 'मातुरस्य मया परिपूर्णमण्डलश्चन्द्रः स्वप्ने मुखकमलमाविशन्दृष्टः' इति स्वप्नानु-रूपमेव राजा स्व[15]सूनोश्चन्द्रापीड इति नाम चकार । अपरेद्युः शुकनासोऽपि कृत्वा ब्राह्मणो-चिताः सकलाः क्रिया राजानुमतमात्मजस्य विप्रजनोचितं वैशम्पायन इति नाम चक्रे ।

---

वेणुर्वंशः, मुरजो मृदङ्गः, कांस्यतालं प्रसिद्धम्, एतेषां यो लयः साम्यावस्था तदनुगतेन कलं मधुरं यथा स्यात्तथोद्गायता गानं कुर्वता, हर्षस्य यो निर्भरोऽतिशयस्तस्य भावस्तत्ता तया मत्तेनेव क्षीबेणेवोन्मत्तेनेव वातग्रस्तेनेव ग्रहगृहीतेनेव ग्रथिलेनेव[1] । **अपेति** । अपगतो दूरीभूतो वाच्यावाच्ययोर्विवेकः पृथगात्मता यस्मात्स तेन । **नृत्तेति** । नृत्तलक्षणा या क्रीडा विनोदस्तस्यां प्रसक्तेन लग्नेन । अथ च राजपरिजनेन नृप-परिवारेणानुगम्यमानः । परिजनं विशेषयन्नाह—**प्रचलेति** । प्रचलानि चञ्चलानि यानि मणिकुण्डलानि रत्न-कर्णाभरणानि तैराहता कपोलभित्तिर्यस्य स तेन । विघूर्णमानं पतनायोन्मुखं कर्णोत्पलं यस्य स तेन । **अध इति** । अधो विगलितो विलोलश्चञ्चलः शेखरोऽवतंसो यस्य स तेन । दोलायमानाः कम्पमाना वैकक्षकीकृतो-त्तरासङ्गीकृता कुसुममाला यस्य स तेन । **निर्दयमिति** । निर्दयमतिशयेन प्रहता वादिता भेर्यो दुन्दुभयः, मृदङ्गा वाद्यविशेषाः, मर्दला मुरजाः, पटहाः प्रसिद्धाः एतेषां यो निनादः शब्दस्तदनुगतस्तन्मिश्रितः काहला वाद्यविशेषः, शङ्खः प्रसिद्धः, तयो रवः शब्दस्तेन जनितो निष्पादितो रभसो वेगो[2] यस्य स तेन । चरणसंनि-पातैः पादविक्षेपैर्वसुधां पृथ्वीं दारयतेव विदीर्णां कुर्वतेव । प्रवृत्तं प्रारब्धं नृत्यं येन स तथा तेन । चारणग-णेन कुशीलवसमुदायेन । कीदृशेन । विविधं यन्मुखमेव[3] वाद्यं तेन कृतो विहितः कोलाहलः कलकलो येन स तेन । पठतोच्चैःस्वरेण राजस्तुतिं गायता गानं कुर्वता च । अनुगम्यमान इत्यस्य सर्वत्रानुषङ्गः ।

**अतीति** । अतिक्रान्ते व्यतीते षष्ठीजागरे षष्ठदिवसकृत्ये च सति दशमेऽहनि दशमे दिवसे प्राप्ते सति पुण्ये पवित्रे मुहूर्ते वेलायां गाः सुरभीः कोटिशः सुवर्णं कनकं ब्राह्मणसाद्ब्राह्मणाधीनं कृत्वा विधाय, मया स्वप्ने परिपूर्णमण्डलश्चन्द्रः शशी अस्य मातुर्जनन्या मुखकमलं वदनाम्भोजमाविशन्प्रविशन्दृष्टोऽवलोकित इति स्व-प्नानुरूपमेव स्वप्नसदृशमेव राजा नृपः स्वसूनोः स्वपुत्रस्य चन्द्रापीड इति नाम चकार निर्ममे । अपरेद्युरन्य-स्मिन्दिने शुकनासोऽपि ब्राह्मणोचिता विप्रकुलयोग्याः सकलाः समग्राः क्रियाः कृत्वा विधाय राजानुमतं नृपेणानुज्ञातमात्मजस्य पुत्रस्य विप्रजनोचितं ब्राह्मणजनयोग्यं वैशम्पायन इति नाम चक्रे कृतवान् ।

---

**टिप्प०**—1 भूताविष्टेनेवेत्युचितम् । 2 आनन्दो यस्य स इत्यर्थः । 3 विविधं यन्मुखवाद्यम् ( मुख-द्वारा नानाविधाव्यक्तध्वनिनिःसारणम् ) ।

---

**पाठा०**—१ व्यपगत. २ विवेकेनेव. ३ नृत्यगीतक्रीडा. ४ प्रचलितमणि. ५ उद्घट्टितकपोल. ६ गलित. ७ वैक-क्षिक; वैकक्ष. ८ काहल. ९ विदारयता. १० वसुंधराम्. ११ प्रवृत्तनृत्तेन; नृत्ते प्रवृत्ते. १२ विविधवाद्य. १३ गायता प्रलंगता च. १४ कोटिशो दत्त्वा. १५ सूनोः.

क्रमेण कृतचूडाकरणादिक्रियाकलापस्य[1] शैशवमतिचक्राम चन्द्रापीडस्य । तारापीडो व्यासङ्गविघातार्थं[2] बहिर्नगरादनुसिप्रमर्धक्रोशमात्रायामम्, अतिमहता तुहिनगिरिशिखरमालानुकारिणा सुधाधवलितेन प्राकारमण्डलेन परिवृतम्, अनुप्राकारमाहितेन महता परिखावलयेन परिवेष्टितम्, अतिदृढकपाटसंपुटम्, उद्घाटितैकद्वारप्रवेशम्, एकान्तोपरचिततुरङ्गवाह्यालीविभागम्, अधःकल्पितव्यायामशालम्, अमरागाराकारं विद्यामन्दिरमकारयत् । सर्वविद्याचार्याणां च संग्रहे यत्नमतिमहान्तमन्वतिष्ठत् । तत्रस्थं च तं केसरिकिशोरकमिव पञ्जरगतं कृत्वा प्रतिषिद्धनिर्गमम्, आचार्यकुलपुत्रप्रायपरिजनपरिवारम्, अपनीताशेषशिशुजनक्रीडाव्यासङ्गम्, अनन्यमनसम्, अखिलविद्योपादानार्थमाचार्येभ्यश्चन्द्रापीडं शोभने दिवसे वैशम्पायनद्वितीयमर्पयांबभूव । प्रतिदिनं चोत्थायोत्थाय सह विलासवत्या विरलपरिजनस्तत्रैव गत्वैनमालोकयामास राजा ।

---

**क्रमेणेति ।** क्रमेण परिपाट्या कृतो निष्पादितः चूडाकरणं चौलकर्म तदादिकाः क्रियास्तासां कलापो यस्य स तथा तस्य चन्द्रापीडस्य शैशवं बाल्यमतिचक्राम । कौमारं प्राप्तवानित्यर्थः । तारापीडस्तस्य पिता व्यासङ्गश्चित्तस्यान्यत्र गमनं तस्य विघातार्थं दूरीकरणार्थं नगराद्बहिर्विद्यामन्दिरमकारयदित्यन्वयः । अनुसिप्रं सिप्रासमीपवर्ति । कीदृशम् । अर्धक्रोशमात्रमायामो विस्तारो यस्य तत् । अतिमहतात्युच्चेन तुहिनगिरिर्हिमगिरिस्तस्य या शिखरमाला सानुश्रेणिस्तदनुकारिणा तत्सादृश्यधारिणा, सुधा पूर्वोक्ता तया धवलितेन शुभ्रीकृतेन प्राकारमण्डलेन वप्रवलयेन परिवृतं वेष्टितम्, अनुप्राकारमाहितेन स्थापितेन महता परिखावलयेन परिवेष्टितम् । अतिदृढं कपाटसंपुटं यस्य तत् । उद्घाटितं यदेकद्वारं तत्र (तेन) प्रवेशो यस्मिंस्तत् । **एकान्तेति ।** एकान्ते निर्जनस्थल उपरचितस्तुरङ्गाणामश्वानां वाह्यालीनां शिबिकादीनां व्यवस्थापनविभागो यस्मिंस्तत् । **अध इति ।** अधोभागे कल्पिता व्यायामशाला बाहुयुद्धाभ्यासादियोग्यं स्थलं यस्मिंस्तत् । **अमरेति ।** अमरागारं देवगृहं तद्वदाकारो यस्य तत् । **सर्वेति ।** सर्वविद्याचार्याणां समग्रविद्याध्यापकानां संग्रहे स्वीकारेऽतिमहान्तमत्युत्कृष्टं यत्नमन्वतिष्ठदकरोत् । **तत्रेति ।** तत्रस्थं तन्निवासिनं तं चन्द्रापीडं पञ्जरगतं केसरिकिशोरकमिव कृत्वा विधाय प्रतिषिद्धो निर्गमो बहिर्गमनं यस्य स तम् । **आचार्येति ।** आचार्यस्य कुलं वैशम्पायनकुलं[2] तस्य पुत्रप्रायो यः परिजनः स एव परिवारो यस्य स तम् । **अपेति ।** अपनीतो दूरीकृतोऽशेषायाः समग्रायाः शिशुजनक्रीडाया बालजनलीलायाः व्यासङ्गो विद्याप्रतिबन्धकं यस्य स तम् । न विद्यतेऽन्यस्मिन्मनो यस्य स तम् । एकाग्रचित्तमित्यर्थः । **अखिलेति ।** अखिलाः समग्रा या विद्यास्तासां यदुपादानं ग्रहणं तदर्थमाचार्येभ्यः पाठकेभ्यः शोभने प्रशस्ते दिवसे दिने वैशम्पायनो मन्त्रिसुतः स एव द्वितीयो विद्याभ्यसने सहायो यस्यैवंभूतं चन्द्रापीडमाचार्येभ्योऽर्पयांबभूवार्पितवान् । अथ च राजा प्रतिदिनं प्रत्यहमुत्थायोत्थायोत्थानं कृत्वा । स्वगृहादिति शेषः । वीप्सायां द्वित्वम् । सह विलासवत्या विरलपरिजनः स्वल्पपरिच्छदस्तत्रैव गत्वैनं चन्द्रापीडमालोकयामास व्यलोकयत् ।

---

**टिप्प०—1 अतिदृढाभ्यां कपाटाभ्यां संपुटम् पिधानं यस्य तत् । 2 अहो प्रलापष्टीकाकारस्य । आचार्याः अध्यापकाः, कुलपुत्राः सद्वंशजाताः समानवयसः कुमाराः, एतत्प्रायः ( एतद्बहुलः ) परिजनो यस्य तम्, इत्यर्थः ।**

---

**पाठा०**—१ बालक्रिया. २ क्रीडाव्यासङ्ग. ३ अनुक्षिप्रम्. ४ शिखरानुकारिणा. ५ धवलेन; प्राकारधवलेन चन्द्रशालावलयेन विलसितं प्राकार. ६ तुरग. ७ विद्यागृहम्. ८ शिशुक्रीडन; शिशुजनक्रीडन. ९ चोत्थाय सह.

चन्द्रापीडोऽप्यनन्यहृदयतया तथा यन्त्रितो[1] राज्ञाऽचिरेणैव[2] यथास्वमात्मकौशलं[3] प्रकटयद्भिः पात्रवशादुपजातोत्साहैराचार्यैरुपदिश्यमानाः[4] सर्वा[5] विद्या जग्राह। मणिदर्पण इवातिनिर्मले तस्मिन्संचक्राम सकलः कलाकलापः। तथा हि। पदे, वाक्ये, प्रमाणे, धर्मशास्त्रे, राजनीतिषु, व्यायामविद्यासु, चापचक्रचर्म[6]कृपाणशक्तितोमरपरशुगदाप्रभृतिषु सर्वेष्वायुधविशेषेषु, रथचर्यासु, गजपृष्ठेषु[7], वीणावेणुमुरजकांस्यतालदर्दुरपुटप्रभृतिषु वाद्येषु, भरतादिप्रणीतेषु नृत्त[8]शास्त्रेषु, नारदीयप्रभृतिषु गान्धर्ववेदविशेषेषु, हस्तिशिक्षायाम्, तुरङ्गवयोज्ञाने[9], पुरुषलक्षणे, चित्रकर्मणि, पत्रच्छेद्ये[10], पुस्तकव्यापारे, लेख्यकर्मणि, सर्वासु द्यूतकलासु[11], शकुनिरुतज्ञाने, ग्रहगणिते, रत्नपरीक्षासु, दारुकर्मणि, दन्तव्यापारे, वास्तुविद्यासु, आयुर्वेदे, यन्त्र[12]-

---

चन्द्रापीडोऽपि राज्ञा तारापीडेन तथेति तेन प्रकारेण यन्त्रितो नियमितो यथा[1]ऽचिरेणैव स्वल्पकालेनैवानन्यहृदयतयैकाग्रचित्ततयाचार्यैर्गुरुभिरुपदिश्यमाना अध्याप्यमानाः सर्वाः समग्रा विद्या द्वासप्ततिकला जग्राह गृहीतवान्। आचार्यैः किं कुर्वद्भिः। स्वं स्वकीयमात्मकौशलं निजचातुर्यं प्रकटयद्भिराविष्कुर्वद्भिः, पात्रवशादत्युत्कृष्टविद्याग्राहकवशादुपजातः समुत्पन्न उत्साहः प्रगल्भता येषां तैः। आचार्यविशेषणम्। मणिदर्पणे रत्नादर्श इवातिनिर्मलेऽतिस्वच्छे तस्मिन्सकलः कलाकलापः संचक्राम संक्रमं कृतवान्। तमेव दर्शयन्नाह—**तथा हीति। पदेति।** पदं व्याकरणशास्त्रं तस्मिन्। **वाक्येति।** वाक्यं मीमांसे पूर्वोत्तरे तस्मिन्। प्रमाणं न्यायवैशेषिकसांख्यपातञ्जलरूपं तस्मिन्। धर्मशास्त्रं मन्वादिप्रणीतो ग्रन्थस्तस्मिन्। इतः परं चतुःषष्टिकला आह—**राजेति।** राजनीतयः कामन्दकीप्रभृतिशास्त्राणि तेषु। व्यायामः श्रमस्तदर्थं या विद्या मल्लयुद्धादिकास्तासु। **चापेति।** चापं धनुः, चक्रं प्रसिद्धम्, चर्म संनाहः, कृपाणः खड्गम्, शक्तिः शस्त्रविशेषः, तोमरः प्रहरणविशेषः, परशुः कुठारः, गदा प्रसिद्धा, एतत्प्रभृतिषु सर्वेष्वायुधविशेषेषु। रथचर्यासु रथपरिवर्तनेषु[2]। गजपृष्ठेषु हस्तिशिरोदेशेषु। वीणा वल्लकी, वेणुर्वंशः, मुरजो मृदङ्गः, कांस्यतालं वाद्यविशेषः, दर्दुरपुटं दर्दुरशब्दाकारशब्दं वाद्यम्, एतत्प्रभृतिषु वाद्येष्वातोद्येषु। भरतादयो विद्वांसस्तैः प्रणीतानि विहितानि नृत्तशास्त्राणि ताण्डवविधानप्रतिपादकग्रन्थास्तेषु। नारदीयप्रभृतिषु गान्धर्ववेदविशेषेषु। हस्तिशिक्षायां गजशिक्षायाम्। तुरगस्याश्वस्य वयोज्ञाने वयोऽवस्था तस्य ज्ञाने। पुरुषाणां नराणां लक्षणेषु सामुद्रिकप्रतिपादितेषु माषतिलकादिलक्षणेषु। चित्रकर्मण्यालेख्यविद्यायाम्। पत्रच्छेद्ये केतकादिपत्रच्छेदने[3]। पुस्तकानां शास्त्राणां व्यापारे प्रयोगे। लेख्यकर्मणि लेखनविद्यायाम्। सर्वासु समग्रासु द्यूतकलासु। शकुनिरुतज्ञाने पतत्रिशब्दज्ञाने। ग्रहगणिते ज्योतिःशास्त्रे। रत्नपरीक्षासु रत्नानां मण्यादीनां शुद्धाशुद्धज्ञाने। दारुकर्मणि काष्ठकर्मणि। दन्ता गजानां रदनास्तेषां व्यापारो व्या(व्यव)हृतिस्तस्मिन्। वास्तुविद्यासु गृहनिर्मितिविद्यासु। आयुर्वेदे वैद्यकशास्त्रे। यन्त्राणां सूर्यप्रतापादीनां प्रयोगो व्यापारणं तस्मिन्। विषाणां स्थावरजंगमप्रभृतीनामपहरणं दूरीकरणं तस्मिन्। सुरङ्गाऽसंधिशिला तस्या उपभेदो भेदनं तस्मिन्। तरणे नद्यादितरणे। लङ्घने कूपकाद्युल्लङ्घने। प्लुतयो व्याघ्रादिवत्

---

**टिप्प०—1 पुनः पपात टीकाकारः। तथा तेन प्रकारेण नियन्त्रितः नियमितश्चन्द्रापीडः यथास्वम् यथार्थम् 'यथास्वं तु यथायथम्' इत्यमरः। आत्मकौशलं प्रकटयद्भिः आचार्यैः उपदिश्यमानाः सर्वा विद्या अचिरेणैव जग्राह, इति योजना। 2 रथचालनेषु, आरोहणेषु वा, इत्यर्थ उचितः। 3 यन्त्रच्छेद्ये इति पाठे तु यन्त्रेण दूरवीक्षणादियन्त्रेण परिच्छेत्तुं शक्ये ग्रह-नक्षत्रादिनिर्णये इत्यर्थः। 4 'सुरङ्ग' इति ख्यातो गुप्तदीर्घपथस्तस्य खनने निर्माणे चेत्यर्थः।**

---

**पाठा०**—१ नियन्त्रितः. २ अचिरेणैव कालेन. ३ यथास्वम्. ४ उपदिश्यमानः. ५ सर्वविद्याः. ६ वर्म. ७ गजपृष्ठेषु तुरंगमेषु; गजपृष्ठेषु तुरंगेषु. ८ नृत्य. ९ तुरगवयोज्ञानेषु. १० यन्त्रच्छेद्ये. ११ द्यूतकलासु गन्धर्वशास्त्रेषु; द्यूतकलासु गान्धर्वशास्त्रेषु. १२ मन्त्रप्रयोगे.

प्रयोगे, विषापहरणे, सुरङ्गोपभेदे, तरणे, लङ्घने, प्लुतिषु, इन्द्रजाले, कथासु, नाटकेषु, आख्यायिकासु, काव्येषु, महाभारतपुराणेतिहासरामायणेषु, सर्वलिपिषु, सर्वदेशभाषासु, सर्वसंज्ञासु, सर्वशिल्पेषु[2], छन्दःसु, अन्येष्वपि कलाविशेषेषु परं कौशलमवाप[3] ।

सहजा चाजस्रमभ्यस्यतो[4][5] वृकोदरस्येव शैशव[6] एवाविर्बभूव लोक[7]विस्मयजननी महाप्राणता। यदृच्छया क्रीडताप्यनेन करतलाव[8]लम्बितकर्णपल्लवावनताङ्गाः सिंहकिशोर[9]कक्रमाक्रान्ता इव गजकलभकाश्चलितुमपि न शेकुः । एकैकेन कृपाणप्रहारेण ता[10]लतरून्मृणालदण्डानिव लुलाव। सकलराजन्यवंशवनदावानलस्य परशुरामस्येवास्य नाराचाः शिखरिशिलातलभिदो बभूवुः । दशपुरुषसंवाहनयोग्येन चायोदण्डेन श्रममकरोत्। ऋते च महाप्राणतायाः सर्वा[11]भिरन्याभिः कलाभिरनुचकार तं वैशम्पायनः । चन्द्रापीडस्य तु सकलकलाकलापपरिचयबहुमानेन शुक-

---

सङ्ग्रामादिषु व्युत्करणादिरूपास्तासु । इन्द्रजालं मायाकूटनिर्मितं तस्मिन् । कथासु बृहत्कथाप्रभृतिषु । नाटकेष्वभिनयात्मकेषु । आख्यायिकासु वासवदत्ताप्रभृतिषु । काव्यं कविकर्म तेषु । महाभारतं प्रसिद्धम् । तदुक्तम्—'भाति सर्वेषु वेदेषु रतिः सर्वेषु जन्तुषु । तरणं सर्वतीर्थानां तेन भारतमुच्यते' । पुराणं पञ्चलक्षणम्, इतिहासः पुरावृत्तम्, रामायणं रामचरित्रम्, एतेषु । सर्वलिपिष्वष्टादशविधाक्षरविन्यासेषु । सर्वेषां देशानां भाषासु वचनव्यापारेषु । सर्वा याः संज्ञाः परिभाषास्तासु । सर्वेषु शिल्पेषु विज्ञानेषु । छन्दःस्वाम्नायेषु[2] । अन्येष्वप्येतद्व्यतिरिक्तेषु कलाविशेषेषु परमधिकं कौशलं चातुर्यमवाप प्राप्तवान् । अस्य कुमारस्याजस्रं निरन्तरमभ्यस्यतो विद्यापरिश्रमं कुर्वतो वृकोदरस्येव भीमस्येव शैशव एव बाल्य एव सहजा नौपाधिकी लोकानां जनानां विस्मयजनन्याश्चर्यकारिणी महाप्राणता महासाहसशक्तिराविर्बभूव प्रकटीबभूव । एतदेव विवृणोति—**यदृच्छयेति** । यदृच्छया स्वेच्छया क्रीडतापि केलिं कुर्वताप्यनेन कुमारेण गजानामनेकपानां कलभा एव कलभकाः । स्वार्थे कः । 'कलभास्त्रिंशदब्दकः' इति कोशः । सिंहस्य हर्यक्षस्य किशोरको बालस्तस्य क्रमौ पादौ ताभ्यामाक्रान्ताः पीडिता इव चलितुमपीतस्ततो गन्तुमपि न शेकुर्न शक्ता बभूवुः । कीदृशाः । अनेन करतलेनावलम्बिता गृहीता ये कर्णपल्लवास्तैरवनतान्यङ्गानि येषां ते तथा । कर्णे धृत्वैव नम्रीकृता इति भावः । अन्यदप्याह—**एकैकेति** । एकैकेन कृपाणप्रहारेण तालतरून्मृणालदण्डानिव नलिनदण्डानिव लुलाव चिच्छेद । **सकलेति** । अस्य नाराचा बाणाः शिखरिशिलातलभिदो बभूवुः । अस्य किंविशिष्टस्य । सकलाः समग्रा राजन्या राजानस्तेषां वंशा अन्वयास्त एव वनानि काननानि तेषु दावानलस्य । वनवह्निसदृशस्येत्यर्थः । कस्येव । परशुरामो जामदग्न्यस्तस्येव । यथा तस्य बाणाः शिलातलभिदस्तथास्यापीति भावः । **दशेति** । दशपुरुषैः संवाहनयोग्येनोत्थापनोचितेन । अतिप्रमाणेनेत्यर्थः । अयोदण्डेन लोहदण्डेन श्रममकरोत्परिश्रममकार्षीत् । **ऋते चेति** । 'ऋतेयोगे द्वितीया' इति केषांचिन्मतम् । तेनान्यशब्दार्थयुक्तायाः पञ्चम्या न विरोधः । महाप्राणताया ऋतेऽन्याभिः सर्वाभिः कलाभिर्वैशम्पायनस्तं कुमारमनुचकार सादृश्यमकरोत् । वैशम्पायनस्य ब्राह्मणपुत्रत्वात्तस्मिन्नापेक्षिता साहसशक्तिरिति भावः । **चन्द्रेति** । चन्द्रापीडस्य वैशम्पायनः परं मित्रमासीदित्यन्वयः । तत्र हेतुमाह—**सकलेति** । सकलाः समग्रा याः कला विज्ञानैकदेशास्तासां कलापः समूहस्तदर्थं यः परिचयः

---

**टिप्प०**—1 व्याघ्रवदुल्लम्फनम् । 2 पिङ्गलादिप्रणीतछन्दःशास्त्रेषु च ।

---

**पाठा०**—१ प्लुतिषु आरोहणे, रतितन्त्रे; प्लुतिषु आरोहणावरोहणे, रतितन्त्रेषु. २ शिल्पेषु सर्वशिल्पिषु. ३ सर्वकौशलम्. ४ श्रमम्; अस्य श्रमम्; चाजस्रश्रमम्. ५ अभ्यस्यतो वृकोदरस्य. ६ शैशवमेव. ७ सर्वलोक. ८ आलम्बित; आकुञ्चित. ९ किशोर. १० बाल एव तालतरून्. ११ सर्वविद्याभिः.

नासगौरवेण सहपांसुक्रीडनतया सहसंवृद्धतया च सर्वविश्रम्भस्थानं द्वितीयमिव हृदयं वैशम्पायनः परं मित्रमासीत् । निमेषमपि तेन विना स्थातुमेकाकी न शशाक । वैशम्पायनोऽपि तमुष्णकरमिव वासरोऽनुगच्छन्न[१] क्षणमपि विरहयांचकार ।

एवं तस्य सर्वविद्यापरिचयमाचरतश्चन्द्रापीडस्य त्रिभुवनविलोभनीयोऽमृतरस इव सागरस्य, सकललोकहृदयानन्द[२]जननश्चन्द्रोदय इव प्रदोषस्य, बहुविधरागविकारभङ्गुरः सुरधनुःकलाप इव जलधरसमयस्य, मकरध्वजायुधभूतः कुसुमप्रसव इव कल्पपादपस्य, अभिनवाभिव्यज्यमानरागरमणीयः सूर्योदय इव कमलवनस्य, विविधलास्यविलासयोग्यः कलाप इव शिखण्डिनो यौवनारम्भः प्रादुर्भवन्रमणीयस्यापि द्विगुणां रमणीयतां पुपोष । लब्धावसरः सेवक[३] इव निकटीबभूवास्य मन्मथः । लक्ष्म्या सह वितस्तार वक्षःस्थलम् । बन्धुजनमनो-

---

संस्तवस्तत्कृतबहुमानेन संमानेन, शुकनासस्य गौरवेण पूज्यत्वेन, सह सार्धं यत्पांसुना धूल्या क्रीडनं खेलनं तस्य भावस्तत्ता तया, सह सार्धं संवृद्धः संवर्धितस्तस्य भावस्तत्ता तया । चकारो हेतुसमुच्चयार्थः । मित्रं विशेषयन्नाह—**सर्वेति** । सर्वो यो विश्रम्भो विश्वासस्तस्य स्थानमाश्रयो द्वितीयं हृदयमिव । एतेन सर्वथाभेदो दर्शितः । निमेषमप्यभिचलनमात्रमप्येकाकी तेन वैशम्पायनेन विना स्थातुं न शशाक न समर्थो बभूव । वैशम्पायनोऽप्युष्णकरं सूर्यं वासर इव दिवस इव तं चन्द्रापीडमनुगच्छन्पश्चाद्व्रजन्क्षणमप्यक्षिस्पन्दनमात्रमपि न विरहयांचकार न विरक्तो[1] बभूव ।

**एवमिति** । एवं पूर्वोक्तप्रकारेण तस्य चन्द्रापीडस्य सर्वविद्यापरिचयं कलादिकाभ्यासमाचरतः कुर्वतः । **त्रिभुवनेति** । त्रयाणां भुवनानां समाहारस्त्रिभुवनं तस्य विलोभनीयो लोभजनको यौवनारम्भो यौवनं बाल्यात्परं वयस्तस्यारम्भः प्रादुर्भवन्प्रकटीभवन्रमणीयस्यापि मनोहरस्यापि द्विगुणां पूर्वतो द्विभागाधिकां रमणीयतां शोभातिरेकं[2]तां पुपोष । कीदृशः । सकललोकानां समग्रजनानां हृदयस्य स्वान्तस्यानन्दजननः प्रमोदोत्पादकः । कस्येव । सागरस्य समुद्रस्यामृतरस इव पीयूषद्रव इव । प्रदोषस्य यामिनीमुखस्य चन्द्रोदय इव । जलधरसमयस्य मेघकालस्य सुरधनुःकलाप इन्द्रचापसमूह इव, बहुविधा अनेकप्रकारा ये रागा[3]स्तेषां ये विकारा विकृतयस्तैर्भङ्गुरो वक्रः । उभयोर्विशेषणम्, यौवनारम्भस्याप्येतादृशरूपत्वात् । कल्पपादपस्य पारिजातस्य कुसुमप्रसव इव पुष्पोद्गम इव मकरध्वजस्य कंदर्पस्यायुधभूतः । शस्त्रभूतः । उभयोर्विशेषणम्, द्वयोरपि कामोद्दीपकत्वात् । **अभीति** । अभिनवो नूतनोऽभिव्यज्यमानः प्रकटीक्रियमाणो यो रागस्तेन रमणीयो मनोहरः । इदमपि द्वयोर्विशेषणम् । उभयत्र रागोदयसद्भावात् । कमलवनस्य सूर्योदय इव । विविधो यो लास्यविलासो नृत्यविलासस्तस्य योग्य उचितः । उभयोर्विशेषणम् । शिखण्डिनो मयूरस्य कलाप इव प्रचलाक इव[4] । अस्य चन्द्रापीडस्य लब्धावसरः प्राप्तप्रस्तावः सेवक इव भृत्य इव मन्मथः कंदर्पो निकटीबभूव समीपवर्त्यभूत् । इत्यनेन चन्द्रापीडस्य मन्मथाधीनत्वं नास्तीति सूचितम् । एतदेव विवृणोति—**लक्ष्म्येति** । लक्ष्म्या सह श्रिया सह वक्षःस्थलं भुजान्तरस्थलं वितस्तार विस्तीर्णं बभूव । बन्धुजनानां कुटुम्बजनानां मनोरथैर्वाञ्छितैः सहोरुदण्डद्वयं सक्थियुगलमापूर्यत पूर्णं बभूव । सातिशयमजनिष्टेति भावः । अरिजनेन शत्रुजनेन सह मध्यभागोऽवलग्नप्रदेशस्तनिमानं कृशत्वमभजताश्रयत् । त्यागेन दानेन सह नितम्बभाग आरोहप्रदेशः प्रथिमानं

---

**टिप्प०—1 न तत्याज इत्यर्थः । 'न वियुक्तो बभूव' इति फलितार्थो वा उचितः । 2 शोभातिरेकमित्यर्थः । 3 रागा विषयाभिलाषाः, नीलपीतादिवर्णाश्च । 4 'रमणीयस्यापि रमणीयतां पुपोष', इत्यत्र सर्वेषां वाक्यानामन्वयः ।**

---

**पाठा०—१ गच्छन्क्षणमपि. २ हृदयनयनानन्द. ३ नवसेवकः; अनुसेवकः.**

रथैः सहापूर्यतोरुदण्डद्वयम् । अरिजनेन सह तनिमानमभजत मध्यभागः । त्यागेन सह प्रथिमानमाततान नितम्बभागः । प्रतापेन सहारुरोह रोमराजिः । अहितकलत्रालकलताभिः सह प्रलम्बतामुपययौ भुजयुगलम् । चरितेन सह धवलतामभजत लोचनयुगलम् । आज्ञया सह गुरुर्बभूव भुंजशिखरदेशः । स्वरेण सह गम्भीरतामाजगाम हृदयम् ।

एवं च क्रमेण समारूढयौवनारम्भं परिसमाप्तसमग्रकलाविज्ञानमधीताशेषविद्यं चावगम्यानुमोदितमाचार्यैश्चन्द्रापीडमानेतुं राजा बलाधिकृतं बलाहकनामानमाहूय बहुतुरगबलपदातिपरिवृतमतिप्रशस्तेऽहनि प्राहिणोत् । स गत्वा विद्यागृहं द्वाःस्थैः समावेदितः प्रविश्य क्षितितलावलम्बितचूडामणिना शिरसा प्रणम्य स्वभूमिसमुचिते राजसमीप इव सविनयमासने राजपुत्रानुमतो न्यषीदत् । स्थित्वा च मुहूर्तमात्रं बलाहकश्चन्द्रापीडमुपसृत्य दर्शितविनयो व्यजिज्ञपत्—"कुमार, महाराजः समाज्ञापयति—'पूर्णा नो मनोरथाः । अधीतानि शास्त्राणि ।

---

महत्त्वमाततान विस्तारमवाप । 'तनु विस्तारे' लिटि रूपम् । प्रतापेन कोशदण्डप्रसवतेजसा सह रोमराजिस्तनूरुहश्रेणिरारुरोहारूढा बभूव । 'रुह जन्मनि' इत्यस्य लिटि रूपम् । **अहितेति** । अहितकलत्राणां शत्रुस्त्रीणामलकलताभिः केशलताभिः सह भुजयुगलं बाहुयुग्मं प्रलम्बतां दीर्घतामुपययौ प्राप । चरितेनाचारेण सह लोचनयुगलं नेत्रयुग्मं धवलतां शुभ्रतामभजत प्रापत् । आज्ञया निर्देशेन सह भुजशिखरदेशः स्कन्धप्रदेशः । 'अंसो भुजशिरः स्कन्धे' इति कोशः । गुरुर्महान्बभूवाभूत् । स्वरेण शब्देन सह गम्भीरतां गाम्भीर्यतां हृदयं स्वान्तमाजगामागमत् । यद्यपि लक्ष्म्या विस्तारस्य मनोरथेषु पूर्णत्वस्यैवमरिजने कृशत्वादेः स्ववाक्यादेव लाभेऽपि सातिशयत्वं व्यङ्ग्यम् ।

**एवमिति** । एवं पूर्वोक्तप्रकारेण समारूढः प्राप्तो यौवनारम्भो येन स तम् । परिसमाप्तं समग्रकलाविज्ञानं यस्य स तम् । अधीता अशेषविद्या येनैवंभूतं चन्द्रापीडमवगम्य ज्ञात्वाचार्यैरध्यापकैरनुमोदितं श्लाघितम् । अथ राजा चन्द्रापीडमानेतुं बलेन धाम्नाधिकृतं सहितं बलाहकनामानं पुरुषभृत्यमाहूयाह्वानं कृत्वा बहवो ये तुरगा अश्वास्तेषां बलं साधनं पदातिः(तयः) पत्ति(त्तय)स्ताभ्यां परिवृतं सहितमतिप्रशस्तेऽतिशोभनेऽहनि दिने प्राहिणोत्प्रेषयामास । **सेति** । स बलाहको विद्यागृहं गत्वा द्वाःस्थैर्द्वारपालकैः समावेदितो निवेदितः प्रविश्य प्रवेशं कृत्वा क्षितितले वसुधापीठेऽवलम्बित आश्रितः चूडामणिः शिरोमणिर्यस्यैवंविधेन शिरसोत्तमाङ्गेन प्रणम्य नमस्कृत्य स्वभूमिसमुचिते स्वस्य भूमौ यत्समुचितं योग्यं तस्मिन्नासने विष्टरे राजपुत्रेण नृपपुत्रेणानुमतोऽनुज्ञातो राजसमीप इव नृपसंनिधाविव सविनयं यथा स्यात्तथा न्यषीदत्तस्थौ । **स्थित्वा चेति** । मुहूर्तमात्रं स्थित्वावस्थानं कृत्वा बलाहकश्चन्द्रापीडमुपसृत्य समीपे गत्वा दर्शितः प्रकटीकृतो विनयः सेवकार्थो येनैवंभूतो व्यजिज्ञपद्विज्ञापनां चकार । हे कुमार, महाराजस्तारापीडः समाज्ञापयत्याज्ञां ददाति । तदेवाह—**पूर्णेति** । नोऽस्माकं मनोरथाश्चिन्तितानि पूर्णाः संपूर्णाः । जाता इति शेषः । अधीतानि पठितानि

---

**टिप्प०**—1 बाहुयुग्मं प्रलम्बतां दीर्घताम्, शत्रुस्त्रीणाम् अलकलता लतावल्लम्बमानाः केशाश्च प्रलम्बतां लम्बितताम् (भाविभर्तृविरहेण असंयमनात्) उपययौ, इत्यर्थः । 2 नेत्रयुग्मं धवलताम्, आचारश्च बाल्यचापल्यदोषराहित्यरूपं स्वच्छत्वमभजत । 3 अंसदेशो विशालः, आज्ञा च गुरुः गौरववाहिनी सर्वेषां शिरोधार्येत्यर्थः । 4 बलाधिकृतं सेनाध्यक्षमित्यर्थः । अहो टीकाकारस्य बुद्धिः! । 5 स्वोचिता या भूमिः ( स्थानम्, राजपुत्रस्य वामपार्श्वम् ) तत्र समुचिते इत्यर्थः ।

---

पाठा०—१ शिखरदेशः. २ एवं क्रमेण. ३ सकल. ४ बृहत्तुरग. ५ द्वारपैः. ६ प्रवेशितः. ७ विलम्बित; चुम्बित. ८ व्यजिज्ञापयत्.

शिक्षिताः सकलाः कलाः। [1]गतः सर्वा[2]स्त्रायुधविद्यासु परां प्रतिष्ठाम्। अनुमतोऽसि [3]विनिर्गमाय विद्यागृहात्सर्वाचार्यैः। उपगृहीतशिक्षं गन्धगजकुमारकमिव [4]वारिविनिर्गतमवगतसकलकला[5]कलापं पौर्णमासीशशिनमिव [6]नवोद्गतं पश्यतु त्वां जनः। व्रजन्तु सफलतामतिचिरदर्शनोत्कण्ठितानि लोकलोचनानि। दर्शनं प्रति ते समुत्सुकान्यतीव सर्वाण्यन्तःपुराणि। अयमत्र[7]भवतो दशमः संव[8]त्सरो विद्यागृहमधिवसतः। प्रविष्टोऽसि षष्ठमनुभवन्वर्षम्। एवं संपिण्डि[9]तेनामुना[10] षोडशेन प्रवर्धसे। तदद्यप्रभृति निर्गत्य दर्शनोत्सुकाभ्यो[11] दत्त्वा दर्शनमखिलमातृभ्यो[12]ऽभिवाद्य च [13]गुरूणामपगतनियन्त्रणो यथासुखमनुभव राज्यसुखानि नवयौवनललितानि च। संमानय राजलोकम्। पूजय[14] द्विजातीन्। परिपालय प्रजाः। आनन्दय बन्धुवर्गम्। अयं [15]च त्रिभुवनैकरत्नमनिलगरुडसमजव इन्द्रायुधनामा तुरङ्गमः प्रेषितो महाराजेन द्वारि तिष्ठति।

---

शास्त्राणि कामन्दकीप्रभृतीनि। सकलाः समग्राः कलाः शिक्षिता अभ्यस्ताः। सर्वास्त्रायुधविद्यासु धनुरादिविद्यासु परामनिर्वचनीयस्वरूपां प्रतिष्ठां महत्त्वं गतः प्राप्तः। विद्यागृहात्कलाभ्यसनमन्दिराद्विनिर्गमाय निःसरणायानुमतोऽनुज्ञातः। न केवलं महाराजस्यानुज्ञामात्रं किंतु गृहीतसकलकलाकलापोऽयमित्याचार्यैरप्यनुमतोऽसि। उपगृहीतशिक्षमुपगृहीता गुरोः सकाशाच्छिक्षा शास्त्राभ्यासादिरूपा येनैवंभूतं त्वां जनो लोकः पश्यतु विलोकयतु। कस्मात्कमिव। वारी गजबन्धनी तस्माद्विनिर्गतं बहिरागतं गन्धगजकुमारकमिव। अत्र गन्धशब्दोपादानेन हस्तिनो मुख्यत्वं सूचितम्। पुनरुपमानान्तरं प्रदर्शयन्नाह—**सकलेति**। अवगता ज्ञाताः प्राप्ताश्च सकलाः समग्रा याः कलाः षोडश द्वासप्ततिर्वा तासां कलापः समूहो येन स तम्। नवोद्गतं नूतनोदितं पौर्णमासीशशिनमिव राकाचन्द्रमिव। अतिचिरेण कालेन यद्दर्शनमीक्षणं तत्रोत्कण्ठितानि सोत्कलिकानि लोकलोचनानि जननेत्राणि सफलतां साफल्यं व्रजन्तु गच्छन्तु। ते तव दर्शनं विलोकनं प्रति सर्वाण्यन्तःपुराण्यतीव समुत्सुकान्यतिसोत्कण्ठितानि। **अत्रेति**। अत्र विद्यागृहेऽयं दशमः। संवत्सरो वर्षो भवतस्तव विद्यागृहमधिवसतोऽधितिष्ठतः। अत्र 'अधिशीङ्स्थासाम्—' इत्याधारे द्वितीया। अथ च षष्ठं वर्षमनुभवंस्त्वं प्रविष्टोऽसि। विद्यागृहमिति शेषः। एवमनेन प्रकारेण संपिण्डितेन संकलितेनामुना षोडशेन वर्षेण त्वं प्रवर्धसे वृद्धिं गच्छसि। तदिति हेत्वर्थे। कृतकृत्यत्वादिति भावः। अद्यप्रभृतीतो निर्गत्य दर्शनोत्सुकाभ्योऽखिलमातृभ्यो दर्शनं दत्त्वाभिवाद्य च पादग्रहणं कृत्वा गुरूणामपगतं नियन्त्रणं निरोधो यस्यैवंभूतो यथासुखं राज्यसुखानि नवयौवनललितानि च विलसितान्यनुभव साक्षात्कुरु। संमानय राजलोकम्। यथायोग्यं संमानदानेन राजलोकं वशीकुर्वित्यर्थः। द्विजातीन्ब्राह्मणान्पूजय। वस्त्रादिप्रदानेनाराधयेत्यर्थः। प्रजाः प्रकृतीन् (तीः)परिपालय रक्षां कुरु। बन्धुवर्गं स्वजनवर्गमानन्दय प्रमोदय। **अयं चेति**। अयं प्रत्यक्षोपलभ्यमानस्त्रिभुवने त्रिविष्टप एकमद्वितीयं रत्नम्। स्वजातिषु सर्वोत्कृष्टमित्यर्थः। आविष्टलिङ्गत्वान्नपुंसकत्वम् 'वेदाः प्रमाणम्' इतिवत्। अनिलो वायुः गरुडो गरुत्मान्, तयोः समः सदृशो जवो वेगो यस्य स तथा। इन्द्रायुध इति नाम यस्यैवंविधस्तुरङ्गमोऽश्वो महाराजेन स्वामिना प्रेषितः प्रहितो द्वारि विद्यागृह-

---

**टिप्प०—1 'अधिगतसकलकलाकलापम्' इत्येव पाठः। अधिगतः सकलानां (षोडशानाम्) कलानां कलापो येन तादृशः पूर्णमासीचन्द्रः। अधिगतः सकलानां चतुःषष्टिकलानां कलापो येन तादृशश्चन्द्रापीड इति च व्याख्या। अवगत इति ज्ञातार्थपाठस्तु चन्द्रापीडपक्ष एव समन्वयेत्।**

---

**पाठा०—१ गतोऽसि. २ सर्वायुध. ३ निर्गमाय. ४ वारिबन्दाद्विनिर्गतसकल; वारिबन्धाद्विनिर्गतमधिगतसकल. ५ कलापकम्. ६ उद्गतं. ७ अत्रभवतः. ८ वत्सरः. ९ आपीडितेन. १० अधुना. ११ अखिलाभ्यो मातृभ्यः. १२ मातृकाभ्यः. १३ गुरूनपगत. १४ परिपूजय. १५ च ते.**

एष खलु देवस्य पारसीकाधिपतिना त्रिभुवनाश्चर्यमितिकृत्वा 'जलधिजलादुत्थितमयोनिज-मिदमश्वरत्नमासादितं मया महाराजाधिरोहणयोग्यम्' इति संदिश्य प्रहितः । दृष्ट्वा च निवेदितं लक्षणविद्भिः—'देव, यान्युच्चैःश्रवसः श्रूयन्ते लक्षणानि तैरयमुपेतः । नैवंविधो भूतो भावी वा तुरङ्गमः' इति । तदयमनुगृह्यतामधिरोहणेन । इदं च मूर्धाभिषिक्तपार्थिवकुलप्रसूतानां विनयोपपन्नानां शूराणामभिरूपाणां कलावतां च कुलक्रमागतानां राजपुत्राणां सहस्रं परिचारार्थमनुप्रेषितं तुरङ्गमारूढं द्वारि प्रणामलालसं प्रतिपालयति" । इत्यभिधाय विरतवचसि बलाहके चन्द्रापीडः पितुराज्ञां शिरसि कृत्वा नवजलधरध्वानगम्भीरया गिरा 'प्रवेश्यतामिन्द्रायुधः' इति निर्जिगमिषुरादिदेश ।

अथ वचनानन्तरमेव प्रवेशितम्, उभयतः खलीनककटकावलग्नाभ्यां पदे पदे कृताकुञ्चनप्रयत्नाभ्यां पुरुषाभ्यामवकृष्यमाणम्, अतिप्रमाणम्, ऊर्ध्वकरपुरुषप्राप्यपृष्ठभागम्,

---

प्रतोल्यां तिष्ठति । खलु निश्चयेन । एष इन्द्रायुधः पारसीकाधिपतिना यवनाधीशेन देवस्य स्वामिनस्त्रिभुवनाश्चर्यमिति कृत्वेति संदिश्येति कथयित्वा च प्रहितः प्रेषितः । इतिवाच्यमाह—इदमश्वरत्नं मयासादितं प्राप्तं महाराजस्य स्वामिनस्तारापीडस्याधिरोहण आरोहणे योग्यं समुचितम् । अस्मिन्नर्थे हेतुमाह—**जलधीति** । जलधिजलात्समुद्रोदकादुत्थितमतएवायोनिजं पुंस्त्रीसंबन्धादनुत्पन्नम् । **दृष्ट्वा चेति** । लक्षणविद्भिः शालिहोत्रशास्त्रज्ञैर्दृष्ट्वा निरीक्ष्य । तमिति शेषः । निवेदितं कथितम् । राज्ञ इति शेषः । देव हे स्वामिन्, यान्युच्चैःश्रवस इन्द्रतुरङ्गमस्य लक्षणानि चिह्नानि श्रूयन्त आकर्ण्यन्ते तैर्लक्षणैरयमिन्द्रायुध उपेतः सहितः । एवंविध एतादृशस्तुरङ्गमो न भूतः पूर्वं नासीन्न भावी भविष्यति नाग्रे । तदिति हेत्वर्थे । अयमश्वोऽधिरोहणेनानुगृह्यतामनुग्रहविषयीक्रियताम् । इदं राजपुत्राणां सहस्रं परिचारार्थं सेवार्थमनुप्रेषितम् । तुरङ्गमप्रेषणानन्तरं पश्चात्प्रेषितमिति भावः । एतदेव विशिनष्टि—मूर्धाभिषिक्ता[1] ये पार्थिवा राजानस्तेषां कुलं वंशस्तत्र प्रसूतानामुत्पन्नानां, विनयेन मर्यादयोपपन्नानां सहितानाम्, शूराणां साहसगुणोपेतानाम्, अभिरूपाणां मण्डितानाम्, कलावतां विज्ञानवताम्, कुलक्रमागतानां परम्परयागतानाम्, तुरङ्गमारूढमश्वाधिरूढं द्वारि प्रतोल्यां प्रणामलालसं प्रणामो नमस्कारस्तत्र लालसं कृतस्पृहं प्रतिपालयति कालक्षेपं करोति । इत्यभिधायेत्युक्त्वा बलाहके विरतवचसि सति चन्द्रापीडः पितुराज्ञां जनकनिदेशं शिरसि मस्तके कृत्वारोप्य । **नवेति** । नवो यो जलधरो मेघस्तस्य यो ध्वानः शब्दस्तद्वद्गम्भीरया मन्द्रया गिरा वाचा ततो निर्जिगमिषुर्निर्गन्तुमिच्छुरिन्द्रायुधः प्रवेश्यतामानीयतामित्यादिदेशाज्ञां दत्तवान् ।

अथ एतद्वचनानन्तरमेव प्रवेशितं प्रवेशं कारितमिन्द्रायुधनामानमश्वमद्राक्षीदिति दूरेणान्वयः । तत्राश्वस्य यथासंभवं क्रियागुणद्रव्यजातिभिः स्वभावं वर्णयितुं तद्विशेषणान्याह—**खलीनेति** । खलीनकं मुखयन्त्रणं तस्य कटके वलये तत्रावलग्नाभ्यामासक्ताभ्यां पदे पदे प्रतिपदं कृतं विहितमाकुञ्चन आकर्षणे प्रयत्नो याभ्यामेवंविधाभ्यां पुरुषाभ्यामुभयतोऽवकृष्यमाणमितस्ततो विक्षिप्यमाणम् । अतिप्रमाणमतिमहान्तम् । ऊर्ध्वमुच्चैः करो यस्यैवंभूतेन पुरुषेण प्राप्यः स्प्रष्टुं योग्यः पृष्ठभागो यस्य स तम् । अस्य व्यादानस्वभावमाह—

---

**टिप्प०—1 ब्राह्मणेभ्यः क्षत्रियासु जाता मूर्धाभिषिक्ताः । यथाविधि राज्यासनेऽभिषिक्ता वा मूर्धाभिषिक्ता इत्यपि संप्रदायः ।**

---

**पाठा०—१ जलनिधि. २ प्रहितम्. ३ निवेदितं च. ४ मूर्धाभिषिक्तानाम्. ५ कुलवताम्. ६ परिवारार्थम् ७ अधिरूढम्. ८ अभिधाय विरराम. ९ वचनान्तम्. १० खलीनकथनक.**

आपिबन्तमिव संमुखागतमखिलमाकाशम्, अतिनिष्ठुरेण मुहुर्मुहुः प्रकम्पितोदररन्ध्रेण हेषारवेण पूरितभुवनोदरविवरेण निर्भर्त्सयन्तमिवालीकवेगदुर्विदग्धं गरुत्मन्तम्, अतिदूर[1]मुन्नमता जवनिरोधस्फीतरोषघुरघुरायमाण[2]घोरघोणेन शिरो[3]भागेन निजदर्पवशादुल्लङ्घनार्थमाकलयन्तमिव त्रिभुवनम्, असितपीतहरितपाटलाभिराखण्डलचापानुकारिणीभिर्लेखाभिः कल्माषितशरीरम्, आस्तीर्णविविध[6]वर्णकम्बलमिव कुञ्जरकलभम्, कैलासतटाघातधातुधूलिपाटलमिव हरवृषभम्, असुररुधिरपङ्कलेखालोहितसटमिव पार्वतीसिंहम्, रंहःसंघातमिव मूर्तिमन्तम्, अनवरतपरिस्फुरत्प्रोथपुटोन्मुक्तसूत्कारेणातिजवापीतमनिलमिव नासिकाविवरेणोद्वमन्तम्, अन्तःस्खलितमुखरखलीनखरशिखरक्षोभजन्मनो लालाजलभुवः फेनपल्लवानुदधिनिवासपरिपीतामृतरसगण्डूषानिवोद्गिरन्तम्, अत्यायतमतिनिर्मांसतया समुत्कीर्णमिव वदनमुद्वहन्तम्, आननमण्डलनिहितारुणमणिसमुद्गतैरंशुकलापैरुपेतेनावसक्तरक्तचामरेणेव निश्च-

---

**आपिबेति**। संमुखागतमभिमुखागतमखिलं समग्रमाकाशं व्योमापिबन्तमिवास्वादयन्तमिव। निजजवेनेत्यध्याहारः। **अतीति**। अतिनिष्ठुरेणातिकठिनेन मुहुर्मुहुः प्रकम्पितमुदररन्ध्रं जठरविवरं येनैवंभूतेन हेषारवेण हेषाशब्देन। कीदृशेन। **पूरितेति**। पूरितं व्याप्तं भुवनोदरविवरं येन स तेन। अलीको वितथो यो वेगो जवस्तेन दुर्विदग्धं मिथ्याभिमानिनं गरुत्मन्तं सौपर्णेयं निर्भर्त्सयन्तमिव तिरस्कारं कुर्वन्तमिव। क्रियास्वभावमाह—**अतीति**। अतिदूरमतिशयेनोन्नमतोर्ध्वं कुर्वता शिरोभागेनोत्तमाङ्गप्रदेशेन। कीदृशेन। जवस्य वेगस्य यो निरोधः स्खलना तेन स्फीतो बहुलो रोषः क्रोधस्तेन घुरघुरायमाणा घुरघुरेतिशब्दं कुर्वाणा घोरा क्रूरा घोणा नासिका य(स्य)स्मिन् स तेन। निजः स्वकीयो यो दर्पोऽहंकारः तद्वशात् उल्लङ्घनार्थमतिक्रमणार्थं त्रिभुवनं त्रिविष्टपमाकलयन्तमिव विचारयन्तमिव। पुनः प्रकारान्तरेण तमेव विशिनष्टि—**असितेति**। आखण्डलस्येन्द्रस्य यच्चापं धनुस्तदनुकारिणीभिरसितपीतहरितपाटलाभिर्लेखाभिः कल्माषितं कर्बुरितं शरीरं देहो यस्य स तम्। कर्बुरशरीरादेवोत्प्रेक्षामाह—**आस्तीर्णेति**। आस्तीर्ण आच्छादितो विविधवर्णो विचित्ररागः कम्बलो रल्लको यस्मिन्नेतादृशं कुञ्जरकलभमिव। कैलासस्य रजताद्रेर्यस्तटाघातो वप्रप्रघातस्तस्य या धातुधूलिर्गैरिकक्षोदस्तया पाटलं श्वेतरक्तं हरवृषभमिवेश्वरधवलमिव। असुरस्य यो रुधिरपङ्को रक्तकर्दमस्तस्य या लेखा ततिस्तया लोहिता रक्ताः सटाः केसरा यस्यैवंविधं पार्वतीसिंहमिव। रंहो वेगस्तस्य संघातं समूहमिव मूर्तिमन्तं देहधारिणम्। क्रियास्वभावमाह—**अनवरतेति**। अनवरतं निरन्तरं परिस्फुरदितस्ततःप्रसरत्प्रोथो मुखाग्रं तस्य पुटादुन्मुक्तो यः सूत्कारोऽव्यक्तः शब्दस्तेनातिजवेन वेगेनापीतमास्वादितमनिलमिव वायुमिव नासिकाविवरेण नासारन्ध्रेणोद्वमन्तं बहिर्निष्कासयन्तम्। द्रव्यस्वभावमाह—**अन्तरिति**। अन्तर्मध्ये स्खलितं स्खलनां प्राप्तं मुखरं वाचालं यत्खलीनं कवीयं तस्य खरं लोहकण्टकयुक्तं यच्छिखरमग्रं तस्माद्यः क्षोभः परिश्रमस्त[3]ज्जन्मोत्पत्तिर्येषां ताँल्लालाजलभूरुपादानं येषां तान्फेनपल्लवान्फेनो मुखकफ उदधौ समुद्रे यो निवासोऽवस्थानं तत्र परिपीतो योऽमृतरसः पीयूषरसस्तस्य गण्डूषानिव चुलुकानिवोद्गिरन्तं वमन्तम्। अत्यायतमतिविस्तीर्णम्। जातिस्वभावमाह—**अतीति**। अतिनिर्मांसतया सर्वथा

---

**टिप्प०**—1 उन्नमता ऊर्ध्वं गच्छता इत्येव व्याख्योचिता। सघुरघुरशब्दं शिरोभागस्योर्ध्वोन्नमनेन गर्वात्त्रिभुवनमुल्लङ्घयितुं वितर्कयन्तमिवेत्युत्प्रेक्षा। 2 कविका, इत्यर्थः। 3 तस्मात् जन्म उत्पत्तिर्येषां तानिति व्याख्योचिता। 4 लालाजलात् मुखस्रावजलात् भवन्ति ते लालाजलभुवः तानिति व्याख्या।

---

पाठा०—१ उन्नमता च; अवनमता प्रतिक्षणमतिदूरमुन्नमता च; अवनमता प्रदक्षिणमतिदूरमुन्नमता च. २ माणघोणेन. ३ मुखेन. ४ निजजवदर्पवशात्; निजजवदर्पावेशात्. ५कलिमषित; कल्मषित. ६आस्तीर्णविचित्रवर्णकम्बलम्; आस्तीर्णकम्बलम्. ७ प्रोथोन्मुक्तफूत्कारेण; पुटोन्मुक्तफूत्कारेण. ८ फेनलवानुदधिनिवास. ९ निर्मांसतया. १० गण्ड.

लशिखरेण कर्णयुगलेन विराजमानम्, उज्ज्वलकनकशृङ्खला[1]रचितरश्मिकलापकलितया लाक्षालोहितलम्बलोलसटासंतानया जलनिधिसंचरणलग्नविद्रुमपल्लवयेव शिरोधरयोपशोभितम्, अतिकुटिलकनकपत्रलताप्रतानभङ्गुरेण पदे पदे रणितरत्नमालेन स्थूलमुक्ताफलप्रायेण तारागणेनेव[2] संध्यारागम[3]रुणेनाश्वालंकारेणालंकृतम्, अश्वालंकारनिहितमरकतरत्नप्रभाश्यामायमानदेहतया गगनतलनिपतितदिवसकररथतुरङ्ग[4]मशङ्का[5]मिवोपजनयन्तम्, अतितेजस्वितया जवनिरोधरोषवशात्प्रतिरो[6]मकूपमुद्गतानि सागरप[7]रिचयलग्नानि मुक्ताफलानीव स्वेदलवजालकानि[8] वर्षन्तम्, इ[9]न्द्रनीलमणिपादपीठानुकारिभिरञ्जनशिलाघटितैरिवानवरतपतनोत्पतनज-

---

विगतमांसतया समुत्कीर्णमिव यन्त्रकर्षितमिव वदनमाननमुद्वहन्तं धारयन्तम् । आननमण्डलं मुखमण्डलं तत्र निहिताः स्थापिता येऽरुणमणयः पद्मरागरत्नानि तेभ्यः समुद्गतैर्निःसृतैरंशुकलापैर्दीप्तिसमूहैरुपेतेन सहितेनावसक्तानि लग्नानि रक्तचामराणि लोहितवालव्यजनानि यस्मिन्नेवंभूतेनेव निश्चलं स्थिरं शिखरमग्रं यस्य तेन कर्णयुगलेन श्रवणद्वितयेन विराजमानं शोभमानम् । तस्य श्रृङ्गारवर्णनद्वारा विशेषयन्नाह—**उज्ज्वलेति** । उज्ज्वला निर्मला या कनकश्रृङ्खला सुवर्णश्रृङ्खला तया रचिता निर्मिता ये रश्मयोऽश्वानां संयमनाधोरज्ज्वस्तेषां कलापस्तेन कलितया सहितया । **लाक्षेति** । लाक्षा जतु तद्वल्लोहिता रक्ता लम्बा विस्तीर्णा लोलाश्चपला या सटाः स्कन्धकेसरास्तस्याः[1] संतानं यस्याः सा तया । जलनिधौ समुद्रे यत्संचरणं भ्रमणं तत्र लग्ना आसक्ता विद्रुमपल्लवाः प्रवालकिसलया यस्यामेवंविधयेव शिरोधरया ग्रीवयोपशोभितं विराजितम् । अलंकारद्वारा विशेषयन्नाह—**अतीति** । अतिकुटिलातिवक्रा या कनकपत्रलता सुवर्णपत्रभङ्गिस्तस्याः प्रतानं समूहस्तेन भङ्गुरे[2]ण वक्रेण, पदे पदे रणिता शब्दिता रत्नमाला यस्मिन्स तेन । स्थूलमुक्ताफलानि प्रायो बाहुल्येन सन्ति यस्मिन्नेवंभूतेनारुणेन रक्तेनाश्वालंकारेणालंकृतं भूषितम् । अलंकारस्यारुणत्वान्मुक्ताफलानां च श्वेतत्वादुत्प्रेक्षामाह—**तारेति** । तारागणेन विभूषितं संध्यारागमिव । संध्यारागपक्षेऽरुणो गरुडाग्रजः प्रकृते रक्तिमा । पुनरुपमानान्तरमाह—**अश्वेति** । अश्वालंकारे निहितानि स्थापितानि यानि मरकतरत्नान्यश्मगर्भानि तेषां प्रभा कान्तिस्तया श्यामायमानः कृष्णतां समाचरमाणो देहो यस्य तस्य भावस्तत्ता तया गगनतलादाकाशतलान्निपतितो यो दिवसकरस्य सूर्यस्य रथतुरङ्गमः स्यन्दनहयस्तस्य शङ्कामारेकामुपजनयन्तमिवोत्पादयन्तमिव । सूर्यरथाश्वानां हरितत्वादिति भावः । अतितेजस्विनो भावोऽतितेजस्विता तया जवस्य वेगस्य यो निरोधोऽन्तरान्तरा रुन्धनं[3] तस्माद्यो रोषः क्रोधस्तद्वशाच्चेति हेतुद्वयम्[4] । प्रतिरोमकूपं प्रतिरोमरन्ध्रमुद्गतानि प्रादुर्भूतानि स्वेदलवजालकानि प्रस्वेदबिन्दुसमूहानि वर्षन्तं वृष्टिं कुर्वन्तम् । श्वेतत्वसाम्यादुपमानान्तर[5]माह—**सागरेति** । सागरपरिचयात्समुद्रोत्पन्नत्वाल्लग्नानि मुक्ताफलानीव रसोद्भवानीव । शालिहोत्रोक्ताः खुरपुटेषु गुणाः । तद्द्वारा विशेषयन्नाह—**इन्द्रेति** । इन्द्रनीलमणिनिर्मितं यत्पादपीठं पदासनं तदनुकारिभिस्तत्सादृश्यधारिभिः । अतोऽञ्जनशिलाघटितैरिव श्यामशिलानिर्मितैरिवानवरतं निरन्तरं यत्पतनोत्पतनमुत्प्लुत्योत्प्लुत्य-

---

**टिप्प०**—1 लाक्षावत् लोहितः लम्बो लोलश्च सटासंतानः ( केसरसमूहः ) यस्या इति व्याख्योचिता । 2 अश्वाभरणे अतिकुटिलानां स्वर्णनिर्मितपत्राकाराणां लतानां समूहो लग्नः, अत एव वक्राणां लतानां समूहवशात्तदाभरणमपि भङ्गुरं वक्रमस्तीत्याशयः 3 रोधनमित्यर्थः । 4 अयमपि प्रमादः । अतितेजस्विता स्वेदोद्गमे न हेतुः । किन्त्वयमर्थः—अतितेजस्वितावशात् यो जवनिरोधे रोषः ( तेजस्विनो वेगरोधे कृते रोषः स्वाभाविक एव ) तस्मात्प्रतिरोमकूपम् ( प्रतिरोमकूपात् ) उद्गतानि । 5 अत्रोपमैव नास्ति, उपमानान्तरं कीदृक् ? । स्वेदलवजालकानि मुक्ताफलानीव वर्षन्तमित्युत्प्रेक्षा ।

---

**पाठा०**—१ रुचिर. २ इव च. ३ रागानुरागेण. ४ तुरग. ५ शङ्काम्. ६ कूपात्समुद्गता; कूपात्समुद्गतानि. ७ परिचयाल्लग्नानि ८ स्वेदजललव. ९ इन्द्रनीलपाद.

नितविषमखरमुखरवैः पृथुभिः खुरपुटैर्जर्जरितवसुंधरैर्मुरजवाद्यमिवाभ्यस्यन्तम्, उत्कीर्णमिव जङ्घासु, विस्तारितमिवोरसि, श्लक्ष्णीकृतमिव मुखे, प्रसारितमिव कंधरायाम्, उल्लिखितमिव पार्श्वयोः, द्विगुणीकृतमिव जघनभागे, जवप्रतिपक्षमिव गरुत्मतः, त्रैलोक्यसंचरणसहायमिव मारुतस्य, अंशावतारमिवोच्चैःश्रवसः, वेगसब्रह्मचारिणमिव मनसः, हरिचरणमिव सकलवसुंधरोल्लङ्घनक्षमम्, वरुणहंसमिव मानसप्रचारम्, मधुमासदिवसमिव विकसिताशोकपाटलम्, व्रतिनमिव भस्मसितपुण्ड्राङ्कितमुखम्, कमलवनमिव मधुपङ्कपिङ्गकेसरम्, ग्रीष्मदिवसमिव महायाममुग्रतेजसं च, भुजंगमिव सदागत्यभिमुखम्, उदधिपुलिनमिव

---

गमनं तस्माज्जनितः समुत्पन्नो यो विषमोऽसदृशः खरः कठिनो मुखरवो येषां तैः। पृथुभिर्विस्तीर्णैर्जर्जरिता जर्जरीकृता वसुंधरा पृथ्वी यैरेवंविधैः खुरपुटैः शफपुटैर्मुरजवाद्यमिव मृदङ्गवाद्यमिवाभ्यस्यन्तमभ्यासं कुर्वन्तम्। पुनरप्यस्य शालिहोत्रप्रोक्तमवयवेषु गुणातिशयं वेगलाघवक्रियातिशयं च प्रतिपादयितुमस्य विशेषणान्याह—**उत्कीर्णेति**। उत्कीर्णमिव यन्त्रघर्षितमिव जङ्घासु प्रसिद्धासु। विस्तारितमिव प्रसारितमिवोरसि हृदये। श्लक्ष्णीकृतमिव सौन्दर्यविशेषमापादितमिव मुखे वदने। प्रसारितमिव विस्तीर्णीकृतमिव कंधरायां ग्रीवायाम्। उल्लिखितमिवोत्कीर्णमिव पार्श्वयोः प्रसिद्धयोः। नानागुणव्यञ्जकरेखोपरेखावत्त्वादित्युपमानम्। द्विगुणीकृतमिव द्विगुणतामापादितमिव जघनभागेऽग्रभागे[1]। जयप्रतिपक्षमिव वेगदस्युमिव[2] गरुत्मतो गरुडस्य। त्रैलोक्यसंचरणसहायमिव त्रिविष्टपगमनसखायमिव मारुतस्य वायोः। **उच्चैःश्रवस इति**। उच्चैःश्रवा अमृतमथनसमुत्पन्नोऽश्वो देवराजस्तेतस्यांशावतारमिवांशेनावतरणमिव। मनसो वेगस्य सब्रह्मचारिणं सतीर्थ्यमिव। ऋद्धस्य राजमातङ्ग इतिवन्मनसोऽभिन्नत्वेऽपि संबन्धः। सकलवसुंधरोल्लङ्घनक्षमं हरिचरणमिव जनार्दनपादमिव। वरुणस्य प्रचेतसो यो हंसस्तमिव। इत उभयविशेषणानि—मानसप्रचारं मानसं मनस्तद्वत्प्रचारो गमनं यस्य स तम्। पक्षे मानससरसि प्रचारो यस्येति विग्रहः। अत्र वरुणेतिपदमुत्कर्षातिशयप्रतिपादनार्थम्। **मध्विति**। मधुमासो वसन्तमासस्तस्य यो दिवसो दिनं चैत्रमासदिनं तद्वदिव विकसितो योऽशोकः कङ्केल्लिस्तद्वत्पाटलं श्वेतरक्तम्। पक्षे विकसितानि विनिद्राण्यशोकानि कङ्केल्लिपुष्पाणि पाटलानि पाटलवृक्षकुसुमानि यस्मिन्। अशोकैः पाटल इति वा। भालस्थश्वेतपट्टाभिप्रायेणाह—**व्रतिनमिति**। व्रतिनं संन्यासिनमिव भस्मवत्सितं शुक्लं यत्पुण्ड्रकं तिलकं तेनाङ्कितं चिह्नितं मुखं यस्य स तम्। पक्षे भस्मनः सितं तिलकम्। शेषं पूर्ववत्। कमलस्य नलिनस्य यद्वनं तदिव। मधुयुक्तो यः पङ्को वचाकर्दमस्तेन पिङ्गानि वभ्रूणि। रक्तपीतानीत्यर्थः। केसराणि स्कन्धरोमाणि यस्मिन्। उक्तं हि वैद्यके—'अश्वस्य वातादिदोषशान्तये मधुयुक्तवचादिचूर्णस्य पङ्कस्तेन तनुलेपनम्'। पक्षे मधु पुष्परसस्तस्य पङ्कः कर्दमस्तेन पिङ्गानि केसराणि यस्मिन्। ग्रीष्मस्य निदाघस्य दिवसो वासरस्तमिव महायामं महानायामो विस्तारो यस्य स तम्। पक्षे महान्यामः प्रहरो यस्मिन्। उग्रतेजसं च। विशेषणमुभयत्र समानम्। भुजंगः सर्पस्तद्वदिव सदा निरन्तरं या गतिर्गमनं तस्या अभिमुखं संमुखम्। पक्षे सदागतिर्वायुस्तस्याभिमुखम्। वातपानकारित्वात्। उदधिः समुद्रस्तस्य पुलिनं सैकतं तद्वदिव शङ्खाः कम्बवस्तेषां मालिका पङ्क्तिः सैवाभरणं भूषणं यस्येत्यभङ्गश्लेषः। अश्वानां गले शङ्खमालिकावन्धनस्य सर्वत्र प्रसिद्धत्वात्समुद्रपुलिनोपमानम्। भीतं भयाकुलं तद्वदिव स्तब्धौ निश्चलौ कर्णौ श्रोत्रे यस्येत्यभङ्गश्लेषः। विद्याधरा व्योमचारिणस्तेषां राज्यमाधिपत्यं तदिव चक्रवर्ती यो नरस्तस्य वाहन उद्वहनं उचितं योग्यम्।

---

**टिप्प०—1 अग्रभागध्वनिः। 2 वेगे प्रतिस्पर्धिनमित्यर्थः।**

---

पाठा०—१ विषमस्वरमुख; विषममुख. २ जय. ३ वेगरथ. ४ विकासित. ५ उग्रतेजसा भुजगम्.

शङ्खमालिकाभरणम्, भीतमिव स्तब्धकर्णम्, विद्याधरराज्यमिव चक्रवर्तिनरवाहनोचितम्, सूर्योदयमिव सकलभुवनार्घार्हम्, अश्वातिशयमिन्द्रायुधमद्राक्षीत्।

दृष्ट्वा च तमदृष्टपूर्वममानुषलोकोचिताकारमखिलत्रिभुवनराज्योचितमशेषलक्षणोपपन्नमश्वरूपातिशयमतिधीरप्रकृतेरपि चन्द्रापीडस्य पस्पर्श विस्मयं हृदयम्। आसीच्चास्य मनसि—'सरभसपरिवर्तनवलितवासुकिभ्रमितमन्दरेण मथ्नता जलधिजलमिदमश्वरत्नमनभ्युद्धरता किं नाम रत्नमुद्धृतं सुरासुरलोकेन। अनारोहता च मेरुशिलातलविशालमस्य पृष्ठमाखण्डलेन किमासादितं त्रैलोक्यराज्यफलम्। उच्चैःश्रवसा विस्मितहृदयो वञ्चितः खलु जलनिधिना शतमखः। मन्ये च भगवतो नारायणस्य चक्षुर्गोचरमियता कालेन नायमुपगतो येनाद्यापि तां गरुडारोहणव्यसनितां न त्यजति। अहो खल्वतिशयितत्रिदशराज्यसमृद्धिरियं तातस्य

---

पक्षे चक्रवर्ती यो नरवाहनो वत्सराजसुतो विद्याधरस्तस्योचितं योग्यम्। विद्याधरादिषु नरवाहनराजकीयत्वस्य प्रसिद्धत्वादित्युपमानम्। सूर्योदयमिव सकलं समग्रं भुवनं जगदेवार्घो मूल्यं तस्यार्हं योग्यम्। सर्वोत्कृष्टमित्यर्थः। पक्षे सकलभुवनस्यार्घः पूजा तस्यार्हम्। योग्यमित्यर्थः। 'सकलभुवननाथार्हम्' इति कुत्रचित्पाठः। तत्र समग्रभुवनस्य नाथः स्वामी तस्यार्हं योग्यम्। पक्षे सकलभुवनस्य नाथ आशीस्तस्या अर्हं योग्यम्। ध्वान्तध्वंसकत्वेन त्रिभुवनेन मङ्गलशंसनमस्य क्रियत इति भावः। अश्वेषु तुरङ्गमेष्वतिशयमत्युत्कृष्टमेवंविधमिन्द्रायुधमद्राक्षीदपश्यदिति। अन्वयस्तु प्रागेवोक्तः।

तमदृष्टपूर्वमनवेक्षितपूर्वं दृष्ट्वा विलोक्यातिधीरप्रकृतेरप्यतिसाहसभावस्यापि चन्द्रापीडस्य हृदयं विस्मयमाश्चर्यं पस्पर्श स्पृष्टवदित्यन्वयः। तमेव विशेषयन्नाह—**अमान्विति**। अमानुषो यो लोको देवलोकस्तस्योचितो योग्य आकार आकृतिर्यस्य स तम्। अखिलं समग्रं त्रिभुवनराज्यं यस्य, अखिलं त्रिभुवनराज्यं वा तस्योचितं योग्यम्। अशेषलक्षणैरुपपन्नं सहितम्। अश्वस्य यद्रूपं तदेवातिशयमत्युत्कृष्टं यस्मिन्। अस्य चन्द्रापीडस्य मनसि चित्त इदमासीद्बभूव। तदेवाह—**सरभसेति**। सरभसं वेगवत्तरं परिवर्तनार्थं वलितो बद्धो यो वासुकिः सर्पस्तेन भ्रमितो यो मन्दरो मेरुस्तेन जलधिजलं समुद्रपानीयं मथ्नता विलोडयतेदमश्वरत्नमनभ्युद्धरतागृह्णता सुरासुरलोकेन। किमिति प्रश्ने। नामेति कोमलामन्त्रणे। रत्नं वसूद्धृतम्। न किंचिदुद्धृतमिति भावः। **अनेति**। मेरुशिलातलवद्विशालं विस्तीर्णमस्य पृष्ठं पृष्ठप्रदेशमनारोहतानधिरोहताखण्डलेनेन्द्रेण त्रैलोक्यराज्यफलं किमासादितम्। न किमपीत्यर्थः। **उच्चैरिति**। खलु निश्चयेन उच्चैःश्रवसा कृत्वा विस्मितहृदयो हर्षितहृदयो जलनिधिना समुद्रेण शतमख इन्द्रो वञ्चितो विप्रतारितः। गुणातिशयं प्रतिपादयितुं वितर्कमाह—**मन्ये चेति**। अहमिति मन्य इति जाने। इयता कालेन भगवतो नारायणस्य चक्षुर्गोचरं नेत्रविषयमयं नोपगतो न प्राप्तः। हेतुमाह—**येनेति**। येन हेतुनाप्येतावत्कालपर्यन्तमपि। तां गरुडारोहणव्यसनितां वैनतेयाधिरोहणासक्ततां न त्यजति न जहाति। अहो इत्याश्चर्ये। खलु निश्चयेन तातस्य मत्पितुरियं राज्यलक्ष्मीराधिपत्यश्रीरतिशयि-

---

**टिप्प०—1 नरवाहनो न विद्याधरः। किन्तु उदयनाभिधानाद्वत्सराजाद्वासवदत्तानाम्न्यां महिष्यां नरवाहनदत्ताख्यः पुत्रो बभूव यो हि विद्याधरराज्यमधितष्ठाविति कथासरित्सागरे कथा। 2 अश्वरूपो यः अतिशयः लोकातीतः कश्चिदतिरेकः (अद्भुतः पदार्थः) तम्। 3 सरभसं यत्परिवर्तनं मथनं तत्र वलितो वेष्टितः।**

---

**पाठ०—**१ भुवनाभ्यर्हम्. २ विस्मयः. ३ विवर्तन. ४ चलित. ५ जलनिधि. ६ अभ्युद्धरता; अनुद्धरता पूर्वम्. ७ सुरलोकेन. ८ इयतापि. ९ तं गरुडाधिरोहणव्यसनिता. १० परित्यजति. ११ अतिशय. १२ राज.

राज्यलक्ष्मीर्यदेवंविधान्यपि सकलत्रिभुवनदुर्लभानि रत्नान्युपकरणतामागच्छन्ति । अतितेजस्वितया महाप्राणतया च सदैवतेवेयमस्याकृतिर्यत्सत्यमारोहणे शङ्कामिव मे जनयति । न हि सामान्यवाजिनाममानुषलोकोचिताः सकलत्रिभुवनविस्मयजनन्य ईदृश्यो भवन्त्याकृतयः । दैवतान्यपि हि मुनिशापवशादुज्झितनिजशरीराणि शापवचनोपनीतान्येतानि शरीरान्तराण्यध्यासत एव । श्रूयते हि पुरा किल स्थूलशिरा नाम महातपा मुनिरखिलत्रिभुवनललामभूतामप्सरसं रम्भाभिधानां शशाप । सा सुरलोकमपहायाश्वहृदये निवेश्यात्मानमश्वहृदयेति विख्याता वडवा मृत्तिकावत्यां शतधन्वानं नाम राजानमुपसेवमाना मर्त्यलोके महान्तं कालमुवास । अन्ये च महात्मानो मुनिजनशापपरिपीतप्रभावा नानाकारा भूत्वा बभ्रमुरिमं लोकम् । असंशयमनेनापि महात्मना केनापि शापभाजा भवितव्यम् । आवेदयतीव मद्-

---

तातिक्रान्ता त्रिदशराज्यसमृद्धिर्देवाधिपत्यश्रीर्ययैवंविधा वर्तते । अस्मिन्नर्थे हेतुं प्रदर्शयन्नाह—**यदिति**। एवंविधान्यपि पूर्वोक्तस्वरूपाण्यपि सकलत्रिभुवनदुर्लभानि त्रिजगद्दुःप्राप्याणि रत्नान्युपकरणतां परिभोग्यतामागच्छन्ति प्राप्नुवन्ति । **अतीति** । अतितेजस्वितया महाप्राणतया महासाहसपराक्रमतया । चकारः समुच्चयार्थः । अस्य अश्वस्येयमाकृतिराकारः सदैवता स्वर्वासिना सहवर्तमाना । अधिष्ठितेति यावत् । सत्यमेतद्यस्मादारोहणेऽधिरोहणे मे मम शङ्कामिव जनयति । नहि सामान्यवाजिनां दैवतानधिष्ठिततुरङ्गमाणाममानुषलोकोचिताः सुरलोकयोग्याः सकलं समग्रं यत्त्रिभुवनं त्रिविष्टपं तस्य विस्मयजनन्य आश्चर्योत्पादिन्य ईदृश्य एतादृशा आकृतय आकारा भवन्ति । देवानामपि रूपान्तरग्रहणं संभवतीत्याशयेनाह—**दैवतेति** । हीति निश्चितार्थे । दैवतान्यपि नाकिनोऽपि मुनयो योगिनस्तेषां शापवशादननुग्रहबलादुज्झितानि त्यक्तानि निजशरीराणि यैरेवंभूतानि शापवचनोपनीतानि शापवाक्यप्रापितानि शरीरान्तराणि स्वशरीराद्भिन्नेन्द्रियायतनान्यध्यासत एवाश्रयन्त्येव । **श्रूयते हीति** । किलेति सत्ये । हि निश्चये । श्रूयते आकर्ण्यते । पुरा पूर्वं स्थूलशिरा नाम महातपा मुनिरखिलं समग्रं यत्त्रिभुवनं त्रिविष्टपं तत्र ललामभूतामाभरणभूतामप्सरसं स्वर्वधूम् । क्वचिदेकवचनान्तोऽप्ययम् । तदुक्तम्—'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा इति' इति । रम्भाभिधानां रम्भानाम्नीं शशाप शापं दत्तवान् । सा सुरलोकं देवलोकमपहाय विहायाश्वहृदये तुरङ्गमोरस्यात्मानं निवेश्य संस्थाप्य । अश्वशरीरं परिगृह्येत्यर्थः । अतएवाश्वहृदयेति विख्याता वडवा मृत्तिकावत्यां मृत्तिकावती नगरी तस्यां भवं शतधन्वानं नाम राजानमुपसेवमाना भजमाना मर्त्यलोके नृलोके महान्तं भूयांसं कालं समयमुवासोषितवती । अत्र कथा—'स्थूलशिरा नाम महर्षिः कुशसमिदर्थं पर्यटन् महति श्वभ्रान्तरे पतामः परित्रायस्व परित्रायस्व' इत्युच्चतरं ध्वनिमश्रृणोत् । गत्वा च तत्र क्षामशरीरान्पुरुषांस्तत्र लग्नान्प्रलम्बमानानपश्यत् । पृष्टाश्च 'के यूयम्' इति । ते च पितर इत्यवोचन्—'त्वया चापत्योत्पत्तिर्न कृता । तद्विरहात्त्वदुपरमे पुंनाम्नि नरके पतिष्यामः' इति । तच्छ्रुत्वा महर्षी रम्भाभिधानामेव योषितमिदमुक्तवान्—'त्वां कामयामः' इति । तया चोक्तम्—'यथाज्ञापयसि । किंतु देवकार्यं कृत्वागच्छामि । क्षम्यतां तावत्' इति । गतायां संकेतभङ्गो जात इति महर्षिणा क्रुद्धेन 'वडवा भव' इति सा शप्ता 'नरनारायणविग्रहावधिश्च शापो भविष्यति' इति × × × × । **अन्ये चेति** । अन्ये महात्मानोऽपरे गरीयांसो जना मुनिजनानां तपस्विनां शापेनाननुग्रहेण परिपीत

---

टिप्प०—1 सदैवता कयाचिद्देवतयेव अधिष्ठिता ।

---

पाठा०—१ सर्वदैवतेयम्. २ शरीरकाणि. ३ शापवचनबलोपनीतानि. ४ शरीराणि. ५ पुरा स्थूलशिराः. ६ भुवन. ७ वडवा भूत्वा. ८ मूर्तिकावत्याम्.

न्तःकरणमस्य दिव्यताम्' इति विचिन्तयन्नेवारुरुक्षुरासनादुदतिष्ठत् । मनसा च तं तुरङ्गममनुपसृत्य[१] 'महात्मन्नर्वन्, योऽसि सोऽसि । नमोस्तु ते । सर्वथा[२] मर्षणीयोऽयमारोहणातिक्रमोऽस्माकम् । अपरिगतानि दैवतान्यप्यनुचितपरिभवभाञ्जि भवन्ति' इत्यामन्त्रयांबभूव । विदिताभिप्राय इव स तमिन्द्रायुधश्चटुलशिरःकेसरसटाहतिकूणिता[३]केकरतारकेण तिर्यक्चक्षुषा विलोक्य मुहुर्मुहुस्ताडयता क्षितितलमुत्खातधूलिधूसरितक्रोडरोमराजिना दक्षिणखुरेणारोहणाया[४]ह्वयन्निव स्फुरितघ्राणविवरघर्घरध्वनिमिश्रं मधुरमपरुष[५]हुंकारपरम्परानुबद्धमतिमनोहरं हेषारवमकरोत् ।

अथानेन मधुरहेषितेन[६] दत्तारोहणाभ्यनुज्ञ इवेन्द्रायुधमारुरोह चन्द्रापीडः । समारुह्य तं प्रादेशमात्रमिव त्रैलोक्य[७]मखिलं मन्यमानो निर्गत्य जलधर[८]विमुक्तोपलासारपरुषेण[९] जर्जर-

---

आस्वादितः प्रभावो माहात्म्यं येषां ते तथा नानाकारा भूत्वा विविधप्रकाराणि शरीराण्युपगृह्येमं लोकं बभ्रमुर्भ्रमितवन्तः । असंशयं निःसंशयमनेनापि केनापि महात्मना महापुरुषेण शापभाजा भवितव्यम् । मदन्तःकरणं मन्मानसमस्य तुरङ्गस्य दिव्यतां देवत्वमावेदयतीव ज्ञापयतीव । इति विचिन्तयन्नेवेति ध्यायन्नेव आरुरुक्षुरारोढुमिच्छुरासनात्सिंहासनादुदतिष्ठदुत्थितो बभूव । तं तुरङ्गममनुपसृत्य तत्समीपेऽनागत्य मनसैव महात्मन् हे अर्वन् हे अश्व, योऽसि सोऽसि यत्तद्भवसि । अतोऽलक्ष्यस्वरूपायानाकलनीयात्मने ते तुभ्यं नमो नमस्कारोऽस्तु । सर्वथा सर्वप्रकारेणास्माकमारोहणेन योऽतिक्रमोऽवज्ञा स मर्षणीयः सहनीयः । अपरिगतान्यज्ञातानि दैवतान्यनुचितोऽयोग्यो यः परिभवः क्लेशस्तद्भाञ्जि भवन्तीति हेतोरामन्त्रयांबभूवामन्त्रणं चकार । स इन्द्रायुधोऽश्वस्तं चन्द्रापीडं स्वस्मिन्नारोहणेऽनुमतिरेव नापराध इति स्वाभिप्रायं स्वाङ्गक्रियाभिः स्पष्टयन्विदितो ज्ञातोऽभिप्राय आरोहणानुमतिलक्षणो येनैतादृश इव हेषारवं हेषाशब्दमकरोदित्यन्वयः । अथ हेषारवं विशेषयन्नाह—**स्फुरितेति** । स्फुरितो धूतो यो घ्राणविवरो नासिकारन्ध्रं तस्य यो घर्घरध्वनिरव्यक्तः शब्दस्तेन मिश्रं संयुक्तं मधुरं कर्णसुखदमतएवापरुषमकठोरं हुंकारस्य हुंकृतेर्या परम्परा संतानं तयानुबद्धं सहितमतएवातिमनोहरमतिरमणीयम् । चटुलं चञ्चलं यच्छिर उत्तमाङ्गं तस्य या केसरलक्षणा सटा जटा तस्या आहतिराघातस्तया कूणिता किंचिन्निम्ना आकेकरा किंचिद्वक्रा तारका कनीनिका यस्मिन्नेवंभूतेन चक्षुषा नेत्रेण तिर्यक्तिरश्चीनं विलोक्य निरीक्ष्य मुहुर्मुहुर्वारंवारं क्षितितलं पृथ्वीतलं ताडयतास्फालयतोत्खातोत्खनिता या धूलिः पांसुस्तया धूसरिता धूम्रा क्रोडरोमराजिर्भुजान्तरालकपङ्क्तिर्यस्मिन्नेवंविधेन दक्षिणखुरेणापसव्यशफेनारोहणायाधिरोहणायाह्वयन्निवाह्वानं कुर्वन्निव । अथेत्यानन्तर्ये । अनेन मधुरहेषितेन दत्तारोहणाभ्यनुज्ञ इव दत्तारोहणेऽभ्यनुज्ञा यस्यैवंविध इव चन्द्रापीड इन्द्रायुधमारुरोहाधिरूढः । **तमिति** । तमिन्द्रायुधं समारुह्यारोहणं कृत्वाखिलं समग्रं त्रैलोक्यं त्रिविष्टपं प्रादेशमात्रमिति तर्जन्यङ्गुष्ठे वितते सति यन्मानं तत्प्रादेशः कथ्यते । यदाह—'प्रदेशिन्यादिभिः सार्धमङ्गुष्ठे वितते सति । प्रादेशतालगोकर्णवितस्तयो यथाक्रमम्' इत्यभिधानचिन्तामणिः । तद्वदिव मन्यमानो ज्ञायमानः (?) । **निर्गत्येति** । निर्गत्य ततो बहिरागत्य स चन्द्रापीडोऽश्वसैन्यमपश्यदित्यन्वयः । अश्वसैन्यं विशिनष्टि—इन्द्रायुधं वा । वधिरीकृतमकर्णतां प्रापितं सकलत्रिभुवनविवरं येन तत् । केन । **जलेति** । जलधरविमुक्तो य उपलासारः करकासारस्तद्वत्परुषेण रूक्षेण

---

**टिप्प०**—1 जानन्नित्यर्थः ।

---

**पाठा०**—१ उपसृत्य; समुपसृत्य. २ सर्वथा स्थितेन. ३ कूणित. ४ रोहणाय. ५ अपरुषम्. ६ हेषितेन. ७ त्रैलोक्यं मन्यमानः. ८ प्रलयजलधर. ९ उपलसारपातपरुषेण.

यतेव रसातलमतिनिष्ठुरेण खुरपुटानां रवेण [1]रजोनिरुद्धघ्राणघोरघोषेण च हेषितेन[2] वधिरीकृतसकलत्रिभुवनविवरम्[3], [4]अशिशिरदीधितिसंस्पर्शस्फुरितविमलफलकेनोर्ध्वीकृतेन[5] कुन्तलतावनेनोन्नालनीलोत्पलकलिकावनगहनं सर इव गगनतलमलंकुर्वाणम्, उद्दण्डमायूरातपत्रसहस्रान्धकारिता[6]ष्टदिङ्मुखतया स्फुरितशतमन्युचापकलापकल्माष[7]मिव जलधरवृन्दम्, उद्वमत्फेनपुञ्जधवलितमुखतयानवरतवल्गनचटुलतया च प्रलयसागरजलकल्लोलसंघातमिव समुद्गतम्, अदृष्टपर्यन्त[8]मश्वसैन्य[9]मपश्यत्। तच्च सागरजलमिव [10]चन्द्रोदयेन चन्द्रापीडनिर्गमेन सकलमेव संचचालाश्वीयम्। अहमहमिकया च प्रणामलालसाः सरभसापनीतातपत्रशून्य-

---

रसातलं पृथ्वीतलं जर्जरयतेव प्रशिथिलावयवं कुर्वतेवातिनिष्ठुरेणातिकठिनेन खुरपुटानां शफपुटानां रवेण ध्वनिना। पुनः केन। रजसा निरुद्धमावृतं यद्घ्राणं घोणा तस्य यो घोरघोषो घोरध्वनिस्तेन हेषितेन शब्दितेन। चकारः समुच्चयार्थः। पुनः प्रकारान्तरेण विशेषयन्नाह—**अशिशिरेति**। अशिशिरदीधितिः सूर्यस्तेन यः संस्पर्शः संश्लेषस्तेन स्फुरितं देदीप्यमानं विमलफलकं निर्मलावरणं यस्मिंस्तेनोर्ध्वीकृतेनोर्ध्वं स्थापितेन कुन्तलताः। कुन्तः प्रासः। सरलत्वाल्लतोपमानम्। तासां वनं तेनोर्ध्वं नालानि मृणालानि यास्वेवंविधा या नीलोत्पलकलिका इन्दीवरकोरकास्तासां वनं तेन गहनं सर इव तटाक इव गगनतलमाकाशतलमलंकुर्वाणं शोभां विदधानम्। अत्र लोहफलकस्य नीलत्वसाम्यान्नीलोत्पलोपमानं कुन्तानां च सरलत्वसाम्यान्मृणालोपमानम्। नीलत्वसाम्याद्गगनतलस्य सरस उपमानम्। ऊर्ध्वं दण्डा येष्वेवंविधानि यानि मायूरातपत्राणि मयूरपिच्छनिर्मितानि छत्राणि तेषां सहस्रं तेनान्धकारिता अन्धकारं प्रापिता अष्टौ दिङ्मुखास्तेषां भावस्तत्ता तया स्फुरितो दीप्यमानः शतमन्युरिन्द्रस्तस्य यश्चापकलापो धनुःसमुदायस्तेन कल्माषं कर्बुरं जलधरवृन्दमिव मेघसमूहमिव। उद्वमद्बहिर्निःसरद्यः फेनोऽश्वमुखकफस्तस्य पुञ्जस्तेन धवलितानि शुभ्रीकृतानि यानि मुखानि तेषां भावस्तत्ता तयानवरतं निरन्तरं यद्वल्गनमन्योन्यसंघट्टस्तेन या चटुलता चञ्चलता तया च प्रलयकालीनो यः सागरः समुद्रस्तस्य जलं पानीयं तस्य कल्लोलास्तरङ्गास्तेषां संघातमिव समूहमिव समुद्गतं प्रादुर्भूतम्। फेनचटुलत्वसाम्येन सागरोपमानमिति। अदृष्टोऽनवलोकितः पर्यन्तः प्रान्तो यस्य तत्। सोऽश्वसैन्यमपश्यदित्यन्वयस्तु प्रागेवोक्तः। **तच्चेति**। तच्च सकलमेव समग्रमेवाश्वीयं सैन्यं चन्द्रापीडनिर्गमेन संचचालाचालीत्। केन किमिव। चन्द्रोदयेन सागरजलमिव समुद्रपानीयमिव। अहंपूर्वमहंपूर्वमित्यहमहमिका। स्पर्धेत्यर्थः। तया प्रणामलालसाः प्रणामे नमस्कृतौ लालसा लोलुपा राजपुत्रा नृपसुतास्तं चन्द्रापीडं पर्यवारयन्त परिवेष्टनमकुर्वत। राजसुतान्विशेषयन्नाह—**सरभसेति**। सरभसं सवेगमपनी-

---

टिप्प०—1 इदमपि सर्वं भ्रामकम्। अशिशिरदीधितेः सूर्यस्य संस्पर्शेन स्फुरितं देदीप्यमानम् (चमत्कुर्वत्) विमलं फलकम् अग्रदेशः (तीक्ष्णाग्रलोहमुखम्) यस्य तेन, ऊर्ध्वीकृतेन ऊर्ध्वमुखं स्थापितेन, कुन्ताः भल्लाः एव लताः (लतावल्लम्बाकारत्वात्) तासां वनेन समूहेन (करणभूतेन), उन्नालानां नीलोत्पलकलिकानां वनेन काननेन गहनं नीरन्ध्रं सरः सरोवरमिव गगनतलम् अलंकुर्वाणं शोभयत्। नीलोत्पलवनेन यथा सरोवरमलंक्रियते तथा कुन्तसमूहेन गगनमलंकृतमित्याशयः। 2 छत्रसहस्रेण अन्धकारितानि (अन्धकारयुक्तानि कृतानि) अष्टदिङ्मुखानि येन स मायूरातपत्रसहस्रान्धकारिताष्टदिङ्मुखस्तत्तया इन्द्रधनुश्चित्रितं मेघवृन्दमिव स्थितमित्यर्थो बोध्यः। 3 शुभ्रीकृतानि वदनानि यस्मिन् तद्भावः तत्ता तया। इत्यर्थ उचितः।

---

पाठा०—१ खुररजो; प्रचुररजो. २ हेषितेन. ३ भुवनं. ४ अशिशिरकिरणदीधितिपरामर्श. ५ ऊर्ध्वीकृत. ६ अन्धकारित. ७ कल्मापितम्. ८ पूर्वं तम्. ९ अश्वीयं सैन्यम्; अप्रमेयमश्वसैन्यम्. १० चन्द्रोदयेनेव.

शिरसः परस्परोत्पीडनकुपिततुरङ्गमनिवारणायस्ता[1] राजपुत्रास्तं पर्यवारयन्त । एकैकशश्च प्रतिनामग्राह[2]मावेद्यमाना बलाहकेन विचलितमुकुटपद्मरागकिरणोद्गमच्छलेनानुरागमिवोद्गमद्भिः संघटित[3]सेवाञ्जलिमुकुलतया यौवराज्या[4]भिषेककलशावर्जितसलिललग्नकमलैरिव दूरावनतैः शिरोभिः प्रणेमुः । चन्द्रापीडस्तु तान्सर्वान्[5]मानयित्वा यथोचितमनन्तरं तुरङ्गमाधिरूढेनानुगम्यमानो वैशम्पायनेन, राज्यलक्ष्मीनिवास[6]पुण्डरीकाकृतिना सकलराजन्यकुलकुमुदखण्डचन्द्रमण्डलेनेव तुरङ्गमसेनास्रवन्तीपुलिनायमानेन क्षीरोदफेनधवलितवासुकिफणामण्डलच्छविना स्थूलमुक्ता[7]कलापजालका[8]वृतेनोपरि चिह्नीकृतं केसरिणमुद्वहतातिमहता कार्तस्वरदण्डेन[9] ध्रियमाणेनातपत्रेण निवारितातपः, उभयतः समुद्धूयमानचामरकलापपवननर्तित-

---

तानि दूरीकृतानि यान्यातपत्राणि छत्राणि तैः शून्यानि रिक्तानि शिरांसि येषां ते तथा । **परस्परेति** । परस्परमन्योन्यं यत्पीडनं तेन कुपिताः कोपं प्राप्ता ये तुरङ्गमा अश्वास्तेषां निवारणं निषेधनं तत्रायस्ता उद्यताः । अथ च बलाहकेन नामनिवेदननियुक्तपुरुषेण प्रतिनामग्राहं यथा स्यात्तथैकश आवेद्यमाना निवेद्यमानाः । नामग्रहणे नामग्रहणनियुक्ते वा । 'बलाहकोऽम्बुदे गिरौ' इत्यनेकार्थः । शिरोभिः प्रणेमुर्नमस्कारं चक्रुः । तमिति शेषः । शिरांसि विशेषयन्नाह—**विचलितेति** । विशेषेण चलिताः कम्पिता मुकुटाः कोटीराणि तेषां पद्मरागा लोहितमणयस्तेषां किरणानां प्रभाणामुद्गमो बहिःप्रचारस्तस्य छलेन मिषेणानुरागं रक्तिमानमुद्गमद्भिरिवोद्गिरद्भिरिव । **संघटीति** । संघटितः संगतो यः सेवाया अञ्जलिः स एव मुकुलः कुड्मलस्तस्य भावस्तत्ता तया । शिरसां वर्तुलत्वसाम्यादञ्जलिमुकुलस्य कमलमुकुलसाम्याच्छिरःस्थिताञ्जलिमुकुलोत्प्रेक्षामाह—**यौवराज्येति** । यौवराज्यस्य योऽभिषेकस्तदर्थं ये कलशाः कुम्भास्तैरावर्जितं गृहीतं यत्सलिलं तत्र लग्नानि यानि कमलानि तैरिव दूरावनतैर्दूरतोऽवनतैर्नम्रीभूतै[1]श्चन्द्रापीडं पर्यवारयन्तेत्यन्वयस्तु प्रागेवोक्तः । चन्द्रापीडस्तु नगराभिमुखं प्रतस्थ इत्यन्वयः । तान्सर्वान्राजपुत्रान्यथोचितं यथायोग्यं मानयित्वा संमानं दत्त्वानन्तरं पश्चाद्भागेनैव तुरङ्गमाधिरूढेनानुगम्यमानः समनुयायमानः । पुनः कीदृशः । आतपत्रेण छत्रेण निवारितो दूरीकृत आतपो दिनकरप्रकाशो यस्य सः । छत्रं विशेषयन्नाह—**राज्येति** । राज्यस्याधिपत्यस्य या लक्ष्मीः श्रीस्तस्या यन्निवासार्थं पुण्डरीकं कमलं तद्वदाकृतिराकारो यस्य स तेन । सकलानि समग्राणि यानि राजन्यकुलानि नृपकुलानि तान्येव कुमुदानि कैरवाणि तेषां खण्डं वनं तत्र चन्द्रमण्डलेनेव शशिबिम्बेनेव । छत्रेण राजचिह्नेन राजन्या विकसितमुखा भवन्तीति भावः । तुरङ्गमसेनाश्ववाहिनी सैव स्रवन्ती तटिनी तस्याः पुलिनायमानेन सैकतायमानेन । अत्र विततगहनगाम्भीर्यादिगुणवत्त्वादश्वसेनाया नद्युपमानम् । क्षीरोदस्य दुग्धसमुद्रस्य यः फेनोऽब्धिकफस्तेन धवलितो यो वासुकिर्नागराजः । वासुकेर्नीलत्व[2]प्रसिद्ध्या एतद्विशेषणम् । तस्य यत्फणामण्डलं तद्वच्छविर्यस्य स तथा तेन । स्थूलमुक्तानां कलापैर्निर्मितजालकैर्गुच्छैरावृतेनाच्छादितेन । **उपरीति** । उपरि ऊर्ध्वं चिह्नीकृतं लाञ्छनीकृतं केसरिणं सिंहमुद्वहता[3] धारयतातिमहतातिमहीयसा कार्तस्वरदण्डेन सुवर्णदण्डेन कृत्वा ध्रियमाणेन धार्यमाणेन । **उभयत इति** । उभयत उभयपार्श्वयोः समुद्धूयमानो वीज्यमानो यश्चामरकलापो वालव्यजनसमूहस्तस्य यः पवनः समीरणस्तेन नर्तिता लास्यं कारिताः कर्णपल्लवा यस्य स तथा ।

---

**टिप्प०—1 अयमपि प्रमादः । दूरावनतैः शिरोभिः प्रणेमुरित्येवान्वयः । 2 शेषस्य श्वेतत्वं सुप्रसिद्धम् । अत एव श्वेतच्छत्रस्य वासुकि(शेष)फणामण्डलेन साम्यम् । क्षीरोदफेनैस्तस्य ततोऽप्यतिशयितशुभ्रत्वमित्यर्थः । 3 छत्रे सिंहमूर्तिः राजचिह्नत्वेनाङ्कितेत्यर्थः ।**

---

**पाठा०—१ निवारणायस्ताः; निवारणयासितहस्ताः; निवारणयायासिः. २ ग्रहणम्. ३ संघट्टित. ४ अभिषेकतया. ५ संमानयित्वा. ६ निवासयोग्य. ७ मुक्ताफलककलाप. ८ परिवृतेन. ९ कार्तस्वरेण दण्डेन.**

कर्णपल्लवः, पुरः प्रधावता तरुण[1]वीरपुरुषप्रायेणानेकसहस्रसंख्येन पदातिपरिजनेन जय जीवेति च मधुरवचसा मङ्गल[2]प्रायमनवरतमुच्चैः पठता बन्दिजनेन स्तूयमानः, न[3]गराभिमुखं प्रतस्थे।

क्रमेण च तं समासादितविग्रहमनङ्गमिवावतीर्णं नगरमार्गमनुप्राप्तमवलोक्य सर्व एव परित्यक्तसकलव्यापारो रजनिकरोदयपरिबुध्यमानकु[4]मुदवनानुकारी जनः समजनि। 'स[5]त्यस्मिन्मुखकुमुदकदम्बकविकृताकृतिः[6] कार्तिकेयो विडम्बयति कुमारशब्दम्। अहो, वयमतिपुण्यभाजो य[7]दमानुषीमस्याकृतिमन्तःसमारूढप्रीतिरसनिःस्यन्दविस्तारितेन कुतूहलोत्तानितेन लोचनयुगलेनानिवारिताः पश्यामः। सफला नोऽद्य जाता जन्मवत्ता। सर्वथा नमोऽस्मै रूपान्तरधारिणे भगवते चन्द्रापीडच्छद्मने पुण्डरीकेक्षणाय' इति वदन्नारचितप्र[8]णामाञ्जलिर्नगरलोकः प्रणनाम। सर्वतश्च स[9]मुपावृत्तक[10]पाटपुटप्रकटवातायनसहस्रतया चन्द्रापीडदर्शनकुतूहलान्नगरमपि समुन्मीलितलोचननिवहमिवाभवत्।

---

**पुर इति।** पुरोऽग्रे प्रधावता प्रचलता तरुणा युवानो ये वीरपुरुषाः सुभटनरास्तत्प्रायेण तत्तु[1]ल्येनानेकेषां सहस्राणां संख्या यस्मिन्स तेन पदातिपरिवारेण पत्तिपरिजनेन। पुनः कीदृशः। बन्दिजनेन याचकजनेन स्तूयमानो नूयमानः। अनवरतं निरन्तरं मधुरवचसा मिष्टवाक्येन जय जीवेति मङ्गलप्रायं मङ्गलात्मकमुच्चैः पठता पाठं कुर्वता। अन्वयस्तु प्रागेवोक्तः।

**क्रमेणेति।** क्रमेण परिपाट्या तं चन्द्रापीडं नगरमार्गं पुरीपद्धतिमनुप्राप्तमागतमवलोक्य निरीक्ष्य रजनीकरश्चन्द्रस्तस्योदयेनोद्गमेन परिबुध्यमानं विकासं प्राप्यमाणं यत्कुमुदवनं तस्यानुकारी सादृश्यकरणशीलः सर्व एव जनो लोकः समजनि बभूव। तमेव विशिनष्टि—**समेति।** समासादितः प्राप्तो विग्रहः शरीरं येनैवंभूतमनङ्गं काममिवावतीर्णं गृहीतावतारम्। पूर्वमीश्वरेण शरीरस्य दग्धत्वातसमासादितेत्युक्तम्। कीदृशो जनः। परित्यक्तो दूरीकृतः सकलव्यापारः समग्रव्यापृतिर्येन स तथा तेन। **सतीति।** अस्मिंश्चन्द्रापीडे सति कार्तिकेयो गुहः कुमारशब्दं विड[2]म्बयति। नाममात्रं धत्त इति भावः। तस्मिन्निति शेषः। अस्मिन्नर्थे हेतुगर्भितं विशेषणमाह—**मुखेति।** मुखान्येव कुमुदानि। विकाससाम्यात्तदुपमानम्। तेषां कदम्बकं समूहस्तेन विकृता बीभत्साकृतिराकारो यस्य स तथा। अहो इत्याश्चर्ये। वयमतिपुण्यभाजो गरिष्ठसुकृतभाजः। यदिति हेत्वर्थे। अस्य कुमारस्यामानुषीं दैवसंबन्धिनीमाकृतिमाकारं लोचनयुगलेन नेत्रयुग्मेनानिवारिताः पश्यामो विलोकयाम इत्यन्वयः। लोचनयुगलं विशिनष्टि—**अन्त इति।** अन्तः स्वान्ते समारूढः समुत्पन्नो यः प्रीतिरसः स्नेहरसस्तस्य निःस्यन्दः सारस्तेन विस्तारितेन विस्तीर्णीकृतेन। कुतूहलमाश्चर्यं तेनोत्तानितेनोर्ध्वमुखेन। नोऽस्माकमद्य जन्मवत्तोत्पत्तिमत्ता सफला फलवती जाता जज्ञे। **सर्वथेति।** सर्वथा सर्वप्रकारेणास्मै चन्द्रापीडच्छद्मने पुण्डरीकेक्षणाय कृष्णाय भगवते रूपान्तरधारिणे नम इति वदन्निति ब्रुवन्नारचितो विहितः प्रणामार्थमञ्जलिर्येनैवंभूतो नगरलोकः प्रणनाम प्रणामं चक्रे। **समुपावृत्तेति।** सर्वतः सर्वत्र समु[3]पावृत्तं समुद्घाटितं कपाटपुटमररसंपुटं यस्मिन्नेवंभूतं प्रकटं स्पष्टं वातायनसहस्रं गवाक्षसहस्रं तस्य भावस्तत्ता तया चन्द्रापीडस्य यद्दर्शनकुतूहलं दर्शनाश्चर्यं तस्मान्नगरमपि द्र[4]ङ्गमपि समुन्मीलितं विकसितं लोचननिवहं यस्मिन्नेतादृशमिवाभवद्बभूव। अत्रावलोकननिमित्तत्वसाम्याद्वातायनसहस्रस्य विकसितनेत्रोपमानम्।

**टिप्प०**—1 तद्बहुलेनेत्यर्थः। 2 स्ववाचकत्वेन स्वीकृत्य कुमारशब्दं कदर्थयतीत्यर्थः। यतो हि मुखानि षड् वदनानि कुमुदानीव तेषां कदम्बकं समूहः, तथा च अस्वाभाविकमुखबाहुल्याद् विकृताकारे कार्तिकेये कुमारशब्दो विडम्बनायै। अस्मिंस्तु कुत्सितो मारो यस्मादिति कुमार इति व्युत्पत्त्या कामादप्यधिकदर्शनीयेऽस्मिन्कुमारशब्द उपयुज्यत इत्याशयः। 3 समपावृतम् इत्येव पाठः। 4 पुरमिति प्रसिद्धा व्याख्योचिता।

---

पाठा०—१ वीरप्रायेण. २ प्रायालापम्. ३ नगराभिमुखः. ४ पुष्पककुमुद. ५ सत्यस्मिन्संप्रति मुख. ६ मुखकलापविडम्बन; मुखकमल. ७ यदिमाम्; यत इमाम्. ८ प्रणामाञ्जलि. ९ समपावृत; समुपावृत. १० कपाटप्रकट.

अनन्तरं च 'समाप्तसकलविद्यो विद्यागृहान्निर्गतोऽयं[1] चन्द्रापीडः—'इति समाकर्ण्यालोकनकुतूहलिन्यः सर्वस्मिन्नेव[2] नगरे ससंभ्रममुत्सृष्टार्धपरिसमाप्तप्रसाधनव्यापाराः, काश्चिद्वामकरतलगतदर्पणाः स्फुरितसकलरजनिकरमण्डला इव पौर्णमासीरजन्यः, काश्चिदार्द्रालक्तकरसपाटलितचरणपुटाः कमलपरिपीतबालातपा इव नलिन्यः, काश्चित्ससंभ्रमगतिविगलितमेखलाकलापाकुलितचरणकिसलयाः श्रृङ्खलासंदानमन्दमन्दसंचारिण्य इव करिण्यः, काश्चिज्जलधरसमयदिवसश्रिय इवेन्द्रायुधरागरुचिराम्बरधारिण्यः, काश्चिदुल्लसितधवलनखमयूखपल्लवान्नूपुररवाकृष्टगृहकलहंसकानिव चरणपुटानुद्वहन्त्यः, काश्चित्करतलस्थितस्थूलहार[3]यष्टयो रतिमिव मदनविनाशशोकगृहीतस्फटिकाक्षवलयां विडम्बयन्त्यः, काश्चित्पयोधरान्तरालगलितमुक्तालतास्तनुविमल[4]स्रोतोजलान्तरितचक्रवाकमिथुना इव प्रदोषश्रियः, काश्चिन्नूपुरमणिस-

---

**अनन्तरमिति** । अनन्तरं । चन्द्रापीडदर्शनोत्कण्ठया गवाक्षकपाटोद्घाटनानन्तरमित्यर्थः । समाप्ता पारं प्राप्ता सकला समग्रा विद्या यस्य स तथा । विद्यागृहादयं चन्द्रापीडो निर्गत इति समाकर्ण्य श्रुत्वालोकने विलोकने कुतूहलं यासां ता आलोकनकुतूहलिन्यो ललनाः स्त्रियो हर्म्यतलानि समारुरुहुरारोहणं चक्रुः । सर्वस्मिन्नेव नगरे ससंभ्रममुत्सृष्टस्त्यक्तोऽर्धपरिसमाप्तः प्रसाधनं प्रतिकर्म तस्य व्यापारो याभिस्ताः । काश्चिद्वामकरतले सव्यपाणितले गतः प्राप्तो दर्पणो मुकुरो याभिस्ताः पौर्णमासीरजन्यः राकात्रियामा इव । कीदृश्यः । स्फुरितं स्फुटितं सकलं समग्रं रजनिकरमण्डलं शशाङ्कबिम्बं यासु ताः । निर्मलत्ववर्तुलत्वसाम्याद्दर्पणस्य चन्द्रोपमानम् । **काश्चिदिति** । काश्चनार्द्रो योऽलक्तकरसो यावकरसस्तेन पाटलितं श्वेतरक्तीकृतं चरणपुटं यासां ताः । का इव । नलिन्य इव पद्मिन्य इव । कीदृश्यः । कमलेन परिपीतो बालातपो याभिस्ताः । अत्रालक्तकस्य बालातपसाम्यं चरणपुटानां च कमलेन साम्यं सूचितम् । **काश्चिदिति** । काश्चन स्त्रियः संभ्रमेण या गतिर्गमनं तया विगलितः स्रस्तो यो मेखलाकलापो रसनाकलापस्तेनाकुलिता व्याकुलीभूताश्चरणकिसलयाः पादपल्लवा यासां ताः । का इव । करिण्य इव हस्तिन्य इव । कीदृश्यः । श्रृङ्खला प्रसिद्धा तस्याः संदानं बन्धनं तेन मन्दमन्दसंचारिण्यो मन्दमन्दगामिन्यः । अत्र गतिप्रतिबन्धसाम्यान्मेखलायाः श्रृङ्खलोपमानम् । **काश्चिदिति** । काश्चनेन्द्रायुधमिन्द्रधनुस्तस्य राग इव रागो येष्वेवंविधानि रुचिराण्यम्बराणि धारयन्तीत्येवंशीलास्तास्तथा । का इव । जलधरसमयस्य यो दिवसो दिनं तस्य श्रियस्ता इव । इन्द्रायुधं तस्य रागो रक्तिमा तेन रुचिरं यदम्बरमाकाशं तद्धारिण्यः । **काश्चिदिति** । काश्चन किं कुर्वत्यः । उद्वहन्त्य उद्वहनं कुर्वत्यः । कान् । चरणपुटान् । तानेव विशिनष्टि—उल्लसिता उल्लासं प्राप्ता धवला नखमयूखा एव पल्लवा येषु तान्नूपुररवेण पादकटकध्वनिनाकृष्टानाकर्षितान्गृहकलहंसकान्सद्महंसानिव । **काश्चिदिति** । काश्चन करतले स्थिता स्थूलहारयष्टिर्यासां ताः । किं कुर्वत्यः । रतिं मदनस्त्रियं विडम्बयन्त्यो निराकुर्वत्यः । तामेव विशिनष्टि—**मदनेति** । मदनस्य कन्दर्पस्य यो विनाशोऽभावस्तस्माद्यः शोकस्तेन गृहीतं स्फटिकाक्षवलयं यया सा ताम् । अतिस्वच्छत्वात्स्फटिकाक्षवलयेन समं मुक्ताफलसाम्यं दर्शितम् । **काश्चिदिति** । काश्चन स्त्रियः पयोधराणामन्तरालं मध्यभागस्तत्र गलिता स्रस्ता मुक्तालता यासां ताः । तनु स्तोकं विमलं निर्मलं यत्स्रोतोजलं प्रवाहपानीयं तेनान्तरितं व्यवधानं प्रापितं चक्रवाकमिथुनं रथाङ्गाह्वमिथुनं यास्वेवंविधाः । प्रदोषो रजनीमुखं तस्य श्रिय इव शोभा इव । **काश्चिदिति** । काश्चन योषितो नूपुरमणिभ्यः समुत्थितं प्रकटीभूतं यदिन्द्रायुधं शक्रधनुस्तस्य भावस्तत्ता तया । परिचयेन संबन्धेन वात्सल्येन वा । अनुगताः पश्चादागता गृहमयूरिका इव सदन-

---

पाठा०—१ आगच्छति चन्द्रापीडः. २ सर्वस्मिन्नगरे. ३ मुक्ताहार. ४ लता विमल.

मुत्थितेन्द्रायुधतया [1]परिचयानुगतगृहमयूरिका इव वि[2]राजन्त्यः, काश्चि[3]दर्धपीतोज्झितमणिचषकाः स्फुरितरागैर्मधुरसमिवाधरपल्लवैः क्षरन्त्यो हर्म्यतलानि ललनाः समारुरुहुः । अन्याश्च मरकतवातायनविवरविनिर्गतमुखमण्डला विकचकमलकोशपु[4]टामम्बरतलसंचारिणीं कमलिनीमिव दर्शयन्त्यो ददृशुः । उदपादि च सहसा सरभससंचलनजन्मा, मधुरसा[5]रणास्फालितवीणारवको[6]लाहलबहलः, रसनारवाहूतसा[7]रसरसितसंभिन्नः, स्खलितच[8]रणतलताडितसोपा[9]नजातगम्भीरध्वनि[10]प्रहृष्टानामवरोधशिखण्डिनां केकारवैरनुगम्यमानः, नवजलधररवभयचकितकलहं[11]सकोलाहलकोमलः, मकरध्वजविजयघोषणानुकारी, परस्परविघट्टनारणितता[12]रतरहारमणीनां रमणीनां श्रोत्रहारी, हर्म्यकुक्षिषु प्रतिरवनिर्ह्रादी भूषणनिनादः ।

---

मयूर्य इव विराजन्त्यः । पूर्वनायिकानामिन्द्रायुधरागरुचिराम्बरपरिधानवत्त्ववर्णनादे[1]तदुपमानम् । **काश्चिदिति** । अर्धं पीतं पानविषयीकृतं ये[2]ष्वेवंविधा उज्झितास्त्यक्ता मणिचषका रत्ननिर्मितपानभाजनानि याभिस्ताः । स्फुरितो देदीप्यमानो रागो रक्तिमा येष्वेवंविधैरधरपल्लवैर्दन्तच्छदकिसलयैर्मधुरसमिव कादम्बरीरसमिव क्षरन्त्यः क्षरणं कुर्वत्यः । रक्तत्वसाम्यादधररागस्य मधुरसोपमानमिति भावः । ललना हर्म्यतलानि समारुरुहुरित्यन्वयस्तु प्रागेवोक्तः । **अन्याश्चेति** । अन्याः काश्चन स्त्रियश्चन्द्रापीडं ददृशुरद्राक्षुः । कीदृश्यः । मरकतस्याश्मगर्भस्य ये वातायना गवाक्षास्तेषां विवराणि रन्ध्राणि तेभ्यो विनिर्गतं बहिरागतं मुखमण्डलं यासां ताः । कमिव । विकचं स्फीतं कमलकोशपुटं यस्यामेवंविधामम्बरतलसंचारिणीं व्योमतलगामिनीं कमलि[3]नीमिव दर्शयन्त्य आत्मानं प्रकाशयन्त्यः । अत्र नीलत्वसाम्यान्मरकताम्बरयोः साम्यं वर्तुलत्वसाम्यान्मुखकमलयोः साम्यं च प्रदर्शितम् । ततो भूषणनिनादोऽङ्गाभरणध्वनिः सहसा सद्य उदपाद्युत्पन्नः । अथ ध्वनिं विशेषयन्नाह—**सरभसेति** । सरभसं सत्वरं यत्संचलनं गमनं तस्माज्जन्मोत्पत्तिर्यस्य स तथा । मधुरं यथा स्यात्तथा सारणासु तन्त्रीष्वास्फालिता या वीणा वल्लक्यस्तासां रवः शब्दस्तज्जनितो यः कोलाहलः कलकलस्तेन बहलो दृढः । रसना काञ्ची तस्या रवेण शब्देनाहूता आमन्त्रिता ये सारसा लक्ष्मणास्तेषां रसितं शब्दितं तेन संभिन्नो मिश्रितः । स्खलिताः स्खलनं प्राप्ता ये चरणाः पादास्तेषां तलेन ताडितं हतं यत्सोपानजातमारोहणसमूहं ततो यो गम्भीरध्वनिर्मन्द्रध्वनिस्तेन प्रहृष्टानां हर्षितानामवरोधशिखण्डिनामन्तःपुरमयूराणां केकारवैरनुगम्यमानः । नवो नवीनोऽकालसंभवो यो जलधरो मेघस्तस्य यो रवः शब्दस्तस्माद्यद्भयं तेन चकितास्त्रस्ता ये कलहंसाः कादम्बास्तेषां कोलाहलस्तेन कोमलो मधुरः । हर्षप्रकर्षा[4]द्वाद्यमानपटहध्वनेर्नवजलधरध्वनिसाम्यम् । मकरध्वजस्य कन्दर्पस्य या विजयघोषणा त्रैलोक्यं मया जितमित्युद्घोषणं तस्या अनुकारी सादृश्यकरणशीलः । परस्परं यद्विशेषेण घट्टनं संश्लेषस्तेनारणिताः शब्दितास्ता[5]रतरा आकरशुद्धोद्भवा अतिमनोहरा हारमणयो यासामेवंविधानां रमणीनां स्त्रीणां श्रोत्रहारी कर्णमनोहरः । हर्म्यकुक्षिषु गृहकोणेषु प्रतिरवनिर्ह्रादः प्रतिच्छन्दध्वनिर्विद्यते यस्य स तथा । ततो भूषणध्वनिरुदपादीत्यन्वयस्तु प्रागेवोक्तः ।

---

**टिप्प०—1 अज्ञानं टीकाकारस्य । नूपुरमणिभ्यः समुत्थितानि उद्गतानि इन्द्रायुधानि इन्द्रधनुःसदृशनानावर्णप्रभामण्डलानि यासां तत्तया, परिचयवशादनुगता गृहमयूरिका यासां ता इव । मयूरीणां यथा नानावर्णमयपक्षशालित्वं तथा नूपुरमणीनामपि विविधरागकान्तिशालित्वम् । ततश्च नूपुरमणीनां विविधरङ्गशालितयैव अनुगतमयूरिकात्वोत्प्रेक्षेत्यर्थः । 2 अर्धपीतानि पश्चादुज्झितानि मणिनिर्मितानि चषकाणि याभिस्ता इत्यर्थ उचितः । चषकाणां तत्स्थितमद्येषु लक्षणा । 3 अत्र स्त्रियः कमलिनी(कमलखण्ड)स्थानीयाः, तन्मुखानि च विकचकमलपुष्पस्थानीयानीत्याशयः । 4 हन्त पदे पदे टीकाकारस्य प्रमादः । स्खलितचरणतलताडनेनैव सोपानश्रेण्या मेघगम्भीरो ध्वनिः, तेनैव मयूराणां हंसानां च जलदभ्रान्तिरिति ज्ञेयम् । 5 अतिबहुमूल्या अतिस्थूला वा ।**

---

पाठा०—१ परिचर्या. २ विराजयन्त्यः. ३ दीर्घ. ४ पुटाम्बर. ५. साधारण. ६ कोलाहलः. ७ गृहसारस. ८ चरणताडित. ९ मणिसोपान. १० प्रहृष्टताम्. ११ हंसकुल. १२ तारहार.

मुहूर्तादिव युवतिजननिरन्तरतया नारीमया इव प्रासादाः, सालक्तकपदकमलविन्यासैः पल्लवमयमिव क्षितितलम्, अङ्गनाङ्गप्रभाप्रवाहेण[1] लावण्यमयमिव नगरम्, आननमण्डलनिवहेन चन्द्रबिम्बमयमिव गगनतलम्, आतपनिवारणायोत्तानित[2]करतलजालकेन कमलवनमयमिव दिक्चक्रवालम्, आभरणांशुकलापेन[3]न्द्रायुधमय इवातपः, लोचन[4]मयूखलेखासंतानेन नीलोत्पलदलमय इव दिवसो बभूव । कौतुकप्रसारितनिश्चललोचनानां च पश्यन्तीनां तासामादर्शमयानीव सलिलमयानीव स्फटिकमयानीव हृदयानि विवेश चन्द्रापीडाकृतिः । आविर्भूतमदनरसानां चान्योन्यं[5] सपरिहासाः सविश्रम्भाः ससंभ्रमाः सेर्ष्याः सोत्प्रासाः साभ्यसूयाः सविलासाः समन्मथाः सस्पृहाश्च तत्क्षणं रमणीयाः[6] प्रसस्रुरालापाः ।

तथाहि 'त्वरितगमने, मामपि प्रतिपालय । दर्शनोन्मत्ते, गृहाणोत्तरीयम् । उल्लासयाल[7]कलतामाननावलम्बिनीम् । मूढे, चन्द्रलेखामुपाहर[8] । उपहार[9]कुसुमस्खलितचरणा पतसि

---

मुहूर्तादिव मुहूर्तानन्तरं युवतिजनैः स्त्रीजनैर्निरन्तरतया निबिडतया प्रासादा भूपसद्मानि नारीमया इव स्त्रीभिर्निष्पन्ना इव बभूवुः । सालक्तकं सयावकं यत्पदकमलं चरणपद्मं तस्य विन्यासैः स्थापनैः क्षितितलं वसुधातलं पल्लवमयमिव किसलयमयमिवासीत् । अङ्गनानां योषितामङ्गस्य शरीरस्य प्रभाप्रवाहेण कान्तिधारया नगरं द्रङ्गं लावण्यमयमिव चातुर्यमयमिवासीत् । आननं मुखं तस्य मण्डलम् । वर्तुलाकृतित्वात् । तेषां निवहेन समूहेन गगनतलं व्योमतलं चन्द्रबिम्बमयमिवासीत् । आतपनिवारणाय सूर्यालोकदूरीकरणायोत्तानितान्यूर्ध्वीकृतानि यानि करतलानि तेषां जालकेन समूहेन दिक्चक्रवालं दिशां चक्रं कमलवनमयमिवासीत् । आभरणानां भूषणानामंशवः किरणास्तेषां कलापेन समूहेनातप इन्द्रायुधमय इवासीत् । लोचनानां नेत्राणां या मयूखलेखाः कान्तिराजयस्तासां संतानेन परंपरया दिवसो नीलोत्पलदलमय इव बभूव । नीलनलिनदलैर्निष्पन्न इवेत्यर्थः । कौतुकेन कुतूहलेन प्रसारितानि विस्तारितान्यतएव निश्चलानि स्थिराणि लोचनानि नेत्राणि यासामेवंविधानां पश्यन्तीनां विलोकयन्तीनां तासां योषितां हृदयानि चन्द्रापीडाकृतिर्विवेश प्रविष्टा । हृदयानि विशेषयन्नाह—**आदर्शेति** । आदर्शो मुकुरस्तन्मयानीव तद्रूपाणीव । सलिलं जलं तन्मयानीव । स्फटिकः प्रसिद्धस्तन्मयानीव । प्रतिबिम्बसाधर्म्यादेतेषामुपमानम् । **आविरिति** । आविर्भूतः प्रकटीभूतो मदनरसः कामरसो यासामेवंविधानां कामिनीनामन्योन्यं परस्परं तत्क्षणं तस्मिन्समये रमणीया मनोहरा आलापाः संलापाः प्रसस्रुर्विस्तारं प्रापुः । आलापान्विशिनष्टि—**सपरीति** । सह परिहासेन नर्मवचनेन वर्तमानाः सपरिहासाः । सह विश्रम्भेण विश्वासेन वर्तमानाः सविश्रम्भाः । सह संभ्रमेण भयेन वर्तमानाः ससंभ्रमाः । सहेर्ष्यया परासहनलक्षणया वर्तमानाः सेर्ष्याः । सहोत्प्रासेन वितर्केण[2] वर्तमानाः सोत्प्रासाः । सहाभ्यसूययान्यगुणासहनात्मिकया वर्तमानाः साभ्यसूयाः । सह विलासेन नेत्रजेन वर्तमानाः सविलासाः । सह मन्मथेनानङ्गेन वर्तमानाः समन्मथाः । सह स्पृहया वाञ्छया वर्तमानाः सस्पृहाः ।

तानेव प्रदर्शयन्नाह—**तथाहीति** । त्वरितं शीघ्रं गमनं यस्यास्तस्या संबोधनं हे त्वरितगमने । मां सखीमपि प्रतिपालय । गृहीत्वा गच्छेत्यर्थः । दर्शनेऽवलोकन उन्मत्ता ग्रथिला तस्याः संबोधनं हे दर्शनोन्मत्ते । उत्तरीयमुपरिवस्त्रं गृहाण । पतन्तं निवारयेत्यर्थः । हे मूढे[3]ऽनभिज्ञे । आननावलम्बिनीं मुखोपरि सस्तामलक-

---

**टिप्प०**—1 सौन्दर्यमयमित्युचितम् । 2 उत्प्रासेन मन्दहासेन सहिताः, 'उत्प्रासः स मनाक् स्मितम्' अमरः । 3 उल्लासय इतः पूर्वं 'चपलवे' इति संबोधनं ग्रन्थोचितम् । इदं त्वग्रेतनम् ।

---

**पाठा०**—१ अङ्गप्रभा; अङ्गनानामङ्गप्रभा. २ उत्तानितेन. ३ आभरणांशुककलापेन. ४ साभ्यसूयालोचन. ५ अन्योन्यतः. ६ अतिरमणीयाः, अभिरमणीयाः. ७ चपले उल्लासय. ८ चन्द्रलेखे किमुपाहार. ९ मुहुरुपाहर. १० समुपाहर.

मदनान्धे। संयमय मदनिश्चेतने, केशपाशम्। उत्क्षिप चन्द्रापीडदर्शनव्यसनिनि, काञ्चीदामकम्। उत्सर्पय पापे, कपोलदोलायितं कर्णपल्लवम्। अहृदये, गृहाण निपतितं दन्तपत्रम्। यौवनोन्मत्ते, विलोक्यसे जनेन स्थगय पयोधरभारम्। अपगतलज्जे, शिथिलीभूतमाकलय दुकूलम्। अलीकमुग्धे, द्रुततरमागम्यताम्। कुतूहलिनि, देहि नृपदर्शनान्तरम्। असंतुष्टे, कियदालोकयसे। तरलहृदये, परिजनमपेक्षस्व। पिशाचि, गलितोत्तरीया हस्यसे जनेन। रागावृतनयने, पश्यसि न सखीजनम्। अनेकभङ्गिविकारपूर्णे, दुःखमकारणायासितहृदया जीवसि। मिथ्याविनीते, किं व्यपदेशवीक्षितैः, विश्रब्धं विलोकय। यौवनशालिनि, किं पीडयसि पयोधरभारेण, अतिकोपने, पुरतो भव। मत्सरिणि, किमेकाकिनी रुणत्सि वातायनम्। अनङ्गपरवशे, मदीयमुत्तरीयांशुकमुत्तरीयतां नयसि। रागासवमत्ते, निवारयात्मानम्। उज्झितधैर्ये, किं धावसि गुरुजनसमक्षम्। उल्लसत्स्वभावे, किमेवमाकु-

---

लतां केशलतामुल्लासयोर्ध्वीकुरु। हे मदनान्धे, चन्द्रलेखामलिकाभरणमुपाहर दूरीकुरु। उपहारार्थं पूजार्थं यानि कुसुमानि तैः, स्खलितचरणा पतसि। पतिष्यसीत्यर्थः। 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यत्यर्थे वर्तमानः। हे मदनिश्चेतने, केशपाशमलकसमूहं संयमय सम्यग्बन्धनं कुरु। हे चन्द्रापीडदर्शनव्यसनिनि, काञ्चीदामकं रसनादामोत्क्षिपोच्चैर्नय। हे पापे, कपोलदोलायितं कपोलावलम्बि कर्णपल्लवमुत्सर्पयोर्ध्वं कुरु। हे अहृदये हृदयवर्जिते। निपतितं स्रस्तं दन्तपत्रं कर्णाभरणं गृहाण स्वीकुरु। हे यौवनोन्मत्ते, यौवनं तारुण्यं तेनोन्मत्ते, पयोधरभारं स्थगयाच्छादय। जनेन विलोक्यस आगन्तुकलोकेन दृग्विषयीक्रियसे। हे अपगतलज्जे, अपगता दूरीभूता लज्जा यस्यास्तस्याः संबोधनम्, शिथिलीभूतं श्लथीभूतं दुकूलं दुगूलमाकलय संयमय। हे अलीकमुग्धे, त्वं मुग्धा नासि। किंतु मिथ्यामुग्धत्वं प्रतिपन्नासि। द्रुततरं शीघ्रतरमागम्यताम्। किमर्थं विलम्बं करोषि। हे कुतूहलिनि, कुतूहलं विद्यते यस्यामिति तस्याः संबोधनम्, नृपदर्शनार्थमन्तरं विचालं देहि। 'विचालं मध्यमन्तरे' इति कोशः। हे असंतुष्टे संतोषवर्जिते, कियत्कियन्मात्रमालोकयसे वीक्षसे। हे तरलहृदये चञ्चलचित्ते, परिजनं परिच्छदमपेक्षस्वापेक्षां कुरु। हे पिशाचि हे राक्षसि, गलितं स्वस्थानात्स्रस्तमुत्तरीयं संव्यानं यस्या एवंविधा त्वं जनेन लोकेन हस्यसे। हे रागावृतनयने रागेण कामरागेणावृते आच्छादिते नयने लोचने यस्यास्तस्याः संबोधनम्, सखीजनमालिजनं न पश्यसि न विलोकयसि। **अनेकेति**। अनेके ये भङ्गिविकाराः कौटिल्यविकारास्तैः पूर्णे भृते हे सखि, अकारणेन निमित्तव्यतिरेकेणायासितं खेदितं हृदयं ययैवंभूता सती दुःखं दुःखरूपमेव। न सुखेनेत्यर्थः। जीवसि प्राणान्धत्से। हे मिथ्याविनीते हे असत्येन विनयकारिणि, व्यपदेशवीक्षितैः कपटावलोकितैः किम्। विश्रब्धं सविश्वासं यथा स्यात्तथा विलोकय पश्य। हे यौवनशालिनि हे तारुण्यशोभिनि, पयोधरभारेण स्तनभारेण किं पीडयसि किं पीडां जनयसि। मदुपरि पतनेनेति भावः। अतिकोपने हे चण्डि, पुरतोऽग्रतो भव। हे मत्सरिणि हे अमर्षिणि, एकाकिनी वातायनं गवाक्षं किं रुणत्सि रोधनं कुरुषे। हे अनङ्गपरवशे हे मदनायत्ते, मदीयमुत्तरीयांशुकमुत्तरीयतामुपरिवस्त्रतां नयसि प्रापयसि। हे रागासवमत्ते रागः प्रीतिः स एवासवः सीधु तेन मत्ते क्षीबे, आत्मानं निवारय वारणां कुरु। अतिरागवशान्मरणं भविष्यतीति भावः। हे उज्झितधैर्ये त्यक्तसाहसे, गुरुजनसमक्षं

---

**टिप्प०**—1 पतितां चन्द्रलेखाम् ('चाँद' 'बैंदा') उपाहर उत्थापय, गृहाणेत्यर्थः। टीकाकारस्तु भ्रान्तः। 2 अवकाशम्, मह्यमपि दर्शनाय स्थानं देहीत्याशयः। 3 चन्द्रापीडलाभासंभवादकारणमेव हृदयस्यायासः दुःखमयं च जीवनमित्याशयः। 4 मिथ्यैव विनयाऽभिनयं प्रदर्शयसीत्यर्थः।

---

**पाठा०**—१ भागम्. २ दर्शनान्तरम्. ३ पिशाचिके. ४ वलित. ५ विहस्यसे. ६ आलोकय. ७ रागमत्ते.

लीभवसि । मुग्धे, निगूहस्व मदनज्वरजनितपुलकजालकम् । [1]असाध्वाचरणे, किमेवमुत्ताम्यसि । बहुविकारे, [2]अङ्गभङ्गवलनायासितमध्यभागा वृथा खिद्यसे । शून्यहृदये, स्वभवनान्निर्गतमपि नात्मानमवगच्छसि । कौतुकाविष्टे, विस्मृतासि निःश्वसितुम्, अन्तःसंकल्परचितर[3]तसमागमसुखरसनिमीलितलोचने, समुन्मीलय लोचनयुगलम्, अतिक्रामत्ययम् । अनङ्गशरप्रहारमूर्च्छिते, रविकिरणनिवारणाय कुरु शिरस्युत्तरीयांशुकपल्लवम् । अयि सतीव्रतग्रहगृहीते, द्रष्टव्यमपश्यन्ती वञ्चयसि लोचनयुगलम् । [4]अधन्ये, हतासि परपुरुषादर्शन[5]व्रतेन । प्रसीदोत्तिष्ठ सखि, पश्य रतिविरहितं साक्षादिव भगवन्तमगृहीतमकरध्वजं मकरध्वजम् । अयमस्य सितातपत्रान्तरेण अलिकुलनीले शिरसि तिमिरशङ्कानिपतित इव शशिकरकलापो मालतीकुसुमशेखरोऽभिलक्ष्यते । एतदस्य कर्णाभरणमरकतप्रभाश्यामायितमुपरचितविकचशिरीषकुसुमकर्णपूरमिव कपोलतलमाभाति । अयमस्य हारान्तर्निविष्टारु-

---

गुरुजनाः पूज्यजनास्तेषां समक्षं प्रत्यक्षं किं धावसि किं प्रधावनं करोषि । हे उल्लसत्स्वभावे प्रवर्धमानाशये । किमिति प्रश्ने । एवममुना प्रकारेणाकुलीभवसि व्याकुलतां भजसे । हे मुग्धे ग्रथिले, मदनज्वरेण कामज्वरेण जनितं यत्पुलकजालकं रोमाञ्चसमूहं निगूहस्व संवृतं कुरु । हे असाध्वाचरणे अशुभचरिते । किमेवमुत्ताम्यसि कथं ग्लानिं भजसि । हे बहुविकारे हे अनेकविकारवति, अङ्गानां भङ्गाः संस्थानविशेषास्तेषां वलनं संकोचस्तेनायासितः खिन्नो मध्यभागोऽवलग्नं यस्या एवंविधा त्वं वृथा मुधा खिद्यसे खेदं प्राप्नोषि । हे शून्यहृदये शून्यचित्ते । स्वभवनान्निजगृहादात्मानं निर्गतमपि बहिरागतमपि नावगच्छसि न जानासि । हे कौतुकाविष्टे हे कुतूहलगृहीते । निःश्वसितुं निःश्वासं ग्रहीतुं विस्मृतासि । कौतुकेनैवं व्याक्षिप्तचित्ताभूर्यथोच्छ्वासमपि न गृह्णासीति भावः । अन्तःसंकल्पेन मनोऽध्यवसायेन रचितो यो रतसमागमो मैथुनप्राप्तिस्ततो यत्सुखं सातं तस्य यो रस आन्तरप्रीतिस्तेन निमीलिते मुद्रिते लोचने यस्यास्तस्याः संबोधनम्, लोचनयुगलं समुन्मीलय विकासय । अयं चन्द्रापीडोऽतिक्रामति गच्छति । हे अनङ्गशरप्रहारमूर्च्छिते हे कामबाणाघातनिश्चेतने, रविकिरणनिवारणाय सूर्यतापापनोदायोत्तरीयांशुकपल्लवं शिरसि मस्तके कुरु विधेहि । अयीति कोमलामन्त्रणे । हे सतीव्रतग्रहगृहीते सतीव्रतं पातिव्रत्यं तल्लक्षणो यो ग्रहस्तेन गृहीते, ग्रथिले इत्यर्थः । द्रष्टव्यं द्रष्टुं योग्यमपि चन्द्रापीडमपश्यन्त्यनवलोकयन्ती लोचनयुगलं वञ्चयसि वञ्चनां करोषि । हे अधन्ये हे अभाग्ये, परपुरुषाणां यददर्शनव्रतं तेन हतासि पीडितासि । चन्द्रापीडस्तु न तथाविधः पुरुषो येन दर्शनादेव व्रतभङ्गः स्यादिति भावः । प्रसीद प्रसन्ना भव । हे सखि, उत्तिष्ठोत्थानं कुरु । रतिविरहितं रतिरहितमगृहीतो मकरचिह्नितो ध्वजो येनैवंभूतं साक्षादिव भगवन्तं मकरध्वजं पश्य विलोकय । **अयमिति** । अस्य चन्द्रापीडस्य सितं यदातपत्रं छत्रं तस्यान्तरेणान्तराऽलिकुलं भ्रमरकुलं तद्वन्नीले हरिते शिरसि मस्तकेऽयं मालतीकुसुमशेखरस्तिमिरस्य या शङ्का शङ्कनं तेन निपतितः शशिकरकलाप इव चन्द्ररश्मिसमूह इवाभिलक्ष्यते जनैर्ज्ञायते । तिमिरस्य शशिकरबाध्यत्वात्तच्छङ्कया तद्घातयितुं निपतित इवेत्युत्प्रेक्षा । श्वेतत्वसाम्यान्मालतीकुसुमशेखरस्य चन्द्रकरकलापोपमानम् । **एतदिति** । अस्य कुमारस्यैतत्कपोलतलं गल्लात्परो भाग आभाति शोभते । कीदृशं कपोलस्थलम् । कर्णाभरणस्य या मरकतप्रभा तया श्यामायितं श्यामवदाचरितम् । किमिव । उपरचितो निर्मितो विकचशिरीषकुसुमस्य कर्णपूरो यस्मिन्नेवंभूतमिव । मरकतप्रभायाः श्यामत्वात्तयालंकृतस्य कपोलस्य

---

**टिप्प०**—1 चन्द्रापीडालाभादित्यर्थः ।

---

**पाठा०**—१ अंसावरणे. २ विविधाङ्गवलन; विविधाङ्गभङ्गवलन; विविधाङ्गभङ्गचलच्चलन. ३ सुरत; रति. ४ अधमे. ५ परिहारव्रतेन.

णमणिकिरणकलापच्छलेन हृदयं विविक्षुरभिनवयौवनराग इव बहिः परिस्फुरति । एतदनेन चामरकलापान्तरैरित एव वीक्षितम् । एतत्किमपि वैशम्पायनेन सह समामन्त्र्य दशनमयूखलेखाधवलीकृतदिक्चक्रवालं हसितम् । एषोऽस्य शुकपक्षतिहरितरागेणोत्तरीयांशुकप्रान्तेन बलाहकस्तुरगखुरचलनजन्मानं लग्नमग्रकेशेषु रेणुमपहरति । अयमनेन लक्ष्मीकरकमलकोमलतलः समुत्क्षिप्य तिर्यक्तुरङ्गमस्कन्धे निक्षिप्तश्चरणपल्लवः सलीलम् । अयमनेन च ताम्बूलयाचनार्थमुत्तानिततलो दीर्घाङ्गुलिराताम्रपुष्करकोशशोभी गजेनेव शैवालकवलग्रासलालसः प्रसारितः करः । धन्या सा या लक्ष्मीरिव निर्जितकमलं करतलमस्य वसुंधरासपत्नी ग्रहीष्यति । धन्या च देवी विलासवती सकलमहीमण्डलभारधारणक्षमः ककुभा दिग्गज

---

शिरीषकुसुमकर्णपूरीभावेऽपि तद्वत्त्वं बोध्यमिति भावः । एतस्येति विषये षष्ठी । फलस्येच्छेतिवत् । एतद्विषये योऽभिनवयौवनेनाभिनवतारुण्येन योऽस्मोकं रागः स हारा मुक्ताकलापास्तेष्वन्तर्निविष्टा अन्तःप्रविष्टा येऽरुणमणयः पद्मरागास्तेषां किरणास्त्विषस्तेषां कलापच्छलेन बहिः परिस्फुरति हृदयं चित्तं विविक्षुः प्रवेष्टुमिच्छुरिव बहिः परिस्फुरति बहिः प्रसर्पति । यद्वाभिनवयौवनरागो हृदयं विविक्षुरिव पूर्वोक्तच्छलेन बहिः परिस्फुरति । **एतदिति** । एतद्वस्त्वभिनवमनेन चन्द्रापीडेन चामरकलापान्तरैर्मध्यैरित एवेतः प्रदेश एव वीक्षितमवलोकितम् । अनेन किमप्येतदज्ञातस्वरूपं वैशम्पायनेन सह समामन्त्र्य संभाषणं कृत्वा दशनमयूखलेखाधवलीकृतदिक्चक्रवालं यथा स्यात्तथा हसितम् । **एषोऽस्येति** । एष बलाहकोऽस्य राज्ञः शुकः कीरस्तस्य पक्षतिः पक्षस्तद्वद्धरितरागो नीलरागो यस्मिन्नेवंभूतेनोत्तरीयांशुकप्रान्तेन संव्यानवस्त्रप्रान्तेन । **तुरगखुरचलनजन्मानमिति** । तुरगा अश्वास्तेषां खुराः शफास्तेषां चलनं गमनं तस्माज्जन्मोत्पत्तिर्यस्यैवंविधं रेणुं धूलिमग्रकेशेषु लग्नमपहरति दूरीकरोति । **अनेनेति** । अनेन चन्द्रापीडेन लक्ष्म्या यत्करकमलं तद्वत्कोमलं मृदु तलं यस्य स तथा चरणपल्लवस्तुरङ्गमस्कन्धे तिर्यक्समुत्क्षिप्य तिर्यगुत्पाद्य सलीलं यथा स्यात्तथा निक्षिप्तः स्थापितः । **अयमिति** । अनेन चन्द्रापीडेन ताम्बूलं नागवल्लीदलं तद्याचनार्थमयं करो हस्तः शुण्डा च गजेनेव प्रसारितो विस्तारितः । करं विशिनष्टि—**उत्तानितेति** । उत्तानितं तलं यस्य स तथा । दीर्घा अङ्गुल्यो यस्य स तथा । आ ईषत्ताम्रो रक्तवर्णः पुष्करकोशः कमलकोशस्तद्वच्छोभत इत्येवंशीलः स तथा । पक्षे पुष्करं शुण्डाग्रम् । ताम्बूलपत्राणां तत्साम्येनाह—**शैवेति** । शैवालं शेवालं तस्य कवलो गुडस्तस्य ग्रासो भक्षणं तत्र लालसो लोलुपः । **धन्येति** । सा स्त्री धन्या भाग्यवती यास्य निर्जितकमलं करतलं लक्ष्मीरिव ग्रहीष्यति । अतएव वसुंधरायाः सपत्नीत्युक्तम् । **धन्या चेति** । चकारः पुनरर्थे । देवी विलासवती धन्या महाभाग्यवती । एतदर्थं स्पष्टयन्नाह—**सकलेति** । यया विलासवत्या सकलं यन्महीमण्डलं तस्य यो भारो वीवधस्तस्य

---

**टिप्प०**—1 पुरन्ध्रीणामेवं वर्णनानौचित्यात्कवेरनभिप्रेतोयमर्थः । अस्य वक्षसि हारान्तर्गतरक्तमणीनामयं रक्तिमा नास्ति किन्तु अभिनवो यौवनरागोऽस्य हृदयं प्रवेष्टुमिच्छति परं नाद्यापि प्रवेशं लब्धवान्, अत एव स बहिः स्फुरति । शैशवं पराजित्य नाद्यापि यौवनस्य पूर्णाधिकारोभूदिति सन्धिविशेषो व्यङ्ग्यः । 2 एतद्वस्तु वीक्षितमिति तु टीकाकारस्य घोरमज्ञानम् । अनेन ( चन्द्रापीडेन ) चामरकलापस्य अन्तरैः मध्यप्रदेशैः इत एव मां प्रत्येव एतद् वीक्षितम् । एतदिति दर्शनक्रियायाः परामर्शः । सेयं सविलासमन्मथा कस्याश्चिदुक्तिः । 3 राजकुमारस्य ( चन्द्रापीडस्य ) इत्यर्थः । 4 उत्थाप्य ।

---

**पाठा०**—१ अलकंचामरकलापान्तरैरितविरलत्रीक्षितम्; अनेकचामरकलापान्तरितमस्य वीक्षितम्. २ धवलित. ३ आलग्न. ४ करतल. ५ कोमलदीर्घाङ्गुलिः. ६ कवललालसः; कवलग्रासवाञ्छया. ७ मण्डलधारण.

इव गर्भेण[1] यया[2] व्यूढः । इत्येवंविधानि चान्यानि च वदन्तीनां तासामापीयमान इव लोचनपुटैः, आहूयमान इव भूषणरवैः, अनुगम्यमान इव हृदयैः, अनुबध्यमान[3] इवाभरणरत्नरश्मिरज्जुभिः, उपह्रियमाण इव नवयौवनबलिभिः, शिथिल[4]भुजलताविगलितधवलवलयनिकरे[5] पदे पदे विवाहानल इव कुसुममिश्रै[6]र्लाजाञ्जलिभिरवकीर्यमाणश्चन्द्रापीडो राजकुलसमीपमाससाद ।

क्रमेण च यामावस्थिताभिरनवरतकरटस्थलग[7]लितमदमषीकरीभिरञ्जनगिरिमालामलिनाभिः कुञ्जरघटाभिरन्धकारितदिङ्मुखतया जलधरदिवसायमानमुद्दण्डधवलातपत्रसहस्रसंकटमनेकद्वीपान्तरागतदूतशतसंकुलं[9] राजद्वारमासाद्य तुरङ्गमादवततार । अवतीर्य च करतलेन करे वैशम्पायनमवलम्ब्य पुरः सविनयं प्रस्थितेन वलाहकेनोपदिश्यमानमार्गस्त्रिभुवनमिव पुञ्जीभूतम्, आगृहीतकनकवेत्रलतैः सितवारवाणै[10]: सितकुसुमशेखरैः सितोष्णीषैः[11]

---

धारणे निर्वहणे क्षमः समर्थो गर्भेण गर्भत्वेन व्यूढो वर्धितः । कः कयेव । ककुभा दिशा गर्भेण मध्यभागेन दिग्गज इव व्यूढो धृतः । सोऽपि समग्रमहीभारधारणक्षमः । उपसंहरन्नाह—**इत्येवमिति** । इति समाप्तौ । एवंविधानि पूर्वोक्तस्वरूपाण्यन्यानि चैभ्योऽनुक्तानि वचनानि च वदन्तीनां जल्पन्तीनां तासां स्त्रीणां लोचनपुटैरापीयमान इव । अत्यादरेण वीक्षणं पानमुच्यते । भूषणरवैराभरणध्वनिभिराहूयमान इव निमन्त्र्यमाण इव हृदयैश्चित्तैरनुगम्यमान इवानुयायमान इव । आभरणरत्नानां रश्मयः किरणास्त एव रज्जवस्ताभिरनुबध्यमान इव। नवयौवनान्येव बलयस्तैरुपह्रियमाणः पूज्यमान इव । शिथिलाः श्लथा या भुजलता बाहुलतास्ताभ्यो विगलितानि च्युतानि धवलवलयनिकरः श्वेतकटकसमूहो यस्मिन्नेवंविधे[2] पदे पदे प्रतिपदं विवाहानल इवोद्वाहवह्निरिव कुसुममिश्रैः पुष्पसंपृक्तैर्लाजाञ्जलिभिरवकीर्यमाणो वर्धाप्यमानश्चन्द्रापीडो राजकुलसमीपमाससाद प्राप ।

क्रमेण परिपाट्या राजद्वारमासाद्य प्राप्य तुरङ्गमादश्वादवततारोत्तीर्णः । अथ राजद्वारं विशिनष्टि—**यामेति** । यामावस्थिताभिः सेवावसरस्थिताभिः । अनवरतं निरन्तरं करटस्थलाद्गण्डस्थलाद्गलितो यो मदो दानं स एव मषीनामा[3]म्बुकर्दमस्तं कुर्वन्तीति कार्यस्ताभिः । अञ्जनगिरीणां या माला पङ्क्तिस्तद्वन्मलिनाभिर्मलीमसाभिः कुञ्जरघटाभिर्हस्तिसंहतिभिरन्धकारितानि यानि दिङ्मुखानि तेषां भावस्तत्ता तया जलधरदिवसायमानं मेघदिनमिवाचरमाणमुद्दण्डं प्रचण्डं यद्धवलातपत्राणां श्वेतच्छत्राणां सहस्रं तेन संकटं संकुलम् । अनेके द्वीपान्तराद्देशान्तरादागता ये दूताः संदेशहारकास्तेषां शतानि तैः संकुलं व्याप्तम् । अन्वयस्तु प्रागेवोक्तः । च पुनरर्थे । अवतीर्याश्वादुत्तीर्य करतलेन हस्ततलेन कृत्वा करे हस्ते वैशम्पायनं मन्त्रिसुतमवलम्ब्यावलम्बनीकृत्य पुरोऽग्रे सविनयं विनयसहितं यथा स्यात्तथा प्रस्थितेन गन्तुं प्रवृत्तेन वलाहकेनोपदिश्यमानो निर्नेयमानो

---

**टिप्प०**—1 गर्भेण ययाऽयमूढः । इत्येव पाठः । अयम् ऊढो धारितः । 2 निकरैरित्येव पाठः । वासनोद्रेकात् शिथिलाभ्यो भुजलताभ्यो विगलितो धवलवलय(हीरकादिकङ्कण)समूहो येषु तादृशैः कुसुममिश्रैर्लाजाञ्जलिभिर्विवाहानल इवाऽवकीर्यमाणः । पाणिग्रहणसमयेपि अग्नेरुपरि लाजाक्षेपः, राजागमनेपि लाजाक्षेप इति द्वयोः साम्यम् । तथा च कालिदासोपि–'अवाकिरन् बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः' । 3 मदमसीपङ्ककरीभिः । इत्येव पाठः । मदा एव मसीपङ्काः तेषां करीभिः कारिणीभिः ।

---

**पाठा०**—१ गर्भेणायमूढः. २ यया च. ३ निबध्यमानः. ४ शिथिलित. ५ निकरैः. ६ मिश्र. ७ विगलित. ८ मषीपङ्ककरीभिः; मषीपट्टधराभिः. ९ समाकुलम्. १० वाणधारिभिः. ११ सिताङ्गरागैः.

सितवेषपरिग्रहतया श्वेतद्वीपसंभवैरिव कृतयुगपुरुषैरिव महाप्रमाणैर्दिवानिशमालिखितैरिवोत्कीर्णैरिव तोरणस्तम्भनिषण्णैर्द्वारपालैरनुज्झितद्वारदेशम्, अनेकसंयवनचन्द्रशालाविटङ्कवेदिकासंकटशिखरैरभ्रंकषैरपहसितसितकैलासशोभैरमलसुधावदातैः सप्रालेयशैलमिव महाप्रासादैरनेकवातायनविवरविनिर्गतयुवतिकिरणसहस्रतया कनकशृङ्खलाजालकेनेवोपरि विस्तीर्णेन विराजमानम्, अन्तर्गतायुधनिवहाभिराशीविषकुलसंकुलाभिः पातालगुहाभिरिवातिगम्भीराभिरायुधशालाभिरुपेतम्, अवलाचरणालक्तकरसरक्तमणिशकलैः शिखरनिलीनशिखिकुलकृतकेकारवकलकलैः क्रीडापर्वतकैरुपशोभितम्, उज्ज्वलवर्णकम्बलावगुण्ठितकनकपर्याणाभिः प्रलम्बचामरकलापचुम्बितचलकर्णपल्लवाभिः कुलयुवतिभिरिवोपारूढशिक्षाविनयनिभृता-

---

मार्गः पन्था यस्यैवंभूतो राजकुलं विवेशेति दूरेणान्वयः। अत्र कुलं गृहम्। 'कुलं गृहेऽपि ताटङ्के कुबेरे चैव कुण्डले' इत्यनेकार्थः। पुञ्जीभूतमिव राशीभूतमिव त्रिभुवनम्। आगृहीतात्ता कनकवेत्रलता सुवर्णवेष्टिता वेत्रयष्टिर्यैः। सितः शुक्लो वारवाणः कञ्चुको येषां तैः। सितानि यानि कुसुमानि तेषां शेखरो येषां तैः। सितः श्वेत उष्णीषो मूर्धवेष्टनं येषां तैः। सितो यो वेषो नेपथ्यं तस्य परिग्रहः स्वीकारस्तस्य भावस्तत्ता तया। श्वेतद्वीपसंभवैरिव। श्वेताभिधानद्वीपे सर्वः श्वेतवर्णोपयुक्तः स्यादित्यभिप्रायः। कृतयुगपुरुषैरिव कृतयुगः सत्ययुगस्तत्रोत्पन्नैः पुरुषैर्नरैरिव। महाप्रमाणैरत्युच्चैर्दिवानिशमहर्निशमालिखितैरिव चित्रितैरिव। उत्कीर्णैरिवोत्कीर्यकर्षितैरिव। तोरणं प्रसिद्धं तस्य यः स्तम्भस्तत्र निषण्णैः स्थितैस्तदवष्टम्भेनावस्थितैरेवंभूतैर्द्वारपालैर्दौवारिकैरनुज्झितोऽपरित्यक्तो द्वारदेशो यस्य तत्। पुनः कीदृशम्। विराजमानं शोभमानम्। कैः कैः। प्रासादैर्देवभूपानां गृहैः। कीदृशैः। **अनेकेति।** अनेकानि संयवनानि, चतुःशालानि, चन्द्रशालाः शिरोगृहाणि विटङ्कः कपोतपालिका स चोन्नतप्रदेशः, वेदिकाः प्रसिद्धाः, ताभिः संकटानि संकीर्णानि शिखराणि गृहप्रान्ताग्राणि येषां तैरभ्रंकषैर्व्योमव्यापिभिरपहसितापहासास्पदीकृता सितकैलासस्य शोभा दीप्तिर्यैः। अमला निर्मला या सुधा तयावदातैः शुभ्रैरेवंभूतैर्महाप्रासादैर्देवभूपानां गृहैः सप्रालेयशैलमिव हिमोपयुक्तगिरिमिव सुधाधवलितत्वेनोच्चत्वेन च द्वारदेशस्य शैलसाम्यम्। अनेके ये वातायना गवाक्षास्तेषां विवराणि रन्ध्राणि तेषु विनिर्गतं यद्युवतीनां स्त्रीणां किरणसहस्रं तस्य भावस्तत्ता तया। कनकशृङ्खलाजालकेनेवोपरिविस्तीर्णेन विस्तृतेन विराजमानमित्यर्थः। पुनः कीदृशम्। अतिगम्भीराभिरलब्धमध्याभिरायुधशालाभिः शस्त्रशालाभिरुपेतं सहितम्। कीदृशीभिः। अन्तर्गतो मध्यगत आयुधनिवहः शस्त्रसमूहो यासु ताभिः। काभिरिव। आशीविषाः सर्पास्तेषां कुलानि तैः संकुलाभिर्व्याप्ताभिः पातालगुहाभिरिव बलिवेश्मकन्दराभिरिव। पुनः प्रकारान्तरेण तदेव विशेषयन्नाह—**अवलेति।** अवलाचरणानां वनितापादानां योऽलक्तकरसो यावकरसस्तेन रक्तानि मणिशकलानि रत्नखण्डानि येषु तैः, शिखरनिलीनैः सानुमध्यवर्तिभिः शिखिकुलैर्मयूरसमूहैः कृतस्य विहितस्य केकारवस्य कलकलः कोलाहलो येषु तैरेवंभूतैः क्रीडापर्वतकैः क्रीडाचलैरुपशोभितम्। **उज्ज्वलेति।** उज्ज्वलवर्णो यः कम्बलो रल्लकस्तेनावगुण्ठितमाच्छादितं कनकपर्याणं सुवर्णपल्ययनं यासु ताभिः। प्रलम्बानि यानि चामराणि तेषां कलापः समूहस्तेन चुम्बिताः सहिताश्चलाः कर्णपल्लवा यासां ताभिः।

---

**टिप्प०**—1 'संजवन' इत्येव पाठः 'संजवनं त्विदम्। चतुःशालम्' इत्यमरः। 2 हिमशैलैः सहितमिव। 3 भूषणानां यत्किरणसहस्रमिति बोध्यम्। न किल युवतयो रवयः। 4 अयमपि भ्रमः। विनिर्गतं युवतिभूषणकिरणसहस्रं यस्मिन् तत्, तत्तया, इति बहुव्रीह्युत्तरं तल्प्रत्यय उचितः। राजभवनस्य गवाक्षविवरेभ्यो भूषणकिरणा निर्गच्छन्ति, ते च कनकशृङ्खलावत्प्रतीयन्त इत्युत्प्रेक्षाशयः।

---

**पाठा०**—१ संयमन; संजवन. २ शालिका. ३ अपहसितकैलासशैलशोभैः, उपहसितकैलासशिखरशोभैः. ४ शैलमिव. ५ युवतिभूषणकिरण. ६ वितानेन; विततेन; वितानेन. ७ प्रचल; लम्ब. ८ कलापचल. ९ उपरूढ; उपगूढ. १० विनयेन निभृताभिः.

भिर्यामकरेणुकाभिरशून्यकक्षान्तरम्, आलानस्तम्भनिषण्णेन च नवजलधरघोषगम्भीरमनुगतवीणावेणुरवरम्यमास्फालितघर्घरिकाघर्घरमनवरतसंगीतकमृदङ्गध्वनिमामीलितलोचनत्रिभागेण वामदशनकोटिनिषण्णहस्तेन निश्चलकर्णतालेनाकर्णयता सलीलमुभयपार्श्वावलम्बिवर्णकम्बलतया विन्ध्यगिरिणेवाविष्कृतधातुविचित्रितपक्षसंपुटेनाधोरणगीतानन्दकृतमन्द्रकण्ठगर्जितेन मदजलशबलशङ्खशोभितश्रवणपुटेन रजनिकरविम्बचुम्बिसंवर्तकाम्बुदवृन्दविडम्बकेन कर्णावलम्बिना काञ्चनमयेन कृतकर्णपूरमिवाङ्कुशेन मुखमुद्वहता मदजलमलिनेन द्वितीयेनेव कर्णचामरेण कपोलतलदोलायमानेन मधुकरकुलेनालंक्रियमाणेनात्युदग्रतया पूर्व-

---

उपारूढौ प्राप्तौ यौ शिक्षाविनयौ ताभ्यां निभृताभिर्भृताभिः। तत्र शिक्षा संज्ञादिज्ञानम्, विनयो नम्रता। अत एव कुलयुवतिभिरिव ता अपि शिक्षाविनयाभ्यां निभृताः स्युः। एवंविधाभिर्यामकरेणुकाभिश्चतुष्किकाहस्तिनीभिरशून्यं कक्षान्तरं गृहान्तरं यस्य तत्। **आलानेति।** आलानस्तम्भो गजबन्धनस्तम्भस्तत्र निषण्णेन स्थितेन गन्धमादननाम्ना गन्धहस्तिना सनाथीकृत एकदेशो यस्येति दूरेणान्वयः। अथ गजं विशेषयन्नाह—**नवेति।** नवजलधरो नवीनमेघस्तस्य यो घोषो ध्वनिस्तद्वद्गम्भीरम्। अनुगतः सहितो यो वीणावेणुरवस्तेन रम्यं मनोहरम्। आस्फालिता वादिता या घर्घरिका वाद्यविशेषस्तस्या घर्घरम्। घर्घरशब्दमिश्रमित्यर्थः। अनवरतं निरन्तरम्। गीतनृत्यवाद्यत्रयं प्रेक्षणार्थे प्रयुक्तं संगीतकमुच्यते। तस्य यो मृदङ्गध्वनिर्मुरजरवस्तं सलीलं यथा स्यात्तथाकर्णयता शृण्वतात एवामीलितो निमीलितो लोचनत्रिभागो नेत्रत्रिभागो येन स तथा तेन। यद्वा गजानामवलोकनस्वभावोऽयमिति। **वामेति।** वामदशनकोटावपसव्यदन्ताग्रे निषण्णः स्थितो हस्तो येन (यस्य) तथा। अयमपि गजस्य स्वभावः। निश्चलः स्थिरः कर्णतालो यस्य स तथा तेन, केवलमेतद्गीतश्रवणमाहात्म्यम्। **उभयेति।** उभयपार्श्वेऽवलम्बत इत्येवंशीलो यो वर्णकम्बलः परिस्तोमस्तस्य भावस्तत्ता तया विन्ध्यगिरिणेव जलवालकेनेव। **आविष्कृतेति।** आविष्कृतो यो धातुर्गैरिकं तेन विचित्रितं पक्षसंपुटं यस्य। गजस्यापि कुथेनाच्छादितत्वेन तस्योपमानम्। विचित्रितपक्षसंपुटत्वादिति भावः। **आधोरणेति।** आधोरणा हस्तिपकास्तेषां गीतं गानं तस्माद्य आनन्दः प्रमोदस्तेन कृतं विहितं मन्द्रं मधुरं कण्ठगर्जितं येन स तथा तेन। **मदेति।** मदजलं दानजलं तेन शबलः कर्बुरो यः शङ्खो भालभ्रुवोरन्तरं तेन शोभितं विराजितं श्रवणपुटं कर्णसंपुटं यस्य स तथा तेन। 'शङ्खो निधौ ललाटास्थ्नि कम्बौ' इत्यमरः। **रजनीति।** रजनिकरबिम्बं चन्द्रबिम्बं चुम्बन्तीत्येवंशीला ये संवर्तकाम्बुदा लोकविनाशकालीना मेघास्तेषां वृन्दं समूहस्तद्विडम्बयत्यनुकरोति यः स तथा तेन। 'शेषाद्विभाषा' इति कप्प्रत्ययः। अनेन स्वच्छत्वेन वर्तुलत्वेन च शङ्खस्य चन्द्रसादृश्यं हस्तिनो जलधरसाम्यं च स्पष्टीकृतम्। **कर्णेति।** कर्णावलम्बिना काञ्चनमयेन स्वर्णनिष्पन्नेनाङ्कुशेन सृणिना कृतकर्णपूरमिव विहितश्रोत्राभरणमिव मुखमाननमुद्वहता धारयता। पुनः कीदृशेन। मधुकरकुलेन भ्रमरसमूहेन कृत्वालंक्रियमाणेन। विभूष्यमाणेन। भ्रमरकुलं विशिनष्टि—**कपोलेति।** कपोलतलं गल्लात्परो भागस्तत्र दोलायमानेनेतस्ततो भ्रममाणेन। चञ्चलत्वसाम्यादुपमानान्तरमाह—**कर्णेति।** द्वितीयेनापरेण कर्णचामरेणेव। शुक्लत्वशङ्कां निराकर्तुमाह—**मदेति।** मदजलं दानजलं तेन मलिनेन कृष्णेन। एतेन वर्णेनाप्युपमानस्य साम्यमाविष्कृतम्। तदवयवानां सगुणत्वं वर्णयितुमाह—**पूर्वेति।** अत्युदग्रतयात्युच्चतया पूर्वकायस्य

---

**टिप्प०**—1 कुलयुवतीनां पक्षे शिक्षा गार्हस्थ्यपरिचालनचातुर्यानुकूला बोध्या। 2 प्रतिप्रहरं रक्षाप्राहरिकरूपेण बन्धनीयाः करेणुका यामकरेणुकाः।

---

**पाठा०**—१ यामक. २ जलधरगर्जितघोष. ३ अतनु. ४ अनवरतमृदुमृदङ्गध्वनिमामीलित; अनवरतसंगीतमृदुमृदङ्गध्वनिमतिमनोहरं किञ्चिदामीलित. ५ संगीत. ६ ध्वानम्. ७ पार्श्वप्रलम्बित. ८ विचित्र. ९ चुम्बितावर्तक; चुम्बिनावर्तक; चुम्बितसंवर्तक. १० अम्बुदविडम्बकेन. ११ कर्णान्तलम्बिना.

कायस्य वामनतया[1] च जघनभागस्य पातालादिवोत्तिष्ठता[2] निशासमयेनेव परिस्फुरत्सार्धचन्द्रनक्षत्रमालेन शरदारम्भेणेव प्रकटितारुणचारुपुष्करेण वामनरूपेणेव कृतत्रिपदीविलासेन स्फटिकगिरितटेनेव लग्नसिंहमुखप्रतिमेन प्रसाधितेनेवालोल[3]कर्णपल्लवाहतमुखेन गन्धमादननाम्ना गन्धहस्तिना सनाथीकृतैकदेशम्, उज्ज्वलपट्टकम्बलपटप्रावारितपृष्ठैश्च रसितमधुरघण्टिकारवमुखरकण्ठैर्मञ्जिष्ठालोहितस्कन्धकेसरवालैर्वनगजरुधिरपाटलसटैरिव केसरिभिः पुरोनिहितयवसराशिशिखरोपविष्टमन्दुरापालैरासन्नमङ्गलगीतध्वनिदत्तकर्णैरन्तःकपोलधृतमधु-

---

पुरोभागस्य जघनभागे वामनत्वं गजस्य गुण इत्याशयेनाह—**वामनेति** । वामनतया ह्रस्वतया जघनभागस्य पश्चाद्भागस्य । एतन्निमित्तादेवोत्प्रेक्षामाह—**पातालेति** । पातालाद्रसातलाद्बडवामुखादुत्तिष्ठता प्रादुर्भवता । निशासमयेनेव विभावरीकालेनेव । कीदृशेन । परिस्फुरन्ती दीप्यमानार्धचन्द्रोऽष्टमीचन्द्रस्तदाकृतिना मध्यमणिना सहवर्तमाना नक्षत्रमालाभरणं यस्मिन्स तेन । पक्षे सार्धचन्द्रा नक्षत्रमाला तारापङ्क्तिर्यस्मिन्निति विग्रहः । पुनस्तमेव विशिनष्टि—**प्रकटितेति** । प्रकटितमाविष्कृतमरुणं रक्तमतएव चारु मनोहरं पुष्करं शुण्डाग्रं येन स तथा तेन । केनेव । शरदारम्भेणेव घनात्ययप्रारम्भेणेव । तत्पक्षे पुष्कराणि कमलानि । 'राजीवपुष्करे' इति कोशः । शेषं पूर्ववत् । पुनर्विशेषतो विशेषयन्नाह—**वामनेति** । वामनरूपेणेव वामनावतारेणेव । उभयसाम्यमाह—**त्रिपदीति** । कृतो विहित एकं पादमुत्क्षिप्य पादत्रयेऽङ्गावस्थानं त्रिपदी तस्या विलासो विभ्रमो येन स तथा तेन । पक्षे त्रिपदीति स्वर्गमृत्युपाताललक्षणी तस्यां विलासो विलसनं येनेति भावः । **स्फटिकेति** । स्फटिकगिरिः स्फटिकाचलस्तस्य तटेनेव वप्रेणेव । उभयं विशिनष्टि—**लग्नेति** । लग्ना सिंहमुखा प्रतिमा गजस्य दन्तबन्धो[4] यस्य स तेन । 'प्रतिमा प्रतिरूपके । गजस्य दन्तबन्धे च' इत्यनेकार्थः । पक्षे लग्ना प्रतिबिम्बिता सिंहमुखस्य प्रतिमा प्रतिरूपकं यस्मिन्स तेन । अतएव[5] प्रसाधितेनेव स्वीकृतभूषणपरिग्रहेणेव । लोलौ चपलौ यौ कर्णपल्लवौ ताभ्यामाहतं मुखं येन (यस्य) स तेन । पक्षे कर्णपल्लवः । शेषं पूर्ववत् । अन्वयस्तु प्रागेवोक्तः । पुनः प्रकारान्तरेण विशेषयन्नाह—**उज्ज्वलेति** । उज्ज्वलाः श्वेता ये पट्टकम्बलाः पट्टसूत्रनिर्मिताः । 'पट्' (?) इति प्रसिद्धा वा । तेषां पटास्तैः प्रावारितान्याच्छादितानि पृष्ठानि येषां तैः । **रसितेति** । रसितानां रणितानां मधुरः[6] श्रोत्रसुखदो यो घण्टिकानां लघुकिङ्किणीनां रवः स्वरस्तेन मुखरो वाचालः कण्ठो येषां तैः । **मञ्जिष्ठेति** । मञ्जिष्ठया प्रसिद्धया लोहिता रक्तीकृताः स्कन्धकेसराणां वाला येषां तैः । रक्तवालसाम्यादाह—**वनेति** । वनगजानामरण्यहस्तिनां रुधिरेण पाटलाः श्वेतरक्ताः सटा येषामेवंभूतैः केसरिभिरिव हर्यक्षैरिव । पुरो निहितोऽग्रे न्यस्तो यो यवसराशिस्तृणसमूहस्तस्य शिखरमग्रं तत्रोपविष्टा मन्दुरापाला वाजिशालारक्षका येषां तैः । 'वाजिशाला तु मन्दुरा' इति कोषः । **आसन्नेति** । आसन्नः समीपवर्ती यो

---

टिप्प०—1 अयमपि भ्रममार्गः । परिस्फुरन्ती शोभमाना सार्धचन्द्रा ( अर्धचन्द्राकारललाटभूषणसहिता ) नक्षत्रमाला सप्तविंशतिमहामौक्तिकमाला यस्य तेन, ( इति गजपक्षे ) स्पष्टोऽर्थः । 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरः । 2 वस्तुतस्तु 'त्रिपदी पादबन्धनम्' । 'त्रिपदीच्छेदिनामपि' इति कालिदासः । तथा च कृतः त्रिपद्या ( पादबन्धनशृङ्खलया ) विलासः क्रीडा येन इत्यर्थः । 3 लेखनप्रकारोऽनुचितः । तात्पर्यं ग्राह्यम् । 4 लग्ना सिंहस्येव मुखम् अग्रभागो यस्याः ईदृशी प्रतिमा दन्तबन्धनशृङ्खला यस्य तेनेति बोध्यम् । 5 भ्रामकमिदम् । प्रसाधितः कृतशृङ्गारो हि प्रसाधनार्थं धृताभ्याम् आलोलाभ्यां कर्णस्थपल्लवाभ्यां आहतं ( वायुवशात् ) मुखं यस्य, ईदृशो भवति । अयं तु-आहतं गजस्वभावात् भ्रमरापसारणनिमित्तं वा आलोलाभ्यां दीर्घकर्णाभ्यां मुखं येन स इत्यर्थः । 6 रसितानामिति विशेषणं यदा घंटिकानां तदा मध्ये मधुर इति स्वरस्य कथं विशेषणं स्यात् । अतः–रसितानां शब्दायमानानां मधुर( मनोहर )घंटिकानां यो रव इति समासो विधेयः ।

---

पाठा०—१ अतिवामनतया. २ पातालतलादिव. ३ लोध्र. ४ प्रावृत; प्राबरित. ५ वालपल्लवैर्निहतगज.

रसरसंलुलितलाजकवलैर्भूपालवल्लभैर्मन्दुरागतैस्तुरङ्गमैरुद्भासितम्, अधिकरणमण्डपगतैश्चार्यवेषैरत्युच्चवेत्रासनोपविष्टैर्धर्ममयैरिव धर्माधिकारिभिर्महापुरुषैरधिष्ठितम्, अधिगतसकलग्रामनगरनामभिरेकभवनमिव जगदखिलमालोकयद्भिरालिखितसकलभुवनव्यापारतया धर्मराजनगरव्यतिकरमिव दर्शयद्भिरधिकरणलेखकैरालिख्यमानशासनसहस्रम्, अभ्यन्तरावस्थितनरपतिनिर्गमप्रतीक्षणपरेण च स्थानस्थानेषु बद्धमण्डलेन कनकमयार्धचन्द्रतारागणशबलचर्मफलकैर्निशासमयमिव दर्शयता स्फुरितनिशितकरवालकरप्ररोहकरालितातपेनैकश्रवणपुटघटितधवलदन्तपत्रेणोर्ध्वबद्धमौलिकलापेन धवलचन्दनस्थासकखचितभुजोरुदण्डेन बद्धा-

---

मङ्गलगीतध्वनिस्तत्र दत्ता न्यस्ताः कर्णा यैः । **अन्तरिति** । कपोलयोरन्तर्मध्ये धृता स्थापिता मधुरा मिष्टाः सरसा रसोपेता[1] लुलिता हस्तेन मर्दिता लाजा आर्द्रतण्डुलाः । 'लाजाः स्युरार्द्रतण्डुलाः' इति कोशः । तेषां कवला गुडेरका येषां तैः । **भूपेति** । भूपाला राजानस्तेषां वल्लभैः प्रीत्युत्पादकैर्मन्दुरागतैर्वाजिशालाप्राप्तैरेवंविधैस्तुरङ्गमैरश्वैरुद्भासितं शोभितम् । **अधीति** । अधिक्रियते जनोऽस्मिन्नित्यधिकरणमण्डपस्तत्र गतैः । आर्यः प्रशस्यो वेषो नेपथ्यं येषां तैः । अत्युच्चं यद्वेत्रासनं तत्रोपविष्टैः स्थितैर्धर्ममयैरिव धर्मनिष्पन्नैरिव धर्माधिकारिभिर्महापुरुषैरधिष्ठितमाश्रितम् । पुनः कीदृशम् । यस्य यस्य कार्यस्य यदधिकरणं तस्मिन्ये लेखकास्तैरालिख्यमानं लिपीक्रियमाणं शासनसहस्रमाज्ञापत्राणां दशशतं यस्मिन् । अथ लेखकान्विशिनष्टि—**अधीति** । अधिगतं ज्ञातं सकलग्रामनगराणां नामाभिधानं यैस्ते तथा तैः । एकभवनमिवैकगृहमिवाखिलं समग्रं जगद्विष्टपमालोकयद्भिर्विलोकयद्भिः । **आलिखितेति** । आलिखितो लिपीकृतः सकलभुवनस्य त्रिविष्टपस्य यो व्यापारो व्यवहारस्तस्य भावस्तत्ता तया । धर्मराजो यमस्तस्य नगरं संयमिनीति ख्यातं तस्याव्यतिकरमतिशयं दर्शयद्भिः । एतेन चित्रगुप्तलिखितोत्कृष्टलिपीकरणेन यमनगरापेक्षयाप्यत्र सातिशयत्वं सूचितमिति भावः । पुनः कीदृशम् । वक्ष्यमाणेन सेवकजनेनोत्पादिनाधिष्ठितमिति सर्वत्रान्वयः । अथ सेवकजनं विशिनष्टि—**अभ्यन्तरेति** । अभ्यन्तरे राजसमीपे येऽवस्थिता नरपतयो राजानस्तेषां निर्गमो बहिरागमनं तस्य प्रतीक्षणं प्रतीक्षा तत्र परेणासक्तेन । स्थानस्थानेषु स्थानानि च स्थानानि च स्थानस्थानानीति कर्मधारयस्तेषु बद्धं मण्डलं येन स तेन । **कनकेति** । कनकमयः सुवर्णनिष्पन्नो योऽर्धचन्द्रोऽर्धचन्द्रचित्रं तारागणश्च श्वेतबिन्दुचित्रं ताभ्यां शबलानि कर्बुराणि चर्मफलकानि तैः । चन्द्रतारकानिमित्तवत्त्वादाह—**निशेति** । निशासमयमिव रात्रिकालमिव दर्शयतान्येभ्यो ज्ञापयता । **स्फुरितेति** । स्फुरितं देदीप्यमानं निशितं तीक्ष्णं यत्करवालं खड्गं तस्य ये कराः किरणास्तेषां प्ररोहा अङ्कुरास्तैः करालितो दन्तुरित आतपो दिनकरालोको येन स तथा तेन । एकश्रवणपुट एककर्णपुटे घटितं संयोजितं धवलं दन्तपत्रं येन स तथा तेन । देशाचारोऽयं यदेककर्णे दन्तपत्रपरिधानम् । ऊर्ध्वं बद्धो नद्धो मौलिकलापः केशकलापो येन स तथा तेन । **धवलेति** । धवलं यच्चन्दनं तस्य स्थासका आभरणविशेषास्तैः[3] खचिता नद्धा भुजोरुदण्डा बाहुदण्डा यस्य स तेन । **बद्धासीति** ।

---

**टिप्प०**—1 गुडेन आर्द्रीकृताः इत्यर्थो बोध्यः । गुडमिश्रिता लाजग्रासाः चाञ्चल्यवशान्मा निपातयन्त्विति सेवकैर्मुखे ध्रियन्त इति तुरगस्वभावः । 2 आलिखितसकलभुवनव्यापारत्वरूपं द्वयोः समानधर्मत्वमेवेति नातिशयः । तस्मात् धर्मराजनगरस्य व्यतिकरं व्यापारं संबन्धं वेत्यर्थः । यमनगरलेखकैः सह अधिकरण( कचहरी )लेखकानां साम्येन एतेषां क्रूरतोपहासश्चातुर्येण ध्वनितो ग्रन्थकृता । 3 इदमप्यज्ञानं टीकाकृतः । चन्दनलिप्तहस्तस्य प्रतिच्छन्दः स्थासकः । 'थापा' इति भाषा ।

---

**पाठा०**—१ लवलुलित; लवविलुलित. २ जम्बाल. ३ ग्रामखर्वटनगर; नगरखेटखर्वट; खेटखर्वट. ४ अधिकार. ५ निर्गमन. ६ परेण स्थाने स्थाने. ७ तारागणशतशबलैः. ८ घटितानेकदन्त.

सिधेनुकेनान्ध्रद्रविडसिंहलप्रायेण सेवकजनेनास्थानमण्डपगतेन च यथोचितासनोपविष्टेन प्रसारयता दुरोदरक्रीडामभ्यस्यताष्टापदव्यापारमास्फालयता परिवादिनीमालिखता चित्रफलके भूमिपालप्रतिबिम्बमाबध्नता काव्यगोष्ठीमातन्वता परिहासकथां विन्दता बिन्दुमतीं चिन्तयता प्रहेलिकां भावयता नरपतिकृतकाव्यसुभाषितानि पठता द्विपदीं[1] गृह्णता कविगुणानुत्किरता[2] पत्रभङ्गानालपता वारविलासिनीजनमाकर्णयता वैतालिकगीतम्[3] अनेकसहस्रसंख्येन धवलोष्णीषपटाश्लिष्टविकटकिरीटसंकटशिरसा सनिर्झरशिखरलग्न[4]बालातपमण्डलेनेव कुलपर्वतचक्रवालेन मूर्धाभिषिक्तेन सामन्तलोकेनाधिष्ठितम्, आस्थानोत्थितभूमिपालसंवर्तितानां च कुथानां रत्नासनानां च राशिभिरनेकवर्णैरिन्द्रायुधपुञ्जैरिव विराजितसभा-

---

वद्धा । कथ्यामिति शेषः । असिधेनुका क्षुरिका येन । नानादेशपरिग्रहादाह—**आन्ध्रेति** । आन्ध्रस्त्रिलिङ्गः, द्रविडो द्राविडदेशः, सिंहलः सिंहलद्वीपम्, तत्प्रायेण तत्सदृशेन । एतद्देशोद्भवाः प्रायो बाहुल्येन सन्ति यस्मिन्निति वा । स तेन सेवकजनेन । सेवकसेवकेनेत्यर्थः । इतः परं सामन्तविशेषणानि—आस्थानमण्डपो मध्यमण्डपस्तत्र गतेन प्राप्तेन यथोचितानि यथायोग्यानि यान्यासनानि विष्टराः तेषूपविष्टेनासेदुषा । किं कुर्वता । दुरोदरक्रीडां द्यूतक्रीडां प्रसारयता विस्तारयता । अष्टापदमभ्यस्यताभ्यासं कुर्वता । अष्टापदं[1] शारिफलम् । नयपिटकमित्यन्ये । तस्य व्यापारम् । आस्फालयता वादयता परिवादिनीं वीणाम् । चित्रफलक आलेख्यपट्टके भूमिपालो राजा तस्य प्रतिबिम्बं प्रतिरूपमालिखता लिपीकुर्वता । **काव्येति** । काव्यगोष्ठीमाबध्नता । काव्यश्रवणार्थं स्वस्योपवेशनेन जनबन्धं कुर्वतेत्यर्थः । परिहासकथामुपहासकारिवचनरचनामातन्वता विस्तारयता । बिन्दुमतीं विचित्रां[2] लिपिं विन्दता प्राप्नुवता । प्रहेलिकां पूर्वोक्तां चिन्तयता ध्यायता । नरपतिना राज्ञा कृतानि विरचितानि यानि काव्यसुभाषितानि काव्यसूक्तानि तानि भावयता चेतसि भावनां कुर्वता । द्विपदीं पदद्वयात्मिकां[3] पठता पाठं कुर्वता । कविगुणान्नवीनकाव्यकर्तॄणां गुणांस्तत्कालकाव्यकरणादिरूपान्गृह्णता ग्रहणं कुर्वता । पत्राणि केतकीसंबन्धीनि तेषां भङ्गान्रचनाविशेषानुत्किरतोत्कीर्णं[4] कुर्वता । वारविलासिनीजनं वारयोषिज्जनमालापयता संभाषयता । वैतालिका बोधिजनाः सुभाषितपाठका बन्दिनो वा तेषां गीतं गानमाकर्णयता शृण्वता । **अनेकेति** । अनेकानि सहस्राणि संख्या परिमाणं यस्य स तेन । **धवलेति** । धवलः श्वेतो य उष्णीषपटो मूर्धवेष्टनपटस्तेनाश्लिष्टान्यालिङ्गितानि विकटानि विपुलानि किरीटानि कोटीराणि तैः संकटं संकीर्णं शिरो यस्य स तेन । उष्णीषस्य श्वेतत्वात्किरीटस्य मणिप्रभया रक्तत्वाच्च श्वेतरक्तत्वसाम्यादुत्प्रेक्षामाह—**सेति** । सनिर्झरं निर्झरैः सहवर्तमानं यच्छिखरं शृङ्गं तत्र लग्नं बालातपस्य मण्डलं यस्मिन्नेवंभूतेन कुलपर्वतचक्रवालेनेवेदृशेन मूर्धाभिषेकेण कृतपट्टाभिषेकेण सामन्तलोकेन स्वदेशसमीपवर्तिराजसमूहेनाधिष्ठितमिति प्रागुक्तमेव । **आस्थानेति** । आस्थानादुपवेशनस्थलादुत्थितो यो भूमिपालो नृपतिस्तस्मा[5]त्संवर्तितानां समूहैरिवेन्द्रायुधपुञ्जैरिवेन्द्रधनुःसमूहैरिव विराजितः शोभितः सभापर्यन्तः संसत्प्रान्तो यस्य तत् । पुनः कीदृशम् । अनवरतं निरन्तरं वारविलासिनीनां जनेनागच्छता निर्गच्छता चाकुलितं व्याकुलीभूतम् । अथ

---

**टिप्प०—1** 'चौपड' इति भाषा । 2 पद्यवर्णसंख्यया बिन्दवो लिख्यन्ते तैः पद्यस्य परिज्ञानं बिन्दुमती । यथा–०ा०ः।ि०००ःृ०ःौ ( वागर्थाविव संपृक्तौ ) । 3 पदद्वयात्मिकां गाथाम्, इति वाच्यम् । 4 अग्रसंबन्धेन–वारविलासिनीनां कपोलादिषु चन्दनादिना पत्ररचनां कुर्वतेत्यर्थो वा । 5 इदमपि भ्रामकम् । आस्थानादुत्थितेषु भूमिपालेषु ( सामन्तेषु ) संवर्तितानां भृत्यैः संकोचितानाम् ('तह' 'घडी' किये हिन्दी ) कुथानां रत्नासनानां च समूहैः, अनेकवर्णैः इन्द्रधनुःसमूहैरिव शोभितः सभापर्यन्तो यस्य तत् ।

---

**पाठा०—१** द्विपदीः. २ उत्कीर्यता. ३ गीतिम्. ४ आलग्न.

पर्यन्तम्, [1]अमलभूमिसंक्रान्तमुखनिवहप्रतिबिम्बतया विकचकमलपुष्पप्रकरमिव संपादयता गतिवशरणितनूपुर[2]पारिहार्यरशनास्व[3]नमुखरेण [4]स्कन्धावसक्तकनकदण्डचामरेण निर्गच्छता प्रविशता चानवरतं [5]वारविलासिनीजनेनाकुलितम्, एकदेशनिषण्णचामीकरश्रृङ्खलासंयतश्व[6]गणम्, इतस्ततः प्रचलितपरिचि[7]तामितकस्तूरिकाकुरङ्गपरिमलवासितदिङ्मुखम्, अनेककुब्जकिरातव[8]र्षवरबधिरवा[9]मनमूकसंकुलम्, उपाहृतकिंनरमिथुनम्, आनीतवनमानुषम्, आबद्धमेषकुक्कुटकुररकपिञ्जललावकवर्तिकायुद्धम्, उत्कूजितचकोरकादम्बहारीतकोकिलम्, [10]आलप्यमानशुकसारिकम्, इभ[11]पतिपरिमलामर्षजृम्भितैश्च निःकूजद्भिः शिखरिणां जीवितैरिव गिरिगुहानिवासिभिर्गृहीतैः पञ्जरकेसरिभिरुद्भास्यमानम्, उत्त्रास्यमानैः काञ्चनभवनप्रभाजनितदावानलशङ्कैर्लोलतारकैर्भ्रमद्भिर्भवनहरिणकदम्बकैर्लोचनप्रभया शवलीकृतदिगन्तरम्,

---

च वारविलासिनीजनं विशेषयन्नाह—**अमलेति** । अमला निर्मला भूमिस्तस्यां संक्रान्तो यो मुखनिवहस्तस्य प्रतिबिम्बस्तस्य भावस्तत्ता तया । तस्य विकाससौगन्ध्यादिगुणवत्त्वादुत्प्रेक्षते—**विकचेति** । विकचो विकस्वरः कमललक्षणपुष्पाणां प्रकरः समूहो यस्मिन्नेवंभूतमिव संपादयता कुर्वता । गतिवशेन गमनवशेन रणितानि शब्दितानि नूपुराणि पादकटकानि पारिहार्याणि कङ्कणानि रशनाश्च कटिमेखलास्तासां स्वनः शब्दस्तेन मुखरेण वाचालेन । स्कन्धेऽवसक्तं स्थापितं कनकदण्डयुक्तं चामरं येन स तथा तेन । एकस्मिन्देशे निषण्ण आसीनश्चामीकरस्य सुवर्णस्य श्रृङ्खलान्दुकस्तया संयतो बद्धः शुनां गणो यस्मिन् । **इतस्तत इति** । इतस्ततः समन्तात्प्रचलिताः परिचिता विश्वस्ता अमिता अनेके ये कस्तूरिकाकुरङ्गाः कस्तूरिकामृगास्तेषां परिमल आमोदस्तेन वासितं सुरभीकृतं दिङ्मुखं यस्य तत् । **अनेकेति** । प्रत्येकमभिसंबन्धः । कुब्जाः पूर्वोक्तलक्षणाः, किराताः पूर्वव्याख्याताः, वर्षवराः षण्ढाः, बधिराः प्रसिद्धाः, वामनाः पूर्वव्यावर्णितस्वरूपाः, मूकाः प्रसिद्धाः, तैः संकुलं व्याप्तम् । आश्चर्यावहमाह—**उपाहृतेति** । उपाहृतमानीतं किंनरमिथुनं यस्मिंस्तत् । आनीतं वनमानुष[1]मरण्यमनुष्यरूपवनचरं यस्मिन् । **आबद्धेति** । आब[2]द्धाः संयता ये मेषा हुडाः, कुक्कुटाश्चरणायुधाः, कुरराः पक्षिविशेषाः, कपिञ्जला गणेशाः, लावकाः प्रसिद्धाः, वर्तिकाः पक्षिविशेषाः, तेषां युद्धं यस्मिन् । **उदिति** । उत्प्राबल्येन कूजितं येषामेवंविधाश्चकोरा विषसूचकाः, कादम्बाः कलहंसाः, हारीताः पक्षिविशेषाः, कोकिलाः पिकाः यस्मिन् । **आलप्येति** । आलप्यमानाः संभाष्यमाणाः शुकसारिका यस्मिन् । पुनः कीदृशम् । पञ्जरकेसरिभिः पञ्जरप्राप्तहर्यक्षैरुद्भास्यमानमुत्प्राबल्येन शोभमानम् । अथ केसरिणं(णो) विशेषयन्नाह—**इभपतीति** । इभपतिर्गन्धगजस्तस्य परिमलस्तस्माद्योऽमर्षः क्रोधसंभवस्तेन जृम्भितैर्घूर्णितैरतएव निःकूजद्भिर्नितरां गुञ्जद्भिर्गुञ्जारवं कुर्वद्भिः । शिखरिणां पर्वतानां केसरिसारवत्त्वादाह—**जीवितैरिति** । [3]जीवितैरिव प्राणितैरिव । गिरीणां या गुहाः कन्दरास्तत्र निवासिभिरवस्थायिभिर्गृहीतैर्बलाद्धनानीतैरित्यर्थः । पुनः प्रकारान्तरेण विशेषयन्नाह—**भवनेति** । भवनहरिणकदम्बकैर्गृहमृगसमूहैर्लोचनप्रभया नेत्रदीप्त्या शवलीकृतं कर्बुरीकृतं दिगन्तरं यस्मिन् । कीदृशैः । काञ्चनभवनं सुवर्णगृहं तस्य प्रभा कान्तिस्तया जनितोत्पादिता दावानलशङ्का वनवह्निद्वापरो येषां तैः । अत एवोत्त्रास्यमानैरुत्प्राबल्येन त्रासं प्राप्यमाणैः । लोला-

---

**टिप्प०—1 आनीताः वनमानुषा यस्मिन्निति समासो बोध्यः । 2 इदमप्यज्ञानम्-आबद्धं संघटितं मेषादीनां युद्धं यस्मिन्नित्यर्थः । 3 सिंहा न गृहीता मन्ये पर्वतानां जीवा एव गृहीताः, इति भावार्थः । अत्र सिंहविषये निष्कूजद्भिरित्यसमञ्जसमेव, 'गर्जद्भिः' इति स्यात् ।**

---

**पाठा०—**१ अमलमणिभूमि. २ परिहार्य. ३ रव. ४ स्कन्धसक्त. ५ वारविलासिनीनां जनेन. ६ संयताश्वगणम्. ७ अपरिमितसितिकस्तूरिक. ८ वर्षधर; बर्बरवर्षवर. ९ वामनक. १० लालप्यमान. ११ पतिमद.

उद्दामकेकारवानुमीयमानमरकतकुट्टिमस्थितशिखण्डिमण्डलम्, अतिशिशिरचन्दनविटपिच्छायानिषण्णनिद्रायमाणगृहसारसम्, अन्तःपुरेण च बालिकाजनप्रस्तुतकन्दुकपञ्चालिकाक्रीडेनानवरतसंवाह्यमानदोलाशिखरक्वणितघण्टाटङ्कारपूरिताशामुखेन भुजंगनिर्मोकशङ्कितमयूरह्रियमाणहारेण सौधशिखरावतीर्णप्रचलितपारावतकुलतया स्थलोत्पलिनीवनेनेवान्तःपुरिकाजनप्रस्तुतनरपतिचरितविडम्बनक्रीडेनाश्वमन्दुरापरिभ्रष्टागतैरवलुप्तभवनदाडिमीफलैराखण्डिताङ्गणसहकारपल्लवैरभिभूतकुब्जवामनकिरातकरतलाच्छिन्नानि भूषणानि विकिरद्भिः कपिभिराकुलीभूतेन शुकसारिकाप्रकाशितसुरतविश्रम्भालापलज्जितावरोधजनेन प्रासादसोपानसमारोहणचलितैरबलानां चरणावसक्तैर्मणिमयैः पदेपदे रणद्भिस्तुलाकोटिवलयैर्द्विगुणी-

---

स्तारकाः कनीनिका येषां तैर्भ्रमद्भिरितस्ततः पर्यटद्भिः। **उद्दामेति**। उद्दाम उद्धतो यः केकारवस्तेनानुमीयमानमनुमानविषयीक्रियमाणं मरकतकुट्टिमस्थितमश्मगर्भबद्धभूमिस्थितमुपविष्टं शिखण्डिमण्डलं मयूरसमूहो यस्मिन्। **अतीति**। अतिशिशिरोऽतिशीतलो यश्चन्दनविटपिर्मलयजतरुस्तस्य छाया आतपाभावस्तत्र निषण्णा उपविष्टा निद्रायमाणाः प्रमीलां कुर्वन्तो गृहसारसा यस्मिन्। अथ चान्तःपुरेण शुकेत्यारभ्यावरोधजनेन भवनेत्यारभ्य गणेनाधिष्ठितेन समुपेतं सहितमभ्यन्तरं मध्यं यस्येति दूरेणान्वयः। क्रमेण कीदृशेत्यादि। **बालिकेति**। बालिकाजनेन कन्याजनेन प्रस्तुता प्रारब्धा कन्दुकस्य गेन्दुकस्य पाञ्चालिका, पञ्चभिर्मृदादिमयीभिः स्वल्पगुलिकाभिर्द्यूतं पञ्चालिकोच्यते। तस्याः क्रीडा येन स तेन। **अनवरतेति**। अनवरतं निरन्तरं संवाह्यमानारुह्यमाणा या दोला प्रेङ्खा तस्याः शिखरमग्रं तस्मिन्क्वणिता या घण्टास्तासां टङ्कारस्तेन पूरितं भृतमाशामुखं येन। **भुजगेति**। भुजंगस्य सर्पस्य यो निर्मोकः कञ्चुकस्तेन शङ्कितः शङ्कां प्राप्तो यो मयूरः केकी तेन ह्रियमाणो गृह्यमाणो हारो मुक्ताकलापो यस्य स तेन। **सौधेति**। सौधशिखरादवतीर्णं प्रचलितं यत्पारावतकुलं रक्तलोचनकुलं तस्य भावस्तत्ता तया। **स्थलेति**। स्थलस्य या उत्पलिन्यः कमलिन्यस्तासां वनेनेव काननेनेव। पारावतानां नीलत्वसाम्यात्तदुत्प्रेक्षा। **अन्तःपुरेति**। अन्तःपुरिकाजनेन प्रस्तुता प्रारब्धान्यनरपतिचरितानां विडम्बनक्रीडा यस्मिन्स तेन। पुनः किंविशिष्टेन। कपिभिर्वानरैराकुलीभूतेन। अश्वानां दृष्टिदोषबाधनार्थमश्वशालायां कपयः स्थाप्यन्त इति राज्ञामाचारः। अत उक्तम्। अश्वमन्दुरातः परिभ्रष्टा बन्धनाद्विमुक्ता अतएवागतास्तैः। **अवेति**। अवलुप्तानि मर्दितानि भवनदाडिमीफलानि यैः। **आखण्डितेति**। आखण्डिताः शकलीकृता अङ्गणं गृहाङ्गणं तस्य सहकारपल्लवाश्चूतकिसलया यैः। **अभीति**। अभिभूताः पराभूता ये कुब्जवामनकिरातास्तेषां करतलाद्धस्ततलादाच्छिन्नानि बलाद्गृहीतानि भूषणानि विकिरद्भिर्विक्षिपद्भिरेवंभूतैः कपिभिर्वानरैराकुलीभूतेन व्याकुलीभूतेन। **शुकेति**। शुकः कीरः, सारिका पीतपादा, ताभिः प्रकाशितः प्रकटीकृतो यः सुरते मैथुने विश्रम्भालापो विश्वासालापस्तेन लज्जितस्त्रपितोऽवरोधजनो यस्मिन्स तेन। **प्रासादेति**। प्रासादस्य गृहस्य यानि सोपानान्यारोहणानि तत्र यत्समारोहणमुपरिष्टाद्गमनं तेन चलितैः कम्पितैरबलानां स्त्रीणां चरणावसक्तैः पादावलग्नैर्मणिमयै रत्नविकारैः पदे पदे। प्रतिचरणविन्यासमित्यर्थः। रणद्भिः शब्दं कुर्वद्भिस्तुलाकोटिवलयैः पादाङ्गदवलयैर्द्विगुणीकृतं द्विगुणतामापादितं कूजितलक्षणं रुतं शब्दितं यासां ताभिरेवंभूताभिर्हंसमालिकाभिः कलहंसपङ्क्तिभिर्धवलितं शुभ्रीकृतमङ्गणं चत्वरं यस्य

---

**टिप्प०**—1 इदमपि प्रलापमात्रम्। 'ईदृशेन अन्तःपुरेण समुपेताभ्यन्तरम्' इति दूरेणान्वय इति वक्तव्यम्। 2 पुनः प्रलापोऽयम्। कन्दुकैः पाञ्चालिकाभिः वस्त्रनिर्मितपुत्तलिकाभिश्च क्रीडा यस्मिन्नित्यर्थः। 'पञ्चालिका स्त्रियां वस्त्रपुत्रिकागीतिभेदयोः' इति मेदिनी।

---

**पाठा०**—१ अविरत. २ वाह्यमानतोली. ३ वनशोभितेनेव. ४ आकुलीकृतेन. ५ मणिमयैर्विभूषणैः पदेपदे.

कृतकूजितरुताभिर्भवनहंसमालिकाभिर्धवलिताङ्गणेन धृतधौतधवलदुकूलोत्तरीयैः कलधौतदण्डावलम्बिभिः पलितपाण्डुरमौलिभिराधारमयैरिव मर्यादामयैरिव मङ्गलमयैरिव गम्भीराकृतिभिः स्वभावधीरैरुष्णीषिभिर्वयःपरिणामेऽपि जरत्सिंहैरिवापरित्यक्तसत्त्वावष्टम्भैः कञ्चुकिभिरधिष्ठितेन समुपेताभ्यन्तरम्, जलधरसनाथमिव कृष्णागुरुधूमपटलैः, सनीहारमिव यामकुञ्जरघटाकरसीकरैः, सनिशमिव तमालवीथिकान्धकारैः, सबालातपमिव रक्ताशोकैः, सतारागणमिव मुक्ताकलापैः, सवर्षासमयमिव धारागृहैः, सतडिल्लतमिव हेममयीभिर्मयूरयष्टिभिः, सगृहदैवतमिव शालभञ्जिकाभिः, शिवभवनमिव द्वारावस्थितदण्डपाणिप्रतीहारगणम्, उत्कृष्टकविगद्यमिव विविधवर्णश्रेणिप्रतिपाद्यमानाभिनवार्थसंचयम्, अप्सरोगणमिव

---

स तेन । **धृतेति** । धृतं धारितं धौतं क्षालितं धवलं श्वेतं दुकूलस्य क्षौमस्योत्तरीयं यैः । **कलेति** । कलधौतस्य सुवर्णस्य यो दण्डो यष्टिस्तस्यावलम्बो विद्यते येषां तैः । अतिवृद्धत्वाद्दण्डमवलम्ब्य स्थायिभिरित्यर्थः । **पलितेति** । पलितं पाण्डुराः कचास्तैः पाण्डुराः श्वेता मौलयो येषां तैः । आधारोऽवष्टम्भस्तन्मयैरिव तद्विकारैरिव, मर्यादा स्थितिस्तन्मयैरिव, मङ्गलं श्रेयस्तन्मयैरिव, गम्भीराऽलब्धमध्याकृतिराकारो येषां तैः । अतएव स्वभावेनानुपाधिकेन धीरा धैर्यवन्तस्तैः । उष्णीषो मूर्धवेष्टनं विद्यते येषां तैरुष्णीषिभिः । वयःपरिणामेऽप्यतिवृद्धत्वेऽपि जरत्सिंहैरिव वृद्धहर्यक्षैरिवापरित्यक्तोऽनुज्झितः सत्त्वावष्टम्भो यैः सत्त्वं साहसं तस्यावष्टम्भ आधारो यैरेवंविधैः कञ्चुकिभिः सौविदल्लैरधिष्ठितेनाश्रितेन । अङ्गणविशेषणम्[1] । एवंविधेनान्तःपुरेण समुपेतं सहितमभ्यन्तरं मध्यभागो यस्येति गृहविशेषणमिति भावः । प्रकारान्तरेण गृहं वर्णयन्नाह— **जलेति** । जलधरसनाथमिव मेघसदृशमिव[2] । कैः । कृष्णागुरूणां काकतुण्डानां ये धूमास्तेषां पटलैः समूहैः । **सनीति** । नीहारेण हिमेन सह वर्तमानमिव यामकुञ्जराश्वतुष्किकागतहस्तिनस्तेषां[3] घटाः समूहास्तेषां कराः शुण्डास्तेषां शीकराः पृषतास्तैः । **सनीति** । निशा रात्रिस्तया सह वर्तमानमिव तमालानां तापिच्छानां वीथिका पङ्क्तिस्तस्या अन्धकारैस्तिमिरैः । **सेति** । सह बालातपेन तरुणालोकेन वर्तमानमिव रक्ता येऽशोकाः कङ्केल्लयस्तैः । **सेति** । सह तारागणेन नक्षत्रसमूहेन वर्तमानमिव । कैः । मुक्ताकलापैर्मुक्ताप्रालम्बैः । **सवर्षेति** । सह वर्षासमयेन प्रावृट्समयेन वर्तमानमिव । कैः । धारागृहैर्यन्त्रगृहैः । **सेति** । सह तडिल्लतया विद्युल्लतया वर्तमानमिव । काभिः । हेममयीभिः सुवर्णनिर्मितैर्मयूरयष्टिभिः कलापिसमूहोपवेशनदण्डैः । **सेति** । सह गृहदैवतेन वर्तमानमिव । काभिः । शालभञ्जिकाभिः पुत्रिकाभिः । **शिवेति** । शिवस्येश्वरस्य भवनं गृहं तद्वदिव द्वारावस्थिता दण्डपाणयः प्रतीहारगणा यस्मिन् । ईश्वरपक्षे कूष्माण्डादयो[4] गणाः । उत्कृष्टमलंकाराद्युपेतं यत्कविगद्यमच्छन्दं[5] तद्वदिव । उभयं विशेषयन्नाह— **विविधेति** । विविधा अनेके ये वर्णा ब्राह्मणादयः, एकमुख्यसजातीयसमूहश्रेणिः, ताभिः प्रतिपाद्यमान उत्पाद्यमानोऽभिनवः[6] प्रत्यग्रोऽर्थसंचयो द्रव्यसमूहो यस्मिन् । पक्षे विविधवर्णश्रेणिभिर्विविधाक्षरपङ्क्तिभिः प्रतिपाद्यमानः कथ्यमानोऽभिनवोऽश्रुतपूर्वोऽर्थसंचयोऽभिधेयसमूहो यस्मिन् । अप्सरसां तिलोत्तमादीनां गणः समुदायस्तमिव । प्रकटः स्पष्टो मनसो रमाणां[7] सुन्दराणा-

---

**टिप्प०—1 अयमपि प्रलापः । न किञ्चिदेतत् । अधिष्ठितेन अन्तःपुरेण समुपेताभ्यन्तरमित्यन्वयो बोध्यः । 2 मेघसहितमिति बोध्यम् । 3 अयमप्यस्पष्टोऽर्थः । प्रतिप्रहरं यामिकरूपेण परिवर्तनीयाः कुञ्जरा यामकुञ्जराः इत्यर्थः । 4 द्वारावस्थिता दण्डपाणिः ( भैरवः ) गणाः प्रमथाश्च यस्य तत् इति शिवभवनपक्षेऽर्थः । 5 छन्दोरहितं गद्यकाव्यमिवेत्यर्थो वाच्यः । 6 उपहाररूपेण दीयमान इत्यर्थ उचितः । 7 प्रलापोयम्, प्रकटः ( सर्वविदितः ) मनोरमः आरम्भः कार्योपक्रमो यस्मिन् तदित्यर्थः ।**

---

**पाठा०—**१ कलहंसमालाभिः. २ धवलीकृताजिरेण धौत. ३ पलितपाकपाण्डुर; पलितपाण्डु. ४ आचारमयैः. ५ विनयमयैरिव मर्यादा. ६ जरीजरत्. ७ सजलजलधर. ८ कविकाव्यम्. ९ श्रेणी. १० अनेकाभिनव.

प्रकटमनोरमारम्भम्, दिवसकरोदयमिवोल्लसत्पद्माकरकमलामोदम्, उष्णकिरणमिव निज-लक्ष्मीकृतकमलोपकारम्, नाटकमिव पताकाङ्कशोभितम्, शोणितपुरमिव बाणयोग्यावासोपेतम्, पुराणमिव विभागावस्थापितसकलभुवनकोशम्, संपूर्णचन्द्रोदयमिव मृदुकरसहस्रसंवर्धितरत्नालयम्, दिग्गजमिवाविच्छिन्नमहादानसंतानम्, ब्रह्माण्डमिव सकलजीवलोकव्यवहारकारणोत्पन्नहिरण्यगर्भम्, ईशानबाहुवनमिव महाभोगिमण्डलसहस्राधिष्ठितप्रकोष्ठम्, महाभारतमिवानन्तगीताकर्णनानन्दितनरम्, यदुवंशमिव कुलक्रमागतशूरभीमपुरुषोत्तमबलपरिपालितम्, व्याकरणमिव प्रथममध्यमोत्तमपुरुषविभक्तिस्थितानेकादेशकारकाख्यात-

---

मारम्भः प्रारम्भो यस्मिन्, पक्षे मनोरमा रम्भा देवाङ्गना यस्मिन्। **दिवसेति** । दिवसकरस्य सूर्यस्योदय उद्गमनं तमिव । उल्लसन्ति यानि पद्माकरेषु तटाकेषु कमलानि सरोजानि तेषामामोदः परिमलो यस्मिन्निति भङ्गश्लेषः । यद्वोल्लसन्तः पद्माकराः श्रीकारकाः कमला हरिणविशेषास्तेषामामोदः परिमलो यस्मिन् । उष्णकिरणः सूर्यस्तमिव निजलक्ष्म्या स्वराज्यश्रिया कृतो विहितः कमलैवज्जलजवत्कमलैर्वोपकार उपकृतिः पूजा वा येन तत् । पक्षे निजलक्ष्म्या निजशोभया कृतो विहितः कमलानामुपकारो विकाशरूपो येन तम्। नाटकं ताण्डवं तद्वदिव पताका वैजयन्ती तस्या अङ्को मध्यं तेन शोभितम्। पक्षे पताका हस्तविन्यासः, अङ्को नाटकैकदेशः ताभ्यां शोभितं विराजितम् । शोणितपुरं बाणनाम्नो दैत्यस्य नगरं तच्च 'देवीकोट' इति प्रसिद्धं तद्वदिव बाणाः शरास्तेषां योग्यो य आवासस्तेनोपेतं सहितम्। पक्षे बाणो दैत्यस्तदावासोपेतमित्यर्थः। **पुराणेति** । पुराणं पञ्चलक्षणं तद्वदिव विभागेन भिन्नतयावस्थापितो रक्षितः सकलभुवनस्य समग्रविष्टपस्य कोशो द्रव्यसमूहो यस्मिन्। पक्षे विभागेनावस्थापितो ज्ञापितः सकलभुवनकोशः समग्रभुवनमण्डलं येन। **संपूर्णेति**। संपूर्णः समग्रो यश्चन्द्रस्तस्योदयस्तद्वदिव मृदवः स्वल्पा ये करा राजदेयद्रव्याणि तेषां सहस्रं तेन संवर्धितानि वृद्धिं प्रापितानि यानि रत्नानि तान्येवालये गृहे यस्मिन्। पक्षे मृदुकराणां सुकुमारकिरणानां यत्सहस्रं तेन संवर्धितो वेलां ग्राहितो रत्नालयः समुद्रो येन स तम्। **दिगिति**। दिशि स्थितो गजो दिग्गजस्तमिवाविच्छिन्नमत्रुटितं महादानस्य महद्वितरणस्य संतानं परंपरा यस्मिन् । पक्षे दानसंतानं मदसंततिः । शेषं पूर्ववत्। **ब्रह्माण्डेति**। ब्रह्माण्डं विश्वं तदिव सकलजीवलोकस्य समग्रविष्टपस्य व्यवहारो व्यवहरणं तस्य कारणं निदानं तदर्थमुत्पन्नं यद्धिरण्यं सुवर्णं तदेव गर्भे मध्ये यस्य तत्। पक्षे हिरण्यगर्भो विश्वरेताः। शेषं पूर्ववत्। **ईशानेति**। ईशान ईश्वरस्तस्य बाहुवनं भुजवनम्। सरलत्वाद्बाहुल्याच्च नृत्यारम्भ उर्वीकृतत्वेन च वनोपमानम्। तद्वदिव। **महेति**। महाभोगिनां नृणां मण्डलसहस्रैरधिष्ठित आश्रितः प्रकोष्ठो गृहैकदेशो यस्मिन् (स्य)। पक्षे महाभोगिनां महासर्पाणां मण्डलसहस्रैरधिष्ठितः प्रकोष्ठः कलाचिका यस्मिन् (स्य)। महानाभोगो विद्यते येषामेवंविधानां मण्डलानां खड्गानां सहस्रं तेनाधिष्ठितौ प्रकोष्ठौ यस्येति वा । **महेति** । महाभारतं शास्त्रं तदिवानन्तान्यसंख्यानि गीतानि गानानि तेषामाकर्णनं श्रवणं तेनानन्दिता हर्षिता नरा मानवा यस्मिन्। पक्षेऽनन्तः परमेश्वरस्तस्य [3]गीतं स्तुतिस्तदाकर्णनेनानन्दितो नरोऽर्जुनो यस्मिन्। यदुवंशमिव यदुर्नृपतिस्तस्य वंशः संतानपरंपरा तमिव कुलक्रमागताः परंपरायाताः, शूराः शौर्यगुणयुक्ताः, भीमाः क्रूराकृतयः, पुरुषोत्तमाः पुरुषेषु मुख्याः, तेषां बलेन सैन्येन परिपालितं रक्षितम् । रजन्यां चतुष्किकाप्रदानेन तद्रक्षां कुर्वन्तीति

---

**टिप्प०**—1 हन्त धिक् । निजलक्ष्म्या निजशोभया कृतः कमलायाः (राजलक्ष्म्याः) वृद्धिरूपः शोभारूपो वा उपकारो येन तत्। ईदृशेन राजभवनेन राजलक्ष्म्याः शोभा भवतीति भवनेनोपकारः कृतः। 2 करसहस्रैः संवर्धिताः रत्नालयाः धनागाराणि यस्मिन्निति स्पष्टोऽर्थः। 3 अनन्तस्य कृष्णस्य या गीता (अष्टादशाध्यायात्मिका) तया आनन्दित इत्यर्थो वक्तव्यः।

---

**पाठा०**—१ रम्भाभोगम्. २ प्रकटपताका. ३ यथाविभाग. ४ अवस्थित. ५ पूर्ण. ६ अध्यासितप्रकोष्ठमिव. ७ पालितम्.

संप्रदानक्रियाव्ययप्रपञ्चसुस्थितम्, उदधिमिव भयान्तःप्रविष्टसपक्षभूभृत्सहस्रसंकुलम्, उषानिरुद्धसमागममिव चित्रलेखादर्शितविचित्रसकलत्रिभुवनाकारम्, वलियज्ञमिव पुराणपुरुषवामनाधिष्ठिताभ्यन्तरम्, शुक्लपक्षप्रदोषमिव विततशशिकिरणकलापधवलाम्बरवितानम्, नरवाहनदन्तकथेवान्तःसंवर्धितप्रियदर्शनराजदारिकागन्धर्वदत्तोत्कण्ठम्, महातीर्थमिव सद्योऽनेकपुरुषप्राप्ताभिषेकफलम्, प्राग्वंशमिव नानासवपात्रसंकुलम्, निशासमयमिवानेक-

---

भावः। पक्षे शूरी नाम विष्णोः पितामहः, भीमो नाम कश्चित्, पुरुषोत्तमो विष्णुः, बलो बलदेवः एभिः परिपालितं लालितम् । जरासिन्धोरिति शेषः। व्याकरणं शब्दशास्त्रं तद्वदिवायं प्रथम आद्यः, अयं मध्यमोऽनुत्कृष्टाधमः, अयं चोत्तमः सर्वोत्कृष्टः, एवंविधा या पुरुषविभक्तिस्तस्यां स्थिता येऽनेक आदेशकारकाः आज्ञाकारकास्तैराख्याता प्रतिपादिता सम्यक्प्रकारेण या संप्रदानक्रिया तस्यां यो व्ययस्तस्य प्रपञ्चो विस्तारस्तत्र सुस्थितम्। सुखेनावस्थितमित्यर्थः। पक्षे प्रथमपुरुषो मध्यमपुरुष उत्तमपुरुषश्चेति संज्ञात्रयं पाणिनिना प्रपञ्चितम्। विभक्तयश्च स्वादयस्तासु स्थिता आदेशास्तिसृचतसृप्रभृतयः, कारकाणि कर्त्रादीन्याख्यातानि नव दश वा, संप्रदानं चतुर्थीकारकम्, क्रिया भ्वादिः, अव्ययान्युच्चैरित्यादीनि तेषां प्रपञ्चो विस्तारः सुस्थितो यस्मिन्। उदधिः समुद्रस्तद्वदिव भयाद्भीतेरन्तःप्रविष्टं मध्ये समागतं यत्सपक्षाणां परिच्छदोपेतानां भूभृतां राज्ञां सहस्रं तेन संकुलम्। पक्षे सपक्षाः पक्षयुक्ता भूभृतः पर्वताः। शेषं पूर्ववत्। **उषेति**। उषा बाणासुरपुत्री, अनिरुद्धः प्रद्युम्नतनयः, तयोः समागमः संबन्धस्तदिव। तस्याः सखीभूता चित्रलेखा तयानिरुद्धोत्कण्ठितामुषां प्रत्यनिरुद्धज्ञानाय चित्रे त्रिभुवनमालिख्य दर्शितमिति पौराणिकी कथा । तामधिकृत्याह—**चित्रेति**। चित्रलेखाभिरालेख्यपङ्क्तिभिर्दर्शितः प्रकाशितो विचित्रो नानाविधः सकलः समग्रस्त्रिभुवनस्य त्रिविष्टपस्याकार आकृतिर्येन तत्। पक्षे चित्रलेखा सखी। शेषं पूर्ववत्। वलिर्नृपस्तेन कृतो यज्ञो यागस्तमिव पुराणपुरुषैर्वृद्धपुरुषैर्वामनैश्चाधिष्ठितमाश्रितमभ्यन्तरं मध्यभागो यस्य तत्। पक्षे पुराणपुरुषो यो वामनो गृहीतवामनावतारः। शेषं पूर्ववत्। **शुक्लेति**। शुक्लो यः पक्षस्तस्य प्रदोषो यामिनीमुखं तद्वदिव। विततो विस्तीर्णो यः शशिकिरणकलापस्तद्वद्धवलं यदम्बरं वस्त्रं तस्य वितानमुल्लोचो यस्मिन्। पक्षे शशिकिरणकलापेन धवलाम्बरमेव वितानं यस्मिन्निति विग्रहः। नरवाहनो राजा तस्य दन्तकथा लोकप्रवृत्तिस्तद्वदिवान्तःसंवर्धिता अन्तःपुरे वृद्धिं प्राप्ता याः प्रियदर्शना इष्टावलोकना राजादारा एव राजदारिकाः। स्वार्थे कः। 'काम्यच्च' इति पूर्वस्येकारः। ताभिर्गन्धर्वाणां देवगायकानां दत्तोत्कण्ठा यस्मिन्। पक्षेऽन्तःसंवर्धिता प्रियदर्शनानाम्नी राजदारिका नरवाहनपुत्री गन्धर्वदत्तश्च तस्या गान्धर्वशिक्षकोपाध्यायस्तयोश्चिरविरहितयोः समागमोत्कण्ठा यस्मिन्। महातीर्थं वाराणस्यादि तद्वदिव सद्यस्तत्कालमनेकैः पुरुषैः प्राप्तं लब्धमभिषेकेण फलं शरीरशुद्धिलक्षणं यस्मिन्। पक्षेऽनेकपुरुषैः प्राप्तमभिषेकात्स्नानात्स्वर्गादिपदबन्धफलं यस्मात्। **प्रागिति**। प्राग्वंशो हविर्गृहात्प्राग्गृहम्। यज्ञगृहमित्यर्थः। तमिव नानाविधो य आसवः सोमवल्ल्यासवस्तेषां पात्राणि भाजनानि तैः संकुलं व्याप्तम्।

---

**टिप्प०**—1 भयेन शत्रुभयेन अन्तःप्रविष्टानां स्वपक्षीयजनसहितानां भूभृतां राज्ञां सहस्रेण संकुलमिति राजभवनपक्षेऽर्थः। 2 इदमप्यज्ञानम् अन्तःसंवर्धिता प्रियदर्शना (परमसुन्दरी) गन्धर्वदत्ताख्या या (सागरदत्तस्य कन्या) तस्या उत्कण्ठा (नरवाहनदत्तस्य कृते) यस्याम् इत्यर्थः। तथाहि कथासरित्सागरः—'राजा सागरदत्ताख्यो गन्धर्वाणामिहास्ति यः। तस्य गन्धर्वदत्ताख्या सुतास्ति न्यक्कृताप्सराः ॥' सा हि बन्दिमुखान्नरवाहनदत्तस्य गुणान् श्रुत्वा तस्मिन्नुत्कण्ठिता बभूव। पाठोऽपि—'नरवाहनदत्तकथेव' इत्येवोचितः। 3 अनेकपुरुषैर्नानादेशीयैः राजपुरुषैः प्राप्तम्, अभिषेक( राज्याभिषेक )रूपं फलं यस्मात्। अर्थात् यस्माद्राजभवनात् बहुभिः राजभिः राजत्वं प्राप्तम्। 4 नानाविधैः सवस्य यज्ञस्य पात्रैः स्रुक्स्रुवादिभिः संकुलमित्यर्थो वाच्यः।

---

**पाठा०**—१ संप्रदानापादान. २ भयात्प्रविष्ट. ३ भूमिभृत. ४ विचित्रलेखा. ५ धवलित. ६ नरवाहनदत्तचरितमिव.

नक्षत्रमालालंकृतम्, प्रभातसमयमिव पूर्वदिग्भागरागानुमेयमित्रोदयम्, गन्धिकभवनमिव[1] स्नानधूपविलेपवर्णकोज्ज्वलम्[2], ताम्बूलिकभवनमिव कृतलवलीलवङ्गैलाकङ्कोलपत्रसंचयम्[3], प्रथमवेश्यासमागममिवाविदितहृदयाभिप्रायचेष्टाविकारम्[4], कामुकजनमिव बहुचाटुसंलापसुभाषितरसास्वाददत्ततालशब्दम्, धूर्तमण्डलमिव दीयमानमणिशतसहस्रालंकरणकृतलेख्यपत्रसंचयम्, धर्मारम्भमिवाशेषजनमनःप्रह्लादनम्, महावनमिव श्वापदद्विजोपघुष्टम्[5], रामायणमिव कपिकथासमाकुलम्[6], माद्रीकुलमिव नकुलालंकृतम्, संगीतभवनमिवानेकस्थानावस्थापितमृदङ्गम्, रघुकुलमिव भरतगुणानन्दितम्[7], ज्यौतिषमिव ग्रहमोक्षकलाभागनिपुणम्,

---

पक्ष आसवपात्राणि मद्यपात्राणि। 'मध्वासवो माधवको मैरेये सीधुरासवः' इति कोशः। निशा रात्रिस्तस्याः समयः कालस्तमिव सप्तविंशतिभिर्मुक्ताफलैः रचिता नक्षत्रमालास्ताभिरनेकाभिरलंकृतं विभूषितम्। पक्षेऽनेका नक्षत्रमाला ग्रहश्रेणिर्यस्मिन्। प्रभातं प्रत्यूषं तस्य समयोऽवसरस्तमिव पूर्वदिशा पूर्वरीत्या भागेनैकदेशेन यो रागः स्नेहस्तेनाप्यनुमेयो मित्रस्य सुहृद उदयोऽभ्युन्नतिर्यस्मिन्। स्तोकसंबन्धेन समागतानामपि सुहृदामतिगौरवम्। का कथा बहुसंबन्धेनागतानामिति भावः। पक्षे पूर्वदिग्भागे प्राच्येकदेशे यो रागस्तेनानुमेयोऽनुमातुं योग्यो मित्रस्य सूर्यस्योदयो यस्मिन्। गन्धिक औषधादिविक्रयकृत्तस्य भवनं गृहं तद्वदिव स्नानानन्तरं केशानां धूपः, विलेपनमङ्गरागः, वर्णको वर्तिविशेषः, तैरुज्वलं निर्मलमित्यभङ्गश्लेषः। ताम्बूलिकानां नागवल्लीदलविक्रयकारिणां भवनमिव कृतो विहितो लवली सुगन्धवल्लीविशेषः, लविङ्गं देवकुसुमम्, एला चन्द्रवाला, कङ्कोलः कोशफलम्, पत्रं जातिफलपत्रम्, एतेषां संचयः संनिधिर्यस्मिन्नित्यभङ्गश्लेषः। प्रथम आद्यो यो वेश्यया वारयोषिता समागमस्तमिव। अतिगाम्भीर्यादविदितोऽज्ञातो हृदयाभिप्रायश्चित्ताशयो यस्यैवंविधस्य। अर्थाद्राज्ञः। चेष्टाविकारश्चेष्टा शरीरादिक्रिया तस्या विकारो विकृतिर्यस्मिन्नित्यभङ्गश्लेषः। कामुकः कामयिता यो जनस्तमिव बहूनि चाटूनि प्रियप्रायाणि येष्वेवंविधाः संलापाः परस्परालापाः सुभाषितानां सूक्तानां रसास्वादास्तेषु दत्तास्तालशब्दा अभीष्टाववोधनेन परस्परकरतालाहतयो यस्मिन्। पक्षे यैरिति तृतीयाबहुव्रीहिः। धूर्तो द्यूतकृत्तस्य मण्डलमिव समूहमिव दीयमानं यन्मणिशतसहस्रालंकरणमलंकृतिस्तत्र कृतो लेख्यपत्रसंचयो यस्मिन्। अवरोधजनस्य मध्ये यदलंकारादिकं प्रेष्यते प्रदीयते वा तत्सर्वं बहिःस्थैर्लिपीक्रियत इति राजस्थितिः। पक्षे कृतो लेख्यपत्रसंचयो यैरिति। धूर्तैरपि सर्वं पत्रलेख्यपूर्वकं गृह्यत इति तदुपमानम्। धर्मस्य वृषस्यारम्भः प्रारम्भस्तमिवाशेषाः समग्रा जनास्तेषां मनस्तस्य प्रह्लादनमानन्दजनकमित्यभङ्गश्लेषः। महच्च तद्वनं च महावनं तदिव श्वापदा वने व्याघ्रादयो गृहे मृगयार्थं संरक्षिताश्च द्विजाः पक्षिणो ब्राह्मणाश्च तैरुपघुष्टं शब्दितम्। रामायणं रामचरित्रं तदिव विनोदार्थं रक्षितानां कपीनां वानराणां कथा वार्तास्ताभिः समाकुलम्। पक्षे कपिकथा हनूमत्कथा। माद्रीकुलं माद्री पाण्डुपत्नी तस्याः कुलं तद्वदिव नकुलः सर्पहा तेनालंकृतम्। विनोदार्थं राज्ञां गृहे तत्सद्भाव इति भावः। पक्षे नकुलः सहदेवाग्रजः। संगीतस्य प्रेक्षणार्थं प्रयुक्तस्य गीतनृत्यवाद्यत्रयस्य भवनमिवानेकस्थानेष्ववस्थापितं न्यस्तं मृदां मृत्तिकानामङ्गं यस्मिन्। पक्षे मृदङ्गानि मुरजानि। रघुकुलं दशरथकुलं तद्वदिव। भरतः शैलूषस्तस्य गुणेन कलाकौशलेनानन्दितम्। पक्षे भरतस्य दाशरथेर्गुणो व्रतपालनलक्षणः। ज्यौतिषमिव ज्योतिःशास्त्रमिव ग्रह उद्धतनृपाणां ग्रहणं, मोक्षस्तेषामेव

---

**टिप्प०—1 गन्धद्रव्याणि विक्रीणीते स गान्धिकः ( गन्धी 'सुगन्धी' इति ख्यातः )। 2 पर्णम् (नागवल्लीदलम्) इत्यर्थः। 3 दीयमानाय (दातव्याय) मणिशतसहस्राय अलंकरणाय च कृतः लेख्यपत्रसंचयः 'एतावत्काले दास्यामि' इति ऋणलेख्यपत्रसमूहो यस्मिन्नित्यर्थः।**

---

पाठा०—१ गान्धिक. २ लेपन. ३ लवङ्गैलाकङ्कोलि; लवङ्गैलाकक्कोल. ४ प्रधान. ५ विविधश्वापद. ६ कविकथा. ७ कुल.

नारदीयमिव वर्ण्यमानराजधर्मम्, यन्त्रमिव विविधशब्दरसलब्धास्वादम्, मृदुकाव्यमिवा-न्यचिन्तितस्वभावाभिप्रायावेदकम्, महानदीप्रवाहमिव सर्वदुरितापहरम्, धनमिव न कस्य-चिन्नाकाङ्क्षणीयम्, संध्यासमयमिव दृश्यमानचन्द्रापीडोदयम्, नारायणवक्षस्थलमिव श्रीरत्नप्रभाभासितदिगन्तम्, बलभद्रमिव कादम्बरीरसविशेषवर्णनाकुलमतिम्, ब्राह्मणमिव पद्मासनोपदेशदर्शितभूमण्डलम्, स्कन्दमिव शिखिक्रीडारम्भचञ्चलम्, कुलाङ्गनाप्रचारमिव सर्वदोपजातशङ्कम्, वेश्याजनमिवोपचारचतुरम्, दुर्जनमिवापगतपरलोकभयम्, अन्त्यजज-नमिवागम्यविषयाभिलाषम्, अगम्यविषयासक्तमपि प्रशंसनीयम्, अन्तकभटगणमिव

---

दण्डादिना मोचनम्, कलाभागा विज्ञानैकदेशाः तेषु निपुणा यस्मिन्। पक्षे अर्केन्द्वोः ग्रहो मोक्षश्च, कला षोडशो भागः, तासां भागा विभागास्तेषु निपुणम्। एतज्ज्ञापकमित्यर्थः। नारदीयं पुराणं तद्वदिवासमन्ताद्व-र्ण्यमानः स्तूयमानो राजधर्मो यस्मिन्नित्यभङ्गश्लेषः। यन्त्रं वीणा तद्वदिव विविधाः शब्दा मनोज्ञशब्दाः, रसाः शृङ्गारादयः तेषां लब्ध आस्वादश्चर्वणं येन तत्। पक्षे विविधशब्दरसैर्नानाविधरागरसैर्लब्धास्वादा जना यस्मात्। मृदु सुकुमारं यत्काव्यं कविकर्म तद्वदिवान्यचिन्तितानि स्वभावाः प्रकृतयः, अध्यवसाया मनोगताभि-प्रायाः, तेषामावेदकं कथकम्। पक्षेऽन्येन कविना चिन्तितो विचारितो यः स्वभावाभिप्रायः सहजोऽभिप्रायः। तात्पर्यविषयीभूतोऽर्थ इति यावत्। तस्यावेदकं ज्ञापकम्। महानद्या बृहत्तटिन्याः प्रवाह ओघस्तमिव सर्वं यद्दु-रितं दुश्चरितं तस्यापहरम्। पक्षे सर्वं दुरितं पापम्। धनं द्रव्यं तद्वदिव न कस्यचिदपि नाकाङ्क्षणीयं नाभिलष-णीयम्। अपि तु सर्वस्यापि स्पृहणीयमित्यर्थः। इत्यभङ्गश्लेषः। संध्यायाः सायंकालस्य समयः क्षणस्तमिव दृश्यमानः प्रेक्ष्यमाणश्चन्द्रापीडस्य सुतस्योदयोऽभ्युन्नतिर्यस्मिन्। पक्षे चन्द्रापीड ईश्वरः। सर्वदा संध्यायां नृत्यविधानादिति भावः। नारायणो विष्णुस्तस्य वक्षस्थलं भुजान्तरं तद्वदिव श्रीः शोभा तया युक्तानि रत्नानि तेषां प्रभाः कान्तयस्ताभिर्भासितं प्रकाशितं दिगन्तं यस्मिन्। पक्षे श्रीर्लक्ष्मीः, रत्नं कौस्तुभम्। शेषं पूर्व-वत्। बलभद्रो रामस्तमिव कादम्बरी वक्ष्यमाणा स्त्री तस्या रसविशेषवर्णन आकुला मतिर्यस्मिन्। पक्षे काद-म्बरी कापिशायनम्। ब्राह्मणमिव द्विजमिव पद्मासनोपदेशेन दर्शितं भूमण्डलं यस्मिन्। पक्षे पद्मासनो ब्रह्मा तस्योपदेशो वेदस्तेन दर्शितमन्येभ्यः प्रकाशितं भूमण्डलं येन स तम्। स्कन्दः स्वामी तमिव शिखी मयूरस्तस्य यः क्रीडारम्भस्तेन चञ्चलं चटुलमित्यभङ्गश्लेषः। कुलाङ्गनायाः कुलवध्वाः प्रचारः संचरणं तमिव सर्वं ददातीति सर्वदः परमेश्वरस्तस्मादुपजाता शङ्का भयं यस्मिन्। पक्षे सर्वदा सर्वकालम्। वेश्याजनो वाराङ्गना-जनस्तमिवोपचारः सेवा तत्र चतुरमित्यभङ्गश्लेषः। दुर्जनः खलस्तमिवापगतं परे लोकाः शत्रवस्तेभ्यो भयं यस्मिन्। पक्षे परलोको भवान्तरम्। अन्त्यजजनो दिवाकीर्तिजनस्तमिवागम्यः परैरग्राह्य एवंविधो विषयो देशस्तमिवोपचारो यस्मिन्। पक्षेऽगम्यानां विषयाभिलाषो यस्मिन्निति बहुव्रीहिः। अगम्यविषयासक्तमपि

---

**टिप्प०**—1 अन्यैः (वक्तुभिन्नैः) चिन्तितः श्रवणमात्रेणाऽवगतः स्वभावः (स्वोऽर्थः) अभिप्रायः कवेराशयश्च तयोरावेदकम्। प्रसादगुणविशिष्टं काव्यमन्ये श्रवणमात्रेण आशयतोऽवबुध्यन्त इत्यर्थः। 2 कादम्बर्यां सांप्रतं परिचयाभावान्नोचितोयमर्थः। उभयत्रापि मद्यमेवार्थः। राजकुलपक्षे 'आकुलमति' इति लिङ्गव्यत्ययः कार्यः। 3 पद्मायाः आसनाय (स्थितये) य उपदेशो (गुरुभिर्दत्तः) तेन दर्शितं भूमण्डलं (भूमण्डलव्यवहारः) यस्मिन्। 4 सर्वदा उपजाता शङ्का यस्मात्, साधारणजना राजभव-नाद् बिभ्यति। 5 टीका भ्रष्टाक्षरेवाऽऽभाति। परैः अगम्यः अज्ञेयः विषयाणां देशानामभिलाषो यस्मिन्, कदा कीदृशो देशः आक्रम्य ग्रहीष्यते इति गुप्तमन्त्रत्वाद् न ज्ञायते इत्यर्थो योग्यः।

---

**पाठा०**—१ अनन्य. २ वेदकम्. ३ दुरिततापहरम्. ४ काङ्क्षणीयम्; काङ्क्षणीयं फलम्. ५ मति. ६ ब्रह्माणम्. ७ अन्त्यजन.

कृताकृतसुकृतविचारनिपुणम्, सुकृतमिवादिमध्यावसानकल्याणकरम्, वासरारम्भमिव पद्म[1]-रागारुणीक्रियमाणनिशान्तम्, दिव्यमुनिगणमिव कलापि[2]सनाथश्वेतकेतुशोभितम्[3], भारतसमरमिव कृतवर्म[4]बाणचक्रसंभारभीषणम्, पातालमिव महाकञ्चुक्यध्यासितम्[5], वर्षपर्वतसमूहमिवान्तःस्थितापरिमित[6]शृङ्गिहेमकूटम्[7], महाद्वारमपि दुष्प्रवेशम्, अवन्तिविषयगतमपि मागधजनाधिष्ठितम्, स्फीतमपि भ्रमन्नग्नलोकं राजकुलं विवेश ।

ससंभ्रमोपगतैश्च कृतप्रणामैः प्रतीहारमण्डलैरुपदिश्यमानमार्गः, सर्वतः प्रचलितेन च

---

प्रशंसनीयमिति विरोधः । तत्परिहारस्त्वगम्यः परैरग्राह्यो विषयो देशस्तदासक्तमित्यर्थात् । अन्तको यमस्तस्य भटगणः सुभटसमूहस्तमिव कृताकृतं यत्सुकृतं शोभनं कृत्यं तस्य यो विचारस्तत्र निपुणं चतुरम् । पक्षे[1]...... ...... । सुकृतं पुण्यं तद्वदिवादिमध्यावसानेषु कल्याणकरं शुभकारकमित्यभङ्गश्लेषः । वासरस्य दिवसस्यारम्भस्तमिव पद्मरागैः रक्तमणिभिररुणीक्रियमाणं रक्तीक्रियमाणं निशान्तं गृहं यत्र तत् । 'धामागारं निशान्तम्' इति कोशः । पक्षे पद्मानां रागैररुणीक्रियमाणो निशान्तो रात्रिप्रान्तो यस्मिन् । दिव्यो मुनिगणो वसिष्ठादिस्तमिव कलापिनो मयूरास्तैः सनाथाः सहिता ये श्वेतकेतवः सितध्वजास्तैः शोभितम् । पक्षे कलापी सनाथः श्वेतकेतुश्च त्रयोऽप्येते देवर्षयस्तैः शोभितं विराजितम् । भारतशास्त्रोक्तसमरमिव कृतो विहितो वर्म कवचम्, बाणाः शराः, चक्राणि प्रसिद्धानि, एतेषां संभारः समूहस्तेन भीषणं भयजनकम् । पक्षे कृतवर्मा हृदीकपुत्रः, बाणाः शिलीमुखाः, तेषां चक्रेषु परदलेषु संभारस्तेन भीषणम् । पातालं वडवामुखं तदिव महाकञ्चुकिनः सौविदल्लास्तैरध्यासितमाश्रितम् । पक्षे महाकञ्चुकिनः सर्पाः । वर्षपर्वताः क्षेत्रसीमाकारिणोऽचलाः सप्तैव । तदुक्तम्—'हिमवान् हेमकूटश्च निषधो मेरुरेव च । श्वेतः कृष्णश्च शृङ्गी च सप्तैते वर्षपर्वताः' । तेषां समूहमिवान्तःस्थितानि मध्यस्थितान्यपरिमितान्यसंख्येयानि शृङ्गीहेमानि । 'अलंकाराय यत्स्वर्णं तच्छृङ्गीकनकं विदुः' । तेषां कूटानि यस्मिंस्तत्संबन्धस्तैरपरिमितत्वेन[2] शृङ्गं प्राधान्यं येषामेवंभूतानि हेमकूटानि सुवर्णसमूहा यस्मिन् । 'शृङ्गं प्राधान्यसान्वोश्च' इत्यनेकार्थः । पक्षेऽपरिमितशृङ्गी हेमकूटाचलो यस्मिन् । महाद्वारमपि दुःप्रवेशमित्यतिशयोक्तिः[3] । अवन्तिविषयो मालवदेशस्तत्र गतमपि प्राप्तमपि मागधजनैर्जरासन्धदेशोद्भवजनैरधिष्ठितमिति विरोधः । तत्परिहारस्तु मागधा युद्धान्निवर्तिनो गायनास्तैरधिष्ठितमित्यर्थात् । स्फीतमपि ऋद्धिमदपि भ्रमन्तो नग्ना लोका यस्मिन्निति विरोधः । तत्परिहारस्तु भ्रमन्तो देशान्तरादागता नग्नलोकाः स्तुतिव्रता नग्नाचार्याश्च यस्मिन्नित्यर्थात् ।

ससंभ्रमं सवेगमुपगतैः प्राप्तैः कृतः प्रणामो येनैवंभूतैः प्रतीहारमण्डलैर्द्वारपालसमूहैरुपदिश्यमान उपदर्श्यमानो मार्गः पन्था यस्य स तथा । बहुभिर्वर्षैर्विद्याभ्यासं विधाय गृहागतत्वेन तादृशगृहज्ञानाभावाद्द्वारपालैर्मार्गः प्रदर्श्यत इति भावः । यद्वा पितुराह्वानजनितप्रमोदातिरेकेण विस्मृतान्यव्यापारत्वात्तत्प्रदर्शनं युक्तमेवेति भावः । राजगृहप्रवेशानन्तरं स चन्द्रापीडो भुवनान्तराणीव सप्तकक्षान्तराण्यतिक्रम्य पितरं तारापीडमपश्यदित्यन्वयः । पुनः कीदृशः । राजलोकेन प्रणम्यमानो नमस्क्रियमाणः । अथ राजलोकं विशिनष्टि—**सर्वत इति** । सर्वतः

---

**टिप्प०—1** प्रजाभिः कृतस्य अकृतस्य सुन्दररूपेण कृतस्य च ( कार्यस्य ) विचारे इति राजकुलपक्षे । कृतयोः अकृत(पाप)सुकृत(पुण्य)योर्विचारे इति यमभटपक्षे । 2 अस्पष्टमिदम् । अन्तःस्थितः अपरिमितानां शृङ्गिणां ( गवादीनाम् ) हेम्नां च कूटो ( समूहः ) यस्मिन्निति राजकुलम् । अन्तःस्थितौ अपरिमितौ (महान्तौ) शृङ्गि–हेमकूटौ तन्नामकौ पर्वतौ यस्य इति वर्षपर्वतसमूहः । इत्यर्थः । 3 अज्ञानमिदम्, विरोधालंकारोऽत्र । महाद्वारत्वे दुःप्रवेशत्वं विरुद्धम् । राज्ञः प्रतापात् साधारणैः दुःप्रवेशत्वमिति तत्परिहारः ।

---

**पाठा०—**१ परिस्फुरत्पद्म. २ चित्रकलापि. ३ उपशोभितम्. ४ शिलीमुख. ५ कञ्चुकिसहस्राध्यासितम्. ६ परिमाण. ७ शृङ्ग; शृङ्गि.

पूर्वकृतावस्थानेन दूरपर्यस्तमौलिशिथिलित[1]चूडामणिमरीचिचुम्बितवसुधातलेन राजलोकेन प्रत्येकशः प्रतीहारनिवेद्य[2]मानेन सादरं प्रणम्यमानः, पदे पदे चाभ्यन्तरविनिर्गताभिराचारकुशलाभिरन्तःपुरवृद्धाभिः क्रियमाणा[3]वतरणमङ्गलः, भुवनान्तराणीव विविधप्राणिसहस्रसंकुलानि सप्तकक्षान्तराण्यतिक्रम्याभ्यन्तरावस्थितम्, अनवरतश[4]स्त्रग्रहणश्यामिकालीढकरतलैः करचरणलोच[5]नवर्जमसितलोहजाल[6]काव्रृतशरीरैरालानस्तम्भैरिव गजमदपरिमललोभ[7]निरन्तरनिलीनमधुकरपटलजटिलैः कुलक्रमागतैरुदात्तान्वयैरनुरक्तैर्महाप्राण[8]तयातिकर्कशतया च दानवैरिवाशं[9]याकारसंभाव्यमानपराक्रमैः सर्वतः शरीररक्षाधिकारनियुक्तैः पुरुषैः परिवृतम्, उभयतो वारविलासिनीभिश्चानवरतमुद्धूयमानधवलचामरम्, अमलपुलिनतलशोभिनि सुरकुञ्जरमिव मन्दाकिनीवारिणि हंसं[10]धवलशयनतले निषण्णं पितरमपश्यत्। आलोकयेति च प्रतीहारवचनानन्तरमतिदूरावनतेन चलितचूडामणिना शिरसा कृतप्रणाममेह्येही[11]त्यभिदधानो दूरादेव प्रसारितभुजयुगलः शयनतलादीषदु[12]च्छ्वसितमूर्तिरानन्दजलपू[13]र्यमाणलोचनः समुद्गत-

---

समन्तात्प्रचलितेनोत्थितेन कुमारागमनप्रतीक्षया पूर्वं कृतं विहितमवस्थानमवस्थितिर्येन । दूरादेव पर्यस्ता नम्रा ये मौलयः शिरांसि मुकुटानि वा तेभ्यः शिथिलिताः श्लथीभूता ये चूडामणयस्तेषां मरीचिभिश्चुम्बितमाश्लिष्टं वसुधातलं येन। प्रत्येकशः प्रत्येकं प्रतीहारो द्वारपालस्तेन निवेद्यमानेन निवेदनां क्रियमाणेन सादरं यथा स्यात्तथेति क्रियाविशेषणम्। पदे पदे प्रतिपदमभ्यन्तरान्मध्यप्रदेशाद्विनिर्गताभिर्बहिर्निःसृताभिराचारे राजस्थितौ कुशलाभिर्निपुणाभिरन्तःपुरवृद्धाभिर्महत्तरिकाभिः क्रियमाणमवतरणमङ्गलं यस्य सः। अथ राजानं विशेषयन्नाह—**अभ्यन्तरेति**। अभ्यन्तरे मध्यगृहेऽवस्थितं कृतावस्थानम्। पुनः कीदृशम्। पुरुषैः परिवृतं आवृतम्। पुरुषान्विशेषयन्नाह—**अनवरतेति**। अनवरतं निरन्तरं यच्छस्त्रग्रहणं तेन या श्यामिका तयालीढमाश्लिष्टं करतलं हस्ततलं येषां तैः। करचरणलोचनवर्जम् एतान्विहायेत्यर्थः। तेषामप्यावरणे शस्त्रग्रहणगतिप्रेक्षणानामेवाभावः स्यादित्यर्थः। असितं यल्लोहजालकं तेनाव्रृतमाच्छादितं शरीरं येषां तैः। कैरिव। आलानस्तम्भैरिव गजबन्धनस्तम्भैरिव। असितत्वसाम्यादाह—**गजेति**। गजस्य हस्तिनो यो मदो दानं तस्य यः परिमलस्तस्य लोभेन निरन्तरं निलीना ये मधुकरा भ्रमरास्तेषां पटलानि तैर्जटिलैर्व्याप्तैः। कुलक्रमागतैः परम्परायातैः। उदात्तो महानन्वयो वंशो येषां तैः। अनुरक्तैः प्रीतिमद्भिः। महाप्राणतया महापराक्रमतयातिकर्कशतयातिनिष्ठुरतया च दानवैरिव दनुजैरिवाशयश्चित्ताभिप्रायः, आकार आकृतिः, ताभ्यां संभाव्यमानः पराक्रमः साहसं येषु तैरेवंभूतैः सर्वतश्चतुर्दिक्षु शरीररक्षाधिकारनियुक्तैरात्मरक्षकैः पुरुषैः परिवृतं परिवेष्टितम्। उभयतः पार्श्वद्वये वारविलासिनीभिर्वारयोषिद्भिरनवरतमुद्धूयमानं वीज्यमानं धवलचामरं यस्य स तम्। पुनः कीदृशम्। हंसवद्धवलं यच्छयनतलं शय्यातलं तत्र निषण्णं स्थितम्। कमिव। मन्दाकिनी गङ्गा तस्या वारिणि जले सुरकुञ्जरमिवैरावणमिव। शयनं विशिनष्टि—**अमलेति**। अमलं निर्मलं यत्पुलिनं सैकतं तस्य तलं तद्वच्छोभिनि विराजिनि। अन्वयस्तु प्रागेवोक्तः। आलोकय विलोकयेति प्रतीहारवचनानन्तरं द्वारपालोक्तेः पश्चादतिदूरादतिदविष्ठदेशादवनतेन नम्रेण चलितः कम्पितश्चूडामणिः शिरोमणिर्यस्यैवंभूतेन शिरसा मस्तकेन कृतः प्रणामो येन तम्। एह्येहि। वीप्सायां द्वित्वम्। आगच्छागच्छेत्यभिदधान इति ब्रुवाणः दूरादेव प्रसारितं विस्तारितं भुजयुगलं बाहुयुग्मं येन सः। शयनतलादीषत्किंचिदुच्छ्वसितोर्ध्वीभूता मूर्तिः शरीरं यस्य सः। आनन्दजलेन प्रमोदबाष्पेण पूर्यमाणे भ्रियमाणे लोचने नेत्रे यस्य सः। आनन्दरूपमभिव्यञ्जयन्नाह—**समुद्गतेति**। समुद्गतः प्रादुर्भूतो यः

---

**पाठा०**—१ चलित. २ निवेद्यमाननाम्ना. ३ अवतारण; अवतरणक. ४ शस्त्रग्रह. ५ विलोचन. ६ जालावृत. ७ लोभनिलीन. ८ महाप्रमाणतया. ९ अतिशयाकारम्; आशयाकारम्; अतिशयाकारैः; अतिशयाकार. १० हंसधवले. ११ आदरेणाभिदधानः. १२ उल्लसित. १३ आपूर्यमाण.

पुल[1]कतया सीव्यन्निवैकीकु[2]र्वन्निव पिबन्निव तं पिता विनयावनतमालिलिङ्ग। आलिङ्गितो-न्मुक्तश्च पितुश्चरणपीठसमीपे पिण्डीकृतमुत्तरीयमा[3]त्मीयं ताम्बूल[4]करङ्कवाहिन्या सत्वरमास-नीकृतमपनयेति शनैर्वदन्नग्रचरणेन [5]समुत्सार्य चन्द्रापीडः क्षितितल एव निषसाद। [6]अनन्तरं निहिते चास्यासने राज्ञा सुतनिर्विशेषमुपगूढो वैशम्पायनो न्यषीदत्। मुहूर्तमिव विस्मृत-चामरोत्क्षेपनिश्चलानां वारविलासिनीनां साभिलाषैरनिलचलितकु[7]वलयदामदीर्घै[8]राजिह्मत[9]र-लतारसारैरवलुप्यमान इव दृष्टिपातैः स्थित्वा 'गच्छ वत्स, पुत्रवत्सलां मातरमभिवाद्य [10]दर्शनलालसां यथाक्रमं सर्वा जननीर्दर्शनेनानन्दय' इति विसर्जितः पित्रा सविनयमु-त्थाय निवारितपरिजनो वैशम्पायनद्वितीयोऽन्तःपुरप्रवेशयोग्येन [11]राजपरिजनेनोपदिश्यमा-नवर्त्मान्तःपुरमाययौ।

तत्र धवलकञ्चुकावच्छन्नशरीरैर[12]नेकशतसंख्यैः श्रियमिव क्षीरोदकल्लोलैः समन्तात्परिवृतां

---

पुलको रोमाञ्चस्तस्य भावस्तत्ता तया सीव्यन्निव सीवनं कुर्वन्निवैकीकुर्वन्निव तन्मयीकुर्वन्निव पिबन्निवात्यादरेण पानं कुर्वन्निव। पितुर्निकटे विनयातिशयं व्यञ्जयन्नाह—**विनयेति**। विनयाद्वैनयिकगुणेनावनतं नम्रीभूतं पिता तारापीडस्तं चन्द्रापीडमालिलिङ्ग परिषस्वजे। पूर्वमालिङ्गितः पश्चादुन्मुक्तो विभिन्नीभूतः पितुस्तारापीडस्य चर-णयोः पादयोः पीठं पादासनं तस्य समीपेऽन्तिके ताम्बूलकरङ्कवाहिन्या पिण्डीकृतमात्मनः स्वकीयमुत्तरीयं सत्वरं शीघ्रमासनीकृतं विष्टरीकृतम् अपनय दूरीकुर्विति शनैःशनैर्वदन्ब्रुवन्नग्रचरणेन तत्समुत्सार्य दूरीकृत्य चन्द्रापीडः क्षितितल एव भूमावेव निषसादोपविष्टवान्। तदनन्तरं तदुपवेशनानन्तरं राज्ञा तारापीडेन सुतनिर्विशेषं यथा स्यात्तथोपगूढ आलिङ्गितो वैशम्पायनो निहिते स्थापितेऽस्यासने च[1]न्द्रापीडासने न्यषीददुपाविशत्। विस्मृतो यश्चामरोत्क्षेपस्तेन निश्चलानां वारविलासिनीनां वाराङ्गनानां दृष्टिपातैर्नेत्रप्रान्तैरवलुप्यमान इवाच्छा-द्यमान इव। दृष्टिपातं विशेषयन्नाह—**सेति**। सहाभिलाषाभिर्वर्तमानैः साभिलाषैः। सहस्य सादेशः। अनिलेन वायुना चलितं कम्पितं यत्कुवलयदाम कमलमाला तद्वद्दीर्घैरायतैराजिह्माकुटिला तरला चञ्चला तारा कनीनिका सैव सारं प्रधानं येषु तैः। मुहूर्तमिव कियत्कालं तत्र राजसमीपे स्थित्वा स्थानं कृत्वा। हे वत्स हे पुत्र, गच्छ व्रज। पुत्रवत्सलां पुत्रहितां मातरं जननीं दर्शनलालसां त्वद्दर्शनोत्कण्ठितामभिवाद्य पादग्रहणं कृत्वा यथाक्रमं यथानुक्रमं सर्वा जननीरुपमातृर्दर्शनेनानन्दय प्रमोदय। इति हेत्वर्थे। पित्रा तारापीडेन विस-र्जितो विसृष्टः सविनयं यथा स्यात्तथोत्थायोत्थानं कृत्वा निवारितस्तत्रैव रक्षितः परिजनः परिच्छदो येनैवंभूतो वैशम्पायनद्वितीयोऽन्तःपुरप्रवेशयोग्येन राजपरिजनेनोपदिश्यमानवर्त्मान्तःपुरमाययौ समागमत्।

**तत्रेति**। तत्र अन्तःपुरे मातरं जननीं प्रणनाम नमश्चक्र इति दूरेणान्वयः। अथ मातुर्विशेषणानि—धवल-कञ्चुकैरवच्छन्नान्याच्छादितानि शरीराणि येषां तैः। अनेके ये शतसंख्यास्तैः शुद्धान्तर्वंशिकैः शुद्धोऽन्तर्वंश-श्चान्तःपुरं तत्र नियुक्ता आन्तर्वंशिकाः कञ्चुक्यादयस्तैः समन्तात्सर्वतः परिवृतां परिवेष्टिताम्। कैः कामिव।

---

टिप्प०—1 इदमनुचितम्। किन्तु—अस्य (चन्द्रापीडस्य) अनन्तरं (पश्चात्) निहिते आसने, इत्यर्थः। ब्राह्मणत्वेन वैशम्पायनायासनदानं नानुचितम्। 2 'आजिह्मतरलतरतारैः' इत्येव पाठः। तरलतराः ताराः येष्वित्यर्थः। सारैरिति पाठेऽपि तालव्यादिः 'शारैः' इति पाठः। आजिह्माः तरलतराश्च यास्ताराः ताभिः शारैश्चित्रितैः। इति तदर्थः।

---

पाठा०—१ पुलककण्टकतया. २ एकीकुर्वन्निव तम्. ३ आत्मीयम्. ४ करण्ड. ५ समुत्सार्य क्षितितले. ६ अनन्तरनिहिते; अनन्तरविनिहिते. ७ कुवलयदल. ८ जिह्मित. ९ तरलतरतार. १० दर्शनलालसाः. ११ परिजनेन. १२ नैकशत.

शुद्धान्तवंशिकैः, अतिप्रशान्ताकाराभिश्च कषायरक्ताम्बरधारिणीभिः संध्याभिरिव सकललोकवन्द्याभिः प्रलम्बश्रवणपाशाभिर्विदितानेककथावृत्तान्ताभिर्भूतपूर्वाः पुण्याः कथाः कथयन्तीभिरितिहासान्वाचयन्तीभिः पुस्तकान्दधतीभिर्धर्मोपदेशान्निवेदयन्तीभिः जरत्प्रव्रजिताभिर्विनोद्यमानाम्, उपरचितस्त्रीवेषभाषेण गृहीतविकटप्रसाधनेन वर्षवरजनेनोपसेव्यमानाम्, अनवरताभिधूयमानवालव्यजनकलापाम्, अङ्गनाजनेन च वसनाभरणकुसुमपटवासताम्बूलतालवृन्ताङ्गरागभृङ्गारधारिणा मण्डलोपविष्टेनोपास्यमानाम्, पयोधरावलम्बिमुक्तागुणाम् अचलमध्यस्रवद्गङ्गाप्रवाहामिव मेदिनीम्, आसन्नदर्पणपतितमुखप्रतिबिम्बाम् अर्क-

---

क्षीरोदकल्लोलैः क्षीरसमुद्रतरङ्गैः परिवृतां श्रियमिव लक्ष्मीमिव । पुनः कीदृशीम् । जरत्प्रव्रजिताभिर्वृद्धतापसीभिर्विनोद्यमानां विनोदविषयीक्रियमाणाम् । अथ च तापसीनां विशेषणानि–अतिप्रशान्तोऽतिशान्त आकारो यासां ताभिः । कषायेण रक्तं यदम्बरं वस्त्रं तद्धारयन्तीत्येवंशीलास्ताभिः । सकलाः समग्रा ये लोकास्तैर्वन्द्याभिर्वन्दनीयाभिः । रक्ताम्बरसाम्यादाह—संध्याभिरिव । प्रलम्बा लम्बायमानाः श्रवणपाशाः कर्णपाल्यो यासां ताभिः । विदिता ज्ञाता अनेकाः कथाः प्रबन्धास्तासां वृत्तान्तो वार्ता याभिस्तास्ताभिः । पूर्वं भूता भूतपूर्वा एवंविधाः पुण्याः पवित्राः कथाः संबन्धान्कथयन्तीभिः प्रतिपादयन्तीभिः । इतिहासान्पूर्ववृत्तान्तान्वाचयन्तीभिः पठन्तीभिः । पुस्तकाञ्छास्त्रान्दधतीभिर्धारयन्तीभिः । धर्मोपदेशान्निवेदयन्तीभिर्ज्ञापयन्तीभिः । पुनस्तामेव विशेषयन्नाह—**उपरचितेति** । उपरचितो विहितः स्त्रीणां वेषो नेपथ्यं भाषा च येन स तथा तेन । गृहीतमात्तं विकटं विपुलं प्रसाधनं प्रतिकर्म येनैवंविधेन वर्षवरजनेन षण्ढजनेनोपसेव्यमानां पर्युपास्यमानाम् । कामन्दक्यां तेषां लक्षणं यथा—'ये त्वल्पसत्त्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः । जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः' इति । अनवरतं निरन्तरमभिधूयमानो वीज्यमानो वालव्यजनकलापश्चामरसमूहो यस्याः सा ताम् । अङ्गनाजनेन स्त्रीजनेन चोपास्यमानां सेव्यमानाम् । अङ्गनाजनं विशेषयन्नाह—**वसनेति** । वसनानि वस्त्राणि; आभरणानि भूषणानि; कुसुमानि पुष्पाणि, पटवासः पिष्टातः, ताम्बूलं नागवल्लीदलानि, तालवृन्तं व्यजनम्, अङ्गरागो विलेपनम्, भृङ्गारः कनकालुका, एतान्धरतीति धारी तेन धारिणा । कीदृशेन । मण्डल्योपविष्टेन स्थितेन । अन्वयस्तु प्रागेवोक्तः । पुनरपि विशेषतस्तामेव विशेषयन्नाह—**पयोधरेति** । पयोधरयोः कुचयोरवलम्बी मुक्तागुणो हारो यस्यास्ताम् । स्तनानामत्युच्चत्वेन मुक्तानां चात्युज्ज्वलत्वेनोपमान्तरं प्रदर्शयन्नाह—**अचलेति** । अचलयोः पर्वतयोर्मध्येऽन्तरे स्रवन् वहमानो गङ्गाप्रवाहो यस्यामेवंभूतां मेदिनीमिव वसुंधरामिव । सर्वसहत्वात्तस्याः पृथिव्या उपमानम् । **आसन्नेति** । आसन्नः समीपवर्ती यो दर्पण आदर्शस्तत्र पतितो मुखप्रतिबिम्बो यस्यास्ताम् । अत्रार्थे उपमानान्तरं दर्शयन्नाह—**अर्केति** । अर्कबिम्बे सूर्यमण्डले प्रविष्टं शशिमण्डलं यस्यामेवंभूतां दिवमिवाकाशमिव । तस्यामेव शशिबिम्बस्यार्कबिम्बे प्रवेशात् । अत्रादर्शस्य सूर्यबिम्बोपमानम् । मुखस्य शशिमण्डलोपमानम् ।

---

**टिप्प०**—1 अतिप्रशान्ताकाराभिरित्यादि विशेषणत्रयं प्रव्रजितासु सन्ध्यासु च योज्यते । अतिप्रशान्ताकाराभिः सकललोकवन्द्याभिरिति तूभयत्र समानं स्पष्टं च । सन्ध्यापक्षे–कषायेण रक्तमिव यदम्बरम् (आकाशम्) तद् धारयन्तीभिरित्यर्थो बोध्यः । 2 पुस्तक-शास्त्रयोः क्लीबत्वमेवोचितम् ।

---

**पाठा०**—१ शुद्धान्तान्तर्वंशिकैः. २ कथालाप. ३ श्रुतपूर्वाः. ४ कथाः. ५ वाचयन्तीभिरितिहासपुस्तकानि ददतीभिः; इतिहासान्वाचयन्तीभिः पुस्तकानि दधतीभिः. ६ निवेदयन्तीभिः पुण्याः कथा जरत्. ७ भारेण. ८ वर्षधर. ९ संसेव्यमानाम्. १० विधूयमानाम्. ११ ताम्बूलवृन्त. १२ अवलम्बित; अन्तरावलम्बित. १३ अचलद्वयप्रवृत्तगङ्गा; अचलद्वयमध्यप्रवृत्तगङ्गा.

बिम्बप्रविष्टशशिमण्डलामिव [1]दिवं समुपसृत्य मातरं [2]प्रणनाम। सा [3]तु तं ससंभ्रममुत्थाप्य सत्यप्याज्ञासंपादनदक्षे पार्श्वपरिवर्तिनि परिजने स्वयमेव [4]कृतावतरणका [5]प्रस्नुतपयोधरक्षरत्पयोबिन्दुच्छलेन द्रवीभूय स्नेहाकुलेन [6]निर्गच्छतेव हृदयेनान्तःशुभ[7]शतानीव ध्यायन्ती मूर्धन्युपाघ्राय तं सुचिरमाशिश्लेष। अनन्तरं च तथैव कृतयथोचितसमुपचारमाश्लिष्टवैशम्पायना स्वयमुपविश्य विनयादवनितले [8]समुपविशन्तमाकृष्य बलादनिच्छन्तमपि चन्द्रापीडमुत्सङ्गमारोपितवती। [9]ससंभ्रमपरिजनोपनीतायामासन्द्यामुपविष्टे च वैशम्पायने चन्द्रापीडं पुनःपुनरालिङ्ग्य ललाटदेशे वक्षसि भुजशिखरयोश्च मुहुर्मुहुः करतलेन परामृशन्ती विलासवती तमवादीत्—'वत्स, कठिनहृदयस्ते पिता येनेयमाकृतिरी[10]दृशी त्रिभुवनलालनीया क्लेशमतिमहान्तमियन्तं कालं लम्भिता। [11]कथमसि सोढवानतिदीर्घामिमां [12]गुरुजनयन्त्रणाम्। अहो, बालस्यापि सतः कठोरस्येव ते महद्धैर्यम्। अहो, वि[13]गलितशिशुजनक्रीडाकौतुकलाघव[14]मर्भके ते हृदयम्। अहो, गुरुजनस्योपरि भक्ति[15]रसाधारणा सर्वा। यथा पितुःप्रसादा-

---

रात्र्या अमावास्योपमानमिति भावः। समुपसृत्य पार्श्वे समागत्य। अन्वयस्तु प्रागेवोक्तः। तु पुनरर्थे। सा विलासवती तं सुतं ससंभ्रमं सवेगं पादपतितमुत्थाप्य पार्श्वपरिवर्तिनि निकटस्थायिनि परिजने परिच्छद आज्ञासंपादनदक्षे नियोगकरणाभिज्ञे सत्यपि स्वयमेवात्मनैव कृतं विहितमवतरणमुत्साह[1]कर्मविशेषो यया सा। हृदयेन चेतसान्तर्मध्ये शुभशतानि कल्याणशतानि ध्यायन्ती चिन्तयन्ती। अथ हृदयविशेषणानि—**प्रस्नु ( प्रस्नु )-तेति**। प्रस्नुतौ पयःपूर्णौ यौ पयोधरौ ताभ्यां क्षरन्तो ये पयोबिन्दवस्तेषां छलेन मिषेण द्रवीभूय रसीभूय निर्गच्छतेव बहिःप्रसर्पतेव स्नेह आभ्यन्तरप्रीतिस्तेनाकुलेन व्याप्तेन मूर्धन्युत्तमाङ्ग उपाघ्राय चुम्बनं कृत्वा तं सुचिरं चिरकालमाशिश्लेषालिलिङ्ग। **अनन्तरं चेति**। अनन्तरम् आलिङ्गनानन्तरम्। तथैव पूर्ववत्। **कृतमिति**। कृतो यथोचितो यथायोग्यः समुपचारः प्रियवाग्व्यापारो यथा स्यात्तथाश्लिष्ट आलिङ्गितो वैशम्पायनो यया सा स्वयमुपविश्य विनयादवनितले समुपविशन्तमासेदिवांसमाकृष्य बलादाकर्षणं कृत्वानिच्छन्तमपि। मातुः श्रमसंभवात्। चन्द्रापीडमुत्सङ्गं क्रोडमारोपितवत्यारोपयामास। ससंभ्रमं सवेगं परिजनेन परिच्छदेनोपनीतायामानीतायामासन्द्यां वेत्रपीठे वैशम्पायन उपविष्टे स्थिते सति चन्द्रापीडं पुनःपुनर्वारंवारमालिङ्ग्योपगूहनं विधाय ललाटदेशेऽलिकप्रदेशे वक्षसि भुजान्तरे भुजशिखरयोः स्कन्धयोर्मुहुर्मुहुर्वारंवारं करतलेन स्वपाणितलेन परामृशन्ती परामर्शनं कुर्वती विलासवती तमवादीदवोचत्। किमुवाचेत्याह—**वत्सेति**। हे वत्स हे पुत्र, कठिनं कठोरं हृदयं यस्यैवंविधस्ते पिता जनको येनेदृश्येतादृशीयमाकृतिराकारस्त्रिभुवने लालनीया पालनीया अतिमहान्तं कालं भूयस्तरमियन्तमेतावत्प्रमाणं क्लेशं खेदं लम्भिता प्रापिता। अतिदीर्घां चिरकालमिमां गुरुजनयन्त्रणां पूज्यजननियन्त्रणां कथं सोढवानसि। अहो इत्याश्चर्ये। ते तव बालस्यापि ततः कठोरस्येव महद्धैर्यम्। अहो इति पूर्ववत्। अर्भके[2] बालके त्वयि विगलितं दूरीभूतं शिशुजना बालजनास्तेषां क्रीडाकौतुकं तेन लाघवं लघुत्वमेवंभूतं हृदयम्। अहो इति पूर्ववत्। गुरुजनस्योपर्यसाधारणी[3] सर्वा भक्तिः। यथा पितुर्जनकस्य प्रसादान्माहात्म्यात्समस्ताभिः समग्राभिर्विद्याभिरुपेतः सहित आलोकितोऽसि वीक्षितोऽसि।

---

**टिप्प०**—1 यानावतरणकालिकं धान्यदूर्वादिनिक्षेपरूपं मङ्गलाचरणम्। 2 'अर्भकस्यापि ते हृदयम्' इत्येव ग्रन्थकारानुमतः पाठः। 3 'असाधारणी भक्तिः सर्वथा' इत्येव पाठः। 'सर्वा' इति विशेषणस्याऽसमर्पकत्वात्।

---

**पाठा०**—१ दिवसमुपसृत्य; दिवसश्रियं समुपसृत्य. २ ननाम. ३ तु ससंभ्रममुत्थाय. ४ कृतावतरणकापस्नुतपयोधर; कृतावतरणकमङ्गला प्रस्नुतपयोधर. ५ प्रस्तुत. ६ निर्गतेव. ७ शतान्यभिध्यायन्ती; शतानीवाभिध्यायन्ती. ८ समुपाविशन्तम्; उपविशन्तम्. ९ ससंभ्रमम्. १० ईदृश. ११ कथमपि. १२ गुरुयन्त्रणाम्. १३ विगत. १४ अर्भकत्वे त्वयि; अर्भकस्यापि ते; अर्भके ते. १५ असाधारणी सर्वथा.

त्समस्ताभिरुपेतो विद्याभिरालोकितोऽस्येवमचिरेणैव[1] कालेनानुरूपाभिर्वधूभिरुपेतमालोकयिष्यामि' इत्येवमभिधाय लज्जास्मितावनतमात्ममुखप्रतिबिम्बगर्भे विकचकमलकृतकर्णपल्लवावतंस इव कपोले पर्यचुम्बदेनम्। एवं च तत्रापि नातिचिरमेव[2] स्थित्वा क्रमेण सर्वान्तःपुराणि दर्शनेनानन्दयामास[3]।

निर्गत्य च राजकुलद्वारा[4] बहिःस्थितमिन्द्रायुधमारुह्य तथैव तेन राजपुत्रलोकेनानुगम्यमानः शुकनासं द्रष्टुमयासीत्। यामावस्थितविविधगजघटासंकटम्[5], अनेकतुरङ्गसहस्रसंबाधम्, अपरिमितजनसमूहसहस्रसंमर्दसंकुलम्[6], एकदेशोपविष्टैः सहस्रशो निबद्धचक्रवालैरनेककार्यागतैर्दर्शनोत्सुकैः समन्ततो विविधशास्त्राञ्जनोन्मीलितप्रतिभैरवरच्छद्मना[7] विनयानुरा-

---

एवं पूर्वोक्तप्रकारेणाचिरेणैव कालेन स्तोककालेनानुरूपाभिर्योग्याभिः वधूभिरुपेतमालोकयिष्यामीत्येवमभिधाय एवं कुमारं पर्यचुम्बच्चुम्बनं कृतवती। कीदृशम्। लज्जास्मितेनावनतं नम्रीभूतम्। कस्मिन्। कपोले गल्लातपरभागे। कीदृशे। आत्मनो मातुर्मुखप्रतिबिम्बो गर्भे यस्मिन्। मुखस्य कमलसाम्यादाह—**विकचेति**। विकचैर्विकस्वरैः कमलैः[1] कृतो विहितः कर्णपल्लवावतंसो यस्मिन्। **एवं चेति**। पूर्वोक्तप्रकारेण तत्रापि मातुः समीपेऽपि नातिचिरं नातिचिरकालमेव स्थित्वावस्थानं कृत्वा क्रमेण परिपाट्या सर्वान्तःपुराणि समग्राण्यवरोधानि[2] दर्शनेनानन्दयामास प्रमोदयामास।

राजकुलद्वारा[3] प्रतोलीमार्गेण निर्गत्य बहिरागत्य बहिःस्थितमिन्द्रायुधमश्वमारुह्य तथैव पूर्वोक्तप्रकारेण तेन पूर्वोक्तेन राजपुत्रलोकेनानुगम्यमानः शुकनासं मन्त्रिणं द्रष्टुं विलोकयितुमयासीदित्यन्वयः। 'या प्रापणे' लुङि रूपम्। ततश्च शुकनासगृहद्वारमासाद्य शुकनासभवनं विवेशेत्यन्वयः। अथ गृहद्वारं विशेषयन्नाह—**यामेति**। यामावस्थिताश्चतुष्किकायां स्थिता विविधानां गजानां घटा समूहस्तया संकटं संबाधं प्रवेष्टुमशक्यम्। अनेके ये तुरङ्गा स्तुरङ्गमास्तेषां सहस्रं तेन संबाधं[4] बाधासहितम्। **अपरीति**। अपरिमिता असंख्या ये जना मनुष्यास्तेषां समूहा भिन्नभिन्नजातीयनरगणास्तेषां सहस्राणि तेषां संमर्दोऽन्योन्याघातस्तेन संकुलम्। एकदेश एकान्त उपविष्टैः स्थितैः सहस्रशो निबद्धानि चक्रवालानि यैः। अनेकानि यानि कार्याणि तदर्थं आगतैः प्राप्तैः। दर्शनार्थमवलोकनार्थमुत्सुकैरुत्कण्ठितैः। **समेति**। समन्ततः सर्वतो विविधानि यानि शास्त्राणि तान्येवाञ्जनं नेत्रौषधं तेनोन्मीलितानि विकासं प्रापितानि प्रतिभानि[5] चक्षूंषि येषां तैः। **अवरेति**। अवरच्छद्मना[6] सेवक-

---

**टिप्प०**—1 विकस्वरेण कमलेन, इत्येकवचनमेवोचितम्। प्रतिबिम्बस्य (उपमानकोटिस्थस्य, मुखप्रतिबिम्बस्य) एकत्वात्। 2 अवरोधान्, पुंस्त्वात्। 3 'राजकुलद्वारावस्थितम्' इत्येव ग्रन्थशैल्यनुकूलः पाठः। 4 संकीर्णम्। 'संकटं ना तु संबाधः कलिलं गहनं समे। संकीर्णे संकुलाकीर्णे' इत्यमरः। 5 पुनरज्ञानं टीकाकृतः। उन्मीलितानि बुद्धिरूपलोचनानि येषामिति पाठे सोयमर्थः शोभते। शास्त्रेष्वञ्जनत्वारोपो हि प्रतिभासु लोचनत्वारोपमपेक्षते। 6 अत्रापि ग्रन्थस्य सर्वथा भ्रंशः कृतः। 'चीवरच्छद्मना' इत्येव पाठः। तथा च—चीवराणि बौद्धभिक्षुप्रावरणानि तेषां व्याजेन—विनये धर्मशिक्षायामनुराग एव अनुरागः (रञ्जनद्रव्यम्) विद्यते येषाम् अर्थात् धर्मानुरागरूपेण रङ्गेण रञ्जितैः धर्मपटैरिव बौद्धाचारसिद्धवसनविशेषैरिव (येषु पटेषु धर्मशासनान्युल्लिख्य शिष्येभ्यः प्रदर्श्यन्ते) अवगुण्ठितैः बौद्धशासनमार्गनिपुणैः (बौद्धभिक्षुभिः)। अयं भावः—बौद्धभिक्षुभिर्यानि चीवराण्यङ्गेषु धारितानि तेषु धर्मपटत्वमुत्प्रेक्ष्यते। अर्थात् चीवराणां तु व्याजो वर्तते, वास्तवे तु धर्मपटैरेव ते आच्छादिताः। अनुराग इति श्लिष्टम्, ततश्च श्लेषोत्थापिता सापह्नवोत्प्रेक्षाऽलंकारः।

---

**पाठा०**—१ अवलोकसे एवम्. २ नातिचिरं स्थित्वा. ३ नन्दयामास. ४ द्वारावस्थितम्. ५ गन्धगज. ६ समूहसंमर्द. ७ उन्मीलितबुद्धिलोचनैश्चीवर. ८ रक्ताम्बरच्छद्मना गुरुविनयानुरागिभिः.

गिभिर्धर्मपटैरिवावगुण्ठितैः शाक्यमुनिशासनपथधौरेयै रक्तपटैः[1] पाशुपतैर्द्विजैश्च दिवानिशमासेव्यमानम्, अभ्यन्तरप्रविष्टानां च सामन्तानां जघनोपविष्टपुरुषोत्सङ्गावस्थितद्विगुणकुथाभिरतिचिरावस्थाननिर्वेदप्रसुप्ताधोरणाभिरपर्याणाभिः सपर्याणाभिश्च निश्चलावस्थानप्रचलायिताभिः शतसहस्रशः करिणीभिराकीर्णं शुकनासगृहद्वारमासाद्य सत्वरप्रधावितैर्द्वारदेशावस्थितैः प्रतीहारपुरुषैरनिवार्यमाणोऽपि राजकुल इव राजपुत्रो बाह्याङ्गण एव तुरगादवततार। द्वारदेशावस्थापिततुरङ्गश्च वैशम्पायनमवलम्ब्य पुरःप्रधावितैः समुत्सारितपरिजनैस्तत्प्रतीहारमण्डलैरुपदिश्यमानमार्गस्तथैव चलितमुकुटकोटिभिर्नरेन्द्रवृन्दैः सेवासमुपस्थितैरुत्थायोत्थाय प्रणम्यमानस्तथैव च प्रचण्डप्रतीहारहुंकारभयमूकीभवत्परिजनानि प्रचलितवेत्रलताचकितसामन्तचक्रचरणशतचलितवसुंधराणि कक्षान्तराणि निरीक्षमाणस्तथैव च नवनव-

---

मिषेण विनयेनानुरागो विद्यते येषां तैः। तद्गुणानुरागेण विनयादेव सेवकीभूतैरित्यर्थः। धर्मपटैरिवावगुण्ठितैराच्छादितैः शाक्यमुनीनामर्कबान्धववतपस्विनां यच्छासनमाज्ञा तस्य पन्थाः मार्गस्तत्र धौरेयैर्धुरंधरैस्तथा रक्तपटै रक्ताम्बरैः पाशुपतैः शैवैर्द्विजैर्ब्राह्मणैश्च दिवानिशमहर्निशमासेव्यमानमुपास्यमानम्। अभ्यन्तरप्रविष्टानां मध्यगतानां सामन्तानां स्वदेशपार्श्ववर्तिराज्ञां च शतसहस्रशः करिणीभिर्धेनुकाभिराकीर्णं व्याप्तम्। अथ करिणीविशेषणानि—**जघनेति**। कव्या अग्रिमो भागो जघनं तत्रोपविष्टाः स्थिता ये सामन्तीयाः पुरुषास्तेषामुत्सङ्गाः क्रोडास्तेष्ववस्थिता द्विगुणाः कुथा वर्णपरिस्तोमा यासु ताभिः। **अतीति**। अतिचिरं बहुकालं यदवस्थानं तस्माद्यो निर्वेदः स्वावमाननं तेन प्रसुप्ता निद्रां प्राप्ता आधोरणा हस्तिपका यासु ताभिः। सह पर्याणेन पल्ययनेन वर्तमानास्ताभिर्निश्चलं चेष्टारहितं यदवस्थानं तेन प्रचलायिताभिः संजातनिद्राभिरेतादृशं शुकनासगृहद्वारमासाद्य प्राप्य सत्वरं सवेगं प्रधावितैरतित्वराकृतगमनैर्द्वारदेशावस्थितैः प्रतीहारपुरुषैर्द्वारपालकैरनिवार्यमाणोऽप्यनिषेध्यमानोऽपि राजकुल इव बाह्याङ्गण एव राजपुत्रस्तुरगादश्वादवततारोत्तीर्णवान्। **द्वारेति**। द्वारदेशे प्रतोल्यामवस्थापितस्तुरङ्गो येन स वैशम्पायनमवलम्ब्यालम्ब्य पुरः प्रधावितैरग्रतः शीघ्रप्रचलितैः। समुत्सारितो दूरीकृतः परिजनो यैः। तथैव पूर्ववत्। प्रतीहारमण्डलैरुपदिश्यमान उपदेशविषयीक्रियमाणो मार्गः पन्था यस्य स तथा। तथैव पूर्ववत्। चलिताः कम्पिता मुकुटानां कोटयो येषां तैः नरेन्द्रवृन्दै राजसमूहैः सेवार्थं सपर्यार्थं समुपस्थितैरागतैरुत्थायोत्थायेति। उत्थानमुत्थानं कृत्वेत्यर्थः। प्रणम्यमानो नमस्क्रियमाणः। तथैव पूर्ववत्। प्रचण्डा ये प्रतीहारा द्वारपालकास्तेषां हुंकारा हुंकृतयस्तेभ्यो भयं भीतिस्तेन मूकीभवन्मौनतां समाश्रयन्परिजनो येषु तानि। **प्रचलितेति**। प्रचलिता इतस्ततो विक्षिप्ता या वेत्रलता वेतसयष्टयस्ताभिश्चकितं शङ्कितं यत्सामन्तचक्रं तस्य चरणशतेन पादशतेन चलिता कम्पिता वसुंधरा पृथ्वी येषु तान्येवंविधानि कक्षान्तराणि गृहप्रदेशानि। 'कक्षा प्रकोष्ठे केदारे काञ्च्यां मध्येभबन्धने' इति विश्वः। निरीक्षमाणो विलोकमानः। **नवेति**। नवनवा नवीनाः सुधावदाताः सुधयावदाता उज्ज्वला ये प्रासादास्तैर्निरन्तरं व्याप्तं द्वितीयमिव राजकुलं शुकनासभवनं विवेश प्रविष्टवान्। प्रविश्य च प्रवेशं कृत्वा।

---

**टिप्प०**—1 सामन्तानां शुकनाससविधे गमनोत्तरं तद्भृत्याः करिणीनां कटिदेशे उपविष्टाः सन्ति तेषामङ्के च द्विगुणीकृताः ( अपसार्य द्विगुणभागे संकोचिताः 'तहकिए' ) कुथाः स्थिताः सन्तीत्याशयः। 2 निद्रावेशेन घूर्णिताभिरित्यर्थो बोध्यः 'घूर्णितं प्रचलायितम्' अमरः।

---

**पाठा०**—१ रक्तपादैः. २ स्थानोपविष्टपुरुषावस्थित. ३ सङ्गस्थित. ४ द्विगुणित. ५ धोरणाभिः सपर्याणाभिः. ६ बाह्याङ्गे. ७ तुरङ्गात्. ८ अवस्थित. ९ तथैव प्रतीकार; तथैव च प्रतीहार. १० तथैव प्रचण्ड. ११ त्रासनचकित. १२ तथैव नव.

सुधाव[1]दातप्रासादनिरन्तरं द्वितीयमिव राजकुलं शुकनासभवनं विवेश । प्रविश्य चानेकनरे-न्द्रसहस्रमध्योप[2]स्थितमपरमिव पितरमुपदर्शितविनयो दूरावनतेन मौलिना शुकनासं ववन्दे ।

शुकनासस्तं स[3]संभ्रमं [4]समुत्थायानु[5]पूर्व्येणोत्थितराजलोकै[6]ः सादरमभिमुखदत्ताविरलपदः प्र[7]हर्षविस्फारितविलो[8]चनागतानन्दजलकणः [9]समं वैशम्पायनेन प्रेम्णा गाढमालिलिङ्ग । आलि-ङ्गितोन्मुक्तश्च सादरोपनीतमपहाय रत्नासनमवनावेव राजपुत्रः समुपाविशत्, तदनु च वैशम्पायनः । [10]उपविष्टे च राजपुत्रे शुकनासवर्जमन्यदखिलमवनिपालचक्रमुज्झितनिजासन-मवनितलमभजत । स्थित्वा च तूष्णीं [11]क्षणमिव शुकनासः समुद्गतप्रीतिपुलकैरङ्गैरावेद्यमान-[12]हर्षप्रकर्षस्तमब्रवीत्—'तात[13], अद्य खलु देवस्य तारापीडस्य समाप्तविद्यमुपारूढयौवनमा-लोक्य भवन्तं सुचिराद्भुवनराज्यफलप्राप्तिरुपजाता । अद्य समृद्धाः सर्वा गुरुजनाशिषः । अद्य फलितमनेकजन्मान्तरोपात्तमवदातं कर्म । अद्य प्रसन्नाः कुलदेवताः । न[14] ह्यपुण्यभाजां भवादृशास्त्रि[15]भुवनविस्मयज[16]नकाः पुत्रतां प्रतिपद्यन्ते । केदं वयः । केयममानुषी शक्तिः । क

---

**अनेकेति** । अनेकेषां नरेन्द्राणां यत्सहस्रं तन्मध्य उपस्थितमपरमिवान्यमिव पितरं जनकम् । **उपेति** । उपदर्शितो विनयो येन स तथा दूराद्विप्रकृष्टादवनतेन मौलिना शिरसा शुकनासं ववन्दे नमश्चक्रे ।

शुकनासस्तं चन्द्रापीडं गाढं यथा स्यात्तथालिलिङ्गोपगूहनं चक्रे । ससंभ्रमं सवेगं समुत्थायोत्थानं कृत्वा वैशम्पायनेन स्वसुतेन समं सार्धम् । केन । प्रेम्णा स्नेहेन । अथ शुकनासं विशेषयन्नाह—**आन्विति** । आनु-पूर्व्यानुक्रमेणोत्थितो राजलोको यस्मात् । आदरेण सहवर्तमानं सादरं यथा स्यात्तथा । अभिमुखं संमुखं दत्ता-न्यविरलान्यनवच्छिन्नानि पदानि येन स तथा । **प्रहर्षेति** । प्रहर्षेण प्रमोदेन विस्फारिते विस्तारिते ये विलोचने तयोरागता आनन्दजलकणा यस्य स तथा । पूर्वमालिङ्गितः पश्चादुन्मुक्तश्च सादरं उपनीतमानीतं रत्नासनं सिंहासनमपहाय त्यक्त्वावनावेव पृथिव्यामेव राजपुत्रश्चन्द्रापीडः समुपाविशदुपाविशत् । तदनु पश्चाद्वैशम्पायन उपाविशत् । उपविष्टे च राजपुत्रे शुकनासवर्जमेकं शुकनासं विहायाखिलं समग्रमन्यदवनिपालचक्रं राजसमूह-मुज्झितं त्यक्तं निजासनमात्मीयासनं येन तत् । अवनितलं पृथ्वीतलमभजदशिश्रियत । **क्षणमिति** । क्षणमिव क्षणमात्रं तूष्णीं मौनं स्थित्वा च शुकनासः समुद्गतः प्रादुर्भूतः प्रीत्या स्नेहेन पुलको रोमाञ्चो येष्वेवंविधै-रङ्गैरावेद्यमानो हर्षप्रकर्ष उत्कर्ष[1]प्रमोदो यस्य स तथा तं चन्द्रापीडमब्रवीत् । हे तात हे पुत्र । 'तातस्तु पितृपुत्रयोः' इति कोशः । खलु निश्चितम् । अद्यास्मिन्दिने देवस्य तारापीडस्य[2] समाप्तविद्यं परिपूर्णीकृता विद्या येनैवंविधमुपारूढयौवनं संप्राप्ततारुण्यं भवन्तं त्वामालोक्य सुचिराच्चिरकालेन भुवनराज्यफलप्राप्तिस्त्रिभुवनाधि-पत्यफलोपलब्धिरुपजाता प्रादुर्भूता । अद्य गुरुजनानां पूज्यजनानां सर्वा आशिष आशीर्वादाः समृद्धाः संपत्ति-भाजो बभूवुः । अद्यानेकजन्मान्तरोपात्तमनेकभवार्जितमवदातं शुद्धं कर्म फलितं फलवज्जज्ञे । अद्य कुलदेवताः कुलाधिष्ठात्र्यः प्रसन्नाः प्रसादवत्यः । न हि अपुण्यभाजामधर्मवतां भवादृशा भवत्सदृशास्त्रिभुवनस्य त्रिविष्ट-पस्य विस्मयजनका आश्चर्योत्पादकाः पुत्रतां सुतत्वं प्रतिपद्यन्ते भजन्ते । क्वेति महदन्तरे । इयं वयोवस्था

---

**टिप्प०**—1 प्रमोदोत्कर्ष इति वाच्यम् । 2 'समाप्तविद्यं भवन्तमालोक्य देवस्य तारापीडस्य भुवन-राज्यफलप्राप्तिरुपजाता' इत्यन्वयो वाच्यः ।

---

**पाठा०**—१ प्रासादसहस्र. २ उपविष्टम्. ३ ससंभ्रम. ४ उत्थाय. ५ अनुपूर्वेण. ६ लोकैः. ७ संहर्ष. ८ लोचन. ९ सह. १० समुपविष्टे. ११ क्षणमपि. १२ हृदयहर्ष. १३ तात चन्द्रापीड. १४ तत्पुण्यभाजाम्. १५ सकलत्रिभुवन. १६ हेतवः.

चेदमशेषविद्याग्रहणसामर्थ्यम्। अहो, धन्याः प्रजा यासां भरतभगीरथप्रतिमो भवानुत्पन्नः पालयिता। किं खलु कृतमवदातं कर्म वसुंधरया ययासि भर्ता समासादितः। हरिवक्षस्थलनिवासासद्ग्रहव्यसनितया[1] हता खलु लक्ष्मीः, या विग्रहवती भवन्तं नोपसर्पति। सर्वथा कल्पकोटीर्महावराह इव दंष्ट्रावलयेन[2] वह बाहुना वसुंधराभारं सह पित्रा' इत्यभिधाय च स्वयमाभरणवसनकुसुमाङ्गरागादिभिरभ्यर्च्य विसर्जयांचकार। विसर्जितश्चोत्थायान्तःपुरं प्रविश्य दृष्ट्वा[3] वैशम्पायनमातरं मनोरमाभिधानां निर्गत्य समारुह्येन्द्रायुधं पित्रा पूर्वकल्पितम्, प्रतिच्छन्दकमिव राजकुलस्य, द्वारावस्थितसितपूर्णकलशम्, आबद्धहरितचन्दनमालम्[4], उल्लसितसितपताकासहस्रम्, अभ्याहतमङ्गलतूर्यरवपरिपूरितदिगन्तरम्, उपरचितविकचकमलकुसुमप्रकरम्, अचिरकृताग्निकार्यम्, उज्ज्वलविविक्तपरिजनम्, उपपादिताशेषग्रहप्रवेशमङ्गलं कुमारो भवनं जगाम। गत्वा च श्रीमण्डपावस्थिते शयने मुहूर्तमुपविश्य सह

---

क। इयं परिदृश्यमानाऽमानुषी मनुष्येष्वसंभाव्यमानैतादृशी शक्तिः पराक्रमः क। इदमशेषविद्याग्रहणसामर्थ्यं च क। अहो इत्याश्चर्ये। धन्या भाग्यवत्यः प्रजाः प्रकृतयो यासां प्रजानां भरत आर्षभिः, भगीरथः सगरपौत्रः, ताभ्यां प्रतिमः सदृशो भवांस्त्वं पालयिता रक्षक उत्पन्नः। किमिति प्रश्ने। खलु निश्चयेन। वसुंधरया पृथिव्यावदातं शुद्धं कर्म किं कृतमाचरितं यया त्वं भर्ता प्रभुः समासादितः प्राप्तः असि। हरिवक्षःस्थले विष्णुभुजान्तरे यो निवासोऽवस्थितिस्तल्लक्षणो योऽसद्ग्रहो हठस्तद्व्यसनितया तदासक्ततया। खलु निश्चयेन लक्ष्मीः श्रीर्हता। दैवेनेति शेषः। या श्रीर्भवन्तं त्वां विग्रहवती शरीरधारिणी नोपसर्पति नाभ्युपैति। अमूर्तरूपेण यद्यप्यनुसरति तथापि न मूर्तिविग्रहरूपेणेत्यर्थः। **सर्वथेति**। सर्वथा सर्वप्रकारेण कल्पकोटीर्यावद्बाहुना भुजेन वसुंधराभारं पित्रा सह जनकेन समं वह धारय। दंष्ट्रावलयेन दाढामण्डलेन महावराह इव। इति पूर्वोक्तप्रकारेणाभिधायोक्त्वा। चकारः समुच्चयार्थः। स्वयमात्मनैव। **आभरणेति**। आभरणानि भूषणानि, वसनानि वस्त्राणि, कुसुमानि पुष्पाणि, अङ्गरागो विलेपनम्, एतत्प्रभृतिभिर्वस्तुभिरभ्यर्च्यार्चयित्वा विसर्जयांचकार विसर्जितवान्। विसर्जितो गृहायानुज्ञात उत्थायोत्थानं कृत्वान्तःपुरमवरोधं प्रविश्य मध्ये गत्वा मनोरमाभिधानां मनोरमेति नाम्नीं वैशम्पायनमातरं दृष्ट्वा विलोक्य तदनन्तरं बहिर्निर्गत्येन्द्रायुधं समारुह्यारोहणं कृत्वा कुमारो भवनं जगामेत्यन्वयः। अथ भवनं विशेषयन्नाह—**पित्रेति**। पित्रा जनकेन पूर्वं पूर्वस्मिन्काले कल्पितम्। कारितमित्यर्थः। राजकुलस्य राजसमूहस्य प्रतिच्छन्दकमिव प्रतिबिम्बमिव। द्वारेऽवस्थिताः सिताः श्वेताः पूर्णाः कलशाः कुम्भा यस्मिन्। आबद्धाः संदानिता हरिता नीलाश्चन्दनमाला[1] यस्मिन्। उल्लसितमुच्छ्रितं सितपताकानां श्वेतवैजयन्तीनां सहस्रं यस्मिन्। अभ्याहतानि वादितानि यानि मङ्गलतूर्याणि कल्याणहेतुकातोद्यानि तेषां रवेण शब्देन परिपूरितं दिगन्तरं येन तत्। उपरचितो निर्मितो विकचानां विकस्वराणां कमलानां नलिनानां कुसुमप्रकरो यस्मिन्। अचिरं कृतमग्निकार्यं होमादिकं यस्मिन्। उज्ज्वलो निर्मलो विविक्तो भिन्नभिन्नस्वरूपः परिजनः परिवारो यस्मिन्। उपपादितं विहितमशेषं समग्रं गृहप्रवेशमङ्गलं धात्वालेख्यादि यस्मिन्। अन्वयस्तु प्रागेवोक्तः। **गत्वा चेति**। गत्वा तत्र गमनं कृत्वा श्रीमण्डप आस्थानमण्डपस्तत्रावस्थिते स्थापिते शयने शय्यायां मुहूर्तं नाडिकाद्वयमात्रमुपविश्यावस्थानं कृत्वा तेन राज-

---

**टिप्प०—1 'वन्दनमाला' इत्येव पाठः। टीकाकारस्य तु पदे पदे बुद्धिरेवालौकिकी।**

---

**पाठा०**—१ व्यसनिनी. २ दंष्ट्रावलेन. ३ दृष्ट्वा च. ४ हरिचन्दन.

तेन राजपुत्रलोकेनाभिषेकादिमशनावसानमकरोद्दिवसविधिम्। अभ्यन्तरे च शयनीयगृह एवेन्द्रायुधस्यावस्थानमकल्पयत्।

एवंप्रायेण चास्योदन्तेन तदहः परिणतिमुपययौ। गगनतलादवतरन्त्या दिवसश्रियः पद्मरागनूपुरमिव स्वप्रभापिहितरन्ध्रं रविमण्डलमुन्मुक्तपादं पपात। जलप्रवाह इव रथचक्रमार्गानुसारेण दिवसकरस्य वासरालोकः प्रतीचीं ककुभमगात्। अभिनवपल्लवलोहिततलेन करेणेवाधोमुखप्रसृतेन रविबिम्बेन वासरः कमलरागमशेषं ममार्ज। कमलिनीपरिमलपरिचयागतालिमालाकुलितकण्ठं कालपाशैरिव चक्रवाकमिथुनमाकृष्यमाणं विजघटे। करपुटैरादिवसान्तमापीतमरविन्दमधुरसमिव रक्तातपच्छलेन गगनगमनखेदादिव दिवसकरबिम्बं ववाम। क्रमेण च प्रतीचीकर्णपूररक्तोत्पले लोकान्तरमुपगते भगवति गभस्तिमालिनि, स-

---

पुत्रलोकेन सह सार्धमभिषेकः स्नानमादिर्यस्य तम्। अशनं भोजनमवसानेऽन्ते यस्यैवंभूतं दिवसविधिं दिवसकर्माकरोदकार्षीत्। अभ्यन्तरे मध्ये यच्छयनीयगृहं सुषुप्तिगृहं तस्मिन्नेवेन्द्रायुधस्य स्वकीयाश्वस्यावस्थानमकल्पयदन्वतिष्ठत्।

**एवमिति**। अस्य राज्ञ एवंप्रायेणोदन्तेन वृत्तान्तेन तदहस्तद्दिनम्। परिणतिस्त्रयोदशमुहूर्तपर्यन्तदिवसावस्था परिणतिस्तामुपययावगमत्। रविमण्डलं सूर्यबिम्बमुदूर्ध्वं मुक्ताः पादाः किरणा येनैवंभूतं पपात स्रस्तम्। अन्योऽप्युपरिप्रदेशाद्यः पतति स ऊर्ध्वपाद एव स्यात्। स्वभाववर्णवर्तुलत्वसाम्यादुपमानान्तरं दर्शयन्नाह—**गगनेति**। गगनतलादाकाशतलादवतरन्त्या आगच्छन्त्या दिवसश्रियो दिनलक्ष्म्याः पद्मरागनूपुरमिव लोहितकपादकटकमिव। नूपुरं प्रायेण सच्छिद्रम्। छिद्रोपलब्धय आह—**स्वेति**। स्वस्य या प्रभा कान्तिस्तया पिहितान्याच्छादितानि रन्ध्राणि छिद्राणि यस्य तत्। दिवसकरस्य सूर्यस्य रथचक्रमार्गानुसारेण वासरालोको दिवसप्रकाशः प्रतीचीं पश्चिमां ककुभं दिशमगात्प्रययौ। क इव। जलप्रवाह इव पानीयपूर इव। सोऽपि रथमार्गानुगामी स्यादिति भावः। वासरो दिवसोऽधोमुखं प्रसृतेन विस्तृतेन रविबिम्बेन सूर्यबिम्बेनाभिनवाः प्रत्यग्रा ये पल्लवास्तद्वल्लोहितं रक्तं तलं यस्यैवंभूतेन करेणेव करतलेनेव कमलरागमशेषं समग्रं ममार्ज दूरीचकारेत्यन्वयः। अत्र वर्तुलत्वरक्तत्वसाम्याद्रविबिम्बस्य हस्ततलोपमानम्। कमलानां संकोचत्वादेव रागनिवृत्तिरिति। **कमलिनीति**। कमलिन्या नलिन्या यः परिमलस्तस्य परिचयात्संबन्धादागता प्राप्तालिमाला भ्रमरश्रेणिस्तयाकुलितो व्याप्तः कण्ठो यस्य। अतएव हेतुनाह—**कालेति**। कालपाशैः कृष्णबन्धनैराकृष्यमाणमिव चक्रवाकमिथुनं द्वन्द्वचरमिथुनं विजघटे विघटयांचकार। **दिवसकरेति**। दिवसकरबिम्बं सूर्यबिम्बं गगनगमनखेदादिव व्योमसंचरणप्रयासादिव करपुटैः किरणसंपुटैरा दिवसान्तमा दिनपर्यन्तमापीतो योऽरविन्दमधुरसस्तमिव रक्तातपच्छलेन लोहितप्रकाशमिषेण ववामोद्गिरयांचकार। अस्तावस्थामाह—**प्रतीचीति**। प्रतीची पश्चिमा तस्याः कर्णपूरं तदेव रक्तोत्पलं तद्रूपे लोकान्तरं क्षेत्रान्तरमुपगते प्राप्ते भगवति माहात्म्यवति गभस्तिमालिनि श्रीसूर्ये सति। अथ च संध्यायां समुल्लसितायामुल्लासं प्राप्तायाम्।

---

**टिप्प०**—1 संकोचादेवेति तात्पर्यम्। 2 रात्रौ चक्रद्वन्द्वस्य तथा विघटनमभूद् यथा काल(मृत्यु)-पाशैराकृष्टस्य मुमूर्षोः प्रियजनसकाशाद्वियोगो भवतीति शब्दशक्त्या ध्वन्यते। मृत्युवद्दुःखसूचनेन प्रेमातिशयश्चरमं व्यङ्ग्यम्। 3 वियुक्तं बभूवेति व्याख्यानमुचितम्। 4 उजगारेत्यर्थः। मार्गगमनखेदातिशयाद् यथा श्रान्तस्य निपीतपदार्थस्य वमनं भवति तथाऽत्र सूर्यस्य वमनमित्याशयः।

---

**पाठा०**—१ अभिषेकादिकम्. २ स्वशयनीय. ३ सलिलप्रवाहः. ४ दिशम्. ५ अगमत्. ६ पल्लवदललोहितकरेण. ७ दिवसकर. ८ करपुटैर्दिवसान्तम्.

मुल्लसितायामम्बरतटाकविकचकमलिन्यां संध्यायाम्, कृष्णागुरुपङ्कपत्रलतास्विव तिमिरलेखासु स्फुरन्तीषु दिशामुखेषु, अलिकुलमलिनेन कुवलयवनेनेव रक्तकमलाकरे तिमिरेणोत्सार्यमाणे संध्यारागे, कमलिनीनिपीतमातपमुन्मूलयितुमन्धकारपल्लवेष्विव प्रविशत्सु रक्तकमलोदराणि मधुकरकुलेषु, शनैःशनैश्च निशाविलासिनीमुखावतंसपल्लवे गलिते संध्यारागे, दिक्षु विक्षिप्तेषु संध्यादेवतार्चनबलिपिण्डेषु, शिखरदेशलग्नतिमिरास्वनारूढमयूरास्वपि मयूराधिष्ठितास्विव मयूरयष्टिषु, गवाक्षविवरनिलीनेषु प्रासादलक्ष्मीकर्णोत्पलेषु पारावतेषु, विगतविलासिनीसंवाहननिश्चलकाञ्चनपीठासु मूकीभूतघण्टास्वरास्वन्तःपुरदोलासु, भवनसहका-

---

अत्रोल्लास एव कमलिनीसाम्यं प्रदर्शयन्नाह—**अम्बरेति** । अम्बरमाकाशम् । स्वच्छत्वनीलत्वसाम्यात्, तदेव तटाकः सरस्तस्मिन्विकचा विकस्वरा कमलिनी नलिनी तस्याम् । अत्रारुण्यातिशयो व्यङ्ग्यः । पुनः केषु सत्सु । दिशामुखेषु दिग्वदनेषु तिमिरलेखासु[1] भूच्छायराजिषु स्फुरन्तीषु देदीप्यमानासु । कृष्णत्वसाम्यादाह—**कृष्णेति** । कृष्णागुरुः काकतुण्डस्तस्य पङ्कः कर्दमस्तस्य पत्रलतास्विव पत्रभङ्गेष्विव । दिशां मुखं तन्मुखमेव । अतएव तिमिरलेखासु पत्रलतात्वोपवर्णनं युक्तम् । तिमिरेणान्धकारेण संध्याराग उत्सार्यमाणे दूरीक्रियमाणे सति । केनेव । अलिकुलं भ्रमरसमूहस्तेन[3] मलिनेन कृष्णेन कुवलयवनेनेव रक्तकमलाकरे रक्तपद्मसमूहे । तथा च रागतिमिरयोः कुमुदकमलयोर्विरुद्धातिशयवत्त्वेनैतदुपमानम् । **कमलिनीति** । कमलिन्या पद्मिन्या निपीतमास्वादितमातपं सूर्यालोकमुन्मूलयितुं मूलतोऽपि दूरीकर्तुं रक्तकमलोदराणि मधुकरकुलेषु शनैः शनैः प्रविशत्सु प्रवेशं कुर्वत्सु । कृष्णत्वसाम्यादाह—**अन्धेति** । अन्धकारपल्लवेष्विव[4] तमोभागेष्विव । एतेन तमसोऽतिशयत्वं सूचितम् । **निशेति** । निशैव रात्रिरेव विलासिनी स्त्री तस्या मुखमाननं तस्यावतंसपल्लवे शेखरकिसलये संध्यारागे गलिते दूरीभूते सति । दिक्षु पूर्वादिषु संध्यादेवतार्चनार्थं बलिपिण्डेषु विक्षिप्तेषु विकीर्णेषु सत्सु । अर्घजलाञ्जलिभिरित्यपि बोध्यम् । तमसो नीलत्वात्तदेव मयूरसाम्यमित्याशयेनाह—**मयूरेति** । शिखरदेशे प्रान्तप्रदेशे लग्नं तिमिरं तमो यास्वेवंविधास्वनारूढमयूरास्वप्यनाश्रितनीलकण्ठास्वपि मयूराधिष्ठितास्विव मयूरयष्टिषु सतीषु । पारावतानां रात्रौ विवरे निवासः प्रसिद्ध इति तदाह—**गवाक्षेति** । गवाक्षा वातायनास्तेषां विवरेषु छिद्रेषु निलीना गुप्तीभूय स्थितास्तेषु । कृष्णत्वसाम्यादाह—**प्रासादेति** । प्रासादस्य राजसदनस्य या लक्ष्मीस्तस्याः कर्णोत्पलेषु पारावतेषु कपोतेषु सत्सु । पुनः कासु । अन्तःपुरदोलास्ववरोधप्रेङ्खासु सतीषु । ता विशेषयन्नाह—**विगतेति** । विगतं दूरीभूतं विलासिनीनां संवाहनमुद्वहनं तेन निश्चलानि स्थिराणि काञ्चनपीठानि सुवर्णफलकानि यासु । **मूकीति** । मूकीभूता दोलासंबन्धिघण्टास्ताभिरस्वरासु शब्दरहितासु । आन्दोलनाभावादिति भावः । तदभावस्तु कस्यचिदारोहणाभावात् । **भवनेति** । भवनस्य गृहस्य यः सहकारश्चूतस्तस्य शाखावलम्बीनि पञ्जराणि येषां तेषु विगतालापेषु संलापवर्जि-

---

**टिप्प०—**1 अन्धकारपरम्परास्वित्यर्थः । 2 दिशां यः प्राग्भागः स एव मुखं (वदनम्), अत एव तिमिरलेखास्तत्र कृष्णागुरुपत्रभङ्गायिता इति टीकाकर्तुस्तात्पर्यम् । 3 भ्रमरसमूहाच्छादिततया मलिनेन कुवलय(नीलोत्पल)वनेन रक्तपद्मसरोवरे इव तिमिरेण सन्ध्यारागे उत्सार्यमाणे (सति) इत्यन्वयो बोध्यः । 4 अत्रापि टीकाकारस्याज्ञानम्, नहि अन्धकारो वृक्षो यस्य पल्लवाः । अत एव 'अन्धकारकरपल्लवेष्विव' इत्येव पाठः । अन्तःप्रविष्टपदार्थस्य निःसारणाय हस्तः प्रवेश्यते, अत एव मधुकरेषु अन्धकारकरपल्लवस्योत्प्रेक्षेत्यर्थः ।

---

**पाठा०—**१ अम्बरतल. २ तडाग. ३ दिशां मुखेषु. ४ अलिकुलेन मलिनेषु. ५ तिमिरनिकरेण. ६ अन्धकारकरपल्लवेषु. ७ विशत्सु. ८ दिक्षु दिक्षु. ९ अर्चना. १० कर्णोत्पलेष्विव. ११ निश्चलासु. १२ पीठिकासु. १३ घण्टारवासु; घण्टासु.

रशाखावलम्बिपञ्जरेषु विगतालापेषु शुकसारिकानिवहेषु, संगीतविरामविश्रान्तरवासूत्सार्यमाणासु वीणासु, युवतिनूपुरशब्दोपशमनिभृतेषु भवनकलहंसेषु, अपनीयमानकर्णशङ्खचामरनक्षत्रमालामण्डनेषु मधुकरकुलशून्यकपोलभित्तिषु मत्तवारणेषु, प्रदीप्यमानेषु राजवल्लभतुरङ्गमन्दुराप्रदीपेषु, प्रविशन्तीषु प्रथमयामकुञ्जरघटासु, कृतस्वस्त्ययनेषु निष्क्रामत्सु पुरोहितेषु, विसर्जितराजलोकविरलपरिजनेषु विस्तारितेष्विव राजकुलकक्षान्तरेषु, प्रज्वलितदीपिकासहस्रप्रतिबिम्बचुम्बितेषु कृतविकचचम्पकदलोपहारेष्विव मणिभूमिकुट्टिमेषु, निपतितदीपालोकासु रविविरहार्तनलिनीविनोदनागतबालातपास्विव भवनदीर्घिकासु, निद्रालसेषु पञ्जरकेसरिषु, समारोपितकार्मुके गृहीतसायके यामिक इवान्तःपुरप्रविष्टे मकरकेतौ, अवतंसपल्लवेष्विव सरागेषु कर्णे क्रियमाणेषु सुरतदूतीवचनेषु, सूर्यकान्तमणिभ्य इव संक्रान्ता-

---

तेषु । शुकः कीरः, सारिका पीतपादा, तयोर्निवहेषु सत्सु । **संगीतेति** । संगीतस्य यो विरामोऽवसानं तेन विश्रान्तः स्थितो रवः शब्दो यासां तासूत्सार्यमाणासु दूरीक्रियमाणासु वीणासु वल्लकीषु सतीषु । **युवतीति** । युवतीनां यानि नूपुराणि पादकटकानि तेषां यः शब्दस्तस्योपशमो निवृत्तिस्तेन निभृतेषु निश्चलेषु भवनकलहंसेषु गृहराजहंसेषु सत्सु । नूपुरशब्दोपशमस्य सजातीयरव[1]शङ्काकारित्वाभावेन तेऽपि सुखेन सुप्ता इति भावः । **अपनीति** । अपनीयमानानि दूरीक्रियमाणानि दृष्टिदोषशमार्थं कर्णे बद्धो यः शङ्खः, चामरं वालव्यजनम्, नक्षत्रमाला नक्षत्रसंख्यमौक्तिकरचिताभरणविशेषः, एवंविधानि मण्डनानि भूषणानि येषु । **मधुकरेति** । मधुकरा भ्रमरास्तेषां कुलं समूहस्तेन शून्या रिक्ता कपोलभित्तिर्येषां तेषु एवंविधेषु मत्तवारणेषु मत्तगजेषु सत्सु । **प्रदीति** । प्रदीप्यमानेषु प्रज्वाल्यमानेषु राज्ञो नृपस्य वल्लभाः प्रिया ये तुरङ्गमा अश्वास्तेषां मन्दुरा शाला तस्यां प्रदीपेषु स्नेहप्रियेषु । **प्रवीति** । प्रविशन्तीषु प्रवेशं कुर्वतीषु प्रथमयामसक्ता याः कुञ्जरघटास्तासु । **कृतेति** । कृतं विहितं स्वस्त्ययनं विघ्नोपशमनविधिर्यैरेवंभूतेषु पुरोहितेषु पुरोधस्सु निष्क्रामत्सु बहिर्गच्छत्सु । पुनः केषु सत्सु । मणिभूमिकुट्टिमेषु स्फटिकमणिना बद्धानि यानि भूमौ कुट्टिमानि तेषु सत्सु । तानि विशेषयन्नाह—**विसर्जित इति** । विसर्जितो विसृष्टो यो राजलोकस्तेन विरलः स्तोकः परिजनो येषु । अतएव विस्तारितेष्विव विस्तारं प्राप्तेष्विव । स्तोकजनापेक्षया स्थानं महद्दृश्यते रजन्यामिति भावः । **राजेति** । राजकुलस्य यानि कक्षान्तराणि प्रकोष्ठान्तराणि तेषु । प्रज्वलितं यद्दीपिकासहस्रं तस्य प्रतिबिम्बानि प्रतिच्छायास्तैश्चुम्बितेषु सहितेषु । दीपकप्रतिबिम्बानां पीतत्वादुपमानान्तरं दर्शयन्नाह—**कृतेति** । कृतो विहितो विकचचम्पकदलैरुपहारः पूजा येष्वेवंविधेष्विव । चम्पकदलानां पीतत्वादेव तदुपमानमिति भावः । **निपतितेति** । निपतितः पतितो दीपालोको गृहमणि[2]प्रकाशो यासु । **रवीति** । रविविरहेण सूर्यविरहेणार्ता या [3]नलिन्यस्तासां विनोदनं क्रीडनं तदर्थमागतो बालातपो यास्वेवंविधास्विव भवनदीर्घिकासु गृहवापीषु सतीषु । पञ्जरस्थकेसरिषु सिंहेषु निद्रया प्रमीलयालसेषु मन्थरेषु सत्सु । **समारोपितेति** । समारोपितमधिज्यं कृतं कार्मुकं येन स तस्मिन् । गृहीताः सायका बाणा येन स तस्मिन् । यामिक इव प्राहरिक इवान्तःपुरप्रविष्टे मकरकेतौ कंदर्पे सति । **सुरतेति** । सुरते मैथुने यानि दूतीवचनानि तेषु कर्णे श्रोत्रे क्रियमाणेषु श्रूयमाणेषु सत्सु सरागेषु । अत्र राग आरुण्यं इच्छा च । अत एवावतंससाम्यं प्रदर्शयन्नाह—**अवेति** । अवतंसपल्लवेष्विव । **मानि-**

---

**टिप्प०—**1 हंसरवानुकारी नूपुरशब्दः । ततश्च नूपुरशब्दे जाते हंसाः सजातीयस्य विरावभ्रमेण शब्दायन्ते, किन्तु नूपुरशब्दोपरामेण रात्रौ तेपि निभृताः स्थिता इति ग्रन्थकर्तुराशयः । 2 दीपालोकः दीपकानां प्रकाशः । 3 पुं-स्त्रीलिङ्गाभ्यां रवि—नलिन्योर्नायकनायिकाव्यवहारसूचनात् समासोक्तिः ।

---

**पाठा०—**१ अवलम्बित. २ संगीतक. ३ मण्डलपिण्डेषु; मण्डलेषु. ४ तुरङ्ग. ५ कृतराज. ६ विकच. ७ सूर्यमणिभ्यः.

नलेषु प्रज्वलत्सु[1] मानिनीनां शोकविधुरेषु हृदयेषु, प्रवृत्ते प्रदोषसमये चन्द्रापीडः प्रज्वलितदीपिकाचक्रवालपरिवारश्चरणाभ्यामेव राजकुलं गत्वा पितुः समीपे मुहूर्तं[2] स्थित्वा दृष्ट्वा च विलासवतीमागत्य स्वभवनमनेकरत्नप्रभाशबलमुरगराजफणामण्डलमिव हृषीकेशः शयनतलमधिशिश्ये।

प्रभातायां च निशीथिन्यां समुत्थाय समभ्यनुज्ञातः[3] पित्राभिनवमृगयाकौतुकाकृष्यमा[4]णहृदयो भगवत्यनुदित एव सहस्ररश्मावारुह्येन्द्रायुधमग्रतो बालेयप्रमाणा[5]नाकर्षयद्भि[6]श्चामीकरशृङ्खलाभिः कौलेयकाञ्जरद्व्याघ्रचर्मशबल[7]वसनकञ्चुकधारिभिरनेकवर्णपट्टचीरिकोद्बद्ध[8]मौलिभिरुपचितश्मश्रुगहनमुखैरेककर्णावसक्तहेमतालीपुटैराबद्धनिबिडकक्षैरनवरतश्रमोपचितोरुपिण्डिकैः[9] कोदण्डपाणिभिः[10] श्वपोषकैरनवरतकृतकोलाहलैः प्रधावद्भिर्द्विगुणीक्रियमाणमनोत्साहो[11]

---

नीति। मानिनीनां शोकविधुरेषु शुक्पीडितेषु हृदयेषु मनस्सु मानादेव प्रज्वलत्सु दह्यमानेषु सत्सु। अतएवाह—सूर्येति। सूर्यकान्ता ये मणयस्तेभ्य इव संक्रान्तः प्रतिबिम्बितोऽनलो वह्निर्येषु। उपसंहरन्नाह—एवंविधे प्रदोषसमये यामिनीमुखसमये प्रवृत्ते सति प्रसृते सति चन्द्रापीडः। प्रज्वलितेति। प्रज्वलितमुद्दीपितं यद्दीपिकाचक्रवालं तदेव परिवारः परिच्छदो यस्यैवंभूतः। चरणाभ्यामेव राजकुलं गत्वा पितुः समीपे मुहूर्तं स्थित्वा दृष्ट्वा च विलासवतीमागत्य स्वभवनं शयनतलं शयनीयतलमधिशिश्ये शयनं चक्रे। शयनतलमित्यत्र 'अधिशीङ्स्थासाम्–' इत्यधिकरणे द्वितीया। शयनतलं विशेषयन्नाह—अनेकेति। अनेकेषां रत्नानां मणीनां या प्रभा तया शबलं कर्बुरम्। कृष्णत्व[1]साम्यादुपमानान्तरमाह—उरगेति। उरगराजः शेषनागस्तस्य यत्फणामण्डलं तत्र हृषीकेश इव।

प्रभातायामिति। प्रभातायां विभातायां निशीथिन्यां रजन्यां च समुत्थायोत्थानं कृत्वा पित्रा जनकेन समभ्यनुज्ञातः प्रदत्तानुज्ञोऽभिनवा प्रत्यग्रा या मृगयाखेटकं तस्य यत्कौतुकमाश्चर्यं तेनाकृष्यमाणं हृदयं यस्य सः। भगवत्यनुदित उदयमप्राप्त एव सहस्ररश्मौ सूर्ये इन्द्रायुधमश्वमारुह्य बहुगजतुरगपदातिपरिवृतो वनं ययावित्यन्वयः। कीदृशो राजकुमारः। द्विगुणेति। द्विगुणीक्रियमाणो मनोत्[2]साहो यस्य सः। कैः। श्वपोषकैः कौलेयकरक्षकैः। तानेव विशिनष्टि—अग्रत इति। अग्रतः पुरतो बालेयो रासभस्तत्प्रमाणांश्चामीकरशृङ्खलाभिः सुवर्णशृङ्खलाभिः कौलेयकाञ्शुन आकर्षयद्भि[3]राकर्षणं कुर्वद्भिः। जरदिति। जरज्जरीयान्यो व्याघ्रो द्वीपी तस्य चर्म त्वक्तद्वत्तदिव शबलं कर्बुरं यद्वसनं वस्त्रं तस्य यः कञ्चुकोऽङ्गिका तद्धारिभिः। अनेकेति। अनेकवर्णा या पट्टचीरि[4]का तयोद्बद्धाः संयता मौलयः केशा यैः। उपेति। उपचितानि वर्धितानि यानि श्मश्रूण्यास्यलोमानि तैर्गहनानि संकीर्णानि मुखानि येषां तैः। एकेति। एकस्मिन्कर्णेऽवसक्तं क्षिप्तं हेमता[5]लीपुटं यैः। आबद्धेति। आबद्धा नद्धा निबिडं दृढं कक्षा मध्यप्रदेशो यैः। अनवरतेति। अनवरतं यः श्रमस्तेनोपचिते पुष्टे ऊरुपिण्डिके जङ्घापिचिण्डिके येषां तैः। पिण्डिका च गुल्फोपरि जानोरधःप्रदेशः। कोदण्डो धनुः पाणौ येषां तैः। अनवरतेति। अनवतं निरन्तरं कृतः कोलाहलो यैः।

---

टिप्प०—1 धन्यष्टीकाकारः। न खलु कृष्णवर्णे शयनीये सुष्वाप चन्द्रापीडः, न च तस्य शोभैव। शेषोपि च श्वेत एव। अत एव श्वेतत्वसाम्यादित्युचितम्। 2 द्विगुणीक्रियमाणो गमनोत्साहो यस्येत्येव पाठः। मनोत्साह इति पाठस्वीकारस्तु सर्वथाऽव्युत्पत्तिष्टीकाकृतः। 3 आकर्षद्भिरित्येव पाठः, णिचोऽनावश्यकत्वात्। 4 अनेकवर्णाः याः पट्ट(क्षौम)वस्त्रस्य चीरिकाः क्षुद्रखण्डास्तैः उत् उपरि बद्धाः जटीभूताः केशा यैरिति व्याख्योचिता। 5 स्वर्णघटितोऽलंकारविशेषः।

---

पाठा०—१ ज्वलत्सु. २ मुहूर्तकम्. ३ अभ्यनुज्ञातः. ४ अवकृष्यमाण. ५ वालेयद्वीपिप्रमाणान्. ६ आकर्षद्भिः. ७ शबलकञ्चुक. ८ अवबद्ध; ऊर्ध्ववद्ध. ९ पिण्डकैः. १० दण्डपाणिभिः. ११. उत्साहः; गमनोत्साहः.

बहुगजतु[1]रगपदातिपरिवृतो व[2]नं ययौ । तत्र चाकर्णा[3]न्ताकृष्टमुक्तैर्विकचकुवलयपलाशकान्तिभिर्भल्लैर्मदकलकलभकुम्भभित्तिभिदुरैश्च नाराचैश्चापट[4]ङ्कारभयचकितवनदेवताधाक्षवीक्षितो वनव[5]राहान्केसरिणः शरभांश्चा[6]मरानेककुरङ्गकांश्च सहस्रशो जघान । अन्यांश्च जीवत एव महाप्राणतया स्फुरतो जग्राह । समारूढे च मध्यमह्नः सवितरि वनात्स्ना[7]नोत्थितेनेव श्रमसलिलबिन्दुवर्षमनवरतमुज्झता मुहुर्मुहुर्दशनविघट्टनैः खणखणायि[8]तखरखलीनेन श्रमशिथिलमुखवि[9]गलितफेनिलरुधिरलवेन पर्याणपट्टका[10]नुसरणोत्थितफेनराजिना कर्णावतंसीकृतमुत्फुल्लकुसुमशबलमलिपटल[11]झङ्कारवमुखरं वनगमनचिह्नं पल्लवस्तबकमुद्वहतेन्द्रायुधेनोह्यमानः, समुद्गतस्वेदतयान्त[12]रार्द्रीकृतमण्डलेन मृगरुधिरलवशतशबलेन वारबाणेन द्विगुणतरमुपजा[13]त-

---

प्रधावद्भिः शीघ्रं गच्छद्भिः । **तत्रेति** । तत्र तस्मिन्वने सहस्रशोऽनेकशो वनवराहानरण्यक्रोडान्, केसरिणः सिंहान्, शरभानष्टापदान्, चामरांश्चमरीः, अनेककुरङ्गकानसंख्यमृगांश्च जघान हतवानित्यन्वयः । कैः । नाराचैर्लोहनिर्मितैर्बाणैः । 'सर्वलोहो नाराच एषणश्च सः' इति कोशः । अथ नाराचान्विशेषयन्नाह—**कर्णान्तेति** । आकर्णान्तमाश्रवणप्रान्तमाकृष्टा आकर्षिताः पश्चान्मुक्ताः क्षिप्तास्तैः । **मदेति** । मदेन कला मनोहराः । अनेन कलभस्य त्रिंशदब्दकत्वान्मदावस्था सूचिता । अत एव कलभशब्दप्रयोगः । एवंविधा ये कलभा हस्तिशावकास्तेषां कुम्भाः शिरसः पिण्डास्त एव भित्तयः कुड्यानि तासां भिदुरैर्भेदकैः । पुनः कैः । भल्लैः कुन्तैः । तानेव विशिनष्टि—**विकचेति** । विकचानि विकस्वराणि यानि कुवलयान्युत्पलानि तेषां पलाशानि पत्राणि तद्वत्कान्तिर्दीप्तिर्येषां तैः । उत्तेजितानां भल्लानामपि तदुपमानम् । **चापेति** । चापस्य धनुषो यष्टङ्कारष्टङ्कारवोऽनुकरणशब्दस्तस्माद्यद्भयं तेन चकिता त्रस्ता या वनदेवता वनाधिष्ठात्र्यस्ताभिरर्धाक्षेण वीक्षितः । **अन्यांश्चेति** । अन्यानेतद्भिन्नाञ्जीवत एव प्राणान्दधत एव स्फुरतो दीप्यमानान्महाप्राणतया महासाहसतया जग्राह गृहीतवान् । **समेति** । अह्नो दिवसस्य मध्यं समारूढे प्राप्ते सवितरि सूर्ये सति वनादरण्यात्कुमारः स्वभवनं स्वगृहमाजगामायायावित्यन्वयः । अथ कुमारं विशिनष्टि—**इन्द्रेति** । इन्द्रायुधेनाश्वेनोह्यमानः वहमानः । अश्वं तुरंगमं विशेषयन्नाह—**स्नानेति** । अनवरतं श्रमसलिलानां खेदोत्थजलानां ये विन्दवः पृषतास्तेषां वर्षं वृष्टिमुज्झता त्यजता । अत एवाह—स्नानोत्थितेनेवाप्लवानन्तरमेव कृताभ्युत्थानेनेव । **मुहुरिति** । मुहुर्मुहुर्वारंवारं दशनविघट्टनैर्दन्तघर्षणैः खणखणायितं खणखणेत्याचरितं खरं कठिनं खलीनं मुखयन्त्रणं येन । **श्रमेति** । श्रमेण खेदेन शिथिलं श्लथं यन्मुखं तस्माद्विगलिताः स्रस्ताः फेनिल[1]युक्ताः कफसहिता रुधिरलवा यस्य स तेन । **पर्याणेति** । पर्याणं पल्ययनं तस्य पट्टकः काष्ठपीठं तद्यावदनुसरणं यस्या एवंविधोत्थिता फेनराजिः कफश्रेणिर्यस्य स तेन । **कर्णेति** । कर्णेऽवतंसीकृतं श्रवणाभरणं कृतम् । उत्फुल्लानि विकचानि यानि कुसुमानि तैः शबलं मिश्रितम् । अलिपटलानि भ्रमरसमूहास्तेषां झङ्काररवो झङ्कृतिशब्दस्तेन मुखरं वाचालं वनेऽरण्ये यद्गमनं तस्य चिह्नं लक्ष्मैवंविधं पल्लवस्तबकं किसलयगुच्छकमुद्वहता धारयता । पुनः कीदृशः । समुद्गतः प्रादुर्भूतः स्वेदस्तस्य भावस्तत्ता तयान्तरार्द्रीकृतं मण्डलं यस्य स तेन । **मृगेति** । मृगाणां हरिणानां रुधिरलवा रक्तांशास्तेषां शतं तेन शबलेन कर्बुरेणैवंभूतेन वारबाणेन कञ्चुकेन द्विगुणतरमुपजाता कान्तिर्यस्य सः । सत्त्ववतो वारबाणेन महती दीप्तिर्भवत्येवेति विश्वविदितम् ।

---

**टिप्प०**—1 इलच्प्रत्ययः स्वयं मत्वर्थे । अत एव फेनयुक्ता इत्युचितम् ।

---

**पाठा०**—१ पादातिभिः. २ घनं वनम्. ३ अवकृष्ट. ४ टङ्काररव. ५ वनवराहकेसरिणः. ६ चामराननेकविधः. ७ स्नानोत्थितेन. ८ खररवाभीतेन. ९ गलित. १० अनुसारोत्थितः. ११ झङ्कारमुखरम्. १२ अन्तरान्तरा. १३ उपजनित.

कान्तिः, अनेकरूपानुसरणसंभ्रमपरिभ्रष्टच्छत्रधरतया छत्रीकृतेन नवपल्लवेन निवार्यमाणातपः, विविधवनलताकुसुमरेणुधूसरो वसन्त इव विग्रहवान्, अश्वखुररजोमलिनललाटाभिव्यक्तावदातस्वेदलेखः, दूरविच्छिन्नेन पदातिपरिजनेन शून्यीकृतपुरोभागः, प्रजवितुरङ्गमाधिरूढैरल्पावशिष्टैः सह राजपुत्रैः 'एवं मृगपतिः, एवं वराहः, एवं महिषः, एवं शरभः, एवं हरिणः' इति तमेव मृगयावृत्तान्तमुच्चारयन्स्वभवनमाजगाम।

उत्तीर्य, च तुरङ्गमात्ससंभ्रमप्रधावितपरिजनोपनीत उपविश्यासने वारबाणमवतार्य, अपनीय चाशेषं तुरङ्गाधिरोहणोचितं वेषपरिग्रहमितस्ततः प्रचलिततालवृन्तपवनापनीयमानश्रमो मुहूर्तं विशश्राम। विश्रम्य च मणिरजतकनककलशशतसनाथामन्तर्विन्यस्तकाञ्चनपीठां स्नानभूमिमगात्। निर्वर्तिताभिषेकव्यापारस्य च विविक्तवसनपरिमृष्टवपुषः स्वच्छदुकूलपल्लवाकलितमौलेर्गृहीतवाससः कृतदेवार्चनस्याङ्गरागभूमौ समुपविष्टस्य राज्ञा विसर्जिता महा-

---

**अनेकेति**। अनेके ये रूपाः पशवस्तेषामनुसरणं गवेषणं तत्र यः संभ्रमश्चेतसो वैक्लव्यं तेन परिभ्रष्टा दूरीभूता ये छत्रधरास्तेषां भावस्तत्ता तया। 'रूपं तु श्लोकशब्दयोः पशौ' इत्यनेकार्थः। छत्रीकृतेनातपवारणीकृतेन नवपल्लवेन प्रत्यग्रकिसलयेन निवार्यमाणो दूरीक्रियमाण आतपो यस्य सः। **विविधेति**। विविधा अनेकप्रकारा या वनलता अरण्यव्रतत्यस्तासां कुसुमरेणुः पुष्परागस्तेन धूसर ईषत्पाण्डुः। क इव। विग्रहवान्सशरीरो वसन्त इव इष्य इव। अश्वखुरस्य यद्रजस्तेन मलिनं कश्मलं यल्ललाटं तत्राभिव्यक्ता प्रकटावदाता निर्मला स्वेदलेखा यस्य सः। दूरविच्छिन्नेन दूरान्तरितेन पदातिपरिजनेन पत्तिपरिच्छदेन शून्यः कृतो विहितः पुरोभागोऽग्रभागो यस्य सः। प्रजविनो जवयुक्ता ये तुरङ्गमा अश्वास्तेष्वधिरूढैरारूढैरल्पावशिष्टैः स्तोकैः राजपुत्रैर्नृपसुतैः सह। इति तमेव मृगयावृत्तान्तमाखेटकोदन्तमुच्चारयन्नन्योन्यं ब्रुवन्। इतिशब्दार्थमाह—**एवमिति**। एवं पूर्वोक्तप्रकारेण मृगपतिः सिंहः, एवं वराहो वनक्रोडः, एवं महिषो रक्ताक्षः, एवं शरभोऽष्टापदः, एवं हरिणो मृगः। व्यापादित इति शेषः। अन्वयस्तु प्रागेवोक्तः।

स्वभवनगमनानन्तरं च तुरङ्गमादश्वादुत्तीर्यावरोहं कृत्वा ससंभ्रमं सवेगं प्रधावितो यः परिजनः परिच्छदस्तेनोपनीत आनीत आसने विष्टर उपविश्योपवेशनं कृत्वा वारबाणं कवचमवतार्य तस्यावतरणं कृत्वा तुरङ्गाधिरोहणोचितमशेषं समग्रं वेषपरिग्रहणमपनीय दूरीकृत्य। इतस्ततः प्रचलितं यत्तालवृन्तं व्यजनं तस्य यः पवनो वायुस्तेनापनीयमानो दूरीक्रियमाणः श्रमः क्लमो यस्य स तथा मुहूर्तं घटिकाद्वयं विशश्राम विश्रामं गृहीतवान्। **विश्रम्यचेति**। विश्रामं गृहीत्वा। **मणीति**। मणयश्चन्द्रकान्ताद्याः, रजतं रौप्यम्, कनकं सुवर्णम्, एतेषां यत्कलशशतं कुम्भशतं तेन सनाथां सहिताम्। अन्तर्मध्ये विन्यस्तं स्थापितं काञ्चनपीठं स्वर्णपीठं यस्यामेवंभूतां स्नानभूमिमगाज्जगाम। **निर्वर्तितेति**। निर्वर्तितो निष्पादितोऽभिषेकव्यापारो यस्य स तस्य। विविक्ते[1] विजने वसनं वस्त्रं तेन परिमृष्टं शुष्कीकृतं वपुर्येन स तस्य। **स्वच्छेति**। स्वच्छो निर्मलो यो दुकूलपल्लवस्तेनाकलितो वेष्टितो मौलिः शिरो यस्य स तस्य। गृहीतं स्वीकृतं वासो वस्त्रं येन स तथा तस्य। कृतं देवार्चनं देवपूजा येन स तस्य। अङ्गरागभूमौ विलेपनभूमौ समुपविष्टस्य राज्ञा तारापीडेन विसर्जिता विसृष्टा महाप्रतीहारेण महाद्वारपालकेनाधिष्ठिता आश्रिता राजकुलपरिचारिका नृपकुलसेवाकारिण्यः कुलवर्धना

---

टिप्प०—1 विविक्तेन पवित्रेण वसनेनेत्यर्थ उचितः।

---

पाठा०—१ अनुसार. २ छत्रधारतया. ३ वनपल्लवेन. ४ जनेन. ५ वनमहिषः. ६ अवतीर्य. ७ समुपविश्य. ८ तुरङ्गम. ९ निर्वातित. १० आकुलित. ११ गृहीतधौतवाससः. १२ देवता.

प्रतीहाराधिष्ठिता राजकुल[1]परिचारिकाः कुलवर्धनासनाथाश्च विलासवतीदास्यः सर्वान्तःपुरप्रेषिताश्चान्तःपुरपरिचारिकाः पटलकविनिहितानि विविधान्याभरणानि [2]माल्यान्यङ्गरागान्वासांसि चादाय पुरतस्तस्योपतस्थु[3]रुपनिन्युश्च। यथाक्रममादाय च ताभ्यः प्रथमं स्वयमुपलिप्य वैशम्पायनम[4]उपरचिताङ्गरागो दत्त्वा च समीपवर्तिभ्यो यथार्हमाभरणवसनाङ्गरागकुसुमानि विविधमणिभाजनसहस्रसारं शारदम[5]म्बरतलमिव स्फुरिततारागणमाहारमण्डपमगच्छत्। तत्र च द्वि[6]गुणितकुथासनोपविष्टः समीपोपविष्टेन तद्गुणोप[7]वर्णनपरेण वै[8]शम्पायनेन य[9]थार्हं भूमिभागोपवेशितेन रा[10]जपुत्रलोकेन 'इदमस्मै दी[11]यताम्, इदम[12]स्मै दी[13]यताम्' इति प्रसादविशे[14]षदर्शनसंवर्धितसेवारसेन च सहाहारविधिमकरोत्। उपस्पृश्य च गृहीतताम्बूलस्तस्मिन्मुहूर्तमिव स्थित्वेन्द्रायुधसमीप[15]मगमत्। तत्र चानुपविष्ट एव तद्गुणोपवर्णनप्रायालापाः कथाः कृत्वा सत्यप्या[16]ज्ञाप्रतीक्षणोन्मुखे पार्श्वपरिवर्तिनि परिजने तद्गु[17]णहृतहृदयः स्वय-

---

प्रगल्भा दासी तया सनाथाः सहिता विलासवती कुमारजननी तस्या दास्यः कूटहारिकाः (?)। **सर्वान्तःपुरप्रेषिता इति**। सर्वं यदन्तःपुरं तेन प्रेषिता अन्तःपुरपरिचारिकाश्चावरोधसेवाविधायिन्यः पटलकं व[1]ञ्जेरिका तस्यां विनिहितानि स्थापितानि विविधानि विचित्राण्याभरणानि भूषणानि, माल्यानि पुष्पदामानि, अङ्गरागान्विलेपनानि, वासांसि वस्त्राण्यादाय गृहीत्वा तस्य चन्द्रापीडस्य पुरतोऽग्रत उपतस्थुः स्थिता बभूवुः। उपनिन्युश्च। आनीतं वस्तूपढौकयामासुरित्यर्थः। **यथेति**। यथाक्रममनुक्रमेण ताभ्योऽन्तःपुरपरिचारिकाभ्यस्तद्वस्त्वादाय गृहीत्वा प्रथममादौ वैशम्पायनमुपलिप्य पश्चात्स्वयमुपरचितः कृतोऽङ्गरागो येनैवंभूत आहारमण्डपं भोजनमण्डपमगच्छदित्यन्वयः। किं कृत्वा। यथार्हं यथायोग्यमाभरणवसनाङ्गरागकुसुमानि समीपवर्तिभ्यः पार्श्वस्थायिभ्यो दत्त्वा वितीर्य। भोजनमण्डपं विशेषयन्नाह—**विविधेति**। विविधानि विचित्राणि यानि मणिभाजनानि रत्नपात्राणि तेषां सहस्रं तेन [2]सारं प्रधानम्। भाजनानां वर्तुलत्वादिसाम्यादुपमानान्तरमाह—**शारदेति**। स्फुरिततारागणं शारदमम्बरतलमिव। **तत्र चेति**। तत्र तस्मिन्मण्डप आहारविधिं भोजनविधिमकरोदित्यन्वयः। द्विगुणितं परावर्तितं यत्कुथासनं तत्रोपविष्टः। **समीपेति**। समीपं पार्श्वं तत्रोपविष्टेन स्थितेन। **तदिति**। तस्य तारा[3]पीडस्य ये गुणाः शौर्यादयस्तेषामुपवर्णनं श्लाघनं तत्र परेणासक्तेन वैशम्पायनेन यथार्हं यथायोग्यम्। **भूमिभागेति**। यस्य योचिता योग्या भूस्तस्यामुपवेशितेन स्थापितेन। राजपुत्रलोकस्य विशेषणम्। राजपुत्रलोकेन 'अस्मा इदं दीयताम्, अस्मा इदं दीयताम्' इति पूर्वोक्तप्रकारेण प्रसादः प्रसन्नता तस्य विशेष आधिक्यं तस्य दर्शनं प्रकटीकरणं तेन संवर्धितो वृद्धिं प्रापितः सेवारसः सपर्यास्वादो यस्य स तेन। अन्वयस्तु प्रागेवोक्तः। भोजनानन्तरमुपस्पृश्याचमनं कृत्वा गृहीतं ताम्बूलं नागवल्लीदलं येन सः। तस्मिन्मण्डपे मुहूर्तमिव नाडिकाद्वयमिव स्थित्वेन्द्रायुधसमीपमगमद्ययौ। **तत्र चेति**। तत्र तस्मिन्स्थलेऽनुपविष्ट एवोर्ध्वस्थित एव तस्येन्द्रायुधस्य ये गुणा मुखमण्डले निर्मांसत्वादयस्तेषामुपवर्णनं प्रायो बाहुल्यं येषु एवंविधा आलापाः संलापा यास्वेवंभूताः कथाः किंवदन्तीः कृत्वा विधायाज्ञाया निदेशस्य प्रतीक्षणं समयावेक्षणं तत्रोन्मुखे सावधाने पार्श्वपरिवर्तिनि समीपस्थायिनि परिजने सत्यपि तस्य ये गुणा[4]ः शालिहोत्रप्रसिद्धास्तैर्हृतमा-

---

**टिप्प०—1 पेटिका इत्यर्थः। 2 'भाजनसहस्रशारम्' इत्येव पाठः। मणिभाजनसहस्रैः शारं विचित्रमिति तदर्थः। 3 चन्द्रापीडस्येत्युचितम्, संनिधानात्, 4 वेगेन गमनं, मनोभावानुसारं स्थित्यादिकाः।**

---

**पाठा०—**१ प्रतिचारिकाः. २ माल्याङ्गरागान्. ३ उपनिन्युश्चोपनीतानि च. ४ रचित. ५ शाराम्बर. ६ द्विगुणीकृत. ७ वर्णन. ८ वैशम्पायनेन सह. ९ यथार्ह. १० सह राज. ११ प्रदीयताम्. १२ तस्मै. १३ प्रदीयताम्. १४ विशेषसंवर्धितसेवारसेनाहार. १५ अगात्. १६ आज्ञां प्रतीक्षमाणोन्मुखे. १७ अपहृत.

मेवेन्द्रायुधस्य पुरो यवसमाकीर्य निर्गत्य राजकुलमयासीत् । तेनैव च क्रमेणावलोक्य राजानमागत्य निशामनैषीत् ।

अपरेद्युश्च[1] प्रभातसमय एव सर्वान्तःपुराधिकृतम्[2], अवनिपतेः परमसंमतम्, अनुमार्गागतया[3] च, प्रथमे वयसि वर्तमानया, राजकुलसंवासप्रगल्भयाप्यनुज्झितविनयया, किंचिदुपारूढयौवनया, शक्रगोपकालोहित[4]रागेणांशुकेन रचितावगुण्ठनया सबालातपयेव पूर्वया ककुभा प्रत्यग्रदलितमनःशिलावर्णेना[5]ङ्गलावण्यप्रभाप्रवाहेणामृतरसनदीपूरेणेव भवनमापूरयन्त्या, ज्योत्स्नयेव राहुग्रहग्रास[6]भयादपहाय रजनिकरमण्डलं गामवतीर्णया[7], राजकुलगृहदेवतयेव[8] मूर्तिमत्या, क्वणितमणिनूपुराकुल[9]चरणयुगलया[10] कूजत्कलहंसाकुलितकमलयेव कमलिन्या, महार्हहेममेखलाकलाप[11]कलितजघनस्थलया, नातिनिर्भरोद्भिन्नपयोधरया, मन्दं मन्दं[12]

---

कर्षितं हृदयं चेतो यस्यैवंभूतः । स्वयमेवात्मनैव, अत्रैवकारोऽन्ययोगव्यवच्छेदकृत् । इन्द्रायुधस्याश्वस्य पुरोऽग्रे यवसं तृणमाकीर्य प्रकीर्य प्रक्षिप्य तदनन्तरं निर्गत्य राजकुलमयासीदव्राजीत् । तेनैव क्रमेण पूर्वोक्तपरिपाट्या राजानं तारापीडमवलोक्य निरीक्ष्य पुनरागत्यैत्य । स्वगृहमिति शेषः । निशां रात्रिमनैषीत्परिकलितवान् ।

**अपरेद्युरिति ।** अपरस्मिन्दिने प्रभातसमय एव कन्ययानुगम्यमानं कैलासनामानं कञ्चुकिनमायान्तमागच्छन्तमपश्यदित्यन्वयः । कञ्चुकिनं विशिनष्टि—**सर्वेति ।** सर्वं समग्रं यदन्तःपुरं तत्राधिकृतं नियुक्तम् । स्वस्वामिनेति शेषः । अवनिपते राज्ञः परमसंमतं परं विश्वस्तम् । अथ च सहागतकन्यां विशेषयन्नाह—**अन्विति ।** अनुलक्षीकृत्य मार्गमागता प्राप्ता तया । प्रथमवयः कौमारवयस्तस्मिन्वर्तमानया स्थितया । **राजेति ।** राजकुले नृपकुले यः संवासो वसनं तत्र प्रगल्भया प्रतिभान्वितयाप्यनुज्झितोऽपरित्यक्तो विनयो मर्यादा यया सा तया । प्रगल्भस्याभिमानातिरेकेण विनयाभावः स्यात् । अत्र तु तत्सद्भावेऽपि तदाधिक्यमित्याश्चर्यमिति भावः । **किंचिदिति ।** किंचिदीषदुपारूढमाश्रितं यौवनं तारुण्यं यया सा तया । **शक्रेति ।** शक्रगोप एव शक्रगोपकः । स्वार्थे कः । आरक्तः प्रावृट्कीटस्तद्वदालोहितो रक्तो रागो यस्मिन्नेतादृशेनांशुकेन वस्त्रेण रचितं विहितमवगुण्ठनं शिरोवेष्टनं यया सा तया । अंशुकस्यातिरक्तत्वादुपमानं प्रदर्शयन्नाह—**सबालेति ।** सह बालातपेन वर्तमानया पूर्वया प्राच्या ककुभा दिशा इव । प्रत्यग्रदलिता तत्कालमर्दिता या मनःशिला मनोगुप्ता तद्वद्वर्णो यस्यैवंभूतेनाङ्गस्य देहस्य लावण्यं सौन्दर्यं तस्य प्रभा कान्तिस्तस्याः प्रवाहो रयस्तेन भवनं गृहमापूरयन्त्या परिपूर्णं कुर्वत्या । केनेव । अमृतरसस्य या नदी तस्याः पूरेणेव । राहुः सैंहिकेयः स चासौ ग्रहस्तेन ग्रासो भक्षणं तस्माद्भयं तस्माद्रजनिकरमण्डलं चन्द्रबिम्बमपहाय त्यक्त्वा गां पृथ्वीमवतीर्णयागतया ज्योत्स्नयेव कौमुद्येव । मूर्तिमत्या शरीरधारिण्या राजकुलदेवतयेव नृपकुलाधिष्ठात्र्येव । क्वणितं शब्दितं यन्मणिनूपुरं रत्नपादकटकं तेनाकुलं व्याप्तं चरणयुगलं पादद्वितयं यस्याः सा तया । नूपुरस्य श्वेतत्वाच्चरणयोश्चारक्तत्वादुत्प्रेक्षामाह—**कूजदिति ।** कूजन्यः कलहंसः कादम्बस्तेनाकुलितं कमलं यस्या एवंविधया कमलिन्येव । महार्हो महार्घो यो हेममेखलाकलापः सुवर्णरशनाकलापस्तेन कलितं जघनस्थलं कट्या अग्रप्रदेशो यस्याः सा तया । **नातीति ।** नातिनिर्भरं नातिबाहुल्येनोद्भिन्नौ प्रकाशं प्राप्तौ पयोधरौ स्तनौ यस्याः सा तया । **मन्दमिति ।** मन्दं मन्दं नातिप्रयत्नेन यो भुजलताया बाहुवल्ल्या विक्षेप इतस्ततश्चालनं तेन प्रेङ्खिता धूता ये नखमयूखा नखरदीप्तयस्तेषां छलेन मिषेणानवरतं निरन्तरं लावण्यरसं तारु-

---

टिप्प०—1 'मैनसिल' इति ख्यातो धातुविशेषः ।

---

पाठा०—१ परेद्युश्च. २ अधिकृततया. ३ गतया प्रथमे. ४ लोहित. ५ चूर्णवर्णेन. ६ राहुग्रास; राहुग्रसन. ७ भूमण्डलम्. ८ कुलदेवतया. ९ आकुलित; आकलित. १० चरणया रुचिररेणुचर्चितचञ्चरीकचक्रवालवाचालितरक्तकमलयुगलयेव स्थलकमलिन्या. ११ आकलित. १२ मन्दमन्द.

भुजलताविक्षेपप्रेङ्खितनखमयूखच्छलेन धाराभिरिव लावण्यरसमनवरतं क्षरन्त्या, दिङ्मुखविसर्पिहारलतानां रश्मिजाले निमग्नशरीरतया क्षीरसागरोन्मग्नवदनयेव लक्ष्म्या, बहलताम्बूलकृ[१]ष्णिकान्धकारिताधरलेखया स[२]मसुवृत्ततुङ्गनासिकया, विकसितपुण्डरीकलोच[३]नया, मणिकुण्डल-म[४]करपत्रभङ्गकोटिकिरणातपाहतक[५]पोलतया सकर्णपल्लवमिव मुखमुद्वहन्त्या, पर्युषितधूसरचन्दनरसतिलकालंकृतललाटपट्टया, मुक्ताफलप्रायालंकारया, राधेयराज्यलक्ष्म्येवोपपादिताङ्गरागया, न[६]ववनलेखयेव कोमलतनुलतया, त्रय्येव सुप्रतिष्ठितचरणया, मखशालयेव वेदिमध्यया, मेरुवनलतयेव कनकपत्रालंकृतया, महानुभावाकारयानुगम्यमानं क[७]न्यया कैलासनामानं कञ्चुकिनमायान्तमपश्यत् ।

स कृतप्रणामः समुपसृत्य क्षितितलनिहितदक्षिणकरो विज्ञापयामास—'कुमार, महादेवी

---

ण्यरसं धाराभिः क्षरन्त्येव । **दिगिति** । दिङ्मुखविसर्पिण्यो[1] दिङ्मुखप्रसरणशीला या हारलतास्तासां रश्मिजाले कान्तिसमूहे निमग्नं त्रुडितं यच्छरीरं तस्य भावस्तत्ता तया क्षीरसागरात् दुग्धाम्भोधेरुन्मग्नं वदनं यस्या एवंविधया लक्ष्म्येव । **बहलेति** । बहलो निबिडो यस्ताम्बूलस्तस्य कृष्णिका श्यामता तयान्धकारितान्धकार इवाचरिताधरलेखा दन्तच्छदरेखा यस्याः सा तया । **समेति** । समाऽविषमा, सुवृत्ता वर्तुला, तुङ्गोच्चा नासिका नासा यस्याः सा तया । **विकेति** । विकसितं यत्पुण्डरीकं तद्वल्लोचने यस्याः सा तया । **मणीति** । मणिकुण्डलयो रत्नभूषणयोर्मकरपत्रभङ्गः कोटीरपत्रेषु मकराकृतिस्तस्याः किरणानामातपः प्रकाशस्तस्याहतं[2] प्रतिबिम्बितं ययोरेवंविधकपोलौ तस्य भावस्तत्ता तया । सह कर्णपल्लवेन श्रोत्रावतंसेन वर्तमानं मुखमिवोद्वहन्त्या धारयन्त्या । **पर्युषीति** । पर्युषितो गतदिनोद्भवोऽत एव धूसरो यश्चन्दनरसस्तस्य तिलकेनालङ्कृतं भूषितं ललाटपट्टं यस्याः सा तया । **मुक्तेति** । मुक्ताफलानि प्रायो बाहुल्येन सन्ति यस्मिन्नेवंविधा अलंकारा यस्याः सा तया । **राधेयेति** । राधेयः कर्णस्तस्य या राज्यलक्ष्मीराधिपत्यश्रीस्तयेव । उभयं विशिनष्टि—**उपेति** । उपपादितो विहितोऽङ्गरागो यया । पक्षेऽङ्गनाम्नो देशस्य रागः प्रीतिः । नवा प्रत्यग्रा या वनलेखारण्यश्रेणिस्तयेव । उभयं विशेषयन्नाह—**कोमलेति** । कोमला सुकुमारा तनुलता शरीरलता यस्याः सा तया । पक्षे कोमलास्तन्व्यो लता व्रतत्यो यस्याम् । त्रयी वेदत्रयी तयेव । **सुप्रतीति** । सुप्रतिष्ठिताः शोभनतया स्थापिताश्चरणाः[3] पादा यया सा तया । पक्षे सुप्रतिष्ठिताः सर्वत्र प्रसिद्धाश्चरणाः शाखाः पदानि यस्याः सा तया । **मखेति** । मखो यज्ञस्तस्य शालयेव । उभयोः साम्यमाह—**वेदीति** । वेदिवन्मध्यं यस्याः सा तया । तनुमध्ययेत्यर्थः । पक्षे वेदिः परिष्कृता भूमिर्मध्ये यस्याः । मेरुर्मन्दरस्तस्य या वनलता तयेव । कनकपत्रैः कर्णाभरणैरलंकृतया भूषितया । पक्षे कनकः नागकेसरश्चम्पको वा तस्य पत्राणि दलानि । 'कनको नागकेसरे । धत्तूरे चम्पके काञ्चनारकिंशुकयोरपि' इत्यनेकार्थः । महाननुभावो माहात्म्यं तदनुरूप आकार आकृतिर्यस्याः सा तया । अन्वयस्तु प्रागेवोक्तः ।

आगमनानन्तरं स कञ्चुकी कृतः प्रणामो येनैवंभूतो विज्ञापयामास विज्ञप्तिमकरोत् । किं कृत्वा । समुपसृत्य समीपमागत्य क्षितितले निहितः स्थापितो दक्षिणकरो येन सः । इयं दक्षिणदेशरीतिः—क्षितौ दक्षिणकरं व्यव-

---

**टिप्प०—1 धन्यष्टीकाकारः । दिङ्मुखेषु ( सर्वतः ) प्रसरणं हारलतारश्मिजालानां, न हारलतानाम् । अत एव 'दिङ्मुखविसर्पिणि हारलतानां रश्मिजाले' इत्येव पाठः । अनेन टीकाकारस्य ग्रन्थमार्मिकत्वमपि परिचेयम् । 2 आतपेन आहतौ ( संस्पृष्टौ ) कपोलौ यस्यास्तत्तयेति सरलोऽर्थः । 3 पादाविति द्विवचनमेवोचितम् ।**

---

**पाठा०—१** कृष्णिमा. २ समुपवृत्त. ३ धवललोचनया. ४ मरकतमकर. ५ कपोलतलतया. ६ नवनव. ७ कन्यकया.

विलासवती समाज्ञापयति-'इयं खलु कन्यका[१] महाराजेन पूर्वं कुलूतराजधानीमवजित्य[२] कुलूतेश्वरदुहिता[३] पत्रलेखाभिधाना बालिका सती बन्दीजनेन सहानीयान्तःपुरपरिचारिकामध्यमुपनीता । सा मया विगतनाथा राजदुहितेति[४] च समुपजातस्नेहया दुहितृनिर्विशेषमियन्तं कालमुपलालिता संवर्धिता च । तदियमिदानीमुचिता भवतस्ताम्बूलकरङ्क[५]वाहि[६]नीति कृत्वा मया प्रेषिता । न चास्यामायुष्मता परिजनसामान्यदृष्टिना भवितव्यम् । बालेव लालनीया । स्वचित्तवृत्तिरिव चापलेभ्यो निवारणीया । शिष्येव द्रष्टव्या[७] । सुहृदिव सर्वविश्रम्भे[८]ष्वभ्यन्तरीकरणीया । दीर्घकालसंवर्धितस्नेहतया स्वसुतायामिव हृदयमस्यामस्ति मे[९] । महाभिजनराजवंशप्रसूता चार्हतीयमेवंविधानि[१०] कर्माणि । नियतं[११] स्वयमेवेयमतिविनीत[१२]तया कतिपयैरेव दिवसैः कुमारमाराधयिष्यति । केवलमतिचिरकालोपचिता बलवती मे प्रेमप्रवृत्तिरस्याम् । अविदितशीलश्चास्याः कुमार इति संदिश्यते । सर्वथा तथा कल्याणिना प्रयतितव्यं यथेयमतिचिरमुचिता परिचारिका ते भवति[१३]' इत्यभिधाय विरतवचसि कैलासे कृता[१४]-

---

स्थाप्य विज्ञप्तिं कुर्वन्तीति भावः । हे कुमार, महादेवी विलासवती समाज्ञापयति भवन्तं ज्ञापनां करोति । **इयमिति** । खलु निश्चयेन । इयं कन्यका महाराजेन त्वत्पित्रा पूर्वं कुलूतनाम्नीं राजधानीमवजित्य स्वायत्तीकृत्य कुलूतेश्वरस्य[1] हिमवद्द्रोण्या ईश्वरस्य दुहिता पुत्री पत्रलेखेत्यभिधानं यस्याः सा बालिका सती बन्दीजनेन सहानीयान्तःपुरस्य याः परिचारिकाः सेवाकारिण्यस्तासां मध्यमुपनीता प्रापिता सती सा मया विगतनाथा राजदुहितेति कृत्वा समुपजातः समुत्पन्नः स्नेहो यस्यामेवंविधा मया सा पत्रलेखा दुहितृनिर्विशेषं दुहिता पुत्री तस्याः सकाशान्निर्गतो विशेषोऽस्यां यथा स्यात्तथेयन्तं कालमेतावत्पर्यन्तमुपलालिता पालिता संवर्धिता च वृद्धिं प्रापिता च । तदिति हेत्वर्थे । इदानीं सांप्रतमियमुचिता योग्या भवतस्तव ताम्बूलस्य करङ्कः[2] स्थगी तद्वाहिनीति कृत्वा मया प्रेषिता । **नचेति** । अस्यां पत्रलेखायामायुष्मता भवता परिजने परिच्छदे सामान्या सर्वसाधारणा दृष्टिर्यस्यैवंविधेन त्वया न च भवितव्यम् । बालेव बालिकेव लालनीया पालनीया । स्वस्य चित्तवृत्तिर्मनोवृत्तिस्तद्वदिव चापलेभ्योऽनवस्थितिभ्यो निवारणीया वर्जनीया । शिष्या शिष्यिणी[3] सेव द्रष्टव्या विलोकनीया । सुहृदिव मित्रमिव सर्वविश्रम्भेषु समग्रविश्वासस्थानेष्वभ्यन्तरा मध्यवर्तिनी करणीया कार्या । दीर्घकालेन संवर्धितो वृद्धिं प्राप्तो यः स्नेहः प्रीतिस्तस्य भावस्तत्ता तया स्वसुतायामिव निजपुत्र्यामिवास्यां मे मम हृदयं चेतोऽस्ति । महानभिजनः कुलं यस्मिन्नेवंभूतो यो राजवंशस्तत्र प्रसूतोत्पन्नैवंविधानि कर्माणि ताम्बूलकरङ्कधारणप्रभृतीनीयमेवार्हति योग्या । **नियतमिति** । नियतं निश्चितमियं स्वयमेवातिविनीततयातिविनयवत्तया कतिपयैरेव कियद्भिरेव दिवसैर्घस्रैः कुमारं त्वामाराधयिष्यति स्ववशीकरिष्यति । केवलं परमस्यामतिचिरकालेन भूयसानेहसोपचिता पुष्टिं प्राप्ता मे मम बलवती प्रेमप्रवृत्तिः स्नेहप्रवृत्तिः । अस्या अविदितमज्ञातं शीलं येनैवंविधः कुमार इति संदिश्यते कथ्यते । **सर्वथेति** । सर्वथा सर्वप्रकारेण तथा कल्याणिना श्रेयोवता प्रयतितव्यं प्रयत्नः कर्तव्यः । यथातिचिरं चिरकालं यावत् । ते तवोचिता योग्येयं परिचारिका भवतीत्यभिधायेत्युक्त्वा विरतवचस्यपास्तवचने कैलासे सति कृतोऽभिजातः कुलीनस्तद्वत्प्रणामो यया तां पत्रलेखामनिमिषलोचनं यथा स्यात्तथा सुचिरं

---

**टिप्प०**—1 हिमालयसमीपे 'कुल्लू' इति साम्प्रतं प्रसिद्धा राजधानी, तस्या ईश्वरः । 2 ताम्बूलपात्रमित्यर्थः । 3 शासनीया ( यथा छात्री ) । शिष्यिणी त्वपशब्दः ।

---

**पाठा०**—१ कन्या. २ कलूत; कुन्तल. ३ कलूतलेश्वर; कुन्तलेश्वर. ४ इति समुपजात. ५ करण्डक. ६ इति मया. ७ उपदेष्टव्या. ८ विश्वासेषु. ९ बलवानस्यां पक्षपातो मम. १० एवंविधानि नियतम्. ११ नियतं च. १२ अभिविनीत. १३ भवतीत्यभिधाय. १४ अभिज्ञात.

भिजातप्रणामां पत्रलेखामनिमिषलोचनं सुचिरमालोक्य चन्द्रापीडः 'यथाज्ञापयत्यम्वा' एवमुक्त्वा कञ्चुकिनं प्रेषयामास । पत्रलेखा तु ततःप्रभृति दर्शनेनैव समुपजातसेवारसा न दिवा न रात्रौ न सुप्तस्य नासीनस्य नोत्थितस्य न भ्रमतो न राजकुलगतस्य छायेव राजसूनोः पार्श्वं मुमोच । चन्द्रापीडस्यापि तस्यां दर्शनादारभ्य प्रतिक्षणमुपचीयमाना महती प्रीतिरासीत् । अभ्यधिकं च प्रतिदिनमस्य प्रसादमकरोत् । आत्महृदयादव्यतिरिक्तामिव चैनां सर्वविश्रम्भेष्वमन्यत ।

एवं समतिक्रामत्सु दिवसेषु राजा चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुः प्रतीहाराननुपकरणसंभारसंग्रहार्थमादिदेश । समुपस्थितयौवराज्याभिषेकं च तं कदाचिद्दर्शनार्थमागतमारूढविनयमपि विनीततरमिच्छञ्शुकनासः सविस्तरमुवाच—'तात चन्द्रापीड, विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलं च निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम् । अपरिणामोपशमो दारुणो

---

चिरकालमालोक्य निरीक्ष्य चन्द्रापीडो यथाज्ञापयत्यादेशं दत्तेऽम्वा मातैवमुक्त्वा कञ्चुकिनं प्रेषयामास विसर्जितवान् । तु पुनरर्थे । पत्रलेखा ततःप्रभृति तद्दिनादारभ्य दर्शनेनैव तदवलोकनेनैव समुपजातः समुत्पन्नः सेवायां रसो यस्याः सा । **न दिवेति** । न दिवा दिवसे, न रात्रौ त्रियामायाम्, न सुप्तस्य शयनं कृतवतः, नासीनस्योपविष्टस्य, नोत्थितस्योत्थानं कृतवतः, न भ्रमत इतस्ततो गच्छतः, न राजकुलगतस्य छायेव स्वप्रतिविम्वमिव राजसूनोश्चन्द्रापीडस्य पार्श्वं मुमोचेत्यस्य सर्वत्र नकारेणान्वयः । चन्द्रापीडस्यापि तस्यां पत्रलेखायां दर्शनादारभ्यावलोकनात्प्रभृति प्रतिक्षणं क्षणं क्षणं प्रत्युपचीयमाना वृद्धिं प्राप्यमाणा महती प्रीतिर्महान्स्नेह आसीदभूत् । अस्य प्रतिदिनं प्रत्यहमभ्यधिकमधिकाधिकं प्रसादं सद्वस्तुप्रत्यर्पणरूपमकरोत् । सर्वविश्रम्भेषु समग्रविश्वासस्थलेष्वेनां पत्रलेखामात्महृदयादव्यतिरिक्तामिव स्वस्वान्तादभिन्नामिवामन्यत ज्ञातवान् ।

एवं पूर्वोक्तप्रकारेण समतिक्रामत्सु गच्छत्सु दिवसेषु राजा तारापीडश्चन्द्रापीडस्य यौवराज्ये योऽभिषेकस्तं चिकीर्षुः कर्तुमिच्छुः प्रतीहारान्द्वारपालाननुपकरणस्य स्नानयोग्यसामग्र्याः संभारः समूहस्तस्य संग्रहार्थमानयनार्थमादिदेश आज्ञां दत्तवान् । **समिति** । समुपस्थितः संजातो यौवराज्याभिषेको यस्य स तम् । कदाचित्कस्मिंश्चित्समये दर्शनार्थमवलोकनार्थमागतं प्राप्तमारूढविनयमपि संप्राप्तविनयमपि । किंचिन्निगूढाभिप्रायः । विनीततरं विनम्रतरमिच्छन्वाञ्छञ्शुकनासः सविस्तरं सव्यासमुवाचाब्रवीत् । तदेवाह—तातेति संबोधनम् । हे पुत्र चन्द्रापीड, ते तवाल्पमपि स्तोकमप्युपदेष्टव्यं वक्तव्यं नास्ति । तत्र हेतुमाह—**अधीतेति** । अधीतानि पठितानि सर्वशास्त्राणि येन स तथा तस्य । सर्वपदेन नीतिशास्त्रस्यापि परिग्रहः । अधीतशास्त्रत्वेऽपि तत्त्ववित्त्वाभावादुपदेष्टव्यमस्तीत्यत आह—**विदितेति** । विदितं ज्ञातं वेदितव्यं शास्त्राभिप्रायो येन तस्य । आशयमुद्घाटयति—**केवलं चेति** । परं निसर्गत एव स्वभावत एवाभानुभेद्यमसूर्योच्छेद्यम् । **अरत्नेति** । न रत्नानां मणीनामालोकेनोच्छेद्यं दूरीकर्तुं योग्यम् । **अप्रदीति** । न प्रदीपप्रभया गृहमणिकान्त्यापनेयं दूरीकरणीयम् । **अतीति** । अतिशयेन निरवधिकतया गहनमलब्धमध्यं यौवनं तारुण्यं ततः प्रभव उत्पत्तिर्यस्यैवंविधं तमोऽज्ञानम् । द्वितीयो लक्ष्मीमदो द्रव्यमदः । **अपरीति** । न विद्यते परिणामेनोपशमो यस्य सः । अयं भावः—परिणामेनोपशम ओषध्यादिषु प्रसिद्धः । विपरीतमत्र वयःपरिणामेऽपि

---

**टिप्प०—1 (अस्याः) इति पाठ उचितः । 2 यौवनजनितं तमः अतिदुर्दमनीयमित्यर्थः ।**

---

**पाठा०**—१ लोचनः. २ इत्येवम्. ३ प्रतिदिवसमस्याः. ४ केषुचिद्दिवसेषु. ५ उपसंभार. ६ कर्तुम्. ७ वेद्यस्य. ८ तु.

लक्ष्मीमदः। कष्टमनञ्जनवर्तिसाध्यमपरमैश्वर्यतिमिरान्धत्वम्। अशिशिरोपचारहार्योऽतितीव्रो दर्पदाहज्वरोष्मा। सततममूलमन्त्रगम्यो विषमो विषयविषास्वादमोहः। नित्यमस्नानशौचवध्यो रागमलावलेपः। अजस्रमक्षपावसानप्रबोधा घोरा च राज्यसुखसंनिपातनिद्रा भवतीति विस्तरेणाभिधीयसे। गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वं चेति महतीयं खल्वनर्थपरंपरा सर्वा। अविनयानामेकैकमप्येषामायतनम्, किमुत समवायः। यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः। अनुज्झितधवलतापि सरागैव भवति यूनां दृष्टिः। अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिर-

---

नोपशमः। दारुणो भयावहः। कष्टं दुःखरूपमपरं तृतीयमैश्वर्यमेव तिमिरमन्धकारं तेनान्धत्वं गताक्षत्वम्। **अनञ्जनेति**। अञ्जनवर्तिर्बिडालादिवसाञ्जनवर्तिस्तया तिमिरान्धत्वं विनश्यति। तदुक्तम्—'अन्धकारे महाघोरे रात्रौ पठति पुस्तकम्' इति। पदं वाञ्जनवर्तेरपि न साध्यम्। न निवर्तयितुं शक्यमिति भावः। **अशिशिरेति**। न शिशिरैः शीतलैरुपचारैश्चन्दनादिभिर्हार्यः परिहर्तुं योग्यः। अत्यन्तमतिशयेन तीव्रः कठिनो दर्पोऽभिमानः स एव दाहज्वरस्तीव्रतापस्तस्योष्मा घर्मः। **सततेति**। सततं निरन्तरं मूलमन्त्रैरगम्यो निवर्तयितुमशक्यः। मूलमन्त्रेत्युपलक्षणम्। तेन मणिमधुकरादिविषोत्तारणहेतूनां सर्वेषामपि संग्रहः। विषमः कठिनो विषयाः स्रक्चन्दनादयस्त एव विषं गरलं तस्यास्वादो भक्षणं तस्माद्यो मोहो मूर्च्छा। **नित्यमिति**। नित्यं सर्वदा स्नानमाप्लवः, शौचं शुचिक्रिया, ताभ्यां न वध्यो न विनाश्य एवंविधो रागो विषयाभिलाषः स एव मलः पङ्कस्तस्यावलेपः संपर्कः। **अजस्रमिति**। अजस्रं निरन्तरं न विद्यते क्षपावसाने रात्र्यन्ते प्रबोधो विनिद्रत्वं यस्यामेतादृशी घोरा च राज्यस्याधिपत्यस्य यत्सुखं सातं तस्य संनिपातः संघातः स एव निद्रा प्रमीला भवतीति हेतोर्विस्तरेण वारंवारमभिधीयसे। वक्तव्योऽसीत्यर्थः। अपरामप्यनर्थपरंपरां प्रदर्शयन्नाह—**गर्भेश्वरेति**। गर्भेश्वरत्वं बाल्यावधिकमीश्वरत्वम्, अभिनवयौवनत्वं सर्वाधिकं तारुण्यम्, अप्रतिमं प्रतिनिधिशून्यं रूपं सौन्दर्यम्, अमानुषशक्तित्वं न विद्यते मानुषेषु मनुष्येषु यैवंविधा शक्तिः सामर्थ्यं यस्मिंस्तस्य भावस्तत्त्वम्। चकारः समुच्चयार्थः। इति समाप्तौ। खलु निश्चये। इयं महती गरीयसी सर्वा समग्रानर्थपरंपरा कष्टपरंपरा। एषां पूर्वोक्तानामेकैकमप्यविनयानां दुर्बुद्धीनामायतनमास्थानम्, किमुत समवायः। एतेषां समुदायस्य दुर्बुद्धिजनकत्वे किं पुनर्भण्यते। तदुक्तम्—'यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता। एकैकमनवस्थानं किं पुनस्तच्चतुष्टयम्'। अथ यौवनस्यापि दुर्बुद्धिजनकत्वं प्रदर्शयन्नाह—**यौवनेति**। यौवनारम्भे तारुण्यप्रारम्भे प्रायो बाहुल्येन शास्त्रमेव जलं पानीयं तेन प्रक्षालनं तेन निर्मला निर्गतो मलोऽबोधो यस्या एवंभूतापि बुद्धिः कालुष्यं बुद्धिवैपरीत्यमुपयाति प्राप्नोति। **अन्विति**। अनुज्झिताऽपरित्यक्ता धवलता श्वेतता ययैवंविधापि यूनां तरुणानां दृष्टिः। **सरागैवेति**। सह रागेण वर्तमानैव भवति। **आत्मेति**। आत्मेच्छया स्वेच्छया यौवनसमये तारुण्यक्षणे प्रकृतिः पुरुषं दूरमपहरति। दूरं परिनयतीत्यर्थः। अस्मिन्नर्थे उपमानमाह—**शुष्कमिति**। वातानां समूहो वात्या वातकलिकोच्यते। शुष्कपत्रं यथापहरति। उभयोः साम्यमाह—**समुद्भूतेति**। समुद्भूता

---

**टिप्प०**—1 अपरम्, प्रसिद्धात् अन्धत्वाद्भिन्नमित्यर्थो वक्तव्यः। 2 'नियतमस्नानशौचबाध्यः' इत्येव ग्रन्थोचितः पाठः। स्नानजनितशौचेन (शुद्ध्या) न बाध्यः (अपनेयः) इति तदर्थः। अस्मिन् विषये 'वध' शब्दप्रयोगस्तु स्थूलबुद्धेरपि उपहसनीयः। 3 अभिनवतया दुर्दमनीयवेगं तारुण्यमित्यर्थो वक्तव्यः। 4 अनुज्झितधवलताऽपि सरागा (रक्तिम्ना सह वर्तमाना) इति विरोधः, तत्परिहारस्तु—रागेण रमण्यादिषु प्रेम्णा सहवर्तमानेति कर्तव्यः।

---

**पाठा०**—१ अपटलम्. २ अत्यन्ततीव्रः. ३ मूल. ४ शम्याः. ५ वध्यो बलवान्; वाध्यो बलवान्. ६ इत्यतः. ७ अभिधीयते. ८ महती. ९ धवलापि. १० सरागेव. ११ अदूरम्; दूरम्.

तिदूरमात्मेच्छया यौवनसमये पुरुषं प्रकृतिः । [1]इन्द्रियहरिणहारिणी च [2]संततदुरन्तेयमुपभोगमृगतृष्णिका । नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः । नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषु । भवादृशा एव भवन्ति [3]भाजनान्युपदेशानाम् । अपगतमले हि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति [4]सुखेनोपदेशगुणाः । गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य । इतरस्य [5]तु करिण इव शङ्खाभरणमाननशोभासमुदयमधिकतरमुपजनयति । [6]हरत्य[7]तिमलिनमन्धकारमिव दोषजातं प्रदोषसमयनिशाकर इव । गुरूपदेशः प्रशमहेतुर्[8]वयःपरिणाम इव पलितरूपेण शिरसिजजालममलीकुर्वन्गुणरूपेण तदेव परिणमयति । अयमेव चानास्वादितविषयरसस्य ते काल उपदेशस्य । [9]कुसुमशरशर-

---

रजोगुणेन भ्रान्तिर्भ्रमो यस्याम् । पक्षे रजसां रेणूनां भ्रमो यस्याम् । **इन्द्रियेति** । इन्द्रियाण्येव करणान्येव हरिणाः कुरङ्गास्तेषां हारिणी हरणशीलैतादृश्युपभोगोऽङ्गनादिकः स एव मृगतृष्णिका मरुमरीचिकेयं सततं निरन्तरम् । सुखाभिमानोत्पादनाद्दुरन्ता दुःखावसाना । **नवेति** । नवयौवनेन प्रत्यग्रतारुण्येन कषायितं विपरिवर्तितमात्मान्तःकरणं यस्यैवंभूतस्य पुरुषस्यास्वाद्यमानानि तान्येव विषयस्वरूपाणि मनसश्चेतसो मधुरतराण्यापतन्ति । मधुराण्येव भवन्तीत्यर्थः । अत्रैव दृष्टान्तमाह—**सलिलेति** । यथा कषायद्रव्येण हरीतक्यादिना मधुराण्यपि जलानि मधु(रत)राणि स्युः । 'आत्मानः' इति प्रामादिकः पाठः । विषयेषु स्रक्चन्दनवनितादिष्वत्यासङ्गोऽत्यासक्तिः पुरुषमात्मानं नाशयति । क इव । दिङ्मोहो दिग्भ्रान्तिरिव । उभयोः सादृश्यमाह—**उन्मार्ग इति** । उन्मार्गोऽपथो विरुद्धाचारश्च तत्र प्रवर्तकः प्रेरकः । ततः किमित्यत आह—**भवादृशा इति** । उपदेशानां शिक्षाणां भाजनानि पात्राणि भवादृशा भवत्सदृशा एव भवन्ति नान्य इति भावः । उपदेशफलमाह—**अपगतेति** । अपगतो दूरीभूतः कालुष्यलक्षणो मलो यस्मादेवंभूते मनसि चित्त उपदेशगुणाः शिक्षागुणाः सुखेनानायासेन विशन्ति प्रवेशं कुर्वन्ति । कस्मिन्क इव । **स्फटीति** । स्फटिकमणौ रजनिकरश्चन्द्रस्तस्य गभस्तयः किरणास्तद्वदिव । दोषे सति किं स्यादित्याह—**गुरुवचनमिति** । गुरुवचनं हिताहितप्राप्तिपरिहारोपदेष्टा गुरुस्तस्य वचनं वाक्यममलमपि निर्मलमप्यभव्यस्यासाधोः श्रवणस्थितं कर्णकोटरगतं सन्महच्छूलमुपजनयत्युत्पादयतीत्यर्थः । अत्रार्थेऽनुभवसिद्धं दृष्टान्तमाह—**सलिलेति** । यथा सलिलं पानीयमतिस्वच्छमपि कर्णगतं महाव्यथाजनकं स्यात् । दोषाभावे त्वाह—इतरस्य त्वधिकतरमाननशोभा[1]समुदयमुपजनयति विदधाति । क इव । शङ्खो जलजस्तस्याभरणं भूषणं करिण इव हस्तिन इव । हस्तिनां दृष्टिदोषबाधनार्थं शङ्खाभरणं कर्णे बध्यत इति लोकरीतिः । अतिमलिनमतिश्यामं दोषजातं दूषणसमूहमन्धकारमिव तिमिरमिव हरति दूरीकरोति । क इव, प्रदोषसमयनिशाकर इव यामिनीमुखचन्द्रोदय इव । प्रकारान्तरेणाह—**प्रशम इति** । प्रशमोऽन्तरिन्द्रियनिग्रहस्तद्धेतुर्गुरूपदेशः शिरसिजजालं शिरोरुहभारममलीकुर्वन्गुणरूपेण तदेव परिणमयति परिपाकं नयति । क इव । वयःपरिणाम इवावस्थापरिणतिरिव । यथा सोऽपि शिरसिजजालं केशसमूहं पलितरूपेणामलीकुर्वंस्तदेव शिरसिजजालं गुणरूपेण परिणमयति । तन्निदानमेव प्रथमे वयसि किमुपदेशेनेत्यत आह—**अयमिति** । अयमेव नापरस्ते तवोपदेशस्य कालः शिक्षाप्रदानसमयः । अत्रार्थे हेतुं प्रदर्शयन्नाह—**अनास्वादीति** । न विद्यत आस्वादोऽनुभवो यस्यैवंविधो विषयरसो यस्य तथा तस्य । आस्वादितविषयस्य तूपदेशो निरर्थकः स्यादित्याह—**कुसुमेति** ।

**टिप्प०—1 कर्णगतशङ्खाभरणेन यथा हस्तिनो मुखशोभा, तथा गुरुवचनेन साधोर्मुखशोभा, रुचिपूर्वकं श्रवणेन आनने उल्लासोदयात् ।**

---

**पाठा०**—१ इन्द्रियहरिणहरती च. २ सततमतिदुरन्तेयमुपभोग; सततमतिदुरन्ते इयं दूरं नयत्युपभोग. ३ भाजनम्. ४ सुखम्. ५ च. ६ अपहरति; अपहरति सकलम्; हरति च सकलम्; हरति सकलम्. ७ अतिमलिनमपि. ८ परिणामः. ९ कुसुमशरप्रहार.

प्र[1]हारजर्जरिते हि[2] हृदि जलमिव गलत्युपदिष्टम् । अकारणं च भवति दुष्प्रकृतेरन्वयः श्रुतं चा[3]विनयस्य । चन्दनप्रभ[4]वो न दहति किमनलः ? किं वा प्रशमहेतुनापि न प्रचण्डतरीभवति वडवानलो वारिणा ? गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्ष[5]ममजलं स्नानम्, अनुपजातपलितादिवैरूप्यमजरं वृद्धत्वम्, अनारोपित[6]मेदोदोषं गुरूकरणम्, असुवर्णविर[7]चनमग्राम्यं कर्णाभरणम्, अ[8]तीतज्योतिरालोकः, नोद्वेगकरः प्रजागरः । विशेषेण रा[9]ज्ञाम् । विरला हि तेषामुपदेष्टारः । प्रतिशब्दक इ[10]व राजवचनमनुगच्छति जनो भयात् । उद्दाम-

---

हि निश्चितम् । कुसुमशरः कंदर्पस्तस्य शरा बाणास्तेषां प्रहारा अभिघातास्तैर्जर्जरिते शिथिलीभूते हृद्युपदिष्टमुपदेशविषयीकृतं जलमिव गलति क्षरति विनश्यति । निरर्थकं भवतीत्यर्थः । दोषान्तरमाह—**अकारणं चेति** । उपशमादिकार्यजनकं न भवतीत्यर्थः । ननु मदनशरप्रहारजर्जरितहृदयस्योपदेशाभावेऽप्युपदेशकार्यं प्रशमादिकं सर्वमन्वयो वंशः, श्रुतं च शास्त्रम्, ताभ्यामेव भविष्यतीत्याशयेनाह—**दुष्प्रकृतेरिति** । दुष्प्रकृतेर्दुरात्मनस्तादृशहृदयस्यान्वयः श्रुतं चाविनयस्य हेतोर्भवति । न तु विनयायेत्यर्थः । ननु सुवंशजस्य कथमविनये प्रवृत्तिरित्यत आह—**चन्दनेति** । चन्दनं मलयजं तस्मात्प्रभवो यस्यैवंभूतोऽनलो वह्निः किं न दहति न भस्मीकरोति । परस्परसंघर्षदोषे सति चन्दनात्समुत्थितोऽग्निर्दहत्येवेति । ननु प्रशमहेतुभूताच्छ्रुतात्कथमविनयोत्पत्तिरित्यत आह—**किं वेति** । प्रथमहेतुनापि वारिणा किं वडवानलो वाडवाग्निस्तोयैधैः प्रादुर्भवति, सर्वलोकविनाशाय सर्वदा महासमुद्रे तिष्ठति; यस्य वाडवामुख इति प्रसिद्धिः । न प्रचण्डतरीभवति प्रबलतरो न स्यात् । अथ प्रकारान्तरेण गुरुवचनमाहात्म्यं वर्णयन्नाह—**गुर्विति** । नामेति कोमलामन्त्रणे । गुरूणां हिताहितप्राप्तिपरिहारोपदेष्टॄणामुपदेशः शिक्षा । पुरुषाणाम् अजलं जलव्यतिरेकेणापि स्नानमाप्लवः । कीदृशम् । अखिलः समग्रो यो मलः कालुष्यं तस्य प्रक्षालनं शुचीकरणं तत्र क्षमं समर्थम् । **अन्विति** । अनुपजातमनुत्पन्नं पलितं पाण्डुरः कचस्तदादिवैरूप्यं यस्मिन्नेतादृशम् । **अजरमिति** । जराव्यतिरेकेण वृद्धत्वं स्थविरत्वम् । **अनेति** । नारोपितः स्वीकृतो मेदोदोषो येनैवंभूतं गुरूकरणं स्थूलीभवनम् । मेदोदोषेण स्थूलता भवतीति सर्वत्र प्रसिद्धम् । तथायं न भवतीत्यर्थः । **असुवेति** । न विद्यते सुवर्णस्य कनकस्य विरचनं यस्मिन्नेवंभूतमग्राम्यं प्रशंसनीयं कर्णाभरणं श्रवणविभूषणम् । **अतीतेति** । अतीतो गतो ज्योतिः प्रकाशो यस्मादेवंभूत आलोक उद्योतः । न उद्वेगकरो न संतापजनकः प्रजागरो जागरणम् । केवलं तवैव नायमुपदेश इत्यत आह—**विशेषेणेति** । राज्ञां भूभुजामयमुपदेशो विशेषेणाधिक्येन प्रदातव्य इति भावः । राज्ञामनेक उपदेष्टारः किं तवोपदेशेनेत्यत आह—**विरलेति** । हि निश्चितम् । तेषां राज्ञामुपदेष्टार उपदेशदातारो विरलाः स्तोकाः । यतो राज्ञामुपदेशसमर्थोऽत्युत्कृष्टो विवक्षितोऽस्मदादिः, न त्वन्यो जनः । तदेव प्रदर्शयन्नाह—**प्रतिशब्दक इवेति** । जनो लोको भयाद्भीते राजवचनं नृपवचोऽनुगच्छति नृपवचनानुगो भवति । न तु प्रत्युत्तरं दातुं समर्थ इति भावः । क इव प्रतिशब्दक इव प्रतिध्वनिरिव । यथा सोऽपि मूलशब्दसाम्येनानुगच्छति । केषांचिदुपदेशश्रवणमेव नास्तीत्यत आह—**उद्दामेति** । उद्दाम उत्कटो दर्पोऽहंकारो येषां ते च । पृथु यथा स्यात्तथा स्थगितान्या-

---

**टिप्प०**—1 धिगीदृशीं टीकाम् । दुष्प्रकृतेरन्वयः श्रुतं वा विनयस्य अकारणं (कारणं न) भवतीत्येव पाठः, तदर्थश्च । अविनयस्येति पाठे तु अकारणमित्यनेन सह कथं योगः ? 2 अस्पष्टात्रापि टीका । प्रशमहेतुना वारिणा वाडवाग्निः किं न चण्डतरो भवति ? अपि तु भवत्येवेति स्पष्टोऽर्थः । 3 हन्त ग्रन्थस्वारस्यकृते धूमकेतुरिव सेयं टीका । 'उद्दामदर्पश्वयथुस्थगितश्रवणविवराश्च' इत्येव पाठः । उद्दामदर्प एव श्वयथुः (शोथः) तेन रुद्धं श्रवणविवरं येषाम् । शोथेन कर्णविवररोधे श्रवणाभावो यथा भवति तथा गर्वेण तेषामुपदेशगिरः श्रवणे न गच्छन्तीत्याशयः । पृथुस्थगितेत्यत्र पृथुपदेन कोऽर्थपरिपोष इति सहृदयाः प्रमाणम् ।

---

पाठा०—१ संप्रहार. २ हि हृदये; हृदये. ३ वा विनयस्य. ४ प्रभवोऽपि. ५ क्षमजलम्. ६ मददोषम्. ७ विरचनाग्राह्यम्. ८ अपनीत. ९ तु राज्ञाम्. १० एव.

दर्पाश्च[1] पृथुस्थगितश्रवणविवराश्चोपदिश्यमानमपि[2] ते न शृण्वन्ति । शृण्वन्तोऽपि च गजनिमीलितेनावधीरयन्तः[3] खेदयन्ति हितोपदेशदायिनो गुरून् । अहंकारदाहज्वरमूर्च्छान्धकारिता विह्वला हि राजप्रकृतिः, अलीकाभिमानोन्मादकारीणि धनानि, राज्यविषविकारतन्द्राप्रदा[4] राजलक्ष्मीः[5] ।

आलोकयतु तावत्कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम् । इयं हि खड्गमण्डलोत्पलवनविभ्रमभ्रमरी[6][7] लक्ष्मीः क्षीरसागरात्पारिजातपल्लवेभ्यो रागम्, इन्दुशकलादेकान्तवक्रताम्, उच्चैःश्रवसश्चञ्चलताम्, कालकूटान्मोहनशक्तिम्, मदिराया मदम्, कौस्तुभमणेर्नैष्ठुर्यम्[8], इत्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वैवोद्गता[9] । न ह्येवंविधमपरिचितमिह[10] जगति किंचिदस्ति[11] यथेयमनार्या[12] । लब्धापि खलु दुःखेन परिपाल्यते । दृढगुणसंदाननिस्प-[13]

---

च्छादितानि श्रवणविवराणि कर्णच्छिद्राणि येषां ते च । द्वौ चकारावेककालं सूचयतः । एवंविधा राजान उपदिश्यमानमपि कथ्यमानमपि हितोपदेशमपि न शृण्वन्ति नाकर्णयन्ति । कदाचिच्छृण्वन्तोऽप्याकर्णयन्तोऽपि गजो हस्ती तस्य यन्निमीलितं नेत्रसंकोचस्तद्वन्निमीलितेनावधीरयन्तोऽनादरं कुर्वन्तः । हितोपदेशदायिनः शिक्षाकथकान्गुरून्खेदयन्ति । दुःखं प्रापयन्तीत्यर्थः । अथ नृपस्वभावं प्रदर्शयन्नाह—**राजेति** । हि निश्चितम् । एतादृशी राजप्रकृती राज्ञां स्वभावो विह्वला व्याकुला । **अहमिति** । अहंकार एव दाहज्वरस्तीव्रतापस्तद्धेतुका या मूर्च्छा मोहस्तयान्धकारितान्धकार इवाचरिता । धनराज्यलक्ष्म्याः स्वरूपं प्रदर्शयन्नाह—**अलीकेति** । अलीकोऽवास्तवो योऽभिमानोऽहंकार उन्मादश्च तावुभौ कुर्वन्तीति तान्येवंविधानि धनानि द्रव्याणि । **राज्यमिति** । राज्यमेव विषं गरलं तस्माद्यो विकारो विकृतिस्तेन कृत्वा तन्द्रालस्यं तत्प्रदा राजलक्ष्मी राजश्रीः ।

नेदं पूर्वोक्तमतथ्यं किंतु सत्यमेवेत्याह—**आलोकयत्विति** । कल्याणे मङ्गलेऽभिनिवेश आग्रहो यस्यैवंभूतस्त्वं तावदादौ लक्ष्मीमेव प्रथममालोकयतु विचारयतु । लक्ष्मीदोषानाह—**इयमिति** । हि निश्चितम् । इयं प्रत्यक्षोपलभ्यमाना खड्गानां कौक्षेयकाणां यन्मण्डलं संघातस्तदेव कृष्णत्वसाम्यादुत्पलवनं तत्र विभ्रमोऽवस्थितिस्तस्मिंश्चञ्चलत्वसाम्याद्भ्रमरी मधुकरी लक्ष्मीः । पुनर्दोषान्तरं प्रदर्शयन्नाह—**क्षीरेति** । यदा कश्चिद्दूरदेशान्तरं गन्तुमीहते तदासौ च सहवासिस्मृतिहेतोस्तदीयं किंचिद्वस्त्वादायैव गच्छति, तथेयमपि सहवासजनितो यः परिचयः संबन्धविशेषस्तद्वशात्सहवासिपारिजातादीनामित्येतानि वस्तूनि गृहीत्वैवादायैव क्षीरसागराद्दुग्धाम्बुधेरुद्गता प्रादुर्भूता । कीदृशानि । विरहः सहवासिभिरसंबन्धस्तस्मिन्विनोदचिह्नानि चित्तालम्बनलक्षणानि । एतानि कानीत्यपेक्षायामाह—**पारीति** । पारिजातपल्लवेभ्यो मन्दारकिसलयेभ्यो रागं विषयलिप्सामारुण्यं च । इन्दुशकलाचन्द्रलेखा(याः)देकान्तवक्रतां कुटिलतां प्रातिकूल्यं च । उच्चैःश्रवस इन्द्राश्वाच्चञ्चलतां चित्तास्थैर्यं चाञ्चल्यं च । कालकूटात्कालकूटनाम्नो विषान्मोहनशक्तिं मूर्च्छोत्पादकशक्तिमन्यवशीकरणशक्तिं च । मदिरायाः कादम्बर्या मदमुन्मादकत्वमुन्मोहसंभेदलक्षणं च । कौस्तुभमणेर्नैष्ठुर्यं काठिन्यं निर्दयत्वं चेति । अथ लक्ष्म्यास्तत्सहितस्यापि राज्ञो निन्दां कुर्वन्नाह—**नहीति** । इह जगत्येवंविधमेतादृशमपरिचितं निर्दाक्षिण्यं किंचिन्नास्ति यथेयमनार्याऽश्रेष्ठा वर्तते । एतदेव प्रपञ्चयन्नाह—**लब्धेति** । लब्धापि महता कष्टेन प्राप्तापि दुःखेन खलु परिपाल्यते परिपालनविषयीक्रियते । दृढं गाढं गुणाः शौर्यादयस्तल्लक्षणं यत्संदानं बन्धनं तेन निस्पन्दीकृतापि निश्च-

---

**टिप्प०—1 विभ्रमभ्रमरीत्येव ग्रन्थानुकूलः पाठः । भ्रमणमेव भ्रमरस्वभावो, विश्रमस्तु सर्वेषामेव ।**

---

**पाठा०**—१ दर्पश्वयथुस्थगित; दर्पाश्चर्यसंस्थगित. २ उपदिश्यम्. ३ अवधारयन्तः. ४ विषविकारतन्द्री; विषतन्द्री; विषयविकारतन्द्रा. ५ राज्यलक्ष्मीः. ६ सुभटखड्ग. ७ विभ्रम. ८ अतिनैष्ठुर्यम्. ९ इव. १० अपरमपरिचितम्. ११ किंचिन्नास्ति. १२ अनार्या दुःखेन लभ्यते लब्धापि. १३ गुणपाश.

न्दीकृतापि नश्यति। उद्दामदर्पभटसहस्रोल्लासितासिलतापञ्जरविधृताप्यपक्रामति। मदजल-दुर्दिनान्धकारगजघटितघनघटापरिपालितापि प्रपलायते। न परिचयं रक्षति। नाभिजन-मीक्षते। न रूपमालोकयते। न कुलक्रममनुवर्तते। न शीलं पश्यति। न वैदग्ध्यं गण-यति। न श्रुतमाकर्णयति। न धर्ममनुरुध्यते। न त्यागमाद्रियते। न विशेषज्ञतां विचार-यति। नाचारं पालयति। न सत्यमनुबुध्यते। न लक्षणं प्रमाणीकरोति। गन्धर्वनगरले-खेव पश्यत एव नश्यति। अद्याप्यारूढमन्दरपरिवर्तावर्तभ्रान्तिजनितसंस्कारेव परिभ्रमति। कमलिनीसंचरणव्यतिकरलग्ननलिननालकण्टकेव न क्वचिदपि निर्भरमाबध्नाति पदम्। अति-

---

लीकृतापि नश्यति प्रपलायते। **उद्दामेति**। उद्दाम उत्कटो दर्पोऽहंकारो येषामेवंभूता ये भटा योद्धारस्तेषां सहस्रं तेन उल्लासिता ऊर्ध्वीकृता या असिलतास्ता एव पञ्जरं तत्र विधृतापि स्थापिताप्यपक्रामत्यपसरति। **मदेति**। मदजलं दानवारि तदेव श्यामत्वसाधर्म्याद्दुर्दिनान्धकारस्तद्युक्ता ये गजा हस्तिनस्तैर्घटिता निष्पादिता या घना निबिडा घटा समूहस्तया परिपालितापि रक्षितापि प्रपलायते पलायनं करोति। **नेति**। परिचयं संस्तवं न रक्षति न पालयति। **नेति**। अभिजनं कुलं नेक्षते नावलोकयति। **नेति**। रूपं सौन्दर्यं न आलोक-यतेऽवलोकयति। **नेति**। कुलक्रमं कुलपरिपाटीं नानुवर्तते नानुगच्छति। **नेति**। शीलमाचारं न पश्यति नावलोकयति। **नेति**। वैदग्ध्यं पाण्डित्यं न गणयति न विचारयति। **नेति**। श्रुतं शास्त्रं नाकर्णयति न शृणोति। **नेति**। धर्मं वृषं नानुरुध्यते धर्मानुरोधेनैव न प्रवर्तते। अधर्मवतामपि गृहे तद्दर्शनात्। **नेति**। त्यागं दानं प्रति नाद्रियते नादरं करोति। कृपणसद्मन्यपि दर्शनात्। **नेति**। विशेषज्ञतां विशेषेण सर्वार्थवेदितां न विचारयति न विचारणां करोति। यत एव विद्वांसो दरिद्रोपद्रुताः स्युरिति प्रसिद्धिः। **नेति**। आचारं शि-ष्टानुचरितं मार्गं न पालयति न रक्षति। लक्ष्मीवतोऽपि प्रायः (अ)शिष्टाचरणदर्शनात् **नेति**। सत्यमवितथं नानुबुध्यते न जानाति। असत्यवतोऽपि गृहे बाहुल्येन दर्शनात्। **नेति**। लक्षणं मषीतिलकादि सामुद्रि-कशास्त्रप्रतिपादितं न प्रमाणीकरोति। लक्षणसत्त्वेऽपि तस्या अभावदर्शनात्। **गन्धर्वेति**। गन्धर्वनगरलेखा हरिश्चन्द्रपुरीति यस्याः प्रसिद्धिः। असद्वस्तुभ्रमो वा। तद्वदेव पश्यत एवावलोकयत एव पुरुषस्य नश्यति विनश्यति। **अद्यापीति**। अद्यापि इदानीमप्यारूढः प्राप्तो यो मन्दरेण मेरुणा परिवर्तः परिभ्रमस्तज्जनितो य आवर्तः पयसां भ्रमस्तस्मात्या भ्रान्तिर्भ्रमिस्तज्जनितः संस्कारो वेगाख्यो यस्या एवंविधेव परिभ्रमति परि-भ्रमणं करोति। **क्वचिदपीति**। क्वापि स्थले निर्भरं निश्चलं पदं नावबध्नाति न निदधाति। अत एवोत्प्रे-क्षते—लक्ष्म्याः कमलवासस्य प्रसिद्धत्वात्कमलिनीषु संचरणव्यतिकरः संबन्धस्तेन लग्ना नलिननालकण्टका यस्याः सैवंविधेव। यथा भग्नकण्टका भूमौ निश्चलपदं न दत्ते तथेयमपीत्यर्थः। अतिप्रयत्नेनातिप्रयासेन विधृ-तापि स्थिरीकृतापि परमेश्वरगृहेषूत्कृष्टेभ्यसद्मसु परिस्खलति स्खलनां प्राप्नोति। विविधा ये गन्धगजा गन्धे-भास्तेषां गण्डाः कटास्तेषां मधु मदस्तस्य पानमास्वादस्तेन मत्तेव क्षीबेव। ननु परमेश्वरगृहे गजास्तिष्ठ-

---

टिप्प०—1 इदमपि रूपकालंकारविध्वंसित्वादशुद्धम्। मदजलरूपैर्दुर्दिनैः (वृष्टिभिः) अन्धका-रिणो ये गजास्त एव घनघटा मेघसमूहास्तैः परिपालितेत्यर्थं उचितः। दुर्दिनत्वारोपो गजेषु मेघत्वारोपे कारणमिति परम्परितरूपकम्। परिपालितापि पलायते इति विभावना-विशेषोक्त्योः संदेहसंकरश्चेति द्वयोरङ्गाङ्गिभावसंकरः। 2 भूतयोनिविशेषाणां रात्राविव दृश्यमानं यद् नगरं तत्पङ्क्तिः। दृष्टिभ्रमाद् गगने दृश्यमाना नगराकारा रेखा वा। यथा बृहत्संहिता-'गन्धर्वनगरमुत्थितमापाण्डुरमशनिपातवातकरम्' इति। 3 अतिधनिकगृहेषु। 'इभ्य आढ्यो धनी स्वामी'।

---

पाठा०—१ उल्लसित. २ गन्धगज. ३ घटाटोप. ४ आलोकयति. ५ अवबुध्यते. ६ गन्धर्वलेखेव. ७ भ्रमति. ८ संचार. ९ कण्टकक्षतेव; कण्टकेलेव. १० क्वचिन्निर्भरम्.

प्रयत्नविधृतापि परमेश्वरगृहेषु विविधगन्धगजगण्डमधुपानमत्तेव परिस्खलति । पारुष्यमिवोपशिक्षितुमसिधारासु निवसति । विश्वरूपत्वमिव ग्रहीतुमाश्रिता नारायणमूर्तिम् । अप्रत्ययबहुला च दिवसान्तकमलमिव[1] समुपचितमूलदण्डकोशमण्डलमपि मुञ्चति भूभुजम् । लतेव विटपकानध्यारोहति । गङ्गेव वसुजनन्यपि तरंगबुद्बुदचञ्चला । दिवसकरगतिरिव प्रकटितविविधसंक्रान्तिः । पातालगुहेव तमोबहुला । हिडिम्बेव[2] भीमसाहसैकहार्यहृदया । प्रावृडिवाचिरद्युतिकारिणी । दुष्टपिशाचीव दर्शितानेकपुरुषोच्छ्राया स्वल्पसत्त्वमुन्मत्तीकरोति । सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति । जनं गुणवन्तमपवित्रमिव न स्पृशति । उदारसत्त्वम-

---

न्तीति कृत्वा तन्मधुपानमत्तायाः स्खलनं भवतु परं साधुगृहेष्वपरिस्खलिता कुतो न तिष्ठतीत्यत आह— **पारुष्यमिति** । पारुष्यं क्रूरत्वमिवोपशिक्षितुमभ्यसितुमसिधारासु खड्गधारासु निवसति निवासं करोति । ययासिधारासु क्रौर्यशिक्षणं कृतं सा क्रूरा साधुगृहेषु कथं तिष्ठतीति भावः । विश्वं प्रविष्टं यस्मिन्रूपे तत् । अथवा विश्वेन रूप्यते निरूप्यते यद्रूपं तद्विश्वरूपं तस्य भावस्तत्त्वं तदिव ग्रहीतुं नारायणमूर्तिं जनार्दनशरीरमाश्रिताधिगता । **अप्रत्ययेति** । अप्रत्ययोऽविश्वासो बहुलो यस्यामेवंभूता सती । दिवसान्ते यथा कमलं स्वाश्रयं मुञ्चति तथा स्वाश्रयीभूतं भूभुजमपि । तत्रोभयोः साम्यमाह—**समिति** । सम्यक्प्रकारेणोपचितानि वृद्धिं प्राप्तानि । अथ च समुपचितं वर्धमानं मूलं मित्रादिमूलकन्दः, दण्डो नालम्, कोशः कमलाभ्यन्तरम्, मण्डलं पारिमाण्डल्यम्, एतानि यस्येति विग्रहः । दण्डः करः, कोशो भाण्डागारः, मण्डलं देशो यस्य । 'मण्डलं द्वादशराजकम्' इत्येकस्य । 'विजिगीषुरुदासीनो मध्यमश्चेति राजकम् । गुणानां विषयं वृद्धा जगुः प्रकृतिमण्डलम् । पार्ष्णिराक्रन्द आसारः, इत्यपि । 'तदेवं शक्रमित्यादिभेदा द्वादश इष्यते । मण्डलं द्वादशराजकम्' इत्यन्ये । लता वल्ली सेव विटा भाण्डादयस्तान्पान्तीति विटपाः । विटपा एव विटपकाः । स्वार्थे कप्रत्ययः । पक्षे विटपा वृक्षाः । विटपानध्यारोहत्याश्रयणं करोति । गङ्गा स्वर्धुनी सेव वसु द्रव्यं तज्जनन्यपि तरंगा भङ्गाः बुद्बुदः स्थासकस्तद्वच्चञ्चला चपला । पक्षे वसोर्भीष्मस्य(जननी) तरंगबुद्बुदाभ्यां चाञ्चल्यवती च । दिवसकरः सूर्यस्तस्य या गतिर्गमनं सेव प्रकटिताविष्कृता विविधानेकप्रकारा संक्रान्तिर्वस्तुनेच्छासंबन्धो यया सा । पक्षे राशिषु सूर्यसंबन्धः । पातालं वडवामुखं तस्य गुहा कन्दरा सेव तमोगुणस्तेन बहुला दृढा । पक्षे तमोऽन्धकारः । हिडम्बेव घटोत्कचप्रसूरिव भीमसाहसेनातिकठिनकर्मणैकमद्वितीयं हार्दं(र्यं)हृदयं यस्याः । पक्षे भीमस्य वृकोदरस्य यः साहसगुणः । **प्रावृडिति** । प्रावृड्वर्षाकालः सेवाचिरा स्वल्पकालीना या द्युतिः प्रकाशस्तत्कारिणी । पक्षेऽचिरद्युतिर्विद्युत् । **दुष्टेति** । दुष्टा क्रूरा या पिशाची राक्षसी सेव दर्शितः प्रकटीकृतोऽनेकपुरुषाणामुच्छ्रायोऽभ्युन्नतिर्यया सा । पक्ष ऊर्ध्वीकृतभुजपाणिनरमानं पुरुषः । अनेकपुरुषाणामुच्छ्राय उच्चता । एवंभूता लक्ष्मीः स्वल्पसत्त्वमल्पसाहसं नरमुन्मत्तीकरोत्युन्मत्ततां नयति । **सरस्वतीति** । सरस्वती भारती तया परिगृहीतं स्वीकृतं नरमीर्ष्ययेव मत्सरेणेव नालिङ्गति नाश्लिष्यति । गुणवन्तं शौर्यादिगुणोपयुक्तं जनं नरमपवित्रमिवापावनमिव न स्पृशति न स्पर्शं करोति । **उदारेति** । उदारं स्फारं सत्त्वं यस्यैवंविधं पुरुषममङ्गलमिव न बहु मन्यते नादरं करोति । सुजनं शुभजनमनिमित्तमिव निष्फलमिव न पश्यति नावलोकयति ।

---

**टिप्प०**—1 कदाचिद्व्यापारिणां गृहे वाणिज्यलक्ष्मीरूपेण, कदाचिद्वीराणां राज्ञां राजलक्ष्मीरूपेणेत्यादिनानारूपधारणं विश्वरूपधारकस्य विष्णोः सकाशाद् गृहीतमित्युत्प्रेक्षा । 2 प्रकटिता विविधेषु (जनेषु) संक्रान्तिः संचारो यया सेति स्पष्टोर्थोपि प्रहेलिकायां परिणमितः । 3 अनेकेषां पुरुषाणामभ्युदयो दर्शितः (लक्ष्म्या), अनेकपुरुषपरिमिता उच्चता दर्शिता (पिशाच्या) इति स्फुटोऽर्थः । 4 उल्कापातादि दुर्लक्षणमिवेत्यर्थो वक्तव्यः ।

---

**पाठा०**—१ दिवसावसानकमलम्. २ हिडिम्बेव.

मङ्गलमिव न बहु मन्यते। सुजनमनिमित्तमिव[3] न पश्यति। अभिजातमहिमिव लङ्घयति। शूरं कण्टकमिव परिहरति। दातारं दुःस्वप्नमिव[4] न स्मरति। विनीतं पातकिनमिव नोपसर्पति[5]। मनस्विनमुन्मत्तमिवोपहसति[6]। परस्परविरुद्धं चेन्द्रजालमिव दर्शयन्ती प्रकटयति[1] जगति निजं चरितम्। तथाहि। संततमूष्माणमुपजनयन्त्यपि[2][3] जाड्यमुपजनयति। उन्नतिमादधानापि नीचस्वभावतामाविष्करोति। तोयराशिसंभवापि[4] तृष्णां संवर्धयति। ईश्वरतां दधानाप्यशिवप्रकृतित्वमातनोति। बलोपचयमाहरन्त्यपि लघिमानमापादयति। अमृतसहोदरापि कटुकविपाका[5]। विग्रहवत्यप्यप्रत्यक्षदर्शना। पुरुषोत्तमरतापि खलजनप्रिया। रेणुमयीव स्वच्छमपि कलुषीकरोति। यथायथा चेयं चपला दीप्यते तथातथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति। तथाहि। इयं संवर्धनवारिधारा तृष्णाविषवल्लीनाम्, व्याधगीतिरिन्द्रियमृगाणाम्, परामर्शधूमलेखा सच्चरितचित्राणाम्, विभ्रमशय्या मोहदीर्घ-

---

अभिजातं कुलीनमहिमिव सर्पमिव लङ्घयत्युत्क्रामयति। **शूरमिति**। शूरं शौर्यगुणोपेतं कण्टकमिव परिहरति दूरतस्त्यजति। **दातारमिति**। दातारं बहुप्रदं दुःस्वप्नमिवाशुभस्वप्नमिव न स्मरति न स्मृतिविषयीकरोति। **विनीतमिति**। विनीतं विनयगुणोपेतं पातकिनमिव पापकारिणमिव नोपसर्पति न पार्श्वे प्रयाति। **मन इति**। मनस्विनं पण्डितमुन्मत्तमिव ग्रथिलमिवोपहसत्युपहास्यं करोति। **इन्द्रेति**। इन्द्रजालमिव कुहकमिव परस्परविरुद्धमन्योन्यासंबद्धं दर्शयन्ती प्रकाशयन्ती निजमात्मीयं चरितं वृत्तं जगति लोके प्रकटयत्याविष्करोति। तदेव दर्शयति—**तथाहीति**। संततं निरन्तरमूष्माणं तापमुपजनयन्त्यपि कुर्वत्यपि जाड्यं शैत्यमुपजनयतीति विरोधः शाब्दः। तत्परिहारस्तूष्माणं दर्पं शैत्यं[1] जाड्यमित्यर्थात्। उन्नतिमादधानापि धारयन्त्यपि नीचस्वभावतामाविष्करोतीति विरोधः। तत्परिहारस्तून्नतिमुत्कर्षं नीचस्वभावोऽकर्तव्यं कर्मेत्यर्थात्। तोयराशिः समुद्रस्तस्मात्संभवापि समुत्पन्नापि तृष्णां संवर्धयतीति विरोधः। तत्परिहारस्तु तृष्णां गार्ध्यमित्यर्थात्। ईश्वरतां दधानाप्यशिवप्रकृतित्वमनीश्वरप्रकृतित्वमातनोतीति विरोधः। तत्परिहारस्त्वीश्वरतां प्रभुतामशिवमशुभमित्यर्थात्। बलोपचयमाहरन्त्यप्यानयन्त्यपि लघिमानमापादयतीति विरोधः। तत्परिहारस्तु बलोपचयं सैन्यसमूहं लघिमानं कार्पण्यमित्यर्थात्। अमृतसहोदराप्यमृतेन सहोत्पन्नापि कटुकरसोपेतो विपाको यस्या इति विरोधः। तत्परिहारस्तु कटुको दुःखदायीत्यर्थात्। विग्रहवत्यपि मूर्तिमत्यप्यप्रत्यक्षमगम्यं दर्शनं यस्या इति विरोधः। तत्परिहारस्तु विग्रहवती कलहवतीत्यर्थात्। पुरुषोत्तमरतापि खला ये दुर्जना जनास्ते प्रिया यस्या इति विरोधः। तत्परिहारस्तु पुरुषोत्तमे कृष्णे रतं मैथुनं यस्या एवंविधापि खलजनानां प्रिया वल्लभेत्यर्थात्। रेणुमयीव रजोगुणमयीव स्वच्छमपि निर्मलमपि कलुषीकरोति मलिनीकरोति। **यथेति**। यथायथेयं लक्ष्मीश्चपला चञ्चला दीप्यते दीप्ता भवति तथातथा केवलं दीपशिखेव कज्जलवन्मलिनं कश्मलं कर्मोद्वमत्युद्गिरति। दीपशिखापि कज्जललक्षणं यन्मलिनं कर्म तदेवोद्वमति। तदेव दर्शयति—**तथाहीति**। तृष्णा लोभस्तल्लक्षणानां विषवल्लीनां संवर्धने विस्तारणे वारिधारा जलश्रेणिः। अत्र श्रीजलधारयोर्वृद्धिहेतुत्वेन साम्यम्। छेदयोग्यतया तृष्णावल्ल्योः साम्यम्। **व्याधेति**। व्याधगीतिर्मृगवधजीविगानमिन्द्रियमृगाणामक्षहरिणानाम्। अत्र नाशकत्वसाम्याच्छ्रीगीत्योः साम्यम्। नाश्यत्वसाम्याच्चाक्षमृगयोः साम्यम्। गानलुब्धाश्च मृगा हन्यन्त इति सर्वप्रसिद्धम्। सच्चरितानि सदाचरणानि तान्येव चित्राणि तेषां परामर्श[2] आमर्शनं तदर्थं या धूमलेखा धूमपङ्क्तिः।

---

टिप्प०—1 टीकाकारस्यापि जाड्यम्। जाड्यम् (जडत्वम्) सदसद्विवेकराहित्यरूपं मौढ्यमित्यर्थो वाच्यः। 2 प्रोञ्छनम्, आवरणमित्यादिरर्थ उचितः।

---

पाठा०—३ इव पश्यति. ४ दुःखस्वप्नम्. ५ नापसर्पति. ६ हसति. १ प्रकटयति निजम्. २ सततम्. ३ आरोपयन्त्यपि. ४ राशिरिव. ५ कटुविपाका.

निद्राणाम्, निवासजीर्णवलभी धनमदपिशाचिकानाम्, तिमिरोद्गतिः शास्त्रदृष्टीनाम्, पुरः-पताका सर्वाविनयानाम्, उत्पत्तिनिम्नगा क्रोधावेगग्राहाणाम्, आपानभूमिर्विषयमधूनाम्, संगीतशाला भ्रूविकारनाट्यानाम्, आवासदरी दोषाशीविषाणाम्, उत्सारणवेत्रलता सत्पुरुषव्यवहाराणाम्, अकालप्रावृड् गुणकलहंसकानाम्, विसर्पणभूमिर्लोकापवादविस्फोटकानाम्, प्रस्तावना कपटनाटकस्य, कदलिका कामकरिणः, वध्यशाला साधुभावस्य, राहुजिह्वा धर्मेन्दुमण्डलस्य । न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढः, यो वा न विप्रलब्धः । नियतमियमालेख्यगतापि चलति, पुस्तकमय्यपीन्द्रजालमाचरति, उत्कीर्णापि

---

लोकैः कफनिवृत्त्यर्थं द्रव्यान्तरस्य धूम्रपानं कृत्वा पश्चात्स एवोदीर्यते तत्स्पर्शादेवालेख्यं विनश्यतीति भावः । **मोह इति** । मोहो मौढ्यम्, दीर्घनिद्रा निमीलितानि (?), तासां विभ्रमशय्या विलासशयनम् । **धनेति** । धनानि द्रव्याणि, मदो मुन्मोहसंभेदः त एव पिशाचिन्यस्तासां निवासार्थं जीर्णा प्राचीना वलभी गृहोपरिभागः । **तिमिरेति** । शास्त्राण्येव दृष्टयस्तासां तिमिरस्य नेत्ररोगविशेषस्योद्गतिः प्रादुर्भावः । **पुर इति** । सर्वेषामविनयानां दुर्बुद्धीनां पुरःपताकाग्रेवैजयन्ती । **उत्पत्तीति** । क्रोधस्य कोपस्य ये आवेगाः संभ्रमास्त एव ग्राहा जलजन्तवस्तेषामुत्पत्तिनिम्नगा तटिनी । **आपानेति** । विषया गोचरा एव मधूनि मद्यानि तेषामापानभूमिः पानगोष्ठिकास्थलम् । **संगीतेति** । भ्रुवां विकारा विकृतयस्त एव नाट्यानि तेषां संगीतशाला रङ्गशाला । **आवासेति** । दोषा एव दूषणान्येव आशीविषा आशी दंष्ट्रा तस्यां विषं येषां त आशीविषाः सर्पास्तेषामावासार्थं दरी गुहा । **उत्सारणेति** । सत्पुरुषाः शिष्टास्तेषां व्यवहारा आचरणानि तेषामुत्सारणं दूरीकरणं तद्धेतुका वेत्रलता वेत्रयष्टिः । **अकालेति** । गुणा एव कलहंसाः कादम्बास्तेषामकालप्रावृड्समयो वर्षाकालः । प्रावृषि हंसा नश्यन्ति । इयं तु सर्वगुणानां विनाशहेतुरित्यपकर्षस्तु प्रसिद्धः । **विसर्पणेति** । लोकेषु येऽपवादा विरोधोक्तयस्त एव विस्फोटकाः शिलीन्ध्राणि तेषां विसर्पणभूमिर्विस्तरणस्थलम् । **प्रस्तावनेति** । कपटनाटकस्य कैतवनृत्यस्य प्रस्तावना प्रारम्भः सूत्रधारादिप्रवेशः । **कदलिकेति** । कामकरिणो मदनगजस्य कदलिका रम्भा । **वध्येति** । साधुभावस्य शोभनाध्यवसायस्य वध्यशाला सूनास्थानम् । **राहुजिह्वेति** । धर्मः सदाचारः निर्मल(त्व)साम्यात्स एवेन्दुमण्डलं चन्द्रबिम्बं तस्य राहुजिह्वा सैंहिकेयरसना । **न हीति** । हि निश्चितम् । तं पुरुषं न पश्यामि नावलोकयामि, यत्तदोर्नित्याभिसंबन्धात् । यः पुमानपरिचितयासंनिहितया निर्भरमतिशयं नोपगूढो नाश्लिष्टः । यो वा न विप्रलब्धो न च विप्रतारितः । नियतं निश्चितम् । इयं लक्ष्मीरालेख्यगता चित्रलिखितापि चलति न स्थिरा भवति । अन्येषां चित्तानि चालयतीति वा । **पुस्तकेति** । पुस्तकमय्यपि ज्ञानमय्यपीन्द्रजालवज्जालमाचरति । **उत्कीर्णेति** । उत्कीर्णाप्युत्कीरितापि विप्रलभते विप्रतारणां

---

**टिप्प०**—1 प्रलापमात्रमिदम्, धूममात्रेण चित्राणि विकृत्य आव्रियन्ते यथा महानसभित्तौ । 2 इदमपि मौढ्यम्, सर्वत्रापि परम्परितरूपकम् । तद्विच्छेदो मा भूदिति—मोहाः विवेकाभावा एव दीर्घनिद्रास्तासामित्यर्थो वाच्यः । 3 धनमदा एव पिशाचिका इत्यर्थ उचितः । 4 स्रक्चन्दनादय इन्द्रियभोग्यपदार्था इत्यर्थ उचितः । 5 व्रणविशेषा इत्यर्थ उचितः । 6 कदलीसमूहे गजः स्वैरं विहरतीत्यर्थः । 7 परस्परपरिज्ञानरहितया इत्यर्थ उचितः । 8 लक्ष्म्यां कार्यद्वारा कुलटाया वेश्याया वा व्यवहारसमारोपात्समासोक्तिर्बोध्या । 9 अज्ञानराशिष्टीकाकारः, 'पुस्तमय्यपि' इति पाठः । पुस्तमयी मृत्काष्ठादिनिर्मितपुत्तलिकारूपापि इन्द्रजालमारचयति, अकस्मात् लक्ष्म्या विलोपात् । इति तदर्थः । 'पुस्तस्त्रीहस्तनिर्यत्०' इत्यादि वाग्भटः ।

---

**पाठा०**—१ पुरःसर. २ आवास. ३ व्याहाराणाम्. ४ विस्फोटानाम्. ५ अपरिच्चितया न निर्भरम्; अपरिच्चितयानया न निर्भरम्. ६ पुस्तमय्यपि.

मङ्गलमिव न बहु मन्यते। सुजनमनिमित्तमिव[3] न पश्यति। अभिजातमहिमिव लङ्घयति। शूरं कण्टकमिव परिहरति। दातारं दुःस्वप्नमिव[4] न स्मरति। विनीतं पातकिनमिव नोपसर्पति[5]। मनस्विनमुन्मत्तमिवोपहसति[6]। परस्परविरुद्धं चेन्द्रजालमिव दर्शयन्ती प्रकटयति[1] जगति निजं चरितम्। तथाहि। संततमूष्माणमुपजनयन्त्यपि[2][3] जाड्यमुपजनयति। उन्नतिमादधानापि नीचस्वभावतामाविष्करोति। तोयराशिसंभवापि[4] तृष्णां संवर्धयति। ईश्वरतां दधानाप्यशिवप्रकृतित्वमातनोति। बलोपचयमाहरन्त्यपि लघिमानमापादयति। अमृतसहोदरापि कटुकविपाका[5]। विग्रहवत्यप्यप्रत्यक्षदर्शना। पुरुषोत्तमरतापि खलजनप्रिया। रेणुमयीव स्वच्छमपि कलुषीकरोति। यथायथा चेयं चपला दीप्यते तथातथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति। तथाहि। इयं संवर्धनवारिधारा तृष्णाविषवल्लीनाम्, व्याधगीतिरिन्द्रियमृगाणाम्, परामर्शधूमलेखा सच्चरितचित्राणाम्, विभ्रमशय्या मोहदीर्घ-

---

अभिजातं कुलीनमहिमिव सर्पमिव लङ्घयत्युत्क्रामयति। **शूरमिति**। शूरं शौर्यगुणोपेतं कण्टकमिव परिहरति दूरतस्त्यजति। **दातारमिति**। दातारं बहुप्रदं दुःस्वप्नमिवाशुभस्वप्नमिव न स्मरति न स्मृतिविषयीकरोति। **विनीतमिति**। विनीतं विनयगुणोपेतं पातकिनमिव पापकारिणमिव नोपसर्पति न पार्श्वे प्रयाति। **मन इति**। मनस्विनं पण्डितमुन्मत्तमिव ग्रथिलमिवोपहसत्युपहास्यं करोति। **इन्द्रेति**। इन्द्रजालमिव कुहकमिव परस्परविरुद्धमन्योन्यासंबद्धं दर्शयन्ती प्रकाशयन्ती निजमात्मीयं चरितं वृत्तं जगति लोके प्रकटयत्याविष्करोति। तदेव दर्शयति—**तथाहीति**। संततं निरन्तरमूष्माणं तापमुपजनयन्त्यपि कुर्वत्यपि जाड्यं शैत्यमुपजनयतीति विरोधः शाब्दः। तत्परिहारस्तूष्माणं दर्पं शैत्यं[1] जाड्यमित्यर्थात्। उन्नतिमादधानापि धारयन्त्यपि नीचस्वभावतामाविष्करोतीति विरोधः। तत्परिहारस्तून्नतिमुत्कर्षं नीचस्वभावोऽकर्तव्यं कर्मेत्यर्थात्। तोयराशिः समुद्रस्तस्मात्संभवापि समुत्पन्नापि तृष्णां संवर्धयतीति विरोधः। तत्परिहारस्तु तृष्णां गार्ध्यमित्यर्थात्। ईश्वरतां दधानाप्यशिवप्रकृतित्वमनीश्वरप्रकृतित्वमातनोतीति विरोधः। तत्परिहारस्त्वीश्वरतां प्रभुतामशिवमशुभमित्यर्थात्। बलोपचयमाहरन्त्यप्यानयन्त्यपि लघिमानमापादयतीति विरोधः। तत्परिहारस्तु बलोपचयं सैन्यसमूहं लघिमानं कार्पण्यमित्यर्थात्। अमृतसहोदराप्यमृतेन सहोत्पन्नापि कटुकरसोपेतो विपाको यस्या इति विरोधः। तत्परिहारस्तु कटुको दुःखदायीत्यर्थात्। विग्रहवत्यपि मूर्तिमत्यप्यप्रत्यक्षमगम्यं दर्शनं यस्या इति विरोधः। तत्परिहारस्तु विग्रहवती कलहवतीत्यर्थात्। पुरुषोत्तमरतापि खला ये दुर्जना जनास्ते प्रिया यस्या इति विरोधः। तत्परिहारस्तु पुरुषोत्तमे कृष्णे रतं मैथुनं यस्या एवंविधापि खलजनानां प्रिया वल्लभेत्यर्थात्। रेणुमयीव रजोगुणमयीव स्वच्छमपि निर्मलमपि कलुषीकरोति मलिनीकरोति। **यथेति**। यथायथेयं लक्ष्मीश्चपला चञ्चला दीप्यते दीप्ता भवति तथातथा केवलं दीपशिखेव कज्जलवन्मलिनं कश्मलं कर्मोद्वमत्युद्गिरति। दीपशिखापि कज्जललक्षणं यन्मलिनं कर्म तदेवोद्वमति। तदेव दर्शयति—**तथाहीति**। तृष्णा लोभस्तल्लक्षणानां विषवल्लीनां संवर्धने विस्तारणे वारिधारा जलश्रेणिः। अत्र श्रीजलधारयोर्वृद्धिहेतुत्वेन साम्यम्। छेद्योग्यतया तृष्णावल्ल्योः साम्यम्। **व्याधेति**। व्याधगीतिर्मृगवधजीविगानमिन्द्रियमृगाणामक्षहरिणानाम्। अत्र नाशकत्वसाम्याच्छ्रीगीत्योः साम्यम्। नाश्यत्वसाम्याच्चाक्षमृगयोः साम्यम्। गानलुब्धाश्च मृगा हन्यन्त इति सर्वप्रसिद्धम्। सच्चरितानि सदाचरणानि तान्येव चित्राणि तेषां परामर्शं[2] आमर्शनं तदर्थं या धूमलेखा धूमपङ्क्तिः।

---

**टिप्प०**—1 टीकाकारस्यापि जाड्यम्। जाड्यम् (जडत्वम्) सदसद्विवेकराहित्यरूपं मौढ्यमित्यर्थो वाच्यः। 2 प्रोञ्छनम्, आवरणमित्यादिरर्थं उचितः।

---

**पाठा०**—३ इव पश्यति. ४ दुःखस्वप्नम्. ५ नापसर्पति. ६ हसति. १ प्रकटयति निजम्. २ सततम्. ३ आरोपयन्त्यपि. ४ राशिरिव. ५ कटुविपाका.

निद्राणाम्, निवासजीर्णवलभी धनमदपिशाचिकानाम्, तिमिरोद्गतिः शास्त्रदृष्टीनाम्, पुरः[1]-पताका सर्वाविनयानाम्, उत्पत्तिनिम्नगा क्रोधावेगग्राहाणाम्, आ[2]पानभूमिर्विषयमधूनाम्, संगीतशाला भ्रूविकारनाट्यानाम्, आवासदरी दोषाशीविषाणाम्, उत्सारणवेत्रलता सत्पुरु[3]षव्यवहाराणाम्, अकालप्रावृड् गुणकलहंसकानाम्, विसर्पणभूमिर्लोकापवादविस्फो[4]टकानाम्, प्रस्तावना कपटनाटकस्य, कदलिका कामकरिणः, वध्यशाला साधुभावस्य, राहुजिह्वा धर्मेन्दुमण्डलस्य । न हि तं पश्यामि यो ह्य[5]परिचितयानया न निर्भरमुपगूढः, यो वा न विप्रलब्धः । नियतमियमालेख्यगतापि चलति, पु[6]स्तकमय्यपीन्द्रजालमाचरति, उत्कीर्णापि

---

लोकैः कफनिवृत्त्यर्थं द्र[1]व्यान्तरस्य धूम्रपानं कृत्वा पश्चात्स एवोदीर्यते तत्स्पर्शादेवालेख्यं विनश्यतीति भावः । **मोह इति** । मोहो मौढ्यम्, दीर्घनिद्रा निमी[2]लितानि (?), तासां विभ्रमशय्या विलासशयनम् । **धनेति** । धनानि द्रव्याणि, म[3]दो मुन्मोहसंभेदः त एव पिशाचिन्यस्तासां निवासार्थं जीर्णा प्राचीना वलभी गृहोपरिभागः । **तिमिरेति** । शास्त्राण्येव दृष्टयस्तासां तिमिरस्य नेत्ररोगविशेषस्योद्गतिः प्रादुर्भावः । **पुर इति** । सर्वेषामविनयानां दुर्बुद्धीनां पुरःपताकाग्रेवैजयन्ती । **उत्पत्तीति** । क्रोधस्य कोपस्य ये आवेगाः संभ्रमास्त एव ग्राहा जलजन्तवस्तेषामुत्पत्तिनिम्नगा तटिनी । **आपानेति** । विषया[4] गोचरा एव मधूनि मद्यानि तेषामापानभूमिः पानगोष्ठिकास्थलम् । **संगीतेति** । भ्रुवां विकारा विकृतयस्त एव नाट्यानि तेषां संगीतशाला रङ्गशाला । **आवासेति** । दोषा एव दूषणान्येव आशीविषा आशी दंष्ट्रा तस्यां विषं येषां त आशीविषाः सर्पास्तेषामावासार्थं दरी गुहा । **उत्सारणेति** । सत्पुरुषाः शिष्टास्तेषां व्यवहारा आचरणानि तेषामुत्सारणं दूरीकरणं तद्धेतुका वेत्रलता वेत्रयष्टिः । **अकालेति** । गुणा एव कलहंसाः कादम्बास्तेषामकालप्रावृड्समयो वर्षाकालः । प्रावृषि हंसा नश्यन्ति । इयं तु सर्वगुणानां विनाशहेतुरित्यपकर्षस्तु प्रसिद्धः । **विसर्पणेति** । लोकेषु येऽपवादा विरोधोक्तयस्त एव विस्फोटकाः शिलीन्[5]द्राणि तेषां विसर्पणभूमिर्विस्तरणस्थलम् । **प्रस्तावनेति** । कपटनाटकस्य कैतवनृत्यस्य प्रस्तावना प्रारम्भः सूत्रधारादिप्रवेशः । **कदलिकेति** । कामकरिणो मदनगजस्य कदलिका र[6]म्भा । **वध्येति** । साधुभावस्य शोभनाध्यवसायस्य वध्यशाला सूनास्थानम् । **राहुजिह्वेति** । धर्मः सदाचारः निर्मल(त्व)साम्यात्स एवेन्दुमण्डलं चन्द्रबिम्बं तस्य राहुजिह्वा सैंहिकेयरसना । **न हीति** । हि निश्चितम् । तं पुरुषं न पश्यामि नावलोकयामि, यत्तदोर्नित्याभिसंबन्धात् । यः पुमानपरिचितयासंनिहित[7]तया निर्भरमतिशयं नोपगूढो ना[8]श्लिष्टः । यो वा न विप्रलब्धो न च विप्रतारितः । नियतं निश्चितम् । इयं लक्ष्मीरालेख्यगता चित्रलिखितापि चलति न स्थिरा भवति । अन्येषां चित्तानि चालयतीति वा । **पुस्तकेति** । पुस्तकम[9]य्यपि ज्ञानमय्यपीन्द्रजालवज्जालमाचरति । **उत्कीर्णेति** । उत्कीर्णाप्युत्कीरितापि विप्रलभते विप्रतारणां

---

**टिप्प०—1** प्रलापमात्रमिदम्, धूममात्रेण चित्राणि विकृत्य आव्रियन्ते यथा महानसभित्तौ । 2 इदमपि मौढ्यम्, सर्वत्रापि परम्परितरूपकम् । तद्विच्छेदो मा भूदिति—मोहाः विवेकाभावा एव दीर्घनिद्रास्तासामित्यर्थो वाच्यः । 3 धनमदा एव पिशाचिका इत्यर्थ उचितः । 4 स्रक्चन्दनादय इन्द्रियभोग्यपदार्था इत्यर्थ उचितः । 5 व्रणविशेषा इत्यर्थ उचितः । 6 कदलीसमूहे गजः स्वैरं विहरतीत्यर्थः । 7 परस्परपरिज्ञानरहितया इत्यर्थ उचितः । 8 लक्ष्म्यां कार्यद्वारा कुलटाया वेश्याया वा व्यवहारसमारोपात्समासोक्तिर्बोध्या । 9 अज्ञानराशिष्टीकाकारः, 'पुस्तमय्यपि' इति पाठः । पुस्तमयी मृत्काष्ठादिनिर्मितपुत्तलिकारूपापि इन्द्रजालमारचयति, अकस्मात् लक्ष्म्या विलोपात् । इति तदर्थः । 'पुस्तस्त्रीहस्तनिर्यत्०' इत्यादि वाग्भटः ।

---

**पाठा०—१** पुरःसर. २ आवास. ३ व्याहाराणाम्. ४ विस्फोटानाम्. ५ अपरिच्चितया न निर्भरम्; अपरिच्चितयानया न निर्भरम्. ६ पुस्तमय्यपि.

विप्रलभते, श्रुताप्यभिसंधत्ते,[1] चिन्तितापि वञ्चयति। एवंविधयापि चानया दुराचारया कथमपि दैवंवशेन[1] परिगृहीता विक्लवा[2] भवन्ति राजानः, सर्वाविनयाधिष्ठानतां च गच्छन्ति। तथाहि—अभिषेकसमय एव[3] चैतेषां मङ्गलकलशजलैरिव प्रक्षाल्यते दाक्षिण्यम्, अग्निकार्यधूमेनेव मलिनीक्रियते[4] हृदयम्, पुरोहितकुशाग्रसंमार्जनीभिरिवापह्रियते[5] क्षान्तिः, उष्णीषपट्टबन्धेनेवाच्छाद्यते[6][7] जरागमनस्मरणम्, आतपत्रमण्डलेनेवापसार्यते[8] परलोकदर्शनम्, चामरपवनैरिवापह्रियते सत्यवादिता, वेत्रदण्डैरिवोत्सार्यन्ते गुणाः, जयशब्दकलकलरवैरिव[9] तिरस्क्रियन्ते साधुवादाः, ध्वजपटपल्लवैरिव परामृश्यते यशः। तथाहि—केचिच्छ्रमव-[10][11]शशिथिलशकुनिगलपुटचटुलाभिः[12] खद्योतोन्मेषमुहूर्तमनोहराभिर्मनस्विजनगर्हिताभिः संपद्भिः प्रलोभ्यमाना धनलवलाभावलेपविस्मृतजन्मानोऽनेकदोषोपचितेन दोषासृजेव[13] रागावेशेन

---

करोति। श्रुताप्याकर्णिताप्यभिसंधत्ते संशयं[1] करोति। चिन्तितापि वञ्चयति वञ्चनां करोति। एवंविधयापि पूर्वोक्तलक्षणलक्षितयाप्यनया श्रिया दुराचारया दुष्टाचरणया कथमपि महता कष्टेन दैववशेन भाग्यवशेन परिगृहीताः स्वीकृता राजानो विक्लवा विह्वला भवन्ति। सर्वेषामविनयानां दुर्बुद्धीनामधिष्ठानतामधिकरणतां च गच्छन्ति प्राप्नुवन्ति। चकारः समुच्चयार्थः। तदेव दर्शयति—**तथाहीति**। अभिषेकसमये राज्याभिषेकक्षण एवैतेषां राज्ञां मङ्गलकलशजलैरिव कल्याणकुम्भाम्भोभिरिव दाक्षिण्यमनुकूलता प्रक्षाल्यते धावनविषयीक्रियते। **अग्नीति**। अभिषेकानन्तरं होमस्य सद्भावादग्नीत्युक्तम्। अग्निकार्यं होमादि तस्य धूमेन हृदयं स्वान्तं मलिनीक्रियते। राज्ञामिति शेषः। **पुरोहितेति**। पुरोहितः पुरोधास्तस्य कुशाग्राणि दर्भाग्राण्येव संमार्जन्यो बहुकार्यस्ताभिरिव क्षान्तिः क्षमापह्रियते दूरीक्रियते। **उष्णीषेति**। उष्णीषं मूर्धवेष्टनं तदेव पट्टबन्धस्तेनेव जरा विस्रसा तस्याः आगमनमागमस्तस्य स्मरणं स्मृतिराच्छाद्यत आव्रियते। **आतपत्रेति**। आतपत्रं छत्रं तस्य मण्डलेन निस्तलेन परलोकस्य भवान्तरस्य दर्शनमवलोकनमपसार्यते दूरीक्रियते। **चामरेति**। चामरं वालव्यजनं तस्य पवनैर्वीजनैरिव सत्यमवितथं वदतीत्येवंशीलः सत्यवादी तस्य भावस्तत्ता सा अपह्रियतेऽपहरणविषयीक्रियते। **वेत्रेति**। वेत्रदण्डैर्वेतसयष्टिभिरिव गुणाः शौर्यादय उत्सार्यन्ते दूरीक्रियन्ते। **जयेति**। जयशब्दस्य ये कलकलरवाः कोलाहलशब्दास्तैरिव साधुवादाः ख्यातयस्तिरस्क्रियन्ते न्यक्क्रियन्ते। **ध्वजेति**। ध्वजा वैजयन्त्यस्तेषां पटा वस्त्राणि तेषां पल्लवैः प्रान्तैरिव यशः श्लोकः परामृश्यते परामर्शो लोपः स क्रियते। तदेव दर्शयति—**तथाहीति**। केचिन्मनुष्याः[2]। **श्रमेति**। श्रमवशेन प्रयासाधिक्येन शिथिलः श्लथोऽदृढः शकुनेर्मयूरस्य अन्यस्य वा पक्षिविशेषस्य यो गलः कण्ठस्तस्य यत्पुटं तद्वच्चपलाभिः। मयूरस्य कण्ठः श्रमवशेन चाल्यन्तं चपलः स्यादिति तदुपमानम्। **खद्योत इति**। खद्योतो ज्योतिरिङ्गणस्तस्य य उन्मेषोऽवभासस्तद्वन्मुहूर्तं मनोहराभिश्चित्तहारिणीभिः। **मनस्वीति**। मनस्विजनाः पण्डितलोकास्तैर्गर्हिताभिर्निन्दिताभिरेवंविधाभिः संपद्भिः समृद्धिभिः प्रलोभ्यमाना लोभं प्राप्यमाणाः। **धनेति**। धनस्य द्रव्यस्य यो लवो लेशस्तस्य लाभः प्राप्तिस्तस्मायोऽवलेपोऽहंकारस्तेन विस्मृतं विस्मरणं प्राप्तं जन्म येषां ते तथानेके दोषा[3] दूषणानि तैरुपचितेन व्याप्तेन। **रागावेशेनेति**। राग इच्छारुण्यं च तेषामावेशस्तन्मयीभावस्तेन बाध्यमानाः पीड्यमानाः।

---

**टिप्प०—**1 कपटव्यवहारं करोति। 2 राज्ञां प्रसङ्गे 'मनुष्याः' इति व्याख्या प्रमादः। राजान इत्युचितम्। 3 दोषैः वातपित्तकफविकारैः उपचितेन वृद्धिंगतेन दुष्टेन असृजा (रक्तेन) यथा पीड्यमाना भवन्ति तथा दोषैः कामक्रोधादिभिः प्रवृद्धेन रागावेशेन विषयासक्तिरूपेणाभिनिवेशेन अधरीक्रियमाणा इति व्याख्योचिता। इदं सर्वं भ्रममात्रम्। अत एव 'दुष्टासृजेव' इत्येव पाठः, 'दोषोपचितेन' इति पूर्वमुक्तत्वेन पौनरुक्त्यप्रसङ्गात्।

---

**पाठा०—**१ दैवपरिगृहीता. २ विक्लवीभवन्ति. ३ एवैषाम्; एव चैषाम्. ४ मलिनीभवति. ५ अपनीयते. ६ पट. ७ अवच्छाद्यते. ८ अपवार्य; अपवार्यते. ९ कलकलैः. १० कश्चित्. ११ श्रमश्लथिल. १२ पक्षपुट. १३ दुष्टासृजेव.

बाध्यमानाः, विविधविषयग्रासलालसैः पञ्चभिरप्यनेकसहस्रसंख्यैरिवेन्द्रियैरायास्यमानाः, प्रकृतिचञ्चलतया लब्धप्रसरेणैकेनापि शतसहस्रतामिवोपगतेन मनसाकुलीक्रियमाणा विह्वलतामुपयान्ति । ग्रहैरिव गृह्यन्ते, भूतैरिवाभिभूयन्ते, मन्त्रैरिवावेश्यन्ते, सत्त्वैरिवावष्टभ्यन्ते, वायुनेव विडम्ब्यन्ते, पिशाचैरिव ग्रस्यन्ते, मदनशरैर्मर्माहता इव मुखभङ्गसहस्राणि कुर्वते, धनोष्मणा पच्यमाना इव विचेष्टन्ते, गाढप्रहाराहता इवाङ्गानि न धारयन्ति, कुलीरा इव तिर्यक्परिभ्रमन्ति, अधर्मभग्नगतयः पङ्गव इव परेण संचार्यन्ते, मृषावादविपाकसंजातमुखरोगा इवातिकृच्छ्रेण जल्पन्ति, सप्तच्छदतरव इव कुसुमरजोविकारैः पार्श्ववर्तिनां शिरःशूलमुत्पादयन्ति, आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति, उत्कम्पितलोचना इव

---

केनेव । **दोषेति** । दोषं दुष्टं यदसृग्रक्तं तेनेव । तत्रापि रागो भवत्येवेति साम्यम् । **विविधेति** । विविधा येऽनेके विषया गोचरास्त एव ग्रासा गुडेरकास्तत्र लालसैर्लम्पटैः । **पञ्चभिरिति** । पञ्चभिरपि प्राणप्रमितसंख्यैरपि चक्षुरादिभिरपि शतसहस्रतां लक्षतामुपगतेन[1] प्राप्तेन अनेकसहस्रसंख्यैरिन्द्रियैः करणैरायास्यमानाः परिक्लिश्यमानाः । **प्रकृतीति** । प्रकृत्या स्वभावेन चञ्चलश्चपलस्तस्य भावस्तत्ता तया लब्धः प्रसरोऽवकाशो येनैवंभूतेनैकेन मनसा चित्तेनाकुलीक्रियमाणा विह्वलतामुत्पिञ्जलतामुपयान्ति गच्छन्ति । **ग्रहैरिति** । ग्रहैः शनैश्चरादिभिरिव गृह्यन्ते ग्रहणविषयीक्रियन्ते । भूतैः पिशाचैरिवाभिभूयन्ते । **मन्त्रैरिति** । मन्त्रा देवाधिष्ठातृकास्तैरिवावेश्यन्ते । मन्त्रेणान्यत्रावेशः क्रियते । यथा भूतमन्यत्र प्रवेश्यते । सत्त्वैरिव दुष्टप्राणिभिरिवावष्टभ्यन्ते हठेन गृह्यन्ते । वायुनेव पवनेनेव विडम्ब्यन्त इतस्ततो विक्षिप्यन्ते । पिशाचैरिव राक्षसैरिव ग्रस्यन्ते भक्ष्यन्ते । **मदनेति** । मदनशरैः कामबाणैर्मर्मस्थल आहतास्ताडिता इव मुखभङ्गसहस्राण्याननविकृतिसहस्राणि कुर्वते घटयन्ति । **धनेति** । धनस्य द्रव्यस्योष्मा तापस्तेन पच्यमानाः पाकविषयीक्रियमाणा इव विचेष्टन्ते । विविधां चेष्टां कुर्वन्तीत्यर्थः । **गाढेति** । गाढस्तीव्रो यः प्रहारो लगुडादिना कुट्टनं तेनाहता इवाङ्गानि हस्तपादादीनि न धारयन्ति न धर्तुं शक्नुवन्तीत्यर्थः । **कुलीरेति** । कुलीरा इव कर्कटा इव तिर्यक्तिरश्चीना[2] एव परिभ्रमन्ति परिभ्रमणं कुर्वन्ति । **अधर्मेति** । अधर्मेणासदाचरणेन भग्ना भङ्गं प्राप्ता गतिर्गमनं सत्कर्मणि वृत्तिश्च येषामेवंभूताः पङ्गव इव खञ्जा इव परेणान्येन संचार्यन्ते संचरणशीलाः क्रियन्ते । **मृषेति** । मृषावादोऽसत्यभाषणं तस्य विपाकः परिणामस्तेन संजातः समुत्पन्नो मुखरोगो येषामेतादृश इवातिकृच्छ्रेणातिकष्टेन जल्पन्ति ब्रुवन्ति । **सप्तेति** । सप्तच्छदतरव इव विषमच्छदवृक्षा इव कुसुमानि नेत्राणि तेषां ये रजोभिर्गुणैर्विकारा विकृतयस्तैः[3] । पक्षे कुसुमरजोविकारैः पुष्पपरागविकृतिभिः । 'कुसुमं स्त्रीरजो नेत्रे' इत्यनेकार्थः । पार्श्ववर्तिनां समीपस्थायिनां शिरःशूलं मस्तकव्यथामुत्पादयन्ति जनयन्ति । सप्तपर्णकुसुमरजसः शिरःशूलोत्पादकत्वं वैद्यके प्रसिद्धम् । **आसन्नेति** । आसन्नः समीपवर्ती मृत्युर्येषां त एवंविधा इव बन्धुजनमपि स्वजनमपि नाभिजानन्ति नोपलक्षयन्ति । **उदिति** । उत्प्राबल्येन कम्पितं धूतं लोचनं नेत्रं येषामेवंविधा इव

---

टिप्प०—1 उपगतैरिति वाच्यम् । 2 सर्वैः सह कौटिल्यमाचरन्तीत्यर्थः । 3 कुसुमरजसां विकारैः (तत्संपर्कजनितवायुविकारैः) सप्तपर्णतरवो यथा शिरोवेदनामुत्पादयन्ति, तथा इमे कुसुमानि (नेत्ररोगाः) एव रजोविकारा रजोगुणपरिणामास्तैः आसन्नवर्तिनां शिरःशूलजन्यपीडामिवोत्पादयन्तीति तात्पर्यम् । टीकातो व्याख्यामात्रमवगन्तव्यम् । 'कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः ।' इति हैमस्य शुद्धः पाठः 4 इदमपि घोरमज्ञानम् । 'उत्कुपितलोचना इव' इत्येव पाठः । उत्कुपितलोचना रुग्णनेत्रा इति तदर्थः । यस्य नेत्रपीडा भवति स तेजस्विपदार्थं न शक्नोति वीक्षितुम् ।

---

पाठा०—१ विषयरसग्रास. २ प्रसारेण. ३ अभिहताः. ४ राभिहताः. ५ विषपाक. ६ आसन्नवर्तिनाम्. ७ पुरःस्थितं बन्धुजनम्. ८ उत्कुपित.

तेजस्विनो नेक्षन्ते, कालदष्टा इव महामन्त्रैरपि न प्रतिबुध्यन्ते, जातुषाभरणानीव[1] सोष्माणं न सहन्ते, दुष्टवारणा इव महामानस्तम्भनिश्चलीकृता[2][3] न गृह्णन्त्युपदेशम्, तृष्णाविषमूर्च्छिताः[4] कनकमयमिव सर्वं पश्यन्ति, इषव इव[5] पानवर्धिततैक्ष्ण्याः[6] परप्रेरिता विनाशयन्ति, दूरस्थितान्यपि फलानीव दण्डविक्षेपैर्महाकुलानि शातयन्ति, अकालकुसुमप्रसवा इव मनोहराकृतयोऽपि लोकविनाशहेतवः, श्मशानाग्नय इवातिरौद्रभूतयः, तैमिरिका इवादूरदर्शिनः, उपसृष्टा इव क्षुद्राधिष्ठितभवनाः, श्रूयमाणा अपि प्रेतपटहा इवोद्वेजयन्ति, चिन्त्यमाना अपि महापातकाध्यवसाया इवोपद्रवमुपजनयन्ति। अनुदिवसमापूर्यमाणाः पापेने-

---

तेजस्विनः प्रतापवतः पुरुषान्निःस्पृहान्नेक्षन्ते नावलोकयन्ति। पक्षे तेजस्विनः सूर्यादिकान्। **कालदष्टेति**। निषिद्धकाले संध्यादिरूपे दष्टा भक्षिताः। सर्पेणेति शेषः। एवंविधा इव महामन्त्रैर्जाङ्गलीप्रभृतिभिः षाड्गुण्यादिभिरपि न प्रतिवुध्यन्ते न बोधं प्राप्नुवन्ति। **जातुषेति**। जातुषाभरणानि लाक्षानिष्पन्नभूषणानीव सोष्माणं तेजस्विनं[1] पुरुषं न सहन्ते न मृष्यन्ति। **दुष्टेति**। दुष्टवारणा इव मदोन्मत्तगजा इव महानत्युत्कृष्टो यो मानोऽहंकारस्तल्लक्षणो यः स्तम्भः स्थूणा तेन निश्चलीकृताः स्तब्धतां प्रापिताः सन्त उपदेशं शिक्षां न गृह्णन्ति नाददते। गजपक्षे महन्मानं यस्यैवंविधो यः स्तम्भ आलानस्तम्भस्तेन निश्चलीकृता नद्धाः सन्त उपदेशं हस्तिपकवाक्यं न गृह्णन्ति। अवगणयन्तीत्यर्थः। **तृष्णेति**। तृष्णैव विषं गरलं तेन मूर्च्छिता भ्रान्ताः कनकमयं सुवर्णमयमिव सर्वं पश्यन्ति विलोकयन्ति। **इषव इति**। पानं मधुपानं निशानघर्षणं च ताभ्यां वर्धितं तैक्ष्ण्यं मदक्रौर्यं प्रहारशक्तिश्च येषामेवंविधा इषव इव बाणा इव परोऽन्यो मन्त्री च ताभ्यां प्रेरिता नोदिता विनाशयन्ति विनाशं जनयन्ति। दण्डो यष्टिर्भागधेयैश्च तयोर्विक्षेपाः प्रहारा दुर्दिनानि च तैर्दूरस्थितान्यपि दविष्ठदेशवर्तीन्यपि फलानीव सस्यानीव महाकुलानि महाभिजनानि शातयन्ति पीडयन्ति पातयन्त्यपि च। **अकालेति**। मनोहराश्चित्तहारिण्य आकृतय आकारा येषामेवंविधा अपि राजानो लोकविनाशहेतवो भवन्ति। सदाकृतिसाम्यादुपमानान्तरमाह—**अकालेति**। अकालेऽऋतौ कुसुमप्रसवा इव। तदुक्तम्—'द्रुमौषधिविशेषाणामकाले कुसुमोद्गमः। फलप्रसवयोर्वन्ध्यं महोत्पातं विदुर्बुधाः'। **श्मशानाग्नय इति**। श्मशानं प्रेतवनं तस्याग्नय इवातिरौद्रा अन्येषां भयोत्पादिका भूतिः संपद्येषां ते तथा। पक्षेऽतिक्रूरा भूतिर्भस्म येषु। **तैमिरिकेति**। तिमिरं नेत्ररोगः स संजातो येषां ते तैमिरिकास्त इवादूरदर्शिनः। भाविनं दोषं न पश्यन्तीत्यर्थः। दूरं परलोकं न पश्यन्तीत्यर्थो वा। पक्षेऽदूरदर्शिनः समीपस्थितवस्तुविलोकिनः। **उपसृष्टेति**। उपसृष्टा[3] बहिःकृता इव क्षुद्रैर्विटैरधिष्ठितमाश्रितं भवनं गृहं येषां ते तथा। **श्रूयमाणा इति**। श्रूयमाणा आकर्ण्यमाना उद्वेजयन्त्युद्वेगं जनयन्ति। क इव। प्रेतपटहा इव यथा मृतकवाद्यानि निर्वेदमन्येषां समुत्पादयन्तीत्यर्थः। कस्मिंश्चिद्देशे मृतकानां पुरस्ताद्वाद्यानि वाद्यन्त इति देशाचारः। **चिन्त्येति**। चिन्त्यमाना अपि चेतसि स्मर्यमाणा अपि महापातकं स्त्रीहत्यादि तदध्यवसाया इव तदभिप्राया इवोपद्रवं वञ्चकादिदुः[4]खमुपजनयन्ति निष्पादयन्ति। **अन्विति**। अनुदिवसं प्रतिदिवसं पापेनैनसापूर्यमाणा

---

टिप्प०—1 भूषणपक्षे अग्निम्। राजपक्षे-ईर्ष्यावशादसहनम्। जातुषपक्षे-विगलनवशादित्यर्थः। 2 सामदानभेददण्डा इति चतुर्थोपाय इति व्याख्योचिता। 3 रति-संलग्ना वाराङ्गना इव क्षुद्रैः नीचैर्लोकैः, पक्षे विटैरधिष्ठितानि भवनानि येषां ते। 'उपसृष्टं तु मैथुनम्' इति त्रिकाण्डशेषः। 4 चित्तस्याऽशान्तिम्।

---

पाठा०—१ जातुषा इव. २ महालान; महानाल. ३ कृता अपि न. ४ अतितृष्णाविषवेग; तृष्णावेश. ५ असयः; अग्नयः; असवः. ६ पारुष्याः.

वाध्मातमूर्तयो भवन्ति, तदवस्थाश्च व्यसनशतसख्यतामुपगता वल्मीकतृणाग्रावस्थिता[1] जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति।

अपरे तु स्वार्थनिष्पादनपरैर्धनपिशितग्रासगृध्रैरास्थाननलिनीधूर्तबकैर्[2]द्यूतं विनोद इति, परदाराभिगमनं वैदग्ध्यमिति, मृगयां[3] श्रम इति, पानं विलास इति, प्रमत्ततां[4] शौर्यमिति, स्वदारपरित्यागम[5]व्यसनितेति, गुरुवचनावधीरणमपरप्रणेयत्वमिति, अजितभृत्यतां[6] सुखोपसेव्यत्वमिति, नृत्य[7]गीतवाद्यवेश्याभिसक्तिं[8] रसिकतेति[9], महापराधावकर्णनं[10] महानुभावतेति,

---

म्रियमाणा इवाध्मातमूर्तयः स्थूलदेहा भवन्ति। **तदिति**। सैवावस्था येषां ते तदवस्थाः। चः समुच्चयार्थः। एवंविधा व्यसनानां द्यूतादीनां शतं तस्य सख्यतां मित्रतामुपगताः प्राप्ताः। 'शरव्यताम्' इति पाठे तु शरव्यं लक्ष्यं तस्य भावस्तत्त्वमुपगता इत्यर्थः। **वल्मीकेति**। वल्मीकमुपदेहिकागृहं तस्य तृणानि नडादीनि तेषामग्राणि प्रान्तानि तेष्ववस्थिता ये जलबिन्दवस्त इव पतितमपि मनुष्यजन्मनः स्रस्तमप्यात्मानं नावगच्छन्ति न जानन्ति।

**अपरे त्विति**। अपरेऽन्ये। तु पुनरर्थे। राजानः। श्रीमतां दोषान्तरमप्याह—**अपरे त्विति**। इति दोषानपि गुणपक्षमध्यारोपयद्भिर्धूर्तैर्विप्रतारकैः स्तुतिभिः प्रतार्यमाणाः सर्वजनस्योपहास्यतामुपहासयोग्यतामुपयान्ति प्राप्नुवन्तीत्यन्वयः। कीदृशैर्धूर्तैः। **स्वेति**। स्वस्यात्मनो योऽर्थः प्रयोजनं तस्य निष्पादनं करणं तत्र परैस्तत्परैः। **धनमिति**। धनं द्रव्यं तदेव पिशितं मांसं तस्य ग्रासो ग्रहणं तस्मिन् गृध्रैर्दूरदृग्भिर्यथा तथा द्रव्यार्जनपरैरित्यर्थः। **आस्थानेति**। आस्थानं नृपोपवेशनस्थलं तदेव नलिनी कमलिनी तस्यां बकैर्धूर्तैः। यथा बका नलिनीमाश्रित्य तदाश्रयबलेन स्वात्मानमाच्छाद्य येन केन प्रकारेण परान्वञ्चयित्वाकस्मादेव परान्भक्षयन्ति तद्वदास्थानबलेन परान्वञ्चयित्वा स्वानि भक्षयन्ति। इतिशब्दार्थमाह—**द्यूतमिति**। द्यूतं दुरोदरं विनोदः क्रीडामात्रम्। न चैतद्विहिते किंचित्पातकमस्तीति भावः। **परेति**। परदाराः परस्त्रियस्तेषामभिगमनं संभोगो वैदग्ध्यमिति चातुर्यमित्यर्थः। **मृगयेति**। मृगयां मृगव्यां श्रम इति। 'अभ्यासः खुरलीति श्रमो योगाभ्यासः' इति कोशः। न तु परप्राणव्यापादनजनितं किमपि पातकमस्तीति भावः। **पानमिति**। पानं मद्यादीनां। विलास इति। विलसितमित्यर्थः। **प्रमत्ततामिति**। प्रमत्ततां क्षीबतां शौर्यं सुभटकृत्यमिति। **स्वेति**। स्वस्य दाराः स्त्री तस्याः परित्यागं त्यजनमव्यसनितानासक्तिता इति। ननु धर्माधिक्यम्। **गुरुरिति**। गुरुर्हिताहितप्राप्तिपरिहारोपदेष्टा तस्य वचनं वचस्तस्यावधीरणमुल्लङ्घनमपरप्रणेयत्वमन्यवश्यत्वम्। 'वश्यः प्रणेयः' इति कोशः। गुरुवचनावधीरणेन क्रूरोऽयं प्रभुरिति भियापरे सामन्तादयो वश्यत्वं प्रतिपद्यन्त इति तेषामाशयः। **अजितेति**। शिक्षार्थं ताडिता भृत्या यस्य राज्ञः सम्यक्सेवां कुर्वन्ति स जितभृत्योऽन्यस्त्वजितभृत्यस्तस्य भावस्तत्ता ताम्। इदं च नृपतेर्दूषणम्। वैगुण्ये भृत्यानामवश्यं शिक्षा प्रदातव्येति राजचिह्नम्। तदुक्तम्—'शठदमनमशठपालनमाश्रितभरणं च राजचिह्नानि' इति। तस्मिन्सुखोपसेव्यत्वं सुखेनोपसेवितुं योग्यः सुखोपसेव्यस्तस्य भावस्तत्त्वम्। सुखोपसेव्योऽयं नृप इति लोके ख्यातिमात्रं गुण आरोप्यते। **नृत्येति**। नृत्यं नाट्यम्, गीतं गानम्, वाद्यमातोद्यम्, वेश्या वारवध्वः, तास्वभिसक्तिमत्यासक्तचित्ततां रसिकता रसाभिज्ञता इति। **महेति**। महापराधानां कौरवयुद्धादीनामवकर्णनं[4] श्रवणं महानु-

---

टिप्प०—1 उपीकाकृतमृत्तिकास्तूपः (कीटविशेषेण निःसारितमृत्तिकाराशिः) तत्रोत्पन्नतृणाग्रे स्थिता जलबिन्दव इव। पातित्येन युक्तमात्मानं मोहान्न जानन्ति। वल्मीके पतिता जलबिन्दवस्तु शुष्कत्वान्न प्रतीयन्त इत्याशयः। 2 धर्माद्भ्रंश इति वक्तव्यम्। 3 न परप्रणेय(वश्य)त्वम्, स्वाधीनतासूचनात्स्वातन्त्र्यमित्यर्थः। 4 'महापराधानाकर्णनम्' इत्येव पाठः। महतोऽप्यपराधस्य 'अकिञ्चित्करमिदम्' इति उपेक्षावशादनाकर्णनम्। वस्तुतस्त्वयमविचारो दोष एव।

---

पाठा०—१ तृणाग्रस्थिताः. २ नलिनीबकैः. ३ मृगया. ४ प्रमत्तता. ५ स्वदारपरित्यागः; स्वदारपरित्यागेषु. ६ भृत्यता. ७ नृत्त. ८ अभिसक्तिः. ९ रसिकतामिति. १० अनाकर्णनम्; अनवकर्णनम्.

पराभवसहत्वं क्षमेति, स्वच्छन्दतां प्रभुत्वमिति, देवावमाननं महासत्त्वतेति, बन्दिजनख्यातिं यश इति, तरलतामुत्साह इति, अविशेषज्ञतामपक्षपातित्वमिति दोषानपि गुणपक्षमध्यारोपयद्भिरन्तः स्वयमपि विहसद्भिः प्रतारणकुशलैर्धूर्तैरमानुषलोकोचिताभिः स्तुतिभिः प्रतार्यमाणा वित्तमदमत्तचित्ता निश्चेतनतया तथैवेत्यात्मन्यारोपितालीकाभिमाना मर्त्यधर्माणोऽपि दिव्यांशावतीर्णमिव सदैवतमिवातिमानुषमात्मानमुत्प्रेक्षमाणाः प्रारब्धदिव्योचितचेष्टानुभावाः सर्वजनस्योपहास्यतामुपयान्ति। आत्मविडम्बनां चानुजीविना जनेन क्रियमाणामभिनन्दन्ति। मनसा देवताध्यारोपणविप्रतारणादसद्भूतसंभावनोपहताश्चान्तःप्रविष्टापरभुजद्वयमिवात्मबाहुयुगलं संभावयन्ति। त्वगन्तरिततृतीयलोचनं स्वललाटमाशङ्कन्ते।

---

भावता महाधर्मिष्ठता। अदातृत्ववशात् मागधादिभिर्विहितस्य गालिप्रदानादिपराभवस्य तिरस्कृतेः सहत्वं क्षमेति क्षान्तिः। स्वच्छन्दतां निरवग्रहतां प्रभुत्वमैश्वर्यम्। **देवेति**। देवा अर्हदादयस्तेषामवमाननमवगणनं महासत्त्वता महाधैर्यता। **बन्दीति**। बन्दिजना मागधादयस्तेषां ख्यातिं प्रसिद्धिम्। **यशःश्लोक(?)इति**। एतेन पण्डितजनप्रदानं न श्लोकजनकमिति भावः। तरलतां चपलतामुत्साहः प्रगल्भता इति। **अवीति**। अविशेषज्ञतां विशेषाविशेषानभिज्ञतामपक्षपातित्वं माध्यस्थ्यमिति। अत्र 'द्यूतम्' इत्यारभ्य पूर्वपूर्वस्योद्देश्यतयोत्तरोत्तरस्य बाध्यमानतया पूर्वस्मिन्दोष उत्तरस्य गुणस्यारोपः प्रशंसनमेवाध्यारोपः। अत्राध्यारोपकलक्षणे रूपकव्यासङ्गजनकत्वं सातिशयसुखजनकत्वादिकं साम्यं स्वयमूहनीयम्। अथ धूर्तान्विशेषयन्नाह-**अन्त इति**। अन्तर्मध्ये स्वयमप्यात्मनापि विहसद्भिर्हास्यं कुर्वद्भिः। अस्मद्विप्रतारणानभिज्ञ इति हास्यनियामकम्। प्रतारणा वञ्चना तत्र कुशलैरभिज्ञैः। किं क्रियमाणा धनिनः। अमानुषलोको देवलोकस्तस्योचिताभिर्योग्याभिः। स्तुतेर्विशेषणम्। **वित्तेति**। वित्तस्य द्रव्यस्य मदस्तेन मत्तं चित्तं येषां ते तथा। अत एव निश्चेतनतया निर्गता चेतना ज्ञानं यस्मात्तस्य भावस्तत्ता तया। **तथैवेति**। यथा यथा प्रतार्यमाणास्तथैवेत्यर्थः। आत्मन्यारोपितं स्थापितमलीकं मिथ्याभिमानं यैस्ते तथा मर्त्यधर्माणोऽपि मर्त्यस्य मनुष्यस्य धर्मा गमनादयो येषामेवंविधा अपि। **दिव्येति**। दिव्या देवसंबन्धिनो येंऽशा भागास्तैरवतीर्णमुत्पन्नमिव सदैवतमिव देवताधिष्ठितमिवातिमानुषं कर्मातिक्रम्य वर्तमानमात्मानमुत्प्रेक्षमाणा मन्यमानाः। **प्रारब्धेति**। प्रारब्धा या दिव्योचिता देवजनयोग्याश्चेष्टाः क्रियास्ताभिरनुभावो माहात्म्यं येषां ते तथा। अन्वयस्तु प्रागेवोक्तः। अनुजीविना जनेन सेवकजनेन क्रियमाणां विधीयमानामात्मविडम्बनामसद्गुणारोपलक्षणामभिनन्दन्ति प्रशंसन्ति। चकारः पूर्वोक्तसमुच्चयार्थः। विभूतिमतां राज्ञां पुनर्दोषान्तरमाह—**मनसेति**। देवताया हरिहरादेरध्यारोपणं आरोपणं तेन विप्रतारणं वञ्चनं तस्मादिति। **असदिति**। असद्भूतासद्रूपा या संभावना देवरूपत्वेन निश्चयस्तेनोपहता विनष्टबुद्धयः। देवत्वाध्यारोपत्वनिमित्तमूलानि प्रदर्शयन्नाह—**अन्तरिति**। अन्तर्मध्ये प्रविष्टमपरमन्यद्भुजद्वयं यस्मिन्नेवंविधमिवात्मनो बाहुयुगलं स्वकीयं भुजयुगं संभावयन्ति संभावनाविषयीकुर्वन्ति। एतेन स्वस्मिंश्चतुर्भुजत्वं ख्यापितम्। त्रिनेत्रत्वमप्याह—**त्वगिति**। त्वक्कृत्तिस्तयान्तरितं पिहितं तृतीयं लोचनं यस्मिन्नेतादृशं

---

**टिप्प०**—1 आत्मनि अविद्यमाना अपि ये गुणास्तदारोपणरूपां विडम्बनाम्। 2 धूर्तैः कृतं देवत्वाऽध्यारोपणमेव प्रतारणं तस्मात् असद्भूता मिथ्याभूता या संभावना आत्मनो देवत्वेन निश्चयस्तेन उपहता नाशितबुद्धय इति व्याख्या। वस्तुतस्तु 'अध्यारोपप्रतारणाऽसंभूत' इत्येव पाठः। देवत्वारोप एव प्रतारणा तयाऽसंभूता या संभावना आत्मनि देवत्वभानं तेन उपहता इति तत्र व्याख्या।

---

**पाठा०**—१ परभवसत्वम्; परिभवसत्वम्. २ स्वच्छन्दता. ३ आख्यातिम्; ख्यातिः. ४ तदलतां. ५ अविशेषज्ञता. ६ अमानुषोचिताभिः. ७ मत्तनिश्चयेन. ८ तथेति; यथेति. ९ आत्मारोपित. १० अतिमानुष्यकम्. ११ प्रतारणादसद्भूत; प्रतारणासंभूत; प्रतारणासद्भूत.

दर्शनप्रदानमप्यनुग्रहं[1] गणयन्ति । दृष्टिपातमप्युपकारपक्षे स्थापयन्ति । संभाषणमपि संविभागमध्ये कुर्वन्ति । आज्ञामपि वरप्रदानं मन्यन्ते । स्पर्शमपि[2] पावनमाकलयन्ति । मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः, न पूजयन्ति द्विजातीन्[3], न मानयन्ति मान्यान्, नार्चयन्त्यर्चनीयान्, नाभिवादयन्त्यभिवादनार्हान्, नाभ्युत्तिष्ठन्ति गुरून्। अनर्थकायासान्तरितोपभोगसुखमित्युपहसन्ति[4] विद्वज्जनम्[5], जरावैक्लव्यप्रलपितमिति पश्यन्ति[6] वृद्धोपदेशम्[7], आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय, कुप्यन्ति हितवादिने । सर्वथा तमभिनन्दन्ति, तमालपन्ति, तं पार्श्वे कुर्वन्ति, तं संवर्धयन्ति, तेन सह सुखमवतिष्ठन्ते, तस्मै ददति, तं मित्रतामुपजनयन्ति[8], तस्य वचनं शृण्वन्ति, तत्र वर्षन्ति, तं बहु मन्यन्ते, तमाप्ततामापादयन्ति[9], योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः[10]

---

स्वललाटं निजालिकमाशङ्कन्त आरेकाविषयीकुर्वते । **दर्शेति** । लोकानां दर्शनप्रदानं स्वात्मप्रकटनमनुग्रहं प्रसादं गणयन्ति मन्यन्ते । **दृष्टीति** । दृष्ट्याश्चक्षुषः पातमवलोकनं तदप्युपकारपक्ष उपकृतिपक्षे स्थापयन्ति निक्षिपन्ति । **संभाषेति** । संभाषणं जल्पनं तदपि संविभागः पारितोषिकं दानं तन्मध्ये कुर्वन्ति । पारितोषिकतुल्यं गणयन्तीत्यर्थः । **आज्ञामिति** । आज्ञामपि निदेशमपि वरप्रदानं समीहितप्रदानं मन्यन्ते जानन्ति । स्पर्शः संश्लेषस्तदपि पावनं पूतं पवित्रमाकलयन्ति विचारयन्ति । **मिथ्येति** । मिथ्या वृथा यो माहात्म्यगर्वो माहात्म्याभिमानस्तेन निर्भरा भृता देवताभ्योऽर्हद्भ्यो न प्रणमन्ति नमस्कारं न कुर्वन्ति । **द्विजेति ।** द्विजातींस्त्रयीमुखान्न पूजयन्ति वस्त्रपात्रादिप्रदानेन न सत्कुर्वन्तीत्यर्थः । **मान्यानिति** । मान्यान्माननीयान्न मानयन्ति न संमानं ददते । **नेति** । अर्चनीयानर्चायोग्यान्नार्चयन्ति नार्चां कुर्वन्ति । **नेति** । अभिवादनार्हानुपसंग्रहयोग्यान्नाभिवादयन्ति न पादग्रहणं कुर्वन्ति । **नेति** । गुरून्हिताहितप्राप्तिपरिहारोपदेष्टॄन् न अभ्युत्तिष्ठन्ति नाभ्युत्थानं कुर्वन्ति । **अनर्थकेति** । अनर्थको निष्फलो य आयासः प्रयासः श्रौतस्मार्तकर्मणि क्लेशस्तेनान्तरितं व्यवहितमुपभोगोऽङ्गनादिकस्तज्जनितं सुखं सातं यस्येति कृत्वा विद्वज्जनं विबुधजनमुपहसन्त्युपहासं कुर्वन्ति । **जरेति** । जरा विस्रसा तस्या वैक्लव्यं विकलता तेन प्रलपितं जल्पितमिति कृत्वा वृद्धानां स्थविराणामुपदेशं शिक्षां पश्यन्ति । जानन्तीत्यर्थः । **आत्मेति** । आत्मनः स्वस्य या प्रज्ञा बुद्धिस्तस्याः परिभवः पराभव इति कृत्वा सचिवोपदेशाय प्रधानशिक्षाया असूयन्त्यसूयां कुर्वन्ति । **हितेति** । हितवादिने यथास्थितवादिने कुप्यन्ति कोपं कुर्वन्ति । सचिवोपदेशाय हितवादिन इति चतुर्थीद्वयमपि 'क्रुधद्रुह' इत्यादिना संप्रदानसंज्ञायां सत्यां ज्ञेयम् । एतादृशं पुरुषं सर्वथा स्तुवन्तीत्याशयेनाह— **तमिति** । तं पुरुषं सर्वथा सर्वप्रकारेणाभिनन्दन्ति प्रशंसन्ति । तमालपन्त्यालापं कुर्वन्ति । तं पुरुषं पार्श्वे समीपे कुर्वन्ति रक्षन्ति । तं संवर्धयन्ति वृद्धिं प्रापयन्ति । **तेनेति** । तेन पुरुषेण सह सुखं यथा स्यात्तथावतिष्ठन्तेऽवस्थानं कुर्वन्ति । **तस्मायिति** । तस्मै पुरुषाय ददति प्रयच्छन्ति । **तमिति** । तं पुरुषं[2] प्रति मित्रतां सुहृद्भावतामुपजनयन्ति निष्पादयन्ति । **तस्येति** । तस्य पुरुषस्य वचनं वाक्यं शृण्वन्ति । **तत्रेति** । तस्मिन्पुंसि वर्षन्ति पुन पुनः प्रदानं कुर्वन्ति । तं पुरुषं बहु मन्यन्ते । अत्युत्कृष्टतया जानन्तीत्यर्थः । **तमिति** । तं प्रत्याप्ततां शिष्टतामापादयन्ति प्रतिपादयन्ति । तच्छब्दस्य यच्छब्दसापेक्षत्वादाह—**य इति** । यः पुमानहर्निशमहोरात्रं अनवरतं निरन्तरं विगतमन्यकर्तव्यं यस्यैवंभूत उपरचिताञ्जलिः संयोजितकरपुटोऽधिदैवतमिवेष्टदेवता-

---

**टिप्प०—1 इति तु टीकाकारस्य कृपा । हरिहरादिदेवेभ्य इत्यर्थः । 2 वस्तुतस्तु 'तं मित्रतामुपनयन्ति' तं जनं मित्रत्वं प्रापयन्तीति पाठः, तदर्थश्च ।**

---

**पाठा०—१ प्रदाने. २ संस्पर्शनम्. ३ द्विजान्. ४ विषयोपभोग. ५ विद्वज्जनशीलम्. ६ न पश्यन्ति. ७ वृद्धजनोपदेशम्. ८ तस्य मन्त्रिताम्. ९ उपनयन्ति. १० तमात्मनापादयन्ति तस्माद्बिभ्यति.**

स्तौति, यो वा माहात्म्यमुद्भावयति। किं वा तेषां [1]सांप्रतं येषामतिनृशंस[2]प्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणम्, अभिचारक्रियाः क्रूरैकप्रकृतयः पुरोधसो गुरवः, पराभिसंधानपरा मन्त्रिण उपदेष्टारः, नरपतिसहस्रभुक्तोज्झितायां लक्ष्म्यामासक्तिः, मारणात्मकेषु [3]शस्त्रेष्वभियोगः, सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः।

तदे[4]वंप्रायाति[5]कुटिलकष्टचेष्टासहस्रदारुणे राज्यतन्त्रेऽस्मिन्महामो[6]हकारिणि च यौवने कुमार! [7]तथा प्रयतेथा [8]यथा नोपहस्यसे [9]जनैः, न निन्द्यसे साधुभिः, न धिक्क्रियसे गुरुभिः, नो[10]पालभ्यसे सुहृद्भिः, न शोच्यसे विद्वद्भिः, यथा च न प्रकाश्यसे विटैः, न [11]प्रतार्यसेऽकुशलैः, नास्वाद्यसे भुजङ्गैः, नावलुप्यसे सेवकवृकैः, न वञ्चयसे धूर्तैः, न प्रलोभ्यसे [12]वनिताभिः, न विडम्ब्यसे लक्ष्म्या, न नर्त्यसे मदेन, नोन्मत्तीक्रियसे मदनेन, नाक्षिप्यसे

---

मिव स्तौति नवीति। **यो वेति**। यो माहात्म्यं तद्गुणवर्णनालक्षणमुद्भावयत्युद्भावनां करोति। विभूतिमतां पुनर्दोषान्तरमाह—**किं वेति**। तेषां विभूतिमतां वाथवा किं सांप्रतं युक्तं येषां विभूतिमतामतिनृशंसप्रायोऽतिनिस्त्रिंशबहुल उपदेशः शिक्षा निर्गता घृणा दया यस्मादेतादृशं कौटिल्यशास्त्रं याम[1]लादि प्रमाणमिति। अभिचार[2]क्रिया कृत्याप्रतिकृत्यादिरूपक्रिया। **क्रूरेति**। क्रूरा निस्त्रिंशैकाद्वितीया प्रकृतिः स्वभावो येषामेवंविधाः पुरोधसः पुरोहिता गुरवो धर्मोपदेशकाः। परेषामितरेषामभिसंधानं निरो[3]धस्तत्र परास्तत्परा मन्त्रिणः सचिवा उपदेष्टारः शिक्षादायकाः। **नरेति**। नरपतीनां यत्सहस्रं तेन भुक्ता चासावुज्झिता त्यक्ता चेति कर्मधारयः। एवंविधायां लक्ष्म्यामासक्तिः प्रेमाधिक्यम्। **मारणेति**। मारणं व्यापादनं तदेवात्मा स्वरूपं येषां तथाविधेषु शस्त्रेष्वभियोग उद्यमः। **सहेति**। सहजं स्वारसिकं यत्प्रेम तेनार्द्रं स्विन्नं हृदयं येषामत एवानुरक्ता एतादृशा भ्रातरः सहोदरा उच्छेद्या मूलत उन्मूलनीयाः।

प्रकृतमुपसंहरन्नाह—**तदेवमिति**। तदिति हेत्वर्थे। एवंप्राये पूर्वोक्तस्वरूपबहुले। **अतीति**। अतिकुटिला अतिवक्राः कष्टदायिन्यश्चेष्टाः कायव्यापारास्तासां सहस्रं तेन दारुणे भीषणे। **राज्यतन्त्र इति**। राज्यस्य तन्त्रं इतिकर्तव्यता। 'इतिकर्तव्यता तन्त्रे' इत्यनेकार्थः। अस्मिन्ननुभूयमाने यौवने तारुण्ये च महामोहकारिणि महामौढ्यजनके। कुमारेति संबोधनम्। **तथेति**। तेनैव प्रकारेण प्रयतेथाः प्रयत्नं कुर्याः। यथा येन प्रकारेण जनैर्लोकैर्भवांस्त्वं नोपहस्यसे न उपहासविषयीक्रियसे। साधुभिः सज्जनैर्न निन्द्यसे न निन्दाविषयीक्रियसे। गुरुभिर्धर्माचार्यैर्न धिक्क्रियसे न धिग्जीवितमित्यादिवाक्यगोचरीक्रियसे। सुहृद्भिर्मित्रैर्नोपालभ्यसे नोपलम्भविषयीक्रियसे। विद्वद्भिः पण्डितैर्न शोच्यसे न शोकविषयीक्रियसे। यथा विटैरसदाचरणकारिभिर्न प्रका[4]श्यसे न प्रकटीक्रियसे। अकुशलैर[5]नाचारादिभिर्न प्रतार्यसे न प्रतारणाविषयीक्रियसे। भुजङ्गैर्गणिकापतिभिर्नास्वाद्यसे गणिकार्थं द्रव्यवितरणद्वारा नोपभोज्यसे। सेवकाः सपर्याकारिण एव वृका ईहामृगास्तैर्नावलुप्यसे नानिष्टे प्रसज्यसे। नाकुलीक्रियस इत्यर्थः। धूर्तैः शठैर्न वञ्च्यसे न प्रतार्यसे। वनिताभिः स्त्रीभिर्न प्रलोभ्यसे न प्रलोभनाविषयः क्रियसे। लक्ष्म्या श्रिया न विडम्ब्यसे न विडम्बनायुक्तः क्रियसे। न परित्यज्यस इत्यर्थः। मदेनाधिपत्यजनिताहंकारेण न नर्त्यसे न नृत्यं कार्यसे। मदनेन मनोभवेन न उन्मत्तीक्रियसे न चित्तविप्लवतामापाद्यसे। विषयैरिन्द्रियार्थैर्नाक्षिप्यसे न प्रेर्यसे। रागेण स्नेहादिना न विकृष्यसे नाकृष्यसे। सुखेन सातेन नापह्रियसे न

---

**टिप्प०—1 चाणक्यादिप्रणीतं नीतिशास्त्रम्। 2 श्येनयागादिरूपपरवधजनकक्रूरकृत्यम्। 3 प्रतारणम्। 4 विटैः स्वसमानतया जनसमाजे न प्रकटीक्रियसे इति तात्पर्यम्। 5 'न प्रहस्यसे कुशलैः' इत्येव पाठः। अकुशलानां प्रतारणसामर्थ्यमेव कथमिति नास्मिन्पाठे स्वारस्यम्।**

---

**पाठा०—१** असांप्रतम्. २ प्रायोपदेश. ३ शास्त्रेषु. ४ एवंप्राये. ५ कुटिल. कुचेष्टा; कुटिलचेष्टा. ६ मोहान्धकारिणि. ७ तथातथा. ८ यथायथा. ९ जनेन. १० उपलभ्यसे. ११ प्रहस्यसे. १२ सर्ववनिताभिः.

विषयैः, [1]नावकृष्यसे [2]रागेण, [3]नापह्रियसे सुखेन । कामं भवान्प्रकृत्यैव धीरः, पित्रा [4]च समारोपितसंस्कारः, तरलहृदयमप्रतिबुद्धं च मदयन्ति धनानि, तथापि भवद्गुणसंतोषो [5]मामेवं मुखरीकृतवान् । इदमेव च पुनःपुनरभिधीयसे । विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति । सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान्नव[6]यौवराज्याभिषेकमङ्ग[7]लम् । कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम् । अवनमय द्विषतां शिरांसि । उन्नमय [8]स्वबन्धुवर्गम् । अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन्विजितामपि [9]तव पित्रा सप्तद्वीप[10]भूषणां पुनर्विजयस्व वसुंधराम् । अयं च ते कालः प्रतापमारोपयितुम् । आरूढप्रतापो [11]राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति' इत्येतावदभिधायोपशशाम । उपशान्त[12]वचसि शुकनासे चन्द्रापी-

---

परित्यज्यसे । काममत्यर्थं सकलशास्त्रवेत्तृभिः शिक्षिते त्वय्युपदेशो व्यर्थ इत्यर्थः । पुनराह—**प्रकृत्येति** । प्रकृत्या स्वभावेन धीरो धैर्यवान् । यद्यपीति पूरणीयम् । कीदृक् । **पित्रा चेति** । पित्रा चकारान्मयापि समारोपिता विहिताः संस्कारा जातकर्मादयः । अथ च तत्तद्गुणविशेषाश्च यस्यैवंभूतः । अथवान्यदप्याह—**तरलेति** । तरलं चञ्चलं हृदयं चेतो यस्य स तमप्रतिबुद्धं बोधरहितं च पुरुषं धनानि द्रव्याणि मदयन्ति मदं जनयन्ति । अहं तु न तथानुनयामीति । येनोपदेशः सार्थकः स्यादिति तदभिप्रायमाशङ्क्योत्तरमाह—**तथापीति** । अनुपदेश्यत्वेऽपि भवद्गुणैः शौर्यादिभिर्यः संतोषो मनसस्तुष्टिर्मां शुकनासमेवं पूर्वोक्तप्रकारेण मुखरीकृतवांस्तादृग्वाग्व्यापारे प्रवर्तितवान् । अहार्यविपरीतशङ्कानिवृत्तयेऽयमुपदेश इत्यत आह—**इदमेवेति** । इदं पूर्वोक्तं पुनःपुनर्वारंवारमभिधीयसे कथ्यसे । अहार्यशङ्कामुद्घाटयति—**विद्वांसमिति** । विद्वांसमपि पण्डितमपि सचेतनमपि ज्ञानवन्तमपि महासत्त्वमपि महासाहसमप्यभिजातमपि कुलीनमपि धीरमपि धैर्यवन्तमपि प्रयत्नवन्तमप्युद्योगयुक्तमपि पुरुषं लक्ष्मीः श्रीः खलीकरोति सन्मार्गात्स्खलनां प्रापयति । अत्र सर्वत्रापिशब्दः कैमुतिकन्यायपरः । अयमप्येवं करोति । अन्यस्य का वार्तेत्यर्थः । तत्र हेतुमाह—यत इयं दुर्विनीता । अपगतविनयेत्यर्थः । भवांस्त्वं पित्रा जनकेन कल्याणैर्मङ्गलैः क्रियमाणं विधीयमानं नवयौवनस्य यो राज्याभिषेकस्तल्लक्षणं यन्मङ्गलं श्रेयोऽनुभवत्वनुभवविषयीकरोतु । पूर्वपुरुषैरूढां कुलक्रमागतां परंपरायातां धुरं राज्यभारमुद्वहोद्वहनं कुरु । **अवेति** । द्विषतां शत्रूणां शिरांस्युत्तमाङ्गान्यवनमय नम्राणि कुरु । स्वबन्धुवर्गं स्वजनसमुदायमुन्नमयोर्ध्वीकुरु । **अभीति** । अभिषेकानन्तरं यौवराज्याभिषेकादनु । **प्रारब्धेति** । प्रारब्धः प्रस्तुतो दिग्विजयो येन सः परिभ्रमन्प्रतिदिशं दिशं दिशंप्रति गच्छंस्तव पित्रा त्वज्जनकेन विजितामपि स्वायत्तीकृतामपि सप्तद्वीपभूषणां सप्तसंख्याका द्वीपा जम्बूप्रभृतयो भूषणं यस्या एवंविधां वसुंधरां पुनर्द्वितीयवारं विजयस्व स्वायत्तीकुरु । **यमिति** । प्रतापं कोशदण्डजं तेज आरोपयितुं लब्धास्पदं कर्तुं ते तवायं कालः समयः समागत इति शेषः । तस्य फलं प्रदर्शयन्नाह—**आरूढेति** । आरूढो लब्धास्पदः प्रतापो यस्यैवंभूतो राजा त्रैलोक्यदर्शीव योगीव सिद्धो निष्पन्न आदेश आज्ञा यस्य स तथा । त्रिकालदर्श्यपि सिद्धादेशो भवति । यथा वदति तथैव भवतीत्यर्थः । **इतीति** । इति परिसमाप्तौ । एतावन्मात्रमभिधायोक्त्वोपशशाम विरतवाग्व्यापारो बभूव । **उपेति** । उपशान्तवचस्युपरतवाग्व्यापारे तस्मिञ्छुकनासे सति चन्द्रापीडस्ताभिः पूर्वोक्ताभिरुपदेश-

---

**टिप्प०—1 समारोपितः शिक्षार्पणैः संस्थापितः संस्कारः सर्वविषयज्ञानं यस्य सः । इत्यर्थ उचितः ।**

---

पाठा०—१ विकृष्यसे; रज्यसे; आकृष्यसे. २ रागैः. ३ उपह्रियसे. ४ च महता प्रयत्नेन. ५ एव. ६ नवयौवन; यौवन. ७ अनेकमङ्गलम्. ८ बन्धुवर्गम्. ९ भवत्. १० द्वीपसमुद्रभूषणाम्. ११ हि राजा. १२ वचने.

डस्ता[६]भिरुपदेशवाग्भिः प्रक्षालित इव, उन्मीलित इव, स्वच्छीकृत इव, निर्मृष्ट इव, अभिषिक्त इव, अभिलिप्त इव, अलंकृत इव, पवित्रीकृत इव, उद्भासित इव, प्रीतहृदयो मुहूर्तं स्थित्वा स्वभवनमाजगाम।

ततः कतिपयदिवसापगमे च राजा स्वयमुत्क्षिप्तमङ्गलकलशः सह शुकनासेन पुण्येऽहनि पुरोधसा संपादिताशेषराज्याभिषेकमङ्गलमनेकनरपतिसहस्रपरिवृतः सर्वेभ्यस्तीर्थेभ्यः सर्वाभ्यो नदीभ्यः सर्वेभ्यश्च सागरेभ्यः समाहृतेन सर्वौषधिभिः सर्वफलैः सर्वमृद्भिः सर्वरत्नैश्च परिगृहीतेनानन्दबाष्पजलमिश्रेण मन्त्रपूतेन वारिणा सुतमभिषिषेच। अभिषेकसलिलार्द्रदेहं च तं लतेव पाद[१]पान्तरं निजपादपमुज्झत्यपि तारापीडं तत्क्षणमेव संचक्राम राज्यलक्ष्मीः। अनन्तरमखिलान्तःपुरपरिवृतया च प्रेमार्द्रहृदयया विलासवत्या स्वयमापादतलादामोदिना चन्द्रातपधवलेन चन्दनेनानुलिप्तमूर्तिः, अभिनवविकसितसितकुसुमकृतशेखरः, गोरो[३]चनाच्छुरितदेहः, दूर्वाप्र-

---

वाग्भिः शिक्षावचनैः प्रक्षालित इव धौत इव, उन्मीलित इव विकसित इव, स्वच्छीकृत इव स्वच्छतां प्रापित इव, निर्मृष्ट इव मसृणीकृत इव, अभिषिक्त इव स्नपित इव, अभिलिप्त इव प्रलिप्त इव, अलंकृत इव भूषित इव, पवित्रीकृत इव पावनीकृत इव, उद्भासित इवोद्दीपित इव। **प्रीतेति**। प्रीतं संतुष्टं हृदयं चेतो यस्यैवंभूतो मुहूर्तं घटिकाद्वयं स्थित्वावस्थानं कृत्वा स्वभवनं निजसद्माजगामाययौ।

**तत इति**। ततस्तदनन्तरं कतिपयदिवसापगमे कियद्वासरातिक्रमे च राजा नृपः सुतं तनयं वारिणा जलेनाभिषिषेच स्नपयांचकार। राजानं विशिनष्टि—**स्वयमिति**। स्वयमात्मनोत्क्षिप्त ऊर्ध्वं नीतो मङ्गलाभिधानः कलशो येन स तथा। शुकनासेन मन्त्रिणा सह पुण्येऽहनि पवित्रे वासरे। सुतं विशेषयन्नाह—**पुरोधसेति**। पुरोधसा पुरोहितेन संपादितं विहितमशेषं समग्रं राज्याभिषेकलक्षणं मङ्गलं यस्य स तम्। राजानं विशिनष्टि—**अनेकेति**। अनेके भिन्नभिन्नदेशोद्भवा ये नरपतयो राजानस्तेषां सहस्रं तेन परिवृतः सहितः। जलं विशिनष्टि—**सर्वेभ्य इत्यादि**। सर्वेभ्यः समग्रेभ्यस्तीर्थेभ्यो मागधादिभ्यः। सर्वाभ्यो नदीभ्यस्तटिनीभ्यः। सर्वेभ्यः सागरेभ्यः। समुद्रान्तर्वर्तिस्थलेभ्य इत्यर्थः। अन्यथा सागरस्यै[१]क्याद्बहुवचनमनर्थकं स्यात्। समाहृतेनैकीकृतेन। पुनस्तदेव विशिनष्टि—**सर्वौषधीति**। सर्वाः समग्रा ओषधयः फलपाकान्तास्ताभिः सर्वफलैः समग्रसस्यैः सर्वमृद्भिः समग्रतीर्थोद्भवमृत्तिकाभिः सर्वरत्नैः समग्रमणिभिः परिगृहीतेन स्वीकृतेन। **आनन्देति**। आनन्दः प्रमोदस्तज्जनितं यद्बाष्पजलं तेन मिश्रेण संपृक्तेनेति जलविशेषणम्। **मन्त्रेति**। मन्त्रो देवाधिष्ठातृकस्तेन पूतेन पवित्रेणेति तस्यैव विशेषणम्। **अभीति**। अभिषेकस्य यौवराज्याभिषेकस्य यत्सलिलं पानीयं तेनार्द्रः क्लिन्नो देहो यस्यैवंभूतं तं चन्द्रापीडं राज्यलक्ष्मीराधिपत्यश्रीः अन्यं पादपं पादपान्तरं लतेव वल्लीव निजपादपं स्वकीयवृक्षमुज्झत्यप्यत्यज्य(ज)न्त्यपि तारापीडं तत्क्षणमेव तत्कालमेव संचक्राम प्रविष्टा बभूव। **अनन्तरमिति**। अनन्तरं यौवराज्याभिषेकानन्तरम्। **अखिलेति**। अखिलं यदन्तःपुरमवरोधस्तेन परिवृतया सहितया प्रेम्णा स्नेहेनार्द्रं हृदयं यस्याः सा तया विलासवत्या स्वकीयजनन्या स्वयमात्मनामोदिनामोदः परिमलः स विद्यते यस्मिन्नेतादृशेन चन्द्रातपश्चन्द्रगोलि[२]का तद्वद्धवलेन शुभ्रेण चन्दनेन मलयजेनापादतलात् पादतलं मर्यादीकृत्यानुलिप्ता कृताङ्गरागा मूर्तिर्यस्य सः। **अभीति**। अभिनवानि प्रत्यग्राणि विकसितानि विनिद्राणि सितानि श्वेतानि यानि कुसुमानि पुष्पाणि तेषां कृतो विहितः शेखरोऽवतंसो यस्य सः। **गोरेति**। गोरोचनेनाच्छुरितस्छु[३]टितो देहो यस्य सः। **दूर्वेति**। दूर्वा शतपर्विका तस्याः प्रवालैः

---

टिप्प०—1 विरुद्धमिदम्। सप्त सागरा इति प्रसिद्धेः। 'सिन्धुसंज्ञया सप्तसंख्या प्रसिद्धैव। 2 चन्द्रकिरणाः, चन्द्रिका। 3 लिप्तः, रञ्जितः।

---

पाठा०—१ तामिरमलाभिरुपदेश. २ स्वस्थीकृतः. ३ सर्वौषधीभिः. ४ निजपादपं पादपान्तरम्; पादपं निजपादपान्तरम्. ५ विकसितकुसुम. ६ गोरचना.

वालरचितकर्णपूरः, दीर्घदशमनुपहतसिन्दुधवलं दुकूलयुगलं वसानः, पुरोहितप्रतिबद्धप्रतिसर-प्रसाधितपाणिः, नवराजलक्ष्मीकमलिनीमृणालेनाभिषेकदर्शनार्थमागतेन सप्तर्षिमण्डलेनेवहारेणालिङ्गितवक्षस्थलः, सितकुसुमग्रथिताभिराजानुलम्बिनीभिरिन्दुकरकलाभिर्वैकक्षस्रग्भिर्निरन्तरनिचितशरीरतया धवलवेषपरिग्रहतया च नरसिंह इव विधूतकेसरनिकरः, कैलास इव स्रवत्स्रोतस्विनीस्रोतोराशिः, ऐरावत इव मन्दाकिनीमृणालजालजटिलः, क्षीरोद इव स्फुरितफेनलवाकुलस्तत्कालप्रतिपन्नवेत्रदण्डेन पित्रा स्वयं पुरःप्रारब्धसमुत्सारणः सभामण्डपमुपगम्य काञ्चनमयं शशीव मेरुशृङ्गं चन्द्रापीडः सिंहासनमारुरोह ।

आरूढस्य चास्य कृतयथोचितसकलराजलोकसंमानस्य मुहूर्तं स्थित्वा दिग्विजयप्रयाणा-

---

किसलयै रचितो निर्मितः कर्णपूरः कर्णावतंसो येन सः । दीर्घेति । दीर्घा आयता दशा वर्तयो[1] यस्यैवंभूतमनुपहतमखण्डमिन्दुश्चन्द्रस्तद्वद्धवलं श्वेतं दुकूलयुगलं दुगूलयुग्मं वसानो दधानः । पुरो इति । पुरोहितेन पुरोधसा प्रतिबद्धो यः प्रतिसरो हस्तसूत्रं तेन प्रसाधितोऽलंकृतः पाणिर्यस्य सः । राजानं विशिनष्टि—नवेति । नवा प्रत्यग्रा या राजलक्ष्मीराधिपत्यश्रीः सैवोज्ज्वलत्वसाम्यात्कमलिनी नलिनी तस्या आयतत्वसाम्यान्मृणालेनेव बिसेनेव । मुक्तासु संक्रान्तसुखत्वेनोपमानान्तरमाविःकर्तुमाह—अभीति । अभिषेकदर्शनार्थं यौवराज्याभिषेकावलोकनार्थमागतेन प्राप्तेन सप्तर्षिमण्डलेनेव मरीचिप्रमृतिमुनिसमुदायेनैवंविधेन हारेण मुक्ताप्रालम्बेनालिङ्गितमाश्लिष्टं वक्षस्थलं भुजान्तरं यस्य स तथा । सितेति । सितानि श्वेतानि यानि कुसुमानि पुष्पाणि तैर्ग्रथिताभिर्गुम्फिताभिराजान्वानलकीलं यावल्लम्बन्त इत्येवंशीला आजानुलम्बिन्यस्ताभिः । इन्दुरिति । इन्दुश्चन्द्रस्तस्य कराः किरणास्तद्वत्कला मनोहरास्ताभिः । वैकक्षेति । वैकक्षमुत्तरीयकं तद्वत्स्थापिताभिः स्रग्भिर्मालाभिर्निरन्तरं निचितं व्याप्तं शरीरं यस्य तस्य भावस्तत्ता तया । धवलेति । धवलः शुभ्रो यो वेषो नेपथ्यं तस्य परिग्रहः स्वीकारो यस्य तस्य भावस्तत्ता तया । चेति । चकार उभयसमुच्चयार्थः । उभयसमुच्चयेन द्वयोरुत्प्रेक्षामाह—नरेति । नरसिंह इव नृसिंहावतार इव । कीदृक् । विधूतः कम्पितः केसरनिकरः सटासमूहो येन सः । अत्र केसरस्रजोः साम्यम्, वेषशरीरचर्मणोः साम्यं चेति भावः । कैलासेति । कैलास इव रजताद्रिरिव । एनं विशिनष्टि—स्रवदिति । स्रवन्त्याः क्षरन्त्याः स्रोतस्विन्या गङ्गायाः स्रोतोराशिः प्रवाहसमूहो यस्मिन् । अत्र कैलासवेषयोः साम्यम्, स्रक्स्रोतस्विन्योः साम्यं च दर्शितम् । ऐरावतेति । ऐरावत इव हस्तिमल्ल इव । एनं विशिनष्टि—मन्दाकिनीति । मन्दाकिन्या गङ्गाया यन्मृणालजालं बिससमूहस्तेन जटिलो व्याप्तः । पुनर्धवलवेषसाम्यनिमित्तकमुत्प्रेक्षान्तरमाह—क्षीरोदेति । क्षीरोदः क्षीरसमुद्रस्तद्वदिव । एनं विशेषयन्नाह—स्फुरितेति । स्फुरिता दीप्यमाना ये फेनलवा डिण्डीरांशास्तैराकुलो व्याप्तः । तदिति । तत्काले तदात्वे प्रतिपन्नः स्वीकृतो वेत्रदण्डो वेतसयष्टिर्येनैवंविधेन पित्रा जनकेन स्वयमात्मना पुरोऽग्रे प्रारब्धं प्रस्तुतं समुत्सारणं जननिवारणं येन सः । सभामण्डपमास्थानमण्डपमुपगम्य समीपे गत्वा काञ्चनमयं मेरुशृङ्गं स्वर्णाद्रिशिखरं शशीव हिमद्युतिरिव चन्द्रापीडो युवराट् काञ्चनमयं सिंहासनं नृपासनमारुरोहारूढवान् ।

आरूढस्य च तदुपविष्टस्य च । अत्र चकारः पुनरर्थकः । अस्य चन्द्रापीडस्य कृतो विहितो यथोचितं यथायोग्यं सकलराजलोकस्य समग्रनृपजनस्य संमानः सत्कारो येन स तस्य । मुहूर्तं घटिकाद्वयं स्थित्वोप-

---

टिप्प०—1 प्राञ्चलवर्तिन्यः सूत्रवर्तिकाः । 2 शुक्लत्वसाम्यादेव सप्तर्षीणामुपमानता । 3 अग्रवर्तिन्यः सर्वा उपमाः । 4 क्षीरोद इवेत्यप्युपमैव । यदा पूर्वोक्ताः उपमा एकत्रोपमेये संघटितास्तदा सेयं मालोपमा ।

---

पाठा०—१ अभिनव. २ कोमलाभिः; कलापकोमलाभिः. ३ वैकक्ष्यक. ४ विधूतः विधुत. ५ फेनतला. ६ आगम्य. ७ संमानस्य.

शंसी प्रलयघनघटाघोषघर्घरध्वनिरुदधिरिव मन्दरपातैः[2], वसुंधरापीठमिव[2] युगान्तनिर्घातैः, उत्पातजलधर इव तडिद्दण्डपातैः[3], पातालकुक्षिरिव महावराहघोणाभिघातैः, कनककोणैर[4]भिहन्यमानः प्रस्थानदुन्दुभिरामन्थरं दध्वान । येन[5] ध्वनता समाध्मातानीवोन्मीलितानीव[6] पृथक्कृतानीव विस्तारितानीव गर्भीकृतानीव प्रदक्षिणीकृतानीव बधिरीकृतानीव रवेण भुवनान्तराणि, विश्लेषिता इव दिशामन्योन्यबन्धसंधयः । यस्य च भयवशविषमचलितोत्तानफणा[7]सहस्रेणालिङ्ग्यमान इव रसातले शेषेण, मुहुर्मुहुरभिमुखदन्तोर्ध्वघातै[8]राहूयमान इव दिक्षु दिक्कुञ्जरैः, संत्रासरचितरेचकमण्डलैः प्रदक्षिणीक्रियमाण इव नभसि दिवसकररथतुरङ्गमैः[9], अपूर्वशर्वाट्टहासशङ्काहर्षहुंकृतेनाश्रुतपूर्व[10] आभाष्यमाण इव कैलासशिखरिणि त्र्यम्बकवृषभेण,

---

शस्य तदनन्तरं दिग्विजयार्थं यत्प्रयाणं गमनं तस्याशंसी कथकः प्रस्थानदुन्दुभिर्यात्रापटह आमन्थरं नात्युच्चं यथा स्यात्तथा दध्वान शब्दं चकार । अथ दुन्दुभिं विशेषयन्नाह—**प्रलयेति** । प्रलयकालानां लीना कल्पान्तसमयोद्भवा या घनघटा कादम्बिनी तस्या घोषो गर्जितं तद्वद्घर्घरः कठिनो ध्वनिः शब्दो यस्य सः । किंक्रियमाणः । अभिहन्यमानः । कैः । कनकस्य सुवर्णस्य कोणाः पटहवादनदण्डास्तैः । 'कोणो वीणादिवादनम्' इति कोशः । क इव । उदधिः समुद्रस्तद्वदिव मन्दरो मेरुस्तस्य पातैः पुनःपुनः पतनैः । **वसुंधरेति** । वसुंधरा पृथ्वी तस्याः पीठं मूलभागस्तद्वदिव युगान्ते कल्पान्ते निर्घाता दिशां महान्तः शब्दाः[3] श्रूयन्ते तैः । **उत्पातेति** । उत्पातो जन्यं तज्जनितो यो जलधरो मेघस्तद्वदिव तडिद्दण्डा विद्युद्दण्डास्तेषां पातैः प्रपतनैः । **पातालेति** । पातालं बलिवेश्म तस्य कुक्षिर्मध्यप्रदेशस्तद्वदिव । **महेति** । महावराहः कृष्णावताररूपस्तस्य घोणा विकूणिका तस्या अभिघातैः प्रहारैः । **येनेति** । येन दुन्दुभिना । कर्तरि तृतीया । ध्वनता शब्दं कुर्वता रवेण शब्देन भुवनान्तराणि विश्वविवराणि समाध्मातानीवापूरितानीवोन्मीलितानीव विकसितानीव पृथक्कृतानीव भिन्नीकृतानीव विस्तारितानीव विपुलीकृतानीव गर्भीकृतानीवान्तर्हितानीव प्रदक्षिणीकृतानीवावर्तीकृतानीव बधिरीकृतानीवाकर्णीकृतानीव जातानीति सप्तभिः समाध्मातादिभिः संबध्यते । **विश्लेषिता इति** । दिशां ककुभामन्योन्यं परस्परं बन्धस्य बन्धविशेषस्य संधयः संश्लेषा विश्लेषिता विघटिता इव । **यस्येति** । दुन्दुभिना संबध्यते । निनादापेक्षया षष्ठी । यस्य दुन्दुभेर्निनादः शब्दस्त्रिभुवनं विष्टपत्रयं बभ्राम भ्रमणं चकार । अत्रोत्प्रेक्षते—**भयेति** । भयवशेन भीतिवशेन विषमं स्थपुटं चलितं पश्चादागतमुत्तानमूर्ध्वमुखं फणासहस्रं यस्यैवंविधेन शेषेण नागाधिपेन रसातले वडवामुख आलिङ्ग्यमान इवाश्लिष्यमाण इव मुहुर्मुहुर्वारंवारं दिक्षु दिशासु दिक्कुञ्जरैर्दिङ्नागैराहूयमान इव निमन्त्र्यमाण इवाभिमुखं संमुखं ये दन्तानां रदानामूर्ध्वघाता ऊर्ध्वप्रहारास्तैः । **संत्रासेति** । संत्रासेन भयेन रचितं रेचकमण्डलं तिर्यग्भ्रमणमण्डलं यैरेवंविधैर्दिवसकररथतुरङ्गमैः सूर्यरथसप्तसप्तिभिर्नभसि विहायसि प्रदक्षिणीक्रियमाण आवर्तीक्रियमाण इव । **अपूर्वेति** । अपूर्वोऽश्रुतपूर्वो यः शर्वस्य भवानीपतेरट्टहासो महान्हासस्तस्य शङ्कारेका तया हर्षः प्रमोदस्तस्मायद्धुंकृतं तेन हुंकारेण कैलासशिखरिणि रजताद्रिसानुनि त्र्यम्बकवृषभेणेश्वरबलीवर्देनाभाष्यमाण इवोच्यमान इव ।

टिप्प०—1 अतिस्थूलमिदम् । यदा प्रलयघनघटादिघोरशब्दैः साम्यं ततोपि नात्युच्चता ? अतः आमन्थरम् अतीव विशालमिति व्याख्यानमुचितम् । 'मन्थरः सूचके कोशे वक्रे मन्दे पृथौ मथि । मन्थरं तु कुसुम्भ्यां स्यात्' इति हेमः । 2 'मन्दरघातैः' इत्येव पाठः । मथ्यमानतादशायां विलोडनकृतो घात एव भवति न पुनः पातः । 3 इदमपि स्थूलतमम् । उत्पातसमये आकाशादभिपतिता वायुविशेषा निर्घाताः 'वायुनाभिहतो वायुर्गगनात्पतितः क्षितौ । यदा दीप्तः खगरुतः स निर्घातोतिदोषकृत् ॥' नारदसंहिता । 4 आलप्यमान इवेत्युचितम् ।

---

पाठा०—१ घातैः. २ पीठः. ३ चण्डपातैः. ४ कनककणैः; कणकणैः. ५ येन च. ६ उन्मीलितानीव मुखरीकृतानीव पृथक्कृतानीव. ७ वलित. ८ दत्तदन्त. ९ तुरगैः. १० हुंकृतेनाभाष्यमाणः.

कृतगम्भीरकण्ठगर्जितेन प्रत्युद्गम्यमान इव मेरौ[1]ऐरावतेन, अश्रुतपूर्वरवरोषावेश[3]तिर्यगवनमितविषाणमण्डलेन प्रणम्यमान इव विबुधसद्मनि[2] कृतान्तमहिषेण, संत्रस्तलोकपालाकर्णितो बभ्राम त्रिभुवनं[5] निनादः । ततो दुन्दुभिरवमाकर्ण्य जयजयेति च सर्वतः समुद्धुष्यमाणजयशब्दः सिंहासनात्सह द्विषतां श्रिया संचचाल चन्द्रापीडः । समन्तात्ससंभ्रमोत्थितैश्च परस्परसंघट्टविघटित[6]हारसूत्रविगलितानवरतमाशाविजयप्रस्थानमङ्गललीलालाजानिव[7] मुक्ताफलप्रकरान्क्षरद्भिः, पारिजात इव सितकुसुममुकुलपातिभिः कल्पपादपैः, ऐरावत इव विमुक्तकरशीकरैराशागजैः, गगनाभोग इव तारागणवर्षिभिर्दिगन्तरैः, जलदकाल इव स्थूलजललवासारस्यन्दिभिर्जलधरैरनुगम्यमानो नरपतिसहस्रैरास्थानमण्डपान्निरगात् ।

निर्गत्य च पूर्वारूढया पत्रलेखयाध्यासितान्तरासनामुपपादितप्रस्थानसमुचितमङ्गल्यालं-

---

**कृतेति** । कृतं विहितं गम्भीरमत्युच्चं कण्ठगर्जितं येनैवंविधेनैरावतेनाभ्रमुप्रियेण प्रत्युद्गम्यमान[1] इवाभिमुखं यायमान इव । **अश्रुतेति** । अश्रुतपूर्वोऽनाकर्णितपूर्वो यो रवः शब्दस्तेन जनितो रोषो रुट् तस्यावेशोऽपस्मारस्तेन तिर्यगवनमितं नम्रीभूतं विषाणमण्डलं शृङ्गमण्डलं यस्यैवंविधेन विबुधसद्मनि देवलोके कृतान्तमहिषेण यमकासरेण प्रणम्यमान इव नमस्क्रियमाण इव । **संत्रस्तेति** । संत्रस्ताश्चकिता ये लोकपालाः सोमाद्यास्तै[3]राकर्णितः श्रवणविषयीकृतः । ततस्तदनन्तरं दुन्दुभिरवं पटहरवं जयजयेति च शब्दम् । चकारः पुनरर्थकः । आकर्ण्य निशम्य सर्वतः सर्वत्र समुद्धुष्यमाण उद्घोषणाविषयीक्रियमाणो जयशब्दो यस्य स तथा । एवंविधश्चन्द्रापीडो द्विषतां शत्रूणां श्रिया लक्ष्म्या सह सिंहासनात् संचचाल चलितो बभूव । क्रमेणास्थानमण्डपान्निरगान्निर्गतो बभूवेत्यन्वयः । किंविशिष्टः । नरपतिसहस्रैर्भूमिपतिदशशतैरनुगम्यमानोऽनुव्रज्यमानः । अथ नरपतीनां विशेषणानि—**समन्तादिति** । समन्तादेकवारं ससंभ्रमं त्वरितमुत्थितैः कृतोत्थानैः । किं कुर्वद्भिः । मुक्ताफलप्रकरान्मौक्तिकसमूहान्क्षरद्भिर्विकिरद्भिः । किंविशिष्टान् । परस्परं अन्योन्यं यः संघट्टः संमर्दस्तेन विघटितं त्रुटितं यद्धारसूत्रं तेन विगलितांश्च्युतान् । कानिव । अनवरतं निरन्तरमाशाविजयो दिग्विजयस्तदर्थं प्रस्थानं गमनं तस्मिन्मङ्गलस्य विघ्नवारकस्य या लीला विलासस्तस्य लाजानिवाक्षतानिव । मङ्गलनिमित्तं लीलया लाजाः प्रक्षिप्यन्त इति भावः । कैः क इवानुगतः । **पारीति** । कल्पपादपैर्देववृक्षैरनुगतः पारिजात इव मन्दार इव । एतान् विशिनष्टि—**सितेति** । सितकुसुमानां श्वेतपुष्पाणां यानि मुकुलानि गुच्छानि तानि पातयन्त्येवंशीलास्तैः । **ऐरावतेति** । आशागजैर्दिग्गजैरनुगत ऐरावत इव श्वेतगज इव । किंविशिष्टैः । **विमुक्तेति** । विमुक्तास्त्यक्ताः करेभ्यः शुण्डादण्डेभ्यः शीकराः पृषता यैः । **गगनेति** । दिगन्तरैर्दिशां विचालैरनुगतो गगनाभोग इव व्योमविस्तार इव । कीदृशैः । **तारेति** । ताराणां नक्षत्राणां गणः समूहस्तं वर्षन्तीत्येवंशीलास्तैः । **जलदेति** । जलधरैर्मेघैरनुगतो जलदकाल इव प्रावृट्समय इव । कीदृशैः । **स्थूलेति** । स्थूलाः स्थविष्ठा ये जललवाः पानीयबिन्दवस्तेषामासारो वेगवान्वृष्टि[4]स्तं स्यन्दन्तीत्येवंशीलास्तैः । अत्र श्वेतत्वानुगतत्वाभ्यां त्रिभिरप्युपमानं[5] बोध्यम् । अन्वयस्तु प्रागेवोक्तः ।

ततो निर्गत्य बहिरागत्य । चकारः पुनरर्थे । **निर्गन्तुमिति** । नितरामतिशयेन गन्तुं यातुमारेभ आरम्भं चकार । किं कृत्वा । ससंभ्रमेण वेगेनाधोरणा हस्तिपकास्तैरुपनीतामानीतां करेणुकां वशामारुह्यारोहणं कृत्वा । अथ करेणुकां विशिनष्टि—**पूर्वेति** । पूर्वारूढेति पूर्वं प्रथममारूढयोपरिस्थितया पत्रलेखया ताम्बूलकरङ्कवाहिन्याध्यासितमाश्रितमन्तरासनं नृपासनात्पृथगासनं यस्याः सा ताम् । **उपेति** । उपपादितो विहितः प्रस्थानसमुचितः

---

**टिप्प०**—1 'मेरावैरावतेन' इति यदा पाठः स्वीकृतस्तदा 'मेरौ सुमेरुपर्वते ऐरावतेन गौरवसूचनार्थं प्रत्युद्गम्यमान इव' इति व्याख्यानमुचितम् । 2 'यमसद्मनि' इत्येव पाठः, तत्रैव कृतान्तमहिषोचित्यात् । 3 इन्द्राद्या इत्युचितम् । न हि सोमो लोकपालः । उमया सहितः सोम इति शिवग्रहणं तु इन्द्रस्य टीका बिडौजा इव । 4 वेगवतीति तात्पर्यम् । 5 उपमानमित्यर्थः ।

---

**पाठा०**—१ इवैरावतेन. २ विबुधसद्मनि. ३ रवजनितरोषः; इव रोष. ४ यमसद्मनि. ५ त्रिभुवनमखिलम्. ६ विघट्टित. ७ मङ्गललीलाबीजानीव; मङ्गललाजानीव; मङ्गललाजानिव. ८ कुलकेश्वरपुत्र्या समध्यासित.

कारां ससंभ्रमाधोरणोपनीतां करेणुकामारुह्याचलरेचकचक्रीकृतक्षीरोदावर्तपाण्डुरेण दशवदनबाहुदण्डावस्थितकैलासकान्तिना मुक्ताफलजालिना शतशलाकेनातपत्रेण निवार्यमाणातपो निर्गन्तुमारेभे । निर्गच्छंश्चाभ्यन्तरावस्थित एव प्राकारान्तरितदर्शनानां प्रतिपालयतां राज्ञामुन्मयूखानां चूडामणीनामलक्तकद्रवद्युतिमुषा बहलेनालोकबालातपेन राज्याभिषेकानन्तरप्रसृतेन स्वप्रतापवह्निनेवात्यर्थं पिञ्जरीक्रियमाणा दश दिशो यौवराज्याभिषेकजन्मना निजानुरागेणेव रज्यमानमवनितलमासन्नरिपुविनाशपिशुनेन दिग्दाहेनेव पाटलीक्रियमाणमम्बरतलमभिमुखागतभुवनतललक्ष्मीचरणालक्तकरसेनेव लोहितायमानातपं दिवसं ददर्श । विनिर्गतश्च ससंभ्रमप्रचलितगन्धगजघटासहस्रैरन्योन्यसंघट्टजर्जरितातपत्रमण्डलैरादरावनतमौलिशिथिलमणिमुकुटपङ्क्तिभिरावर्जितकर्णपूरैः कपोलस्थलस्खलितकुण्डलै राजाप्तसेनापतिनिर्दिश्य-

---

प्रयाणयोग्यो मङ्गलं यातीति मङ्गल्योऽलंकारो भूषा यस्यां (स्याः) सा ताम् । **अचलेति** । अचलरेचको मन्दरभ्रमणं तेन चक्रीकृतश्चक्रतां प्रापितो यः क्षीरोदः क्षीरसमुद्रस्तस्यावर्ताः पयसां भ्रमास्तद्वत्पाण्डुरेण शुभ्रेण । **दशेति** । दशवदनो लङ्काधिपतिस्तस्य बाहुदण्डा भुजदण्डास्तत्रावस्थितः कृतावस्थानो यः कैलासो रजताद्रिस्तद्वत्कान्तिः प्रभा यस्य स तेन । **मुक्तेति** । मुक्ताफलानां जालानि विद्यन्ते यस्मिन्स तेन । **शतेति** । शतसंख्याः शलाकाः स्वर्णनिर्मिता ईषिका यस्मिन्स तेनैवंविधेनातपत्रेण छत्रेण निवार्यमाणो दूरीक्रियमाण आतपः सूर्यालोको यस्य स तथा । अन्वयस्तु प्रागेवोक्तः । **निरिति** । निर्गच्छन्व्रजन्नभ्यन्तरावस्थित एव चन्द्रापीडः प्राकारान्तरितदर्शनानां वप्रव्यवहितदर्शनानां प्रतिपालयतां प्रतीक्षां कुर्वाणानां राज्ञां नृपाणामुदूर्ध्वं मयूखाः किरणा येषामेवंविधानां चूडामणीनां शिरोमणीनामालोकलक्षणो यो बालातपस्तेन दृढेन बहुलेनालक्तकद्रवद्युतिमुषालक्तकरसहारिणात्यर्थमतिशयेन पिञ्जरीक्रियमाणाः पीतरक्तीक्रियमाणा दश दिशः कर्म ददर्शालोकयामासेत्यन्वयः । अत्रोत्प्रेक्षते—**राज्येति** । राज्यस्य यौवराज्यस्य योऽभिषेकः स्नानं तस्यानन्तरं प्रसृतेन विस्तृतेन स्वप्रतापवह्निनेव स्वस्य स्वकीयस्य यः प्रतापः कोशदण्डजं तेजः स एव वह्निरग्निस्तेनेव । प्रतापस्य रक्तत्वात्तदनुमानम् । अथ च यौवराज्याभिषेकजन्मना यौवराज्यस्नानसमुद्भवेन निजानुरागेणेवात्मीयस्नेहेन रज्यमानं रक्तीक्रियमाणमवनितलं वसुधातलम् । अथ चासन्नः समीपवर्ती यो रिपुविनाशः शत्रुक्षयस्तस्य पिशुनेन सूचकेन दिग्दाहेनेव पाटलीक्रियमाणं श्वेतरक्तीक्रियमाणं अम्बरतलं व्योमतलम् । **अभीति** । अभिमुखा संमुखागता या भुवनतललक्ष्मीस्त्रिविष्टपश्रीस्तस्याश्चरणालक्तकः पादयावकस्तस्य रसेनेव लोहितायमानो रक्तवदाचरमाण आतप आलोको यस्यैवंभूतं दिवसं वासरं ददर्शेति पूर्वक्रियया संबन्धः । **विनीति** । विशेषेण निर्गतो बहिरागतः । च पुनरर्थकः । अवनिभुजां राज्ञां चक्रवालैः समूहैः प्रणम्यमानो नमस्क्रियमाणः । अथ राजकविशेषणानि—**ससंभ्रमेति** । ससंभ्रमं सवेगं प्रचलितं प्रस्थितं गन्धगजानां गन्धेभानां घटासहस्रं येषां तैः । **अन्योन्येति** । अन्योन्यं परस्परं यः संघट्टः संमर्दस्तेन जर्जरितानि शिथिलीभूतान्यातपत्रमण्डलानि छत्रसमूहा येषां तैः । **आदरेति** । आदरेण गौरवेणावनता नम्रा ये मौलयः शिरांसि तेन शिथिलाः श्लथा मणिमुकुटानां रत्नकिरीटानां पङ्क्तयः श्रेणयो येषां तैः । **आवर्जितेति** । आवर्जितान्यानमितानि कर्णपूराणि कर्णाभरणानि येषां तैः । **कपोलेति** । कपोलस्थलाद्गल्लातपरप्रदेशात्स्खलितानि स्खलनं प्राप्तानि कुण्डलानि कर्णभूषणानि येषां तैः । **राजेति** । राज्ञो य आप्तः प्रत्ययितः सेनापतिः सैन्याध्यक्षस्तेन निर्दिश्यमानानि निवेद्यमानानि नामानि येषां तैः । पुनः कीदृशः । गन्धमादननाम्ना गजे-

---

**पाठा०**—१ अधिरुह्य. २ वक्रीकृत. ३ धवलप्राकार. ४ द्वारावस्थितानां प्रत्यपालयताम्. ५ अलक्तक इव. ६ क्रियमाणदशदिशः. ७ गज. ८ आदरादनवरतप्रणामशिथिलित. ९ रत्नकर्णपूरे, रत्नकर्णपूरैः. १० रत्नकुण्डलैः. ११ आज्ञप्त, अज्ञात. १२ निर्दिश्यमानानामवनि.

माननामभिरवनिभुजां चक्रवालैः प्रणम्यमानः, वहलसिन्दूररेणुपाटलेन क्षितितलदोलायमान-[1]मुक्ताकलापावचूलेन सितकुसुममालाजालशबलशिरसा संलग्नसंध्यातपेन तिर्यगावर्जितश्वेत-गङ्गाप्रवाहेण तारागणदन्तुरित[2]शिलातलेन मेरुगिरिणेव गन्धमादनेनानुगम्यमानः; कनका-लंकार[3]प्रभाकल्माषितावयवेन च[4] दत्तकुङ्कुमस्था[5]सकेनै[6]र्वाकृष्यमाणेनेन्द्रायुधेन सनाथीकृतपुरो[7]-भागः शनैः शनैः प्रथममेव शातक्रतवीमाशामभिप्रतस्थे ।

[8]अथ चलितगजघटाकम्पिता[9]तपत्रवनमनेककल्लोलपरम्परापतितचन्द्रमण्डलप्रतिविम्बसहस्रं महाप्रलयजलधिजलमिव प्लावितमहीतलमद्भुतोद्भूतकलकल[10]मखिलं संचचाल वलम् । उच्चलि-

---

न्द्रेणानुगम्यमानोऽनुव्रज्यमानः । अथ गजं विशेषयन्नाह—**वहलेति** । वहलो निबिडो यः सिन्दूररेणुः शृङ्गारभूषणधूलिस्तेन पाटलेन श्वेतरक्तेन । गजस्य सिन्दूरभूषणमिति सर्वप्रसिद्धिः । गजशोभान्तरमाह—**क्षितीति** । क्षितितलं पृथ्वीतलं यावद्दोलायमानः कम्पमानो यो मुक्ताकलापो मौक्तिकप्रकरस्तदेवावचूलं कर्णाभरणं यस्य स तथा । प्रस्थानसमये सर्वत्र गजस्येष्टत्वात् । अलंकारान्तरमाह—**सितेति** । सितं यत्कु-सुममालाजालं पुष्पस्रक्समूहस्तेन शबलं कर्वुरं शिरो यस्य स तेन । अत्रोत्प्रेक्षते-**मेर्विति** । मेरुर्म-न्दरः स चासौ गिरिश्चेति कर्मधारयः । तत्सदृशेनेव । उच्चत्वसाम्यादस्य मेरुसाम्यमित्यर्थः । विशेषणत्रयेण मेरोरपि गन्धमादनसाम्यं प्रदर्शयन्नाह—**संलग्नेति** । संलग्नः संश्लिष्टः संध्यातपो यस्मिन् । एतेन सिन्दूर-सादृश्यम् । **तिर्यगिति** । तिर्यगावर्जितः प्रवर्तितः श्वेतगङ्गाप्रवाहो यस्मिन् । एतेन मुक्ताकलापसाम्यम् । **तारेति** । तारागणेन नक्षत्रवृन्देन दन्तुरितं विषमितं शिलातलं यस्मिन् । एतेन स्रक्साम्यम् । पुना राजानं विशेषयन्नाह—**इन्द्रायुधेति** । इन्द्रायुधेनाश्वरत्नेन सनाथीकृतः सहितः पुरोभागोऽग्रभागो यस्य स तथा । अथाश्वं विशेषयन्नाह—**कनकेति** । कनकस्य सुवर्णस्य योऽलंकारस्तस्य प्रभा कान्तिस्तया कल्माषिताः कर्वुरिता अवयवा अपघना यस्य स तेन । अत्रोत्प्रेक्षते—**दत्तेति** । दत्ताः कुङ्कुमस्य किञ्जल्कस्य स्थासका हस्तबिम्बा यस्यैवंविधेनेव । कीदृशेन । इन्द्रायुधेनाकृष्यमाणेन । अश्वपालकेनेति शेषः । एतेनास्याग्रयानत्वं सूचितमिति भावः । शनैःशनैर्मन्दंमन्दं प्रथममेवादावेव शातक्रतवीं शतक्रतोरियं शातक्रतवी तां प्राचीमभि-प्रतस्थे । तस्या अभिमुखं चचालेत्यर्थः । तदनन्तरं बलं सैन्यं संचचाल । सम्यक्प्रकारेण चलितं बभूवेत्यर्थः ।

अथ बलं विशेषयन्नाह—**चलितेति** । चलिता गन्तुं प्रवृत्ता या गजघटा हस्तिसमुदायस्तया कम्पितानि धूतान्यातपत्राणि छत्राणि यस्मिंस्तत् । कीदृशम् । **प्लावितेति** । प्लावितं प्रलयं नीतं महीतलं येन तत् । गजानां कृष्णत्वसाम्यात्समन्ततः प्रसरणसाम्याच्चोपमानान्तरमाह—**महेति** । महाप्रलयो महाकल्पान्तस्तस्मिन्यो जलधिः समुद्रस्तस्य जलं पानीयं तद्वदिव । अथ जलं विशिनष्टि—**अनेकेति** । अनेके संख्यातीता ये कल्लोलास्त-रङ्गास्तेषां परम्पराः पङ्क्तिविस्तारास्तासु पतितं प्रतिविम्बितं संक्रान्तं चन्द्रमण्डलस्य शशिमण्डलस्य प्रतिबिम्बसहस्रं प्रतिच्छायसहस्रं यस्मिन् । अत्रातपत्राणां वर्तुलत्वस्वच्छत्वसाम्याच्चन्द्रप्रतिबिम्बसाम्यम् । एतदपि प्लावि-तमहीतलम् । **अद्भुतेति** । अद्भुतोद्भूत अ[1]श्वादप्याश्चर्यकारी कलकलः कोलाहलो यस्मिन् । एतच्चोभयत्र सा-म्यम् । **उच्चेति** । अथोत्प्राबल्येन चलितस्य कृतप्रयाणस्यास्य राज्ञश्चन्द्रापीडस्य । अत्र चकारोऽधिकारान्तरसूच-कः । वैशम्पायनः समीपं पार्श्वमाजगामाययौ । कया त्वरितपदसंचारिण्या शीघ्रचरणगामिन्या करिण्या हस्तिन्या

---

टिप्प०—1 अद्भुतः आश्चर्यकारी उद्भूतः उत्पन्नः कलकलरवो यस्मिंस्तत् । अश्वादित्युक्तिस्तु वृथाप्रायैव ।

---

पाठा०—१ स्थूलमुक्ता. २ शिखरशिलातलेन. ३ प्रभाप्रतान; घटप्रतान. ४ पराधेन. ५ स्थानकेन. ६ आकृ-ष्यमाणेनेव. ७ पुरोभागः प्रथमम्. ८ चलित, ९ धवलातपत्रमनेक. १० सकलम्.

तस्य चास्य स्वभवनादुपपादितप्रस्थानमङ्गलो धवलदुकूलवासाः[१] सितकुसुमाङ्गरागो महता बलसमूहेन नरेन्द्रवृन्दैश्चानुगम्यमानो[२] धृतधवलातपत्रो द्वितीय इव युवराजस्त्वरितपदसंचारिण्या करिण्या वैशम्पायनः समीपमाजगाम[३]। आगत्य च शशिकर[४] इव रवेरासन्नवर्ती बभूव। अनन्तरमितश्चेतश्च 'निर्गतो युवराजः' इति समाकर्ण्य प्रधावतां बलानां भरेण चलितकुलशैलकीलितजलधिजलतरङ्गगतेव[५] तत्क्षणमाचकम्पे मेदिनी संमुखागतैरन्यैश्चान्यैश्च[६] प्रणमद्भिर्भूमिपालैः। अंशुलताजालजटिलचूलिकानां मणिमुकुटानामालोकेनोन्मिषितबहुलरोचिषां च पत्रभङ्गिनीनां[७] केयूरमण्डलीनां प्रभासंतानेन क्वचिद्विकीर्यमाणचाषपक्षक्षोदा इव, क्वचिदुत्पतितशिखिकुलचलच्चन्द्रकशतशारा इव, क्वचिदकालजलधरतडित्तरला इव, क्वचित्सकल्पतरुपल्लवा इव, क्वचित्सशतक्रतुचापा[८] इव, क्वचित्सबालातपा इव

---

करणभूतयेत्यर्थः। **स्वेति**। स्वभवनान्निजगृहादुपपादितं विहितं प्रस्थानमङ्गलं गमनमङ्गलं येन सः। **धवलेति**। धवलं श्वेतं दुकूलमेव वासो वस्त्रं यस्य सः। **सितेति**। सितकुसुमैः श्वेतपुष्पैरङ्गरागः शरीरशोभा यस्य स तथा। सितकुसुमवदङ्गरागो विलेपनं यस्येति वा। महता महीयसा बलसमूहेन सैन्यसंघातेन नरेन्द्रवृन्दैश्च राजसमूहैश्चानुगम्यमानोऽनुव्रज्यमानः। **धृतेति**। धृतं शिरसि धारितं धवलं श्वेतमातपत्रं छत्रं येन सः। द्वितीय इवापर इव युवराजः। आगत्याभ्येत्य। चकारः पुनरर्थकः। आसन्नवर्ती समीपवर्ती बभूव संजज्ञे। कस्य क इव। यथा रवेः सूर्यस्य शशिकरश्चन्द्रः[1] समीपगो भवति। अत्र शशिकर इवेति कथनाद्वैशम्पायनस्य कुमारापेक्षया शोभायामपकर्षः सूचितः। युक्तोऽयमर्थः। अमावास्यायां सूर्यनिकटे चन्द्रस्य न्यूनतैव भवतीति भावः। अथवेतश्चेतश्च निर्गतो युवराज इति लोकोक्त्या समाकर्ण्य श्रवणविषयीकृत्य प्रधावतां धावनं कुर्वतां बलानां सैन्यानां भरेण समुदायेन संमुखागतैरभिमुखायातैः प्रणमद्भिः प्रणामं कुर्वद्भिः अन्यैश्चान्यैश्च भिन्नभिन्नदेशोद्भवैश्च भूमिपालैर्नृपतिभिः कृत्वा तत्क्षणं तत्कालं मेदिनी पृथ्व्याचकम्पे चचाल। कीदृशीव। **चलितेति**। चलिताः कम्पिता ये कुलशैलाः क्षेत्रमर्यादाकारिणो नगास्तैः कलितो यन्त्रितो यो जलधिः समुद्रस्तस्य जलं पानीयं तस्य तरङ्गाः कल्लोलास्तत्र गतेव प्राप्तेव। **अंशुलतेति**। अंशुलतानां किरणश्रेणीनां जालं समूहस्तेन जटिला व्याप्ता चूलिका प्रान्तभागो येषामेवंविधानां मणिमुकुटानां रत्नकिरीटानामालोकेन प्रकाशेन। **उन्मिषितेति**। उन्मिषिता विकासं प्राप्ता बहुला दृढा रोचिषः कान्तयो यासु तासाम्। **पत्रेति**। पत्रभङ्गा रचनाविशेषा विद्यन्ते यास्वेवंविधानां केयूरमण्डलीनामङ्गदश्रेणीनां प्रभासंतानेन च कान्तिसमूहेन चैवंविधा दश दिशो दश ककुभः क्रियन्ते[2] विधीयन्त इत्यन्वयः। तदाह—**क्वचिदिति**। क्वचित् कस्मिंश्चित्प्रदेशे विकीर्यमाणा विक्षिप्यमाणाश्चाषाणां किकीदिवीनां पक्षक्षोदाः पिच्छचूर्णानि यास्वेवंविधेषु[3]। **क्वचिदिति**। क्वचित् उत्पतितमुड्डीनं यच्छिखिकुलं नीलकण्ठसमुदायस्तस्य ये चलन्तो दीप्यमानाश्चन्द्रका मेचकास्तेषां शतं तेन शाराः कर्बुरा इव। 'शारः शबलवातयोः' इत्यनेकार्थः। **क्वचिदिति**। क्वचित् अकालेऽनवसरे यो जलधरो मेघस्तस्य तडिद्विद्युत्तया तरला इव पारिप्लवा इव। **क्वचिदिति**। क्वचित् कल्पतरूणां देववृक्षाणां पल्लवाः किसलयास्तैः सह वर्तमानेव[4]। **क्वचिदिति**। क्वचित् शतक्रतुरिन्द्रस्तस्य चापं धनुस्तेन सह वर्तमानेव। **क्वचिदिति**। क्वचित् बालातपः प्रभातकालीनसूर्यालोकस्तेन सह वर्तमानेव। तथा राज्ञां धवला-

---

**टिप्प०**—1 शशिकरस्य चन्द्र इत्यर्थः प्रमादः। अतः 'रजनिकरः' इति पाठः। अग्रेऽपि शशिकर इत्येव पदं गृहीत्वा व्याख्यानं तु टीकाकारस्य चिरप्रसिद्धः प्रमादस्वभाव एव। 2 'इवाऽक्रियन्त' इत्येव पाठः। प्रमाणं च सहृदयहृदयम्। 3 एवंविधा इत्येवोचितम्। 4 वर्तमाना इव इत्युचितम्। एवमग्रेऽपि।

---

**पाठा०**—१ दुकूलवासाः; धवलवासाः. २ अनुरज्यमान. ३ समाजगाम. ४ रजनिकरः. ५ शैलकैलासजलधितरङ्ग. ६ अन्यैश्च. ७ पत्रभङ्गीनाम्. ८ सशतयज्ञ; शतयज्ञ.

क्रियन्ते[1] दश दिशः । धवलान्यपि विविधमणिनिकरकल्माषैरुत्सर्पिभिश्चूडामणिमरीचिभिर्मायूराणीव राजन्ते[2] राज्ञामातपत्राणि । क्षणेन च तुरगमयमिव महीतलम्, कुञ्जरमयमिव दिक्चक्रवालम्, आतपत्रमण्डलमयमिवान्तरिक्षम्, ध्वजवनमयमिवाम्बरतलम्, इभमदगन्धमय इव समीरणः, भूपालमयीव प्रजासृष्टिः, आभरणांशुमयीव दृष्टिः[3], किरीटमय इव दिवसः[4], जयशब्दमयमिव त्रिभुवनमभवत् ।

सर्वतश्च कुलपर्वताकारैः प्रचलद्भिर्मत्तवारणैः, उत्पातचन्द्रमण्डलनिभैश्च प्रेङ्खद्भिरातपत्रैः[5], संवर्तकाम्भोदगम्भीरभीमनादेन च ध्वनता दुन्दुभिना, तारकावर्षसदृशेन विसर्पता गजसीकरनिकरेण, धूमकेतुधूसरैश्चोल्लसद्भिरवनिरजोदण्डकैः, निर्घातपातपरुषगम्भीरघोषैश्च करिकण्ठगर्जितैः, क्षतजकणवर्षबभ्रुणा च भ्रमता मतङ्गजकुम्भसिन्दूररेणुना, संक्षुभितजलधिजलकल्लोलचञ्चलाभिश्च प्रविसर्पन्तीभिस्तुरङ्गममालाभिः[6][7], अन्धकारितदि-

---

न्यपि श्वेतान्यप्यातपत्राणि । **विविधेति** । विविधानामनेकप्रकाराणां मणीनां निकराः समूहास्तैः कल्माषैः शबलैरुत्सर्पिभिः प्रसरद्भिश्चूडामणिमरीचिभिः शिरोमणिकान्तिभिर्मायूराणीव मयूरपिच्छनिर्मितानीव राजन्ते[1] शोभन्ते । क्षणेन समयमात्रेणैतादृशमभवदजायत । तदेवाह—**तुरगेति** । तुरगा अश्वास्तन्मयमिव महीतलं पृथ्वीतलम् । कुञ्जरा हस्तिनस्तन्मयमिव दिक्चक्रवालं ककुभां मण्डलम् । आतपत्राणि छत्राणि तेषां मण्डलं तन्मयमिवान्तरिक्षमाकाशम् । ध्वजा वैजयन्त्यस्ता एव वनमरण्यं तन्मयमिवाम्बरतलमाकाशतलम् । इभा हस्तिनस्तेषां मदगन्धो दानवारिपरिमलस्तन्मय इव समीरणो वायुः । भूपाला राजानस्तन्मयीव प्रजासृष्टिः प्रकृतिसृष्टिः । आभरणानि तेषामंशवः किरणास्तन्मयीव दृष्टिश्चक्षुः । किरीटानि कोटीराणि तन्मय इव दिवसो वासरः । जयशब्दो मागधानां शुभसूचकः शब्दस्तन्मयमिव त्रिभुवनं त्रिविष्टपम् । सर्वतश्च वक्ष्यमाणेन प्रकारेण महाप्रलयकाल इव कल्पान्तसमय इव संजज्ञे समभूत् । तदेव दर्शयन्नाह—**कुलपर्वतेति** । सर्वतः सर्वदिक्षु प्रचलद्भिर्गच्छद्भिर्मत्तवारणैर्मदकलैर्हस्तिभिः । कीदृशैः । कुलपर्वताः सप्तकुलाचलास्तद्वदाकार आकृतिर्येषां तैः । अत्युच्चत्वसाम्यात्कल्पान्ते कुलाचलानामपि चलनसद्भावाच्च समग्रसाम्यमिति भावः । तथा । **उत्पातेति** । उत्पातकाले बहूनि चन्द्रमण्डलानि भवन्ति क्षतजकणवर्षाश्चेत्यत आह—**तत्समयेति** । तत्समयवर्तीनि यानि चन्द्रमण्डलानि शशिमण्डलानि तन्निभैस्तत्सदृशैरेवंविधैः प्रेङ्खद्भिः प्रचलद्भिरातपत्रैश्छत्रैश्च । तथा संवर्तकाम्भोदो लोकक्षयकारी मेघस्तद्वद्गम्भीरो भीमश्च नादो यस्यैवंविधेन ध्वनता शब्दं कुर्वता दुन्दुभिना पटहेन च । तथा तारकावर्षो नक्षत्रवृष्टिस्तत्सदृशेन तदनुकारिणा विसर्पता प्रसरणशीलेन गजानां हस्तिनां सीकरनिकरेण शुण्डानिःसृतजलपृषत्समूहेन । तथा धूमकेतुर्ग्रहविशेषस्तद्वद्धूसरैर्धूम्रैरुल्लसद्भिरुल्लासं गच्छद्भिरवनिरजोदण्डकैरवनेर्वसुंधराया रजोदण्डैर्धूलिदण्डैः । आयतत्ववर्तुलत्वाभ्यां दण्डसाम्यम् । निर्घातो वज्रं तस्य पातः पतनं तद्वत्परुषः कठोरो गम्भीरो बहुकालस्थायी घोषः शब्दो येषामेवंविधैः करिकण्ठगर्जितैर्गजशब्दैश्च । क्षतजं रुधिरं तस्य कणा बिन्दवस्तेषां वर्षो वृष्टिस्तद्वद्बभ्रुणा कडारेण मतङ्गजा हस्तिनस्तेषां कुम्भाः शिरसः पिण्डास्तेषां यः सिन्दूररेणुर्नागजधूलिस्तेन भ्रमता प्रसर्पता च । तथा संक्षुभितः क्षोभं प्राप्तो यो जलधिः समुद्रस्तस्य जलं पानीयं तस्य कल्लोलास्तरङ्गास्तद्वच्चञ्चलाभिस्तरलाभिः प्रविसर्पन्तीभिः प्रकर्षेण विस्तारं प्राप्नुवतीभिस्तुरङ्गममालाभिः । तथान्धकारितं संजातान्धकारं दिगन्तरं

---

**टिप्प०—1 अराजन्त इत्येव पाठः, भूतकालक्रियया 'त्रिभुवनमभवत्' इत्यनया सह सामञ्जस्यात् । 2 'चामरमय इव' इत्येव ग्रन्थोचितः पाठः । ऊर्ध्वं प्रस्फुरद्भिश्चामरैरेव दिवसस्य तन्मयतौचित्यात् ।**

**पाठा०**—१ अक्रियन्त. २ अरज्यन्त. ३ वृष्टिः. ४ आतपः; चामरमय इव दिवस. ५ शतसितातपत्रैः. ६ विसर्पन्तीभिः. ७ तुरङ्ग.

गन्तरेण चानवरतं क्षरता मदजलधारादुर्दिनेन, कलकलेन च भुवनान्तरव्यापिना महाप्रलयकाल इव संजज्ञे । बलकोलाहलभीता इव धवलध्वजनिवहनिरन्तरावृता ययुः क्वापि दश दिशः । मलिनावनिरजःसंस्पर्शशङ्कितमिव समदगजघटावचूलसहस्रसंरुद्धमतिदूरमम्बरतलमपससार । प्रबलवेत्रिवेत्रलतासमुत्सार्यमाणा इव तुरगखुररजोधूसरताभीतार्ककिरणा मुमुचुः पुरोभागम् । इभकरसीकरनिर्वापणत्रस्त इवातपत्रसंच्छादितातपो दिवसो ननाश । बलभरजर्जरीकृता मदकलकरिचरणशतखण्डिता द्वितीयेव प्रयाणभेरी भैरवं भूमी ररास । गुल्फद्वयसे च तुरङ्गमुखविनिःसृतसितफेनपल्लविते मदपयसि मदस्रुतां क-

---

येनेवंविधेनानवरतं निरन्तरं क्षरता स्रवता मदजलधारा दानवारिधारा तदेव दुर्दिनं मेघजं तमस्तेन । तथा भुवनान्तरव्यापिना विष्टपविवरप्रसरशीलेन । महाप्रलयेऽप्येतद्धर्माणां सद्भावात् । कलकलेन । सैन्येऽपि तद्दर्शनादुपमानोपमेयभावः । **बलेति** । बलस्य सैन्यस्य यः कोलाहलः कलकलस्तेन भीता इव त्रस्ता इव दशसंख्याका दिशः ककुभः क्वाप्यनिर्दिष्टस्थले ययुर्गताः । किंविशिष्टाः । धवलाः श्वेता ये ध्वजनिवहा वैजयन्तीगणास्तैर्निरन्तरं सर्वदावृता आच्छादिताः दिग्गमनेऽयमेव हेतुरिति भावः । **मलिनेति** । मलिनं यदवनिरजस्तस्य यः संस्पर्शः संश्लेषस्तस्माच्छङ्कितमिवारेकीकृतमिवातिदूरमतिदविष्ठमम्बरतलं व्योमतलमपससारापसृतं बभूव । अत्रार्थे हेतुगर्भितं विशेषणमाह—**समदेति** । मदेन सह वर्तमाना या गजघटानेकपसमूहस्तस्य अवचूलसहस्रं कर्णाभरणसहस्रं तेन संरुद्धं संच्छन्नम् । अत्र गजातिशयत्वं व्यङ्ग्यम् । **प्रबलेति** । प्रबलाः प्रकृष्टबलयुक्ता ये वेत्रिणो द्वारपालकास्तेषां वेत्रलता वेतसयष्टयस्ताभिः समुत्सार्यमाणा इव दूरीक्रियमाणा इव । **तुरगेति** । तुरगाणामश्वानां खुररजः शफधूलिस्तेन या धूसरतेषत्पाण्डुता तया भीता इवार्ककिरणाः सूर्यरश्मयः पुरोभागमग्रभागं मुमुचुस्तत्यजुः । अनेन तुरङ्गाणां भूयस्त्वं वेगातिशयः खुरनिक्षेपशक्तिविशेषश्च व्यज्यते । **इभेति** । इभा हस्तिनस्तेषां करसीकराः शुण्डादण्डोद्गतजलपृषतास्तैर्निर्वापणमपनयनं तेन त्रस्त इव चकित इव । **आतपत्रेति** । आतपत्रैश्छत्रैः संच्छादित आतपो रविप्रकाशो यस्मिन्नेवंभूतो दिवसो ननाश नाशं प्राप्तवान् । **बलेति** । बलभरेण सैन्यभारेण जर्जरीकृताः श्लथीकृता मदेन कला मनोहरा ये करिणो हस्तिनस्तेषां चरणशतमङ्घ्रिशतं तेन खण्डिता भिन्ना द्वितीयापरा प्रयाणभेरीव प्रस्थानदुन्दुभिरिव भैरवं कठोरं भूमिर्वसुधा ररास शब्दं चकार । शब्दविशेषजनकत्वसाम्याद्युत्प्रेक्षा । 'रस शब्दे' इति धातोर्लिटि रूपम् । **मदेति** । मदस्रुतां दानवारि क्षरतां करिणां गजानां मदपयसि पदे पदे पदातयः पत्तयः प्रचस्खलुः प्रस्खलनं प्रापुः । अथ मदपयो विशिनष्टि—गुल्फद्वयसे चरणग्रन्थिपरिमिते । अत्र प्रमाणे द्वयसच् । **तुरङ्गेति** । तुरङ्गमुखेभ्योऽश्वव-

---

टिप्प०—1 'समुत्सार्यमाणा इव' इति पूर्वमुत्प्रेक्षितत्वात्पुनरियमुक्तिरज्ञानमेव । तस्मात् 'रजोधूसरमर्ककिरणाः' इत्येव पाठः । वेत्रलतासमुत्सार्यमाणा इव रजोधूसरं पुरोभागम् ( अर्ककिरणाः ) मुमुचुः । अर्ककिरणेषु अपसार्यमाणत्वरूपक्रियाया उत्प्रेक्षा । किञ्च परित्यागे तुरङ्गखुररजोधूसरपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गं च । कार्येण अर्ककिरणेषु राजपुरोभागपरित्यागरूपसाधारणजनव्यवहारसमारोपात् समासोक्तिरिति त्रयाणामेषामङ्गाङ्गिभावसंकरः । 2 भीत इव । जलबिन्दुभिर्यथा वह्नेर्निर्वापणं तथा दिवसेऽपि संभावनमित्युत्प्रेक्षा । अत्रापि दिवसनाशे आतपत्राच्छादनं पदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् । दिवसे अदृश्यमानताया असंबन्धेपि संबन्धोक्तेरतिशयोक्तिरिति त्रयाणामङ्गाङ्गितया संकरः । 3 भूमौ भेरीस्वरूपस्योत्प्रेक्षा । अत्रापि शब्दकरणे बलभर० मदकल० इत्यादिविशेषणद्वयार्थो हेतुरिति काव्यलिङ्गं चेत्यङ्गाङ्गिभावसंकरः । 4 गुल्फद्वयसत्वस्यासंबन्धेपि संबन्धवर्णनादतिशयोक्तिः ।

---

पाठा०—१ अनवरत. २ गजमद. ३ बलहवल; बहलबल. ४ मलिनीकृतमिव. ५ अम्बरम्. ६ प्रचलितवेत्र; प्रचुरवेत्र. ७ धूसरमर्कः; धूसरताभीता इवार्क. ८ सीकरनिकर. ९ बहलवल. १० संचरण. ११ संताडिता; ताडिता. १२ पल्वले.

रिणां प्रचस्खलुः पदे पदे पदातयः । हरितालपरिमलनिभेन चातिपटुना गजमदामोदेनानुलिप्तस्य सामजस्येव समुपययौ[1] निखिलान्यगन्धग्रहणसामर्थ्यं घ्राणेन्द्रियस्य । क्रमेण च प्रसर्पतो बलस्य पुरः प्रधावतां जनकदम्बकानां कोलाहलेन, तारतरदीर्घेण च काहलानां निनादेन, खुररवविमिश्रेण च वाजिनां हर्षहेषारवेण[2], अनवरतकर्णतालस्वर[3]संपृक्तेन च दन्तिनामाडम्बररवेण, ग्रैवेयककिङ्किणीकणितानुसृतेन[4] च गतिवंशाद्विषम[5]विरागिणीनां घण्टानां टङ्कृतेन, मङ्गलशङ्खशब्दसंवर्धितध्वनीनां च प्रयाणपटहानां निनादेन, मुहुर्मुहुरितस्ततस्ताड्यमानानां च डिण्डिमानां[6] निस्वनेन जर्जरीकृतश्रवणपुटस्य मूर्च्छेवाभवज्जनस्य ।

शनैःशनैश्च बलसंक्षोभजन्मा क्षितेरनेकवर्णतया क्वचिज्जीर्णशफरक्रोडधूम्रः, क्वचित्क्रमेलक-

---

दनेभ्यो विनिःसृता बहिरागताः सितफेनाः श्वेतकफास्तैः पल्लविते विस्तारं प्राप्ते । **हरीति** । हरितालस्य पिञ्जरस्य यः परिमलो गन्धस्तस्य निभेन सदृशेनातिपटुनातिस्पष्टेन गजमदामोदेन करिदानवारिपरिमलेन चानुलिप्तस्य व्याप्तस्य घ्राणेन्द्रियस्य नासिकाकरणस्य निखिलान्यग्रहणसामर्थ्यं समग्रापरग्रहणशक्तिः समुपययौ[1] । दूरीभूतमित्यर्थः । कस्येव । सामजस्येव मतङ्गजस्येव[2] । यथा तदनुलिप्तत्वेन तस्यान्यग्रहणसामर्थ्यं न भवति तथेत्यर्थः । यथा नानारसशष्कुल्यादिस्थले सकलसमुदायवशान्नैकस्यापि रसविशेषस्य ग्रहो रसनेनैवं तादृशसमुदायद्वन्द्व्यत्क्षार्द्रकनिम्बूफलरसमवधाने च रसनेन सकलान्यरसग्रहो भवत्ययमुत्कर्षः । आर्द्रकरसादेस्तथैव घ्राणेन्द्रियस्य नानासुगन्धद्रव्यसंनिधानदोषवशान्नैकस्यापि गन्धविशेषस्य धूपग्रहणसामर्थ्यम् । एवं तादृशोक्तगजमदामोदेनानुलिप्तस्य घ्राणस्यातीतान्यगन्धग्रहणसामर्थ्यमभवदित्यर्थः । अथ चैतैः कृत्वा जनस्य लोकस्य मूर्च्छेव मोह इवाभवदित्यन्वयः । तानेवाह—**क्रमेति** । क्रमेण परिपाट्या प्रसर्पतो गच्छतो बलस्य सैन्यस्य पुरोऽग्रे प्रधावतां शीघ्रं प्रचलतां जनकदम्बकानां लोकसमुदायानां कोलाहलेन कलकलेन । तथा तारतरदीर्घेणोत्तरमधिकतां प्राप्तेन काहलानां वाद्यविशेषाणां निनादेन शब्देन । तथा खुररवाः शफस्वनास्तैर्विमिश्रेण संपृक्तेन वाजिनां तुरङ्गाणां हर्षहेषारवेण हर्षः प्रमोदस्तेन या हेषा हेषा तस्या रवः शब्दस्तेन । तथा अनवरतं निरन्तरं कर्णतालस्य यः स्वरः शब्दस्तेन संपृक्तेन दन्तिनां हस्तिनामाडम्बररवेण । पृष्ठे मुखे दन्तयोश्च नानाशृङ्गारभूषणरवेणेत्यर्थः । दन्तिनं विशेषयन्नाह—**ग्रैवेयकेति** । ग्रैवेयकं कण्ठाभरणं तस्य किङ्किण्यः क्षुद्रघण्टिकास्तासां क्वणितं शब्दितं तेनानुसृतेनानुगतेन । तथा । **गतीति** । गतिवशाद्गमनवशाद्विषमोऽसदृशो विरावः शब्दो यासामेवंविधानां घण्टानां भूषणविशेषाणां टङ्कृतेन टणत्कारशब्देन तथा । **मङ्गलेति** । मङ्गलार्थं श्रेयोऽर्थं ये शङ्खशब्दास्तैः संवर्धिता वृद्धिं प्राप्ता ध्वनयो येषामेवंविधानां प्रयाणपटहानां प्रस्थानदुन्दुभीनां निनादेन निर्घोषेण । तथा मुहुर्मुहुर्वारंवारमितस्ततस्ताड्यमानानां डिण्डिमानां पटहविशेषाणां निःस्वनेन शब्देन । कीदृशस्य जनस्य । पूर्वोक्तैर्जर्जरीकृतं श्लथीकृतं श्रवणयोः कर्णयोः पुटं यस्य स तथा तस्य । अन्वयस्तु प्रागेवोक्तः । शनैःशनैर्मन्दं मन्दम् । **बलेति** । बलेन सैन्येन यः संक्षोभः संमर्दस्तस्माज्जन्मोत्पत्तिर्यस्यैवंभूतो रेणू रज उत्पपातोर्ध्वं जगाम । **क्षितेरिति** । क्षितेः पृथिव्या अनेके ये वर्णाः श्वेतादयस्तेषां भावस्तथा तया । रेणोरप्यनेकवर्णतां प्रदर्शयन्नाह—**क्वचिदिति** । क्वचित् क्वचित्प्रदेशे जीर्णो जरीयान्यः शफरो मत्स्यस्तस्य क्रोड उपरिभागस्तद्वद्धूम्रो धूसरः । **क्वचिदिति** । क्वचित् कस्मिंश्चित्प्रदेशे क्रमेलक

---

**टिप्प०**—1 प्रबलगन्धाकृष्टस्य घ्राणस्य तदपेक्षया दुर्बलगन्धानां ग्रहणं न भवतीत्याशयः । ततश्च नानारसशष्कुल्यादि० इति टीकाकृतो विस्तरो व्यर्थप्राय एव । 2 'सामजस्तु गजे पुंसि सामोत्थे पुनरन्यवत्' इति मेदिनी । 3 विशालेन बृंहितध्वनिना ।

---

**पाठा०**—१ अपययौ; उपययौ; समाययौ. २ हेषारवेण. ३ स्वन; रव. ४ अनुगृहीतेन. ५ वशविषम. ६ द्विरदडिण्डिमानाम्. ७ सदृशाः.

सटासंनिभः, क्वचित्परिणतरल्लकरोमपल्लवमलिनः, क्वचिदुत्पन्नोर्णातन्तुपाण्डुरः, क्वचिज्जरठ-मृणालदण्डधवलः, क्वचिज्जरत्कपिकेशकपिलः, क्वचिद्वरवृषभरोमन्थफेनपिण्डपाण्डुरः, त्रिपथ-गाप्रवाह इव हरिचरणप्रभवः, कुपित इव मुञ्चन्क्षमाम्, आरब्धपरिहास इव रुन्धन्नय-नानि, तृषित इव पिबन्करिकरसीकरजलानि, पक्षवानिवोत्पतन्गगनतलम्, अलिनिवह इव चुम्बन्मदलेखाम्, मृगपतिरिव रचयन्करिकुम्भस्थलीषु पदम्, उपात्तविजय इव गृह्णन्पता-काम्, जरागम इव पाण्डुरीकुर्वञ्शिरांसि, मुद्रयन्निव पक्ष्माग्रसंस्थितो दृष्टिम्, आजिघ्रन्निव मकरन्दमधुविन्दुपङ्कलग्नः कर्णोत्पलानि, मदकलकरिकर्णतालताडनत्रस्त इव विशन्कर्णशङ्खो-दरविवराणि, पीयमान इवोन्मुखीभिरवनिपतिमुकुटमणिपत्रभङ्गमकरिकाभिः, अभ्यर्च्यमान

---

उष्ट्रस्तस्य सटा जटास्ताभिः संनिभः सदृशः । **क्वचिदिति** । क्वचित् परिणतः पक्ववया यो रल्लको हुण्ड-स्तस्य रोमपल्लवस्तनूरुहकिसलयस्तद्वन्मलिनः कृष्णः । **क्वचिदिति** । क्वचित् उत्पन्नः समुद्भूतो य ऊर्णा-तन्तुर्जालकारकस्तद्वत्पाण्डुरः श्वेतरक्तः । **क्वचिदिति** । क्वचित् जरठो दीर्घकालीनो यो मृणालदण्डो विसदण्डस्तद्वद्धवलः शुभ्रः । **क्वचिदिति** । जरज्जरीयान्यः कपिर्वनौकास्तस्य केशा अलकास्तद्वत्कपिलः पिङ्गलः । **क्वचिदिति** । क्वचित् वरः प्रधानो यो वृषभो बलीवर्दस्तस्य रोमन्थश्चर्वितचर्वणं तस्मिन्यः फेनपिण्डः कफपुञ्जस्तद्वत्पाण्डुरः श्वेतरक्तः । कीदृशः । त्रिपथगा गङ्गा तस्याः प्रवाहः स्रोतस्तद्वदिव हरिचरणप्र-भवः । हरयोऽश्वा विष्णुश्च । कुपित इव कोपं प्राप्त इव । किं कुर्वन् । क्षमां पृथ्वीं मुञ्चंस्त्यजन् । पक्षे क्षमां क्षान्तिम् । **आरब्धेति** । आरब्धः प्रस्तुतः परिहासो हास्यं येनैवंविध इव । किं कुर्वन् । नयनानि लोचनानि रुन्धन्नाच्छादयन्, उपहासकारिणो लोचनाच्छादनं लोकेऽपि प्रसिद्धम् । तृषित इव पिपासित इव करिणां हस्तिनां करसीकरजलानि शुण्डादण्डोद्गतवातास्तवारीणि पिबन्पानं कुर्वन् । अदृश्यतां प्रापयन्नित्यर्थः । **पक्षेति** । पक्षवानिव गरुत्मानिव । तत्कृत्यमाह—**उदिति** । गगनतलमाकाशतलमुत्पतन्गच्छन् । उभयोरेक-धर्मत्वात्तदुपमानम् । **अलीति** । अलीनां भ्रमराणां निवहः समूहस्तद्वदिव । किं कुर्वन् । मदलेखां दानरेखां चुम्बंश्चुम्बनं कुर्वन् । चुम्बनस्य संस्पर्शविशेषत्वात्तदुपमानम् । **मृगेति** । मृगपतिः सिंहस्तद्वदिव । किं कुर्वन् । करिकुम्भस्थलीषु गजशिरसः पिण्डस्थलीषु पदं स्थानं चरणं वा रचयन्विदधत् । **उपात्तेति** । उपात्तः स्वीकृतो विजयो दस्युक्षयरूपो येन स तद्वदिव पताकां वैजयन्तीं गृह्णन्नाददन् । **जरेति** । जरा विस्रसा तस्या आगम-स्तद्वदिव । तत्कृत्यमाह—शिरांस्युत्तमाङ्गानि पाण्डुरीकुर्वञ्श्वेतीकुर्वन् । शुक्लतापादनसाधर्म्याज्जराया उपमा-नम् । **मुद्रयन्निति** । पक्ष्म नेत्ररोम तदग्रसंस्थितस्तत्पुरोवर्ती दृष्टिं मुद्रयन्निव संकोचयन्निव । **मकरन्देति** । मकरन्दो मरन्दस्तस्य मधु रसस्तस्य बिन्दुपङ्कः पृषत्कर्दमस्तत्र लग्नः संयुक्तः कर्णोत्पलानि श्रोत्रकुवलयान्या-जिघ्रन्निव गन्धं गृह्णन्निव । **मदेति** । मदेन दानवारिणा कला मनोज्ञा ये करिणो हस्तिनस्तेषां कर्णताला-स्तैस्ताडनं प्रहारप्रदानं तेन त्रस्त इव भीत इव । कर्णाः श्रोत्राः, शङ्खो भालश्रवोन्तरम्, तेषामुदरविवराणि मध्यच्छिद्राणि विशन्प्रविशन् । **उन्मुखीभिरिति** । उन्मुखीभिरूर्ध्वमुखीभिरवनिपतयो राजानस्तेषां मुकुटाः

---

**टिप्प०—**1 हरिणविशेषः । "रल्लकः कम्बले स्मृतः । तथैव कम्बलमृगे" इति हैमः । 2 वस्तुतस्तु 'पत्त्रोर्णतन्तुपाण्डुरः' इत्येव पाठः । पत्त्रसंबन्धिनी ( लकुचादिपत्त्रेषु ऊर्णाया उत्पन्नत्वात् ) ऊर्णा यत्र तत्पत्त्रोर्णम्, परिष्कृतकौशेयवस्त्रं तस्य तन्तुवत् पाण्डुरः । 'पत्त्रोर्णं धौतकौषेयम्' इत्यमरः ।

---

**पाठा०—**१ घटा. २ पत्त्रोर्णतन्तुपाण्डरः. ३ जरठवत्. ४ केशर. ५ हर. ६ वृषाभरणांशुकेन. ७ पताकाः. ८ पाण्डरी. ९ विन्दुलग्नः. १० आविशन्. ११ करिकर्ण. १२ मणिभङ्ग.

इव तुरगमुखविक्षेपविप्लुतैः फेनपल्लवकुसुमस्तबकैः, अनुगम्यमान इव मत्तगजघटाकुम्भभित्तिसंभवेन धातुधूलिवलयेन, आलिङ्ग्यमान इव चलच्चामरकलापविधुतेन[1] पटवासपांसुना, प्रोत्साह्यमान[2] इव नरपतिशेखरसहस्रपरिच्युतैः कुसुमकेशररजोभिः, उत्पातराहुरिव दिवसकरमण्डलमकाण्ड एव पिबन्, नृपप्रस्थानमङ्गल[3]प्रतिसर[4]वलयमालिकासु गोरोचनाचूर्णायमानः, क्रकचकृतचन्दनक्षोदधूसरो रेणुरुत्पपात ।

अपरिमाणबलसंघट्टसमुपचीयमानश्च शनैःशनैः संहरन्निव विश्वमशेषमकालकालमेघपटलमेदुरो विस्तारमुपगन्तुमारेभे । तेन च क्रमेणोपचीयमानबहलमूर्तिना, दिग्विजयमङ्गलध्वजेन, रिपुकुलकमलप्रलयनीहारेण, राजलक्ष्मीविलासपटवासचूर्णेन, अहितातपत्रपुण्डरीकखण्डन[5]-

---

किरीटानि तेषां मणयश्चन्द्रकान्ताद्यास्तत्र पत्रभङ्गमकरिकास्ताभिः पीयमान[1] इव । **तुरगेति** । तुरगाणां वाजिनां मुखान्याननानि तेषां विक्षेपाः प्रसारणक्रियाविशेषास्तेभ्यो विप्लुतैर्गलितैः फेनो मुखकफस्तस्य पल्लवाः परंपरास्त एव कुसुमस्तवकाः पुष्पगुच्छास्तैरभ्यर्च्यमान इव पूज्यमान इव । **मत्तेति** । मत्ता मदयुक्ता ये गजा हस्तिनस्तेषां घटाः समूहास्तासां कुम्भाः शिरसः पिण्डास्त एव भित्तयः कुड्यानि तेभ्यः संभव उत्पत्तिर्यस्यैवंविधेन धातुर्गैरिकादिः कुम्भस्थलशोभार्थमनुलिप्यते तस्य धूलिवलयेन रजोवलयेनानुगम्यमान इव । **चलदिति** । चलन्वेल्लन्यश्चामरकलापो वालव्यजनसमूहस्तेन विधुतेन कम्पितेन पटवासः पिष्टातस्तस्य पांसुर्धूलिस्तेनालिङ्ग्यमान इवाश्लिष्यमाण इव । **नरेति** । नरपतीनां राज्ञां शेखरसहस्रमवतंससहस्रं तस्मात्परिच्युतैः स्रस्तैः कुसुमानां पुष्पाणां केसराणि किञ्जल्काः तेषां रजांसि परागास्तैः प्रोत्साह्यमान[2] इव प्रोत्साहं प्राप्यमाण इव । उत्पातैः[3] उड्डीयमानो राहुः सैंहिकेयस्तद्वदिवाकाण्ड एवाप्रस्ताव एव दिवसकरमण्डलं सूर्यबिम्बं पिबन्ग्रसन् । **नृपेति** । नृपाणां राज्ञां प्रस्थानमङ्गलेषु याः प्रतिसरा हस्तसूत्राणि तेषां वलयमालिका वलयश्रेण्यस्तासु गोरोचनाचूर्णायमानो गोरोचनं प्रसिद्धं तत्क्षोदवदाचरमाणः । **क्रकचेति** । क्रकचं करपत्रकं तेन कृतो यश्चन्दनक्षोदो मलयजचूर्णं तद्वद्धूसरः । अन्वयस्तु प्रागेवोक्तः ।

**अपेति** । अपरिमाणमसंख्यं यद्बलं सैन्यं तस्य संघट्टः संमर्दस्तेन समुपचीयमानः उपचयं प्राप्यमाणः । चकारः पुनरर्थकः । शनैःशनैर्मन्दंमन्दमशेषं समग्रं विश्वं संहरन्निव तिरोधानं कुर्वन्निव । **अकालेति** । अकालेऽप्रस्तावे यत्कालं कृष्णं मेघपटलमभ्रवृन्दं तद्वन्मेदुरः पुष्टो विस्तारमुपसरणमुपगन्तुं प्राप्तुमारेभे । प्रारम्भं चकारेत्यर्थः । **तेनेति** । तेन पूर्वोक्तेन रेणुना । चकारः पुनरर्थः । **क्रमेति** । क्रमेण परिपाट्योपचीयमाना पुष्टिं प्राप्यमाणा बहला दृढा मूर्तिर्देहो यस्य स तेन । **दिगिति** । दिशां ककुभां यो विजय आत्मसात्करणं तत्र यन्मङ्गलं विघ्ननिर्वारकदधिदूर्वादि तस्य ध्वजेन केतुना । मुख्यमङ्गलेनेत्यर्थः[4] । **रिपुरिति** । रिपवो दस्यवस्तेषां कुलानि गोत्राणि तान्येव कमलानि नलिनानि तेषां प्रलयः क्षयस्तस्मिन्नीहारेण । हिमप्रतिमेनेत्यर्थः । **राजेति** । राजलक्ष्मीर्नृपश्रीस्तस्या विलासो विलसनं तदर्थं पटवासचूर्णेन पिष्टातक्षोदेन । **अहितेति** । अहितानां विपक्षाणां यान्यातपत्राणि छत्राणि तान्येव पुण्डरीकाणि कमलानि

---

टिप्प०—1 तदभ्यन्तरगतत्वात् । 2 परागरजसामपि तत्पृष्ठगामित्वात्प्रकृष्टमुत्साहं प्राप्यमाण इवेत्युत्प्रेक्षा । 3 असमये उदयात् उत्पातसूचको यो राहुरित्यर्थो वक्तव्यः । 4 धिक् । दधिदूर्वादेः काऽत्र कथा ? किन्तु–दिग्विजयस्य मङ्गलध्वजेन माङ्गलिककेतुदण्डस्वरूपेण । ध्वजवदुत्थानसादृश्यात् रजसि ध्वजत्वरूपणमित्यर्थः ।

---

पाठा०—१ विधूतेन. २ प्रसार्यमाणः; प्रोत्सार्यमाणः. ३ मङ्गलवलय. ४ प्रतिसरमालिकासु. ५ खण्ड.

तुषारेण,सैन्यभरपीडितमहीतलमूर्च्छान्धकारेण,चलद्बहलजलदकालकदम्बकुसुमोद्गमेन, दिवस-करकरकमलवनोद्दलनद्विपयूथेन, गगनमहीतलप्लावनप्रलयपयोधिपूरेण, त्रिभुवनलक्ष्मीशिरोवगुण्ठनपटेन, महावराहकेसरनिकरकर्बुरेण, प्रलयानलधूमराजिमांसलेन, पातालतलादिवोत्तिष्ठता, चरणेभ्य इव निर्गच्छता, लोचनेभ्य इव निष्पतता, दिग्भ्य इवागच्छता, नभस्तलादिव पतता, पवनादिवोल्लसता, रविकिरणेभ्य इव संभवता, अनपहृतचेतनेन निद्रागमेन, अनवगणितसूर्येणान्धकारेण, अघर्मकालोपस्थितेन भूमिगृहेण, अनुदित-तारागणनिवहेन बहुलनिशाप्रदोषेण, पतितसलिलेन जलधरसमयेन, अभ्रान्तभुजं-

---

तेषां खण्डनं कर्तनं तस्मिंस्तुषारेण नीहारेण। कमलानां विध्वंसन एतस्यैव सामर्थ्यात् । **सैन्येति ।** सैन्यभरेण बलभरेण पीडितमाक्रान्तं यन्महीतलं पृथ्वीतलं तस्य मूर्च्छा निश्चेष्टता तत्रान्धकारेण तिमिरेण । **चलदिति ।** चलद्गच्छद्बहुलं सैन्यं तदेव जलदकालः मेघसमयस्तत्र कदम्बकुसुमोद्गमेन नीपपुष्पोद्गमेन । **दिवसेति ।** दिवसकरः सूर्यस्तस्य कराः किरणास्त एव कमलवनं नलिनखण्डं तस्योद्दलनं मूलत उच्छेदनं तस्मिन्द्विपयूथेन हस्तिसमूहेन । **गगनेति ।** गगनमेव महीतलं पृथ्वीतलं तस्य प्लावनमाक्रमणं तस्मिन्प्रलयः कल्पान्तस्तस्य यः पयोधिः समुद्रस्तस्य पूरेण प्लवेन। **त्रिभुवनेति ।** त्रिभुवनस्य त्रिविष्टपस्य या लक्ष्मीः श्रीस्तस्याः शिरोवगुण्ठनपटेनोत्तमाङ्गाच्छादनवस्त्रेण । **महेति ।** महावराह आदिवराहस्तस्य केसरनिकरः सटासमूहस्तद्वत्कर्बुरेण मलिनेन । **प्रलयेति ।** प्रलयस्य कल्पान्तस्यानलो वह्निस्तस्य या धूमराजिर्दहनकेतन-पङ्क्तिस्तद्वन्मांसलेन पुष्टेन । **पातालेति ।** पातालतलाद्वडवामुखतलादुत्तिष्ठतेवोत्थानं कुर्वतेव । **चरणेति ।** चरणेभ्यः पादेभ्यो निर्गच्छतेव निर्गमनं कुर्वतेव । **लोचनेति ।** लोचनेभ्यो नेत्रेभ्यो निष्पततेव पतनं कुर्वतेव । दिग्भ्य ऐन्द्र्यादिभ्य आगच्छतेवागमनं कुर्वतेव । **नभ इति ।** नभस्तलाद्व्योमतलात्पततेव पतनं कुर्वतेव । **पवनेति ।** पवनात्समीरणादुल्लसतेवोल्लासं प्राप्नुवतेव । **रवीति ।** रविकिरणेभ्यः सूर्यरश्मिभ्यः संभवतेव प्रादुर्भवतेव । **अनेति ।** निद्रायाः प्रमीलाया आगमः समागमस्तेन । अत्र तु स्वप्नादिविलक्षणं बाह्यं ज्ञानं तस्मादित्यत आह—**अनेति ।** अनपहृतमगृहीतं चेतनं चैतन्यं येनैवंविधेनेत्यर्थः । अत एवालौकिक एवेति भावः । **अनवेति ।** अनवगणितोऽनिराकृतः सूर्यो भानुर्येनैवंभूतेनान्धकारेणेव तमिस्रेणेव । **अघर्मेति ।** अघर्मकाल उपस्थितेन प्राप्तेन भूमिगृहेण वसुधामध्यसदनेन । घर्मकाले तु तदीप्सितं स्यादत एवोक्तम्—अघर्मकालेति । 'अधर्मकालोपस्थितेन' इति पाठे धर्मकालस्तपस्याचरणादौ तस्येष्टत्वात् । अतएवोक्तमधर्मकालेति । **अनुदितेति ।** अनुदित उदयं न प्राप्तस्तारागणनिवहो नक्षत्रसमूहो यस्मिन्नेवंभूतेन बहुलनिशा कृष्णपक्षरात्रिस्तस्याः प्रदोषेण यामिनीमुखेन । **पतितेति ।** पतितं स्रस्तं सलिलं पानीयं यस्मिन्नेवंभूतेन जलधरसमयेन वर्षाकालेन । **अभ्रेति ।** अभ्रान्ता अप्रचलिता भुजंगमाः सर्पा यस्मिन्नेवंविधेन

---

**टिप्प०—1 गगनरूपमहीतलस्य प्लावने ( जलद्वारा तिरोधाने ) प्रलयपयोधेः पूरः ( प्रवाहः ) तेन, इति सरलोऽप्यर्थः कठिनीकृतष्टीकयेति धन्याऽसौ । 2 प्रत्येकचरणलग्नतया एवमुत्प्रेक्षा । एवमग्रेऽपि सर्वत्र बोध्यम् । 3 निद्रा चेतनामपहरति, किन्तु इदं रजश्चेतनां न हरति अन्यत्सर्वं निद्रातादात्म्यमिति, अधिकाभेदरूपकम् । प्राचां मते-अधिकारूढवैशिष्ट्यरूपकम् । प्राचीनतराणां ( वामनादीनाम् ) मते तु-एकगुणहानिकल्पनायां समग्रगुणदार्ढ्यं विशेषोक्तिरिति विशेषोक्तिः । एवमग्रे सर्वत्र । 4 'अपतितसलिलेन' इत्येव पाठः । न पतितं वृष्टं वर्षाजलं यत्रेति तदर्थः । सर्वत्र नञ्समासप्रसङ्गे स्पष्टेऽपि तत्पाठाऽपरिज्ञानं मौढ्यमेव टीकाकृतः ।**

---

**पाठा०—१ सेनाभर; सैन्यतुरग. २ बहलबहल. ३ दिवसकरकमल; दिवसकरकिरणकमल. ४ अनपहृतलोचनेनानवगणित. ५ अपतित. ६ भुजङ्गेन.**

गमेन रसातलेन, हरिचरणेनेव संवर्धमानेन त्रिभुवनमलङ्घ्यत रजसा । विकच-कुवलयवनमिव नवोदकेन गगनतलमवष्टभ्यमानमलक्ष्यत क्षीरोद[1]पाण्डुना क्षितिक्षोदेन । बहुलरजोधूसरितमशिशिरकिरणबिम्बमवचूलचामरमिव निष्प्रभमभवत् । दुकूलप[2]टधवला कदलिकेव कलुषतामाजगाम गगनापगा । नरपालबलभा[3]रमसहमाना पुनरिव भारावतारणार्थममरलोकमारुरोह र[4]जोमिषेण मही । निःशेषपीता[5]तपमन्तर्दह्यमानमिव जलधिजलेषु धूसरितरविरथध्वजपटमपतदवनिरजः । मुहूर्तेन च गर्भवासमिव, संहार-सागरजलमिव, कृतान्तजठरमिव, महाकालमुखमिव, नारायणोदरमिव, ब्रह्माण्डमिव विवेश पृथिवी । मृन्मय इव बभूव दिवसः । पु[6]स्तमय्य इव चकाशिरे क[7]कुभः । रेणुरूपेणेव परि-णतमम्ब[8]रतलम् । एकमहाभूत[9]मयमिव त्रैलोक्यमासीत् ।

---

रसातलेन पृथ्वीतलेन । संवर्धनेन वृद्धिं प्राप्यमाणेन । केनेव । हरिचरणेनेव विष्णुपादेनेव । यथा हरिच-रणो बलिध्वंसनार्थं क्रमेण वृद्धिं प्राप्तस्तथायमपीत्यर्थः । एवंविधेन रजसा रेणुना त्रिभुवनं त्रिविष्टपमलङ्घ्यत । क्षीरोदः क्षीरसमुद्रस्तद्वत्पाण्डुना श्वेतरक्तेन[1] क्षितिक्षोदेन वसुधाचूर्णेन गगनतलं व्योमतलमवष्टभ्यमानं व्याप्यमानमलक्ष्यतादृश्यत । केन किमिव । नवोदकेन नवीनपानीयेन विकचानि विकस्वराणि यानि कुवलयान्युत्पलानि तेषां वनमिव । अत्र गगनस्य कृष्णत्वसाम्यात्तदुपमानम् । क्षितिक्षोदस्य शुक्लत्वसाम्यान्न-वोदकोपमानमिति भावः । **बहुलेति** । बहुलं निबिडं यद्रजस्तेन धूसरितं कर्बुरीकृतमशिशिरकिरणबिम्बं चन्द्र[2]सूर्यबिम्बमण्डलमवचूलचामरमिव हस्तिकर्णाभरणवालव्यजनमिव निष्प्रभं विगतद्युत्यभवज्जज्ञे । **दुकू-लेति** । दुकूलं क्षौमं तदेव पटो वस्त्रं तद्वद्धवला श्वेता गगनापगा स्वर्धुनी कलुषतां मलिनतामाजगामा-गतवती । केव । कदलिकेव रम्भेव । यथा रम्भा रजोभिः कृत्वा कृष्णत्वं याति तथेयमित्यर्थः । **नरेति** । नरपालो नृपस्तस्य बलं सैन्यं तस्य भरं वीवधमसहमानेवाक्षममाणेव पुनर्भारावतारणार्थं भारं कुत्रचित्स्था-पयितुममरलोकं स्वर्लोकं रजोमिषेण रेणुच्छलेन मही पृथ्व्यारुरोहावरोहणं चकार । एकवारं गोरूपेण गताभूत् । इदानीं त्वेतद्रूपेणेत्यर्थः । अत एव पुनःशब्दोपादानम् । **निःशेषेति** । तदवनिरजो जलधिजलेषु सामुद्रपानीयेष्वपतत्पपातेत्यर्थः । कीदृशम् । निःशेषः समग्रः पीत आस्वादित आतपः सूर्यालोको येन तदत एवान्तर्दह्यमानमिवान्तर्मध्ये प्रज्वलमानमिव । अनेन जलपाते हेतुर्दर्शितः । पुनः कीदृशम् । **धूस-रितेति** । धूसरितो धूम्रवर्णीकृतो रविरथस्य सूर्यस्यन्दनस्य ध्वजपटो येन तत् । **मुहूर्तेनेति** । मुहूर्तमात्रेण । सर्वत्र सबाह्याभ्यन्तरव्याप्त्योपमानान्याह—**गर्भेत्यादि** । गर्भवासमिव भ्रूणवासमिव । संसारसागरजलमिव कल्पान्तजलधिपानीयमिव । कृतान्तजठरमिव यमोदरमिव । महाकालमुखमिवाखण्डदण्डायमानो यः कालो महाकालस्तस्य मुखमिव । नारायणोदरमिव जनार्दनोदरमिव । ब्रह्माण्डमिव । पृथिवी वसुंधरा विवेश सर्वत्र प्रविष्टवतीति । सैन्यमिति शेषः । गर्भवासादिकमिव रजोरूपेण पृथिवी सैन्यं प्रविष्टेत्यर्थः । अत्र गर्भवासा-दिभिरुपमानैः सैन्यस्यात्युत्कृष्टताद्यनेकधर्मावच्छिन्नत्वं सूचितम् । तदन्तःप्रवेशाच्च रजसोऽपि ततोऽप्या-धिक्यमिति भावः । **मृदिति** । मृन्मय इव मृदो विकार इव । अत्र विकारार्थे मयट् । तद्वदिव दिवसो दिनं बभूव । **पुस्त इति** । पुस्तं लेप्यादिकर्म तन्मय्य इव विलिप्ता इव ककुभो दिशश्चकाशिरे शुशुभिरे । **रेणु-रूपेणेति** । रेणुरूपेण रजोमयत्वेनेवाम्बरतलं व्योमतलं परिणतं तन्मयतां गतम् । **एकमिति** । एकं महा-भूतं पृथिवीलक्षणं तन्मयमिव त्रैलोक्यं त्रिविष्टपमासीद्बभूव ।

**टिप्प०—1 श्वेतेन, इत्येव वक्तव्यम् । कः प्रसङ्गो रक्तत्वस्येति धिक् । 2 चन्द्रपददानं केवलमज्ञानम् ।**

पाठा०—१ क्षणात्क्षीरोदफेनपाण्डुना. २ पट्ट. ३ भरमतिगुरुम्. ४ रजोनिभेन. ५ निपीत. ६ प्रस्थमय्यः. ७ दिशः. ८ अम्बरम्. ९ महाभूतमिव.

अथ निजमदोष्मसंतप्तानां दन्तिनां दिशि दिशि करविवरनिःसृतैः क्षरद्भिः क्षीरोदधवलैः शीकरासारैः, कर्णपल्लवप्रहतिविसृतेन च विसर्पता दानजलबिन्दुदुर्दिनेन, हेषारवविप्रकीर्णैश्च वाजिनां लालाजललवजालकैरुपशमिते रजसि, पुनरपि जातालोकासु दिक्षु, सागरादिवोन्मग्नमालोक्य तदपरिमाणं बलमुपजातविस्मयः सर्वतोदत्तदृष्टिर्वैशम्पायनश्चन्द्रापीडमाबभाषे—'युवराज, किं न जितं देवेन महाराजाधिराजेन तारापीडेन यज्जेष्यसि, का दिशो न वशीकृता या वशीकरिष्यसि, कानि दुर्गाणि न प्रसाधितानि यानि प्रसाधयिष्यसि, कानि द्वीपान्तराणि नात्मीकृतानि यान्यात्मीकरिष्यसि, कानि रत्नानि नोपार्जितानि यान्युपार्जयिष्यसि, के वा न प्रणता राजानः, कैर्न विरचितः शिरसि बालकमलकुड्मलकोमलः सेवाञ्जलिः, कैर्न मसृणीकृताः प्रतिबद्धहेमपट्टैर्ललाटैः सभाभुवः, कैर्न घृष्टाः पादपीठे चूडामणयः, कैर्न प्रतिपन्ना वेत्रल-

---

**अथेति**। तदनन्तरं वैशम्पायनश्चन्द्रापीडमाबभाषेऽभिदधावित्यन्वयः। कस्मिन्सति। रजस्युपशमिते शान्तिं प्राप्ते सति। कैः। **निजेति**। निजमदस्यात्मीयदानस्य य ऊष्मा तापस्तेन संतप्तानां प्रज्वलितानां दन्तिनां हस्तिनां दिशि दिशि प्रतिदिशं कराः शुण्डादण्डास्तेषां विवराणि रन्ध्राणि तेभ्यो विनिःसृतैर्बहिरागतैरत एव क्षरद्भिः स्रवद्भिः। क्षीरोदः क्षीरसमुद्रस्तद्वद्धवलैः शुभ्रैः। शीकरा वातास्तवारिविप्रुषस्तेषामासारा वेगवन्तो वृष्टयस्तैस्तथा। कर्णा एव पल्लवास्तेषां प्रहतिः प्रकर्षेण हननं तया विसृतेनेतस्ततो विक्षिप्तेन। अत एव विसर्पता प्रसरता दानजलबिन्दुदुर्दिनेन मदवारिवृषन्मेघजनिततमसा। तथा वाजिनां तुरङ्गाणां हेषारवा हेषाशब्दास्तैर्विप्रकीर्णैर्विक्षिप्तैः। 'हेषा ह्रेषा तुरङ्गाणां गजानाम्' इति कोशः। एवंविधैः। लालाजलं मुखनिष्ठ्यूतजलं तस्य लवाः खण्डास्तेषां जालकैः समूहैः। 'समवायो निकुरम्बं जालं निवहसंचयौ' इति हैमः। **पुनरपीति**। रजःशमनानन्तरं जातः प्रकटीभूत आलोकः प्रकाशो यास्वेवंभूतासु दिक्षु ककुप्सु। कृष्णत्वसाम्यादाह—**सागरेति**। सागरात्समुद्रादुन्मग्नमिवोपर्यागतमिवापरिमाणमसंख्यं बलं सैन्यमालोक्य निरीक्ष्य। अथ वैशम्पायनं विशेषयन्नाह—**उपेति**। उपजातः समुत्पन्नो विस्मयश्चित्रं यस्य सः। **सर्वत इति**। सर्वतोऽभितो दत्ता प्रेरिता दृष्टिर्येन सः। अन्वयस्तु प्रागेवोक्तः। किमुवाचेत्याह—**युवराजेति**। हे युवराज, देवेन पूज्येन तारापीडेन महाराजाधिराजेन। किमिति प्रश्ने। न जितं वशीकृतम्। सर्वमेव जितमित्यर्थः। यद्भवांस्त्वं जेष्यसि वशीकरिष्यसि। तथा का दिशः ककुभो न वशीकृता नात्मसात्कृता यास्त्वं वशीकरिष्यसि स्वायत्तीकरिष्यसि। कानि दुर्गाणि कोट्टानि न प्रसाधितानि न गृहीतानि यानि त्वं प्रसाधयिष्यसि ग्रहीष्यसि। तथा कानि द्वीपान्तराण्यन्तरीपान्तराणि नात्मीकृतानि यानि त्वमात्मीकरिष्यसि। तथा कान्यनिर्दिष्टाभिधेयानि रत्नानि स्वस्वजातावत्युत्कृष्टवस्तूनि नोपार्जितानि नोपार्जनाविषयीकृतानि यानि त्वमुपार्जयिष्यस्युपार्जनां करिष्यसि। अथ च के राजानो नृपा न प्रणता न नमस्कारं कृतवन्तः। तथा कैर्नृपै राजभिर्न विरचितो न विहितः शिरस्युत्तमाङ्गे बालकमलस्य नवीननलिनस्य कुड्मलो मुकुलं तद्वत्कोमलो मृदुरेतादृक्सेवाञ्जलिः सपर्यानियामकं पाणियोजनम्। तथा कैर्भूपतिभिः प्रतिबद्धाः संनद्धा हेमपट्टाः कनकपट्टा येष्वेवंभूतैर्ललाटैर्भालैः सभाभुवः समाजक्षोण्यो न मसृणीकृता न श्लक्ष्णीकृताः। तथा कै राजभिर्नृपैः पादपीठे पदासने चूडामणयः शिरोमणयो न घृष्टा न घर्षणं प्रापिताः। तथा कैर्नृपैर्वेत्रलता वेतसयष्ट्यो न प्रतिपन्ना न स्वीकृताः। एतेन सर्वे प्रतीहारतां प्राप्ता इति सूचितम्। तथा कैर्भूपति-

---

पाठा०—१ संतप्तानां दिशि दिशि. २ क्षीरोदक्षोद. ३ विप्लुतेन. ४ पुनरुपजात. ५ सागरसलिलादिव. ६ किमजितम्. ७ के न. ८ वेत्रयष्टयः.

ताः, कैर्नोद्धूतानि[1] चामराणि, कैर्नोच्चारिता जयशब्दाः, केषां न पीताः किरीटपत्त्रमकरैः सलिलधारा इव निर्मलास्त्वच्चरणनखमयूखराजयः[2] । एते हि[3] चतुरुदधिजलावगाहदुर्ललित[4]बलमदावलिप्ता दशरथभगीरथभरतदिलीपालर्कमान्धातृप्रतिमाः कुलाभिमानशालिनः सोमपायिनो मूर्धाभिषिक्ताः पृथिव्यां सर्वपार्थिवा रक्षाभूतिमिवाभिषेकपयःपातपूतैश्चूडामणिपल्लवैरुद्वहन्ति मैङ्गल्यां[5] भवच्चरणरजःसंहतिम् । एभिरियमादिपर्वतैरिवापरैर्धृता धरित्री । एतानि चाप्यमीषामाप्लावितदशदिगन्तरालानि सैन्यानि भवन्तमुपासते । तथाहि । पश्य[6] पश्य यस्यां यस्यां दिशि विक्षिप्यते चक्षुस्तस्यां तस्यां रसातलमिवोद्गिरति, वसुधेव सूते, ककुभ इव वमन्ति, गगनमिव[7] वर्षति, दिवस इव सृजति बलानि । अपरिमितबलभराक्रान्ता मन्ये स्मरति महाभारतसमरसंक्षोभस्या[8]द्य क्षितिः । एष शिखरदेशेषु[9] स्खलित[10]मण्डलो ध्वजानगणयन्निव कुतूहला-

---

भिश्चामराणि वालव्यजनानि नोद्धूतानि न वीजितानि । एतेनास्य सर्वेऽपि राजानश्चामरग्राहिणोऽभूवन्निति ध्वनितम् । तथा कैर्नृपतिभिर्जयशब्दा मङ्गलशब्दा नोच्चारिता नोदीरिताः । तथा केषां राज्ञां किरीटानां मुकुटानां पत्त्रमकराः पत्त्रेषु मकराकारा विवृतमुखास्तैः सलिलधारा इव पतत्पानीयपङ्क्तय इव निर्मलाः स्वच्छास्तस्य तारापीडस्य यौ चरणौ पादौ तयोर्नखाः पुनर्भवास्तेषां मयूखाः किरणास्तेषां राजयः श्रेणयो न पीताः न पानविषयीकृताः । एतेन सर्वेऽपि क्षितिभुजस्तारापीडस्य महाराजस्य चरणसपर्यां कृतवन्त इति ध्वनितम् । अथ राज्ञां स्वरूपं वर्णयन्नाह—**एते हीति** । हि निश्चितम् । पृथिव्यां रत्नगर्भायामेते प्रत्यक्षोपलभ्यमाना ये सर्वपार्थिवाः समग्रराजानो रक्षाभूतिमिव रक्षाभस्मेमिवाभिषेकस्य यौवराज्याभिषेकस्य यः पयःपातः सलिलपातस्तेन पूतैः पवित्रैश्चूडामणयः शिरोरत्नानि त एव पल्लवास्तैर्मङ्गल्यां मङ्गले हितां भवच्चरणयोस्त्वत्पादयो रजःसंहतिं रेणुसमूहमुद्वहन्ति धारयन्ति । कीदृशा राजानः । **चतुरिति** । चतुरुदधयश्चतुःसमुद्रास्तेषां जलानामवगाहः तत्संबन्धी महाप्रलयस्तद्वद्दुर्ललितं दुश्चेष्टितं रिपुक्षयकलक्षणं यस्मिन्नेतादृशं बलं सैन्यं तस्य मदोऽहंकारस्तेनावलिप्ता व्याप्ताः । दशरथो रामपिता, भगीरथः सगरपौत्रः, भरत आर्षभिः, दिलीपो रघुपिता, अलर्कः प्रसिद्धः, मान्धाता युवनाश्वतनयः, एतैः प्रतिमाः सदृशाः कुलस्य गोत्रस्य योऽभिमानोऽहंकारस्तेन शालिनः शोभिनः । सोमपायिनः सोमेष्टिकारिणो मूर्धन्यभिषिक्ताः कृताभिषेकाः । **इयमिति** । एभिः पूर्वोक्तव्यावर्णितस्वरूपै राजभिरियं धरित्री वसुधा धृता धारिता । कैरिव । अपरैर्भिन्नैरादिपर्वतैरिव कुलपर्वतैरिव । **एतानीति** । अमीषां राज्ञामेतानि सैन्यानि भवन्तं त्वामुपासते सेवन्ते । कीदृशानि । आप्लावितान्यवगाहितानि दशदिशामन्तरालानि मध्यभागा यैस्तानि । एतदेव दर्शयति—**तथाहीति** । पश्य पश्य विलोकय विलोकय । यस्यां यस्यां दिशि चक्षुर्नेत्रं विक्षिप्यते प्रेर्यते तस्यां तस्यां दिशि रसातलमिव पृथ्वीतलमिवोद्गिरति वमति । बलानि सैन्यानीति सर्वत्र संबध्यते । वसुधेव वसुंधरेव सूते जनयति । ककुभ इव दिश इव वमन्त्युद्गिरन्ति । गगनमिवान्तरिक्षमिव वर्षति वृष्टिं करोति । दिवस इव दिनमिव सृजति प्रणयति । अहमिति मन्ये जानेऽद्य क्षितिर्वसुधाऽपरिमितं यद्बलं सैन्यं तस्य भरोऽतिशयस्तेनाक्रान्ता भरिता सती । **महेति** । महाभारते प्रतिपादितो व्याख्यातो यः समरसंक्षोभः सङ्ग्रामसंमर्दस्तस्य स्मरति स्मरणं करोति । अत्र स्मृत्यर्थधातुभिर्योगे 'मातुः स्मरति' इतिवत्कर्मणि षष्ठी । **एष इति** । एष समी-

---

**टिप्प०**—1 भस्मेवेत्यर्थः । 2 नेदमुचितम् । चतुरुदधिजलेषु योऽवगाहः विजययात्रार्थमवतरणं तेन दुर्ललितानां धृष्टमनोहराणां बलानां सैन्यानां मदेनावलिप्ताः ( गर्विताः ) इत्यर्थः । 3 व्याप्तानीत्यर्थः ।

---

**पाठा०**—१ उद्धूतानि. २ त्वच्चरण. ३ हि ते. ४ दुर्ललितवद. ५ माङ्गल्याम्; मङ्गलदाम्. ६ पश्य यस्याम्. ७ गगनतलम्. ८ महाभारतसंक्षोभस्य; महाभारतबलसमरसंक्षोभस्य. ९ मत्तेभकरटशिखरदेशेषु. १० परिस्खलित.

द्भ्रमति कदलिकावनान्तरेषु मयूखमाली । सर्वतश्च मदजलमुचां करिणामेलापरिमलसुरभिणि वेणिकावाहिनि [१]मदवारिणि निरन्तरमग्ना निपतितमधुकरकुलकल[२]कलकलिला कालिन्दीजलकल्लोल[३]कलितेव भाति भूतधात्री । सै[४]न्यभरसंक्षोभभयात्सरित इव ग[५]गनतलमुत्पतिता [६]आच्छादयन्त्येता दिक्चक्रवालमिन्दुधवला [७]ध्वजपङ्क्तयः । सर्वथा चित्रं यन्नाद्य विघटितसकलकुलशै[८]लसंधिबन्धा सहस्रशः शकलीभवति बलभरेण धरित्री, यद्वा बलभरपीडितवसुधाधारणविधुरा न [९]चलन्ति फणिनां पत्युः फणाभित्तयः' इत्येवं वदत एव तस्य युवराजः समुच्छ्रितानेकतोरणां तृणमयप्राकार[१०]मन्दिरसहस्रसंबाधामुल्लासितधवलपटमण्डपश[११]तशोभिनीमावासभूमिमवाप ।

---

पतरवर्ती कदलि[१]कावनान्तरेषु रम्भाकाननान्तरेषु मयूखमाली सूर्यः शिखरदेशेषु ध्वजाग्रभागेषु स्खलितं स्खलनं प्राप्तं मण्डलं बिम्बं यस्यैवंभूतः प्रतिरोधनिवृत्त्यर्थं ध्वजान्गणयन्निव संख्यां कुर्वन्निव कुतूहलाद्भ्रमतीत्युत्प्रेक्षा । ध्वजानामुच्चतोत्कर्षो व्यङ्ग्यः । कदलिकावनमिति सूर्यप्रदर्शनोपलक्षणमात्रं न त्वन्यत् । करिमदोत्कर्षमाह—**सर्वतश्चेति** । मदजलमुचां मदस्राविणां करिणां हस्तिनामेलायाश्चन्द्रवालाया यः परिमल आमोदस्तद्वत्सुरभिणि सौरभ्ययुक्ते । **वेणिकावाहिनीति** । वेणिका प्रवेणी तया वहति गच्छतीत्येवंशीलं तस्मिन्नेवंभूते मदवारिणि दानजले निरन्तरं मग्ना । समन्ततो जलक्लिन्नेत्यर्थः । एवंभूता भूतधात्री पृथ्वी । तामेव विशिनष्टि—**निपतितेति** । निपतितं पर्यस्तं यन्मधुकरकुलं भ्रमरसमूहस्तस्य यः कलकलः कोलाहलस्तेन कलिला गहना । 'कलिलं गहनं' इति कोशः । अत्र च श्यामताद्रवत्वाभ्यां मदवारिणः, शब्दविशेषैः श्यामतापरिमाणविशेषैश्च भ्रमरकुलस्य साम्येनोत्प्रेक्षते—**कालिन्दीति** । कालिन्दी यमुना तस्या जलकल्लोलैः पानीयतरङ्गैः कलितेव भाति शोभते । **सैन्येति** । सैन्यस्य बलस्य यो भरस्तज्जनितो यः संक्षोभः क्षुब्धता तल्लक्षणं यद्भयं त्रासस्तस्माद्गगनतलं व्योमतलमुत्पतिताः स्वच्छत्वनैर्मल्यसाधर्म्यात्सरित इव नद्य इव एताः प्रत्यक्षोपलक्ष्यमाणा इन्दुवच्चन्द्रवद्धवलाः शुभ्रा ध्वजपङ्क्तयो वैजयन्तीश्रेण्यो दिक्चक्रवालं ककुप्समूहमाच्छादयन्त्यावृण्वन्ति । **सर्वथेति** । सर्वथा सर्वप्रकारेणैतच्चित्रं महदाश्चर्यम् । एतत्किमित्याह—**यदिति** । यदद्य विघटिता विश्लेषं प्राप्ताः सकलाः समग्रा ये कुलशैलास्त[२] एव संधिबन्धा अस्थिबन्धा यस्या एवंभूता धरित्री वसुंधरा बलभरेण सैन्यसंमर्देन सहस्रशः सहस्रधा न शकलीभवति । न सहस्रधा जायत इत्यर्थः । एतदाश्चर्यमित्यर्थः । एतच्छङ्कां दूरीकर्तुं पक्षान्तरमाह—**यद्वेति** । यद्वा बलभरेण सैन्यभरेण पीडिता या वसुधा तस्या धारणं तेन विधुराः पीडिताः फणिनां पत्युः शेषनागस्य फणाभित्तयः फणकुड्यानि न [३]चलन्ति । अत एवेयं तदाधारेण तिष्ठतीत्यर्थः । इत्येवं पूर्वोक्तप्रकारेण तस्य वैशम्पायनस्य वदतो ब्रुवत एव युवराजश्चन्द्रापीड आवासभूमिं निवासभूमिमवाप प्रापेत्यन्वयः । अथ तां विशेषयन्नाह—**समुच्छ्रितेति** । समुच्छ्रितान्युच्चान्यनेकानि तोरणानि बहिर्द्वाराणि यस्यां ताम् । 'बहिर्द्वारं तु तोरणम्' इति कोशः । **तृणेति** । तृणमयो यवसमयो यः प्राकारो वप्रस्तस्मिन्यन्मन्दिरसहस्रं गृहदशशतं तेन [४]न विद्यते संबाधः सांकर्यं यस्याम् । **उल्लासितेति** । उल्लासितमुल्लासं प्राप्तं यद्धवलपटस्य श्वेतवस्त्रस्य मण्डपशतं जनाश्रयशतं तेन शोभिनीं शोभायुक्ताम् ।

**टिप्प०—1** पताकासमूहान्तरालेषु, इत्यर्थोऽयमत्र, कदलिका(रम्भा)काननस्याऽप्रसक्तत्वात् । व्याख्यातं च पूर्वम्–'कदली वैजयन्त्यां च रम्भायां हरिणान्तरे' इति । 2 विघटिताः सकलानां कुलशैलानां सन्धिबन्धाः (संयोगबन्धनानि) यस्याः सा, इति व्याख्योचिता । 3 पृथिव्याः शकलीभवनासंबन्धेऽपि, फणानां स्खलनाऽसंबन्धेपि, तत्संबन्धवर्णनादतिशयोक्तिः । 4 विपरीतमिदम् । मन्दिरसहस्रेण संबाधां गहनां (व्याप्ताम्) इत्यर्थः । 'संकटं ना तु संबाधः कलिलं गहनं समे' इत्यमरः ।

---

**पाठा०—१** मदवारिणि मग्ना निरन्तरनिपतित. २ कलकलकलिता; कलकलालिका; कलकलललिता. ३ कलिका; कवलिता. ४ सैन्यसंक्षोभ. ५ धरणिमपहाय गगन. ६ संच्छादयन्ति. ७ द्विजपङ्क्तयः. ८ शैलबन्धा. ९ दलन्ति. १० मन्दिरसंबाधा. ११ संशोभिनी.

तस्यां चावतीर्य राजवत्सर्वाः क्रियाश्चकार । सर्वैश्च तैः समेत्य नरपतिभिरमात्यैश्च विविधाभिः कथाभिर्विनोद्यमानस्तं दिवसमशेषमभिनवपितृवियोगजन्मना शोकावेगेनायास्यमानहृदयो दुःखेनात्यवाहयत् । अतिवाहितदिवसश्च यामिनीमपि स्वशयनीयस्य नातिदूरे नि[1]हितशयननिषण्णेन वैशम्पायनेन, अन्यतश्च स[2]मीपे क्षिति[3]तले विन्यस्तकुथप्रसुप्तया पत्रलेखया सह, अन्तरा पितृसक्तम्, अन्तरा मातृसंबद्धम्, अन्तरा शुकनासमयं कुर्वन्नालापं [4]नातिजातनिद्रः प्रायेण जाग्रदेव निन्ये । [5]प्रत्यूषे चोत्थाय तेनैव क्रमेणानवरतप्रयाणकैः प्रतिप्रयाणकमुपचीयमानेन सेनासमुदायेन जर्जरयन्वसुंधराम्, आकम्पयन्गिरीन्, उत्सि[6]ञ्चन्सरितः, रिक्तीकुर्वन्सरांसि, चूर्णयन्काननानि, समीकुर्वन्विषमाणि, दलयन्दुर्गाणि, पूरयन्निम्नानि, निम्नयन्स्थलानि [7]प्रतिष्ठता शनैः शनैश्च स्वेच्छया परिभ्रमन्, नमयन्नुन्नतान्, उन्नमयन्न[8]वनतान्, आश्वासयन्भीतान्, [9]रक्षञ्शरणागतान्, उन्मूलयन्विटपकान्, उत्सादयन्कण्टकान्, अभि-

---

तस्यामावासभूमाववतीर्यावतरणं कृत्वा । चकारः पुनरर्थकः । राजवत्तारापीडवत्सर्वाः क्रियाः समग्रकृत्यानि चकार कल्पयामास । **सर्वैश्चेति** । तैः पूर्वोक्तैः सर्वैः समग्रैर्नरपतिभिरमात्यैश्च । अत्र चकारः समुच्चयार्थः । समेत्य नृपान्तिकमागत्य विविधाभिरनेकप्रकाराभिः कथाभिर्वार्ताभिर्विनोद्यमानः क्रीडाविषयीक्रियमाणोऽशेषं समग्रं तं दिवसं दिनमत्यवाहयदत्य[1]क्रामत् । केन । दुःखेन कृच्छ्रेण । अथ युवराजं विशिनष्टि—**अभीति** । अभिनवः प्रत्यग्रो यः पितृवियोगोऽननुभूतजनकविरहस्तस्माज्जन्मोत्पत्तिर्यस्य स तथैवंविधेन शोकावेगेन शोच[2]तावेशेनायास्यमानमायासं प्राप्यमाणं हृदयं चित्तं यस्य स तथा । रात्रिं कथमतिक्रमितवानित्याह—**अतीति** । अतिवाहितोऽतिक्रमितो दिवसो येनैवंभूतो यामिनीमपि त्रियामामपि स्वशयनीयस्य स्वीयशय्यायाः । **नातीति** । नातिदूरे नातिदवीयसि प्रदेशे निहितं स्थापितं यच्छयनं शयनीयं तत्र निषण्णेनोपविष्टेन वैशम्पायनेन । अन्यतश्चान्यस्मिन्वैशम्पायननिषीदनव्यतिरिक्ते समीपे पार्श्ववर्तिनि क्षितितले पृथ्वीतले विन्यस्ता स्थापिता या कुथा परिस्तोमस्तत्र प्रसुप्तया कृतशयनया पत्रलेखाभिधानया करङ्कवाहिन्या सह सार्धम् । अन्तरा मध्ये पितृसक्तं जनकसंबन्धि । अन्तरा मातृसंबद्धम् । अन्तरा शुकनासो वैशम्पायनपिता तद्वार्ताभिर्निष्पन्नमालापमन्योन्यं प्रीतिभाषणं कुर्वन्निदधन्नातिजाता न बाहुल्येन समागता निद्रा प्रमीला यस्य स तथा । प्रायेण बाहुल्येन जाग्रदेव निद्राभाववानेव निन्ये निनाय । **प्रत्यूषे चेति** । प्रत्यूषे प्रभाते चोत्थायोत्थानं कृत्वा तेनैव क्रमेण पूर्वोक्तपरिपाट्यानवरतप्रयाणकैर्निरन्तरगमनैः **प्रतीति** । प्रतिप्रयाणकं प्रयाणं प्रयाणं प्रत्युपचीयमानेन पुष्टतां प्राप्यमाणेन सेनासमुदायेन सैन्यसंघातेन प्रति[3]ष्ठता चलता वसुंधरां धात्रीं जर्जरयञ्छिथिलतामापादयन् । गिरीन्पर्वतानाकम्पयंस्तरलतां नयन् । सरितो नदीः उत्सिञ्चञ्जलं दूरीकुर्वन् । सरांसि तटाकानि रिक्तीकुर्वञ्छून्यीकुर्वन् । जलेनेति शेषः । काननानि वनानि चूर्णयन्क्षोदीकुर्वन्विषमाणि कठिनानि समीकुर्वन्सरलीकुर्वन् । दुर्गाणि कोट्टानि दलयन्खण्डयन् । निम्नानि गभीराणि पूरयन्पूर्णीकुर्वन् । स्थलानि स्थलप्रदेशान् निम्नयन्सगम्भीरतामापादयन् । शनैः शनैर्मन्दं मन्दं स्वेच्छया स्वातन्त्र्येण परिभ्रमन्पर्यटन् । उन्नतानुच्चान् नमयन्नम्रतामापादयन् । अवनतान्प्रणतान् उन्नमयन्नुच्चतां प्रापयन् । भीतांस्त्रस्तानाश्वासयन्नाश्वासनां कुर्वन् । शरणागतांस्त्राणार्थं प्राप्तान्रक्षन्पालयन् । विटपकान्विटानुन्मूलयन्नुन्मूलनां कुर्वन् । कण्टकाञ्छत्रूनुत्सादयन्दूरी-

---

टिप्प०—1 व्यत्यगमयत् इत्यर्थ उचितः । 2 विषादभरेण, इत्यर्थो योग्यः । 3 अनावश्यकमिदम् । अत एव 'प्रातिष्ठत' इति पाठस्तत्रैव वाक्यसमाप्तिश्च ।

---

पाठा०—१ नातिदूरनिषण्णेन. २ शयनीयसमीपे. ३ क्षितितलविन्यस्त. ४ नात्युपजात. ५ प्रत्युषसि. ६ उपसिञ्चन्. ७ प्रातिष्ठत; न्यायवर्त्मनि प्रजाः प्रतिष्ठापयन्प्रातिष्ठत्. ८ नतान्. ९ रक्षयन्.

षिञ्चन्स्थानस्थानेषु राजपुत्रान्, समर्जयन्रत्नानि, प्रतीच्छन्नुपायनानि, गृह्णन्करान्, आदिशन्देशव्यवस्थाम्[1], स्थापयन्स्वचिह्नानि, कुर्वन्कीर्तनानि, लेखयञ्शासनानि, पूजयन्नग्रजन्मनः, प्र[3]णमन्मुनीन्, पालयन्नाश्रमान्, जनानुरागं[4] प्रकाशयन्विक्रमम्, आरोपयन्प्रतापम्, उपचिन्वन्यशः, विस्तारयन्गुणान्, प्रख्यापयन्सच्चरितम्[6], आमृद्नंश्च[7] वेलावनानि, बलरेणुभिराधूसरीकृतसकलसागरसलिलः पृथिवीं विचचार । प्रथमं प्राचीम्, ततस्त्रिशङ्कुतिलकाम्, ततो वरुणलाञ्छनाम्, अनन्तरं च सप्तर्षिताराशबलां दिशं जिग्ये[8] । वर्षत्रयेण चात्मीकृताशेषद्वीपान्तरं[9] सकलमेव चतुरुदधि[10]खातवलयपरिखाप्रमाणं बभ्राम महीमण्डलम् । ततः क्रमेणावर्जित[11]सकलभुवनतलः प्रदक्षिणीकृत्य वसुधां[12] परिभ्रमन्, कदाचित्कैलाससमीपचारिणां हेमजकूटनाम्नां[13]

---

कुर्वन् । **स्थानस्थानेष्विति** । स्थानानि च स्थानानि च स्थानस्थानानि तेषु राजपुत्रान्नृपसुतानभिषिञ्चन्नभिषेकं कुर्वन् । रत्नानि स्वस्वजातावुत्कृष्टवस्तूनि समर्जयन् । उपायनानि प्राभृतानि प्रतीच्छन्स्वीकुर्वन् । करान्दण्डान्गृह्णन्ग्रहणं कुर्वन् । देशव्यवस्थां जनपदमर्यादामादिशन्नाज्ञापयन् । स्वचिह्नानि स्वस्यागमननिमित्तानि स्थापयन्स्थापनां कुर्वन् । कीर्तनानि[1] हरिगुणगानानि कुर्वन् । शासनानि ग्रामपट्टकादीनि लेखयंल्लिपीकारयन् । अग्रजन्मनो ब्राह्मणान्पूजयन्नर्चयन् । मुनीनृषीन्प्रणमन्नमस्कुर्वन् । आश्रमान्ब्रह्मचारिप्रभृतीन्पालयन्प्रतिपालनां कुर्वन् । जनानामनुरागो[2] यथा स्यादेवंभूतं विक्रमं पराक्रमं प्रकाशयन्प्रकटयन् । प्रतापं कोशदण्डजं तेज आरोपयन्स्थापयन् । यशः सर्वदिग्गामुकमुपचिन्वन्पुष्टीकुर्वन् । गुणाञ्शौर्यादीन्विस्तारयन्प्रथयन् । सच्चरितं शोभनं वृत्तं लोकेषु प्रख्यापयन्प्रकटीकुर्वन् । वेलावनानि समुद्रतीरोद्भवोपवनान्यामृद्नन्नाभञ्जयन् । किंविशिष्टः । बलरेणुभिः सैन्यधूलिभिरासमन्ताद्धूसरीकृतमीषत्पाण्डुरीकृतं सकलः समग्रो यः सागरः समुद्रस्तस्य सलिलं पानीयं येन सः । पृथिवीं वसुधां विचचार बभ्राम । प्रथमं क जग्मिवानित्याशयेनाह—**प्रथममिति** । प्रथममादौ प्राचीं प्राग्दिशम् । **तत इति** । ततः तद्गमनानन्तरं त्रिशङ्कुर्नृपतिरेव तिलको यस्यां सा तथा ताम् दक्षिणामित्यर्थः । इदं च पुराणे प्रसिद्धम् । ततो वरुणः प्रचेता लाञ्छनं यस्याः सा ताम् । पश्चिमामाशामित्यर्थः । **अनन्तरं चेति** । ततः पश्चात्सप्तर्षीणां मरीचिप्रमुखाणां तारा नक्षत्राणि ताभिः शबलां कर्बुरां दिशमुदीचीं जिग्ये[3] । जितवानित्यर्थः । **वर्षेति** । वर्षत्रयेणाब्दत्रयेण । **सकलेति** । सकलमेव समग्रमेव महीमण्डलं वसुधावलयं बभ्राम भ्रमणं चकारेत्यन्वयः । अथ महीमण्डलं विशिनष्टि—**आत्मीति** । आत्मीकृतं स्वायत्तीकृतमशेषं समग्रं द्वीपान्तरमन्तरीपान्तरं यस्मिंस्तत्तथा । **चतुरिति** । चतुरुदधयश्चतुःसमुद्रा एव खातवलयं तदेव परिखाप्रमाणं यस्य तत् । ततस्तज्जयानन्तरं क्रमेण परिपाट्या । **अवेति** । अवर्जितं स्वायत्तीकृतं सकलभुवनतलं समग्रवसुधातलं येन स एवंभूतः । वसुधां प्रदक्षिणीकृत्य पृथ्व्याः प्रदक्षिणां दत्त्वा परिभ्रमन्नितस्ततः पर्यटन् । कदाचित्कस्मिंश्चित्समये । **कैलासेति** । कैलासो रजताद्रिस्तत्समीपचारिणां तत्पार्श्वगामिनां हेमजकूट इति नाम येषामेवंविधानां

---

टिप्प०—1 आत्मनो विक्रम-प्रतापादेर्घोषणाः इत्यर्थं उचितः, हरिगुणगानस्य समरयात्रायामप्रसक्तत्वात् । 2 स्पष्टं प्रक्रमभङ्गः । सर्वत्र स्वकर्मसहितं शत्रन्तमुपात्तं न क्वचित्क्रियाविशेषणम् । अत एव 'जनयन् जनानुरागम्' इत्येव पाठः । 3 जि-धातोः परस्मैपदित्वादिदमशुद्धम् । अतः 'विजिग्ये' इत्येव पाठः । 4 धन्यः ! 'हेमजकूट' इत्यपि कस्याश्चिज्जातेर्नाम भवतीति यस्य परिज्ञानं सोपि टीकाकरणे व्याप्रियते इति महद्भागधेयमस्माकम् । अस्तु 'हेमकूटधाम्नाम्' इत्येव पाठः । हेमकूटो हिमालयादुत्तरस्थितः पर्वतविशेषो धाम ( निवासः ) येषां तेषामिति तदर्थः ।

---

पाठा०—१ व्यवस्थाः. २ पूर्वाः प्रशस्तीः. ३ प्रीणयन्. ४ जनयञ्जनानुरागम्. ५ ख्यापयन्. ६ सच्चरितमुद्द्योतयन्पौरुषम्. ७ आमृद्नन्वेला; आमर्दयंश्च वेला. ८ विजिग्ये. ९ एवं वर्षत्रयेणात्मी. १० अम्भोधि. ११ निर्जितं; आवर्जितं. १२ वसुधराम्. १३ हेमकूटधाम्नाम्. हेमजटानाम्नाम्.

किरातानां सुवर्णपुरं नाम निवासस्थानं नातिविप्रकृष्टं[1] पूर्वजलनिधेर्जित्वा जग्राह । तत्र च निखिलधरणी[2]तलपर्यटनखिन्नस्य निजबलस्य विश्रामहेतोः कतिपयान्दिवसानतिष्ठत् ।

एकदा तु तत्रस्थ एवेन्द्रायुधमारुह्य मृगयां[3]निर्गतो विचरन्कानने[4] शैलशिखराद[5]वतीर्णं यदृच्छया किंनरमिथुनमद्राक्षीत् । [6]अपूर्वतया तु समुपजातकुतूहलः कृतग्रहणाभिलाषस्तत्समीपमादरादुपसर्पिततु[7]रगः [8]समुपसर्पन्, अदृष्टपूर्वपुरुषदर्शनत्रासप्रधावितं च [9]तत्पलायमानमनुसरन्ननवरतपा[10]णिप्रहारद्विगुणीकृतजवेनेन्द्रायुधेनैकाकी निर्गत्य [11]बलसमूहात्सुदूरमनु[12]ससार । '[13]अत्र गृह्यते, इदं गृहीतम्, इदं गृहीतम्' इत्यतिरभसाकृष्टचेता महाजवतया तुरंगमस्य मुहूर्तमात्रेणैकपदमिवासहायस्तस्मात्प्रदेशात्पञ्चदशयोजनमात्रमध्वानं जगाम । तच्चानुबध्यमानमालोकयत एवास्य संमुखापतितमचलतुङ्गशिखरमारुरोह । आरूढे च तस्मिञ्शनैः शनैस्तदनुसारिणीं निवर्त्य दृष्टिम्, अचलशिखरप्रस्त[14]रप्रतिहतगतिप्रसरो विधृततुरङ्[15]गश्चन्द्रापीडस्तस्मिन्काले

---

किरातानां भिल्लानां म्लेच्छानां वा सुवर्णपुरं नाम निवासस्थानं जित्वा जयं कृत्वा जग्राह गृहीतवान् । कीदृशम् । पूर्वजलनिधेः पूर्वसमुद्रान्नातिविप्रकृष्टं नातिदूरम् । **तत्र चेति** । तस्मिन्स्थले निखिलं समग्रं यद्धरणीतलं पृथ्वीतलं तत्र पर्यटनं परिभ्रमणं तेन खिन्नस्य[1] रीणस्य निजबलस्यात्मीयसैन्यस्य विश्रामहेतोः क्लान्तिनिवृत्त्यर्थं कतिपयान्कियतो दिवसान्वासरानतिष्ठदवस्थानमकारयत् ।

**एकदा त्विति** । एकस्मिन्समये तत्रस्थ एव तस्मिन्स्थाने स्थित एवेन्द्रायुधमश्वमारुह्यारोहणं कृत्वा मृगयार्थमाखेटकार्थं निर्गतः कानने वने विचरन्गच्छञ्शैलशिखराद्गिरिशृङ्गादवतीर्णमुत्तीर्णं यदृच्छया स्वेच्छया किंनरमिथुनं तुरङ्गवदनयुग्ममद्राक्षीदवलोकयांचकार । अपूर्वतयाद्भुततया । तु पुनरर्थकः । समुपजातं समुत्पन्नं कुतूहलमाश्चर्यं यस्य सः । **कृतेति** । कृतो विहितो ग्रहणे स्वीकारेऽभिलाष इच्छाविशेषो येन सः । **तदिति** । तस्य किंनरमिथुनस्य समीपं पार्श्वमादराद्बहुमानादुपसर्पितस्तद्दिशं प्रति प्रेरितस्तुरगो वाहो येन स तथा समुपसर्पन्समीपे गच्छन् । **अदृष्टेति** । अदृष्टपूर्वमनवलोकितपूर्वं यत्पुरुषदर्शनं मानुषेक्षणं तस्माद्यस्त्रास आकस्मिकं भयं तेन प्रधावितं प्रकर्षेण प्रतिष्ठितं प्रस्थितं तत्किंनरमिथुनं पलायमानं पलायनं कुर्वाणमनुसरन्ननुगच्छन् । **अनेति** । अनवरतं निरन्तरं यः पाणिप्रहारो हस्ताभिघातस्तेन द्विगुणीकृतो द्विभागाधिकीभूतो जवो वेगो यस्यैवंविधेनेन्द्रायुधेनाश्वेनैकाक्यसहायो बलसमूहात्सैन्यसंदोहान्निर्गत्य निर्गमनं कृत्वा सुदूरमतिविप्रकृष्टमनुससार पश्चाद्ययौ । **अत्रेति** । अत्रास्मिन्स्थले गृह्यते ग्रहणविषयीक्रियते । मयेति शेषः । इदं किंनरमिथुनं गृहीतम् । इदं गृहीतमिति पूर्वोक्तप्रकारेणातिरभसादतिवेगेनाकृष्टमाकर्षितं चेतो यस्य स तथा च । अथ च तुरंगमस्याश्वस्य महाजवतया महावेगतया मुहूर्तमात्रेण घटिकाद्वयेनैकपदमिवैकवारमिव । अत्र सादृश्य इवशब्दः । एकवारसदृशमित्यर्थः । असहायोऽद्वितीयस्तस्मात्प्रदेशात्पञ्चदशयोजनमात्रं पञ्चदशयोजनपरिमितमध्वानं मार्गं जगाम ययौ । अस्य राज्ञस्तत्पूर्वोक्तमनुवध्यमानमनुबन्धविषयीक्रियमाणं किंनरमिथुनमालोकयत एव विलोकयत एव संमुखापतितमभिमुखागतम् । शिखरविशेषणम् । अचलतुङ्गशिखरं पर्वतोच्चसानुमारुरोहारोहणं चकार । **आरूढेति** । तस्मिन्किंनरमिथुन आरूढे सति शनैः शनैर्मन्दं मन्दं तदनुसारिणीं तत्पृष्ठगामिनीं दृष्टिं चक्षुः निवर्त्य निवर्तनविषयीकृत्य । **अचलेति** । अचलस्य पर्वतस्य शिखराणि सानूनि तेषां प्रस्तरा ग्रावाणस्तैः प्रतिहतः प्रतिरुद्धो गतिप्रसरो गमनप्रचारो यस्य सः । अत एव विधृतो गमनात्प्रतिषिद्धस्तुरङ्ग इन्द्रायुधाश्वो येनैवंविधश्चन्द्रापीडस्तस्मिन्काले तस्मिन्समये समुपारूढो

---

**टिप्प०**—1 परिश्रान्तस्येति सरलोऽर्थः । 2 अदृष्टपूर्वस्य पुरुषस्य दर्शनात् त्रास इत्युचितम् ।

**पाठा०**—१ विप्रकृतम्. २ धरणि. ३ विनिर्गतः. ४ काननम्. ५ शिखरावतीर्णम्. ६ अपूर्वदर्शनतया. ७ तुरङ्ग. ८ समुपससर्प. ९ पलायमानमनवरत. १० पार्ष्णिप्रहार. ११ निजबल. १२ उपससार. १३ अत्र गृह्यतेऽत्र गृह्यते. १४ प्रस्तरशकल. १५ तुरंगमः.

[1]समुपारूढश्रमस्वेदार्द्रशरीरमिन्द्रायुधमात्मानं चावलोक्य[2] क्षणमिव विचार्य स्वयमेव विहस्या[3]चिन्तयत्—'किमिति निरर्थकमयमात्मा मया शिशुनेवायासितः । किमनेन गृहीतेनागृहीतेन वा किंनरयुगलेन प्रयोजनम् । यदि[4] गृहीतमिदं ततः किम्, अथ न गृहीतं ततोऽपि किम् । अहो मे मूर्खतायाः प्रकारः । अहो यत्किंचनकारितायामादरः । अहो निरर्थकव्यापारेष्वभिनिवेशः । अहो बालिशचरितेष्वासक्तिः । साधुफलं कर्म क्रियमाणं वृथा जातम् । अवश्यकर्तव्या[5] क्रिया प्रस्तुता विफलीभूता । सुहृत्कार्यमुपपाद्यमानं नोपपन्नम् । राजधर्मः प्रवर्तितो न निष्पन्नः । गुर्वर्थः प्रारब्धो न परिसमाप्तः । विजिगीषुव्यापार[6]प्रयत्नो न सिद्धः । कस्मादहमाविष्ट इवोत्सृष्ट[7]निजपरिवार एतावतीं भूमिमायातः । कस्माच्च मया निष्प्रयोजनमिदमनुसृतमश्वमुखद्वयमिति विचार्यमाणे सत्यय[8]मात्मैव मे पर इव हासमुपजनयति । न जाने कियताध्वना विच्छिन्नमितो बलमनुयायि[9] मे । महाजवो हीन्द्रायुधो निमेष[10]मात्रेणातिदूर-

---

व्याप्तो यः श्रमस्वेदस्तेनार्द्रं खिन्नं शरीरं देहो यस्यैवंविधमिन्द्रायुधमात्मानं चावलोक्य निरीक्ष्य क्षणमिव क्षणसदृशं विचार्य विमर्शनं कृत्वा स्वयमेवात्मनैव विहस्य हास्यं विधायाचिन्तयच्चिन्तितवान् । किमिति हेतोः । अयमात्मा मया शिशुनेव बालकेनेव निरर्थकं आयासितः प्रयासं प्रापितः । **किमनेनेति** । अनेन किंनरयुगलेन किंनरमिथुनेन गृहीतेनागृहीतेन वा किं प्रयोजनं किं फलम् । यदीति चेदित्यर्थे । चेदिदं किंनरमिथुनं गृहीतं ततः किम् । न किमपीत्यर्थः । अथ न गृहीतं ततोऽपि किम् । न किमपीत्यर्थः । अहो इत्याश्चर्ये । मे मम मूर्खताया मूढतायाः प्रकारो भेदः । **अहो इति** । यत्किंचन करोतीत्येवंशीलो यत्किंचनकारी तस्य भावस्तत्ता तस्यामादरो बहुमानः । अहो इति पूर्ववत् । निरर्थका निःप्रयोजना ये व्यापारास्तेष्वभिनिवेशो हठः । अहो इति पूर्ववत् । बालिशं निन्दितं चरितं चेष्टितं येषामेवंविधेषु कृत्येष्वासक्तिस्तन्मयत्वम् । कर्मधारयो वा । **साध्विति** । साधु शोभनं फलं यस्यैवंविधं कर्म क्रिया क्रियमाणं विधीयमानं वृथा जातं निष्फलं जज्ञे । **अवेति** । अवश्यकर्तव्यावश्यकरणयोग्या क्रिया[3] प्रस्तुता प्रारब्धा विफलीभूता निष्फलीभूता । **सुहृदिति** । सुहृत्कार्यं मित्रकार्यमुपपाद्यमानं विधीयमानं नोपपन्नं न निष्पन्नम् । **राजेति** । राजधर्मो नीतिधर्मः प्रवर्तितः सर्वत्र विहितो न निष्पन्नो न सिद्धिं गतः । गुरोरर्थः पितुरर्थः प्रारब्धः प्रस्तुतो न परिसमाप्तो न परिपूर्णतां गतः । विजेतुमिच्छवो विजिगीषवस्तेषां व्यापारो व्याहृतिस्तस्मिन्प्रयत्न उद्योगो न सिद्धो न निष्पन्नः । कुत एतन्न जातमिति पराभिप्रायमाशङ्क्याह—**कस्मादिति** । कुतो हेतोरित्यर्थः । उत्तरं प्रदर्शयन्नाह—**अहमिति** । अहमाविष्ट इव भूताभिभूत इवोत्सृष्ट उज्झितो निजपरिवारः स्वकीयपरिच्छदो येनैवंभूतः । एतावतीमियत्प्रमाणां भूमिं वसुधामायात आगतः । कस्माद्धेतोः । मया निष्प्रयोजनं निरर्थकमिदमश्वमुखद्वयं किन्नरमिथुनमनुसृतमाश्रितमिति विचार्यमाणे सति विचिन्त्यमाने सत्ययमात्मैव स्वचेतन एव मे मम पर इवान्य इव हासं हास्यमुपजनयति निष्पादयति । न जाने नाकलयामि कियताध्वना कियन्मार्गेण विच्छिन्नं विच्छेदं प्राप्तमितो मत्सकाशाद्बलं सैन्यमनुयाय्यनुगमनशीलमित्यर्थः । मे मम । महाजवो महावेगः । हि निश्चितम् । इन्द्रायुधो निमेषमात्रेण चक्षुषो निमीलनमात्रेणातिदूरमतिविप्रकृष्टमतिक्रामत्यतिक्रमणं

---

**टिप्प०**—1 बालिशचरितेषु मूढजनकर्तव्येष्वित्येवार्थ उचितः, किं बहुव्रीहिणा । 2 दिग्विजयो वृथाऽभवदित्यर्थः, इतः परावर्तनाभावेन तत्फलभोगासंभवात् । 3 दिग्विजयेन दुष्टनिग्रहण–शिष्टानुग्रहणरूपा । 4 व्यवहृतिरित्याशयः ।

---

**पाठा०**—१ समारुढ. २ चालोक्य. ३ अन्वचिन्तयत्. ४ गृहीतम्. ५ कर्तव्यक्रिया. ६ व्यापारः. ७ उत्सृज्य निजपरिवारम्; उत्कृष्टपरिवार एव तावतीम्. ८ यत्सत्यम्. ९ अन्वयायि. १० निमिष.

मतिक्रामति । न चागच्छता मया तुरगवेगवशात्किन्नरमिथुने बद्धदृष्टिना[3]स्मिन्नविरलतरुशतशाखागुल्मलतासंतानगहने निरन्तरनिपतितशुष्कपर्णावकीर्णतले महावने पन्था निरूपितो येन प्रतिनिवृत्त्य यास्यामि । न चास्मिन्प्रदेशे प्रयत्नेनापि परिभ्रमता मया मर्त्यधर्मा कश्चिदासाद्यते यः सुवर्णपुरगामिनं पन्थानमुपदेक्ष्यति । श्रुतं हि मया बहुशः कथ्यमानमुत्तरेण सुवर्णपुरं सीमन्तलेखा पृथिव्याः सर्वजनपदानाम्, ततः परतो निर्मानुषमरण्यम्, तच्चातिक्रम्य कैलासगिरिरिति । अयं च कैलासः । तदिदानीं प्रतिनिवृत्त्यैकाकिना स्वयमुत्प्रेक्ष्योत्प्रेक्ष्य दक्षिणामाशां केवलमङ्गीकृत्य गन्तव्यम् । आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव' इत्यवधार्य वामकरतलचलितरश्मिपाशस्तुरंगमं व्यावर्तयामास ।

निवर्तिततुरंगमश्च पुनश्चिन्तितवान्—'अयमुद्भासितप्रभाभास्वरो भगवान्भानुरधुना दिवसश्रियो रशनामणिरिव मध्यमलंकरोति । परिश्रान्तश्चायमिन्द्रायुधः । तदेनं तावदागृहीतक-

---

करोति । **न चेति** । अस्मिन्महावने महाविपिन आगच्छतागमनं कुर्वता मया पन्था मार्गो न च निरूपितो न ज्ञातः । कस्मात् । तुरगस्येन्द्रायुधस्य यो वेगो रयस्तद्वशात्तदनुरोधात् । कीदृशेन मया । **बद्धेति** । तस्मिन्किंनरमिथुने बद्धा स्थापिता दृष्टिर्येन स तथा तेन । अथ वनं विशेषयन्नाह—**अविरलेति** । अविरलानि निबिडानि । अन्योन्यसंबद्धानीत्यर्थः । यानि तरुशतानि वृक्षशतानि, शाखा स्कन्धशाखाः, गुल्मा विटपाः, लताः, शाखाभ्यः प्रादुर्भूताः शाखाः, एतेषां संतानं परम्परा तेन गहने कलिले । **निरेति** । निरन्तरं प्रत्यहं निपतितानि स्रस्तानि यानि शुष्कपर्णानि शुष्कपत्राणि तैरवकीर्णं व्याप्तं तलमधोभागो यस्य तस्मिन्[1] । येन पथा प्रतिनिवृत्त्य व्याघुट्य यास्यामि गमिष्यामि । **न चेति** । अस्मिन्प्रदेशे प्रयत्नेनाप्युद्योगेनापि परिभ्रमता परिभ्रमणं कुर्वता मया कश्चित् मर्त्यधर्मा मनुष्यो न चासाद्यते न प्राप्यते यः पुमान्सुवर्णपुरगामिनं पन्थानं मार्गमुपदेक्ष्यत्युपदेशं करिष्यति । मया बहुशोऽनेकवारं कथ्यमानं प्रतिपाद्यमानम् । जनैरिति शेषः । श्रुतमाकर्णितमुत्तरेण सुवर्णपुरम्[2] । तद्विशेषयन्नाह—**सर्वेति** । सर्वजनपदानां[3] समग्रदेशानां पृथिव्या वसुधायाः सीमन्तलेखा सीमन्तः[4] केशवेशस्तस्य लेखेव लेखा । ततः परतोऽग्रतो निर्मानुषं मनुष्यरहितमरण्यं काननम् । तदरण्यमतिक्रम्योल्लङ्घ्य कैलासगिरिरिति । **अयं चेति** । अयं प्रत्यक्षः कैलासः । तदिदानीं प्रतिनिवृत्त्य व्याघुट्यैकाकिना मया स्वयमुत्प्रेक्ष्योत्प्रेक्ष्य विलोक्य विलोक्य दक्षिणामपाचीं आशां दिशं केवलमङ्गीकृत्य स्वीकृत्य गन्तव्यं गमनीयम् । आत्मना कृतानां स्वयमाचरितानां दोषाणां दुष्कर्मणां नियतं निश्चितं फलमात्मनैव स्वयमेवानुभवितव्यमनुभवविषयीकर्तव्यम् । इत्यवधार्येति निश्चित्य । **वामेति** । वामकरतलेन सव्यपाणितलेन चलितैः[5] कम्पितो रश्मिपाशः खलीनं येन स तुरंगममिन्द्रायुधं व्यावर्तयामास निवर्तयामास ।

**निवर्तिततुरंगमश्चेति** । निवर्तितः पश्चाद्वलितस्तुरंगम इन्द्रायुधो येनैवंभूतः पुनस्तदनन्तरं चिन्तितवान्ध्यातवान् । तदेव दर्शयति—**अधुनेति** । अधुना सांप्रतमयमुद्भासितातिप्रकटीभूता या प्रभा कान्तिस्तया भास्वरः शोभमानो यो भगवानैश्वर्यवान्भानुः सूर्यो दिवसश्रियो वासरलक्ष्म्या रशनामणिरिव मेखलारत्नमिव मध्यमवलग्नम् । सूर्यपक्षे मध्यं मध्यभागम् । अलंकरोति विभूषयति । परिश्रान्तः खिन्नश्चायमिन्द्रायुधः । तत्तावदादावेनमश्वम् । **आगृहीतेति** । आगृहीता आत्ताः कतिपये कियन्तो दूर्वायाः शतपर्वायाः प्रवालकवलाः

---

**टिप्प०—1 अनेन हि घोटकपदचिह्नदर्शनेन परावर्तनमप्यसंभवमिति सूचितम् । 2 सुवर्णपुरम् उत्तरेण सुवर्णपुरादुत्तरदिशि, इत्यन्वयो योग्यः । 'एनपा द्वितीया' इति एनप्प्रयोगे द्वितीया । 3 अत्राप्यन्वये भ्रान्तष्टीकाकारः । पृथिव्याः सर्वजनपदानां ( लोकनिवासस्थानानाम् ) सीमान्तलेखा अवधिः । इत्यन्वयः । 4 इदमज्ञानम् । 5 वलित इत्येव पाठः । परावर्तनार्थं तिर्यक्कृत्य धृत इति तदर्थः ।**

---

**पाठा०—**१ अपचक्राम. २ निबद्ध. ३ तस्मिन्. ४ पतित. ५ परिभ्रमता मर्त्यधर्मा. ६ वलित. ७ व्यावर्तिततुरङ्गश्च. ८ नभस्तलमध्यम्.

तिपयदूर्वाप्रवालकवलं कस्मिंश्चित्सरसि शिलाप्रस्रवणे वा सरिदम्भसि वा स्नातपीतोदकमपनीतश्रमं कृत्वा स्वयं च सलिलं पीत्वा कस्यचित्तरोरधश्छायायां मुहूर्तमात्रं विश्रम्य ततो गमिष्यामि' इति चिन्तयित्वा सलिलम[1]न्वेषमाणो मुहुर्मुहुरितस्ततो दत्तदृष्टिः पर्यटन्नलिनीजलावगाहोत्थितस्याचिरादपक्रान्तस्य[2] महतो गिरिचरस्य[4] वनगजयूथस्य चरणोत्थापितैः[5] पङ्कपटलैरार्द्रीकृतम्, करावकृष्टैश्च[6] समृणालमूलनालैः कमलकलापैः कल्माषितम्, आर्द्रार्द्रैश्च शैवलप्रवालैः श्यामलितोद्देशम्, उद्दलितैश्च कुमुद[7]कुवलयकह्लारकुड्मलैरन्तरान्तरा विच्छुरितम्, उत्खातैश्च सकर्दमैः शालूककन्दैराकीर्णम्, आखण्डितैश्च[8] कुसुमस्तबकसारै[9]र्वनपल्लवैराच्छादितम्, आलूनाभिश्च कुसुमोपविष्टोल्लसत्षट्पदाभिर्वनलताभिराकुलितम्[10], अभिनवकुसुम[11]परिमलवाहिना च तमालपल्लवसरस[12]श्यामेन मदजलेन[13] सर्वतः सिक्तं मार्गमद्राक्षीत् ।

उपजातजलाशयशङ्कश्च[14] तं प्रतीपमनुसरन्नुद्ग्रीवद्दश्यै[15]रुपरिच्छत्रमण्डलाकारैः सरलसाल-

---

पल्लवग्रासा येन स तम् । कस्मिंश्चिदनिर्दिष्टनाम्नि सरसि कासारे शिलाप्रस्रवणे वा निर्झरे वा सरिदम्भसि वा नदीजले वा । **स्नात इति** । पूर्वं स्नातः पश्चात्पीतमुदकं येन स तम् । अत एवापनीतश्रमं दूरीभूतक्लमं कृत्वा विधाय स्वयं च सलिलं पानीयं पीत्वा पानं कृत्वा कस्यचित्तरोरनिर्दिष्टनाम्नो वृक्षस्याधश्छायायां मुहूर्तमात्रं विश्रम्य विश्रामं गृहीत्वा ततः पश्चाद्गमिष्यामि गमनं करिष्यामि । इति पूर्वोक्तं चिन्तयित्वा ध्यात्वा सलिलमम्भोऽन्वेषमाणो गवेषमाणो मुहुर्मुहुर्वारंवारमितस्ततो दत्ता दृष्टिर्येनैवंभूतः पर्यटन्परिभ्रमन्मार्गमध्वानमद्राक्षीदपश्यदित्यन्वयः । अथ मार्गं विशेषयन्नाह—**नलिनीति** । नलिनी कमलिनी तया संयुक्तं जलं नलिनीजलं तस्यावगाह आलोडनं तस्मादुत्थितस्य निःसृतस्याचिरात्स्वल्पकालादपक्रान्तस्य पश्चाद्वलितस्य महतो महीयसो गिरिचरस्य पर्वतचारिणो वनगजयूथस्य हस्तिसमूहस्य चरणोत्थापितैः क्रमोद्धूतैः पङ्कपटलैः कर्दमसमूहैरार्द्रीकृतं समुन्नीकृतम् । तथा करावकृष्टैः करैः शुण्डादण्डैरवकृष्टैराकर्षितैर्मृणाला बिसमूलानि च नालानि च तैः सहवर्तमानैः कमलकलापैः कल्माषितं चित्रवदाचरितमार्द्राणि चार्द्राणि चार्द्रार्द्राणि तैः शैवलप्रवालैर्जलशूककिसलयैः श्यामलितः कृष्णीभूत उद्देशः प्रदेशो यस्य स तम् । उद्दलितैरवकृष्टैः कुमुदं श्वेतोत्पलम्, कुवलयं कुवेलम्, कह्लारं सौगन्धिकम्, तस्य कुड्मलानि मुकुलानि तैरन्तरान्तरा मध्ये मध्ये विच्छुरितं व्याप्तम् । उत्खातैरुत्पाटितैः सकर्दमैः सहपङ्केन वर्तमानैः शालूककन्दैरुत्पलानां कन्दैः । 'उत्पलानां तु शालूकम्' इति कोशः । आकीर्णं व्याप्तम् । आ समन्तात्खण्डितैश्छिन्नैः कुसुमानां पुष्पाणां स्तबकैर्गुच्छकैः सारैः प्रधानैर्वनपल्लवैररण्यकिसलयैराच्छादितमावृतम् । आलूनाभिश्छिन्नाभिः कुसुमोपविष्टाः पुष्पमध्यवर्तिन उल्लसन्तो दीप्यमानाः षट्पदा भ्रमरा यास्वेवंविधाभिर्वनलताभिररण्यव्रततिभिराकुलितमाकीर्णम् । **अभिनवेति** । अभिनवः प्रत्यग्रो यः कुसुमपरिमलः पुष्पगन्धस्तद्वाहिना । तमालस्तापिच्छस्तस्य पल्लवाः किसलयास्तद्वत्सरसश्यामेन मदजलेन दानवारिणा सर्वतो विष्वक्सिक्तं सिञ्चितम् । अन्वयस्तु प्रागेवोक्तः ।

**उपजातेति** । उपजाता समुत्पन्ना जलाशयस्य जलाधारस्य शङ्कारेका यस्य स तथा तं मार्गं प्रतीपमभिमुखमनुसरन्ननुगच्छन् । उद्ग्रीवैरूर्ध्वकंधरैः पुरुषैर्दृश्यैर्द्रष्टुं योग्यैरुपरि प्रान्ते छत्रमण्डलस्यातपवारणवलयस्याकारो येषां तैः । छत्राकारैरित्यर्थः । **सरलेति** । सरला[3] अवक्राः साला वृक्षविशेषाः सल्लक्यो गजप्रियास्ता एव

---

**टिप्प०—1** चरणद्वारा उत्थापितैः ( ऊर्ध्वं नीतैः ) इत्यर्थं उचितः । 2 ग्राम्यप्रियोयं पाठः । 'कुसुमस्तबकशारैः' इत्येवोचितः पाठः । कुसुमगुच्छविचित्रैः, इति तदर्थः । 3 एतन्नामका वृक्षाः ।

---

**पाठा०—**१ अन्विषमाणः, अन्विष्यन्; अन्वेषयन्. २ अपक्रान्तस्य च. ३ अतिमहता. ४ गिरिच्चरस्य चरण. ५ उत्सारितैः; उत्तारितैः. ६ करिकलभकरावकृष्टैश्च मृणालनालैः. ७ कमलकुमुद. ८ खण्डितैश्च. ९ शारैः. १० उपविष्टनिष्पिष्टोच्छ्वसत्; उपविष्टनिष्पिष्टोच्छ्वसित; उपविष्टनिष्पिष्टोद्भ्रमत. ११ वकुलकुसुम. १२ रसश्यामेन. १३ मदजलेन सिक्तम्. १४ उपजातजलाशङ्कश्च. १५ उद्ग्रीव.

सल्लकीप्रायैरविरलैरपि निःशाखतया विरलैरिवोपलक्ष्यमाणैः पादपैरुपेतेन, स्थूलकपिलवालुकेन, शिलाबहुलतया[1] विरलतृणोलपेन, वनद्विपदशनदलितमनःशिलाधूलिकपिलेन, आभङ्गिनीभिरुत्कीर्णाभिरिव पत्रभङ्गकुटिलाभिः पाषाणभेदकमञ्जरीभिर्जटिलीकृतशिलान्तरालेन,[2][3] अनवरतगलद्गुग्गुलुद्रुमद्रवार्द्रीकृतदृषदा, शिखरस्रुतशिलाजतुरसपिच्छिलोपलेन,[4] टङ्कनहयखुरखण्डितहरितालक्षोदपांसुलेन,[5] आखुनखरोत्खातबिलावकीर्णकाञ्चनचूर्णेन,[6] सिकतानिमग्नचमरककस्तूरिकामृगीखुरपङ्क्तिना,[7] संशीर्णरङ्कुरल्लकरोमप्रकरनिचितेन,[8] विषमशिलाच्छेदोपविष्टजीवंजीवकयुगलेन, वनमानुषमिथुनाध्यासिततटगुहामुखेन, गन्धपाषाणपरिमलामोदिना, वेत्रलताप्रतानप्ररूढवेणुना,[9] कैलासतलेन कंचिदध्वानं गत्वा तस्यैव कैलासशिखरिणः पूर्वोत्तरे दिग्भागे जलभारालसं[10] जलधरव्यूहमिव बहुलक्षपान्धकारमिव[11] पुञ्जीकृतमत्यायतं तरुखण्डं[12]

---

प्रायो बाहुल्येन येष्वेवंविधैरविरलैर्निबिडैरपि निःशाखतया स्कन्धशाखाराहित्यतया विरलैरिवानिबिडैरिवोपलक्ष्यमाणैर्दृश्यमानैः पादपैर्वृक्षैरुपेतेन सहितेन । तथा स्थूला स्थविष्ठा कपिला पिङ्गला वालुका सिकता यस्मिंस्तेन । शिलानां बहुलता तया विरलानि स्तोकानि तृणान्युलपाश्च वल्ल्यो यस्मिंस्तत्तेन । **वनेति** । वनद्विपानामरण्यदन्तिनां दशनैर्दन्तैर्दलिता मर्दिता या मनःशिला मनोगुप्ता तस्या धूली रेणुस्तया कपिलेन पीतरक्तेन । आ समन्ताद्भङ्गिनीभिर्द्विधाभवनशीलाभिरुत्कीर्णाभिरिवोत्कीर्य कर्षिताभिरिव । पत्रभङ्गः पत्रवल्ली तद्वत्कुटिलाभिर्वक्राभिः पाषाणभेदकनाम्न्यो या मञ्जर्यो वल्ल्यस्ताभिरजटिलं जटिलं क्रियत इति जटिलीकृतं शिलयोरन्तरालं मध्यभागो यस्य तत्तेन । तथानवरतं निरन्तरं गलन्तः स्रवन्तो ये गुग्गुलुद्रुमाः पलङ्कषवृक्षास्तेषां द्रवो रसस्तेनार्द्रीकृतानि दृषन्ति प्रस्तरा यस्मिंस्तत्तेन । तथा शिखरेभ्यः सानुभ्यः स्रुतश्च्युतो यः शिलाजतुरसो गिरिजद्रवस्तेन पिच्छिला विजिला उपला यस्मिंस्तत्तेन । **टङ्कनेति** । टङ्कनं प्रस्तरदारकं तल्लक्षणो यो हयखुरोऽश्वशफस्तेन खण्डितं शकलीकृतं यद्धरितालं गोदन्तं तस्य क्षोदश्चूर्णं तेन पांसुलेन पांसुयुक्तेन । तथाखूनां[3] वृषाणां नखरैर्नखैरुत्खातान्यतिखनितानि यानि बिलानि विवराणि तेभ्योऽवकीर्णमवध्वस्तं काञ्चनचूर्णं सुवर्णक्षोदो यस्मिंस्तत्तेन । तथा सिकतासु वालुकासु निमग्ना ब्रुडिताश्चमरकाश्चमर्यः, कस्तूरिकामृग्यो नेपालदेशप्रसिद्धाः, तेषां खुरपङ्क्त्यो यस्मिंस्तत्तेन । तथा संशीर्णो विगलितो रङ्कुर्मृगविशेषः,[4] रल्लक उरभ्रः, एतयोर्यो रोमप्रकरस्तनूरुहसमूहस्तेन निचितेन व्याप्तेन । तथा विषमा असमा ये शिलाच्छेदास्तत्रोपविष्टान्यासीनानि जीवंजीवकयुगलानि विषदर्शनमृत्युकयुग्मानि यस्मिंस्तत्तेन । मयूराकृतयः[5] पक्षिविशेषा जीवंजीवकाः । ते च दक्षिणदेश एतन्नाम्नैव प्रसिद्धाः । **वनेति** । वनमानुषमिथुनैर्मनुष्याकृतिसदृशाकारैर्वनचारिविशेषैरध्यासितान्याश्रितानि तटगुहामुखानि यस्मिंस्तत्तेन । गन्धपाषाणः सुगन्धद्रव्यविशेषस्तस्य[6] परिमलो विमर्दजनितो गन्धो विद्यते यस्मिंस्तत्तेन । तथा वेत्रलता वेत्रवल्ल्यस्तासां प्रताने शाखापत्रप्रचये प्ररूढा उद्गता वेणवो वंशा यस्मिंस्तत्तेन । एवंविधेन कैलासतलेन रजताद्र्यधोभागेन कंचित्कियन्मात्रमध्वानं पन्थानं गत्वा तस्यैव कैलासशिखरिणः पूर्वोत्तरे दिग्भाग ईशान्यामत्यायतमतिविस्तीर्णं तरुखण्डं वृक्षसमूहं ददर्शावलोकयामास । जलभारेण पानीयवीवधेनालसं मन्थरम् । कृष्णत्वसाम्यादाह—**जलेति** । जलधरा मेघास्तेषां व्यूहमिव समूहमिव । **बहुलेति** । बहुलः कृष्णपक्षस्तस्य

---

**टिप्प०**—1 'लता प्रतानिनी वीरुद् गुल्मिन्युलप इत्यपि' इत्यमरः । 2 आ( समन्तात् )भङ्गो (विविधभङ्गी)स्ति यासां ताभिरित्यर्थः । 3 उन्दुरूणामित्यर्थः । 4 मृगविशेषः । 5 चकोरपक्षिणः, 'जीवंजीवः खगान्तरे । द्रुमभेदे चकोरे च' इति हेमः । 6 गन्धक इति केचित् ।

---

**पाठा०**—१ शिलातल. २ पाषाणभङ्ग. ३ शिलान्तरेण. ४ पिच्छिल. ५ टङ्कनखरखुर. ६ बिलविप्रकीर्ण. ७ चमरकस्तूरिका. ८ संकीर्णजीर्णरङ्कु; संकीर्णशङ्कु; संकीर्णजीर्णरल्लक. ९ प्रतानवता प्ररूढ. १० अलसजलधर. ११ बहुलपक्षक्षपया. १२ विविधतरुखण्डम्.

ददर्श। तच्च[1] संमुखागतेन[2] कुसुमरजःकषायामोदिना[3] जलसंसर्गशिशिरेण[4] शीकरिणा चन्दनरससमस्पर्शेनालिङ्ग्यमान[5] इव जलतरङ्गमारुतेन कमलमधुपानमत्तानां च श्रोत्रहारिभिः कलहंसानां कोलाहलैराहूयमान इव विवेश[6]।

प्रविश्य च तस्य तरुखण्डस्य मध्यभागे मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः, स्फटिकभूमिगृहमिव वसुंधरादेव्याः[7], जलनिर्गमनमार्गमिव सागराणाम्, निस्यन्दमिव दिशाम्, अंशावतारमिव[8] गगनतलस्य, कैलासमिव द्रवतामापन्नम्, तुषारगिरिमिव विलीनम्, चन्द्रातपमिव रसतामुपेतम्, हराट्टहासमिव जलीभूतम्, त्रिभुवनपुण्यराशिमिव सरोरूपेणावस्थितम्, वैडूर्यगिरिजालमिव सलिलाकारेण परिणतम्, शरदभ्रवृन्दमिव द्रवीभूयैकत्र निस्यन्दि-

---

क्षपा रात्रिस्तस्याः पुञ्जीकृतं राशीकृतमन्धकारमिव ध्वान्तमिव। अत्र जलान्धकारयोर्नीलगुणसंबन्धात्साम्यं प्रदर्शितम्। **तच्चेति**। तत्पूर्वोक्ततरुखण्डं विवेश प्रवेशं चकारेत्यन्वयः। किं क्रियमाणः। संमुखागतेनाभिमुखायातेन जलतरङ्गमारुतेन पानीयवीचिसमीरणेनालिङ्ग्यमान इवाश्लिष्यमाण इव। अथ वायुं विशिनष्टि—**कुसुमेति**। कुसुमरजसां पुष्परागाणां कषायस्तुवर आमोदो मुखवासनो विद्यते यस्मिन्स तेन। **जलेति**। जलस्य पानीयस्य संसर्गः संबन्धस्तेन शिशिरः शीतलस्तेन। शीकरो वातास्तं वारि विद्यते यस्मिन्स तेन। अत्रास्त्यर्थे इन्। **चन्दनेति**। चन्दनं मलयजं तस्य रसो द्रवस्तस्य समः सदृशः स्पर्शो यस्य स तेन। कमलस्य नलिनस्य मधु रसस्तस्य पानमास्वादस्तेन मत्तानामुत्कटानां कलहंसानां कादम्बानां श्रोत्रहारिभिः कर्णरुचिरैः कोलाहलैः कलकलैराहूयमान इवाह्वानविषयीक्रियमाण इव।

तस्य तरुखण्डस्य मध्यभागेऽन्तरालप्रदेशे प्रविश्य च प्रवेशं कृत्वाच्छोदं नाम यस्यैवंभूतं सरः कासारं दृष्टवानालोकितवान्। अथ सरो विशेषयन्नाह—**मणीति**। त्रैलोक्यलक्ष्म्यास्त्रिभुवनश्रियो मणिदर्पणमिव रत्नादर्शमिव। वसुंधरादेव्याः रत्नगर्भादेव्याः स्फटिकभूमिगृहमिव स्फटिकहर्म्यमिव। सागराणां समुद्राणां जलनिर्गमनमार्गमिव वारिबहिर्गमनपन्थानमिव। दिशां ककुभां निस्यन्दमिव[1] रसक्षरणमिव। गगनतलस्य व्योमतलस्यांशावतारमिव तदंशेनावतीर्णमिव। निर्मलश्वेतरूपत्वादाह—**कैलासेति**। कैलासमिव रजताद्रिमिव। एतस्य पाषाणमयत्वात्सरसश्च द्रवरूपतया साम्यं न संभवतीत्यत आह—**द्रवेति**। द्रवतां रसतामापन्नं प्राप्तम्। हिमजलवत्त्वादाह—**तुषारेति**। तुषारगिरिमिव हिमाचलमिव। तस्य दृढत्वान्नोपमानत्वमित्यत आह—**विलीति**। विलीनम् विद्रुतमित्यर्थः। अमृतमयत्वादाह—**चन्द्रेति**। चन्द्रस्य शशिन आतपमिव प्रकाशमिव। तस्य तेजोरूपत्वान्न साम्यमित्याह—**रसेति**। रसतां जलतामुपेतं प्राप्तम्। विषवत्त्वसाम्यादाह—**हरेति**। हरस्येश्वरस्य योऽट्टहासो महाहासस्तमिव। तस्य क्रियारूपत्वात्साम्यं न स्यादित्याशयेनाह—**जलीति**। जलीभूतमिव डलयोरैक्याज्जडीभूतमिव। सुखजनकत्वसाम्यादाह—**त्रिभ्विति**। त्रिभुवनस्य त्रिविष्टपस्य पुण्यराशिमिव श्रेयःसमूहमिव। अस्यामूर्तत्वान्न साम्यमित्याशयेनाह—**सर इति**। सरोरूपेण कासाररूपेणावस्थितम्। कृतावस्थानमित्यर्थः। नीलत्वसाम्यादाह—**वैडूिति**। वैडूर्यं वालवायजं तन्मयं गिरिजालमिव। अतिकठिनत्वात्तत्तुल्यतानुपपत्तेराह—**सलिलेति**। सलिलाकारेण जलाकारेण परिणतं तद्रूपतामापन्नम्। उज्ज्वलत्वसाम्यादाह—**शरद इति**। शरत्कालीनं घनात्ययसमयसंभवं यदभ्रवृन्दं मेघपटलं तदिव। एतस्याकाशस्थत्वात्तत्साम्यानुपपत्तेराह—**द्रवीति**। द्रवीभूय रसीभूयैकत्र स्थले निस्यन्दितं निर्गलितम्। स्वच्छ-

---

**टिप्प०—1** अतिनिर्मलत्वात्सेयमुत्प्रेक्षा। एवमग्रेऽपि।

---

**पाठा०—**१ तं च. २ संमुखादागतेन. ३ कुमुद. ४ शिशिरशीकरिणा. ५ रसस्पर्शेन. ६ प्रविवेश. ७ वसुधादेव्या निर्गमन. ८ अवतारमिव चलाकारं गगन; अंशावतारं जलाकारं गगन.

तम्, आदर्शमिव[1] प्रचेतसः, स्वच्छतया मुनिमनोभिरिव सज्जनगुणैरिव हरिणलोचनप्रभाभिरिव मुक्ताफलांशुभिरिव निर्मितम्, आपूर्णपर्यन्तमप्यन्तः स्पष्टदृष्टसकलवृत्तान्ततया रिक्तमिवोपलक्ष्यमाणम्, अनिलोद्धूतजलतरङ्गसीकरधूलिजन्मभिः सर्वतः संस्थितैः[2] संरक्ष्यमाणमिवेन्द्रचापसहस्रैः, प्रतिमानिभेनान्तःप्रविष्ट[3]सजलचरकानन[4]शैलनक्षत्रग्रहचक्रवालं त्रिभुवनमुद्भिन्नपङ्कजेनोदरेण नारायणमिव बिभ्राणम्, आसन्नकैलासावतीर्णस्य च

---

प्रतिबिम्बसंक्रान्तिसाम्येनाह—**आदर्शेति** । प्रचेतसो वरुणस्यादर्शमिव[1] मुकुरमिव स्वच्छतया । उपमानान्तराण्याह—**मुनिरित्यादि** । मुनीनां वाचंयमानां मनोभिश्चित्तैरिव, सज्जनानामाप्तानां गुणैः शौर्यादिभिरिव[3], हरिणानां मृगाणां लोचनप्रभाभिर्नेत्रकान्तिभिरिव, मुक्ताफलानां रसोद्भवानामंशुभिः किरणैरिव निर्मितं निष्पादितम् । चतुर्ष्वप्यतिनिर्मलत्वमेव नियामकमुत्प्रेक्षायाम् । पुनः कीदृशमिवोपलक्ष्यमाणमित्याह—**रिक्तमिति** । रिक्तमिव शून्यमिव । तत्र हेतुमाह—**अन्तरिति** । अन्तर्मध्ये स्पष्टं प्रकटं यथा स्यात्तथा दृष्टोऽवलोकितः सकलवृत्तान्तः समग्रोदन्तो यस्य तस्य भावस्तत्ता तया । तर्हि रिक्तमेव भविष्यतीत्याशयेनाह—**आपूर्णेति** । विचित्रत्वम् । एतद्द्वयमादायैवोत्प्रेक्षते—**इन्द्रेति** । इन्द्रचापसहस्रैराखण्डलधनुःसहस्रैः संरक्ष्यमाणमिव त्रायमाणमिव । एतदेव विशेषयन्नाह—**अनिलेति** । अनिलेन वायुनोद्धता उत्क्षिप्ता ये जलतरङ्गाः, पानीयकल्लोलास्तेषां सीकरधूलयस्ताभ्यां जन्मोत्पत्तिर्येषां तैः । कीदृशैः । सर्वतः समन्तात्संस्थितैः कृतावस्थानैः । अत्र कल्लोलानां वक्रत्वात्सीकरधूलीनामपि तदवस्थत्वाच्च शक्रचापोपमानम्[2] । पुनः सरो विशेषयन्नाह—**उद्भिन्नेति** । उद्भिन्नानि विकसितानि पङ्कजानि कमलानि यस्मिन्नेवंविधेनोदरेण मध्येन । द्वितीयपक्ष उन्निद्रं पङ्कजं नाभिकमलं यस्मिन्नेवंभूतेनोदरेण जठरेण नारायणमिव कृष्णमिव[5] त्रिभुवनं त्रिविष्टपं बिभ्राणं दधानम् । अत्र त्रिभुवनं विशेषयन्नाह—**प्रतिमेति** । प्रतिमा प्रतिबिम्बं तस्य मिषेण व्याजेनान्तःप्रविष्टं मध्यप्रविष्टं सह जलचरेण नक्रचक्रादिना वर्तमानं यत्काननं वनम्, शैलोऽद्रिः, नक्षत्राणि ऋक्षाणि, ग्रहा मङ्गलादयः, तेषां चक्रवालं समूहो यस्मिंस्तत्तथा । पुनस्तदेव विशेषयन्नाह—**आसन्नेति** । आसन्नः समीपवर्ती यः कैलासो रजताद्रिस्तस्मादवतीर्णस्योत्तरितस्य शतशः शतवारं भगवतो माहात्म्यवतः खण्डपरशोरीश्वरस्य मज्जनोन्मज्जनाभ्यां प्रतीताभ्यां यः क्षोभश्चित्तचाञ्चल्यं[6] तेन चलितः कम्पितो यश्चूडामणिभूतश्चन्द्रखण्ड-

---

**टिप्प०**—1 इदमप्यज्ञानम् । 'मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः' इति पूर्वमुक्ततया 'आदर्शभवनमिव' इत्येव पाठः । आदर्शभवनं दर्पणमयं गृहमिति तदर्थः । 2 इदमपि टीकाकृतोऽनभिज्ञत्वसूचकम् । 'आदर्शभवनमिव प्रचेतसः' एतावत्पर्यन्तमुत्प्रेक्षाप्रक्रमो यः प्रचलितस्तदनुसारमत्र प्रकारपार्थक्यम् । 'स्वच्छतया' इति निमित्तेन मुनिमनउपादानकनिर्माणस्योत्प्रेक्षा ( अच्छोदसरसि ), इति पृथगुत्प्रेक्षा । एवं सज्जनगुणादिष्वपि । इति चतसृणामुत्प्रेक्षाणां संसृष्टिः, परस्परं निरपेक्षत्वात् । 3 आप्तानां सत्य-दया-ऽऽर्जवादिगुणान् विहाय शौर्योपरि दृष्टिर्धन्यतैव टीकाकृतः । 4 इदमप्यज्ञानम् । उच्छलितेषु जलक्षोदेषु सूर्यकिरणपातेन इन्द्रधनुष इव नानावर्णानां दृश्यमानत्वमित्याशयः । 5 नारायणमिव त्रिभुवनं बिभ्राणमिति टीकाकृतोक्षराणि भृशं भ्रामकाणीति उद्भिन्नपङ्कजेनोदरेण त्रिभुवनं बिभ्राणम्, अत एव नारायणमिव स्थितमिति सरलोऽन्वयः । व्याख्या तु टीकातो दृश्या । सरःपक्षे प्रतिबिम्बव्याजेन सकाननादेस्त्रिभुवनस्य धारणम्, नारायणस्तु बीजरूपेण स्थितं त्रिभुवनं स्वोदरे धारयत्येवेति तदाशयः । 6 चित्तचाञ्चल्यं किं टीकाकारस्य ! अस्तु । मज्जनोन्मज्जनाभ्यां यः क्षोभः संचलनं ( चन्द्रखण्डस्य ) तेन चलितात् चूडामणिरूपात् चन्द्रखण्डात् गलितेन, इति स्फुटोऽर्थः ।

---

**पाठा०**—१ आदर्शभवनमिव; आदर्शभुवनमिव. २ समुपस्थितैः. ३ प्रविष्टम्. ४ सकानन; सकलकानन.

शतशो भगवतः खण्डपरशोर्मज्जनोन्मज्जनक्षोभचलितचूडामणिचन्द्रखण्डच्युतेनामृतरसेन जलक्षालितवामार्धकपोलगलितलावण्यप्रवाहानुकारिणा[1] मिश्रितजलम्[2], उपकूलतमालवन-प्रतिबिम्बान्धकारिताभ्यन्तरैर्दृश्यमानरसातलद्वारैरिव सलिलप्रदेशैर्गभीरतरम्[3], दिवाप्युपजातनिशाशङ्कैश्चक्रवाकमिथुनैः परिह्रियमाणनीलोत्पलवनगहनम्, असकृत्पितामहपरिपूरितकमण्डलुपरिपूतजलम्[4], अनेकशो वालखिल्यकदम्बककृतसंध्योपासनम्, बहुशः सलिलावतीर्णसावित्रीभग्नदेवार्चनकमलसहस्रम्[5][6], सहस्रशः सप्तर्षिमण्डलस्नानपवित्रीकृतम्, सर्वदा सिद्धवधूधौतकल्पलतावल्कलपुण्योदकम्[7], उदकक्रीडादोहदागतानां च गुह्यकेश्वरान्तःपुरकामिनीनां मकरकेतुचापचक्राकृतिभिरतिविकटैरावर्तिभिर्नाभिमण्डलैरापीतसलिलम्,

---

स्रस्तस्माच्युतेन स्रस्तेनामृतरसेन पीयूषद्रवेण मिश्रितमेकीभूतं जलं पानीयं यस्य तत्तथा। अथ पीयूषरसं विशेषयन्नाह—**जलेति**। जलेन क्षालितौ धौतौ यौ वामार्धकपोलौ पार्वतीगल्लात्परप्रदेशौ ताभ्यां गलितं च्युतं यल्लावण्यं सौन्दर्यं तस्य यः प्रवाहो रयस्तस्यानुकारिणा। तत्सदृशेनेत्यर्थः। **उपेति**। उपकूल उपकण्ठे यत्तमालवनं तापिच्छवनं तस्य प्रतिबिम्बः प्रतिच्छाया तेनान्धकारवदाचरितान्यभ्यन्तराणि मध्यप्रदेशा येषां तैः। अत्रान्धकारिताभ्यन्तरत्वसाम्येनोत्प्रेक्षते—**दृश्यमानेति**। दृश्यमानरसातलद्वारैरिव वीक्ष्यमाणवडवामुखप्रतीहारैरिव। एवंभूतैः सलिलप्रदेशैः पानीयस्थलैर्गभीरतरं गम्भीरतरम्। अत एव पूर्वोक्तसाम्यादेवाह—**दिवापीति**। दिवापि दिवसेऽप्युपजाता समुत्पन्ना निशायास्त्रियामायाः शङ्कारेका येषां तैश्चक्रवाकमिथुनैः कोकद्वन्द्वैः परि सामस्त्येन ह्रियमाणं त्यज्यमानं यन्नीलोत्पलवनमिन्दीवरखण्डं तेन गहनं निविडम्। **असकृदिति**। असकृन्निरन्तरं पितामहेन ब्रह्मणा परिपूरितो भृतो यः कमण्डलुः कुण्डिका तेन परि सामस्त्येन पूतं पावनं जलं जीवनं यस्य तत्तथा। **अनेकश इति**। अनेकशो वारंवारं वालखिल्याः सूर्यपुरःसरा मुनयस्तेषां कदम्बकं समूहस्तेन कृतं विहितं संध्योपासनं संध्यावन्दनं यस्मिंस्तत्तथा। **बहुश इति**। अनेकशः सलिले जलेऽवतीर्णोत्तीर्णा या सावित्री हुताशनपत्नी तया भग्नमुन्मूलितं देवार्चनार्थं कमलानां नलिनानां सहस्रं यस्मिंस्तत्। **सहस्रश इति**। सहस्रवारं सप्तर्षीणां मरीचिप्रभृतीनां मण्डलं समूहस्तस्य स्नानमाप्लवस्तेन पवित्रीकृतं पावनीकृतम्। **सर्वदेति**। सर्वदा सर्वकालं सिद्धवधूभिः सिद्धाङ्गनाभिर्धौतानि क्षालितानि यानि कल्पलताया मन्दारव्रतत्या वल्कलानि चोचानि तैः पुण्यानि पवित्राण्युदकानि जलानि यस्मिंस्तत्तथा। **उदकेति**। उदकस्य जलस्य या क्रीडा केलिस्तस्या दोहदोऽभिलाषस्तेनागतानां प्राप्तानां गुह्यकेश्वरस्य कुबेरस्यान्तःपुरकामिनीनामवरोधस्त्रीणां मकरकेतुः कंदर्पस्तस्य चापचक्रमारोपितं धनुस्तद्वदाकृतिराकारो येषां तैरतिविकटैरतिविपुलैरावर्ता विद्यन्ते येषु तैरावर्तिभिः। एवंभूतैर्नाभिमण्डलैस्तुन्दकूपिकासमूहैरापीतं ग्रस्तं सलिलं जलं यस्य तत्तथा। इदं च नाभिपर्यन्त-

---

टिप्प०—1 दृश्यमानं रसातलस्य द्वारं येषु तैरिव स्थितैः। अन्धकारमाहात्म्यादस्य सलिलप्रदेशा अतीव निम्नतरा अत एव रसातलस्य द्वारमपि (यद्धि अतीव निम्नम्) दृश्यत इत्याशयः।

---

पाठा०—१ लावण्यानुकारिणा. २ संमिश्रित. ३ गम्भीरतरम्. ४ परिपूरित. ५ देवतार्चन. ६ कमलम्. ७ पुण्यीकृतोदकम्.

क्वचिद्वरुणहंसोपात्तकमलवनमकरन्दम्[1], क्वचिद्दिग्गजमज्जनजर्जरितजरन्मृणालदण्डम्[2], क्वचित्र्यम्बकवृषभविषाणकोटिखण्डिततटशिलाखण्डम्[3], क्वचिद्यममहिषशृङ्गशिखरविक्षिप्तफेनपिण्डम्[4], क्वचिदैरावतदशनमुसलखण्डितकुमुदखण्डम्, यौवनमिवोत्कलिकाबहुलम्, उत्कण्ठितमिव मृणालवलयालंकृतम्, महापुरुषमिव मीनमकरकूर्मचक्रप्रकटलक्षणम्[5], षण्मुखचरितमिव श्रूयमाणक्रौञ्चवनिताप्रलापम्, भारतमिव पाण्डुधार्तराष्ट्रकुलपक्षकृतक्षोभम्, अमृतम-

---

जलक्रीडावर्णनम्। **क्वचिदिति**। कस्मिंश्चित्प्रदेशे वरुणस्य प्रचेतसो हंसेन मरालेनोपात्तो गृहीतः कमलवनस्य नलिनखण्डस्य मकरन्दो मरन्दो यस्मिंस्तत्तथा। **क्वचिदिति**। दिग्गजानां दिग्दन्तिनां मज्जनेनान्तर्विगाहनेन जर्जरिताः शिथिलीभूता जरन्मृणालदण्डा बहुकालीनबिसदण्डा यस्मिंस्तत्तथा। **क्वचिदिति**। त्र्यम्बकस्येश्वरस्य यो वृषभो बलीवर्दस्तस्य विषाणकोटिः शृङ्गाग्रभागस्तया खण्डिता भेदितास्तटस्य तीरस्य शिलाखण्डा यस्य तत्। **क्वचिदिति**। यमस्य कृतान्तस्य यो महिषः कासरस्तस्य शृङ्गं विषाणं तस्य शिखरमग्रभागस्तेन विक्षिप्त इतस्ततः पर्यस्तः फेनपिण्डो डिण्डीरपुञ्जो यस्मिन्। **क्वचिदिति**। ऐरावतो हस्तिमल्लस्तस्य दशना दन्तास्त एव स्थूलत्वदृढत्वसाम्यान्मुसलान्ययोग्राणि तैः खण्डितं पाटितं कुमुदखण्डं कैरववनं यस्मिन्। अथ प्रकारान्तरेण तदेव विशेषयन्नाह—**यौवेति**। यौवनं तारुण्यं तद्वदिव। उभयसाम्यं प्रदर्शयन्नाह—**उदिति**। उत्कलिका तरङ्गसंततिस्तया बहुलं दृढम्। 'तरङ्गभङ्गवीच्यूर्म्युत्कलिका' इति कोशः। पक्ष उत्कलिका हृल्लेखा। 'हृल्लेखोत्कलिका च' इति कोशः। विविधकामाभिलाषस्तया बहुलम्। व्याप्तमित्यर्थः। **उदिति**। उत्कण्ठितमुन्मनसम्[1]। अर्थाद्विरहिजनम्। तदिव। तत्सदृशमित्यर्थः। उभयोः साम्यमाह—**मृणालेति**। मृणालानां तन्तुलानां वलयैः समूहैरलंकृतम्। उन्मना अपि दाहज्वरोपशमनार्थं मृणालवलयालंकृतः स्यादित्यभङ्गश्लेषः। **महेति**। महांश्चासौ पुरुषश्चेति कर्मधारयः। तद्वदिव। उभयोर्विशेषणमाह—**मीनेति**। मीना मत्स्याः, मकरा जलचरविशेषाः, कूर्माः कच्छपाः, चक्रा[2] जलचारिविशेषाः, प्रकटा बहिर्दृश्यमाना लक्षणाः सारसाः सारस्यश्च यस्मिन्। पक्षे मकरादीनि चक्रान्तानि प्रकटानि स्पष्टानि लक्षणानि चिह्नानि यस्मिन्। महापुरुषस्य हस्तपादाद्यवयवेषु मकरादीनि चिह्नानि भवन्तीति सर्वप्रसिद्धम्। ननु 'सारसी लक्ष्मणा सानुसौमित्रौ श्रीमति त्रिषु' इति रुद्रकोषादिदर्शनात्कथमत्र लक्षणाशब्दप्रयोग इति चेन्न। 'लक्षणश्चैव सारसः' इत्यमरमालायां निर्णकारस्यापि दर्शनात्। **षण्मुखेति**। षण्मुखः कार्तिकेयस्तस्य चरितमाचरणं तद्वदिव। **श्रूयेति**। श्रूयमाण आकर्ण्यमानः क्रौञ्चः पक्षिविशेषस्तस्य या वनिता स्त्री तस्याः प्रलापः प्रकर्षेण शब्दो यस्मिन्। पक्षे कार्तिकेयेन क्रौञ्चदैत्यो हतः। अत एव तस्य वनितायाः प्रलापो रुदनं[3] यस्मिन्। तथा भारतं व्यासप्रणीतं शास्त्रं तद्वदिव। **पाण्ड्विति**। पाण्डवः श्वेतवर्णा[4] ये धार्तराष्ट्रा हंसविशेषास्तेषां कुलं समूहस्तस्य पक्षा वाजास्तैः कृतो विहितः क्षोभो विग्रहो यस्मिन्। पक्षे पाण्डुरम्बात्मजः, धार्तराष्ट्रो दुर्योधनः तयोः कुले अन्वयौ तयोः पक्षौ स्वजनौ ताभ्यां कृतः क्षोभश्चित्तवैक्लव्यं यस्मिन्। **अमृतेति**। अमृतार्थं पीयूषार्थं यन्मथनम्। समुद्रस्येति

---

**टिप्प०**—1 विरहेण उन्मनस्कमित्यर्थः। 2 चक्रवाका इति प्रसिद्धोऽर्थः। 3 रोदनमित्याशयः। 4 विपरीतमेतत्। कृष्णवर्णा इत्युचितम्। 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः। मलिनैर्मल्लिकाक्षास्ते धार्तराष्ट्राः सितेतरैः' इत्यमरः।

---

**पाठा०**—१ हंसाक्रान्तविकचकमलवनखण्डम्; हंसाक्रान्तकमलमकरन्दम्; हंसाघ्रातकमलवनमकरन्दम्. २ मृणालजालदण्डम्. ३ धवलवृषभ. ४ कोदण्ड. ५ प्रकटमीनमकरकूर्मचक्रलक्षणम्.

थनसमयमिव तीर[1]कासारावस्थितशितिकण्ठपीयमानविषम्, कृ[2]ष्णबालचरितमिव तटकदम्ब-शा[3]खाधिरूढहरिकृतजलप्रपातक्रीडम्, मदनध्वजमिव मकराधिष्ठितम्, दिव्यमिवानिमिष-लोचनरमणीयम्, अरण्यमिव विजृम्भमाणपुण्डरीकम्, उरगकुलमिवानन्तशतपत्रपद्मोद्भा-सितम्, कंसबलमिव मधुकरकुलोप[4]गीयमानकुवलयापीडम्, क[5]द्रूस्तनयुगलमिव नागसहस्रपी-तपयोगण्डूषम्, मलयमिव चन्दनशिशिरवनम्, असत्साधनमिवादृष्टान्तम्, अतिमनोहर-माह्लादनं दृष्टेरच्छोदं नाम सरो दृष्टवान्।

---

शेषः। तस्य यः समयः कालस्तमिव। **तीरेति**। तीरं तटम्, कासारं प्रान्तदेशं तत्रावस्थिता ये शिति-कण्ठा बर्हिणस्तैः पीयमानमास्वाद्यमानं विषं जलं यस्मिन्। पक्षे तीरे क्षीरोदस्येति शेषः। तस्मिन्नव-स्थितो यः शितिकण्ठो महेश्वरस्तेन पीयमानं भक्ष्यमाणं विषं कालकूटं यस्मिन्। 'कालकूटाम्भसोर्विषम्' इत्यनेकार्थः। तथा **कृष्णेति**। कृष्णस्य जनार्दनस्य यद्बालचरितं बाल्यावस्थायां क्रीडितं तद्वदिव। उभयोः साम्यमाविष्कुर्वन्नाह—**तटेति**। 'तटं तस्यैव सरसः' इति कोशः। तस्मिन्ये कदम्बा नीपास्तेषां शाखास्तस्यामधिरूढो यो हरिर्गोलाङ्गूलस्तेन कृता विहिता जलप्रपातलक्षणा क्रीडा यस्मिन्। पक्षे तटं यमुनायाः। हरिः कृष्णः। शेषं पूर्ववत्। **मदेति**। मदनस्य कन्दर्पस्य यो ध्वजः केतुस्तद्वदिव। उभयोः सादृश्यमाह—**मकर इति**। मकरो जलजन्तुस्तेनाधिष्ठितमाश्रितम्। पक्षे मकराकृतिरूपं चिह्नम्। **दिव्येति**। दिवि भवं दिव्यं तद्वदिव। उभयोः साम्यार्थमाह—**अनिमिषेति**। अनिमिषास्ति[1]मयस्तेषां लोचनानि नेत्राणि तै रमणीयं मनोहरम्। पक्षेऽनिमिषलोचना देवाः। शेषं पूर्ववत्। **अरण्येति**। अरण्यं काननं तद्वदिव। उभयोः साधर्म्यमाह—**विजृम्भेति**। विजृम्भमाणानि विनिद्राणि पुण्डरीकाणि सिताम्भो-जानि यस्मिंस्तत्तथा। पक्षे विजृम्भमाणाः सन्त उज्झितनिद्राः पुण्डरी[2]काश्चित्रकायाः। 'चित्रकायः पुण्डरीकः' इति कोशः। शेषं पूर्ववत्। **उरगेति**। उरगाः सर्पास्तेषां कुलमन्वयस्तद्वदिव। उभयोः सादृश्यमाविःकु-र्वन्नाह—**अनन्तेति**। अनन्तान्यसंख्यानि यानि शतप[3]त्राणि पुष्पविशेषाणि, पद्मानि कमलानि, तैरुद्भासितं शोभितम्। पक्षेऽनन्तो नागाधिपः, शतपत्रो नागविशेषः, पद्मश्च। शेषं पूर्ववत्। **कंस इति**। कंसो दैत्य-स्तस्य बलं सैन्यं तद्वदिव। उभयसाम्यार्थमाह—**मध्विति**। मधुकराणां भ्रमराणां कुलानि समूहाः तैरुपगीयमानानि गानविषयीक्रियमाणानि कुवलयान्युत्पलानि तान्येवापीडः शेखरो यस्मिंस्तत्तथा। पक्षे कुवल[4]यापीडो गजः। शेषं पूर्ववत्। **कद्रू इति**। कद्रूर्नागमाता तस्याः स्तनयुगलं कुचयुग्मं तद्वदिव। उभयोः साम्यं प्रदर्शयन्नाह—**नागेति**। नागसहस्रैर्हस्तिसहस्रैः पीता आस्वादिताः पयसो गण्डूषाश्चुलुका यस्मिंस्तत्। पक्षे नागाः सर्पाः। पयो दुग्धम्। शेषं पूर्ववत्। **मलयेति**। मलयो मलयाचलस्तद्वदिव। उभयोस्तुल्यतामाह—**चन्दनेति**। चन्दनं मलयजं तद्वच्छिशिरं शीतलं वनं जलं यस्मिन्। 'कीलालं भुवनं वनं घनरसः' इत्यभिधानचिन्तामणिः। पक्षे चन्दनानां शिशिराणि वनानि काननानि यस्मिन्। **असदिति**। असत्साधनमसद्धेतुस्तद्वदिव। शब्दापेक्षया तयोः साधर्म्यमाह—**नेति**। न दृष्टो न वीक्षि-तोऽन्तोऽवसानं यस्य तत्। पक्षे न विद्यते दृष्टा[5]न्तो निश्चितसाध्यवान्यस्मिन्। तदभावादसद्धेतुत्वमिति भावः। अतिमनोहरम्। अतिसुन्दरमित्यर्थः। दृष्टेर्नेत्रस्याह्लादनम्। प्रमोदजनकमित्यर्थः।

---

टिप्प०—1 अनिमिषे (निमेषरहिते) लोचने येषामित्यर्थ उचितः, मत्स्यानां नयनयोर्निमेषाभावात्। 2 व्याघ्रा इति स्पष्टोऽर्थो वक्तव्यः। 3 शतपत्र-पद्मयोरापाततः पौनरुक्त्यभासनं पर्यन्ते च शतसंख्यार्क-पत्रविशिष्टकमले पर्यवसानात्पुनरुक्तवदाभासोऽलंकारः। तथा च अनन्तानि यानि शतपत्रविशिष्टानि पद्मानि तैरुद्भासितमित्यर्थोऽत्र बोध्यः। 4 मदजलसौरभलोभाद् मधुकरैरुपगीयमानस्तदाख्यो हस्ती यत्रे-त्यर्थः। 5 गोत्ववान् मनुष्यत्वादित्यादौ असद्धेतौ निश्चितसाध्य(गोत्व)वत्स्थलं (दृष्टान्तः) नास्तीत्यर्थः।

---

पाठा०—१ तीरावस्थित. २ बालकृष्ण. ३ शाखारूढ. ४ उपनीयमान. ५ कद्रू.

आलोकमात्रेणैवापगतश्रमो दृष्ट्वा मनस्येवमकरोत्—'अहो निष्फलमपि मे तुरङ्गमुखमिथुनानुसरणमेतदालोकयतः सरः सफलतामुपगतम् । अद्य परिसमाप्तमीक्षणयुगलस्य द्रष्टव्यदर्शनफलम्, आलोकितः खलु रमणीयानामन्तः, दृष्ट आह्लादनीयानामवधिः, वीक्षिता मनोहराणां सीमान्तलेखा, प्रत्यक्षीकृता प्रीतिजननानां परिसमाप्तिः, विलोकिता दर्शनीयानामवसानभूमिः । इदमुत्पाद्य सरःसलिलममृतरसमुत्पादयता वेधसा पुनरुक्ततामिव नीता स्वसृष्टिः । इदमपि खल्वमृतमिव सर्वेन्द्रियाह्लादनसमर्थमतिविमलतया चक्षुषः प्रीतिमुपजनयति, शिशिरतया स्पर्शसुखमुपहरति, कमलसुगन्धितया घ्राणमाप्याययति, हंसमुखरतया श्रुतिमानन्दयति, स्वादुतया रसनामाह्लादयति । नियतं चास्यैव दर्शनतृष्णया न परित्यजति भगवान्कैलासनिवासव्यसनमुमापतिः । न खलु सांप्रतमाचरति जलशयनदोहदं देवो रथा-

---

**आलोकेति** । आलोकमात्रेणैव निरीक्षणमात्रेणैवापगतो दूरीभूतः श्रमः क्लान्तिर्यस्यैवंविधश्चन्द्रापीडस्तद्दृष्ट्वा विलोक्य मनसि चित्ते एवमकरोदेवमघटयत् । **अहो इति** । अहो इत्याश्चर्ये । निष्फलमपि निरर्थकमपि मे मम तुरङ्गमुखमिथुनस्य किंनरमिथुनस्यानुसरणमनुगमनं सफलतां कृतार्थतामुपगतम् । प्राप्तमित्यर्थः । किं कुर्वतो मम । एतत्सरः कासारमालोकयतो दृग्विषयीकुर्वतः । **अद्येति** । अद्यास्मिन्दिने परिसमाप्तं परिपूर्णम् । संपूर्णं जातमित्यर्थः । किं तदित्याकाङ्क्षायामाह—**ईक्षणेति** । ईक्षणयुगलस्य द्रष्टव्यं दर्शनीयं यद्वस्तु तस्य दर्शनमवलोकनं तस्य फलं व्युष्टिः । **खल्विति** । खलु निश्चितम् । रमणीयानां मनोहराणामन्तः प्रान्त आलोकितो वीक्षितः । एतदपरं रमणीयं नास्तीत्यर्थः । **दृष्ट इति** । आह्लादनीयानां प्रमोदकारिणामवधिर्मर्यादा दृष्टोऽवलोकितः । प्रमोदजनकमेतदन्यत्किमपि नास्तीति भावः । **वीक्षितेति** । मनोहराणां चित्तहारिणां सीमाया अन्तलेखा प्रान्तलेखा वीक्षिता नयनविषयीकृता । अतः परं चित्तहृत्किमपि नास्तीति भावः । **प्रत्यक्षेति** । प्रीतिजननानां प्रीत्युत्पादकानां परि सामस्त्येनाप्तिः प्राप्तिः परिसमाप्तिः प्रत्यक्षीकृतेन्द्रियगोचरीकृता । **विलोकितेति** । दर्शनीयानां द्रष्टुं योग्यानामवसानभूमिः प्रान्तभूमिश्चरमकथा वा विलोकिता वीक्षिता । इतःपरं दर्शनीयं नास्तीति भावः । **इदमिति** । इदममृतं पीयूषं तद्वद्रसो यस्यैवंविधं सरसस्तटाकस्य सलिलं पानीयमुत्पाद्य निर्माय वेधसा ब्रह्मणोत्पादयता जगत्सृजता स्वसृष्टिः स्वकीयनिर्मितिः पुनरुक्ततामिव नीता प्रापिता । एकमेव वस्तु नामान्तरेण विहितमिति भावः । अमृतगुणोपपादनेन पुनरुक्ततां स्पष्टयन्नाह—**इदमिति** । इदमपि । खलु निश्चितम् । इदं प्रत्यक्षोपलभ्यमानमप्यमृतमिव पीयूषमिव सर्वेषामिन्द्रियाणामाह्लादनं प्रीणनं तत्र समर्थं बलिष्ठमतिविमलतयातिस्वच्छतया चक्षुषो नेत्रस्य प्रीतिं स्नेहमुपजनयत्युत्पादयति । तथा शिशिरः शीतलस्तस्य भावस्तत्ता तया करणभूतया स्पर्शसुखमुपहरति करोति । तथा कमलस्य नलिनस्य सुगन्धो यस्मिंस्तस्य भावस्तत्ता तया घ्राणं नासिकामाप्याययति प्रीणयति । तथा हंसैर्मरालैर्मुखरो वाचालस्तस्य भावस्तत्ता तया श्रुतिं श्रोत्रमानन्दयति प्रीणयति । तथा स्वादुतया मिष्टतया रसनां रसज्ञामाह्लादयति प्रीणयति । **नियतमिति** । नियतं निश्चितम् । अस्यैव सरस एव दर्शनतृष्णयावलोकनलोभेनोमापतिर्भगवानीश्वरः । **कैलासेति** । कैलासो रजताद्रिस्तत्र । यो निवासोऽवस्थानं स एव व्यसनमासक्तिस्तन्न परित्यजति न जहाति । **न खल्विति** । खलु निश्चितम् । रथाङ्गपाणिश्चक्रपाणिर्देवः कृष्णः सांप्रतमिदानीं जले पानीये शयनं स्वापस्तस्य दोहदमभिलाषं नाचरति न करोति । पूर्वं जल-

---

**टिप्प०**—1 अधोमुखः पपात टीकाकारः । इदानीमपि समुद्रे शेत एव नारायणः, ततश्च जलशयनदोहदं नाचरतीति कथं संगच्छते । तस्मात् 'रथाङ्गपाणिर्जलशयनदोहदं सांप्रतं युक्तं नाचरति, यदिदं सरो विहाय लवणपयस्युदन्वति स्वपिति' इत्यर्थ उचितः । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः ।

---

**पाठा०**—१ आलोकन. २ मनस्यकरोत्. ३ तुरग. ४ अवलोकिता. ५ उपाहरति. ६ दोहदयितः.

ङ्गपाणिर्यदिदममृतरससुरभिसलिलमपहाय लवणरसपरुषपयस्युदन्वति स्वपिति। नूनं चेदं न प्रथममासीत्सरो येन प्रलयवराहघोणाभिघातभीता[1] भूतधात्री कलशयोनिपानपरिकलितसकलसलिलं सागरमवतीर्णा, अन्यथा यद्यत्रागाध[2]नेकपातालगम्भीराम्भसि निमग्ना भवेन्महासरसि किमेकेन महावराहसहस्रैरपि नासादिता भवेत्। नूनं चास्मादेव सलिललेशमादायादाय[3] महाप्रलयेषु प्रलयपयोदाः प्रलयदुर्दिनान्धकारितदश[4]दिशः प्लावयन्ति भुवनान्तराणि। मन्ये च यत्सृष्टेरर्वाक्सलिलमयं[5] ब्रह्माण्डरूपमादौ भुवनमभूत्तदिदं पिण्डीभूय[6] सरोव्यपदेशेनावस्थितम्' इति विचारयन्नेव तस्य शिलाशकलकर्कशवालुकाप्रायम्, विद्याधरोद्धृतसनालकुमुदकलापार्चिता[7]नेकचारुसैकतलिङ्गम्, अरुन्धतीदत्तार्घ[8]पयःपर्यस्त[9]रक्तकमलशो-

---

शयनापेक्षाकारणमाह—**यदिति**। यदिति हेत्वर्थे। इदममृतवत्पीयूषवद्रसो यस्मिन्नेवंविधं यत्सुरभिसलिलं सुगन्धिपानीयं तदपहाय त्यक्त्वा लवणो यो रसस्तेन परुषं रूक्षं पयो यस्मिन्नेवंभूत उदन्वति समुद्रे स्वपिति शयनं करोति। अतो नूनं निश्चितम्। इदं प्रथममादौ नासीन्नाभूत्। एतदभावादेव कृष्णः समुद्रे शयनं करोतीति भावः। कारणान्तरमाह—**येनेति**। येन कारणेनेदं प्रथमतो नासीदत एव भूतधात्री भूतानां प्राणिनां धात्री धारणक्षमा। एतदपेक्षया। नूनं सागरं समुद्रमवतीर्णा मध्यप्रविष्टा। अथ तां विशेषयन्नाह—**प्रलयेति**। प्रलये कल्पान्ते योऽवताररूपो वराहस्तस्य या घोणा नासा। उपलक्षणं चैतत्। तेन दंष्ट्रया ग्रहणम्। तयाभिघातः प्रहारस्तस्माद्भीता त्रस्ता सती। उपर्यागतेति शेषः। सागरं विशेषयन्नाह—**कलश इति**। कलशयोनिरगस्तिस्तेन पानार्थं परिकलितं चिन्ताविषयीकृतं सकलं समग्रं सलिलं यस्य स तम्। अनेनातिन्यूनत्वमेतस्य ध्वनितम्। यदि सरसः समुद्रो महत्तरः स्यात्तदैकवराहघोणाभिघातमात्रेण भीता उपर्यागतो न भवेदेव। अत एवाग्रे व्यतिरेकमुखेन समर्थयन्नाह—**अन्यथेति**। पूर्वोक्तविपर्यये। यद्यत्र महासरसि निमग्ना ब्रुडिता भवेत्स्यात्। **अगाध इति**। अगाधमतलस्पृक् एवंविधानि यान्यनेकानि पातालानि। वडवामुखानीति यावत्। गंभीरं[2] गम्भीरमम्भो यस्मिन्। **किमिति**। एकेन वराहेण किम्। न किमपीत्यर्थः। **महेति**। महावराहसहस्रैरपि नासादिता न प्राप्ता भवेत्। एतेन कल्पान्तेऽप्येतस्यावस्थानं सूचितमिति भावः। **नूनमिति**। नूनं निश्चितम्। महाप्रलयेषु कल्पान्तेषु प्रलयपयोदाः कल्पान्तमेघा अस्मादेव सरसः सलिललेशं जललेशमादायादाय गृहीत्वा गृहीत्वा भुवनान्तराणि त्रिभुवनविवराणि प्लावयन्ति जलमयीकुर्वन्ति। अथ प्रलयमेघान्विशेषयन्नाह—**प्रलयेति**। प्रलयकालीनं यद्दुर्दिनं मेघजं तमस्तेनान्धकारिता अन्धकारवदाचरिता दश दिशो यैस्ते तथा। **मन्ये चेति**। अहमिति मन्ये जानामि यच्चादौ सृष्टेर्विश्वनिर्मितेरर्वाक्सलिलमयं जलमयं ब्रह्माण्डरूपं भुवनं त्रिविष्टपमभूत्तदिदं पिण्डीभूयैकीभूय सरोव्यपदेशेन तटाकमिषेणावस्थितमिति विचारयन्नेव चिन्तयन्नेव चन्द्रापीडः सरसो दक्षिणतीरं दक्षिणदिग्वर्ति प्रतीरमासाद्य प्राप्य तुरगादश्वादवततारावतीर्णवान्। अथ दक्षिणतीरं विशेषयन्नाह—**शिलेति**। शिलाशकलवच्छिलाखण्डवत्कर्कशाः कठिना या वालुकाः सिकतास्ताः प्रायो बाहुल्येन यस्मिंस्तत्। **विद्येति**। विद्याधरैर्व्योमचारिभिरुद्धृतानि गृहीतानि यानि सनालानि कुमुदानि कैरवाणि तेषां कलापः समूहस्तेनार्चितानि पूजितान्यनेकान्यसंख्यानि चारूणि मनोहराणि जलोज्झितं पुलिनं सैकतं तत्र स्थितानि[3] लिङ्गानीश्वरसंबन्धीनि यस्मिंस्तत्। **अरुन्धतीति**। अरुन्धत्या वसिष्ठपत्न्या दत्तं यदर्घपयः पूजार्थं जलं तस्मात्पर्यस्तानि पतितानि

---

**टिप्प०**—1 शुद्धोऽयं प्रलापः। पृथिवीकथायां विवक्षितायां स्त्रीत्वं संबध्यम्। 2 अगाधपातालवत् गंभीरम् ( अतलस्पर्शि ) अम्भः यत्र तस्मिन्। 3 अशुद्धमिदम्। कुमुदकलापेन अर्चितानि अनेकानि चारूणि सैकतलिङ्गानि ( वालुकानिर्मितशिवलिङ्गानि ) यस्मिन् तत्। इत्यर्थः।

---

**पाठा०**—१ अभिभूता. २ अगाध; अनेक. ३ आदाय महा. ४ दिशः. ५ यत्तत्सलिलमयम्. ६ पिण्डीभूतम्. ७ अर्चितम्. ८ दत्तदिनकरार्घ; दत्तदिनकरार्घ्य; हस्तदत्तदिनकरार्घ. ९ पर्यस्तारक्त.

भितम्, उपकूलशिलातलोपविष्टजलमानुषनिषेव्यमाणातपम्, अभ्यर्णतया च कैलासस्य स्नानागतमातृमण्डलपदपङ्क्तिमुद्राङ्कितम्, अवकीर्णभस्मसूचितमग्नोत्थितगणकदम्बकोद्धूलनम्, अवगाहावतीर्णगणपतिगण्डस्थलगलितमदप्रस्रवणसिक्तम्, अतिप्रमाणपादानुमीयमानतृषितकात्यायनीसिंहावतरणमार्गं दक्षिणतीरमासाद्य तुरगादवततार ।

अवतीर्य च व्यपनीतपर्याणमिन्द्रायुधमकरोत् । क्षितितलुठितोत्थितं च गृहीतकतिपययवसग्रासं सरोऽवतार्य पीतसलिलमिच्छया स्नातं चोत्थाप्यान्यतमस्य समीपवर्तिनस्तरोर्मूलशाखायामपगतखलीनं हस्तपाशशृङ्खलया कनकमय्या चरणौ बद्ध्वा कृपाणिकावलूनान्क्षिप्त्वा चाग्रतः कतिचित्सरस्तीरदूर्वाप्रवालकवलान्पुनरपि सलिलमवततार । ततश्च प्रक्षालितकरयुगलश्चातक इव कृत्वा जलमयमाहारम्, चक्राह्व इवास्वाद्य मृणालशक-

---

थानि रक्तकमलानि तैः शोभितं विराजितम् । **उपेति** । उपकूले तटसमीपे यानि शिलातलानि तत्रोपविष्टानि स्थितानि जलमानुषाणि प्रसिद्धानि तैर्निषेव्यमाणः सेव्यमान आतपः सूर्यालोको यस्मिन् । कैलासस्य रजताद्रेरभ्यर्णतया समीपवर्तितया स्नानार्थमागतं यन्मातृमण्डलं ब्राह्मीप्रभृतीनां सप्तदेवीनां समुदायस्तस्य पदपङ्क्तिश्चरणवीथी तस्या मुद्रा भूमौ तत्प्रतिकृतिरूपा तयाङ्कितं चिह्नितम् । **अवकीर्णेति** । अवकीर्णमितस्ततः पर्यस्तं यद्भस्म भूतिस्तेन सूचितं प्रकाशितं स्नातुं मग्नं पश्चादुत्थितं यद्गणानां प्रमथानां कदम्बकं समुदायस्तस्य त्रिपुण्ड्रसमय उद्धूलनं भस्मोद्धूलनं यस्मिंस्तथा । **अवगाहेति** । अवगाहार्थं जलक्रीडार्थमवतीर्ण उत्तरितो यो गणपतिर्गणेशस्तस्य गण्डस्थलात्करटप्रदेशाद्गलितं च्युतं यन्मदप्रस्रवणं दानक्षरणं तेन सिक्तं सिञ्चितम् । **अतीति** । अतिप्रमाणमतिदीर्घम् । **पादेति** । पादैश्चरणन्यासैरनुमीयमानोऽनुमानविषयीक्रियमाणस्तृषितः पिपासितो यः कात्यायनीसिंहो मनस्तालाभिधस्तस्यावतरणमार्गः सरसि समागमनपन्था यस्मिंस्तत्तथा ।

**अवतीर्येति** । अश्वादवतरणं कृत्वेन्द्रायुधनामानमश्वरत्नं व्यपनीतं दूरीकृतं पर्याणं पल्ययनं यस्मादेवंभूतमकरोदसृजत् । अथाश्वं विशेषयन्नाह—**क्षितीति** । पूर्वं क्षितितले पृथ्वीतले लुठितमपावृत्तं पश्चादुत्थितं कृतोत्थानम् । **गृहीतेति** । गृहीता आत्ताः कतिपये कियन्तो यवसं तृणं तस्य ग्रासा गुडेरका येन स तं ततः पश्चात्तमश्वं सरोऽवतार्य सरोमध्ये नीत्वा पीतं सलिलमिच्छया येन न तु बलात्कारेण स्नातं कृताप्लवं चोत्थाप्योत्थानं कारयित्वा पश्चात्तटमानीयान्यतमस्य कस्यचित्समीपवर्तिनस्तरोर्वृक्षस्य मूलशाखायां च स्कन्धशाखायां गले निगरणे बद्ध्वा । कीदृशम् । अपगतं दूरीभूतं खलीनं मुखयन्त्रणं यस्यैवंभूतम् । कनकमय्या सुवर्णनिर्मितया हस्तपाशशृङ्खलया हस्तबन्धनार्थं यः पाशो ग्रन्थिस्तदर्थं या शृङ्खला तया चरणौ पादौ बद्ध्वा नियम्य कृपाणिका क्षुरिका तयावलूनान्कर्तितान्कतिचित्कियतः सरस्तीरस्य तटाकप्रतीरस्य दूर्वायाः शतपर्विकायाः प्रवालकवलान्किसलयगुडेरकानग्रतः क्षिप्त्वा पुरो निधाय । अत्र चकारः क्रियासमुच्चयार्थः । पुनरपि द्वितीयवारमपि सलिलं नीरमवततारोत्तीर्णवान् । स्वयमिति शेषः । ततश्च तदनन्तरं प्रक्षालितं करयुगलं हस्तयुग्मं येनैवंभूतः सरःसलिलादुदगादुदतिष्ठदित्यन्वयः । चातक इव तोकक इव जलमयं पानीयमयमाहारं प्रत्यवसानं कृत्वा विधाय । चक्राह्व इव रथाङ्गनामेव मृणालशकलानि बिसखण्डान्यास्वाद्या-

---

**टिप्प०—1 पुंस्त्वं योग्यम् । 2 इदमपि क्वाचित्कम् । अन्यथा अष्ट मातरः सुप्रसिद्धाः । 3 इदमप्यनुचितम् । अतिप्रमाणैः अतिदीर्घैः पादैः पदचिह्नैः अनुमीयमान इति योजना योग्या । 4 इदमपि नवीनं श्रूयते ।**

---

पाठा०—१ उपशोभितम्. २ मण्डलमुद्राङ्कितम्. ३ अवतीर्ण. ४ वृन्द. ५ अवगाहन. ६ गण्डस्थलमद. ७ पद. ८ अवतार. ९ दक्षिणम्. १० अवतीर्य. ११ अखलीनम्. १२ चरेण. १३ तीरप्ररूढदूर्वा. १४ स्वयमपि. १५ करचरण. १६ जलमाहारम्. १७ चक्राह्वयः.

लानि, शिशिरांशुरिव कराग्रैः स्पृष्ट्वा कुमुदानि, फणीवाभिनन्द्य जलतरङ्गवातान्, अनङ्गशरप्रहारातुर इवोरसि निधाय नलिनीदलोत्तरीयम्, अरण्यगज इव शीकरार्द्रपुष्करोपशोभितकरः सरःसलिलादुदगात्। प्रत्यग्रभग्नशिरैश्च समृणालकैर्जलकणिकाचितैः कमलिनीपलाशैर्लतामण्डपपरिक्षिप्ते शिलातले स्रस्तरमास्तीर्य निधाय शिरसि पिण्डीकृतमुत्तरीयं निषसाद। मुहूर्तं विश्रान्तश्च तस्य सरस उत्तरे तीरप्रदेशे समुच्चरन्तमुन्मुक्तकवलेन निश्चलश्रवणपुटेन तन्मुखीभूतेनोद्ग्रीवेणेन्द्रायुधेन प्रथममाकर्णितं श्रुतिसुभगं वीणातन्त्रीझंकारमिश्रममानुषं गीतशब्दमश‍ृणोत्। श्रुत्वा च कुतोऽत्र विगतमर्त्यसंपाते प्रदेशे गीतध्वनेः संभूतिरिति समुपजातकौतुकः कमलिनीदलसंस्तरादुत्थाय तामेव गीतसंपातसूचितां दिशं चक्षुः प्राहिणोत्।

---

स्वादं कृत्वा। शिशिरांशुरिव हिमांशुरिव कुमुदानि कैरवाणि कराग्रैर्हस्ताग्रैः स्पृष्ट्वा स्पर्शं कृत्वा। फणीव भुजंग इव जलतरङ्गवातानम्भःकल्लोलसमीरानभिनन्द्य संस्तूय। अनङ्गशरप्रहारातुर इव कामबाणानुविद्ध इव नलिनीदलोत्तरीयं कमलिनीपत्रवैकक्ष्यमुरसि वक्षसि निधाय संस्थाप्य। अरण्यगज इव वनकरीव शीकरेणार्द्रमुन्नं पुष्करं कमलं शुण्डाग्रं च तेनोपशोभितः करो हस्तः शुण्डा च यस्यैवंभूतश्चन्द्रापीडः। **लतेति।** लतालक्षणो यो मण्डपो जनाश्रयस्तेन 'परिक्षिप्ते वलयिते। परिक्षिप्तं वलयितम्' इति कोशः। एवंभूते शिलातले पृथुप्रस्तरोपरि स्रस्तरमास्तीर्यास्तरणं कृत्वा ततः पिण्डीकृतं पिण्डतां प्रापितं यदुत्तरीयं निवसनं शिरसि मस्तकस्याधोभागे निधाय संस्थाप्य निषसाद शयनं चकारेत्यन्वयः। कैः स्रस्तरं कृतवानित्याकाङ्क्षायामाह—**कमलिनीति।** कमलिनी नलिनी तस्याः पलाशैः पत्रैः। कीदृशैः। प्रत्यग्रं तत्कालं भग्नानि खण्डितानि शिरांसि प्रान्तानि येषां तैः समृणालकैः सतन्तुलैः। स्वार्थे कप्रत्ययः। जलस्य पानीयस्य याः कणिकाः सूक्ष्मविप्रुषस्ताभिराचितैर्व्याप्तैः। कियन्मात्रं सुप्त इत्याकाङ्क्षायामाह—**मुहूर्तेति।** मुहूर्तं घटिकाद्वयं विश्रान्तः कृतविश्रामः। चकारः समुच्चयार्थः। अथ च तस्य सरस उत्तर उत्तरदिक्संबन्धिनि तीरप्रदेशे तटप्रदेशे चन्द्रापीडः सम्यक्प्रकारेणोत्प्राबल्येन चरन्तं प्रसरन्तं गीतशब्दं गेयध्वनिमश‍ृणोदाकर्णयत्। एतद्विशेषयन्नाह—**उन्मुक्तेति।** उत्प्राबल्ये मुक्तस्त्यक्तः कवलो ग्रासो येन स तेन निश्चलं स्थिरं श्रवणपुटं कर्णपुटं यस्य स तेन तन्मुखीभूतेन तदभिमुखीभूतेनोद्ग्रीवेणोर्ध्वकन्धरेणैवंविधेनेन्द्रायुधेन प्रथममादावाकर्णितं श्रुतम्। कीदृशम्। श्रुतिसुभगं कर्णमनोहरं वीणा वल्लकी तस्यास्तन्त्र्यः प्रसिद्धास्तासां झंकारोऽव्यक्तशब्दस्तेन मिश्रं संपृक्तम्। अमानुषम्। दिव्यमित्यर्थः। **श्रुत्वेति।** श्रुत्वाकर्ण्य। चकारः पूर्ववत्। इति समुपजातं समुत्पन्नं कौतुकमाश्चर्यं यस्य स तथा। इतिशब्दद्योत्यमाह—**कुत इति।** अत्र विगतमर्त्यसंपातेऽमानुषे प्रदेशे गीतध्वनेः संभूतिः प्रभवः कुतः स्यात्। **कमलिनीति।** कमलिनी नलिनी तस्या दलैः पत्रैर्यः संस्तरः प्रस्तरस्तस्मादुत्थायोत्थानं कृत्वा गीतसंपातेन गेयोत्पत्त्या सूचितां ज्ञापितां तामेव दिशं

---

**टिप्प०—**1 कुमारपक्षे अङ्गुलिभिः, चन्द्रपक्षे किरणाग्रैः,। 2 नलिनीदलरूपमुत्तरीयम्। 3 इदमपि आमकम्। शीकरार्द्रं यत् पुष्करं (कमलम्) तेन उपशोभितः करः शुण्डा यस्य सः (करी)। उपशोभितः करः (हस्तः) यस्य सः (युवराजः)। 4 मण्डपाकाराभिर्लताभिः परिक्षिप्ते इत्यर्थ उचितः। 5 हन्त धिक् टीकाकारम्! 'शिरैः' इति न तृतीयायां रूपं क्वचित्संभवति। 'प्रत्यग्रभग्नशिशिरैः' इत्येव पाठः। प्रत्यग्रं भग्नानि च तानि शिशिराणीति तदर्थः।

---

**पाठा०—**१ आनन्द्या. २ पिधाय. ३ सलिलात्. ४ शिशिरैः. ५ मण्डलपरिक्षिप्तशिलातले. ६ संस्तरम्; प्रस्तरम्. ७ गीतम्. ८ कुतोऽत्र. ९ उपजात. १० पत्रस्रस्तरात्.

अतिदवीयस्तया तु तस्य प्रदेशस्य प्रयत्नव्यापृतलोचनोऽपि विलोकयन्न किंचिद्ददर्श । तमेव केवलमनवरतं शब्दं[1] शुश्राव । कुतूहलवशाच्च[2] गीतध्वनि[3]प्रभवजिज्ञासया कृतगमनबुद्धिर्दत्तपर्याणमिन्द्रायुधमारुह्य प्रियगीतैः प्रथमप्रस्थितैरप्रार्थितैरपि वनहरिणैरुपदिश्यमानवर्त्मा बकुलैलालवङ्गलवलीलतालोलकुसुमसुरभिपरिमलयालिकुलविरुतिमुखरितया तमालनीलया दिङ्नागमदवीथ्येव पश्चिमया वनलेखया निमित्तीकृत्य तं गीतध्वनिमभिप्रतस्थे ।

क्रमेण च संमुखागतैः, अच्छनिर्झर[6]जलकणजालजनितजडिमभिः, जर्जरितभूर्जवल्कलैः, धूर्जटिवृषभ[7]रोमन्थफेनबिन्दुवाहिभिः, षण्मुखशिखण्डिशिखाचुम्बिभिः, अम्बिकाकर्णपूरपल्लवोल्लासन[8]दुर्ललितैः, उत्तरकुरुकामिनीकर्णोत्पलप्रेङ्खोलनदोहदिभिः, आकम्पितकक्कोलैः,[9] नमे-

---

ककुभं प्रति चक्षुर्नेत्रं प्राहिणोत्प्रेरयामास । **तस्येति** । पूर्वोक्तप्रदेशस्य गीतस्थलस्यातिदवीयस्तयातिदूरतया प्रयत्नेनात्युद्यमेन व्यापृते व्यापारिते लोचने नेत्रे येनैवंभूतोऽपि विलोकयन्पश्यन्न किंचिद्ददर्शालोकयामास । केवलमनवरतं निरन्तरं तमेव शब्दं शुश्रावाकर्णयामास । **कुतूहलेति** । कुतूहलवशात्कौतुकवशाच्च गीतध्वनेः प्रभव उत्पत्तिस्तस्य जिज्ञासा ज्ञातुमिच्छा तया कृता विहिता गमने बुद्धिर्येनैवंभूतः । **दत्तेति** । दत्तमारोपितं पर्याणं पल्ययनं यस्मिन्नेतादृशमिन्द्रायुधमश्वमारुह्यारोहणं कृत्वा तया पश्चिमया वनलेखया । तीरस्येति शेषः । तं पूर्वोक्तं गीतध्वनिं निमित्तीकृत्य निदानीकृत्याभिप्रतस्थे संमुखं जगाम । किंविशिष्टः । **उपेति** । उपदिश्यमानः कथ्यमानो वर्त्म मार्गो यस्य सः । कैः । अप्रार्थितैरप्ययाचितैरपि वनहरिणैररण्यमृगैः । अथ तानेव विशिनष्टि—**प्रियेति** । प्रियं वल्लभं गीतं गानं येषां तैरत एव प्रथममादौ प्रस्थितैः प्रचलितैः । अथ वनलेखां विशेषयन्नाह—**बकुलेति** । बकुलः केसरः, एला चन्द्रवाला । 'पृथ्वीका चन्द्रवालैला निष्कुटिर्बहुला' इत्यमरः । लवङ्गो देवकुसुमवृक्षः, लवलीनाम्नी लता वल्लीविशेषः । तासां लोलानि चञ्चलानि कुसुमानि पुष्पाणि तेषां सुरभिर्घ्राणतर्पणः परिमलो गन्धो यस्यां सा तया । **अलीति** । अलिकुलानां भ्रमरसमूहानां या विरुतिः शब्दविशेषस्तया मुखरितया वाचालितया । **तमालेति** । तमालास्तापिच्छास्तैर्नीलयाऽसितया । श्यामत्वसाधर्म्यादाह—**दिङ्नागेति** । दिशां नागा हस्तिनस्तेषां मदवीथ्येव दानश्रेण्येव ।

**क्रमेणेति** । क्रमेण परिपाट्या । चकारः पूर्ववत् । अथ चन्द्रापीडं विशिनष्टि—**पुण्यैरिति** । पुण्यैः पवित्रैः कैलासमारुतै रजताद्रिवायुभिरभिनन्द्यमान आनन्द्यमानः । अथ मारुतानां विशेषणानि । संमुखागतैरभिमुखागतैः । **अच्छेति** । अच्छानि निर्मलानि यानि निर्झरजलानि प्रस्रवणपानीयानि तेषां कणा बिन्दवस्तेषां जालं समूहस्तेन जनित उत्पादितो जडिमा जाड्यं यैस्तैः । **जर्जरितेति** । जर्जरितानि शिथिलीकृतानि भूर्जानां मृदुत्वचां वल्कलानि चोचानि यैस्तैः । **धूर्जटीति** । धूर्जटिरीश्वरस्तस्य यो वृषो बलीवर्दस्तस्य रोमन्थश्चर्वितचर्वणं तस्य फेनो डिण्डीरस्तस्य बिन्दून्वहतीत्येवंशीला वाहिनस्तैः । **षण्मुखेति** । षण्मुखस्य कार्तिकेयस्य यः शिखण्डी मयूरस्तस्य शिखा चूडा तच्चुम्बिभिस्तत्स्पर्शकारिभिः । **अम्बिकेति** । अम्बिकायाः पार्वत्याः कर्णपूरस्य कर्णावतंसस्य यः पल्लवः किसलयं तस्योल्लासनमूर्ध्वीकरणं तत्र दुर्ललितं दुश्चेष्टितं येषां तैः । **उत्तरेति** । उत्तरदिग्वर्तिनां कुरूणां क्षेत्रविशेषाणां याः कामिन्यः स्त्रियस्तासां कर्णोत्पलानां श्रवणकुवलयानां प्रेङ्खोलने आन्दोलने दोहदोऽभिलाषो विद्यते येषां तैः । **आकम्पीति** । आकम्पिता आधूनिताः कक्कोलाः कोशफला यैस्ते तथा तैः । **नमेर्विति** । नमेरवो वृक्षविशेषास्तेषां

---

**टिप्प०—1 येषां तैरित्यर्थ उचितः, मारुतानामेव शीतलत्वस्य वर्णनीयत्वात् । 2 छायावृक्षाः 'छायावृक्षो नमेरुः स्यात्' इति 'स्निग्धच्छायातरुषु वसतिम्' इति मेघदूत-टीकायां मल्लिनाथधृतः शब्दार्णवः ।**

---

**पाठा०—**१ गीतशब्दम्. २ प्रभवाच्च. ३ ध्वनित. ४ सप्तच्छदबकुल. ५ सरस्तीरवन. ६ अनिर्जरजल. ७ वृषभ. ८ उल्लसन. ९ आकम्पितकमलैर्नवकुसुममालापांसुवाहिभिः; आकम्पितकङ्कोलैः.

रुकुसुमपांसुपातिभिः, पशुपतिजटाबन्धार्तवासुकिपरिपीतशेषैः, आह्लादिभिः पुण्यैः कैलास-मारुतैरभिनन्द्यमानो गत्वा च तं प्रदेशं सर्वतो मरकतहरितैः, हारिहारीतरुतिरमणीयैः, भ्रमद्भृङ्गराजनखरजर्जरितजरठकुड्मलैः, उन्मदकोकिलकुलकवलीकृतसहकारकोमलाग्रपल्लवैः, उन्मदषट्चरणचक्रवालवाचालितविकचचूतकलिकैः, अचकितचकोरचुम्बितमरिचाङ्कुरैः, चम्पकपरागपुञ्जपिञ्जरकपिञ्जलजग्धपिप्पलीफलैः, फलभरनिकरपीडितदाडिमनीडप्रसूतकलविङ्कैः, प्रक्रीडितकपिकुलकरतलताडनतरलिततांडीपुटैः, अन्योन्यकुपितकपोतपक्षपालीपातितकुसुमैः, कुसुमरजोराशिसारसारिकाश्रितशिखरैः, शुकशतमुखनखशिखरशकलितफलस्फीतैः,

---

कुसुमानि पुष्पाणि तेषां पांसवो रजांसि पातयन्तीत्येवंशीलास्तैः । **पशुपतीति** । पशुपतेरीश्वरस्य जटा सटा तस्या बन्धो नियन्त्रणं तेनार्तः पीडितो यो वासुकिर्नागराजस्तेन परिपीता आस्वादितास्तेभ्यः शेषा अवशिष्टास्तैराह्लादिभिः प्रमोदकारिभिः । तं प्रदेशं स्थानं गत्वा स चन्द्रापीडः पादपैर्वृक्षैः परिवृतं चन्द्रप्रभनाम्नश्चन्द्रप्रभाभिधानस्य कैलासपादस्य रजताद्रिपर्यन्तपर्वतस्य तलभागनिविष्टमधोदेशस्थितं भगवतः शूलपाणेः शंभोः शून्यं जनवर्जितं भूतलभागे संनिविष्टं स्थापितं सिद्धायतनं चैत्यमपश्यदित्यन्वयः । अथ पादपान्विशेषयन्नाह—**सर्वत इति** । सर्वतः समन्तान्मरकतमश्मगर्भं तद्वद्धरितैर्नीलितैः । **हारीति** । हारिणो मनोहरा ये हारीता मृदङ्कुरास्तेषां रुतयः शब्दास्तै रमणीयैर्मनोहरैः । **भ्रमदिति** । भ्रमन्तश्चलन्तो ये भृङ्गराजा धूम्याटाः पक्षिणस्तेषां नखरा नखास्तैर्जर्जरितानि श्लथीकृतानि जरठानि कठिनानि कुड्मलानि येषां तैः । **उन्मदेति** । उन्मदान्यत्युत्कृष्टमदयुक्तानि यानि कोकिलकुलानि पिकसमूहाः तैः कवलीकृता भक्षिताः सहकारस्याम्रस्य कोमला मृदवोऽग्रपल्लवाः प्रान्तकिसलयानि येषु तैः । **उन्मदेति** । उन्मदा ये षट्चरणा भ्रमरास्तेषां चक्रवालं समूहस्तेन वाचालिता मुखरीकृता विकचाः स्फुटाश्चूतकलिकाः सहकारकोरका येषु तैः । **अचकित इति** । अचकिता अत्रस्ता ये चकोरा विषसूचकास्तैश्चुम्बिताश्चर्विता मरिचानां श्वेतशोभाञ्जनानामङ्कुराः अरोहा येषु तैः । **चम्पकेति** । चम्पको हेमपुष्पकस्तस्य यः परागः पौष्पं रजस्तस्य पुञ्जः समूहस्तद्वत्पिञ्जराः पीतरक्ता ये कपिञ्जलास्तित्तिरास्तैर्जग्धानि भक्षितानि पिप्पल्या वैदेह्याः फलानि येषु तैः । **फलेति** । फलस्य भरो भारस्तस्य निकरः समूहस्तेन पीडिता बाधिता दाडिमाः करकास्तेषु ये नीडाः कुलायास्तेषु प्रसूता जनिताः कलविङ्काः कुलिङ्गका येषु तैः । **प्रक्रीति** । प्रक्रीडितं क्रीडया प्रवृत्तं यत्कपिकुलं गोलाङ्गूलसमूहस्तस्य करतलानि पाणितलानि तेषां ताडनेन प्रघातेन तरलितानि कम्पितानि ताडीपुटानि येषु तैः । **अन्योन्येति** । अन्योन्यं परस्परं कुपिताः कोपं प्राप्ता ये कपोताः पारावतास्तेषां पक्षपाल्यो गरुद्वीथ्यस्ताभिः पातितानि स्रस्तानि कुसुमानि प्रसूनानि येषां तैः । **कुस्विति** । कुसुमानि पुष्पाणि तेषां रजः परागस्तस्य राशिः समूहस्तदनुसारिण्यो याः सारिकाः पीतपादास्ताभिराश्रितानि व्याप्तानि शिखराणि वृक्षप्रान्ता येषां तैः । **शुकेति** । शुकानां कीराणां यच्छतं तस्य मुखान्याननानि नखा नखराश्च

---

**टिप्प०**—1 'हरियल' इति भाषायां ख्याताः पक्षिविशेषाः । 2 भृङ्गराजा भ्रमराः 'भृङ्गराजो मधुकरे' इति हैम इति केचित् । 3 रजःपुञ्जेन ( अर्थात् तत्पतनेन ) पिञ्जरैरित्येवोचितम् । 4 चटका इव प्रायः प्रसिद्धाः । 5 तालीपत्राणि । 6 'शारसारिका' इत्येव पाठः । रजोराशिना शाराः चित्राः याः सारिका इति तदर्थः ।

---

**पाठा०**—१ बन्धनवासुकि. २ नख. ३ जठर. ४ सहकारकोरकैः. ५ चकोरचञ्चु. ६ निपीडित. ७ विडदाडिमी. ८ चपलकपिलकपि. ९ नाडि. १० कलहकुपित. ११ कपोतपोतसंहतलोलपक्ष; कपोतपोतपक्ष. १२ पतित. १३ सारसिकामिश्र. १४ शिशिरैः.

जलधरजललुब्धविप्रलब्धमुग्धचातकध्वानमुखरिततमालखण्डैः, इभकलभकोलूनपल्लववेल्लितलवलीवलयैः, आलीयमाननवयौवनमत्तपारावतपक्षक्षेपपर्यस्तकुसुमस्तवकैः, तनुपवनकम्पितकोमलकदलीदलवीजितैः, अविरलफलनिकरावनतनालिकेरवनैः, अकठोरपत्रपुटपूगविटपिपरिवृतैः, अनिवारितविहगतुण्डखण्डितपिण्डखर्जूरजालकैः, मदमुखरमयूरीमधुररवविराजितान्तरैः, आकलितकलिकाकलापदन्तुरितैः, अन्तरान्तरा कैलासतरङ्गिणीतरङ्गितसिकतिलतलभूमिभागैः, वनदेवताकरतलनिवहनिभमलक्तकजललवसिक्तमिव किसलयनिकरमतिसुकुमारमुद्वहद्भिः, ग्रन्थिपर्णग्राससमुदितचमरीकुलनिषेवितमूलैः, कर्पूरागरुप्रायैः, इन्द्रायुधैरिव घना-

---

तेषां शिखराण्यग्राणि तैः शकलितानि खण्डितानि यानि फलानि तैः स्फीतैः स्फारैः । **जलेति** । जलधरो मेघस्तस्य जलं पानीयं तत्र लुब्धा आसक्ता अथ च विप्रलब्धा वञ्चिता ये मुग्धचातका बप्पीहास्तेषां ध्वानेन शब्देन मुखरितं वाचालितं तमालखण्डं तापिच्छवनं येषु तैः । एतेन तमालखण्डानां कृष्णवर्णत्वेन जलधरभ्रमान्मुग्धचातकैः प्रार्थ्यत इति ध्वनितम् । **इभेति** । इभानां हस्तिनां कलभास्त्रिंशदब्दकाः । स्वार्थे कः । तैरुलूनाः खण्डिताः पल्लवाः किसलयानि येषामेवंविधानि वेल्लितान्यान्दोलितानि लवलीवलयानि येषु तैः । **आलीयेति** । आ समन्ताल्लीयमाना अन्तःप्रविश्यमाना ये नवयौवनेन प्रत्यग्रतारुण्येन मत्ता उत्कटाः पारावताः कलरवास्तेषां पक्षक्षेपेण गरुद्विक्षेपेण पर्यस्ताः पतिताः कुसुमस्तबकाः पुष्पगुच्छा येषां तैः । **तन्विति** । तनुपवनेन मन्दवायुना कम्पिता धूता याः कोमला मृदवः कदल्यो रम्भास्तासां दलानि पत्राणि । 'पर्णं पत्रं छदं दलम्' इति कोशः । तैर्वीजितैः कृतवालव्यजनैः । **अविरलेति** । अविरलान्यपेलवानि[1] यानि फलानि तेषां निकरः समूहस्तेनावनतानि नमितानि नालिकेरवनानि लाङ्गलीखण्डानि येषु तैः । **अकठोरेति** । अकठोराणि मृदूनि पत्रपुटानि येषामेवंविधा ये पूगविटपिनः क्रमुकवृक्षास्तैः परिवृतैः परिवेष्टितैः । **अनिवेति** । अनिवारिता अनिषिद्धा ये विहगाः पक्षिणस्तेषां तुण्डानि मुखानि तैः खण्डितानि शकलीकृतानि पिण्डखर्जूरजालकानि प्रसिद्धानि येषु तैः । **मदेति** । मदेन गर्वेण ऋतुविशेषजनितबलभरेण वा मुखरा वाचाला या मयूर्यो नीलकण्ठयोषितस्तासां यो मधुरो मिष्टो रवः शब्दस्तेन विराजितान्यन्तराणि मध्यानि येषां तैः । **आकलीति** । आकलिताः प्रादुर्भूता याः कलिकाः कोरकाः । 'कलिका कोरकोऽस्त्रियाम्' इति कोशः । तस्याः कलापः संघातस्तेन दन्तुरितैरुन्नतैः । **कैलासेति** । कैलासस्य रजताद्रेरन्तरान्तरा । मध्ये मध्य इत्यर्थः । यास्तरङ्गिण्यो नद्यस्तासां तरङ्गितेन भङ्गितेन सिकतिलो वालुकितस्तलभूमिभागोऽधःप्रदेशो येषां तैः । किं कुर्वद्भिः पादपैर्वृक्षैः । अतिसुकुमारमतिमृदु किसलयनिकरं पल्लवसमूहमुद्वहद्भिर्धारयद्भिः । रक्तत्वसादृश्यात्तदेव विशेषयन्नाह—**वनेति** । वनदेवतानामरण्याधिष्ठात्रीणां करतलनिवहनिभमिव हस्ततलसमूहसदृशमिव । **अलेति** । अलक्तको यावकस्तस्य जललवैः सिक्तमिव सिञ्चितमिव । **ग्रन्थीति** । ग्रन्थिपर्णं शुकम् । 'ग्रन्थिपर्णं शुकं बर्हम्' इत्यमरः । तस्य ग्रासेन मुदितानि हर्षितानि यानि चमरीकुलानि वनोद्भवगोसमूहानि तैर्निषेवितानि सेवितानि मूलानि बुध्नानि येषां तैः । **कर्पूरेति** । कर्पूरा अन्तर्गर्भितघनसारवृक्षाः, अगरवो राजार्हाः प्रायो बाहुल्येन विद्यन्ते येषु तैः । **इन्द्रेति** । इन्द्रायुधानीन्द्रधनूंषि तैरिव । उभयोः साम्यमाह—**घनेति** । घनं निबिडमव-

---

**टिप्प०**—1 इदमपि चापल्यमात्रम् । अविरलं ( निबिडम् ) फलनिकरेणावनतं च नारिकेलानां वनं येषु तैरित्यर्थः । 2 विषमैः इत्युचितम् । 3 कैलासतरङ्गिणीतरङ्गितः ( कैलासतरङ्गिणीनां तरङ्गाः संजाताः यस्मिन् सः ) सिकतिलश्च तलभूमिभागो येषां तैः ।

---

**पाठा०**—१ जललव. २ कृतासीकमान. ३ मदमत्त. ४ पर्यस्तस्तवकैः. ५ पूत. ६ विरावित; रञ्जित. ७ अकलित. ८ दन्तुरैः. ९ पर्णक. १० समुदित. ११ घनावलीस्थानैः.

वस्थानैः, कुमुदैरिवादत्तदिनकरप्रवेशशिशिराभ्यन्तरैः, दाशरथिबलैरिवाञ्जननीलनलपरिगत-प्रान्तैः, प्रासादैरिव सपारावतैः, भवनतापसैरिव संनिहितवेत्रासनैः, रुद्रैरिव नागलताबद्ध-परिकरैः, उदधिकूलपुलिनैरिव निरन्तरोद्भिन्नप्रवाललताङ्कुरजालकैः, अभिषेकसलिलैरिव सर्वौषधिकुसुमफलकिसलयसनाथैः, आलेख्यगृहैरिव बहुवर्णचित्रपत्रशकुनिशतसंशोभितैः, कुरुभिरिव भारद्वाजद्विजोपसेवितैः, महासमरमुखैरिव पुंनागसमाकृष्टशिलीमुखैः, महाकरि-

---

स्थानं येषां तैः । पक्षे घनो मेघः । **कुमुदैरिति** । कुमुदानि कैरवाणि तैरिव । उभयोः साम्यमाह—**अद-त्तेति** । न दत्तो यो दिनकराणां सूर्यकिरणानां प्रवेशस्तेन शिशिरं शीतलमभ्यन्तरं मध्यभागो येषां तैरि-त्यभङ्गश्लेषः । **दाशेति** । दाशरथी रामस्तस्य बलानि सैन्यानि तैरिव । **अञ्जनेति** । अञ्जनवन्नीलानि यानि नलानि तृणानि तैः परिगतो व्याप्तः प्रान्तो येषां तैः । पक्षेऽञ्जननीलनलाः कपयः । शेषं पूर्ववत् । **प्रासादेति** । प्रासादा देवगृहास्तैरिव । 'प्रासादो देवभूपानाम्' इत्यभिधानचिन्तामणिः । भङ्गश्लेषमाह—**सेति** । सह पारावतैर्मर्कटैर्वर्तमानाः सपारावतास्तैः । 'पारावतः कलरवे गिरौ मर्कटतिन्दुके' इत्यने-कार्थः । पक्षे पारावतः कपोतः । **भवनेति** । भवने गृहे स्थिता ये तापसाः परिव्राजकास्तैरिव । एतत्सा-म्यमाह—**संनीति** । संनिहिताः समीपवर्तिनो वेत्रा वृक्षविशेषा असनाः प्रियका येषां तैः, पक्षे संनिहि-तानि वेत्रासनानि विष्टरविशेषा येषामिति बहुव्रीहिः । **रुद्रैरिति** । रुद्रा ईश्वरा एकादश तैरिव । एत-त्साम्यमाह—**नागेति** । नागलता ताम्बूली । 'ताम्बूलवल्ली ताम्बूली नागपर्यायवल्ल्यपि' इत्यभिधानचि-न्तामणिः । तया बद्धः परिकरः परिधिर्येषां तैः । पक्षे नागाः सर्पा एव लता तया बद्धः, अर्थाज्जटायाः परिकरो येषामिति बहुव्रीहिः । **उदधीति** । उदधेः समुद्रस्य कूलं तटं तस्य पुलिनानि जलोज्झितप्रदेशा-स्तैरिव । 'पुलिनं तज्जलोज्झितम्' इति कोशः । उभयोः सादृश्यमाविष्कुर्वन्नाह—**निरन्तरमिति** । निरन्तरं सततमुद्भिन्नानि प्रकटितानि प्रवाला नवपल्लवा लताङ्कुरा वल्लीप्ररोहाश्च तेषां जालकानि वृन्दानि येषु तैः । पक्षे प्रवाललता विद्रुमलता । शेषं पूर्ववत् । **अभीति** । अभिषेकार्थं यानि सलिलानि जलानि तैरिव । एतत्साम्यमाह—**सर्वेति** । सर्वाः समग्राश्च ता ओषध्यः फलपाकान्तास्तासां यानि कुसुमफल-किसलयानि तैः सनाथैः सहितैः । पक्षे मङ्गलकर्मणि सर्वौषधी प्रसिद्धा । **आलेख्येति** । आलेख्यं चित्रं तेन युक्ता गृहास्तैरिव । उभयोः सादृश्यमाह—**बह्विति** । बहुवर्णैरनेकरागैश्चित्राणि पत्राणि पिच्छानि येषा-मेवंभूतानां शकुनीनां पक्षिणां शतं तेन संशोभितैर्विराजितैः । पक्षे बहुवर्णोपेतानि यानि चित्राण्यालेख्यानि तेषु यानि पत्राणि वाह्यानि । शकुनयः पक्षिणः । शेषं पूर्ववत् । **कुरुभिरिति** । कुरवः कुरुवंशोद्भवा राजा-नस्तैरिव । एतयोः सादृश्यमाह—**भारेति** । भारद्वाजा व्याघ्राटा ये द्विजाः पक्षिणस्तैरुपसेवितैः, पक्षे भारद्वाजो द्रोणः । **महेति** । महान्ति प्रकृष्टानि यानि समरमुखानि सङ्ग्रामप्रारम्भास्तैरिव । 'मुखमुपाये प्रारम्भे श्रेणिनिःसरणास्ययोः' इत्यनेकार्थः । एतयोः साम्यार्थमाह—**पुंनागेति** । पुंनागैर्वृक्षविशेषैः समाकृष्टाः समाकर्षिताः शिलीमुखा भ्रमरा येषु तैः । पक्षे पुंनागाः प्रकृष्टपुरुषाः । शिलीमुखा वाणाः । शेषं पूर्ववत् ।

---

**टिप्प०**—1 अशुद्धमिदम् । परिव्राजकानामासनप्रयोजनाभावात् । अत एव भवनतापसैरिव गृहस्थ-तपस्विभिरिव इति व्याख्यानमुचितम् । 2 निरन्तरं उद्भिन्नं तरङ्गाघातेन उत्थितं विद्रुमलतानाम् क्षुद्र-क्षुद्रखण्डसमूहो येषु तैरिति पूर्णपदस्यार्थः । 3 सुरामांसीत्यादयः पूर्वसूचिता इत्यर्थः । 4 नानारङ्गेषु चित्रेषु यानि पत्राणि वाहनानि ( हस्त्यश्वादीनि ) शकुनयः पक्षिणश्च तेषां शतेन शोभितैरित्यर्थः ।

---

**पाठा०**—१ दिनकरकर. २ नीलनलाञ्जन. ३ शोभितैः. ४ भारद्वाजोपसेवितैः; भारद्वाजद्विजोत्तमसेवितैः.

भिरिव प्रलम्बबालपल्लवस्पृष्टभूतलैः, अप्रमत्तपार्थिवैरिव पर्यन्तावस्थितबहुगुल्मकैः, दंशितैरिव भ्रमरसं[1]घातकवचावृतकायैः, प्र[2]माणाभिमुखैरिव वानरकराङ्गुलिस्पृष्टगुञ्जैः, अवनिपालशयनैरिव सिंहपा[3]दाङ्कितत्तरुतलैः, आरब्धपञ्चतपःक्रियैरिवोच्छिखशिखिमण्डलपरिवृतैः, दीक्षितैरिव कृतकृष्णसारविषाणकण्डूयनैः, जरद्गृहमुनिभिरिव जटा[4]लवालक[5]मण्डलधरैः, इन्द्रजालिकैरिव दृष्टिहारिभिः पादपैः परिवृतं चन्द्रप्रभनाम्नस्तस्य सरसः पश्चिमे तीरे

---

महान्तोऽतिस्थूला ये करिणो हस्तिनस्तैरिव । उभयोस्तुल्यतां प्रदर्शयन्नाह—**प्रलम्बेति** । प्रलम्बा लम्बायमाना ये बालपल्लवा नवीनकिसलयानि तैः करणभूतैः स्पृष्टं संघट्टितं भूतलमधःप्रदेशो येषां तैः । पक्षे बालपल्लवाश्चमरप्रान्ताः । शेषं पूर्ववत् । शोभातिशयार्थं हस्तिनां कर्णे चामराणि बध्यन्त इति सर्वप्रसिद्धम् । **अप्रमत्तेति** । अप्रमत्ताः सावधाना ये पार्थिवा राजानस्तैरिव । एतयोः सादृश्यमाह—**पर्यन्त इति** । पर्यन्ते प्रान्तेऽवस्थिता बहवोऽनेके गुल्मका गुच्छका येषु तैः । पक्षे गुल्मकाः सेनाविशेषाः । 'एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका । सेना मुखं गुल्मः' इति कोशः । **दंशितेति** । दंशितैर्वर्मितैरिव । 'दंशितो वर्मितः सज्जः' इति कोशः । एतयोस्तुल्यत्वमाह—**भ्रमेति** । भ्रमराणां शिलीमुखानां यः संघातः समूहः स एव कवचं वर्म तेनावृत आच्छादितः कायो देहो येषां तैः । पक्षे भ्रमरा आवर्तास्तेषां संघातः समूहो येष्वेवंविधानि कवचानि संनाहाः । शेषं पूर्ववत् । **प्रमाणेति** । प्रमाणं तोलनं तत्राभिमुखाः संमुखास्तैरिव । उभयोः प्रकारान्तरेण भङ्गमाह—**वानरेति** । वानरा गोलाङ्गूलास्तैः कराङ्गुलिभिः करशाखाभिः स्पृष्टा आश्लिष्टा गुञ्जा येषु तैः । पक्षे वेति विकल्पार्थः । नराङ्गुलयो मनुष्याङ्गुलयः । शेषं पूर्ववत् । सुवर्णपरिमाणे गुञ्जाया एव ग्रहणमिति लोकप्रसिद्धम् । **अवनीति** । अवनिपाला राजानस्तेषां शयनैस्तल्पैरिव । एतयोः सादृश्यं प्रदर्शयन्नाह—**सिंहेति** । सिंहपादैर्हर्यक्षचरणैरङ्कितानि चिह्नितानि तरु[2]तलानि वृक्षाधोभागा येषां तैः । पक्षे सिंहपादेष्वङ्किता एतादृशानि तलानि । शेषं प्राग्वत् । **आरब्धेति** । आरब्धा प्रस्तुता पञ्चतपःक्रिया पञ्चाग्निसाधनकर्म यैस्तैरिव । एतयोः शब्दसादृश्यमाह—**उच्छिखेति** । उच्छिखमूर्ध्वचूडं यच्छिखिमण्डलं मयूरसमूहस्तेन परिवृतैः परिवेष्टितैः । पक्ष ऊर्ध्वं शिखा ज्वाला यस्यैवंभूतं शिखिमण्डलं वह्निमण्डलम् । शेषं प्राग्वत् । दीक्षिता यज्ञे गृहीतव्रतास्तैरिव । एतयोः साम्यमाविःकर्तुमाह—**कृतेति** । कृतं विहितं कृष्णसारैर्मृगैर्विषाणानां शृङ्गाणां कण्डूयनं कण्डूया येषु तैः । 'कण्डूः कण्डूयनं खर्जूः कण्डूया' इत्यभिधानचिन्तामणिः । पक्षे कृष्णसारविषाणेन कण्डूयनम् । शेषं प्राग्वत् । दीक्षितानामयमाचारो यन्मृगविषाणैः कण्डूयनं विधीयत इति । **जरेति** । जरन्तो ज्यायांसो ये गृहमुनय आश्रमतापसास्तैः पञ्च(?)मुनीनामपत्यानि न भवन्तीति गृहपदं तैरिव । एतयोः सादृश्यप्रदर्शनार्थमाह—**जटेति** । जटाः शिफाः, आलवालक आवापः तस्य मण्डलं परिवेषस्तं धरन्तीति धरैः, पक्षे जटायुक्ता ये बालाः स्तनंधयास्त एव क[3]मण्डलधरा पानीयसमूहधरा येष्विति बहुव्रीहिः । **इन्द्रेति** । इन्द्रजालिका मायिकास्तैरिव । उभयोः सादृश्यमाह—**दृष्टीति** । दृष्टयो नेत्राणि तेषां हारिभिर्हरणशीलैः । नेत्राभिरामैरित्यर्थः । पक्षे दृष्टिवञ्चकैः । अन्वयस्तु

---

**टिप्प०—1 भ्रमरसंघात(भ्रमरसमूह)वत् स्थितैः ( कृष्णवर्णैः ) कवचैः वर्मभिः आवृता देहा येषां तैरिव कवचयुक्तवीरपुरुषैः । इत्यर्थो वाच्यः । 2 प्रमादोयं टीकाकृतो यदयं पाठः स्वीक्रियते–तस्मात् 'सिंहपादाङ्किततलैः' इत्येव पाठः । केसरिणां पादैश्चरणचिह्नैरङ्कितानि तलानि तरुतलानि येषु इति वृक्षपक्षे । सिंहानां पादैरिव पादैः पल्यङ्कपादकैश्चिह्नितानि तलानि शयनतलानि येषु तैरिति अवनिपालपक्षेऽर्थः । 3 धिगिदम् । जटायुक्ता ये बालकास्तेषां मण्डलं समूहं धरन्तीत्यर्थः ।**

---

**पाठा०—१ संपात. २ प्रयाण. ३ पादाङ्किततलैः. ४ दीर्घजटा. ५ कमण्डलु.**

कैलासपादस्य ज्योत्स्नावदातया प्रभया धवलयतस्तं प्रदेशं भूतलभागसंनिविष्टं[1] भगवतः शूलपाणेः शून्यं सिद्धायतनमपश्यत्[2]।

तच्च पवनोद्धूतैरितस्ततः[3] समापतद्भिः[4] केतकीगर्भधूलिभिर्धवलीक्रियमाणकायः[5] पशुपति-दर्शनहेतोर्बलादिव प्रतिपाद्यमानो भस्मव्रतमायतनप्रवेशपुण्यैरिव परिगृह्यमाणः प्रविश्या-द्राक्षीच्चतुःस्तम्भस्फटिकमण्डपिकातलप्रतिष्ठितम्, अचिरोद्धूतैरार्द्रार्द्रैर्दलशिखरगलज्जलबिन्दु-[6][7] भिरूर्ध्वविपाटितचन्द्रबिम्बदलैरिव निजाट्टहासावयवैरिव शेषफणाशकलैरिव पाञ्चजन्यसहो-दरैरिव क्षीरोदहृदयाकारैरुपपादितमौक्तिकमुकुटविभ्रमैः शुचिभिर्मन्दाकिनीपुण्डरीकैः कृता-र्चनम्, अमलमुक्ताशिलाघटितलिङ्गम्, अशेषत्रिभुवनवन्दितचरणम्, चराचरगुरुम्, चतुर्मुखम्, भगवन्तं त्र्यम्बकम्।

---

प्रागेवोक्तः। अथ कैलासपादं विशेषयन्नाह—**ज्योत्स्नेति**। ज्योत्स्ना कौमुदी तद्वदवदातया शुभ्रया प्रभया कान्त्या तं प्रदेशं तत्पार्श्ववर्तिभूभागं धवलयतो धवलीकुर्वतः।

**तच्चेति**। तदायतनं प्रविश्य तत्र प्रवेशं कृत्वा भगवन्तं माहात्म्यवन्तं त्र्यम्बकं गौरीनाथमद्राक्षीद्ददर्शेत्य-न्वयः। अथ चन्द्रापीडं विशेषयन्नाह—**पवनेति**। पवनेन वायुनोद्धूतैः कम्पितैरितस्ततः समापतद्भिर्यत्रतत्र निपतद्भिः केतक्याः प्रसिद्धाया गर्भधूलिभिर्मध्यरेणुभिर्धवलीक्रियमाणः[1] शुभ्रीक्रियमाणः कायो देहो यस्य सः। पाण्डुरत्वसाम्येनाह—**पशुरिति**। पशुपतेरीश्वरस्य यद्दर्शनमवलोकनं तस्य हेतोः तदर्थमित्यर्थः। बलादिव हठादिव भस्मव्रतं विभूतिव्रतं प्रतिपाद्यमान इवाङ्गीक्रियमाण इव। धूलीनां शुचित्वात्पुण्यानामपि तथाविध-त्वात् तत्साम्येनाह—**आयेति**। आयतनं चैत्यं तत्र यः प्रवेशस्तस्माद्यानि पुण्यानि श्रेयांसि तैः परिगृह्यमाण[2] इवोपादीयमान इव। अथ सिद्धायतनं विशेषयन्नाह—**चतुरिति**। चत्वारः स्तम्भाः स्थूणा यस्यामेतादृशी या स्फटिकमण्डपिका चन्द्रकान्तलघुमण्डपस्तस्यास्तलेऽधोभागे प्रतिष्ठितमवस्थितम्। पुनः कीदृशम्। शुचिभिः पवित्रैर्मन्दाकिनी स्वर्धुनी तस्याः पुण्डरीकैः सिताम्भोजैः कृतं विहितमर्चनं पूजनं यस्य तत्। अथ पुण्डरीकाणि विशेषयन्नाह—**अचिरेति**। अचिरोद्धूतैः[3] स्वल्पकालोत्खातैरार्द्राणि चार्द्राणि चार्द्रार्द्राणि तैः। जलस्विन्नैरि-त्यर्थः। **दलेति**। दलानां पत्राणां शिखराण्यग्रभागास्तेभ्यो गलन्तः स्रवन्तो जलस्याम्भसो बिन्दवो विप्रुषो येषु तैः। गलज्जलबिन्दुसाम्येनोत्प्रेक्षते—**ऊर्ध्वेति**। ऊर्ध्वं विपाटितं भिन्नं यच्चन्द्रबिम्बं शशिमण्डलं तस्य दलैः खण्डैरिव। तत्राप्यमृतस्य गलद्बिन्दवो भवन्तीति भावः। अत्र शुक्लत्वसाम्यादाह—**निजेति**। निजः स्वकीयो योऽट्टहासो महान्हासस्तस्यावयवैरिवापघनैरिव। **शेषेति**। शेषस्य नागाधिपतेः फणा स्फटा तस्याः शकलैः खण्डैरिव। अर्धविकसितत्वसाम्यादाह—**पाञ्चेति**। पञ्चजने पाताले भवः पाञ्चजन्यो जनार्दनशङ्ख-स्तस्य सहोदरैरेकोदरसमुत्पन्नैरिव। हृदयस्य पुण्डरीकाकारत्वात्तत्साम्येनाह—**क्षीरेति**। क्षीरोदस्य यद्धृदयं स्वान्तं तद्वदाकार आकृतिर्येषां तैः। अग्रसंकुचितत्वसाम्येनाह—**उपेति**। उपपादितो विहितो मौक्तिकानां रसोद्भवानां मुकुटविभ्रम उष्णीषभ्रान्तिर्यैः। अथ स्थावररूपमधिकृत्य त्र्यम्बकं विशेषयन्नाह—**अमलेति**। अमला निर्मला या मुक्ताशिला मौक्तिकशिला तस्या घटितं निर्मितं लिङ्गं यस्य स तम्। जङ्गमरूपमधिकृ-त्याह—**अशेषेति**। अशेषं यत्त्रिभुवनं त्रिविष्टपं तेन वन्दितौ नमस्कृतौ चरणौ यस्य स तम्। **चरेति**। चराचरस्य जीवलोकस्य गुरुं हिताहितप्राप्तिपरिहारोपदेष्टारम्। **चतुरिति**। चत्वारि मुखानि यस्य स

---

**टिप्प०—**1 गर्भधूलिभिरिति पाठस्वीकारः प्रामादिकः। 'पवनोद्धूतैः' इति पुंविशेषणाऽयोगात्। 'स्त्रियां धूलिः' इति कोशोक्तेः। तस्मात् 'धूलिपटलै'रिति पाठ उचितः। 2 अर्थात् केतकधूलिभिर्धवली-क्रियमाणो नास्ति किंतु सिद्धाश्रमप्रवेशजन्यैः शुचिभिः पुण्यैरेव गृहीतशरीर इत्याशयः। 3 'अचिरो-द्धूतैः' इत्येव पाठ उचितः।

---

**पाठा०—**१ तलभागनिविष्टम्. २ शूलपाणेः सिद्धायतनम्. ३ उद्धूतैः. ४ समापतद्भिः. ५ धूलिधवलैः. ६ अचिरोद्धूतैः. ७ आर्द्रार्द्रदलशिखर; आर्द्रार्द्रशिखर.

तस्य च दक्षिणां मूर्तिमाश्रित्याभिमुखीमासीनाम्, उपरचितब्रह्मासनाम्, अतिविस्तारिणा सर्वदिङ्मुखप्लावकेन प्रलयविप्लुतक्षीरपयोधिपूरपाण्डुरेणातिदीर्घकालसंचितेन तपोराशिनेव सर्वतो विसर्पता पादपान्तरैस्त्रिस्रोतोजलनिभेन पिण्डीभूय वहतेव देहप्रभावितानेन सगिरिकाननं दन्तमयमिव तं प्रदेशं कुर्वतीम्, अन्यथैव धवलयन्तीं कैलासगिरिम्, अन्तर्द्रष्टुरपि लोचनपथप्रविष्टेन श्वेतिमानमिव मनो नयन्तीम्, अतिधवलप्रभापरिगतदेहतया स्फटिकगृहगतामिव दुग्धसलिलमग्नामिव विमलचेलांशुकान्तरितामिव आदर्शतलसंक्रान्तामिव शरदभ्रपटलतिरस्कृतामिव अपरिस्फुटविभाव्यमानावयवाम्, पञ्चमहाभूतमयमपहाय द्रव्या-

---

चतुर्मुखस्तम्। ननु महादेवस्य पञ्चवक्त्रत्वात्कथमत्र चतुर्मुखोपवर्णनमिति वाच्यम्। सामान्यतस्तन्निवासिनः[1] प्रयोजनवशाच्चतुर्मुखस्यापि संभवात्।

तस्य त्र्यम्बकस्य दक्षिणामपसव्यां मूर्तिं प्रतिमामाश्रित्याश्रयणं कृत्वाऽभिमुखीं संमुखीमासीनां निषण्णां प्रतिपन्नं स्वीकृतं पाशुपतमीश्वरसक्तं व्रतं नियमविशेषो यया तां कन्यकां महाश्वेताभिधानां ददर्शेति दूरेणान्वयः। इतः कन्यकां विशेषयन्नाह—**उपेति**। उपरचितं निर्मितं ब्रह्मासनं ध्यानासनं यया सा ताम्। पुनः किं कुर्वतीम्। सगिरिकाननं तं प्रदेशं दन्तमयमिव गजदन्तनिर्मितमिव कुर्वतीं प्रणयन्तीम्। केन। देहप्रभावितानेन शरीरकान्तिकलापेन। अथ प्रभावितानं विशेषयन्नाह—**अतीति**। अतिशयेन विस्तारिणा प्रसरणशीलेन। **सर्वेति**। सर्वदिङ्मुखानां प्लावकेनाच्छादकेन। **प्रलयेति**। प्रलयः कल्पान्तस्तेन विप्लुतो विस्तृतो यः क्षीरपयोधिस्तस्य पूरो रयस्तद्वत्पाण्डुरेण शुभ्रेण। उज्ज्वलत्वसाम्यादाह—**अतीति**। अतिदीर्घोऽत्यायतो यः कालोऽनेहा तेन संचितेनैकत्रीकृतेन विसर्पता प्रचलता तपोराशिना तपःसमूहेनेव। अतिस्वच्छत्वादाह—**पादेति**। पादपान्तरैर्वृक्षान्तरैः प्रतिबन्धकीभूतैः पिण्डीभूय समूहीभूय वहतेव त्रिस्रोतोजलनिभेन गङ्गाम्भःसदृशेन। कैलासस्य श्वेतत्वादेतस्य च तदतिशयवत्त्वादाह—**अन्यथेति**। भिन्नप्रकारेण तेनैव देहप्रभावितानेन कैलासगिरिं रजताद्रिं धवलयन्तीं श्वेतिमानमापादयन्तीमिव। **द्रष्टुरिति**। तेनैव प्रभावितानेन द्रष्टुरपि विलोकयितुरप्यन्तर्लोचनपथप्रविष्टेन नेत्रमध्यमार्गगतेन मनश्चित्तं श्वेतिमानं शुक्लिमानं नयन्तीमिव प्रापयन्तीमिव। **अतीति**। अतिधवलातिशुभ्रा या प्रभा कान्तिस्तया परिगतो व्याप्तो देहो यस्यास्तस्या भावस्तत्ता तया। तथा च देहस्य प्रभारूपस्वच्छद्रव्यान्तरितत्वान्न परिस्फुटं विभाव्यमाना ज्ञायमाना अवयवा अपघना यस्याः। स्वच्छद्रव्यान्तरितत्वसाम्येनोत्प्रेक्षते—**स्फटिकेति**। स्फटिकश्चन्द्रकान्तस्तस्य गृहं धाम तत्र गतामिव प्राप्तामिव। **दुग्धेति**। दुग्धसलिले क्षीरोदे मग्नामिव ब्रुडितामिव। **विमलेति**। विमलं निर्मलं यच्चेलांशुकं वस्त्रविशेषस्तेनान्तरितामिव व्यवहितामिव। **आदर्शेति**। आदर्शतलं मुकुरतलं तत्र संक्रान्तामिव प्रतिबिम्बितामिव। **शरदिति**। शरद्घनात्ययस्तस्या अभ्रपटलानि मेघवृन्दानि तैस्तिरस्कृतामन्तर्हितामिव। अपरिस्फुटावयवत्वादेवाशङ्कते—**पञ्चेति**। पञ्चमहाभूतमयं पृथिव्याद्यात्मकं द्रव्यरूपमङ्गनिष्पादनोपकरणकलापं शरीरजनकसामग्रीमपहाय दूरीकृत्य केवलेन धवलगुणेनैवोत्पादितां निर्मिताम्। शौक्ल्यातिशयवत्त्वादिति भावः। केचिदपहायेत्यस्योभयत्र संबन्धमाहुः। तथा—धवलगुणेनैवोत्पादितायास्तस्याः पृथिव्याद्यनात्मकत्वे द्रव्यत्वमेव न स्यादित्यत आह—**द्रव्येति**। द्रव्यात्मकं

---

**टिप्प०—**1 अज्ञानमेवेदम्। 'तदूर्ध्वभागः संजातश्चतुर्वक्त्रश्चतुर्भुजः। पद्मकेशरगौराङ्गकायो ब्रह्मा महेश्वरः॥' इति कालिकापुराण( द्वादशाध्याय )वचनाच्चतुर्मुखी अपि शिवस्य मूर्तिः। 2 दक्षिणाभिमुखीमित्यर्थः। 3 'चन्द्रमयमिव' इत्येव पाठः कविहृदयानुकूलः, प्रमाणं चात्र सहृदयहृदयम्।

---

**पाठा०—**१ अभिमुखम्. २ परिप्लुत. ३ पयोधिपयःपूर. ४ तपोराशिनैव विसर्पता. ५ हतमयम्; चन्द्रमयम्. ६ लोचनपथं प्रविश्य. ७ अतिबहल. ८ चीनांशुक. ९ परिस्फुट.

त्मकमङ्गनिष्पादनोपकरणकलापं धवलगुणेनैव केवलेनोत्पादिताम्, अध्वरक्रियामिवोद्धतगणकचग्रहभयोपसेवितत्र्यम्बकाम्, रतिमिव मदनदेहनिमित्तं हरप्रसादनार्थमागृहीतहराराधनाम्, क्षीरोदाधिदेवतामिव सहवासपरिचितहरचन्द्रलेखोत्कण्ठाम्, इन्दुमूर्तिमिव स्वर्भानुभयकृतत्रिनयनशरणगमनाम्, ऐरावतदेहच्छविमिव गजाजिनावगुण्ठनोत्कण्ठितशितिकण्ठचिन्तितोपनताम्, पशुपतिदक्षिणमुखहासच्छविमिव बहिरागत्य कृतावस्थानाम्,

---

स्वरूपमपहाय । ननु द्रव्यत्वाभावेऽङ्गानि शरीरावयवास्तन्निष्पादने या उपकरणसामग्र्यपेक्षिता सा न स्यात् । तस्याश्च द्रव्यात्मककार्ये जननेऽसामर्थ्यादत आह—**अङ्गेति** । तदप्यपहाय । न चाभाव एव दूषणम् । अलौकिकप्रसिद्धेः दूषणस्यैव भूषणत्वात् । अध्वरक्रियायाः स्त्रीत्वमाश्रित्याह—**अध्वर इति** । अध्वरो दक्षस्य यज्ञस्तस्य क्रिया कर्म तामिव । उभयसादृश्यमाह—**उद्धतेति** । उद्धता अनार्या ये गणा मनुष्यवृन्दाः पार्षदाश्च तैर्यः कचग्रहः केशग्रहस्तस्माद्यद्भयं तेनोपसेवितः सपर्याविषयीकृतस्त्र्यम्बक ईश्वरो यया सा ताम् । दक्षप्रजापतिनाध्वर ईश्वरो नाहूतः । तेन गणाः प्रेषिताः । तैरध्वरविनाशो विध्वस्त इति पुराणप्रसिद्धम् । **रतिरिति** । रतिर्मनोभवस्य स्त्री तामिव । उभयोः साम्यं स्पष्टमाह—**मदनेति** । मदनेन कंदर्पेण पीडितो यो देहः शरीरं तन्निमित्तं तदर्थम् । मदनोपशान्त्यर्थमित्यर्थः । सा च हरप्रसन्नतायां स्यादित्याशयेनाह—**हर इति** । हरस्येश्वरस्य प्रसादनार्थं प्रसत्त्या आगृहीता स्वीकृता हराराधनेश्वरसपर्या यया सा ताम् । मदनस्य देह इव देहो यस्यैवंविधः पुण्डरीकमुनिस्तन्निमित्तं तदर्थमित्यर्थो वा । पक्षे मदनदेहनिमित्तम् । शेषं पूर्ववत् । ईश्वरेण कंदर्पदेहो भस्मसात्कृतः, पश्चाद्रत्येश्वरं सेवया प्रसन्नीकृत्य नवीनदेहः कारित इति पुराणप्रसिद्धम् । **क्षीरोदेति** । क्षीरसमुद्रस्याधिदेवताधिष्ठात्री लक्ष्मीस्तामिव । उभयं विशेषयन्नाह—**सहेति** । महादेवस्य निकटे कन्याया महाश्वेतायाश्चन्द्रलेखासहवासात्परिचितिविशेषतो दृष्टायां हरचन्द्रलेखायामुत्कण्ठाद्भुतातिशयो यस्याः सा ताम् । पक्षे क्षीरोदधौ समुद्रे यः पूर्वचन्द्रेण सहवासस्तेन परिचिता निर्णीता हरस्य चन्द्रकला तस्यामुत्कण्ठा रणरणकं यस्या इति बहुव्रीहिः । **इन्दुरिति** । इन्दुश्चन्द्रस्तस्य मूर्तिः शरीरं तामिव । उभयोः सादृश्यार्थमाह—**स्वर्भानुरिति** । स्वर्गतो[3] योऽत्युच्चो भानुः सूर्यस्तस्यातपलक्षणं भयं तस्मात्कृतं विहितं त्रिनयनस्य शम्भोश्छायावशाच्छरणे गृह आगमनं यया सा ताम् । पक्षे स्वर्भानुः सैंहिकेयः । शरणार्थं त्राणार्थम् । शेषं पूर्ववत् । **ऐरावतेति** । ऐरावतो हस्तिमल्लस्तस्य देहच्छविः शरीरत्वक् तामिव । उभयोः साम्यमाह—**गजेति** । गजाजिनेन हस्तिचर्मणावगुण्ठनमाच्छादनं तस्मिन्नुत्कण्ठितो यः शितिकण्ठो महादेवस्तस्य चिन्तितं समीहितमुपनतं पूरितं यया सा ताम् । पक्षे गजाजिनावगुण्ठनोत्कण्ठितेश्वरस्य चिन्तितेनापेक्षयोपनतां प्राप्ताम् । **पशुपेति** । पशुपतिरीश्वरस्तस्य दक्षिणमुखस्यापसव्याननस्य यो हासो हास्यं तस्य छविः शोभा तामिव । अत्र दक्षिणग्रहणं प्रायशस्तत्र हास एवेति तदर्थम् । उभयोः साम्यमाह—**बहिरिति** । स्वस्थानान्मुखाच्च बहिरागत्य कृतमवस्थानं ययेत्यभङ्गश्लेषः । श्वेतत्वपवित्रत्वसाम्यादाह—शरीरिणीं देहधारिणीं रुद्रस्येश्वरस्योद्धूलनमङ्गमर्दनं तस्य भूतिं

---

**टिप्प०—1 'अध्वरक्रियामिव' इति सामान्यतः पाठाश्रयणमज्ञानम्, नहि सामान्ययज्ञे केशाकर्षणं विहितम् । तस्मात् 'दक्षाध्वरक्रियामिव' इत्येव पाठ उचितः । 2 अशुद्धमिदम्, गणाः प्रमथा इत्येवोचितम् । 3 प्रलापप्रायमिदम् । राहोर्भयेन कृतं त्रिनयनस्य शिवस्य शरणगमनं यया ईदृशीं चन्द्रस्य मूर्तिमिव । अस्मिन्नर्थे महाश्वेतापक्षे योजनस्य काऽऽवश्यकता ? एवमग्रेपि बोध्यम् ।**

---

**पाठा०—१ मङ्गल. २ एव. ३ दक्षाध्वर. ४ उद्धृत. ५ निरन्तरभस्मोद्धुण्ठनसिताङ्गीं रतिम्. ६ क्षीरोदधि. ७ उत्कण्ठाकृथम्; उत्कण्ठोत्कृष्टाम्. ८ शरणागमना. ९ निर्गत्य.**

शरीरिणीमिव रुद्रोद्धूलनभूतिम्, आविर्भूतां ज्योत्स्नामिव हरकण्ठान्धकारविघट्टनोद्यमप्राप्ताम्, गौरीमनःशुद्धिमिव कृतदेहपरिग्रहाम्, कार्तिकेयकौमारव्रतक्रियामिव मूर्तिमतीम्, गिरिशवृषभदेहद्युतिमिव पृथगवस्थिताम्, आयतनतरुकुसुमसमृद्धिमिव शंकराभ्यर्चनाय स्वयमुद्यताम्, पितामहतपःसिद्धिमिव महीतलमवतीर्णाम्, आदियुगप्रजापतिकीर्तिमिव सप्तलोकभ्रमणखेदविश्रान्ताम्, त्रयीमिव कलियुगध्वस्तधर्मशोकगृहीतवनवासाम्, आगामिकृतयुगबीजकलामिव प्रमदारूपेणावस्थिताम्, देहवतीमिव मुनिजनध्यानसंपदम्, अमरगजवीथीमिवाभ्रगङ्गाभ्यागमवेगपतिताम्, कैलासश्रियमिव दशमुखोन्मूलनक्षोभनिपतिताम्, श्वेतद्वीपलक्ष्मीमिवान्यद्वीपावलोकनकुतूहलागताम्, काशकुसुमविकासकान्तिमिव शरत्समय-

---

भस्मेव । प्रकाशरूपत्वसाम्येनाह—**ज्योत्स्नेति** । आविर्भूता प्रकटीभूता ज्योत्स्ना कौमुदी तामिव । **हरेति** । हरकण्ठे यः कृष्णत्वसाम्यादन्धकारस्तस्य विघट्टनं दूरीकरणं तत्र य उद्यमः प्रयत्नस्तेन प्राप्तां समागताम् । हरसंनिधानसाम्येनाह—**गौरीति** । गौरी पार्वती तस्या मनःशुद्धिश्चित्तनैर्मल्यं तामिव । अमूर्तया मूर्तेन कथं साम्यं स्यादित्याह—**कृतेति** । कृतो विहितो देहस्य परिग्रहः स्वीकारो यया सा ताम् । सातिशयत्वसाम्येनाह—**कार्तीति** । कार्तिकेयस्य षडाननस्य या कौमारव्रतक्रिया बाल्यावस्थायां यत्तपोनुष्ठानं तामिव । अत्रापि क्रियारूपत्वेन तदसंभवादाह—**मूर्तीति** । मूर्तिमतीम् । सशरीरामित्यर्थः । **गिरिशेति** । गिरिशो महादेवस्तस्य यो वृषभो बलीवर्दस्तस्य देहद्युतिः शरीरच्छविस्तामिव । तस्या गुणरूपत्वेन तदुपमानाभावादाह—**पृथगिति** । शरीराद्बहिर्निर्गत्य पृथगवस्थिताम् । सशरीरामित्यर्थः । **आयतनेति** । आयतनं चैत्यं तस्य तरवो वृक्षास्तेषां कुसुमसमृद्धिः पुष्पसंपत् तामिव । तस्या आगमने निदानमाह—**शंकरेति** । शंकरस्येश्वरस्याभ्यर्चनं पूजनं तदर्थं स्वयमुद्यतामुद्योगयुक्ताम् । **पितेति** । पितामहस्य ब्रह्मणो या तपःसिद्धिस्तामिव । तपःसिद्धेरात्मगतत्वेनोपमानाभावादाह—महीतलेऽवतीर्णां कृतावताराम् । **आदीति** । आदियुगे कृतयुगे यः प्रजापतिर्ब्रह्मा मरीच्यादयश्च तस्य तेषां वा कीर्तिर्यशस्तामिव । तस्या एकत्रावस्थाने कारणमाह—**सप्तेति** । सप्तसु लोकेषु यद्भ्रमणं पर्यटनं तस्माद्यः खेदः श्रमस्तेन विश्रान्तामुपविष्टाम् । **त्रयीति** । ऋग्यजुःसामवेदास्त्रयी तामिव । एतस्यास्तत्रागमने हेतुमाह—**कलीति** । कलियुगेन कलिकालेन ध्वस्तो दूरीकृतो यो धर्मो वृषस्तस्माद्यः शोकः शुक् तेन गृहीतः स्वीकृतो वनवासोऽरण्यनिवासो यया सा ताम् । इयमपि ध्वस्तधर्मशोकेन गृहीतवनवासेत्युभयोः साम्यम् । धर्मातिशयवचनसाम्येनाह—**आगामीति** । आगाम्यग्रेभावी यः कृतयुगस्तस्य या बीजकला निदानमात्रं तामिव प्रमदारूपेण स्त्रीरूपेणावस्थितामासेदुषीम् । **देहेति** । देहवतीं शरीरधारिणीं मुनिजना वाचंयमास्तेषां ध्यानं प्राणायामस्तस्य संपत् समृद्धिः तामिव । **अमरेति** । अमरा देवास्तेषां गजा हस्तिनस्तेषां वीथी ततिस्तामिव । गजसमूहस्य तत्रागमने निदानमाह—**अभ्रेति** । अभ्रगङ्गाकाशगङ्गा तस्यामभ्यागमः संमुखगमनं तत्र यो वेगस्त्वरा तेन पतितां स्रस्ताम् । **कैलासेति** । कैलासो रजताद्रिस्तस्य श्रीः शोभा तामिव । कीदृशीम् । **दशेति** । दशमुखो रावणस्तेन यदुन्मूलनं तस्माद्यः क्षोभस्त्रासस्तस्मान्निपतितां स्रस्ताम् । इयमपि क्षोभेण निपतिता । श्वैत्यातिशयं वर्णयन्नाह—**श्वेतेति** । यत्र सर्वमेव वस्तु श्वेतं तच्छ्वेतद्वीपं तस्य या लक्ष्मीः श्रीस्तामिव । सा श्वेतद्वीप एव, नास्मिन्प्रदेश इत्याह—**अन्येति** । इतरद्वीपानां यदवलोकनं वीक्षणं तदेव कुतूहलमाश्चर्यं तेनागतां प्राप्ताम् । **काश इति** । काश इति इषीका तस्य कुसुमानि पुष्पाणि तेषां विकासो विकसनं तस्य कान्तिः प्रभा तामिव । कीदृशीम् । शरत्समयं घनात्ययकालमुदीक्षमाणां प्रतीक्षमाणाम् ।

---

**टिप्प०—1 अमोयम्** । काशः 'काँस' इति भाषायां ख्यातस्तृणविशेषः ।

---

**पाठा०—**१ हर. २ विभूतिम्. ३ तपःसिद्धिम्. ४ गिरीश. ५ द्वीपान्तर.

सुदीक्षमाणाम्, शेषशरीरच्छायामिव रसातलमपहाय निर्गताम्, मुसलायुधदेहप्रभामिव मधुमदविघूर्णनायासविगलिताम्, शुक्लपक्षपरंपरामिव पुञ्जीकृताम्, सर्वहंसैरिव धवलतया कृतसंविभागाम्, धर्महृदयादिव विनिर्गताम्[1], शङ्खादिवोत्कीर्णाम्, मुक्ताफलादिवाकृष्टाम्, मृणालैरिव विरचितावयवाम्, दन्तदलैरिव घटिताम्, इन्दुकरकूर्चकैरिवाक्षालिताम्[2], वर्णसुधाच्छटाभिरिवाच्छुरिताम्[3], अमृतफेनपिण्डैरिव पाण्डुरीकृताम्, पारदरसधाराभिरिव धौताम्, रजतद्रवेणेव निर्मृष्टाम्, चन्द्रमण्डलादिवोत्कीर्णाम्, कुटजकुन्दसिन्दुवार[4]कुसुमच्छविभिरिवोल्लासिताम्, इयत्तामिव धवलिम्नः, स्कन्धावलम्बिनीभिरुदय[5]तटगता[6]दर्कबिम्बादुद्धृत्य बालरश्मिप्रभाभिरिव निर्मिताभिरुन्मिषत्[7]तडित्तरलतेजस्ताम्राभिरचिरस्नानावस्थित-

---

**शेषेति** । शेषो नागराजस्तस्य यच्छरीरं तस्य च्छाया कान्तिस्तामिव । अत्र कथं तस्या आगम इत्याकाङ्क्षायामाह—**रसेति** । रसातलं भूतलमपहाय त्यक्त्वा निर्गतां बहिरागताम् । **मुसलेति** । मुसलायुधो बलभद्रस्तस्य या देहप्रभा शरीरद्युतिस्तामिव । तस्या अत्रासंभवमाशङ्क्याह—**मध्विति** । मधुमदेन कादम्बरीमदेन यद्विघूर्णनं[1] देहभ्रमस्तस्माद्य आयासः खेदस्तेन विगलितां च्युताम् । **शुक्लेति** । शुक्लपक्षस्तस्य परंपरा संततिस्तामिव । तस्या एकत्रावस्थितेरभावादाह—**पुञ्जीति** । पुञ्जीकृतामेकत्रीकृताम् । **सर्वेति** । धवलतया श्वेततया सर्वहंसैः समग्रसितच्छदैः कृतो विहितः संविभागः स्वश्वैत्यार्पणं यस्याः सा तामिव । **धर्मेति** । धर्मो वृषस्तस्य हृदयाद्वक्षसो विनिर्गतामिव । **शङ्ख इति** । शङ्खाज्जलजादुत्कीर्णामिवोत्कीर्य निर्मितामिव । **मुक्तेति** । मुक्ताफलाद्रसोद्भवादाकृष्टामिवाकर्षितामिव । **मृणालेति** । मृणालैस्तन्तुलैर्विरचिता विहिता अवयवा अपघना यस्याः सा तामिव । **दन्तेति** । दन्ता हस्तिमुखरदनास्तेषां दलैः खण्डैर्घटितामिव निर्मितामिव । **इन्दुरिति** । इन्दुश्चन्द्रस्तस्य करा अंशवस्त एव कूर्चकाः कुञ्चिकास्तैराक्षालितामिव धौतामिव । **वर्णेति** । वर्णो शुक्ला । 'वर्णः स्वर्णे मखे स्तुतौ । रूपे द्विजादौ शुक्लादौ कुथायामक्षरे गुणे' इत्यनेकार्थः । एतादृशी या सुधा गृहधवलीकरणद्रव्यं तस्याश्छटाभिः पृषद्भिराच्छुरितामिवाच्छोटितामिव । **अमृत इति** । अमृतस्य पीयूषस्य ये फेनाः पिण्डाः डिण्डीरसमूहास्तैः पाण्डुरीकृतामिव शुक्लीकृतामिव । **पारदेति** । पारदो रसेन्द्रस्तस्य रसो द्रवस्तस्य धाराः पङ्क्तयस्ताभिर्धौतामिव क्षालितामिव । **रजेति** । रजतं रौप्यं तद्द्रवेण तद्रसेन निर्मृष्टामिव निघर्षितामिव । **चन्द्र इति** । चन्द्रमण्डलं शशिबिम्बं तस्मादुत्कीर्णामिवोत्कीर्य कर्षितामिव । **कुटजेति** । कुटजो गिरिमल्लिका, कुन्दः प्रसिद्धः, सिन्दुवारो निर्गुण्डी, एतेषां कुसुमानि तेषां छवयः कान्तयस्ताभिरुल्लासितामिव प्रगुणीकृतशोभामिव । **धवलिम्नेति** । धवलिम्नः श्वेतिम्न इयत्तामिवैतावत्त्वमिव । परमावधिमिवेत्यर्थः । अत्र सर्वत्र श्वेतत्वसाम्यादुपमानोपमेयभावः । न तु व्यर्थता । पुनः प्रकारान्तरेण विशेषयन्नाह—**जटाभिरिति** । जटा सटास्ताभिरुद्भासित उत्प्राबल्येन शोभितः शिरोभाग उत्तमाङ्गप्रदेशो यस्याः सा ताम् । अथ जटा विशेषयन्नाह—**स्कन्धेति** । स्कन्धो भुजान्तरं तत्रावलम्बिनीभिरवलम्बितुं शीलं यासां ताभिः । तासामारक्तत्वं वर्णयन्नाह—**उदयेति** । उदय उदयाचलस्तस्य तटं प्रस्थं तत्र गतात्प्राप्तादर्कबिम्बात्सूर्यमण्डलादुद्धृत्य निष्कास्य बालरश्मिर्बालातपस्तस्य प्रभाभिः कान्तिभिर्निर्मिताभिरिवोत्पादिताभिरिव । **उन्मिषदिति** । उन्मिषन्ती स्फुरन्ती या तडिद्विद्युत्तस्या यत्तरलं चञ्चलं तेजस्तद्वत्ताम्राभिः श्वेतरक्ताभिः । **अचिरेति** । अचिरं यत्स्नानमाप्लवस्ते-

---

**टिप्प०**—1 पर्यन्ततो भ्रमणम्, 'घुर घूर्ण भ्रमणे' इति धातुपाठात् । 2 इदमपि पाण्डित्याभिनयमात्रम् । वर्णकारिणी सुधा वर्णसुधा ( शुक्लवर्णकारिणी सुधा 'कली' इति ख्याता ) इति स्पष्टोऽर्थः ।

---

पाठा०—१ निर्गताम्; उद्गताम्. २ प्रक्षालिताम्. ३ छुरिताम्. ४ सिन्धुवार. ५ उदयिताभ्र. ६ गतार्क. ७ तडित्तन्तुतरल.

विरलवारिकणतया प्रणामलग्नपशुपतिचरणभस्मचूर्णाभिरिव जटाभिरुद्भासितशिरोभागाम्, जटापाशग्रथितमुत्तमाङ्गेन मणिमयं नामाङ्कमीश्वरचरणद्वयमुद्वहन्तीम्, रविरथतुरङ्गखुरक्षुण्णनक्षत्रक्षोदविशदेन भस्मना कृतललाटपट्टिकाम्, शिखरशिलाश्लिष्टशशाङ्ककलामिव शैलराजमेखलाम्, अतुलभक्तिप्रसाधितया लक्ष्यीकृतलिङ्गयापरयेव पुण्डरीकमालया दृष्ट्या संभावयन्तीं भूतनाथम्, अनवरतगीतपरिस्फुरिताधरपुटवशादतिशुचिभिः शुद्धहृदयमयूखैरिव गीतगुणैरिव स्वरैरिव स्तुतिवर्णैरिव मूर्तिमद्भिर्मुखान्निष्पतद्भिर्दशनांशुभिः पुनरपि स्नपयन्तीं गौरीनाथम्, अतिविमलैश्च वेदार्थैरिव साक्षात्पितामहमुखादाकृष्टैर्गायत्रीवर्णैरिव ग्रथनस्फीततामुपगतैर्नारायणनाभिपुण्डरीकबीजैरिवोद्धृतैः सप्तर्षिभिरिव करस्पर्शपूतमात्मान-

---

नावस्थिता अभ्यन्तरे लग्ना ये विरलाः स्तोका वारिकणा जलविप्रुषस्तेषां भावस्तत्ता तया। वारिकणानां श्वेतत्वादाह—**प्रणामेति**। प्रणामो नमस्कारस्तत्र लग्नं पशुपतेरीश्वरस्य चरणभस्म पादविभूतिक्षोदो यास्त्वेवंभूताभिरिव। जटापाशे जटाजूटे ग्रथितं गुम्फितम्। **मणीति**। भक्तिविशेषप्रकटनार्थं मणिनिर्मितं रत्नघटितं नाम्नो मूलबीजस्याङ्कश्चिह्नं यस्मिन्नेवंभूतमीश्वरचरणद्वयं शंभुपादयुगलमुत्तमाङ्गेन शिरसोद्वहन्तीं धारयन्तीम्। **रविरिति**। रविरथस्य सूर्यस्यन्दनस्य ये तुरङ्गा अश्वास्तेषां खुराः शफास्तैः क्षुण्णानि चूर्णितानि यानि नक्षत्राणि भानि तेषां क्षोदश्चूर्णं तद्वद्विशदेन निर्मलेन भस्मना विभूत्या कृता विहिता ललाटपट्टिका[1] पुण्ड्रविशेषो यया सा ताम्। ललाटस्य दृढत्वेन शिलारूपत्वाल्ललाटपट्टिकायाश्च त्रिपुण्ड्ररूपत्वेनार्धचन्द्राकारत्वादाह—**शिखरेति**। शिखरशिलायां सानुशिलायां श्लिष्टा लग्ना शशाङ्ककला यस्यामेवंभूतां शैलराजमेखलामिव हिमाचलमध्यभागमिव। किं कुर्वतीम्। संभावयन्तीं संभावनाविषयीकुर्वतीम्। कम्। भूतनाथं महादेवम्। कया। दृष्ट्या। श्वेतत्वसाम्यादाह—अपरया भिन्नया पुण्डरीकमालयेव सिताम्भोजपङ्क्त्येव। अथ दृष्टिं विशेषयन्नाह—**अतुलेति**। अतुला निरुपमा या भक्तिराराध्यत्वेन ज्ञानं तया प्रसाधितया प्रसन्नया। **लक्ष्यीति**। लक्ष्यीकृतं ध्यानावलम्बनीकृतं लिङ्गं स्थावरं यया सा तया। पुनस्तामेव विशेषयन्नाह—**अनवेति**। अनवरतं निरन्तरं यद्गीतं गानं तेन परिस्फुरितः प्रचलितो योऽधरपुट ओष्ठपुटस्तद्वशान्मुखादास्यान्निष्पतद्भिः क्षरद्भिर्दशनांशुभिर्दन्तदीप्तिभिः। पुनरपि पूजाप्रारम्भे स्नपितत्वाद्द्वितीयवारमपि गौरीनाथं महादेवं स्नपयन्तीं स्नपनं कुर्वतीम्। अथ दशनांशून्विशिनष्टि—**अतीति**। अतिशयेन सर्वाधिक्येन शुचिभिः पवित्रैः। अतिनैर्मल्यादाह—**शुद्धेति**। शुद्धं निर्मलं यद्धृदयं चेतस्तस्य मयूखाः किरणास्तैरिव। **गीतेति**। गीतानां गुणा मधुरत्वादयस्तैरिव। **स्वरेति**। स्वराः षड्जादयस्तैरिव। **स्तुतीति**। स्तुतिर्नुतिस्तस्या वर्णैरिवाक्षरैरिव। वर्णानां तावत्कालं स्थातुमशक्यत्वात्तदभावादाह—**मूर्तिरिति**। पुनस्तां विशेषयितुमक्षवलयगतमुक्ताफलान्यादौ विशेषयन्नाह—**अतीति**। अतिविमलैरतिनिर्मलैर्वेदा ऋक्प्रभृतयस्तेषामर्थैरिवाभिधेयैरिव। तस्यां तदसंभवमाशङ्क्याह—**साक्षादिति**। पितामहमुखात्प्रजापतिवदनात्साक्षादव्यवधानादाकृष्टैरिवाकर्षितैरिव। **गायत्रीति**। गायत्री मन्त्रविशेषस्तस्या वर्णैरक्षरैरिव। वर्णानाममूर्तत्वात्तदसंभवादाह—**ग्रथनेति**। ग्रथनेन रचनाविशेषेण स्फीततां पुष्टतामुपगतैः प्राप्तैः। अतिश्वेतत्वसाम्यादाह—**नारा इति**। नारायणस्य जनार्दनस्य नाभिपुण्डरीकं नाभिकमलं तस्य बीजैरिवोत्पत्तिनिदानैरिव उद्धृतैः। **सप्तर्षीति**। करस्पर्शेन हस्तसंश्लेषेण पूतं पवित्रमात्मानमिच्छद्भिर्वाञ्छद्भिस्तारकारूपेण नक्षत्रस्वरूपेणाग-

---

**टिप्प०—1 न किल चन्दनचर्चा ललाटपट्टिका इति प्रसिद्धा। अत एव 'भस्मनालंकृतललाटपट्टिकाम्' इत्येव पाठः। भस्मना अलंकृतो ललाटपट्टो भालस्थलं यस्याः तामिति तदर्थः। 2 सभक्तिदर्शनेन आद्रियमाणाम्। 3 अलंकृतरूपेण सज्जितया। 4 'कमलगट्टा' इति भाषाख्यातैः।**

---

**पाठा०**—१ तुरग. २ खुरमुख. ३ अलंकृत. ४ लक्ष्मीकृत. ५ द्वितीययेव. ६ गीतस्फुरित. ७ गुणैरिव; स्तुतिवर्णैरिव. ८ गौरीपतिम्. ९ विमलैः. १० ग्रथनताम्; ग्रथनाम्; ग्रथिताम्; ग्रन्थिताम्. ११ करतल.

मिच्छद्भिस्तारकारूपेणागतैरामलकीफलस्थूलैर्मुक्ताफलैरुपरचितेनाक्षवलयेनाधिष्ठितकण्ठभागाम्, परिवेषपरिगतचन्द्रमण्डलामिव पौर्णमासीनिशाम्, अधोमुखहरशिरःकपालमण्डलाकारेण मोक्षद्वारनियुक्तकलशकान्तिना स्तनयुगलेनैकहंसमिथुनसनाथामिव गङ्गाम्, गौरीसिंहसटामयेनेव चामररुचिराकृतिना स्तनयुगलमध्यनिबद्धग्रन्थिना कल्पतरुलतावल्कलेन कृतोत्तरीयकृत्याम्, अयुग्मलोचनसकाशात्प्रसादलब्धेन चूडामणिचन्द्रमयूखजालेनेव मण्डलीकृतेन ब्रह्मसूत्रेण पवित्रीकृतकायाम्, आप्रपदीनेन च स्वभावसितेनापि ब्रह्मासनबन्धोत्तानचरणतलप्रभापरिष्वङ्गाल्लोहितायमानेन दुकूलपटेन प्रावृतनितम्बाम्, यौवनेनापि

तैः प्राप्तैः सप्तर्षिभिरिव। एतेन मुक्ताफलानां नक्षत्रसाम्यम्। परिमाणविशेषं प्रदर्शयन्नाह—**आमेति**। आमलकी शिवा तस्याः फलानि तद्वत्स्थूलैः स्थविष्ठैरेवंविधैर्मुक्ताफलै रसोद्भवैरुपरचितेन निर्मितेनाक्षवलयेन जपमालिकयाधिष्ठित आश्रितः कण्ठभागो निगरणप्रदेशो यस्याः सा ताम्। **परीति**। परिवेषः परिधिस्तेन परिगतं सहितं चन्द्रमण्डलं शशिबिम्बं यस्यामेतादृशीं पौर्णमासीनिशामिव राकारात्रिमिव। मण्डलाकारत्वेनात्र वलयस्य परिवेषसाम्यम्, तस्या मुखस्य च चन्द्रसाम्यम्, तस्याश्च पौर्णमासीसाम्यम्। अथ पुनस्तत्कुचयुगलं तच्छ्यामत्वपीनत्ववर्णनद्वारा तामेव वर्णयन्नाह—**अध इति**। ऊर्ध्वमुखे कपाले श्यामता नास्तीत्यतोऽधोमुखं यद्धरशिरःकपालं तद्वन्मण्डलाकारेण वर्तुलाकृतिना। हरपददानेन स्तने धवलत्वं द्योत्यते। ईश्वरस्य धवलत्वात्। **मोक्ष इति**। मोक्षो महानन्दस्तस्य द्वारे नियुक्तौ स्थापितौ यौ कलशौ निपौ तद्वत्कान्तिः शोभा यस्य स तेन। एवंविधेन स्तनयुगलेनोपलक्षिताम्। कामिव। एकं यद्धंसमिथुनं चक्राङ्गयुग्मं तेन सनाथां सहितां गङ्गामिव जाह्नवीमिव। पुनः किंविशिष्टाम्। कल्पतरवो मन्दारास्तेषां सरलत्वेन लतोपमानं, तस्या वल्कलेन चोचेन कृतमुत्तरीयमुपसंव्यानं तस्य कृत्यं कार्यं यस्याः सा ताम्। अथ वल्कलं विशेषयन्नाह—**चामरेति**। चामरं वालव्यजनं तद्वद्रुचिरा मनोहराकृतिराकारो यस्य स तेन। प्रलम्बत्वेन श्वेतत्वेन च तत्साम्यमिति भावः। **स्तनेति**। स्तनयुगलस्य मध्ये निबद्धो ग्रन्थिर्यः स तेन। उज्ज्वलत्वसाम्यादुत्प्रेक्षते—**गौरीति**। गौरी पार्वती तस्याः सिंहो मनस्तालस्तस्य या सटा जटा तन्मयेनेव तद्विकारेणेव। पुनः किंविशिष्टाम्। मण्डलीकृतेन वर्तुलीकृतेन ब्रह्मसूत्रेण यज्ञोपवीतेन पवित्रीकृतः पावनीकृतः कायो देहो यस्याः सा ताम्। अथ ब्रह्मसूत्रं विशिनष्टि—**अयुग्मेति**। अयुग्मलोचन ईश्वरस्तस्य सकाशात्समीपात्प्रसादः प्रसन्नता तेन लब्धेन प्राप्तेन। **चूडेति**। चूडामणीभूतो यश्चन्द्रस्तस्य मयूखाः किरणास्तेषां जालेनेव समूहेनेव। प्रकारान्तरेण तामेव विशेषयन्नाह—**दुकूलेति**। दुकूलपटेन क्षौमवस्त्रेण प्रावृतावाच्छादितौ नितम्बावारोहौ यस्याः सा ताम्। अथ दुकूलपटं विशेषयन्नाह—**आप्रपदीनेति**। आपदव्यापकेन। 'तत्तु स्यादाप्रपदीनं व्याप्नोत्याप्रपदं हि यत्' इति कोशः। तेन स्वभावतः प्रकृत्या सितेनापि शुभ्रेणापि ब्रह्मासनं ध्यानासनं तस्य बन्धो रचनाविशेषस्तेनोत्तानमूर्ध्वमुखं यच्चरणयोः पादयोस्तलं तस्य प्रभा कान्तिस्तस्याः परिष्वङ्गात्संश्लेषाल्लोहितायमानेनारुणायमानेन। एतेन चरणतलयोरारुण्यातिशयो व्यञ्जितः। पुनः कीदृशीम्। यौवनेनापि तारुण्येनाप्युपास्यमानां सेव्यमानाम्। केनेव।

**टिप्प०—1 इदमपि टीकाकृतो मौढ्यमेव। हरशिरसि यत् कपालम् ( नरकपालम् ) तत्तु स्वभावतः श्वेतमेव भवति। 2 यस्येत्युचितम्। 3 'स्यात्त्रिष्वाप्रपदीनं तत्' इत्यमरकोशपाठः।**

**पाठा०—१ पौर्णमासीम्. २ मोक्षद्वारकलशं; मोक्षपुरद्वारकलश. ३ एकगतहंस. ४ श्वेतगङ्गाम्. ५ चीराकृतिना. ६ पवित्रतरीकृत. ७ यौवनेनादिष्टेनोपसर्पिणा.**

स्वकालोपसर्पिणा निर्विकारेण विनीतेन शिष्येणेवोपास्यमानाम्, लावण्येनापि कृतपुण्येनेव स्वच्छात्मना परिगृहीताम्, रूपेणापि रुचिरलोचनेन विगतचापलेनायतनमृगेणेव सेविताम्[2], उत्सङ्गगतां च स्वसुतामिव सूक्ष्मदन्त[3]खण्डिकाङ्गुलीय[4]कापूरिताङ्गुलिना त्रिपुण्ड्रका[5]वशिष्टभस्मपाण्डुरेण प्रकोष्ठबद्धशङ्खखण्डकेन नखमयूखदन्तुरतया गृहीतदन्त[6]कोणेनेव दन्तमयीं दक्षिणकरेण वीणामास्फालयन्तीम्, प्रत्यक्षामिव गन्धर्वविद्याम्, मणिमण्डपिकास्तम्भलग्नाभिरात्मानुरूपाभिः सहचरीभिरिव स[7]वीणाभिर्विलासवतीभिः प्रतिमाभिरुपेताम्, स्नपनार्द्रलिङ्गसंक्रान्तप्रतिबिम्बतयातिप्रबलभक्त्याराधितस्य हृदयमिव प्रविष्टां हरस्य, हा[8]रलतयेव प्राप्तकण्ठयो-

---

स्वकालोपसर्पिणा निजसमयप्राप्तेन निर्विकारेण विकृतिवर्जितेन विनीतेन[1] प्रसूतेनैवंभूतेन शिष्येणेव विनेयेनेव। यौवनस्यापि स्वकालोपसर्पित्वादिगुणविशिष्टत्वेन तत्साम्यमिति भावः। **लावण्येति**। लावण्यं चातुर्यं तेन परिगृहीतां स्वीकृताम्। केनेव। स्वच्छात्मना निर्मलचित्तेन कृतपुण्येनेव सुकृतिनेव। अत्र स्वच्छात्मत्वमेवोभयसाम्यम्। **रूपेति**। रूपं सौन्दर्यं तेनापि सेवितामाश्रिताम्। केनेव। रुचिरलोचनेन मनोहरनेत्रेण विगतं चापलं चापल्यं यस्मादेवंभूतेनायतनमृगेणेव गृहसारङ्गेणेव। अत्र चारुलोचनत्वं विगतचापलत्वं चोभयोः साम्यम्। पुनः किं कुर्वतीम्। दक्षिणकरेणापसव्यपाणिना दन्तमयीं गजदन्तप्रचुरां वीणां वल्लकीमास्फालयन्तीं वादयन्तीम्। अथ वीणां विशिनष्टि—**उत्सङ्गेति**। उत्सङ्गगतां क्रोडप्राप्तां स्वसुतामिव निजात्मजामिव। अथ दक्षिणकरं विशेषयन्नाह—**सूक्ष्मेति**। सूक्ष्मा स्निग्धा[2] या दन्तखण्डिकं नागदन्तशकलं तस्य यान्यङ्गुलीयकान्यङ्गुलीभूषणानि तैरापूरिता आकीर्णा व्याप्ता अङ्गुलयो यस्य स तेन। **त्रिपुण्ड्रमिति**। त्रिपुण्ड्रकात्तिलकविशेषादवशिष्टमुर्वरितं यद्भस्म तेन पाण्डुरेण श्वेतेन। **प्रकोष्ठेति**। प्रकोष्ठः कलाचिका तत्र बद्धो यः शङ्खस्तस्य खण्ड एव खण्डकः। स्वार्थे कः। जलजशकलं यस्मिन्स तेन। श्वेतत्वसाम्यादाह—**नखेति**। नखाः पुनर्भवास्तेषां मयूखाः किरणास्ते[3] दन्तुरा उन्नता यस्मिंस्तस्य भावस्तत्ता तया गृहीत आत्तो दन्तस्य कोणो वीणादिवादनं येन स तेनेव। 'कोणो वीणादिवादनम्' इति कोशः। **प्रत्यक्षेति**। प्रत्यक्षामिन्द्रियगोचरां गन्धर्वविद्यामिव देवगायनविद्यामिव। मणिमण्डपिकानां स्वच्छतया तेषु प्रतिबिम्बवशादाह—**मणीति**। मणिमण्डपिका रत्ननिर्मिता चतुष्किका तस्याः स्तम्भलग्नाभिरात्मानुरूपाभिरात्मसदृशीभिः। 'यादृशं रूपे तादृशं प्रतिबिम्बे' इत्युक्तेः। सवीणाभिः सवल्लकीभिः प्रतिमाभिरात्मच्छायाभिः सहचरीभिरिव सपर्याकारिणीभिरिवोपेतां सहिताम्। **स्नपनेति**। स्नपनेन प्रक्षालनेन। एतेनागन्तुकमलनिवृत्तिः सूचिता। तेनार्द्रं यल्लिङ्गं तत्र संक्रान्तं प्रविष्टं यत्प्रतिबिम्बं तस्य भावस्तत्ता तया। **अतीति**। अतिप्रबलात्युत्कृष्टा या भक्तिराराध्यत्वेन ज्ञानं तयाराधितस्य सेवितस्य हरस्येश्वरस्य हृदयमिव चित्तमिव प्रविष्टां प्रवेशं कृतवतीम्। पुनः किं कुर्वतीम्। विरूपाक्षं देवं गीत्या गानेनोपवीणयन्तीं स्तुवन्तीम्। अथ गीतिं विशेषयन्नाह—**हार इति**। प्राप्तः कण्ठयोगो निगरणसंबन्धो रागाणामवस्थाविशेषो गीतशास्त्रप्र-

---

**टिप्प०**—1 शिक्षाजनितविनम्रतावाहिना। 2 सूक्ष्माः (अस्थूलाः) दन्तखण्डकाङ्गुलीयकापूरिताः (हस्तिदन्तखण्डनिर्मितानि यान्यङ्गुलीयकानि तैरापूरिताः) अङ्गुलयो यस्य तेनेति स्पष्टोऽर्थः। 3 नखमयूखानां दन्तुरतया उन्नततया (अर्थात् प्रसारिनखमयूखतया)। 4 स्तम्भेषु प्रतिबिम्बिताभिरित्यर्थः।

---

**पाठा०**—१ स्वकालोपसर्पिनिर्विकारविनीतेन; स्वकालोपसर्पिणा निर्विकारविनीतेन. २ निषेविताम्. ३ शङ्खखण्डिका; शङ्खघटित. ४ पूरित; पूत. ५ अवशेष. ६ कोशेनेव. ७ सवीणाभिः प्रतिमाभिः. ८ हारलेखया.

गया ग्रहपङ्क्त्येव ध्रुवप्रतिबद्धया क्रुद्धयेव रागरक्तमुखवर्णया मत्तयेव घूर्णितमन्द्रतारयोन्मत्त-येवानेककृततालया मीमांसयेवानेकभावनानुविद्धया गीत्या देवं विरूपाक्षमुपवीणयन्तीम्, अतिमधुरगीतावकृष्टैर्ध्यानमिवाभ्यस्यद्भिर्निश्चलकर्णपुटैर्मृगवराहवानरवारणशरभसिंहप्रभृति-भिर्वनचरैरावद्धमण्डलैराकर्ण्यमानगीतानुविद्धविपञ्चीनिर्घोषाम्, अमरापगामिव नभसोऽव-तीर्णाम्, दीक्षितवाचमिवाप्राकृताम्, त्रिपुरारिशरशलाकामिव तपोमयीम्, पीतामृतामिव वि-

सिद्धश्च यया सा तया। कयेव। हारलतयेव मुक्तास्रजेव। **ग्रहेति**। ग्रहाणां नक्षत्राणां पङ्क्तिः श्रेणिस्तयेव। उभयोः साम्यमाह—**ध्रुवेति**। ध्रुवो गीतशास्त्रे प्रसिद्धस्तेन प्रतिबद्धया रचितया। पक्षे ध्रुव औत्तानपादिः। क्रुद्धयेव कुपितयेव। उभयोः साम्यार्थमाह—**रागरक्तेति**। रागाः श्रीरागादयस्तै रक्ता मिश्रिता मुखे प्रारम्भे वर्णा अक्षराणि यस्यां सा तया। पक्षे रक्तो लोहितो मुख आस्ये वर्णो यस्याः सा तया। मत्तयेव क्षीव-येव। एतयोस्तुल्यतां प्रदर्शयन्नाह—**घूर्णितेति**। घूर्णिता घोलनां प्राप्ता मन्द्रा उरःप्रदेशोद्भवास्तारः शिरः-समुद्भवाः स्वरा यस्यां सा तया। पक्षे घूर्णिताः प्रचलायिता मन्द्रा अलसास्तारा यस्यामिति विग्रहः। **उ-न्मत्तेति**। उन्मत्तयेवोन्मादवायुग्रस्तयेव। उभयोः शब्दसादृश्यमाह—**अनेकेति**। अनेके बहवः कृता विहितास्तालाः कालक्रियामानरूपा यस्यां सा तया। पक्षे ताला हस्तसंयोगाः। **मीमांसेति**। मीमांसा विचारणा तयेव। 'मीमांसा तु विचारणा' इति कोशः। उभयोः सादृश्यार्थमाह—**अनेकेति**। अनेका वि-विधप्रकारा या भावना घोलनाविशेषास्तैरनुविद्धया स्यूतया। पक्षे भावना शब्दनिष्ठा, अर्थनिष्ठा यागादिप्र-वृत्त्यनुकूलाख्यातार्थरूपा। पुनः प्रकारान्तरेण तामेव विशेषयन्नाह—**आकर्ण्येति**। आकर्ण्यमानः श्रूयमाणो गीतानुविद्धो गानसंयुक्तो विपञ्च्या वल्लक्या निर्घोषो निनादो यस्याः सा ताम्। कैः। वनचरैररण्यचारिभिः। अथ वनचरान्विशेषयन्नाह—**आवद्धेति**। आबद्धं रचितं मण्डलं वलयाकारेणावस्थितिर्यैः। **अतीति**। अ-तिमधुरं कर्णसुखदं यद्गीतं गानं तेनावकृष्टैराकृष्टैः। **निश्चलेति**। निश्चलानि स्तिमितानि कर्णपुटानि येषां तै-रतएव ध्यानं चित्तवृत्तिनिरोधमभ्यस्यद्भिरिवाभ्यासं कुर्वद्भिरिव। **मृगेति**। मृगाः कुरङ्गाः, वराहाः क्रोडाः, वानरा गोलाङ्गूलाः, वारणा हस्तिनः, शरभा अष्टपदाः, सिंहा हर्यक्षाः, एते प्रभृतय आद्या येषां तैः। तदा-श्रितगीतस्य प्रवाहरूपत्वेनाह—**अमरेति**। अमरापगा गङ्गा तामिव। अत्र कथं तस्याः संभव इत्याशङ्क्याह—**नभस इति**। नभस आकाशादवतीर्णामागताम्। दीक्षितः सोमयाजी तस्य वाग् भारती तामिव। उभयोः साम्यमाह—**अप्राकृतेति**। अप्राकृताममानुषधर्मिणीम्, उत्तमकुलोत्पन्नां वा। पक्षेऽप्राकृतां साधुशब्दमयीम्। दीक्षितस्य प्राकृतवाङ्निषेधादिति भावः। कान्त्याधिक्यमाशङ्क्याह—**त्रिपुरारीति**। त्रिपुरारिर्महादेव-स्तस्य शरः शिलीमुखस्तस्य शलाकेषिका तामिव। उभयोस्तुल्यतामाह—**तप इति**। तपोमयीं तपस-स्तेजोरूपत्वात्। पक्षे तेजोमयीं प्रकाशरूपाम्। ईश्वरबाणस्य लोहमयत्वादिति भावः। आन्तरगुणवर्णनद्वारा तामेव विशेषयन्नाह—**पीतेति**। पीतमास्वादितममृतं पीयूषं यया सैवंभूतामिव। एतयोः साम्यमाविष्कुर्व-

**टिप्प०—**1 'उत्तमः षट्पदः प्रोक्तो मध्यमः पञ्चमः स्मृतः। कनिष्ठश्च चतुर्भिः स्याद् ध्रुवकोयं मयो-दितः॥' संगीतदामोदरम्। 2 मण्डपिकायां परितो विसृताः। 3 घूर्णिते मदोद्रेकाच्चञ्चले मन्दे अलसे तारे (कनीनिके) यस्यास्ताम्। इत्यर्थ उचितः। 4 मूर्च्छनाः। 5 'भावनानाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः, सा च द्विविधा।' लौगाक्षिभास्करः। 6 अयमपि प्रलापः, 'कन्यकायाः श्वैत्य-निर्मलत्वाभ्यामुत्प्रेक्षामाह-' इत्युचितम्। 7 नारायणरूपेति यावत्।

पाठा०—१ रक्तमुख. २ पूर्णित. ३ मन्द. ४ उन्मत्तयानेक. ५ उपवर्णयन्तीम्. ६ घोषाम्. ७ तेजोमयीम्.

गततृष्णाम्, ईशानशिरःशशिकलामिवानुपजातरागाम्, अमथितोदधिजलसंपदमिवान्तःप्रसन्नाम्, असमस्तपदवृत्तिमिवाद्वंद्वाम्, बौद्धबुद्धिमिव निरालम्बनाम्, वैदेहीमिव प्राप्तज्योतिःप्रवेशाम्, द्यूतकलाकुशलामिव वशीकृताक्षहृदयाम्, महीमिव जलभृतदेहाम्, हिमसमयदिनमुखलक्ष्मीमिव परिगृहीतभास्करातपाम्, आर्यामिवोपात्तयतिगणोचितमात्राम्, आलिखितामिवाचलावस्थानाम्, अंशुमयीमिव तनुच्छायानुलिप्तभूतलाम्, निर्ममाम्, निरहंका-

---

न्नाह—**विगतेति**। विगता तृष्णा लोभो यस्याः सा ताम्। पक्षे तृष्णा तृषा। **ईशानेति**। ईशान ईश्वरः। 'शंभुः शर्वः स्थाणुरीशान ईशः' इत्यभिधानचिन्तामणिः। तस्य शिर उत्तमाङ्गं तत्र या शशिकला चन्द्रकला तामिव। उभयोः सादृश्यमाह—**अन्विति**। अनुपजातोऽसमुत्पन्नो रागो यस्याः सा ताम्। विरक्तामित्यर्थः। पक्षे राग आरक्तता। आरक्तामित्यर्थः। **अमथीति**। अमथितोऽविलोडितो य उदधिः समुद्रस्तस्य जलं पानीयं तस्य संपत्संपत्तिस्तामिव। उभयोः सदृशत्वमाह—**अन्तरिति**। अन्तर्मध्ये प्रसन्नां हृष्टचित्ताम्। पक्षेऽन्तःप्रसन्नामकलुषिताम्। **असमस्तेति**। असमस्ताऽसमासगा या पदवृत्तिः कैशिक्यादिस्तामिव। 'कैशिक्याद्याः पदवृत्तयः' इत्यलंकारे प्रसिद्धम्। उभयोः साधर्म्यमाह—**अद्वंद्वेति**। द्वंद्वो युद्धं तद्रहिताम्। 'द्वंद्वः समाघातः' इति कोशः। पक्षे द्वंद्वः समासः। **बौद्ध इति**। बौद्धः सुगतस्तस्य बुद्धिर्धिषणा तामिव। एतयोस्तुल्यतामाह—**निरेति**। आलम्बनमाश्रयस्तद्रहिताम्। स्वतन्त्रामित्यर्थः। पक्षे निरालम्बनामर्थशून्याम्। तन्मतेऽर्थानां घटपटादीनामभावात्। शून्यवादित्वादित्यर्थः। **वैदेहीति**। वैदेही जानकी। 'वैदेही मैथिली सीता' इत्यभिधानचिन्तामणिः। तामिव। उभयोस्तुल्यत्वं निरूपयन्नाह—**प्राप्तेति**। प्राप्त आसादितो ज्योतिषि परमात्मनि प्रवेशो यस्याः सा ताम्। पक्षे प्राप्तो ज्योतिषि वह्नौ प्रवेशो ययेति बहुव्रीहिः। **द्यूतेति**। द्यूतं दुरोदरं तस्य कला विज्ञानं तत्र कुशला प्रवीणा तामिव। उभयोः समानतां प्रदर्शयन्नाह—**वशीति**। वशीकृतान्यक्षाणीन्द्रियाणि हृदयं चित्तं च यया सा ताम्। पक्षे वशीकृतमक्षैः पाशकैर्हृदयं यस्या इति बहुव्रीहिः। **महीति**। मही वसुंधरा तामिव। उभयोः शब्दसाम्यमाह—**जलेति**। जलेन नीरेण भृतो धृतो देहो यया सा ताम्। निराहारामित्यर्थः। पक्षे जलेन भृताः पोषिता देहा यस्याम्। तदुक्तम्—'वृष्टेरोषधयः। ओषधीभ्योऽन्नम्। तद्रसरूपेण शुक्रत्वमधिगच्छति। शुक्राद्वै जरायुजा देहाः' इति। **हिमेति**। हिमसमयः शीतकालस्तस्य दिनमुखं प्रत्यूषस्तस्य लक्ष्मीः श्रीस्तामिव। उभयोः साम्यं प्रदर्शयन्नाह—**परीति**। परि सामस्त्येन गृहीतो भास्करस्य सूर्यस्यातप आलोको यया सा ताम्। 'तपस्विनां सूर्यातपग्रहणं महाफलाय' इति श्रुतेः। पक्षे परिगृहीतो मुषितो भास्करस्यातपः कान्तिप्रकाशो ययेति बहुव्रीहिः। **आर्येति**। आर्या छन्दोविशेषस्तामिव। उभयोः साधर्म्यमाह—**उपात्तेति**। उपात्ता स्वीकृता यतिगणानां मुनिजनानां उचिता योग्या मात्रोपव(क)रणं ययेति सा ताम्। पक्ष उपात्ता यतयो विश्रामा गणा मगणादयस्तेषामुचिता मात्रा त्रुटिर्ययेति बहुव्रीहिः। **आलिखितेति**। आलिखिता चित्रिता तामिव। अत एवाचलं निश्चलमवस्थानं यस्याः सा ताम्। **अंशुमयीति**। अंशुमयीं तेजोमयीमिव। **तन्विति**। तनुच्छाया देहकान्तिस्तयानुलिप्तं व्याप्तं भूतलं यया सा ताम्। अन्याप्यंशुमयी भवति। सापि कान्त्याच्छादितभूतला स्यादित्येतयोः साम्यम्। **निर्ममामिति**। निर्गतो ममत्वभावो यस्याः सा ताम्। **निरिति**। निर्गतोऽहंकारोऽभिमानो यस्याः सा ताम्। **निरिति**। निर्गतो मत्सरो गुणेष्वसूया

---

**टिप्प०**—1 शिरःशशिकलाया उदयास्तमनयोरभावादारुण्यं न जायत इत्याशयः। 2 विलोडने सति तस्मिन्नाविलता जायते। 3 शीतोष्ण-सुख-दुःखादिद्वन्द्वानुभवरहितामित्यर्थः। 4 आसक्तिस्तद्रहिताम्। बौद्धबुद्धिस्तु-निर्विषया। तेषां मते ज्ञानमेव घटादिरूपेण भासते। भेदस्तु भ्रान्तिवशादिति।

---

पाठा०—१ उदधिसंपदम्. २ दिवस. ३ परिपीत. ४ समुपात्त. ५ निर्मलां; निर्ममाम्.

राम्, निर्मत्सराम्, अमानुषाकृतिम्, दिव्यत्वादपरिज्ञायमानवयःपरिमाणामप्यष्टादशवर्षदेशीयामिवोपलक्ष्यमाणाम्, प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्श।

ततोऽवतीर्य तरुशाखायां बद्ध्वा तुरङ्गमुपसृत्य भगवते भक्त्या प्रणम्य त्रिलोचनाय तामेव दिव्ययोषितमनिमिषपक्ष्मणा निश्चलनिबद्धलक्ष्येण चक्षुषा पुनर्निरूपयामास। उदपादि चास्य रूपसंपदा कान्त्या प्रशान्त्या चाविर्भूतविस्मयस्य मनसि—"अहो जगति जन्तूनामसमर्थितोपनतान्यापतन्ति वृत्तान्तान्तराणि। तथाहि। मया मृगयायां यदृच्छया निरर्थकमनुबध्नता तुरङ्गमुखमिथुनमयमतिमनोहरो मानवानामगम्यो दिव्यजनसंचरणोचितः प्रदेशो वीक्षितः। अत्र च सलिलमन्वेषमाणेन हृदयहारि सिद्धजनोपसृष्टजलं सरो दृष्टम्। तत्तीरलेखाविश्रान्तेन चामानुषं गीतमाकर्णितम्। तच्चानुसरता मानुषदुर्लभदर्शना दिव्यकन्यकेयमालोकिता। न हि मे संशीतिरस्या दिव्यतां प्रति। आकृतिरेवानुमापयत्यमानुषताम्। कुतश्च मर्त्यलोके संभूति-

---

यस्याः सा ताम्। निर्गतेर्ष्यामित्यर्थः। **अमेति**। न विद्यते मानुषस्य मनुष्यस्याकृतिराकारो यस्याः सा ताम्। दिव्याकारामित्यर्थः। **दिव्यत्वादिति**। दिव्यत्वाद्गान्धर्वपुत्रीत्वादपरिज्ञायमानमनिश्चीयमानं वयोऽवस्थाविशेषस्तस्य परिमाणं मानं यस्यामित्थंभूतामप्यष्टादशवर्षदेशीयामिव किंचिन्न्यूनाष्टादशवर्षीयामिवोपलक्ष्यमाणां दृश्यमानाम्। अन्वयस्तु प्रागेवोक्तः।

**तत इति**। कन्यकादर्शनानन्तरं तुरङ्गमादश्वादवतीर्यावरोहणं कृत्वा तरुशाखायां तुरङ्गममिन्द्रायुधं बद्ध्वोपसृत्य समीपे गत्वा भक्त्या श्रद्धया भगवते त्रिलोचनाय शंभवे प्रणम्य नमस्कृत्य तामेव पूर्वव्यावर्णितस्वरूपामेव दिव्ययोषितममानुषीं स्त्रियम्। **अनीति**। अनिमिषं निमेषोन्मेषरहितं पक्ष्म नेत्ररोम यस्मिंस्तत्तेन। **निश्चलेति**। निश्चलं यथा स्यात्तथा निबद्धं लक्ष्यं वेध्यं येनैवंभूतेन चक्षुषा नेत्रेण। **पुनरिति**। मण्डपिकाप्रवेशानन्तरं निरूपयामास। साकल्येन ददर्शेत्यर्थः। चकारः पुनरर्थकः। **अस्येति**। चन्द्रापीडस्य मनस्येवमुदपाद्युत्पन्नं बभूव। किंविशिष्टस्य तस्य। आविर्भूतः प्रकटीभूतो विस्मय आश्चर्यं यस्य स तथा तस्य। कया। तस्या रूपसंपदा सौन्दर्यसमृद्ध्या। कान्त्या देहदीप्त्या। प्रशान्त्या प्रशमेन वा। एतदेव विस्मयजनकं प्रदर्शयन्नाह—**अहो इति**। अहो इत्याश्चर्ये। जगति विश्वस्मिन् जन्तूनां प्राणिनामसमर्थितोपनतान्यतर्कितप्राप्तानि वृत्तान्तान्तराण्युदन्तान्तराण्यापतन्त्यागच्छन्ति। तदेव दर्शयति—**तथाहीति**। मया मृगयायामाखेटकवृत्तौ यदृच्छया स्वेच्छया तुरङ्गमुखमिथुनं किंनरयुग्ममनुबध्नतानुव्रजता। अयं प्रत्यक्षगतोऽतिमनोहरोऽतिरुचिरो मानवानां मनुष्याणामगम्योऽगोचरो दिव्यजनानां विद्याधरप्रभृतीनां संचरणं भ्रमणं तत्रोचितो योग्यः प्रदेशो भूभागो वीक्षितोऽवलोकितः। **अत्रेति**। अस्मिन्देशे सलिलं पानीयमन्वेषमाणेन शोध्यमानेन सरस्तटाकं दृष्टं वीक्षितम्। एतदेव विशिनष्टि—**हृदयेति**। हृदयहारि मनोहृत्सिद्धजनैरुपसृष्टं सेवितमेतादृशं जलं पानीयं यस्मिन्। तत्पार्श्वात्तस्य सरसस्तीरं प्रतीरं तस्य लेखा प्रान्तवीथी तस्यां विश्रान्तेन संस्थितेन। चकारः समुच्चयार्थः। अमानुषं दिव्यं गीतं गानमाकर्णितं श्रुतम्। **तच्चेति**। तद्गीतमनुसरताम(अ)नुगच्छतां(ता) मानुषाणां भूस्पृशां दुर्लभं दुःप्रापं दर्शनमवलोकनं यस्या एवंविधेयं दिव्यकन्यकालोकिता दृग्विषयीकृता। **न हीति**। हि निश्चितम्। अस्याः कन्यकाया दिव्यतां प्रति मे मम संशीतिर्नास्ति संदेहो नास्ति। अस्मिन्नर्थे हेतुमाह—**आकृतिरिति**। आकृतिराकार एवामानुषतां देवरूपतामनुमापयति। अमानुषताविषयकानुमितिं जनयतीत्यर्थः। अन्यदपि कारणान्तरमाह—**कुत इति**। एवंविधानामेतादृशानां गन्धर्वा देवगायनास्तेषां ध्वनेर्नादस्य विशे-

टिप्प०—1 उपसृष्टमित्येव सहृदयानुमोदितः पाठः।

पाठा०—१ प्रमाणाम्. २ व्रतां च. ३ तुरङ्गम्; तुरगम्. ४ महाभक्त्या. ५ पार्वतीपतये. ६ अनिमेष. ७ विस्मयमनसि. ८ मनसि वितर्कः. ९ तुरग. १० वीक्षितः क्षितेः. ११ उपसृष्ट.

रेवंविधानां गान्धर्वध्वनिविशेषाणाम् । तद्यदि मे सहसा दर्शनपथान्नापयाति, नारोहति वा कैलासशिखरम्, नोत्पतति वा गगनतलम्, ततः 'का त्वम्, किमभिधाना वा किमर्थं वा प्रथमे वयसि प्रतिपन्ना व्रतम्' इति सर्वमेवैतदेनामुपसृत्य पृच्छामि । अतिमहानयमवकाश आश्चर्याणाम्" इत्यवधार्य तस्यामेव स्फटिकमण्डपिकायामन्यतमं स्तम्भमाश्रित्य समुपविष्टो गीतसमाप्त्यवसरं प्रतीक्षमाणस्तस्थौ ।

अथ गीतावसाने मूकीभूतवीणा प्रशान्तमधुकरमधुररुतेव कुमुदिनी सा कन्यका समुत्थाय प्रदक्षिणीकृत्य कृतहरप्रणामा परिवृत्य स्वभावधवलया तपःप्रभावप्रगल्भया दृष्ट्या समाश्वासयन्तीव, पुण्यैरिव स्पृशन्ती, तीर्थजलैरिव प्रक्षालयन्ती, तपोभिरिव पावयन्ती, शुद्धिमिव कुर्वाणा, वरप्रदानमिवोपपादयन्ती, पवित्रतामिव नयन्ती, चन्द्रापीडमाबभाषे— 'स्वागतमतिथये । कथमिमां भूमिमनुप्राप्तो महाभाग । तदुत्तिष्ठ । आगम्यताम् । अनुभूय-

---

षाणां मन्द्रादीनां मर्त्यलोके मनुष्यक्षेत्रे कुतः संभूतिरुत्पत्तिः स्यात् । तदिति हेत्वर्थे । यदि यावत् । मे मम सहसाकस्माद्दर्शनपथाद्विलोकनमार्गान्नापयाति नापसरति । वेति विकल्पार्थः । तथा कैलासशिखरं रजताद्रिशृङ्गं नारोहति नारोहणं करोति । गगनतलं व्योमतलं नोत्पतति नोर्ध्वं गच्छति । **तत इति** । तावत्का त्वम्, किमभिधाना किंनाम्नी, किमर्थं किंप्रयोजनं प्रथमे वयसि बाल्यावस्थायां पाशुपतं व्रतं प्रतिपन्ना स्वीकृतवती । सर्वत्र वाशब्दो विकल्पार्थः । इत्येतत्सर्वमेनां कन्यकामुपसृत्य समीपे गत्वा पृच्छामि प्रश्नं करोमि । **अतीति** । आश्चर्याणां कौतुकानामयमतिमहानवकाशोऽसंकीर्णं स्थलम् । इति पूर्वोक्तमवधार्य निर्णयं कृत्वा तस्यां पूर्वोक्तायामेव स्फटिकमण्डपिकायामन्यतममन्यतरं स्तम्भं स्थूणामाश्रित्याश्रयणीकृत्य समुपविष्टो निषण्णः । **गीतेति** । गीतं गानं तस्य समाप्तिः पर्याप्तिस्तस्या अवसरः समयस्तं प्रतीक्षमाणः प्रतीक्षां कुर्वाणस्तस्थौ स्थितवान् ।

अथेत्यानन्तर्ये । गीतावसाने गीतपर्यन्ते मूकीभूता मौनमाश्रिता वीणा वल्लकी यस्याः सा तथा । श्वेतत्वसादृश्यादाह—**प्रशान्तेति** । प्रशान्तः शान्तिं प्राप्तो मधुकराणां भ्रमराणां मधुरं मिष्टं रुतं शब्दो यस्यामेवंभूता कुमुदिनीव । ततस्तस्मात्स्थलात्सा कन्यका समुत्थायोत्थानं कृत्वा प्रदक्षिणीकृत्य प्रदक्षिणां दत्वा । **कृतेति** । कृतो विहितो हराय प्रणामो नमस्कारो यया सा । **परिवृत्येति** । परावर्तनं कृत्वा स्वभावेन न चोपाधिना धवलया शुक्लत्वेन निर्विकारत्वात् । **तप इति** । तपःप्रभावस्तपोमाहात्म्यं तेन, प्रगल्भया प्रौढया दृष्ट्या लोचनेन समाश्वासयन्तीवाश्वासनं कुर्वन्तीव । **पुण्यैरिति** । पुण्यैर्धर्मैः स्पृशन्तीव स्पर्शं कुर्वन्तीव । तीर्थानि[1] मागधप्रभृतीनि तेषां जलैः पानीयैः प्रक्षालयन्तीव क्षालनं कुर्वन्तीव । तपोभिस्तपस्याभिः पावयन्तीव पवित्रीकुर्वन्तीव । शुद्धिं नैर्मल्यं कुर्वाणेव । वरप्रदानं वाञ्छितदानमुपपादयन्तीव जनयन्तीव । पवित्रतां पावित्र्यं नयन्तीव प्रापयन्तीव । चन्द्रापीडमाबभाषे आभाषितवती । किं तदित्याह— **स्वागतमिति** । अतिथये प्राघूर्णकाय स्वागतं सुखेनागतम् । **महेति** । हे महाभाग हे महानुभाव, इमां भूमिं कथमनुप्राप्त आगतः । **तदिति** । तस्मात्त्वमुत्तिष्ठोत्थानं कुरु । आगम्यताम् । मत्पार्श्व इति शेषः । अतिथिसत्कार आतिथ्यमनुभूयतामनुभवविषयीक्रियताम् । इति परिसमाप्तौ । एवं पूर्वोक्तप्रकारेण तया कन्यकयोक्तो

---

टिप्प०—1 प्रयागप्रभृतीनीति वक्तव्ये मागधेत्युक्तिरनभिज्ञतैव धर्मस्य, मगधस्य पुण्यदेशेष्वगणनात् ।

---

पाठा०—१ विधानां गान्धर्वध्वनिविशेषाणां च. २ पाशुपतव्रतम्. ३ सर्वमेतद. ४ परिसमाप्ति. ५ दान. ६ एव. ७ पवित्रिताम्. ८ अवनयन्ती. ९ महाभागः. १० अनुगम्यताम्.

तामतिथिसत्कारः' इति । एवमुक्तस्तु तया संभाषणमात्रेणैवानुगृहीतमात्मानं मन्यमान उत्थाय भक्त्या कृतप्रणामः 'भगवति, यथाज्ञापयसि' इत्यभिधाय दर्शितविनयः शिष्य इव तां व्रजन्तीमनुवव्राज । व्रजंश्च समर्थयामास—'हन्त, तावन्नेयं मां दृष्ट्वा तिरोभूता । कृतं हि मे कुतूहलेन प्रश्नाशया हृदि पदम् । यथा चेयमस्यास्तपस्विजनदुर्लभदिव्यरूपाया अपि दाक्षिण्यातिशया प्रतिपत्तिरभिजाता विभाव्यते, तथा संभावयामि नियतमियमखिलमात्मोदन्तमभ्यर्थ्यमाना मया कथयिष्यति' इत्येवं च कृतमतिः पदशतमात्रमिव गत्वा निरन्तरैर्दिवापि रजनीसमयमिव दर्शयद्भिस्तमालतरुभिरन्धकारितपुरोभागाम्, उत्फुल्लकुसुमेषु लतानिकुञ्जेषु गुञ्जतां मन्दं मंदमत्तमधुलिहां विरुतिभिर्मुखरीकृतपर्यन्ताम्, अतिदूरपातिनीनां च धवलशिलातलप्रतिघातोत्पतनफेनिलानामपां प्रस्रवणैरुत्कोटिग्रावविटङ्कविपा-

---

भाषितः संभाषणमात्रेणैवानुगृहीतं प्रसादपात्रीकृतमात्मानं मन्यमानो ज्ञायमानस्ततस्तस्मात्प्रदेशादुत्थाय भक्त्यान्तरप्रीत्या कृतो विहितः प्रणामो नतिर्येन स हे भगवति हे स्वामिनि, यथा येन प्रकारेणाज्ञापयस्याज्ञां करोषि तत्तथेत्यभिधायेत्युक्त्वा दर्शितः प्रकाशितो विनयो नम्रता येन स शिष्य इव विनेय इव तां कन्यकां व्रजन्तीं गच्छन्तीमनुवव्राज पश्चाज्जगाम । **व्रजंश्चेति** । व्रजन्गच्छन् । **समर्थेति** । प्रस्तुतं समर्थयामास । उद्देशस्य निश्चयं चकारेत्यर्थः । **हन्तेति** । हन्तेत्याश्चर्ये । तावदादौ इयं मां दृष्ट्वा निरीक्ष्य न तिरोभूता नादृश्यतां गता । हीति निश्चितम् । कुतूहलेन करणभूतेन प्रश्नाशया पृच्छाभिलाषया हृदि चित्ते परं स्थानं विहितम् । **यथा चेति** । यथा येन प्रकारेणास्याः प्रत्यक्षगतायाः । **तपस्वीति** । तपस्विजनेषु दुर्लभं दुष्प्रापं दिव्यं मनोहरं रूपं यस्या एवंभूतायाः कन्याया अपि । **दाक्षिण्येति** । दाक्षिण्यमनुकूलता तस्या अतिशय आधिक्यं तेन प्रतिपत्तिर्मद्विषयिण्युत्कण्ठा विशेषरूपेणेयमभिजातोत्पन्ना विभाव्यते लक्ष्यते । यत्तदोर्नित्याभिसंबन्धादाह—**तथेति** । तथा तेन प्रकारेण संभावयामि संभावनां करोमि । नियतं निश्चितम् । इयं कन्यका मया चन्द्रापीडेनाभ्यर्थ्यमाना प्रार्थ्यमानाखिलं समग्रमात्मनः स्वकीयस्योदन्तं वृत्तान्तं कथयिष्यति प्रतिपादयिष्यति । इत्येवंप्रकारेण कृता मतिर्येनैवंभूतश्चन्द्रापीडः पदशतमात्रमिव गत्वा किंचिदध्वानमतिक्रम्य गुहां दरीमद्राक्षीदपश्यत् । इतो गुहां विशेषयन्नाह—**निरन्तरेति** । निरन्तरैर्निबिडैर्दिवापि दिवसेऽपि रजनीसमयमिव रात्रिकालमिव दर्शयद्भिः प्रकाशयद्भिरेतादृशैस्तमालतरुभिस्तापिच्छवृक्षैरन्धकारितोऽन्धकारवदाचरितः पुरोभागोऽग्रप्रदेशो यस्यास्ताम् । **उत्फुल्लेति** । उत्फुल्लानि विकसितानि कुसुमानि पुष्पाणि येष्वेवंभूतेषु लतानिकुञ्जेषु वल्लीकुटकेषु मन्द्रं गुञ्जतां शब्दं कुर्वतां मदेन मत्ताः क्षीबा ये मधुलिहो भ्रमरास्तेषां विरुतिभिः शब्दैर्मुखरीकृतो वाचालीकृतः पर्यन्तः प्रान्तो यस्याः सा ताम् । **अतीति** । अतिदूरं दविष्ठं पतन्ति एवंशीला अतिदूरपातिन्यस्तासां च । **धवलेति** । धवलं शुभ्रं यच्छिलातलं प्रस्तरतलं तेन यः प्रतिघातः प्रतिस्खलनं तस्माद्यदुत्पतनं तेन फेनिलानां संजातडिण्डीराणामीदृशीनामपामम्भसां प्रस्रवणैर्निर्झरैराबध्यमान आबन्धविषयीक्रियमाणो नीहारो हिमं यस्यां सा ताम् । अथ प्रस्रवणं विशेषयन्नाह—**उदिति** । उदूर्ध्वं कोटयः कोणा येषामेवंभूता ये ग्रावाणः प्रस्तरास्तेषां विटङ्का उन्नतप्रदेशा-

**टिप्प०**—1 दाक्षिण्यस्य अतिशयो यस्याम् ईदृशी प्रतिपत्तिः 'स्वागतमतिथये' इत्यादिर्व्यवहारः, इत्यर्थ उचितः । 2 हिमवर्णवत् आबध्यमानाः ( उत्पाद्यमानाः ) नीहाराः जलबिन्दवो यस्याम् । प्रस्रवणजलक्षोदवाहिनीमित्यर्थः ।

---

**पाठा०**—१ सत्कार एवमुक्तस्तया. २ संभाषित. ३ समुत्थाय. ४ अद्भुताकृतिस्तिरोभूता. ५ अतिशय. ६ आत्मोदन्तम्. ७ रजनीमयम्. ८ कूजताम्. ९ मन्दं मन्दम्. १० मधुमत्त. ११ पातिनाम्.

ध्यमानैरुच्चरद्ध्वनिभिरवशीर्यमाणतुषारशिशिरशीकरासारैराबध्यमाननीहाराम्, हिमहारहरहासधवलैश्चोभयतः क्षरद्भिर्निर्झरैर्द्वारावलम्बितचलच्चामरकलापामिवोपलक्ष्यमाणाम्, अन्तःस्थापितमणिकमण्डलुमण्डलाम्, एकान्तावलम्बितयोगपट्टिकाम्, विशाखिकानिबद्धनालिकेरीफलवल्कलमयधौतोपानद्युगोपेताम्, अवशीर्णाङ्गभस्मधूसरवल्कलशयनीयसनाथैकदेशाम्, इन्दुमण्डलेनेव टङ्कोत्कीर्णेन शङ्खमयेन भिक्षाकपालेनाधिष्ठिताम्, संनिहितभस्मालाबुकां गुहामद्राक्षीत् ।

तस्याश्च द्वारि शिलातले समुपविष्टो वल्कलशयनशिरोभागविन्यस्तवीणां ततः पर्णपुटेन निर्झरादागृहीतमर्घजलमादाय तां कन्यकां समुपस्थिताम् 'अलमतियन्त्रणया । कृतमतिप्रसादेन । भगवति, प्रसीद । विमुच्यतामयमत्यादरः । त्वदीयमालोकनमपि सर्वपापप्रशमनमघमर्षणमिव पवित्रीकरणायालम् । आस्यताम्' इत्यब्रवीत् । अनुवध्यमानश्च तया

---

स्तैर्विपाट्यमानानि विदार्यमाणानि तैः । **उच्चरदिति** । उच्चरञ्शब्दं कुर्वन्ध्वनिः शब्दो येषां तैः । **अवेति** । अवशीर्यमाणो विशरारुतां प्राप्यमाणो यस्तुषारो नीहारस्तस्य शिशिराः शीतलाः शीकरा वाताहृतजलविप्रुषस्तेषामासारो वेगवान्वर्षो येषु तैः । **हिमेति** । हिमं तुहिनम्, हारो मुक्ताकलापः, हर ईश्वरस्तस्य हासो हास्यं तद्वद्धवलैः श्वेतैः । उभयतः पार्श्वद्वये क्षरद्भिः स्रवद्भिर्निर्झरैः प्रस्रवणैः । **द्वारेति** । द्वारे प्रतीहारेऽवलम्बितो यश्चलच्चामरकलापः प्रोच्छलद्वालव्यजनसमूहो यस्यामेवंविधामिवोपलक्ष्यमाणां वीक्ष्यमाणाम् । **अन्तरिति** । अन्तर्मध्ये स्थापितं न्यस्तं मणिनिर्मितं कमण्डलुमण्डलं कुण्डिकावलयं यस्यां सा ताम् । **एकान्तेति** । एकान्ते रहस्यवलम्बिता स्थापिता योगपट्टिका योगसाधनोपकरणं यस्यां सा ताम् । **विशेति** । विशाखिका भूमिशुद्ध्यर्थमाद्रियमाणा लोहयष्टिरूपा तस्यां निबद्धं संदानितं यन्नालिकेरी लाङ्गली तस्याः फलं तस्य वल्कलैस्त्वग्भिर्निष्पन्नं धौतं क्षालितमुपानद्युगं पादुकायुगलं तेनोपेतां सहिताम् । **अवेति** । अवशीर्णं च्युतं यदङ्गभस्म देहविभूतिस्तेन धूसरं मलिनं यद्वल्कलशयनीयं चोचशय्या तेन सनाथः सहित एकदेशो यस्याः सा ताम् । **टङ्क इति** । टङ्कः पाषाणदारणस्तेनोत्कीर्णेनोत्कारितेन शङ्खमयेन कम्बुदलनिर्मितेन भिक्षाकपालेन भिक्षाकर्परेणाधिष्ठितामाश्रिताम् । श्वेतत्वसाम्यादाह—**इन्दुरिति** । इन्दुश्चन्द्रस्तस्य मण्डलेनेव । **संनिहितेति** । संनिहितं समीपवर्ति भस्मालाबुकं विभूतितुम्बकं यस्यां ताम् । अन्वयस्तु प्रागेवोक्तः ।

**तस्याश्चेति** । तस्या गुहाया द्वारि प्रतीहारप्रदेशे यच्छिलातलं तस्मिन्नुपविष्ट आसीनश्चन्द्रापीडो वल्कलशयनं तस्य शिरोभागस्तत्र विन्यस्ता स्थापिता वीणा वल्लकी यया सा ताम् । **तत इति** । वल्लकीस्थापनानन्तरं पर्णपुटेन निर्झरात्प्रस्रवणादागृहीतं यदर्घजलं तदादाय समुपस्थितां समागतां तां प्रति चन्द्रापीड इत्यब्रवीदित्युवाच । इतिशब्दार्थमाह—**अलमिति** । अतियन्त्रणयात्यनुरोधेनालं कृतम् । **कृतमिति** । अतिप्रसादेनातिप्रसन्नतया कृतं स्तम् । हे भगवति हे स्वामिनि, प्रसीद प्रसन्ना भव । अयमत्यादरोऽत्याग्रहो विमुच्यतां त्यज्यताम् । त्वदीयमालोकनमपि दर्शनमपि सर्वपापप्रशमनं सर्वैनसां प्रशमनकृत् । **अघेति** । सर्वैनोध्वंसि जाप्येऽघमर्षणं तद्वदिव पवित्रीकरणाय पावनीकरणायालं समर्थम् । अत आस्यतामुपविश्यताम् । भवत्या दर्शनेनैव मम कार्तार्थ्यमभूत् । ततः किमातिथ्येनेति भावः । **अन्विति** । तया कन्यकयानुबध्यमानो-

---

टिप्प०—1 शिक्या, 'छींका' इतिभाषाख्याता । टीकाकृतोऽर्थस्तु मृग्यः । 2 मत्कृते अत्यन्तं क्लेशानुभवेनेत्यर्थ उचितः । 3 'अनुरुध्यमानः' कृतानुरोधः इत्येव पाठो ग्रन्थोचितः ।

---

पाठा०—१ धारा २ चारुचलत्. ३ शिखरनिबद्ध. ४ नारिकेल. ५ आगृहीतार्घ्यसलिलम्. ६ अलमलम्. ७ तदीयम्. ८ अप्यत्र खलु. ९ अनुरुध्यमानः.

तां सर्वामतिथिसपर्यामतिदूरावनतेन शिरसा सप्रश्रयं प्रतिजग्राह । कृतातिथ्यया च तया द्वितीयशिलातलोपविष्टया क्षणमिव तूष्णीं स्थित्वा क्रमेण परिपृष्टो दिग्विजयादारभ्य किंनरमिथुनानुसरणप्रसङ्गेनागमनमात्मनः सर्वमाचचक्षे । विदितसकलवृत्तान्ता चोत्थाय सा कन्यका भिक्षाकपालमादाय तेषामायातनतरूणां तलेषु विचचार । [1]अचिरेण च तस्याः स्वयंपतितैः फलैरपूर्यत भिक्षाभाजनम् । आगत्य च तेषां फलानामुपयोगाय नियुक्तवती चन्द्रापीडम् । आसीच्च तस्य चेतसि—'नास्ति खल्वसाध्यं नाम तपसाम् । किमतःपरमाश्चर्यं [2]यत्र [3]व्यपगतचेतना अपि सचेतना इवास्यै भगवत्यै समतिसृजन्तः फलान्यात्मानुग्रहमुपपादयन्ति वनस्पतयः । चित्रमिदमालोकितमस्माभिरदृष्टपूर्वम्' इत्यधिकतरोपजातविस्मयश्चोत्थाय तमेव प्रदेशमिन्द्रायुधमानीय व्यपनीत[4]पर्याणं नातिदूरं संयम्य निर्झरजलनिर्[5]वर्तितस्नानविधिस्तान्य[6]मृतस्वादून्य[7]पभुज्य फलानि पीत्वा च तुषारशिशिरं प्रस्रवणजलमु[8]पस्पृश्य चैकान्ते तावद[9]वतस्थे यावत्तयापि [10]कन्यकया कृतो जलफलमूलमयेष्वाहारेषु प्रणयः ।

इति परिसमापिताहारां निर्वर्तितसंध्योचिताचारां शिलातले विश्रब्धमुपविष्टां निभृतमुपसृत्य

---

ऽनुरुध्यमानः । चकारः पुनरर्थकः । तां सर्वां समग्रातिथिसपर्यामभ्यागतपूजामतिदूराद्विष्टादवनतेन नमितेन शिरसोत्तमाङ्गेन सप्रश्रयं सविनयं प्रतिजग्राह गृहीतवान् । **कृतेति** । कृतं विहितमातिथ्यं यया सा तया । **द्वितीयेति** । द्वितीयं भिन्नं यच्छिलातलं तत्रोपविष्टयासीनया क्षणमिव तूष्णीं स्थित्वा मौनं कृत्वा क्रमेण परिपाट्या परिपृष्टोऽनुयुक्तो दिग्विजयादारभ्य किंनरमिथुनस्य यदनुसरणं यदनुगमनं तत्प्रसङ्गेन तद्वशेनात्मनः स्वकीयस्य सर्वमागमनमाचचक्षेऽकथयत् । **विदितेति** । विदितो ज्ञातः सकलः समग्रो वृत्तान्त उदन्तो यया सा चकारः पूर्ववत् । उत्थाय सा कन्यका भिक्षाकपालं भिक्षाभाजनमादाय गृहीत्वा तेषामायतनतरूणां गुहासमीपवर्तिवृक्षाणां तलेष्वधोभागे विचचार पर्यटनं चकार । **अचिरेणेति** । अचिरेण स्वल्पकालेन स्वयंपतितैः स्वभावतश्च्युतैः फलैस्तस्या भिक्षाभाजनमपूर्यत परिपूरितमभूत् । **आगत्येति** । आगत्यैत्य तेषां फलानामुपयोगायोपभोगार्थं चन्द्रापीडं नियुक्तवती प्रेरितवती । **तस्येति** । तस्य चन्द्रापीडस्य चेतसि मनसीत्यासीदित्यभूत् । इतिशब्दद्योत्यं प्रदर्शयन्नाह—**खल्विति** । खलु निश्चयेन । नामेति कोमलामन्त्रणे । तपसामसाध्यमशक्यं नास्ति तथाप्यतःपरमेतदन्यत्किमाश्चर्यं चोद्यं भवेत्तदेवाह—**यत्रेति** । यस्मिन्प्रदेशेऽपगता दूरीभूता चेतना चैतन्यं येषामेवंभूता अपि वनस्पतयो वृक्षाः सचेतना इव सचैतन्या इवास्यै भगवत्यै फलानि समतिशयेन सृजन्तो ददत आत्मानुग्रहं निजसाफल्यमुपपादयन्ति निष्पादयन्ति । **चित्रमिति** । अदृष्टपूर्वमवीक्षितपूर्वमिदं चित्रमाश्चर्यमालोकितं वीक्षितम् । **अधीति** । अधिकतरोऽतिभूयानुपजातः समुत्पन्नो विस्मयो यस्य स उत्थाय तमेव प्रदेशमिन्द्रायुधमानीय व्यपनीतपर्याणं दूरीकृतपल्ययनं नातिदूरे समीपे संयम्य निबध्य । **निर्झरेति** । निर्झरजलेन प्रस्रवणपानीयेन निर्वर्तितो निष्पादितः स्नानविधिराप्लावविधिर्येन स तान्यमृतवत्स्वादूनि मिष्टानि फलान्युपभुज्यास्वाद्य च तुषारस्य नीहारस्य शिशिरं शीतलं प्रस्रवणजलं निर्झराम्भः पीत्वा चोपस्पृश्याचमनं कृत्वैकान्ते रहसि तावदवतस्थे तावत्कालमासेदिवान्यावत्तयापि कन्यकया जलफलमूलमयेष्वाहारेषु प्रणयः स्नेहः कृतः ।

**इतीति** । इति पूर्वोक्तप्रकारेण परिसमापितः पर्याप्तिं नीत आहारो भोजनं यया सा ताम् । **निर्वेति** । निर्वर्तितो विहितः संध्योचिताचारः सायंकालयोग्यो विधिर्यया सा तां शिलातले विश्रब्धं सविश्वासं यथा

---

पाठ०—१ अचिरेण तस्याः. २ यदत्र; यत्र च. ३ विगत. ४ पर्याणे च. ५ निर्वर्तित. ६ अमृतरस. ७ उपयुज्य. ८ उपस्पृश्यैकान्ते. ९ उपतस्थे. १० कन्यया.

नातिदूरे समुपविश्य मुहूर्तमिव स्थित्वा चन्द्रापीडः सविनयमवादीत्—'भगवति, त्वत्प्रसादप्राप्तिप्रोत्साहितेन कुतूहलेनाकुलीक्रियमाणो मानुषतासुलभो लघिमा बलादनिच्छन्तमपि मां प्रश्नकर्मणि नियोजयति। उपजनयति[1] हि[2] प्रभुप्रसादलवोऽपि प्रागल्भ्यमधीरप्रकृतेः। स्वल्पापि[3] एकावस्थाने कालकला परिचयमुत्पादयति। अणुरप्युपचारपरिग्रहः प्रणयमारोपयति। तद्यदि नातिखेदकरमिव ततः कथनेनात्मानमनुग्राह्यमिच्छामि[4]। अतिमहत्खलु भवद्दर्शनात्प्रभृति मे कौतुकमस्मिन्विषये। कतरन्मरुतामृषीणां गन्धर्वाणां गुह्यकानामप्सरसां वा कुलमनुगृहीतं भगवत्या जन्मना। किमर्थं वास्मिन्कुसुमसुकुमारे नवे वयसि व्रतग्रहणम्। क्वेदं वयः[5], क्वेयमाकृतिः, क्व चायं लावण्यातिशयः, क्वेयमिन्द्रियाणामुपशान्तिः। तदद्भुतमिव[6] मे प्रतिभाति। किं[7] वानेकसिद्धसाध्यसंबद्धानि[8] सुरलोकसुलभान्यपहाय[9] दिव्याश्रमपदान्येकाकिनी वनमिदममानुषमधिवससि। कश्चायं[10] प्रकारो यत्तैरेव पञ्चभिर्महाभूतैरारब्धमीदृशं[11]

---

स्यात्तथोपविष्टामासीनाम्। निभृतं निश्चलं यथा स्यात्तथोपसृत्य समीपे गत्वा नातिदूरे समुपविश्यास्थाय मुहूर्तमिव क्षणमात्रमिव स्थित्वा विलम्ब्य चन्द्रापीडः सविनयं विनयसंयुक्तं यथा स्यात्तथावादीदवोचत्। हे भगवति हे स्वामिनि। **त्वदिति**। तव प्रसादस्य प्राप्तिर्लब्धिस्तया प्रोत्साहितेन प्रगुणीकृतेन कुतूहलेन कौतुकेनाकुलीक्रियमाणो व्याकुलतां नीयमान एवंविधो यो लघिमा तुच्छस्वभावः। कीदृशः। मानुषता मानवता तत्र सुलभः सुप्रापो मां बलाद्धठादनिच्छन्तमवाञ्छन्तमपि प्रश्नकर्मणि पृच्छाक्रियायां नियोजयति व्यापारयति। **उपजनेति**। हीति निश्चितम्। प्रभोः स्वामिनः प्रसादलवोऽपि प्रसन्नतालेशोऽप्यधीरप्रकृतेश्चञ्चलस्वभावस्य प्रागल्भ्यं धाष्ट्र्यमुपजनयत्युपपादयति। **स्वल्पेति**। एकावस्थान एकावस्थितौ स्वल्पापि स्तोकापि कालकला पञ्चदशलवात्मिका परिचयं संस्तवमुत्पादयति जनयति। अणुरपि परमाणुरप्युपचारपरिग्रहः पूजास्वीकारः प्रणयं स्नेहमारोपयत्यारोपविषयीकरोति। **तदिति**। तद्यदि नातिखेदकरमिव नातिप्रयासजनकसदृशमिव ततः कथनेन निवेदनेनात्मानमनुग्राह्यमभ्युपपत्तिविषयमिच्छामि समीहे। **अतीति**। खलु निश्चये। भवद्दर्शनात्प्रभृति तवालोकनादारभ्य मे ममास्मिन्विषये प्रश्नविषयेऽतिमहत्कौतुकमत्याश्चर्यम्। **कतरदिति**। मरुतां देवानाम्, ऋषीणां मुनीनाम्, गन्धर्वाणां देवगायनानाम्, गुह्यकानां यक्षाणाम्, अप्सरसां तिलोत्तमादीनां मध्ये। निर्धारणे षष्ठी। जन्मना प्रादुर्भावेन भगवत्या स्वामिन्या कतरत्कतमत्कुलमन्वयोऽनुगृहीतमनुग्रहविषयीकृतम्। **किमिति**। किमर्थम्। किं प्रयोजनमिति यावत्। वेति विकल्पार्थः। अस्मिन्नवे नूतने वयस्यवस्थायां कुसुमं पुष्पं तद्वत्सुकुमारे कोमले व्रतग्रहणं नियमस्वीकारः। क्वेति महदन्तरे। इदं प्रत्यक्षोपलभ्यमानं वयः क्व। अथ चेयमाकृतिराकारविशेषः क्व। तथा लावण्यं[1] चातुर्यं तस्यातिशय आधिक्यं क्व। तथेन्द्रियाणां करणानामियमुपशान्तिर्विषयोपरमः क्व। **तदिति**। मे मम तत्सर्वं पूर्वोक्तमद्भुतमिवाश्चर्यमिव प्रतिभाति प्रतिभासते। अन्यच्च। किमिति पूर्ववत्। **अनेकेति**। अनेके बहवो ये सिद्धा महायोगिनस्तैः साध्या निष्पाद्याः क्रिया इत्यर्थः। ताभिः संबद्धानि[2] संकीर्णानि सुरलोका देवसमूहास्तेषां सुलभानि सुप्राप्याण्येवंविधानि दिव्याश्रमपदानि महामुनीनां निवासस्थानान्यपहाय विमुच्यैकाकिन्यसहायामानुषं मनुष्यवर्जितमिदं वनमरण्यं कथं त्वं भवत्यधिवससि। 'उपान्वध्याङ्वसः' इति वनमित्यस्याधिकरणस्य कर्मसंज्ञायां द्वितीया। **कश्चेति**। कश्चानिर्दिष्टस्वरूपोऽयं प्रकारः[3] प्रभेदो यत्तैरेव सर्वप्रसिद्धैरेव पञ्चभिर्महाभूतैः पृथि-

---

**टिप्प०—1 सौन्दर्यम्। 2 'अनेकसिद्ध-साध्यसंबाधानि' इत्येव पाठः, संबाधानि संकुलानीति तदर्थः। 3 विशेषः।**

---

**पाठा०—**१ जनयति. २ हि न. ३ एकदेशावस्थाने; एकदेशावस्थान. ४ अनुगृह्यमाणम्. ५ वयः, क्वेदं तपः. ६ अद्भुतम्. ७ किं निमित्तम्. ८ संबन्धानि; संबाधानि. ९ सुभगानि. १० कश्चायं प्रजापतेः प्रकारो यत्तैरेव महाभूतैः पञ्चभिः. ११ ईदृशीम्.

धवलतां धत्ते शरीरम् । नेदमस्माभिरन्यत्र दृष्टश्रुतपूर्वं वा । अपनयतु नः कौतुकम् । आवेदयतु भवती सर्वमिदम्' इत्येवमभिहिता सा किमप्यन्तर्ध्यायन्ती तूष्णीं मुहूर्तमिव स्थित्वा निःश्वस्य स्थूलस्थूलैरन्तर्गतां हृदयशुद्धिमिवादाय निर्गच्छद्भिः, इन्द्रियप्रसादमिव वर्षद्भिः, तपोरसनिःस्यन्दमिव स्रवद्भिः, लोचनविषयं धवलिमानमिव द्रवीकृत्य पातयद्भिः, अच्छाच्छैः अमलकपोलस्थलस्खलितैः, अवशीर्णहारमुक्ताफलतरलपातैः अनुबद्धबिन्दुभिः वल्कलावृतकुचशिखरजर्जरितसीकरैरश्रुभिरामीलितलोचना निःशब्दं रोदितुमारेभे । तां च प्ररुदितां दृष्ट्वा चन्द्रापीडस्तत्क्षणमचिन्तयत्—'अहो दुर्निवारता व्यसनोपनिपातानाम्, यदीदृशीमप्याकृतिमनभिभवनीयामात्मीयां कुर्वन्ति । सर्वथा न न कंचन स्पृशन्ति शरीरधर्माणमुप-

---

व्यप्तेजोवाय्वाकाशरूपैरारब्धं रचितमीदृशं शरीरं देहः । **धवेति** । धवलिमानं धत्ते दधाति । **नेति** । इदमेतादृशमस्माभिरैदंयुगीनैरन्यस्मिन्देशान्तरे पूर्वं न दृष्टं न वीक्षितम् । नापि पूर्वं कस्यचिन्मुखाच्छ्रुतमाकर्णितम् । **अपेति** । नोऽस्माकं कौतुकं महदाश्चर्यमपनयतु दूरीकरोतु । **आवेति** । भवती स्वामिनी सर्वमिदं पूर्वोक्तमावेदयतु निवेदयतु । **इतीति** । इत्येवंप्रकारेणाभिहिता प्रतिपादिता सा किमप्यनिर्वचनीयमन्तश्चित्ते ध्यायन्ती चिन्तयती तूष्णीं जोषं मुहूर्तसदृशम् । अत्र सदृशार्थे इवप्रयोगः । निःश्वस्य निश्वासं मुक्त्वा । पूर्वानुभूतस्य दुःखस्य स्मरणादिति भावः । अश्रुभिर्नेत्रजलैरामीलिते संकुचिते लोचने नेत्रे यस्याः सा तादृशी निःशब्दं ध्वनिवर्जितं यथा स्यात्तथा रोदितुं रोदनं कर्तुमारेभ आरम्भं चकार । अथाश्रु विशेषयन्नाह—**स्थूलेति** । स्थूलानि च स्थूलानि च स्थूलस्थूलानि तैः । अतिश्वेतत्वसाम्यादाह—**अन्तरिति** । अन्तर्गतां मध्यप्राप्तां हृदयशुद्धिं चित्तनैर्मल्यमिवादाय गृहीत्वा निर्गच्छद्भिर्बहिरागच्छद्भिः । **इन्द्रियेति** । इन्द्रियाणामक्षाणां प्रसादं प्रसन्नतामिव वर्षद्भिर्वर्षणं कुर्वद्भिः । **तप इति** । तपसां चान्द्रायणादीनां रसनिःस्यन्दमिव द्रवरहस्यमिव स्रवद्भिः क्षरद्भिः । **लोचनेति** । लोचनविषयं नेत्रसंबन्धिनं धवलिमानं श्वेतिमानमिव द्रवीकृत्य रसीकृत्य पातयद्भिः । **अच्छेति** । अच्छानि चाच्छानि चाच्छाच्छानि तैः । अतिस्वच्छैरित्यर्थः । **अमलेति** । अमलं निर्मलं यत्कपोलस्थलं तत्र स्खलितैः स्खलनं प्राप्तैः । **अवशीर्णेति** । अवशीर्णस्त्रुटितो यो हारो मुक्ताप्रालम्बस्तस्य मुक्ताफलानि रसोद्भवानि तद्वत्तरलः कम्पनः पातो येषां तैः । एतेनोज्ज्वलत्वसाम्यात्क्षरन्मुक्ताफलसाम्यमश्रूणां ध्वनितम् । अनुबद्धाः परस्परानुविद्धा बिन्दवो विप्रुषो येषां तैः । **वल्कलेति** । वल्कलावृतौ चोचाच्छादितौ यौ कुचौ पयोधरौ तयोः शिखरमग्रं तेन जर्जरिताः शिथिलतां प्राप्ताः सीकराः कणा येषां तैः । एतेन कुचयोरतिकाठिन्यं व्यञ्जितम् । अन्वयस्तु प्रागेवोक्तः । **तामिति** । तां कन्यकाम् । चकारः पुनरर्थकः । प्ररुदितां कृताश्रुपातां दृष्ट्वा विलोक्य चन्द्रापीडस्तत्क्षणं तस्मिन्नवसरेऽचिन्तयच्चिन्तितवान् । चिन्ताविषयमाह—**अहो इति** । अहो इत्याश्चर्ये । व्यसनानि मद्यपानादीनि तत्रोपनिपाता अत्यासक्तिरूपास्तेषां दुर्निवारता दुर्हेयता । अनल्पायासेन निवारयितुं शक्यते, न तु स्वल्पप्रयासेनेति भावः । यदिति हेत्वर्थे । अनभिभवनीयां न परैरभिभवितुं योग्यामेतादृशीमलौकिकीमप्याकृतिमाकारमात्मीयां स्वायत्तां कुर्वन्ति प्रणयन्ति । **सर्वथेति** । सर्वथा सर्वप्रकारेणोपतापाः कामाभिलाषाः

---

**टिप्प०—**1 हन्त ! न कविसूक्तीनां स्तोकोपि परिचयष्टीकाकारवराकस्य । '°रारब्धमीदृशीं धवलतां धत्ते शरीरम्' इत्येव मधुरः पाठः । अर्थः स्फुटः । 2 वैलक्षण्यमित्यर्थः । 3 तपांस्येव रसाः (द्रवाः) तेषां निस्यन्दं धारां क्षरद्भिरिव, इत्यर्थो योग्यः । 4 हन्त धिक् टीकाकारम् । ग्रन्थकारो यां मूर्तिमतीं पवित्रतां चित्रयति तत्र मद्यपानादेः कः प्रसङ्गः ? अस्तु. व्यसनोपनिपातानां दुःखोपस्थितीनाम् अहो दुर्निवारता अभिभवितुमशक्यता ? अर्थात् दैवोपस्थापितानि दुःखानि न केनचिद्वारयितुं शक्यानीति भावः ।

---

पाठा०—१ पूर्वम्. २ आवेदयतु सर्वम्. ३ हारमुक्तमुक्ता.

तापाः । बलवती हि द्वन्द्वानां प्रवृत्तिः । इदमपरमधिकतरं जनितमतिमहन्मनसि मे कौतुकमस्या बाष्पसलिलपातेन । न ह्यल्पीयसा शोककारणेन क्षेत्रीक्रियन्त एवंविधा मूर्तयः । न हि क्षुद्रनिर्घातपाताभिहता चलति वसुधा' इति । संवर्धितकुतूहलश्च शोकस्मरणहेतुतामुपगतमपराधिनमिवात्मानमवगच्छन्नुत्थाय प्रस्रवणादञ्जलिना मुखप्रक्षालनोदकमुपनिन्ये । सा तु तदनुरोधाद्विच्छिन्नबाष्पजलधारासंतानापि किंचित्कषायितोदरे प्रक्षाल्य लोचने वल्कलोपान्तेन वदनमपमृज्य दीर्घमुष्णं च निःश्वस्य शनैः शनैः प्रत्यवादीत्—

'राजपुत्र, किमनेनातिनिर्घृणहृदयाया मम मन्दभाग्यायाः पापाया जन्मनः प्रभृति वैराग्यवृत्तान्तेनाश्रवणीयेन श्रुतेन । तथापि यदि महत्कुतूहलं तत्कथयामि । श्रूयताम्—एतत्प्रायेण कल्याणाभिनिवेशिनः श्रुतिविषयमापतितमेव यथा विबुधसद्मन्यप्सरसेना नाम

---

कंचन शरीरधर्माणं न न स्पृशन्ति न नाश्लिषन्ति । 'द्वौ नञौ प्रकृतमर्थं सूचयतः' इति न्यायाद्विनकारप्रयोगः । **बलेति** । हि निश्चितम् । द्वंद्वानां सुखदुःखानां प्रवृत्तिः प्रवर्तनं बलवती बलिष्ठा । **इदमिति** । मे मम मनसि चित्त इदमपरमन्यदधिकतरं महत्कौतुकमाश्चर्यं जनितमुत्पादितमस्याः कन्यकाया बाष्पसलिलमश्रुजलं तस्य पातेन पतनेन । जितेन्द्रियग्रामाया अस्या अश्रुपतनमेव महदाश्चर्यमिति भावः । ननु स्वल्पमेव शोककारणमित्याह—**न हीति** । हीति निश्चितम् । अल्पीयसा कनीयसा शोककारणेन खेदनिमित्तेनैवंविधा अनिर्वचनीयस्वरूपा मूर्तयः शरीराणि न क्षेत्रीक्रियन्ते नाश्रयीक्रियन्ते । अत्रैव हेतुमाह—**न हीति** । क्षुद्रस्तुच्छो यो निर्घातः प्रहारस्तस्य पातः पतनं तेनाभिहता ताडिता वसुधा पृथ्वी । हीति निश्चितम् । न चलति न कम्पते । **संवर्धितमिति** । संवर्धितं वृद्धिं प्राप्तं कुतूहलं कौतुकं यस्यैवंभूतोऽहं शोकस्य खेदस्य स्मरणं स्मृतिस्तस्य हेतुतां निमित्ततामुपगतं प्राप्तमत एवापराधिनं सागसमात्मानमवगच्छन्निव जानन्निवोत्थाय प्रस्रवणान्निर्झरान्मुखप्रक्षालनाय वदनशुद्ध्यर्थमुदकं पानीयमञ्जलिना पाणिपुटेनोपनिन्य आनीतवान् । **सा त्विति** । सा कन्यका । तु पुनरर्थकः । तस्य चन्द्रापीडस्यानुरोधादाग्रहात् । **अविच्छिन्नेति** । अविच्छिन्नमत्रुटितं बाष्पजलधारासंतानमश्रुपानीयधारासमूहं यस्या एवंविधापि किंचित्कषायितं कषायगुणयुक्तमुदरं मध्यं ययोरेवंभूते लोचने नेत्रे प्रक्षाल्य धावनं कृत्वा वल्कलोपान्तेन चोचाञ्चलेन वदनं मुखमपमृज्य मार्जनं कृत्वा दीर्घमायतमुष्णं तप्तं च निःश्वस्य शनैः शनैर्मन्दं मन्दं प्रत्यवादीत्प्रत्यवोचत् ।

**राजेति** । हे राजपुत्र, अतिनिर्घृणं निर्दयं हृदयं स्वान्तं यस्या एवंविधाया मन्दभाग्यायाः क्षीणभागधेयायाः पापायाः पापिष्ठाया जन्मनः प्रभृत्युत्पत्तेरारभ्याश्रवणीयेनाकर्णनानर्हेण वैराग्यवृत्तान्तेन विरक्ततोदन्तेन किमनेन श्रुतेनाकर्णितेन । **तथापीति** । एवंसत्यपि फलाभावे विद्यमानेऽपि यदि महत्कुतूहलं महदाश्चर्यं तत्तर्हि कथयामि ब्रुवे । प्रायेण बाहुल्येन कल्याणे श्रेयस्यभिनिविशते इत्येवंशीलं नोऽस्माकं श्रुतिविषयं कर्णगोचरमापतितमागतम् । कुलपरम्परया श्रुतमित्यर्थः । एतदेव श्रूयतामाकर्ण्यताम् । **यथेति** । विबुधसद्मनि किंनरगृहेऽप्सरसेनाः । नामेति कोमलामन्त्रणे । कन्यकाः पुत्र्यः सन्ति । तासां

---

**टिप्प०**—1 प्रलाप एवायम् । संवर्धितकौतूहलः स इत्यर्थः । 2 अश्रुवर्षणात् किञ्चित् रक्तम् आविलं वा मध्यं ययोस्ते इत्यर्थ उचितः । 3 हा हन्त ईदृशोपि टीकाधार्ष्ट्यमाचरति !—कल्याणे अभिनिवेशः (आग्रहो) यस्य, ईदृशस्य भवतः श्रुतिविषयं कर्णगोचरमागतमेव यद् विबुधसद्मनि स्वर्गे 'अप्सरसो' नाम कन्यकाः (अविवाहितत्वात्) सन्तीति । टीकाकारस्य पाठो व्याख्यानं च प्रलापमात्रम् ।

---

पाठा०—१ महन्मम मनसि कौतुकम्; उपजनितमतिमहन्मनसि मे कौतुकम्. २ कुतूहलश्चास्याः. ३ अवच्छिन्न. ४ शनैः. ५ निष्ठुर. ६ जन्मतः. ७ अप्सरसो.

कन्यकाः सन्तीति[1]। तासां चतुर्दश कुलानि—एकं भगवतः कमलयोनेर्मनसः समुत्पन्नम्, अन्यद्वेदेभ्यः संभूतम्, अन्यदग्नेरुद्भूतम्[2], अन्यत्पवनात्प्रसूतम्, अन्यदमृतान्मथ्यमानादुत्थितम्, अन्यज्जलाज्जातम्, अन्यदर्ककिरणेभ्यो निर्गतम्, अन्यत्सोमरश्मिभ्यो निपतितम्[3], अन्यद्भूमेरुद्भूतम्, अन्यत्सौदामिनीभ्यः प्रवृत्तम्, अन्यन्मृत्युना निर्मितम्, अपरं मकरकेतुना समुत्पादितम्, अन्यत्तु दक्षस्य प्रजापतेरतिप्रभूतानां कन्यकानां[4] मध्ये द्वे[5] सुते मुनिररिष्टा च बभूवतुस्ताभ्यां गन्धर्वैः सह कुलद्वयं जातम्, एवमेतान्येकत्र चतुर्दश कुलानि। गन्धर्वाणां तु दक्षात्मजाद्वितयसंभवं तदेव कुलद्वयं जातम्। अत्र[6] मुनेस्तनयानां सेनादीनां[7] पञ्चदशानां भ्रातॄणामधिको गुणैः षोडशश्चित्ररथो नाम समुत्पन्नः। स किल त्रिभुवनप्रख्यातपराक्रमो[8] भगवता समस्तसुरमौलिमालालालितचरणनलिनेना[9]खण्डलेन सुहृच्छब्देनोपबृंहितप्रभावः सर्वेषां गन्धर्वाणामाधिपत्यमसिलतामरीचिनिचयमेचकितेन बाहुना समुपार्जितं शैशव एवाप्तवान्। इतश्च नातिदूरे तस्यास्माद्भारतवर्षादुत्तरेणानन्तरे किंपुरुष-

---

कन्यकानां चतुर्दश कुलानि। तत्रैकं कमलयोनेर्भगवतो विधातुर्ब्रह्मणो मनसः स्वान्तात्समुत्पन्नं संजातम्। अन्यद्द्वितीयं वेदेभ्यः श्रुतिभ्यः संभूतमुत्पन्नम्। अन्यत्तृतीयमग्नेर्विभावसोरुद्भूतं प्रकटितम्। अन्यच्चतुर्थं पवनाद्वायोः प्रसूतं जनितम्। अन्यत्पञ्चममममृताज्जलान्मथ्यमानाद्विलोड्यमानादुत्थितं प्रादुर्भूतम्[1]। अन्यत्षष्ठं जलाज्जातम्। अन्यत्सप्तमं कुलमर्ककिरणेभ्यः सूर्यदीधितिभ्यो निर्गतं बहिरागतम्। अन्यदष्टमं सोमः कुमुदबान्धवस्तस्य रश्मिभ्यः किरणेभ्यो निपतितं च्युतम्। अन्यन्नवमं कुलं पृथिव्या वसुंधराया उद्भूतं प्रकटितम्। अन्यद्दशमं सौदामिनीभ्यो ह्लादिनीभ्यः प्रवृत्तं प्रवर्तितम्। अन्यदेकादशं कुलं मृत्युना यमेन निर्मितं रचितम्। अपरमन्यद्द्वादशं मकरकेतुना मनोभवेन समुत्पादितम्। **अन्यत्त्विति**। दक्षस्य प्रजापतेरतिप्रभूतानामतिवह्वीनां कन्यकानामात्मजानां मध्ये द्वे सुते द्वे कन्यके मुनिररिष्टा च बभूवतुर्जज्ञाते। ताभ्यां कन्यकाभ्यां गन्धर्वैर्देवगायनैः सह कुलद्वयं जातम्। एवमिति पूर्वोक्तप्रकारेण। **एकत्रेति**। एकस्मिन्प्रदेश एतानि चतुर्दश कुलानि। गन्धर्वाणां तु दक्षात्मजाद्वितयसंभवं तदेव पूर्वोक्तमेव कुलद्वयम्। नाधिकमित्यर्थः। **अत्रेति**। अस्मिन्नेव प्रदेशे मुनेर्दक्षजात्मजायाः सेनादीनां[2] पञ्चदशानां भ्रातॄणां मध्ये गुणैः शौर्यादिभिरधिकः षोडशश्चित्ररथो नाम तनयः समुत्पन्नः। **स इति**। किलेति सत्ये। स चित्ररथस्त्रिभुवने त्रिविष्टपे प्रख्यातः प्रसिद्धः पराक्रमः शौर्यवृत्तिर्यस्य सः। **भगवतेति**। भगवता माहात्म्यवता। **समस्तेति**। समस्ताः समग्रा ये सुरा देवास्तेषां मौलिमालाः किरीटपङ्क्तयस्ताभिर्लालितं[3] पालितं चरणनलिनं पादपद्मं यस्य स तेन एवंविधेनाखण्डलेनेन्द्रेण सुहृच्छब्देन मित्रशब्देनोपबृंहितः श्लाघाविषयीकृतः प्रभावः कोशदण्डजं तेजो यस्य स तथा। **सर्वेषामिति**। सर्वेषां समग्राणां गन्धर्वाणां देहगायनानां शैशवे बाल्य एवाधिपत्यं प्रभुत्वमाप्तवान्प्राप्तवान्। कीदृशमाधिपत्यम्। समुपार्जितमर्जितम्। केन। बाहुना भुजेन। अथ बाहुं विशेषयन्नाह—**असीति**। असिलता खड्गलता तस्या मरीचिनिचयः कान्तिसमूहस्तेन मेचकितेन श्यामलितेन। **इतश्चेति**। अर्थान्तरे। अस्मात्स्थानान्नातिदूरे नातिदविष्ठे तस्य राज्ञोऽस्माद्भारतवर्षाद्भरतक्षेत्रादुत्तरेणानन्तरेऽत्यासन्ने किंपुरुषनाम्नि किंपु-

---

**टिप्प०—**1 मथ्यमानावस्थायाममृताज्जातमित्यर्थः। जलादित्युक्तेः पौनरुक्त्यम्। 2 चित्रसेनादीनामित्येव पाठः। टीकाकारस्य तु यद् यद् गर्हितं तत्तत्सर्वमनुकूलमित्याभाति। 3 सादरं परामृष्टमित्यर्थः।

---

**पाठा०—**१ सन्ति. २ वह्नेः. ३ निष्पतितम्. ४ सुतानाम्. ५ द्वौ सुतौ. ६ तत्र. ७ चित्रसेनादीनाम्. ८ सकलत्रिभुवन. ९ अरविन्दजेन.

नाम्नि वर्षे वर्षपर्वतो हेमकूटो नाम निवासः । तत्र च तद्भुजयुगपरिपालितान्यनेकानि गन्धर्वशतसहस्राणि प्रतिवसन्ति । तेनैव चेदं चैत्ररथं नामातिमनोहरं काननं निर्मितम्, इदं चाच्छोदाभिधानमतिमहत्सरः खानितम्, अयं च भवानीपतिरुपरचितो भगवान् । अरिष्टायास्तु पुत्रस्तस्मिन्द्वितीये गन्धर्वकुले गन्धर्वराजेन चित्ररथेनैवाभिषिक्तो बाल एव राज्यपदमासादितवान् । अपरिमितगन्धर्वबलपरिवारस्य तस्यापि स एव गिरिरधिवासः । यत्तु तत्सोमपीयूषसंभूतानामप्सरसां कुलम्, तस्मात्किरणजलानुसारगलितेन सकलेनेव रजनिकरकलाकलापलावण्येन निर्मिता त्रिभुवननयनाभिरामा भगवती द्वितीयेव गौरी गौरीति नाम्ना हिमकिरणकिरणावदातवर्णा कन्यका प्रसूता । तां च द्वितीयकुलाधिपतिर्हंसो मन्दाकिनीमिव क्षीरसागरः प्रणयिनीमकरोत् । सा तु भगवता मकरकेतनेनेव रतिः, शरत्समयेनेव कमलिनी, हंसेन संयोजिता सदृशसमागमोपजनितामतिमहतीं मुदमुपगतवती

---

रुषाभिधाने वर्षे क्षेत्रे वर्षपर्वतः क्षेत्रसीमाकृन्नगो हेमकूटो नाम हेमकूटाभिधानो निवासो वसतिस्थलं वर्तते । **तत्र चेति** । तस्मिन्पर्वते । **तदिति** । तस्य चित्ररथस्य भुजयुगं बाहुयुगं तेन परिपालितानि रक्षितान्यनेकानि गन्धर्वशतसहस्राण्यनेकलक्षाणि प्रतिवसन्ति । तस्योत्कर्षमाह—**तेनैवेति** । तेनैव राज्ञा चित्ररथेनेदं चैत्ररथं नामातिमनोहरमतिरमणीयं काननं वनं निर्मितं निष्पादितम् । इदमच्छोदाभिधानमतिमहत्सरः खानितं निर्मापितम् । स्थावराभिप्रायेणाह—**अयं चेति** । अयं प्रत्यक्षो भगवान्भवानीपतिरीश्वर उपरचितो निर्मितः । अथ चारिष्टायाः पुत्रः सुतः । तु पुनरर्थकः । तस्मिन्द्वितीये गन्धर्वकुले गन्धर्वराजेनैव चित्ररथेनैवाभिषिक्तो राज्याभिषेकविषयीकृतः । अत एव बाल एव शिशुरेव राज्यपदमाधिपत्यस्थलमासादितवान्प्राप्तवान् । **अपेति** । अपरिमितमसंख्यं यद्गन्धर्वकुलं तदेव परिवारः परिच्छदो यस्य स तथा तस्यापि स एव हेमकूटाभिधानो गिरिः पर्वतोऽधिवासो निवासस्थलम् । **यत्त्विति** । तस्मिन्पर्वते सोमपीयूषसंभूतानामप्सरसां कुलं तस्मात्कुलात् । **किरणेति** । किरणजलममृतं तस्यानुसारोऽनुसरणं तेन गलितेन विलीनेन सकलेन समग्रेण । **रजनीति** । रजनिकरस्य चन्द्रस्य कलाकलापस्तस्य लावण्येनेवान्तर्गतसारेणेव निर्मिता रचिता । **त्रिभुवनेति** । त्रिभुवनस्य त्रिविष्टपस्य नयनानि लोचनानि तेषामभिरामा मनोहरा भगवती माहात्म्यवती द्वितीयेव गौरी गौरीति नाम्ना । **हिमेति** । हिमकिरणस्य किरणा रश्मयस्तद्वदवदातो निर्मलो वर्णो देहच्छविर्यस्याः सैवंविधा कन्यका प्रसूता जनिता । **तां चेति** । तां गौरीं द्वितीयकुलाधिपतिर्हंसो मन्दाकिनीं स्वर्धुनीं क्षीरसागर इव प्रणयिनीं वल्लभामकरोत् । **सा त्विति** । सा गौरी भगवता मकरकेतनेन कंदर्पेण रतिरिव । शरत्समयेन घनात्ययकालेन कमलिनीव । एवं हंसेन गन्धर्वाधिपतिना संयोजिता संबन्धं प्रापिता । **सदृशेति** । सदृश उचितो यः समागमः संबन्ध उपजनितां

---

**टिप्प०**—1 टीकाकारेण अत्रापि खण्डवाक्यं विलोप्य ग्रन्थो दुरूहो विरूपश्च कृतः । अत एव 'अरिष्टायास्तु पुत्रस्तुम्बुरुप्रभृतीनां सोदर्याणा'मित्यादिपाठं नीचैर्धृतं संयोज्य ग्रन्थः पूरणीयः पाठकैः । 2 सोममयूख(किरण)संभूतानामित्येव पाठः । 3 'किरणजालस्य (समूहस्य) अनुसारेण' इत्येव पाठः । 4 निर्झरितेन (निष्पतितेन) । 5 'हिमकरकिरणावदातवर्णा' इत्येव ग्रन्थोचितान्यक्षराणि । 6 अत्र वाक्यभेदोपि टीकाकारस्य जाड्यम् । हंसेन सह संयोजिता (विधात्रा) सती सदृशसमागमोपजनितां मुदमुपगतवतीत्यादिः एको वाक्यार्थः । प्रमाणं चात्र सहृदयहृदयम् । 7 तेन उपजनिताम् ।

---

**पाठा०**—१ युगल. २ इदम्. ३ निखानितम्. ४ पुत्रस्तुम्बुरुप्रभृतीनां सोदर्याणां षण्णां ज्येष्ठो (श्रेष्ठो; श्रेष्ठो; हंसोनाम जगद्विदितो गन्धर्वस्तस्मिन्). ५ कुले द्वितीयेऽस्मिन्. ६ परिचारकस्यास्यापि. ७ सोममयूखसंभवमप्सरसाम्. ८ जाल. ९ अनुकरण. १० गौरीपति. ११ हिमकर; रजनिकर. १२ द्वितीयगन्धर्व. १३ केतुनेव.

निखिलान्तःपुरस्वामिनी च तस्याभवत् । तयोश्च तादृशयोर्महात्मनोरहमीदृशी विगतलक्षणा शोकाय केवलमनेकदुःखसहस्रभाजनमेकैवात्मजा समुत्पन्ना । तातस्त्वनपत्यतया सुतजन्मातिरिक्तेन महोत्सवेन मम जन्माभिनन्दितवान् । अवाप्ते च दशमेऽहनि कृतयथोचितसमाचारो महाश्वेतेति यथार्थमेव नाम कृतवान् । साहं पितृभवने बालतया कलमधुरप्रलापिनी वीणेव गन्धर्वाणामङ्कादङ्कं संचरन्त्यविदितस्नेहशोकायासं शैशवमतिनीतवती । क्रमेण च कृतं मे वपुषि वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकर इव मदेन नवयौवनेन पदम् ।

अथ विजृम्भमाणनवनलिनवनेषु, अकठोरचूतकलिकाकलापकृतकामुकोत्कलिकेषु, कोमलमलयमारुतावतारतरङ्गितानङ्गध्वजांशुकेषु, मदकलितकामिनीगण्डूषसीधुसेकपुलकितबकु-

---

विहितामतिमहतीं गरीयसीं मुदं हर्षमुपगतवती प्राप्तवती तस्य राज्ञो निखिलं समग्रं यदन्तःपुरमवरोधस्तत्र स्वामिनी मुख्या चाभवत् । **तयोश्चेति** । तयोर्हंसगौर्योर्महात्मनोरहमीदृश्येकात्मजैका पुत्री केवलं शोकाय समुत्पन्ना । कीदृशी । विगतानि दूरीभूतानि लक्षणानि श्रेयोजनकानि मषीतिलकादीनि यस्याः सा तथा । पुनस्तामेव विशेषयन्नाह—**अनेकेति** । अनेकानि विविधानि यानि दुःखानि कष्टानि तेषां सहस्राणि तेषां भाजनं पात्रम् । आविष्टलिङ्गत्वात् 'वेदाः प्रमाणम्' इतिवन्नपुंसकत्वम् । **तातस्त्विति** । तातः पितानपत्यतयाऽसंतानत्वेन सुतजन्मातिरिक्तेन पुत्रजन्माधिकेन महोत्सवेन महामहेन मम जन्म मजन्माभिनन्दितवानतिस्तुतवान् । **अवाप्तेति** । अवाप्ते प्राप्ते दशमेऽहनि दिने । **कृत इति** । कृतो विहितो यथोचितो यथायोग्यः समाचारो वेदोक्तक्रियाकलापो येन सः । महाश्वेतवर्णत्वान्महाश्वेतेति यथार्थमेव नाम कृतवान् । **सेति** । साहं पितृभवने जनकसद्मनि बालतया शिशुत्वेन कलमधुरप्रलापिनी कलं मनोज्ञं मधुरं मिष्टं प्रलपतीत्येवंशीला सा तथा केवलं वीणेव वल्लकीव गन्धर्वाणां देवगायनानामङ्कादङ्कं क्रोडात्क्रोडं संचरन्ती गच्छन्ती । **अवीति** । अविदितोऽज्ञातः स्नेहः प्रीतिः, शोकः शुक्, तयोरायासः प्रयासो येनैवंविधं शैशवं बाल्यमतिनीतवत्यतिक्रान्तवती । तदनन्तरं मे मम वपुषि शरीरे नवयौवनेन प्रत्यग्रतारुण्येन पदं स्थानं कृतं विहितम् । कस्मिन्क इव । वसन्ते पुष्पकाले मधुमासेनेव चैत्रेणेव । तथा मधुमासे नवपल्लवेनेव प्रत्यग्रकिसलयेनेव । तथा नवपल्लवे कुसुमेनेव प्रसूनेनेव । तथा कुसुमे मधुकरेणेव भ्रमरेणेव । तथा मधुकरे मदेनेव ।

अथेत्यानन्तर्ये । **एकदेति** । एकस्मिन्समयेऽहं मधुमासदिवसेषु वसन्तवासरेष्वम्बया मात्रा सहेदमच्छोदं सरः स्नातुमभ्यपतमगच्छमिति दूरेणान्वयः । अथ मधुमासदिवसान्विशेषयन्नाह—**विजृम्भेति** । विजृम्भमाणानि विकासमानानि नवनलिनवनानि प्रत्यग्रपद्मखण्डानि येषु । **अकठोरेति** । अकठोरा सुकुमारा याश्चूतकलिका आम्रकोरकास्तासां कलापः समूहस्तेन कृता विहिता कामुकानां कामिजनानामुत्कलिकोत्कण्ठा येषु । उद्दीपकत्वादिति भावः । **कोमलेति** । कोमलो मृदुर्यो मलयमारुतो मलयानिलस्तस्यावतार इतस्ततः प्रसरणं तेन तरङ्गितानि भङ्गितान्यनङ्गध्वजांशुकानि मदनवैजयन्तीवसनानि येषु । मलयमारुतस्योद्दीपकत्वात् अनङ्गध्वजकम्पनेनानङ्गस्य प्रोत्साहनं सूचितम् । **मदेति** । मदेनाहंकारेण

---

**टिप्प०**—1 'वीणेव कलमधुरप्रलापिनी अङ्कादङ्कं संचरन्ती' इति उभयत्र युज्यते । कलमस्फुटं मधुरं च आलपति वीणेति वीणापक्षे । 2 'अविदितस्नेहशोकायासमनोहरम्' इत्येव पाठः । अविदितैः स्नेहशोकायासैः मनोहरमिति तदर्थः । एतज्जनितव्याकुलताभावात्सुन्दरमित्याशयः । 3 मालोपमैकावल्योः संयोगेन नवीन इवालंकारः । सरस्वतीकण्ठाभरणमते तु रशनोपमा । 4 तरङ्गवत्प्रस्फुरितानि 'फहराना' ।

---

**पाठा०**—१ महात्मनोर्महता क्लेशेनाभिलाषेण कालेन च केवलम्. २ विगलल्लक्ष. ३ एकैव; अहमेकैव. ४ मजन्म. ५ शोकायासमनोहरम्. ६ अतीतवती. ७ जृम्भमाण ८ अनेकचूत. ९ काम्युत्कलिकेषु.

लेषु, मधुकरकुलकलङ्ककालीकृतकालेयककुसुमकुड्मलेषु, अशोकतरुताडनरणितरमणीयमणिनूपुरझंकारसहस्रमुखरेषु, विकसन्मुकुलपरिमलपुञ्जितालिजालमञ्जुसिञ्जितसुभगसहकारेषु, अविरलकुसुमधूलिवालुकापुलिनधवलितधरातलेषु, मधुमदविडम्बितमधुकरकदम्बकसंवाह्यमानलतादोलेषु, उत्फुल्लपल्लववल्लीलीयमानमत्तकोकिलोल्लासितमधुशीकरोद्दामदुर्दिनेषु, प्रोषितजनजायाजीवोपहारहृष्टमन्मथास्फालितचापरवभयस्फुटितपथिकहृदयरुधिरार्द्रीकृतमार्गेषु, अविरतपतत्कुसुमशरपतत्रिपत्रसूत्कारबधिरीकृतदिङ्मुखेषु, दिवापि प्रवृत्तमदनरागान्धाभिसारिकासार्थसंकुलेषु, उद्वेलरतिरससागरपूरप्लावितेषु, सकलजीवलोकहृदयानन्ददायकेषु मधु-

---

कलिता व्याप्ता याः कामिन्यः स्त्रियस्तासां गण्डूषसीधुश्चुलुकमद्यं तेन सेकः सिञ्चनं तेन पुलकिता रोमाञ्चिता वकुलाः केसरा येषु । इदं च बकुलतरुच्छायायां कामिनीनां मधुपानवर्णनम्[1] । **मधुकरेति** । मधुकरस्य भ्रमरस्य कुलानि सजातीयवृन्दानि तान्येव कलङ्कोऽभिज्ञानं तेन कालीकृतानि श्यामीकृतानि कालेयकानां[2] जापकानां कुसुमानि पुष्पाणि कुड्मलानि मुकुलानि च येषु । **अशोकेति** । अशोकः कङ्केलिर्यस्तरुर्वृक्षस्तस्य ताडनेनाघातेन रणितानि शब्दितानि रमणीनां कामिनीनां मणिनूपुराणि रत्नपादकटकानि तेषां झङ्कारा अव्यक्तशब्दास्तेषां सहस्रेण मुखरा[3] वाचाला येषु । **विकसदिति** । विकसन्ति स्मेरतां प्राप्नुवन्ति यानि मुकुलानि गुच्छाः । पुष्पाणामिति शेषः । तेषां यः परिमल आमोदस्तेन पुञ्जिताः समूहिता येऽलयो भ्रमरास्तेषां जालं समूहस्तस्य मञ्जु मनोहरं यत्सिञ्जितं शब्दितं तेन सुभगाः सुन्दरा एतादृशाः सहकारा आम्रा येषु । **अविरलेति** । अविरलानि निबिडानि यानि कुसुमानि प्रसूनानि तेषां धूलिः परागः । श्वेतत्वसाम्यात् । सैव वालुकापुलिनं सिकतातटं तेन धवलितं श्वेतीकृतं धरातलं पृथ्वीतलं येषु । **मध्विति** । मधु रसस्तस्य[4] मदेन विडम्बिता विह्वलीकृता ये मधुकरा भ्रमरास्तेषां कदम्बकं समूहस्तेन संवाह्यमाना इतस्ततो विक्षिप्यमाणा या लता वल्लयस्ता एव दोलाः प्रेङ्खा येषु । **उत्फुल्लेति** । उत्फुल्ला विजृम्भिताः पल्लवाः किसलयानि यासामेवंविधा लवल्यो लताविशेषास्तासु लीयमाना अन्तर्धानतां प्राप्यमाणा या मत्तकोकिलाः पिकस्त्रियस्ताभिरुल्लासितं बहिरानीतं यन्मधु रसस्तस्य शीकराः कणास्तैरुद्दामदुर्दिनमत्युग्रवार्दलं येषु । **प्रोषितेति** । प्रोषिता अन्यदेशे गता ये जना लोकास्तेषां जायाः स्त्रियस्तासां जीवा[5] असुमन्तस्तेषामुपहार उपहरणं तेन हृष्टः प्रमुदितो यो मन्मथः कंदर्पस्तेनास्फालितमास्फोटितं यच्चापं धनुस्तस्य यो रवः शब्दस्तस्माद्भयं भीतिस्तेन स्फुटितानि विभिन्नानि यानि पथिकहृदयानि पान्थजनचित्तानि तेषां रुधिरेण रक्तेनार्द्रीकृतो मार्गः पन्था येषु । **अविरतेति** । अविरतं निरन्तरं पतन्त उपविशन्तः कुसुमशरेषु[6] पुष्पकाण्डेषु । 'शरः काण्डतेजनयो;' इत्यनेकार्थः । एतादृशा ये पतत्रयः पक्षिणस्तेषां पत्रसूत्कारेण पक्षाव्यक्तशब्देन बधिरीकृतमेडीकृतं दिङ्मुखं येषु । **दिवापीति** । दिवसेऽपि प्रवृत्तः प्रसृतो यो मदनः[7] कंदर्पस्तस्य रागेण तदासक्त्यान्धा उत्पश्या या अभिसारिका नायिकाविशेषास्तासां सार्थः समूहस्तेन संकुलेष्वाकीर्णेषु । **उद्वेलेति** । उद्वेलः[8] प्रवर्धितजलो यो रतिरसः शृङ्गारोऽगाधत्वसाम्यात्स एव सागरः समुद्रस्तस्य पूरः प्लवस्तेन प्लावितेष्वाच्छादितेषु । **सकलेति** । सकलानां समग्राणां जीवलोकानां हृदयानि चित्तानि तेषामानन्ददा-

---

**टिप्प०—1 इदमज्ञानम् । 'पादाघातादशोको विलसति०' इत्यादिः कविसमयः । 2 दारुहरिद्रावृक्षाणामित्यर्थः । 3 झंकारसहस्रेण मुखरेषु शब्दायमानेष्वित्यर्थः कर्तव्यः । 4 पुष्परसः । 5 जीवितानि । 6 अविरतं ( कामिलक्ष्येषु ) पततां कुसुमशरपत्रिणां कामदेवबाणानां यानि पत्राणि पक्षाः (पुंखाः) तेषां सूत्कारेण इत्यर्थो बोध्यः । टीकाकारस्य तु शुद्धः प्रलापः । 7 दिवसेपि प्रवृत्तो यो मदनराग इत्युचितम् । 8 वेलामुल्लङ्घ्य गच्छन् ( उन्मर्यादः ) ।**

---

**पाठा०—१** कालेयककुड्मलेषु. २ ताडनारणित. ३ रमणीमणि. ४ असकृन्मधु. ५ मधुकरी. ६ वल्ली. ७ उद्गम. ८ हृष्टमन्मथेषु मन्मथा. ९ रुधिरार्द्रमार्गेषु किंशुकसमाकीर्णेषु; रुधिरार्द्रमार्गेष्विव किंशुकसमाकीर्णमार्गेषु. १० पत्रबधिरी; पत्रफूत्कारबधिरी. ११ प्रवृत्तान्तः. १२ आनन्दकेषु.

मासदिवसेष्वेकदाहमम्बया सह मधुमासविस्तारितशोभं प्रोत्फुल्लनवनलिनकुमुदकुवलयकह्लारमिदमच्छोदं सरः स्नातुमभ्यपतम्[1]। अत्र च स्नानार्थमागतया भगवत्या पार्वत्या तटशिलातलेषु विलिखितानि सभृङ्गिरिटीनि पांसुनिमग्नकृशपदमण्डलानुमितमुनिजनप्रणामप्रदक्षिणानि त्र्यम्बकप्रतिबिम्बकानि वन्दमाना, भ्रमरभरभुग्न[2]गर्भकेसरजर्जरकुसुमोपहाररम्योऽयं लतामण्डपः, परभृतनखकोटिपाटितकुड्मलनालविवरविगलितमधुनिकरधारः सुपुष्पितोऽयं सहकारतरुः, उन्मदमयूरकुलकलकलभीतभुजङ्गमुक्ततला शिशिरेयं चन्दनवीथिका, विकचकुसुमपुञ्जपातसूचितवनदेवताप्रेङ्खोलनशोभनेयं लतादोला, बहलकुसुमरजःपटलमग्नकलहंसपदलेखमतिरमणीयमिदं तीरतरुतलमिति स्निग्धमनोहरतरोद्देशदर्शनलोभाक्षिप्तहृदया सह सखीजनेन व्यचरम् ।

---

यकेषु प्रमोदजनकेषु । अन्वयस्तु प्रागेवोक्तः । अथाच्छोदं सरो विशेषयन्नाह—**मध्विति** । मधुमासेन विस्तारिता विस्तारतां नीता शोभा कान्तिर्यस्मिंस्तत् । **प्रोत्फुल्लेति** । प्रोत्फुल्लानि विकसितानि नवानि प्रत्यग्राणि यानि नलिनानि कमलानि, कुमुदानि कैरवाणि, कुवलयान्युत्पलानि, कह्लारं सौगन्धिकम्, एतानि विद्यन्ते यस्मिंस्तत् । **अत्रेति** । अस्मिन्स्थले स्नानार्थमाप्लवार्थमागतया प्राप्तया भगवत्या माहात्म्यवत्या पार्वत्या गौर्या । **तटेति** । तटं तीरं तस्मिन् यानि शिलातलानि तेषु विलिखितान्यालेखितानि यानि त्र्यम्बकस्य महादेवस्य प्रतिबिम्बकानि प्रतिच्छायानि[1] तानि वन्दमाना नमस्कुर्वाणा । कीदृशानि । भृङ्गिरिटिर्गणविशेषस्तेन सहितानि तत्सहवर्तमानानि । **पांस्विति** । पांसौ सिकतासमूहे निमग्नानि त्रुडितानि कृशपदमण्डलान्यस्थूलचरणप्रतिबिम्बानि तैरनुमितेऽनुमानविषयीकृते मुनिजनानामृषिवर्गाणां प्रणामप्रदक्षिणे नमस्कृतिपरिभ्रमणक्रिये येषु तानि । **इतीति** । स्निग्धः सघनोऽतएव सच्छायो मनोहरतरोऽतिशयेन चित्तहारी य उद्देशो वनैकप्रदेशस्तस्य दर्शनमवलोकनं तस्य लोभस्तृष्णा तेनाक्षिप्तं हृदयं स्वान्तं यस्याः सैवंविधाहं सह सखीजनेन वयस्याभिः समं व्यचरमभ्रमम् । इतिशब्दार्थं व्याख्यानयन्नाह—**भ्रमरेति** । भ्रमरभरेण मधुकरसमुदायेन भुग्नो भङ्गुरो गर्भो मध्यभागो यस्यैवंभूतः । तथा केसरैः किञ्जल्कैर्जर्जरः कुसुमानां पुष्पाणामुपहारः समूहस्तेन रम्यो मनोहरः । अयमित्यस्य प्रत्येकमभिसंबन्धः **लतेति** । लता व्रततिस्तस्या मण्डपो जनाश्रयः । **परेति** । परभृताः कोकिलास्तेषां नखकोट्या नखराग्रेण पाटितानि विदारितानि कुड्मलानां मुकुलानां नालानि काण्डास्तेषां विवराणि छिद्राणि तेभ्यो विगलिता विद्रुता मधुनिकरधारा रससमूहलेखा यस्मिन्नेवंभूतः सुपुष्पितोऽयं सहकारतरुराम्रवृक्षः । **उन्मदेति** । उन्मदा मदोन्मत्ता ये मयूराः केकिनस्तेषां कुलानि सजातीयसमूहास्तेषां कलकलः कोलाहलस्तेन भीतास्त्रस्ता ये भुजङ्गा भोगिनस्तैर्मुक्तं त्यक्तं तलं यस्या एतादृशी शिशिरा शीतलेयं चन्दनवीथिका मलयजखण्डश्रेणी । **विकचेति** । विकचो विकस्वरो यः कुसुमानां पुष्पाणां पुञ्जः[2] समूहस्तेन सूचितं ज्ञापितं यद्वनदेवतारण्याधिष्ठात्री देवी तस्याः प्रेङ्खोलनमान्दोलनं तेन शोभना मनोज्ञा इयं लतादोला वल्लीप्रेङ्खा । **बहलेति** । बहलानि बहूनि यानि कुसुमरजांसि तेषां पटलं वृन्दं तस्मिन्मग्नानि यानि कलहंसपदानि कादम्बचरणानि तेषां लेखा वीथी यस्मिन्नेवंभूतमतिरमणीयमतिमनोहरमिदं तीरतरुतलं तटवृक्षाधोभागः ।

---

**टिप्प०**—1 प्रतिमूर्तीः इत्युचितम् । 2 कुसुमपुञ्जस्य यः पातस्तेन सूचितं यत् वनदेवतानां प्रेङ्खोलनम्, इत्यन्वयो योग्यः ।

---

पाठा०—१ अभ्युपगमम्; अभ्यागमम्. २ पात्रमय. ३ भग्न. ४ जर्जरकुसुमोपहार; शाखान्तरनर्तकजर्जरकुसुमोपहार. ५ कुड्मलविवर. ६ मधुधारः. ७ मयूरकलकल; सकलमयूरकलकलः. ८ चन्दनवनवीथिका.

एकस्मिंश्च प्रदेशे झटिति वनानिलेनोपनीतम् निर्भरविकसितेऽपि काननेऽभिभूतान्यकुसुमपरिमलं विसर्पन्तम्, अतिसुरभितयानुलिम्पन्तमिव तर्पयन्तमिव पूरयन्तमिव घ्राणेन्द्रियम्, अहमहमिकया मधुकरकुलैरनुबध्यमानम्, अनाघ्रातपूर्वम्, अमानुषलोकोचितं कुसुमगन्धमभ्यजिघ्रम् । कुतोऽयमित्युपारूढकुतूहला चाहं मुकुलितलोचना तेन कुसुमगन्धेन मधुकरीवावकृष्यमाणा कौतुकतरलाभ्यधिकतरोपजातमणिनूपुरझङ्काराकृष्टसरःकलहंसानि कतिचित्पदानि गत्वा हरहुताशनेन्धनीकृतमदनशोकविधुरं वसन्तमिव तपस्यन्तम्, अखिलमण्डलप्राप्त्यर्थमीशानशिरःशशाङ्कमिव धृतव्रतम्, अयुग्मलोचनं वशीकर्तुकामं काममिव सनियमम्, अतितेजस्वितया प्रचलतडिल्लतापञ्जरमध्यगतमिव ग्रीष्मदिवसदिवसकरमण्ड-

---

एकस्मिंश्चेति । एकस्मिन्प्रदेशे कुसुमगन्धं पुष्पजनमनोहारिणमभ्यजिघ्रं घ्राणविषयतामनयम् । अथ च गन्धं विशेषयन्नाह—झटिति शीघ्रं वनानिलेनारण्यपवनेनोपनीतमानीतम्, निर्भरं नितान्तं विकसिते विकस्वरे कानने वनेऽपि सति । अभीति । अभिभूतं आत्तगन्धोऽन्यकुसुमानां विजातीयसजातीयप्रसूनानां परिमलो येन स तम् । अस्मिन्नर्थे हेतुं प्रदर्शयन्नाह—अतीति । अतिसुरभेर्भावस्तत्ता तया । एतस्मादुत्कृष्टः कोऽपि परिमलो नास्तीति भावः । पुनः किं कुर्वन्तम् । विसर्पन्तम् प्रसरन्तम् । अथ गन्धाधिक्यं प्रदर्शयन्नाह—घ्राणेति । घ्राणेन्द्रियं विकूणिकाकरणमनुलिम्पन्तमिव दृढसंबन्धं कुर्वन्तमिव । तर्पयन्तमिव तृप्तिं जनयन्तमिव । पूरयन्तमिव परिपूर्णाकुर्वन्तमिव । अहमिति । मिथो यो गर्वः साहमहमिका तया मधुकरकुलैर्भ्रमरसमूहैरनुबध्यमानमनुरुध्यमानम् । अनाघ्रातपूर्वमनाजिघ्रितपूर्वम् । अमानुष इति । अमानुषलोको देवलोकस्तस्योचितं योग्यम् । अन्वयस्तु प्रागेवोक्तः । कुत इति । कस्मात्प्रदेशादयं गन्ध इत्युपारूढं प्रादुर्भूतं कुतूहलं कौतुकं यस्याः सैवंविधाहं स्नानार्थमागतं मुनिकुमारकं तापसपुत्रमपश्यमद्राक्षमित्यन्वयः । अथैतस्या विशेषणानि—मुकुलितेति । मुकुलिते कुड्मलिते लोचने नेत्रे यस्याः सा । तेनेति । तेन पूर्वोक्तेन कुसुमगन्धेन पुष्पामोदेन मधुकरीवदवकृष्यमाणा बलात्कारेण नीयमाना । कौतुकेति । कौतुकेन कुतूहलेन तरला कम्प्रा । किं कृत्वा । कतिचित्कियन्ति पदानि गत्वा । अथ पदानि विशेषयन्नाह—अभ्यधिकेति । त्वरितगमनादभ्यधिकतरः पूर्वस्मादतिशायी य उपजात उत्पन्नो मणिनूपुराणां रत्नखचिततुलाकोटीनां झङ्कारः शब्दविशेषस्तेनाकृष्टा आकर्षिताः सरःकलहंसाः कासारकादम्बा यैस्तानि । इतो मुनिकुमारं विशेषयन्नाह—हरेति । हरेणेश्वरेण हुताशने नेत्रसमुत्थिते वह्नाविन्धनीकृतो यो मदनः कामस्तस्य शोकः खेदस्तेन विधुरं व्याकुलमतएव तपस्यन्तं तपस्यां कुर्वन्तं वसन्तमिव सुरभिमासमिव । इयं च सुरभिगन्धसाम्यादुत्प्रेक्षा । अखिलमिति । अखिलं समग्रं यन्मण्डलं भूमण्डलं षोडशकलात्मकं च तस्य प्राप्तिरुपलब्धिस्तदर्थं धृतं व्रतं नियमो येनैवंभूतमीशानशिरःशशाङ्कमिवेश्वरोत्तमाङ्गचन्द्रमिव । रूपातिशयसाम्येनाह—अयुग्मलोचनमीश्वरं वशीकर्तुकामं सनियमं काममिव । अतीति । अतितेजो विद्यते यस्यासावतितेजस्वी तस्य भावस्तत्ता तया प्रचला चञ्चला तडिल्लता विद्युल्लता तस्याः पञ्जरं पक्षिरक्षणस्थलं तस्य मध्यगतमिव । ग्रीष्मेति । ग्रीष्म-

---

टिप्प०—1 पुष्पगन्धं जनमनोहारिणमित्यर्थः । 2 अभिभूताः अन्येषां कुसुमानां परिमलाः ( अतिशोभना गन्धाः ) येन तमित्यर्थः । 3 द्रवपदार्थवत् सर्वावयवेषु व्याप्नुवन्तमिवेत्याशयः । 4 अनुगम्यमानमित्यर्थः । 5 इयमुक्तिरज्ञानमूलिका । न ह्यत्र श्लेषो येनार्थद्वयम् । शिरःशशाङ्कः कलामात्रः, अत एव स पूर्णमण्डलप्राप्त्यर्थं तपस्यतीवेत्युत्प्रेक्षा । अत्र मण्डलस्य एक एवार्थः प्रकृतः ।

---

पाठा०—१ अथैकस्मिन्. २ मधुकरावकृष्यमाणा; मधुकरीवाकृष्यमाणा. ३ नूपुरमणि. ४ हरनयनहुताशन. ५ विधुर. ६ प्रचलिततडिल्लतापञ्जरगतमिव. ७ दिवस. ८ दिनकर.

लोदरप्रविष्टमिव ज्वलनज्वालाकलापमध्यस्थितमिव विभाव्यमानम्, उन्मिषन्त्या बहुलबहुलया दीपिकालोकपिङ्गलया देहप्रभया कपिलीकृतकाननं कनकमयमिव तं प्रदेशं कुर्वाणम्, रोचनारसलुलितप्रतिसरसमानसुकुमारपिङ्गलजटम्, पुण्यपताकायमानया सरस्वतीसमागमोत्कण्ठाकृतचन्दनरेखयेव भस्मललाटिकया बालपुलिनरेखयेव गङ्गाप्रवाहमुद्भासमानम्, अनेकशापभृकुटिभवनतोरणेन भ्रूलताद्वयेन विराजितम्, अत्यायततया लोचनमयीं मालामिव ग्रथितामुद्वहन्तम्, सर्वहरिणैरिव दत्तलोचनशोभासंविभागम्, आयतोत्तुङ्गघ्राणवंशम्, अप्राप्तहृदयप्रवेशेन नवयौवनरागेणेव सर्वात्मना पाटलीकृताधररुचकम्, अनुद्भिन्नश्मश्रुत्वादनासादितमधुकरावलीवलयपरिक्षेपविलासमिव बालकमलमाननं दधानम्, अनङ्गका-

---

दिवसस्य निदाघवासरस्य यो दिवसकरः सूर्यस्तस्य मण्डलं बिम्बं तस्योदरं मध्यभागस्तत्र प्रविष्टमिव । **ज्वलनेति** । ज्वलनस्य वह्नेर्यो ज्वालाकलापोऽर्चिषां समूहस्तस्य मध्यस्थितमिवान्तर्गतमिव विभाव्यमानं ज्ञायमानम् । **देहेति** । देहप्रभया शरीरकान्त्या कपिलीकृतं पिङ्गलीकृतं काननं वनं येन स तम् । अथ देहप्रभां विशेषयन्नाह—**उन्मिषेति** । उन्मिषन्त्या विकसन्त्या । बहुला च बहुला च बहुलबहुला तया । **दीपिकेति** । दीपिकायाः प्रसिद्धाया य आलोकः प्रकाशस्तद्वत्पिङ्गलया पिञ्जरया । पुनर्मुनिकुमारं विशेषयन्नाह—**कनकेति** । कनकमयमिव सुवर्णमयमिव तं प्रदेशं कुर्वाणं विदधानम् । **रोचनेति** । रोचना गोरोचना तस्या रसो द्रवस्तेन लुलित[1] एकीभूतो यः प्रतिसरो हस्तसूत्रं तत्समा[2]ना सदृशी सुकुमारा सुकोमला पिङ्गला पिञ्जरा च जटा सटा यस्य स तम् । **भस्मेति** । भस्म विभूतिस्तस्य ललाटिका पुण्ड्रविशेषस्तयोद्भासमानमुत्प्राबल्येन दीप्यमानम् । अतिश्वेतत्वसाम्येनाह—**पुण्येति** । पुण्यस्य धर्मस्य पताकायमानया वैजयन्तीवदाचरमाणया । रेखामधिकृत्याह—**सरेति** । सरस्वत्या भारत्या यः समागमः संगमस्तज्जनिता या उत्कण्ठोत्कलिका तया कृता विहिता चन्दनरेखा मलयजरेखा तयेव । अन्यस्यागमने गृह[3]धवलीकरणं सरस्वत्यास्तु मुखमेव निवासो निलयोऽतस्तदुपरि चन्दनलेखाकरणमिति भावः । कयेव कमित्याकाङ्क्षायामाह—**बालेति** । बालं सूक्ष्मं यत्पुलिनं जलोज्झितं तीरं तस्य रेखा लेखा तयेवोद्भाव्यमानं ज्ञाप्यमानं गङ्गाप्रवाहमिव स्वर्धुनीवेणीमिव । **अनेकेति** । अनेकानामसंख्यानां शापभृ[4]कुटीनां यद्भवनं गृहं तस्य तोरणेन बहिर्द्वारेणैवंविधेन भ्रूलताद्वयेन विराजितं शोभितम् । एतेन सर्वेषां शापप्रदाने क्षम इति ध्वनितम् । **अतीति** । अत्यायततयातिविस्तीर्णतया लोचनमयीं नेत्रमयीं ग्रथितां गुम्फितां माला[5]मिव जपमालिकामिवोद्वहन्तम् । **सर्वेति** । सर्वहरिणैः समग्रमृगैरिव दत्तो लोचनशोभायाः संविभागो यस्मै स तम् । **आयत इति** । आयतो विस्तीर्ण उत्तुङ्ग उच्चैस्तरो घ्राणवंशो यस्य स तम् । **अप्राप्त इति** । अप्राप्तोऽनुपलब्धो हृदये चित्ते प्रवेशो येनैवंविधेन नवं प्रत्यग्रं यद्यौवनं तारुण्यं तस्य रागेणेव सर्वात्मना सर्वप्रकारेण पाटलीकृतः श्वेतरक्तीकृतोऽधर एव रुचकं बीजपूरो यस्य स तम् । 'रुचकं तु बीजपूरे निष्केऽसौवर्चलेऽपि च' इत्यनेकार्थः । यद्वा अधर एव रुचकं स्वस्तिकद्रव्यं यस्य स तम् । 'रुचकं स्वस्तिकद्रव्ये' इति विश्वः । पुनः किं कुर्वाणम् । दधानम् । किम् । आननं मुखम् । **अन्विति** । अनुद्भिन्नान्यप्रकटितानि श्मश्रूणि यस्य तस्य भावस्तत्त्वं तस्मात् । **अनासादीति** । अनासादितोऽप्राप्तो मधुकरावल्या भृङ्गपङ्क्त्या वलयाकारेण यः परिक्षेपः परिवेष्टनं तल्लक्षणो विलासो येनैवंभूतं बालकमलमिव नवीननलिनमिव । **अनङ्गेति** । अनङ्गस्य कंदर्पस्य यत्कार्मुकं

---

टिप्प०—1 रक्त इत्यर्थः । 2 जटासु बहुत्वमुचितम् । 3 बहुमानसूचनाय गृहे चतुष्क('चौक')-रङ्गवल्लीत्यादिकरणं भवतीत्यर्थो बोध्यः । 4 धिक् । अनेके ये शापाः तेषां कृते भ्रूकुटिः भ्रूसंकोच एव भवनं तस्य तोरणेन (द्वारवर्तिधनुराकारकाष्ठविशेषरूपेण) । 5 विसारित्वात् स्रजमिव । जपमालेत्युक्तिस्तु ग्राम्यतैव ।

---

पाठा०—१ ज्वलनम्; ज्वलदनल; ज्वलज्ज्वलन. २ सुकुमारजटम्. ३ उद्भाव्यमानम्. ४ अनुद्भूत. ५ श्मश्रुराजित्वात्. ६ कार्मुकगुणेन.

मुंकस्य गुणेनेव कुण्डलीकृतेन तपस्तटाककमलिनीमृणालेनेव यज्ञोपवीतेनालंकृतम्, एकेन सनालबकुलफलाकारं कमण्डलुमपरेण मकरकेतुविनाशशोकरुदिताया रतेरिव बाष्पजलविन्दुभिरारचितां [1]स्फटिकाक्षमालिकां करेण कलयन्तम्, अनेकविद्यापगासंगमावर्तनिभया नाभिमुद्रयोपशोभमानम्, अन्तर्ज्ञाननिराकृतस्य मोहान्धकारस्या[2]पयानपदवीमिवाञ्जनरजोलेखाश्यामलां रोमराजिमुदरेण [3]तनीयसीं बिभ्राणम्, आत्मतेजसा विजित्य सवितारं [4]परिगृहीतेन परिवेषमण्डलेनेव मौञ्जमेखलागुणेन परिक्षिप्तजघनभागम्, अभ्रगङ्गास्रोतोजलप्रक्षालितेन जरच्चकोरलोचनपुटपाटलकान्तिना मन्दारवल्कलेनोपपादिताम्बरप्रयोजनम्, अलंकारमिव ब्रह्मचर्यस्य, यौवनमिव धर्मस्य, विलासमिव सरस्वत्याः, स्वयंवरपतिमिव सर्वविद्यानाम्, संकेतस्थानमिव [5]सर्वश्रुतीनाम्, निदाघकालमिव साषाढम्, हिमसमयकाननमिव स्फुटितप्रियङ्गु-

---

धनुस्तस्य कुण्डलीकृतेन गुणेनेव ज्ययेव । **तप इति** । तप एव तटाकः कासारस्तस्य कमलिनी मृणालिनी तस्या मृणालेनेव बिसेनैवंभूतेन यज्ञोपवीतेन यज्ञसूत्रेणालंकृतं विभूषितम् । **एकेनेति** । एकेन करेण हस्तेन । **सनालेति** । सनालं यद्बकुलफलं केसरफलं तद्वदाकारो यस्यैवंभूतं कमण्डलुम् । अपरेण तदितरेण करेण । **मकरेति** । मकरकेतुः कंदर्पस्तस्य विनाशो नाशस्तस्माद्यः शोकस्तेन रुदितायाः कृताश्रुपाताया रतेर्मदनस्त्रियो बाष्पजलबिन्दुभिर्नेत्रवारिपृषद्भिरारचितामिव निर्मितामिव । स्फटिकाक्षमालिकां श्वेतजपमालिकां कलयन्तं दधानम् । **अनेकेति** । अनेकाश्च ता विद्याश्चानेकविद्याः । प्रसरणसाम्यात्ता एवापगा नद्यस्तासां संगमः संश्लेषस्तत्र य आवर्तः पयसां भ्रमस्तन्निभया तत्सदृशया नाभिमुद्रया तुन्दकूपिकयोपशोभमानं विराजमानम् । **अन्तरिति** । अन्तर्ज्ञानेन तत्त्वज्ञानेन निराकृतस्य दूरीकृतस्य मोहान्धकारस्याज्ञानतिमिरस्यापयानपदवीमिव निःसरणमार्गमिव । **अञ्जनमिति** । अञ्जनं कज्जलं तस्य रजः कणस्तस्य लेखा राजिस्तद्वच्छ्यामलां कृष्णामेतादृशीं तनीयसीमतितुच्छामुदरेण जठरेण रोमराजिं तनूरुहश्रेणिं बिभ्राणं दधानम् । **आत्मेति** । आत्मतेजसा स्वकीयकान्त्या सवितारं सूर्यं विजित्य पराभूय परिगृहीतेनात्तेन परिवेषमण्डलेनेव परिधिवलयेनेव । **मौञ्जेति** । मुञ्जस्तेजनस्तत्संबन्धिनी मौञ्जी या मेखला रशना तस्या गुणेन दवरकेण परिक्षिप्तो वलयितो जघनभागोऽग्रप्रदेशो यस्य स तम् । **अभ्रेति** । अभ्रगङ्गा व्योमनदी तस्याः स्रोतः प्रवाहस्तस्य जलमम्भस्तेन प्रक्षालितेन धौतेन । **जरदिति** । जरड्डायान्यश्चकोरो विषसूचकस्तस्य लोचने नेत्रे तयोः पुटं तद्वत्पाटला श्वेतरक्ता कान्तिर्द्युतिर्यस्य स तेनैवंभूतेन मन्दारवल्कलेन देवतरुवल्केनोपपादितं विहितमम्बरप्रयोजनं वस्त्रकृत्यं येन स तम् । **अलमिति** । ब्रह्मचर्यस्य सर्वथा स्त्रीपरित्यागलक्षणस्यालंकारमिव भूषणमिव । **धर्मेति** । धर्मस्य सुकृतस्य यौवनमिव तारुण्यमिव । **सर इति** । सरस्वत्या भारत्या विलासमिव विभ्रममिव । **स्वयमिति** । सर्वविद्यानां समग्रकलानां स्वयंवरपतिर्भर्ता तमिव । एतेन सर्वाभिर्विद्याभिरयमागत्य वृतः, न त्वनेन विद्यार्थं प्रयत्नः कृत इत्यावेदितम् । **संकेतेति** । सर्वश्रुतीनां समग्रशास्त्राणां संकेतस्य स्थानं पदं तद्वदिव । अन्योऽपि जनः संकेतितं स्थानं गच्छति तद्वत्सर्वं श्रुतमेतस्मिन्समागतमिति भावः । **निदाघेति** । निदाघो ग्रीष्मकालस्तमिव । उभयोः सादृश्यं प्रदर्शयन्नाह—**सेति** । सहाषाढेन पलाशदण्डेन वर्तमानम् । 'पालाशो दण्ड आषाढः' इति कोशः । पक्ष आषाढः शुचिमासः । **हिमेति** । हिमसमयः शीतकालस्तस्मिन्काननं वनं तद्वदिव । उभयोः सादृश्यार्थमाह—**स्फुटितेति** । स्फुटिता प्रफुल्ला

---

**टिप्प०—1 वृद्धः, नेत्रारुण्यातिशयार्थम् ।**

---

पाठा०—१ स्फटिकगुलिकाक्ष. २ अपनयन. ३ तनीयसी; तनीयसीम्. ४ आगृहीतेन. ५ सर्वश्रुतानाम्.

मञ्जरीगौरम्, मधुमासमिव कुसुमधवलतिलकभूतिविभूषितमुखम्, आत्मानुरूपेण सवयसा परेण देवतार्चनकुसुमान्युच्चिन्वता तापसकुमारेणानुगतम्, अतिमनोहरम्, स्नानार्थमागतं मुनिकुमारकमपश्यम्। तेन च कर्णावतंसीकृतां वसन्तदर्शनानन्दितायाः स्मितप्रभामिव वनश्रियः, मलयमारुतागमनार्थलाजाञ्जलिमिव मधुमासस्य, यौवनलीलामिव कुसुमलक्ष्म्याः, सुरतपरिश्रमस्वेदजलकणजालकावलीमिव रतेः, ध्वजचिह्नचामरपिच्छिकामिव मनोभवगजस्य, मधुकरकामुकाभिसारिकाम्, कृत्तिकातारास्तवकानुकारिणीम्, अमृतविन्दुनिस्यन्दिनीम्, अदृष्टपूर्वां कुसुममञ्जरीमद्राक्षम्।

'अस्याः परिभूतान्यकुसुमामोदो नन्वयं परिमलः' इति मनसा निश्चित्य तं तपोधनयुवानमीक्षमाणाहमचिन्तयम्—'अहो रूपातिशयनिष्पादनोपकरणकोशस्याक्षीणता विधातुः, यत्त्रि-

या प्रियङ्गुमञ्जरी फलिनीवल्लरी तद्वद्गौरं शुभ्रवर्णम्। पक्षे प्रियङ्गुमञ्जर्या गौरम्। **मध्विति**। मधुमासो वसन्तमासस्तमिव। उभयोः साम्यमाह—**कुसुमेति**। कुसुमं पुष्पं तद्वद्धवला शुभ्रा या तिलकार्थं भूतिर्भस्म तया विभूषितमलंकृतं मुखमाननं यस्य स तम्। पक्षे कुसुमैर्धवला शुभ्रा ये तिलका वृक्षविशेषास्तेषां भूत्या समृद्ध्या विभूषितं मुखमग्रभागो यस्येति बहुव्रीहिः। वसन्तप्रारम्भ एव तिलकवृक्षाणां पुष्पोद्गमसंभवादिति भावः। अन्वयस्तु प्रागेवोक्तः॥ अथ प्रकारान्तरेण तमेव मुनिकुमारकं विशेषयन्नाह—**आत्मेति**। आत्मरूपेणात्मसदृशेन सवयसा मित्रेण परेण भिन्नेन देवतानामर्चनं पूजनं तदर्थं कुसुमानि पुष्पाण्युच्चिन्वतावचयं कुर्वता एवंविधेन तापसकुमारेण परिव्राजकबालकेनानुगतं सहितम्। **अतीति**। अतिमनोहरमतिरुचिरम्। **स्नानेनेति**। स्नानार्थमाप्लवनार्थमागतं प्राप्तम्। **तेनेति**। चकारः पुनरर्थकः। तेन कुमारेण कर्णावतंसीकृतां श्रवणशेखरीकृतां कुसुममञ्जरीमद्राक्षमपश्यमित्यन्वयः। कामिव। वसन्तस्य दर्शनेनावलोकनेनानन्दितायाः प्रमुदितायाः वनश्रियः काननलक्ष्म्याः स्मितं हास्यं तस्य प्रभामिव। **मलयेति**। मधुमासस्य वसन्तमासस्य मलयमारुतो मलयानिलस्तस्य आगमनार्थमागमननिमित्तं लाजाञ्जलिमिवाक्षताञ्जलिमिव। **यौवनेति**। कुसुमलक्ष्म्याः पुष्पश्रियो यौवनलीलामिव तारुण्यक्रीडामिव। **सुरतेति**। रतेः कामस्त्रियः सुरतं मैथुनं तस्य परिश्रमः खेदस्तस्माद्यत्स्वेदजलं तस्य कणाः पृषतास्तेषां जालकं समूहस्तस्यावलीमिव पङ्क्तिमिव। **ध्वजेति**। मनोभवगजस्य मदनहस्तिनो ध्वजो वैजयन्ती तस्य चिह्नभूता चामरपिच्छिका तामिव। **मधुकरेति**। मधुकरा भ्रमरास्त एव कामुकाः कामाभिलाषिणस्तेषामभिसारिकां कामिजनानयनकर्त्रीम्, संकेतितस्थलगामिनीं वा। **कृत्तिकेति**। कृत्तिकाभिर्देवता तस्यास्ताराणां स्तवको गुच्छकस्तस्यानुकारिणीम्। तत्सदृशीमित्यर्थः। अत्र केशानामतिकृष्णत्वेन मञ्जर्याश्च शुक्लत्वेनैतदुपमानद्वयमिति भावः। **अमृतेति**। अमृतं पीयूषं तस्य बिन्दवः कणास्तेषां निस्यन्दिनीं स्राविणीम्। **अदृष्टेति**। अदृष्टपूर्वामनवलोकितपूर्वाम्। अन्वयस्तु प्रागेवोक्तः।

**अस्याः परीति**। ननु वितर्के। अस्या मञ्जर्या अयं परिमलः। **परीति**। परिभूतोऽभिभूतोऽन्यकुसुमानां स्वेतरपुष्पाणामामोदः परिमलो येन सः इति मनसा स्वान्तेन निश्चित्य निर्णीय तं तपोधनयुवानमृषिकुमारकमीक्षमाणा वीक्षमाणाहमचिन्तयमध्यायम्। **अहो इति**। अहो इत्याश्चर्ये। विधातुर्ब्रह्मणो रूपातिशयस्य सौन्दर्यातिशयस्य निष्पादने निर्माणे य उपकरणकोश उपस्करभाण्डागारस्तस्याक्षीणताऽक्षयत्वम्। 'कौशलम्' इति पाठे तु निष्पादने यदुपकरणं व्यापारविशेषस्तत्र कौशलं दक्षता तस्याक्षीणतातादवस्थ्यमिति भावः। अतिशयपदव्यञ्जयमाह—**यत्त्रिभुवनेति**। यदिति हेत्वर्थे।

पाठा०—१ कुपित. २ आगमनार्थम्. ३ कौशलस्य. ४ यदत्रिभुवना.

भुवनाद्भुतरूपसंभारं भगवन्तं कुसुमायुधमुत्पाद्य तदाकारातिरिक्तरूपातिशयराशिरयमपरो मुनिर्मायामयो मकरकेतुरुत्पादितः । मन्ये च सकलजगन्नयनानन्दकरं शशिबिम्बं विरचयता लक्ष्मीलीलावासभवनानि कमलानि सृजता ब्रह्मणैतदाननाकारकरणकौशल्याभ्यास एव कृतः, अन्यथा किमिव हि सदृशवस्तुविरचनायां कारणम् । अलीकं चेदं यथा किल सकलाः कलाः कलावतो बहुलपक्षे क्षीयमाणस्य सुषुम्नानाम्ना रश्मिना रविरापिबतीति, ताः खल्वस्य गभस्तयः समस्ता वपुरिदमाविशन्तीति । कुतोऽन्यथा रूपापहारिणि क्लेशबहुले तपसि वर्तमानस्येदं लावण्यम्' इति चिन्तयन्तीमेव मामविचारितगुणदोषविशेषो रूपैकपक्षपाती नवयौवन-

---

त्रिभुवनात्त्रिविष्टपादद्भुतोऽतिशायी रूपसंभारः सौन्दर्यसमूहो यस्मिन्नेवंभूतं भगवन्तं कुसुमायुधं कंदर्पमुत्पाद्य निर्माय तदाकारात्कुसुमायुधाकृतेरतिरिक्तोऽधिको रूपातिशयः सौन्दर्योत्कर्षस्तस्य राशिः समूहो मायामयो मोहरूपो मकरकेतुरयमपरो मुनिरुत्पादितः । उत्तरोत्तरमतिशयवत्त्वादयं मकरकेतुस्तदपेक्षयाप्युत्कृष्ट इति भावः । उत्तरोत्तरमतिशयमेव भङ्ग्यन्तरेण निरूपयन्नाह—**मन्ये इति** । अहमिति मन्ये जाने । इतिशब्दार्थमाह—**सकलेति** । सकलं समग्रं यज्जगत्तस्य नयनानन्दकरं प्रमोदजनकमेतादृशं शशिबिम्बं चन्द्रमण्डलं विरचयता रचनां कुर्वता । लक्ष्म्याः पद्मायाः लीलावासभवनानि क्रीडानिवासस्थानान्येवंभूतानि कमलानि सरोजानि सृजता कुर्वता ब्रह्मणा हिरण्यगर्भेणैतस्य मुनिकुमारकस्याननं मुखं तस्याकार आकृतिस्तस्य करणं निर्माणं तत्र कौशलं चातुर्यं तदर्थमभ्यासः पौनःपुन्येन प्रवृत्तिरेव कृतो विहितः । एतत्समर्थयन्नाह—**अन्यथेति** । अन्यथोक्तवैपरीत्ये, सदृशवस्तुविरचनायां तुल्यपदार्थोत्पादने किमिव कारणं नियामकम् । न किमपीत्यर्थः । अतो ज्ञायतेऽभ्यासार्थमेतन्निर्माणमिति भावः । **अलीकं चेति** । अग्रे इति वक्ष्यमाणमिदमलीकं मिथ्या । इतिशब्दार्थमाह—**यथेति** । किलेत्याप्तवाक्ये । बहुलपक्षे कृष्णपक्षे क्षीयमाणस्य कृशतां प्राप्यमाणस्य कलावतश्चन्द्रस्य सकलाः समग्राः कलाः षोडशांशा रविः सूर्यः सुषुम्नानाम्ना रश्मिना नाडीविशेषेणापिबति पानं करोति । तर्हि किं सत्यमित्याशयेनाह—**इतीति** । ताः समग्रा गभस्तयः कान्तयोऽस्य मुनेरिदं वपुः शरीरमाविशन्ति प्रविशन्ति । तथा च 'यदेकस्मान्निर्गमं तत्स्वाश्रयसदृशमुपयाति' इति न्यायेन बहुलपक्षेणोपक्षीयमाणाश्चन्द्रमसो निर्गता गभस्तयस्तपःक्लेशातिशयक्षीणे मुनौ संक्रान्ता इत्यर्थः । उक्तवैपरीत्ये दूषणमाह—**कुत इति** । अन्यथोक्तान्यथात्वे रूपं सौन्दर्यं तस्यापहारिणि निराकारिणि । क्लेशः परिश्रमस्तेन बहुले दृढे । एवंविधे तपसि तपस्यायां वर्तमानस्य स्थितस्येदं लावण्यं सर्वोत्कृष्टं सौन्दर्यं कुतः स्यात् । कारणव्यतिरेकेण कार्यानुदयादिति भावः । इति चिन्तयन्तीमेवेति ध्यायन्तीमेव मां कुसुमायुधोऽनङ्गो मधुकरीं भ्रमरीं कुसुमसमयमद इव वसन्तकालमद इवोच्छ्वसितैर्निःश्वसितैः सह परवशां पराधीनामकरोद्व्यधात् । अथ च कुसुमायुधं विशेषयन्नाह—**अवीति** । अविचारितोऽनालोचितो गुणदोषयोर्विशेषो बलाबलं येन स तथा । **रूपेति** । रूपस्य सौन्दर्यस्यैकोऽद्वितीयः पक्षपाती तत्पुष्टिकारी । **नवेति** । नवं प्रत्यग्रं यद्यौवनं तत्र सुलभः सुप्रापः । तारुण्य एव तदुत्पत्तिसंभवात् । पुनः किं कुर्वन्ती । दक्षिणेनापसव्येन चक्षुषा नेत्रेण

---

**टिप्प०**—1 पूर्वत्र अलीकत्वाऽसंबन्धेऽपि तत्संबन्धवर्णनात्, इह प्रवेशस्याऽसंबन्धेपि च संबन्धवर्णनादतिशयोक्तिः । 2 कुसुमासवमद इवेत्येव पाठः । कुसुमासवमदः पुष्पमधुपानजनिता मत्तता इति तदर्थः । 3 उच्छ्वसितैः सह परवशामकरोदिति योजनायाम् उच्छ्वसितानामपि परवशत्वं प्रतीयते, न च तथा । तस्मात् 'परवशामकरोत्' अत्रैव वाक्यसमाप्तिः । 'उच्छ्वसितैः सह विस्मृतनिमेषेण' इत्यादि पृथग् वाक्यम् । उच्छ्वसितैः सह अर्थात् यथा निःश्वासाः प्रवृत्ताः तैः सह निमेषोऽपि नेत्रयोर्निमीलनमपि मया विस्मृतं तदवस्थया पश्यन्तीति तदर्थः ।

---

पाठा०—१ रूपराशिः. २ मुनिमायामयः. ३ प्रजापतिना प्रथममेतत्. ४ विरचनायाः. ५ अमुष्य. ६ विचिन्तयन्तीम्.

सुलभः कुसुमायुधः कुसुमसमयमद इव मधुकरीं परवशामकरोदुच्छ्वसितैः सह । विस्मृतनिमेषेण किंचिदामुकुलितपक्ष्मणा जिह्मिततरलतरतारशारोदरेण दक्षिणेन चक्षुषा सस्पृहमापिबन्तीव, किमपि याचमानेव, 'त्वदायत्तास्मि' इति वदन्तीव, अभिमुखं हृदयमर्पयन्तीव, सर्वात्मनानुप्रविशन्तीव, तन्मयतामिव गन्तुमीहमाना, 'मनोभवाभिभूतां त्रायस्व' इति शरणमिवोपयान्ती, 'देहि हृदयेऽवकाशम्' इत्यर्थितामिव दर्शयन्ती, 'हाहा, किमिदमसांप्रतमतिह्रेपणमकुलकुमारीजनोचितमिदं मया प्रस्तुतम्' इति जानानाप्यप्रभवन्ती करणानाम्, स्तम्भितेव, लिखितेव, उत्कीर्णेव, संयतेव, मूर्च्छितेव, केनापि विधृतेव, निस्पन्दसकलावयवा तत्कालाविर्भूतेनावष्टम्भेन, अकथितशिक्षितेनानाख्येयेन, स्वसंवेद्येन केवलम्, न विभाव्यते किं तद्रूपसंपदा, किं मनसा, किं मनसिजेन, किमभिनवयौवनेन, किमनुरागेणेवोपदिश्यमानं,

---

सस्पृहं साभिलाषं यथा स्यात्तथापिबन्त्यत्यादरेण विलोकयन्तीव । अत्यादरेण विलोकनं पानमुच्यते । अथ चक्षुर्विलोकयन्नाह—**विस्मृतेति** । विस्मृतो विस्मृतिं प्राप्तो निमेषो निमीलनं यस्य तत्तथा तेन । **किंचिदिति** । किंचिदीषदामुकुलितमाकुञ्चलितं पक्ष्म नेत्ररोम यस्मिंस्तत्तथा तेन । **जिह्मितेति** । जिह्मिता कुटिलिता तरलतरातिचञ्चला तारा कनीनिका यस्मिन्नेवंभूतं शारं कल्मषमुदरं मध्यभागो यस्येति चेति द्वन्द्वः । अथ च प्रकारान्तरेण तामेव विशेषयन्नाह—**किमपीति** । किमप्यनिर्वचनीयस्वरूपं याचमानेव प्रार्थ्यमानेव । याचनाकर्तुरेतादृशाकारवत्त्वात्तदुपमानम् । **त्वदिति** । त्वदायत्ता त्वदधीनाहमस्मीति वदन्तीव ब्रुवन्तीव । एतेनावलोकने सातिशयत्वं सूचितम् । **अभीति** । अभिमुखं संमुखं हृदयं स्वान्तमर्पयन्तीव वितरणं कुर्वन्तीव । मुनीनां व्यामोहजननादिति भावः । **सर्वेति** । सर्वात्मना सर्वप्रकारेणानुप्रविशन्तीवानुप्रवेशं कुर्वन्तीव । **तन्मयेति** । तन्मयतां तद्रूपतां गन्तुं प्राप्तुमीहमानेव स्पृहमानेव । **मनोभवेनेति** । मनोभवेन कंदर्पेणाभिभूतां पराभूतां त्रायस्व पाहीति हेतोः शरणं त्राणमुपयान्तीव गच्छन्तीव । **देहीति** । हृदये चित्तेऽवकाशं प्रवेशं देहीत्यर्थितां याचकतां दर्शयन्तीवावलोकनं कारयन्तीव । विरोधिना विवेकेनाप्यभिवर्त्यमानाह—**हाहेति** । हाहा इति खेदे । किमिदमसांप्रतमयुक्तमतिह्रेपणमतिलज्जाकरमकुलोद्भवो यो कुमारीजनस्तस्योचितं योग्यम् । कुलवत्यास्तु सर्वथा नोचितमिति भावः । इदमेतादृशं कर्म मया प्रस्तुतं प्रारब्धमिति जानानाप्येतादृशज्ञानवत्यपि करणानामिन्द्रियाणामवरोधनेऽप्रभवन्त्यसमर्था । व्यामोहं प्रतिपादयन्नाह—स्तम्भितेव जडीकृतेव, लिखितेव चित्रितेव, उत्कीर्णेवोत्कोरितेव, संयतेव संदानितेव, मूर्च्छितेव मूर्च्छां प्राप्तेव, केनाप्यनिर्वचनीयस्वरूपेण विधृतेव गृहीतेव तत्कालाविर्भूतेन तदात्वप्रादुर्भूतेनावष्टम्भेन व्यामोहातिशयेन निस्पन्दा निश्चेष्टाः सकलावयवा यस्याः सैवंभूता सती कथंकथमिति महता कष्टेन तं मुनिकुमारकमतिचिरं बहुकालं व्यालोकयमद्राक्षमिति दूरेणान्वयः । प्रस्तुतस्य दोषरूपतया तन्निदानं दुर्ज्ञेयमिति निरूपयन्नाह—**अकथितेति** । यदनुचितं प्रस्तुतं कर्म तत्केन निमित्तेनोपदिश्यमानमुपदेशविषयीक्रियमाणमिति[2] न विभाव्यते न निश्चीयत इत्यन्वयः । अनिश्चयं प्रदर्शयन्नाह—**किं तद्रूपेति** । किमिति वितर्के । तस्य मुनिकुमारस्य रूपसंपदा सौन्दर्यसमृद्ध्या । किं मनसा चित्तेन । किं वा मनसिजेन कंदर्पेण । किं वाभिनवयौवनेन प्रत्यग्रतारुण्येन । किं वानुरागेणान्तर्गतप्रीत्या । किमन्येनैव पूर्वोक्तभिन्नेनैव केनापि प्रकारेण । किमिति सर्वत्र वितर्कार्थः । तर्हि स्वसंवेद्येन स्वमात्रसाक्षिणा अनुभवेनैव विभाव्यतामित्यत आह—**स्वसंवेद्येनेति** ।

टिप्प०—1 प्रकाशयन्तीव । 2 तत्कालाविर्भूतेन अकथितशिक्षितेन अनाख्येयेन ( आकस्मिकतया किंस्वरूप इति निर्वक्तुमशक्येन ) अत एव स्वसंवेद्येन अवष्टम्भेन सात्त्विकविकारविशेषेण केवलं तमतिचिरं व्यलोकयमिति योजना । दरिद्रटीकाकारेण तु सर्वं व्याकुलीकृतम् । एवं 'किमनुरागेणेवोपदिश्यमानम्' इति टीकाकारधृतः पाठोपि भ्रष्टः । किन्तु—'उपदिश्यमाना' इत्येव पाठः । 'न विभाव्यते वक्ष्यमाणानां मध्ये केन उपदिश्यमाना अहं तमतिचिरं व्यलोकयम्' इति तद्योजना ।

पाठा०—१ कुसुमासवगदः. २ किमयम्. ३ विधूतेव. ४ कान्त्या. ५ उपदिश्यमाना.

किमन्येनैव वा केनापि प्रकारेण, अहं न जानामि कथंकथमिति तमतिचिरं व्यलोकयम् ।

उत्क्षिप्य नीयमानेव तत्समीपमिन्द्रियैः, पुरस्तादाकृष्यमाणेव हृदयेन, पृष्ठतः प्रेर्यमाणेव पुष्पधन्वना कथमपि मुक्तप्रयत्नमात्मानमधारयम् । अनन्तरं च मेऽन्तर्मदनेनावकाशमिव दातुमाहितसंताना निरीयुः श्वासमरुतः । साभिलाषं हृदयमाख्यातुकाममिव स्फुरितमुखमभूत्कुचयुगलम् । स्वेदलवलेखाक्षालितेवागलल्लज्जा । मकरध्वजनिशितशरनिपातत्रस्तेवाकम्पत गात्रयष्टिः । तद्रूपातिशयं द्रष्टुमिव कुतूहलादालिङ्गनलालसेभ्योऽङ्गेभ्यो निरगाद्रोमाञ्चजालकम् । अशेषतः स्वेदाम्भसा धौतश्चरणयुगलादिव हृदयमविशद्रागः । आसीच्च मम मनसि

---

स्वानुभवेत्यर्थः । तस्मिन्ननुभवेऽप्रमाणत्वं निराकरोति—**अकथितेति** । न कथितं शिक्षितं वा यस्मिन्नेवंभूतेन । कथिते शिक्षिते ह्यर्थेऽसंभावना विपरीतभावना चोत्पद्यते । तर्हि स्वसंवेद्येन स्वमात्रसाक्षिणा शब्दजन्य एवानुभवो भवतु, तथा संभावनात्मकेन तेन कथं निर्णय इत्यत आह—**अनाख्यायेति** । स्वमात्रसाक्षिणा तेनाप्यहं न जानामीति संबन्धः । अन्वयस्तु प्रागेवोक्तः ।

मुनिकुमारदर्शनानन्तरमुत्कण्ठाधृत्यादीनि वक्तुं प्रथममुत्कण्ठातिशयमाह—**उत्क्षिप्येति** । तदुक्तम्—'दर्शनस्पर्शनालापैर्व्यक्तास्ते सहकारिणः' इति । इन्द्रियैः करणैरुत्क्षिप्योत्पाट्य तत्समीपं मुनिसविधं नीयमाना प्राप्यमाणेव । हृदयेन स्वान्तेन पुरस्तादग्र आकृष्यमाणेव । पुष्पधन्वना मकरध्वजेन पृष्ठतः प्रेर्यमाणा नोद्यमानेव । धृतिमाह—**कथमपीति** । एतादृश्यहं कथमपि महता क्लेशेन मुक्तप्रयत्नं यथा स्यात्तथात्मानमपि प्राणिनमप्यधारयं धारितवती । निरोधश्च धृतिकार्यम् । चिन्तामाह—**अनन्तरमिति** । चिन्तावशात्कुत्रचिदेकान्ते सचिन्तस्तिष्ठति । एवं सति मे ममान्तरभ्यन्तरे मदनेनावकाशं दातुमाहितसंतानरचितपरम्परा श्वासमरुतः श्वसितवायवो निरीयुर्निष्कासिताः । तथा च श्वासावष्टम्भेन संकोचात्तन्निर्गमे सावकाशमिति भावः । अभिलाषमाह—**सेति** । साभिलाषमभिलाषयुक्तं हृदयं मन आख्यातुकाममिव वक्तुकाममिव कुचयुगलं स्तनयुग्मं स्फुरितमुखं स्पन्दिताननमभूद्बभूव । **स्वेदेति** । स्वेदः श्रमोत्थं वारि तस्य लवलेखाभिः क्षालितेव धौतेव लज्जा त्रपागलदस्रवत् । अत्र मुखस्फुरणमभिलाषकार्यं स्वेदः श्रमकार्यं लज्जाच्युतिश्चोन्मादकार्यमिति यथाक्रमं ज्ञेयम् । त्रासमाह—**मकरेति** । मकरध्वजस्य कंदर्पस्य ये निशितास्तीक्ष्णाः शरा बाणास्तेषां निकरः समूहस्तस्य निपातः पतनं तेन त्रस्तेव भीतेव गात्रयष्टिर्देहयष्टिरकम्पत चकम्पे । कम्पस्त्रासकार्यम् । एवमग्रेऽपि रोमाञ्चनिर्गमसात्त्विकभावं प्रतिपादयन्नाह—**तद्रूपेति** । तस्य मुने रूपातिशयं सौन्दर्योत्कर्षं द्रष्टुमिव वीक्षितुमिव कुतूहलात्कौतुकादालिङ्गनमुपगूहनं तत्र लालसेभ्यः सस्पृहेभ्योऽङ्गेभ्यो हस्तपादादिभ्यो रोमाञ्चजालकं रोमहर्षणसमूहो निरगान्निर्गतं बभूव । स्थायिभावं प्रदर्शयन्नाह—**अशेषत इति** । स्वेदाम्भसा श्रमोत्थवारिणा चरणयुगलादङ्घ्रियुग्मादशेषतः सामस्त्येन धौतः क्षालितो रागो रतिरारुण्यं च हृदयमिवाविशत्प्रवेशमकरोत् । **आसीच्चेति** । मे मम

---

**टिप्प०—1** धिक्टीकाकारहतकम् । मे अन्तः ( अभ्यन्तरे ) अवकाशं दातुम् ( तस्य मुनिकुमारस्य निवासस्थानं संपादयितुं ) मदनेन आहितसंतानाः कृतविस्ताराः श्वासमारुता निर्जग्मुः । एकस्य निर्गमे अन्यस्यावकाशम् ।

---

पाठा०—१ अप्यात्मानम् आत्मानमपि. २ तन्मदनेन; ह्यन्तर्मदनेन. ३ स्वेदसलिललव.

शान्तात्मनि दूरीकृतसुरतव्यतिकरेऽस्मिञ्जने मां निक्षिपता किमिदमनार्येणासदृशमारब्धं मनसिजेन। एवं च नामातिमूढं हृदयमङ्गनाजनस्य, यदनुरागविषययोग्यतामपि विचारयितुं नालम्। केदमतिभास्वरं धाम तेजसां तपसां च, क्व च प्राकृतजनाभिनन्दितानि मन्मथपरस्पन्दितानि[1]। नियतमयं मामेवं मकरलाञ्छनेन विडम्ब्यमानामुपहसति मनसा। चित्रं चेदं यदहमेवमवगच्छन्त्यपि[2] न शक्नोम्यात्मनो विकारमुपसंहर्तुम्। अन्या अपि कन्यकास्त्रपां विहाय[2] स्वयमुपयाताः पतीन्, अन्या अप्यनेन दुर्विनीतेन मन्मथेनोन्मत्ततां नीता नार्यः, न पुनरहमेका यथा। कथमनेन क्षणेनाकारमात्रालोकनाकुलीभूतमेवमस्वतन्त्रतामुपैत्यन्तःकरणम्। कालो गुणाश्च दुर्निवारतामारोपयन्ति मदनस्य सर्वथा। यावदेव सचेतनास्मि, यावदेव च न परिस्फुटमनेन विभाव्यते मे मदनदुश्चेष्टितलाघवमेतत्, तावदेवास्मात्प्रदेशा-

---

मनसि मच्चित्त इदमासीद्बभूव। तदेव प्रकटयन्नाह—**शान्तात्मनीति**। अनार्येण दुष्टेन मनसिजेन कंदर्पेण शान्तात्मनि दूरीकृतो दूरोज्झितः सुरतव्यतिकरो मैथुनवृत्तान्तो येनैवंभूते जनेऽस्मिन्मां निक्षिपता निक्षेपं कुर्वतासदृशमसाधुजनोचितमारब्धं प्रारब्धं पूर्वोक्तप्रकारेण। नामेति कोमलामन्त्रणे। अङ्गनाजनस्य स्त्रीजनस्यातिमूढमतिमुग्धं हृदयं चित्तम्। यदिति हेत्वर्थे। अनुरागविषययोग्यतामप्यस्मिन्स्थलेऽनुरागो युक्तः, अस्मिन्स्थले न युक्तः, इति विषयविभागमपि विचारयितुं नालं समर्थम्। वैराग्यतपःसिद्धियुक्ते मुनिजने प्रमदाजनानुसरणप्रयासो वृथेत्यर्थः। अतो हेतोरस्मात्प्रदेशादपसर्पणं दूरीभवनं श्रेय इति प्रत्येकवाक्यपरिसमाप्तौ बोद्धव्यम्। केति महदन्तरे। तेजसां तपसां चातिभास्वरमतिशोभनं केदं धाम गृहम्। **प्राकृतेति**। प्राकृतजनैर्नीचजनैरभिनन्दितान्यनुमोदितानि मन्मथपराणि मनोभवप्रतिपाद्यानि स्पन्दितानि चेष्टितानि क्व। **नियतमिति**। नियतं निश्चितं मकरलाञ्छनेन कंदर्पेणैवं पूर्वोक्तप्रकारेण विडम्बमानां कदर्थ्यमानां मामयं मुनिर्मनसा चित्तेनोपहसत्युपहासं करोति। **चित्रमिति**। इदमग्रे वक्ष्यमाणं[2] चित्रमाश्चर्यम्। तदेव प्रदर्शयन्नाह—**यदिति**। यद्यस्मात्कारणादहमेवं पूर्वोक्तप्रकारेणावगच्छन्त्यपि जानन्त्यप्यात्मनः स्वस्य विकारं विकृतिमुपसंहर्तुं दूरीकर्तुं न शक्नोमि न समर्था भवामि। पुनर्विचारणान्तरमाह—**अन्या इति**। मत्सहचरीषु मध्ये याः काश्चनातिकामुकास्त्रपां लज्जां विहाय त्यक्त्वा स्वयमात्मनान्यान्पतीनुपयाताः स्वयमेवोपगताः। यास्तु नोपयातास्तासां मध्येऽन्या मद्व्यतिरिक्ता नार्योऽनेन दुर्विनीतेन शूकलेन मन्मथेन कंदर्पेणोन्मत्ततां सविकारतां तथा न नीता यथाहमेका। **अनेनेति**। अनेन क्षणेन मुनिकुमारदर्शनाविर्भूतमदनावेशलक्षणेनोन्मत्ततां प्रापिता। तदेव स्पष्टीकुर्वन्नाह—**आकारेति**। आकारमात्रस्याकृतिमात्रस्यालोकनं वीक्षणं तेनाकुलीभूतं व्याकुलीकृतमन्तःकरणमन्तरिन्द्रियमेवं पूर्वोक्तप्रकारेणास्वतन्त्रतां[3] पराधीनतामुपैति प्राप्नोति। **काल इति**। कालो विवेककालो गुणाः कुलीनत्वादयश्च मदनस्य सर्वथा सर्वप्रकारेण दुःखेन निवारयितुं शक्यो दुर्निवारस्तस्य भावस्तत्ता तामारोपयन्ति व्यवस्थापयन्ति। अतो हेतोरपीति पूर्ववत्। पुनर्विचारणान्तरमाह—**यावदिति**। यावदेव यावत्कालमहं सचेतना चैतन्ययुक्तास्मि। यावदेवेति पूर्ववत्। मे ममैतन्मदनदुश्चेष्टितलाघवमनेन मुनिना विभाव्यते न निश्चीयते। **तावदेवेति**। तावत्कालमस्मात्प्रदेशादपस-

---

**टिप्प०**—1 **'मन्मथपरिस्पन्दितानि' इत्येव पाठः। कामचेष्टितानि इति तदर्थः।** 2 एतत्सर्वं प्रत्यक्षतो वर्तमानमित्यर्थं उचितः। 3 कथंपदं सर्वथा परित्यजति टीकाकृत्। तस्मात्—"अनेन क्षणेन आकारमात्रालोकनव्याकुलीभूतम् ( अर्थात् क्षणमात्रं दर्शनमात्रेण विह्वलीभूतम् ) अन्तःकरणं कथं पराधीनतामुपैति इति चित्रम्" इति पूर्वानुषङ्गेण व्याख्यातव्यम्। 4 वसन्तादिः, गुणाः सौन्दर्यादयश्च मदनस्य अप्रतीकार्यतामारोपयन्ति इति व्याख्यानमुचितम्। टीकाकारस्तु बुद्धिशून्यः।

---

**पाठा०**—१ परिस्पन्दितानि. २ अपहाय.

दपसर्पणं श्रेयः । कदाचिदनभिमतस्मरविकारदर्शनकुपितोऽयं शापाभिज्ञां करोति माम् । 'अदूरकोपा हि मुनिजनप्रकृतिः' इत्यवधार्यापसर्पणाभिलाषिण्यहमभवम् । अशेषजनपूजनीया चेयं जातिरितिकृत्वा तद्वदनाकृष्टदृष्टिप्रसरम्, अचलितपक्ष्ममालम्, अदृष्टभूतलम्, [1]उल्लसितकर्णपल्लवोन्मुक्तकपोलमण्डलम्, आलोलालकलतालसत्कुसुमावतंसम्, अंसदेशदोलायितमणिकुण्डलमस्मै प्रणाममकरवम् ।

अथ कृतप्रणामायाम[2]पि दुर्लङ्घ्यशासनतया [3]मनोभुवः, मदजननतया च मधुमासस्य, अतिरमणीयतया च तस्य प्रदेशस्य, अविनयबहुलतया चाभिनवयौवनस्य, चञ्चलप्रकृतितया चेन्द्रियाणाम्, दुर्निवारतया च विषयाभिलाषाणाम्, चपलतया च मनोवृत्तेः, तथा-

---

र्पणं दूरीभवनं श्रेयः कल्याणकृदिति भावः । अन्यथा बाधकमाह—**कदाचिदिति** । संभावनायामनभिमतोऽनभीष्टो यः स्मरविकारो मनोभवविकृतिस्तस्य दर्शनेनावलोकनेन कुपितः कोपं प्राप्तो मां शापस्याभिज्ञामायज्ञानविषयाम् । 'अभिज्ञा ज्ञानमाद्यं स्यात्' इति कोशः । करोति प्रणयति । मुनीनां कोपः कुतं इत्याशयेनाह—**अदूरेति** । हि निश्चितम् । मुनिजनप्रकृतिस्तापसलोकस्वभावोऽदूरे समीपे कोपो यस्या एवंविधा स्यादित्यवधार्य निश्चित्याहमपसर्पणेऽभिलाषः स्पृहा यस्या एवंभूताभवं जज्ञे । **अशेषेति** । अशेषैः समग्रैर्जनैः पूजनीयार्चनीयेयं जातिः । न तु कोपनीयेति भावः । इतिकृत्वास्मै प्रणामं नमस्कारमकरवमसृजम् । अथ नमस्कारं विशेषयन्नाह—**तद्वदनेति** । तद्वदनान्मुनिमुखादाकृष्ट आकर्षितो दृष्टिप्रसरो यस्मिंस्तत् । क्रियाविशेषणं वा । अनेन भावातिशयो द्योतितः । एवमग्रेऽपि ज्ञेयम् । **अचलितेति** । अचलिताऽकम्पिता पक्ष्मणां नेत्ररोम्णां माला पङ्क्तिर्यस्मिन् । **अदृष्टेति** । अदृष्टमवीक्षितं भूतलं पृथ्वीतलं यस्मिन् । **उल्लसितेति** । उल्[2]लसिता उल्लासं प्राप्ताः कर्णपल्लवाः श्रवणकिसलयानि तैरुन्मुक्तं त्यक्तं कपोलमण्डलं यस्मिन् । **आलोलेति** । आलोला चपलालकलता केशराजिस्तस्यां लसत्कुसुमावतंसो यस्मिन् । **अंसेति** । अंसदेशे स्कन्धप्रदेशे दोलायितं मणिकुण्डलं यस्मिन् । अन्वयस्तु प्रागेवोक्तः ।

**अथेति** । मद्विकारेणापहृतं दूरीकृतं धैर्यं यस्यैवंभूतं मुनिकुमारकं कृतप्रणामायामपि [3]तस्यां तमपि पवनः प्रदीपमिवानङ्गः कंदर्पस्तरलतां चञ्चलतामनयत् । तत्र हेतुमाह—**दुर्लङ्घ्येति** । मनोभुवो मदनस्य दुर्लङ्घ्यं दुर्लङ्घनीयं शासनमाज्ञा यस्य तस्य भावस्तत्ता तया । मधुमासस्य वसन्तमासस्य मदजननतया मदोत्पादकत्वेन च । तस्य पूर्वोक्तस्य प्रदेशस्यातिरमणीयतयातिमनोहरतया । **अभीति** । अभिनवं नूतनं यद्यौवनं तारुण्यं तस्याविनयः शठता तद्बहुलतया तद्बाहुल्यतया । **इन्द्रियेति** । इन्द्रियाणां करणानां चञ्चलप्रकृतितया लोलस्वभावतया । **विषयेति** । विषया इन्द्रियार्थास्तेषामभिलाषा अध्यवसायास्तेषां दुर्निवारतया दुःखेन दूरीकर्तुं शक्यतया । मनोवृत्तेश्चित्तवृत्तेश्चपलतया चञ्चलतया । तस्य तस्य वस्तुनस्तत्तत्पदार्थस्य तथा [4]भवति भ-

---

**टिप्प०**—1 शापस्य परिचितां अर्थात् अभिसंपातदुःखभोगिनीं मां करोति । यद्ययं कुपितः स्यात्तर्हि शापः कीदृशो भवति इति मां स्फुटमनुभावयेदित्याशयः । टीकाकारस्तु उन्मादग्रस्तः । 2 'ईषदुल्लसित' इत्येव ग्रन्थशय्यानुकूलः पाठः । 3 हन्त ! टीकाकारस्य प्रलापं दृष्ट्वा परवशाः स्युः सहृदयाः क्रोधेन । न जाने, किं दुर्भाग्यमासीद्बाणस्य । अस्तु । 'कृतप्रणामायां मयि' इति पाठं विना ग्रन्थ एवं न संगच्छते । मयि कृतप्रणामायां सत्यां कामस्य दुर्लङ्घ्यशासनत्वादिभिर्हेतुभिः पवनः प्रदीपमिव अनङ्गः तमपि ( मुनिकुमारमपि ) तरलतामनयत् । इति च तद्योजना । 4 इदमप्यसंगतत्वादधिकमेव ।

---

पाठा०—१ ईषदुल्लसित. २ मयि. ३ भगवतो मनोभुवः.

शान्तात्मनि दूरीकृतसुरतव्यतिकरेऽस्मिञ्जने मां निक्षिपता किमिदमनार्येणासदृशमारब्धं मनसिजेन । एवं च नामातिमूढं हृदयमङ्गनाजनस्य, यदनुरागविषययोग्यतामपि विचारयितुं नालम् । क्वेदमतिभास्वरं धाम तेजसां तपसां च, क्व च प्राकृतजनाभिनन्दितानि मन्मथपरस्पन्दितानि[1] । नियतमयं मामेवं मकरलाञ्छनेन विडम्ब्यमानामुपहसति मनसा । चित्रं चेदं यदहमेवमवगच्छन्त्यपि न शक्नोम्यात्मनो विकारमुपसंहर्तुम् । अन्या अपि कन्यकास्त्रपां विहाय[2] स्वयमुपयाताः पतीन्, अन्या अप्यनेन दुर्विनीतेन मन्मथेनोन्मत्ततां नीता नार्यः, न पुनरहमेका यथा । कथमनेन क्षणेनाकारमात्रालोकनाकुलीभूतमेवमस्वतन्त्रतामुपैत्यन्तःकरणम् । कालो गुणाश्च दुर्निवारतामारोपयन्ति मदनस्य सर्वथा । यावदेव सचेतनास्मि, यावदेव च न परिस्फुटमनेन विभाव्यते मे मदनदुश्चेष्टितलाघवमेतत्, तावदेवास्मात्प्रदेशा-

---

मनसि मच्चित्त इदमासीद्बभूव । तदेव प्रकटयन्नाह—**शान्तात्मनीति** । अनार्येण दुष्टेन मनसिजेन कंदर्पेण शान्तात्मनि दूरीकृतो दूरोज्झितः सुरतव्यतिकरो मैथुनवृत्तान्तो येनैवंभूते जनेऽस्मिन्मां निक्षिपता निक्षेपं कुर्वतासदृशमसाधुजनोचितमारब्धं प्रारब्धं पूर्वोक्तप्रकारेण । नामेति कोमलामन्त्रणे । अङ्गनाजनस्य स्त्रीजनस्यातिमूढमतिमुग्धं हृदयं चित्तम् । यदिति हेत्वर्थे । अनुरागविषययोग्यतामप्यस्मिन्स्थलेऽनुरागो युक्तः, अस्मिन्स्थले न युक्तः, इति विषयविभागमपि विचारयितुं नालं समर्थम् । वैराग्यतपःसिद्धियुक्ते मुनिजने प्रमदाजनानुसरणप्रयासो वृथेत्यर्थः । अतो हेतोरस्मात्प्रदेशादपसर्पणं दूरीभवनं श्रेय इति प्रत्येकवाक्यपरिसमाप्तौ बोद्धव्यम् । क्वेति महदन्तरे । तेजसां तपसां चातिभास्वरमतिशोभनं क्वेदं धाम गृहम् । **प्राकृतेति** । प्राकृतजनैर्नीचजनैरभिनन्दितान्यनुमोदितानि मन्मथपराणि मनोभवप्रतिपाद्यानि स्पन्दितानि चेष्टितानि क्व । **नियतमिति** । नियतं निश्चितं मकरलाञ्छनेन कंदर्पेणैवं पूर्वोक्तप्रकारेण विडम्बमानां कदर्थ्यमानां मामयं मुनिर्मनसा चित्तेनोपहसत्युपहासं करोति । **चित्रमिति** । इदमग्रे वक्ष्यमाणं[2] चित्रमाश्चर्यम् । तदेव प्रदर्शयन्नाह—**यदिति** । यद्यस्मात्कारणादहमेवं पूर्वोक्तप्रकारेणावगच्छन्त्यपि जानन्त्यप्यात्मनः स्वस्य विकारं विकृतिमुपसंहर्तुं दूरीकर्तुं न शक्नोमि न समर्था भवामि । पुनर्विचारणान्तरमाह—**अन्या इति** । मत्सहचरीषु मध्ये याः काश्चनातिकामुकास्त्रपां लज्जां विहाय त्यक्त्वा स्वयमात्मनान्यान्पतीनुपयाताः स्वयमेवोपगताः । यास्तु नोपयातास्तासां मध्येऽन्या मद्व्यतिरिक्ता नार्योऽनेन दुर्विनीतेन शूकलेन मन्मथेन कंदर्पेणोन्मत्ततां सविकारतां तथा न नीता यथाहमेका । **अनेनेति** । अनेन क्षणेन मुनिकुमारदर्शनाविर्भूतमदनावेशलक्षणेनोन्मत्ततां प्रापिता । तदेव स्पष्टीकुर्वन्नाह—**आकारेति** । आकारमात्रस्याकृतिमात्रस्यालोकनं वीक्षणं तेनाकुलीभूतं व्याकुलीकृतमन्तःकरणमन्तरिन्द्रियमेवं पूर्वोक्तप्रकारेणास्वतन्त्रतां[3] पराधीनतामुपैति प्राप्नोति । **काल इति** । कालो विवेककालो गुणाः कुलीनत्वादयश्च मदनस्य सर्वथा सर्वप्रकारेण दुःखेन निवारयितुं शक्यो दुर्निवारस्तस्य भावस्तत्ता तामारोपयन्ति व्यवस्थापयन्ति । अतो हेतोरपीति पूर्ववत् । पुनर्विचारणान्तरमाह—**यावदिति** । यावदेव यावत्कालमहं सचेतना चैतन्ययुक्तास्मि । यावदेवेति पूर्ववत् । मे ममैतन्मदनदुश्चेष्टितलाघवमनेन मुनिना विभाव्यते न निश्चीयते । **तावदेवेति** । तावत्कालमस्मात्प्रदेशादपस-

---

**टिप्प०**—1 'मन्मथपरिस्पन्दितानि' इत्येव पाठः । कामचेष्टितानि इति तदर्थः । 2 एतत्सर्वं प्रत्यक्षतो वर्तमानमित्यर्थं उचितः । 3 कथंपदं सर्वथा परित्यजति टीकाकृत् । तस्मात्—"अनेन क्षणेन आकारमात्रालोकनव्याकुलीभूतम् ( अर्थात् क्षणमात्रं दर्शनमात्रेण विह्वलीभूतम् ) अन्तःकरणं कथं पराधीनतामुपैति इति चित्रम्" इति पूर्वानुषङ्गेण व्याख्यातव्यम् । 4 वसन्तादिः, गुणाः सौन्दर्यादयश्च मदनस्य अप्रतीकार्यतामारोपयन्ति इति व्याख्यानमुचितम् । टीकाकारस्तु बुद्धिशून्यः ।

---

**पाठा०**—१ परिस्पन्दितानि. २ अपहाय.

दुपसर्पणं श्रेयः । कदाचिदनभिमतस्मरविकारदर्शनकुपितोऽयं शापाभिज्ञां करोति माम् । 'अदूरकोपा हि मुनिजनप्रकृतिः' इत्यवधार्यापसर्पणाभिलाषिण्यहमभवम् । अशेषजनपूजनीया चेयं जातिरितिकृत्वा तद्वदनाकृष्टदृष्टिप्रसरम्, अचलितपक्ष्ममालम्, अदृष्टभूतलम्, उल्लसि[1]तकर्णपल्लवोन्मुक्तकपोलमण्डलम्, आलोलालकलतालसत्कुसुमावतंसम्, अंसदेशदोलायितमणिकुण्डलमस्मै प्रणाममकरवम् ।

अथ कृतप्रणामायाम[2]पि दुर्लङ्घ्यशासनतया [3]मनोभुवः, मदजननतया च मधुमासस्य, अतिरमणीयतया च तस्य प्रदेशस्य, अविनयबहुलतया चाभिनवयौवनस्य, चञ्चलप्रकृतितया चेन्द्रियाणाम्, दुर्निवारतया च विषयाभिलाषाणाम्, चपलतया च मनोवृत्तेः, तथा-

---

र्पणं दूरीभवनं श्रेयः कल्याणकृदिति भावः । अन्यथा बाधकमाह—**कदाचिदिति** । संभावनायामनभिमतोऽनभीष्टो यः स्मरविकारो मनोभवविकृतिस्तस्य दर्शनेनावलोकनेन कुपितः कोपं प्राप्तो मां शापस्याभिज्ञामाद्यज्ञानविषयाम् । 'अभिज्ञा ज्ञानमाद्यं स्यात्' इति कोशः । करोति प्रणयति । मुनीनां कोपः कुतं इत्याशयेनाह—**अदूरेति** । हि निश्चितम् । मुनिजनप्रकृतिस्तापसलोकस्वभावोऽदूरे समीपे कोपो यस्या एवंविधा स्यादित्यवधार्य निश्चित्याहमपसर्पणेऽभिलाषः स्पृहा यस्या एवंभूताभवं जज्ञे । **अशेषेति** । अशेषैः समग्रैर्जनैः पूजनीयार्चनीयेयं जातिः । न तु कोपनीयेति भावः । इतिकृत्वास्मै प्रणामं नमस्कारमकरवमसृजम् । अथ नमस्कारं विशेषयन्नाह—**तद्वदनेति** । तद्वदनान्मुनिमुखादाकृष्ट आकर्षितो दृष्टिप्रसरो यस्मिंस्तत् । क्रियाविशेषणं वा । अनेन भावातिशयो द्योतितः । एवमग्रेऽपि ज्ञेयम् । **अचलितेति** । अचलिताऽकम्पिता पक्ष्मणां नेत्ररोम्णां माला पङ्क्तिर्यस्मिन् । **अदृष्टेति** । अदृष्टमवीक्षितं भूतलं पृथ्वीतलं यस्मिन् । **उल्लसितेति** । उ[2]ल्लसिता उल्लासं प्राप्ताः कर्णपल्लवाः श्रवणकिसलयानि तैरुन्मुक्तं त्यक्तं कपोलमण्डलं यस्मिन् । **आलोलेति** । आलोला चपलालकलता केशराजिस्तस्यां लसत्कुसुमावतंसो यस्मिन् । **अंसेति** । अंसदेशे स्कन्धप्रदेशे दोलायितं मणिकुण्डलं यस्मिन् । अन्वयस्तु प्रागेवोक्तः ।

**अथेति** । मद्विकारेणापहृतं दूरीकृतं धैर्यं यस्यैवंभूतं मुनिकुमारकं कृतप्रणामायामपि [3]तस्यां तमपि पवनः प्रदीपमिवानङ्गः कंदर्पस्तरलतां चञ्चलतामनयत् । तत्र हेतुमाह—**दुर्लङ्घ्येति** । मनोभुवो मदनस्य दुर्लङ्घ्यं दुर्लङ्घनीयं शासनमाज्ञा यस्य तस्य भावस्तत्ता तया । मधुमासस्य वसन्तमासस्य मदजननतया मदोत्पादकत्वेन च । तस्य पूर्वोक्तस्य प्रदेशस्यातिरमणीयतयातिमनोहरतया । **अभीति** । अभिनवं नूतनं यद्यौवनं तारुण्यं तस्याविनयः शठता तद्बहुलतया तद्बाहुल्यतया । **इन्द्रियेति** । इन्द्रियाणां करणानां चञ्चलप्रकृतितया लोलस्वभावतया । **विषयेति** । विषया इन्द्रियार्थास्तेषामभिलाषा अध्यवसायास्तेषां दुर्निवारतया दुःखेन दूरीकर्तुं शक्यतया । मनोवृत्तेश्चित्तवृत्तेश्चपलतया चञ्चलतया । तस्य तस्य वस्तुनस्तत्तत्पदार्थस्य तथा [4]भवति भ-

---

**टिप्प०—1** शापस्य परिचितां अर्थात् अभिसंपातदुःखभोगिनीं मां करोति । यद्ययं कुपितः स्यात्तर्हि शापः कीदृशो भवति इति मां स्फुटमनुभावयेदित्याशयः । टीकाकारस्तु उन्मादग्रस्तः । 2 'ईषदुल्लसित' इत्येव ग्रन्थशय्यानुकूलः पाठः । 3 हन्त! टीकाकारस्य प्रलापं दृष्ट्वा परवशाः स्युः सहृदयाः क्रोधेन । न जाने, किं दुर्भाग्यमासीद्बाणस्य । अस्तु । 'कृतप्रणामायां मयि' इति पाठं विना ग्रन्थ एव न संगच्छते । मयि कृतप्रणामायां सत्यां कामस्य दुर्लङ्घ्यशासनत्वादिभिर्हेतुभिः पवनः प्रदीपमिव अनङ्गः तमपि ( मुनिकुमारमपि ) तरलतामनयत् । इति च तद्योजना । 4 इदमप्यसंगतत्वादधिकमेव ।

---

पाठ०—१ ईषदुल्लसित. २ मयि. ३ भगवतो मनोभुवः.

भवितव्यतया च तस्य तस्य वस्तुनः, किं बहुना मम मन्दभाग्यदौरात्म्यादस्य चेदृशस्य क्लेशस्य विहितत्वात्तमपि मद्विकारापहृतधैर्यं प्रदीपमिव पवनस्तरलतामनयदनङ्गः।

तदा तस्याप्यभिनवागतमदनं प्रत्युद्व्रजन्निव रोमोद्गमः प्रादुरभवत्। मत्सकाशमभिप्रस्थितस्य मनसो मार्गमिवोपदिशद्भिः पुरः प्रवृत्तं श्वासैः। वेपथुगृहीता व्रतभङ्गभीतेवाकम्पत करतलगताक्षमाला। द्वितीयेव कर्णावसक्तकुसुममञ्जरी कपोलतलासङ्गिनी समदृश्यत स्वेदसलिलसीकरजालिका। मद्दर्शनप्रीतिविस्तारितस्य चोत्तानतारकस्य पुण्डरीकमयमिव तमुद्देशमुपदर्शयतो लोचनयुगलस्य विसर्पिभिरंशुसंतानैर्यदृच्छयाच्छोदसलिलमपहाय विकचकुवलयवनैरिव गगनतलसमुत्पतितैररुध्यन्त दश दिशः। तया तु तस्यातिप्रकटया विकृत्या द्विगुणीकृतमदनावेशा तत्क्षणमहमवर्णनयोग्यां कामप्यवस्थामन्वभवम्।

इदं च मनस्यकरवम्—'अनेकसुरतसमागमलास्यलीलोपदेशोपाध्यायो मकरकेतुरेव

---

वितव्यतया तथाभाव्यतया। चकारः सर्वत्र समुच्चयार्थः। **किमिति**। किं बहूक्तेन। मम मन्दभाग्यं क्षीणभागधेयं तस्य दौरात्म्याद्दुष्टत्वेनास्य मुनेरीदृशस्य क्लेशस्य विहितत्वात्कृतत्वात्। अन्वयस्तु प्रागेवोक्तः।

**तदेति**। तस्मिन्काले तस्यापि मुनिकुमारस्याप्यभिनवो नूतन आगतो यो मदनः कंदर्पस्तं प्रत्युद्व्रजन्निव संमुखं व्रजन्निव रोमोद्गमो रोमाञ्चः प्रादुरभवत्प्रकटीबभूव। **मदिति**। मत्सकाशं मत्समीपमभिप्रस्थितस्य संमुखं चलितस्य मनसो हृदयस्य मार्गं पन्थानमुपदिशद्भिरिवोपदर्शयद्भिरिव श्वासैः श्वसितैः पुरोऽग्रे प्रवृत्तमग्रे प्रस्थितम्। **वेपथुरिति**। व्रतस्य नियमस्य भङ्गः खण्डनं तेन भीतेव त्रस्तेव वेपथुः कम्पस्तेन गृहीता करतलगता हस्तगताक्षमाला जपमालाकम्पताचलत। **द्वितीयेति**। कपोलतलासङ्गिनी गल्लोपरप्रदेशाश्लेषिणी स्वेदसलिलस्य श्रमजलस्य सीकराः कणास्तेषां जालिका समदृश्यत समालोक्यत। द्वितीयान्या कर्णावसक्तकुसुममञ्जरीव श्रवणसंलग्नपुष्पवल्लरीव। एते सात्त्विका भावाः प्रदर्शिताः। **मद्दर्शनेति**। मद्दर्शनमालोकनं तस्मात्प्रीतिः स्नेहस्तेन विस्तारितस्य प्रसारितस्य। **उत्तानेति**। उत्तानोर्ध्वमुखा तारका कनीनिका यस्य स तथा तस्य तमुद्देशं तं प्रदेशं पुण्डरीकमयं सिताम्भोजनिर्मितमिवोपदर्शयतोऽन्येभ्यो ज्ञापयतो लोचनयुगलस्य नेत्रयुग्मस्य विसर्पिभिः प्रसरणशीलैरंशुसंतानैः किरणसमूहैर्दश दिशोऽरुध्यन्त रुद्धाः। कमलसादृश्यादाह—**यदृच्छयेति**। यदृच्छया स्वेच्छयाच्छोदनाम्नः सरसः सलिलं पानीयमपहाय त्यक्त्वा गगनतलसमुत्पतितैराकाशतलोत्पातिभिर्विकचकुवलयवनैरिव विकस्वरोत्पलखण्डैरिव। एतेन नयनयोश्चाञ्चल्यमितस्ततोऽवलोकनं च ध्वनितम्। तु पुनरर्थकः। तस्य मुनिकुमारस्यातिप्रकटयातिस्पष्टया तया विकृत्या द्विगुणीकृतो द्विगुणतां नीतो मदनस्यावेशो यस्या एवंभूताहं तत्क्षणं तत्कालमवर्णनयोग्यामकथनीयां कामप्यवस्थां दशामन्वभवमनुभूतवती।

**इदमिति**। मनसि चित्त इदं चाकरवमप्रणयम्। अचिन्तयमित्यर्थः। **अनेकेति**। अनेकेऽसंख्याः सुरतं मैथुनं तस्य समागमः संबन्धः स एव लास्यलीला नृत्यक्रीडा तस्यामुपदेशाः शिक्षारूपास्तत्रोपाध्यायः पाठक एवंविधो मकरकेतुरेव कंदर्प एव विलासान्नेत्रविकारानुपदिशत्युपदेशं करोति। उक्तवैपरीत्ये बाधक-

---

**टिप्प०**—1 पुनः पपात टीकाकारः। मुनिर्हि तत्पदेन निर्दिश्यते न इदंपदेन। तस्मात्—अस्य ईदृशस्य मम तपश्चरणात्मकक्लेशस्य विधिविहितत्वात् इत्यर्थः। 2 एका पारिजातमञ्जरी तु कर्णे कृतैव। अत एव सेयं स्वेदसीकरजालिकारूपा द्वितीया इति उत्प्रेक्षाशयः। 3 प्राणयमिति स्यात्, स्थाने स्थाने परीक्षणीयं प्रावीण्यं टीकाकृतो भगवतः।

---

**पाठा०**—१ दर्शनापहृत. २ आगतं. ३ प्रत्युद्गतवान्. ४ वेपथुना. ५ अकम्पत गात्रयष्टिः. ६ माला च. ७ मदनप्रीति.

विलासानुपदिशति, अन्यथा विविधरसासङ्गललितेष्वीदृशेषु व्यतिकरेष्वप्रविष्टबुद्धेरस्य जनस्य कुत[1] इयमनभ्यस्ता[2]कृती रतिरसनिःस्यन्दमिव क्षरन्ती, अमृतमिव वर्षन्ती, मदमुकुलितेव, खेदालसेव, निद्राजडेव, आनन्दभरमन्थरतर[3]त्तारसंचारिणी, अनिभृतभ्रूलतोल्ला[4]सिनी दृष्टिः । कुतश्चेदमतिनैपुण्यम्, यच्चक्षुषैवानक्षरमेवमन्तर्गतो हृदयाभिलाषः कथ्यते'। प्राप्तप्रसरा चोपसृत्य तं द्वितीयमस्य सहचरं मुनिबालकं प्रणामपूर्वकमपृच्छम्—'भगवान्किमभिधानः । कस्य वा[5]यं त[6]पोधनस्य युवा । किंनाम्नश्च तरोरियम[7]वतंसीकृता कुसुममञ्जरी । जनयति हि मे मनसि महत्कौतुकमस्याः समुत्सर्पन्नसाधारणसौरभोऽयमनाघ्रातपूर्वो गन्धः' इति । स तु मामीषद्विहस्याब्रवीत्—'बाले, किमनेन पृष्टेन प्रयोजनम् । अथ कौतुकमावेदयामि । श्रूयताम्—

अस्ति त्रि[8]भुवनप्रख्यातकीर्तिरत्युदारतया सुरासुरसिद्धवृन्दवन्दितचरणयुगलो महा-

---

माह—**अन्यथेति** । विविधा अनेके ये रसाः शृङ्गारादयस्तेषामासङ्गः संश्लेषस्तेन ललितेषु मनोहरेष्वीदृशेषु व्यतिकरेषु संबन्धेष्वप्रविष्टा प्रवेशमप्राप्ता बुद्धिः प्रतिभा यस्य स तथा तस्यैवंभूतस्यास्य मुनिजनस्येयं दृष्टिः कुतः स्यात् । अथ च दृष्टिं विशिनष्टि—**अनेति** । अनभ्यस्तापरिचिताकृतिराकारो यया सा तथा । रतिरसः शृङ्गाररसस्तस्य निःस्यन्दं सारं क्षरन्तीव स्रवन्तीव । अमृतं पीयूषं वर्षन्तीव वृष्टिं कुर्वन्तीव । मदो मुन्मोहसंभेदस्तेन मुकुलितेव कुड्मलितेव । खेदः श्रमस्तेनालसेव मन्थरेव । निद्रा प्रमीला तया जडेव स्तम्भितेव । **आनन्देति** । आनन्दस्य प्रमोदस्य यो भरस्तेन मन्थरालसा, एवंविधा तरन्ती तारा कनीनिका यस्मिन्नेतादृशः संचारो[1] विद्यते यस्याः सा तथा । **अनीति** । अनिभृता चञ्चला या भ्रूलता तस्या उल्लासो विद्यते यस्याः सा तथा । **कुत इति** । इदमतिनैपुण्यमतिशयेन दक्षत्वं कुतः स्यात् । तदेव व्यनक्ति—**यदिति** । यद्यस्मात्कारणादन्तर्गतो हृदयाभिलाषश्चित्ताभिप्रायोऽनक्षरं यथा स्यात्तथा चक्षुषैव नेत्रेणैव कथ्यत उच्यते । **प्राप्त इति** । तादृशविचारणया कुमारस्य सविकारं हृदयमिति निश्चित्य प्राप्तः प्रसरोऽवकाशो यया सैवं विधेवोपसृत्य समीपं समागत्यास्य मुनिकुमारस्य तं द्वितीयं सहचरं मुनिबालकं प्रणामपूर्वकमपृच्छमवोचम् । किं तदित्याह—**भगवानिति** । किमभिधानो भगवान्[2] । कस्य तपोधनस्यायं युवा । इयं किंनाम्नः किमभिधानस्य तरोर्वृक्षस्य कुसुममञ्जर्यवतंसीकृतोत्तंसीकृता । अस्या मञ्जर्याः समुत्सर्पन्प्रसरन्नसाधारणं सौरभं यस्मिन्नेवंविधोऽनाघ्रातपूर्वो नासिकयाऽगृहीतपूर्वोऽयं गन्धो मे मम मनसि चित्ते महत्कौतुकं महदाश्चर्यं जनयति निष्पादयति । **स त्विति** । स मां प्रतीषद्विहस्य किंचित्स्मितं कृत्वाब्रवीदवोचत् । **बाले इति** । हे बाले हे कुमारिके, अनेन पृष्टेन किं प्रयोजनं कोऽर्थः । **अथेति** । चेदर्थे । कौतुकमाश्चर्यं तदावेदयामि कथयामि श्रूयतामाकर्ण्यताम् ।

**अस्तीति** । नामेति कोमलामन्त्रणे । दिव्यलोकनिवासी स्वर्गलोकवसनशीलः श्वेतकेतुर्महामुनिरस्ति । **त्रिभुवनेति** । त्रिभुवने त्रिविष्टपे प्रख्याता विख्याता कीर्तिर्यशो यस्य स तथा । **अत्युदारेति** । अत्युदारतयात्युत्कृष्टतया । **सुरेति** । सुरा देवाः, असुराः दैत्याः, सिद्धा योगमन्त्रादिसामर्थ्ययुक्तास्तेषां वृन्दं

---

**टिप्प०**—1 आनन्दभरमन्थरतरत्तारं यथा स्यात्तथा संचरति इति आनन्द···सञ्चारिणी, इति स्पष्टोर्थः । 2 हन्त ग्रन्थस्वारस्यं पुनर्धूलिसात् करोति महाशयः । अस्तु 'भगवन् !' इति संबोधनमेवात्र मधुरमिति विदन्तु विदः । 3 अत्रापि ( कस्य वाऽयं तपोधनयुवा ) इत्येव पाठो रमणीयः । अयं तपोधनयुवा कस्य पुत्र इति तदर्थः ।

---

**पाठा०**—१ कुत इवेयम्. २ अनभ्यस्ता जाता. ३ तरलतर. ४ लतालासिनी. ५ वा. ६ तपोधनयुवा. ७ अनेनावतंसी. ८ खलु सकलत्रिभुवनप्रख्यात.

मुनिर्दिव्यलोकनिवासी श्वेतकेतुर्नाम। तस्य च भगवतः सुरलोकसुन्दरीहृदयानन्दकरम्, अशेषत्रिभुवनसुन्दरम्, अतिशयितनलकूबरं रूपमासीत्। स कदाचिद्देवतार्चनकमलान्युद्धर्तुमैरावतमदजलबिन्दुबद्धचन्द्रकशतखचितजलां हरहसितसितस्रोतसं मन्दाकिनीमवततार। अवतरन्तं च तं तदा कमलवनेषु संततसंनिहिता विकचसहस्रपत्रपुण्डरीकोपविष्टा देवी लक्ष्मीर्ददर्श। तस्यास्तु तमवलोकयन्त्याः प्रेममदमुकुलितेनानन्दबाष्पभरतरङ्गतरलतारेण लोचनयुगलेन रूपमास्वादयन्त्या जृम्भिकारम्भमन्थरमुखविन्यस्तहस्तपल्लवाया मन्मथविकृतं मन आसीत्। आलोकनमात्रेण च समासादितसुरतसमागमसुखायास्तस्मिन्नेवासनीकृते पुण्डरीके कृतार्थतासीत्। तस्माच्च कुमारः समुदपादि। ततस्तमुत्सङ्ग आदाय सा 'भगवन् गृहाण तवायमात्मजः' इत्युक्त्वा तस्मै श्वेतकेतवे ददौ। असावपि बालजनो-

---

समूहस्तेन वन्दितं नमस्कृतं चरणयुगलं पादयुग्मं यस्य स तथा। **तस्येति**। तस्य श्वेतकेतोर्भगवतः। **सुरेति**। सुरलोकस्य याः सुन्दर्यः स्त्रियस्तासां हृदयानि चित्तानि तेषामानन्दकरं प्रमोदोत्पादकम्। **अशेषेति**। अशेषं यत्त्रिभुवनं त्रिविष्टपं तस्मात्सुन्दरं हृद्यम्। **अतीति**। नलकूबरात्कुबेरपुत्रादतिशयितमतिशयितनलकूबरम्। 'सुतोऽस्य नलकूबरः' इति कोशः। 'क्वचिदमाद्यन्तस्य परत्वम्' इति नलकूबरस्य परप्रयोगः। अतिशयितोऽतिक्रान्तो नलकूबरो येनेति बहुव्रीहिर्वा। नलकूबररूपापेक्षयात्युत्कृष्टरूपमित्यर्थः। एवंविधं रूपं सौन्दर्यमासीदभूत्। **स इति**। कदाचित्कस्मिंश्चित्समये स श्वेतकेतुर्देवतानामर्चनं पूजनं तदर्थं कमलानि नलिनान्युद्धर्तुमुत्पाटयितुं मन्दाकिनीं स्वर्धुनीमवततारावतीर्णवान्। अथ मन्दाकिनीं विशेषयन्नाह— **ऐरावतेति**। ऐरावतो हस्तिमल्लस्तस्य मदजलं दानवारि तस्य बिन्दवः पृषतास्तैर्बद्धं यच्चन्द्रकशतं मेचकशतं तेन खचितं व्याप्तं जलं यस्यां सा तथा ताम्। **हरेति**। हरः शंभुस्तस्य हसितं स्मितं तद्वत्सितं शुभ्रं स्रोतः प्रवाहो यस्याः सा ताम्। **अवेति**। तदा तस्मिन्कालेऽवतरन्तमम्बरादागच्छन्तं श्वेतकेतुं मुनिं कमलवनेषु नलिनखण्डेषु संततं निरन्तरं संनिहिता समीपवर्तिनी विकचानि विकस्वराणि सहस्रपत्राणि यस्मिन्नेवंभूतं पुण्डरीकं सिताम्भोजं तत्रोपविष्टासीना लक्ष्मीर्देवी ददर्श दृष्टवती। **तस्या इति**। तस्या लक्ष्म्यास्तं मुनिमवलोकयन्त्या ईक्षणं कुर्वन्त्याः। तु पुनरर्थकः। मन्मथेन कंदर्पेण विकृतं सविकारं मनश्चित्तमासीदभूत्। अथ लक्ष्मीं विशेषयन्नाह—**प्रेमेति**। प्रेममदः प्रीतिमदस्तेन मुकुलितेन कुड्मलितेन। **आनन्देति**। आनन्देन प्रमोदेन यो बाष्पभरो हर्षनेत्राम्बुसमूहः स एव तरङ्गः कल्लोलस्तेन तरला कम्पना तारा कनीनिका यस्मिन्नेवंविधेन लोचनयुगलेन नेत्रयुग्मेन रूपं सौन्दर्यमास्वादयन्त्याः पिबन्त्याः। **जृम्भिकेति**। जृम्भिका जृम्भणं तस्या आरम्भ आरम्भणं तेन यन्मन्थरं मुखं तस्मिन्विन्यस्तः स्थापितो हस्तपल्लवो यया सा तस्याः। **आलोकनेति**। आलोकनमात्रेण केवलं निरीक्षणेनैव समासादितं प्राप्तं सुरतसमागमसुखं मैथुनसंगमसातं यया सा तस्याः। तस्मिन्नेवासनीकृते विष्टरतां नीते पुण्डरीके कृतार्थता सफलतासीत्। तस्मात्पुण्डरीकात्कुमारः समुदपाद्युत्पन्नः। **तत इति**। ततः कुमारोत्पत्तेरनन्तरं तं कुमारकमुत्सङ्गे क्रोड आदाय गृहीत्वा सा लक्ष्मीः हे भगवन् हे स्वामिन्, गृहाणायं तवात्मजस्त्वदङ्गज इत्युक्त्वा प्रतिपाद्य तस्मै श्वेतकेतवे तं कुमारकं ददौ दत्तवती। असावपि श्वेतकेतुरपि बालजनोचिताः शिशुजनयोग्याः सर्वाः क्रियाः प्रसवनादिकाः

---

**टिप्प०**—1 विविधवर्णं जाज्वल्यमानं वर्तुलाकारं चिह्नवृन्दम् (तैलादिबिन्दोः पतने यद्धि जलस्तरोपरि भवति)। 2 रमणस्य सफलता बीजपातो जात इत्याशयः। 3 सप्तमीपाठे श्रवणयोर्विसन्धिता प्रतीयत इति 'उत्सङ्गेनादाय' इति ग्रन्थोचितः। 4 तत्तु जातमेव, अत एव नामकर्मादिका इत्युचितम्।

---

**पाठा०**—१ सुरासुरलोक. २ संनिहिता. ३ प्रेममन्द. ४ उत्सङ्गे.

चिताः सर्वाः क्रियाः कृत्वा तस्य पुण्डरीकसंभवतया तदेव पुण्डरीक इति नाम चक्रे । प्रतिपादितव्रतं च तमागृहीतसकलविद्याकलापमकार्षीत् । सोऽयम् । इयं च सुरासुरैर्मथ्यमानात्क्षीरसागरादुद्गतः पारिजातनामा पादपस्तस्य मञ्जरी । यथा चैषा व्रतविरुद्धमस्य श्रवणसंसर्गमासादितवती तदपि कथयामि । अद्य चतुर्दशीति भगवन्तमम्बिकापतिं कैलासगतमुपासितुममरलोकान्मया सह नन्दनवनसमीपेनायमनुसरन्निर्गत्य साक्षान्मधुमासलक्ष्मीदत्तललितहस्तावलम्बया बकुलमालिकामेखलया कुसुमपल्लवग्रथिताभिराजानुलम्बिनीभिः कण्ठमालिकाभिर्निरन्तराच्छादितविग्रहया नवचूताङ्कुरकर्णपूरया पुष्पासवपानमत्तया वनदेवतया पारिजातकुसुममञ्जरीमिमामादाय प्रणम्याभिहितः—'भगवन्, सकलत्रिभुवनदर्शनाभिरामायास्तवाकृतेरस्याः सदृशोऽयमलंकारः क्रियताम् । इयमवतंसविलासदुर्ललितारोप्यतां श्रवणशिखरम् । व्रजतु सफलतां जन्म पारिजातस्य' इत्येवमभिदधानां चायमात्मरूपस्तुतिवादत्रपावनमितलोचनस्तामनादृत्यैव गन्तुं प्रवृत्तः । मया तु तामनुयान्तीमालोक्य 'को

---

कृत्वा विधाय । **तस्येति** । तस्य कुमारस्य पुण्डरीकं सिताम्भोजं तस्मात्संभव उत्पत्तिस्तस्य भावस्तत्ता तया तस्माद्धेतोरेव निश्चयेन पुण्डरीक इति नाम चक्रेऽभिधानं विदधे । कियत्कालानन्तरं स एव श्वेतकेतुः प्रतिपादितव्रतं दत्तदीक्षमागृहीतसकलविद्याकलापं[1] च तं कुमारमकार्षीत्कृतवान् । स कुमारोऽयं पुरोवर्ती दृश्यमानः । **इयं चेति** । सुरासुरैर्मथ्यमानाद्विलोड्यमानात्क्षीरसागराद्दुग्धाम्बुधेः पारिजातनामा पादपो वृक्ष उद्गतो निर्गतस्तस्येयं कर्णावतंसीकृता मञ्जरी । **यथेति** । येन प्रकारेणैषा मञ्जरी व्रतविरुद्धं नियमविरोध्यस्य श्रवणसंसर्गं कर्णसंबन्धमासादितवती प्राप्तवती तदपि वृत्तं कथयामि निवेदयामि । **अद्येति** । चतुर्दशी शिवतिथिरिति हेतोरमरलोकात्स्वर्गलोकात्कैलासगतं रजताद्रिस्थितं भगवन्तं माहात्म्यवन्तमम्बिकापतिं गौरीनाथमुपासितुं सेवितुं मया सह मत्सार्धम् । प्रासौ[2] द्योत्यायां 'क्रोशेन क्रोशं वानुवाकोऽधीतः' इतिवत् । नन्दनवनस्य समीपं समीपेन वानुसरन्गच्छन्निर्गत्य स्वस्थानाद्बहिरागत्य साक्षाद्वनदेवतयारण्याधिष्ठात्र्येमां मञ्जरीमादाय गृहीत्वा प्रणम्य नमस्कृत्याभिहित उक्तः । अथ वनदेवतां विशिनष्टि—**मध्विति** । मधुमासो वसन्तमासस्तस्य लक्ष्मीः श्रीस्तया दत्तो ललितो मनोहरो हस्तस्तस्यावलम्बो यस्याः सा तया । **बकुलेति** । बकुलः केसरस्तस्य मालिका स्रक्सैव मेखला रशना यस्याः सा तया । **कुसुमेति** । कुसुमैश्च पल्लवैश्च ग्रथिताभिर्गुम्फिताभिराजानु आनलकीलं यावल्लम्बिनीभिः कण्ठमालिकाभिर्निगरणस्रग्भिर्निरन्तरमाच्छादित आवृतो विग्रहो यस्याः सा तया । **नवेति** । नवः प्रत्यग्रो यश्चूताङ्कुर आम्राङ्कुरस्तस्य कर्णपूरो यस्याः सा तया । **पुष्पेति** । पुष्पाणां कुसुमानां य आसवो माधवकस्तस्य पानं तेन मत्तया क्षीबया । किमभिहित इत्याशयेनाह—**भगवन्निति** । हे भगवन् स्वामिन्, प्रसीद प्रसन्नो भव । **सकलेति** । सकलं समग्रं यत्त्रिभुवनं तस्य दर्शनेऽवलोकनेऽभिरामाया बन्धुराया अस्यास्तवाकृतेराकारस्य सदृशोऽनुरूपोऽलंकारः क्रियतां विधीयताम् । **इयमिति** । इयमवतंसविलास एव दुरधिगमं दुर्ललितं[3] क्रीडितं यस्याः सैवंविधा मञ्जरी श्रवणशिखरं कर्णप्रान्तमारोप्यतां स्थाप्यताम् । पारिजातस्य जन्मोत्पत्तिः सफलतां सार्थकतां व्रजतु गच्छतु । इत्येवं पूर्वोक्तप्रकारेणाभिदधानां कथयन्तीम् । **अयमिति** । पुण्डरीकः । **आत्मेति** । आत्मनो यद्रूपं सौन्दर्यं तस्य स्तुतिवादः प्रशंसनं तस्माद्या त्रपा लज्जा तयावनमिते नम्रीकृते लोचने नेत्रे येनैवंभूतस्तामनादृत्यैवानादरं कृत्वैव गन्तुं प्रवृत्तो गमनायोद्यतोऽभूत् । **मयेति** । तां वनदेवतामनुयान्तीमनुव्रजन्तीमालोक्य निरीक्ष्य हे सखे हे मित्र, अस्या

---

**टिप्प०**—1 आगृहीतः शिक्षितः सकलविद्याकलापो येन तमित्यर्थः । 2 व्याकरणज्ञानशून्योयं वराकः । नित्यैव 'अपवर्गे तृतीया' । 3 अवतंसविलासेन दुर्ललिता ( धृष्टा, 'सिर चढी' इति भाषा ) ।

**पाठा०**—१ पारिजातकुसुम. २ नन्दनवन. ३ सुसदृशः, तु सदृशः. ४ प्रसादीक्रियताम्. ५ शिखरे. ६ विलोचन.

दोषः सखे, क्रियतामस्याः प्रणयपरिग्रहः' इत्यभिधाय बलादियमनिच्छतोऽप्यस्य कर्णपूरीकृता। तदेतत्कात्स्न्र्येन योऽयम्, यस्य चायम्, या चेयम्, यथा चास्य श्रवणशिखरं समारूढा तत्सर्वमावेदितम्।' इत्युक्तवति तस्मिन्स तपोधनयुवा किंचिदुपदर्शितस्मितो मामवादीत्—'अयि कुतूहलिनि, किमनेन प्रश्नायासेन। यदि रुचितसुरभिपरिमला गृह्यतामियम्' इत्युक्त्वा समुपसृत्यात्मीयाच्छ्रवणादपनीय कलैरलिकुलक्वणितैः प्रारब्धरतिसमागमप्रार्थनामिव मदीये श्रवणपुटे तामकरोत्। मम तु तत्करतलस्पर्शलोभेन तत्क्षणमपरमिव पारिजातकुसुममवतंसस्थाने पुलकमासीत्। स च मत्कपोलस्पर्शसुखेन तरलीकृताङ्गुलिजालकात्करतलादक्षमालां लज्जया सह गलितामपि नाज्ञासीत्। अथाहं तामसंप्राप्तामेव भूतलमक्षमालां गृहीत्वा सलीलं तद्भुजपाशसंदानितकण्ठग्रहसुखमिवानुभवन्ती दर्शितापूर्वहारलतालीलां कण्ठाभरणतामनयम्।

इत्थंभूते च व्यतिकरे छत्रग्राहिणी मामवोचत्—'भर्तृदारिके, स्नाता देवी। प्रत्यासीदति

---

मञ्जर्याः को दोषः। प्रणयेन स्नेहेन परिग्रहः स्वीकारः क्रियतां विधीयतामिति मयाभिधायोक्त्वानिच्छतोऽप्यवाञ्छतोऽपीयं अस्य कर्णपूरीकृता श्रवणाभरणीकृता। **तदिति**। तस्माद्धेतोस्तदेतत्पृच्छाविषयीकृतं कात्स्न्र्येन साकल्येन मया सर्वमावेदितं कथितम्। तदेतत्किमित्यभिप्रायेणाह—**योऽयमित्यादि**। योऽयं कुमारः, येयं मञ्जरी, यथा येन प्रकारेणास्य श्रवणशिखरं कर्णप्रान्तं समारूढा प्राप्ता। **इतीति**। तस्मिन्मुनावित्युक्तवति कथितवति सति। **स इति**। स पुण्डरीकस्तपोधनयुवा किंचिदीषदुपदर्शितं स्मितमदष्ठरदं हास्यं येनैवंभूतो मामवादीत्प्रत्यवोचत्। अयीति संबोधने। अयि कुतूहलिनि, अनेन प्रश्नायासेन पृच्छापरिश्रमेण किम्। **यदीति**। यदि रुचितो रुचिविषयीभूतः सुरभिपरिमलो यस्या एवंविधेयं तदा गृह्यतां ग्रहणविषयीक्रियताम्। इति पूर्वोक्तमुक्त्वा समुपसृत्य समीपमागत्यात्मीयात्स्वकीयाच्छ्रवणात्कर्णादपनीय दूरीकृत्य मदीये श्रवणपुटे तां मञ्जरीमकरोदघटयत्। **कलैरिति**। कलैर्मनोज्ञैरलिकुलक्वणितैर्मधुकरकुलशब्दितैः। **प्रारब्धेति**। प्रारब्धा प्रस्तुता रतिसमागमस्य संभोगसमागमस्य प्रार्थना याचना ययैवंभूतामिव। एतेन स्वानुरक्तिः प्रदर्शिता। **मम त्विति**। मम तु। तु पुनरर्थकः। तस्य यत्करतलं तत्स्पर्शलोभेन तत्तृष्णया तत्क्षणमवतंसस्थाने पुलकं अपरं पारिजातकुसुममिवासीत्। एतेन द्वितीयकर्णेऽपि तच्छोभा सूचिता। **स चेति**। स पुण्डरीको मत्कपोलस्पर्शसुखेन गल्लातपरप्रदेशाश्लेषसातेन तरलीकृतं कम्पनीकृतमङ्गुलिजालकं यस्यैवंभूतात्करतलाद्धस्ततलाल्लज्जया त्रपया सह गलितां च्युतामप्यक्षमालां जपमालां नाज्ञासीन्न ज्ञातवान्। तदनुरक्तं ज्ञात्वा तस्य पुण्डरीकस्य यो भुजपाशो बाहुपाशस्तेन संदानितः संयतो यः कण्ठग्रहः कण्ठालिङ्गनं तज्जनितं यत्सुखं तत्सदृशमिव। अत्रेवशब्दः सादृश्यार्थः। तदुक्तमलंकारशेखरे—'भवन्तीवादिशब्दाश्च सादृश्यप्रतिपत्तये'। अनुभवन्त्यनुभवविषयीकुर्वन्ती कण्ठाभरणतां निगरणभूषणतामनयमानीतवती। कीदृशीम्। दर्शिता प्रकटीकृतापूर्वहारलताया लीला यस्यां सा ताम्।

**इत्थमिति**। इत्थंभूत एतादृशे व्यतिकरे परस्परानुरागातिशये छत्रग्राहिण्यातपत्रधारिणी मामवोचदब्रवीत्। किमुवाचेत्याह—**भर्त्रिति**। हे भर्तृदारिके हे राजपुत्रि, स्नाता कृतस्नाना देवी त्वन्माता वर्तते।

---

**टिप्प०**—1 धिक् टीकाकारम्। न खलु मञ्जर्या दोषः प्रसक्तो यदेवमुच्येत। तस्मात्—'को दोषः अर्थात् वनदेवताया अनुरोधस्वीकारे (मञ्जरीग्रहणे) को दोषः' इत्यर्थः। 2 अर्थात् कर्णे। 3 इयमप्यन्युत्पत्तिः। बाहुपाशेन संदानितो यः कण्ठस्तस्य ग्रहणसुखम् (तदालिङ्गनसुखम्) अनुभवन्तीव इत्यर्थ उचितः।

---

**पाठा०**—१ योऽयं या चेयम्. २ श्रवणशिखरे. ३ प्रश्नाशयेन. ४ गृह्यताम्. ५ हृदयम्.

गृहगमनकालः । तत्क्रियतां मज्जनविधिः' इति । अहं तु तेन तस्या वचनेन नवग्रहा करिणीव प्रथमाङ्कुशपातेनानिच्छया कथंकथमपि समाकृष्यमाणा तन्मुखाल्लावण्यामृतपङ्कमग्नामिव कपोलपुलककण्टकजालकलग्नामिव मदनशरशलाकाकीलितामिव सौभाग्यगुणस्यूतामिव अतिकृच्छ्रेण दृष्टिं[1] समाकृष्य स्नातुमुदचलम् । उच्चलितायां च मयि द्वितीयो मुनिदारकस्तथाविधस्तस्य[2] धैर्यस्खलितमालोक्य किंचित्प्रकटितप्रणयकोप इवावादीत्—'सखे पुण्डरीक, नैतदनुरूपं भवतः । क्षुद्रजनक्षुण्ण एष मार्गः । धैर्यधना हि साधवः । किं यः कश्चन प्राकृत इव विक्लवीभवन्तमात्मानं न रुणत्सि । कुतस्तवापूर्वोऽयमाद्येन्द्रियोपप्लवः,[3] येनास्येवं[4] कृतः । क्व ते तद्धैर्यम्, क्वासाविन्द्रियजयः, क्व तद्वशित्वम्, चेतसः क्व सा प्रशान्तिः, क्व तत्कुलक्रमागतं ब्रह्मचर्यम्, क्व सा सर्वविषयनिरुत्सुकता, क्व ते गुरूपदेशाः, क्व तानि श्रुतानि, क्व ता वैराग्यबुद्धयः, क्व तदुपभोगविद्वेषित्वम्, क्व सा सुखपराङ्मुखता,

---

अथ च गृहगमनकालः सद्मव्रजनसमयः प्रत्यासीदति[1] विघ्नितो भवति । अतो मज्जनविधिः स्नानविधिः क्रियतां विधीयताम् । **अहं त्विति** । अहं तस्याश्छत्रधारिण्यास्तेन वचनेन प्रथमाङ्कुशपातेनाद्यसृणिप्रहारेण नवः प्रत्यग्रो[2] यस्या एवंविधा करिणी हस्तिनी तद्वदिव कथंकथमपि महता कष्टेनानिच्छयानीहया समाकृष्यमाणा दृष्टिं चक्षुरतिकृच्छ्रेणातिकष्टेन समाकृष्य स्नातुमुदचलमुदव्रजम् । कीदृशीमिव । लावण्यामृतमेव पङ्कः कर्दमस्तत्र मग्नामिव । **कपोलेति** । कपोलयोः पुलकलक्षणा ये कण्टकास्तेषां जालकं तत्र लग्नामिव । **मदनेति** । मदनस्य कंदर्पस्य शरा बाणास्तेषां शलाका ईषिकास्ताभिः कीलितामिव यन्त्रितामिव । **सौभाग्येति** । सुभगस्य भावः सौभाग्यं तल्लक्षणो यो गुणस्तेन स्यूतामिवान्योन्यश्लिष्टामिव । **उच्चलितायामिति** । मय्युच्चलितायां प्रचलितायां सत्याम् । चकारः समुच्चयार्थः । द्वितीयः कपिञ्जलो मुनिदारकस्तथाविधस्तादृशस्तस्य[3] पुण्डरीकस्य धैर्यस्खलितं सत्त्वस्खलनामालोक्य वीक्ष्य किंचिदीषत्प्रकटित आविष्कृतः प्रणयकोपः स्नेहकोपो येन तत्सदृश इवावादीदवोचत् । रोषोक्तावतीव वैरस्यं स्यादिति भावः । किं तदित्याह—**सखे इति** । हे सखे पुण्डरीक, भवतस्तव नैतदनुरूपं योग्यम् । क्षुद्रजना नीचलोकास्तैः क्षुण्ण आचीर्ण एष मार्गः पन्थाः । भवत इत्यत्रापि संबध्यते । हि यस्मात्कारणात्साधवो मुनयो धैर्यमेव धनं द्रव्यं येषामेवंविधा भवन्ति । यः कश्चनानिर्दिष्टाभिधानः प्राकृतः पामरस्तद्वदिव विक्लवीभवन्तं विह्वलीभवन्तमात्मानं क्षेत्रज्ञं किं न रुणत्सि किं न निरोधं करोषि । अपूर्वोऽननुभूत आद्यः[4] प्रथम इन्द्रियोपप्लवः करणोपद्रवोऽयं प्रत्यक्षोपलभ्यमानस्तव भवतः कुतः । किंनिमित्तक इत्यर्थः । **येनेति** । येनेन्द्रियोपप्लवेनैवं कृतः शिथिलतां नीतोऽसि । त्वमिति शेषः । तदेव दर्शयन्नाह—**क्वेत्यादि** । ते तव तद्धैर्यं क्व । तथेन्द्रियाणां करणानामसौ जयो निरोधः क्व । तथा तदनिर्वचनीयस्वरूपं वशित्वं स्वतन्त्रत्वं क्व । तथा चेतसश्चित्तस्य सा प्रशान्तिः क्व । तथा तत्कुलक्रमागतं कुलपरिपाट्यागतं ब्रह्मचर्यं कामविरतिः क्व । तथा सा सर्वविषयेषु समग्रेन्द्रियार्थेषु निरुत्सुकता निरुत्साहता क्व । तथा गुरूणां हिताहितोपदेशदेष्ट्णामुपदेशा हितशिक्षाः क्व । तथा तानि पूर्वोक्तानि श्रुतानि ज्ञानानि क्व । तथा ताः सर्वाधिका वैराग्यं विरक्तता तस्या बुद्धयः प्रतिभाः क्व । तथा तासामङ्गनानां स्त्रीणामुपभोगः पुनःपुनरासेवनं तस्मिन्विद्वेषित्वं वैरित्वं क्व । तथा सुखात्सौख्यात्पराङ्मुखता पराचीनता क्व । तथा तपसि व्रतविशेषेऽसावभि-

---

**टिप्प०—1 प्रत्यासन्नः निकटगतः अर्थात् उपस्थित इत्याशयः । 2 अक्षराणि च्युतानीति प्रतीयते । नवः ग्रहः ग्रहणं ( बन्धने आनयनम् ) यस्याः सा इत्यर्थः । 3 ग्रन्थस्वारस्यानभिज्ञता सेयम् । 'तथाविधम्' इति पाठेन 'तादृशं धैर्यस्खलितम्' इति योजनमेव ग्रन्थानुकूलम् । 4 हन्त चूर्णीकृतमेव स्वारस्यम् ! 'अद्य' इत्येवोचितम्, अपूर्वपदेन पौनरुक्त्यात् ।**

---

पाठा०—१ आकृष्य. २ तथाविधम्. ३ अद्य. ४ केन.

क्वासौ तपस्यभिनिवेशः, क्व सा भोगानामुपर्यरुचिः, क्व तद्यौवनानुशासनम्, सर्वथा निष्फला प्रज्ञा, निर्गुणो धर्मशास्त्राभ्यासः, निरर्थकः संस्कारः, निरुपकारको गुरूपदेशविवेकः, निष्प्रयोजना प्रबुद्धता, निःकारणं ज्ञानम्, यदत्र भवादृशा अपि रागाभिषङ्गैः कलुषीक्रियन्ते । प्रमादैश्चाभिभूयन्ते । कथं करतलाद्गलितामपहृतामक्षमालामपि न लक्षयसि । अहो विगतचेतनत्वमपहृतानामेवम् । इदमपि तावद्ध्रियमाणमनयानार्यया निवार्यतां हृदयम्' इत्येवमभिधीयमानश्च तेन किंचिदुपजातलज्ज इव प्रत्यवादीत्—'सखे कपिञ्जल, किं मामन्यथा संभावयसि । नाहमेवमस्या दुर्विनीतकन्यकाया मर्षयाम्यक्षमालाग्रहणापराधमिमम्' इत्यभिधायालीककोपकान्तेन प्रयत्नविरचितभीषणभ्रुकुटिभूषणेन चुम्बनाभिलाषस्फुरिताधरेण मुखेन्दुना मामवदत्—'चञ्चले, प्रदेशादस्मादिमामक्षमालामदत्त्वा पदात्पदमपि न गन्तव्यम्'

---

निवेश आग्रहः क्व । तथा भोगानां विषयाणामुपरि साऽरुचिरस्पृहा क्व । तथा तदनिर्वचनीयस्वरूपं यौवनस्य तारुण्यस्यानुशासनं नियन्त्रणं क्व । **सर्वथेति ।** सर्वथा सर्वप्रकारेण प्रज्ञा प्रतिभा निष्फला निष्प्रयोजना । **निर्गुण इति ।** धर्मशास्त्राणां स्मृत्यादीनामभ्यासो भूयोभूयस्तदभ्यसनं स एव निर्गुणः । जाड्यापहारलक्षणगुणरहित इत्यर्थः । **निरर्थकेति ।** संस्कारो ब्राह्मण्यापादनविधिः स एव निरर्थकः । यदुद्दिश्य क्रियते तदनाप्तेः । **निरुपेति ।** गुरूपदेशाद्यो विवेकः पृथगात्मता स निरुपकारकः । निरर्थक इत्यर्थः । **निरिति ।** प्रबुद्धता प्रेक्षावत्ता निःप्रयोजना निर्हेतुका । **निरिति ।** ज्ञानं श्रुतादि निःकारणं निर्निमित्तकम् । **यदत्रेति ।** यदिति हेत्वर्थे । अत्रेति । अस्मिन्नवसरे रागाभिषङ्गैरिच्छाभिष्वङ्गैर्भवादृशा अपि त्वत्सदृशा अपि कलुषीक्रियन्ते मलिनीक्रियन्ते । **प्रमादैश्चेति ।** प्रमादैर्विषयादिभिरभिभूयन्ते पराभूयन्ते । चकारः समुच्चयार्थः । तदेव दर्शयति—**कथमिति ।** करतलाद्धस्ततलाद्गलितां च्युतां तथा तयापहृतां गृहीतामक्षमालामपि कथं न लक्षयसि कथं न जानासि । अहो इत्याश्चर्ये । अपहृतानां कामपीडितानामेवं पूर्वोक्तप्रदर्शितरीत्या विगतचेतनत्वं नष्टचेतनत्वम् । **इदमिति ।** तावदादाविदमपि हृदयं चित्तमनयानार्यया ह्रियमाणमाकृष्यमाणं निवार्यतां दूरीक्रियतामित्येवं तेन कपिञ्जलेनाभिधीयमानः कथ्यमानः किंचिदीषदुपजाता प्रादुर्भूता लज्जा त्रपा यस्य स इव प्रत्यवादीत्प्रत्यवोचत् । **सखे इति ।** हे सखे कपिञ्जल, किमिति प्रश्ने । मामन्यथा तन्मनस्कत्वेन संभावयसि संभावनाविषयीकरोषि परमेतस्यां मन्मनोविकृतिर्नास्ति, तथाक्षमालाग्रहणनिमित्तकरोषोऽप्यन्यथा मुनीनां समदर्शित्वं, न स्यादिति भावः । अथ चेत्कपिञ्जल, तव शङ्कितं मनस्तदेतस्या दुर्विनीतकन्यकाया इममक्षमालाग्रहणापराधं जपमालास्वीकरणागसं नाहं मर्षयामि सहिष्ये । इति पूर्वोक्तमभिधायोक्त्वा मुखेन्दुना वक्रलक्षणचन्द्रेण मामिति प्रत्यवोचत्प्रत्यब्रवीत् । अथ मुखेन्दुं विशेषयन्नाह—**अलीकेति ।** अलीको मिथ्या न तु वास्तवः एवंविधो यः कोपः क्रोधस्तेन कान्तेन मनोहरेण । **प्रयत्नेति ।** प्रयत्नेन बलात्कारेण । कोपाभावादिति भावः । विरचिता निर्मिता भीषणा भैरवा भ्रुकुटिः सकोपभ्रूविकृतिः सैव भूषणं यस्मिन् तेन । **चुम्बनेति ।** चुम्बनं संबन्धविशेषस्तस्याभिलाष इच्छाविशेषस्तेन स्फुरितः कम्पितोऽधर ओष्ठो यस्मिन् । किमुवाचेत्याह—**चञ्चलेति ।** हे चञ्चले, अस्मात्प्र-

---

टिप्प०—1 उचितानुचितपरिज्ञानरूपो यो गुणस्तेन रहित इत्यर्थ उचितः । एतत्पूर्वम् 'एव'निवेशस्तु घोरमज्ञानम्, विपरीतार्थबोधकत्वात् । एवमग्रेपि । 2 स्वकर्तव्यात् स्खलनरूपैः । 3 टीकाकारः सर्वथा ग्रन्थधूमकेतुः! 'अहो विगतचेतनत्वम्, अपहृता नामेयम्' इत्येव पाठः । इयं अक्षमाला तु अनया (कन्यया) अपहृता नाम बलाल्लुण्ठिता नाम, इदानीम् अनार्ययाऽनया अपह्रियमाणं हृदयमपि निवारय । इति व्याख्या । एकस्य अपहरणे जाते संप्रति अपह्रियमाणस्य रक्षणावश्यकत्वात् ।

---

पाठा०—१ क्व सा संयमिता क्व. २ सज्ञानाम्. ३ यत्र. ४ प्रमोदैः. ५ अपहृता नामेयम्. ६ अपह्रियमाण. ७ चपले.

इति । तच्च श्रुत्वाहमात्मकण्ठादुन्मुच्य मकरध्वजलास्यारम्भलीलापुष्पाञ्जलिमेकावलीम् 'भगवन्, गृह्यतामक्षमाला' इति मन्मुखासक्तदृष्टेः शून्यहृदयस्यास्य प्रसारिते पाणौ निधाय स्वेदसलिलस्नातापि पुनः स्नातुमवातरम् । उत्थाय च कथमपि प्रयत्नेन निम्नगेव प्रतीपं नीयमाना सखीजनेन बलादम्बया सह तमेव चिन्तयन्ती स्वभवनमयासिषम् ।

गत्वा च प्रविश्य कन्यान्तःपुरं ततः प्रभृति तद्विरहविधुरा किमागतास्मि, किं तत्रैव स्थितास्मि, किमेकाकिन्यस्मि, किं परिवृतास्मि, किं तूष्णीमस्मि, किं प्रस्तुतालापास्मि, किं जागर्मि, किं सुप्तास्मि, किं रोदिमि, किं न रोदिमि, किं दुःखमिदम्, किं सातमिदम्, किमुत्कण्ठेयम्, किं व्याधिरयम्, किं व्यसनमिदम्, किमुत्सवोऽयम्, किं दिवस एषः, किं निशेयम्, कानि रम्याणि, कान्यरम्याणीति सर्वं नावागच्छम् । अविज्ञातमदनवृत्तान्ता च क गच्छामि, किं करोमि, किं शृणोमि, किं पश्यामि, किमालपामि, कस्य कथयामि, कोऽस्य

---

देशादिमामक्षमालामदत्त्वासमर्प्य पदात्पदमपि न गन्तव्यम् । **तच्चेति** । तत्पूर्वोक्तं श्रुत्वाकर्ण्यात्मकण्ठात्स्वकीयनिगरणादहं मकरध्वजस्य कंदर्पस्य लास्यारम्भलीला नाट्यप्रारम्भक्रीडा तस्यां पुष्पाञ्जलिरेवंभूतामेकावलीं मुक्ताप्रालम्बमक्षमालेति कृत्वा हे भगवन्, गृह्यतामुपादीयतां इति अस्य मुनेः प्रसारिते विस्तारिते पाणौ तां निधाय (सं)स्थाप्य स्वेदसलिलेन श्रमवारिणा स्नातापि कृतस्नानापि पुनः पुनः स्नातुमवातरमवतीर्णवती । अथ मुनिं विशेषयन्नाह—**शून्येति** । शून्यं हृदयं चेतो यस्य स तथा तस्य । तत्र हेतुमाह—**मन्मुखेति** । मदानने आसक्ता लग्ना दृष्टिर्यस्य स तथा तस्य । **उत्थायेति** । उत्थानं कृत्वा कथमपि महता प्रयत्नेन सखीजनेन वयस्याजनेन बलाद्धठात्प्रतीपं पश्चान्नीयमाना प्राप्यमाणा । तत्र दृष्टान्तमाह—**निम्नगेति** । यथा निम्नगा नदी महाप्रयत्नेनैव पश्चान्नीयते, एवंविधाहमम्बया जनन्या सह सार्धं तमेव मुनिकुमारकं चिन्तयन्ती ध्यायती । अत्रैवकारोऽन्ययोगव्यवच्छेदार्थः । तदुक्तम्—'अयोगं योगमपरैरत्यन्तायोगमेव च । व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेचकः' इति । स्वभवनं निजसद्मायासिषमागतवती ।

**गत्वेति** । गत्वैत्य । स्वभवनमिति शेषः । कन्यान्तःपुरं कन्यावरोधं प्रविश्य प्रवेशं कृत्वा । चकारः पुनरर्थकः । ततःप्रभृति तद्दिनादारभ्य तस्य पुण्डरीकस्य विरहेण वियोगेन विधुरा व्याकुला सत्यहमिति सर्वं नावागच्छं नावागममिति दूरेणान्वयः । इतिशब्दार्थमाह—**किमागतेति** । किमिति सर्वत्र वितर्कार्थे । अहमागतास्मि गृहं समायातास्मि किमिति पूर्ववत् । तत्रैवाच्छोदसरस्तीरे स्थितास्मि । किमेकाकिन्यसहायास्मि । किं परिवृता परिवारान्वितास्मि । किं तूष्णीमस्मि । किं प्रस्तुतः प्रारब्ध आलापः संलापो ययैवंविधास्मि । किं जागर्मि निद्राक्षययुक्तास्मि । किं सुप्तास्मि कृतनिद्रास्मि । किं रोदिमि । किं न रोदिमि । किं दुःखमिदम् । किं सातमिदं[1] सौख्यमिदम् । किमुत्कण्ठेयम् । किमयं व्याधिरामयः । किमिदं व्यसनं[2]मस्यासक्तिः । किमयमुत्सवो महः । किमेष दिवसो दिनम् । किमियं निशा रात्रिः । कानि वस्तूनि रम्याणि शोभनानि । कानि च तद्विपरीतानि । अरम्याणीत्यर्थः । **अवीति** । अविज्ञातोऽनाकलितो मदनस्य कंदर्पस्य वृत्तान्त उदन्तो यया सैवंभूताहमिति सर्वं नाज्ञासिषं न ज्ञातवती । इतिशब्दार्थमाह—**केति** । क गच्छामि व्रजामि । किं करोम्यनुतिष्ठामि । किं शृणोम्याकर्णयामि । किं पश्यामि विलोकयामि । किमालपामि किं वदामि । कस्य कथयामि निवेदयामि । कोऽस्य

---

**टिप्प०—1 टीकाकारेण स्वाभ्यस्तमुपात्तम् । वास्तवे तु 'सुखमिदम्' इत्येव पदशय्यानुकूलः पाठः।**
2 व्यसनं विपत् इत्येव व्याख्योचिता ।

---

**पाठा०**—१ आत्मकण्ठान्मकर. २ प्रस्तुत. ३ सुखम्.

प्रतीकार इति सर्वं च नाज्ञासिषम्। केवलमारुह्य कुमारीपुरप्रासादं विसर्ज्य च सखीजनं द्वारि निवारिताशेषपरिजनप्रवेशा, सर्वव्यापारानुत्सृज्यैकाकिनी मणिजालगवाक्षनिक्षिप्तमुखी, तामेव दिशं तत्सनाथतया प्रसाधितामिव[1] महारत्ननिधानाधिष्ठितामिव अमृतरससारसागरपूरप्लाविताम्[2] इव पूर्णचन्द्रोदयालंकृतामिव दर्शनसुभगामीक्षमाणा, तस्माद्दिगन्तरादागच्छन्तमनिलमपि वनकुसुमपरिमलमपि शकुनिध्वनिमपि तद्वार्तां प्रष्टुमीहमाना, तद्वल्लभतया तपःक्लेशायापि स्पृहयन्ती, तत्प्रीत्येव गृहीतमौनव्रता, स्मरजनितपक्षपाता च तत्परिग्रहान्मुनिवेषस्याग्राम्यतां, तदास्पदतया यौवनस्य चारुतां तच्छ्रवणसंपर्कात्पारिजातकुसुमस्य मनोहरतां तन्निवासात्सुरलोकस्य रम्यतां तद्रूपसंपदा कुसुमायुधस्य दुर्जयतामध्यारोपयन्ती, दूरस्थस्यापि[3] कमलिनीव

---

प्रतीकारः प्रतिक्रिया। अथ विरहेण विप्रलम्भपुष्टिं प्रदर्शयन्नाह—**केवलेति**। केवलमन्यनिरपेक्षम्। कुमारीणां पुर इति। पदैकदेशे पदसमुदायोपचारादन्तःपुरप्रासादमवरोधगृहमारुह्यारोहणं कृत्वा सखीजनं आलीजनं विसर्ज्य दूरीकृत्य द्वारि प्रतोल्यां निवारितो निषिद्धोऽशेषः समग्रः परिजनस्य परिच्छदस्य प्रवेश आगमनं यया सा। तथा सर्वव्यापारान्समग्रकृत्यान्युत्सृज्य विमुच्यैकाकिन्यद्वितीया मणिनिर्मितानि जालानि यस्मिन्नेवंभूतो यो गवाक्षो वातायनस्तत्र निक्षिप्तं स्थापितं मुखमाननं यया सैवंभूता। तामेव मुनिकुमारकाधिष्ठितां दिशं ककुभमीक्षमाणा विलोकमाना। अथ तद्वस्तुजन्यसंतोषजनकत्वसाम्येन तामेव दिशमुत्प्रेक्षते—**तत्सनाथेति**। तत्सहिततयेत्यर्थः। प्रसाधितामिव। भूषितामिव। महान्ति रत्नानि यस्मिन्नेवंभूतं यन्निधानं[1] कुनाभिस्तेनाधिष्ठितामाश्रितामिव अमृतरसेन पीयूषरसेन सारः[2] प्रधानो यः सागरः समुद्रस्तस्य पूरः प्लवस्तेन प्लावितामिवाकीर्णामिव। पूर्णः समग्रो यश्चन्द्रः शशाङ्कस्तस्योदय उद्गमस्तेनालंकृतामिव भूषितामिव। दर्शनेऽवलोकने सुभगां मनोहराम्। कामाभिभूतस्य चेतनाचेतनसाधारण्यं प्रदर्शयन्नाह—**तस्मादिति**। तस्मान्मुनिकुमारकाधिष्ठिताद्दिगन्तरादागच्छन्तमायान्तमनिलमपि, तथा वनकुसुमपरिमलमप्यरण्यपुष्पगन्धमपि, तथा शकुनिध्वनिमपि पतत्रिरुतमपि तस्य पुण्डरीकस्य वार्तां प्रवृत्तिं प्रष्टुं प्रश्नविषयीकर्तुमीहमाना वाञ्छमाना[3] तस्य मुनेर्वल्लभतया तपःक्लेशायापि स्पृहयन्ती वाञ्छन्ती। अपिशब्दः प्रातिकूल्यं निराकरोति। तदायत्ततया प्रतिकूलमप्यनुकूलम्, अनुकूलमपि न स्वतः, किंतु तदायत्तत्वादित्याह—**स्मरेणेति**। मुनित्वेन ज्ञातेऽपि स्मरेण कंदर्पेण जनितो विहितः पक्षपातोऽङ्गीकारो यस्यां सा तथा तस्य[4] मुनेः प्रीत्या स्नेहेन गृहीतमात्तं मौनव्रतं यया सा, तेन मुनिना परिग्रहः स्वीकारस्तस्मान्मुनिवेषस्य तापसनेपथ्यस्याग्राम्यतां साधुताम्। स एवास्पदं यस्य तस्य भावस्तत्ता तया यौवनस्य तारुण्यस्य चारुतां मनोहरताम्। तस्य मुनेर्यः श्रवणसंपर्कः कर्णसंबन्धस्तस्मात्पारिजातकुसुमस्य कल्पतरुपुष्पस्य मनोहरतां मञ्जुलताम्। तस्य मुनेर्निवासस्तस्मात्सुरलोकस्य देवलोकस्य रम्यतां चारुताम्। तस्य मुनेर्या रूपसंपत्सौन्दर्यसमृद्धिस्तया कुसुमायुधस्य दुर्जयतां दुर्जेयतामध्यारोपयन्त्यध्यारोपं कुर्वती। दूरस्थस्यापि दविष्ठस्यापि तस्यैव मुनिकुमारस्याभिमुखी संमुखी। कस्य केव। सवितुः सूर्यस्य कमलिनीव नलिनीव। तथा चन्द्रमसः कुमुदबान्धवस्य सागरवेलेव समुद्रस्याम्भसो वृद्धिरिव। तथा

---

टिप्प०—1 निधिः। 2 वास्तवे तु 'अमृतरससागरपूर' इत्येव पाठः। सारपदस्याऽर्थापोषकत्वात्। 3 वाञ्छन्तीत्यर्थः। 4 भाग्यहीनः सर्वमस्पष्टं चकार। तस्मात्–तस्य प्रीत्येव गृहीतमौनव्रता अर्थात्तूष्णीमवस्थिता, इति पृथग्विशेषणम्। स्मरजनितपक्षपाता चेति हेतुगर्भं विशेषणम्। अर्थात् स्मरेण तत्संबन्धिषु वस्तुषु पक्षपातो जनितः, अत एव तस्य (पुण्डरीकस्य) परिग्रहणात् (हेतोः) मुनिवेषस्य अन्येषां दृष्टौ ग्राम्यत्वेपि अग्राम्यताम् (अध्यारोपयन्ती), एवं यौवनस्य चारुतामित्यादि।

---

पाठा०—१ इव कुसुमितामिव महारत्न. २ अमृतरससागरप्लाविताम्, ३ दूरतः स्थितस्य; दूरस्था.

सवितुः सागरवेलेव चन्द्रमसः मयूरीव जलधरस्य तस्यैवाभिमुखी, तथैव तां तद्विरहातुरजीवितोद्गमरक्षावलीमिवाक्षावलीं कण्ठेनोद्वहन्ती, तथैव च तया प्रस्तुततद्रहस्यालापयेव कर्णलग्नया पारिजातमञ्जर्या तथैव च तेन तत्करतलस्पर्शसुखजन्मना कदम्बमुकुलकर्णपूरायमाणेन रोमाञ्चजालेन कण्टकितैककपोलफलका निष्पन्दमतिष्ठम् ।

अथ ताम्बूलकरङ्कवाहिनी मदीया तरलिका नाम मयैव सहागता स्नातुमासीत् । सा च पश्चाच्चिरादिवागत्य तथावस्थितां शनैःशनैर्मामवादीत्—'भर्तृदारिके, यौ तौ तापसकुमारकौ दिव्याकारावस्माभिरच्छोदसरस्तीरे दृष्टौ, तयोरेको येन भर्तृदुहितुरियं कर्णावतंसीकृता सुरतरुमञ्जरी[1] स तस्माद्द्वितीयादात्मनो रक्षन्दर्शनमतिनिभृतपदः कुसुमितलतासंतानगहनान्तरेणोपसृत्य मामागच्छन्तीं पृष्ठतो भर्तृदारिकामुद्दिश्याप्राक्षीत्—'बालिके, केयं कन्यका, कस्य वापत्यम्, किमभिधाना, क्व वा गच्छति' इति । मयोक्तम्—'एषा खलु भगवतः श्वेतभानोरंशु[2]संभूतायामप्सरसि गौर्यां समुत्पन्ना देवस्य सकलगन्धर्वमुकुटमणिशलाकाशिखरो-

---

जलधरस्य मेघस्य मयूरीव नीलकण्ठपत्नीव । **तथैवेति** । यथा तेन कुमारेण कण्ठे न्यस्ता तथैव, तस्य विरहेण वियोगेनातुरं पीडितं यज्जीवितं प्राणितं तस्योद्गमो निर्गमस्तस्य रक्षावलीमिवाक्षावलीं जपमालां कण्ठेन निगरणेनोद्वहन्ती धारयन्ती । **तथैवेति** । तथैव पूर्वोक्तप्रकारेण तया कर्णलग्नया श्रवणप्राप्तया प्रस्तुतः प्रारब्धस्तस्या(स्य)रहस्यालापो ययैवंविधयैव पारिजातमञ्जर्या । तथैव च तेन पूर्वोक्तप्रकारेण तस्य यत्करतलस्पर्शस्तस्माद्यत्सुखं सातं तेन जन्मोत्पत्तिर्यस्यैवंभूतेन कदम्बस्य नीपस्य मुकुलं कुड्मलं तस्य कर्णपूरायमाणेन कर्णपूरवदाचरमाणेन रोमाञ्चजालेन रोमहर्षणसमूहेन कण्टकितं कण्टकवदाचरितमेकमद्वितीयं कपोलफलकं यस्याः सा तथा निष्पन्दं निश्चलमतिष्ठं स्थितवती ।

अथेत्यानन्तर्ये । मदीया तरलिका । नामेति कोमलामन्त्रणे । ताम्बूलकरङ्कवाहिनी मयैव सह स्नातुमाप्लवं कर्तुमागता समायातासीत् । **सा चेति** । सा ताम्बूलकरङ्कवाहिनी पश्चान्मद्गृहागमनानन्तरं चिरादिव चिरसदृशादिवागत्यैत्य तथावस्थिताम् । विरहातुरामित्यर्थः । मां शनैःशनैर्मन्दंमन्दमवादीदवोचत् । किमुवाचेत्याह—**भर्त्रिति** । हे भर्तृदारिके हे राजपुत्रि । **ताविति** । एकः पुण्डरीकस्तत्सहानुगतश्च कपिञ्जल इमौ द्वौ तापसकुमारकौ दिव्याकारौ मनोहराकृती अस्माभिरच्छोदसरस्तीरे यौ दृष्टाववलोकितौ, तयोर्मध्य एकः । कपिञ्जलं निराकुर्वन्नाह—**येनेति** । येन कुमारकेण भर्तृदुहितुर्भवत्या इयं सुरतरुमञ्जरी पारिजातवल्लरी कर्णावतंसीकृता श्रवणोत्तंसीकृता । **स इति** । स मुनिः पुण्डरीकस्तस्मात्कपिञ्जलादात्मनः स्वस्य दर्शनं वीक्षणं रक्षन्गोपयन्नतिनिभृतान्यतिनिश्चलानि पदानि यस्यैवंभूतः । कुसुमिताः पुष्पिता या लता वल्ल्यस्तासां संतानं परम्परा तेन गहनं निबिडं यदन्तरं विचालं तेन मामागच्छन्तीं पृष्ठतः पश्चाद्भाग उपसृत्य समीपमागत्य भर्तृदारिकामुद्दिश्याभिलक्ष्याप्राक्षीत्प्रश्नमकार्षीत् किं प्रश्नं कृतवानित्याह—**बालिके इति** । हे बालिके हे कन्यके, केयं कन्यका । कस्य वापत्यं प्रजा । किमभिधाना किंनाम्नी । क्व वा गच्छति व्रजति । त्वया किमुक्तमित्याह—**मयेति** । मयेत्युक्तं कथितम् । इतिवक्तव्यमाह—**एषेति** । एषा खलु निश्चयेन भगवतः श्वेतभानोर्[2]गन्धर्वाधिपतेरंशुसंभूतायां सोममयूखसंभूतायामप्सरसि गौर्यां समुत्पन्ना संजाता गन्धर्वाधिपतेर्हंसस्य दुहितात्मजा । अथ हंसं विशिनष्टि—**सकलेति** । सकलाः समग्रा ये गन्धर्वा देवगायनास्तेषां मुकुटेषु मणिदृढबन्धार्थं शलाकाः स्वर्ण-

---

**टिप्प०**—1 निर्गच्छतो जीवस्य रक्षणार्थम् अभिमन्त्रितां मालामिव । 2 चन्द्रस्य । गन्धर्वाधिपतेरिति टीका तु प्रलापमात्रम् । एवंविधोपि मन्दभाग्यष्टीकयतीति तु दुर्दैवं बाणस्य ।

---

पाठा०—१ सुरतरुकुसुममञ्जरी. २ अंशुभूतायाम्; अंशभूतायाम्.

ल्लेखमसृणितचरणनखचक्रस्य प्रणयप्रसुप्तगन्धर्वकामिनीकपोलपत्रलतालाञ्छितभुजतरुशिखरस्य पादपीठीकृतलक्ष्मीकरकमलस्य गन्धर्वाधिपतेर्हंसस्य दुहिता महाश्वेता नाम गन्धर्वाधिवासं हेमकूटाचलमभिप्रस्थिता' इति, कथिते च मया किमपि चिन्तयन्मुहूर्तमिव तूष्णीं स्थित्वा विगतनिमेषेण चक्षुषा चिरमभिवीक्षमाणो मां सानुनयमर्थितामिव दर्शयन्पुनराह—'बालिके, कल्याणिनी तवाविसंवादिन्यचपला बालभावेऽप्याकृतिरियम् । तत्करोषि मे वचनमेकमभ्यर्थ्यमाना' इति । ततो मया सविनयमुपरचिताञ्जलिपुटया दर्शितादरमभिहितः—'भगवन्, कस्मादेवमभिधत्से । काहम् । महात्मानः सकलत्रिभुवनपूजनीयास्त्वादृशाः पुण्यैर्विना निखिलकल्मषापहारिणीमस्मद्विधेषु दृष्टिमपि न[3] पातयन्ति, किं पुनराज्ञाम् । तद्विश्रब्धमादिश्यतां कर्तव्यम् । अनुगृह्यतामयं जनः' इति । एवमुक्तश्च मया सस्नेहया सखीमिवोपकारिणीमिव प्राणप्रदामिव दृष्ट्या मामभिनन्द्य, निकटवर्तिनस्तमालपादपात्पल्लवमादाय निष्पीड्य

---

मण्यस्तासां शिखराण्यग्राणि तेभ्यो य उल्लेखः संघर्षस्तेन मसृणितं श्लक्ष्णीकृतं चरणयोर्नखचक्रं पुनर्भवसमूहो यस्य स तथा तस्य । **प्रणयेति** । प्रणयेन स्नेहेन प्रसुप्ताः कृतनिद्रा या गन्धर्वकामिन्यस्तासां कपोलपत्रलताभिर्लाञ्छितं चिह्नितं भुजा एव तरवो वृक्षास्तेषां शिखरमग्रं यस्य स तथा तस्य । अनेन सुरतविशेषो द्योतितः । **पादेति** । पादपीठीकृतं पदासनीकृतं लक्ष्म्याः श्रियः करकमलं यस्य स तथा तस्य । एतेन दानशौण्डत्वं सूचितम् । तस्या यथार्थमभिधानमाह—नामेति कोमलामन्त्रणे । **महाश्वेता इति** । सांप्रतं क्व गतेति तदाशयमभिप्रेत्याह—**गन्धर्वेति** । गन्धर्वाणामधिवासो यस्मिन्नेवंभूतं हेमकूटाचलमभिप्रस्थिता । तदभिमुखं चलितेत्यर्थः । इति मया कथित उक्ते सति किमप्यनाकलनीयं चिन्तयन्ध्यायन्मुहूर्तमिव घटिकाद्वयसदृशमिव । अत्रापीवशब्दः सदृशार्थः । तूष्णीं जोषं स्थित्वा विगतनिमेषेण मेषोन्मेषरहितेन चक्षुषा नेत्रेण चिरं चिरकालं यावदभि संमुखं वीक्षमाणो मां प्रति सानुनयं सस्नेहमर्थितामिव मार्गणसदृशतामिव दर्शयन्पुनर्द्वितीयवारमित्याह । उवाचेत्यर्थः । इतिवाच्यमाह—**बालिके इति** । हे बालिके, कल्याणिनी कल्याणं श्रेयो विद्यते यस्याः यस्यां वा सैवंभूताविसंवादिन्यव्यभिचारिणी । 'यत्राकृतिस्तत्र गुणा भवन्ति' इत्युक्तेः । बालभावेऽपि बालस्वभावेऽप्यचपला स्थिरा तवेयमाकृतिराकारः । तदिति हेत्वर्थे । अभ्यर्थ्यमाना प्रार्थ्यमानैकं मे मम वचनं करोषि प्रणयसि । **तत इति** । ततोऽनन्तरं सविनयं सप्रश्रयमुपरचितं बद्धमञ्जलिपुटं ययैवंभूतया मया दर्शितादरं यथा स्यात्तथेत्यभिहित उक्तः । इतिशब्दवाच्यमाह—**भगवन्निति** । हे भगवन् हे स्वामिन्, कस्मात्केन हेतुनैवं पूर्वोक्तप्रकारेणाभिधत्से कथयसि । काहं बालव्यजनधारिणी । सकलत्रिभुवनपूजनीयाः समग्रविश्वार्चनीया महात्मानस्त्वादृशा भवादृशाः क्व । पुण्यैर्विना[2] धर्मव्यतिरेकेणास्मद्विधेष्वस्मादृशेषु निखिलकल्मषापहारिणीं दृष्टिं न पातयन्ति चक्षुषा नावलोकयन्ति । किं पुनराज्ञामादेशप्रदानम् । दूरापास्तमिति भावः । तत्तस्माद्धेतोर्विश्रब्धं सविश्वासं कर्तव्यं कृत्यमादिश्यतामादेशं दीयताम् । अथ चायं मल्लक्षणो जनोऽनुगृह्यतामनुग्रहविषयीक्रियताम् । एवं पूर्वोक्तप्रकारेण सस्नेहया[3] सप्रेमया मयोक्तश्च स मुनिः सखीमिव वयस्यामिवोपकारिणीमिवोपकृतिकर्त्रीमिव प्राणप्रदामिव जीवितदात्रीमिव मां दृशा चक्षुषाभिनन्द्य प्रमोदं जनयित्वैव निकटवर्तिनः समीपस्थात्तमालपादपात्तापिच्छवृक्षात्पल्लवं किसलयमादाय गृहीत्वा तटशिलातले तीरप्रस्तरे निष्पीड्य संमर्द्य तेन निष्पीडनोद्भूतेन गन्धगजा गन्धेभास्तेषां मदो

---

टिप्प०—1 भुजौ एवेति द्विवचनं योग्यम् । 2 पूर्वार्जितसुकृतैर्विना इति व्याख्योचिता । 3 धिङ् मन्दभाग्यम् । 'सस्नेहया दृष्ट्या मामभिनन्द्य' इति योजना । अपरिचितायाः स्नेहप्रकाशनं त्वस्वाभाविकमेव ।

---

पाठा०—१ नखचरण, २ हेमकूटमचलम्, ३ निपातयन्ति.

तटशिलातले तेन गन्धगजमदसुरभिपरिमलेन रसेनोत्तरीयवल्कलैकदेशाद्विपाट्य पट्टिकां स्वहस्तकमलकनिष्ठिकानखशिखरेणाभिलिख्य 'इयं पत्रिका त्वया तस्यै कन्यकायै प्रच्छन्नमेकाकिन्यै देया' इत्यभिधायार्पितवान् । इत्युक्त्वा च सा ताम्बूलभाजनादाकृष्य तामदर्शयत् । अहं तु तेन तत्संबन्धिनालापेन शब्दमयेनापि स्पर्शसुखमिवान्तर्जनयता श्रोत्रविषयेणापि रोमोद्गमानुमितसर्वाङ्गानुप्रवेशेन मदनावेशमन्त्रेणेवावेश्यमाना तस्याः करतलादादाय तां वल्कलपत्रिकां तस्यामिमामभिलिखितामार्यामपश्यम्—

'दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे ।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥'

अनया च मे दृष्टया दिङ्मोहभ्रान्त्येव प्रणष्टवर्त्मनः, बहुलनिशयेवान्धस्य, जिह्वोच्छित्त्येव मूकस्य, इन्द्रजालिकपिच्छिकयेवातत्त्वदर्शिनः, ज्वरप्रलापप्रवृत्त्येवासंबद्धभाषिणः, दुष्टनि-

---

दानं तद्वत्सुरभिः सुगन्धः परिमलो यस्यैवंविधेन रसेनोत्तरीयं यद्वल्कलं तस्यैकदेशादेकप्रदेशात्पट्टिकां प्रसिद्धां विपाट्य[1] द्वैधीकृत्य स्वकीय आत्मीयो यो हस्तः पाणिः स एव कमलं नलिनं तस्य कनिष्ठिका कनीनिका तस्या नखशिखरेण नखराग्रेणेयं पत्रिकाभिलिख्य लिपीकृत्येत्यभिधायेत्युक्त्वार्पितवान्दत्तवान् । इतिशब्दाभिधेयमाह—**त्वयेति** । त्वया भवत्या तस्यै कन्यकायै महाश्वेतायै एकाकिन्यै अद्वितीयायै प्रच्छन्नं गुप्तं देयार्पणीया । अथ सा च ताम्बूलकरङ्कवाहिनी तरलिका ताम्बूलभाजनात् तां पत्रिकामाकृष्य निष्कास्यादर्शयत् दर्शितवती । **अहं त्विति** । तु पुनरर्थकः । अहमित्यात्मनिर्देशः । तस्यास्तरलिकायाः करतलाद्धस्ततलात्तां वल्कलपत्रिकामादाय गृहीत्वा तस्यामिमामभिलिखितामार्यामपश्यमद्राक्षमित्यन्वयः । कीदृश्यहम् । आवेश्यमानावेशविषयीक्रियमाणा । केन । तस्य पुण्डरीकस्य संबन्धिना संबद्धेनालापेन । संलापेन । किं कुर्वता । शब्दमयेन शब्दात्मकेनापि स्पर्शसुखमिव संश्लेषसातसदृशमिवान्तर्मध्ये जनयता उत्पादयता । अत्रापिशब्दो विरोधद्योतनार्थः । श्रोत्रविषयेणापि कर्णगोचरेणापि रोमोद्गमेन पुलकेनानुमितोऽनुमितिविषयीकृतः सर्वाङ्गेष्वनुप्रवेशो यस्य स तेन । अत्रापिशब्दः पूर्ववत् । वैक्लव्यसादृश्यादाह—मदनावेशमन्त्रेणेव मदनस्य कंदर्पस्यावेशः प्रवेशस्तदुत्पादकमन्त्रेणेव । अथ तामार्यामाह—**दूरमिति** । मानसे मनसि जन्म यस्यैवंभूतो मनोरथो[2]ऽभिलाषो मुक्तालतयैकावल्या विप्रलोभ्यमानो लोभं प्राप्यमाणो दर्शिताशा फलप्राप्तिर्यस्यैवंभूतस्त्वया नीतः तवैव समीपे तिष्ठति । त्वामेव विषयीकरोतीति भावः । मानसजन्मत्वसाम्यादुत्प्रेक्षते—**हंस इवेति** । यथा मानसजन्मा हंसो मुक्तावन्निर्मला या लता व्रततयस्ताभिः प्रकर्षेण लोभ्यमानो दर्शिताशा गमनार्थं दिग्यस्यैवंभूतोऽन्यत्र नीयते । अथ लतां विशेषयन्नाह—**बिसेति** । बिसं मृणालं तद्वच्छुभ्रया धवलयेत्युभयोर्विशेषणम् । **अनयेति** । अनया पत्रिकया मे मम दृष्टया विलोकितया सत्या स्मरातुरस्य मदनातुरस्य मे मम मनसो दोषविकारस्योपचयः पुष्टिः सुतरामत्यर्थमक्रियत व्यधीयतेत्यन्वयः । अत्रार्थ उपमानान्तराणि प्रदर्शयन्नाह—**दिगिति** । दिङ्मोहभ्रान्त्या करणभूतया प्रणष्टवर्त्मन उत्पथगामिन इव । **बहुलेति** । बहुलनिशया कृष्णपक्षरात्र्यान्धस्येव गताक्षस्येव । **जिह्वेति** । जिह्वोच्छित्त्या रसनाकर्तनया मूकस्येव । **इन्द्रेति** । इन्द्रजालिकस्य मायिकस्य या पिच्छिका यया लोकानां दृग्बन्धः क्रियते, तया अतत्त्वदर्शिन

---

**टिप्प०**—1 इदमप्यप्रसिद्धत्वादज्ञानमेव । 2 भाग्यवता टीकाकृता सर्वोप्यर्थश्चूर्णीकृतः । अत एव—बिसवत् सितया मुक्तामालया विशेषरूपेण लोभं प्रापितः, दर्शिता आशा (मनोरथपूर्तेः आशंसा) यस्मै सः ईदृशो मानसजन्मा कामदेवः, हंस इव त्वया दूरं नीतः । हंसोऽपि–बिसवत् श्वेतया मुक्तानां लतया लतावल्लम्बाकारया पङ्क्त्या विशेषेण भक्षणलोभं प्रापितः दर्शिता स्वेन सह नयनार्थमभीष्टा दिक् (दिशा) यस्मै सः, मानसे (तदाख्यसरोवरे) जन्म यस्य सः दूरे स्वनिवासाद्विप्रकर्षं प्रापित इति सारार्थः ।

द्रयेव विषविह्वलस्य, लोकायतिकविद्ययेवाधर्मरुचेः, मदिरयेवोन्मत्तस्य, दुष्टावेशक्रिययेव[1] पिशाचग्रहस्य, दोषविकारोपचयः सुतरामक्रियत स्मरातुरस्य मे मनसः, येनाकुलीक्रियमाणा सरिदिव पूरेण विह्वलतामभ्यगमम्[2]। तां च द्वितीयदर्शनेन कृतमहापुण्यामिवानुभूतसुरलोकवासामिव, देवताधिष्ठितामिव, लब्धवरामिव, पीतामृतामिव, समासादितत्रैलोक्यराज्याभिषेकामिव मन्यमाना, सततसंनिहितामपि दुर्लभदर्शनामिवातिपरिचितामप्यपूर्वामिव सादरमाभाषमाणा, पार्श्वावस्थितामपि सर्वलोकस्योपर्यवस्थितामिव पश्यन्ती, कपोलयोरलकलताभङ्गेषु[3] च सोपग्रहं स्पृशन्ती, विपरीतमिव परिजनस्वामिसंबन्धमुपदर्शयन्ती, 'तरलिके, कथय कथं स त्वया दृष्टः, किमभिहितासि तेन, कियन्तं कालमवस्थितासि तत्र, कियदनुसरन्न-

---

इव यथाजातस्येव। ज्वरेण तापेन यः प्रलापोऽसद्भाषणं तस्य प्रवृत्तिः प्रवर्तनं तस्या(या)संबद्धभाषिण इव कद्वदस्येव। **दुष्टेति**। दुष्टनिद्रयानुचितप्रमीलया विषविह्वलस्येव विषार्तस्येव। निद्राया दुष्टत्वं च दोषजनकत्वादिति भावः। **लोकेति**। लोकायतिका नास्तिकास्तेषां विद्यया शास्त्रेणाधर्मरुचेरिव पापस्येव। **मदिरेति**। मदिरया गन्धोत्तमयोन्मत्तस्येव क्षीबस्येव। **दुष्टेति**। दुष्टो[1] य आवेशोऽभिनिवेशस्तस्य क्रिया कर्म तया पिशाचग्रहस्येव ग्रथिलस्येव। **येनेति**। येन दोषोपचयेन आकुलीक्रियमाणा पूरेण जलवृद्ध्या सरिदिव तटिनीवाहं विह्वलतां व्याकुलतामभ्यगमम्[2]मप्रापम्। **तां चेति**। तां तरलिकां पुनः पुनर्भूयोभूयोऽहमिति पर्यपृच्छमित्यप्राक्षमिति दूरेणान्वयः। इतिशब्दद्योत्यमाह—**तरलिकेति**। हे तरलिके, कथय निवेदय। स पुण्डरीकः कथं केन प्रकारेण त्वया दृष्टोऽवलोकितः किमभिहितासि कथितासि तेन पुण्डरीकेण। कियन्तं कालमवस्थितासि विलम्बितासि। तत्र तस्मिन्वने अस्माननुसरन्पृष्ठेऽनुव्रजन्कियत्पन्थानमसौ पुण्डरीक आगतः। कीदृश्यहम्। द्वितीयवारं मुनेर्दर्शनेनावलोकनेन कृतं महत्पुण्यं ययैतादृशीमिव। 'आन्महतः समानाधिकरणजातीययोः' इति महच्छब्दस्यात्वम्। **अनुभूत इति**। अनुभूतोऽनुभवविषयीकृतः सुरलोकवासः स्वर्गे निवासो यया तादृशीमिव। देवतयाधिष्ठिताश्रिता तादृशीमिव। **लब्धेति**। लब्धो वरो देवप्रसादो ययैतादृशीमिव। **पीतमिति**। पीतमास्वादितममृतं पीयूषं ययैवंभूतामिव। **समेति**। समासादितः प्राप्तस्त्रैलोक्यस्य राज्यमाधिपत्यं तस्याभिषेकोऽभिषिञ्चनं ययैवंविधामिव तां मन्यमाना चेतसि ज्ञायमाना। पुनरहं किं कुर्वाणा। **सततमिति**। सततं निरन्तरं संनिहितामपि पार्श्ववर्तिनीमपि दुर्लभं दुःप्रापं दर्शनमवलोकनं यस्या एवंविधामिवातिपरिचितामप्यतिसंस्तवगोचरीकृतामप्यपूर्वामिवाभिनवामिव सादरमाभाषमाणा जल्पमाना। पुनः किं कुर्वन्त्यहम्। पार्श्वे समीपेऽवस्थितामप्यासीनामपि सर्वलोकस्य समग्रविश्वस्योपर्यवस्थितामिव पश्यन्त्यवलोकयन्ती। कपोलयोर्गल्लस्परप्रदेशयोरलकलताभङ्गेषु सोपग्रहं सानुकूलं यथा स्यात्तथा स्पृशन्ती स्पर्शं कुर्वन्ती। **विपरीतमिति**। मत्समीहितकरणात्त्वं तु स्वामिनी, अहं तु तव परिजनः, इति विपरीतः संबन्धः। तमिवोपदर्शयन्ती बहिर्व्रत्या

---

टिप्प०—1 दुष्टा या आवेशक्रिया (जन्मसंबन्धिनाडीनक्षत्रेषु पापग्रहाणां प्रवेशकार्यम्) तया पिशाचग्रहस्येव (पिशाचेन ग्रहः ग्रहणं यस्य, पिशाचग्रस्तस्येव)। अयं भावः—पूर्वमेव पिशाचेन ग्रहणं तदुपरि यदि जन्मर्क्षेषु पापग्रहाणां प्रवेशः स्यात्तर्हि भूयान् दोषोपचयः स्यात्। प्रोक्तं हि—'ईहा देहार्थहानिः स्याज्जन्मर्क्षे उपतापिते। कर्मर्क्षे कर्मणां हानिः पीडा मनसि मानसे॥' इति। टीकाकारस्य तु प्रलापमात्रम्। 2 'प्रापम्' इति बोध्यम्। अहो धन्यं टीकाकृतो व्याकरणज्ञानम्!

---

पाठा०—१ दूरावेशक्रियया. २ अगमम्. ३ अलकताभङ्गेषु; अलकलतासङ्गेषु.

स्मानसावागतः' इति पुनः पुनः पर्यपृच्छम् । अनयैव च कथया तया सह तस्मिन्नेव प्रासादे तथैव प्रतिषिद्धाशेषपरिजनप्रवेशा दिवसमत्यवाहयम् ।

अथ मदीयेनेव हृदयेन कृतरागसंविभागे लोहितायति गगनतलावलम्बिनि रविबिम्बे, सरागदिवसकरदर्शनानुरक्तायां कृतकमलशयनायामनङ्गातुरायामिव पाण्डुतां व्रजन्त्यामातपलक्ष्म्याम्, गैरिकगिरिसलिलप्रपातपाटलेषु कमलवनेभ्य उत्थाय वनगजयूथेष्विव पुञ्जीभवत्सु भास्करकिरणेषु, गगनावतारविश्रामलालसानां रविरथवाजिनां हर्षहेषारवप्रतिशब्दकेन सह विशति मेरुगिरिगह्वरं वासरे, मुकुलितरक्तपङ्कजपुटप्रविष्टमधुकर्यावलीषु विरहमू-

---

प्रकाशयन्ती । अन्वयस्तु प्रागेवोक्तः । **अनयैवेति** । अनयैव पूर्वोक्तयैव कथया वार्तया तया सह तरलिकया समं तस्मिन्नेव प्रासादे सौधे प्रतिषिद्धो निवारितोऽशेषपरिजनस्य प्रवेश आगमनं ययैवंभूता दिवसं दिनमत्यवाहयमत्यक्रामम् ।

अथेत्यानन्तर्ये । सा छत्रग्राहिण्यागत्याकथयदित्यग्रिमग्रन्थसंबन्धः । तत्र 'मदीय—' इत्यारभ्य 'युगलेषु' इतिपर्यन्तं सत्यन्तैः सायंसमयवर्णनमाह—**मदीयेति** । मदीयेनेव हृदयेन कृतो रागस्य संविभागो यस्यैवंभूते लोहितायति लोहितवदाचरति गगनतलं व्योमतलं तत्रावलम्बिनि लम्बायमाने रविबिम्बे सूर्यबिम्बे सति । पुनः कस्याम् । आतपलक्ष्म्याम् । किंविशिष्टायाम् । **सरागेति** । राग आरुण्यं रतिश्च तेन सहवर्तमानो यो दिवसकरः सूर्यस्तस्य दर्शनेनावलोकनेन तस्मिन्वानुरक्ता तस्यामत एव कृतं कमलानां शयनं कमलेषु शयनं वा यया सा तस्याम् । आरुण्यवशादाह—**अनङ्गेति** । अनङ्गेन कंदर्पेणातुरायामिव पीडितायामिव पाण्डुतां श्वेततां व्रजन्त्यामिव । पुनः केषु । भास्करकिरणेषु रविभानुषु सत्सु । तानेव विशेषयन्नाह—गैरिको धातुमयो गिरिः पर्वतस्तस्य सलिलमम्भस्तस्मिन्प्रपातः पतनं तेन पाटलेषु श्वेतरक्तेषु । कमलवनेभ्यो नलिनखण्डेभ्य उत्थायोत्थानं कृत्वा वनगजयूथेष्विवारण्यहस्तिसमूहेष्विव पुञ्जीभवत्स्वेकीभवत्सु । पुनः कस्मिन्सति । वासरे दिवसे मेरुगिरिगह्वरं निकुञ्जं विशति प्रविशति सति । कथं सह केनेत्यभिप्रायेणाह—**गगनेति** । गगन आकाशेऽवतारः परिभ्रमणं तस्माद्यो विश्रामो विश्रान्तिस्तस्मिँल्लालसानां सस्पृहाणां रविरथवाजिनां सूर्यस्यन्दनाश्वानां हर्षः प्रमोदस्तेन हेषारवस्तस्य प्रतिशब्दकः प्रतिच्छन्दस्तेन सह । सार्धमित्यर्थः । तथा च रविकिरणानामधःस्थलं परित्यज्योर्ध्वगमनान्मध्यावस्थाचरणमाह—**पद्मिनीष्विति** । मुकुलितानि कुड्मलितानि यानि रक्तपङ्कजानि कोकनदानि तेषां पुटानि तत्र प्रविष्टाः कृतप्रवेशा मधुकरीणां भ्रमरीणामावल्यः श्रेण्यो यास्वेवंविधासु पद्मिनीषु नलिनीषु सत्सु । कृष्णत्वसाम्यादाह—**विरहेति** । विरहो वियोगः । रवेरिति शेषः । तेन या मूर्च्छा तयान्धकारितं संजातान्धकारं हृदयं यासामेवंविधास्विव । अत एव प्रारब्धं निमीलनं याभिस्तासु । पुनः केषु । रथाङ्गनाम्नां चक्रवाकानां युगलेषु घटमानेषु भिन्नतां प्राप्यमाणेषु । किं कृत्वा । परस्परहृदयान्यन्योन्यानुरागलक्षणान्या-

---

**टिप्प०**—1 अगमयमित्यर्थः । टीकाकारस्य तु प्रलापः, णेरावश्यकत्वात् । 2 सूर्यबिम्बे कृतरागसंविभागे लोहितायति सति, गगनतलावलम्बिनि च सति, इत्यर्थो योग्यः । एवमग्रिमवाक्येष्वपि, टीकाकारस्तु अलौकिकबुद्धिः । 3 वस्तुतस्तु 'सरागदिवसकरानुरक्तायाम्' इत्येव पाठः । 4 गैरिकाख्यो यो धातुविशेषस्तस्य गिरिर्गैरिकगिरिः । 5 वनगजा अपि गैरिकसलिलप्रपातेन पाटलाः सन्तः सायमेकत्र पुञ्जीभवन्ति, सूर्यकिरणा अपि पाटलाः सन्तः सायं संकुचितावस्थतया पुञ्जीभवन्तीति द्वयोः साम्यादुपमा । 6 स्त्रीत्वं स्यात् ।

---

पाठा०—१ तलोपान्ताव. २ समुत्थाय. ३ मधुकरावलीषु. ४ रविविरह.

च्छोन्धकारितहृदयास्विव प्रारब्धनिमीलनासु पद्मिनीषु, ग्रासीकृतसामान्यमृणाललताविवरसंक्रामितानीव परस्परहृदयान्यादाय विघटमानेषु रथाङ्गनाम्नां युगलेषु सा छत्रग्राहिण्यागत्याकथयत्—'भर्तृदारिके, तयोर्मुनिकुमारयोरन्यतरो द्वारि तिष्ठति। कथयति चाक्षमालामुपयाचितुमागतोऽस्मि' इति। अहं तु मुनिकुमारनामग्रहणादेव स्थानस्थितापि गतेव द्वारदेशं समुपजाततदागमनाशङ्का समाहूयान्यतमं कञ्चुकिनम् 'गच्छ। प्रवेश्यताम्' इत्यादिश्य प्राहिणवम्। अथ मुहूर्तादिव तं तस्य रूपस्येव यौवनम्, यौवनस्येव मकरकेतनम्, मकरकेतनस्येव वसन्तसमयम्, वसन्तसमयस्येव दक्षिणानिलमनुरूपं सखायं मुनिकुमारकं कपिञ्जलनामानं जराधवलितस्य कञ्चुकिनोऽनुमार्गेण चन्द्रातपस्येव बालातपमनुयायिनमपश्यम्। अन्तिकमुपागतस्य चास्य पर्याकुलमिव सविषादमिव शून्यमिवार्थिनमिवानुपरताभिप्रेतमाकारमलक्षयम्। उत्थाय च कृतप्रणामा सादरं स्वयमासनमुपाहरम्। उपविष्टस्य च बलादनिच्छतोऽपि

---

दाय गृहीत्वेत्यर्थः। रक्तत्वसाम्यादुत्प्रेक्षामाह—**ग्रासीति**। ग्रासीकृतार्धजग्धा याः सामान्यमृणाललता बिसलतास्तासां विवराणि छिद्राणि तेषु संक्रामितानीव क्षिप्तानीव। किं कथितवतीत्याशयेनाह—**भर्तृ इति**। हे भर्तृदारिके हे राजसुते, तयोर्मुनिकुमारयोरिति निर्धारणे षष्ठी। अन्यतर एकः कश्चिद्द्वारि प्रतोल्यां तिष्ठति स्थितोऽस्तीति। कथयति वक्ति च। तदेवाह—**अक्षमालेति**। अक्षमालां जपमालामुपयाचितुं प्रार्थितुमागतः प्राप्तोस्मि। **अहं त्विति**। मुनिकुमारस्य नामग्रहणादेवाभिधानमात्रश्रवणादेव। उत्कण्ठातिशयमाह—**स्थानेति**। स्थानस्थितापि स्वस्थानस्थापि द्वारदेशं गतेव प्रतोलीप्रदेशं प्राप्तेव, समुपजाता समुत्पन्ना तस्य पुण्डरीकस्यागमने आशङ्कारेका यस्या एवंभूता सत्यन्यतमं कञ्चुकिनं सौविदल्लं समाहूयाह्वानं कृत्वा गच्छ व्रज, सः प्रवेश्यतां मध्ये प्रवेशं कार्यतामिति शेषः। इति पूर्वोक्तमादिश्य कथयित्वा प्राहिणवं प्रेषितवती। **अथेति**। तत्प्रेषणानन्तरं मुहूर्तादिव। अत्रेवशब्दः सदृशार्थः। मुहूर्तसदृशादित्यर्थः। तदुक्तमलंकारशेखरे—'इवाद्यैः प्रतिमानाद्यैः समानार्थैर्निभादिभिः। बन्धचोरादिवंशाद्यैः(?)सादृश्यप्रतिपत्तयः' इति। **तमिति**। तस्य पुण्डरीकस्यानुरूपं सखायं मित्रम्। अनुरूपमित्रसंबन्धप्रदर्शनार्थमुपमानान्तराण्याह—**रूपस्येति**। रूपस्य सौन्दर्यस्य यौवनमिव तारुण्यमिव। यौवनस्य तारुण्यस्य मकरकेतनमिव कंदर्पमिव। मकरकेतनस्य वसन्तसमयमिव सुरभिकालमिव। वसन्तसमयस्य दक्षिणानिलमिवापाचीपवनमिव मुनिकुमारकं तापसबालकं कपिञ्जलनामानं जरा विस्रसा तया धवलितस्य शुभ्रीकृतस्य कञ्चुकिनः सौविदल्लस्यानुमार्गेण पश्चाद्भागेन चन्द्रातपस्य शीतांशुप्रकाशस्यानुयायिनं पश्चाद्गामिनं बालातपमिव तमपश्यमवालोकयम्। एतेन कञ्चुकिकपिञ्जलयोस्तत्समीपावधि सहागमनेऽपि वैलक्षण्यं द्योतितम्। **अन्तिकमिति**। अन्तिकं समीपमुपागतस्य प्राप्तस्य चास्य कपिञ्जलस्य पर्याकुलमिवात्यन्तव्याकुलमिव सविषादमिव सखेदमिव शून्यमिव नष्टचैतन्यमिवार्थिनमिव मार्गणमिवानुपरतमपरिपूर्णमभिप्रेतं वाञ्छितं यस्मिन्नेतादृशमाकारमाकृतिमलक्षयमाकलयम्। उत्थाय च कृतः प्रणामो नमस्कारो ययैवंभूताहं

---

**टिप्प०**—1 भाग्यहीनो बहुवचनादिना पुनः सर्वस्वं ध्वंसयामास। ग्रासीकृतया सामान्यया एकया (अर्थात् एकैव मृणाललता द्वाभ्यामपि चञ्चुपुटेन उभयप्रान्ते धृता) मृणाललतया (कर्त्र्या) विवरेण निजच्छिद्रपथेन (करणेन) संक्रामितानीव। इत्यर्थः। 2 'बन्धु-चोरादिवंश्याद्यैः' इति पाठः स्यात्। 3 अयं पाठष्टीकाकारसदृशानां प्रियः। वास्तवे तु—'अन्तर्गताकूतम्' अन्तर्गतम् आकूतम् अभिप्रायविशेषो यस्य तम् अर्थात् तस्याकार ईदृशो दृश्यते स यथा कश्चिदभिप्रायोऽस्य प्रकटनीयो वर्तते परं न तं स बहिः प्रकाशयतीति।

---

**पाठा०**—१ समागत्य. २ ऋषिकुमारकम्. ३ धवलस्य. ४ आगच्छन्तम्. ५ उपगतस्य. ६ अन्तर्गताकूतम्.

प्रक्षाल्य चरणावुपमृज्य चोत्तरीयांशुकपल्लवेनाव्यवधानायां भूमावेव तस्यान्तिके समुपाविशम्। अथ मुहूर्तमिव स्थित्वा किमपि विवक्षुरिव स तस्यां समीपोपविष्टायां तरलिकायां चक्षुरपातयत्। अहं तु विदिताभिप्राया दृष्ट्वैव 'भगवन्, अव्यतिरिक्तेयमस्मच्छरीरात्। अशङ्कितमभिधीयताम्' इत्यवोचम्।

एवमुक्तश्च मया कपिञ्जलः प्रत्यवादीत्—'राजपुत्रि, किं ब्रवीमि। वागेव मे नाभिधेयविषयमवतरति त्रपया। क्व कन्दमूलाशी शान्तो वननिरतो मुनिजनः, क्व चायमनुपशान्तजनोचितो विषयोपभोगाभिलाषकलुषो मन्मथविविधविलाससंकटो रागप्रायः प्रपञ्चः। सर्वमेवानुपपन्नमालोकय, किमारब्धं दैवेन। अयत्नेनैव खलूपहासास्पदतामीश्वरो नयति जनम्। न जाने किमिदं वल्कलानां सदृशम्, उताहो जटानां समुचितम्, किं तपसोऽनुरूपम्, आहोस्विद्धर्मोपदेशाङ्गमिदम्। अपूर्वेयं विडम्बना केवलम्। अवश्यकथनीयमिदम्। अपर

---

सादरं सबहुमानं स्वयमात्मनाऽऽसनं विष्टरमुपाहरमनयम्। तत्रोपविष्टस्यासीनस्य च बलाद्धठादनिच्छतोऽप्यवाञ्छतोऽपि चरणौ पादौ प्रक्षाल्य धावनं कृत्वोत्तरीयांशुकमुपसंव्यानांशुकं तस्य पल्लवेनांशुकेनोपमृज्य मार्जनं कृत्वा तस्यान्तिके तत्समीपेऽव्यवधानायां केवलायां भूमावेव समुपाविशमतिष्ठम्। अथेत्यानन्तर्ये। मुहूर्तमिव स्थित्वा किमपि विवक्षुरिव वक्तुमिच्छुरिव स कपिञ्जलस्तस्यां समीपोपविष्टायां तरलिकायां चक्षुर्नेत्रमपातयत्पातितवान्। **अहं त्विति**। तु पुनरर्थकः। दृष्ट्वैव दृशैव विदितो ज्ञातोऽभिप्राय आशयो यया सैवंभूताहमित्यवोचमित्यकथयम्। इतिवाच्यमाह—**भगवन्निति**। हे भगवन्, हे स्वामिन्, अस्मच्छरीरादियं तरलिकाऽव्यतिरिक्ता अभिन्ना, अतोऽशङ्कितं शङ्कारहितं यथा स्यात्तथाभिधीयतां कथ्यताम्।

एवं पूर्वोक्तप्रकारेण मयोक्तश्च कपिञ्जलः प्रत्यवादीत्प्रत्यवोचत्। किमुवाचेत्याह—**राजपुत्रीति**। हे राजपुत्रि, किं ब्रवीमि किं कथयामि। वागेव वचनमेव त्रपया लज्जयाभिधेयं विषयं वाच्यगोचरं नावतरति नायाति। **क्वेति**। कन्दमूलाशी शान्तो वननिरतोऽरण्यासक्तो मुनिजनः क्व। अथ च रागप्रायो रागबहुलः प्रपञ्चो मायाविस्तारः क्व। प्रपञ्चं विशेषयन्नाह—**अनुपशान्तेति**। अनुपशान्तो रोषाद्युपयुक्तो यो जनो मनुष्यस्तस्योचितो योग्यः, विषयः स्रक्चन्दनादिस्तस्योपभोगः पुनःपुनस्तदासेवनं तस्याभिलाषः स्पृहा तेन कलुषो मलिनः, मन्मथस्य कंदर्पस्य ये विविधा अनेकप्रकारा विलासा विभ्रमास्तैः संकटः संकीर्णः। सर्वमेवं समग्रमेव अनुपपन्नमयुक्तमालोकय पश्य। दैवेनादृष्टेन किमकथ्यस्वरूपमारब्धं प्रारब्धम्। खलु निश्चयेन। अयत्नेनैव प्रयासं विनैवेश्वरो भगवाञ्जनमुपहासास्पदतां परिहासधामतां नयति प्रापयति। **न जाने इति**। नाहं जानामि इदं किं वल्कलानां सदृशं योग्यम्। उताहो अथवा जटानां सटानां समुचितं योग्यम्। किं तपसो नियमविशेषस्यानुरूपं सदृशम्। आहोस्विदिति तर्के। इदं धर्मोपदेशस्याङ्गं कारणम्। केवलमपूर्वाभिनवा विडम्बना कदर्थना। अवश्यं निश्चयेनेदं कथनीयं प्रतिपादनीयम्। एतस्मिन्नर्थे हेतुमाह— **अपर इति**। अपर एतद्व्यतिरिक्त उपायः कारणं न दृश्यते नेक्ष्यते।

---

**टिप्प०**—1 रागः ऐहिकसुखलालसैव प्रायेण बाहुल्येन यस्मिन् सः। अयं प्रपञ्चः संसारः क्व। 2 'अशान्तजनोचितः' इत्येव पाठः। अशान्तः शमेन इन्द्रियजयेन रहितो यो जनस्तस्य उचित इति तदर्थः। 3 दैवेन किम् अनुपपन्नं सर्वमारब्धमिति त्वामालोकय इति योजना।

---

**पाठा०**—१ मत्समीप. २ कन्दमूलफलाशी. ३ शान्तोपवनरतः; शान्तो वनवासनिरतः.

उपायो न दृश्यते । अन्या प्रतिक्रिया नोपलभ्यते । अन्यच्छरणं नालोक्यते । अन्या गतिर्नास्ति । अकथ्यमाने च महाननर्थोपनिपातो जायते । प्राणपरित्यागेनापि रक्षणीयाः सुहृदसव इति कथयामि । 'अस्ति भवत्याः समक्षमेव स मया तथा निष्ठुरमुपदर्शितकोपेनाभिहितः । तथा चाभिधाय परित्यज्य तं तस्मात्प्रदेशादुपजातमन्युरुत्सृष्टकुसुमावचयोऽन्यप्रदेशमगमम् । अपयातायां च भवत्यां मुहूर्तमिव स्थित्वैकाकी किमयमिदानीमाचरतीति संजातवितर्कः प्रतिनिवृत्त्य विटपान्तरितविग्रहस्तं प्रदेशं व्यलोकयम् । यावत्तत्र तं नाद्राक्षम् । आसीच्च मे मनस्येवम्—'किं नु मदनपरायत्तचित्तवृत्तिस्तामेवानुसरन्गतो भवेत् । गतायां च तस्यां लब्धचेतनो लज्जमानो न शक्नोति मे दर्शनपथमुपगन्तुम् । आहोस्वित्कुपितः परित्यज्य मां गतः । उतान्वेषमाणो मामेव प्रदेशमन्यमितः समाश्रितः स्यात्' इत्येवं विकल्पयन्कंचित्कालमतिष्ठम् । तेन तु जन्मनः प्रभृत्यनभ्यस्तेन तस्य क्षणमप्यदर्शनेन दूय-

---

अन्या प्रतिक्रिया चिकित्सा नोपलभ्यते न प्राप्यते । अन्यदेतद्व्यतिरिक्तं शरणमाश्रयणस्थलं नालोक्यते न विलोक्यते । अन्यैतद्भिन्ना गतिः प्रकारान्तरं नास्तीत्यर्थः । उक्तवैपरीत्यदूषणमाह—**अकथ्येति** । तस्मिन्नप्रतिपाद्यमाने महाननर्थस्योपनिपातोऽकस्मात्पतनं जायते निष्पद्यते । भवतु, का नः क्षतिरित्याशयेनाह—**प्राणेति** । प्राणपरित्यागेनापि जीवितव्यवरोपणेनापि सुहृदां मित्राणामसवः प्राणा रक्षणीया रक्ष्या इति हेतोः कथयामि ब्रवीमि । **अस्तीति** । भवत्यास्तव समक्षमेव प्रत्यक्षमेव । यदा कुमारेण पारिजातमञ्जरी तव कर्णावतंसीकृता तदा त्वदायत्तत्वात्पतितामक्षमालामपि नाज्ञासीत् । तस्मिन्व्यामोहावसरे स पुण्डरीक उपदर्शितः कोपो येनैवंभूतेन मया तथा निष्ठुरं रूक्षमभिहितः कथितोऽस्ति । तथा च तेन प्रकारेण चाभिधाय कथयित्वा तं पुण्डरीकं परित्यज्य तस्मात्प्रदेशात् । **उपेति** । उपजात उत्पन्नो मन्युः कोपो यस्य सः । **उत्सृष्टेति** । उत्सृष्टस्त्यक्तः कुसुमानां पुष्पाणामवचयो ग्रहणं येन सः । समित्कुशकुसुमावचयनिमित्तमागतं तदपि प्रयोजनं कोपेन परित्यक्तमिति भावः । एवंविधोऽहमन्यप्रदेशं तदितरवनविभागमगममव्रजम् । अथ च भवत्यामपयातायां गतायां मुहूर्तमिव स्थित्वैकाक्यद्वितीयोऽयं पुण्डरीक इदानीं सांप्रतं किमाचरति किमाचरणं करोतीति संजातो वितर्को विकल्पो यस्य सोऽहं प्रतिनिवृत्त्य व्याघुट्य विटपैर्वृक्षैरन्तरितस्तिरोहितो विग्रहो यस्यैवंभूतस्तं प्रदेशं व्यलोकयमपश्यम् । यावत्कालं तत्र तस्मिन्प्रदेशे तं[1] कपिञ्जलं नाद्राक्षं न व्यलोकिषम्, तदा मे मम मनसि चित्त एवमग्रे प्रतिपाद्यमानमासीदभूत् । किं तदित्याह—**किं त्विति** । *अव्ययानामनेकार्थत्वात्किं नु* कदाचिन्मदनेनानङ्गेन परायत्ता पराधीना चित्तवृत्तिर्यस्यैवंभूतस्तामेव गन्धर्वकन्यकामेवानुसरन्ननुव्रजन्गतो भवेत् । तस्यां गतायां च सत्यां लब्धा चेतना चैतन्यं येन सः । विशेषेण लज्जमानस्त्रपां कुर्वाणो मे मम दर्शनपथमालोकनमार्गमुपगन्तुं प्राप्तुं न शक्नोति न समर्थो भवति । **आहोस्विदिति** । आहोस्विद्वितर्के । कुपितः कोपं प्राप्तः सन्मां परित्यज्य विहाय गतः प्रस्थितः । **उतेति** । उताथवा मामेवान्वेषमाणो वीक्षमाण इतोऽन्यं प्रदेशं समाश्रितः स्यात् । इत्येवं विकल्पयन्विकल्पनां कुर्वन्कंचित्कालमतिष्ठं स्थितवान् । **तेन त्विति** । जन्मनः प्रभृति जन्म मर्यादीकृत्यानभ्यस्तेनापरिचितेन तस्य पुण्डरीकस्य क्षणमप्यदर्शनेनानवलोकनेन दूयमानो दुःखं कुर्वाणः । पुनरहमचिन्तयं चिन्तितवान् । क्षणमपीत्यनेन कदाचि-

---

**टिप्प०—1 पुण्डरीकम् । नामादिविस्मृतिः क्षम्या भवति । व्युत्पत्तिशैथिल्येऽपि बाणोक्तिव्याख्याधाष्टर्यनिमित्तो ग्रन्थस्वारस्यविध्वंसस्तु क्रोधेन निर्मर्यादयति माम्, क्षन्तव्यं सुजनैः ।**

---

पाठा—१ समस्तम्. २ लज्जया.

मानः पुनरचिन्तयम्—'स कदाचिद्धैर्यस्खलनविलक्षः किंचिदनिष्टमपि समाचरेत्। न हि किंचिन्न क्रियते ह्रिया। तन्न युक्तमेनमेकाकिनं कर्तुम्' इत्यवधार्यान्वेष्टुमादरमकरवम्। अन्वेषमाणश्च यथायथा नापश्यं तं तथातथा सुहृत्स्नेहकातरेण मनसा तत्तदशोभनमाशङ्कमानस्तरुलतागहनानि चन्दनवीथिकालतामण्डपान्सरःकूलानि च वीक्षमाणो निपुणमितस्ततो दत्तदृष्टिः सुचिरं व्यचरम्।

अथैकस्मिन्सरःसमीपवर्तिनि निरन्तरतया कुसुममय इव, मधुकरमय इव, परभृतमय इव, मयूरमय इवातिमनोहरे वसन्तजन्मभूमिभूते लतागहने कृतावस्थानम्, उत्सृष्टसकलव्यापारतया लिखितमिवोत्कीर्णमिव स्तम्भितमिवोपरतमिव प्रसुप्तमिव योगसमाधिस्थमिव निश्चलमपि स्ववृत्ताच्चलितम्, एकाकिनमपि मन्मथाधिष्ठितम्, सानुरागमपि पाण्डुतामावह-

---

दपि तेन सह नाहं वियुक्तः, इदानीं भूयान्कालमादाय विलम्बित इति खेदातिशयप्रदर्शनमिति भावः। **कदाचिदिति**। कदाचित्संभावनामात्रमेतत्। धैर्यस्य स्खलनं भ्रंशस्तेन विलक्षो[1] वीक्षापन्नः किंचिदनिर्दिष्टनामकमनिष्टम[2]प्यसमीहितमपि समाचरेत्समाचरणं कुर्यात्। हि निश्चितम्। ह्रिया लज्जया किंचिन्न न क्रियते। अपि तु क्रियत एवेत्यर्थः। 'द्वौ नञौ प्रकृतमर्थं सूचयतः' इति न्यायात्। तत्तस्माद्धेतोरेकाकिनमद्वितीयं कर्तुं विधातुं न युक्तं नोचितमिति पूर्वोक्तप्रकारेणावधार्य निश्चित्यान्वेष्टुमन्वेषणां कर्तुमादरमुद्योगमकरवमघटयम्। अहमन्वेषमाणो यथायथा तं पुण्डरीकं नापश्यं न व्यलोकयं तथातथा सुहृन्मित्रं तस्य स्नेहः प्रीतिस्तेन कातरेण भीरुणा मनसा तत्तदशोभनममङ्गलमाशङ्कमान आरेक्यविषयीक्रियमाणस्तरुषु वृक्षेषु यानि लतागहनानि गह्वराणि, चन्दनवीथिकासु ये[3] लतामण्डपा जनाश्रयास्तान्सरःकूलानि च कासारतीराणि च निपुणमेकतानं वीक्षमाणो विलोक्य(क)मान इतस्ततो दत्ता दृष्टिर्येन सोऽहं सुचिरं चिरकालं व्यचरमभ्रमम्।

**अथेति**। इतस्ततो विचरणानन्तरमेकस्मिन्वसन्तजन्मभूमिभूते लतागहने कृतावस्थानं तं कुमारं पुण्डरीकमद्राक्षमपश्यमित्यन्वयः। लतागहनं विशेषयन्नाह—**सर इति**। सरसः कासारस्य समीपवर्तिनि पार्श्वस्थायिनि निरन्तरतया निबिडतया कुसुममय इव पुष्पमय इव, मधुकरमय इव भ्रमरमय इव। एतेन पुष्पाणामतिसुरभित्वं सूचितम्। तेन भ्रमराणां बाहुल्यमिति भावः। **परेति**। परभृताः कोकिलास्तन्मय इव। एतेन सहकारोद्रेकः सूचितः। त्वतलादीनां योगे पूर्वस्य पुंवद्भावः। यद्वा अत्र पुरुषस्यैव ग्रहणम्। मयूराः कलापिनस्तन्मय इव। एतेनातिरमणीयत्वं सूचितम्। अत एवातिमनोहरेऽत्यभिरामे। अथ पुण्डरीकं विशेषयन्नाह—**उत्सृष्ट इति**। तदायत्तत्वादुत्सृष्टस्त्यक्तः सकलव्यापारो येन तस्य भावस्तत्ता तया लिखितमिव चित्रितमिव, उत्कीर्णमिवोत्कोरितमिव, स्तम्भितमिव कीलितमिव, उपरतमिव मृतमिव, प्रसुप्तमिव शयितमिव। **योगेति**। योगस्य चित्तवृत्तिनिरोधस्य यः समाधिरर्थमात्रावभासनरूपस्तत्रस्थमिव। अत्र विरोधालंकारप्रदर्शनपूर्वकं तमेव विशेषयन्नाह—**निश्चलमिति**। निश्चलं निःप्रकम्पमपि स्ववृत्तात्स्वाचाराच्चलितमिति विरोधः। तत्परिहारपक्षे चलितं भ्रष्टमित्यर्थः। एवमग्रेऽपि स्वबुद्ध्या ज्ञेयम्। एकाकिनमप्यद्वितीयमपि मन्मथेन मनोभवेनाधिष्ठितमाश्रितमिति विरोधः। द्वितीयाधिष्ठितत्वेनैकाकित्वाभावात्[4]। **सानुरागमिति**। अत्रानुरागो रक्तिमा रक्तत्वं तेन सहितमपि पाण्डुतां श्वेततामावहन्तमादधानमिति विरोधः। रक्तश्वेतयोः स्वारसिकविरोधात्[5]।

---

**टिप्प०**—1 लज्जितः। टीकाकारस्तु धन्यः। 2 उद्बन्धनादिकमवाञ्छितममङ्गलम्। 3 'चन्दनवीथिकाः' इति पृथगेव ग्रन्थानुकूलम्, सुचिरान्वेषणार्थं बहुत्वस्यानुगुणत्वात्। टीकाकारस्तु अस्पृष्टव्युत्पत्तिकः। 4 मन्मथो न शरीरी, अत एवायमेकाक्येवेति समाधानम्। 5 सानुरागं प्रियतमायामासक्तमिति परिहारः।

---

पाठा०—१ सुवृत्तात्.

न्तम्, शून्यान्तःकरणमपि हृदयनिवासिदयितम्, तूष्णीकमपि कथितमदनवेदनातिशयम्, शिलातलोपविष्टमपि मरणे व्यवस्थितम्, शापप्रदानभयादिवादत्तदर्शनेन कुसुमायुधेन संताप्यमानम्, अतिनिःस्पन्दतया हृदयनिवासिनीं प्रियां द्रष्टुमन्तःप्रविष्टैरिवासह्यसंतापसंत्रासप्रलीनैरिव मनःक्षोभप्रकुपितैरिवोन्मुच्य गतैरिन्द्रियैः शून्यीकृतशरीरम्, निःस्पन्दनिमीलितेनान्तर्ज्वलन्मदनदहनधूमाकुलिताभ्यन्तरेणेवाक्षिपक्ष्मान्तरविवरवान्तानेकधारमनवरतमीक्षणयुगलेन बाष्पजलदुर्दिनमुत्सृजन्तम्, आलोहिनीमधरप्रभामनङ्गाग्नेः प्रदहतो हृदयादूर्ध्वसंसर्पिणीं शिखामिवादाय निष्पतद्भिरुच्छ्वासैस्तरलीकृतासन्नलताकुसुमकेशरम्, वामकपोलशयनीकृतकरतलतया समुत्सर्पद्भिरमलैर्नखांशुभिर्विमलीकृतमच्छाच्छचन्दनरसरचितललाटिकमिव ललाटदेशमुद्वहन्तम्, अचिरापनीतपारिजातकुसुमकर्णपूरतया सशेषपरिमलामोदलोभोपसर्पिणा

**शून्येति** । शून्यमन्यकर्तव्यतेच्छारहितमन्तःकरणं यस्यैवंविधमपि हृदये निवासिनी निवसनशीला दयिता यस्येति विरोधः । कस्यचित्सद्भावे शून्यत्वाभावात् । तत्परिहारस्तु शून्यं ध्यानान्तरवर्जितं केवलं तदासक्तचित्तत्वादिति भावः । **तूष्णीकमिति** । तूष्णीकमपि मौनावलम्बिनमपि कथितो निवेदितो मदनवेदनाया अतिशय उत्कर्षो येनेति विरोधः । मौनकथनत्वयोर्विरुद्धधर्मत्वात् । **शिलेति** । शिलातल उपविष्टमासीनमपि मरणे व्यवस्थितं चलितमिति विरोधः । आसीनचलितत्वयोर्विरोधात् । **शापेति** । शापप्रदानस्य यद्भयं भीतिस्तस्मादिवादत्तं स्वस्य दर्शनं येनैवंभूतेन कुसुमायुधेन कंदर्पेण संताप्यमानं पीड्यमानम् । **अतीति** । अतिशयेन यो निःस्पन्दो निःक्रियत्वं तस्य भावस्तत्ता तया हृदयनिवासिनीं प्रियां द्रष्टुं विलोकयितुमन्तःप्रविष्टैरिवान्तर्गतैरिव । **असह्येति** । असह्यः सोढुमशक्यो यः संतापः संज्वरस्तस्य संत्रासाद्भयात्प्रलीनैरिव नष्टैरिव । **मनस इति** । मनसो हृदयस्य क्षोभोऽन्यथाप्रवर्तनं तेन प्रकुपितैरिव कोपं प्राप्तैरिव । अत एवोन्मुच्य त्यक्त्वा गतैरेवंभूतैरिन्द्रियैः करणैः शून्यीकृतं शरीरं यस्य स तम् । इन्द्रियाणां तत्कार्यकारित्वादेवेन्द्रियवत्ता तदभावाच्छून्यीकृतमित्यर्थः । पुनः किं कुर्वन्तम् । अनवरतं निरन्तरमीक्षणयुगलेन नेत्रयुग्मेन बाष्पजलदुर्दिनमुत्सृजन्तं त्यजन्तम् । नेत्रयुग्मं विशेषयन्नाह—**अन्तरिति** । अन्तर्मध्ये ज्वलन्प्रज्वलन्यो मदनदहनः कामाग्निस्तस्य धूमो दहनकेतनं तेनाकुलितं व्याप्तमभ्यन्तरं मध्यं यस्यैवंभूतेनेव । अत एव निःस्पन्दं यथा स्यात्तथा निमीलितेन मुद्रितेन । अथ बाष्पजलदुर्दिनं विशेषयन्नाह—**अक्षीति** । अक्षिपक्ष्मणां नेत्ररोम्णां यानि विवराणि छिद्राणि तेभ्यो वान्ता उद्गीर्णा अनेकधारा यस्मिन् । **आलोहिनीति** । हृदयं प्रदहतोऽनङ्गाग्नेरूर्ध्वसंसर्पिणीमुपरिगामिनीं शिखामिव ज्वालामिवालोहिनीं रक्तामधरप्रभां दन्तच्छदरुचमादाय गृहीत्वा निष्पतद्भिर्निर्गच्छद्भिरुच्छ्वासैराहरैस्तरलीकृतानि कम्पनीकृतान्यासन्नलताकुसुमकेसराणि समीपवल्लीपुष्पकिञ्जल्कानि येन स तथा तम् । **वामेति** । वामकपोलस्य शयनीकृतं तल्पीकृतं यत्करतलं हस्ततलं तस्य भावस्तत्ता तया समुत्सर्पद्भिरूर्ध्वं प्रसरद्भिर्नखांशुभिर्नखमयूखैर्विमलीकृतं श्वेतीकृतमत एव । **अच्छाच्छेति** । निर्मलो यश्चन्दनरसस्तेन रचिता निर्मिता ललाटिका तिलकविशेषो यस्मिन्नेवंभूतमिव ललाटदेशमलिकप्रदेशमुद्वहन्तं धारयन्तम् । **अचिरेति** । अचिरापनीतं सद्योनीतं यत्पारिजातकुसुमं मन्दारपुष्पं तस्य यत्कर्णपूरं तस्य भावस्तत्ता तया मधुकरकुलेन भ्रमरसमूहेन सनीलोत्पलमिव सेन्दीवरमिव, सतमालपल्लवमिव सतापिच्छकिसलयमिव, श्रवणदेशं कर्णप्रदेशं दधानं धारयन्तम् । अथ मधुकरकुलं विशेषयन्नाह—**सशेषेति** । सशेषौ समग्रौ[6] यावामोदपरिमलौ तत्र विदूरगः सुरभिरामोदो

टिप्प०—1 धिङ् मूढम् । अन्यकर्तव्यानि अनिच्छत एव हृदये प्रिया निवसतीति को विरोधः ? तस्मात् हृदये दयितानिवासेऽपि तस्य शून्यत्वं विरुद्धम् । विषयान्तरविचाररहित्याच्च परिहारः । 2 कथितो गात्रस्तम्भादिना सूचित इति तत्परिहारः । 3 पुनरपि धिङ् मन्दम् । यः शिलातले उपविष्टः सः मरणे कथं व्यवस्थितः, एकस्य युगपदधिष्ठानद्वयवृत्तित्वे विरोधः, व्यवस्थितं कृ[illegible]श्चयमिति तत्परिहारः । 4 वामकपोलस्य शयनीकृतं हस्ततलं यस्य स वामकपोलशयनीकृतहस्ततलः, तद्भावस्तत्ता, तयेत्युचितम् । 5 धिङ् मन्दभाग्य किं प्रलपसि ? सशेषः तदानीमप्यवशिष्टो यः परिमलस्तस्य य आमोदः ( अनुभवजनित आनन्दः ) तस्य लोभात् (हेतोः) उपसर्पिणा, इत्यर्थो बोध्यः ।

कलविरुतच्छलेन मदनसंमोहनमन्त्रमिव जपता मधुकरकुलेन सनीलोत्पलमिव सतमालपल्लवमिव श्रवणदेशं दधानम्, उत्कण्ठाज्वररोमाञ्चव्याजेन प्रतिरोमकूपनिपतितानां मदनशराणां कुसुमशरशल्यशकलनिकरमिवाङ्गलग्नं बिभ्राणम्, दक्षिणकरेण च [1]स्फुरितनखकिरणनि[2]करां करतलस्पर्शसुखकण्टकितामिव मुक्तावलीमविनयपताकामुरसि धारयन्तम्, मदनवशीकरणचूर्णेनेव कुसुमरेणुना तरुभिराहन्यमानम्, आत्मरागमिव संक्रमयद्भिरासन्नैरनिलचलितैरशोकपल्लवैः स्पृश्यमानम्, सुरताभिषेकसलिलैरिवाभिनवपुष्पस्तबकमधुशीकरैर्वनश्रियाभिषिच्यमानम्, अलिनिवहनिपीयमानपरिमलैरुपरिपतद्भिश्चम्पककुड्मलैस्तप्तशरश[3]ल्यकैरिव सधूमैः कुसुमशरेण ताड्यमानम्, अतिबहलवनामोदमत्तमधुकरनिकरझंकारनिःस्वनैर्हुंकारैरिव

---

विमर्दोत्थः पुनः सुरभिः परिमलः । 'स आमोदो विदूरगः । विमर्दोत्थः परिमलः' इति कोशः । तयोर्यो लोभस्तृष्णा तेनोपसर्पिणा समीपागमनशीलेन । किं कुर्वता तेन । कलं मधुरं यद्विरुतं झंकारस्तस्य छलेन मिषेण मदनस्य संमोहनमन्त्रं वशीकरणमन्त्रं जपतेव जापं कुर्वतेव । पुनः किं कुर्वन्तम् । **उत्कण्ठेति** । उत्कण्ठोत्कलिका तया यो ज्वरस्तापस्तेन यो रोमाञ्चो रोमोद्गमस्तस्य व्याजेनापदेशेन प्रतिरोमकूपं निपतितानां लग्नानां मदनशराणां कामबाणानां मध्ये कुसुमलक्षणा ये शरा बाणास्तेषां शल्यशकलानि त्रुटितबाणखण्डानि मध्ये प्रविष्टानि किंचिद्बहिर्दृश्यमानानि तेषां निकरं समूहमिवाङ्गलग्नं बिभ्राणं दधानम् । पुनः किं कुर्वाणम् । दक्षिणकरेणे[2]तस्ततः पर्यस्तां मुक्तावलीमेकावलीमुरसि हृदये धारयन्तं बिभ्राणम् । कीदृशीम् । स्फुरितः प्रद्युतितो नखकिरणानां निकरः समूहो यस्याः सा ताम् । नखकिरणानां दीर्घतीक्ष्णत्वरूपकण्टकसाम्यादुत्प्रेक्षते—**करतलेति** । करतलस्य यत्स्पर्शसुखं तेन कण्टकितामिव । श्वेतत्वसाम्यादाह—**अविनयेति** । अविनयः पूज्यपूजाव्यतिक्रमस्तस्य पताकां ध्वजामिव । पुनः प्रकारान्तरेण तमेव विशिनष्टि—**मदनेति** । कुसुमरेणुना पुष्पधूल्या तरुभिर्वृक्षैराहन्यमानं ताड्यमानम् । शुक्लत्वसाम्यादाह—मदनस्य यद्वशीकरणचूर्णं तेनेव । **आत्मेति** । आत्मनो राग आरुण्यमनुरागरूपा रतिश्च[3] तं संक्रामयद्भिरिव संक्रमणं कारयद्भिरिवासन्नैः समीपस्थैरनिलचलितैर्वायुना कम्पितैरेवंविधैरशोकपल्लवैः स्पृश्यमानं संघट्यमानम् । वनश्रिया काननलक्ष्म्या अभिनवो नूतनो यः पुष्पाणां कुसुमानां स्तबको गुच्छकस्तस्य मधुरसस्तस्य शीकरैः कणैरभिषिच्यमानमभिषेकविषयीक्रियमाणम् । तत्रोद्दीपकत्वसाम्येनाह—**सुरतेति** । सुरतलक्षणं यद्राज्यं तदर्थमभिषेकसलिलैरिव । अत्राभिषेकपदसामर्थ्यादेव सुरते राज्यत्वं द्योत्यते । **अलीति** । अलिनिवहैर्भ्रमरसमूहैर्निपीयमान आस्वाद्यमानः परिमलो येषां तैः । उपरिपतद्भिरुपरिष्टात्क्षरद्भिरेवंभूतैश्चम्पका हेमपुष्पकास्तेषां कुड्मलैर्मुकुलैः कृत्वा कुसुमशरेण कंदर्पेण ताड्यमानम् । चम्पककुड्मलानां स्वत एव पीतत्वाद्भ्रमराणां च कृष्णत्वादुत्प्रेक्षामाह—सधूमैस्तप्तशरशल्यकैरिव । अत्र शल्यकानि शरप्रान्तवर्तिलोहरूपाणीत्यर्थः । **अतीति** । अतिबहलोऽतिनिबिडो यो वनामोदो वनपरिमलस्तेनो-

---

**टिप्प०**—1 मदनशराणां (संबन्धिनः) ये कुसुमरूपाः शराः (फलकरहिताः काण्डाः) तेषां शल्यशकलनिकरं (अग्रस्थलोहफलकखण्डसमूहम्) बिभ्राणमित्यर्थः । रोमाञ्चो नास्ति मन्ये प्रतिरोमकूपं निपतिताः बाणास्ते निर्गताः किन्तु निमग्नः अग्रखण्डस्तु रोमकूपेषु लग्न इत्याशयः । 2 इतस्ततः पर्यस्तामिति मूले नास्त्येव । दक्षिणकरेण इतस्ततः पर्यस्तामिति योजनेन टीकाकारवराकस्तात्पर्यमपि न बुद्धवानिति ज्ञायते । दक्षिणकरेण उरसि मुक्तावलीं धारयन्तम् (अर्थात्स्वजीवनरक्षणाय प्रियां मुक्तास्रजं हस्तेनोरसि दधाति') अन्यत्तु स्पष्टम् । 3 साहित्यस्य तु स्पर्शोऽपि नास्ति वराकस्य । आत्मनो रागः (आरुण्यम्) एव रागः अनुरागस्तं संक्रामयद्भिः । रक्तवर्णो न संक्रामितो मन्ये अनुराग एव संचारित इत्याशयः । आरुण्यानुरागयोर्भेदेप्यभेदाध्यवसायादतिशयोक्तिः । संक्रामयद्भिरिव, इत्यतिशयोक्तिरिति द्वयोरङ्गाङ्गितया संकरः ।

---

पाठा०—१ स्फुरितकिरण. २ निकरम्. ३ शल्यकैः.

दक्षिणानिलेन निर्भर्त्स्यमानम्, मदकलकोकिलकुलकोलाहलैर्वसन्तजयशब्दकलकलैरिव मधुमासेनाकुलीक्रियमाणम्, प्रभातचन्द्रमिव पाण्डुतया परिगृहीतम्, निदाघगङ्गाप्रवाहमिव कृशिमानमागतम्, अन्तर्गतानलं चन्दनविटपमिव म्लायन्तम्, अन्यमिव, अदृष्टपूर्वमिव, अपरिचितमिव, जन्मान्तरमिवोपनतम्, रूपान्तरेणेव परिणतम्, आविष्टमिव, महाभूताधिष्ठितमिव, ग्रहगृहीतमिवोन्मत्तमिव, छलितमिवान्धमिव, वधिरमिव, मूकमिव, विलासमयमिव, मदनमयमिव, परायत्तचित्तवृत्तिं परां कोटिमधिरूढं मदनावेशस्य, अनभिज्ञेयपूर्वाकारं तमहमद्राक्षम्।

अपगतनिमेषेण चक्षुषा तदवस्थं चिरमुद्वीक्ष्य समुपजातविषादो वेपमानेन हृदयेनाचिन्तयम्—'एवं नामायमतिदुर्विषहवेगो मकरकेतुः, येनानेन क्षणेनायमीदृशमवस्थान्तरप्र-

---

न्मत्ता ये मधुकरा भ्रमरास्तेषां निकरः समूहस्तस्य झंकारलक्षणा निस्वनाः शब्दास्तैः कृत्वा दक्षिणानिलेन निर्भर्त्स्यमानं तिरस्क्रियमाणम्। शब्दत्वसाम्यादाह–हुंकारैरिव। मादृश उद्दीपके विद्यमानेऽपि तव किं सुरतप्रारम्भो न भविष्यत्येवेति साभिमानैरित्यर्थः। **मदेति**। मदेन हर्षेण[2] कला मनोहरा ये कोकिलाः पिकास्तेषां कुलं तस्य कोलाहलैः कलकलैः कृत्वा मधुमासेन चैत्रमासेनाकुलीक्रियमाणं व्याकुलीक्रियमाणम्। कोलाहलस्योद्दीपकत्वात्प्रोत्साहकत्वसाम्येनाह—**वसन्तेति**। वसन्तस्य पुष्पकालस्य जयशब्दास्तेषां कलकलैरिव। **प्रभातेति**। प्रभातस्य प्रत्यूषस्य यश्चन्द्रः कुमुदबान्धवस्तमिव। उभयोः साम्यमाह—**पाण्डुतेति**। पाण्डुतया पाण्डुरत्वेन परिगृहीतं स्वीकृतम्। **निदाघेति**। निदाघो ग्रीष्मकालस्तस्मिन्यो गङ्गाप्रवाहः स्वर्धुनीरयस्तद्वदिव कृशिमानं कृशत्वमागतं प्राप्तम्। **अन्तरिति**। अन्तर्गतो मध्यगतोऽनलो वह्निर्यस्मिन्नेवंभूतश्चन्दनविटपो[3] मलयजतरुस्तद्वदिव म्लायन्तं म्लानतां गच्छन्तम्। पूर्वदृष्टावस्थाशून्यत्वादाह—**अन्येति**। अन्यमिव पूर्वस्माद्भिन्नमिव। असंभावितविकारवत्त्वादाह—**अदृष्टेति**। अदृष्टपूर्वमिवानवलोकितपूर्वमिव। **अपेति**। अपरिचितमिवासंस्तवमिव। **जन्मेति**। जन्मान्तरं भवान्तरमुपगतमिव प्राप्तमिव। **रूपेति**। प्रशमलक्षणं परित्यज्य सानुरागलक्षणेन रूपान्तरेण परिणतमिव तन्मयतां गतमिव आविष्टमिव भूतोन्मादवातरोगाभिभूतमिव। **महेति**। महाभूतानि वेतालास्तैरधिष्ठितमिवाश्रितमिव। **ग्रहेति**। ग्रहाः[4] पिशाचादयस्तैर्गृहीतमिवाधिष्ठितमिव, उन्मत्तमिव क्षीबमिव, छलितमिव छलनां प्राप्तमिव, अन्धमिव गताक्षमिव, बधिरमिवाकर्णमिव, मूकमिवास्फुटवाचमिव, विलासमयमिवानन्दमयमिव, मदनमयमिव कंदर्पमयमिव। **परेति**। परस्यां महाश्वेतायामायत्ता लग्ना चित्तवृत्तिर्यस्यैवंभूतम्। मदनः कंदर्पस्तस्यावेशोऽध्यासस्तस्य परामुत्कृष्टां कोटिमवस्थामधिरूढमारूढम्। **अनेति**। अनभिज्ञेयोऽनवसेयः पूर्वाकार आद्याकृतिर्यस्य स तम्। अन्वयस्तु प्रागेवोक्तः।

**अपेति**। अपगतो निमेषो निमीलनं यस्यैवंभूतेन चक्षुषा नेत्रेण तदवस्थं पूर्वावस्थं चिरं चिरकालमुद्वीक्ष्य विलोक्य समुपजातः समुत्पन्नो विषादः खेदो यस्य सः। **वेपेति**। वेपमानेन कम्पमानेन हृदयेन चित्तेन अचिन्तयमध्यायम्। **एवमिति**। एवममुना प्रकारेण। नामेति कोमलामन्त्रणे। अयमतिशयेन दुर्विषहो दुःसहो वेगो यस्यैतादृशो मकरकेतुः कंदर्पो येन कारणेनानेनानङ्गेन क्षणेनायमीदृशमप्रतीकारमप्रतिक्रियमवस्थान्तरं[5]प्रकारं

---

**टिप्प०**—1 तिरस्कारपूर्वकं भीष्यमाणमित्यर्थ उचितः। 2 मदकलाः मदोन्मत्ता इत्यर्थो वाच्यः। 3 चन्दनविटपो मलयजशाखेत्यर्थो वाच्यः, विटपपदस्य शाखावाचकत्वात्। 4 पूतनादय इत्यर्थो योग्यः, पौनरुक्त्यप्रसक्तेः। 5 वराको न जानाति काव्यस्वारस्यम्। अवस्थान्तरम् प्रकारश्लेषैक एवार्थ इति नैवंविधमुदीरितं बाणस्य। अत एव–'ईदृशमवस्थान्तरमप्रतीकारमुपनीतः' इत्येव पाठः।

---

पाठा०—१ कृशिमागतम्. २ मन्मथा.

कारमप्रतीकारमुपनीतः । कथमेवमेकपदे व्यर्थीभवेदेवंविधो ज्ञानराशिः । अहो बत महच्चित्रम्, तथा नामायमाशैशवाद्धीरप्रकृतिरस्खलितवृत्तिर्मम चान्येषां च मुनिकुमारकाणां स्पृहणीयचरित आसीत् । अत्र त्वितर इव परिभूय ज्ञानमवगणय्य तपःप्रभावमुन्मूल्य गाम्भीर्यं मन्मथेन जडीकृतः । सर्वथा दुर्लभं यौवनमस्खलितम्' इति । उपसृत्य च तस्मिन्नेव शिलातलैकपार्श्वे समुपविश्यांसावसक्तपाणिस्तमनुन्मीलितलोचनमेव 'सखे पुण्डरीक, कथय किमिदम्' इत्यपृच्छम् । अथ सुचिरसंमीलनालग्नमिव कथमपि प्रयत्नेनानवरतरोदनवशात्समुपजातारुणभावमश्रुजलपटलपूरप्लावितमुत्कम्पितमिव सवेदनमिव स्वच्छांशुकान्तरितरक्तकमलवनच्छायं चक्षुरुन्मील्य मन्थरमन्थरया दृष्ट्या सुचिरं विलोक्य मामायततरं निःश्वस्य लज्जाविशीर्यमाणाक्षरम् 'सखे कपिञ्जल, विदितवृत्तान्तोऽपि किं मां पृच्छसि' इति कृच्छ्रेण शनैः शनैरवदत् ।

---

दशान्तरप्रकारमुपनीतः प्रापितः । उक्तविपर्यये दूषणमाह—**कथमिति** । एवंविधो ज्ञानराशिरेतादृशज्ञानसमूह एकपदे युगपत्कथमेवं व्यर्थीभवेत् । अत्र वितर्के प्रार्थनायां लिङ् । अहो इत्याश्चर्ये । बतेति खेदे । इदं महच्चित्रं महदाश्चर्यम् । तथा नाम तेन प्रकारेणायमा शैशवादाबाल्यान्मम चान्येषां च मुनिकुमारकाणां स्पृहणीयमभिलषणीयं चरितं यस्यैवंविध आसीदभूत् । अथैनं विशिनष्टि—**धीरेति** । धीरा स्थिरा प्रकृतिः स्वभावो यस्य स तम् । **अस्खलितेति** । अस्खलिता अखण्डिता वृत्तिर्यस्य स तम् । **अत्र त्विति** । अस्मिन्प्रदेश इतर इवान्य इव ज्ञानं परिभूय तिरस्कृत्य तपःप्रभावं तपोमाहात्म्यमवगणय्यावगणनां कृत्वा गाम्भीर्यं गम्भीरतामुन्मूल्योच्छेद्य मन्मथेन कंदर्पेण जडीकृतो जडतां नीतः । **सर्वथेति** । सर्वप्रकारेणास्खलितमखण्डितं यौवनं तारुण्यं दुर्लभं दुःप्रापम् । **उपेति** । उपसृत्य समीपमागत्य तस्मिन्नेव शिलातलैकपार्श्वे समुपविश्यांसे स्कन्धेऽवसक्तः स्थापितः पाणिः करो येन स तमनुन्मीलितलोचनमेव मुद्रितनेत्रमेवेत्यपृच्छं इत्यवोचम् । इतिद्योत्यमाह—**सखे इति** । हे सखे पुण्डरीक, कथय निवेदय किमिदम् । अथेति प्रश्नानन्तरम् । मन्थरमन्थरयालसालसया दृष्ट्या सुचिरं चिरकालं यावत् मां विलोक्य निरीक्ष्यायततरं दीर्घतरं निःश्वस्य चक्षुरुन्मील्य विमुद्र्य कथमपि महता कष्टेन । **लज्जेति** । लज्जया त्रपया विशीर्यमाणानि विदीर्यमाणान्यक्षराणि यस्मिन्निति क्रियाविशेषणम् । इति शनैःशनैर्मन्दंमन्दमवददवोचदित्यन्वयः । अथ चक्षुर्विशेषयन्नाह—**सुचिरेति** । सुचिरं चिरकालं यत्संमीलनं निमीलनं तेनालग्नमिवान्योन्यासंपृक्तमिव । प्रयत्नेन बलात्कारेणानवरतं निरन्तरं यद्रोदनमश्रुपातस्तद्वशात्समुपजातः समुत्पन्नोऽरुणभावो रक्तता यस्मिन् । **अश्रिवति** । अश्रुजलस्य नेत्राम्भसो यत्पटलं वृन्दं तस्य पूरो वृद्धिस्तेन प्लावितं व्याप्तमुत्कम्पितमिवोद्धूतमिव सवेदनमिव सव्यथमिव । अश्रूणां श्वेतत्वसाम्येनाह—**स्वच्छेति** । स्वच्छमतिनिर्मलं यदंशुकं वस्त्रं तेनान्तरितं व्यवहितं यद्रक्तकमलवनं तद्वच्छाया शोभा यस्मिन् । इतिवाच्यमाह—**सखे इति** । हे सखे कपिञ्जल, विदितवृत्तान्तोऽपि ज्ञातोदन्तोऽपि । विकारदर्शनादिति भावः । किं मां पृच्छसि किं प्रश्नं करोषि ।

---

**टिप्प०**—1 अकाण्डप्रलापोऽयं वराकस्य । वितर्कस्य न प्रार्थनमर्थः । न चात्र प्रार्थना, न किल कपिञ्जलेन प्रार्थ्यते व्यर्थीभवेदिति । तस्मात् संभावनायां लिङ् । कथमिदं संभाव्यते इति तदाशयः । 2 'अद्य तु' इति पाठेऽधिकं स्वारस्यम्, प्रमाणमत्र सहृदयहृदयम् । 3 नास्ति स्खलितं सत्पथाद् भ्रंशो यत्र तदस्खलितम् । 4 'संमीलनाल्लग्नमिव' इत्येव पाठः । चिरकालपर्यन्तं मुद्रणवशात् लग्नमिव परस्परं संसक्तावरणद्वयमिव इति तदर्थः । 5 प्रयत्नेन उन्मील्य इत्यन्वयः । अत्रास्य योजनं तु एतट्टीकाकारोचितमेव ।

---

पाठा०—१ अद्य. २ उन्मील्य. ३ अनुन्मीलित; अहमसमुन्मीलित. ४ सन्मीलनाल्लग्नम्. ५ उपजात. ६ वर्ष. ७ उत्कुपितम्. ८ मन्धरया. ९ विरलाक्षरम्.

अहं तु तदाकर्ण्य तदवस्थयैवाप्रतीकारविकारोऽयं तथापि सुहृदा सुहृदसन्मार्गप्रवृत्तो यावच्छक्तितः सर्वात्मना निवारणीय इति मनसावधार्याब्रवम्—'सखे पुण्डरीक, सुविदितमेतन्मम। केवलमिदमेव पृच्छामि, यदेतदारब्धं भवता किमिदं गुरुभिरुपदिष्टम्, उत धर्मशास्त्रेषु पठितम्, उत धर्मार्जनोपायोऽयम्, उतापरस्तपसां प्रकारः, उत स्वर्गगमनमार्गोऽयम्, उत व्रतरहस्यमिदम्, उत मोक्षप्राप्तियुक्तिरियम्, आहोस्विदन्यो नियमप्रकारः। कथमेतद्युक्तं भवतो मनसापि चिन्तयितुम्, किं पुनराख्यातुमीक्षितुं वा। अप्रबुद्ध इवानेन मन्मथहतकेनोपहासास्पदतां नीयमानमात्मानं नावबुध्यसे। मूढो हि मदनेनायास्यते। का वा सुखाशा साधुजननिन्दितेष्वेवंविधेषु प्राकृतजनबहुमतेषु विषयेषु भवतः। स खलु धर्मबुद्ध्या विषलतां सिञ्चति, कुवलयमालेति निस्त्रिंशलतामालिङ्गति, कृष्णागुरुधूमलेखेति कृष्णसर्पमवगूहति, रत्नमिति ज्वलन्तमङ्गारमभिस्पृशति, मृणालमिति दुष्टवारणदन्तमुसलमुन्मूलयति, मूढो विषयोपभोगेष्वनिष्टानुबन्धिषु यः सुखबुद्धिमारोपयति। अधिगतविषयत-

अहं तु तदाकर्ण्य निशम्य तदवस्थयैव पूर्वोक्तरीत्यैवायं पुण्डरीकोऽप्रतीकारविकारोऽप्रतिक्रियविकृतिस्तथापि सुहृदा मित्रेणासन्मार्गप्रवृत्तोऽसाधुपथानुगः सुहृद्यावच्छक्तितो यावद्बलतः सर्वात्मना सर्वप्रकारेण निवारणीयो वर्जनीय इति मनसा चित्तेनावधार्य निश्चित्याब्रवमवोचम्। हे सखे पुण्डरीक, एतन्मम सुविदितं सुज्ञातम्। तथापि केवलमिदमेव पृच्छामि प्रश्नविषयीकरोमि। तदेवाह—**यदिति**। भवता त्वया यदेतदारब्धं प्रस्तुतं तत्किमिदं गुरुभिर्हिताहितप्राप्तिपरिहारोपदेशकैरुपदिष्टं कथितम्, उत धर्मशास्त्रेषु स्मृत्यादिषु पठितं भणितम्, उताथवायं धर्मार्जनोपायः सुकृतोपार्जनप्रकारः, उत तपसामपरो भिन्नः प्रकारो भेदः, उत स्वर्गगमनस्यायं मार्गः पन्थाः, उतेदं व्रतस्य दीक्षाया रहस्यमुपनिषत्, उत मोक्षस्य महानन्दस्येयं प्राप्तियुक्तिरधिगमसमर्थनम्। **आहो इति**। आहोस्विदितर्के। अन्यो विलक्षणो नियमप्रकारोऽभिग्रहविशेषः। भवतस्तव कथमेतद्युक्तमुचितं मनसापि चित्तेनापि चिन्तयितुं विचारयितुम्। **किं पुनरिति**। आख्यातुं कथयितुमीक्षितुं विलोकयितुं वा किं पुनर्भण्यते। सर्वथा न युक्तमिति भावः। **अप्रेति**। अप्रबुद्ध इवाज्ञानीवानेन मन्मथहतकेन पापकारिणा कंदर्पेणात्मानं स्वमुपहासास्पदतां परिहासधामतां नीयमानं प्राप्यमाणं नावबुध्यसे न जानासि। हीति निश्चितम्। मूढो मन्दो मदनेन कंदर्पेणायास्यते पीड्यते। **साध्विति**। साधुजनाः सज्जनास्तैर्निन्दितेषु गर्हितेषु प्राकृतैः पामरा ये जना लोकास्तैर्बहुमतेषु संमतेष्वेवंविधेष्वेतादृशेषु विषयेष्विन्द्रियार्थेषु भवतस्तव का सुखाशा वाञ्छा। **स इति**। स मूढो धर्मबुद्ध्या पुण्यमिति कृत्वा विषलतां विषवल्लीं सिञ्चति सेकं करोति। **कुवलेति**। कुवलयमालोत्पलस्रगिति कृत्वा निस्त्रिंशलतां खड्गलतामालिङ्गत्याश्लिषति। **कृष्णेति**। कृष्णागुरुः काकतुण्डस्तस्य धूमलेखा दहनकेतनपङ्क्तिरिति कृत्वा कृष्णसर्पमवगूहति परिष्वजते। **रत्नेति**। रत्नमिति मणिरिति कृत्वा ज्वलन्तमङ्गारं प्रसिद्धमभिस्पृशति स्पर्शं करोति। **मृणालेति**। मृणालमिति तन्तुलमिति कृत्वा दुष्टो यो वारणो गजस्तस्य दन्तमुसलं दशनायोग्रमुन्मूलयत्युच्छिनत्ति। तच्छब्दस्य यच्छब्दसापेक्षत्वादाह—**य इति**। यः पुमाननिष्टानां दुःखानामनुबन्धः परम्परा विद्यते येष्वेवंविधेषु विषयोपभोगेष्विन्द्रियार्थोपभोगेषु सुखबुद्धिमिदं सुखजनकमिति धियमारोपयति स्थापयति। एतेन सर्वथा सुखजनकत्वं नास्तीति ध्वनितम्। **अधीति**। अधिगतं ज्ञातं विषयाणां तत्त्वं स्वरूपं येनैवंविधोऽपि कस्मात्केन हेतुना खद्योत इव ज्योतिरिङ्गण

**टिप्प०**—1 व्रतानुष्ठानभेदः। 2 मनसापि चिन्तयितुं भवतः कथं युक्तमित्यन्वयो बोध्यः, टीकाकारस्तु केवलं पर्यायलेखव्यग्रः। 3 साधारणाः। 4 कमलकन्दम्।

**पाठा०**—१ युक्तिः. २ कथय किमप्रबुद्ध. ३ लतावनम्. ४ अवगूहते. ५ महारत्नम्. ६ अनुबन्धेषु. ७ यः परिणतिविरसेषु.

स्त्वोऽपि कस्मात्खद्योत इव ज्योतिर्निर्वार्यमिदं ज्ञानमुद्वहसि, यतो न निवारयसि प्रबलरजः-प्रसरकलुषितानि स्रोतांसीवोन्मार्गप्रस्थितानीन्द्रियाणि, न नियमयसि वा क्षुभितं मनः। कोऽयमनङ्गो नाम। धैर्यमवलम्ब्य निर्भर्त्स्यतामयं दुराचारः' इत्येवं वदत एव मे वचन-माक्षिप्य प्रतिपक्ष्मान्तरालप्रवृत्तबाष्पवेणिकं[2] प्रमृज्य चक्षुः करतलेन मामवलम्ब्यावोचत्—

'सखे, किं बहूक्तेन[3]। सर्वथा स्वस्थोऽसि[4]। आशीविषविषवेगविषमाणामेतेषां कुसुमचा-पसायकानां पतितोऽसि न गोचरे, सुखमुपदिश्यते परस्य। परस्य यस्य चेन्द्रियाणि सन्ति, मनो वा वर्तते, यः पश्यति वा, शृणोति वा, श्रुतमवधारयति वा, यो वा शुभमिदं न शुभमिदमिति विवेक्तुमलं स खलूपदेशमर्हति। मम तु सर्वमेवेदमतिदूरापेतम्। अवष्टम्भो ज्ञानं धैर्यं प्रतिसंख्यानमित्यस्तमितैषा कथा। कथमप्येव मेऽयत्नविधृतास्तिष्ठन्त्यसवः। दूरा-

---

इव ज्योतिस्तत्त्वज्ञानं प्रकाशश्च तेन[1] निवार्यं दूरीकरणार्हं ज्ञानमुद्वहसि धारयसि। अस्य दिवाप्रनष्टचैतन्यत्वेन-तादृशधर्मवत्त्वसाधर्म्यात्खद्योतस्योपमानमिति भावः। एतस्मिन्नर्थे हेतुमाह—**यत इति**। यस्माद्धेतोः प्रबलो यो रजःप्रसरः[2] पापकर्मविस्तारो धूलिश्च तेन कलुषितानि मलिनीकृतानि स्वतोऽम्भःप्रसरणानि स्रोतांसि तानीवो-न्मार्गप्रस्थितान्युत्पथवृत्तानीन्द्रियाणि करणानि न निवारयसि न निवारणं करोषि। क्षुभितं क्षोभं प्राप्तं मनश्चित्तं न नियमयसि न नियन्त्रयसि। नामेति कोमलामन्त्रणे। कोऽयमनङ्गः कामः। धैर्यं धीरिमामवलम्ब्याश्रित्यायं दुराचारो दुष्टाचरणो निर्भर्त्स्यतां तिरस्क्रियताम्। इत्येवं पूर्वोक्तप्रकारेण वदत एव कथयत एव मम वचनं वच आक्षिप्यावगणय्य[3]। **प्रतीति**। प्रति प्रत्येकं यत्पक्ष्मणोऽन्तरालं विचालं तत्र प्रवृत्ता वाष्पवेणिका यस्मि-न्नेवंभूतं चक्षुः। अत्र वेणी प्रवाहः। 'वेणी धारा रयश्च सः' इति कोशः। स्वार्थे कप्रत्यये 'केऽणः' इति ह्रस्व-त्वम्। **प्रमृज्येति**। प्रमार्जनं कृत्वा करतलेन हस्ततलेन मामवलम्ब्यालम्बनीकृत्यावोचदब्रवीत्। किं तदि-त्याह—**सख इति**।

हे सखे, बहूक्तेन बहुभाषितेन किम्। सर्वथा त्वं स्वस्थो निरुपद्रवोऽसि। तत्र हेतुमाह—**आशीति**। आशीविषाः सर्पास्तेषां विषवेगो गरलप्रसरस्तद्विषमाणां कठिनानामेतेषां कुसुमचापसायकानां मन्मथबाणानां गोचरे विषये न पतितोऽसि, तेन त्वया परस्य सुखमुपदिश्यत उपदेशः क्रियते। स्वस्योपदेशानर्हत्वं प्रतिपाद-यन्नाह—**परेति**। परस्य[4] मद्व्यतिरिक्तस्य यस्य पुंस इन्द्रियाणि करणानि सन्ति। वेति सर्वत्र विकल्पार्थः। यस्य मनो वर्तते। यः पुमान्पश्यतीक्षते शृणोत्याकर्णयति वा। श्रुतमाकर्णितं चावधारयति जानाति। तदभि-प्रायावधारणं करोतीत्यर्थः। यः पुमानिदं शुभमिदमशुभमिति विवेक्तुं विवेचनां कर्तुमलं समर्थः। यत्तदोर्नि-त्याभिसंबन्धात्स पुमानुपदेशं हितशिक्षामर्हति योग्यो भवति। मम तु सर्वमेवेदं पूर्वोक्तं दूरापेतं दूरापास्तम्। इत्येषा कथा वार्तास्तमितास्तं प्राप्ता। इतिशब्दद्योत्यमाह—**अवेति**। अवष्टम्भश्चित्तवृत्तिनिरोधः, ज्ञानं विवे-कः, धैर्यं बाह्येन्द्रियनिरोधः, प्रतिसंख्यानमध्यात्मज्ञानम्। **कथमिति**। मे ममासवः प्राणा अयत्नेनाप्रयासेन

---

**टिप्प०**—1 अस्मिन्पाठे-खद्योतो ज्योतिषा निवार्यं किमुद्वहतीति कर्मणोऽपेक्षा। तस्मात्-'ज्योति-र्निर्वीर्यमिदम्' इत्येव पाठः। खद्योतो यथा निर्वीर्यं ज्योतिस्तथा त्वं निर्वीर्यम् (अहितनिवारणाभावादस-मर्थम्) ज्ञानमुद्वहसीति तदर्थः। 2 धर्मादिकमपि तु वराको न जानाति। प्रबलो यो रजसः रजोगुण-संभूतस्य कामस्य प्रसरः वेगस्तेन कलुषितानि। उक्तं गीतायाम्–'काम एष क्रोध एष रजोगुणसमुद्भवः' पक्षान्तरे स्पष्टोऽर्थः। 3 समाक्षेः पूर्वमेव स्ववचनेन विच्छिद्य। टीकाकारस्तु पर्यायेन्द्रः। 4 धिक्प्रला-पिनम्। पुनः परस्येत्युक्ते न किञ्चित्स्वारस्यम्। यस्येति यत्पदेनापि स एव गृह्यते यस्येन्द्रियाणि सन्तीति इन्द्रियशून्यात्पुण्डरीकात्पर एव स्वतो ग्रहीष्यते। प्रत्युत पौनरुक्त्येन वैरूप्यम्।

---

पाठा०—१ च. २ पाणौ माम्. ३ बहुनोक्तेन. ४ सुस्थोऽसि. ५ विधृते.

तीतः खलूपदेशकालः। समतिक्रान्तो धैर्यावसरः। गता प्रतिसंख्यानवेला। अतीतो ज्ञानावष्टम्भसमयः। केन वान्येनास्मिन्समये भवन्तमपहायोपदेष्टव्यम्, उन्मार्गप्रवृत्तिनिवारणं वा करणीयम्। कस्यान्यस्य वा वचसि मया स्थातव्यम्। को वापरस्त्वत्समो मे जगति बन्धुः। किं करोमि, यन्न शक्नोमि निवारयितुमात्मानम्। इयमनेनैव क्षणेन भवता दृष्टा दुष्टावस्था। तद्गत इदानीमुपदेशकालः। यावत्प्राणिमि तावदस्य कल्पान्तोदितद्वादशदिनकरकिरणातपतीव्रस्य मदनसंतापस्य प्रतिक्रियां क्रियमाणामिच्छामि। पच्यन्त इव मेऽङ्गानि, उत्क्वथ्यत इव हृदयम्, प्लुष्यत इव दृष्टिः, ज्वलतीव शरीरम्। अत्र यत्प्राप्तकालं तत्करोतु भवान्' इत्यभिधाय तूष्णीमभवत्।

एवमुक्तेऽप्यहमेनं प्राबोधयम्। यदा पुनःपुनः शास्त्रोपदेशविशदैः सनिदर्शनैः सेतिहासैश्च वचोभिः सानुनयं सोपग्रहं चाभिधीयमानोऽपि नाकरोत्कर्णे, तदाहमचिन्तयम्—

---

विधृताः कथमप्येव तिष्ठन्ति। यतो दुःसहमदनबाणैराक्रान्तस्य मम प्राणेष्वप्युपेक्षेति भावः। अत उपदेशो हितशिक्षाप्रदानसमयः खलु निश्चयेन दूरातीतो दूरेऽतिक्रान्तः। तथा धैर्यस्य धीरिमाया अवसरः समयः समतिक्रान्तो व्यतीतः। प्रतिसंख्यानवेलाध्यात्मक्षणो गता दूरीभूता। ज्ञानेन कृत्वा योऽवष्टम्भश्चित्तवृत्तिनिरोधस्तस्य समयोऽवसरः दूरं अतीतो व्यतिक्रान्तः। **केनेति**। अस्मिन्समये भवन्तमपहायान्येन केन वोपदेष्टव्यमुपदेशो दातव्यः। **उन्मार्गेति**। वाथवोन्मार्गेऽसाधुमार्गे या प्रवृत्तिः प्रवर्तनं तस्या निवारणं करणीयं कर्तव्यम्। **कस्येति**। अन्यस्य त्वद्व्यतिरिक्तस्य कस्य वा वचसि वचने मया स्थातव्यम्। न कस्यापीत्यर्थः। **को वेति**। अपरोऽन्यः को वा त्वत्समो मे मम जगति विश्वे बन्धुर्भ्राता। आविष्कृतं भावमुपसंहरति—**किमिति**। किं करोमि किं कुर्वे। यदिति हेतौ। आत्मानं स्वं निवारयितुं दुष्टप्रवृत्तेर्दूरीकर्तुं न शक्नोमि न समर्थो भवामि। **अनेनेति**। अनेनैव क्षणेन समयेनेयं दुष्टा दुःखदायिन्यवस्था दशा भवता त्वया दृष्टावलोकिता। **तदिति**। तस्माद्धेतोरिदानीं सांप्रतमुपदेशकालः शिक्षाप्रदानसमयो गतो व्यतिक्रान्तः। अन्यस्मिञ्शमदमादिरूपनिवृत्तिकरणाभावे हेतुमाह—**यावदिति**। यावत्कालमहं प्राणिमि जीवामि तावत्पर्यन्तम्। **कल्पेति**। कल्पान्तो युगान्तस्तत्रोदिता उदयं प्राप्ता ये द्वादशदिनकरकिरणास्तेषां य आतपः प्रकाशस्तद्वत्तीव्रस्य कठिनस्य। दुःसहस्येति यावत्। एवंविधस्य मदनसंतापस्य कंदर्पज्वरस्य प्रतिक्रिया चिकित्सा तल्लक्षणां क्रियां क्रियमाणां विधीयमानामिच्छामि समीहे। विवेकादिप्रतिक्रियाया अभावे प्राकृतप्रतिक्रिया तया सह संगमरूपैवेति भावः। संतापमेव प्रकटयन्नाह—**पच्यन्त इति**। मे ममाङ्गानि हस्तपादादीनि पच्यन्त इव पाकविषयीक्रियन्त इव। हृदयं स्वान्तमुत्क्वथ्यत इवोत्क्वाथ्यत इव। दृष्टिर्लोचनं प्लुष्यत इव दह्यत इव। शरीरं देहं ज्वलतीव भस्मीभवतीव। अत्र यत्प्राप्तकालं यदेतत्समयोचितम्। तया सह संगमरूपमित्यर्थः। भवांस्तत्करोत्विति पूर्वोक्तमभिधायोक्त्वा तूष्णीमभवन्मौनमकरोत्।

**एवमिति**। एवममुना प्रकारेणोक्तेऽपि कथितेऽप्यहमेनं पुण्डरीकं प्राबोधयं प्रबोधं कृतवान्। **यदेति**। यदा पुनःपुनर्भूयोभूयः शास्त्रस्य धर्मप्रतिपादकस्य ग्रन्थस्योपदेशः शिक्षा तेन विशदैर्निर्मलैः सनिदर्शनैः सोदाहरणैः सेतिहासैरितिहासः पुरावृत्तं तेन सहितैर्वचोभिः सानुनयं सप्रणयम्। 'प्रणतिः प्रणिपातेऽनुनये' इति कोशः। सोपग्रहं सानुकूलनम्। 'उपग्रहोऽनुकूलने' इति विश्वः। यथा स्यात्तथाभिधीयमान उपदिश्यमानोऽपि कर्णे श्रवणे नाकरोत्। अश्रुतमिव मदुक्तमकार्षीदित्यर्थः। **तदेति**। तदा तस्मिन्काले ऽहमचिन्तयमध्या-

**टिप्प०—1 वारंवारं प्रलपत्येष महोदयः। नात्र इमनिच् स्यात्। सत्त्वेपि पुंस्त्वमेव स्यान्न स्त्रीत्वमिति छात्रैर्न भ्रमितव्यम्। 2 अहोबुद्धिः! 'प्र-णी' धातोरर्थं विवृण्वन् 'प्र-णम्' धातोः प्रमाणमाह।**

पाठा०—१ दृष्टावस्था; अवस्था दृष्टा.

'अतिभूमिमयं गतः, न शक्यते निर्वर्तयितुम्[1] । इदानीं निरर्थकाः खलूपदेशाः । तत्प्राणपरिरक्षणेऽपि तावदस्य यत्नमाचरामि' इति कृतमतिरुत्थाय गत्वा तस्मात्सरसः सरसा मृणालिकाः समुद्धृत्य कमलिनीपलाशानि जललवलाञ्छितान्यादाय[2] गर्भधूलिकषायपरिमलमनोहराणि च कुमुदकुवलयकमलानि गृहीत्वागत्य तस्मिन्नेव लतागृहशिलातले शयनमस्याकल्पयम् । तत्र च सुखनिषण्णस्य प्रत्यासन्नवर्तिनां चन्दनविटपादीनां[3] मृदूनि किसलयानि निष्पीड्य तेन स्वभावसुरभिणा तुषारशिशिरेण रसेन ललाटिकामकल्पयम्, आ चरणतलादङ्गचर्चां चारचयम् । अभ्यर्णपादपप्रस्फुटितवल्कलविवरशीर्णेन च करसंचूर्णितेन कर्पूररेणुना स्वेदप्रतिक्रियामकरवम्[4] । उरोनिहितचन्दनद्रवार्द्रवल्कलस्य स्वच्छसलिलसीकरनिकरस्राविणा[5] कदलीदलेन व्यजनक्रियामन्वतिष्ठम् । एवं च मुहुर्मुहुरन्यदन्यन्नलिनीदलशयनमुपकल्पयतः[6],

---

यम् । इतिशब्दवाच्यमाह—**अतीति** । अयमतिभूमिमतिदूरं गतः प्राप्तः । कामस्य दशमीमवस्थां प्राप्त इत्यर्थः । निवर्तयितुं ततो व्यावर्तयितुं न शक्यते न पार्यते । तेनेदानीं सांप्रतम् । खलु निश्चयेन । उपदेशा निरर्थका निःप्रयोजनाः । तदिति हेत्वर्थे । तावदादावस्य पुण्डरीकस्य प्राणपरिरक्षणेऽपि जीवितपरित्राणेऽपि यत्नमुद्योगमाचरामि करोमीति कृता मतिर्येन स उत्थाय गत्वा च । अच्छोदाभिधं सर इति शेषः । तस्मात्सरसः कासारात्सरसा रसयुक्ता मृणालिकाः कमलिन्यः[1] समुद्धृत्योत्पाट्य ताभ्यो जललवेनाम्भोलेशेन लाञ्छितानि सहितानि कमलिनीपलाशानि नलिनीपत्राण्यादाय गृहीत्वा । **गर्भेति** । गर्भधूलि[illegible]-स्य यः कषायस्तुवरः परिमलस्तेन मनोहराणि शोभनान्येवंविधानि कुमुदानि श्वेतकमलानि कुवलयान्युत्पलानि[2] कमलान्येभ्यो[3] व्यतिरिक्तानि, कुमुदकुवलयानां कमलानि पुष्पाणि वा गृहीत्वा[illegible] च तस्मिन्नेव लतागृहशिलातलेऽस्य पुण्डरीकस्य शयनं शय्यामकल्पयमकरवम् । **तत्र चेति** । तस्मिन्नेव स्थले सुखेन निषण्णस्योपविष्टस्य प्रत्यासन्नवर्तिनां समीपस्थानां चन्दनविटपादीनां[4] मलयजवृक्षप्रभृतीनां मृदूनि सुकुमाराणि किसलयानि किसलानि निष्पीड्य संमर्द्य तेनानिर्वचनीयेन स्वभावसुरभिणा स्वाभाविकसुगन्धेन तुषारो हिमं तद्वच्छिशिरेण शीतलेनैवंविधेन रसेन द्रवेण ललाटिकां लोके 'आडी' इति प्रसिद्धामकल्पयमकरवम् । चरणतलं मर्यादीकृत्याचरणतलं तस्मात् । आङादियोगे पञ्चमी । अङ्गचर्चां शरीरभूषां चाऽऽरचयं रचितवान् । **अभ्यर्णेति** । अभ्यर्णा आसन्ना ये पादपा वृक्षास्तेषां स्फुटितानि स्फोटं प्राप्तानि यानि वल्कलानि चोचानि तेषां विवराणि छिद्राणि तेभ्यः शीर्णेन गलितेन च तथा करेण कृत्वा संचूर्णितेन क्षोदीकृतेन कर्पूररेणुना हिमवालुकाधूल्या स्वेदस्य घर्मजलस्य प्रतिक्रियां चिकित्सामकरवमकल्पयम् । **उर इति** । उरसि वक्षस्थले निहितं स्थापितं चन्दनद्रवेण मलयजरसेनार्द्रं क्लिन्नं वल्कलं यस्य स तथा तस्य । **स्वच्छेति** । स्वच्छा निर्मलाः सलिलसीकरा वातास्तवारिकणास्तेषां निकरः समूहस्तस्य[5] स्राविणा स्यन्दिनैतादृशेन कदलीदलेन रम्भापत्रेण व्यजनक्रियां तालवृन्तकृत्यम् । 'व्यजनं तालवृन्तं तत्' इति कोशः । अन्वतिष्ठमकरवम् । **एवं चेति** । एवममुना प्रकारेण मुहुर्मुहुर्वारंवारमन्यदन्यदन्यतरदन्यतरन्नलिनीदलशयनं कमलिनीपत्रशय्यामुपकल्पयतः कुर्वतः मुहुर्मुहुर्भूयोभूयश्चन्दनचर्चां मलयजमण्डनमारचयतो विदधतः, मुहुर्मुहुश्च वारंवारं स्वेदप्र-

---

**टिप्प०**—1 कमलिनीः इत्याशयः । 2 नीलोत्पलानीति वक्तव्यम् । 3 सामान्यतः पद्मानि । 4 पुनः प्रममाद टीकाकृत् । 'चन्दनविटपिनाम्' इत्येव पाठः । 'वृक्षप्रभृतीनां किसलयानि' इति लोकोत्तरो लेखः, वृक्षादन्येषामपि किसलयानि भवन्ति ? । 5 जलबिन्दुवर्षकेणेत्यर्थः ।

---

**पाठा०**—१ निवर्तयितुमिति. २ लाञ्छितानि चादाय. ३ विटपिनाम्. ४ प्रतीकारम्. ५ शीकरस्राविणा. ६ नलिनदल.

[१]मुहुर्मुहुश्चन्दनचर्चामारचयतः, मुहुर्मुहुश्च स्वेदप्रतिक्रियां कुर्वतः, [२]कदलीदलेन चानवरतं वीजयतः समुदभून्मे मनसि चिन्ता —'नास्ति खल्वसाध्यं नाम भगवतो मनोभुवः। क्वायं हरिण इव वनवासनिरतः [३]स्वभावमुग्धो जनः, क्व च विविधविलासरसराशिर्गन्धर्वराजपुत्री महाश्वेता । सर्वथा नहि किंचिदस्य दुर्घटं दुष्करमनायत्तमकर्तव्यं वा जगति । [४]दुरुपपादेष्वर्थेष्वप्ययमवज्ञया विचरति । [५]न चायं प्रतिकूलयितुं शक्यते । का वा गणना सचेतनेषु, अपगतचेतनान्यपि संघट्टयितुमलम्, यद्यस्मै रोचते । [६]कुमुदिन्यपि दिनकरकरानुरागिणी भवति, कमलिन्यपि शशिकरद्वेषमुज्झति, निशापि वासरेण सह मिश्रतामेति, ज्योत्स्नाप्यन्धकारमनुवर्तते, छायापि प्रदीपाभिमुखमवतिष्ठते, तडिदपि जलदे स्थिरतां व्रजति, जरापि यौवनेन संचारिणी भवति ।

---

तिक्रियां घर्मजलप्रतीकारं कुर्वतः प्रणयतः, कदलीदलेन चानवरतं निरन्तरं वीजयतः पवनं प्रक्षिपतो मे मम मनसि चिन्ता समुदभूत्प्रादुरभूत् । यतः—**नास्तीति** । नामेति कोमलामन्त्रणे । खलु निश्चये । भगवतो मनोभुवः कंदर्पस्य किमप्यसाध्यमनिष्पाद्यं नास्ति न विद्यते । एतदर्थं स्पष्टीकुर्वन्नाह—क्वेति महदन्तरे । अयं पुण्डरीको हरिण इव मृग इव वनवासेऽरण्यावस्थाने निरतस्तत्परः स्वभावेन प्रकृत्या मुग्धोऽविदग्धो जनः क्व । तथा विविधानां नानाप्रकाराणां विलासानां विभ्रमादीनां यो रसस्तात्पर्यं तस्य राशिः समूह एतादृशी गन्धर्वराजपुत्री महाश्वेता क्व । विदग्धाविदग्धयोः संगमः कथं भविष्यतीत्याशयेनाह—**सर्वथेति** । सर्वप्रकारेणास्य कंदर्पस्य जगति लोके दुर्घटं दुःसाध्यं तथा दुष्करं दुःखेन कर्तुं शक्यमनायत्तमनधीनमकर्तव्यं कर्तव्यविरोधि वा नहि किंचिदस्ति । अस्य सर्वं सुसाध्यमित्यर्थः । दुरुपपादेष्वयोग्येष्वर्थेषु कार्येष्वप्ययं कामोऽवज्ञया बलात्कारेण विचरति प्रवर्तते । न चायं केनापि पुंसा प्रतिकूलयितुं प्रतिरोद्धुं शक्यते पार्यते । **का वेति** । यद्यस्मै कंदर्पाय रोचते रुचिर्भवति तदापगतचेतनानि मन्दान्तःकरणान्यपि परस्परविरुद्धान्यपि संघट्टयितुं संयोजयितुमलं समर्थः, तस्य सचेतनेषु दशदशावर्तिषु संबन्धं कर्तुं का गणना । एतदेव स्पष्टयन्नाह—**कुमुदिनीति** । कुमुदिन्यपि कैरविण्यपि । **दिनकरेति** । दिनकरस्य सूर्यस्य कराः किरणाः । तत्कार्यकारित्वाद्दिनकरत्वं चन्द्रस्य । तस्मिन्ननुरागो विद्यते यस्या एवंविधा भवति । तदुक्तम्—'चन्द्रश्चण्डकरायते मलयजालेपः स्फुलिङ्गायते माल्यं सूचिकरायते मृदुगतिर्वातोऽपि वज्रायते' इति । **कमलिनीति** । कमलिन्यपि पद्मिन्यपि । शशिकरकार्यकारित्वात्सूर्यकिरणानां शशिकरत्वम् । तेषु यो द्वेषस्तमुज्झति त्यजति । तदुक्तम्—'आतपे धृतिमता सह वध्वा यामिनीविरहिणा विहगेन । सेहिरे न किरणा हिमरश्मेर्दुःखिते मनसि सर्वमसह्यम्' इति । **निशेति** । निशापि रात्रिरपि दिवसकार्यकारित्वाद्वासरेण मिश्रतामैक्यतामेति गच्छति । यथा—'चित्रन्यस्तादपि विषधराद्भीतिभाजो निशायां किं तद्ब्रूमस्त्वदभिसरणे साहसं नाथ तस्याः' इति । **ज्योत्स्नेति** । ज्योत्स्नापि कौमुद्यप्यन्धकारकार्यकारित्वात्तमनुवर्तते । तद्रूपतां भजतीत्यर्थः । यथा—'ज्योत्स्नाश्यामलतामुपैत्ययम्' इति । **छायेति** । छायापि प्रदीपस्य गृहमणेरभिमुखमवतिष्ठते संतिष्ठति । अत्र प्रदीपाधोभागे छायायाः सत्त्वान्न चित्रमित्यभिमुखग्रहणम् । तदुक्तम्—'आलोकस्तिमिरायते विधिवशात्प्राणोऽपि भारायते हा हन्त प्रमदावियोगसमये किं किं न दुःखायते' । **तडिदिति** । तडिदपि विद्युदपि जलदे स्थिरतां स्थैर्यं व्रजति गच्छति । अत्र तडित उद्दीपकत्वाद्विरहदुःखितस्य तस्य निमेषावस्थानमपि कल्पकल्पमित्यभिसंधिः । **जरेति** । जरापि विस्र-

**टिप्प०**—1 अनुभवजनित आनन्दविशेष इत्युचितम् । 2 विषयेष्वित्यर्थ उचितः । 3 अचेतनान्यपीति सरलोर्थः । 4 प्रलापोयम् । न किल चन्द्रो दिनकरो भवतीत्युच्यते ग्रन्थकृता । अपि तु विरुद्धमपि कामो मिथः संघट्टयतीति प्रतिज्ञाय रात्रिविकासिन्याः कुमुदिन्याः सूर्यानुकूल्यं द्योत्यते । एवमग्रेपि । परीक्षन्तां बुद्धिवैभवं सहृदयाष्टीकाकृतः । 5 सर्वथा प्रलाप एवायम् । कः प्रसङ्गोऽस्य ?

पाठा०—१ मुहुश्चन्दन. २ दलेनानवरतम्. ३ स्वभावविषयविमुखः. ४ दुरुपपादेष्वप्यर्थेषु. ५ नायम्. ६ तत्कुमुदिन्यपि; यत्तत्कुमुदिन्यपि.

किं वा तस्य दुःसाध्यमपरम्, एवंविधो येनायमगाधगाम्भीर्यसागरस्तृणवल्लघुतामुपनीतः । क्व तत्तपः, क्वेयमवस्था । सर्वथा निष्प्रतीकारेयमापदुपस्थिता । किमिदानीं कर्तव्यम्, किं वा चेष्टितव्यम्, कं देशं गन्तव्यम्, किं शरणम्, को वोपायः, कः सहायः, कः प्रकारः, का युक्तिः, कः समाश्रयो येनास्यासवो धार्यन्ते । केन वा कौशलेन, कतमया वा युक्त्या, कतरेण वा प्रकारेण, केन वावष्टम्भेन, कया वा प्रज्ञया, कतमेन वा समाश्वासनेनायं जीवेत्' इत्येते चान्ये च मे विषण्णहृदयस्य संकल्पाः प्रादुरासन् । पुनश्चाचिन्तयम्— 'किमनया ध्यातया निष्प्रयोजनया चिन्तया । प्राणास्तावदस्य येनकेनचिदुपायेन शुभेनाशुभेन वा रक्षणीयाः । तेषां च तत्समागममेकमपहाय नास्त्यपरः संरक्षणोपायः । बालभावादप्रगल्भतया च तपोविरुद्धमनुचितमुपहासमिवात्मनो मदनव्यतिकरं मन्यमानो नियतमेकोच्छ्वासावशेषजीवितोऽपि नायं तस्याः स्वयमभिगमनेन पूरयति मनोरथम् । अकालान्तरक्षमश्चायमस्य मदनविकारः । सततमतिगर्हितेन कृत्येनापि रक्षणीयान्मन्यन्ते

---

सापि यौवनेन तारुण्येन सह संचारिणी सार्धं संचरणशीला स्यात् । जराया अपि तत्कार्यकारित्वात्तदनुगामित्वमित्यर्थः । अत्रापिशब्दः सर्वत्र विरोधद्योतकः । **किं वेति** । वेति विकल्पार्थः; तस्य कंदर्पस्य । किमिति प्रश्ने । अपरं किं दुःसाध्यं दुष्करम् । **एवमिति** । येन कंदर्पेण एवंविधस्तपस्व्ययं पुण्डरीकः । **अगाधेति** । अगाधमलब्धतलं गाम्भीर्यं गम्भीरता तस्य सागरः समुद्रस्तृणवल्लघुतां लघीयस्त्वमुपनीतः प्रापितः । **क्वेति** । तदनिर्वचनीयस्वरूपं तपः क्व । तया चेयं परिदृश्यमानावस्था क्व । **सर्वथेति** । सर्वप्रकारेण निष्प्रतीकारासाध्येयमापद्विपदुपस्थिता प्राप्ता । **किमिति** । इदानीं सांप्रतं किं कर्तव्यम् । किं वा चेष्टितव्यमाचरितव्यम् । कं देशं कं स्थानं प्रति गन्तव्यं गमनीयम् । किं वा शरणं त्राणम् । को वोपायः कः प्रतीकारः । कः सहायः साहाय्यकृत् । कः प्रकारस्तदुपशामकविधिः । का युक्तिस्तत्प्रतिक्रियाबुद्धिः । कः समाश्रयः को निवासो येन कृत्वास्य मुनेरसवः प्राणा गच्छन्तो धार्यन्ते रक्ष्यन्ते । केन वा कौशलेन चातुर्येण, कतमया वा युक्त्या, कतरेण वा प्रकारेण, केन वावष्टम्भेनालम्बनेन, कया वा प्रज्ञया प्रतिभया, कतमेन वा समाश्वासनेन सान्त्वनेन वायं जीवेदिति । **एते चेति** । विषण्णहृदयस्य खिन्नचित्तस्य मे ममैते चान्ये च संकल्पा विकल्पाः प्रादुरासन्प्रकटीबभूवुः । **पुनश्चेति** । पुनस्तदनन्तरमहमचिन्तयं चिन्तितवान् । किं तदित्याह— **किमनयेति** । अनया निष्प्रयोजनया निरर्थकया चिन्तया ध्यातया किम् । तावदादौ अस्य पुण्डरीकस्य शुभेनाशुभेन वा येन केनचिदुपायेन प्राणा असवो रक्षणीयाः । **तेषां चेति** । तेषां प्राणानामेकं तस्याः समागममपहाय विहायापरो भिन्नः संरक्षणोपायो नास्ति । बालभावाच्छिशुस्वभावादप्रगल्भतयाप्रतिभान्विततया च तपोविरुद्धं व्रतविरोध्यनुचितमन्योन्यमात्मनः स्वस्योपहासमिव मदनव्यतिकरं कंदर्पवृत्तान्तं मन्यमानो ज्ञायमानो नियतं निश्चितमेक एवोच्छ्वासः श्वासोऽवशेषोऽवशिष्टो यस्मिन्नेवं तादृशं जीवितं प्राणितं यस्यैवंभूतोऽप्ययं पूर्वोक्तानौचित्यवशात्तस्या महाश्वेतायाः स्वयमभिगमनेनात्मनागमनेन मनोरथं चित्ताभिलाषं न पूरयति न पूरयिष्यति । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यत्यर्थे वर्तमाना । यथाश्रुतमेव वा किं त्वन्यस्य गमनेन तस्याः संगमो भविष्यति, तथाप्यन्यस्याप्यभिगमनेन का त्वरेत्यत आह—**अकालेति** । तस्य पुण्डरीकस्यायं मदनविकारो न कालान्तरं क्षमते । चिरकालं न तिष्ठतीत्यर्थः । अन्यस्य तदभिगमनप्रयासेन न प्रयोजनमित्यत आह—**सततमिति** । सततं निरन्तरमतिगर्हितेन निन्दितेन कृत्येनापि कार्येणापि साधवः सन्तः सुहृ-

**टिप्प०**—1 साधनाय उपपत्तिः ।

**पाठा०**—१ तृणलवलघुताम्. २ किमाचेष्टितव्यम्. ३ कां दिशम्. ४ च. ५ अनयात्यायतया; अनयात्यन्तायतया. ६ स्वत्समाग. ७ अनुचितमुपनतम्. ८ अकृत्येन,

सुहृदसून्साधवः। तदतिह्रेपणमकर्तव्यमप्येतदस्माकमवश्यकर्तव्यतामापतितम्। किं चान्यत्क्रियते। का चान्या गतिः। सर्वथा प्रयामि तस्याः सकाशम्। आवेदयाम्येतामवस्थाम्' इति चिन्तयित्वा कदाचिदनुचितव्यापारप्रवृत्तं मां विज्ञाय संजातलज्जो निवारयेदित्यनिवेद्यैव तस्मै तत्प्रदेशात्सव्याजमुत्थायागतोऽहम्। तदेवमवस्थिते यदत्रावसरप्राप्तम्, 'ईदृशस्य चानुरागस्य सदृशम्, अस्मदागमनस्य चानुरूपम्, आत्मनो वा समुचितं तत्रभवती प्रभवति' इत्यभिधाय किमियं वक्ष्यतीति मन्मुखासक्तदृष्टिस्तूष्णीमासीत्।

अहं तु तदाकर्ण्य सुखामृतमये ह्रद इव निमग्ना, रतिरसमयमुदधिमिवावतीर्णा, सर्वानन्दानामुपरि वर्तमाना, सर्वमनोरथानामग्रमिवाधिरूढा, सर्वोत्सवानामतिभूमिमिवाधिशयाना, तत्कालोपजातया लज्जया किंचिदवनम्यमानवदनत्वादस्पृष्टकपोलोदरैः ग्रथितैरिवोपर्युपरिपतनानुबन्धदर्शितमालाक्रमैः, अप्राप्तपक्ष्मसंश्लेषतयोपजातप्रथिमभरैरमलैरानन्दबाष्पजलबिन्दुभिः स्रवद्भिरावेद्यमानप्रहर्षप्रसरा[3] तत्क्षणमचिन्तयम्। दिष्ट्या तावदयमनङ्गो

---

दसून्मित्रप्राणान्रक्षणीयान्मन्यन्ते जानन्ति। **तदतीति**। तदेतदतिह्रेपणमप्यतिलज्जावहमप्यकर्तव्यमप्यनाचरणीयमप्यस्माकं पुण्डरीकमार्गानुवर्तिनामवश्यकर्तव्यतां नियतविधेयतामापतितमुपस्थितम्। चिन्तितमुपसंहरन्नाह—**किंचेति**। एतद्व्यतिरिक्तमन्यत्किं क्रियत इत्यर्थः। अन्या एतद्व्यतिरिक्ता का गतिः। न कापीत्यर्थः। अतः—**सर्वथैव**। सर्वप्रकारेण तस्या महाश्वेतायाः सकाशं समीपं प्रयामि गच्छामि। एतां प्रत्यक्षामवस्थां दशामावेदयामि कथयामि। इति चिन्तयित्वेति विचिन्त्य। इतिशब्दद्योत्यमाह—**कदाचिदिति**। अनुचितोऽयोग्यो यो व्यापारो व्यापृतिस्तत्र प्रवृत्तं विज्ञाय संजातलज्जः समुत्पन्नत्रपः कदाचिज्जातुचिन्मां निवारयेत्प्रतिषेधयेत्तस्मै पुण्डरीकायेति पूर्वोक्तमनिवेद्यैवाकथयित्वैव तत्प्रदेशात्तत्स्थानात्सव्याजं समिषमुत्थायाहमागतः तत्तस्मात्कारणादेवममुना प्रकारेणावस्थिते सति यदत्रावसरप्राप्तं प्रस्तावागतम्, ईदृशस्य अनुरागस्य स्नेहस्य च सदृशं तुल्यम्, अस्मदागमनस्य च मदीयागमनस्य चानुरूपमनुकूलम्, आत्मनो भवत्याः समुचितं योग्यं तत्र भवती प्रभवति समर्था भवतीत्यभिधायोक्त्वेयं किं वक्ष्यति किं कथयिष्यतीति कृत्वा मन्मुख आसक्ता दृष्टिर्यस्य स तूष्णीमासीत्।

अहं तु तत्पूर्वोक्तमाकर्ण्य श्रुत्वा सुखमेवामृतं पीयूषं तन्मये ह्रदे डोहे निमग्ना ब्रुडितेव रतिरसः शृङ्गाररसस्तन्मयमुदधिं समुद्रमवतीर्णेव मध्यप्रविष्टेव सर्वानन्दानां समग्रप्रमोदानामुपरि वर्तमाना सर्वमनोरथानां सकलचिन्तितानामग्रप्रान्तमधिरूढेवोपर्याश्रितेव, सर्वोत्सवानां समग्रक्षणानामतिभूमिमधित्यकामधिशयानेव प्रसुप्तेव, तत्कालोपजातया तत्समयोत्पन्नया लज्जया त्रपया किंचिदीषदवनम्यमानं प्रह्वीभूयमानं यद्वदनमाननं तस्य भावस्तत्त्वं तस्मात्। अत एवास्पृष्टः कपोलयोर्गल्लात्परप्रदेशयोरुदरं यैरेवंविधैः आनन्दबाष्पजलबिन्दुभिः अश्रुभिः स्रवद्भिः क्षरद्भिरावेद्यमानो निवेद्यमानः प्रहर्षस्य प्रमोदस्य प्रसरः प्रसङ्गो यस्यां सैवंविधाहं तत्क्षणं तत्कालमचिन्तयमध्यायमित्यन्वयः। अथाश्रु विशेषयन्नाह—**अमलैरिति**। अमलैर्निर्मलैरञ्जनाभावात्। ग्रथितैरिव गुम्फितैरिव। अविच्छिन्नपतनादिति भावः। उपर्युपरि यत्पतनं तस्य योऽनुबन्धः परम्परा तेन दर्शितः प्रकाशितो मालाक्रमः स्रक्परिपाटी यैः। **अप्राप्तेति**। अप्राप्तोऽमिलितो यः पक्ष्मसंश्लेषो नेत्ररोमसंबन्धस्तस्य भावस्तत्ता तयोपजातः समुत्पन्नः प्रथिमभरः पृथुत्वभरो येषु तैः[2]। दिष्ट्या भाग्येन तावदादावयमनङ्गो मामिव

---

टिप्प०—1 यस्या इत्युचितम्। 2 अधोमुखतया नेत्रजलं सरलमध एव पतति, नोभयभागयोः पक्ष्मसु जलसंबन्धो भवति। अत एव निष्पतज्जलमितस्ततोऽसंबन्धादेकपूरवाहित्वाद् गुरु इत्याशयः।

पाठा०—१ वा. २ वा. ३ प्रसङ्गा.

मामिव तमप्यनुबध्नाति, यत्सत्यमेतेन मे संतापयताप्यंशेन दर्शितानुकूलता । यदि च सत्यमेव तस्येदृशी दशा वर्तते, ततः किमिव नोपकृतमनेन, किंवा नोपपादितम्, को वानेनापरः समानो बन्धुः, कथं वा कपिञ्जलस्य स्वप्नेऽपि वितथा भारती प्रशान्ताकृतेरस्माद्वदनान्निष्क्रामति । इत्थंभूते किं मयापि प्रतिपत्तव्यम्, तस्य वा पुरः किमभिधातव्यम्' इत्येवं विचारयन्त्येव प्रविश्य ससंभ्रमा प्रतीहारी मामकथयत्—'भर्तृदारिके, त्वमस्वस्थशरीरेति परिजनादुपलभ्य महादेवी प्राप्ता' इति । तच्च श्रुत्वा कपिञ्जलो महाजनसंमर्दभीरुः सत्वरमुत्थाय 'राजपुत्रि, महानयमुपस्थितः कालातिपातः । भगवांश्च भुवनत्रयचूडामणिरस्तमुपगच्छति दिवसकरः । तद्गच्छामि । सर्वथाभिमतसुहृत्प्राणरक्षादक्षिणार्थमयमुपरचितोऽञ्जलिः । एष मे परमो विभवः' इत्यभिधाय प्रतिवचनकालमप्रतीक्ष्यैव पुरोयायिनाम्बायाः प्रविशता कनकवेत्रलताकरेण प्रतीहारिजनेन कञ्चुकिलोकेनागृहीतताम्बूलकुसुमपटवासाङ्गरागेण चा-

---

तमपि पुण्डरीकमप्यनुबध्नाति पीडयति । **यत्सत्यमिति** । तदेतेन मदनेन मां संतापयतापि अंशेन तत्संतापेन मे मम सत्यमनुकूलता दर्शिता । एवं सति मदनेन ममार्थं कुमारस्य संतापः क्रियत इत्यर्थः । कुमारस्यानुकूलत्वं विशदयन्नाह—**यदि चेति** । यदि सत्यमेव तस्येदृशी दशा वर्तते, ततोऽनेन मदनेन किमिव नोपकृतं किमुपकारो न कृतः । किं वा नोपपादितं किं वा न निष्पादितम् । **को वेति** । अनेन समानोऽपरः को वा बन्धुः । कपिञ्जलवचसि सत्यतां दृढीकुर्वन्नाह—**कथं वेति** । प्रशान्ताकृतेः कपिञ्जलस्यास्माद्वदनात्कथं वितथाऽसत्या भारती स्वप्नेऽपि निष्क्रामति । इत्थंभूते सति किं मयापि प्रतिपत्तव्यं किमङ्गीकर्तव्यम् । तस्य कपिञ्जलस्य वा पुरोऽग्रे किमभिधातव्यं किमु कथनीयम् । एवं विचारयन्त्येव ससंभ्रमा प्रतीहारी प्रविश्य प्रवेशं कृत्वा । गृहमिति शेषः । ममेत्यकथयदवोचत् । किं तदित्याह—**भर्त्रिति** । हे भर्तृदारिके, त्वमस्वस्थमपाटवं शरीरं यस्याः सेति परिजनात्परिच्छदलोकादुपलभ्य प्राप्य महादेवी गौर्यभिधाना त्वदम्बा प्राप्तागता । **तच्चेति** । तत्पूर्वोक्तं श्रुत्वाकर्ण्य कपिञ्जलो महानत्युत्कृष्टो यो जनानां संमर्दोऽन्योन्यसंघट्टस्तस्माद्भीरुः सत्वरं शीघ्रमुत्थाय । हे राजपुत्रि, अयं कालातिपातः कालविलम्बो महान्भूयानुपस्थितः प्राप्तः । **भगवांश्चेति** । भुवनत्रयस्य विष्टपत्रयस्य चूडामणिरिव चूडामणिः शोभाकारित्वाद्भगवान्दिवसकरः श्रीसूर्योऽस्तमुपगच्छत्यस्तमनं प्रयाति । **तदिति** । तत्तस्मात्कारणाद्गच्छामि व्रजामि । **सर्वथेति** । सर्वप्रकारेणाभिमतो वाञ्छितो यः सुहृन्मित्रं तस्य प्राणा असवस्तेषां रक्षा त्राणं सैव दक्षिणा मदागमनपूजा तदर्थमयमञ्जलिः पाणिसंयोजनरूप उपरचितो निबद्धः । **एष इति** । एष सुहृत्प्राणरक्षात्मको मम मे परम उत्कृष्टो विभव ऐश्वर्यमित्यभिधाय प्रतिवचनकालं प्रत्युत्तरसमयमप्रतीक्ष्यैव प्रतीक्षामकृत्वैवाम्बाया गौर्यभिधानायाः पुरोयायिनाग्रगामिना प्रविशता प्रवेशं कुर्वता परिजनेन परिच्छदेन सर्वतः समन्तात्संरुद्धे आवृते द्वारदेशे प्रतोलीदेशे कथमपि महता कष्टेनावाप्तनिर्गमः प्राप्तबहिर्गमनः प्रययावित्यन्वयः । अथ परिजनं विशिनष्टि—**प्रतीति** । प्रतीहारिणीं द्वारनियुक्तस्त्रीणां जनो लोको यस्मिन्स तेन । **कनकेति** । कनकस्य सुवर्णस्य वेत्रलता यष्टिविशेषः सा करे पाणौ यस्य स तेन । पद्मपाणिरित्यादिप्रयोगदर्शनात् 'न बहुव्रीहौ' इत्यनेन सप्तम्यन्तस्य पूर्वनिपातः । **कञ्चुकीति** । कञ्चुकिनां सौविद[illegible]णां लोको जनो यस्मिन्स तेन । 'लोको विश्वजनः' इत्यनेकार्थः ।

---

**टिप्प०**—1 अनुगच्छति, तदुपर्य[illegible]शं स्थापयतीत्याशयः । 2 अपरिसीमं मौढ्यम् । नेदं प्रतिहारी विचारयति । अतः 'विच[illegible]ठः । 'मयि' इति शेषः । 3 अप्रकृतिस्थमित्युचितम् । 4 हन्त धिग्वैधेयम् । एष प्रणाम[illegible]मिति स्वैमिदमन्युत्रभवः, नेतःपरं मे ऐश्वर्यं यत्समर्प्य त्वां प्रसादयेयमित्यर्थः । 5 पूर्वं स्त्रीलिङ्ग उपक्र[illegible]' इत्येव [illegible]न न बुध्य[illegible]तीहारी' इति), अत एव अत्रापि 'प्रतीहारीजनेन' इत्येव पाठः । 6 न जाने [illegible] । समर्थोऽस्ति तु—'सप्तमीविशेषणे बहुव्रीहौ' इति पूर्वनिपातः ।

पाठा०—१ अनेन. २ कियताप्यंश. ३ म[illegible]म्. ४ तर[illegible]. ३ दशा, ततः. ४ प्रतिकर्तव्यम्. ५ अम्बस्य. ६ गृहीत

मरव्यग्रपाणिना कुब्जकिरातवधिरवामनवर्षवरकलमूकानुवीतेन परिजनेन सर्वतः संरुद्धे द्वारदेशे कथमप्यवाप्तनिर्गमः प्रययौ । अम्बा तु मत्समीपमागत्य सुचिरं स्थित्वा स्वभवनमयासीत् । तया तु तत्रागत्य किं कृतं किमभिहितं किमाचेष्टितमिति शून्यहृदया सर्वं नालक्षयम् ।

गतायां च तस्यामस्तमुपगते भगवति हारीतहरितवाजिनि सरोजिनीजीवितेश्वरे चक्रवाकसुहृदि सवितरि, लोहितायमाने पश्चिमाशामुखे, हरितायमानेषु कमलवनेषु, नीलायमाने पूर्वदिग्भागे, पातालपङ्ककलुषेण महाप्रलयजलधिपयःपूरेणेव तिमिरेणावष्टभ्यमाने जीवलोके किंकर्तव्यतामूढा तामेव तरलिकामपृच्छम्—'अयि तरलिके, कथं न पश्यसि दृढमाकुलं मे हृदयम् । अप्रतिपत्तिविह्वलानि चेन्द्रियाणि । न स्वयमण्वपि कर्तव्यमलमस्मिन्ज्ञातुम् । उपदिशतु मे भवती यदत्र सांप्रतम् । अयमेवं त्वत्समक्षमेवाभिधाय गतः

---

**आगृहीतेति** । आ समन्ताद्गृहीता आत्तास्ताम्बूलकुसुमपटवासाङ्गरागा येन स तेन । तत्र ताम्बूलं नागवल्ली, कुसुमानि पुष्पाणि, पटवासः पिष्टातः, अङ्गरागो विलेपनम् । **चामर इति** । चामरैर्वालव्यजनैर्व्यग्र आकुलः पाणिर्हस्तो यस्य स तेन । **कुब्ज इति** । कुब्जः खर्वः, किरातः स्वल्पतनुः, बधिरोऽकर्णः, वामनः प्रसिद्धः, वर्षवरः षण्ढः । 'कलमूकोऽवाक्श्रुतिः' इति हलायुधः । एतैरनुवीतेनावृतेन । 'संवीते रुद्धमावृते' इति कोशः, क्वचित् 'अनुमत' इति पाठः । तत्रानुमतेनेत्यभिमतेनेत्यर्थः । **अम्बा त्विति** । अम्बा तु जननी तु मत्समीपं मदन्तिकमागत्येत्य सुचिरं चिरकालं स्थित्वा स्वभवनं निजगृहमयासीदगात् । तया तु मज्जनन्या तु तत्र मद्गृह आगत्य किं कृतं विहितम्, किमभिहितं किं कथितम्, किमाचेष्टितं किमाचरितम्, इति सर्वमहं शून्यहृदयोद्विग्नचित्ता नालक्षयं न ज्ञातवती ।

तस्यामम्बायां गतायां च सत्यां भगवति माहात्म्यवति सवितरि सूर्येऽस्तमुपगते प्राप्ते सति किंकर्तव्यतामूढाहं तामेव तरलिकामपृच्छं पृष्टवतीत्यन्वयः । अथ सूर्यं विशेषयन्नाह—**हारीतेति** । हारीतो मृदङ्कुरः 'हारिल' इति लोकप्रसिद्धः तद्वद्धरिता नीला वाजिनोऽश्वा यस्य स तस्मिन् । **सर इति** । सरोजिनी कमलिनी तस्या जीवितेश्वरः प्राणनाथस्तस्मिन् । **चक्रेति** । चक्रवाकस्य द्वन्द्वचरस्य सुहृदि । पुनः कस्मिन्सति । पश्चिमाशामुखे लोहितायमाने रक्तायमाने सति । पुनः केषु सत्सु । कमलवनेषु नलिनकाननेषु हरितायमानेषु नीलायमानेषु सत्सु । पुनः कस्मिन् । पूर्वदिग्भागे नीलायमाने सति । पुनः कस्मिन् । तिमिरेणान्धकारेण जीवलोकेऽवष्टभ्यमान आश्लिष्यमाने । केनेव । महाप्रलयस्य यो जलधिः समुद्रस्तस्य पयःपूरेणेव । पयःपूरस्य श्वेतत्वादुत्प्रेक्षा न संभवतीत्याह—**पातालेति** । पातालं वडवामुखं तस्य पङ्कः कर्दमस्तेन कलुषेण मलिनीकृतेन । अन्वयस्तु प्रागेवोक्तः । अयीति को[मला]मन्त्रणे । हे तरलिके, मे मम हृदयं कथं न पश्यसि नावलोकयसि । कीदृशम् । दृढमत्यर्थमाकुलं व्याकुलम् । तथाप्रतिपत्तिः सर्वस्मिन्विषयेऽरुचिरनिश्चयो वा तेन विह्वलानि व्याकुलानि चेन्द्रियाणि करणानि । अतोऽस्मि[न्वि]षये पुण्डरीकविषयेऽण्वपि कर्तव्यं कृत्यं स्वयं ज्ञातुमहं नालं न समर्था । यतोऽयं कपिञ्जलस्त्वत्समक्षमि[ति] त्वत्प्रत्यक्षमेवैवममुना प्रकारेणाभिधाय कथयित्वा गतः । अतोऽस्मिन्नर्थे यत्सांप्रतं योग्यं तद्भवत्युप[दिशतु] । दिष्ट्या कथयतु । अथोपदेशप्रकारमाह—

**टिप्प०**—1 वस्तुतस्तु 'विकल-मूक' इति पाठः । 2 स[जलं सरल]... [उ]त्पत्तिकृतम् । 'अनुगतेन' इत्येव पाठो मनोहरः, प्रमाणं च हृदयम् । 3 'अस्मिन्' इति केवलो[ऽ]संबन्धा[त्] ... प्रकृतो विषयः, न चानुकूलानि ग्रन्थबन्धाक्षराणि । अतः 'नालमस्मि' इत्येव पाठः । ज्ञातुं न ... [न] इति तदर्थः ।

पाठा०—१ वर्वरकलमूक; बर्बरविकलमूक. २ अनुगतेन. ३ तस[्या]... [तरलि]के न पश्यसि. ५ शून्यानि. ६ अस्मि.

कपिञ्जलः । यदि तावदितरकन्यकेव विहाय लज्जाम्, उत्सृज्य धैर्यम्, अवमुच्य विनयम्, अचिन्तयित्वा जनापवादम्, अतिक्रम्य सदाचारम्, उल्लङ्घ्य शीलम्, अवगणय्य कुलम्, अङ्गीकृत्यायशः, रागान्धवृत्तिः, अननुज्ञाता पित्रा, अननुमोदिता मात्रा, स्वयमुपगम्य ग्राहयामि पाणिम्, एवं गुरुजनातिक्रमादधर्मो महान् । अथ धर्मानुरोधादितरपक्षावलम्बनद्वारेण मृत्युमङ्गीकरोम्येवमपि प्रथमं तावत्स्वयमागतस्य प्रथमप्रणयिनस्तत्रभवतः कपिञ्जलस्य प्रणयप्रसरभङ्गः । पुनरपरं यदि कदाचित्तस्य जनस्य मत्कृतादाशाभङ्गात्प्राणविपत्तिरुपजायते, तदपि मुनिजनवधजनितं महदेनो भवेत्, इत्येवमुच्चारयन्त्यामेव मयि चन्द्रोदयजन्मना विरलविरलेनालोकेन वसन्तवनराजिरिव कुसुमरजसा धूसरतां वासवी दिगयासीत् ।

ततः शशिकेसरिविदार्यमाणतमःकरिकुम्भसंभवेन मुक्ताफलक्षोदेनेव धवलतामुपनीयमा-

---

**यदीति** । यदि तावत्स्वयमेव । कुमारानुसरणमननुसरणं चेति कोटिद्वयम्, तृतीयं पुनरपरमिति किंचिद् द्वारमाश्रित्य गूढाभिसंधिः । आद्ये त्वाह—**इतरेति** । इतरकन्यकेव नीचकुलोत्पन्नकन्येव लज्जां त्रपां विहाय, धैर्यं साहसमुत्सृज्य दूरीकृत्य, विनयं यथोचितव्यापारमवमुच्य त्यक्त्वा, जनापवादं कौलीनमचिन्तयित्वाऽध्यात्वा सदाचारं शोभनानुष्ठानमतिक्रम्योल्लङ्घ्य, शीलं परपुरुषेष्वनभिरतिस्वभावम् । 'शीलं साधुवृत्तस्वभावयोः' इत्यनेकार्थः । तदुल्लङ्घ्यातिक्रम्य, कुलमभिजनस्तदवगणय्यावगणनां कृत्वा, अयशोऽकीर्तिमङ्गीकृत्य स्वीकृत्य, रागेण कामरागेणान्धा वृत्तिर्वर्तनं यस्याः सैवंविधाहं पित्रा जनकेनाननुज्ञाताऽदत्तानुशासना, मात्रा चाननुमोदिताऽश्लाघिता स्वयमात्मनोपगम्य समीपे गत्वा पाणिं ग्राहयामि हस्तग्रहणं करोमि । एवममुना प्रकारेण गुरुजनाः पूज्यजना मातृपित्रादयस्तेषामतिक्रमादुल्लङ्घनान्महानधर्मः स्यात् । स त्वनुचित इति शेषः । अननुसरणमभिप्रेत्याह—**अथेति** । अथ धर्मानुरोधादितरः पक्षोऽननुसरणात्मकस्तस्यावलम्बनमाश्रयणं तद्वारेण प्रथमं मृत्युं व्यवरोपणमङ्गीकरोमि स्वीकरोमि । एवमपि प्राणविमोचनेऽपि तावदादौ स्वयमागतस्य प्रथमप्रणयिन आद्यस्नेहवतस्तत्रभवतः पूज्यस्य कपिञ्जलस्य प्रणयप्रसरस्य स्नेहवृद्धेर्भङ्गो नाशः स्यात् । पुनरपरमपि दूषणं वक्तुमाह—**यदीति** । यदि कदाचित्तस्य जनस्य पुण्डरीकस्य मत्कृतादाशाभङ्गात्प्राणविपत्तिर्जीवितनाश उपजायते भवेत्, मुनिजनवधजनितं तदपि महदेनः पातकं भवेदित्येवमुच्चारयन्त्यां वदन्त्यामेव मयि चन्द्रस्य शशाङ्कस्योदय उद्गमस्तस्माज्जन्मोत्पत्तिर्यस्य स तेन । विरलं च विरलं च विरलविरलं तेन । तुच्छतुच्छेनेत्यर्थः । एवंविधेनालोकेन प्रकाशेन । केन केव । **कुसुमेति** । कुसुमरजसा पुष्परागेण वसन्तवनराजिरिव काननलेखेव वासवी दिक्प्राक्ककुब्धूसरतामीषत्पाण्डुताम् । 'ईषत्पाण्डुस्तु धूसरः' इति कोशः । अयासीदप्रापत् ।

**तत इति** । ततो दिङ्मुखधूसरणानन्तरमिन्दुधाम्ना शशाङ्कतेजसा पाण्डुतां श्वेततामापाद्यमानं विधीयमानं पश्चिमेतरं दिगन्तरं पौर्वं दिग्विभागमदृश्यतालोक्यत । जनैरिति शेषः । पाण्डुत्वसाम्येनाह—**शशीति** । शश्येव विदारणकर्तृत्वात्केसरी तेन विदार्यमाणो भिद्यमानो यः कृष्णत्वसाम्यात्तम एव करी तस्य कुम्भौ शिरसः पिण्डौ तयोः संभव उत्पत्तिर्यस्यैवंभूतेन मुक्ताफलानां मौक्तिकानां क्षोदेनेव चूर्णेनेव धवलतां शुभ्रतामुपनीयमानं प्राप्यमाणम् उदयगिरिसंबन्धिनो ये सिद्धा गन्धर्वविशेषा विद्यासिद्धा वा तेषां याः सुन्दर्यः

---

**टिप्प०**—1 लोककृतनिन्दामिति सरलोऽर्थः । 2 पुनः सैव आपत्! प्रापत् इत्येवोचितम् । 3 अव्युत्पन्नोचितमिदम् । 'इतरत्' इत्येव पाठः । 4 टीकाकारबुद्धिसदृशोयं पाठः । वास्तवे तु—'केसरिकरनखरविदार्यमाण' इत्येव पाठः ।

---

**पाठा०**—१ उन्मुच्य. २ आगत्य. ३ मय्यासन्न. ४ केसरिकर.

नम्, उदयगिरिसिद्धसुन्दरीकुचच्युतेन चन्दनचूर्णराशिनेव पाण्डुरीक्रियमाणम्, चलितजलधिजलकल्लोलानिलोल्लासितेन वेलापुलिनसिकतोद्गमेनेव पाण्डुतामापाद्यमानं, पश्चिमेतरमिन्दुधाम्ना दिगन्तरमदृश्यत। शनैः शनैश्चन्द्रदर्शनान्मन्दमन्दस्मिताया दशनप्रभेव ज्योत्स्ना निःपतन्ती निशाया मुखशोभामकरोत्। तदनु रसातलादवनीमवदीर्योद्गच्छता शेषफणामण्डलेनेव रंजनीकरबिम्बेनाराजत रजनी। क्रमेण च सकलजीवलोकानन्दकेन कामिनीजनवल्लभेन किंचिदुन्मुक्तबालभावेन मकरध्वजबन्धुभूतेन समुपारूढरागेण सुरतोत्सवोपभोगैकयोग्येनामृतमयेन यौवनेनेवारोहता शशिना रमणीयतामनीयत यामिनी।

अथ तं प्रत्यासन्नसमुद्रविद्रुमप्रभापाटलितमिव, उदयगिरिसिंहकरतलाहतहरिणशोणितशो-

---

स्त्रियस्तासां कुचाः पयोधरास्तेभ्यश्च्युतेन गलितेन चन्दनचूर्णराशिनेव मलयजक्षोदसमूहेनेव पाण्डुरीक्रियमाणं शुभ्रतामापाद्यमानम्। **चलितेति**। चलितं कम्पितं यज्जलधिजलं समुद्राम्भस्तस्य कल्लोलानिलैस्तरङ्गवायुभिरुल्लासितेनोल्लासं प्रापितेन वेलाम्भसो वृद्धिस्तस्याः पुलिनं जलोज्झितं तटं तस्य सिकता वालुका तस्या उद्गमेनेव प्रकटनेनेव। शनैःशनैर्मन्दंमन्दं ज्योत्स्ना निःपतन्ती निशाया मुखशोभामकरोत्। विशदत्वसाम्येनाह—**दशनेति**। चन्द्रदर्शनात्स्वकीयनाथनिरीक्षणान्मन्दं मन्दं स्मिताया दशनप्रभेव दन्तकान्तिरिव। **तदन्विति**। तदनु पश्चाद्रसातलान्नागलोकादवनीं पृथ्वीमवदीर्य विदारणं कृत्वोद्गच्छता प्रादुर्भवता। श्वेतत्ववर्तुलत्वसाम्येनाह—**शेषेति**। शेषस्य नागाधिपतेः फणामण्डलेनेव फणासमूहेनेव रजनीकरबिम्बेन रजनी त्रियामाऽराजताशोभत। अत्र रजनीकरबिम्बमात्रग्रहणेन चन्द्रस्य बालभावप्रकटीकरणात्समुपारूढातिरागेणेति पूरणीयम्। ततश्च चन्द्रोदयकालेऽतीवारुण्यं बालत्वात्। तदनन्तरं च तरुणावस्थायामारुण्यमात्रम्। अत एव समुपारूढरागेणेत्येवाग्रे विशेषणम्। तथा शेषफणेत्यत्रानवरतकमलाकरकमलतललालितहरिपदाम्बुजप्रभारुणाभेति पूरणीयम्। तेन सर्वं साम्यमुपपद्यते। ततः क्रमेण परिपाट्या शशिना चन्द्रेण यामिनी रात्री रमणीयतां शोभनीयतामनीयत प्रापिताभूत्। 'नी प्रापणे' धातुः। अथच शशिनं विशेषयन्नाह—**सकलेति**। सकलः समग्रो यो जीवलोको मनुष्यलोकस्तस्यानन्दकेन प्रमोदोत्पादकेन कामिनीजनः स्त्रीलोकस्तस्य वल्लभेन प्रियेण। **किंचिदिति**। किंचिदीषदुन्मुक्तस्त्यक्तो बालभावः शिशुत्वं येन स तेन। **मकरेति**। मकरध्वजस्य कंदर्पस्य बन्धुभूतेन स्वजनभूतेन। **समिति**। समुपारूढोऽध्यासितो रागो रक्तता येन स तेन। **सुरतेति**। सुरतोत्सवे निधुवनक्षणे य उपभोगस्तत्रैकयोग्येन। सर्वथोचितेनेत्यर्थः। अमृतमयेन पीयूषात्मकेन। किं कुर्वता। आरोहतारोहणं कुर्वता। गगनमिति शेषः। सकलानन्दकारित्वादिसाधर्म्यादुत्प्रेक्षते—यौवनेनेव तारुण्येनेव।

अथ चन्द्रस्य तरुणभावं वर्णयन्नाह—**अथेति**। आरोहणानन्तरं तं रजनीकरं चन्द्रमुदितं विलोक्य निरीक्ष्याहं तत्क्षणं तत्कालमचिन्तयं चिन्तितवतीत्यन्वयः। अथ रजनीकरं विशिनष्टि—**अभीति**। अभिनवः प्रत्यग्रो य उदयरागस्तेन लोहितं रक्तम्। अत एव कीदृशमिव। प्रत्यासन्नः समीपवर्ती यः समुद्रः पयोधिस्तस्मिन्विद्रुमा रक्तकन्दास्तेषां प्रभाः कान्तयस्ताभिः पाटलितमिव श्वेतरक्तीकृतमिव। **उदयेति**। उदयगिरेः पूर्वाद्रेः

---

**टिप्प०—1 तरङ्गवायुभिः पुलिनस्थः सिकतासमूह एव उड्डीय उपरि गतो भवेत्तेनेव इन्दुधाम्ना इत्युत्प्रेक्षा। प्रकटनेन इति टीकार्थस्तु भ्रष्टः। 2 मन्दमन्दं स्मितं यस्यास्तस्[illegible] इत्यर्थं उचितः। 3 व्याकरणविरुद्धो भ्रष्टार्थश्चायं टीकामतः पाठः। 'अवदार्य' इत्युचितः। 4 हन्त [illegible] त्रैधेयम्। 'अत्र रजनिकरबिम्बमात्रग्रहणेन०' इत्यादि निरर्थकं प्रालपत्, आवश्यकं द्वयोः साधर्म्यं [illegible]लपत्। सकलजीवलोकानन्दजनकत्वादिविशेषणकृतं साधर्म्यं प्रायः उभयत्र साम्येन। यौवने [illegible]भावस्य उन्मोको जायत एव। एकत्र रागः आरुण्यम्, यौवनपक्षे अनुरागः। अमृतं प्रमोदः ( यौवनपक्षे ), आरोहता ( शरीरे विजृंभमाणेन, इति यौवनपक्षे ), अन्यत् टीकया बोद्धव्यम्।**

**पाठा०—१ पश्चिमेतरत्. २ अवदार्य. ३ फण. ४ रजनिकर. ५ निजहरिण.**

णीकृतमिव, रतिकलहकुपितरोहिणीचरणालक्तरसलाञ्छितमिवाभिनवोदयरागलोहितं रजनीकरमुदितं विलोक्यान्तर्ज्वलितमदनानलाप्यन्धकारितहृदया तरलिकोत्सङ्गविधृतशरीरापि मन्मथहस्तवर्तिनी चन्द्रगतनयनापि मृत्युमालोकयन्ती तत्क्षणमचिन्तयम् ,—'एकत्र खलु मधुमासमलयमारुतप्रभृतयः समस्ताः, एकत्र चायं पापकारी चन्द्रहतको न शक्यते सोढुम् । इदमतिदुर्विषहं मे हृदयम् । अस्य चोद्गमनमिदं सदाहज्वरग्रस्तस्याङ्गारवर्षः, शीतार्तस्य तुषारपातः, विषविस्फोटमूर्च्छितस्य कृष्णसर्पदंशः, इत्येवं चिन्तयन्तीमेव चन्द्रोदयोपनीता कमलवनम्लानिनिद्रेव मूर्च्छा मां निमीलितलोचनामकार्षीत् । अचिरेण च संभ्रान्ततरलिकोपनीताभिश्चन्दनचर्चाभिस्तालवृन्तानिलैश्चोपलब्धसंज्ञा तामेवाकुलाकुलां मूर्तेनेवाधिष्ठितां विषादेन मल्ललाटविधृतस्रवच्चन्द्रकान्तमणिशलाकामविच्छिन्नबाष्पजलधारान्धकारितमुखीं रुदन्तीं तर-

---

सिंहो हर्यक्षस्तस्य करतलेन चपेटयाहतस्ताडितो यो हरिणः तस्य शोणितं रुधिरं तेन शोणीकृतमिव रक्तीकृतमिव । रतिकलहेन कामकलहेन कुपिता कोपं प्राप्ता या रोहिणी चन्द्रस्त्री तस्याश्चरणौ पादौ तयोरलक्तरसो यावकद्रवस्तेन लाञ्छितमिव चिह्नितमिव । अथ महाश्वेतां विशेषयन्नाह—**अन्तरिति** । अन्तर्मध्ये ज्वलितो मदनानलः कामवह्निर्यस्यामेवंविधाप्यन्धकारितं हृदयं यस्या इति । अन्धकारप्रज्वलनयोर्मिथो विरोधात्[1] । **तरलिकेति** । तरलिकाया उत्सङ्गः क्रोडस्तत्र विधृतं स्थापितं शरीरं देहो यया एवंविधापि मन्मथहस्तवर्तिनी[2] कंदर्पकरगतेति विरोधः । **चन्द्रेति** । चन्द्रे शशाङ्के गते प्राप्ते नयने लोचने यस्याः एवंविधापि मृत्युं मरणमालोकयन्तीति[3] विरोधः । अत्र सर्वत्रापिशब्दो विरोधालंकारद्योतकः । एतत्परिहारश्चार्थभेदेन स्वयमूह्यः । स्वस्य संकटप्रविष्टतामावेदयन्त्याह—**एकत्रेति** । खलु निश्चयेन । एकत्रैकस्मिन्स्थले मधुमासमलयमारुतप्रभृतयः समस्ताः । एतेषामुद्दीपकत्वादेवोपादानम् । **एकत्रेति** । एकस्मिन्स्थले पापकारी पापिष्ठश्चन्द्र एव हतको हत्याकर्त्[4]सोढुं न शक्यते न पार्यते । विरहिणीहृदयस्य दुःखासहिष्णुत्वमाविःकुर्वन्नाह—**इदमिति** । अतिदुःखेन विषहत[5] इति दुर्विषहं हृदयं तथा । अस्य चन्द्रस्येदमुद्गमनं सदाहेन वर्तमानो ज्वरस्तापस्तेन ग्रस्तस्य । **अङ्गारेति** । अङ्गारवर्ष उल्मुकवृष्टिः । अङ्गारः साग्निर्निरग्निश्च द्विविधो वर्ण्यते । साग्नौ यथा—'अङ्गारचुम्बितमिव व्यथमानमास्ते'; निरग्नौ यथा—'कलङ्कस्तत्रत्यो व्रजति मलिनाङ्गारतुलनाम्' इत्यादि प्रयोगः । **शीतेति** । शीतार्तस्य शीतपीडितस्य तुषारो हिमं तस्य पातः पतनम् । **विषेति** । विषं गरलं तस्य विस्फोटकेन मूर्च्छितस्य मूर्च्छां प्राप्तस्य कृष्णसर्पस्य दंशो दशनम् । एतादृशमुद्गमनम् । इत्येवं चिन्तयन्तीं ध्यायन्तीमेव मूर्च्छा मां निमीलिते लोचने नेत्रे यस्या एवंविधामकार्षीत् । केव । चन्द्रोदयेन शशाङ्कोद्गमनेनोपनीता प्रापिता कमलवनस्य म्लानिः[7] संकोचस्तस्मिन्या निद्रा सेव । **अचिरेणेति** । अल्पकालेन संभ्रान्ता व्यामोहं प्राप्ता या तरलिका तयोपनीताभिरानीताभिश्चन्दनचर्चाभिर्मलयजसमालम्बनैस्तालवृन्तानिलैश्च व्यजनवातैश्चोपलब्धा संज्ञा चैतन्यं यया सा तामेव तरलिकामाकुलाकुलामुत्पिञ्जलां मूर्तेनेव विषादेनाधिष्ठितामाश्रिताम् । **मदिति** । मम ललाटे मदलीके विधृता स्थापिता स्रवन्ती जलं क्षरन्ती चन्द्रकान्तमणिशलाका यया सा ताम् । अस्या जलस्यातिशीतलत्वात्तत्स्थापनमुचितमेवेति भावः । **अवीति** । अविच्छिन्नात्रुटिता बाष्पजलधारा नेत्रवारिसंततिस्त-

---

**टिप्प०—1 अन्धकारो विरहेण प्रमोदराहित्यमिति समाधानम् । 2 मन्मथवशीभूतेति समाधानम् । 3 प्रियसमागमाभावे स्मरतापात्संमुखस्थं मरणं संभावयन्तीति समाधानम् । 4 उद्दीपनकार्ये मलयमारुतादीनां बहूनां प्रातिद्वन्द्ब्ये अयमेक एव चन्द्रस्तुल्य इति 'एकत्रायम्' इत्यादेस्तात्पर्यम् । 5 प्रलापोयम् । अत एव 'इदमतिदुर्विषहमदनवेदनातुरं च' इत्येव पाठः । अतिदुःसहया मदनवेदनया आतुरं विह्वलमिति तदर्थः । 6 अत्र व्याख्या मूका । विषवज्ज्वालाजनकेन व्रणविशेषेण । इत्यर्थो बोध्यः । 7 म्लानिरेव निद्रा ।**

---

**पाठा०**—१ लोहितं. २ मदनमधु. ३ चापकारी. ४ दुर्विषमदनवेदनातुरं च; दुर्विषहहृदयम्. ५ विषस्फोट. ६ विचिन्तयन्तीम्. ७ ग्लानि.

लिकामपश्यम् । उन्मीलितलोचनां च मां सा कृतपादप्रणामा चन्दनपङ्कार्द्रेण करयुगलेन बद्धाञ्जलिरवादीत्—'भर्तृदारिके, किं लज्जया गुरुजनापेक्षया वा । प्रसीद । प्रेषय माम् । आनयामि ते हृदयदयितं जनम् । उत्तिष्ठ । स्वयं वा तत्र गम्यताम् । अतः परमसमर्थासि सोढुमिमं प्रबलचन्द्रोदयविजृम्भमाणोत्कलिकाशतमुदधिमिव मकरचिह्नम्' इत्येवंवादिनीं तामवोचम्[१]—'उन्मत्ते[२], किं मन्मथेन । नन्वयं सर्वविकल्पानपाहरन्[३], सर्वोपायदर्शनान्युत्सारयन्, अन्तरायानन्तरयन्[४], सर्वसंदेहानपनयन्, सर्वशङ्कास्तिरस्कुर्वन्, लज्जामुन्मूलयन्, स्वयमभिगमनलाघवदोषमावृण्वन्, कालातिपातं परिहरन्, आगत एव मृत्योस्तस्यैव वा सकाशं नेता कुमुदबान्धवः । तदुत्तिष्ठ । यथाकथंचिदनुगमनेन[५] जीविता संभावयामि हृदय-

---

यान्धकारितं विच्छायितं मुखं यस्याः सा तां रुदन्तीं रोदनं कुर्वन्तीं तामेव तरलिकामपश्यमव(वा)लोकयम् । **उन्मीलितेति ।** उन्मीलिते विकसिते लोचने नेत्रे यस्याः सा ताम् । एवंविधां मां सा तरलिका । **कृतेति ।** कृतो विहितः पादयोश्चरणयोः प्रणामो नतिर्यया सा । **चन्दनेति ।** चन्दनस्य मलयजस्य पङ्कः कर्दमस्तेनार्द्रेण क्लिन्नेन करयुगलेन हस्तयुग्मेन बद्धोऽञ्जलिर्यया सैवंविधावादीदवोचत् । किं तदित्याह—**भर्त्रिति ।** हे भर्तृदारिके, किं लज्जया त्रपया । गुरुजनानां मातृपित्रादीनामपेक्षया वा किम् । प्रसीद प्रसन्ना भव । मां तत्र प्रेषय प्रेषणं कुरु । ते तव हृदयदयितं प्राणप्रियमेतादृशं जनमानयाम्यानयनं करोमि । वेति पक्षान्तरे । उत्तिष्ठोत्थानं कुरु । तत्र तस्मिन्स्थले गम्यतां गमनं क्रियताम् । इतः परं मकरचिह्नं मन्मथं सोढुमसमर्थाक्षमासि । कमिव । उदधिमिव समुद्रमिव । तत्र मकरा मत्स्याश्चिह्नानि यस्य । एतादृशसाम्येऽपि साम्यान्तरमाह—**प्रबलेति ।** प्रबलः प्रकृष्टो यश्चन्द्रोदयस्तेन विजृम्भमाणा वृद्धिं प्राप्ता उत्कलिका उत्कण्ठास्तासां शतं यस्मात् । अथ तरङ्गाणामुत्कलिका आरोहावरोहरूपास्तासां शतं यस्मिन्नित्येवंवादिनीं तां तरलिकामवोचमवदम् । किं तदित्याह—**उन्मत्ते इति ।** हे उन्मत्ते परवेदनायाः स्वानुभववदनभिज्ञे तरलिके, मन्मथेन कंदर्पेणैकेन किं स्यात् । नन्वाक्षेपे । अयं मृत्योर्मरणस्य तस्यैव वा कुमारस्य सकाशं समीपं नेता प्रापकः कुमुदबान्धवश्चन्द्र आगत एव प्राप्त एव । एतेन चन्द्रस्योद्दीपकत्वाद्विरहवेदनायास्तीव्रत्वात्कुमारनिकटेऽपि समागमनमशक्यमित्युत्कण्ठातिशयो दर्शितः । किं कुर्वन् । **सर्वेति ।** सर्वविकल्पान्समग्रचिन्तितानपाहरन्नपहरणं कुर्वन् । **सर्वेति ।** सर्वे समग्रा ये उपायाश्चन्दनवासप्रक्षेपादयस्तेषां दर्शनानि विलोकनान्युत्सारयन्दूरीकुर्वन् । **अन्तरायेति ।** अन्तराया अयं मुनिकुमारोऽहं च राजकुलोत्पन्नेत्युभयोर्विलक्षणकुलशीलस्वभावलोकगर्हारूपास्तानन्तरयन्व्यवधानं कुर्वन् । **सर्वेति ।** एतदनुसरणे किंचिदनिष्टं स्यादित्येवंरूपाः सर्वे ये संदेहा द्वापरास्तानपनयन्दूरीकुर्वन् । **सर्वेति ।** सर्वाश्च ताः शङ्का मातृपितृवर्गात्समुद्भूता आरेकास्तास्तिरस्कुर्वन्न्यक्कुर्वन् । **लज्जेति ।** लज्जां त्रपामुन्मूलयन्न(न् छि)च्छिन्दन् । **स्वयमिति ।** स्वयमात्मनाभिगमने तदनुसरणे लाघवदोषं लघुतादूषणमावृण्वन्नाच्छादयन् । **कालेति ।** कालस्य समयस्यातिपातमविलम्बं परिहरन्परित्यजन् । तत्तस्मात्कारणादुत्तिष्ठोत्थानं कुरु । अतित्वरयेति शेषः । एतेनानुसरणे आदरातिशयः सूचितः । अनुगमनेन यथाकथंचिद्यदि जीविता श्वसिता तदा यन्निमित्तमायासोऽनुभूयते तमायासकारिणं हृदयदयितं जनं संभावयामि । अनुसरणफलीभूतेन सह

---

**टिप्प०—1** विजृम्भमाणम् तरङ्गशतं यस्मिन् इत्यर्थः । टीकाकारस्य तु प्रलापः । 2 'इदं वा कर्तव्यम्, इदं वा' इत्यादिवितर्कान् । 3 दृश्यते अयमुपायो जीवरक्षणाय, इति दर्शनानि ज्ञानानि । 4 'सर्वानन्तरायान्' इत्येव प्रक्रमानुकूलः पाठः । टीकाकारस्तु सर्वथा शून्यः । 5 विलम्बमित्युचितम् ।

---

पाठा०—१ तामहमवोचम्. २ उन्मत्तिके. ३ अपहरन्. ४ सर्वानन्तरायान्. ५ अनुगमनजीवना; अनुद्गतजीविता.

दयितमायासकारिणं जनम्' इत्यभिदधाना मदनमूर्च्छास्वेदविह्वलैरङ्गैः कथंचिदवलम्ब्य तामेवोदतिष्ठम् । उच्चलितायाश्च मे दुर्निमित्तनिवेदकमस्पन्दत दक्षिणं लोचनम् । उपजात-शङ्का चाचिन्तयम्—'इदमपरं किमप्युपक्षिप्तं दैवेन' इति ।

अथ नातिदूरोद्गतेन त्रिभुवनप्रासादमहाप्रणालानुकारिणा सुधासलिलप्लवानिव वहता चन्दनरसनिर्झरनिकरानिव क्षरतामृतसागरपूरानिवोद्गिरता श्वेतगङ्गाप्रवाहसहस्राणीव वमता चन्द्रमण्डलेन प्लाव्यमाने ज्योत्स्नया भुवनान्तराले, श्वेतद्वीपनिवासमिव सोमलोकदर्शनसुख-मिवानुभवति जने, महावराहदंष्ट्रामण्डलनिभेन शशिना क्षीरसागरोदरादिवोद्ध्रियमाणे मही-मण्डले, प्रतिभवनमङ्गनाजनेन विकचकुमुदगन्धैश्चन्दनोदकैरुपह्रियमाणेषु चन्द्रोदयार्घेषु, कामिनीप्रहितसुरतदूतीसहस्रसंकुलेषु राजमार्गेषु, नीलांशुकरचितावगुण्ठनासु चन्द्रालोकभ-

संगमरूपेण समाधानं करिष्यामीत्याशयः । इत्यभिदधानेतिब्रुवाणा । **मदनेति** । मदनमूर्च्छया जनितो यः स्वे-दस्तेन विह्वलैर्व्याकुलैरङ्गैर्हस्तपादादिभिः कथंचिन्महता कष्टेन तामेव तरलिकामवलम्ब्यालम्बनीकृत्योदतिष्ठमु-त्थितवती । **उच्चेति** । उच्चलिताया उत्प्राबल्येन प्रस्थिताया मे मम दुर्निमित्तं कुमारस्य विगतजीवितत्वादिकं तस्य निवेदकं ज्ञापकं दक्षिणं सव्येतरं लोचनं नयनमस्पन्दतास्फुरत् । **उपेति** । उपजाता समुत्पन्ना शङ्का-निष्टोत्प्रेक्षणं यस्या एवंविधा चाहमित्यचिन्तयमित्यध्यायम् । इतिप्रतिपाद्यमाह—**इदमिति** । दैवेन विधिना-परमिदं किमुपक्षिप्तं निक्षिप्तम् ।

**अथेति** । दुर्निमित्तोपागमानन्तरं प्रदोषसमय एव यामिनीमुख एव तस्मात्प्रासादशिखरात्पूर्वोक्तसौध-प्रान्तादवातरमुत्तीर्णा । उत्तीर्य च प्रमदवनपक्षद्वारेण पक्षकेण निर्गत्य निर्गमनं कृत्वाहं महाश्वेता एव तत्समीपं पुण्डरीकाभ्यर्णमुदचलमुदगच्छमिति दूरेणान्वयः । कस्मिन्सति । चन्द्रमण्डलेन शशिबिम्बेन ज्योत्स्नया कौमुद्या भुवनान्तराले विष्टपविशाले प्लाव्यमाने पूर्यमाणे सतीत्यर्थः । कीदृशेन चन्द्रमण्डलेन । नातिदूरोद्गतेनातिविप्रकृ-ष्टोदितेन । अत्र च ज्योत्स्नायाः श्वेतत्वसंतोषजनकत्वस्वभावतया सुधासाम्येन तां वर्णयितुं चन्द्रमण्डल-विशेषणमाह—**सुधेति** । सुधा पीयूषं तृषोपशामकत्वात् तदेव सलिलं तस्य प्लवाः पूरास्तानिव वहता दधता । सलिलं गेहप्रणालेन गच्छतीत्याशयेनाह—**त्रिभुवनेति** । त्रिभुवनमेव प्रासादो देवगृहं तस्य महा-प्रणालानुकारिणा जलमार्गसादृश्यधारिणा । पुनस्तेनैव साम्येन द्विधा वर्णयन्नाह—**चन्दनेति** । चन्दनरसस्य मलयजद्रवस्य यो निर्झरो झरस्तस्य निकरानिव समूहानिव क्षरता क्षरणं कुर्वता । **अमृतेति** । अमृतस्य यः सागरः समुद्रस्तस्य पूरानिव प्लवानिवोद्गिरता वमता । **श्वेतेति** । श्वेतगङ्गायाः श्वेतजाह्नव्याः प्रवाहा-णामोघानां सहस्राणीव वमतोद्गिरता । **श्वेतेति** । श्वेतद्वीपे यो निवासस्तमिव सोमलोकस्य यद्दर्शनसुखं तदिव जनेऽनुभवति साक्षात्कुर्वति सति । **महेति** । महावराहस्यादिवराहस्य यद्दंष्ट्रामण्डलं तस्य निभेन सदृशेन शशिना चन्द्रेण । इदं च शशिनः किंचित्कलाहीनत्वमादायेत्युक्तम् । अन्यथा दंष्ट्राया वक्रत्वेन चन्द्रमण्डलस्य वर्तुलत्वेन साम्यं न स्यात् । **क्षीरेति** । क्षीरसागरोदराद्दुग्धोदधिमध्यान्महीमण्डल उद्ध्रियमाण इव बहिर्निष्काश्यमान इव । परमेश्वरेण महावराहरूपं धृत्वा मही समुद्रे मज्जन्ती दंष्ट्रायां धृतेति पुराणप्रसिद्धिः । **प्रतीति** । प्रतिभवनं प्रतिगृहमङ्गनाजनेन स्त्रीजनेन विकचकुमुदानां विकस्वरकैरवाणां गन्धो येष्वेवंविधैश्च-न्दनोदकैश्चन्द्रोदयार्घेषु शशाङ्कोद्गमनपूजासूपह्रियमाणेषु क्रियमाणेषु सत्सु । **कामिनीति** । कामिनीभिः स्त्रीभिः प्रहिताः प्रेषिता याः सुरतार्थं दूत्यः संचारिकास्तासां सहस्रं तेन संकुलेषु व्याप्तेषु राजमार्गेषु श्रीपथेषु

टिप्प०—1 मदनस्य मूर्च्छया वृद्ध्या । वस्तुतस्तु-मदनेन, मूर्च्छया ( या हि पूर्वं वर्णिता कविना ), स्वेदेन एतैस्त्रिभिः ( हेतुभिः ) विह्वलैः आतुरैः, इत्यर्थः । 2 विष्टपमध्ये इत्यर्थ उचितः ।

पाठा०—१ खेद. २ पूरान्. ३ आप्लाव्यमाने.

यचकितासु कमलवनलक्ष्मीष्विव नीलोत्पलप्रभापिहितास्वितस्ततः पलायमानास्वभिसारिकासु, प्रतिकुमुदमाबद्धमधुकरमण्डलासु प्रबुध्यमानासु भवनदीर्घिकाकुमुदिनीषु, स्फुटितकुमुदवनबहलधूलिधवलितोदरे निशानदीपुलिनायमानेऽन्तरिक्षे, चन्द्रोदयानन्दनिर्भरे महोदधाविव रतिरसमय इव उत्सवमय इव विलासमय इव प्रीतिमय इव जीवलोके, शशिमणिप्रणालनिर्झरे प्रमोदमुखरमयूररवरम्ये प्रदोषसमये, गृहीतविविधकुसुमताम्बूलाङ्गरागपटवासचूर्णया तरलिकयानुगम्यमाना, तेनैव मूर्च्छानिहितेन किंचिदाश्यानचन्दनललाटिकालग्नधूसराकुलालकेन चन्दनरसचर्चाङ्गरागवेषेणार्द्रेण तथैव च तया कण्ठस्थितयाक्षमालया

---

सत्सु। पुनः कासु। अभिसारिकासु सत्सु। संकेतितं स्थानं या अभिगच्छन्ति ता अभिसारिकाः स्त्रियः कथ्यन्ते। अथ चाभिसारिकां विशेषयन्नाह—**नीलेति**। नीलांशुकेन श्यामवस्त्रेण रचितं निर्मितमवगुण्ठनं शिरोंशुकं यासां तासु। नीलवस्त्रावृतत्वेन कैश्चिज्ज्ञातुं न शक्यन्त इति भावः। **चन्द्रेति**। चन्द्रस्य शशिनो य आलोकः प्रकाशस्तस्माद्यद्भयं तेन चकितासु त्रस्तासु। नीलावगुण्ठनविशिष्टाभिसारिकोपमानमाह—**कमलेति**। कमलवनानां नलिनखण्डानां लक्ष्म्यः श्रियस्तास्विव। कीदृशीषु। **नीलेति**। नीलोत्पलानामिन्दीवराणां प्रभाः कान्तयस्ताभिः पिहितासु स्थगितासु। भयचकितत्वादाह—**इतेति**। इतस्ततः समन्तात्पलायमानासु धावमानासु। **प्रबुध्येति**। प्रबुध्यमानासु प्रबोधं प्राप्यमाणासु। पुनः कस्मिन्सति। अन्तरिक्ष आकाशे सति। अथाकाशं विशिनष्टि—**स्फुटितेति**। स्फुटितं विकसितं यत्कुमुदवनं कैरवखण्डं तस्य बहला निविडा या धूलिः परागस्तया धवलितं शुभ्रितमुदरं मध्यं यस्य स तथा तस्मिन्। अन्तरिक्षस्य धवलितत्वसाम्येनाह—निशा रात्रिरेव नदी तटिनी तस्याः पुलिनायमाने जलोज्झितप्रतीरायमाणे। पुनः कस्मिन्सति। जीवलोके सति विश्वे सति। कीदृशे। चन्द्रोदयलक्षणो य आनन्दः प्रमोदस्तस्य निर्भरोऽतिशयो यस्मिन्। तस्य निरवधित्वादुत्प्रेक्षते—महोदधाविव महाम्भोधाविव। रसादीनां चतुर्णां जनकत्वाच्चतुर्भिरुत्प्रेक्षते—**रतीति**। रतिरसः शृङ्गारस्तन्मय इव। उत्सवो महस्तन्मय इव, विलासो लीला तन्मय इव, प्रीतिः स्नेहस्तन्मय इव। सर्वत्र यकारलोपः। समयाद्यनुसरणमाह—**प्रदोषेति**। प्रदोषो यामिनीमुखं स एव समयः क्षणस्तस्मिन्। प्रदोषलक्षणं विशेषयन्नाह—**शशीति**। शशिमणयश्चन्द्रकान्तास्तैर्निबद्धाः प्रणाला जलमार्गास्तेषां निर्झरा घनगर्जनानुकारिणस्तेभ्यो यः प्रमोदस्तेन मुखरा वाचाला ये मयूरा बर्हिणस्तेषां रवः शब्दस्तेन रम्ये मनोहरे। **गृहीतेति**। गृहीतान्यात्तानि विविधकुसुमताम्बूलाङ्गरागपटवासचूर्णानि ययैवंविधया तरलिकया पूर्वोक्तयानुगम्यमानानुव्रज्यमाना। पुनः कीदृशी। **तेनैवेति**। तेनैव मूर्च्छाकालनिहितेन स्थापितेन चन्दनरसेन चर्चा मण्डनमङ्गरागो विलेपनं यस्मिन्नेवंविधो यो वेषो नेपथ्यं तेन। कीदृशेन। किंचिदाश्यानाशुष्का चन्दनललाटिका तिलकविशेषस्तस्यां लग्ना धूसराः किंचित्पाण्डुरा आकुला विकीर्णा अलकाः केशा यस्मिंस्तेन। पुनः कीदृशेन। आर्द्रेण। अशुष्केणेत्यर्थः। **तथेति**। तथैव पूर्वोक्तप्रकारेणैव कण्ठस्थितया निगरण-

---

**टिप्प०—1** पदे पदे स्खलनं महापण्डितस्य। 'पूर्वं क्रियमाणेषु सत्सु' इति स्वयं व्याख्यायाऽपि, अत्र 'राजमार्गेषु सत्सु' इत्युच्यते। 'राजमार्गेषु दूतीसहस्रसंकुलेषु सत्सु' इत्युचितम्। एवमग्रेपि। **2** व्याख्या विस्मृता भ्रष्टा वा। अतः भवनस्य या दीर्घिकाः वाप्यस्तत्संबन्धिनीषु कुमुदिनीषु प्रबुध्यमानासु सतीषु। कीदृशीषु। प्रतिकुमुदं प्रत्येककुमुदपुष्पेषु आबद्धं धृतं मधुकरमण्डलं याभिस्तासु। **3** चन्द्रकरस्पर्शेन द्रवन्तः शशिमणय एव प्रणालाः जलनिर्गमनालानि तेषां निर्झरो यस्मिन्, अतएव वर्षाभ्रमेण प्रमोदमुखरा ये मयूरास्तेषां रवेण रम्ये। प्रदोषसमये। टीकार्थस्तु प्रलापः।

---

**पाठा०—१** सनीलोत्पलप्रभासु, २ प्रीतिमय इव मदनमय इव विलासमय इव.

श्रवणशिखरचुम्बिन्या च पारिजातमञ्जर्या, पद्मरागरत्नरश्मिविनिर्मितेनेव[1] रक्तांशुकेन कृतशिरोवगुण्ठना केनचिदात्मीयेनापि परिजनेनानुपलक्ष्यमाणा तस्मात्प्रासादशिखरादवातरम्। अवतीर्य च पारिजातकुसुममञ्जरीपरिमलाकृष्टेन रिक्तीकृतोपवनेन कुमुदवनान्यपहाय धावता मधुकरजालेन नीलपटावगुण्ठनविभ्रममिव[2] संपादयतानुबध्यमाना प्रमदवनपक्षद्वारेण निर्गत्य तत्समीपमुदचलम्।

प्रयान्ती च तरलिकाद्वितीयपरिजनमात्मानमवलोक्या[3][4]चिन्तयम्—'प्रियतमाभिसरणप्रवृत्तस्य जनस्य किमिव कृत्यं बाह्येन परिजनेन। नन्वेत एव परिजनलीलामुपदर्शयन्ति। तथा हि—समारोपितशरासनासक्तसायकोऽनुसरति कुसुमायुधः। दूरप्रसारितकरः[5][6] करमिव कर्षति शशी। प्रस्खलनभयात्पदे पदेऽवलम्बते रागः। लज्जां पृष्ठतः कृत्वा पुरः सहेन्द्रियैर्धावति हृदयम्। निश्चयमारोप्य नयत्युत्कण्ठा' इति। प्रकाशं चावदम्—'अयि तरलिके,

स्थापितयाक्षमालया जपमालया तथा पारिजातमञ्जर्या च। कीदृश्या। श्रवणयोः कर्णयोः शिखरमग्रं चुम्बतीत्येवंशीला सा तया। एतेन विरहव्याकुलतया नवीनं किंचिन्न कृतमिति सूचितम्। पुनः कीदृशी। **रक्तेति**। रक्तांशुकेन लोहितवस्त्रेण कृतं शिरोवगुण्ठनं यया सा। रक्तत्वसाम्यादाह—**पद्मेति**। पद्मरागो लोहितकरत्नं तस्य रश्मिभिः कान्तिभिर्विनिर्मितेनेव रचितेनेव। **केनेति**। केनचिदात्मीयेनापि स्वकीयेनापि परिजनेन परिच्छदेनानुपलक्ष्यमाणाज्ञायमाना। प्रकारान्तरेण तामेव विशेषयन्नाह—**मध्विति**। मधुकरा भ्रमरास्तेषां जालेन समूहेनानुबध्यमाना निरुध्यमाना। अथ मधुकरसमूहं वर्णयन्नाह—**पारीति**। पारिजातस्य मन्दारस्य या कुसुममञ्जरी तस्याः परिमलस्तेनाकृष्टेनाकर्षितेन। अतएव रिक्तीकृतोपवनेन। सर्वस्य मधुकरस्य तत्रैव गमनादुपवनं रिक्तीभूतमिति भावः। किं कुर्वता मधुकरकुलेन। कुमुदवनानि कैरवखण्डान्यपहाय त्यक्त्वा धावता त्वरया गच्छता। पुनः किं कुर्वता। **नीलेति**। नीलपटः कृष्णांशुकं तस्यावगुण्ठनविभ्रममिव शिरोवेष्टनविलासमिव संपादयता निष्पादयता। अन्वयस्तु प्रागेवोक्तः।

**प्रयान्तीति**। प्रयान्ती गच्छन्ती। **तर इति**। तरलिकैव द्वितीयः परिजनो यस्यैवंभूतमात्मानमवलोक्य निरीक्ष्याहं महाश्वेताचिन्तयमध्यायम्। किं तदित्याह—**प्रियेति**। अतिशयेन प्रियः प्रियतमस्तस्याभिसरणमनुगमनं तत्र प्रवृत्तस्योद्युक्तस्य जनस्य बाह्येन बहिर्भूतेन परिजनेन किमिव कृत्यम्। न किमपीत्यर्थः। प्रस्तुतस्य कुमारेण सह संगमरूपस्य कार्यस्य स्वनिकटवर्तिपरिचारिकास्वप्यन्तरङ्गत्वात्तरलिकायास्ततोऽपि संगोप्यमानत्वादिति भावः। परिजनराहित्येऽपि तद्युक्ततां प्रदर्शयन्नाह—**नन्विति**। ननु निश्चयेन। एते एवाग्रे वक्ष्यमाणां परिजनलीलामुपदर्शयन्ति। तत्कृत्यतां प्रकटीकुर्वन्तीत्यर्थः। तदेव प्रकटयन्नाह—**तथा हीति**। समारोपितमधिज्यीकृतं यच्छरासनं धनुस्तत्रासक्त आयुक्तः सायको बाणो येनैवंभूतः कुसुमायुधो मदनोऽनुसरत्यनुगच्छति। उद्दीपकत्वात्। दूरं प्रसारिता विस्तारिताः करा हस्ता येनैवंविधः शशी चन्द्रः करमिव हस्तमिव मां कर्षत्याकर्षणं करोति। **प्रस्खलनेति**। प्रस्खलनभयात्पतनभीतेः पदे पदे रागोऽवलम्बतेऽवलम्बनं करोति। अथ चान्योऽपि सेवकः प्रस्खलनभयात्स्वामिनोऽवलम्बनं करोति। **लज्जामिति**। लज्जां त्रपां पृष्ठतः पश्चाद्भागे कृत्वेन्द्रियैः करणैः सह हृदयं चेतः पुरोऽग्रे धावति त्वरया व्रजति। **निश्चयमिति**। कुमारविषयिण्युत्कठोत्कलिका निश्चयमारोप्यायं निश्चयेन प्रियसंगमो भविष्यतीति कृत्वा मां नयति प्रापयति। अन्योऽपि सेवको निश्चयमध्यवसायमारोप्यायं मदीयस्वामीति निश्चित्य नयति। अभिलषितस्थलमिति शेषः। प्रकाशं प्रकटं यथा स्यात्तथाहमित्यवदमवोचम्। किं तदित्याह—**अयीति**। अयि कोमलामन्त्रणे। हे तरलिके, अपिनाम प्रश्ने।

**टिप्प०**—1 प्रियसंबन्धि तदिदं मण्डनमिति शरीरात्पृथक्कर्तुं नाशाकि इति तु न स्मृतं वराकेण। 2 ममेत्युचितम्।

**पाठा०**—१ निर्मितेन. २ विभ्रमाम्. ३ द्वितीयमपरिजनम्. ४ आलोक्य. ५ दूरम्. ६ करः कर्षति.

अपि नाम मामिवायमिन्दुहतकस्तमपि किरणकचग्रहाकृष्टमभिमुखमानयेत्' इत्येवंवादिनीं च मामसौ विहस्याब्रवीत्—'भर्तृदारिके, मुग्धासि। किमस्य तेन जनेन। अयमात्मनैव तावन्मदनातुर इव भर्तृदारिकायास्तास्ताश्चेष्टाः करोति। तथा हि—प्रतिबिम्बच्छलेन स्वेदसलिलकणिकाञ्चितं चुम्बति कपोलयुगलम्। लावण्यवति पयोधरभारे निपतति प्रस्फुरितकरः। स्पृशति रशनामणीन्। निर्मलनखलग्नमूर्तिः पादयोः पतति। किं चास्य मदनातुरस्येव वपुस्तापाच्छुष्कचन्दनानुलेपपाण्डुतां वहति। मृणालवलयधवलान्करान्धत्ते। प्रतिमाव्याजेन स्फटिकमणिकुट्टिमेषु निपतति। केतकीगर्भकेसरधूलिधूसरपादः कुमुदसरांस्यवगाहते। सलिलसीकरार्द्रांञ्शशिमणीन्करैरामृशति। द्वेष्टि विघटितचक्रवाकमिथुनानि कमलवनानि। एतैश्चान्यैश्च तत्कालोचितैरालापैस्तया सह तमुद्देशमभ्युपागमम्। तत्र च मार्गलताकुसुमरजो-

अयमिन्दुहतको मामिव तमपि पुण्डरीकमप्यभिमुखं संमुखमानयेत्प्रापयेत्। कीदृशम्। किरणैः पादैर्यः कचग्रहः केशग्रहस्तेनाकृष्टमाकर्षितम्। एवंवादिनीमेवंब्रुवाणां च मामसौ तरलिका विहस्य हास्यं कृत्वाब्रवीदवोचत्। हे भर्तृदारिके, त्वं मुग्धासि। अस्य चन्द्रहतकस्य तेन जनेन पुण्डरीकाख्येन किम्। कृत्यमिति शेषः। अयं चन्द्रहतक आत्मनैव स्वयमेव मदनातुर इव कंदर्पपीडित इव भर्तृदारिकाया भवत्यास्तास्ताश्चेष्टाः कायव्यापारान्करोति विदधाति। एतदेव दर्शयति—**तथा हीति। प्रतीति।** प्रतिबिम्बच्छलेन प्रतिच्छायामिषेण कपोलयुगलं चुम्बति चुम्बनं करोति। तदेव विशिनष्टि—**स्वेदेति।** स्वेदसलिलस्य घर्मजलस्य कणिका विप्रुषस्ताभिरञ्चितं व्याप्तम्। एतेन कपोलयोः स्वच्छता विरहतप्तिश्च व्यज्यते। **लावण्येति।** लावण्यं लवणिमा विद्यते यस्मिन्नेवंभूते पयोधरभारे प्रस्फुरितः प्रकम्पितः करो येनैवंविधो निपतति। एतेन पयोधरयोर्जडत्वं परिणाहविशेषश्च द्योत्यते। **स्पृशतीति।** रशना कटिमेखला तस्या मणीन्रत्नानि स्पृशत्याश्लिषति। **निर्मलेति।** निर्मलाः स्वच्छा ये नखास्तत्र लग्ना मूर्तिर्यस्यैवंभूतः सन् पादयोः पतति। चन्द्रस्य कामुकत्वाभिव्यञ्जकत्वमाह—**किं चेति।** अस्य चन्द्रस्य मदनातुरस्येव वपुः शरीरं तापाच्छुष्को यश्चन्दनानुलेपस्तद्वत्पाण्डुतां शुभ्रतां वहति। **मृणालेति।** मृणालानि बिसानि तेषां वलयानि तद्वद्धवलान्करान्हस्तान्धत्ते धारयति। **प्रतिमेति।** प्रतिमाव्याजेन प्रतिबिम्बच्छलेन स्फटिकमणीनां कुट्टिमानि तेषु निपतति। **केतकीति।** केतक्याः प्रसिद्धाया या गर्भकेसरधूलिस्तद्वद्धूसरौ पादौ यस्यैवंभूतः कुमुदसरांसि कैरवोपलक्षिततडागान्यवगाहते। **सलिलेति।** सलिलस्य जलस्य सीकरा वाताहतकणास्तैरार्द्रांञ्शशिमणींश्चन्द्रकान्तान्करैर्हस्तैर्मृशति परामृशति। **विघटितेति।** विघटितानि भिन्नीभूतानि चक्रवाकमिथुनानि येभ्य एतादृशानि कमलवनानि द्वेष्टि द्वेषं करोति। **तयेति।** तया तरलिकया सहैतैः पूर्वोक्तैरन्यैश्चैतद्भिन्नैस्तत्कालोचितैस्तत्समययोग्यैरालापैः संभाषणैः करणभूतैस्तमुद्देशं पूर्वोक्तभूविभागमभ्युपागमं समागमम्। **तत्र चेति।** तत्र तस्मिन् प्रदेशे कैलासतटाद्रजताद्रिशिखराच्चन्द्रोदयेन शशिप्रकाशेन प्रसृतं च्युतं यच्चन्द्रकान्तमणिप्रस्रवणं चन्द्राश्मनिर्झरणं तस्मिन्। **मार्गेति।** मार्ग-

**टिप्प०**—1 अव्युत्पन्नस्यायं पाठः। 'करेण कचग्रहाकृष्टम्' इत्येव सुपाठः। करेण (किरणेन) तद्रूपेण पाणिना, केशेषु यो ग्रहः तेनाकृष्टं सक्तं ममाभिमुखमानयेत्। इति तदर्थः। 2 चुम्बतीव इत्यर्थेन प्रतीयमानोत्प्रेक्षा। एवमग्रेऽपि। कामुकसंबन्धिकार्यद्वारा कामुकव्यवहारसमारोपात्समासोक्तिस्तु न शङ्क्या, अप्रस्तुतेन प्रस्तुतपरिस्फूर्तौ तस्स्वीकृतेः। अत्र तु-'अयमात्मनैव तावत्०' इत्यादिना चन्द्रस्यापि प्रस्तुतत्ववर्णनात्। 3 किरणानित्यर्थं उचितः। 4 तया धूसरः पादः (किरणः) एव पादः (चरणः) यस्य सः, इत्यर्थ उचितः। 5 कमलवनस्यान्तरायेण चक्रद्वन्द्वं विघटितं भवतीति दम्पत्योर्वियोगसंपादकं कमलवनं वियोगतप्तश्चन्द्रो न सहत इत्यर्थः।

पाठा०—१ इन्दुः. २ करेण. ३ सा. ४ भर्तृदारिकायाम्. ५ कणिकाञ्चितम्. ६ चन्दनालेप. ७ उद्वहति. ८ केतकि.

धूसरं चरणयुगलं कैलासतटाच्चन्द्रोदयप्रस्रुतचन्द्रकान्तमणिप्रस्रवणे क्षालयन्ती यस्मिन्प्रदेशे स आस्ते तस्मिन्नेव चास्य सरसः पश्चिमे तटे पुरुषस्येव रुदितध्वनिं विप्रकर्षान्नातिव्यक्तमुपालक्षयम् । दक्षिणेक्षणस्फुरणेन च प्रथममेव मनस्याहितशङ्का तेन सुतरां विदीर्णहृदयेव किमप्यनिष्टमन्तःकथयतेव विषण्णेनान्तरात्मना 'तरलिके, किमिदम्' इति सभयमभिदधाना वेपमानगात्रयष्टिरभिमुखमतित्वरितमगच्छम् ।

अथ निशीथप्रभावाद्दूरादेव विभाव्यमानस्वरमुन्मुक्तार्तनादम् 'हा हतोऽस्मि । हा दग्धोऽस्मि । हा वञ्चितोऽस्मि । हा किमिदमापतितम् । किं वृत्तम् । उत्सन्नोऽस्मि । दुरात्मन् मदनपिशाच पाप निर्घृण, किमिदमकृत्यमनुष्ठितम् । आः पापे दुष्कृतकारिणि दुर्विनीते महाश्वेते, किमनेन तेऽपकृतम् । आः पाप दुश्चरित चन्द्र चाण्डाल, कृतार्थोऽसि । इदानीमपगतदाक्षिण्य दक्षिणानिलहतक, पूर्णास्ते मनोरथाः । कृतं यत्कर्तव्यम् । वहेदानीं यथेष्टम् । हा भगवन् श्वेतकेतो पुत्रवत्सल, न वेत्सि मुषितमात्मानम् । हा धर्म, निष्परिग्रहो-

---

लतानामध्ववल्लीनां कुसुमरजोभिः पुष्परागैर्धूसरमीषत्पाण्डुरं चरणयुगलं पादयुग्मं क्षालयन्ती धावनं कुर्वन्ती यस्मिन्प्रदेशे स कपिञ्जल आस्ते तिष्ठति तस्मिन्नेव स्थलेऽस्याच्छोदाभिधानस्य सरसः पश्चिमे तटे पश्चिमदिग्वर्तितीरे पुरुषस्येव पुरुषसदृशस्य विप्रकर्षाद्दूरान्नातिव्यक्तं नातिस्पष्टं रुदितध्वनिं क्रन्दितशब्दमुपालक्षयमुपलक्षितवती । **दक्षिणेति** । दक्षिणमपसव्यमीक्षणं लोचनं तस्य स्फुरणं स्पन्दनं तेन च प्रथममेवादावेव मनसि चित्त आहिता स्थापिता शङ्कारेका यया सैवंविधाहं तदुपलक्षणानन्तरं तेन रुदितेन सुतरामतिशयेन विदीर्णहृदयेव विशीर्णस्वान्तेव किमप्यनिष्टमशुभमन्तर्मध्ये कथयतेव ब्रुवतेव विषण्णेन विषादवतान्तरात्मना सता हे तरलिके, सभयं यथा स्यात्तथा किमिदमित्यभिदधाना ब्रुवाणा वेपमाना गात्रयष्टिः शरीरयष्टिः (यस्याः) सैवंविधातित्वरितमतिशीघ्रमभिमुखं संमुखमगच्छमव्रजम् ।

**अथेति** । आगमनानन्तरमित्येतान्यन्यानि वाक्यानि च विलपन्तं विलापं कुर्वन्तं कपिञ्जलमश्रौषमाकर्णयं तादृशविलापवाक्येनायं कपिञ्जल एवेति निश्चितवती । इतिशब्दार्थमाह—**निशीथेति** । निशीथोऽर्धरात्रं तस्य प्रभावान्माहात्म्याद्दूरादेव विप्रकृष्टादेव विभाव्यमानो ज्ञायमानः स्वरो यस्य स तम् । दिवा कोलाहलेन शब्दाः श्रोतुं न शक्यन्त इति भावः । पुनः कीदृशम् । **उन्मुक्तेति** । उन्मुक्त आर्तनादो येन स तम् । अथार्तस्वरान्विविच्य प्रदर्शयन्नाह—**हा हत इति** । हा इति खेदे । अहं हतस्ताडितोऽस्मि । हेति पूर्ववत् । दग्धो ज्वलितोऽस्मि । हा वञ्चितो विप्रतारितोऽस्मि । **हेति** । किमिदमतर्कितमापतितम् । मच्छिरसीति शेषः । किमिदं वृत्तं निष्पन्नम् । उत्सन्नो मूलादुत्पाटितोऽस्मि । अहमिति शेषः । हे दुरात्मन् हे मदनपिशाच, हे पाप हे पापिन्, हे निर्घृण हे निर्दय, किमिदमकृत्यमनुष्ठितमाचरितम् । आः पापे दुष्कृतकारिणि, दुर्विनीते शूलके हे महाश्वेते, ते तवानेन पुण्डरीकेण किमपकृतम् । कोऽयमनुपकारः कृतः । आः आक्रोशे । हे पाप पाप्मन्, हे दुश्चरित दुराचार, हे चन्द्र चाण्डाल, त्वं कृतार्थः कृतकृत्योऽसि । इदानीं सांप्रतं हे अपगतदाक्षिण्य दूरीभूतानुकूल्य, हे दक्षिणानिलहतक, ते तव मनोरथाः पूर्णाः परिपूर्णीभूताः । हतक इति हीनोक्तिः । **यदिति** । यत्कर्तव्यं तत्कृतम् । इदानीं सांप्रतं यथेष्टं यथेच्छया वह संचर । हा भगवन् हा स्वामिन् श्वेतकेतो, पुत्रवत्सल सुतहितकारक, आत्मानं स्वं मुषितमपहृतसर्वस्वं न वेत्सि न जानासि । हेति पूर्ववत् । हे धर्म हे वृष, त्वं

---

**टिप्प०—1** घोरमज्ञानं टीकाकृतः । अन्तरात्मना (करणेन) इदमभिदधानाऽगच्छम्, इत्युचितम् ।

पाठा०—१ प्रस्नुत; स्रुत. २ प्रस्रवणेन. ३ प्रक्षालयन्ती. ४ अवदीर्ण. ५ तदभिमुखम्. ६ अति. ७ उच्छिन्नोऽस्मि. ८ चण्डाल. ९ कृतं कर्तव्यम्.

ऽसि। हा तपः, निराश्रयमसि। हा सरस्वति, विधवासि। हा सत्य, अनाथमसि। हा सुरलोक, शून्योऽसि। सखे, प्रतिपालय माम्। अहमपि भवन्तमनुयास्यामि। न शक्नोमि भवन्तं विना क्षणमप्यवस्थातुमेकाकी। कथमपरिचित इवादृष्टपूर्व इवाद्य मामेकपदे उत्सृज्य प्रयासि। कुतस्तवेयमतिनिष्ठुरता। कथय त्वदृते क गच्छामि। कं याचे। कं शरणमुपैमि। अन्धोऽस्मि संवृत्तः। शून्या मे दिशो जाताः। निरर्थकं जीवितम्, अप्रयोजनं तपः, निःसुखाश्च लोकाः। केन सह परिभ्रमामि। कंमालपामि। केन वार्तां करोमि। उत्तिष्ठ त्वम्। देहि मे प्रतिवचनम्। क तन्ममोपरि सुहृत्प्रेम। क सा स्मितपूर्वाभिभाषिता च' इत्येतानि चान्यानि च विलपन्तं कपिञ्जलमश्रौषम्।

तच्च श्रुत्वा पतितैरिव प्राणैर्दूरादेव मुक्तैकताराक्रन्दा, सरस्तीरलतासक्तित्रुट्यमानांशुकोत्तरीया, यथाशक्ति त्वरितैरज्ञातसमविषमभूमिभागविन्यस्तैः पादप्रक्षेपैः प्रस्खलन्ती पदे पदे,

---

निर्गतः परिग्रहः स्वीकारो यस्यैवंभूतोऽसि। अस्य कामविह्वलत्वे तव स्वीकारो नास्तीत्यर्थः। यद्वायमेव तव स्थानपरिग्रहस्तस्य कामव्याकुलत्वे तव स्थानं नास्तीत्यर्थः। हा तपः, त्वं निराश्रयं निर्गतस्थानमसि। हा सरस्वति हा भारति, त्वं विधवा मृतभर्तृकासि। हा सत्य हा तथ्य, त्वमनाथं स्वामिरहितमसि। हा सुरलोक हा सुरालय, त्वं शून्य उद्वसोऽसि। तेन विनेत्यर्थः। हे सखे पुण्डरीक, मां कपिञ्जलं प्रतिपालय प्रतिपालनां कुरु। **अहमिति**। अहमपि भवन्तं त्वामनुयास्याम्यनुगमिष्यामि। न शक्नोमि न समर्थो भवामि भवन्तं त्वां विनैकाक्यसहायः क्षणमपि क्षणमात्रमप्यवस्थातुम्। अपरिचित इवासंजातसंस्तव इव, अदृष्टपूर्व इवानवलोकितपूर्व इव, अद्य मां कपिञ्जलमेकपदे सहसोत्सृज्य त्यक्त्वा कथं प्रयासि गच्छसि। तवेयमतिनिष्ठुरतातिकठिनता कुतः। त्वं कथय प्रतिपादय। त्वदृते त्वद्व्यतिरेकेण क गच्छामि क व्रजामि। कं याचे कं प्रार्थये। कं शरणं त्राणमुपैमि गच्छामि। अहमन्धः संवृत्तोऽस्मि चक्षुर्विकलो जातोऽस्मि। मे मम दिशः ककुभः शून्या उद्वसिता जाताः। त्वां विनेति शेषः। **निरिति**। निरर्थकं निष्फलं जीवितं प्राणधारणम्। तपोऽप्रयोजनं कृत्यरहितम्। **लोका इति**। लोका भुवनानि निःसुखाः सातवर्जिताः। **केनेति**। केन सह परिभ्रमामि परिभ्रमणं करोमि। **कमिति**। कं पुमांसमनिर्दिष्टनामकमालपाम्यालापं करोमि। **केनेति**। केन सह वार्तां प्रवृत्तिं करोमि। **त्वमिति**। त्वं भवानुत्तिष्ठोत्थानं कुरु। मे मम प्रतिवचनं प्रत्युत्तरं देहि। हे सुहृत् हे मित्र, ममोपरि तत्पूर्वसंबन्धि प्रेम स्नेहः क। स्मितपूर्वा हास्यपूर्विकाभिभाषिताभिवादिता सा क। अन्वयस्तु प्रागेवोक्तः।

**तच्चेति**। तत्पूर्वोक्तं विलपितं श्रुत्वाकर्ण्य तं प्रदेशं गत्वाहं पापकारिणी मन्दभाग्या तं पुण्डरीकं महाभागमद्राक्षमपश्यमिति दूरेणान्वयः। अथ तां विशेषयन्नाह—**दूरेति**। दूरादेव दविष्ठादेव मुक्त एकतारोऽत्युच्च आक्रन्दः पूत्कारो यया सा। **सर इति**। सरसोऽच्छोदनाम्नो यास्तीरलताः प्रतीरवल्ल्यस्तासु सक्तिः संबन्धस्तया त्रुट्यमानमंशुकेपूत्तरीयं निवसनं यस्याः सा तथा। पुनः किंकुर्वन्ती। पदे पदे पादप्रक्षेपैरङ्घ्रिन्यासैः करणभूतैः प्रस्खलन्ती स्खलनां प्राप्नुवन्ती। कैरिव। पतितैः प्राणैरिव। कीदृशैः। शक्तिमनतिक्रम्य यथाशक्ति। तेन त्वरितैस्त्वरायुक्तैः। **अज्ञेति**। अज्ञातोऽविदितो यः समविषमभूमिभागो भूप्रदेशस्तत्र विन्यस्तैः स्थापितैः।

---

**टिप्प०—**1 तस्य प्राणशून्यत्वे इति व्याख्यातव्यम्। 2 स्मितपूर्वम् अभिभाषते तच्छीलः स्मितपूर्वाभिभाषी तद्भावः स्मितपूर्वाभिभाषिता, इति व्याख्यानमुचितम्, टीकाकारस्तु अविवेकी। 3 त्रुट्यमानम् अंशुकं परिधानवस्त्रम्, उत्तरीयम् उपर्यावरणवस्त्रं च यस्याः सा।

---

**पाठा०—**१ सत्यत्वम्. २ भवता. ३ कमालपामि। उत्तिष्ठ देहि. ४ मे विलपतः. ५ पूर्वाभिभाषिता. ६ तं च. ७ सरस्तीरलतानुषज्यमान. ८ विषमभाग.

केनाप्युत्क्षिप्य नीयमानेव तं प्रदेशं गत्वा सरस्तीरसमीपवर्तिनि शिशिरशीकरासारस्राविणि शशिमणिशिलातले विरचितं कुमुदकुवलयकमलविविधवनकुसुमसुकुमारमालामयमिव मृणालमयम्, कुसुमशरसायकमयमिव शयनमधिशयानम्, अतिनिष्पन्दतया मत्पदशब्दमिवाकर्णयन्तम्, अन्तःक्रोधशमितमदनसंतापतया तत्क्षणलब्धसुखप्रसुप्तमिव, मुनिक्षोभप्रायश्चित्तप्राणायामावस्थितमिव, अतिप्रस्फुरितप्रभेण त्वत्कृते ममेयमवस्थेति कथयन्तमिवाधरेण, इन्दुद्वेषपरिवर्तितदेहतया पृष्ठभागनिपतितैर्मदनदहनविह्वलहृदयन्यस्तहस्तनखमयूखच्छलेन छिद्रितमिव शशिकिरणैः, उच्छुष्कपाण्डुरया स्वविनाशोत्पातोत्पन्नया मदनचन्द्रकलयेव

---

तानेव विशेषयन्नाह—**केनेति**। केनाप्यनिर्दिष्टनाम्नोत्क्षिप्योत्पाट्य नीयमानेव प्राप्यमाणेव सरसोऽच्छोदनाम्नस्तीरं प्रतीरं तस्य समीपवर्तिनि निकटस्थायिनि। **शिशिरेति**। शिशिराः शीतला ये शीकरास्तेषामासारो वेगवान्वृष्टिस्तस्य स्राविणी प्रक्षारिणी। एवंविधे शशिमणिशिलातले चन्द्रकान्तप्रस्तरे विरचितं निर्मितम्। **कुमुदेति**। कुमुदानि श्वेतकमलानि, कुवलयान्युत्पलानि, कमलानि नलिनानि, विविधान्यनेकप्रकाराणि वनकुसुमान्यरण्यपुष्पाणि तेषां या सुकुमारा माला स्रक्तन्मयमिव मृणालमयं बिसनिष्पन्नम्। उद्दीपकत्वादाह—**कुसुमेति**। कुसुमशरः कंदर्पस्तस्य सायका बाणास्तन्मयमिव। एवंविधं शयनं शयनीयमधिशयानं शयनं कुर्वाणम्। मम पदे मत्पदे तयोः शब्दमाकर्णयन्तमिव शृण्वन्तमिव। यतः स मद्विषय उत्कण्ठितस्तत्र हेतुमाह—**अतीति**। अतिनिष्पन्दतयातिनिश्चलतया। इयं नागतेति ममोपर्यन्तःक्रोधस्तेन शमितो मदनसंतापो यस्य तस्य भावस्तत्ता तया तत्क्षणं लब्धं यत्सुखं तेन प्रसुप्तमिव। ममोपरि क्रोधकरणात् मदनेन संतापो दूरीकृत इति भावः। मुनेर्मम[2] क्षोभस्त्वनुचित इत्यतस्तत्प्रायश्चित्तरूपो यः प्राणायामः प्राणयमस्तत्रावस्थितमिव कृतावस्थानमिव। स चातिनिःस्पन्दतया क्रियत इति भावः। **अतीति**। अतिप्रस्फुरिता दीप्ता प्रभा कान्तिर्यस्यैवंविधेनाधरेण रदनच्छदेन त्वत्कृते त्वन्निमित्तं ममेयं प्रत्यक्षोपलभ्यमानावस्था दशा जाता इति कथयन्तमिव प्रतिपादयन्तमिव। **इन्द्विति**। इन्दुद्वेषेण चन्द्रद्विषा परिवर्तितः प्रत्यङ्मुखीकृतो यो देहस्तस्य भावस्तत्ता तया पृष्ठभागे पश्चाद्भागे निपतितैः शशिकिरणैश्चन्द्रालोकैः पृष्ठं भित्त्वा हृदयभागे गमनाभावेऽपि मदनलक्षणो यो दहनो वह्निस्तेन विह्वलं यद्धृदयं स्वान्तं तत्र न्यस्तः स्थापितो यो हस्तः पाणिस्तस्य नखमयूखाः पुनर्भवकिरणास्तेषां छलेन मिषेण छिद्रितमिव[3] संजातविवरमिव। अनेन देहस्य स्वच्छत्वं नखकिरणानामुदितारुणचन्द्रकिरणसादृश्यं व्यज्यते। मुनिकुमारं विशेषयन्नाह—**उच्छुष्केति**। चन्दनलेखिकया मलयजलेखया रचिता निर्मिता ललाटिका यस्य स तम्। कीदृशया। उच्छुष्का चासौ पाण्डुरा चोच्छुष्कपाण्डुरा तया। अतएव शुष्कत्ववक्रत्वसाम्यादाह—**मदनेति**। मदनो मन्मथः स एव चन्द्रस्तस्य कलयेव। कीदृशया। स्वस्य यो

---

**टिप्प०**—1 मनसि यदा क्रोधोदयस्तदा मदनकृत उत्तापः शिथिलीभूतः, कामो हि मनोभूः। अत एव मनसि स्वस्थ एव तस्योदयः। 2 धिग् ग्रन्थधूमकेतुम्। 'मनःक्षोभ' इत्येव पाठः। मनःक्षोभस्य मदनवेगोत्पन्नचित्तोद्वेलनस्य (तत्प्रयुक्तपापस्येत्याशयः) प्रायश्चित्तरूपो यः प्राणायाम इति तदर्थः। 3 वक्षसि स्थापितस्य करस्य नखकिरणास्तथा प्रसरन्ति यथा चन्द्रं प्रति पृष्ठं कृत्वा शयानस्यास्य पृष्ठं भित्त्वा चन्द्रकिरणा एव वक्षस्थलाद्बहिर्निःसृताः स्युरित्युत्प्रेक्षाशयः। 4 चन्द्रकलाकारा चन्दनरेखा तथा प्रतीयते यथा स्वस्य (पुण्डरीकस्य) विनाशकारकोत्पाताय मदनसम्बन्धिनी चन्द्रकलैव उदिता भवेत्। असमये ग्रहादीनामुदय उत्पाताय भवतीत्याशयः। पदानामर्थबोधष्टीकातो निर्वाह्यः।

---

**पाठा०**—१ शीकरस्राविणि. २ कुवलयविविध. ३ सुकुमारम्; मालामयम्. ४ अन्तःकृतान्तोपशमित; अन्तःकोपशमित; अन्तःक्षोभशमित. ५ क्षण. ६ मनःक्षोभ. ७ पाण्डुतया. ८ स्वविनाशोत्पन्नया; स्वदेहविनाशोत्पन्नया.

चन्दनलेखिकया रचितललाटिकम्, ईषदालक्ष्यपरिवृत्ततारकेणानवरतरोदनताम्रेण प्राणोत्सर्गोपजाताश्रुक्षयतया रुधिरमिव क्षरता मदनशरशल्यवेदनाकूणितत्रिभागेन नातिनिमीलितेन लोचनयुगलेन 'मत्तोऽतिप्रियतरस्तवापरो जनो जातः' इति कुपितेनेव जीवितेन परित्यक्तम्, मन्मथव्यथया सहैतानसून्स्वयमिवोत्सृज्य निश्चेतनासुखमनुभवन्तम्, अनङ्गयोगविद्यामिव ध्यायन्तम्, अपूर्वप्राणायाममिवाभ्यस्यन्तम्, उपपादितास्मदागमनेन प्रणयादिवापहृतप्राणपूर्णपात्रमनङ्गेन, रचितचन्दनललाटिकात्रिपुण्ड्रकम्, धृतसरसबिससूत्रयज्ञोपवीतम्, अंसावसक्तकदलीगर्भपत्रचारुचीरम्, एकावलीविशालाक्षमालम्, अविर-

---

विनाशस्तल्लक्षण उत्पातस्तेनोत्पन्नया प्रकटीभूतया। पुनः कीदृशम्। एवंविधेन लोचनयुगलेन नेत्रयुग्मेन। उपलक्षितमिति शेषः। अथ च लोचनयुगलं विशेषयन्नाह—**ईषदिति**। ईषत्किंचिदालक्ष्या दृश्याः परिवृत्ता भ्रमन्त्यस्तारकाः कनीनिका यस्मिन्। अनवरतं निरन्तरं रोदनमश्रुपातस्तेनाताम्रेणेषत्ताम्रवर्णेन। **प्राणेति**। प्राणस्य य उत्सर्गः परित्यागस्तत्रोपजातः समुत्पन्नो योऽश्रुक्षयस्तस्य भावस्तत्ता तया रुधिरमिव रक्तमिव क्षरता प्रस्रवता। **मदनेति**। मदनशराणां कंदर्पबाणानां शल्यमन्तःस्थितशराग्रभागस्तस्य या वेदना पीडा तया कूणित ईषद्वक्रीकृतस्त्रिभागो यस्मिन्। नेत्रस्येति शेषः। **नेति**। नातिनिमीलितेन नातिमुद्रितेन। **मत्त इति**। मदिति मत्तः। सार्वविभक्तिकस्तस्। जीवितादपि तव कुमारस्यापरो जनो महाश्वेतारूपोऽतिप्रियतरोऽतिवल्लभो जात इति हेतोः कुपितेन कोपं प्राप्तेन जीवितेन प्राणितेन परित्यक्तमुज्झितम्। **मन्मथेति**। मन्मथस्य कंदर्पस्य या व्यथा पीडा तया सह स्वयमिवाकस्मादिवैतानसून्प्राणानुत्सृज्य त्यक्त्वा निश्चेतनां सुखं सातं तदनुभवन्तमनुभवविषयीकुर्वन्तम्। **अनङ्गेति**। अनङ्गस्य मनोभुवो जयार्थं या योगविद्या तां ध्यायन्तमिव ध्यानविषयीकुर्वन्तमिव। **अपूर्वेति**। पूरकाभावादिति भावः। एवंविधं प्राणायामं प्राणनियमनमभ्यस्यन्तमिवाभ्यासं कुर्वन्तमिव। पूर्वं निःशब्दतया प्राणायामावस्थितत्वम्, इदानीं तु पूरकाभावादिति भेदः। **उपेति**। उपपादितं निष्पादितमस्मदागमनं येनैवंभूतेनानङ्गेन प्रणयादिव स्नेहादिवापहृतमाकर्षितं प्राणलक्षणं पूर्णपात्रं यस्मात्स तम्। 'उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते। तत्पूर्णपात्रम्' इति वृद्धाः। **रचितेति**। रचितं निर्मितं चन्दनेन ललाटिकासु त्रिपुण्ड्रकं येन तम्। पूर्वमर्धचन्द्राकारललाटिकावर्णनम्, इदानीमर्धचन्द्रोपरि त्रिपुण्ड्रवर्णनमिति भेदः। **धृतेति**। धृतं धारितं सरसबिससूत्ररूपं यज्ञोपवीतं यज्ञसूत्रं येन स तम्। **अंसेति**। अंसे स्कन्धेऽवसक्तं स्थापितं कदलीगर्भपत्रवच्चारु मनोहरं चीरं येन स तम्। **विशालेति**। एकावल्येव विशाला विस्तीर्णाक्षमाला जपमाला यस्य स तम्। **अविरलेति**। अविरलो घनोऽमलो निर्मल

---

**टिप्प०**—1 पुण्डरीकस्य द्वे विशेषणे एकीकृत्य पिण्डीकृतोऽयं पाठः। अत एव 'लोचनयुगलेन' इत्यतोऽग्रे 'मामसूययेव विलोकयन्तम्' इति पाठं संयोज्य एकं पुण्डरीकविशेषणं पूरणीयम्। अर्थस्त्वस्य स्पष्टः। 'मत्तोऽतिप्रियतर०' इत्यादिविशेषणं तु पृथक् स्पष्टं च। अनिच्छायामपि प्रकाशकानामनुरोधेन—मूलस्वारस्यमनवबुध्यमानस्य टीकाकारस्य च्छन्दानुकूलोऽपि ग्रन्थाननुकूलः पाठ उपरिस्थापनीयो भवतीति स्थाने स्थाने खेदावसरः। 2 'निश्चेतनतासुखम्' इत्येव पाठः। चेतनायां जातायां नानाविधानि दुःखान्युपतिष्ठन्त इति तदाशयः। उपरिस्थितः पाठस्तु टीकानुकूलः। 3 पूरण–रेचनयोरभावः केवलं कुम्भकमेवेति प्रचलितप्राणायामापेक्षयाऽपूर्वत्वम्। 4 मदनेन मम (महाश्वेतायाः) आगमनरूपं प्रियकार्यं संपाद्य प्राणरूपं पूर्णपात्रं पुण्डरीकेण सह स्नेहवशादपहृतम्। मदन–पुण्डरीकयोः स्नेहस्तु समानलावण्येन। इत्याशयो बोध्यः। 5 गर्भपत्रमेव चीरमिति समासो योग्यः, पूर्वापरयोस्तथैव वेषवर्णनात्। टीकाकारस्तु प्रज्ञाचक्षुः।

---

**पाठा०**—१ क्षरता नाति. २ लोचनयुगलेन मामसूययेव विलोकयन्तं. ३ मत्तः प्रियतरः. ४ मन्मथव्यथासहानसून्. ५ निश्चेतनतासुखम्. ६ रचितललाटिका. ७ विलास.

लामलकर्पूरक्षोदभस्मधवलम्, आबद्धमृणालरक्षाप्रतिसरमनोहरम्, मनोभवव्रतवेषमास्थाय मत्समागममन्त्रमिव साधयन्तम्, 'भोः कठिनहृदये, दर्शनमात्रकेणापि न पुनरनुगृहीतोऽयमनुगतो जनः' इति सप्रणयं मामुपलभमानमिव चक्षुषा, किंचिद्विवृताधरतया जीवितमपहर्तुमन्तःप्रविष्टैरिवेन्दुकिरणैर्निर्गच्छद्भिर्दशनांशुभिर्धवलितपुरोभागम्, मन्मथव्यथाविघटमानहृदयनिहितेन वामेन पाणिना 'प्रसीद। प्राणैः समं प्राणसमे, न गन्तव्यम्' इति हृदयस्थितां मामिव धारयन्तम्, इतरेण च नखमयूखदन्तुरतया चन्दनमिव स्रवतोत्तानीकृतेन चन्द्रातपमिव निवारयन्तम्, अन्तिकस्थितेन चाचिरोद्गतजीवितमार्गमिवोद्ग्रीवेण विलोकयता तपःसुहृदा कमण्डलुना समुपेतम्, कण्ठाभरणीकृतेन च मृणालवलयेन रजनीकरकिरणपाशेनेव संयम्य लोकान्तरं नीयमानम्, कपिञ्जलेन मद्दर्शनात् 'अब्रह्मण्यम्' इत्यूर्ध्वहस्तेन द्विगुणीभूतबाष्पोद्गमेनाक्रोशता कण्ठे परिष्वक्तम्, तत्क्षणविगतजीवितं तमहं पापकारिणी मन्दभाग्या महाभागमद्राक्षम्।

---

एवंविधो यः कर्पूरक्षोदो घनसारचूर्णं तदेव भस्म विभूतिस्तेन धवलं शुभ्रम्। **आबद्धेति**। आबद्धो मृणालस्य तन्तुलस्य रक्षार्थं प्रतिसरो हस्तसूत्रं तेन मनोहरं शोभनम्। **मनो इति**। मनोभवव्रतवेषमास्थाय परिगृह्य मदीयो यः समागमस्तत्साधको मन्त्रस्तं साधयन्तमिवाराधयन्तमिव। इति मां सप्रणयं सस्नेहम्। **चक्षुषा इति**। उपलभमानमिवोपालम्भं ददानमिव। इतिशब्दद्योत्यमाह—**भो इति**। भोः कठिनहृदये, दर्शनमात्रकेणाप्ययमनुगतोऽनुरक्तो जनो न पुनरनुगृहीतो न स्वीकृतः। **किंचिदिति**। किंचिद्विवृतो योऽधर ओष्ठस्तस्य भावस्तत्ता तया जीवितमपहर्तुं दूरीकर्तुमन्तःप्रविष्टैरिन्दुकिरणैश्चन्द्रकरैरिव निर्गच्छद्भिर्बहिरागच्छद्भिर्दशनांशुभिर्दन्तकिरणैर्धवलितपुरोभागं शुभ्रीकृताग्रप्रदेशम्। **मन्मथेति**। मन्मथस्य कंदर्पस्य व्यथा पीडा तया विघटमानं भिद्यमानं यद्धृदयं तत्र निहितेन स्थापितेन वामेन सव्येन पाणिना हस्तेन कृत्वा इति हृदयस्थितां मामिव धारयन्तं रक्षन्तम्। इतिवाच्यमाह—**प्रसीदेति**। हे प्राणसमे, त्वं प्रसीद प्रसन्ना भव। अथ च प्राणैः समं न गन्तव्यम्। प्राणा गच्छन्तु, परं त्वया न गन्तव्यमिति भावः। एतेन प्राणेभ्योऽप्यतिवल्लभा त्वमसीति ध्वनितम्। **इतरेणेति**। इतरेण दक्षिणपाणिनोत्तानीकृतेनोर्ध्वीकृतेन चन्द्रातपं कौमुदीं निवारयन्तमिव निषेधयन्तमिव। किं कुर्वता। चन्दनं मलयजं स्रवतेव क्षरतेव। कया। नखानां मयूखाः किरणास्तैर्दन्तुरतया विषमोन्नततया। **अन्तिकेति**। अन्तिकस्थितेन समीपवर्तिनोद्ग्रीवेणाचिरोद्गतमचिरं तत्कालं गतं यज्जीवितं तस्य मार्गं पन्थानं विलोकयतेव पश्यतेव एवंविधेन तपःसुहृदा तपस्यामित्रेण कमण्डलुना कुण्डिकया समुपेतं सहितम्। कण्ठे आभरणीकृतेन च विभूषणीभूतेन च मृणालवलयेन बिसकटकेन। श्वेतत्वसाम्यादाह—**रजनीति**। रजनीकरश्चन्द्रस्तस्य किरणास्तल्लक्षणः पाशो बन्धनग्रन्थिस्तेनेव संयम्य बद्ध्वा लोकान्तरमन्यलोकं नीयमानं प्राप्यमाणम्। अत्रान्यः प्राकृतो जनो यमेन पाशेन बद्ध्वा लोकान्तरं नीयते। अयं मुनिकुमार इति तदसंभवात्कण्ठेत्युक्तमिति भावः। **मदिति**। तदानीं मद्दर्शनादब्रह्मण्यमनुचितमित्यूर्ध्वहस्तेन कपिञ्जलेनाक्रोशता पूत्कुर्वता कण्ठे परिष्वक्तमालिङ्गितम्। कीदृशेन कपिञ्जलेन। द्विगुणीभूतः पूर्वस्मादधिकीभूतो बाष्पस्य रोदनस्योद्गमः प्रादुर्भावो यस्मिन्स तेन। पुनः कीदृशम्। तत्क्षणे तत्काले विगतं प्रनष्टं जीवितं प्राणितं यस्य स तम्। अन्वयस्तु प्रागेवोक्तः।

---

**टिप्प०**—1 किञ्चिद्विवृतः अधरो यस्य तद्भावस्तत्तया, इति व्याख्यानमुचितम्।

---

**पाठा०**—१ रक्षापरिसरमनोहरम्; रक्षाप्रतिसरतयातिमनोहरम्. २ साधयन्तं मदनशरशल्यवेदनाकूणितत्रिभागेन कठिन. ३ विघटमान. ४ रजनिकर. ५ उपनीयमानम्. ६ व्यस्तहस्तेन. ७ अपक्रान्त.

उद्भूतमूर्च्छान्धकारा च पातालतलमिवावतीर्णा तदा क्वाहमगमम्, किमकरवम्, किं व्यलपम्, इति सर्वमेव नाज्ञासिषम् । असवश्च मे तस्मिन्क्षणे किमतिकठिनतयास्य मूढहृदयस्य, किमनेकदुःखसहस्रसहिष्णुतया हतशरीरकस्य, किं विहिततया दीर्घशोकस्य, किं भाजनतया जन्मान्तरोपात्तस्य दुष्कृतस्य, किं दुःखदाननिपुणतया दग्धदैवस्य, किमेकान्तवामतया दुरात्मनो मन्मथहतकस्य, केन हेतुना नोद्गच्छन्ति स्म तदपि न ज्ञातवती । केवलमतिचिराल्लब्धचेतना दुःखभागिनी वह्नाविव पतितमसह्यशोकदह्यमानमात्मानमवनौ विचेष्टमानमपश्यम् । अश्रद्दधानं चासंभावनीयं तत्तस्य मरणमात्मनश्च जीवितमुत्थाय, 'हा, किमिदमुपनतम्' इति मुक्तार्तनादा, 'हा अम्ब, हा तात, हा सख्यः' इति व्याहरन्ती 'हा नाथ जीवितनिबन्धन, आचक्ष्व । क्व मामेकाकिनीमशरणामकरुणं विमुच्य यासि । पृच्छ तरलिकां त्वत्कृते मया यानुभूतावस्था । युगसहस्रायमाणः कृच्छ्रेण नीतो दिवसः । प्रसीद । सकृदप्यालप । दर्शय भक्तवत्सलताम् । ईषदपि विलोकय । पूरय मे मनोरथम् । आर्तास्मि । भक्तास्मि । अनुरक्तास्मि । अनाथास्मि । बालास्मि । अगतिकास्मि । दुःखितास्मि ।

---

**तदेति** । तदा तस्मिन्क्षणे सर्वमेवेति नाज्ञासिषं नावोधिषम् । इतियोत्यमाह—**उद्भूतेति** । क्वाहमगममव्रजम्, किमकरवमघटयम्, किं व्यलपं किमवोचम् । कीदृश्यहम् । उद्भूतं प्रकटीभूतं मूर्च्छा एवान्धकारं यस्यां सा तथा पातालतलं रसातलमवतीर्णेव । **असवश्चेति** । तस्मिन्क्षणे मे ममासवः प्राणा अस्य मूढहृदयस्य किमतिकठिनतयातिकाठिन्यतया । किं हतशरीरकस्य निःप्रयोजनदेहस्यानेकानां दुःखसहस्राणां सहिष्णुतया सहनतया । किं दीर्घशोकस्य चिरकालीनशुचो विहिततयावश्यभोक्तव्यतया । किं जन्मान्तरोपात्तस्यान्यभवार्जितस्य दुष्कृतस्य पापस्य भाजनतया पात्रतया । किं दग्धदैवस्य ज्वलितभाग्यस्य दुःखदाने कृच्छ्रप्रदाने निपुणतया दक्षतया । किं दुरात्मनः पापिष्ठस्य मन्मथहतकस्यैकान्तवामतयात्यन्तप्रतिकूलतया । एतेषां मध्ये केन हेतुना नोद्गच्छन्ति स्म न बहिः प्रयान्ति स्म तदपि न ज्ञातवती । केवलमतिचिराच्चिरकालेन लब्धा प्राप्ता चेतना चैतन्यं यया सैवंविधा दुःखभागिनी वह्नाविवाग्नाविव पतितमसह्यो यः शोकः शुक् तेन दह्यमानं ज्वलन्तमवनौ पृथिव्यां विचेष्टमानं लुठमानमात्मानमपश्यमवालोकयम् । तस्य मुनिकुमारस्य तन्मरणमात्मनश्च स्वकीयस्य च जीवितमसंभावनीयमश्रद्दधानमश्रद्धाविषयीकुर्वाणमुत्थाय । हेति खेदे । किमिदमुपनतमागतमिति मुक्त आर्तनाद आक्रन्दशब्दो यया सा तथा । हा अम्ब मातः, हा तात हा पितः, हा सख्यः हा आल्यः, इति पूर्वोक्तं व्याहरन्ती कथयन्ती । हा नाथ हा स्वामिन्, जीवितनिबन्धनं जीवितकारणमाचक्ष्व कथय । मामेकाकिनीमसहायामशरणामत्राणामकरुणं निर्दयं यथा स्यात्तथा विमुच्य त्यक्त्वा क्व यासि क्व व्रजसि । तरलिकां पृच्छ प्रश्नं कुरु, त्वत्कृते त्वदर्थं मया महाश्वेताभिधानया यानिर्वचनीयावस्था दशानुभूतानुभवविषयीकृता । युगसहस्रवदाचरमाणो दिवसो वासरः कृच्छ्रेण कष्टेन नीतः प्रापितः । प्रसीद प्रसन्नो भव । सकृदप्येकवारमप्यालप ब्रूहि । भक्तवत्सलतां हितकारितां दर्शय प्रकाशय । ईषदपि किंचिदपि विलोकय निरीक्षणं

---

**टिप्प०**—1 मौढ्यं टीकाकारस्य । काठिन्यमिति भावप्रत्ययान्तान्न पुनर्भावार्थकप्रत्ययः । नानुक्रियतां विद्यार्थिभिः । 2 इदमप्यननुकूलम् । अभिन्नहृदया महाश्वेतैव पुण्डरीकेण सह आत्मनो मरणं च जीवितं च वक्तुं शक्ता । अतएव 'अश्रद्दधाना' इति स्त्रीलिङ्गपाठ एवोचितः । 'अयं मृतः स्यात् अहं च जीवेयम्' इत्येव न विश्वसनीयमिति तदाकूतम् । 3 'जीवितनिबन्धनमाचक्ष्व' इति पाठो विवक्षितष्टीकाकारस्य । किन्तु मूले शोधितः पाठो दृश्यते । नाहमिमं लेखन्या चिच्छित्सामि ।

---

**पाठा०**—१ पातालमिव. २ अश्रद्दधानाम्; अश्रद्दधाना. ३ मरणकारणम्. ४ हा हा. ५ अम्ब हा मातः. ६ निबन्धनमाचक्ष्व. ७ अकरुण.

अनन्यशरणास्मि । मदनपरिभूतास्मि । किमिति न करोषि दयाम् । कथय किमपराद्धम्, किं वा नानुष्ठितं मया, कस्यां वा नाज्ञायामादृतम्, कस्मिन्वा त्वदनुकूले नाभिरतम्, येन कुपितोऽसि, दासजनमकारणात्परित्यज्य व्रजन्न बिभेषि कौलीनात् । अलीकानुरागविप्रतारणकुशलया किं वा मया वामया पापया । आः, अहमद्यापि प्राणिमि । हा, हतास्मि मन्दभागिनी । कथं न त्वं जातः, न विनयः, न बन्धुवर्गः न परलोकः । धिङ्मां दुष्कृतकारिणीम्, यस्याः कृते तवेयमीदृशी दशा वर्तते । नास्ति मत्सदृशी नृशंसहृदया, याहमेवंविधं भवन्तमुत्सृज्य गृहं गतवती । किं मे गृहेण, किमम्बया, किं वा तातेन, किं बन्धुभिः, किं परिजनेन । हा, कमुपयामि शरणम् । मयि दैव, दर्शय दयाम् । विज्ञापयामि त्वाम् । देहि दयितदक्षिणां भगवति भवितव्यते । कुरु कृपाम् । पाहि वनितामनाथाम् । भगवत्यो वनदेवताः, प्रसीदत । प्रयच्छतास्य प्राणान् । अव वसुंधरे, सकललोकानुग्रहजननि । रजनि, नानुकम्पसे । तात कैलास, शरणागतास्मि ते । दर्शय दयालुताम्' इत्येतानि चा-

---

कुरु । मे मम मनोरथं चिन्तितं पूरय पूर्णीकुरु । अहमार्तास्मि दुःखितास्मीति स्पष्टम् । **अनन्येति** । न विद्यतेऽन्यं शरणं त्राणं यस्याः सैवंविधास्मि । मदनेन कन्दर्पेण परिभूता पराजितास्मि । किमिति हेतोः । त्वं दयां कृपां न करोषि न प्रणयसि । कथय ब्रूहि । किमपराद्धं कोऽयमपराधः कृतः । मयेति शेषः । किं मया नानुष्ठितं नाचरितं वा । कस्यां वाज्ञायां निर्देशे नादृतं नादरः कृतः । त्वदनुकूले कस्मिन्वा मया नाभिरतं रागो न कृतः, येन कारणेन कुपितः कोपं प्राप्तः । अकारणान्निमित्तमन्तरेण दासजनं भृत्यलोकं परित्यज्य विहाय व्रजन्गच्छन्कौलीनाज्जनापवादान्न बिभेषि भयं प्राप्नोषि । **अलीकेति** । अलीको मिथ्या योऽनुरागस्तेन यद्विप्रतारणं वञ्चनं तत्र कुशलया दक्षया वामया प्रतिकूलया पापया दुष्टकर्मकारिण्या मया किं वा स्यात् । आः इति ज्ञातम् । अहमद्याप्येतावत्कालमपि प्राणिमि जीवामि । हा हतास्मि । दैवेन ताडितास्मीति भावः । अतएव मन्दभागिनी । तदेव दर्शयति—**कथमिति** । न त्वं भवान् जातः । पतिरिति शेषः । अतश्च न विनयो न मर्यादा, न वा बन्धुवर्गो न स्वजनलोकः, न परलोको न प्रेत्यभावः । मां धिगस्तु धिक्कारोऽस्तु । मां कीदृशीम् । दुष्कृतकारिणीं दुष्कर्मकरणशीलाम् । यस्याः पापकारिण्याः कृते तव भवत इयं परित्यक्तजीवितरूपा दशावस्था वर्तते । मत्सदृशी मत्समा नृशंसहृदया क्रूरचित्ता नास्ति न विद्यते, याहमेवंविधं भवन्तमुत्सृज्य त्यक्त्वा गृहं धाम गतवती । मे मम किं गृहेण सदनेन, किमम्बया मात्रा, किं वा तातेन पित्रा, किं वा बन्धुभिः स्वजनैः, किं परिजनेन परिच्छदेन । हेति खेदे । कं शरणमुपयामि गच्छामि । हे दैव हे भाग्य, मयि विषये दयां कृपां दर्शय । त्वां प्रति विज्ञापयामि विज्ञप्तिं करोमि । हे भवितव्यते भगवति, दयितदक्षिणां देहि । कृपां दयां कुरु । अनाथां वनितां स्त्रियं पाहि रक्ष । हे भगवत्यो वनदेवताः, यूयं प्रसीदत प्रसन्ना भवत । अस्य मुनिकुमारस्य प्राणान्प्रयच्छत ददत । हे सकललोकानुग्रहजननि वसुंधरे, अव रक्ष । हे रजनि हे रात्रि, नानुकम्पसे नानुकम्पां करोषि । हे तात कैलास, ते तव शरणागतास्मि । दयालुतां कृपालुतां दर्शय

---

**टिप्प०—**1 अन्यदित्युचितम् । 2 सोयमपपाठः । 'कथं मे न त्वम्, न तातः' इत्येव पाठः । त्वं मे मम ( संवन्धी ) न जातः, कुतः ? मरणात् । तातोपि न, अर्थात् पितापि मे पक्षपोषको न स्यात् अभिसरणेन कुलमर्यादोल्लङ्घनात् । विनय–बन्धुवर्ग–परलोका अपि मम न भवेयुः । अभिसरणेन तत्प्रतीपाचरणात्, इति तदाशयः ।

---

**पाठा०—**१ किमपराद्धम्. २ कुपितः. ३ दासीजनम्. ४ प्रतारण. ५ याहम्. ६ कथं मे न त्वं, न तातः. ७ अयि. ८ दक्षिणाम्. ९ अम्ब. १० किमर्थं नानु. ११ असि.

न्यानि च व्याक्रोशन्ती, कियद्वा स्मरामि, ग्रहगृहीतेवाविष्टेवोन्मत्तेव भूतोपहते वव्यलपम्। उपर्युपरिपतित[१]नयनजलधारानिकरच्छलेन विलीयमानेव, द्रवतामिव नीयमाना, जलाकारेणे-वात्मीक्रियमाणा, प्रलापाक्षरैरपि [२]दशनमयूखशिखानुगततया साश्रुधारैरिव निष्पतद्भिः शिरो-रुहैरप्यविरलवि[३]गलत्कुसुमतया मुक्तबाष्पजलबिन्दुभिरिवाभरणैरपि [४]प्रसूतविमलमणिकिरणा-श्रुतया प्ररुदितैरिवोपेता, [५]तज्जीवितायेवात्ममरणाय स्पृहयन्ती, मृतस्यापि सर्वात्मना हृदयं प्रवेष्टुमिवेच्छन्ती, करतलेन कपोलयोराश्यानचन्दनश्वेतजटामूले च ललाटे निहितसरसबि-सयोश्चांसयोर्मलयजरसलवलुलितकमलिनीपलाशावगुण्ठिते च हृदये स्पृ[६]शन्ती, 'पुण्डरीक, निष्ठुरोऽसि। एवमप्यार्तां न गणयसि माम्' इत्युपालभमाना मु[७]हुरेनमन्वनयम्, मु[८]हुः पर्य-चुम्बम्, मु[९]हुर्मुहुः कण्ठे गृहीत्वा व्याक्रोशम्। 'आः पापे, त्वयापि मत्प्रत्यागमनकालं यावद-स्यासवो न रक्षिताः' इति तामेकावलीमगर्हयम्, 'अयि भगवन्, प्रसीद। प्रत्युज्जीवयैनम्'

---

प्रकटय। इत्येतानि च ग्रन्थकर्त्रा प्रदर्शितान्यन्यानि चाप्रदर्शितानि च वचनानि व्याक्रोशन्ती पूत्कुर्वन्ती। **कियद्वेति**। कियन्मात्रं परिदेवनं स्मरामि स्मरणविषयीकुर्वे। ग्रहगृहीतेव ग्रथिलेव, आविष्टेवावेशविषयी-कृतेव, उन्मत्तेवोन्मत्तवायुव्यथितेव, भूतेन व्यन्तरेणोपहतेव व्यलपं विलापमकरवम्। अथ नयनाश्रुधाराणां सान्द्रातिशयं वर्णयितुं त्रिभिरुत्प्रेक्षते—**उपरीति**। उपर्युपरि पतिता या नयनजलधारा अश्रुश्रेण्यस्तासां निकरच्छलेन समूहव्याजेन विलीयमानेव द्रुततामापद्यमानेव। द्रवतां द्रवगुणोपयुक्ततां नीयमानेव प्राप्यमाणेव। द्रवत्ववत्त्वात्तदेवाह—**जलाकारेणेति**। जलाकारेण जलस्वभावेनात्मीक्रियमाणेव। अथ च रोदनाश्रुमुखेन शोकातिशयं व्यञ्जयितुमश्रुवर्णनं त्रिभिरुत्प्रेक्षाभिराह[1]—**प्रेति**। दशना दन्तास्तेषां मयूखाः किरणास्तेषां शिखा प्रान्तभागस्तत्रानुगततया प्राप्ततया प्रलापाक्षरैरपि परिदेवनवर्णैरपि साश्रुधारैर्निष्पतद्भिरिव स्रवद्भिरिव। अत्र श्वेतत्वसाम्याद्दशनमयूखनेत्रजलयोरुपमा[2]नोपमेयभावः। **अविरलेति**। अविरलानि घनानि विगलन्ति क्षरन्ति कुसुमानि पुष्पाणि येषु तेषां भावस्तत्ता तया शिरोरुहैरपि केशैरपि। **मुक्तेति**। मुक्ता बाष्पजलबिन्दवो यैरेवंविधैरिव। अत्रापि पुष्पनेत्रजलयोः श्वेतत्वसाम्यादुपमानोपमेयभावः। **प्रस्विति**। प्रसूतानि जनितानि विमलानि निर्मलानि मणिकिरणा[3]न्येवाश्रूणि येषु तेषां भावस्तत्ता तया आभरणैरपि विभूषणैरपि प्ररुदितैरिव कृताश्रुपातैरिव। **उपेतेति**। तत्त्रिभिरन्विता। **तज्जीवितेति**। तस्य मुनिकुमारस्य जीवितं तद्वदिवात्ममरणाय स्वनिधनाय स्पृहयन्ती वाञ्छां कुर्वन्ती। मृतस्यापि गतप्राणस्यापि सर्वात्मना सर्वप्रकारेण हृदयं प्रवेष्टुं प्रवेशं कर्तु-मिच्छन्तीव। करतलेन पाणितलेन स्वेन मुनिकपोलयोर्गल्लात्परप्रदेशयोर्ललाटे च कीदृशे। आश्यानं शुष्कं चन्दनं मलयजं तेन श्वेतं शुभ्रं जटामूलं सटापीठं यस्मिन्। अंसयोश्च स्कन्धयोश्च कीदृशयोः। **निहितेति**। निहितानि स्थापितानि सरसानि रसो जलं तद्युक्तानि बिसानि तन्तुलानि ययोः। अथ हृदयं विशेषयन्नाह—**मलयेति**। मलयजस्य चन्दनस्य रसो द्रवस्तस्य लवो लेशस्तेन लुलितानि मिलितानि यानि कमलिनीपलाशानि पत्राणि तैरव-गुण्ठिते व्याप्ते स्पृशन्ती स्पर्शं कुर्वन्ती। **पुण्डरीकेति**। हे पुण्डरीक, त्वं निष्ठुरः क्रूरोऽसि। एवमपि पूर्वोक्तप्रका-रेणापि मामार्तां न गणयसि न गणनां करोषि। इत्युपालभमानोपालम्भं ददाना मुहुर्वारंवारमेनमन्वनयमनुनीत-वती। मुहुर्वारंवारं पर्यचुम्बं चुम्बितवती। मुहुर्वारंवारं कण्ठे गृहीत्वा व्याक्रोशमाक्रोशितवती। आः पापे त्वयापि भवत्यापि मम प्रत्यागमनकालं मदीयागमनसमयं यावत्। अस्य पुण्डरीकस्यासवः प्राणा न रक्षिता न त्राताः। इति तामेकावलीमगर्हयं गर्हितवती। **अयीति**। अयि कोमलामन्त्रणे। हे भगवन्, प्रसीद प्रसन्नो

---

**टिप्प०**—1 तिसृभिरित्युचितम्। 2 अत्र नोपमा। अपि तु उत्प्रेक्षा, अत एव भ्रामकमिदम्। 3 विद्यार्थिभिस्तु किरणस्य पुंस्त्वमेव बोध्यम्। टीकाकारस्तु लोकबहिर्भूतः।

---

**पाठा०**—१ निपतित. २ दशनशिखा. ३ विगलित. ४ प्रसृत. ५ तज्जीवितायैव, तज्जीविताय च. ६ परामृशन्ती. ७ मुहुर्मुहुः. ८ मुहुर्मुहुः. ९ मुहुः.

इति मुहुः[1] कपिञ्जलस्य पादयोरपतम्, मुहुश्च तरलिकां कण्ठे गृहीत्वा प्रारुदम् । अद्यापि चिन्तयन्ती न जानामि तस्मिन्काले कुतस्तान्यचिन्तितान्यशिक्षितान्यनुपदिष्टान्यदृष्टपूर्वाणि मे हतपुण्यायाः कृपणानि चाटुसहस्राणि प्रादुरभवन्, कुतस्ते संलापाः, कुतस्तान्यतिकरुणानि वैक्लव्यरुदितानि । अन्य एव स प्रकारः । प्रलयोर्मय इवोदतिष्ठन्नन्तर्बाष्पवेगानाम्, जलयन्त्राणीवामुच्यन्ताश्रुप्रवाहाणाम्, प्ररोहा इव निरगच्छन्प्रलापानाम्, शिखरशतानीवावर्धन्त दुःखानाम्, प्रसूतय इवोदपाद्यन्त मूर्च्छानाम्' ।

इत्येवमात्मवृत्तान्तं निवेदयन्त्या[2] एव तस्याः[3] समतिक्रान्तं कथमप्यतिकष्टमवस्थान्तरमनुभवन्त्या इव चेतनां जहार मूर्च्छा । मूर्च्छावेगान्निष्पतन्तीं च शिलातले तां ससंभ्रमं प्रसारितकरः[4] परिजन इव जातपीडश्चन्द्रापीडो विधृतवान् । अश्रुजलार्द्रेण च तदीयेनैवोत्तरीयवल्कलप्रान्तेन शनैःशनैर्वीजयन्संज्ञां ग्राहितवान् । उपजातकारुण्यश्च बाष्पसलिलोत्पीडनेन[5] प्रक्षाल्यमानकपोलो[6] लब्धचेतनामवादीत्—'भगवति, मया पापेन तवायं पुनरभिनवतां[7] नीतः[8] शोकः, येनेदृशीं दशामुपनीतासि । तदलमनया कथया । संह्रियतामियम् । अहमप्य-

---

भव । एनं पुण्डरीकं प्रत्युज्जीवय सजीवितं कुरु । इति मुहुर्वारंवारं कपिञ्जलस्य मुनेः पादयोश्चरणयोरपतं पतितवती । **मुहुश्चेति ।** वारंवारं तरलिकां कण्ठे गृहीत्वा प्रारुदं रुदनमकार्षम् । **तस्मिन्निति ।** तस्मिन्काले रोदनदशायां यान्यचिन्तितान्यतर्कितानि, अशिक्षितान्यपठितानि, अनुपदिष्टानि केनापि नोपदेशीकृतानि, अदृष्टपूर्वाण्यनवलोकितपूर्वाणि, हतपुण्यायाः मे मम कृपणानि दीनानि चाटुसहस्राणि प्रियप्रायवचनसहस्राणि कुतः प्रादुरभवन्कुतः प्रकटीबभूवुरित्यद्याप्येतद्दिनपर्यन्तं चिन्तयन्ती न जानामि न सम्यक्तयावकलयामि । कुतस्ते पूर्वोक्ताः संलापाः । कुतस्तानि हृदिस्थान्यतिकरुणान्यतिदीनानि विक्लवो विह्वलस्तस्य भावो वैक्लव्यं तस्य रुदितानि क्रन्दितानि । अन्य एव भिन्न एव स प्रकारो भेदः । तान्युत्प्रेक्षते चतुर्भिः—**प्रलयेति ।** अन्तर्बाष्पस्य मध्यनेत्राम्बुनो वेगानां रंहसां प्रलयोर्मय इव कल्पान्ततरंगा इवोदतिष्ठन्नुत्थिता बभूवुः । अश्रुप्रवाहाणां नेत्राम्बुधाराणां जलयन्त्राणीवामुच्यन्त मुक्ताः । नेत्रैरिति शेषः । प्रलापानां विलापानां प्ररोहा इवाङ्कुरा इव निरगच्छन्निर्गता बभूवुः । दुःखानां कृच्छ्राणां शिखरशतानीव शृङ्गशतानीवावर्धन्तैधन्त । मूर्च्छानां मोहानां प्रसूतय इवानवरतसंतानानीवोदपाद्यन्ताक्रियन्त ।

इत्येवं पूर्वोक्तप्रकारेणात्मवृत्तान्तं स्वकीयोदन्तं निवेदयन्त्या एव कथयन्त्या एव तस्या महाश्वेतायाः । अतिक्रान्तारिष्टहेतोस्तथा वेदना नास्तीत्यत आह—**समतीति ।** कथमपि महता कष्टेन समतिक्रान्तं व्यतीतमतिकष्टं यस्मिन्नेवंभूतमवस्थान्तरं मुनिकुमारमृत्युलक्षणमनुभवन्त्या इवानुभवविषयीकुर्वन्त्या इव तस्या महाश्वेताया मूर्च्छा मोहश्चेतनां चैतन्यं जहाराहरत् । मूर्च्छावेगान्मोहरंहसः शिलातले निष्पतन्तीमधःसंयोगफलिकां क्रियां कुर्वन्तीं तां महाश्वेतां ससंभ्रमं प्रसारितो विस्तारितः करो येनैवंभूतो जातपीडश्चन्द्रापीडः परिजन इव परिच्छद इव विधृतवान्धारितवान् । अश्रुजलार्द्रेण नेत्रवारिक्लिन्नेन च तदीयेनैव महाश्वेतास्वीकृतेनैवेत्यर्थः । उत्तरीयं यद्वल्कलं तस्य प्रान्तेन शनैःशनैर्मन्दंमन्दं वीजयन्वातं कुर्वन्संज्ञां चेतनां ग्राहितवान् । आनीतवानित्यर्थः । **उपेति ।** उपजातं समुत्पन्नं कारुण्यं यस्य सः बाष्पसलिलस्योत्पीडनं प्रवाहस्तेन प्रक्षाल्यमानौ कपोलौ यस्य स लब्धचेतनां प्राप्तचैतन्यामवादीदवोचत् । हे भगवति महाश्वेते, मया पापेन पापात्मना तवायं शोकः पुनर्द्वितीयवारमभिनवतां प्रत्यग्रतां नीतः प्रापितः येन कारणेनेदृशीं दशामवस्थामुपनीतासि प्रापितासि । **तदिति ।** तस्माद्धेतोरनया कथयालं कृतम् । इयं कथा संह्रियतां संक्षिप्यताम् । हि यस्मादतिक्रान्तान्यपि व्यतीतान्यपि संकीर्त्यमानानि

---

पाठा०—१ मुहुर्मुहुः. २ आवेदयन्त्यः. ३ एव च तस्याः. ४ ससंभ्रमप्रसारित. ५ उत्पीडेन. ६ कपोलयुगलः; कपोलयुगलाम्. ७ पुनरपि नवताम्. ८ उपनीतः.

समर्थः श्रोतुम् । अतिक्रान्तान्यपि हि संकीर्त्यमानानि प्रियजनविश्वासवचनान्यनुभवसमां[1] वेदनामुपजनयन्ति सुहृज्जनस्य दुःखानि । तन्नार्हसि कथंकथमपि विधृतानिमानसुलभानसून्पुनः[2] शोकानल इन्धनतामुपनेतुम्' इत्येवमुक्त्वा दीर्घमुष्णं च निःश्वस्य बाष्पायमाणलोचना सनिर्वेदमवादीत्—'राजपुत्र, या तदा तस्या[3]मतिदारुणायां हतनिशायामेभिरतिनृशंसैरसुभिर्न परित्यक्ता[4] ते मामिदानीं परित्यजन्तीति दूरापेतम् । नूनमपुण्योपहतायाः पापाया मम भगवानन्तकोऽपि परिहरति दर्शनम् । कुतश्च मे कठिनहृदयायाः शोकः । सर्वमिदमलीकमस्य शठ[5]हृदयस्य । सर्वथाहमनेन त्यक्तत्रपेण निरपत्रपाणामग्रेसरीकृता । यया चा[6]विष्कृतमदनया वज्रमय्येवेदमनुभूतम्, का[7] वा[8] गणना कथनं प्रति । किं वा परमतः कष्टतरमाख्येयमन्यद्भविष्यति यन्न शक्यते श्रोतुमाख्यातुं वा । केवलमस्य वज्रपातस्यानन्तरमाश्चर्यं यदभूत्तदावेदयामि । आत्मनश्च प्राणधारणकारणलव इवाव्यक्तो यः समुत्पन्नः, तं च कथयामि ।

---

वाच्यमानानि प्रियजनस्येष्टलोकस्य विश्वासवचनानि विश्रम्भभाषितान्यहमपि[1] श्रोतुमसमर्थोऽक्षमः । तत्र हेतुमाह—**अनुभवेति** । सुहृज्जनस्य मित्रलोकस्य दुःखान्यनुभवसमां विपाकतुल्यां वेदनां व्यथामुपजनयन्ति निष्पादयन्ति । तदिति हेत्वर्थे । कथंकथमपि महता कष्टेन विधृतानिमानसुलभान्दुःप्रापानसून्प्राणान्पुनः शोकानले[2] शुग्वह्नाविन्धनतामिध्मतामुपनेतुं प्रापयितुं त्वं नार्हसि न योग्या भवसि । इत्येवं पूर्वोक्तप्रकारेणोक्त्वा दीर्घमायतमुष्णं च निःश्वस्य निःश्वासं मुक्त्वा वाष्पायमाणे लोचने नेत्रे यस्याः सैवंविधा निर्वेदः स्वावमाननं तत्सहितं यथा स्यात्तथावादीदवोचत् । किं तदित्याह—**हे राजेति** । हे राजपुत्र हे नृपसूनो, याहं तदा तस्मिन्काले तस्यामतिदारुणायामतिभीषणायां हतनिशायामशुभरजन्यामेभिरतिनृशंसैरतिक्रूरैरसुभिः प्राणैर्न परित्यक्ता नोज्झिता तेऽसव इदानीं सांप्रतं मां परित्यजन्ति मुञ्चन्तीति दूरापेतं दूरे स्थितम् । नूनं निश्चितमपुण्योपहताया अधर्मोपहतायाः पापायाः पापिष्ठाया मम दर्शनं निरीक्षणं भगवानन्तकोऽपि यमोऽपि परिहरति परित्यजति । **कुतश्चेति** । मे मम कठिनहृदयायाः शोकः शुक् कुतः स्यात् । अस्य शठहृदयस्य सर्वं पूर्वोक्तमिदमलीकं मिथ्या । **सर्वथेति** । सर्वप्रकारेणाहमनेन हृदयेन त्यक्तत्रपेणोज्झितलज्जागुणेन निरपत्रपाणां निर्लज्जानामग्रेसरी पुरोगामिनी कृता विहिता । **यया चेति** । यया मयाविष्कृत[3]मदनया प्रकटितकंदर्पया वज्रमय्येव शतकोटिमय्येवेदं पूर्वोक्तमनुभूतमनुभवविषयीकृतम् । का गणना कथनं प्रति, चेदनुभूतं वर्तते तर्हि कथने किं काठिन्यमिति भावः । वेति पक्षान्तरे । अतः परमस्मादन्यत्कष्टतरमतिकृच्छ्रमाख्येयं कथनीयम् । अन्यत्किं भविष्यति यच्छ्रोतुमाकर्णयितुमाख्यातुं कथयितुं वा न शक्यते न पार्यते । **केवलेति** । केवलमसहायमेकमस्य वज्रपातसदृशदुःखस्यानन्तरं पश्चात् यत् आश्चर्यं चित्रमभूत्तदावेदयामि कथयामि । **आत्मनश्चेति** । आत्मनः स्वस्य च प्राणधारणं तत्र कारणलव इव हेतुलेशसदृशमव्यक्तोऽस्फुटो यः समुत्पन्नः प्रादुर्भूतस्तं च कथ-

---

**टिप्प०**—1 एवंविधो दूरादाकर्षो ग्रन्थसरणिविरुद्धः । पाठश्चायं टीकाकारमहोदयसंमतः । वस्तुतस्तु 'प्रियजनविश्वासवचनानि' इति वाक्ये नास्त्येव । तदभावे—'अतिक्रान्तान्यपि दुःखानि संकीर्त्यमानानि (सन्ति) सुहृज्जनस्य अनुभवसमां वेदनां जनयन्ति' इत्यन्वयः । 2 'स्मरणशोकानलेन्धनताम्' इति समस्तमेव मनोरमम्, विरूपसन्धिकमश्रव्यमिदम् । 3 धिक्, अतिविरूपोयं पाठः । 'अधिगतमदनवेदनया' इत्येव पाठः । अधिगता साक्षादनुभूता मदनवेदना यया तादृश्या, इति तदर्थः । मदनाविष्करणे त्वनौचित्यम् ।

---

पाठा०—१ अनुभवसमयवेदनाम्; अनुभवसमवेदनाम्. २ पुनःपुनः स्मरणशोकानलेन्धनताम्. ३ या तस्याम्. ४ परित्यक्तासि तदिदानीं परित्यजन्ति दूरापेतम्; परित्यक्ता सेदानीं परित्यजत इति दूरापेतमेतत्. ५ दुरात्मनः शठहृदयस्य. ६ आविष्कृतमन्दवेदनया; अधिगतमदनवेदनया. ७ तस्याः. ८ का दुःखगणना, कथं प्रीतिः.

यया दुराशामृगतृष्णिकया गृहीताहमिदमुपरतकल्पं परकीयमिव भारभूतमप्रयोजनमकृतज्ञं च हतशरीरं वहामि, तदलं श्रूयताम्' ।

ततश्च तथाभूते तस्मिन्नवस्थान्ते मरणैकनिश्चयात्तत्तद्बहु विलप्य तरलिकामत्रवम्—'अयि उत्तिष्ठ निष्ठुरहृदये, कियद्रोदिषि । काष्ठान्याहृत्य विरचय चिताम् । अनुसरामि जीवितेश्वरम्' इति ।

अत्रान्तरे झटिति चन्द्रमण्डलनिर्गतो गगनादवतीर्य केयूरकोटिलग्नममृतफेनपिण्डपाण्डुरं पवनतरलमंशुकोत्तरीयमाकर्षन्, उभयकर्णान्दोलितकुण्डलमणिप्रभानुरक्तगण्डस्थलः, स्थूलमुक्ताफलतया तारागणमिव ग्रथितमतितारं हारमुरसा दधानः, धवलदुकूलपल्लवकल्पितोष्णीषग्रन्थिः, अलिकुलनीलकुटिलकुन्तलनिकरविकटमौलिः, उत्फुल्लकुमुदकर्णपूरः, कामिनीकुचकुङ्कुमपत्रलतालाञ्छितांसदेशः, कुमुदधवलदेहः, महाप्रमाणः पुरुषः महापुरुषलक्षणोपेतः,

---

यामि ब्रवीमि । **ययेति** । यया दुराशैव मृगतृष्णिका मरुमरीचिका तया गृहीता स्वीकृताहं महाश्वेता इदमुपरतकल्पमवस्तुप्रायम् । अवस्तुत्वादेव न स्वसत्ताकमित्याह—**परेति** । परकीयमिवान्यदीयमिवात एव भारभूतमप्रयोजनं निरर्थकं न कृतं जानातीत्यकृतज्ञं हतशरीरं दुःशरीरं वहामि धारयामि । तत्पूर्वोक्तमलं कृतमेतद्व्यतिरिक्तं श्रूयतामाकर्ण्यताम् ।

**ततश्चेति** । तदनन्तरं तथाभूते तादृशे तस्मिन्पूर्वप्रतिपादितेऽवस्थान्ते दशान्तरे मरणस्य निमीलनस्यैकनिश्चयादद्वितीयनिर्णयात्तत्तत्पूर्वोक्तं बहु प्रचुरं विलप्य विलप्य बहुविलापान्कृत्वा तरलिकामित्यत्रवमकथयम् । इतिशब्दद्योत्यमाह—**अयीति** । अयि कोमलामन्त्रणे । निष्ठुरहृदये कठिनचित्ते, उत्तिष्ठोत्थानं कुरु । कियद्रोदिषि कियदपरिमितं रोदनं लोकप्रसिद्धं करोषि प्रणयसि । काष्ठान्येधांस्याहृत्यानीय चितां चित्यां विरचय निष्पादय । जीवितेश्वरं प्राणनाथमनुसराम्यनुगच्छामि ।

अत्रान्तरेऽस्मिन्समये झटिति शीघ्रं चन्द्रमण्डलाच्छशिबिम्बाद्विनिर्गतो निःसृतो गगनादाकाशादवतीर्यो-त्तीर्य केयूरकोटिलग्नं किरीटाश्रिविलग्नममृतस्य पीयूषस्य फेनपिण्डो डिण्डीरचयस्तद्वत्पाण्डुरं श्वेतम् । पवनेन वायुना तरलं कम्पमानमुत्तरीयं च तदंशुकं चांशुकोत्तरीयम् । राजदन्तादिषु पाठात्पूर्वप्रयोगः । आकर्षन्नाकर्षणं कुर्वन् । इतो द्विजमण्डलविनिर्गतनरविशेषणानि । **उभयेति** । उभौ च तौ कर्णौ चेति कर्मधारयः । वृत्तिविशेष उभशब्दस्योभयादेशः । तयोरान्दोलिते वेल्लिते कुण्डले कर्णभूषणे तयोर्मणिप्रभा रत्नकान्तिस्तयानुरक्तं गण्डस्थलं यस्य सः । **स्थूलेति** । स्थूलानि मुक्ताफलानि यत्र तस्य भावस्तत्ता तया । श्वेतत्ववर्तुलत्वसाम्यादाह—**तारेति** । ग्रथितं गुम्फितं तारागणमिव नक्षत्रवृन्दमिवातितारमतिमनोहरं हारं मुक्ताप्रालम्बमुरसा वक्षःस्थलेन दधानो बिभ्राणः । **धवलेति** । धवलं श्वेतं यद्दुकूलं दुगूलं तस्य पल्लवेन प्रान्तदेशेन कल्पितो विहित उष्णीषग्रन्थिर्मूर्धवेष्टनग्रन्थिर्येन सः । **अलीति** । अलिकुलवद्भ्रमरसमूहवन्नीलाः श्यामाः कुटिला वक्राः कुन्तलाः केशास्तेषां निकरः समूहस्तेन विकटो विपुलो मौलिर्यस्य सः । **उत्फुल्लेति** । उत्फुल्लं विकसितं यत्कुमुदं कैरवं तस्य कर्णपूरं कर्णाभरणं यस्य सः । **कामिनीति** । कामिन्या योषितः कुचयोः स्तनयोः कुङ्कुमपत्रलता केसरपत्रभङ्गिस्तया लाञ्छितश्चिह्नितोंऽसदेशः स्कन्धप्रदेशो यस्य सः । **कुमुदेति** । कुमुदवच्छ्वेतकमलवद्धवलः शुभ्रो देहः शरीरं यस्य सः । महाप्रमाणोऽतिदीर्घ एवंविधः पुरुषो नरः । **महेति** ।

---

**टिप्प०**—1 मृतप्रायम् । 2 गाढालिङ्गनपूर्वकं पार्श्वशयनावस्थायामंसे कुङ्कुमसंक्रान्तिरित्याशयः ।

---

**पाठा०**—१ हतशरीरकम्. २ अवस्थान्तरे. ३ निश्चया. ४ तत्. ५ रोदिमि. ६ अवतीर्य च. ७ अतितारहारम्. ८ कम्पित. ९ निचित.

दिव्याकृतिः, स्वच्छवारिधवलेन देहप्रभावितानेन क्षालयन्निव दिगन्तराणि, आमोदिना च शरीरतः क्षरता शिशिरेण शीतज्वरमिव जनयतामृतशीकरवर्षेण तुषारपटलेनेवानुलिम्पन्, गोशीर्षचन्दनरसच्छटाभिरिवासिञ्चन्, ऐरावतकरपीवराभ्यां बाहुभ्यां मृणालधवलाङ्गुलिभ्यां शीतलस्पर्शाभ्यां तमुपरतमुत्क्षिपन्, दुन्दुभिगम्भीरेण स्वरेण 'वत्से महाश्वेते, न त्याज्यास्त्वया प्राणाः । पुनरपि तवानेन सह भविष्यति समागमः' इत्येवं पितेवाभिधाय सहैवानेन गगनतलमुदपतत् । अहं तु तेन व्यतिकरेण सभया सविस्मया सकौतुका चोन्मुखी किमिदमिति कपिञ्जलमपृच्छम् । असौ तु ससंभ्रममदत्त्वैवोत्तरमुदतिष्ठत् । 'दुरात्मन्, क मे वयस्यमपहृत्य गच्छसि' इत्यभिधायोन्मुखः संजातकोपो बध्नन्सावेगमुत्तरीयवल्कलेन परिकरम्, उत्पत्योत्पतन्तं तमेवानुसरन्नन्तरिक्षमुदगात् । पश्यन्त्या एव च मे सर्व एव ते तारागणमध्यमविशन् ।

मम तु तेन द्वितीयेनेव प्रियतममरणेन कपिञ्जलगमनेन द्विगुणीकृतशोकायाः सुतरामदी-

---

महापुरुषा उत्तमपुमांसस्तेषां लक्षणैः सामुद्रिकशास्त्रोक्तैर्ध्वजादिभिश्चिह्नैरुपेतः सहितः । **दिव्येति** । दिव्या मनोहराकृतिराकारो यस्य सः । **स्वच्छेति** । स्वच्छं निर्मलं यद्वारि जलं तद्वद्धवलेन शुभ्रेण । **देहेति** । देहप्रभायाः शरीरद्युतेर्वितानेन समूहेन दिगन्तराणि दिग्विवराणि क्षालयन्निव निर्मलानि कुर्वन्निव । **आमोदीति** । आमोदिना परिमलवता तस्य देवस्यामृतमयत्वात् शरीरतो देहतः क्षरता प्रस्रवता । **शिशिरेति** । शिशिरेण शीतलेन शीतज्वरमिव जनयतोत्पादयता एवंविधेनामृतशीकरवर्षेण पीयूषशीकरवृष्ट्या तुषारपटलेनेव हिमसमूहेनेवानुलिम्पन्विलेपयन् । दिगन्तराणीति शेषः । **गोशीर्षेति** । गोशीर्षाभिधानं[1] यच्चन्दनं तस्य रसो द्रवस्तस्य छटाभिरिवासिञ्चन्नासेकं कुर्वन् । **ऐरावतेति** । ऐरावतो हस्तिमल्लस्तस्य करः शुण्डादण्डस्तद्वत्पीवराभ्यां पुष्टाभ्यां बाहुभ्यां भुजाभ्याम् । **मृणालेति** । मृणालं बिसं तद्वद्धवलाः श्वेता अङ्गुल्यः करशाखा ययोः । **शीतलेति** । शीतलः शिशिरः स्पर्शो ययोस्ताभ्यां बाहुभ्यां तमुपरतं मृतमुत्क्षिपन्नुत्पाटयन् । इत्येवं प्रकारेण पितेव जनक इवाभिधायेत्युक्त्वानेन मृतकेन सहैव गगनतलमाकाशतलमुदपतदुत्पपात । इतिद्योत्यमाह—**दुन्दुभीति** । दुन्दुभिः पटहस्तद्वद्गम्भीरेण स्वरेण शब्देन । हे वत्से महाश्वेते, त्वया प्राणा असवो न त्याज्या न हेयाः । अनेन पुण्डरीकेण सह पुनरपि तव समागमो भविष्यति । **अहं त्विति** । अहं तु तेन व्यतिकरेण तेन वृत्तान्तेन सभया सातङ्का, सविस्मया साश्चर्या, सकौतुका सकुतूहला चोन्मुख्यूर्ध्ववदना किमिदमिति कपिञ्जलमपृच्छमप्राक्षम् । असौ कपिञ्जलोऽदत्त्वैवानुक्त्वैवोत्तरं प्रतिवचः ससंभ्रमं सत्वरम् । 'संभ्रमस्त्वरिते भये' इति कोशः । उदतिष्ठदुत्थितो बभूव । हे दुरात्मन्, मे मम वयस्यं मित्रमपहृत्यापहरणं कृत्वा क गच्छसीत्यभिधायोक्त्वोन्मुख ऊर्ध्ववदनः संजातकोपः समुत्पन्नरोषः सावेगमुत्तरीयवल्कलेन परिकरं कटिभागं बध्नन्बन्धनं कुर्वन् । उत्पत्योत्पतनं कृत्वा तमेवोत्पतन्तं शशिमण्डलविनिर्गतपुरुषमेवानुसरन्ननुगच्छन्नन्तरिक्षमाकाशमुदगादूर्ध्वमगात् । मे मम पश्यन्त्या विलोकयन्त्या एव च सर्व एव तारागणमध्यं नक्षत्रवृन्दमध्यमविशन्प्रवेशं चक्रुः ।

**मम त्विति** । तेन कपिञ्जलगमनेन द्वितीयेन द्वितीयप्रियतममरणेनेव द्विगुणीकृतः शोको यस्या एवंविधाया मम सुतरामत्यर्थं हृदयमदीर्यत विदीर्णं बभूव । किंकर्तव्यतामूढाहं महाश्वेता तरलिकामब्रवम् । किं

---

**टिप्प०—1** गोशीर्षाकारे मलयपर्वतैकदेशे जातश्चन्दनोपि तन्नाम्ना व्यपदिश्यते । अतितमां सुरभिः शीतलश्चायम् ।

---

**पाठा०—१** शीकरनिकर. २ गोशीर्षक. ३ अतिशीतल. ४ उत्क्षिप्य. ५ दुन्दुभिनाद. ६ परित्याज्याः. ७ इत्येवमादृतः पितेव. ८ दुरात्मन्नन्तक. ९ सवेगम्. १० उपेत्य.

र्येत हृदयम् । किंकर्तव्यतामूढा च तरलिकामब्रवम्—'अयि, न जानासि । कथय किमेतत्' इति । सा तु तदवलोक्य स्त्रीस्वभावकातरा तस्मिन्क्षणे शोकाभिभाविना भयेनाभिभूता वेपमानाङ्गयष्टिर्मम मरणशङ्कया च वराकी विषण्णहृदया सकरुणमवादीत्—'भर्तृदारिके, न जानामि पापकारिणी । किंतु महदिदमाश्चर्यम् । अमानुषाकृतिरेष पुरुषः । समाश्वासिता चानेन गच्छता सानुकम्पं पित्रेव भर्तृदारिका । प्रायेण चैवंविधा दिव्याः स्वप्नेऽप्यविसंवादिन्यो भवन्त्याकृतयः, किमुत साक्षात् । न चाल्पमपि विचारयन्ती कारणमस्य मिथ्याभिधाने पश्यामि । अतो युक्तं विचार्यात्मानमस्मात्प्राणपरित्यागव्यवसायान्निवर्तयितुम् । अतिमहत्खल्विदमाश्वासस्थानमस्यामवस्थायाम् । अपि च तमनुसरन्गत एव कपिञ्जलः । तस्माच्च 'कुतोऽयम्, को वायम्, किमर्थं वानेनायमपगतासुरुत्क्षिप्य नीतः, क वा नीतः, कस्माच्चासंभावनीयेनामुना पुनः समागमाशाप्रदानेन भर्तृदारिका समाश्वासिता' इति सर्वमुपलभ्य जीवितं वा मरणं वा समाचरिष्यसि । अदुर्लभं हि मरणमध्यासितम् । पश्चादप्येतद्भविष्यति । नच जीवन्कपिञ्जलो भर्तृदारिकामदृष्ट्वा स्थास्यति, तेन तत्प्रत्यागमनकालावधयोऽपि

---

तदित्याह—**अयीति** । अयि कोमलामन्त्रणे । न जानासि नावबुध्यसे । एतत्पूर्वोक्तं किमिति कथय निवेदय । ममेति शेषः । **सा त्विति** । सा तरलिका तत् पूर्वोक्तमवलोक्य निरीक्ष्य स्त्रीस्वभावेन कातरा भीरुस्तस्मिन्क्षणे शोकाभिभाविना शुगाशिना । शोकमभिभवतीत्येवंशीलेनेति भयविशेषणं वा । भयेन भीत्याभिभूता पराभूता वेपमाना कम्पमानाङ्गयष्टिर्यस्याः सैवंविधा मम मरणशङ्कया च विषण्णहृदया खेदखिन्नचित्ता वराकी दीना सकरुणं सदयमित्यवादीदवोचत् । इतिशब्दाभिधेयमाह—**भर्त्रीति** । हे भर्तृदारिके, अहं पापकारिणी न जानामि । अपि तु जानामि । किं त्विदं महदाश्चर्यं महत्कौतुकम् । एष पुरुषोऽमानुषाकृतिर्दिव्याकृतिः । अनेन पुरुषेण गच्छता व्रजता पित्रेव जनकेनेव सानुकम्पं सदयं भर्तृदारिका राजदुहिता समाश्वासिता स्वस्थीकृता । प्रायेण बाहुल्येनैवंविधा दिव्या आकृतयः स्वप्नेऽप्यविसंवादिन्योऽव्यभिचारिण्यो भवन्ति । साक्षात्प्रत्यक्षेण किमुत भण्यते । अस्य पुरुषस्य मिथ्याभिधानेऽसत्यभाषणे विचारयन्ती विमर्शं कुर्वन्त्यल्पमपि स्तोकमपि कारणं निदानमहं न च पश्यामि नावलोकयामि । अतो हेतोर्विचार्य विमृश्यात्मानमस्मात्प्राणपरित्यागलक्षणो यो व्यवसायो व्यापारस्तस्मान्निवर्तयितुं युक्तं न्याय्यम् । **अतीति** । खलु निश्चयेन । अतिमहदिदं पूर्वोक्तमाश्वासस्थानमाश्वासनस्थलमस्यामवस्थायाम् । अपि च तं पुण्डरीकमनुसरन्ननुगच्छन्गत एव कपिञ्जलः । **तस्माच्चेति** । तस्माद्धेतोः कुतः स्थानादयं समागतः, को वायम्, किमर्थमनेन पुंसायमपगतासुर्गतप्राण उत्क्षिप्योत्पाट्य नीतः, क वा कस्मिन्स्थाने वा नीतः प्रापितः, कस्माच्चासंभावनीयेनाचिन्तनीयेन समागमस्याशा तस्याः प्रदानेन पुनरमुना पुरुषेण भर्तृदारिका समाश्वासिता । इति समुपलभ्य प्राप्य जीवितं मरणं वा समाचरिष्यसि विधास्यसि । हीति निश्चये । अध्यासितं चिन्तितं मरणमदुर्लभं सुलभम् । स्वायत्तत्वादिति भावः । पश्चादपि वृत्तान्तोपलब्ध्यनन्तरमप्येतन्मरणं भविष्यति । **नचेति** । जीवञ्छ्वसन्कपिञ्जलो भर्तृदारिकामदृष्ट्वा न वीक्ष्य न च स्थास्यति, तेन कारणेन तस्य कपिञ्जलस्य यावत्प्रत्यागमनकालस्तावधयो मर्यादास्तावदमी प्राणा ध्रि-

---

**टिप्प०—1 'अयि जानासि' इत्येव पाठः । नकारपाठे योजनाक्लेशः प्रकृताऽपरिपोषश्च । 'अयि जानासि' अत्र तु काकुः । अर्थात् जानासि किमित्याशयः । 2 अहो प्रमादः! नात्र काकुः । अहं न जानामीति निषेध एव विवक्षितः । 3 अध्यवसितमित्येव मनोरमम् । अध्यवसितं कर्तुमभिप्रेतमिति तदर्थः । 4 मौर्ख्यमिदम् । प्रत्यागमनकालः अवधिर्येयां ते इति व्याख्योचिता ।**

---

**पाठा०**—१ न जानासि किमेतत्. २ दिव्या भारत्यः. ३ साक्षात्कृताः. ४ युक्तमिवात्मानम्. ५ आश्वासनस्थानम्. ६ तस्मात्. ७ च. ८ सर्वमिदमुपलभ्य. ९ न दुर्लभम्. १० अध्यवसितम्.

तावद्ध्रियन्ताममी प्राणाः' इत्यभिदधाना पादयोर्मे न्यपतत्। अहं तु सकललोकदुर्लङ्घ्यतया जीविततृष्णायाः, क्षुद्रतया च स्त्रीस्वभावस्य, तया च तद्वचनोपनीतया दुराशामृगतृष्णिकया, कपिञ्जलस्य प्रत्यागमनकाङ्क्षया च, तस्मिन्काले तदेव युक्तं मन्यमाना नोत्सृष्टवती जीवितम्। आशया हि किमिव न क्रियते। तां च पापकारिणी कालरात्रिप्रतिमां वर्षसहस्रायमाणां यातनामयीमिव दुःखमयीमिव नरकमयीमिवाग्निमयीमिवोत्सन्ननिद्रा तथैव क्षितितले विचेष्टमाना रेणुकणधूसरैरश्रुजलार्द्रकपोलसंदानितैर्विमुक्तव्याकुलैः शिरोरुहैरुपरुद्धमुखी निर्दयाक्रन्दजर्जरस्वरक्षयक्षामेण कण्ठेन तस्मिन्नेव सरस्तीरे तरलिकाद्वितीया क्षपां क्षपितवती।

प्रत्युषसि तूत्थाय तस्मिन्नेव सरसि स्नात्वा कृतनिश्चया, तत्प्रीत्या तमेव कमण्डलुमादाय, तान्येव च वल्कलानि तामेवाक्षमालां गृहीत्वा, बुद्ध्वा निःसारतां संसारस्य, ज्ञात्वा च मन्दपुण्यतामात्मनः, निरूप्य चाप्रतीकारदारुणतां व्यसनोपनिपातानाम्, आकलय्य दुर्निवारतां

---

यन्तां धार्यन्ताम्। तत्प्रत्यागमनकाल एवावधिर्येषामिति प्राणविशेषणं वा। इत्यभिदधानेतिब्रुवाणा मे मम पादयोश्चरणयोर्न्यपतत्पपात। **अहं त्विति।** तस्मिन्काले तदेव तरलिकोक्तमेव युक्तं न्याय्यं मन्यमाना ज्ञायमाना जीवितं प्राणितं नोत्सृष्टवती न त्यक्तवती। तत्र हेतुचतुष्टयं प्रदर्शयन्नाह—**सकलेति।** जीविततृष्णायाः प्राणधारणगर्धायाः सकललोकैः समग्रजनैर्दुर्लङ्घ्यतया दुरतिक्रम्यतया। स्त्रीस्वभावस्य प्रमदानिसर्गस्य क्षुद्रतया तुच्छतया च। **तया चेति।** तया पूर्वोक्तया तस्य महापुरुषस्य वचनेनोपनीतया प्रापया दुराशा दुष्टा स्पृहा सैव मृगतृष्णिका मरीचिका तया। तथा कपिञ्जलस्य प्रत्यागमनं पश्चादागमनं तस्य काङ्क्षा वाञ्छा तया। आशाया बलीयस्त्वं प्रदर्शयन्नाह—**आशया हीति।** हि निश्चितम्। आशया स्पृहया किमिव न क्रियते किं न विधीयते। ततश्च तस्मिन्नेव सरस्तीरे तरलिका द्वितीया यस्या एवंविधा पापकारिण्यहं तां क्षपां रजनीं क्षपितवती क्षयं नीतवती। इतो रात्रेर्विशेषणानि—प्रतिकूलकारित्वात्कालरात्रिस्तत्प्रतिमां तत्सदृशीम्। दुःखस्य दुःसहत्वाद्वर्षाणां सहस्रं तद्वदाचरमाणामित्यर्थः। **यातनेति।** यातना तीव्रवेदना तन्मयीमिव अत्यन्तदुःखजनकत्वात्। **दुःखेति।** दुःखं कृच्छ्रं तन्मयीमिव। स्वजनविरहेण शरीरदुःखस्यैवानुभूयमानत्वात्। **नरकेति।** नरकं दुर्गतिस्तन्मयीमिव। निन्दितात्यन्तदुःखोत्पादकत्वात्। **अग्नीति।** अग्निर्वह्निस्तन्मयीमिव। तीव्रदीर्घज्वराक्रान्तत्वात्। पुनः कीदृशी। **उत्सन्नेति।** उत्सन्ना मूलत उच्छिन्ना निद्रा प्रमीला यस्याः सा। **तथैवेति।** तथैव पूर्वोक्तप्रकारेणैव क्षितितले पृथ्वीतले विचेष्टमाना विलुठमाना। **रेण्विति।** रेणूनां रजसां कणास्तैर्धूसरैरीषत्पाण्डुरैरश्रुजलैर्नेत्रवारिभिरार्द्रौ क्लिन्नौ कपोलौ तत्र संदानितैः संयतैः विरहवशात्। विमुक्तत्वेनानियन्त्रितत्वेन व्याकुलैर्विसंस्थुलैः शिरोरुहैः केशैरुपरुद्धमाच्छादितं मुखमास्यं यस्याः सा। **निर्दयमिति।** निर्दयं निःकरुणं य आक्रन्दः पूत्कारस्तेन जर्जरः शिथिलो यः स्वरो ध्वनिस्तस्य क्षयो विनाशस्तेन क्षामेण कृशेनैवंविधेन कण्ठेन करणभूतेन निर्दयाक्रन्देनैव क्षपां क्षपितवतीति भावः।

**प्रत्युषसीति।** प्रत्युषसि प्रभात उत्थाय तस्मिन्नेव सरसि कासारे स्नात्वाप्लवं विधाय कृतो विहितो निश्चयो यया सा। तत्प्रीत्या तत्स्नेहेन तमेव कमण्डलुं तत्करकुण्डिकामादाय गृहीत्वा तान्येव तद्देहलग्नान्येव वल्कलानि चोचानि, तामेव तदीयामेवाक्षमालां जपमालां गृहीत्वा। संसारस्य संसृतेर्निःसारतामसारतां बुद्ध्वावगम्य। आत्मनः स्वस्य मन्दपुण्यतां ज्ञात्वा च। व्यसनोपनिपातानां कष्टोपनिपातानामप्रतीकारं च तद्दारुणं चाप्रतीकारदारुणं तस्य भावस्तत्ता तां निरूप्य च कथयित्वा। शोकस्य शुचो दुर्निवारतामाकलय्याकलनां कृत्वा। दैवस्य

---

**टिप्प०**—1 अस्फुटप्रलाप इव। अश्रुजलार्द्रयोः कपोलयोः संदानितैः संलग्नैरित्यर्थः। 2 नास्ति प्रतीकारः प्रतिविधानं येषां ते च दारुणाश्चेति सरलोऽर्थः। 3 दृष्ट्वा, निर्णीय वा, इत्यर्थ उचितः।

---

पाठा०—१ पादयोरपतत्. २ स्त्रीस्वभावतायाः. ३ दुराशया. ४ पापकारिणीम्. ५ उत्पन्ननिद्राम्. ६ विमुक्तैरव्याकुलैः. ७ मुखा. ८ क्षयितवती. ९ अस्मिन्. १० उपतापानाम्.

शोकस्य, दृष्ट्वा च निष्ठुरतां दैवस्य, चिन्तयित्वा चातिबहुलदुःखतां स्नेहस्य, भावयित्वा चानित्यतां सर्वभावानाम्, अवधार्य चाकाण्डभङ्गुरतां सर्वसुखानाम्, अविगणय्य तातमम्बां च, परित्यज्य सह परिजनेन सकलबन्धुवर्गम्, निवर्त्य विषयसुखेभ्यो मनः, संयम्येन्द्रियाणि गृहीतब्रह्मचर्या देवं त्रैलोक्यनाथमनाथशरणमिमं शरणार्थिनी स्थाणुमाश्रिता ।

अपरेद्युश्च कुतोऽपि समुपलब्धवृत्तान्तस्तातः सहाम्बया सह बन्धुवर्गेणागत्य सुचिरं कृताक्रन्दस्तैस्तैरुपायैः, अभ्यर्थनाभिश्च बह्वीभिः, उपदेशैश्चानेकप्रकारैः, सान्त्वनैश्च नानाविधैः, गृहागमनाय मे महान्तं यत्नमकरोत्। यदा च नेयमस्माद्व्यवसायात्कथंचिदपि शक्यते व्यावर्तयितुमिति निश्चयमधिगतवान् तदा निराशोऽपि दुस्त्यजतया दुहितृस्नेहस्य पुनःपुनर्मया विसृज्यमानोऽपि बहून्दिवसान्स्थित्वा सशोक एवान्तर्दह्यमानहृदयो गृहानयासीत्। गते च ताते ततःप्रभृति तस्य जनस्याश्रुमोक्षमात्रेण कृतज्ञतां दर्शयन्ती, तदनुरागकृशमिदमपुण्यबहुलमस्तमितलज्जममङ्गलभूतमनेकक्लेशायाससहस्रनिवासं दग्धशरीरकं बहुविधैर्नियमशतैः शोषयन्ती

भाग्यस्य निष्ठुरतां कर्कशतां दृष्ट्वा विलोक्य। स्नेहस्य प्रेम्णोऽतिबहुलमतिदृढं दुःखं यस्मिंस्तस्य भावस्तत्ता तां चिन्तयित्वा विचार्य। सर्वभावानां समग्रपदार्थानामनित्यतां विनाशितां भावयित्वा भावनाविषयीकृत्य च। सर्वसुखानां समग्रसौख्यानामकाण्डेऽनवसरे भङ्गुरतां भङ्गशीलतामवधार्य निश्चित्य। तातं पितरमविगणय्यानादृत्य। परिजनेन परिवारेण सह सकलं समग्रं बन्धुवर्गं स्वजनलोकं परित्यज्य दूरीकृत्य। विषयसुखेभ्य इन्द्रियसातेभ्यो मनश्चित्तं निवर्त्य पराङ्मुखीकृत्य। इन्द्रियाणि करणानि संयम्य नियम्य। गृहीतं स्वीकृतं ब्रह्मचर्यं यया सा देवं त्रैलोक्यनाथमिममनाथानां शरणं स्थाणुमीश्वरं शरणार्थिनी त्राणाभिलाषिण्यहमाश्रिताश्रयणं कृतवती।

**अपरेद्युरिति।** अपरेद्युरन्येद्युः कुतोऽपि कस्मादपि समुपलब्धः प्राप्तो वृत्तान्त उदन्तो येनैवंभूतस्तातः पिताम्बया मात्रा च सह तथा बन्धुवर्गेण सहागत्यैत्य सुचिरं चिरकालं यावत्कृतो विहित आक्रन्दो येन स तैस्तैरुपायैः प्रपञ्चैः, ताभिर्बह्वीभिरभ्यर्थनाभिः प्रार्थनाभिः, अनेकैरुपदेशैर्हितवाक्यैः, नानाविधैः सान्त्वनैः सामभिः, एभिः कृत्वा मे मम गृहागमनाय[1] महान्तं यत्नमुद्योगमकरोदसृजत्। **यदा चेति।** यदा यस्मिन्काल इयं महाश्वेतास्माद्व्यवसायाद्व्यापृतेः कथंचिदपि कष्टेनापि व्यावर्तयितुं निवर्तयितुं न शक्यते न पार्यत इति निश्चयं निर्णयमधिगतवाञ्ज्ञातवान्। **तदेति।** तस्मिन्काले निराशोऽपि निर्गतसमीहितोऽपि गृहं न गत इति। अत्र हेतुमाह—**दुहित्रिति।** दुहिता पुत्री तस्याः स्नेहस्य प्रेम्णो दुस्त्यजतया दुर्निवारतया। स्नेहाधिक्यं प्रदर्शयन्नाह—**पुनरिति।** पुनःपुनर्वारंवारं मया विसृज्यमानोऽपि गृहे गम्यतामिति कथ्यमानोऽपि बहूननेकान्दिवसान्दिनान्स्थित्वा सशोकः शुचा सह वर्तमानोऽन्तर्मध्ये दह्यमानं प्रज्वलमानं हृदयं चेतो यस्यैवंविध एव गृहानयासीदगमत्। 'गृहाः पुंसि' इति पुंस्त्वम्। **गते चेति।** ताते पितरि गते च सति ततःप्रभृति तद्दिनादारभ्य तस्य जनस्य पुण्डरीकस्याश्रुमोक्षमात्रेण नेत्रवारिमोचनेनैव कृतं जानातीति कृतज्ञस्तस्य भावस्तत्ता तां दर्शयन्ती प्रकाशयन्ती। पुनः किं कुर्वन्ती। दग्धशरीरमेव दग्धशरीरकम्। स्वार्थे कः। तच्छोषयन्ती कृशतां प्रापयन्ती। अथ शरीरकं विशेषयन्नाह—**तदिति।** तस्मिन्कुमारे पुण्डरीके योऽनुरागः स्नेहस्तेन कृशं सूक्ष्ममपुण्यबहुलं[2] पापदृढम्। **अस्तेति।** अस्तमितास्तं प्राप्ता लज्जा त्रपा यस्मिंस्तदमङ्गलभूतमशिवरूपम्। **अनेकेति।** अनेकेऽसंख्या ये क्लेशा दुःखानि तेषामायासाः परिश्रमास्तेषां सहस्रं तस्य निवासो गृहस्तम्। कैः।

**टिप्प०—**1 गृहगमनाय इत्येव पाठो मनोरमः। 2 अपुण्यानि (पापानि) बहुलानि यस्मिंस्तत्, इति व्याख्यानमुचितम्।

पाठा०—१ दुःखबहुलताम्. २ परिजनेन मनसा सकल. ३ निगृह्य गृहीत. ४ त्रैलोक्यनाथशरणम्. ५ आश्रितवत्यसि. ६ बहुभिः. ७ परिसान्त्वनैः. ८ गृहगमनाय. ९ यदा तु न कथंचिदप्यस्मादध्यवसायाद्व्यावर्तयितुं शक्यत इति. १० दुरुच्छेदतया. ११ गृहम्. १२ जनस्याश्रुमोक्षमात्रेण किल; देवस्य कृतेऽश्रुमोक्षमात्रेण. १३ बहुलमपि. १४ क्षपयन्ती.

वन्यैश्च फलमूलवारिभिर्वर्तमाना जपव्याजेन तद्गुणगणानिव गणयन्ती, त्रिसंध्यमत्र सरसि स्नानमुपस्पृशन्ती, प्रतिदिनमर्चयन्ती देवं त्र्यम्बकम्, अस्यामेव गुहायां तरलिकया सह दीर्घं शोकमनुभवन्त्यवसम् । साहमेवंविधा पापकारिणी निर्लक्षणा निर्लज्जा क्रूरा निःस्नेहा नृशंसा गर्हणीया निःप्रयोजनोत्पन्ना निःफलजीविता निरवलम्बना निःसुखा च । किं मया दृष्टया पृष्टया वा कृतब्राह्मणवधमहापातकया करोति महाभागः' इत्युक्त्वा पाण्डुना वल्कलोपान्तेन शशिनमिव शरन्मेघशकलेनाच्छाद्य वदनं दुर्निवारबाष्पवेगमपारयन्ती निवारयितुमुन्मुक्तकण्ठमतिचिरमुच्चैः प्रारोदीत् ।

चन्द्रापीडस्तु प्रथममेव तस्या रूपेण विनयेन दाक्षिण्येन मधुरालापतया निःसङ्गतया तपस्वितया च प्रशान्तत्वेन च निरभिमानतया च महानुभावत्वेन च शुचितया चोपारूढ-

---

बहुविधैः नानाप्रकारैर्नियमशतैर्व्रतशतैः । **वन्यैश्चेति** । वनसंबन्धिभिः । **फलेति** । फलानि सस्यानि, मूलानि बुध्नाः, वारीणि जलानि, तैः कृत्वा वर्तमाना प्रवर्तमाना । कृतप्राणधारणेत्यर्थः । **जप इति** । जपो जापस्तस्य व्याजेन मिषेण तस्य पुण्डरीकस्य गुणाः शौर्यादयस्तेषां गणाः समूहास्तानिव गणयन्ती गणनां कुर्वन्ती त्रिसंध्यं त्रिसायम् । अत्र सरस्यच्छोदनाम्नि तटाके स्नानमाप्लवमुपस्पृशन्ती कुर्वन्ती । **प्रतीति** । प्रतिदिनं प्रतिवासरं त्र्यम्बकं देवमीश्वरमर्चयन्ती पूजयन्ती । **अस्यामिति** । अस्यां प्रत्यक्षगतायामेव गुहायां कंदरायां तरलिकया सह दीर्घं शोकमनुभवन्ती साक्षात्कुर्वन्त्यवसं निवासमकरवम् । यत्तदोर्नित्याभिसंबन्धाद्या पूर्वोक्ता सैवंविधाहं नान्या । इतस्तस्याः कियन्ति विशेषणानि प्रदर्शयन्नाह—**पापेति** । पापं कलुषं करोतीत्येवंशीला सा, निर्लक्षणा पाण्डुरपृष्ठा, निर्लज्जा निस्त्रपा, क्रूरा दुष्टा, निःस्नेहा निःप्रेमा, नृशंसा निस्त्रिंशा, गर्हणीया निन्दनीया, निःप्रयोजनं निरर्थकमुत्पन्ना प्रादुर्भूता, निःफलमवकेशि जीवितं प्राणितं यस्याः सा तथा, निर्गतमवलम्बनमाश्रयो यस्याः सा तथा, निर्गतं सुखं सातं यस्याः सा तथा । चकारः समुच्चयार्थः । स्वस्य निन्दां कुर्वन्त्याह—**किमिति** । हे महाभाग हे सत्पुरुष, कृतं ब्राह्मणवधलक्षणं महापातकं ययैवंविधया दृष्टयावलोकितया पृष्टया पृच्छाविषयीकृतया वा मया किं करोति किं करिष्यति । अत्र भविष्यत्यर्थे वर्तमाना । इति पूर्वोक्तमुक्त्वा कथयित्वा पाण्डुना शुभ्रेण वल्कलोपान्तेन चोचाञ्चलेन वदनं मुखमाच्छाद्य । अत्र शुक्लत्वसाधर्म्यादुत्प्रेक्षते—**शरदिति** । शरद्घनात्ययस्तस्या मेघशकलेन जलधरखण्डेन शशिनमिव चन्द्रमिव । अत्र वदनस्य चन्द्रसादृश्यम्, वल्कलोपान्तस्य च शरन्मेघशकलसादृश्यमिति भावः । **दुरिति** । दुर्निवारो बाष्पो नेत्राम्बु तस्य वेगं रंहो निवारयितुं दूरीकर्तुमपारयन्त्यशक्नुवत्युन्मुक्तकण्ठं यथा स्यात्तथातिचिरं चिरकालमुच्चैस्तारस्वरेण प्रारोदीद्रुदनमकार्षीत् ।

**चन्द्रापीडस्त्विति** । प्रथममेवादावेव तस्या महाश्वेताया रूपेण सौन्दर्येण, विनयेन प्रणिपातादिना, दाक्षिण्येनानुकूल्येन, मधुरो मिष्टो य आलापः संलापस्तस्य भावस्तत्ता तया, तथा निर्गतो यः सङ्गोऽभिष्वङ्गस्तस्य भावस्तत्ता तया । **तपेति** । तपस्विन्या भावस्तत्ता तया । तथा प्रशान्तत्वेन सौम्यप्रकृतित्वेन च । तथा निरभिमानतया निरहंकारतया च । तथा महानुभावत्वेन महाप्रभावत्वेन । तथा शुचितया पवित्रतया चोपारूढमा-

---

**टिप्प०—1** वृत्तिं कुर्वाणा, इत्यर्थ उचितः । 2 धन्या बुद्धिः ! मुनिकुमारस्य किं शौर्यं दृष्टम्? अस्तु । स्नेह-सौन्दर्यादय इत्युचितम् । 3 लक्षणैः शुभलक्षणैः रहिता, इत्यर्थो योग्यः । 'पाण्डुरपृष्ठा' इत्यर्थस्तु अवाङ्मनसगोचरः, धन्यष्टीकाकारः ।

---

**पाठा०—१** कन्द. २ स्नात्वा. ३ तया तरलिकया. ४ दीर्घशोकम्. ५ चिरमवसम्. ६ क्रूरा च. ७ निःस्नेहा च. ८ नृशंसा च; अतिनृशंसा च कृतघ्ना च. ९ निरर्था निरवलम्बना. १० मया तथाभूतया. ११ अतिकण्ठम्. १२ चातितपस्वितया.

गौरवोऽभूत्[1], तदानीं तु ते[2]नापरेण दर्शितसद्भावेन स्ववृत्तान्तकथनेन तया च कृतज्ञतया हृतहृदयः [3]सुतरामारोपितप्रीतिरभवत् । आर्द्रीकृतहृदयश्च शनैःशनैरेनामभाषत—'भगवति, क्लेशभीरुरकृतज्ञः सुखासङ्गलुब्धो लोकः स्नेहसदृशं कर्मानुष्ठातुमशक्तो निष्फलेनाश्रुपातमात्रेण स्नेहमुपदर्शयन्रोदिति । त्वया तु कर्मणैव सर्वमाचरन्त्या किमिव न प्रेमोचितमाचेष्टितम्, येन रोदिषि । तदर्थमा[4]जन्मतः प्रभृति समुचितपरिचयः[1] प्रेयानसंस्तुत इव परित्यक्तो बान्धवजनः । संनिहिता अपि तृणावज्ञयावधीरिता विषयाः । [5]मुक्तान्यतिशयितशुनासीरसमृद्धीन्यैश्वर्यसुखानि । मृणालिनीवातितनीयस्यपि नितरां तनिमानम[6]नुचितैः संक्लेशैरुपनीता तनुः । गृहीतं ब्रह्मचर्यम् । आयोजितस्तपसि महत्यात्मा । वनिताजनदु[7]ष्करमपि कृतमरण्यावस्थानम्[2] । अपि चानायासेनैवात्मा [8]दुःखाभिभूतैः परित्यज्यते । महीयसा न तु यत्नेन गरी-

---

श्रितं गौरवं यस्मिन्नेवंविधश्चन्द्रापीडोऽभूत् । **तदानीं त्विति** । तदानीं तस्मिन्कालेऽपरेण दर्शितः प्रकटितः सद्भावः स्वभावो येनैवंविधेन स्ववृत्तान्तकथनेन निजोदन्तनिवेदनेन तया च कृतज्ञतया कृतवेत्तृतया च हृतं हृदयं चित्तं यस्य स सुतरामत्यर्थमारोपिता स्थापिता प्रीतिर्यस्यामेवंविधश्चन्द्रापीडोऽभवदासीत् । **आर्द्रीति** । आर्द्रीकृतं हृदयं यस्य स शनैःशनैर्मन्दंमन्दमेनां महाश्वेतामभाषतावोचत । तदेवाह—**भगवतीति** । हे भगवति हे स्वामिनि, अन्यो लोकः क्लेशभीरुरकृतज्ञः सुखार्थं य आसङ्गः स्त्र्यादीनामभिषङ्गस्तत्र लुब्धो लिप्सुः स्नेहसदृशं प्रीतियोग्यं कर्म तत्सुखेन सुखं तद्दुःखेन दुःखमनुष्ठातुं विधातुमशक्तोऽसमर्थो निष्फलेन निष्प्रयोजनेनाश्रुपातमात्रेण स्नेहं प्रीतिमुपदर्शयन्बाह्यवृत्त्या प्रकाशयन्रोदिति रोदनं करोति । लोकेभ्यस्तस्या वैपरीत्यं प्रदर्शयन्नाह—**त्वया त्विति** । त्वया भवत्या कर्मणैव कर्तव्यरूपेणैव सर्वं समग्रमाचरन्त्या कुर्वन्त्या प्रेमोचितं स्नेहयोग्यं किमिव नाचेष्टितम् । अपि तु सर्वमेव विहितमिति भावः । येन कारणेन त्वं रोदिष्यश्रुपातं करोषि । तदर्थं पुण्डरीकार्थमाजन्मतः प्रभृति जन्म मर्यादीकृत्य समुचितो योग्यः परिचयः संगतिर्यस्यैवंविधः प्रेयानतिप्रियोऽसंस्तुत इवासंस्तुतोऽपरिचितस्तद्वदिव बान्धवजनः स्वजनवर्गः परित्यक्त उज्झितः । **संनिहितेति** । संनिहिता अपि समीपवर्तिनोऽपि तृणवद्यावज्ञावगणना तया विषया इन्द्रियार्था अवधीरिता अवगणिताः । **अतीति** । अतिशयिता तिरस्कृता शुनासीरस्येन्द्रस्य समृद्धिः संपद्यैरेवंविधान्यैश्वर्यसुखानि विभवसौख्यानि मुक्तानि त्यक्तानि । **मृणालिनीति** । अतितनीयस्यप्यतिकृशापि तनुः शरीरमनुचितैरयोग्यैः संक्लेशैस्तपश्चरणरूपैर्नितरामत्यर्थं तनिमानं कृशत्वमुपनीता प्रापिता । केव । मृणालिनीव कमलिनीव । **गृहीतेति** । गृहीतं स्वीकृतं ब्रह्मचर्यं ब्रह्मव्रतम् । **आयोजितेति** । महति गरिष्ठे तपस्यात्मा आयोजितः स्थापितः । **वनितेति** । अत्रापिशब्दो भिन्नक्रमः । तेन वनिताजनस्य स्त्रीजनस्य दुष्करमपि दुःसाध्यमप्यरण्यावस्थानं कृतं विहितम् । **अनेति** । दुःखाभिभूतैरनायासेनैव परिश्रममन्तरेणैवात्मा परित्यज्यते । शरीरत्यागः क्रियत इति भावः । **नत्विति** । तु पुनरर्थकः । न केवलं[3] परं महीयसा गरिष्ठेन यत्नेन प्रयासेन गरीयसि महीयसि क्लेशे पूर्वोक्तस्वरूपे

---

टिप्प०—1 'समुपचितपरिचयः' इत्येव पाठः । समुपचितो वृद्धिं प्राप्त इति तदर्थः । 2 टीकाकारमतेऽयमपपाठः । 'वनिताजनदुष्करमप्यङ्गीकृतम्' इमान्येवाक्षराणि पदशय्यानुकूलानि । 3 हन्त प्रहेलिकां चकार भाग्यवान् । दुःखितैः अनायासेन आत्मघातः क्रियते, महीयसा (अतिमहता) यत्नेन गरीयसि ( अति, गुरुतमे ) क्लेशे ( तपस्यादौ ) आत्मा न निक्षिप्यते । इति व्याख्यातव्यम् । किन्तु सोयमप्यपपाठः । 'महीयसा तु' इति नविरहित एव पाठः । दुःखितैः आत्मा अनायासेन त्यक्तुं शक्यते ( वधोद्बन्धनोपायानां स्वाधीनत्वात् ), गरीयसि क्लेशे ( तपस्यादौ ) तु महीयसा यत्नेन आत्मा निक्षिप्यते इति तदर्थः ।

---

पाठा०—१ आसीत्. २ तेनानेनापरेण. ३ सुतरामतिदूरम्. ४ जन्मन. ५ विमुक्तानि. ६ उचितैः. ७ दुष्करमप्यङ्गीकृतम्; दुष्करमतिकष्टमङ्गीकृतम्. ८ दुःखाभिहतः परित्यज्यते लघीयसा; दुःखाभिहतैः परित्यज्यन्ते महीयसा.

यसि क्लेशे निक्षिप्यते केवलम्। यदेतदनुमरणं नाम तदतिनिष्फलम्। अविद्वज्जनाचरित एष मार्गः। मोहविलसितमेतत्, अज्ञानपद्धतिरियम्, रभसाचरितमिदम्, क्षुद्रदृष्टिरेषा, अतिप्रमादोऽयम्, मौर्ख्यस्खलितमिदम्, यदुपरते पितरि भ्रातरि सुहृदि भर्तरि वा प्राणाः परित्यज्यन्ते। स्वयं चेन्न जहति न परित्याज्याः। अत्र हि विचार्यमाणे स्वार्थ एव प्राणपरित्यागोऽयम् असह्यशोकवेदनाप्रतीकारत्वादात्मनः। उपरतस्य तु न कमपि गुणमावहति। न तावत्तस्यायं प्रत्युज्जीवनोपायः, न धर्मोपचयकारणम्, न शुभलोकोपार्जनहेतुः, न निरयपातप्रतीकारः, न दर्शनोपायः, न परस्परसमागमनिमित्तम्। अन्यामेव स्वकर्मफलपाकोपचितामसाववशो नीयते भूमिम्। असावप्यात्मघातिनः केवलमेनसा संयुज्यते। जीवंस्तु जला–

---

निक्षिप्यते। एतेन प्राणप्रियवियोग आत्मपरित्यागात्तस्यात्मनो गरिष्ठक्लेशे परिक्षेपो महीयानिति ध्वनितम्। **यदेतदिति**। नामेति कोमलामन्त्रणे। यदेतदनुसरणमन्वारोहणं तदतिनिष्फलं निरर्थकम्। यतः कुमारः प्रियः ननु विहितः पतिर्येनान्वारोहणं किं तु मृतानुमरणमात्रं तदतिनिष्प्रयोजनमिति भावः। अथ च निष्फलत्वं प्रदर्शयन्नाह—**अविद्वज्जनेति**। एषोऽन्वारोहलक्षणो मार्गः पन्था अविद्वज्जना अपण्डितलोकास्तैराचरितः सेवितः। **एतदिति**। पूर्वोक्तं मोहविलसितमज्ञानविजृम्भितम्। **अज्ञानेति**। इयमन्वारोहणे प्रवृत्तिरज्ञानपद्धतिरज्ञानमार्गः। **रभसेति**। इदमन्वारोहणं रभसाचरितमविचारपूर्वकमाचरितम्। **क्षुद्रेति**। एषान्वारोहणलक्षणा प्रवृत्तिः क्षुद्रास्तुच्छबुद्धयस्तेषां दृष्टिर्ज्ञानम्। **अतीति**। अयमनुमरणलक्षणोऽतिप्रमादोऽतिशयेनानवधानता। **मौर्ख्यमिति**। इदं पूर्वोक्तं मौर्ख्यस्खलितं विहितच्युतिः। यत्तदोर्नित्याभिसंबन्धादाह—**यदिति**। यत्पितरि ताते, भ्रातरि सहोदरे, सुहृदि मित्रे, भर्तरि प्राणनाथे वोपरते मृते सति प्राणाः परित्यज्यन्ते परिमुच्यन्त इति कर्मकर्तृक्तिः। तस्या लक्षणम्—'यत्र कर्मैव कर्तृत्वं याति कर्ता तु नोच्यते। सुकरैः स्वैर्गुणैर्योगात्कर्मकर्तेति तद्विदुः' इति। **स्वयमिति**। चेद्यदि स्वयं न जहति न परित्यजन्ति तदा प्राणा न परित्याज्याः। बलान्न निष्कासनीया इत्यर्थः। किमर्थं तर्हि लोकानां मरणे प्रवृत्तिरित्यत आह—**अत्र हीति**। हीति निश्चये। अस्मिन्ननुमरणे विचार्यमाणे विचारणाविषयीक्रियमाणेऽयं प्राणपरित्यागः स्वार्थ एवात्मीयकृत्यमेव। तत्र हेतुमाह—**असह्येति**। आत्मनो जीवस्य न सोढुमशक्यासह्या या शोकवेदना शुग्व्यथा तस्याः प्रतीकारो निवृत्त्युपायस्तस्य भावस्तत्त्वं तस्मात्। **उपेति**। उपरतस्य मृतस्य तु न कमपि गुणं हितमावहत्यादधाति। एतदर्थं स्पष्टयन्नाह—**न तावदिति**। तावदादौ तस्योपरतस्य प्रत्युज्जीवनोपायः पुनः प्राणधारणप्रतिक्रिया न भवति। **नेति**। धर्मस्य पुण्यस्योपचयः पुष्टिस्तस्य कारणं निमित्तं न भवति। **नेति**। शुभलोकस्य स्वर्गलोकस्योपार्जनमर्जनं तस्य हेतुर्निदानम्। **निरयेति**। निरये दुर्गतौ पातः पतनं तस्य प्रतीकारः प्रतिक्रिया न। **नेति**। दर्शनस्यावलोकनस्याप्युपायो न। **नेति**। परस्परमन्योन्यं यः समागमः संबन्धस्तस्य निमित्तं कारणं न भवति। तत्र हेतुमाह—**अन्यामिति**। असौ मृतोऽवशः पराधीनः स्वस्य कर्मणोः स्वकृतपापपुण्ययोर्यः फलपाकस्तेनोपचितां पुष्टामन्यामेव कर्मभूमिं नीयते प्राप्यते। अन्यदप्यनुमरणेनानिष्टमाह—**असाविति**। असौ पूर्वं मृत आत्मघातिनोऽनुमृतस्यैनसा पापेन केवलं संयुज्यते संयुक्तो भवति। अनुमरणाभावे गुणानाह—**जीवंस्त्विति**। जीवन्श्वसन्नुपरतस्य मृतस्यात्मनो जीवस्य जलाञ्जलिदानादिना बहूपकरो-

---

**टिप्प०—1 अविचारोयम् 'अनायासेन परित्यज्यते' इत्यादिना दुःखिजनकर्तृकस्त्याग एवोपक्रान्तः। तथा च कर्मणि प्रत्यये एवोचिता संगतिः न तु कर्मकर्तरि, तत्र प्राणानां स्वयं कर्तृत्वात्। 2 स्वार्थः स्वनिमित्त एव, इति व्याख्योचिता।**

---

पाठा०—१ अपि निष्फलम्. २ क्षुद्रदृष्टिः. ३ प्रेम. ४ ते. ५ असह्यवेदना. ६ आपतितः. ७ न तस्यायम्. ८ योगः. ९ न च. १० नरकपतन. ११ फलपरिपाकोपन्त्रितताम्; फलपाकोपनीताम्. १२ कर्मभूमिम्. १३ आत्मघाती.

ञ्जलिदानादिना वहूपकरोत्युपरतस्यात्मनश्च, मृतस्तु नोभयस्यापि । स्मर तावत्प्रियामेकपत्नीं रतिं भगवति भर्तरि मकरकेतौ[1] सकलाबलाजनहृदयहारिणि हरहुतभुग्दग्धे[2]ऽप्यविरहिताम-सुभिः । पृथां[3] च वार्ष्णेयीं शूरसेनसुतामभिरूपे सावज्ञविजितसकलराजकमौलिकुसुमवासि-[4][5]ताशेषपादपीठे पत्यावखिलभुवनबलिभागभुजि[6] पाण्डौ किंदममुनिशापानलेन्धनतामुपगते[7]-ऽप्यपरित्यक्तजीविताम्[8] । उत्तरां च विराटदुहितरं बालां बालशशिनीव नयनानन्दहेतौ[9] विन-यवति विक्रान्ते च पञ्चत्वमभिमन्यावागतेऽपि[10] धृतदेहाम् । दुःशलां[11] च धृतराष्ट्रदुहितरं भ्रातृश-तोत्सङ्गलालितामतिमनोहरे हरवरप्रदानवर्धितमहिम्नि सिन्धुराजे जयद्रथेऽर्जुनेन लोकान्तरमुप-नीतेऽप्यकृतप्राणपरित्यागाम् । अन्याश्च रक्षः[12]सुरासुरमुनिमनुजसिद्धगन्धर्वकन्यका भर्तृरहिताः श्रूयन्ते सहस्रशो विधृत[13]जीविताः । प्रोन्मुच्येतापि जीवितं संदिग्धोऽप्यस्य[14] समागमो यदि स्यात् ।

---

त्यनेकामुपकृतिं कुरुते । मृतस्तूभयस्यापि स्वस्य परस्य च न किमप्युपकरोति । दृष्टान्तद्वारा एनमर्थं दृढीकुर्व-न्नाह—**स्मरेति** । तावदादौ सकलः समग्रो योऽवलाजनः स्त्रीलोकस्तस्य हृदयहारिणि चित्तापहारिणि भग-वति माहात्म्यवति भर्तरि प्राणवल्लभे मकरकेतौ श्रीमदने हरस्य महादेवस्य यो हुतभुग्नेत्राग्निस्तेन दग्धे भ-स्मीभूते सत्यपि, एक एव पतिर्यस्यास्तामेकपत्नीं प्रियां वल्लभां रतिमसुभिः प्राणैरविरहितां संयुक्तां स्मर स्मृति-गोचरीकुरु । यथा तया प्राणा नोज्झिताः, स्वभर्तुः कृत्यं च कृतम्, तथा त्वयापि विधेयमिति भावः । अ-न्यासामपि निदर्शनद्वारा पूर्वोक्तमर्थं दृढीकुर्वन्नाह—**पृथामिति** । पाण्डौ भर्तरि किंदम इत्यभिधया प्रसिद्धो यो मुनिस्तस्य शाप एवानलो वह्निस्तस्मिन्निन्धनतामिध्मतामुपगतेऽपि प्राप्तेऽप्यपरित्यक्तजीवितामनुज्झितप्राणां वार्ष्णेयीमन्धकवृष्णिकुलोत्पन्नां शूरसेनस्य राज्ञः सुतां पुत्रीं पृथां कुन्तीम् । स्मरेत्यस्य सर्वत्रापि संवन्धः । अथ भर्तारं विशेषयन्नाह—**सावज्ञयेति** । सावज्ञयैवानिच्छयैव विजितं स्वायत्तीकृतं यत्सकलं समग्रं राज्ञां समूहो राजकं तस्य मौलयः शिरांसि तेषां कुसुमानि पुष्पाणि तैर्वासितं भावितमशेषं पादपीठं समग्रपदासनं यस्य स तस्मिन् । **अखिलेति** । अखिलं समग्रं यद्भुवनं विश्वं तस्य यो बलिभागो भागधेयस्तं भुनक्तीति स तस्मिन् । अभिरूपे पण्डिते । तथा बालशशिनीव नवोदितचन्द्र इव नयनानन्दहेतौ नेत्राह्लादनिमित्ते विनयवति मर्या-दावति विक्रान्ते शूरेऽभिमन्यावर्जुनसुते पञ्चत्वमागतेऽपि प्राप्तेऽपि धृतो देहो ययैवंभूतां बालामप्राप्तयौवनां विराटराज्ञो दुहितरं पुत्रीमुत्तरामुत्तरानाम्नीं स्मरेति संवन्धः । तथातिमनोहरेत्यभिरामे । हरेणेश्वरेण वरप्रदानेन वर्धितो वृद्धिं नीतो महिमा माहात्म्यं यस्य स तस्मिन् । सिन्धुराजे सिन्धुदेशनाथे जयद्रथाभिधानेऽर्जुनेन पार्थेन लोकान्तरं भवान्तरमुपनीते प्रापितेऽपि धृतराष्ट्रस्य राज्ञो दुहितरं सुतां भ्रातॄणां यच्छतं तस्योत्सङ्गः क्रोडस्तेन लालितां पालितामकृतप्राणपरित्यागामेवंविधां दुःशलां स्मरेति संवन्धः । अमुमेवार्थं पुनर्द्रढयन्नाह—**अन्याश्चे-ति** । रक्षांसि राक्षसाः, सुरा देवाः, असुरा दैत्याः, मुनयस्तापसाः, मनुजा मनुष्याः, सिद्धा विद्यासिद्धाः, ग-न्धर्वा देवगायनाः, एतेषां कन्यकाः पुत्र्यो भर्तृरहिताः सत्यो विधृतजीविता अकृतप्राणपरित्यागा अन्याः पूर्वोक्त-व्यतिरिक्ताः सहस्रशः श्रूयन्त आकर्ण्यन्ते । यदनुमरणेनापि न प्राप्यते तदपीष्टं त्वया प्राप्तव्यमेवेत्याह—**प्रोन्मुच्येतापीति** । तदा जीवितं प्रोन्मुच्येत त्यज्येत यद्यस्य मृतस्य संदिग्धोऽपि समागमः स्यात् । तच्च

---

**टिप्प०—1 मृगरूपं धृत्वा मृगीभिर्विपिने रममाणः किंदमो नाम मुनिर्मृगयार्थिना पाण्डुना मृग-बुद्ध्या निहतः शशाप–'रममाणं मां संहृतवांस्त्वमपि रममाण एव मरिष्यसि' । ततः कदाचिद्वसन्तप्रभावा-दुद्दीप्तमदनः पाण्डुर्माद्रीं रमयन्ममार । माद्र्यामनुमृतायामपि जीवन्ती कुन्ती युधिष्ठिरादीन् जनयामासेति महाभारतम् । ( आ. प. ) 2 सावज्ञम् ( अवज्ञया सहितम्, सहेलमित्यर्थः ) जितमित्यर्थ उचितः । 3 वास्तवे त्वपपाठ एवायम् । 'वासितपादपीठे' इत्येव पाठः । 4 सुन्दरे इत्यर्थ उचितः ।**

---

**पाठा०—**१ मकरध्वजे. २ हरनयनहुतभुजा दग्धे; हरहुंकारहुतभुजा दग्धे. ३ तथा. ४ सावज्ञावजित. ५ वासि-तपाप. ६ वलयभुजि. ७ उपागते. ८ अपरियुक्त. ९ जननयना. १० उपगते. ११ दुःशीलाम्. १२ बहवः. १३ विधुर. १४ संदिग्धो यदि समागमः स्यात्.

भगवत्या तु ततः पुनः स्वयमेव समागमसरस्वती समाकर्णिता। अनुभवे च को विकल्पः, कथं च तादृशानामप्राकृताकृतीनां महात्मनामवितथगिरां गरीयसापि कारणेन गिरि वैतथ्यमास्पदं कुर्यात्। उपरतेन च सह जीवन्त्याः कीदृशी समागतिः। अतो निःसंशयमसावुपजातकारुण्यो महात्मा पुनः प्रत्युज्जीवनार्थमेवैनमुत्क्षिप्य सुरलोकं नीतवान्। अचिन्त्यो हि महात्मनां प्रभावः। बहुप्रकाराश्च संसारवृत्तयः। चित्रं च दैवम्। आश्चर्यातिशययुक्ताश्च तपःसिद्धयः। अनेकविधाश्च कर्मणां शक्तयः। अपि च सुनिपुणमपि विमृशद्भिः किमिवान्यत्तदपहरणे कारणमाशङ्क्येत जीवितप्रदानादृते। न चासंभाव्यमिदमवगन्तव्यं भगवत्या। चिरप्रवृत्त एष पन्थाः। तथा हि। विश्वावसुना गन्धर्वराजेन मेनकायामुत्पन्नां प्रमद्वरां नाम कन्यकामाशीविषविलुप्तजीवितां स्थूलकेशाश्रमे भार्गवस्य च्यवनस्य नप्ता प्रमतितनयो मुनिकुमारको रुरुर्नाम स्वायुषोऽर्धेन योजि-

---

नास्त्येवेति भावः। प्राप्तव्यमिष्टं कथं स्यादित्याह—**भगवत्येति**। भगवत्या त्वया ततस्तस्मान्महापुरुषात्पुनः स्वयमेवात्मनैव समागमः कुमारेण सह संगतिस्तत्प्रतिपादिका सरस्वती वाणी समाकर्णिता श्रुता। तथापि तदर्थं न निश्चिनोमीत्यत आह—**अन्विति**। अनुभवेऽनुभूते वस्तुनि को विकल्पः कः संदेहः। अत्रोपपादकमाह—**कथं चेति**। तादृशानां न विद्यते प्राकृता इतरजनसाधारणाकृतिराकारो येषामेवंविधानामवितथगिरां यथार्थवचसां महात्मनां महापुरुषाणां गरीयसापि कारणेनोत्कृष्टेनापि हेतुना गिरि वाण्यां कथं वैतथ्यमनृतत्वमास्पदं स्थानं कुर्यात्। नन्वियं सरस्वती वितथैव, मृतकुमारेण सह समागमस्य बाधितत्वादित्यत आह—**उपरतेति**। उपरतेन मृतेन सह जीवन्त्याः कीदृशी समागतिः संगतिः। तर्हि सरस्वती वितथैवेत्यत आह—**अत इति**। अतः कारणात्। निःसंशयं निश्चितमुपजातं समुत्पन्नं कारुण्यं घृणा यस्मिन्नेवंविधो महात्मासौ पुरुषः पुनः प्रत्युज्जीवनार्थं पुनः[1]संज्ञीकरणार्थमेवैनं पुण्डरीकमुत्क्षिप्योत्पाट्य सुरलोकं देवलोकं नीतवान्प्रापितवान्। अत्रानुकूलमाह—**अचिन्त्य इति**। हीति निश्चितम्। महात्मनां महानुभावानां प्रभावो महिमाचिन्त्योऽनाकलनीयः। नन्वश्रुतपूर्वमिदं कथं स्यादित्यत आह—**बह्विति**। संसारवृत्तयः संसृतेः प्रवृत्तयो बहुप्रकारा अनेकभेदभिन्नाश्चेत्यर्थः। एतादृशं मम भाग्यं क्व स्यादित्याह—**चित्रं चेति**। दैवं भाग्यं चित्रं विविधप्रकारम्। न[2]नु सर्वेषामेकविधम्। ननु तस्य कुमारप्रत्युज्जीवने कुतः सामर्थ्यमित्यत आह—**आश्चर्येति**। आश्चर्यमद्भुतं तस्यातिशय आधिक्यं तेन युक्ताः सहितास्तपःसिद्धयो भवन्ति। ननु पुण्डरीकस्यैतादृशं कर्म कथं स्यात्, येन प्रत्युज्जीवनं स्यादित्याह—**अनेकेति**। कर्मणां पूर्वोपार्जितशुभाशुभानां शक्तयः सामर्थ्यान्यनेकविधा असंख्यप्रकाराः। युक्त्यन्तरं प्रदर्शयन्नाह—**अपि चेति**। अपि च युक्त्यन्तरे। सुनिपुणं सुदक्षं यथा स्यात्तथा विमृशद्भिर्विचारयद्भिस्तदपहरणे मृतकुमारापहरणे जीवितप्रदानादृतेऽन्यत्किमिव कारणं निमित्तमाशङ्क्यत आशङ्काविषयीक्रियते। न च सर्वथा मृतस्य पुनर्जीवनं क्वापि दृष्टमित्यत आह—**नचेति**। भगवत्या त्वयेदं प्रत्युज्जीवनमसंभाव्यमघटमानमिति न चावगन्तव्यं न ज्ञातव्यम्। अस्य प्राचीनत्वं प्रदर्शयन्नाह—**चिरमिति**। एष प्रत्युज्जीवनलक्षणः पन्था मार्गश्चिरप्रवृत्तो बहुकालीनः। तदेव दर्शयति—**तथा हीति**। विश्वावसुनाम्ना गन्धर्वराजेन करणभूतेन मेनकायामुत्पन्नां प्रादुर्भूतां प्रमद्वरेति नाम्नीं कन्यकामाशीविषेण सर्पेण विलुप्तं ध्वस्तं जीवितं श्वसितं यस्या एवंविधां स्थूलकेशमुनेराश्रमे मठे भार्गवस्य भृगुवंशोत्पन्नस्य च्यवननाम्नो मुनेर्नप्ता प्रपौत्रैः[3] प्रमतेस्तनयः पुत्रो मुनिकुमारको रुरुः स्वायुषः स्वजीवितस्यार्धेन योजितवान्संबन्धितवान्।

---

**टिप्प०**—1 पुनः प्राणाऽऽधानार्थमिति व्याख्यानमुचितम्। 2 'न' 'ननु' वा इति स्यात्। 3 पौत्र इत्येवावगन्तव्यम्।

---

**पाठा०**—१ स्वयमेव तत्पुनः समागमवचः श्रुतम्. २ तम्. ३ प्रवृत्तयः, प्रकृतयः. ४ तज्जीवित. ५ सर्वथा चिर. ६ भार्गवस्य नप्ता.

तवान् । अर्जुनं चाश्वमेधतुरगानुगामिनम् आत्मजेन बभ्रुवाहननाम्ना समरशिरसि शरापहृतप्राणम् ,उलूपी नागकन्यका सोच्छ्वासमकरोत् । अभिमन्युतनयं च परीक्षितमश्वत्थामास्त्रपावकपरिप्लुष्टम्, उदरादुपरतमेव विनिर्गतम्, उत्तराप्रलापोपजनितकृपो भगवान्वासुदेवो दुर्लभानसून्प्रापितवान् । उज्जयिन्यां च संदीपनिद्विजतनयमन्तकपुरादपहृत्य त्रिभुवनवन्दितचरणः स एवानीतवान् । अत्रापि कथंचिदेवमेव भविष्यति । तथापि किं क्रियते । किं वा लभ्यते । प्रभवति हि भगवान्विधिः । बलवती च नियतिः । आत्मेच्छया न शक्यमुच्छ्वसितुमपि । अतिपिशुनानि चास्यैकान्तनिष्ठुरस्य दैवहतकस्य विलसितानि । न क्षमते दीर्घकालमव्याजरमणीयं प्रेम । प्रायेण च निसर्गत एवानायतस्वभावभङ्गुराणि सुखानि, आयतस्वभावानि च

---

**अर्जुनं चेति** । अश्वमेधस्य यस्तुरगोऽश्वस्तदनुगामिनं तत्पृष्ठयायिनं बभ्रुवाहननाम्नात्मजेन सुतेन समरशिरसि सङ्ग्रामशिरसि शरेण बाणेनापहृता आकर्षिताः प्राणा यस्यैवंविधमर्जुनं पार्थम् । नामेति कोमलामन्त्रणे । उलूपीनाम्नी नागकन्यका सोच्छ्वासं सजीवितमकरोदसृजत् । **अभीति** । अश्वत्थाम्नो द्रोणाचार्यसुतस्य योऽस्त्रपावकः शस्त्राग्निस्तेन परिप्लुष्टं दग्धम् । **उदरेति** । उदराद्गर्भाशयादुपरतमेव मृतमेव विनिर्गतं निःसृतम् । ईदृशमभिमन्युतनयमर्जुनपौत्रं परीक्षिताभिधानमुत्तरायाः प्रलापेन विलापेनोपजनितोत्पादिता कृपा करुणा यस्यैवंविधो भगवान्वासुदेवो नारायणो दुर्लभान्दुष्प्रापानसून्प्राणान्प्रापितवान्प्रदत्तवान् । **उज्जयिन्यां चेति** । उज्जयिन्यां विशालायां संदीपनिनाम्नो द्विजस्य तनयं सुतमन्तकपुरात्संयमिन्या अपहृत्यापहरणं कृत्वा त्रिभुवनेन वन्दितौ नमस्कृतौ चरणौ यस्यैवंभूतः स एव भगवान्वासुदेव आनीतवानानयनं कृतवान् । **अत्रापीति** । कथंचित्प्रकारेणैवमेव पुनर्जीवनवज्जीवनं भविष्यति । अनेनोत्कटकोटिः प्रदर्शिता, संभावनारूपत्वात् । अनुत्कटकोटावप्रतिकार्यत्वं स्वस्याह—**तथापीति** । अपि अनास्थायाम् । तथापि तव शोकमात्रेण किं जीवितं क्रियते, किमथवा लभ्यते प्राप्यते । तत्र हेतुमाह—**प्रभवतीति** । भगवान्विधिः प्रभवति समर्थो भवति । नियतिर्भाव्यर्थः, अदृष्टविशेषो ब्रह्मलिखितपद्धतिर्वा, बलवती वीर्यवती । उपसंहरति—**आत्मेच्छेति** । आत्मेच्छया स्वेच्छयोच्छ्वसितुमपि न शक्यम् । उच्छ्वासः स्वायत्तः सोऽपि स्वेच्छया कर्तुं न शक्यते । किमुतान्यदित्यर्थः । एवं सति सर्वं दैवाधीनं प्रेममैत्र्यादिकम् । तद्विहीनस्य तन्नास्त्येवेत्याह—**अतीति** । अस्यैकान्तनिष्ठुरस्यात्यन्तनिर्दयस्य दैवहतकस्य विलसितानि चेष्टितान्यतिपिशुनान्यतिदुःखकारीणि भवन्ति । **अव्याजेति** । अव्याजं निष्कपटं तेन रमणीयं मनोहरं प्रेम दीर्घकालं चिरकालं न क्षमते न सहते । भवतु । तर्हि दैववशादेवानवरतं जन्मान्तरपर्यन्तं क्षेम कुतो न निर्वहतीत्यत आह—**प्रायेणेति** । प्रायेण बाहुल्येन निसर्गत एव स्वभावत एवानायतस्वभावभङ्गुराणि सुखानि, आयतस्वभावानि च दुःखानि । अत्रायं भावः—कार्येण कारणानुमानम्, कार्यं च दैवादैवयोः सुखदुःखे । तत्र सुखस्यानायतस्वभावो विस्तृतिस्वभावः क्षणभङ्गुरत्वं च, दुःखस्य त्वायतस्वभावो विस्तरणप्रकृतिः । तद्विपर्ययादभङ्गुरत्वमपि । तत्कारणयोरप्येवमेवेति । यावत्पर्यन्तं दैवं तावत्पर्यन्तमेव येनकेनचिद्वस्तुना प्रीतिरुपभोगो मैत्री तस्माद्विषयलाभस्तदनुबन्धादयः । एतद्विपर्यये प्रीत्याद्यभावः ।

---

टिप्प०—1 अधिगतविद्ययो राम-कृष्णयोरनुरोधेन गुरुः सान्दीपनिः पञ्चजनापहृतं निजपुत्रं गुरुदक्षिणारूपेणेयेष । भगवान्वासुदेवस्तु समुद्राभ्यन्तरे पञ्चजनविनाशोत्तरमप्यलब्धं गुरुतनयं यमपुरादाहृत्य गुरुदक्षिणीचकारेति पुराणकथा । 2 अव्याजम् अत एव रमणीयमित्यर्थ उचितः । 3 अनायतस्वभावानि ( अदीर्घाणि, संक्षिप्तानीत्यर्थः ) च तानि भङ्गुराणि नश्वराणि ।

---

पाठा०—१ अनुसारिणम्. २ उलुपी. ३ परिक्षितम्. ४ निर्गतम्. ५ भगवांश्चराचरगुरुर्वासुदेवो दुर्लभैरसुभियोजितवान्. ६ सांदीपनि. ७ पुरात्रिभुवनवन्दितचरणः स एवापहृतवान्. ८ कथंचिदेवमेवेदं तवापि भविष्यति. ९ किमुपालभ्यते. १० क्षमन्ते.

दुःखानि। तथा हि। कथमप्येकस्मिञ्जन्मनि समागमः, जन्मान्तरसहस्राणि च विरहः प्राणिनाम्। अतो नार्हस्यनिन्द्यमात्मानं निन्दितुम्। आपतन्ति हि संसारपथमतिगहनमवतीर्णानामेते वृत्तान्ताः। धीरा हि तरन्त्यापदम्' इत्येवंविधैरन्यैश्च मृदुभिरुपसान्त्वनैः संस्थाप्य तां पुनरपि निर्झरजलेनाञ्जलिपुटोपनीतेनानिच्छन्तीमपि बलात्प्रक्षालितमुखीमकारयत्।

अत्रान्तरे च श्रुतमहाश्वेतावृत्तान्तोपजातशोक इव समुत्सृष्टदिवसव्यापारो रविरपि भगवानधोमुखतामयासीत्। अथ क्षीणे दिवसे, परिणतप्रियङ्गुमञ्जरीरजोनिभे पिञ्जरिम्णा रज्यमाने विलम्बिनि ब्रध्नमण्डले, अविरलकुसुम्भकुसुमरसरक्तदुकूलकोमलेन चास्तातपेन मुच्यमानेषु दिङ्मुखेषु, चकोरनयनतारकाकान्तिना च पिङ्गलिम्ना विलिप्यमाने तिरोहितनीलिम्नि व्योम्नि,

---

एतदेव विवृणोति—**तथा हीति**। प्राणिनां संसारवर्तिनां कथमपि महता कष्टेनैकस्मिञ्जन्मनि समागमः संबन्धः। जन्मान्तरसहस्राणि च यावद्विरहो वियोगः। प्रकृतमुपसंहरति—**अत इति**। अतो हेतोरनिन्द्यं ब्रह्मरूपमात्मानं क्षेत्रज्ञं निन्दितुं गर्हितुं नार्हसि न योग्या भवसि। यतो धीराः सर्वमेवेदं दैवकृतं मन्यन्ते, न स्वात्मकृतम्, एवं च धीरत्वेऽवलम्बिते नात्मानं निन्दन्तीत्यर्थः। अधीरत्वेऽनिष्टतामाह—**आपतन्तीति**। अतिगहनमतिघोरं संसारपथं संसृतिमार्गमवतीर्णानां गृहीतावताराणामेते वृत्तान्ता उदन्ता आपद्रूपा आपतन्त्यापद्यन्ते। लग्ना भवन्तीत्यर्थः। धीरत्वे इष्टमाह—**धीरा इति**। धीराः सात्त्विकाः पुरुषाः। हीति निश्चितम्। आपदं कष्टं तरन्ति तत्पारं प्राप्नुवन्ति। **इत्येवमिति**। इति पूर्वोक्तप्रकारेणैवंविधैरपूर्वप्रतिपादितैरन्यैश्च मृदुभिः सुकुमारैरुपसान्त्वनैर्दृष्टान्तोपदर्शनैस्तां संस्थाप्य स्वस्थीकृत्य पुनरपि द्वितीयवारमप्यञ्जलिपुटोपनीतेन निर्झरजलेनानिच्छन्तीमस्पृहयन्तीमपि बलाद्धठात्प्रक्षालितमुखीं धौतवक्त्रामकारयद्व्यधापयत्।

**अत्रान्तरे चेति**। अस्मिन्नवसरे। **श्रुतेति**। श्रुत आकर्णितो यो महाश्वेताया वृत्तान्त उदन्तस्तेनोपजातः समुत्पन्नः शोको यस्यैतादृश इव समुत्सृष्ट उज्झितो दिवसव्यापारो येनैवंविधो भगवान्रविरपि सहस्रांशुरप्यधोमुखतामवाङ्मुखतामयासीदगात्। **अथेति**। त्रियामामुखे सा महाश्वेता मन्दंमन्दं शनैःशनैरुत्थाय पश्चिमां भगवतीं संध्यामुपास्योपासनां कृत्वा कमण्डलुजलेन कृत्वा कुण्डिकानीरेण प्रक्षालितचरणा धौताङ्घ्रिर्वल्कलशयनीये वल्कलशय्यायां सखेदमुष्णं च निःश्वस्य निःश्वासं मुक्त्वा निषसाद तस्थाविति दूरेणान्वयः। कस्मिन्सति। दिवसे वासरे क्षीणे सति। पुनः कस्मिन्। दिक्प्रान्ते विलम्बिनि विलम्बायमाने ब्रध्नमण्डले सूर्यबिम्बे सति। कीदृशे। **परिणतेति**। परिणता पक्वा या प्रियङ्गुमञ्जरी फलिनीवल्लरी तस्या रजः परागस्तेन निभे सदृशे। **पिञ्जरिम्णेति**। पीतरक्तस्तु पिञ्जरस्तस्य भावः पिञ्जरिमा तेन रज्यमाने पिञ्जरतां नीयमाने। पुनः केषु सत्सु। अस्तातपेन दिङ्मुखेषु मुच्यमानेषु सत्सु। अस्तातपं विशेषयन्नाह—**अविरलेति**। अविरलानि निबिडानि कुसुम्भानां कमलोत्तराणां कुसुमानि तेषां रसस्तेन रक्तं यद्दुकूलं तद्वत्कोमलेन मृदुना। पुनः कस्मिन्सति। व्योम्न्याकाशे सति। अथ व्योम विशेषयन्नाह—**विलिप्येति**। पिङ्गलिम्ना पिञ्जरिम्णा विलिप्यमाने विलेपनविषयीक्रियमाणे। कीदृशेन पिङ्गलिम्ना। चकोरो विषसूचकस्तस्य नयनयोस्तारका तद्वत्कान्तिर्यस्मिन्स तेन। **तिरोहितेति**। तिरोहित आच्छादितो नीलिमा यस्मिन्निति व्योमविशेषणम्। पुनः कस्मिन्सति सांध्ये सायंकालसंबन्धिन्यर्चिषि दीधितौ भुवनं विष्टपमरुणयति रक्ततां नयति सति। अर्चिषं विशेषयन्नाह—

---

**टिप्प०**—1 आत्मानं स्वम् इति सरलोऽर्थः। 2 सांसारिकजनानाम्। 3 सर्वतः प्रकाशकरणरूपः। 4 सूर्यबिम्बे विलम्बिनि सति, इत्येवान्वयः प्रसिद्धः समुचितश्च। 5 सूर्यस्य न रज उपमानम्, अपि तु 'रजोनिभेन' इति पाठः, ततश्च प्रियङ्गुरजःसदृशेन पिञ्जरिम्णा (अर्थात् पीतेन वर्णेन) सूर्यमण्डले रज्यमाने सतीत्यर्थः। 6 अस्तकालिकसूर्यातपेन।

---

**पाठा०**—१ एकजन्मसमागमो बहूनि जन्मान्तरसहस्राणि तु विग्रहः. २ अत्रान्तरे महा: ३ निभेन. ४ विरज्यमानेऽपि. ५ अविरलकुसुम. ६ विमुच्यमानेषु. ७ चकोरतारकाकारकान्तिना.

कोकिलविलोचनच्छविबभ्रूणि चारुणयति सांध्ये भुवनमर्चिषि, यथाप्रधानमुन्मिषत्सु ग्रह-ग्रामेषु, वनमहिषमलीमसवपुषि च मुषिततारकापथप्रथिम्नि कालिमानमातन्वति शार्वरे तमसि, अतनुतिमिरतिरोहितहरिततासु गहनतां यान्तीषु वनराजिषु, रजनिजलजालविन्दु-जनितजडिम्नि बहलवनकुसुमपरिमलानुमितगमने चलितलताविटपगहने प्रवृत्ते च पवने, निद्रानिभृतपतत्रिणि त्रियामामुखे महाश्वेता मन्दंमन्दमुत्थाय भगवतीमुपास्य पश्चिमां संध्यां कमण्डलुजलेन प्रक्षालितचरणा वल्कलशयनीये सखेदमुष्णं च निःश्वस्य निषसाद । चन्द्रापीडोऽप्युत्थाय सकुसुमं प्रस्रवणजलाञ्जलिमवकीर्य कृतसंध्याप्रणामस्तस्मिन्द्वितीये शि-लातले मृदुभिर्लतापल्लवैः शय्यामकल्पयत् । उपविष्टश्च तस्यां पुनस्तमेव मनसा महाश्वेतावृ-त्तान्तमन्वभावयत् । आसीच्चास्य मनस्येवम्—'अयमप्रतीकारदारुणो दुर्विषहवेगः कष्टः

---

**कोकिलेति** । कोकिला वनप्रियास्तेषां विलोचनानि नेत्राणि तेषां छविः कान्तिस्तद्वद्बभ्रूणि पिङ्गलानि । पुनः केषु । ग्रहग्रामेषूडुसमूहेषु यथाप्रधानं यथामुख्यमुन्मिषत्सु विकसत्सु । पुनः कस्मिन् । शार्वरे शर्वरीसंव-न्धिनि तमस्यन्धकारे कालिमानं श्यामलिमानमातन्वति विस्तारयति सति । अथ तमो विशिनष्टि—**वनेति** । वनस्यारण्यस्य यो महिषो रक्ताक्षस्तद्वन्मलीमसं वपुर्यस्य तत्तस्मिन् । अत एव मुषितस्तारकापथस्याकाशमार्गस्य प्रथिमा विस्तारो येन तत्तस्मिन् । पुनः कासु । वनराजिष्वरण्यश्रेणीषु गहनतामकलनीयतां यान्तीषु गच्छन्तीषु सत्सु । अतनु यत्तिमिरं तमस्तेन तिरोहिताच्छादिता हरितता नीलिमा यासु । पुनः कस्मिन् । पवने वायौ प्रवृत्ते वहमाने च सति । अथ पवनस्य शीतत्वमन्दत्वसुगन्धित्वानि वर्णयितुमाह—**रजनीति** । रजन्येवानवरतप्रच-लनरूपप्रवाहवत्त्वाज्जलजालं समूहस्तस्य बिन्दुभिः पृषतैरित्यर्थो वा जनितो जडिमा यस्य स तस्मिन् । **वहलेति** । वहलान्यविरलानि यानि वनकुसुमानि तेषां परिमलेनानुमितमनुमानविषयीकृतं गमनं यस्य स तस्मिन् । **चलि-तेति** । चलितं कम्पितं लतोपयुक्ता विटपा वृक्षास्तेषां गहनं येन स तस्मिन् । अथ त्रियामामुखं विशेषय-न्नाह—**निद्रेति** । निद्रा प्रमीला तया निभृता निश्चलाः पतत्रिणः पक्षिणो यस्मिन् । तदनन्तरं चन्द्रापीडो-ऽप्युत्थाय सकुसुमं कुसुमैः सह वर्तमानं प्रस्रवणस्य निर्झरस्य जलाञ्जलिमवकीर्य विक्षिप्य । **कृतेति** । कृतो विहितः संध्याप्रणामो येन स तस्मिन्मण्डपिकास्थले द्वितीये तदङ्गीकृतादन्यस्मिञ्शिलातले मृदुभिः सुकुमारैर्ल-तापल्लवैर्वल्लीप्रवालैः शय्यां शयनीयमकल्पयदकरोत् । **उपविष्टश्चेति** । तस्यां शिलायामुपविष्ट आसे-दिवान्पुनस्तमेव पूर्वोक्तमेव महाश्वेतावृत्तान्तं मनसा चित्तेनान्वभावयत्पुनरचिन्तयत् । **आसीच्चेति** । अस्य चन्द्रापीडस्य मनसि चित्त एवमासीत् । एवंपदार्थमाह—**अयमिति** । अयं कुसुमायुधः कंदर्पः कष्टोऽ-नर्थकृत् । अथ कुसुमायुधं विशिनष्टि—**अप्रतीति** । अप्रतीकारेणाप्रतिक्रियया दारुणो भीषणः । **दुरिति** । दुःखेन विषहः सोढुं शक्यो वेगो यस्य सः । यदिति हेत्वर्थे । अनेन कंदर्पेणाभिभूतोऽन्यानपेक्षितः कालक्रमो

---

**टिप्प०—**1 विक्षिप्त एव टीकाकारः । 'आर्चिषं विशेषयन्नाह' इति लिखन्नपि सप्तम्यन्तस्य आर्चिषो विशेषणं बभ्रूणीत्याह । अत एव 'बभ्रुणि' इत्येव पाठः । कोकिललोचनच्छविरिव बभ्रु पिङ्गलं तस्मिन् सान्ध्ये आर्चिषि भुवनमरुणयति सतीति तदर्थः । प्रकाशकानुरोधेन टीकाकारशिरोमणिमनुसरन् 'बभ्रूणि' इति ग्रन्थघातकं पाठमेव स्थापयामीति ग्लानिरात्मनि । 2 निबिडतामिति सरलोर्थः । 3 सतीषु इत्युचि-तम् । 4 'रजनिजलबिन्दुजालजनितजडिम्नि' इत्येव पाठः । रजनिजलबिन्दुजालं तुषारकणसमूहस्तेन शीतले इति तदर्थः । 5 चलितं कम्पितं लताविटपानां वल्लरीपल्लवानां गहनं समूहो येन तस्मिन्नित्यर्थ उचितः । 6 हन्त चूर्णयामास ग्रन्थम् । अनेन ( कुसुमायुधेन ) अभिभूताः आक्रान्ताः महान्तोपि जनाः, अनपे-क्षितकालक्रमाः असोढसमयक्षेपाः इत्याद्यर्थ उचितः ।

---

पाठा०—१ ग्रहग्रामणीषु. २ च लोचनमुषि. ३ तिरोहितहरितासु; हरितभासु. ४ तरुराजिषु; तारवीषु राजिषु. ५ वने प्रवृत्ते निद्रा. ६ अवकीर्य संध्यां प्रणनाम । कृत. ७ पुनः. पुनः ८ नामायम्.

कुसुमायुधः, यदनेनाभिभूता महान्तोऽप्येवमनपेक्षितकालक्रमाः [1]समुत्सारितधैर्याः सद्यो जीवितं [2]जहति। सर्वथा नमो भगवते त्रि[3]भुवनाभ्यार्चितशासनाय मकरकेतनाय' इति।

पुनः पप्रच्छ चैनाम्—'भगवति, सा [4]तव परिचारिका वनवासव्यसनमित्रं दुःखसब्रह्मचारिणी तरलिका क्व गता' इति।

अथ साकथयत्—'महाभाग, यत्तन्मया कथितममृतसंभवमप्सरसां कुलं तस्मान्मदिरेति नाम्ना [5]मदिरायत्तेक्षणा कन्यकाभूत्। तस्याश्चासौ सकलगन्धर्वकुलमुकुटकुड्मलपीठप्रतिष्ठितचरणो देवश्चित्ररथः पाणिमग्रहीत्। अपरिमितगु[6]णाकृष्टहृदयश्च [7]वनितादुर्लभेनाधःकृताशेषान्तःपुरेण हेमपट्टलाञ्छनेन छत्रवेत्रचामरचिह्नेन महादेवीशब्देन परं प्रीतः प्रसादमकरोत्। अन्योन्यप्रेमसंवर्धनपरयोश्च तयोर्यौवनसुखानि से[8]वमानयोः कालेनाश्चर्यभूतमेकजीवितमिव पित्रोः, अथवा [9]सर्वस्यैव गन्धर्वकुलस्य वा जीवलोकस्य, दुहितृरत्नमुदपादि कादम्बरीति नाम्ना।

---

देहविसर्जनक्रमो यैस्ते, तथा समुत्सारितं धैर्यं येषामेवंविधा महान्तोऽपि पुण्डरीकप्रभृतयः सद्यस्तत्कालं जीवितं जहति त्यजन्ति। अतः सर्वथा सर्वप्रकारेण भगवते त्रिभुवनेनाभ्यर्चितं पूजितं शासनमाज्ञा यस्य स तस्मै मकरकेतनायानङ्गाय नमोऽस्तु।

**एनामिति**। एनां महाश्वेतामिति पुनः पप्रच्छ प्रश्नमकार्षीत्। इतिवाच्यमाह—हे भगवति, सा तव परिचारिका सपर्याकारिणी। कीदृशी। वनवासलक्षणं यत् व्यसनं कष्टं तत्र मित्रं सुहृत्। आविष्टलिङ्गत्वान्नपुंसकत्वम्। **दुःखेति**। दुःखे कृच्छ्रे सब्रह्मचारिणी। 'एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः' इति कोषः। एवंविधा सा तरलिका क्व गता।

**अथेति**। तत्प्रश्नानन्तरं सा महाश्वेताकथयदवोचत्। किं तदित्याह—**महाभागेति**। हे सत्पुरुष, अमृतसंभवमप्सरसां कुलं यच्च मया पूर्वमुक्तम्, तस्मात्कुलात्। **मदिरेति**। मदिरा इति नाम्ना कन्यकाभूत्। तां विशिनष्टि—**मदिरेति**। मदि[2]रायत्ते घूर्णिते लोचने यस्याः सा तथा। मदिरया नयनयोः कश्चन विस्तारो जायत इति। विस्तीर्णनयनेति यावत्। **तस्याश्चेति**। तस्या मदिराया देवोऽसौ चित्ररथः पाणिं हस्तमग्रहीत्। पाणिपीडनमकरोदित्यर्थः। चित्ररथं विशेषयन्नाह—**सकलेति**। सकलं समग्रं यद्गन्धर्वकुलं देवगायनवंशस्तस्य मुकुटानि किरीटानि तान्येव कुड्मलाकारं पीठं पदासनं तत्र प्रतिष्ठितौ स्थापितौ चरणौ येन सः। **अपरीति**। अपरिमिता असंख्या ये गुणा लज्जादयस्तैराकृष्टमाकर्षितं हृदयं चेतो यस्य स प्रीतः संतुष्टो महादेवीशब्देन परमुत्कृष्टं प्रसादमनुग्रहमकरोदन्वतिष्ठत्। अथ च महादेवीशब्दं विशेषयन्नाह—**वनितेति**। वनितायाः स्त्रियो दुर्लभेन दुष्प्रापेण। **अध इति**। अधःकृतमधरीकृतमशेषं समग्रमन्तःपुरं येन स तेन। **हेमेति**। हेमपट्टस्य सुवर्णपट्टस्य लाञ्छनं चिह्नं यस्मिन्स तेन। **छत्रेति**। छत्रमातपत्रम्, वेत्रं यष्टिः, चामरं वालव्यजनम्, एतानि चिह्नानि यस्मिन्। **अन्योन्येति**। अन्योन्यं मिथो यत्प्रे[3]मसंवर्धनं स्नेहोत्पादकं तत्र परयोः सप्रयत्नयोश्च तयोर्यौवनसुखानि तारुण्यसातानि सेवमानयोर्भुञ्जानयोः कालेनानुक्रमेणाश्चर्यभूतं चित्रभूतं पित्रोर्मातृजनकयोरेकजीवितमद्वितीयप्राणितमिव। अथवा सर्वस्यैव गन्धर्वकुलस्य जीवलोकस्य वैकजीवितं कादम्बरीनाम्ना दुहितृरत्नमुदपा-

---

**टिप्प०—**1 समानदुःखभोगिनीत्यर्थः। 2 घोरग्राम्यः कुलमर्यादानुचितश्चायं पाठः। 'मदिरायतेक्षणा' इत्येव पाठः। मदिरे मादनानुकूलदर्शनप्रकारशालिनी, आयते च ईक्षणे यस्यास्तत्संबुद्धौ। "मदिरावत् मत्तखञ्जनवत् आयते दीर्घे चक्षुषी यस्याः सा। 'मदिरा(स्त्री)मत्तखञ्जनः,···मद्यम्'—" इति हरिदासटीका। 3 अन्योन्यं यत् प्रेम्णः संवर्धनं मिथः आनुकूल्याचरणं तत्र तत्परयोरित्यर्थः।

---

**पाठा०—**१ समवधीरित. २ जहाति. ३ सकलत्रिभुवन. ४ त्वत्परिचारिका. ५ मदिरायतेक्षणा. ६ गुणगणाकृष्ट. ७ अन्यवनिता. ८ अनुभवतोः. ९ सकलस्यैव.

सा च मे जन्मनः प्रभृत्येकाशनशयनपानासना परं प्रेमस्थानमखिलविस्रम्भधाम द्वितीयमिव हृदयं बालमित्रम् । एकत्र तया मया च गीतनृत्यकलासु कृताः परिचयाः । शिशुजनोचिताभिश्च क्रीडाभिरनियन्त्रणनिर्भरमपनीतो बालभावः । सा चामुनैव मदीयेन हतवृत्तान्तेन समुपजातशोका निश्चयमकार्षीत्—'नाहं कथंचिदपि सशोकायां महाश्वेतायामात्मनः पाणिं ग्राहयिष्यामि' इति । सखीजनस्य पुरतः सशपथमभिहितवती च—'यदि कथमपि मामनिच्छन्तीमपि बलात्तातः कदाचित्कस्मैचिद्दातुमिच्छति तदाहमनशनेन वा हुताशनेन वा रज्ज्वा वा विषेण वा नियतमात्मानमुत्स्रक्ष्यामि' इति । सर्वं च तदात्मदुहितुः कृतनिश्चलभाषितं कर्णपरम्परया परिजनसकाशाद्गन्धर्वराजश्चित्ररथः स्वयमशृणोत् । गच्छति काले समुपारूढनिर्भरयौवनामालोक्य स तां बलवदुपतापपरवशः क्षणमपि न धृतिमलभत । एकापत्यतया चातिप्रियतया च न शक्तः किंचिदपि तामभिधातुमित्यपश्यंश्चान्यदुपायान्तरम्, इदमत्र प्राप्तकालमिति मत्वा तया

---

द्युत्पन्नमभूत् । **सा चेति** । सा कादम्बरी मे मम जन्मनः प्रभृत्युत्पत्तिदिनादारभ्यैकान्यभिन्नान्यशनशयनपानासनानि यस्याः सा । तत्राशनं भोजनम्, शयनं शय्या, पानं मद्यादि, आसनं चतुष्किकादि । एतेन प्रीत्युत्कर्षः सूचितः । परमुत्कृष्टं प्रेमस्थानं स्नेहस्थानमखिलानां समग्राणां विस्रम्भाणां विश्वासानां धाम द्वितीयमपरं हृदयमिव स्वान्तमिव बालमित्रम् । **एकत्रेति** । एकस्मिन्स्थले तया मया च गीतनृत्यकलासु कृताः परिचया अभ्यासाः । **शिश्विति** । शिशुजनोचिताभिर्बालजनयोग्याभिः क्रीडाभिरनियन्त्रणं स्वेच्छाविचरणं तेन निर्भरं यथा स्यात्तथा बालभावः शिशुभावोऽपनीतो दूरीकृतः । **सा चेति** । सा कादम्बर्यमुनैव मदीयेन हतवृत्तान्तेन समुपजातः शोको यस्याः सा तथा । इति निश्चयं निर्णयमकार्षीत् । सखीजनस्यालीजनस्य पुरतोऽग्रतः सशपथं शपथपूर्वकमित्यभिहितवती कथितवती च । इतियोत्यमाह—**नाहमिति** । कथंचिदपि केनचित्प्रकारेणापि सशोकायां महाश्वेतायामात्मनः स्वस्य पाणिं नाहं ग्राहयिष्यामि । उद्वाहं न करिष्यामीत्यर्थः । **यदीति** । यदि कथमपि महता कष्टेन मामनिच्छन्तीमप्यवाञ्छन्तीमपि बलाद्धठात्तातः पिता कदाचित्कस्मैचित्पुरुषाय दातुमिच्छति वाञ्छति तदाहमनशनेन[1] प्रायसा वा, हुताशनेन वह्निना वा, रज्ज्वा रश्मिना वा, विषेण गरलेन वा । सर्वत्र वाशब्दो विकल्पार्थः । नियतं निश्चितमात्मानमुत्स्रक्ष्यामि त्यजिष्यामि[2] । इति तदात्मदुहितुर्निजसुतायाः सर्वं समग्रं कृतो निश्चयो यस्मिन्नेतादृशं निश्चलभाषितं स्थिरजल्पितं परिजनसकाशात्परिच्छदसमीपात्कर्णपरम्परया श्रोत्रप्रणालिकया गन्धर्वराजश्चित्ररथः स्वयमश्रृणोदाकर्णयत् । गच्छति व्रजति काले समये सति स चित्ररथः समुपारूढं प्राप्तं निर्भरमतिशायि यौवनं तारुण्यं यस्यामेतादृशीं तां कादम्बरीमालोक्य निरीक्ष्य बलवानुपतापः संतापस्तेन परवशः परायत्तः क्षणमपि धृतिं संतोषं नालभत नाप्तवान् । **एकेति** । एकापत्यतयैकसंततितयातिप्रियतया च किंचिदपि तां कादम्बरीमभिधातुं कथयितुं न शक्तो न समर्थ इति हेतोरन्यदुपायान्तरं कार्यसाधकप्रकारान्तरमपश्यन्[3]नवलोकयंश्च । इदं कुमारीलक्षणमत्र प्राप्तकालं प्राप्तसमयमिति मत्वा ज्ञात्वा तया मदिरया महादेव्या सहावधार्य निश्चित्य क्षीरोदनामानं कञ्चुकिनं सौविदल्लमिति संदिश्येत्युक्त्वा मत्समीपं मदु-

टिप्प०—1 भोजनपरित्यागेन । 2 त्यक्ष्यामि इत्येव विवेकिभिर्वाच्यम् । 3 वस्तुतस्तु '...तामभिधातुम् । अपश्यंश्चान्यदुपायान्तरम्,' इत्येव पाठः ।

---

पाठा०—१ मज्जन्मनः. २ एकासनशयनपानाशना; एकासनपानाशना. ३ नृत्यगीतादिकलासु; गीतनृत्यादिकासु कलासु. ४ समुत्पन्न. ५ इच्छेत्. ६ ततः. ७ कृतनिश्चयं निश्चलं भाषितम्; कृतनिश्चयनिश्चलभाषितम्. ८ अतिप्रेमतया गच्छति. ९ सुताम्; स संतापेन बलवदद्रूयत न क्षणमपि धृतिमलभत. १० शक्नोति.

महादेव्या मदिरया सहावधार्य क्षीरोदनामानं कञ्चुकिनम् 'वत्से महाश्वेते, त्वद्व्यतिरेकेणैव दग्धहृदयाणामिदमपरमस्माकमुपस्थितम्, 'इदानीं तु कादम्बरीमनुनेतुं त्वं शरणम्' इति संदिश्य मत्समीपं प्रत्युषसि प्रेषितवान्। ततो मया गुरुवचनगौरवेण सखीप्रेम्णा च क्षीरोदेन सार्धं सा तरलिका 'सखि कादम्बरि, कं दुःखितमपि जनमतितरां दुःखयसि। जीवन्तीमिच्छसि चेन्मां तत्कुरु गुरुवचनमवितथम्' इति संदिश्य विसर्जिता । नातिचिरं गतायां च तस्यामनन्तरमेवेमां भूमिमनुप्राप्तो महाभागः' इत्यभिधाय तूष्णीमभवत् ।

अत्रान्तरे लाञ्छनच्छलेन विडम्बयन्निव शोकानलदग्धमध्यं महाश्वेताहृदयम्, उद्वहन्निव मुनिकुमारवधमहापातकम्, दर्शयन्निव चिरकाललग्नं दक्षशापानलदाहचिह्नम्, अविरलभस्माङ्गरागधवलो मृगाजिनप्रावृतार्धो वामस्तन इवाम्बिकायाः, धूर्जटिजटामण्डलचूडामणिर्भगवानुदगात्तारकाराजः । क्रमेण चोद्गते गगनमहापयोधिपुलिने सप्तलोकनिद्रामङ्गल-

---

पान्तं प्रत्युषसि प्रभाते प्रेषितवान्प्राहिणोत् । इतिद्योत्यमाह—**वत्से इति** । हे वत्से महाश्वेते, त्वद्व्यतिरेकेणैव त्वद्वृत्तान्तेनैव दग्धं ज्वलितं हृदयं येषामेवंविधानामस्माकमिदं कादम्बरीसक्तमपरं दुःखमुपस्थितं प्रादुर्भूतम् । इदानीं तु सांप्रतं कादम्बरीमनुनेतुमनुनयं कर्तुं त्वं शरणं त्वमेवाश्रयः । ततो मया गुरुवचनं पूज्यवचस्तस्य गौरवेणानुल्लङ्घ्यतया सखी आली तस्याः प्रेम्णा स्नेहेन च क्षीरोदेन कञ्चुकिना सार्धं सा तरलिका इति संदिश्य कथयित्वा विसर्जिता प्रहिता । इतिद्योत्यमाह—हे सखि कादम्बरि, कं दुःखितमपि पीडितमपि जनमतितरामतिशयेन दुःखयस्यतितरां पीडयसि । चेन्मां जीवन्तीं श्वसन्तीमिच्छसि वाञ्छसि । तदिति हेत्वर्थे वचनम् । गुरुवचनं अवितथं सत्यं कुरु विधेहि । तस्यां नातिचिरंगतायां स्तोककालप्रस्थितायां च सत्यामनन्तरमेवेमां भूमिं महाभागः सत्पुरुषः त्वमनुप्राप्तोऽन्वागतः । इत्यभिधायेत्युक्त्वा तूष्णीं जोषमभवत् ।

अत्रान्तरेऽस्मिन्समये शोकानलेन शुग्वह्निना दग्धं मध्यं यस्यैतादृशं महाश्वेताहृदयं लाञ्छनच्छलेनाङ्कमिषेण विडम्बयन्निव सादृश्यं कुर्वन्निव । धर्म उज्ज्वलः, पातकं श्याममिति तेनैव साम्येनाह—उद्वहन्निव धारयन्निव मुनिकुमारवधलक्षणं महापातकं महापापम् । **दक्षेति** । दक्षप्रजापतेर्यः शापानलः शापवह्निस्तेन दाहस्तस्य चिह्नं चिरकाललग्नं चिरकालीनं दर्शयन्निव प्रकटयन्निव । पाण्डुरत्वकृष्णत्वसाम्येनोपमानान्तरमाह—**अविरलेति** । अविरलो निबिडो भस्माङ्गरागस्तेन धवलः शुभ्रः । तथा मृगस्याजिनं चर्म तेन प्रावृतमाच्छादितमर्धं यस्यैवंविधोऽम्बिकायाः पार्वत्या वामो दक्षिणेतरः स्तनः कुचं इव । **धूर्जटिरिति** । धूर्जटिरीश्वरस्तस्य जटामण्डलं तस्य चूडामणिर्भगवान्माहात्म्यवांस्तारकाराजश्चन्द्र उदगादुदितवान् । क्रमेण परिपाट्या शशाङ्कमण्डल उद्गत उदिते सति चन्द्रापीडो महाश्वेतां सुप्तां शयितामालोक्य निरीक्ष्य शनैः शनैर्मन्दं मन्दं पल्लवशयने किसलयशय्यायां समुपाविशदधितस्थौ । अथ च शशाङ्कमण्डलं विशेषयन्नाह—**गगनेति** । गगनमपारत्वान्महापयोधिर्जलधिस्तस्य पाण्डुरत्वसाम्यात्पुलिन इव पुलिने जलोज्झितसैकतरूपे, सप्तलोकेषु निद्रायाः प्रमी-

---

**टिप्प०—1** अहो अनभिज्ञता ! व्यतिरेकस्य विरहः कदाचिदर्थः स्यात्परं न कदाचिद्वृत्तान्त इत्यर्थः । तस्मात् 'त्वद्व्यतिकरेण' इत्येव पाठः । 2 लेखकप्रमादमेव जाने । यदि च न तथा, तर्हि नातःपरं मूर्खत्वम् । 'किं दुःखितमपि' इत्येव पाठः । सर्वबोध्यश्चार्थः ।

---

**पाठा०—१** ब्रूहि गत्वा वचः वत्से. २ त्वद्व्यतिरेकेणैकेनैव. ३ इदानीं कादम्बरीव्यतिकरे. ४ संदिश्य तदनुनयार्थं. ५ अद्यैव प्रत्युषसि. ६ अतः. ७ अस्मिंश्चान्तरे. ८ कृष्णमृगाजिन. ९ समस्त.

कलशे कुमुदबान्धवे विघटितकुमुदवने धवलितदशदिशि शङ्खश्वेते[1] श्वेतिमानमातन्वति मानिनीमानदस्यौ[2] शशाङ्कमण्डले,[3] शशिकरकलापकलितास्[4]वातन्वतीषु[5] कृशिमानमौडवीषु[6] प्रभासु, प्रस्रवत्सु च कैलासशशिमणिशिलानां सर्वतः स्रोतःस्राविषु प्रस्रवणेषु, मृणालकन्दलिनि चावस्कन्दपतितचन्द्रकर इव विलुप्तकमलवनशोभे भात्यच्छोदसरःपयसि, समुपोढमोहनिद्रे[8] च द्राघीयोवीचिविचलितवपुषि विरुवति विरहिणि चक्रवाकचक्रवाले, निर्वृत्ते[9] च चन्द्रोदये, विद्रुते हर्षनयनजलकणनीहारिणि वियद्विहारिणि मनोहारिणि विद्याधराभिसारिकाजने, चन्द्रापीडः सुप्तामालोक्य महाश्वेतां पल्लवशयने शनैः[10] शनैः समुपाविशत्। 'अस्यां वेलायां किं नु खलु मामन्तरेण चिन्तयति वैशम्पायनः, किं वा वराकी पत्रलेखा, किं वा राजपुत्रलोकः' इति चिन्तयन्नेव निद्रां ययौ।

---

लाया मङ्गलकलश इव। कुमुदस्य कैरवस्य बान्धवे बन्धुसदृशे। **विघटितेति**। विघटितानि विमुद्रितानि कुमुदवनानि येन स तस्मिन्। **धवलितेति**। धवलिताः शुभ्रीकृता दशदिशो येन स तस्मिन्। शङ्खवज्जलजवच्छ्वेते शुभ्रे। किं कुर्वति। श्वेतिमानं श्वेतातिशयमातन्वति विस्तारयति सति। अथवा शङ्खस्य श्वेतो गुणस्तस्मिञ्श्वेतिमानं चाकचक्यरूपं यथादर्शे विस्तारयति सति। इदं च शङ्खे चन्द्रकिरणसंपर्कवशाद्विलक्षणा पाण्डुरता दृश्यत इत्यभिप्रायेण सूर्यकरसंपर्कवशाद्विलक्षणा स्वच्छता दृश्यते तद्वदिवेति केचित्। **मानिनीति**। मानिन्या मानवत्याः स्त्रियो यो मानः स्मयस्तस्य दस्यौ विपक्षे। मानिनीमानापहारकत्वाद्दस्युसादृश्यमिति। पुनः कासु। शशिकराणां चन्द्रकिरणानां कलापेन समूहेन कलितासु सहितास्वौडवीषु नक्षत्रसंबन्धिनीषु प्रभासु कान्तिषु कृशिमानं कृशत्वमातन्वतीषु विस्तारयन्तीषु। पुनः केषु। कैलासस्य शिलामण्[1]यश्चन्द्रकान्तास्तेषां शिलास्तासां सर्वतोऽभितः स्वतोऽम्भःसरणं स्रोतस्तत्स्रवन्तीत्येवंशीलेषु प्रस्रवणेषूत्सेषु प्रस्रवत्सु क्षरत्सु। पुनः कस्मिन्सति। अच्छोदाभिधानस्य सरसः पयसि पानीये भाति राजति सति। कीदृशे। मृणालानां कन्दला विद्यन्ते यस्मिन्। **विलुप्तेति**। विलुप्ता विलोपं प्राप्ता कमलवनस्य पद्मखण्डस्य शोभा श्रीर्यस्मिन्। अतएव श्वेतत्वसाम्येनोत्प्रेक्षते—**अवेति**। अवस्कन्दार्थं[2] हननार्थं पतिताः प्रविष्टाश्चन्द्रकरा यस्मिन्नेवंविध इव। पुनः। कस्मिन्सति। विरहिणि विप्रलम्भिनि चक्रवाका द्वन्द्वचरास्तेषां चक्रवाले समूहे विरुवति शब्दं कुर्वति सति। अथ चक्रवाकसमूहं विशेषयन्नाह—**समुपोढेति**। समुपोढा समागता विरहवशान्मोहनिद्रा यस्मिन्। **द्राघीय इति**। द्राघीयोभिरतिदीर्घाभिर्वीचिभिः कल्लोलैर्विचलितं कम्पितं वपुर्यस्य स तस्मिन्। पुनः कस्मिन्। चन्द्रोदये च निवृत्ते[3] सति। विद्याधराणां व्योमचारिणामभिसारिकाजने संकेतितस्त्रीजने विद्रुते[4] विशकलिते जाते सति। अभिसारिकाजनं विशेषयन्नाह—**हर्ष इति**। हर्षजनिता ये नयनजलकणा एव प्रमोदबाष्पपृषता एव नीहारं तुहिनं हिमं यस्मिन्। वियद्विहारिणि व्योमचारिणि मनोहारिण्यभिरामे। **अस्यामिति**। अस्यां पूर्वोक्तायां वेलायां समयविशेषे। खलु निश्चयेन। मामन्तरेण मद्यतिरेकेण वैशम्पायनः। अथ च वराकी पत्रलेखा। अथ च राजपुत्रलोको नृपसुतसमूहः किं चिन्तयति किं चिन्तयिष्यति। 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यति वर्तमानता। इति चिन्तयन्नेवेति ध्यायन्नेव निद्रां ययौ प्रमीलां प्राप्तवान्।

---

टिप्प०—1 शशिमणय इत्युचितम्। 2 अवस्कन्दार्थं कमलानामाक्रमणार्थमित्युचितोर्थः। यतो हि कराः (हस्ताः) कस्यचिन्निर्दयग्रहणार्थं कुत्रचित्पतन्ति। 3 निर्वृत्ते इत्येव पाठः। चन्द्रोदये निष्पन्ने इति तदर्थः। 4 चन्द्रोदयेन तिमिरापगमाल्लोकानां दर्शनपथादतिक्रान्ते सतीत्याशयः।

---

पाठा०—१ शङ्खश्वेते श्वेतातपत्रायमाणे; शङ्खश्वेतायमाने. २ शत्रौ. ३ शुचिशोचिषि शशाङ्कमण्डले; शशाङ्के. ४ रोचिष्णुशशि. ५ कलितासु; कवलितासु. ६ व्रजन्तीषु. ७ अवश्याय. ८ पवनवशात्समुपोढ. ९ निवृत्ते. १० शनैः.

अथ क्षीणायां क्षपायामुषसि संध्यामुपास्य शिलातलोपविष्टायां पवित्राण्यघमर्षणानि जपन्त्यां महाश्वेतायां निर्वर्तितप्राभातिकविधौ चन्द्रापीडे तरलिका षोडशवर्षवयसा, सावष्टम्भाकृतिना, मदखेदालसगज[1]गमनगुरूणि पदानि निक्षिपता, पर्युषितचन्दनाङ्गरागधूसरोरुदण्डद्वयेन, कुङ्कुमरागपिञ्जरारुणेन, चामीकरशृङ्खलाकलापनिविडनियमितं कक्षाबन्धातिरिक्तप्रेङ्खत्पल्लवमधरवास एव केवलं वसानेन, निरुदरतया वि[2]भक्तमध्येन, विपुलवक्षसा, दीर्घानुवृत्तपीनबाहुना, वामप्रकोष्ठदोलायमानमाणिक्यवलयेन, कर्णाभरण[3]मणेर्विप्रकीर्यमाणमधोमुखकिरणेन्द्रायुधजालवर्णांशुकोत्तरीयमिवैकस्कन्धक्षिप्तमुद्वहता, चूतपल्लवकोमलमनवरतताम्बूलबद्धरागान्धकारमधरं दधता, कर्णान्तायतस्य स्वभावधवलस्य धवलिम्ना लोचनयुगलस्य धवलयतेव दिगन्तराणि, कुमुदवनानीव वर्षता, पुण्डरीकमयमिव दिवसं कुर्वता, कनकपट्टपृथुलललाटेन,

---

**अथेति** । क्षीणायां क्षपायामुषसि प्रभाते संध्यामुपास्य शिलातलोपविष्टायां पवित्राणि पूतान्यघमर्षणान्यापोदेवतास्तुतिरूपाणि महाश्वेतायां जपन्त्यां स्मरन्त्यां सत्यां, निर्वर्तितो विहितः प्राभातिकः प्रत्यूषसंबन्धी विधिर्येनैवंविधे चन्द्रापीडे सा तरलिका प्रत्यूषस्येव प्रादुरासीत्प्रकटीबभूवेत्यन्वयः । कीदृशी । केयूरकनाम्ना गन्धर्वदारकेणानुगम्यमाना । अथ केयूरकं विशेषयन्नाह—**षोडशेति** । षोडशवर्षाणि हायनानि तैः परिमितं वयो यस्य स तथा तेन । तावन्मात्रप्रमाणेनेत्यर्थः । सहावष्टम्भेनाभि[1]मानेन वर्तमाना सावष्टम्भाकृतिराकारो यस्य स तेन । किं कुर्वता । मदखेदेनालसो मन्थरो यो गजो हस्ती तस्य गमनवद्गुरूणि पदानि चरणन्यासान् । निक्षिपता स्थापयता । पर्युषितो गतदिनसक्तो यो चन्दनाङ्गरागस्तेन धूसरमीषत्पाण्डुरमूरुदण्डद्वयं सक्थिदण्डद्वितयं यस्य स तेन । **कुङ्कुमेति** । कुङ्कुमं केसरं तस्य रागेण पिञ्जरः पीतरक्तोऽरुणो देहस्थरागो यस्य स तेन । किं कुर्वता । केवलमधरवासोऽधोंशुकमेव वसानेन परिधानीकुर्वता । अथाधरवासो विशेषयन्नाह—**चामीति** । चामीकरस्य सुवर्णस्य शृङ्खलाकलापस्तेन निबिडं यथा स्यात्तथा नियमितं बद्धम् । **कक्षेति** । कक्षाबन्धात्कटिबन्धादतिरिक्तस्य वस्त्रस्य प्रेङ्खन्त उल्लसन्तः पल्लवा अञ्चला यस्य तत् । निर्गतं [2]यदुदरं तस्य भावस्तत्ता तया विभक्तो विभागीकृतो मध्यो भागो यस्य स तेन । अनेन सामुद्रिकसुलक्षणत्वमुक्तम् । **विपुलेति** । विपुलं बृहद्वक्षो भुजान्तरं यस्य स तेन । **दीर्घेति** । दीर्घावायतावनुवृत्तपीनौ परम्परया पुष्टौ बाहू भुजौ यस्य स तेन । **वामेति** । वामप्रकोष्ठे दक्षिणेतरकलाचिकायां दोलायमानं कम्पमानं माणिक्यवलयं रत्नकङ्कणं यस्य स तेन । **कर्णेति** । कर्णाभरणमणेः श्रोत्रभूषणरत्नस्य विप्रकीर्यमाणं विक्षिप्यमाणमधोमुखकिरणानामिन्द्रायुधजालवर्णं शक्रचापसमूहरागं यदं[3]शुकोत्तरीयमुत्तरासङ्गं चित्रवस्त्रमेकस्कन्धक्षिप्तमिवैकांसन्यस्तमिवोद्वहता धारयता । पुनः किं कुर्वता । अधरं दन्तच्छदमोष्ठं दधता । अधरं विशेषयन्नाह—**चूतेति** । चूतपल्लववदाम्रकिसलयवत्कोमलं सुकुमारम् । **अनवरतेति** । अनवरतं निरन्तरं ताम्बूलस्य नागवल्ल्या दलस्य बद्धो रागान्धकारो यस्मिन् । **कर्णेति** । कर्णान्तायतस्य श्रोत्रप्रान्तप्राप्तस्य स्वभावेन धवलस्य शुभ्रस्य लोचनयुगलस्य नेत्रयुग्मस्य धवलिम्ना शुभ्रत्वेन दिगन्तराणि धवलयतेव शुभ्रीकुर्वतेव । कुमुदवनानीव कैरवखण्डानीव वर्षता वृष्टिं कु[4]र्वता । पुण्डरीकमयमिव सिताम्भोजमयमिव दिवसं वासरं कुर्वता सृजता । **कनकेति** ।

---

**टिप्प०**—1 सावष्टम्भा सबला आकृतिर्यस्येत्युचितोर्थः । 2 अनुदरा कन्येतिवत् ईषदर्थे निःशब्दः । 3 एकस्कन्धक्षिप्तम् उत्तरीयमिव किं वहति ? न किञ्चित्प्रतीयते, सर्वं भ्रष्टीचकार महाभागः । '...किरणेन्द्रायुधजालं वर्णांशुकोत्तरीयमिव' इति पाठः । कर्णाभरणरत्नस्य नीचैर्विकीर्यमाणाः (प्रसरन्तः) अधोमुखाः किरणाः नानावर्णशालितया इन्द्रधनूंषीव तेषाम् (किरणानाम्) जालमेकस्कन्धसक्तं वर्णांशुकमिव (रक्तवर्णरंजितम् अंशुकमिव वस्त्रमिव) उद्वहता, इति तदर्थः । 4 दिगन्तरे नेत्रप्रेरणस्य कुमुदवनवर्षणत्वेन, दिवसस्य पुण्डरीकमयकरणत्वेन चोत्प्रेक्षेत्याशयः ।

---

**पाठा०**—१ गजराज. २ विभक्तमध्येन. ३ मणिर्विप्रकीर्य.

अलिकुलनीलसरलशिरसिजेन, अग्राम्याकृतिना, राजकुलसंपर्कचतुरेण, गन्धर्वदारकेण केयूरकनाम्नानुगम्यमाना प्रत्यूषस्येव प्रादुरासीत् । आगत्य च कोऽयमित्युपजातकुतूहला चन्द्रापीडं सुचिरमवेलोक्य महाश्वेतायाः समीपमुपसृत्य कृतप्रणामा सविनयमुपाविशत् । अनन्तरं चातिदूरानतेनोत्तमाङ्गेन प्रणम्य केयूरकोऽपि महाश्वेताद्दृष्टिनिसृष्टं नातिसमीपवर्ति शिलातलं भेजे । उपविष्टश्च तमदृष्टपूर्वमधःकृतकुसुमायुधमुपहसितसुरासुरगन्धर्वविद्याधररूपं रूपातिशयं चन्द्रापीडस्य दृष्ट्वा विस्मयमापेदे । परिसमाप्तजपा तु महाश्वेता पप्रच्छ तरलिकाम्,—'किं त्वया दृष्टा प्रियसखी कादम्बरी कुशलिनी । करिष्यति वा तदस्मद्वचनम्' इति ।

अथ सा तरलिका विनयावनतमौलिरीषदवलम्बितकर्णपाशमतिमधुरया गिरा व्यजिज्ञपत्—'भर्तृदारिके, दृष्टा खलु मया भर्तृदारिका कादम्बरी सर्वतः कुशलिनी । विज्ञापिता च निखिलं भर्तृदुहितुः संदेशम् । आकर्ण्य च यत्तया संततमुक्तस्थूलाश्रुबिन्दुवर्षं रुदित्वा प्रतिसंदिष्टम्, तदेष तयैव विसर्जितस्तस्या एव वीणावादकः केयूरकः कथयिष्यति' इत्युक्त्वा विरराम । विरतवचसि तस्यां केयूरकोऽब्रवीत्—'भर्तृदारिके महाश्वेते, देवी कादम्बरी दृढ-

---

कनकपट्टवत्सुवर्णपट्टवत्पृथु विस्तीर्णं ललाटमलिकं यस्य स तेन । **अलीति** । अलिकुलवन्नीलाः सरला अवक्राः शिरसिजाः केशा यस्य स तेन । **अग्राम्येति** । अग्राम्या नागरीयाकृतिराकारो यस्य स तेन । **राजेति** । राजकुलेन यः संपर्कः संबन्धस्तत्र चतुरेण चातुर्ययुक्तेन । **आगत्य चेति** । आगत्य चैत्य च । कोऽयमित्युपजातं समुत्पन्नं कुतूहलं यस्याः सा तया । सुचिरं चिरकालं यावत् चन्द्रापीडमवलोक्य निरीक्ष्य महाश्वेतायाः समीपमुपसृत्यागत्य कृतो विहितः प्रणामो यया सा सविनयमुपाविशदुपविष्टा । **अनन्तरमिति** । तरलिकावस्थानन्तरमतिदूरादानतेन नम्रेणोत्तमाङ्गेन शिरसा प्रणम्य नमस्कृत्य केयूरकोऽपि महाश्वेतया दृष्ट्या निसृष्टं दर्शितं नातिसमीपवर्ति नातिनिकटवर्ति शिलातलं भेजेऽधितस्थौ । **उपविष्टश्चेति** । तत्रोपविष्ट आसीनश्च स तमदृष्टपूर्वमनवलोकितपूर्वमधःकृतः कुसुमायुधो येन स तमुपहसितं न्यक्कृतं सुरासुरगन्धर्वविद्याधराणां रूपं सौन्दर्यं येन स तमेवंविधं चन्द्रापीडस्य रूपातिशयं सौन्दर्याधिक्यं दृष्ट्वा चावलोक्य च विस्मयमाश्चर्यमापेदे प्राप्तवान् । **परीति** । परिसमाप्तः पूर्णीभूतो जपो जापो यस्याः सैवंविधा महाश्वेता तरलिकामिति पप्रच्छेत्यप्राक्षीत् । इतिद्योत्यमाह—**कादम्बरीति** । कादम्बरी प्रियसखी वल्लभवयस्या कुशलिनी कल्याणवती त्वया किं दृष्टावलोकिता । वा अथवा तत्पूर्वोक्तमस्मद्वचनं करिष्यति ।

**अथेति** । तत्प्रश्नानन्तरं सा तरलिका विनयेनावनतो मौलिर्यया सा ईषत्किंचिदवलम्बितकर्णपाशं यथा भवति तथा व्यजिज्ञपद्विज्ञापनां चकार । कया । अतिमधुरयातिमिष्टया गिरा वाण्या, हे भर्तृदारिके, खलु निश्चयेन । कादम्बरी भर्तृदारिका सर्वतः सर्वप्रकारेण कुशलिनी कल्याणवती दृष्टावलोकिता । विज्ञापिता च निखिलं समग्रं भर्तृदुहितुर्भवत्याः संदेशमुदन्तम् । **आकर्ण्य चेति** । तच्छ्रुत्वा च यत्तया कादम्बर्या संततं निरन्तरं मुक्ताः स्थूला येऽश्रुबिन्दवस्तेषां वर्षो यस्मिन्नेतादृशं यथा स्यात्तथा रुदित्वा रुदनं कृत्वा प्रतिसंदिष्टं प्रत्युत्तरं कृतं,तदेष तयैव कादम्बर्यैव विसर्जितस्त्वन्निकटे प्रेषितस्तस्या एव कादम्बर्या एव वीणावादकः केयूरकः कथयिष्यति निवेदयिष्यति । इत्युक्त्वा विरराम विरता बभूव । अथ विरतवचसि तस्यां केयूरकोऽब्रवीदवोचत् । हे भर्तृदारिके

---

**टिप्प०**—1 संततं मुक्तावत्स्थूलानाम् अश्रुबिन्दूनां वर्षः ( वर्षणम् ) यस्मिन्कर्मणि यथा स्यात्तथा इति स्पष्टोर्थः । 2 वीणावाहक इत्येवोचितः पाठः ।

---

**पाठा०**—१ कुटिल. २ आलोक्य. ३ समुपविष्टश्च. तत्र. ४ आलम्बित. ५ सतत. ६ वीणावाहकः.

दत्तकण्ठग्रहा त्वां विज्ञापयति—'यदियमागत्य मामवदत्तरलिका तत्कथय किमयं गुरुजना-[1]नुरोधः, किमिदं मच्चित्तपरीक्षणम्, किं गृहनिवासापराधनिपुणोपालम्भः, किं प्रेमविच्छे-दाभिलापः[2], किं भक्तजनपरित्यागोपायः, किं वा प्रकोपः । जानास्येव मे सहजप्रेमनिस्यन्द-निर्भरं हृदयम्, एवमतिनिष्ठुरं संदिशन्ती कथमसि न लज्जिता । तथा मधुरभाषिणी केनासि शिक्षिता वक्तुमप्रियं परुषमभिधातुं वा । स्वस्थोऽपि तावत्क इव सहृदयः कनीयस्यवसानविरसे कर्मणीदृशे मतिमुपसर्पयेत्, किमुतातिदुःखाभिहतहृदयोऽस्मद्विधो जनः । सुहृद्दुःखखेदिते हि मनसि कैव सुखाशा, कैव निर्वृतिः, कीदृशाः संभोगाः, कानि वा हसितानि । येनेदृशीं दशामुपनीता प्रियसखी, कथमतिदारुणं तमहं विषमिवाप्रियकारिणं कामं सकामं कुर्याम् । दिवसकरास्त[3]मयविधुरासु नलिनीषु सहवासपरिचयाच्चक्रवाकयुवतिरपि [4]पतिसमागमसुखानि [5]त्यजति, किमुत नार्यः । [6]यत्र भर्तृविरहविधुरा परिहृतपरपुरुषदर्शना दिवानिशं निवसति प्रियसखी, कथमिव तन्मम हृदयमपरः प्रविशेज्जनः । यत्र च भर्तृविरहविधुरा

---

महाश्वेते, देवी कादम्बरी दृढं दत्तः कण्ठग्रहो यया सा । कृतालिङ्गनेत्यर्थः । त्वां विज्ञापयति विज्ञप्तिं करोति । किं विज्ञप्तिं कृतवतीत्याह—**यदियमिति** । इयं तरलिका मामागत्यैत्य यदवददवोचत्तत्कथय ब्रूहि—किमयं गुरुजनानुरोधः किं गुरुजनपारवश्यम् । किमिदं मच्चित्तस्य मन्मनसः परीक्षणं परीक्षाकरणम् । किं गृहनिवासलक्षणो योऽपराध आगस्तस्य निपुणो योग्योऽयमुपालम्भः । किं प्रेमविच्छेदार्थं स्नेहनिवृत्त्यै अयमभिलापः संलापः । किं भक्तजनस्य सेवकजनस्य परित्याग उपायः प्रपञ्चः । किंवा प्रकोपः प्रतिघा । सहजं स्वाभाविकं यत्प्रेम तस्य निस्यन्दो रसस्तेन निर्भरं हृदयं मे मम जानास्येव ज्ञास्यस्येव । एवं अतिनिष्ठुरमतिपरुषं संदिशन्ती कथयन्ती कथं न लज्जितासि । तथा त्वं मधुरभाषिणी सत्यप्रियमनिष्टं वक्तुं जल्पितुं परुषं कठिनमभिधातुं कथयितुं केन पुंसा त्वं शिक्षितासि हितोपदेशविषयीकृतासि । स्वास्थ्यवशादेतादृशी मतिरुत्पद्यत इत्यभिप्रायेणाह—**स्वस्थोऽपीति** । स्वास्थ्यवानपि तावदादौ सहृदयः पण्डितः कनीयसि लघीयसीदृशेऽवसानविरसे प्रान्तदुःखदे कर्मणि क्रियायां क इव को जनो मतिं बुद्धिमुपसर्पयेत् । अस्वस्थानां तु दूरत आस्थेत्याह—**किमुतेति** । अतिदुःखेनाभिहतं हृदयं यस्यैवंभूतोऽस्मद्विधो जनः किमुत कथ्यते । सर्वथा तत्कर्मणि न प्रवर्तेत इत्यर्थः । हीति निश्चितम् । सुहृद्दुःखखेदिते मित्रदुःखाभिभूते मनसि कैव सुखाशा कः सौख्याभिलाषः । कैव निर्वृतिर्मनःसंतुष्टिः । संभोगा इन्द्रियार्थाः कीदृशाः किंस्वरूपाः । हसितानि स्मितानि कानि च कीदृशानि । येन कामेन प्रियसखीदृशीं दशामवस्थामुपनीता प्रापिता तं विषमिवाप्रियकारिणमनिष्टविधायिनमतिदारुणमतिभीषणं कथं कामं सकामं साभिलाषं कुर्याम् । प्रणयसखीदुःखेन स्वस्मिन्दुःखवत्त्वं निदर्शयन्नाह—**दिवसेति** । दिवसकरस्य सूर्यस्यास्तमयेन परद्वीपान्तरगमनेन विधुरासु दुःखितासु नलिनीषु कमलिनीषु [2]सत्सु सहवासपरिचयाच्चक्रवाकयुवतिरपि द्वन्द्वचरवनितापि पतिसमागमसुखानि भर्तृसंयोगसौख्यानि त्यजति जहाति, तर्हि नार्योऽपि[3] योषितोऽपि किमुत वाच्याः । न किमपि कथनीया इत्यर्थः । **यत्रेति** । यत्र हृदये भर्तृविरहेण विधुरा दुःखिता परिहृतं परित्यक्तं परपुरुषाणामपरपुंसां दर्शनं वीक्षणं यया सैवंविधा प्रियसखी महाश्वेता दिवानिशमहोरात्रं निवसत्यधितिष्ठति तन्मम हृदयमपर इतरः प्राकृतो जनः कथमिव प्रविशेत्कथं प्रवेशं कुर्यात् । **यत्र चेति** । यत्र यस्मिन्समये भर्तुः पत्युर्विरहेण वियोगेन विधुरा दुःखिता व्रतेन नियमेन कर्शितं कृशतां नीतमङ्गं शरीरं यया सैवंविधा प्रिय-

---

**टिप्प०—1 कामं कथं सकामं कुर्यामित्यन्वयः । 2 सतीषु, इति तात्पर्यम् । 3 अनधिकारो भाषायाम् । नार्यस्तु इत्युचितम् ।**

---

पाठा०—१ गुरुजनवचनानुरोधः. २ अभिलापः. ३ अस्तमन. ४ समागम. ५ परित्यजति. ६ अपि च यत्र.

व्रतकर्शिताङ्गी प्रियसखी महत्कृच्छ्रमनुभवति, तत्राहमवगणय्यैतत्कथमात्मसुखार्थिनी पाणिं ग्राहयिष्यामि । कथं वा मम सुखं भविष्यति । त्वत्प्रेम्णा चास्मिन्वस्तुनि कुमारिकाजनविरुद्धं स्वातन्त्र्यमालम्ब्याङ्गीकृतमपयशः, समवधीरितो विनयः, गुरुवचनमतिक्रामितम्, न गणितो लोकापवादः, वनिताजनस्य सहजमाभरणमुत्सृष्टा लज्जा, सा कथय कथमिव पुनरत्र प्रवर्तते । तदयमञ्जलिरुपरचितः, प्रणामोऽयम्, इदं च पादग्रहणम्, अनुगृहाण माम्, वनमितो गतासि मे जीवितेन सहेति मा कृथाः स्वप्नेऽपि पुनरिममर्थं मनसि' इत्यभिधाय तूष्णीमभूत् । महाश्वेता तु तच्छ्रुत्वा सुचिरं विचार्य, 'गच्छ स्वयमेवाहमागत्य यथार्हमाचरिष्यामि' इत्युक्त्वा केयूरकं प्राहिणोत् ।

गते च केयूरके चन्द्रापीडमुवाच—'राजपुत्र, रमणीयो हेमकूटः, चित्रा च चित्ररथराजधानी, वहुकुतूहलः किंपुरुषविषयः, पेशलो गन्धर्वलोकः, सरलहृदया महानुभावा च कादम्बरी । यदि नातिखेदकरमिव गमनं कलयसि, नावसीदति वा गुरुप्रयोजनम्, अद्य-

---

सखी महत्कृच्छ्रं कष्टमनुभवत्यनुभवविषयीकरोति, तत्र तस्मिन्समयेऽहं प्रियसख्येतद्दुःखमवगणय्यावगणनां कृत्वात्मसुखार्थिनी स्वस्य सुखाभिलाषिणी कथं पाणिं करं ग्राहयिष्यामि ग्रहणं कारयिष्यामि । एवं सत्यनुष्ठिते पाणिग्रहे न स्वेष्टसिद्धिरित्यत आह—**कथमिति** । वेति पक्षान्तरे । कथं मम सुखं भविष्यति । इष्टविरहव्याकुलचित्तत्वे न सुखमिति भावः । अथ त्वया सार्कं यत्प्रेम तदपि न भविष्यति । 'ईषिते ईषितं चेत्स्यात्तदा प्रेम प्रवर्तते' इति न्यायात् । अतस्त्वत्प्रेम्णा त्वत्स्नेहेनास्मिन्वस्तुनि पाणिग्रहणविषये मया कुमारिकाजनविरुद्धं स्वातन्त्र्यं स्वेच्छाचारित्वमालम्ब्यापयशोऽपकीर्तिरङ्गीकृतं स्वीकृतम् । पित्रादिभिः पाणिग्रहणं कार्यमाणापि पितुराज्ञाऽकरणमित्यपयशः । समवधीरितस्तिरस्कृतो विनयः । गुरुवचनं पित्रादीनां वचोऽतिक्रामितमुल्लङ्घितम्[1] । तथा लोकापवादो जनापवादो न गणितो न विचारितः । वनिताजनस्य स्त्रीजनस्य सहजं स्वाभाविकमाभरणं भूषणं लज्जा त्रपा सा चोत्सृष्टा त्यक्ता । कथय प्रतिपादय एतादृशो जनः कथमिव पुनरत्रास्मिन्कर्मणि प्रवर्तते प्रवृत्तिं करोति । उपसंहरति—तदिति हेत्वर्थे । अयमञ्जलिरुपरचितो निवद्धः । अयं च प्रणामो नमस्कारः । इदं च पादग्रहणमभिवादनम् । इति हेतोर्मामनुगृहाणानुग्रहं कुरु । इतो मत्समीपान्मे मम जीवितेन प्राणितेन सह वनं गतासि प्राप्तासि इति स्वप्नेऽपि स्वप्नावस्थायामपि पुनर्द्वितीयवारमिमं पूर्वोक्तमर्थं मनसि चित्ते मा कृथा मा व्यधिष्ठाः । इत्यभिधायेत्युक्त्वा तूष्णीमभून्मौनं कृतवती । महाश्वेता तु तत्पूर्वोक्तं श्रुत्वाकर्ण्य सुचिरं चिरकालं यावत् विचार्य विमृश्य त्वं गच्छ व्रज स्वयमेवात्मनैव । अहमागत्य यथार्हं यथायोग्यमाचरिष्यामीत्युक्त्वा केयूरकं प्राहिणोत्प्रेषितवती ।

गते केयूरके चन्द्रापीड मुवाचाब्रवीत् । किं तदित्याह—**राजपुत्रेति** । हे राजपुत्र नृपसूनो, अयं हेमकूटो रमणीयो मनोहरः । चित्ररथो गन्धर्वनाथस्तस्य राजधानी नृपनिवासनगरी चित्रा विविधाश्चर्ययुक्ता । बहून्यनेकानि कुतूहलान्याश्चर्याणि यस्मिन्नेवंविधः किंपुरुषाणां किंनराणां विषयो देशः । गन्धर्वलोको देवगायनजनः पेशलः सुन्दरः । 'पेशलं हृद्यसुन्दरे' इति कोषः । सरलहृदयाऽकुटिलचित्ता महानुभावा च कादम्बरी भर्तृदारिका । यदीति प्रत्येकमभिसंबध्यते । नातिखेदकरमिव नातिप्रयासजनकमिव गमनं यानं कलयसि जानासि । वेति विकल्पार्थे । गुरुं[2]प्रयोजनं महानर्थो नावसीदति न विलम्बितो भवति । वेति पूर्ववत् ।

---

टिप्प०—1 अतिक्रान्तमित्येव पाठः । 2 आवश्यकं कार्यमित्याशयः ।

---

पाठा०—१ तीव्रव्रत. २ वस्तुनि मया. ३ अयशः.

ष्टचरविषयकुतूहलि वा चेतः, मद्वचनमनुरुध्यते[1] वा भवान्, अतिसुखदायि वाश्चर्यदर्शनम्[3], अर्हसि[4] वा प्रणयम्, इममप्रत्याख्यानयोग्यं[5] वा जनं मन्यसे, समारूढो वा परिचयलेशः, अनुग्राह्यो वायं जनः, ततो नार्हसि निष्फलां कर्तुमभ्यर्थनामिमाम्। इतो[6] मयैव सह गत्वा हेमकूटमतिरमणीयतानिधानम्, तत्र दृष्ट्वा च मन्निर्विशेषां कादम्बरीम्, अपनीय तस्याः कुमतिमनोमोहविलसितम्[7], एकमहो विश्रम्य श्वोभूते प्रत्यागमिष्यसि। मम हि निष्कारणबान्धवं भवन्तमालोक्यैव दुःखान्धकारभाराक्रान्तेन महतः कालादुच्छ्वसितमिव चेतसा। श्रावयित्वा स्ववृत्तान्तमिमं सह्यतामिव गतः शोकः। दुःखितमपि जनं रमयन्ति सज्जनसमागमाः। परसुखोपपादनपराधीनश्च भवादृशां गुणोदयः[2]' इत्युक्तवतीं चैनां[8] चन्द्रापीडोऽब्रवीत्—'भगवति, दर्शनात्प्रभृति परवानयं जनः कर्तव्येषु यथेष्टमशङ्किततया नियुज्यताम्' इत्यभिधाय तया सहैवोदचलत्।

---

अदृष्टचरोऽनवलोकितपूर्वो यो विषयो देशस्तत्र कुतूहलं विद्यते यस्यैवंभूतं यदि चेतः। वाथवा भवान्मद्वचनं मद्वाक्यमनुरुध्यते[1] समीहते। अनुपूर्वको रुध् दिवादिरिच्छार्थः। वेति पक्षान्तरे। यद्यतिसुखदाय्यतिशयेन[2] सौख्यप्रदमाश्चर्यदर्शनं कुतूहलावलोकनम्। वेति पूर्ववत्। अर्हसि वाञ्छसि यदि प्रणयं स्नेहम्। इमं मल्लक्षणं जनमप्रत्याख्यानयोग्यमनिराकरणयोग्यं वा मन्यसे जानासि। समारूढः प्राप्तो वा परिचयलेशः संस्तवलवः। अनुग्राह्यो वानुग्रहयोग्यो वायं जनः। ततस्तस्माद्धेतोर्निष्फलां रिक्तामिमामभ्यर्थनां कर्तुं विधातुं नार्हसि न योग्यो भवसि। इतोऽस्मात्स्थानान्मयैव सह अतिरमणीयतानिधानं चारुताशेवधिं हेमकूटं गत्वा। **तत्रेति।** तस्मिन्स्थले मत्तो निर्गतो विशेषो यस्याम्। मत्सदृशीमित्यर्थः, एतादृशीं कादम्बरीं दृष्ट्वा विलोक्य च। तस्याः कादम्बर्याः कुत्सिता मतिर्यस्मादेवंविधो यो मनोमोहश्चेतसोऽज्ञानं तस्य विलसितं चेष्टितमपनीय दूरीकृत्यैकमहर्दिनं विश्रम्य विश्रामं गृहीत्वा। **श्वोभूत इति।** श्व आगामिदिने तस्मिन्भूते जाते सति प्रत्यागमिष्यसि पश्चादायास्यसि। **ममेति।** हीति निश्चितम्। मम निष्कारणबान्धवं निमित्तव्यतिरेकेण स्वजनं भ्रातरं वा भवन्तं त्वामालोक्यैव निरीक्ष्यैव दुःखमेवान्धकारं तिमिरं तस्य भारो वीवधस्तेनाक्रान्तेन व्याप्तेन चेतसा चित्तेन महतः कालाच्चिरसमयादुच्छ्वसितमिव गृहीतश्वासमिव[3]। इमं स्ववृत्तान्तं स्वकीयोदन्तं श्रावयित्वा कथयित्वा। सोढुं शक्यः सह्यस्तस्य भावस्तत्ता तामिव गतः प्राप्तः शोकः। श्रावणेन स शोको जीर्णतां प्राप्त इत्यर्थः। तत्रोपपादकमाह—**दुःखितमपीति।** सज्जनसमागमाः दुःखितमपि जनं रमयन्ति विनोदयन्ति। अत्रार्थे हेतुमाह—**परेति।** परस्यान्यस्य यत्सुखं तस्य यदुपपादनं तत्र पराधीनः परायत्तः। तन्निमित्तक इति यावत्। भवादृशां त्वत्सदृशानां गुणोदयो[4] गुणाः शौर्यादयस्तेषामभ्युदय इति पूर्वोक्तप्रकारेणोक्तवतीं कथितवतीं चन्द्रापीडोऽब्रवीदवोचत्। हे भगवति, दर्शनात्प्रभृत्यवलोकनदिनादारभ्य परवान्पराधीनः। त्वदायत्त इति यावत्। अयं जनः। कर्तव्येषु कार्येषु यथेष्टमशङ्किततया शङ्काराहित्यतया भवत्या नियुज्यतां प्रेर्यतामित्यभिधायेत्युक्त्वा तया महाश्वेतया सहोदचलत्प्रस्थानमकरोत्।

---

**टिप्प०**—1 रक्षितुमिच्छति, इत्यर्थ उचितः। 2 यदि आश्चर्यदर्शनम् अतिसुखदायि (अस्ति), इत्यन्वयो योग्यः। 3 चित्तेन गृहीतश्वासमिवेति योजयतो धिक् टीकाकृतो जाड्यम्। चित्तेन उच्छ्वसितमिव चित्तेन प्राणितमिव। एतावत्कालं चित्तं मृतमिवासीत्, इदानीं तेन उच्छ्वासो गृहीत इति तात्पर्यम्। चित्तमुच्छ्वसितमिवेति प्रकारान्तरम्। 4 चन्द्रापीडस्य रूपादिगुणानालोक्य कादम्बरी मुग्धा स्यादिति तद्विवाहेन तस्याः सुखं स्यादिति निगूढसूचना।

---

**पाठा०**—१ असद्वचनम्. २ भवन्मतिरतिदुःखदायि; भवन्मतिः सुखदायि. ३ वासश्चिरदर्शनम्. ४ अर्हामि. ५ योग्यां वा मन्यसे माम्. ६ मयैव. ७ कुमतिमिमाम्. ८ च.

क्रमेण च गत्वा हेमकूटमासाद्य गन्धर्वराजकुलं समतीत्य काञ्चनतोरणानि सप्तकक्षान्तराणि कन्यान्तःपुरद्वारमवाप । महाश्वेतादर्शनप्रधावितेन दूरादेव कृतप्रणामेन कनकवेत्रलताहस्तेन [1]प्रतीहारजनेनोपदिश्यमानमार्गः प्रविश्यासंख्येयनारीशतसहस्र[2]संबाधं स्त्रीमयमपरमिव जीवलोकम्, इयत्तां ग्रहीतुमेकत्र त्रैलोक्यस्त्रैणमिव [3]संहृतम्, अपुरुषमिव सर्गान्तरम्, अङ्गनाद्वीपमिवापूर्वमुत्पन्नम्, पञ्चममिव नारीयुगावतारम्, अपरमिव पुरुषद्वेषिप्रजापतिनिर्माणम्, अनेककल्पकल्पनार्थमुत्पाद्य स्थापितमिवाङ्गनाकोशम्, अतिविस्तारिणा युवतिजनलावण्यप्रभापूरेण प्लावितदिगन्तरेण सिञ्चतेवामृतरसविसरेण दिवसमार्द्रीकुर्वतेव भुवनान्तरालं [4]बहुलप्रभावर्षिणा मरकतमणिमयेन [5]सर्वतः परिगततया तेजोमयमिव चन्द्र-

---

क्रमेण परिपाट्या गत्वा च हेमकूटं गन्धर्वराजकुलमासाद्य प्राप्य काञ्चनस्य सुवर्णस्य तोरणानि बहिर्द्वाराणि येष्वेवंविधानि सप्तकक्षान्तराणि गृहान्तराणि समतीत्य व्यतिक्रम्य कन्यानां यदन्तःपुरं तस्य द्वारमवाप प्राप्तवान्। तदनन्तरं कुमारः कुमारीपुराभ्यन्तरं ददर्शेक्षांचक्रे । किंविशिष्टः कुमारः । महाश्वेताया दर्शनार्थमवलोकनार्थं प्रधावितेनोच्चलितेन दूरादेव कृतप्रणामेन कनकवेत्रलता हस्ते यस्यैवंभूतेन प्रतीहारजनेन द्वारपालकलोकेनोपदिश्यमानो वचनव्यक्त्या प्रोच्यमानो मार्गः पन्था यस्य सः । किं कृत्वा । प्रविश्य प्रवेशं कृत्वा । इतः कुमारीपुराभ्यन्तरं विशेषयन्नाह—**असंख्येति** । असंख्येयानि गणनावर्जितानि नारीणां स्त्रीणां शतसहस्राणि लक्षाणि तैः संबाधं संकीर्णं स्त्रीमयमपरं भिन्नं जीवलोकमिव । **इयत्तेति** । इयत्तामेतावत्यो नार्यः सन्तीति संख्यां ग्रहीतुं त्रैलोक्यस्त्रैणं त्रिभुवनस्त्रीवृन्दमेकस्मिन्स्थले संहृतमिव संगृहीतमिव । केवलाङ्गनानामेव सद्भावं प्रदर्शयन्नाह—**अपुरुषेति** । अपुरुषं पुरुषवर्जितं सर्गान्तरमिव सृष्ट्यन्तरमिव । तासामेव विपुलाश्रयत्वादाह—**अङ्गनेति** । अपूर्वमभिनवमुत्पन्नमङ्गनाद्वीपमिव स्त्रीणामन्तरीपमिव । **पञ्चममिति** । नारीप्रधानं यद्युगं तस्य पञ्च[1]ममवतारमिव । **अपरमिति** । पुरुषे द्वेषो विद्यते यस्यैवंभूतो यः प्रजापतिर्ब्रह्मा तस्यापरमन्यन्निर्माणमिव । पुरुषद्वेषिविशेषणेन केवलं स्त्रीनिर्माणकर्तृत्वमेव सूचितम् । **अनेकेति** । अनेके ये कल्पा युगान्तास्तत्र कल्पना रचना । स्त्रीणामिति शेषः । तदर्थमङ्गनाकोशं स्त्रीभाण्डागारमुत्पाद्य विधाय स्थापितमिव रक्षितमिव । एतेन युगान्तरे स्त्रीनिर्माणप्रयासाभाव इति सूचितम् । पुनः कीदृशम् । अतिविस्तारिणा युवतिजनानां लावण्यं सौन्दर्यातिशयस्तस्य या प्रभा कान्तिस्तस्याः पूर उत्कर्षस्तेन । अथ च बहुला या प्रभा कान्तिस्तद्वर्षिणा मरकतमणिमयेनाश्मगर्भमणिप्रचुरेण अर्थान्निर्माणेन सर्वतः समन्तात्परिगततया व्याप्ततया तेजोमयमिव कान्तिसमूहमयमिव । अथ युवतिलावण्यं विशेषयन्नाह—**अमृतेति** । अमृतरसस्य पीयूषद्रवस्य यो विसरः समूहस्तेन दिवसं दिनं सिञ्चतेव सेकक्रियां कुर्वतेव, प्लावितं क्षालितं दिगन्तरं येन तेन । किं कुर्वता । लावण्यप्रभापूरेण भुवनान्तरालं विष्टपान्तरालमार्द्रीकुर्वतेवाशुष्कतां विदधतेव । अत्र च मरकतमणेः श्यामत्वे लावण्यप्रभापूरस्य च पाण्डुरत्वे क्रमं विहाय यथोचितमुत्प्रेक्षते—**चन्द्रेति** । चन्द्रमण्डलसहस्रैर्निर्मितं रचितं संस्थानमा-

---

**टिप्प०**—1 धिगज्ञानम् । सत्यादीनि चत्वारि युगानि तु सन्त्येव येषामवतारः ( प्रवर्तनम् ) सुपरिचितः, किन्तु अभिनवः सोयं पञ्चमो नारीयुगावतार इत्याशयः । 2 'युवतिजनलावण्यं विशेषयन्नाह' इति प्रतिज्ञाय पुनस्तत्र 'लावण्यप्रभापूरेणे'त्यादि विशेषयन् सर्वमस्पष्टीचकार । अतः सेयं योजना—अतिविस्तारिणा प्लावितदिगन्तरेण, ( अत एव ) अमृतरसविसरेण ( करणेन ) अर्थात् पीयूषद्रवप्रवाहद्वारा दिवसं सिञ्चतेव तथा अमृतरसप्रवाहद्वारा भुवनान्तरालमार्द्रीकुर्वतेव ईदृशेन युवतिजनलावण्यप्रभापूरेण ( कर्त्रा ), तथा बहुलप्रभावर्षिणा मरकतमणिमयेन ( आभरणेन, कर्त्रा ) सर्वतः परिगततया तेजोमयमिव । अयं भावः—कन्यान्तःपुरम् अतिविस्तार्यादिविशेषणविशिष्टेन युवतिजनलावण्यप्रभापूरेण व्याप्तं तथा मरकतमयभूषणेन च व्याप्तम् । अत एव तेजोमयमिवेत्युत्प्रेक्षा ।

---

पाठा०—१ द्वारपालप्रतीहारी. २ संबाधः. ३ संगृहीतम्. ४ बहल. ५ भूषणेनेव सर्वतः.

मण्डलसहस्रैरिव निर्मितसंस्थानम्, ज्योत्स्नयेव घटितसंनिवेशम्, आभरणप्रभाभिरिव निष्पादितदिगन्तरम्, विभ्रमैरिव कृतसर्वोपकरणम्, यौवनविलासैरिवोत्पादितावयवम्, रतिविलसितैरिव र[1]चितसंचयम्, मन्मथाचरितैरिव कल्पितावकाशम्, अनुरागेणेवानुलिप्तसकलजनप्र[2]वेशम्, शृङ्गारमयमिव, सौन्दर्यमयमिव, सुरताधिदैवतमयमिव, कुसुमशरमयमिव, कुतूहलमयमिव, आश्चर्यमयमिव, सौकुमार्यमयमिव, कु[3]मारः कुमारीपुराभ्यन्तरं ददर्श।

अतिबहलतया च तस्य कन्यकाजनस्य समन्तादाननद्युतिभिरिन्दुबिम्बवृष्टिमिव पतन्तीम्, अपाङ्गविक्षेपैश्चलितकुवलयवनमयीमिव क्रियमाणामवनीम्, अ[4]तिनिभृतभ्रूलताविभ्रमैः कामकार्मुकबला[5]नीव प्रचलितानि, शि[6]रसिजकलापान्धकारैर्बहुलपक्षप्रदोषसार्थानिव संबभ्रतः, स्मितप्रभाभिरुत्फुल्लकुसुमधवलानिव वसन्तदिवसान्संचरतः, श्वसितानिलपरिमलैर्मलयमारुतानिव परिभ्रमतः, कपोलमण्डलालोकैर्माणिक्यदर्पणसहस्राणीव स्फुरितानि, करतलरागेण

---

कृतिविशेषो यस्यैतादृशमिव। श्यामतासाम्यादिति भावः। पाण्डुरत्वेनाह—**ज्योत्स्नयेति**। ज्योत्स्नया चन्द्रिकया घटितो निर्मितः संनिवेशः संस्थानं यस्य स एतादृशमिव। अमृतरसविश्रुतेर्वा साम्यम्। **आभरणेति**। आभरणप्रभाभिर्भूषणकान्तिभिर्निष्पादितं दिगन्तरं दिगवकाशं यस्मिन्नेतादृशमिव। एतेनाभरणानामतिशयो द्योतितः। **विभ्रमैरिति**। विभ्र[1]मैर्भ्रूसमुद्भवैः कृतं सर्वोपकरणं सर्वा सामग्री यस्मिन्नेतादृशमिव। **यौवनेति**। यौवनविलासैस्तारुण्यविलसितैरुत्पादिता अवयवा यस्मिन्नेतादृशमिव। **रतीति**। रतिः कामयोषित्तद्विलसितै रचितः संचयः समूहो यस्मिन्नेतादृशमिव। **मन्मथेति**। मन्मथाचरितैः कंदर्पाचरणैः कल्पितोऽवकाशोऽवगाहो यस्मिन्नेतादृशमिव। **अन्विति**। अनुरागेण प्रीत्यानुलिप्तः सकलजन[2]प्रवेशो यस्मिन्नेवंभूतमिव। शृङ्गारमयमिव संभोगमयमिव सौन्दर्यमयमिव सुरूपतामयमिव। सुरताधिदैवतमयमिव मैथुनाधिष्ठात्रीमयमिव। कुसुमशरमयमिव कंदर्पबाणमयमिव। कुतूहलमयमिव कौतुकमयमिव। सौकुमार्यमयमिव मार्दवमयमिव।

चन्द्रापीडस्तस्मिन्कुमारीपुराभ्यन्तर एतान्यद्राक्षीत् तान्येवाह—**अतीति**। तस्य कन्यकाजनस्यातिबहलतयातिबाहुल्यतया समन्तादाननद्युतिभिर्मुखकान्तिभिः कृत्वा पतन्तीं क्षरन्तीमिन्दुबिम्बवृष्टिमिव चन्द्रमण्डलवर्षणमिव। अत्र मुखे तत्तदतिशयो व्यङ्ग्यः। **अपाङ्गेति**। अपाङ्गविक्षेपैः कटाक्षैश्चलितं कम्पितं यत्कुवलयवनमुत्पलखण्डं तन्मयीमवनीं पृथ्वीं क्रियमाणामिव। प्रबलेन दुर्बलस्योच्चालनं संभवतीति कुमुदातिशयोऽपाङ्गेषु द्योत्यते। **अतीति**। अतिनिभृता निश्चला ये भ्रूलताविभ्रमास्तैः प्रचलितानि गन्तुं प्रवृत्तानि कामकार्मुकस्य कन्दर्पचापस्य बलानीवोत्क[3]र्षरूपाणीव। अत्र वक्रत्वसाम्यादुपमानोपमेयभावः। **शिरसीति**। शिरसिजाः केशास्तेषां कलापाः समुदायास्तद्रूपाण्यन्धकाराणि तैर्बहुलपक्षाणां कृष्णपक्षाणां प्रदोषसार्थान्यामिनीमुखसमूहान्संबभ्रत इव संभ्रमत इव। एतेन केशकलापेषु श्यामतातिशयो द्योत्यते। **स्मितेति**। स्मितं हास्यं तस्य प्रभाभिः कान्तिभिरुत्फुल्लकुसुमधवलान्वसन्तदिवसान्संचरत इव व्रजत इव। **श्वसितेति**। श्वसितानिलस्य श्वासवायोः परिमलैरामोदैर्मलयमारुतान्परिभ्रमत इव संचरत इव। **कपोलेति**। गल्लातपरप्रदेशाः कपोलास्तेषां मण्डलं समूहस्तस्यालोकैः प्रकाशैः स्फुरितानि माणिक्यदर्पणसहस्राणीव रत्नादर्शदशशतानीव। एतेन कपोलयोः स्वच्छतातिशयो दर्शितः। **करेति**। करतलरागेण रक्तकमलवनवर्षिणं जीवलोकमिव। कररुहा नखास्तेषां स्फुरणेन

---

**टिप्प०**—1 विलासैः। 2 अविचारितार्थोयं पाठः। 'अनुलिप्तसकलजनप्रदेशम्' इत्येव पाठः। प्रदेशस्यैव अनुलेपार्हत्वात्। 3 बलानीति पाठोऽज्ञानम्। 'कामकार्मुकविलासशतानि' इत्येव पाठः। भ्रुकुटीनामेव कार्मुकेण साकं तुलनौचित्यात्।

---

**पाठा०**—१ विरचित. २ प्रदेशम्. ३ प्रेममयमिव, कुमारः. ४ अनिभृत. ५ शतानि; विलासशता. ६ केशानि.

रक्तकमलवनवर्षिणमिव जीवलोकम्, करुरुहस्फुरणेन कुसुमायुधशरसहस्रैरिव संच्छादितदिगन्तराणि, आभरणकिरणेन्द्रायुधजालकैरुड्डीयमानानीव भवनमयूरवृन्दानि, यौवनविकारैरुत्पाद्यमानानीव मन्मथसहस्राण्यद्राक्षीत्। उचितव्यापारव्यपदेशेन कुमारिकाणां सखीहस्तावलम्बेषु पाणिग्रहणानि, वेणुवाद्येषु चुम्बनव्यतिकरान्, वीणासु कररुहव्यापारान्, कन्दुकक्रीडासु करतलप्रहारान्, भुवनलतासेककलशकण्ठेषु भुजलतापरिष्वङ्गान्, लीलादोलासु नितम्बस्तनप्रेङ्खितानि, ताम्बूलवीटिकावखण्डनेषु दशनोपचारान्, वकुलविटपेषु मधुगण्डूषप्रचारान्, अशोकतरुताडनेषु चरणाभिघातान्, उपहारकुसुमस्खलनेषु सीत्कारानतिरिक्तं सुरतमिवाभ्यस्यन्तीनामपश्यत्।

यत्र च कन्यकाजनस्य कपोलतलालोक एव मुखप्रक्षालनम्, लोचनान्येव कर्णोत्पलानि, हसितच्छवय एवाङ्गरागाः, निश्वासा एवाधिवासगन्धयुक्तयः, अधरद्युतिरेव कुङ्कुममुखानु-

---

विद्योतनेन कुसुमायुधशरसहस्रैः संच्छादितदिगन्तराण्याच्छादितककुबन्तराणि। **आभरणेति**। आभरणकिरणान्येवेन्द्रायुधजालकानि तैरुड्डीयमानानीव व्योम्नि व्रजमानानीव भवनमयूरवृन्दानि गृहकलापिमण्डलानि। **यौवनेति**। यौवनविकारैस्तारुण्यविकृतिभिरुत्पाद्यमानानीव विधीयमानानीव मन्मथसहस्राणि मनोभवसहस्राणि। **उचितेति**। उचितो योग्यो यो व्यापारस्तद्व्यपदेशेन तन्मिषेण कुमारिकाणामतिरिक्तमद्भुतं सुरतं मैथुनमभ्यस्यन्तीनामिवाभ्यासं कुर्वन्तीनामिव तत्तदपश्यत्। तत्र सुरतसाधर्म्यमाह—**सखीति**। सखीनामालीनां हस्तावलम्बेषु करावलम्बेषु पाणिग्रहणानि हस्तगृहनानि। वेणुवाद्येषु वंशातोद्येषु चुम्बनव्यतिकरान्मुखस्पर्शनवृत्तान्तान्। वीणासु वल्लकीषु कररुहव्यापारान्नखरव्यवहारान्। कन्दुकक्रीडास्वन्दुकलीलासु करतलप्रहारान्हस्ततलप्रघातान्। **भुवनेति**। भुवनलतानां गृहवल्लीनां सेकार्थं कलशकण्ठेषु कुम्भनिगरणेषु भुजलतापरिष्वङ्गान्बाहुवल्ल्यालिङ्गनान्। लीलादोलासु क्रीडाप्रेङ्खासु नितम्ब आरोहः स्तनाः कुचास्तेषां प्रेङ्खितानि धुतानि। **ताम्बूलेति**। ताम्बूलस्य नागवल्ल्या वीटिकाः प्रसिद्धास्तासां अवखण्डनेषु शकलीकरणेषु दशनोपचारान्दन्तक्षतान्। **वकुलेति**। वकुलविटपेषु केसरवृक्षेषु मधु मद्यं तस्य गण्डूषप्रचारांश्चुलुकप्रवृत्तीः। **अशोकेति**। अशोकतरूणां कङ्केल्लिवृक्षाणां ताडनेषु चरणाभिघातान्पादप्रहारान्। **उपेति**। मुक्तादीनां हारः, पुष्पादीनामुपहारः, तस्मात्कुसुमादीनां स्खलनानि पतनानि तेषु सीत्कारान्सूक्ष्मध्वनिविशेषाञ्शब्दान्। दृश्यते हि हारात्पुष्पच्युतिसमये तथा ध्वनिः। अथवोपहारकुसुमानां स्खलितानि कुमारीशरीरावयवेषु सीत्कारो वेदनातिशयद्योतको दृढदन्तसंयोगनिमित्तो ध्वनिः। अनेन कुमारीणां कुसुमपातमात्रेण सीत्कार इति सौकुमार्यातिशयो व्यज्यते।

**यत्र चेति**। यत्र कन्यान्तःपुरे कन्यकाजनस्य कपोलतलस्यालोक एव प्रकाश एव मुखं वक्त्रं तस्य प्रक्षालनं धावनम्। अत्र स्वच्छत्वकरणसाम्येन जलालोकयोरुपमानोपमेयभावः। कर्णान्तत्वरूपव्यङ्ग्यसाम्येनाह—**लोचनेति**। लोचनान्येव नेत्राण्येव कर्णोत्पलानि कर्णावतंसानि। पाण्डुरत्वसाम्येनाह—**हसितेति**। हसितं स्मितं तस्य छवयः कान्तय एवाङ्गरागा विलेपनानि। **निश्वासेति**। निश्वासाः पवनास्त एवाधिवासे वस्त्रादीनां संस्कारकरणे गन्धयुक्तयः सुगन्धीकरणप्रकाराः। रक्तत्वसाम्येनाह—**अधरेति**।

---

**टिप्प०**—1 'संछादितानि दिगन्तराणि' इत्येव पाठः। 2 भवनलतानामित्येव पाठ उचितः। 3 प्रलापप्रायमिदं सर्वम्। उपहाराय गृहभूतलानां शोभासंपादनाय यानि पुष्पाणि (रचनारूपेण विन्यस्तानि) तेषु स्खलनेषु, अर्थात् पुष्पमध्ये चरणस्खलनेन स्त्रियो भूतलपातभयात् 'सीत्कारान्' कुर्वन्तीति तासां सौन्दर्यातिशयो द्योत्यते।

---

**पाठा०**—१ कररुहकिरण. २ संच्छादितमष्टदिगन्तरम्. ३ किरणनिकर. ४ क्रीडासु. ५ भवन. ६ स्खल. ७ वीटिकाखण्डनेषु. ८ वकुलकुसुमदोहदेषु सीधुगण्डूषप्रदानानि. ९ कुङ्कुमानुलेपनम्.

लेपनम्, आलापा एव तन्त्रीनिनादाः, भुजलता एव चम्पक[1]वैकक्ष्यमालाः, करतलान्येव लीलाकमलानि, स्तना एव दर्पणाः, निजदेहप्रभैवांशुकावगुण्ठनम्, जघनस्थलान्येव विलासमणिशिलातलानि, कोमलाङ्गुलिराग एव चरणालक्तरसः, नखमणिमरीचय एव कुट्टिमोपहारकुसुमप्रकाराः। यत्र चा[2]लक्तरसोऽपि चरणातिभारः, बकुलमालिकामेखलाकलनमपि गमनविघ्नकरम्, अङ्गरागगौरवमप्यधिकश्वासनिमित्तम्, अंशुकभारोऽपि ग्लानिकारणम्, मङ्गलप्रतिसरवलयविधृतिरपि करतलविधुतिहेतुः, अवतंसकुसुमधारणमपि श्रमः, कर्णपूरकमलतरलमधुकरपक्षप[3]वनोऽप्यायासकरः। तथा च यत्र सखीद[4]र्शनेष्वकृतहस्तावलम्बनमु[5]त्थानमतिसाहसम्, प्रसाधनेषु हारभारसहिष्णुता स्तनकार्कश्यप्रभावः, कुसुमावचयेषु द्वितीयपुष्प-

---

अधरो दन्तच्छदस्तस्य द्युतिरेव कुङ्कुमं तेन मुखस्य वक्त्रस्यानुलेपनम्। मञ्जुलत्वसाम्येनाह—**आलापा इति**। आलापा एव संभाषणान्येव तन्त्रीनिनादा वीणाध्वनयः। मृदुत्वसाम्येनाह—**भुजेति**। भुजलता एव चम्पको हेमपुष्पकस्तस्य वैकक्ष्यमाला उत्तरासङ्गस्रजः। **करेति**। करतलान्येव लीलाकमलानि क्रीडापङ्कजानि। निर्मलत्वसाम्येनाह—**स्तनेति**। स्तना एव दर्पणा मुकुराः। निचितत्वसाम्येनाह—**निजेति**। निजदेहप्रभैव स्वशरीरदीप्तिरेवांशुकेन वस्त्रेणावगुण्ठनमाच्छादनम्। विस्तारातिशयादाह—**जघनेति**। जघनस्थलान्येव कट्याः पुरोभागप्रदेशा एव विलासा लीलाविशेषास्तेषां मणिशिलातलानि। **कोमलेति**। कोमला या अङ्गुल्यस्तासां राग एव चरणयोः पादयोरलक्तकरसो यावकरसः। **नखेति**। नखा एव मणयः, नखनिष्ठाभरणमणयो वा तेषां मरीचय एव दीधितय एव कुट्टिमेषु बद्धभूमिषूपहारकुसुमानां प्रकराः समूहाः। **यत्र चेति**। यत्र कन्यकासमुदायेऽलक्तरसोऽपि यावकरसोऽपि चरणयोः पादयोरतिभारो व्य[1]र्थः। स्वत एव चरणयोरारुण्यादिति भावः। **बकुलेति**। बकुलमालि[2]काः केसरस्रजो मेखला रसना तस्या आकलनमपि धारणमपि गमनविघ्नकरं गतिप्रतिबन्धकम्। सौकुमार्यातिशयादिति भावः। **अङ्गेति**। अङ्गरागो विलेपनं तस्य गौरवमप्यधिकश्वासनिमित्तमतिप्रयासकारणम्। अङ्गरागे[3]भ्यः शरीररागस्य सातिशयत्वात्। **अंशुकेति**। अंशुकभारोऽपि वस्त्रभारोऽपि ग्लानिकारणम्। सातिशयदेहप्रभावरणरूपत्वात्। **मङ्गलेति**। मङ्गलार्थं प्रतिसरवलयं हस्तसूत्रवलयं तस्य विधृतिरपि धारणमपि करतलस्य हस्ततलस्य विधुतिः कम्पनं तन्मात्रहेतुः। स्वतःसुन्दरत्वाच्छ्रेयस्करत्वाच्च मणिबन्धस्य। **अवेति**। अवतंसकुसुमानां धारणमपि श्रमः क्लमः। **कर्णेति**। कर्णपूरकमलेषु तरलाश्चञ्चला ये मधुकरा भ्रमरास्तेषां पक्षेभ्यः समुद्भवः पवनोऽपि वायुरप्यायासकरः प्रयासकरः। **तथा चेति**। यत्राभिनवसखीप्रत्यागमदर्शनेषु कदाचिदपि परिचारिका(याः) अकृतं हस्तावलम्बनं यस्मिन्नेवादर्शं यदुत्थानं तदप्यतिसाहसमित्यर्थः। सौभाग्यातिशयो लीलाविलासातिशयश्च द्योत्यते। **प्रसाधनेष्विति**। प्रसाधनेषु भूषणग्रहेषु या हारभारसहिष्णुता मुक्ताप्रालम्बवीवधसहनशीलता सापि शरीरावयवेषु मध्ये स्तनयोः कुचयोः कार्कश्यं काठिन्यं तस्य प्रभावो माहात्म्यम्। सामर्थ्यमिति यावत्। नेतरेषामवयवानाम्। अत्र स्तनयोः काठिन्यातिशयः, अन्यत्र मृदुत्वादिकं कर्कशपददानाद्गूढं व्यज्यते। तथा कुसुमावचयेषु पुष्पचुण्टनेषु द्वितीयपु[4]ष्पग्रहणमप्ययुवतिजनोचितम्। पुरुषयोग्यमित्यर्थः। एतेनैतावत्प्रयासयोग्यः पुरुष एवेति

---

**टिप्प०**—1 धिक्। न व्यर्थः, अपि तु सौकुमार्यातिशयात्पादरागोपि भारायित इत्याशयः। 2 बकुलमालैव मेखला इत्यर्थो योग्यः। 3 शरीररागस्य सातिशयत्वे अधिकश्वासानां कोऽवसरः। अत एव अङ्गरागकृतभारबोधेन श्वासप्रवृत्तिरित्यर्थो बोध्यः। एवं सर्वत्र सौकुमार्यसूचनायोक्तिः। टीकाकारस्य तु सर्वत्र वृथाप्रायं जल्पितम्, विपरीतार्थत्वात्। 4 एकपुष्पग्रहणमेव तस्याः पर्याप्तम्, द्वितीयस्य पुष्पस्य ग्रहणं तु कठिनत्वात्पुरुषस्यैव योग्यमित्यर्थः।

---

**पाठा०**—१ चम्पकमालाः. २ अलक्तक. ३ वातोऽपि. ४ दर्शनेऽपि. ५ अभ्युत्थानम्.

ग्रहणमप्ययुवतिजनोचितम्, कन्यकाविज्ञानेषु माल्यग्रन्थनमसुकुमारजनव्यापारः, देवताप्रणामेषु मध्यभागभङ्गो नातिविस्मयकरः ।

तस्य चैवंविधस्य किंचिदभ्यन्तरमतिक्रम्येतश्चेतश्च परिभ्रमतः कादम्बरीप्रत्यासन्नस्य परिजनस्य शुश्राव तांस्तानतिमनोहरानालापान् । तथाहि—'लवलिके, कल्पय केतकीधूलिभिर्लवलीलतालवालमण्डलानि । सागरिके, गन्धोदकदीर्घिकासु विकिर रत्नवालुकाम् । मृणालिके, कृत्रिमकमलिनीषु कुङ्कुमरेणुमुष्टिभिश्छुरय यन्त्रचक्रवाकमिथुनानि । मकरिके, कर्पूरपल्लवरसेनाधिवासय गन्धपात्राणि । रजनिके, तमालवीथिकान्धकारेषु निधेहि मणिप्रदीपान् । कुमुदिके, स्थगय शकुनिकुलरक्षणाय मुक्ताजालैर्दाडिमीफलानि । निपुणिके, लिख मणिशालभञ्जिकास्तनेषु कुङ्कुमरसपत्रभङ्गान् । उत्पलिके, परामृश कनकसंमार्जनीभिः कदलीगृहमरकतवेदिकाम् । केसरिके, सिञ्च मदिरारसेन वकुलकुसुममालागृहाणि । मालतिके, पाटलय सिन्दूररेणुना कामदेवगृहदन्तवलभिकाम् । नलिनिके, पायय कमलमधुरसं भवनकलहंसान् । कदलिके, नय धारागृहं गृहमयूरान् । कमलिनिके, प्रयच्छ चक्रवाकशावकेभ्यो मृणालक्षीररसम् । चूतलतिके, देहि पञ्जरपुंस्कोकिलेभ्यश्चूतकलिकाङ्कुराहारम् । पल्लविके,

---

ध्वनितम् । पुनः सौकुमार्यातिशयमाह—**कन्यकेति** । कन्यकाविज्ञानेषु कुमारिकाणां कलासु माल्यग्रथनमसुकुमारजनव्यापारः । अतिकर्कशजनविधेयमित्यर्थः । एतेन माल्यापेक्षयापि सौकुमार्यं व्यज्यते । **देवतेति** । देवतानां प्रणामेषु नमस्क्रियासु मध्यभागस्यातिसूक्ष्मत्वात् भङ्गो द्वैधीभावो न भवति सोऽतिविस्मयकर आश्चर्यकरः । एतेन मध्यभागस्य स्वारसिकं कृशत्वं व्यज्यते ।

तदनन्तरं स चन्द्रापीडः किंचिदभ्यन्तरं मध्यभागमतिक्रम्येतश्चेतश्च परिभ्रमतः पर्यटत एवंविधस्य तस्य कादम्बरीप्रत्यासन्नस्य कुमारिकासमीपवर्तिनः परिजनस्य परिवारस्यातिमनोहरांस्तांस्तानालापान्संलापाञ्शुश्रावाकर्णयामास । एतदेव दर्शयति—**तथा हीति** । हे लवलिके, केतकीधूलिभिः केतकीपरागैर्लवलीलताया आलवालमण्डलान्यावालमण्डलानि कल्पय प्रणय । हे सागरिके, गन्धोदकं सुगन्धजलं तस्य दीर्घिकासु वापीषु रत्नवालुकां विकिर विक्षिप । हे मृणालिके, कृत्रिमकमलिनीषु यन्त्रचक्रवाकमिथुनानि कुङ्कुमरेणुमुष्टिभिश्छुरयाच्छोटय[1] । हे मकरिके, कर्पूरपल्लवरसेन गन्धपात्राण्यधिवासय सुगन्धीकुरु । हे रजनिके, तमालवीथिकानामन्धकारेषु मणिप्रदीपान्निधेहि स्थापय । हे कुमुदिके, शकुनिकुलरक्षणाय पक्षिसमूहनिवारणाय मुक्ताजालैर्दाडिमीफलानि स्थगयाच्छादय । हे निपुणिके, मणिशालभञ्जिकास्तनेषु रत्नपुत्रिकाकुचेषु कुङ्कुमरसपत्रभङ्गांल्लिख लिपीकुरु । हे उत्पलिके, कनकसंमार्जनीभिः सुवर्णबहुरीभिः कदलीगृहमरकतवेदिकां परामृश संमार्जय । हे केसरिके, मदिरारसेन कादम्बरीद्रवेण बकुलकुसुममालागृहाणि सिञ्च सेकं कुरु । हे मालतिके, सिन्दूररेणुना नागभूषणधूल्या कामदेवगृहदन्तवलभिकां पाटलय श्वेतरक्तीकुरु । हे नलिनिके, कमलमधुरसं भवनकलहंसान्पायय पानं कारय । हे कदलिके, गृहमयूरान्भवनकलापिनो धारागृहं यन्त्रगृहं नय प्रापय । हे कमलिनिके, मृणालक्षीररसं चक्रवाकशावकेभ्यो रथाङ्गाह्वपाकेभ्यः प्रयच्छ प्रदेहि । चूतलतिके, पञ्जरपुंस्कोकिलेभ्यश्चूतकलिकाङ्कुराहारमाम्रकोरकप्ररोहाशनं देहि प्रयच्छ । हे पल्लविके, भवनहारीतान्गृहमृदङ्कुरान्मरि-

---

**टिप्प०—**1 रञ्जयेति तात्पर्यम् ।

---

**पाठा०—**१ कुसुम. २ असुकुमार. ३ अन्तरमवक्रम्य. ४ सारसिके. ५ कनकदीर्घिकासु; नदिकासु. ६ क्षोद. ७ युगलानि. ८ मन्दारिके. ९ भवनदीर्घिकातमाल. १० रक्षणार्थम्. ११ लेखय. १२ मणिस्तम्भ. १३ संमार्जनीभिः. १४ वेदिकाः. १५ कुसुमिके. १६ चक्रवाकेभ्यः. १७ चूतकलिके.

भोजय मरिचाग्रपल्लवदलानि भवनहारीतान्। लवङ्गिके, निचिक्षिप[3] चकोरपञ्जरेषु पिप्पलीदलशकलानि[2]। मधुकरिके, विरचय कुसुमाभरणानि। मयूरिके, संगीतशालायां विसर्जय किंनरमिथुनानि। कन्दलिके, समारोहय क्रीडापर्वतशिखरं जीवंजीवमिथुनानि। हरिणिके, देहि पञ्जरशुकसारिकाणामुपदेशम्' इत्येतान्यन्यानि च परिहासजल्पितान्यश्रौषीत्। तथाहि—'चामरिके, मिथ्यामुग्धतां[3] प्रकटयन्ती कमभिसंधातुमिच्छसि। अयि यौवनविलासैरुन्मत्तीकृते; विज्ञातासि[4] या त्वं स्तनकलशभारावनम्यमानमूर्तिर्मणिस्तम्भमयूरान्[5]आलम्बसे[6]। परिहासकाङ्क्षिणि, रत्नभित्तिपतितमात्मप्रतिबिम्बमालपसि[7]। पवनहृतोत्तरीयांशुके, हारप्रभामायासितकरतलाकलयसि[8]। मणिकुट्टिमेषूपहारकमलस्खलनभीते; निजमुखप्रतिबिम्बकानि परिहरसि[9]। जालवातायनपतितपद्मरागालोकं[10] प्रति बालातपशङ्कया[11] करतलमातपत्रीकरोषि[12]।

---

चानां श्वेतशोभाञ्जनानामग्रपल्लवदलानि मुख्यकिसलयखण्डानि भोजय भोजनं कारय। हे लवङ्गिके, चकोरपञ्जरेषु विषसूचकवंशदलेषु पिप्पलीदलशकलानि मागधीपत्रखण्डानि निचिक्षिप[1] निक्षेपं कुरु। अनेन चकोराणां पिप्पलीदलानि प्रियाणीति ध्वनितम्। हे मधुकरिके, कुसुमानामाभरणकानि विभूषणानि विरचय रचनां कुरु। हे मयूरिके, संगीतशालायां नृत्यशालायां किंनरमिथुनानि तुरगवदनद्वन्द्वानि विसर्जय प्रेषय। हे कन्दलिके, क्रीडापर्वतशिखरं लीलाशिखरिसानुं जीवंजीवमिथुनानि विषदर्शनमृत्युकयुगलानि[2] समारोहयारोहणं कारय। हे हरिणिके, पञ्जरशुकसारिकाणामुपदेशं हितशिक्षां देहि प्रयच्छ। इत्येतानि पूर्वोक्तान्यन्यानि चाग्रे वक्ष्यमाणानि परिहासजल्पितानि वचनान्यश्रौषीदाकर्णितवान्। एतदेव दर्शयति—**तथाहीति**। हे चामरिके, मिथ्या वृथा मुग्धतां मुग्धभावं प्रकटयन्ती प्रकाशयन्ती कमभिसंधातुं[3] मिलितुमिच्छसि वाञ्छसि। बाह्यमुग्धत्वप्रकटनेन स्वकीयं कार्यं कर्तुकामेत्यर्थः। अयीति कोमलामन्त्रणे। हे यौवनविलासैस्तारुण्यविभ्रमैरुन्मत्तीकृते ग्रथिलीकृते, सा त्वं विज्ञाता विदितासि या स्तनकलशभारेणावनम्यमाना मूर्तिः शरीरं यस्या एवंविधा मणिभिर्निर्मिता रचिता ये स्तम्भाः स्थूणास्तेषां मयूरान्कलापिन आलम्बस आलम्बनविषयीकरोषि[4]। **परीति**। हे परिहासकाङ्क्षिणि, रत्नभित्तिपतितं मणिकुड्यसंक्रान्तमात्मप्रतिबिम्बं स्वकीयं प्रतिरूपमालपसि परिभाषसे। एतेन स्वयमेव स्वस्य भाषणमुपहासहेतुरिति ध्वनितम्। **पवनेति**। पवनेन वायुनाहृतं गृहीतमुत्तरीयांशुकमुपरिवस्त्रं यस्यास्तस्याः संबोधनं हे पवनहृतोत्तरीयांशुके, लज्जावशादतिशुभ्रत्वसाम्याद्धारप्रभामेवाकलयस्युत्तरीयांशुकत्वेन जानासि। अतएवायासितकरतला पुनः पुनस्तद्ग्रहणप्रयासेन परिश्रान्तहस्ततलेत्यर्थः। **मणिकुट्टिमेति**। मणिकुट्टिमेषूपहारार्थमुपचारार्थं कमलानि नलिनानि तेभ्यः स्खलनं चरणाभिघातस्तस्माद्भीता त्रस्ता तस्याः संबोधनं हे उपहारकमलस्खलनभीते, निजमुखप्रतिबिम्बकानि स्वाननप्रतिच्छायानि परिहरसि त्यजसि। एतेन निजात्मप्रतिबिम्बान्येव कमलभ्रान्त्या त्यजसीति ध्वनितम्। **जालेति**। जालरूपो[5] यो वातायनो गवाक्षस्तत्र पतितं लग्नं पद्मरागो लोहितकमणिस्तस्यालोकं प्रकाशं प्रति बालो नवीनो य आतपः सूर्यालोकस्तस्य शङ्कया भ्रान्त्या करतलं हस्ततलमातपत्रीकरोषि छत्रीकुरुषे। एतेन पद्मरागालोके बालातपभ्रान्तिरिति ध्वनितम्।

---

**टिप्प०**—1 अद्भुतं व्याकरणं टीकाकर्तुः! हन्त। 'निक्षिप' इत्येव पाठः। 2 हन्त केयं व्याख्या, 'इन्द्रस्य टीका बिडौजाः' इतोऽपि गुरुतरा। 3 प्रतारयितुमित्युचितम्। 4 स्तनकण्डूयानिवृत्तये एवं करोषीति परिहासः। 5 सर्वत्र वाक्यादौ संबोधनमिति प्रक्रमभङ्गष्टीकाकारेण न ज्ञातः। अत एव 'निजसौकुमार्यगर्वखर्वितबिसप्रसूनसौभाग्ये!' इति संबोधनमुचितम्। बिसप्रसूनादपि ते सौकुमार्यमधिकं येन हि बालातपशंकयापि आतपत्रकरणस्यापेक्षेति परिहासः।

---

**पाठा०**—१ विक्षिप. २ तण्डुल. ३ वृथामुग्धताम्. ४ ज्ञाता. ५ मयूखान्. ६ अवलम्बसे. ७ प्रतिमामालपयसि. ८ संकलयसि. ९ निजसौकुमार्यगर्वखर्वितबिसप्रसूनसौभाग्ये जाल. १० अवलोकम्. ११ आशङ्किनी. १२ आतपत्रं करोषि.

खेदस्रस्तहस्तगलितचामरा नखमणिमयूखकलापमाधुनोषि' इत्येतान्यन्यानि च शृण्वन्नेव कादम्बरीभवनमुपययौ ।

पुलिनायमानमुपवनलतागलितकुसुमरेणुपटलैः, दुर्दिनायमानमनिभृतपरभृतनखक्षताङ्गणसहकारफलरसवर्षैः, नीहारायमाणमनिलविप्रकीर्णैर्बकुलसेकसीधुधाराधूलिभिः, काञ्चनद्वीपायमानं चम्पकदलोपहारैः, लीलाशोकवनायमानं कुसुमप्रकरपतितमधुकरवृन्दान्धकारैः, तथा च संचरतः स्त्रीजनस्य रागसागरायमाणं चरणालक्तकरसविसरैः, अमृतोत्पत्तिदिवसायमानमङ्गरागामोदैः, चन्द्रलोकायमानं दन्तपत्रप्रभामण्डलैः, प्रियङ्गुलतायमानं कृष्णागुरुपत्रभङ्गैः, लोहितायमानं कर्णाशोकपल्लवैः, धवलायमानं चन्दनरसविलेपनैः, हरितायमानं

---

**खेदेति** । खेदेन स्रस्तः कम्पितो यो हस्तः करस्तस्माद्गलितं च्युतं चामरं वालव्यजनं यस्या एवंविधा सती नखा एव मणयस्तेषां मयूखकलापं कान्तिसमूहमाधुनोषि कम्पयसि । एतेन नखकान्तिकलापे चामरत्वं व्यज्यते । इत्येतानि पूर्वोक्तान्यन्यानि च वाक्यानि शृण्वन्नाकर्णयन्कादम्बरी राजपुत्री तस्या भवनं गृहमुपययौ जगाम ।

**अथेति** । सेवार्थमागतेन सपर्यार्थं समायातेनोभयत ऊर्ध्वस्थितेन स्त्रीजनेन । ऊर्ध्वत्वसाम्येनाह—लावण्यमयेन प्राकारेणेव वप्रेणेव । उभयतः संवृतत्वसाम्येनाह—**कृत इति** । कृतो विहितो दीर्घाया रथ्यायाः लोके 'गल्ली' इति प्रसिद्धायाः मुखवदाकारो यस्मिन्नेतादृशं मार्गमध्वानमद्राक्षीदालोकितवान् । इतो मार्गविशेषणानि प्रदर्शयन्नाह—**पुलिनेति** । उपवनं गृहसमीपवर्ति काननं तस्य लता वल्ल्यस्ताभ्यो गलितानि कुसुमानि पुष्पाणि तेषां रेणुपटलैः परागपुञ्जैः पुलिनायमानं जलोज्झिततटायमानम् । श्वेतत्वातिशयात्परागोपेतमार्गस्य पुलिनोपमानता । **अनिभृतेति** । अनिभृताश्चञ्चला ये परभृताः पिकास्तेषां नखाः पुनर्भवास्तैः क्षतानि खण्डितान्यङ्गणमजिरं तत्र ये सहकारा आम्रास्तेषां फलानि सस्यानि तेषां रसवर्षैर्मधुवर्षणैर्दुर्दिनायमानं मेघजनिततमोवदाचरमाणम् । एतेन सर्वत्र तत्तदतिशयो व्यज्यते । **अनिलेति** । अनिलेन वायुना विप्रकीर्णैर्विक्षिप्तैर्बकुलाः केसरास्तेषां सेकार्थं याः सीधुधारा मद्यधारास्तासां धूलिभिः कणैः । श्वेतत्वसाम्यात् । नीहारायमाणं हिमवदाचरमाणम् । **काञ्चनेति** । चम्पकदलानि गन्धफलीशकलानि तेषामुपहारैरुपचारैः काञ्चनद्वीपायमानं स्वर्णान्तरीपवदाचरमाणम् । एतेन पीतत्वातिशयो व्यज्यते । **कुसुमेति** । कुसुमप्रकरेषु पुष्पसमूहेषु पतितमुपविष्टं यन्मधुकरवृन्दं भ्रमरसमूहस्तस्यान्धकारैश्छायारूपैर्लीलाशोकवनायमानम् । अन्धकारस्य नीलत्वादशोकवनसाम्यमित्यर्थः । **तथा चेति** । तेनैव प्रकारेण संचरतो गच्छतः स्त्रीजनस्य वनितालोकस्य चरणालक्तकरसः पादरञ्जनार्थयावकरसस्तस्य विसरैः समूहैः रागसागरायमाणं रागसमुद्रवदाचरमाणम् । एतेन रक्तत्वातिशयो द्योत्यते । **अङ्गेति** । अङ्गरागस्य विलेपनस्यामोदैः परिमलैरमृतस्य पीयूषस्य य उत्पत्तिदिवसस्तद्वदाचरमाणम् । तद्दिनेऽमृतामोदस्य प्रचुरत्वादिति भावः । श्वेतत्वसाम्येनाह—**दन्तेति** । दन्तपत्रैः कर्णाभरणैश्चन्द्रलोकायमानं चन्द्रलोकवदाचरमाणम् । एतेन दन्तपत्राणां भूयस्त्वं व्यज्यते । **प्रियङ्गुलतेति** । कृष्णागुरुः काकतुण्डस्तस्य पत्रभङ्गैः पत्रलताभिः । प्रियङ्गुः फलिनीलक्षणा या लता वल्ली तद्वदाचरमाणम् । नीलत्वातिशयादिति भावः । रक्तत्वसाम्येनाह—**लोहितेति** । कर्णाशोकपल्लवैः श्रवणनिक्षिप्तकङ्केल्लिकिसलयैर्लोहितायमानं रक्तवदाचरमाणम् । **धवलेति** । चन्दनं मलयजं तस्य रसो द्रवस्तस्य विलेपनैरङ्गरागैर्धवलायमानं श्वेतवदाचरमाणम् । **हरितेति** । शिरीषः कपीतनस्तस्य कुसुमाभरणैः पुष्पविभूषणैर्हरितायमानं पीतनीलवदाचरमाणम् ।

**टिप्प०**—1 प्रकरणानुकूलम् 'खेदस्रस्तहस्तगलितचामरे' इति संबोधनमेवोचितम् । 2 कृतो दीर्घरथ्यामुखवदाकारो यस्य, ग्राम्यदीर्घरथ्याया मुखभागे उभयतो वृतिः मध्ये च स्वल्पायामो दीर्घो मार्गो दृश्यत इत्याशयः ।

---

पाठा०—१ ग्रस्त. २ कलित. ३ चामरैः. ४ किरण. ५ भवनसमीपमुपययौ; भवनमुपसृत्य ययौ. ६ चम्पकोपहारैः. ७ नीलाशोक. ८ संचरन्. ९ पत्रमण्डलैः. १० वनायमानं रोचनातिलकभक्तिभिर्नीलायमानम्. ११ कर्णपूराशोक.

शिरीषकुसुमाभरणैः, अथ सेवार्थमागतेनोभयत ऊर्ध्वस्थितेन स्त्रीजनेन प्राकारेणेव लावण्यमयेन कृतदीर्घरथ्यामुखाकारं मार्गमद्राक्षीत् । तेन चान्तर्निपतन्तमाभरणकिरणालोकं संपिण्डितं नदीवेणिकाजलप्रवाहमिव वहन्तमपश्यत् । तन्मध्ये च प्रतिस्रोत इव गत्वा प्रतीहारिमण्डलाधिष्ठितपुरोभागं श्रीमण्डपं ददर्श ।

तत्र च मध्यभागे पर्यन्तरचितमण्डलेनाध उपविष्टेन चानेकसहस्रसंख्येन परिस्फुरदाभरणसमूहेन कल्पलतानिवहेनेव कन्यकाजनेन परिवृताम्, नीलांशुकप्रच्छदपटप्रावृतस्य नातिमहतः पर्यङ्कस्याश्रये धवलोपधानन्यस्तद्विगुणभुजलतावष्टम्भेनावस्थितां महावराहदंष्ट्रावलम्बिनीमिव महीम्, विस्तारिणि देहप्रभाजालजले भुजलताविक्षेपपरिश्रमैः प्रतरन्तीभिरिव चामरग्राहिणीभिरुपवीज्यमानाम्, निपतितप्रतिविम्बतयाधस्तान्मणिकुट्टिमेषु नागैरिवापह्रि-

---

अन्वयस्तु प्रागेवोक्तः । **तेनेति** । तेन मार्गेणान्तर्मध्ये निपतन्तं प्रविशन्तं संपिण्डितं नानाभूषणप्रभामिश्रितमाभरणकिरणालोकं विभूषणप्रभाप्रकाशम् । प्रसरणसाम्येनाह—**नदीति** । नद्याः सरितो वेणिका रयस्तत्र यो जलप्रवाहस्तद्वदिव वहन्तं प्रसरन्तमपश्यत् । **तन्मध्य इति** । आभरणकिरणालोकमध्ये महाश्वेतया सह प्रतिस्रोत इव प्रतिरय इव गत्वा प्रतीहारिमण्डलेनाधिष्ठित आश्रितः पुरोभागोऽग्रभागो यस्यैवंविधं श्रीमण्डपं ददर्श दृष्टवान् । अत्रालोकस्याभ्यन्तरावधि निपतनात्, एतस्य प्रत्यभिमुखगमनात्, गमनमात्र एव दृष्टान्तस्तस्मिन्नेव दृष्टान्तस्योचितत्वात्, न तु दर्शनक्रियायामिति ।

तत्र श्रीमण्डपे मध्यभागे कादम्बरीं ददर्शेत्यन्वयः । इतो दूरं कादम्बरीं विशेषयन्नाह—**पर्यन्तेति** । मण्डपपर्यन्तं रचितं निर्मितं मण्डलं येन स तेन । **अध इति** । कुमारिकासनापेक्षयाध उपविष्टेन स्थितेनानेकेषां सहस्राणां संख्या गणना यस्मिन्स तेन । **परीति** । परिस्फुरद्देदीप्यमान आभरणानां भूषणानां समूहो यस्मिन्स तेन । मनोहरत्वसाम्येनाह—**कल्पेति** । कल्पलता मन्दारवल्ल्यस्तासां निवहेनेव समूहेनेव कन्यकाजनेन परिवृताम् । **नीलेति** । नीलं यदंशुकं तस्य यः प्रच्छदपट उत्तरच्छदस्तेन प्रावृतस्याच्छादितस्य नातिमहतो नातिमहीयसः । परिमाणोपेतस्येत्यर्थः । पर्यङ्कस्य पल्यङ्कस्याश्रयेऽधिकरणे धवलं शुभ्रं यदुपधानमुच्छीर्षकं तत्र न्यस्ता स्थापिता या द्विगुणा भुजलता तदवष्टम्भेन तदाश्रयेणावस्थिताम् । अत्र भुजाया वक्रीकरणत्वेन द्विगुणत्वं बोध्यम् । धवलालम्बनावस्थितत्वमात्रेणोपमानमाह—**महावराहेति** । महावराह आदिक्रोडस्तस्य दंष्ट्रा दाढा तत्रावलम्बिनीमाश्रितां महीमिव वसुधामिव । विस्तारिणि प्रसरणशीले देहप्रभाजालमेव जलं पानीयं तस्मिन्भुजलतानां बाहुवल्लीनां विक्षेपरूपा ये परिश्रमास्तैः प्रतरन्तीभिरिव जलावगाहनं कुर्वन्तीभिरिव चामरग्राहिणीभिरुपवीज्यमानाम् । **निपतितेति** । मणिकुट्टिमेष्वधस्तान्निपतितं यत्प्रतिविम्वं प्रतिच्छाया तस्या

---

**टिप्प०**—1 अन्वयोऽर्थश्चापि भ्रामकः । वहन्तं, नद्याः वेणिकावत् केशपाशवेणीवत् (अर्थात् सरलः) यो जलप्रवाहस्तमिव तेन (मार्गेण) निपतन्तम् (अभ्यन्तरादागच्छन्तम्) आभरणकिरणालोकमपश्यत् । 2 कल्पलता अपि अर्थिजनमनोरथपूरणाय नानाविधाभरणयुक्ता इति द्वयोः साम्यम् । 3 कफोणिमवष्टभ्य भुज ऊर्ध्वमुखीकृतः, अत एव कफोण्यूर्ध्वभागे द्विगुणत्वमित्यर्थः । 4 सर्वं श्रमजनकमापादितम् । धवलोपधानन्यस्तभुजलता कादम्बरी महीव इत्युपमा, भुजलतोपष्टम्भस्य वराहदंष्ट्रासादृश्यादिति सेयमुपमा पृथक् । परितः प्रसारिणि कादम्बर्यां देहप्रभारूपे जले तरन्तीभिरिव चामरग्राहिणीभिर्वीज्यमानामिति द्वितीया उत्प्रेक्षा ( चामरचालनार्थं हस्तौ न कम्प्येते, अपि तु जले हस्तक्षेपेण तास्तरन्ति इत्याशयः ) ।

---

पाठा०—१ निपतित. २ मण्डलोपविष्टेन; मण्डलेनोर्ध्वेणोपविष्टेन च. ३ अतिमहतः. ४ उपाश्रये; अपाश्रये.

यमाणाम्, उपान्ते च रत्नभित्तिषु दिक्पालैरिव नीयमानाम्, उपरि मणिमण्डपेष्वमरैरिवोत्क्षिप्यमाणाम्, हृदयमिव प्रवेशितां महामणिस्तम्भैः, आपीतामिव भवनदर्पणैः, अधोमुखेन श्रीमण्डपमध्योत्कीर्णेन विद्याधरलोकेन गगनतलमिवारोप्यमाणाम्, चित्रकर्मच्छलेनावलोकनकुतूहलसंपुञ्जितेन त्रिभुवनेनेव परिवृताम्, भूषणरवप्रनृत्तशिखिशत[1]विततचित्रचन्द्रकेण भवनेनापि कौतुकोत्पादितलोचनसहस्रेणेव दृश्यमानाम्, आत्मपरिजनेनापि दर्शनलोभादुपार्जितदिव्यचक्षुषेवानिमिषनयनेन निर्वर्ण्यमानाम्, लक्षणैरपि रागाविष्टैरिवाधिष्ठितसर्वाङ्गाम्[2], अकृतपुण्यमिव मुञ्चन्तीं बालभावम्, अदत्तामपि मन्मथावेशपरवशेनेव गृह्यमाणां यौवनेन, अविचलितचरणरागदीधितिभिरिव निर्गताभिरलक्तकरसपाटलितलावण्यजलवेणिकाभिरिव [3]गलिताभिर्निवसितांशुक[4]दशाशिखाभिरिवावलम्बिताभिः पादाभरणरत्नांशुलेखासंदेहदायिनी-

---

भावस्तत्ता तया । नागैः सर्पैरपह्रियमाणामिवान्यत्र नीयमानामिव । तथोपान्ते समीपे च रत्नभित्तिषु तत एव दिक्पालैः सोमादिभिर्नीयमानामिव । प्राप्यमाणामिव । तथोपरि मणिमण्डपेषु रत्नजनाश्रयेषु तत एवामरैर्देवैरुत्क्षिप्यमाणामिवोत्पाट्यमानामिव । तत एव महामणिस्तम्भैर्हृदयमिव प्रवेशितां चित्तान्तर्निहिताम् । तत एव भवनदर्पणैर्गृहादर्शैरापीतामिव पानविषयीकृतामिव । श्रीमण्डपमध्योत्कीर्णेनाधोमुखेन विद्याधरलोकेन गगनतलं व्योमतलमारोप्यमाणामिव तत्र स्थाप्यमानामिव । एतेनोल्लिखितविद्याधररूपाणामतिस्वच्छता दर्शिता । **चित्रेति** । चित्रकर्मालेख्यकर्म तस्य छलेन मिषेणावलोकनलक्षणं यत्कुतूहलं कौतुकं तेन संपुञ्जितेन पिण्डीभूतेन त्रिभुवनेन परिवृतामिव सहितामिव । भूषणरवेण प्रनृत्तं ताण्डवितं यच्छिखिशतं मयूरशतं तस्य वितता विस्तीर्णाश्चित्रा विविधवर्णाश्चन्द्रका मेचका यस्मिन् । कौतुकेन कुतूहलेनोत्पादितं विहितं लोचनसहस्रं येनैवंविधेन भवनेनापि दृश्यमानामिव प्रेक्ष्यमाणामिव । अन्यथा भवनस्य लोचनाभावात्कादम्बरीप्रेक्षणं न स्यादिति भावः । **आत्मेति** । दर्शनलोभादवलोकनतृष्णातोऽनिमिषनयनेन निर्वर्ण्यमानामालोक्यमानाम् । के(ने)व । उपार्जितमर्जितं दिव्यं चक्षुर्येनैवंविधेनेव । यौवनातिशयमाह—**लक्षणैरिति** । लक्षणैरपि कपोलद्युतिकुचकाठिन्यादिभिरधिष्ठितमाश्रितं सर्वाङ्गं यस्याः सा ताम् । कैरिव । रागाविष्टैरिव दृष्टिरागिभिरिव । किं कुर्वन्तीम् । बालभावं मुञ्चन्तीं त्यजन्तीम् । कमिव, अकृतपुण्यमिव निर्भाग्यमिव । **अदत्तामिति** । अदत्ताम्[3]अप्यनर्पितामपि मन्मथस्य कंदर्पस्यावेश आवेगस्तस्य परवशेन पराधीनेन यौवनेन गृह्यमाणामिव स्वीक्रियमाणामिव । पुनः कीदृशीम् । चरणाभ्यां पादाभ्यां विद्रुमरसनदीमिव हेमकन्दलरसतटिनीमिव प्रवर्तयन्तीं विस्तारयन्तीम् । कीदृशाभ्यां चरणाभ्याम् । अङ्गुलीभिः करशाखाभिरुपेताभ्यां सहिताभ्याम् । कीदृशीभिरङ्गुलीभिः । **अविचलितेति** । अविचलितो निश्चलो यश्चरणयो रागस्तस्य दीधितिभिरिव प्रभाभिरिव निर्गताभिः प्रत्युद्गताभिः । **अलक्तेति** । अलक्तकरसो यावकरसस्तेन पाटलितं श्वेतरक्तीकृतं यल्लावण्यजलं तस्य गलिताभिः क्षरिताभिर्वेणिकाभिरिव धाराभिरिव । वस्त्रप्रान्तावलम्बनसाम्येनाह—**निवसितेति** । निवसितं परिधानीकृतं यदंशुकं रत्नांशुकं तस्य दशाशिखाभिरिव वस्त्रप्रान्ताग्रैरिवावलम्बिताभिर्दृढधृताभिः । **पादेति** । अतिकोमलतयातिमृदुतया पादाभरणानां या रत्नांशुलेखा मणिकान्तिरेखास्तासां संदेहदायिनीभिः संशयवितरणकर्त्रीभिः । नख-

---

**टिप्प०**—1 निपतितप्रतिबिम्बतया इत्यनुषङ्गः । एवम् उपरिमण्डपेष्वित्यत्रापि । महामणिस्तम्भदर्पणादिष्वपि निपतितप्रतिबिम्बतया इत्यस्यानुषङ्गो बोध्यः । 2 धिक् टीकाकृतो जाड्यम् । ध्वज-वज्रादिचिह्नानि यानि तस्यास्तत्तदङ्गेषु वर्तन्ते, तान्यपि कादम्बर्यामासक्तिवशादाश्रितानि इत्युत्प्रेक्ष्यते । 3 पित्रादिभिरसमर्पिताऽपि स्मरावेशपरवशतया इव यौवनेन स्वयं गृह्यमाणां स्वीक्रियमाणाम् । कामावेशपरवशो हि पित्रादिसमर्पणस्य प्रतीक्षां न कुरुते । परमार्थतस्तु यौवनं कामावेशपरवशं भवत्येव स्वाभाव्यात्, अहो कवयितुश्चातुर्यम् । टीकाकारस्तु वराको दूरादपि न स्पृशति स्वारस्यम्, अत एव अस्थाने 'इव'शब्दयोगः कृतः ।

---

पाठा०—१ शतचित्र. २ सर्वाङ्गीम्; सर्वावयवाम्. ३ विनतचरण. ४ रक्तांशुक.

भिरतिकोमलतया नखविवरेण वर्षन्तीभिरिव[1] रुधिरधारावर्षमङ्गुलीभिरुपेताभ्यां[2] क्षितितलतारागणमिव नखमणिमण्डलमुद्वहद्भ्यां विद्रुमरसनदीमिव चरणाभ्यां प्रवर्तयन्तीम्, नूपुरमणिकिरणचक्रवालेन गुरुनितम्बभरखिन्नोरुयुगलसहायतामिव[3] कर्तुमुद्गच्छता स्पृश्यमानजघनभागाम्, प्रजापतिदृढनिष्पीडितमध्यभागगलितं[4] जघनशिलातलप्रतिघाताल्लावण्यस्रोत[5] इव द्विधागतमूरुद्वयं दधानाम्, सर्वतःप्रसारितदीर्घमयूखमण्डलेनेर्ष्यया परपुरुषदर्शनमिव रुन्धता[6] कुतूहलेन विस्तारमिव तन्वता स्पर्शसुखेन रोमाञ्चमिव मुञ्चता काञ्चीदाम्ना नितम्बबिम्बस्य विरचितपरिवेषाम्, निपतितसकललोकहृदयभरेणेवातिगुरुनितम्बाम्, उन्नतकुचान्तरितमुखदर्शनदुःखेनेव क्षीयमाणमध्यभागाम्, प्रजापतेः स्पृशतोऽतिसौकुमार्यादङ्गुलिमुद्रामिव निमग्नां

---

विवरेण नखान्तरेण रुधिरधारावर्षं वर्षन्तीभिरिव। किं कुर्वद्भ्यां पादाभ्याम्। क्षितितलतारागणमिव नखमणिमण्डलमुद्वहद्भ्यामुद्वहनं कुर्वद्भ्याम्। अत्र वर्तुलत्वप्रकाशकत्वसाधर्म्यान्नखतारागणयोः साम्यं प्रदर्शितम्। विद्रुमं हेमकन्दलस्तस्य यो रसस्तस्य नदीं तटिनीं चरणाभ्यां पादाभ्यां प्रवर्तयन्तीमिव[1] विस्तारयन्तीमिव। **नूपुरेति**। स्पृश्यमानः स्पर्शविषयीक्रियमाणो जघनभागो यस्याः सा ताम्। केन। नूपुरमणीनां पादकटकरत्नानां किरणा दीधितयस्तेषां चक्रवालेन समूहेन गुरुर्यो नितम्ब आरोहस्तस्य भरेण भारेण खिन्नं यदूरुयुगलं सक्थिद्वन्द्वं तस्य सहायं साहाय्यं कर्तुमिवोद्गच्छतोर्ध्वं व्रजता। **प्रजेति**। प्रजापतिना ब्रह्मणा निर्माणव्याजेन दृढं निष्पीडितो मर्दितो मध्यभागो मध्यप्रदेशस्तस्माद्गलितं च्युतं लावण्यस्रोत इव जघनशिलातलप्रतिघाताद्द्विधागतमूरुद्वयं दधानां धारयन्तीम्। एतेन मध्यभागे कार्श्यं शिलातलपदेन च जघने दृढत्वमगूढं व्यज्यते। पुनः कीदृशीम्। काञ्चीदाम्ना रशनादाम्ना नितम्बबिम्बस्यारोहमण्डलस्य विरचितो निर्मितः परिवेषः परिधिर्यस्याः सा ताम्। इतः काञ्चीदाम विशेषयन्नाह—**सर्वत इति**। सर्वतः समन्तात्प्रसारितं विस्तारितं दीर्घमायतं मयूखमण्डलं किरणसमूहो येन स तेन। ईर्ष्यया स्पर्धया परपुरुषदर्शनमन्यनरावलोकनं रुन्धतेवावरोधं कुर्वतेव। अदृष्टपूर्वत्वात्। कुतूहलेन कौतुकेन विस्तारं विस्तीर्णतां तन्वतेव विस्तारयतेव। **स्पर्श इति**। स्पर्शसुखेन संश्लेषसातेन रोमाञ्चमिव रोमोद्गममिव मुञ्चता त्यजता। **निपतितेति**। हृद्यत्वान्निपतितानि सकललोकानां समग्रजनानां हृदयानि मानसानि तेषां भरेणेवातिगुरुर्गरीयान्नितम्बो यस्याः सा ताम्। **उन्नतेति**। उन्नतावुच्चौ यौ कुचौ स्तनौ ताभ्यामन्तरितं व्यवहितं यन्मुखदर्शनमाननवीक्षणं तस्य दुःखेनेव कृच्छ्रेणेव क्षीयमाणः क्षीणतां प्राप्यमाणो मध्यभागो यस्याः सा ताम्। मध्यभागस्याधस्तान्मुखस्योपरिष्टात्तन्मध्ये कुचान्तरालस्य विद्यमानत्वात्तथा दर्शनं न भवति, अङ्कुरितयौवनत्वात्। पूर्णे तु यौवने सर्वथा दर्शनं न भविष्यतीत्यतो दुःखेनेवेत्युक्तमिति भावः। **प्रजापतेरिति**। अतिसौकुमार्यात्स्पृशतः स्पर्शं कुर्वतः प्रजापतेर्ब्रह्मणोऽङ्गुलिमुद्रामिवावर्तिनीं निम्नगां नाभिमण्डलमु(न्तुं)दकू-

---

**टिप्प०—1** कोमल-रक्तयोश्चरणयोररुणा प्रभा परितः प्रसरति अत एव तत्र विद्रुमरसनदीप्रवर्तनस्योत्प्रेक्षा। चरणौ च अङ्गुलीभिर्युतौ, अङ्गुलयश्च चरणरागदीधितय इव, लावण्यजलवेणिका इव, इत्यादिभिः उत्प्रेक्षाभिर्वर्णिता इति 'चरणाभ्यां विद्रुमरसनदीमिव प्रवर्तयन्तीम्' इति विशेषणवाक्यस्य निर्गलितोऽर्थः। 2 भ्रमो वाऽबोधो वा टीकाकृतः। काञ्चीदाम्नः परितः प्रकाशकिरणाः प्रसृताः। अत एव तत्रोत्प्रेक्षा क्रियते परपुरुषाणां दर्शनरोधार्थम्। किरणैरावरणे सति दर्शनं न भवति। 3 नाभिमण्डलीमित्येव पाठः, आवर्तिनीमिति स्त्रीविशेषणानुरोधात्। आवर्तिनीमित्यस्य आवर्तवत् मध्यगर्तो यस्यास्तादृशीमित्यर्थः।

---

**पाठा०—१** वमन्तीभिः. २ अङ्गुलिभिः. ३ सहायम्; सहायिताम्. ४ प्रजापतिकरदृढ. ५ लावण्यजलस्रोत. ६ निरुन्धता.

नाभिमण्डलमावर्तिनीमुद्वहन्तीम्[1], त्रिभुवनविजयप्रशस्तिवर्णावलीमिव लिखितां मन्मथेन रोमराजिमञ्जरीं[2] बिभ्राणाम्, अन्तःप्रविष्टकर्णपल्लवप्रतिबिम्बेनातिभरखिद्यमानहृदयकरतलप्रेर्यमाणेनेव निष्पतता मकरकेतुपादपीठेन स्तनभरेण भूषिताम्, अधोमुखकर्णाभरणमयूखाभ्यामिव प्रसृताभ्याममललावण्यचलमृणालाभ्यां[3] बाहुभ्यां नखकिरणविसरवर्षिणा च माणिक्यवलयगौरवश्रमवशात्[4]स्वेदजलधाराजालकमिव मुञ्चता करयुगलेन समुद्भासिताम्, स्तनभारावनम्यमानमाननमिवोन्नमयता हारेणोच्चैः करै[5]र्गृहीतचिबुकदेशाम्, अभिनवयौवन-

---

पिकामुद्वहन्तीं धारयन्तीम् । **त्रिभुवनेति** । मन्मथेन कंदर्पेण लिखितां लिपीकृतां त्रिभुवनस्य यो विजयो जयस्तस्य प्रशस्तिवर्णाः श्लाघाक्षराणि तेषामावलीमिव रोमराजिमञ्जरीं तनूरुहसमूहवल्लरीं बिभ्राणां दधानाम् । **अन्तरिति** । अन्तःप्रविष्ट एवंभूतः कर्णपल्लवस्य यः प्रतिबिम्बस्तेन तन्मिषेणातिभरेण अर्थात्कामभारेण खिद्यमानं पीड्यमानं यद्धृदयं तस्य मृदुत्वरक्तत्वसाम्यात् । अत्र च प्रतिबिम्बरूपेण करतलेनेव प्रेर्यमाणं नोदनाविषयीक्रियमाणमेवंभूतम् । अतएव निष्पतता बहिर्निःसरता दृढत्वान्मकरकेतोर्मदनस्य पादपीठेनेव पदासनेनेव स्तनभरेण भूषितां मण्डिताम् । **अधोमुखेति** । बाहुभ्यां भुजाभ्यां करयुगलेनैव समुद्भासितां विभ्राजिताम् । बाहुमुत्प्रेक्षयन्नाह—**अधो इति** । अधोमुखेऽवाङ्मुखे ये कर्णाभरणे श्रवणभूषणे तयोर्मयूखाभ्यां किरणाभ्यां प्रसृताभ्यामत्यन्तप्रवृद्धाभ्यामिव । अतिकोमलसाधर्म्यात् उपमान्तरं प्रदर्शयन्नाह—**अमलेति** । अमलं निर्मलं यल्लावण्यजलं पानीयं तस्य मृणालकाभ्यामिव तन्तुलाभ्यामिव । करयुगलं विशेषयन्नाह—**नखेति** । नखाः पुनर्भवास्तेषां किरणास्तेषां विसरः समूहस्तद्वर्षिणा तद्वृष्टिकारिणा । किरणविसरस्य श्वेतत्वसाम्यादाह—**माणिक्येति** । माणिक्यवलयानां रत्नकटकानामप्युद्वहनगौरवेण श्रम इति सौकुमार्यं ध्वन्यते । तद्वशात्स्वेदः प्रस्वेदस्तस्य जलधाराजालकमिव मुञ्चता त्यजता । पुनः कीदृशीम् । **स्तनेति** । हारेण मुक्ताकलापेनोच्चैः करैः स्वकिरणैस्तैरेव वा करैर्गृहीतश्चिबुकदेशो नासिकाधःप्रदेशो यस्याः सा ताम् । किं कुर्वता हारेण । स्तनभारेणावनम्यमानं नम्रतां नीयमानमाननं मुखमुन्नमयतेवोच्चैः कुर्वतेव । **अभीति** । अभिनवं नूतनं यद्यौवनं तारुण्यं तदेव चञ्चलत्वात्पवनस्तेन क्षोभितस्य क्षोभं प्रापितस्य रागसागरस्य रागसमु-

---

**टिप्प०**—1 साहित्यसारभूतायाः कादम्बरीकथाया लोकोत्तरलावण्यवती नायिका तुन्दकूपीपदेन (उपस्थापयति हि तुन्दपदं प्रचण्डनाभीगर्तान्धकारितं वाताध्मातमुदरम्) अभ्यर्च्यत इति धन्या टीका । 2 सौन्दर्येणानया त्रिभुवनं विजितमिति कामदेवसदृशेन ( निर्णायकेन ) लिखितामित्याशयः । 'मन्मथेन आत्मनस्त्रिभुवनविजयस्य प्रशस्तिः स्वयं लिखितेत्यर्थस्तु' मन्ये न तथा मनोरमः स्यात्, स्वयं स्वप्रशस्तिलेखस्यानुचितत्वात् । 3 स्वच्छतया अन्तःप्रविष्टं कर्णपल्लवप्रतिबिम्बं यस्य तादृशेन अतिभरखिद्यमानेन हृदयेन ( कर्त्रा ) करतलेन ( हृदयपतितमेतद्बिम्बमेव हृदयस्य करतलं तेन, 'करणेन' ) प्रेर्यमाणेनेत्यर्थः । अयं भावः—कोमलं हृदयं कामपीठायितस्तनभारेणात्यन्तं खिन्नम् । अत एव कर्णपल्लवप्रतिबिम्बरूपेण स्वस्य ( हृदयस्य ) करतलेन तत् ( स्तनरूपं कामपादपीठम् ) खेदभरासहनतया बहिर्निस्सार्यमाणमस्ति, अत एव तु क्रमशो निर्गच्छतीत्याशयः । टीकाकारः सर्वमस्पष्टीचकार । 4 मयूखाभ्यामिव इति ग्रन्थकृतोऽक्षराणि स्पष्टं पश्यन्, द्वितीयस्य इवशब्दस्य च संबन्धं 'जालकमिवे'ति उत्प्रेक्षान्तरे वीक्षमाणोपि यत्किञ्चिद्वदन् धन्यटीकाकारः । बाहुभ्यां तथा करयुगलेन च समुद्भासितामिति वाक्यार्थः । तत्र बाहुभ्यामित्यत्र कर्णाभरणसंबन्धिस्थूलकिरणत्वं मृणालत्वं चोत्प्रेक्ष्यते । करयुगलसंबन्धिनखकिरणप्रसरणे च स्वेदजलधारावर्षणमुत्प्रेक्ष्यते, इति विवेकिभिराशयो बोध्यः । 5 हस्तैः । यथा हस्तैस्तथा किरणैश्चिबुकप्रदेशः स्पृष्टः । उन्नामयता इवेत्युत्प्रेक्षा, करशब्दश्लेषमूलकेन चिबुककर्मकस्पर्श-ग्रहणयोरभेदाध्यवसायेनातिशयोक्तिश्लेषयोः संकरः ।

---

**पाठा०**—१ मण्डलीम्; स्थलीम्. २ रोमराजी. ३ मृणालकाण्डाभ्याम्. ४ वहनश्रमात्. ५ ऊर्ध्वैः.

पवनक्षोभितस्य रागसागरस्य तरङ्गाभ्यामिवोद्गताभ्यां विद्रुमलतालोहिताभ्यामधराभ्यां रक्तावदातस्वच्छकान्तिना च मदिरारसपूर्णमाणिक्यशुक्तिसंपुटच्छविना कपोलयुगलेन रतिपरिवादिनीरत्नकोणचारुणा नासावंशेन च विराजमानाम्, गतिप्रसरनिरोधिश्रवणकोपादिव किंचिदारक्तापाङ्गेन निजमुखलक्ष्मीनिवासदुग्धोदधिना लोचनयुगलेन लो[1]चनमयमिव जीवलोकं कर्तुमुद्यताम्, उन्मदयौवनकुञ्जरमदराजिभ्यां भ्रूलताभ्यां मनःशिलापङ्कलिखितेन च रा[2]गाविष्टेन मन्मथहृदयेनेव वदनलग्नेन तिलकविन्दुना विद्योतितललाटपट्टाम्, उ[3]त्कृष्टहेमतालीपट्टाभरणमयमामुक्तकर्णोत्पलच्युतमधुधारासंदेहकारिणं कर्णपाशं दोलायमानपत्रमरकतमाणिक्यकुण्डलं दधतीम्, पाटलीकृतललाटेन सीमन्त[4]चुम्बिनश्चूडामणेः क्षरतांशु[5]जालेन मदिरारसेनेव प्रक्षाल्यमानदीर्घकेशकलापाम्, देहार्धप्रविष्टहरगर्वितगौरीविजिगीषयेव सर्वाङ्गानुप्रवि-

---

द्रस्योद्गताभ्यां प्रादुर्भूताभ्यां तरङ्गाभ्यामिव। **विद्रुमेति**। विद्रुमलतावल्लोहिताभ्यां रक्ताभ्यामधराभ्यां दन्तच्छदाभ्यां तथा रक्तावदातेन स्वच्छा निर्मला कान्तिर्यस्यैवंविधेन। **मदिरेति**। मदिरारसः कापिशायनद्रवस्तेन पूर्णं भृतं माणिक्यशुक्तिसंपुटं तद्वच्छविः कान्तिर्यस्यैवंविधेन कपोलयुगलेन। तथा रतेः परिवादिनी सप्ततन्त्रीभिर्युक्ता वीणा तस्या रत्नमयो यः कोणो [1]वीणादिवादनं तद्वच्चारुणा मनोहरेण नासावंशेन च नासिकावेणुना च विराजमानां शोभमानाम्। **गतीति**। गतिर्गमनं तस्य प्रसरो विस्तारस्तस्य निरोधि प्रतिद्वन्द्वि यच्छ्रवणं तस्य यः कोपस्तस्मादिव किंचिदारक्तेऽपाङ्गे निर्याणे यस्य स तेन। **निजेति**। निजमात्मीयं यन्मुखं तस्य या लक्ष्मीः श्रीस्तस्या निवासार्थं दुग्धोदधिना क्षीरसमुद्रेणैवंविधेन लोचनयुगलेन नेत्रयुग्मेन लोचनमयमिव जीवलोकं कर्तुमुद्यताम्। कपोलावधिश्यामलेखाद्वयसाम्येनाह—**उन्मदेति**। उद्गतो मदो यस्मादेवंभूतं यद्यौवनं स एवानिवार्यत्वात्कुञ्जरस्तस्य मदो दानं तस्य राजीव राजी ताभ्यां भ्रूलताभ्याम्। तथा रागोऽनुरागस्तेनाविष्टेन व्याप्तेन। अथ च राग आरुण्यम्। तिलकारुण्यमिति यावत्। एवंविधेन मन्मथहृदयेनेव कंदर्पस्वान्तेनेव वदनलग्नेन मनःशिलापङ्कलिखितेन तिलकविन्दुना विद्योतितं प्रकाशितं ललाटपट्टं यस्याः सा ताम्। केचित्तु—मन्मथो हृदये यस्मात्, तिलकारुण्यं दृष्ट्वा यूनां हृदये मन्मथावेश एवंविधेनेवेति व्याख्यानयन्ति। पुनः किं कुर्वन्तीम्। दधतीं धारयन्तीम्। कर्णपाशं कर्णाभ[2]रणविशेषम्। दोलायमानं पत्रं स्वर्णपत्रं यस्मिन्नेतादृशं मरकतमाणिक्यनिर्मितं कुण्डलं च। आद्यं विशेषयन्नाह—**उत्कृष्टेति**। उत्कृष्टा अत्यद्भुता या हेमताली स्वर्णताली तस्याः पट्टाभरणेन निर्मितम्। तस्य च पिङ्गवर्णत्वात्कमलमकरन्दस्याप्येवंभूतत्वात्तत्साम्येनाह—**आमुक्तेति**। आमुक्तं परिधानीकृतं यत्कर्णोत्पलं श्रवणकुवलयं तस्माच्च्युता स्रस्ता या मधुधारा तस्याः संदेहकारिणमारेकाजनकम्। **पाटलीति**। पाटलीकृतं श्वेतरक्तीकृतं ललाटमलिकं येनैवंविधेन सीमन्तचुम्बिनः केशवर्त्मचुम्बिनश्चूडामणेः शिरोमणेरंशुजालेन किरणसमूहेन। क्षरता स्रवता अनेकवर्णत्वसाम्यादाह—मदिरारसेनेव प्रक्षाल्यमानो दीर्घ आयतः केशकलापोऽलकसमूहो यस्याः सा ताम्। **देहेति**। देहार्धे शरीरार्धे प्रविष्टो यो हर ईश्वरस्तेन गर्विता गर्वं प्राप्ता या गौरी तद्विजिगीषयेव विजेतुमिच्छयेव। सर्वाङ्गेष्वनुप्रविष्टो हरविरोधी मन्मथस्तेन दर्शितः सौभाग्यविशेषो यस्याः सा ताम्। एतेन सर्वाङ्गानङ्गप्रवेशेन गौर्याः सका-

---

**टिप्प०**—1 'मिजराफ' इति प्रसिद्धः। 2 कर्णपाशनामको नाद्यावधि श्रुतो भूषणविशेषः। पाशाकारं (शष्कुल्याकारं) कर्णमित्यर्थः। उत्कृष्टहेमनिर्मिततालीपत्राकार(भूषणविशेष)व्याप्तम्, दोलायमानं स्वर्णपत्रं यस्मिन्नेतादृशं मरकतमाणिक्याभ्यां निर्मितं कुण्डलं यस्मिन् (बहुव्रीहिगर्भो बहुव्रीहिः) एवंविधं कर्णपाशम् (प्रशस्तं कर्णम्) दधतीमिति तदर्थः। कर्णे कुण्डलं कुण्डले च तदवयवभूतं स्वर्णपत्रम् ('पीपलपत्ता' इत्यादि भाषाख्यातम्) इति बहुव्रीहिद्वयार्थः।

---

पाठा०—१ नयनमयम्. २ रागाविष्ट. ३ एकमाश्लिष्टहेमताटीपुराभरणमपरम्. ४ चुम्बितचूडामणेः. ५ रागेण.

ष्टमन्मथदर्शितसौभाग्यविशेषाम्, उरःसमारोपितलक्ष्मीमुदितनारायणावलेपहरणाय प्रतिविम्बकैर्निजरूपतो लक्ष्मीशतानीव सृजन्तीम्, उत्तमाङ्गनिहितैकचन्द्रविस्मितहराभिमाननाशाय विलासस्मितैश्चन्द्रसहस्राणीव दिक्षु क्षिपन्तीम्, निर्दयदग्धैकमन्मथप्रमथनाथरोषेणेव प्रतिहृदयं मन्मथायुतान्युत्पादयन्तीम्, रजनीजागरखिन्नस्य परिचितचक्रवाकमिथुनस्य स्वप्तुं क्रीडानदिकासु कमलधूलिवालुकाभिर्वालपुलिनानि कारयन्तीम्, 'परिजननूपुररवप्रस्थितं दुर्लभं च हंसमिथुनं मृणालनिगडकेन बद्ध्वानय' इति हंसपालीमादिशन्तीम्, आभरणमरकतमयूखांल्लिहते हरिणशावकाय सखीश्रवणादपनीय यवाङ्कुरप्रसवं प्रयच्छन्तीम्, आत्मवर्धितलताकुसुमनिर्गमनिवेदनागतामुद्यानपालीमशेषाभरणदानेन संमानयन्तीम्, उपनीतविविधवनकुसुमफलपूर्ण-

---

शादस्याः सौभाग्यातिशयो व्यज्यते । **उर इति** । उरःस्थले समारोपिताऽवस्थापिता या लक्ष्मीस्तया मुदितो हर्षं प्राप्तो यो नारायणस्तस्य योऽवलेपोऽहंकारो मत्सदृशः कोऽपि नास्ति, अन्येषां लक्ष्मीर्वर्तते सा बहिःसंयोगवियोगमात्रेण परं न शरीरान्तर्गतेत्येवंरूपस्तस्य हरणाय निवृत्तेर्निजरूपत आत्मीयदेहस्य । सार्वविभक्तिकस्तस् । तस्य प्रतिविम्बकैः प्रतिच्छायैर्लक्ष्मीशतानीव सृजन्तीं कुर्वन्तीम् । उत्तमाङ्गे शिरसि निहितः स्थापितो य एकोऽद्वितीयश्चन्द्रः शशी तेन विस्मितो हर ईश्वरस्तस्याभिमानोऽहंकारः एका चन्द्रस्य कला, सापि खोत्तमाङ्ग एव, नान्यस्य कस्यचित्, स्वतन्ववयवे बहिर्वा, इत्येवंरूपस्तद्वैपरीत्येन तदभि(मान)नाशाय विशदाह्लादकत्वसाम्येन विलासस्मितैर्दिक्षु चन्द्रसहस्राणीव क्षिपन्तीम् । तादृशस्मितान्येव चन्द्रसहस्ररूपतां प्राप्तानीत्यर्थः । **निर्दयदग्धेति** । निर्दयं निष्करुणं दग्धो ज्वालित एकोऽद्वितीयो मन्मथः कंदर्पो येनैवंभूतो यः प्रमथनाथ ईश्वरस्तस्मिन्यो रोषः क्रोधस्तेनेव प्रतिहृदयं मन्मथस्यायुतानि संख्याविशेषाण्युत्पादयन्तीं निर्माणं कुर्वन्तीम् । **रजनीति** । रजन्यां यो जागरो जागरणं तेन खिन्नस्यैवंविधस्य परिचितं स्ववशमानीतं यच्चक्रवाकमिथुनं द्वन्द्वचरयुग्मं तस्य स्वप्तुं शयनं कर्तुं क्रीडानदिकासु क्रीडातटिनीषु कमलानां नलिनानां धूलयः परागास्ता एव वालुकाः सिकतास्ताभिर्वाल[1]पुलिनानि स्वसैकतानि कारयन्तीम् । अत्र पूर्वोक्तेषु वक्ष्यमाणेषु वा यत्र यत्र द्रव्यगुणक्रियाभिः प्रस्तुतप्रशंसा तत्र सर्वत्र यथोचितं तत्तदतिशया एव व्यङ्ग्याः स्वयं बोद्धव्याः । यथा निजरूपतः प्रतिविम्बैरित्यत्र रूपातिशयः । यथा वा रजनीत्यत्र कमलातिशयः पुलिनक्रियातिशयश्च । **परिजनेति** । परिजनः परिच्छदलोकस्तस्य नूपुराणि पादकटकानि तेषां रवः शब्दस्तेन प्रस्थितं चलितं दुर्लभं दुष्प्रापं च हंसमिथुनं चक्राङ्गयुग्मं मृणालं तन्तुलं तदेव निगडकमन्दुकस्तेन बद्ध्वा नियम्यानय मत्समीपं प्रापय । इति हंसपालीं हंसरक्षानियुक्तामादिशन्तीं कथयन्तीम् । पुनः किं कुर्वन्तीम् । आभरणानां भूषणानां मरकतान्यश्मगर्भाणि तेषां मयूखान्किरणांल्लिहत आस्वादयते हरिणशावकाय मृगशिशवे सखीश्रवणाद्वयस्याकर्णाद्यवाङ्कुरप्रसवं हयप्रियोद्गमपुष्पमपनीय दूरीकृत्य प्रयच्छन्तीं ददतीम् । **आत्मेति** । आत्मवर्धिता स्वयं वृद्धिं प्रापिता या लता वल्ली तस्यां कुसुमनिर्गमः पुष्पप्रादुर्भावस्तस्य निवेदनाय कथनायागतां प्राप्तामुद्यानपालीं वनरक्षानियुक्तामशेषाभरणदानेन समग्रभूषणप्रदानेन संमानयन्तीं संमानं कुर्वन्तीम् । **उपेति** । उपनीतान्यानीतानि विविधान्यनेकप्रकाराणि वनकुसुमफलानि तैः पूर्णं भृतं पत्रपुटं यया सा ताम् । अविज्ञायमानो य आलापः संलापस्तस्य भावस्तत्ता तया हासहेतुं परिहासनिमित्तं पुनःपुनर्भूयोभूयः क्रीडापर्वतस्य पत्रशबरीं[2] पुलिन्दपत्नीम् ।

**टिप्प०**—1 लघुसैकतानि । 2 'पुलिन्दः पत्रशबरः' इति रत्नकोशकल्पनं धौर्त्यमेव टीकाकृतः । 'क्रीडापर्वतकपातृशबरीम्' इत्येव पाठः । क्रीडापर्वतस्य पात्री रक्षिका या शबरीति तदर्थः । हंसपाली—उद्यानपालीति प्रकरणेन पर्वतपालिकायाश्च स्पष्टं प्रतिभासनात् । प्राकृतपर्वते निवसन्ती शबरी मनुष्यभाषां न जानाति । किन्तु कृत्रिमक्रीडापर्वतरक्षिकाऽपि स्वस्वामिनो भाषां न बुध्यत इति अतिशयकल्पनमेव बाणस्य ।

पाठा०—१ एकलक्ष्मी. २ खिन्नस्य. ३ प्रस्थितं वल्लभं च हंसमिथुनम्; प्रस्थितं च वल्लभहंसमिथुनम्. ४ लिहते हरिततृणसूचीलोभेन. ५ भवनहरिण. ६ संवर्धितलताप्रथमकुसुम.

पत्रपुटामविज्ञायमानालपतया हासहेतुं पुनः पुनः क्रीडापर्वतपत्रशबरीमालपन्तीम्[1][2], करतलविनिहितैर्मुहुर्मुहुरुत्पतद्भिश्च[3] मुखपरिमलान्धैर्नीलकञ्चुकैरिव[4] मधुकरैः क्रीडन्तीम्, पञ्जरहारीतकरुतश्रवणकृतदुष्टस्मितां[5] चामरग्राहिणीं विहस्य लीलाकमलेन शिरसि विघट्टयन्तीम्, मुक्ताफलखचितचन्द्रलेखिकासंक्रान्तप्रतिमां[6] स्वेदजलबिन्दुजालचितनखपदाभिप्रायेण[7] ताम्बूलकरङ्कवाहिनीं पयोधरे[8] पटवासमुष्टिना ताडयन्तीम्, रत्नकुण्डलप्रतिविम्बसान्द्रदत्तनवनखपदमण्डलाशङ्कया[9] चामरग्राहिणीं विहस्य कपोले प्रसादव्याजेन[10] दत्तेनात्मकर्णपूरपल्लवेनाच्छादयन्तीम्, पृथिवीमिव समुत्सारितमहाकुलभूभृद्व्यतिकरां[11] शेषभोगनिषण्णाम्[12], मधुमासलक्ष्मीमिव[13] षट्पदपटलापह्रियमाणकुसुमरजोधूसरपादपरागाम्, शरदमिवोत्पादितमानसजन्म-

---

'पुलिन्दः पत्रशवरः' इति रत्नकोशः। आलपन्तीं जल्पन्तीम्। **करेति**। करतले हस्ततले विनिहितैः स्थापितैर्मुहुर्मुहुर्वारंवारमुत्पतद्भिरुत्पतनं कुर्वद्भिर्मुखस्य यः परिमलस्तेनान्धैः। नीलत्वसाम्यादाह—**नीलेति**। नीलकञ्चुकैरिव मधुकरैर्भ्रमरैः क्रीडन्तीं क्रीडां कुर्वन्तीम्। **पञ्जरेति**। पञ्जरे वंशदलनिर्मिते पात्रे यो हारीतको मृदङ्करस्तस्य रुतश्रवणेन कृतं दुष्टं गूढं स्मितं यया सा ताम्। एवंविधां चामरग्राहिणीं विहस्य शिरसि मस्तके लीलाकमलेन विघट्टयन्तीं ताडयन्तीम्। **मुक्तेति**। मुक्ताफलानि रसोद्भवानि तैः खचिता या चन्द्रलेखिका चन्द्रलेखाकृतिराभरणविशेषस्तस्याः संक्रान्ता प्रतिविम्बिता प्रतिमा यस्यां सैवंविधां ताम्बूलकरङ्कवाहिनीं स्वेदजलविन्दुजालेन चितं व्याप्तं यन्नखपदं तस्याभिप्रायेण पयोधरे कुचे पटवासः पिष्टातस्तस्य मुष्टिना ताडयन्तीम्। अत्रायमभिप्रायः—मुक्ताफलानां जलविन्द्वनुकारित्वाच्चन्द्रलेखिकायाश्च वक्रत्वेन नखक्षतानुकारित्वात्ताम्बूलकरङ्कवाहिनीवक्षसि गौररूपातिशयवति मुक्ताचन्द्रिकायाः प्रतिविम्बसंक्रान्त्या चौर्यरतपिशुनं स्वेदविन्दुजालचिते नखपदं कस्येदमित्यभिप्रायेण यत्र तद्दर्शनं तत्रैव चूर्णक्षेपः। एतेन रतगोपनं व्यज्यते। **रत्नेति**। रत्नकुण्डलस्य यः प्रतिविम्वः प्रतिच्छायस्तेन सान्द्रं दत्तं यन्नवनखपदमण्डलं तस्याशङ्कयारेकया वा चामरग्राहिणीं वालव्यजनधारिणीं विहस्य कपोले प्रसादः प्रसन्नता तद्व्याजेन तन्मिषेण दत्तेनार्पितेनात्मनः स्वकीयस्य यः कर्णपूरपल्लवस्तेनाच्छादयन्तीमाच्छादनं कुर्वन्तीम्। एतेन रत्नकुण्डलस्य वक्रलोहितातिशयवन्नखक्षतिसाम्यं प्रदर्शयन्नाह—**समुत्सारितेति**। समुत्सारितो दूरीकृतो महाकुलानां भूभृतां राज्ञां व्यतिकरो वृत्तान्तो यया सा ताम्। कादम्बर्याः पितुरपेक्षयान्येषां राज्ञां न्यूनत्वादिति भावः। पक्षे महाकुलभूभृतां कुलाचलानां व्यतिकरः सामर्थ्यं यया सा ताम्। शेषा उर्वरिता अन्यजनैरस्पृष्टा ये भोगास्तत्र निषण्णामुपविष्टाम्। पक्षे शेषस्य नागाधिपस्य यो भोगोऽहिकायस्तत्र निषण्णां स्थिताम्। **मधुमासेति**। मधुमासश्चैत्रमासस्तस्य लक्ष्मीः श्रीस्तामिव। उभयोः साम्यं प्रदर्शयन्नाह—**षट्पदेति**। षट्पदानां भ्रमराणां पटलैरपह्रियमाणं यत्कुसुमरजस्तेन धूसर ईषत्पाण्डुः पादयोश्चरणयोः पराग उपरागो यस्याः। 'परागः ख्यात्युपरागयोः' इति विश्वः। पक्षे पादपानां वृक्षाणां राग आरुण्यं यस्याम्। **शरदिति**। शरद्धनात्ययस्तामिव। उभयोः साम्यमाह—**उत्पादितेति**। उत्पादितो जनितो मानसं मनस्तस्माज्जन्म यस्य स मानसजन्मा कंदर्पस्तस्य पक्षो

---

**टिप्प०—1 सर्वथा मूढ एव टीकाकारः। 'भूभृद्व्यतिकरशेषभोगनिषण्णाम्' इत्येव पाठः। 'महाश्वेतायां सशोकायां नाहं पाणिं ग्राहयिष्यामि' इति प्रतिज्ञानुसारं दूरीकृतः महाकुलानां भूभृतां (राज्ञाम्) व्यतिकरः संसर्गसुखं तस्मात् शेषेषु (अवशिष्टेषु) सुखेषु स्रक्चन्दन-सखीविनोदादिषु स्थिताम्। पक्षान्तरे तु ज्ञात एवार्थः, अर्थात् समुत्सारितः स्वसमीपं प्रापितः कुलशैलानां व्यतिकरः सम्बन्धो यया तादृशी च शेषस्य शरीरे निषण्णा चेति।**

---

**पाठा०**—१ पर्वतकशवरीम्; पर्वतकपात्रशवरीम्. २ आलपयन्तीम्. ३ विनिहतैः; अभिहतैर्मुहुरुपसर्पद्भिरुपसर्पद्भिश्च. ४ कन्दुकैः. ५ हारीतकलरुत. ६ लेखिकाप्रतिम. ७ जालाञ्चित. ८ स्तनतटे. ९ प्रतिविम्बमार्द्रदन्तव्रणमण्डल. १० व्याज. ११ भूभृद्वरव्यतिकर. १२ शेषभोगेषु निषण्णां च. १३ सखीम्.

पक्षिरवापनीतनीलकण्ठमदाम्, गौरीमिव श्वेतांशुकर[1]चितोत्तमाङ्गाभरणाम्, उदधिवेलावन-लेखामिव मधुकरकुलनीलतमालकाननाम्, इन्दुमूर्तिमिवोद्दाममन्मथविलासगृहीतगुरुकल-त्राम्, वनराजिमिव पाण्डुश्यामलवलीलतालंकृतमध्याम्, दिनमु[2]खमिव भास्वन्मुक्तांशुभि-न्नपद्मरागप्रसाधनाम्, आकाशकमलिनीमिव स्वच्छाम्बरदृश्यमानमृणालकोमलोरुमूलाम्, मयूरावलीमिव नितम्बचुम्बिशिखण्डभारविस्फुरच्चन्द्रकान्ताम्, कल्पतरुलतामिव कामफल-

---

विद्यते येषां मानसजन्[1]मपक्षिणां रव उपभोगानुकूलः शब्दो यया सा । कामिनामुपभोगविषयकालाप उद्दीप-कत्वात्कादम्बर्यैवोत्पादित इत्यर्थः । ततोऽपनीतो दूरीकृतो नीलकण्ठो मदनदाहको महादेवस्तस्य मदः । मदनसहस्रोत्पादकत्वस्य पूर्वमुक्तत्वात्पश्चात्कर्मधारयः । ताम् । पक्षे मानसजन्मानो ये पक्षिणस्तेषां रवेण शब्देनापनीतो दूरीकृतो नीलकण्ठस्य मयूरस्य मदो यया सा ताम् । **गौरीति** । गौरी पार्वती तामिव श्वेतमंशुकं वस्त्रं यस्याः सा । विरचितान्युत्तमाङ्गावध्याभरणानि भूषणानि यया सा । पश्चात्कर्मधारयः । ताम् । पक्षे श्वेता अंशवः किरणा यस्यैवंभूतः श्वेतांशुकश्चन्द्रः स एव रचित उत्तमाङ्ग आभरणं यया । हारस्येति शेषः । **उदधीति** । उदधिः समुद्रस्तस्य वेलावनं समीपवर्ति काननं तस्या लेखा राजिस्तामिव । **मध्विति** । मधुकराणां भ्रमराणां कुलं समुदायस्तद्वन्नीलतमा अतिशयेन हरिता अलकाः केशा आनने मुखे यस्याः सा ताम् । पक्षे मधुकरकुलयुक्तं नीलतमालकाननं यस्याम् । **इन्दुमूर्तीति** । इन्दुश्चन्द्रस्तस्य मूर्तिस्तामिवोद्दामा उत्कटा ये मन्मथविलासाः कंदर्पविभ्रमास्तैर्गृहीतं स्वीकृतं गुरु महत्कलत्रम् । 'कलत्रं श्रोणिभार्ययोः' इति विश्वः । पक्षे उद्दाममन्मथविलासैर्गृहीतमात्तं गुरोर्बृहस्पतेः कलत्रं भार्या यया सा ताम् । कामव्याकुलचेतसा चन्द्रेण बृहस्पतेस्तारापहृतेति पुराणप्रसिद्धम् । **वनेति** । वनस्य राजिर्लेखा तामिव । उभयोः शब्दसाम्यमा-ह—**पाण्ड्विति** । अङ्कुरितयौवनत्वाच्छ्यामलाः कृष्णा वलयस्त्रिवल्यस्ता एव सरलत्वसाम्याल्लता वलयस्ताभि-रलंकृतो मध्यः कटिप्रदेशो यस्याः सा ताम् । पक्षे लवली लताः ताभिरलंकृतो भूषितो मध्यो मध्यप्रदेशो यस्याः सा ताम् । **दिनमिति** । दिनस्य वासरस्य मुखमा[2]ननं तद्वदिव । **भास्वदिति** । भास्वन्त्यो दीप्यन्त्यो या मुक्ता मुक्ताफलानि तेषामंशुभिः किरणैर्भिन्नानि मिश्रितानि पद्मरागाणां प्रसाधनानि भूषणानि यस्याः सा ताम् । पक्षे भास्वता सूर्येण मुक्ता येंऽशवः किरणास्तैर्भिन्नानि विकसितानि यानि पद्मानि कमलानि तेषां रागो रङ्गः स एव प्रसाधनं यस्याः सा ताम् । **आकाशेति** । आकाशं व्योम तस्य कमलिनी स्वर्गीयनलिनी तामिव । **स्वच्छेति** । स्वच्छं निर्मलं यदम्बरं तस्मिन्दृश्यमानं विलोक्यमानं मृणालवत्कोमलमूरुमूलं सक्थिमूलं यस्याः सा ताम् । पक्षे स्वच्छेऽम्बर आकाशे मृणालस्य तन्तुलस्य कोमलं सुकुमारमुरु विस्तीर्णं मूलं बुध्नं यस्याम् । **मयूरेति** । मयूराणां कलापिनामावली श्रेणी तामिव । **नितम्बेति** । नितम्बः कटकस्तच्चुम्बिनि, अर्थाद्[3]द्रे, शिखण्डभारवत्कलापिपिच्छसमूहवच्चन्द्रकाश्चन्द्राकृतयो बिन्दवोऽन्ते प्रान्ते यस्याः सा ताम् । पक्षे नितम्बचुम्बि-शिखण्डभारस्तस्मिन्विस्फुरिता देदीप्यमानाश्चन्द्रका मेचका अन्ते यस्याः सा ताम् । **कल्पेति** । कल्पतरुर्मन्दारः सरलत्वात्स एव लता तामिव । उभयोः सादृश्यमाह—**कामेति** । कामं वा[4]ञ्छितं यत्फलं तस्य प्रदामित्यभङ्ग-

---

**टिप्प०**—1 सर्वथानधिकारी टीकाकारः । उत्पादितस्य स्व-भावविलासेन जनितस्य मानसजन्मनः (कामस्य) पक्षिणां कङ्कपक्षयुक्तानां बाणानां रवेण अपनीतो नीलकण्ठस्य (शिवस्य) मदः (तेन कामो दग्धः, कादम्बर्यां तु स्वसामर्थ्येनोत्पादितः) यया तामित्यर्थः । अन्योर्थः स्फुटः । 2 उपमायां लिङ्गभेदो दोषायेति 'दिनमुखलक्ष्मीमिव' इत्येव पाठः । प्रभातलक्ष्मीः (शोभा) इति तदर्थः । 3 धिक्टी-काम् । नितम्बचुम्बी शिखण्डभारः (केशपाशः) यस्याः सा चासौ च विस्फुरन् (शोभमानः) चन्द्र इव कान्ता (कमनीया) चेति स्फुटोर्थः । 4 धिक् । कादम्बरीपक्षे—कामफलं मदनविकाररूपं फलं प्रददातीत्यर्थः ।

---

पाठा०—१ विरचित. २ मुखलक्ष्मीम्.

प्रदाम्, पुरः[1] समीपे संमुखोपविष्टाम् 'कोऽसौ, कस्य वापत्यम्, किमभिधानो वा, कीदृशमस्य रूपम्, कियद्वा वयः, किमभिधत्ते, भवता[2] किमभिहितः[3], कियच्चिरं दृष्टस्त्वया, कथं चास्य महाश्वेतया सह परिचय उपजातः, किमयमत्रागमिष्यति' इति मुहुर्मुहुश्चन्द्रापीडसंबद्धमेवालापं[4] तद्रूपवर्णनामुखरं केयूरकं पृच्छन्तीं कादम्बरीं ददर्श ।

तस्य तु दृष्टकादम्बरी[5]वदनचन्द्रलेखालक्ष्मीकस्य सागरस्येवामृतमुल्ललास हृदयम् । आसीच्चास्य मनसि—'शेषेन्द्रियाण्यपि मे वेधसा किमिति लोचनमयान्येव न कृतानि । किं वानेन कृतमवदातं कर्म चक्षुषा यदनिवारितमेनां पश्यति । अहो चित्रमेतदुत्पादितं वेधसा सर्वरमणीयानामेकं धाम । कुत एते रूपातिशयपरमाणवः समासादिताः । तन्नूनमेनामुत्पादयतो विधेः करतलपरामर्शक्लेशेन ये विगलिता लोचनयुगलादश्रुजलबिन्दवस्तेभ्य एतानि जगति कुमुदकमलकुवलयसौगन्धिकवनान्युत्पन्नानि' इत्येवं चिन्तयत एवास्य तस्या नयनयुगले[6] निपपात चक्षुः । तदा तस्या अपि नूनमयं स केयूरकेणावेदित इति चिन्तयन्त्या रूपातिशयविलो-

श्लेषः । **पुर इति** । पुरोऽग्रे समीपे सविध उपविष्टमासीनं कोऽसौ चन्द्रापीडः, कस्य च राज्ञोऽपत्यं प्रजाः, किमभिधानो वा किंनामा, कीदृशमस्य रूपं सौन्दर्यम्, कियद्वा कियत्प्रमाणं वयोऽवस्थाविशेषः, किमभिधत्ते किं कथयति, भवता किमभिहितः किं कथितः, त्वया कियच्चिरं कियत्कालं दृष्टः । **कथं चेति** । केन प्रकारेणास्य पुरोवर्तिपुरुषस्य महाश्वेतया सह परिचयः संस्तव उपजातः । किमयमत्रागमिष्यतीति मुहुर्मुहुश्चन्द्रापीडसंबद्धं चन्द्रापीडविषयकमेवालापं वार्तां तस्य चन्द्रापीडस्य या वर्णनाप्रशंसा तत्र मुखरं वाचालं केयूरकं पृच्छन्तीं प्रश्नविषयीकुर्वन्तीं कादम्बरीं ददर्शेति प्रागुक्त एवान्वयः ।

**तस्य त्विति** । तस्य चन्द्रापीडस्य हृदयं चेत उल्ललासोच्छ्वसितं बभूव । कीदृशस्य । दृष्टा वीक्षिता कादम्बरीवदनचन्द्रलेखाया लक्ष्मीर्येन स तस्य । कस्येव । सागरस्येवामृतं पानीयं यथा चन्द्रलेखादर्शनादुल्लसति । **आसीदिति** । अस्य चन्द्रापीडस्य मनसि चित्त एवमासीद्बभूव । वेधसा ब्रह्मणा मे मम शेषेन्द्रियाण्यपि चक्षुर्व्यतिरिक्तान्यपि करणानि किमिति हेतोर्लोचनमयान्येव न कृतानि न विहितानि । **किं वेति** । अनेन चक्षुषा लोचनेन किमिति प्रश्ने । अवदातं शुद्धं कर्म कृतं विहितम् । अत्रार्थे हेतुं प्रदर्शयन्नाह—**यदिति** । यद्यस्माद्धेतोरनिवारितं यथा स्यात्तथैतां कादम्बरीं पश्यति विलोकयति अहो चित्रमाश्चर्यमेतत् । यद्वेधसा सर्वरमणीयानां समग्रमनोहराणामेकमद्वितीयं धाम गृहमुत्पादितं निर्मितम् । **एते इति** । एते रूपातिशयपरमाणवो वेधसा कुतः समासादिताः कुतः प्राप्ताः । तन्नूनं निश्चितमेनां कादम्बरीमुत्पादयतो विधेर्ब्रह्मणः करतलस्य हस्ततलस्य परामर्शः संबन्धस्तस्माद्यः क्लेशस्तेन ये विगलिताः स्रस्ता लोचनयुगलान्नेत्रयुग्मादश्रुजलबिन्दवस्तेभ्यः [कर्मकठिनाभ्यां करतलाभ्यां परामर्शः सर्वावयवैः संपूर्णो देहः सिद्ध इत्याशयेन सर्वाङ्गेषु स्पर्शनं तन्निमित्तकः क्लेशः श्रमः अतिसौकुमार्यात् तेन ये नयनजलबिन्दवस्तेभ्यो बिन्दुभ्यो] जगति लोके कुमुदानि कैरवाणि कमलानि नलिनानि कुवलयान्युत्पलानि सौगन्धिकानि कह्लाराण्येतेषां वनान्युत्पन्नानि समुद्भूतानि । 'कारणगुणा हि कार्यगुणमारभन्ते' इत्यतिश्वेतसुकुमारावयवजनितानि कुमुदानीत्यर्थः । इत्येवं चिन्तयतो ध्यायत एवास्य चन्द्रापीडस्य तु तस्याः कादम्बर्या नयनयुगले चक्षुर्निपपात दृढसंलग्नं बभूव । **तदेति** । तस्मिन्काले तस्या अपि कादम्बर्या अपि नूनं निश्चितं पूर्वं केयूरकेण मदनुचरेणावेदितो निवेदितः सोऽयमिति चिन्तयन्त्या ध्यायन्त्या रूपातिशयविलोकने यो विस्मयश्चित्रं तेन सेरं विनिद्रं निश्चलं निबद्धं लक्षं[2] येनैवंविधं चक्षुस्तस्मिंश्चन्द्रापीडे

टिप्प०—1 प्रकोष्ठमध्यगतो भागः पुनरुक्तप्रायः । इतस्तात्पर्यमात्रं ग्राह्यम् । 2 लक्ष्यमित्युचितम् ।

पाठा०—१ पुरःशयनसमीपे. २ भवतां च. ३ अभिहितम्. ४ संवद्धालापम्; संवद्धालापरूप. ५ कादम्बरी. ६ आनने.

कनविस्मयस्मेरं निश्चलनिबद्धलक्षं [1]चक्षुस्तस्मिन्सुचिरं पपात । लोचनप्रभाधवलितस्तु काद-म्बरीदर्शनविह्वलोऽचल [2]इव [3]तत्क्षणमराजत चन्द्रापीडः । दृष्ट्वा [4]च प्रथमं रोमोद्गमः, ततो भूषणरवः, तदनु कादम्बरी समुत्तस्थौ ।

अथ तस्याः कुसुमायुध एव स्वेदमजनयत्, ससंभ्रमोत्थानश्रमो [5]व्यपदेशोऽभवत् । ऊरु[6]कम्प एव गतिं रुरोध, नूपुररवाकृष्टहंसमण्डलम[7]पयशो लेभे । [8]निःश्वासप्रवृत्तिरेवांशुकं चलं चकार, चामरानिलो निमित्ततां ययौ । अन्तःप्रवि[9]ष्टचन्द्रापीडस्पर्शलोभेनैव निपपात हृदये हस्तः, स एव करः [10]स्तनावरणव्याजो बभूव । आनन्द एवाश्रुजलमपातयत्, चलितकर्णाव-तंसकुसुमरजो [11]व्याजमासीत् । लज्जैव वक्तुं न ददौ, मुखकमलपरिमलागतालिवृन्दं द्वारताम-गात् । मदनशरप्रथमप्रहारवेदनैव सीत्कारमकरोत्, कुसुमप्रकरकेतकीकण्टकक्षतिः साधा-

---

सुचिरं पपात । **लोचनेति** । लोचनप्रभा नेत्रकान्तिः । कादम्वर्या इति शेषः । तया धवलितः शुभ्रीकृतः कादम्वर्या दर्शनं सम्यक्तया विलोकनं तत्र विह्वलो व्याकुलोऽचल इव पर्वत इव तत्क्षणं तस्मिन्समये चन्द्रापीडोऽराजताशोभत । तत्र निश्चलत्वसाम्यात्पर्वतानुमानमित्यर्थः । एवमुभयोर्लोचनविषयतां प्राप्तयोर्विशेषोक्त्या विभावना वा व्यभिचारिभावा अनुभावाश्च वक्तुमुपक्रमते—**दृष्ट्वेति** । दृष्ट्वा विलोक्य प्रथममादौ रोमोद्गमो रोमाञ्चः समभूत् । तदुक्तमन्यत्र—'अपूर्वप्रियदर्शने । बध्नन्नङ्गेषु रोमाञ्चः' इति । ततो भूषणरव आभरणसिञ्जितम् । तदनु तदनन्तरं कादम्वरी समुत्तस्थावुत्थितवती ।

अथेति समुत्थानानन्तरं तस्याः कादम्वर्याः कुसुमायुध एव स्वेदमजनयत् । सर्वोऽप्ययं प्रपञ्चश्चन्द्रापीडविषयकः कादम्वर्या मनस्युत्कण्ठानिवृत्त्यतिशयप्रतिपादनपरश्च । एतदेव स्पष्टयन्नाह—**ससंभ्रमेति** । संभ्रमेण सहवर्तमानं ससंभ्रमं यदुत्थानं तस्माद्यः श्रमः खेदः स एव व्यपदेशो मिषं तत्राभवत् । ससंभ्रमोत्थानश्रमादेव मम खेदोऽभूदिति व्याजं कृतवतीत्यर्थः । ऊरुकम्प एव गतिं गमनं रुरोध रुन्धितवान् । नूपुरे पादकटके तयो रवः शब्दस्तेनाकृष्टमाकर्षितं यद्धंसमण्डलं तदपयशोऽपकीर्तिं लेभे प्राप । मद्गतिनिरोधकृत् हंसमण्डलमिति सखीजनेष्वपभ्राजनां कृतवतीत्यर्थः । **निःश्वासेति** । निःश्वासानामेतनानां प्रवृत्तिरेव प्रवर्तनमेवांशुकं वस्त्रं चलं कम्प्रं चकार । **चामरेति** । चामरानिलो वालव्यजनपवनो निमित्ततां कारणतां ययौ । चामरानिलेन मदंशुकं चालितमित्युक्तवतीत्यर्थः । **अन्तरिति** । अन्तःप्रविष्टो यश्चन्द्रापीडस्तस्य स्पर्शलोभेनैव हृदये हस्तः करो निपपात निपतितो बभूव । **स एवेति** । स एव [2]करो हस्तः स्तनावरणस्य कुचाच्छादनस्य व्याजो मिषं बभूव । स्तनावरणार्थं हस्तो दत्त इत्यन्येषां चेष्टया ज्ञापितवतीत्यर्थः । **आनन्द एवेति** । आनन्द एव प्रमोद एवाश्रुजलं नेत्रजलमपातयत्पातितवान् । **चलितेति** । चलितं कम्पितं यत्कर्णावतंसकुसुमं तस्य रजः परागस्तदेव व्याजो मिषमासीत् । कर्णावतंसरजःपातान्मम नेत्रयोर्जलच्युतिरभूदिति ज्ञापितवतीत्यर्थः । **लज्जैवेति** । लज्जैव त्रपैव वक्तुं कथयितुं न ददौ । **मुखेति** । मुखमेव कमलं तस्य यः परिमलस्तस्मादागतं प्राप्तं यदलिवृन्दं भ्रमरसमूहपटलं द्वारतामगादगमत् । भ्रमरैर्निरुद्धवदना मौनं कृतवतीति सख्या ज्ञातव्या । **मदनेति** । मदनशरस्य यः प्रथमप्रहार आद्याभिघातस्तस्य वेदनैव व्यथैव सीत्कारं शब्दविशेषमकरोत् । **कुसुमेति** । कुसुमप्रकरेषु यः केतकीकण्टकस्तस्माद्या क्षतिः प्रघातः सा साधारणतां निमित्ततामवाप प्राप । केतकीकण्टकाभिघातेनानया सी-

---

**टिप्प०—1 द्वितीयया तात्पर्यम् । 2 'स एव स्तनावरणव्याजः' इत्येव पाठः, सर्वनाम्ना परामृष्टत्वे पुनरुक्तिर्न बाणोचिता । 3 अनयोरेकतर एव प्रयोज्य आसीत् ।**

---

**पाठा०**—१ नयनम्. २ वल. ३ क्षणम्. ४ च तं प्रथमम्. ५ व्यपदेशेन. ६ स्तम्भ. ७ अयशः. ८ निश्वास एव; निश्वासप्रवृद्धिरेव. ९ चन्द्रापीडस्य. १० स्तनावरणम्. ११ व्याज आसीत्; व्यपदेशतामयासीत्.

रणतामवाप। वेपथुरेव करतलमकम्पयत्, निवेदनोद्यतप्रतीहारीनिवारणं कपटमभूत्। तदा च कादम्बरीं विशतो मन्मथस्यापि मन्मथ इवाभूद्द्वितीयः, तया सह यो विवेश चन्द्रापीडहृदयम्। तथाहि, असावपि तस्या रत्नाभरणद्युतिमपि तिरोधानममंस्त, हृदयप्रवेशमपि परिग्रहमगणयत्, भूषणरवमपि संभाषणममन्यत, सर्वेन्द्रियाहरणमपि प्रसादमचिन्तयत्, देहप्रभासंपर्कमपि सुरतसमागमसुखमकल्पयत्।

कादम्बरी तु कृच्छ्रादिव दत्तकतिपयपदा महाश्वेतां स्नेहनिर्भरं चिरदर्शनजातोत्कण्ठा सोत्कण्ठं कण्ठे जग्राह। महाश्वेतापि दृढतरदत्तकण्ठग्रहा तामवादीत्—'सखि कादम्बरि, भारते वर्षे राजानेकवरतुरगखुरमुखोल्लेखदत्तचतुःसमुद्रमुद्रो रक्षितप्रजापीडस्तारापीडो नाम। तस्यायं निजभुजशिलास्तम्भविश्रान्तविश्वविश्वंभरापीडश्चन्द्रापीडो नाम सूनुर्दिग्विजयप्रसङ्गेनानुगतो भूमिमिमाम्। एष च दर्शनात्प्रभृति प्रकृत्या मे निष्कारणबन्धुतां गतः। परित्यक्तसकला-

---

त्कारो विहित इति सख्यो मेनिरे। वेपथुरेव कम्प एव करतलं हस्ततलमकम्पयत्। **निवेदनेति**। निवेदने ज्ञापन उद्यता या प्रतीहारी तस्या निवारणं कपटं कैतवमभूत्। प्रतीहारीनिवेदितवस्तुप्रतिषेधद्वारा करकम्पनमाचरितमिति सखीभिरज्ञायीति भावः। नायिकाक्रमेण तानुक्त्वा नायकक्रमेणाप्याह—**तदा चेति**। यदा कादम्बरीं चन्द्रापीडविषयको मन्मथः प्रविष्टस्तदा तस्य चन्द्रापीडविषयकस्य कादम्बरीहृदयप्रविष्टस्य मन्मथस्यापि प्रत्यर्थीभूतो द्वितीय इव मन्मथोऽभूत्। यथा कादम्बर्यां चन्द्रापीडविषयको मन्मथः प्रविष्टस्तथैव कादम्बरीविषयकोऽपि मन्मथश्चन्द्रापीडहृदयं प्रविवेशेत्यर्थः। तदेवाह—**तया सहेति**। यस्तस्य कादम्बर्या सह चन्द्रापीडहृदयं विवेश प्रविष्टवान्। तदेव दर्शयति—**तथा हीति**। असावपि चन्द्रापीडोऽपि तस्याः कादम्बर्या रत्नाभरणानां मणिखचितभूषणानां द्युतिमपि कान्तिमपि तिरोधानमन्तर्धानं साकल्येनावलोकनप्रतिबन्धकममंस्त ज्ञातवान्। अयमप्युत्कण्ठानिर्वृत्त्यतिशयप्रतिपादनपरः प्रपञ्चः। हृदयप्रवेशमपि परिग्रहमावासस्थानमगणयत्। तस्या भूषणरवमपि संभाषणं जल्पनममन्यत। सर्वेन्द्रियाहरणमपि समग्रकरणाकर्षणमपि प्रसादमचिन्तयत्। देहप्रभायाः शरीरकान्तेः संपर्कमपि संबन्धमपि सुरतसमागमसुखमकल्पयन्मैथुनसुखसदृशमगणयत्।

**कादम्बरी त्विति**। कादम्बरी तु कृच्छ्रादिव कष्टादिव दत्तानि कतिपयानि कियन्ति पदानि यया सा महाश्वेतां चिरकालेन यद्दर्शनं तेन जातोत्कण्ठा यस्याः सा तां स्नेहनिर्भरं यथा स्यात्तथा सोत्कण्ठं कण्ठे जग्राह कण्ठग्राहं गृहीतवती। महाश्वेतापि दृढतरं दत्तः कण्ठग्रहो यया सैवंविधा तां कादम्बरीमवादीदवोचत्। किमुवाचेत्याह—**सखीति**। हे सखि कादम्बरी भारते वर्षे भरतक्षेत्रेऽनेके ये वराः श्रेष्ठास्तुरगा अश्वास्तेषां खुरमुखानामुल्लेखा उत्कर्षास्तैर्दत्ताश्चतुःसमुद्रावधिमुद्रा अङ्को येन सः। रक्षिता प्रजायाः पीडा बाधा येनैवंभूतस्तारापीडो नाम राजास्ति। तस्य राज्ञः। **निजेति**। निजावात्मीयौ यौ भुजौ तावेव दृढत्वाच्छिलास्तम्भौ तत्र विश्रान्ता सुखेन स्थिता या विश्वविश्वंभरा समग्रवसुधा सैवापीड उत्तंसो भूषणं यस्य सः। 'पीडार्तिर्मर्दनोत्तंसकृपासु' इत्यनेकार्थः। एतादृशश्चन्द्रापीडो नाम सूनुर्दिग्विजयप्रसङ्गेनेमां भूमिमनुगतः प्राप्तः। **एष चेति**। एष चन्द्रापीडो दर्शनात्प्रभृत्यवलोकनादारभ्य प्रकृत्या मे मम निष्कारणबन्धुतां गतः प्राप्तः। तन्निमित्तमाह—**परीति**। परित्यक्त उज्झितो यः सकलः समग्र आसङ्गः सुहृत्संबन्धस्तेन निष्ठुरामपि कठिनामपि सविशेषैर्विशेषसहितैः

---

**टिप्प०—1 कादम्बर्याः यो हृदये प्रवेशस्तमपि 'पतित्वेन ममाऽनया परिग्रहः कृतः' इति कामुकस्वभावानुकूलमकलयत्।**

---

पाठा०—१ जातोत्कण्ठम्. २ विश्वबन्धः. ३ आगतः.

सङ्गनिष्ठुरामपि मे सविशेषस्वभावसरलैर्गुणैराक्रष्य[1][2] चित्तवृत्तिं वर्तते । दुर्लभो हि दाक्षिण्यपरवशो निर्निमित्तमित्रमकृत्रिमहृदयो विदग्धजनः[3] । यतो दृष्ट्वा चेममहमिव त्वमपि निर्माणकौशलं प्रजापतेः, निःसपत्नतां च रूपस्य, स्थानाभिनिवेशित्वं च लक्ष्म्याः, सद्भर्तृतासुखं च पृथिव्याः, सुरलोकातिरिक्ततां च मर्त्यलोकस्य, सफलतां च मानुषीलोचनानाम्, एकस्थानसमागमं च सर्वकलानाम्, ऐश्वर्यं च सौभाग्यस्य, अग्राम्यतां च मनुष्याणां ज्ञास्यसीति बलादानीतोऽयम् । कथिता चास्य मया बहुवारं[4] प्रियसखी । तदपूर्वदर्शनोऽयमिति विमुच्य लज्जाम्, अनुपजातपरिचय इत्युत्सृज्याविश्रम्भताम्, अविज्ञातशील इत्यपहाय शङ्कां यथा मयि तथात्रापि प्रवर्तितव्यम्[5] । एष ते मित्रं च बान्धवश्च परिजनश्च' इत्यावेदिते तया चन्द्रापीडः प्रणाममकरोत् ।

कृतप्रणामं च तं तदा कादम्बर्यास्तिर्यग्विलोकयन्त्याः सस्नेहमतिदीर्घलोचनयो[6]रपाङ्गभागं गच्छतस्तारतारकस्य[7] लोचनस्य श्रमसलिललवविसर इवानन्दबाष्पजलबिन्दुनिकरो निपपात ।

---

स्वभावसरलैः स्वारसिकऋजुभिर्गुणैर्मे मम चित्तवृत्तिमाकृष्यायं वर्तते। ततः किमित्यत आह—**दुर्लभ इति**। यतोऽयं जनो विदग्धजनः । हीति निश्चये । सर्वथा दुर्लभो दुःप्रापः एनं विशेषयन्नाह—**दाक्षिण्येति**। दाक्षिण्यमनुकूलता तेन परवशः पराधीनो निर्निमित्तं निष्कारणं मित्रं सुहृदकृत्रिमं स्वाभाविकं हृदयं चेतो यस्य सः । मायानिर्मुक्त इत्यर्थः । मायया च चेतोवैपरीत्यं जायत इति भावः । इमं जनं दृष्ट्वा चाहमिव त्वमप्येतत्सर्वं ज्ञास्यसीत्यन्वयः । एतदेव प्रदर्शयन्नाह—**निर्माणेति** । प्रजापतेर्ब्रह्मणो निर्माणकौशलं रचनाचातुर्यम् । **रूपस्य चेति** । रूपस्य सौन्दर्यस्य निःसपत्नतां[1] निर्विपक्षताम् । लक्ष्म्याः श्रियः स्थाने योग्यस्थलेऽभिनिवेशित्वं स्थायित्वम् । पृथिव्या वसुधायाः सञ्छोभनो भर्ता पतिस्तस्य भावस्तत्ता तस्याः सुखं सातम् । मर्त्यलोकस्य मनुष्यलोकस्य सुरलोकादतिरिक्ततामाधिक्यताम् । मानुषीलोचनानां स्त्रीनेत्राणां सफलतां साफल्यं च । सर्वकलानां समग्रविज्ञानानामेकस्मिन् स्थाने समागमं संबन्धं च । सौभाग्यस्य सुभगताया ऐश्वर्यं[2] प्रभुत्वम् । तथा मनुष्याणां मानुषाणामग्राम्यतां नागरिकतां ज्ञास्यसि इति हेतोर्मया बलादानीतः अयम् । **कथितेति** । अस्य चन्द्रापीडस्य मया बहुवारमनेकवारं प्रियसखी कथिता निवेदिता । तदिति हेत्वर्थे । अपूर्वमभिनवं दर्शनं यस्यैवंविधोऽयमितिकृत्वा लज्जां त्रपां विमुच्य विहाय । **अन्विति** । अनुपजातः परिचयो यस्यैवंविध इतिकृत्वाऽविश्रम्भतामविश्वासतामुत्सृज्य त्यक्त्वा । अविज्ञातमविदितं शीलं स्वभावो यस्येतिकृत्वा शङ्कामपहाय दूरीकृत्य यथा मयि तथात्राप्यस्मिन्नपि प्रवर्तितव्यम् । एष चन्द्रापीडस्ते तव मित्रं च बान्धवः परिजनश्च । तया महाश्वेतयेत्यावेदिते निवेदिते सति चन्द्रापीडः प्रणामं नमस्कारमकरोत् ।

तदा कृतप्रणामं विहितनमस्कारं च तं विलोकयन्त्याः पश्यन्त्याः कादम्बर्याः सस्नेहं यथा स्यात्तथातिदीर्घयोर्लोचनयोरपाङ्गभागं निर्याणदेशं गच्छतो व्रजतस्तारा मनोहरा तारका कनीनिका यस्मिन्नेतादृशस्य लोचनस्य[3] श्रमसलिलस्य स्वेदप्रभवपानीयस्य लवास्तेषां विसर इव समूह इव । आनन्दः प्रमोदस्तस्माद्वा-

---

**टिप्प०**—1 सौन्दर्ये अस्य कोपि प्रतिद्वन्द्वी नास्तीत्यर्थः । 2 अस्य लाभाद् भाग्यवत्ताया महासमृद्धिं मंस्यस इत्याशयः । 3 'लोचनयोरपाङ्गभागं गच्छतो लोचनस्य'; लोचनयोर्लोचनस्येति किमिदमसंबद्धं प्रलपितम्? सर्वथा विचारशून्यष्टीकाकारः । 'सस्नेहमतिदीर्घलोचनापाङ्गभागं गच्छतस्तारकस्य श्रमसलिल०' इत्येव पाठः । अतिदीर्घस्य लोचनस्य अपाङ्गभागं पर्यन्तभागं गच्छतस्तारकस्य । तिर्यग्विलोकनसमये नेत्रकनीनिका दीर्घस्य लोचनस्य प्रान्तभागे गता । प्रान्तभागश्च दूरवर्ती, यतो हि सुदीर्घं लोचनम् । अत एव दीर्घलोचनमध्ये दूरगमनात् तारकस्य श्रमो जातः । अत एव श्रमस्वेदबिन्दुवत् अश्रु पपातेत्याशयः । विशालनेत्रतया नायकस्य सौन्दर्यातिशयो व्यङ्ग्यः । 'कनीनिकायां नक्षत्रे तारकं तारकेति च' इति विश्वः ।

---

**पाठा०**—१ सविशेषैः. २ आकम्य. ३ विदग्धो जनः. ४ बहुप्रकारम्. ५ वर्तितव्यम्. ६ लोचनापाङ्ग; लोचनाया अपाङ्गः. ७ तारकस्य श्रम.

त्वरितमभिप्रस्थितस्य हृदयस्य धूलिरिव सुधाधवला स्मितज्योत्स्ना विससार । संमान्यतामयं हृदयरुचिरो जनः प्रतिप्रणामेनेति शिरो वक्तुमिवैका भ्रूलता समुन्ननाम । अङ्गुलिविवर-विनिःसृतमरकताङ्गुलीयकले[1]खो विभ्रमगृहीतताम्बूलवीटिक इव करो जृम्भारम्भमन्थरं मुख-मुत्ससर्प । स्रवत्स्वेदजलधौतलावण्यनिर्मलेषु चास्याः [2]स्तम्भसंक्रान्तप्रतिबिम्बतया संचर-न्मूर्तिर्मकरकेतुरिवावयवेष्वदृश्यत चन्द्रापीडः । तथा हि । सिञ्ज[3]न्मणिनूपुरपुटेन [4]भुवमालिख-ताङ्गुष्ठेनाहूत इव चरणनखेषु निपपात । दर्शनातिरभसप्रधावितेन गत्वा हृदयेनानीत इव स्तनाभ्यन्तरे समदृश्यत । विकचकुवलयदामदीर्घया च दृष्ट्या निपीत इव कपोलतले सम-लक्ष्यत । सर्वासामेव च तदा तासां कन्यकानां तिर्यक्पश्यन्तीनां तं कुतूहलापाङ्गचु[5]म्बिन्या दृष्ट्या निर्गन्तुकामा इव कर्णपूरमधुकरैः समं बभ्रमुस्तरलास्तारकाः ।

---

ष्पजलं तस्य बिन्दुनिकरो निपपातापतत् । **त्वरितमिति** । त्वरितं शीघ्रमभिप्रस्थितस्य चलितस्य हृदयस्य धूलिरिव रेणुरिव सुधामृतं तद्वद्धवला शुभ्रा स्मितमीषद्धसितं तस्य ज्योत्स्ना चन्द्रिका विससार प्रसृता बभूव । अत्र शुभ्रत्वसाम्यात्स्मितस्य धूलिसाम्यमित्यर्थः । अयं हृदयरुचिरो जनः संमान्यतां सत्क्रियताम् । **प्रतिप्र-णामेनेति** । अनुनमस्करणेन । इति शिर उत्तमाङ्गं वक्तुमिव कथयितुमिव एका भ्रूलता समुन्ननामोच्चीवभूव । **अङ्गुलीति** । अङ्गुल्यः करशाखास्तासां विवरेभ्यो विनिःसृता मरकताङ्गुलीयक[1]लेखा यस्मात्सः । नैल्यसाम्या-दाह—**विभ्रम इति** । विभ्रमेण विलासेन गृहीता ताम्बूलवीटिका येनैवंविधः करो हस्तः । **जृम्भेति** । जृम्भणं तस्या आरम्भस्तेन मन्थरमलसं मुखमुत्ससर्प विस्तीर्णं बभूव । **अस्या इति** । अस्याः कादम्बर्या अवयवेष्वपघनेषु संचरन्ती व्रजन्ती मूर्तिः शरीरं यस्यैवंभूतश्चन्द्रापीडः । क इव । मकरकेतुरिवादृश्यता-वालोक्यत । जनैरिति शेषः । कीदृशेष्ववयवेषु । स्रवत्क्षरत्स्वेदजलं तेन धौतं क्षालितं लावण्यं लवणिमा तेन निर्मलेषु विमलेषु । कया । **स्तम्भेति** । स्तम्भेषु स्थूणासु संक्रान्तानि प्रतिबिम्बितानि यानि प्रतिबिम्बानि तस्य भावस्तत्ता तया । एतदेव दर्शयन्नाह—**तथा हीति** । सिञ्जञ्शब्दं कुर्वन्यन्मणिनूपुरपु[2]टं तेन भुवं पृथ्वी-मालिखतालेखं कुर्वताङ्गुष्ठेनाहूत इव निमन्त्रित इव चरणनखेषु निपपात । **दर्शनेति** । दर्शनार्थमतिरभस-प्रधावितेनातिवेगोच्चलितेन [3]हृदयेन गत्वा स्तनाभ्यन्तरे कुचयोर्मध्य आनीत इव समदृश्यत समवलोक्यत । जनैरिति शेषः । **विकचेति** । विकचानि विकस्वराणि यानि कुवलयान्युत्पलानि तेषां दाम स्रक्तद्वद्दीर्घयायतया च दृष्ट्या निपीत इव कपोलतले समलक्ष्यतादृश्यत । तत्तदवयवेषु तत्तत्प्रतिबिम्बमाश्रित्यैतदुक्तम् । **तासा-मिति** । अपाङ्गचु[4]म्बिन्या दृष्ट्या कुतूहलात्तं तिर्यक्पश्यन्तीनां सर्वासामेव तदा तासां कन्यकानां निर्गन्तुकामा इव बहिर्गमनोत्सुका इव तरलाः कम्प्रास्तारकाः कनीनिकाः कर्णपूरमधुकरैः समं बभ्रमुर्भ्रमणं चक्रुः ।

---

**टिप्प०**—1 जडेनात्रापि ग्रन्थो भ्रंशितः । 'विनिःसृतमरकताङ्गुलीयकमयूखलेखो' इत्येव पाठः । अङ्गुलिविवरेभ्यो विनिःसृता मरकताङ्गुलीयकस्य किरणराजिर्यस्य स इत्यर्थः । 2 हन्त कियत्परिशोच्यतां टीकाकारः ! कोर्थो वाक्यस्यास्य ? अस्तु । भुवम् आलिखता ( कर्षता, किञ्चित्खनता ) अत एव शिञ्जत् मणिनूपुरपुटं यत्र ( भूलेखनसमये नूपुरचलनेन शब्दो जात इत्यर्थः ) ईदृशेन अङ्गुष्ठेन आहूत इव नखेषु निपपात । चरणाङ्गुष्ठनखेषु प्रतिबिम्बपतने सेयमुत्प्रेक्षेत्याशयः । 3 चन्द्रापीडस्य दर्शनार्थं प्रधावितेन काद-म्बर्या हृदयेन आनीत इवेत्याशयः । 4 अत्रापि महाभागः सर्वं ग्रन्थं धूलिसाच्चकार । 'कुतूहलादपाङ्ग-चुम्बिन्यो निर्गन्तुकामा इव…' इति पाठः । तम् ( चन्द्रापीडम् ) तिर्यक्पश्यन्तीनां कन्यकानां कुतू-हलवशात् अपाङ्गचुम्बिन्यः अर्थात् अपाङ्गपर्यन्तागताः तरलाः ( चञ्चलाः ) तारका ( नेत्रकनीनिकाः ) नेत्राद्बहिर्निर्गन्तुकामा इव बभ्रमुः । यथा मधुकराश्चञ्चलास्तथा तारका अपि चाञ्चल्यमभजन्नित्यर्थः ।

---

पाठा०—१ मयूखलेखो; मयूखलेखा. २ संक्रान्त. ३ माणिक्यनूपुर. ४ मणिभुवम्. ५ चुम्बिन्यो; चुम्बिन्यां.

कादम्बरी तु सविभ्रमकृतप्रणामा महाश्वेतया सह पर्यङ्के निषसाद । ससंभ्रमं[1] परिजनोपनीतायां च शयनशिरोभागनिवेशितायां धवलांशुकप्रच्छदपटायां हेमपादाङ्कितायां पीठिकायां चन्द्रापीडः समुपाविशत् । महाश्वेतानुरोधेन च विदितकादम्बरीचित्ताभिप्रायाः संवृतमुखन्यस्तहस्तदत्तशब्दनिवारणसंज्ञाः प्रतीहार्यो वेणुरवान्वीणाघोषान्गीतध्वनीन्मागधीजयशब्दांश्च सर्वतो निवारयांचक्रुः । त्वरितपरिजनोपनीतेन च सलिलेन कादम्बरी स्वयमुत्थाय महाश्वेतायाश्चरणौ प्रक्षाल्योत्तरीयांशुकेनापमृज्य पुनः पर्यङ्कमारुरोह, चन्द्रापीडस्यापि कादम्बर्याः सखी रूपानुरूपा जीवितनिर्विशेषा सर्वविश्रम्भभूमिर्मदलेखेति नाम्ना बलादनिच्छतोऽपि प्रक्षालितवती चरणौ । महाश्वेता तु कर्णाभरणप्रभावर्षिण्यपाङ्गदेशे[2] सप्रेम पाणिना स्पृशन्ती, मधुकरभरपर्यस्तं च कर्णावतंसं समुत्क्षेपयन्ती,[3] चामरपवनविधूतिपर्यस्तालकवल्लरीमनुष्वञ्जमाना[4] कादम्बरीमनामयं पप्रच्छ । सा तु सखीप्रेम्णा गृहनिवासेन कृतापराधेवानामयेनैव लज्जमाना कृच्छ्रादिव कुशलमाचचक्षे । तदा[5] समुपजातशोकापि च महाश्वेतामुखनिरीक्षण-

---

**कादम्बरीति ।** कादम्बरी तु सविभ्रमं सविलासं कृतः प्रणामो यया सैवंविधा महाश्वेतया सह पर्यङ्के पल्यङ्के निषसादोपविवेश । **ससंभ्रममिति ।** ससंभ्रमं यथा स्यात्तथा परिजनेन परिच्छदेनोपनीतायां प्रापितायां शयनस्य पल्यङ्कस्य शिरोभागे निवेशितायां स्थापितायां धवलांशुकस्य प्रच्छदपट उत्तरपटो यस्यामेवंविधायां हेमपादाङ्कितायां सुवर्णपादचिह्नितायां पीठिकायां चन्द्रापीडः समुपाविशदासेदिवान् । **महेति ।** महाश्वेताया अनुरोधेन प्रतिबन्धेन । **विदितेति ।** विदितो ज्ञातः कादम्बर्याश्चित्ताभिप्रायो याभिस्ताः । **संवृतेति ।** संवृतं पिहितं यन्मुखं तत्र न्यस्तो यो हस्तस्तेन दत्ता ज्ञापिताः शब्दनिवारणसंज्ञा याभिरेवंविधाः प्रतीहार्यो द्वाररक्षाविधायिन्यो वेणुरवान्वंशशब्दान्वीणाघोषान्वल्लकीशब्दान्गीतध्वनीन्गेयनादान्मागधीनां मागधपत्नीनां जयशब्दांश्च जयजयेति रवांश्च सर्वतो निवारयांचक्रुर्निवारितवत्यः । **त्वरितेति ।** त्वरितं शीघ्रं परिजनोपनीतेन सलिलेन पानीयेन कादम्बरी स्वयमात्मनोत्थायोत्थानं कृत्वा महाश्वेतायाश्चरणौ पादौ प्रक्षाल्योत्तरीयांशुकेनोपरिवस्त्रेणापमृज्य मार्जनं कृत्वा पुनः पर्यङ्कं पल्यङ्कमारुरोहोपविष्टवती । **चन्द्रापीडेति ।** कादम्बर्याः सखी मदलेखेति नाम्नानिच्छतोऽप्यवाञ्छतोऽपि बलाचन्द्रापीडस्यापि चरणौ प्रक्षालितवती । सखीं विशेषयन्नाह—**रूपेति ।** रूपेण सौन्दर्येण चानुरूपा सदृशी । जीवितान्निर्गतो विशेषो यस्याः सा जीवितनिर्विशेषा । सर्वेषां विश्रम्भाणां विश्वासानां भूमिः स्थानम् । **महेति ।** महाश्वेता तु कादम्बरीमनामयं कुशलं पप्रच्छ प्रश्नं कृतवती । किं कुर्वन्ती । **कर्णेति ।** कर्णाभरणस्य श्रवणभूषणस्य प्रभा कान्तिस्तस्या वर्षिणि । एवंभूतेऽपाङ्गदेशे[1] नेत्रप्रान्तदेशे सप्रेम प्रेमसहितं यथा स्यात्तथा पाणिना हस्तेन स्पृशन्ती स्पर्शं कुर्वन्ती । **मधुकरेति ।** मधुकरभरेण भ्रमरभरेण पर्यस्तं पतितं च कर्णावतंसं समुत्क्षेपयन्त्युच्चभागे(न) नयन्ती **चामरेति ।** चामरं वालव्यजनं तस्य पवनेन वातेन या विधूतिः कम्पनं तेन पर्यस्ता पतिता यालकवल्लरी केशवल्लरी तामनुष्वञ्जमाना[2] स्थाने तां स्थापयन्ती । **सा त्विति ।** सा तु कादम्बरी सखीप्रेम्णा महता स्नेहेन गृहनिवासेन कृतापराधेवानामयेनैव कुशलप्रश्नेनैव लज्जमाना त्रपां कुर्वाणा कृच्छ्रादिव कुशलमाचचक्ष आचख्यौ । **तदेति ।** तस्मिन्काले महाश्वेतादुःखेन समुपजातः शोको यस्या एवंविधापि कादम्बरी महाश्वेताया मुखं तस्य निरीक्षणं तस्मिंस्त-

---

**टिप्प०—1** धिङ् मन्दभाग्यम् । सखीसमागमे न सख्या अपाङ्गदेशः स्पृश्यते, न च शक्यतेऽपि । कर्णकुण्डलप्रभाभिर्भूषिते 'अंसदेशे ( स्कन्धभागे )' स्पृशन्ती इति पाठः । 2 व्याकरणविमुखता सेयम् । 'अनुष्वजमाना' इत्येव पाठः ।

---

पाठा०—१ ससंभ्रमपरि. २ अंसदेशे. ३ उत्क्षिपन्ती. ४ विधुतिपर्यस्तां त्र. ५ समुपजातशोकापि च तस्मिन्काले.

तत्परापि मुहुर्मुहुरपाङ्गविक्षेपप्रचलिततरलतरतारसारोदरं चक्षुर्मण्डलितचापेन भगवता कुसुमधन्वना बलान्नीयमानं चन्द्रापीडपीडनयेव न शशाक निवारयितुम् । तेनैव क्षणेन तेनासन्नसखीकपोलसंक्रान्तेनेर्ष्ययां रोमाञ्चभिद्यमानकुचतटनश्यत्प्रतिबिम्बेन विरहव्यथा-स्वेदार्द्रवक्षःस्थलघटितशालभञ्जिकाप्रतिमेन सपत्नीरोषान्निमिषता दौर्भाग्यशोकमानन्दजल-तिरोहितेनान्धतादुःखमभजत सा ।

मुहूर्तापगमे च ताम्बूलदानोद्यतां महाश्वेता तामभाषत—'सखि कादम्बरि, संप्रति-पन्नमेव सर्वाभिरस्माभिरयमभिनवागतश्चन्द्रापीड आराधनीयः । तदस्मै तावद्दीयताम्'

---

त्परापि सोद्यमापि मुहुर्मुहुः । **अपाङ्गेति** । अपाङ्गस्य नेत्रप्रान्तस्य यो विक्षेपस्तेन प्रचलिता या तरलतरतारा तया सारं कश्मलमुदरं मध्यं यस्यैवंविधं चक्षुर्मण्डलितचापेनारोपितकोदण्डेन भगवता कुसुमधन्वना कंदर्पेण चन्द्रापीडस्य पीडनयेवं बलान्नीयमानं निवारयितुं न शशाक न समर्था बभूव। **तेनैवेति** । यस्मिन्क्षणे चक्षुर्निवारयितुं न समर्था तेनैव क्षणेन सा कादम्बरी तेन चन्द्रापीडेन कृत्वा यः सपत्नीरोषस्तस्मात्तथा निमि-षता पक्ष्मपातस्तदेव दौर्भाग्यं तेन यः शोकः, अथ चानन्दजलं हर्षाश्रुजलं तेन तिरोहितेनाच्छादितेनान्धता-दुःखमभजदप्रापत् । कीदृशेन तेन । **आसन्नेति** । आसन्ना समीपवर्तिनी या सखी तस्याः कपोलो गल्ला-न्तरप्रदेशस्तत्र संक्रान्तेन प्रतिविम्बितेन । इदं च सपत्नीरोषनिमित्तम् । यद्यस्यां संक्रान्तस्तर्हीयमेव सपत्नी भविष्यतीति शङ्कया सपत्नीरोषः सपत्नीविषयको रोषस्तस्मात् । पुनः कीदृशेन । मय्यासक्तः क्वान्यत्र संक्रान्त इतीर्ष्यया ये रोमाञ्चास्तैर्भिद्यमानं यत्कुचतटं तस्मिन्रोमाञ्चप्रतिबन्धवशादेव नश्यत्प्रतिबिम्बो यस्य स तेन इदं च शोकोत्पत्तिकारणम् । **विरहेति** । विरहस्य वियोगस्य या व्यथा तया यः स्वेदः श्रमजलं तेनार्द्रं यद्वक्षःस्थलं भुजान्तरं तत्र घटिता शालभञ्जिकायाः प्रतिमा प्रतिबिम्बं यस्मिन्स तेन । इदं चानन्दाश्रुनिपाते कारणम् ।

**सेति** । सा महाश्वेता मुहूर्तापगमे घटिकाद्वयानन्तरं ताम्बूलदानोद्यतां नागवल्लीदलवितरणे विहितोद्यमां कादम्बरीमभाषतावोचत । किमुवाचेत्याह—**सखीति** । हे सखि कादम्बरि, सर्वाभिरेवास्माभिः संप्रति-पन्नं प्राप्तमेव । अहं तु तव सखी नापूर्वा, मह्यमदत्तमपि ताम्बूलं दत्तमेव, अयं त्वपूर्व इत्याशयेनाह—**अयमिति** । अयमभिनवो नूतन आगतः प्राप्तश्चन्द्रापीड आराधनीयः पूजनीयः । तस्माद्धेतोस्तावदादावस्मै चन्द्रापीडाय दीयतां वितीर्यताम् । इत्युक्ता भाषिता सती तदनन्तरं सा कादम्बरी तां महाश्वेतां शनैर्मन्दम-

---

टिप्प०—1 'पीडनायेव' इत्येव पाठः । कामेन चन्द्रापीडपीडनायेव कादम्बरीचक्षुः ( चन्द्रापीडा-भिमुखम् ) नीतम् ( नायकस्य अभिलाषप्राबल्ये नायिकाकटाक्षैः पीडोद्गमात् ), कादम्बरी तु न तन्नि-वारयितुमशकदित्यर्थः । 2 मन्दमतिः पुनः सर्वं स्वारस्यं कवलीचकार । विस्तरभयाद् व्याख्याद्वारैव समु-चितो ग्रन्थपाठः सूच्यते यः पाठान्तरेषु नीचैः परिधृतः । 'ईर्ष्याम्, व्यथाम्,...' इत्यादिर्द्वितीयान्तपाठ एव ग्रन्थस्थः । सखीकपोलसंक्रान्तेन तेन ( चन्द्रापीडेन ) ईर्ष्यामभजत, अन्यनायिकागामित्वात् । रोमाञ्चोद्गमेनोज्जृम्भमाणे कुचतटे नश्यन् ( रोमभिरुच्चावचतया ) प्रतिबिम्बो यस्य ईदृशेन तेन ( चन्द्रा० ) विरहव्यथामभजत, प्रतिबिम्बविरहात् । स्वेदार्द्रे वक्षःस्थले ( अर्थात् चन्द्रापीडस्य ) प्रति-बिम्बिता शालभञ्जिकायाः प्रतिच्छाया यस्य ईदृशेन तेन सपत्नीरोषमभजत् । निमिषता ( स्वदर्शने नेत्र-योरुन्मीलननिमीलने कुर्वता ) तेन दौर्भाग्यशोकमभजत्, दर्शने औत्सुक्ये तु निमेषो नाभविष्यदित्यर्थः । नेत्रयोरानन्दाश्रुभिस्तिरोहितेन तेन अन्धतादुःखमभजत् ।

---

पाठा०—१ चन्द्रापीडपीडनादेव, चन्द्रापीडं प्रति. २ ईर्ष्याम्; ईर्ष्या. ३ कुचनद्यत्. ४ व्यथाम्. ५ रोषम्. ६ तां महाश्वेतां समभाषत. ७ सर्वाभिरेवास्माभिरभिनव. ८ दीयतां ताम्बूलमित्युक्ता.

इत्युक्ता च किंचिद्विवर्तितावनमितमुखी शनैरव्यक्तमिव प्रियसखि, लज्जेऽहम् । अनुपजातपरिचयाप्रागल्भ्येनानेन, गृहाण । त्वमेवास्मै प्रयच्छ' इत्युवाच सा[1] ताम् । पुनःपुनरभिधीयमाना च तया कथमपि ग्राम्येव चिरा[2]द्दानाभिमुखं मनश्चक्रे । महाश्वेतामुखा[3]दनाकर्षितदृष्टिरेव वेपमानाङ्गयष्टिः, आकुललोचना,[4] स्थूलस्थूलं निःश्वसन्ती,[5] निजशरप्रहारमूर्च्छिता मन्मथेन स्नपितेव स्वेदजलविसरैः, स्वेदजलविसरनिमज्जनभयेन च हस्तावलम्बनमिव याचमाना, साध्वसपरवशा, पतामीति लगितु[6]मिव कृतप्रयत्ना प्रसारयामास ताम्बूलगर्भं हस्तपल्लवम् । चन्द्रापीडस्तु जयकुञ्जरकुम्भस्थलास्फालनसंक्रान्तसिन्दूरमिव स्वभावपाटलम्, धनुर्गुणाकर्षणकृतकिणश्यामलं, कचग्रहाकृष्टिरुदितारिलक्ष्मीलोचनपरामर्शनलग्नाञ्जनबिन्दुमिव, विसर्पन्नखकिणतयातिरभसेन प्रधा[7]विताभिरिव विवर्धिताभिरिव प्रहसिताभिरिवाङ्गुलीभिरुपेतम्, स्पर्शलोभाच्च तत्कालकृतसंनिवेशाः सरागाः पञ्चापीन्द्रियवृत्तीर[8]पराङ्गुलीरुद्वहन्तं

---

व्यक्तमिवास्फुटमिवेत्युवाचावोचत् । इतियोत्यमाह—**किंचिदिति** । किंचिदीषद्विवर्तितं परिवर्तितम्, अथ चावनमितं मुखं यया सैवंविधाहं हे प्रियसखि, लज्जे त्रपे । तत्र हेतुमाह—**अनुपजातेति** । अनेन सममनुपजातोऽनुत्पन्नः परिचयो यस्याः सा । प्रगल्भानां तत्क्षणादेव परिचय इत्यत आह—**अप्रागेति** । अप्रागल्भ्येनाधार्ष्ट्येन[1] । गृहाण । त्वमेवास्मै प्रयच्छ देहि । पुनः पुनर्वारंवारमभिधीयमाना कथ्यमाना तया महाश्वेतया । त्रासवितर्कमूर्च्छादिव्यभिचारिभावावस्थान्तरमाह—**कथमपीति** । कथमपि महता कष्टेन ग्राम्येव ग्रामीणेव चिराच्चिरकालेन दानाभिमुखं मनश्चित्तं चक्रे विदधे । महाश्वेतामुखादनाकर्षिता दृष्टिर्यया सैवंविधैव वेपमाना कम्पमानाङ्गयष्टिर्यस्याः । आकुले व्याकुले लोचने नेत्रे यस्याः सा । किं कुर्वन्ती । स्थूलस्थूलं यथा स्यात् तथा निःश्वसन्ती एतनं गृह्णन्ती । मन्मथेन कंदर्पेण निजशरप्रहारेणात्मीयबाणाभिघातेन मूर्च्छिता मूर्च्छा प्रापिता । स्वेदजलविसरैर्घर्मपानीयसमूहैः स्नपितेव स्नानं[2] कारितेव । स्वेदजलविसरैर्निमज्जनभयं तेन च हस्तावलम्बनमिव याचमाना । साध्वसं भयं तेन परवशा पराधीना । पतामीति कृत्वा लगितुं[3]मिव कृतः प्रयत्नो यया । सा ताम्बूलगर्भं हस्तपल्लवं प्रसारयामास विस्तारितवती । अथ नायकानुरक्तिविशेषं प्रदर्शयन्नाह—**चन्द्रेति** । चन्द्रापीडः । तु पुनरर्थे । पाणिं करं प्रसारितवान्विस्तारितवान् । अथ पाणिनिष्ठमारुण्यातिशयं विशेषयन्नाह—**जयेति** । जयार्थं यः कुञ्जरो गजस्तस्य कुम्भस्थलं तस्यास्फालनेन तादृक्संयोगविशेषेण संक्रान्तं लग्नं सिन्दूरं नागजं यस्मिन्नेतादृशमिव स्वभावेन स्वारसिकेन पाटलं श्वेतरक्तम् । **धनुरिति** । धनुषश्चापस्य यो गुणः प्रत्यञ्चा तस्याकर्षणमाकृष्टिस्तेन कृतो विहितः किणो रूढव्रणपदं तेन श्यामलं कृष्णम् । **कचेति** । कचग्रहेणाकृष्टिस्तया रुदिता या अरिलक्ष्मीः शत्रुरमा तस्या लोचनपरामर्शनेन लग्ना अञ्जनबिन्दवो यस्मिन्नेतादृशमिव किणस्य कृष्णत्वात्तदुपमानमित्यर्थः । विसर्पन्तः प्रसरन्तो ये नखकिरणास्तेषां भावस्तत्ता तयातिरभसेनातिवेगेन प्रधाविताभिरिवोच्चलिताभिरिव, विवर्धिताभिरिव वृद्धिं प्राप्ताभिरिव, प्रहसिताभिरिव हास्यं कुर्वाणाभिरिवाङ्गुलिभिः करशाखाभिरुपेतं सहितम् । **स्पर्शलोभाच्चेति** । स्पर्शस्य लोभो गर्धस्तस्मात्तत्कालं तस्मिन्क्षणे कृतः संनिवेशः प्रवेशो याभिस्ताः । सरागा रागेण सहवर्तमानाः । पञ्चापीन्द्रियवृत्तीरपराङ्[4]गुलीः पूर्वोक्तभिन्नाः करशाखा उद्वहन्तं

---

टिप्प०—1 मन्दभाग्यः पुनः प्रलपति । 'अनुपजातपरिचया प्रागल्भ्येनानेन' इति पाठः । पूर्वतः परिचयाभावेऽपि अनेन प्रागल्भ्येन ताम्बूलदानरूपधार्ष्ट्येन लज्जे इति तदर्थः । 2 मूर्च्छितो हि जनः स्वीयैर्जनैरम्बुना स्नाप्यते । 3 चन्द्रापीडदेहे संसक्तुम् । 4 अत्रापि चस्खाल मन्दमतिः । 'अपरा इवाङ्गुलीरुद्वहन्तम्' इत्येव पाठः । कादम्बरीस्पर्शलोभात् तत्कालं कृतः संनिवेशः ( उपस्थितिः ) याभिः ईदृशीः पञ्चापि इन्द्रियवृत्तीः ( तद्दर्शनतद्वार्ताश्रवणादिव्यापारान् ) अपराः अङ्गुलीः इव उद्वहन्तमित्यर्थः ।

---

पाठा०—१ कादम्बरी. २ चिरेण. ३ अनाकृष्ट. ४ आकुलित; आमुकुलित. ५ निश्वसन्ती. ६ विगलितुम्; लापितुम्. ७ प्रभाविताभिः; प्रसारिताभिः. ८ अपरा इवाङ्गुलीः; इवाङ्गुलीः.

प्रसारितवान्पाणिम् । तत्र च सा तत्कालसुलभविलासदर्शनकुतूहलिभिरिव[1] कुतोऽप्यागत्य सर्वरसैरधिष्ठिता,[2] तेनानिबद्धलक्ष्यतया शून्यप्रसारितेन चन्द्रापीडहस्तान्वेषणायेव पुरःप्रवर्तितनखांशुनिवहेन वेपथुचलितवलयावलीवाचालेन संभाषणमिव कुर्वता हस्तेन स्वेदसलिलपातपूर्वकम् 'गृह्यतामयं मन्मथेन दत्तो दासजनः' इत्यात्मानमिव प्रतिग्राहयन्ती, 'अद्यप्रभृति भवतो हस्ते वर्तते' इति जीवितमिव स्थापयन्ती ताम्बूलमदात् । आकर्षन्ती[3] च करकिसलयं भुजलतानुसारेण स्पर्शतृष्णागतमनङ्गशरभिन्नमध्यं हृदयमिव पतितमपि रत्नवलयं नाज्ञासीत् । गृहीत्वा चापरं ताम्बूलं महाश्वेतायै प्रायच्छत् ।

अथ सहसैव त्वरितगतिः त्रिवर्णरागमिन्द्रायुधमिव कुण्डलीकृतं कण्ठेन वहता विद्रुमा-

---

धारयन्तम् । शृङ्गारं पोषयद्गान्धर्वविवाहन्यायेन पाणिग्रहणमप्याह—**तत्र चेति** । तस्मिन्काले सा कादम्बरी तस्मै चन्द्रापीडाय हस्तेन ताम्बूलमदात् । कीदृशी । सर्वरसैः[1] शृङ्गारादिभिः कुतोऽप्यनिर्दिष्टस्थानादप्यागत्याधिष्ठिताश्रिता । कीदृशैः रसैः । **तत्कालेति** । तस्मिन्काले सुलभाः सुप्रापा विलासास्तेषां दर्शनं तत्र कुतूहलिभिरिव कौतुकिभिरिव । हस्तं विशेषयन्नाह—**तेनेति** । हस्तेनानिबद्धं न दृग्विषयीकृतं यल्लक्ष्यं वेध्यं तेन शून्यं प्रसारितेन[2] विस्तारितेन चन्द्रापीडस्य यो हस्तस्तस्यान्वेषणं गवेषणं तदर्थमिव पुरोऽग्रे प्रवर्तितः प्रचलितो नखानां पुनर्भवानामंशुनिवहो यस्य तेन । **वेपथुरिति** । वेपथुः कम्पस्तेन चलिता कम्पिता या वलयानां पारिहार्याणामावली श्रेणी तया वाचालेन मुखरेण । शब्दसाम्यमाह—संभाषणमिव जल्पनमिव कुर्वता विदधता । **स्वेदेति** । स्वेदसलिलं घर्मजलं तस्य पातः पतनं तत्पूर्वकं यथा स्यात्तथेति क्रियाविशेषणम् । किं कुर्वन्ती । इत्यात्मानमिव प्रतिग्राहयन्ती ग्रहणं कारयन्ती । इतिशब्दद्योत्यमाह—**गृह्यतामिति** । अयं मल्लक्षणो दासजनो मन्मथेन कंदर्पेण दत्तोऽर्पितो गृह्यतां स्वीक्रियताम् । पुनः किं कुर्वन्ती । इति जीवितमिव प्राणितमिव स्थापयन्ती । इतिशब्दद्योत्यमाह—**अद्येति** । अद्यप्रभृत्यद्यदिनादारभ्य भवतस्तव हस्ते वर्तते । त्वदधीनेत्यर्थः[3] । अन्वयस्तु प्रागेवोक्तः । पुनः किं कुर्वन्ती । ताम्बूलप्रदानानन्तरं करकिसलयं हस्तपल्लवमाकर्षन्त्याकर्षणं कुर्वन्ती च पतितमपि स्रस्तमपि रत्नवलयं मणिकटकं नाज्ञासीन्न ज्ञातवती । एतेन तन्मयत्वं सूचितम् । वलयस्य लोहितमणिनिर्मितत्वसाम्यादाह—**भुजेति** । भुजलता बाहुलता तदनुसारेण[4] तन्मार्गेण स्पर्शतृष्णा तयागतं प्राप्तमनङ्गशरेण कंदर्पबाणेन भिन्नं मध्यं यस्यैवंविधं हृदयमिव । **गृहीत्वेति** । अपरं तद्व्यतिरिक्तं ताम्बूलं नागवल्लीदलं महाश्वेतायै प्रायच्छद्ददात् ।

**अथेति** । ताम्बूलप्रदानानन्तरं सहसैवागत्य सारिका पीतपादा सक्रोधं यथा स्यात्तथावादीदवोचत् । कीदृशी । त्वरिता शीघ्रा गतिर्यस्याः सा । पुनः कीदृशी । शुकेन कीरेणानुबध्यमाना निरुध्यमाना । अथ शुकं विशेषयन्नाह—**वहतेति** । कण्ठेन निगरणेन वहता धारयता । कम् । त्रिवर्णरागम् । किमिव । इन्द्रायुधमिवाखण्डलधनुरिव कुण्डलीकृतं वर्तुलीकृतम् । जातिवर्णनमेतत् । एतदेव विवृणोति—**विद्रुमेति** । चञ्चुपुटेन

---

**टिप्प०**—1 कादम्बरीदर्शनकौतुकिभिः सर्वरसैः सर्वविधैरानन्दैराश्रितेत्यर्थः ( ताम्बूलदानसमये न केवलं स्पर्शविषयक एवानन्दः, मनःप्रमदप्रसूता अन्येऽप्यानन्दा आसन्नित्याशयः ) । शृङ्गारादिभिरिति व्याख्यानं तु जाड्यमेव, तस्मिन्क्षणे नायिकायां रौद्रबीभत्सादिसंबन्धस्यासंभवात्, अनौचित्यात्, रसस्य स्वशब्देनोक्तिदोषस्य बाणसदृशे दूरापास्तत्वाच्च । 2 लज्जावशात् चन्द्रापीडहस्तस्य लक्ष्यमबध्वा तच्छून्ये स्थाने प्रसारितेन ( हस्तेन ) । 3 त्वदधीनम् ( जीवितम् ) इत्यर्थः । 4 प्रसारितां भुजलतामनुसृत्य, तया सहेत्यर्थः ।

---

पाठा०—१ तत्कालविलास. २ अधिष्ठितेनान्यनिबद्धलक्षशून्य. ३ आकर्षयन्ती.

ङ्कुरानुकारिणा[1] चञ्चुपुटेन मरकतद्युतिपक्षतिना मन्थरगतेन[2] शुकेनानुबध्यमाना, कुमुदकेसर-पिञ्जरतया चरणयुगलस्य चम्पककलिकाकारतया च मुखस्य कुवलयदलनीलतया च पक्षद्युतीनां कुसुममयीवागत्य सारिका सक्रोधमवादीत्—'भर्तृदारिके कादम्बरि, कस्मान्न निवारयस्येनमलीकसुभगाभिमानिनं दुर्विनीतं[3] मामनुबध्नन्तं विहंगापसदम्[4] । यदि मामनेन परिभूयमानामुपेक्षसे, ततोऽहं नियतमात्मानमुत्सृजामि । सत्यं शपामि ते पादपङ्कजस्पर्शेन' इत्येवमभिहिता च तया कादम्बरी स्मितमकरोत् । अविदितवृत्तान्ता तु महाश्वेता 'किमियं वदति' इति मदलेखां पप्रच्छ । सा चाकथयत्[5]—'एषा भर्तृदुहितुः सखी कादम्बर्याः कालिन्दीति नाम्ना सारिका, एतस्य[6] परिहासनाम्नः शुकस्य भर्तृदारिकयैव पाणिग्रहणपूर्वकं जायापदं ग्राहिता । अद्य चायमनया प्रत्यूषसि कादम्बर्यास्ताम्बूलकरङ्कवाहिनीमिमां तमालिका-[7]मेकाकिनीं किमपि पाठयन्दृष्टो यतः, ततःप्रभृति संजातेर्ष्या कोपपराङ्मुखी नैनमुपसर्पति, नालपति, न स्पृशति, न विलोकयति, सर्वाभिरस्माभिः प्रसाद्यमानापि न प्रसीदति' इति ।

एतदाकर्ण्य स्फुटस्फुरितकपोलोदरश्चन्द्रापीडो मन्दं मन्दं विहस्याब्रवीत्—'अस्त्येषा कथा,

---

त्रोटिसंपुटेन[1] कृत्वा विद्रुमाङ्कुरं प्रवालप्ररोहमनुकरोतीत्येवंशीलः स तेन । **मरकतेति** । मरकतस्य द्युतिरिव द्युतिर्ययोरेवंविधे पक्षती पक्षमूले यस्य सः । तेन मन्थरं सालसं गतं यस्य स तेन । अथ सारिकां विशिनष्टि—**कुमुदेति** । कुमुदानां केसरं तेन[2] पिञ्जरः पीतरक्तस्तस्य भावस्तत्ता तया चरणयुगलस्याङ्घ्रियुग्मस्य । **चम्पकेति** । चम्पकस्य हेमपुष्पकस्य कलिका कोरकस्तस्या आकार आकृतिर्यस्य तस्य भावस्तत्ता तया मुखस्याननस्य, कुवलयदलान्युत्पलखण्डास्तद्वन्नीलस्तस्य[3] भावस्तत्ता तया, पक्षद्युतीनां छदकिरणानाम् । अत एवाह—कुसुममयीव पुष्पमयीव । अन्वयस्तु प्रागेवोक्तः । किमुवाचेत्याह—**भर्तृदेति** । हे भर्तृदारिके कादम्बरि, कस्माद्धेतोरेनं शुकं न निवारयसि न निराकरोषि । अलीकं मिथ्या सुभगस्य सौभाग्यस्याभिमानोऽहंकारो विद्यते यस्य स तम् । दुर्विनीतं शूकलम् । किं कुर्वन्तम् । मामनुबन्धन्तमनुरोधं कुर्वन्तम् । तथा विहंगेषु पक्षिष्वपसदमधमम् । **यदीति** । यदि मामनेन शुकेन परिभूयमानां पराजितामुपेक्षस उपेक्षां करोषि, ततोऽहं नियतमात्मानमुत्सृजामि । भविष्यति वर्तमाना । त्यक्ष्यामीत्यर्थः । सत्यं स्यात्तथा शपामि शपथं करोमि । केन । ते तव पादपङ्कजस्पर्शेन । तवाङ्घ्रिस्पर्शपूर्वकमित्यर्थः । तयेत्येवमभिहितोक्ता कादम्वरी स्मितमकरोत् । **अविदितेति** । अविदितोऽज्ञातो वृत्तान्त उदन्तो यस्याः सैवंविधा तु महाश्वेता किमियं सारिका वदतीति मदलेखां पप्रच्छ । **सा चेति** । सा मदलेखा इत्यकथयदित्यवोचत् । किमुवाचेत्याह—**एषेति** । एषा भर्तृदुहितुः कादम्बर्याः कालिन्दीति नाम्ना सखी सारिका एतस्य परिहासनाम्नः शुकस्य भर्तृदारिकयैव पाणिग्रहणपूर्वकं जायापदं ग्राहिता स्त्रीत्वं प्रापिता । **अद्य चेति** । अद्य दिने चानया सारिका(कया) प्रत्यूषसि प्रभाते कादम्बर्यास्ताम्बूलकरङ्कवाहिनीमेकाकिनीमिमां तमालिकां किमपि पाठयन्दृष्टः । ततःप्रभृति तद्दिनादारभ्य संजातेर्ष्या यस्याः सा कोपपराङ्मुखी क्रोधावाङ्मुखी नैनं शुकमुपसर्पति समीपे न गच्छति, नालपति न ब्रवीति, न स्पृशति न स्पर्शं करोति, न विलोकयति नेक्षते, सर्वाभिरस्माभिः प्रसाद्यमानापि प्रसन्नीक्रियमाणापि न प्रसीदति न प्रसन्नीभवति । इत्येतदाकर्ण्य श्रुत्वा । **स्फुटमिति** । स्फुटं स्पष्टं स्फुरितं स्पन्दितं कपोलयोरुदरं यस्यैवंविधश्चन्द्रापीडो मन्दं मन्दं विहस्य । स्मितं कृत्वेत्यर्थः । इत्यब्रवीदित्यवोचत् । **अस्तीति** । एषा कथास्ति । एतद्राजकुले श्रूयते एवमाकर्ण्यते ।

**टिप्प०**—1 '°नुकारिचञ्चुपुटेन' इत्येव पाठः सुन्दरः । 2 धिङ् मन्दम् । कुमुदकेसरवत् पीततया । 3 उत्पलं श्वेतवर्णं प्रसिद्धम्, अत एव नीलकमलेति वाच्यम् । 4 हास्योदयात् ।

**पाठा०**—१ अनुकारिचञ्च. २ मन्थरगमनेन शुकेनानुगम्यमाना. ३ अतिदुर्विनीतम्. ४ विहंगमापसदम्. ५ तु. ६ इदमस्य च. ७ तरलिकाम्.

श्रूयत एवैतद्राजकुले, कर्णपरम्परया परिजनोऽप्येवमामन्त्रयते[1], बहिरपि जनाः कथयन्त्येवम्, दिगन्तरेष्वप्ययमालापो वर्तत एव, अस्माभिरप्येतदाकर्णितमेव, यथा किल देव्याः कादम्बर्यास्ताम्बूलदायिनीं[3] तमालिकां[4] कामयमानः परिहासनामा शुको मदनपरवशो गतान्यपि दिनानि न वेत्तीति। तदयमास्तां तावद्वामाचारः परित्यक्तनिजकलत्रो निस्त्रपो[5]ऽनया सह, देव्यास्तु कादम्बर्याः कथमेतद्युक्तं यन्न निवारयतीमां चपलां दुष्टदासीम्, अथवा देव्यापि कथितैव निःस्नेहता[6] प्रथममेव वराकीमिमां कालिन्दीमीदृशाय दुर्विनीताय विहंगाय प्रयच्छन्त्या। किमिदानीमियं[7] करोतु, यदेतत्सापत्न्यकरणं नारीणां प्रधानं कोपकारणम्, अग्रणीर्विरागहेतुः, परं परिभवस्थानम्। इयमेव केवलमतिधीरा, यदनयानेन दौर्भाग्यगरिम्णा जातवैराग्यया विषं वा नास्वादितम्, अनलो वा नासादितः, अनशनं वा नाङ्गीकृतम्। नह्येकमपरमस्ति[8] योषितां लघिम्नः कारणम्, यदि चेयमीदृशेऽप्यपराधेऽनुनीयमानानेन[9] प्रत्यासत्तिमेष्यति, तदा धिगिमाम्, अलमनया, दूरतो वर्जनीयेयमभिभवनिरस्या[10], क एनां पुनरालापयिष्यति, को वावलोकयिष्यति, को वास्या नाम ग्रहीष्यति' इत्येवमभिहितवति तस्मिन्सर्वास्ताः सह कादम्बर्या क्रीडालापभाषिता[11] जहसुरङ्गनाः। परिहासस्तु तस्य नर्मभाषितमाकर्ण्य जगाद—'धूर्त

---

कर्णपरम्परया परिजनोऽपि सेवकजनोऽप्येवमामन्त्रयते। एवं कथयतीत्यर्थः। बहिरपि जना एवं कथयन्ति। दिगन्तरेष्वपि परदेशेष्वप्ययमालापो वर्तत एव। अस्माभिरप्येतत्पूर्वोक्तमाकर्णितमेव श्रुतमेव। तदेव दर्शयन्नाह—**यथेति।** किलेति सत्ये। देव्याः कादम्बर्यास्ताम्बूलदायिनीं तमालिकां कामयमानः प्रार्थयमानः परिहासनामा शुको मदनपरवशो गतान्यतीतान्यपि दिनान्यहानि न वेत्ति न जानाति। **तदयमिति।** तदिति हेत्वर्थे। अयं वामाचारो विरुद्धाचरणः परित्यक्तनिजकलत्रो निस्त्रपो निर्लज्जस्तया सह तावदास्तां तिष्ठतु, देव्यास्तु कादम्बर्याः कथमेतद्युक्तं न्याय्यम्। इमां चपलां चञ्चलां दुष्टदासीं यन्न निवारयति न निषेधति। अथवेति पक्षान्तरे। देव्यापि प्रथममेव निःस्नेहता निष्प्रेमता कथितैवोक्तैव। किं कुर्वन्त्या देव्या। इमां वराकीं कालिन्दीमीदृशाय दुर्विनीताय विहंगाय प्रयच्छन्त्या प्रददत्या। किमिदानीमियं करोतु। न किमपि कर्तुं समर्था। यद्यस्माद्धेतोरेतत्सापत्न्यकरणं नारीणां स्त्रीणां प्रधानं मुख्यं कोपकारणम्। अग्रणीर्मुख्यो विरागस्य विरक्तताया हेतुः। परं परिभवस्थानं मुख्यं पराभवगृहम्। इयमेव कालिन्द्येव केवलमतिधीरा। अस्मिन्नर्थे हेतुमाह—**यदिति।** यद्यस्मात्कारणादनया कालिन्द्या अनेन दौर्भाग्यगरिम्णा[1] शुकेन कृत्वा जातमुत्पन्नं वैराग्यं यस्याः सैवंविधया विषं नास्वादितं न भक्षितम्। अनलो वह्निर्वा नासादितो न गृहीतः। अनशनं प्रायो वा नाङ्गीकृतम्। योषितां लघिम्नः कारणं नह्येकमपरमस्ति[2]। **यदि चेति।** इयं कालिन्दीदृशेऽपराधेऽप्यनुनीयमाना प्रसन्नीक्रियमाणा। अनेन शुकेन प्रत्यासत्तिं संबन्धमेष्यति गमिष्यति, तदेमां धिक्। अनयालं कृतम्। दूरतो वर्जनीया त्याज्येयम्। अभिभवेन निरस्या दूरीकरणीया। क एनां पुनरालापयिष्यति। को वावलोकयिष्यति। को वास्याः कालिन्द्या नामाभिधानं ग्रहीष्यतीत्येवं पूर्वोक्तप्रकारेणाभिहितवति कथितवति तस्मिन्राज्ञि सर्वास्ता अङ्गनाः कादम्बर्या सह जहसुर्हसितवत्यः। कीदृश्यः। क्रीडालापेन नर्मालापेन भाषिता[3] वासिताः। **परीति।** परिहासः शुकस्तु तस्य चन्द्रापीडस्य नर्मभाषितमाकर्ण्य श्रुत्वा जगादोवाच। हे धूर्त राजपुत्र, निपुणाभिज्ञेयम्।

---

टिप्प०—1 अनेन दौर्भाग्यस्य गरिम्णा (गुरुतया), शुकविशेषणं तु प्रमादः। 2 'एवंविधम्' इत्येव पाठः। एवंविधमपरं नास्तीति तदर्थः। 3 'भाविताः' इत्येव। नर्मालापेन भाविताः संजाततदनुगुणभावोदया इत्यर्थः।

---

पाठा०—१ अप्येवं मन्त्रयति एवम्; अपि मन्त्रयते बहिः. २ एवम्. ३ वाहिनीं. ४ तरलिकाम्. ५ निस्त्रपया. ६ अतिनिःस्नेहता. ७ इयं तपस्विनी. ८ एवंविधम्; एवम्. ९ तेन सह. १० निरस्याम्. ११ भाविता.

राजपुत्र, निपुणेयम्, न त्वयान्येन वा लोलापि प्रतारयितुं शक्यते । एषापि बुध्यत एवैतावतीर्वक्रोक्तीः । इयमपि जानात्येव परिहासजल्पितानि । अस्या अपि राजकुलसंपर्कचतुरा मतिः । विरम्यताम् । अभूमिरेषा भुजङ्गभङ्गिभाषितानाम् । इयमेव हि वेत्ति मञ्जुभाषिणी कालं च कारणं च प्रमाणं च विषयं च प्रस्तावं च कोपप्रसादयोः' इति ।

अत्रान्तरे चागत्य कञ्चुकी महाश्वेतामवोचत्—'आयुष्मति, देवश्चित्ररथो देवी च मदिरा त्वां द्रष्टुमाह्वयते' इति । एवमभिहिता च गन्तुकामा 'सखि, चन्द्रापीडः क्वास्ताम्' इति कादम्बरीमपृच्छत् । असौ तु ननु[1] पर्याप्तमेवानेकस्त्रीहृदयसहस्रावस्थानमनेनेति मनसा विहस्य, प्रकाशमवदत्—'सखि महाश्वेते, किं त्वमेवमभिदधासि । दर्शनादारभ्य शरीरस्यापि[2]हं न विभुः, किमुत भवनस्य[3] परिजनस्य वा । यत्रासौ[4] रोचते प्रियसखीहृदयाय वा तत्रायमास्ताम्' इति । तच्छ्रुत्वा महाश्वेतावदत्[5]—'अत्रैव[6] त्वत्प्रासादसमीपवर्तिनि प्रमदवने क्रीडापर्वतकमणिवेश्मन्यास्ताम्,' इत्यभिधाय गन्धर्वराजं द्रष्टुं ययौ । चन्द्रापीडोऽपि तयैव[7] सह

---

त्वयान्येन वा त्वद्व्यतिरिक्तपुंसा लोलापि[1] चपलापि प्रतारयितुं न शक्यते न पार्यते । **एषेति** । एतावतीर्वक्रोक्तीरेषापि बुध्यते जानाति । इयमपि परिहासजल्पितानि जानात्येव । अस्या अपि राजकुलेन संपर्कः संबन्धस्तेन चतुरा चार्थयुक्ता मतिर्बुद्धिः । अतो विरम्यतां मौनं क्रियताम् । नर्मालापभाषणादिति शेषः । भुजंगाः कामिनस्तेषां भङ्गिभाषितानां वक्रोक्तीनामेषाऽभूमिरस्थानम् । इयमेव हि मञ्जुभाषिणी मनोज्ञालापिनी कोपप्रसादयोः कालं समयं कारणं निमित्तं प्रमाणं तद्व्यवस्थापकं पञ्चावयवं वाक्यं विषयं गोचरं प्रस्तावमवसरं च वेत्ति जानातीति ।

**अत्रान्तरे चेति** । अस्मिन्समये कञ्चुक्यागत्य महाश्वेतामित्यवोचदित्यब्रवीत् । इतिशब्दवाच्यमाह—**आयुष्मतीति** । हे आयुष्मति, देवः पूज्यश्चित्ररथाभिधो नृपो देवी च राज्ञी मदिराभिधा त्वां भवतीं द्रष्टुं विलोकयितुमाह्वयत आह्वानं करोति । एवंप्रकारेणाभिहितोक्ता सती गन्तुकामा इति कादम्बरीमपृच्छत् । इतीति किम् । हे सखि कादम्बरि, चन्द्रापीडः क्वास्तां क्व तिष्ठतु । **असौ त्विति** । असौ कादम्बरी मनसा विहस्येति प्रकाशं प्रकटमवदत् । इतियोग्यमाह—**पर्याप्तेति** । अनेनं[2] कृत्वा पर्याप्तमेव परिपूर्णमेव । सेर्ष्यां प्रकटयन्त्याह—**अनेकेति** । अनेका याः स्त्रियस्तासां हृदयानि चेतांसि तेषां सहस्रं तल्लक्षणमवस्थानमावासः । अवस्थानावस्थितिभावस्य समानत्वादेतन्मनोऽन्यासु लग्नमिति भावः । नवकपोलप्रतिबिम्बसंक्रान्तिवशात्प्रागेव दर्शितमित्यनुनयमाह—**किं त्विति** । त्वं किमभिदधासि किं कथयसि । दर्शनादारभ्यावलोकनात्प्रभृति शरीरस्यापि देहस्याप्यहं न विभुः । देहं धारयितुं न समर्थं[3] इत्यर्थः । स भवनस्य परिजनस्य वा किमुत भण्यते । **यत्रेति** । यस्मिन्स्थलेऽसौ चन्द्रापीडः । पुनरार्यामाह—**प्रियेति** । प्रियसखीहृदयाय रोचते रुचिविषयीभवति तत्रायमास्तां तिष्ठतु । एतत्पूर्वोक्तं श्रुत्वाकर्ण्य महाश्वेतावददवोचत् । अत्रैव त्वत्प्रासादसमीपवर्तिनि प्रमदवनेऽन्तःपुरोपवने क्रीडापर्वतकस्य मणिवेश्मनि रत्ननिर्मितगृह आस्तां तिष्ठत्वित्यभिधायेत्युक्त्वा गन्धर्वराजं द्रष्टुं ययौ गतवती । चन्द्रापीडोऽपि तयैव महाश्वेतयैव सह निर्गत्य बहिरागत्य कादम्बर्या समादिष्टा या प्रतीहारी

---

**टिप्प०—1 स्त्रीत्वेन अगभीरबुद्धिरपि । 2 वस्तुतस्तु–'न पर्याप्तमनेकस्त्रीहृदयसहस्रावस्थानेन ?' इत्येव पाठः । स्त्रीहृदयसहस्ररूपेण अवस्थितिस्थानेन किम् न पर्याप्तम् ? अर्थात् हृदयसहस्ररूपं स्थानमस्य किं न यथेष्टं जातमिति काकुः । भावे प्रत्ययः । 3 समर्थेत्याशयः ।**

---

**पाठा०**—१ न पर्याप्तमनेकस्त्रीहृदयसहस्रावस्थानेन. २ अप्ययमेव प्रभुः. ३ भवनस्य. ४ असौ. ५ महाश्वेता तदत्रैव. ६ च. ७ तया सहैव.

निर्गत्य विनोदनार्थं वीणावादिनीभिश्च वेणुवाद्यनिपुणाभिश्च गीतकलाकुशलाभिश्च दुरोदर-क्रीडारागिणीभिश्चाष्टापदपरिचयचतुराभिश्च चित्रकर्मकृतश्रमाभिश्च सुभाषितपाठिकाभिश्च कादम्बरीसमादिष्टप्रतीहारीप्रेषिताभिः कन्याभिरनुगम्यमानः पूर्वदृष्टेन केयूरकेणोपदिश्यमानमार्गः क्रीडापर्वतमणिमन्दिरमगात् ।

गते च तस्मिन्गन्धर्वराजपुत्री विसर्ज्य सकलसखीजनं परिजनं च परिमितपरिचारिकाभिरनुगम्यमाना प्रासादमारुरोह । तत्र च शयनीये निपत्य दूरस्थिताभिर्विनयनिभृताभिः परिचारिकाभिर्विनोद्यमाना कुतोऽपि प्रत्यागतचेतना चैकाकिनी तस्मिन्काले 'चपले, किमिदमारब्धम्' इति निगृहीतेव लज्जया, 'गन्धर्वराजपुत्रि, कथमेतद्युक्तम्' इत्युपालब्धेव विनयेन, 'अयमसावव्युत्पन्नो बालभावः क्व गतः' इत्युपहसितेव मुग्धतया, 'स्वैरिणि, मा कुरु यथेष्टमेकाकिन्यविनयम्' इत्यामन्त्रितेव कुमारभावेन, 'भीरु, नायं कुलकन्यकानां क्रमः' इति गर्हितेव महत्त्वेन, 'दुर्विनीते, रक्षाविनयम्' इति तर्जितेवाचारेण, 'मूढे, मदनेन लघुतां नीतासि' इत्यनुशासितेवाभिजात्येन, 'कुतस्तवेयं तरलहृदयता' इति धिक्कृतेव धैर्येण, 'स्वच्छन्दचारिणि, अप्रमाणीकृताहं त्वया' इति निन्दितेव कुलस्थित्यातिगुर्वीं लज्जामुवाह ।

---

द्वाररक्षानियुक्ता तया प्रेषिताभिः प्रतीताभिर्वीणावादिनीभिर्वेणुवाद्यं वंशवाद्यं तत्र निपुणाभिर्दक्षाभिर्गीतं गानं तल्लक्षणा या कला विज्ञानं तत्र कुशलाभिर्दक्षाभिः । **दुरोदरेति** । दुरोदरक्रीडा द्यूतक्रीडा तस्यां राग अनुरागो विद्यते यासां ताभिः । अष्टापदः शारिफलं तत्र यः परिचयस्तस्मिंश्चतुराभिः । **चित्रेति** । चित्रकर्मालेख्यकर्म तत्र कृतो विहितः श्रमो याभिः । सुभाषितानि सूक्तानि तेषां पाठिकाभिः । एवंविधाभिः कन्यकाभिरनुगम्यमानः । अत्र कलानां भिन्नभिन्नाश्रयत्वसूचनार्थं चकारः । कीदृशो नृपश्चन्द्रापीडः । पूर्वदृष्टेन केयूरकेणोपदिश्यमानः प्रदर्श्यमानो मार्गः पन्था यस्य सः । क्रीडापर्वतमणिमन्दिरमगाद्गतवान् ।

भावशबलानि व्यञ्जयन्नाह—**गते चेति** । तस्मिंश्चन्द्रापीडे गते सति गन्धर्वराजपुत्री कादम्बरी सकलसखीजनं समग्रवयस्याजनं परिजनं परिच्छदलोकं च विसर्ज्य गृहे गम्यतामित्यादिश्य परिमितपरिचारिकाभिः स्तोकपरिच्छदस्त्रीभिरनुगम्यमाना प्रासादो देवभूपानां गृहं तमारुरोहारूढवती । तत्र मणिमन्दिरे शयनीये शय्यायां निपत्य पतनं कृत्वा विरहव्याकुलचित्तत्वेन शयनाभावाद्दूरस्थिताभिर्दविष्ठदेशावस्थायिनीभिर्विनयनिभृताभिर्मर्यादावतीभिः एवंविधाभिः परिचारिकाभिर्विनोद्यमाना विनोदविषयीक्रियमाणा कुतोऽपि प्रत्यागता पश्चादागता चेतना यस्याः सा । चन्द्रापीडदर्शनान्मन्मथेन चैतन्यमपहृतं तत्प्रत्यागतमिति भावः । सैवंविधैकाकिनी तस्मिन्काले स्वात्मानं संबुध्याह—**चपलेति** । हे चपले चञ्चले, किमिदमारब्धं प्रस्तुतमिति लज्जया त्रपया निगृहीतेव निरुत्तरीकृतेव । हे गन्धर्वराजपुत्रि, कथमेतत्पूर्वोक्तं युक्तं न्याय्यमित्युपालब्धेव विनयेन । उपालम्भस्तिरस्कारविशेषः । अयमसौ अव्युत्पन्नो बालभावः शिशुभावः क्व गत इत्युपहसितेव हास्यगोचरीकृतेव मुग्धतया । हे स्वैरिणि स्वेच्छाचारिणि, एकाकिनी यथेष्टमविनयं मा कुर्वित्यामन्त्रितेव निमन्त्रितेव कुमारभावेन बालभावेन । हे भीरु, कुलकन्यकानामयं न क्रम इति गर्हितेव निन्दितेव महत्त्वेन गरिम्णा । दुर्विनीते, अविनयं रक्षेति तर्जितेवाचारेण । हे मूढे, मदनेन कंदर्पेण लघुतां तुच्छतां नीतासि प्रापितासीत्यनुशासितेवानुशिक्षितेवाभिजात्येन भूमिकानुसारितया । कुतस्तवेयं तरलहृदयतेति धिक्कृतेव धैर्येण । हे स्वच्छन्दचारिणि, अहं त्वयाऽप्रमाणी-

---

**टिप्प०**—1 अबोधः, यौवनकालिकशृङ्गारविषयकभावानभिज्ञः । 2 धिङ् मन्दम् ! आमन्त्रणपूर्वकमुपदिष्टेव, इत्यर्थः । 3 कौलीन्येन ।

---

**पाठा०**—१ विनोदार्थम्. २ गृहम्. ३ सकलं. ४ ततः. ५ अदूरस्थिताभिः. ६ विधृताभिः. ७ परिचयचतुराभिरुपास्यमानापि. ८ लघुतां नीतासि मदनेनेति शापितेव. ९ तरलता.

समचिन्तयच्चैवम्—'अगणितसर्वशङ्कया[3] तरलहृदयतां दर्शयन्त्याद्य मया किं कृतमिदं मोहा-न्धया। तथा हि, अदृष्टपूर्वोऽयमिति साहसिकतया मया न शङ्कितम् । लघुहृदयां मामयं कलयिष्यतीति निर्ह्रीकया नाकलितम् । कास्य चित्तवृत्तिरिति मया न परीक्षितम् । दर्शना-नुकूलाहमस्य नेति वा तरलया न कृतो विचारक्रमः । प्रत्याख्यानवैलक्ष्यान्न भीतम् । गुरु-जनान्न त्रस्तम् । लोकापवादान्नोद्विग्नम् । तथा च महाश्वेतातिदुःखितेति दाक्षिण्यया नापे-क्षितम् । आसन्नवर्तिसखीजनोऽप्युपलक्षयतीति मन्दया न लक्षितम् । पार्श्वस्थितः परिजनः पश्यतीति नष्टचेतनया न दृष्टम् । स्थूलबुद्धयोऽपि तादृशीं विनयच्युतिं विभावयेयुः, किमु-तानुभूतमदनवृत्तान्ता महाश्वेता सकलकलाकुशलाः सख्यो वा राजकुलसंचारचतुरो वा नित्यमिङ्गितज्ञः परिजनः । ईदृशेष्वतिनिपुणतरदृष्टयोऽन्तःपुरदास्यः । सर्वथा हतास्मि मन्दपुण्या । मरणं मेऽद्य श्रेयो न लज्जाकरं जीवितम् । श्रुत्वैतद्वृत्तान्तं किं वक्ष्यत्यम्बा, तातो वा, गन्धर्वलोको वा । किं करोमि । कोऽत्र प्रतीकारः । केनोपायेन स्खलितमिदं प्रच्छादयामि । कस्य वा चापलमिदमेतेषां दुर्विनीतानामिन्द्रियाणां कथयामि । क्व वानेन

---

कृतेति निन्दितेव कुलस्थित्यातिगुर्वीमतिमहतीं लज्जां त्रपामुवाह धारयामास । **समिति** । एवमग्रे वक्ष्यमाणं समचिन्तयदध्यायत् । एवंशब्दवाच्यमाह—**अगणितेति** । अगणिताः सर्वाः समग्राः शङ्का यया सा तया । किं कुर्वन्त्या । तरलहृदयतां चञ्चलचित्ततां दर्शयन्त्या प्रकाशयन्त्या अद्य मोहान्धया मयेदं किं कृतं किं विहि-तम् । तदेव दर्शयति—**तथा हीति** । अदृष्टपूर्वोऽनवलोकितपूर्वोऽयं चन्द्रापीड इति साहसिकतया साहसयु-क्तया मया न शङ्कितम् । तथा मां लघुहृदयां तुच्छचित्तामयं कलयिष्यतीति निर्ह्रीकया निर्लज्जया नाकलितम्। तथा कास्य चित्तवृत्तिरिति मया न परीक्षितं परीक्षा न कृता । तथा दर्शनानुकूला दर्शनयोग्याहमस्य नेति वा मया तरलया चपलया विचारक्रमो न कृतो न विहितः । तथा प्रत्याख्यानं प्रतिषेधस्तज्जनितं यद्वैलक्ष्यं तस्मान्न भीतं न त्रस्तम् । तथा गुरुजनात्पूज्यजनान्न त्रस्तं चकितम् । तथा लोकापवादाज्जनप्रवादान्नोद्विग्नं नोद्वेगं प्राप्तम् । तथा च महाश्वेतातिदुःखितेति दाक्षिण्यया गतानुकूलतया नापेक्षितमपेक्षा न कृता । तथासन्नवर्ती समीपवर्ती सखीजनोऽप्यालीजनोऽप्युपलक्षयति ज्ञास्यति । भविष्यति वर्तमानः । इति मन्दया मूर्खया न लक्षितं न ज्ञा-तम् । तथा पार्श्वस्थितः समीपस्थः परिजनं परिच्छदः पश्यत्यवलोकयतीति नष्टचेतनया मया न दृष्टम् । तथा स्थूलबुद्धयोऽपि तादृशीं विनयच्युतिं संभावयेयुः विभावनां कुर्युः । अनुभूतोऽनुभवं नीतो मदनवृत्तान्तो यया सैवंविधा महाश्वेता सकलकलाकुशलास्तस्याः सख्यो वयस्या वा राजकुले संचारः संचरणं तत्र चतुरो-ऽभिज्ञो नित्यमिङ्गितज्ञ इङ्गितं शरीरचेष्टा तदभिज्ञः परिजनो वा । ईदृशेषु कार्येष्वतिनिपुणतरा दृष्टयो यासां ता अन्तःपुरदास्यः । एतासां किमुत भण्यते । एताः पराभिप्रायं विदन्त्येवेति भावः । अतः सर्वथा मन्दपुण्याहं हतास्मि । मे मम मरणमद्य श्रेयः । लज्जाकरं त्रपाजनकं जीवितं न श्रेयः । एतद्वृत्तान्तमुदन्तं श्रुत्वाकर्ण्याम्बा माता, तातः पिता वा, गन्धर्वलोकः स्वजनवर्गो वा, किं वक्ष्यति कथयिष्यति । अहं किं करोमि किमनु-तिष्ठामि । कोऽत्रास्मिन्विषये प्रतीकारः प्रतिक्रिया । केनोपायेन प्रपञ्चेनेदं स्खलितं दुश्चेष्टितं प्रच्छादयाम्याव्र-णोमि । एतेषां दुर्विनीतानामिन्द्रियाणां करणानां चापलं चाञ्चल्यं कस्य वा कथयामि निवेदयामि । क्व वानेन

---

**टिप्प०—**1 लज्जा, वैयाकुली वा । 2 पुनः पपात मन्दभाग्यः । 'निर्दाक्षिण्यया' दाक्षिण्य(औदार्य)-रहितया मया, इत्यर्थः ।

---

**पाठा०—**१ अगणितसर्वशङ्काम्. २ मोहान्धया हताशया. ३ मां लोकः. ४ मूढया. ५ तरलतया. ६ दुःखिता. ७ निर्दाक्षिण्यायाः. ८ निपुणदृष्टय. ९ एतम्.

दग्धहृदया पञ्चबाणेन गच्छामि । तथा महाश्वेताव्यतिकरेण प्रतिज्ञा कृता, तथा प्रियसखीनां पुरो मन्त्रितम्, तथा च केयूरकस्य हस्ते संदिष्टम्, न खलु जानामि मन्दभागिनी शठविधिना वा, उत्सन्नमन्मथेन वा, पूर्वकृतापुण्यसंचयेन वा, मृत्युहतकेन वा, अन्येन वा केनाप्ययमानीतो मम विप्रलम्भकश्चन्द्रापीडः । कोऽपि वा न कदाचिद्दृष्टः, नानुभूतः, न च श्रुतः, न चिन्तितः, नोत्प्रेक्षितः, मां विडम्बयितुमुपागतः । यस्य दर्शनमात्रेणैव संयम्य दत्तेव, इन्द्रियैः शरपञ्जरे निक्षिप्य समर्पितेव, मन्मथेन दासीकृत्योपनीतेव, अनुरागेण निर्यातितेव, गृहीतमूल्येन गुणगणेन विक्रीतेव, हृदयेनोपकरणीभूतास्मि । न मे कार्यं तेन चपलेन' इति क्षणमिव संकल्पमकरोत् । कृतसंकल्पा चान्तर्गतेन 'मिथ्याविनीते, यदि मया न कृत्यम्, एष गच्छामि' इति हृदयोत्कम्पचलितेन परिहसितेव

---

पञ्चबाणेन कंदर्पेण दग्धहृदया गच्छामि व्रजामि। तथा महाश्वेताया व्यतिकरेण वृत्तान्तेन मया प्रतिज्ञा संगरः कृता पत्युर्न सेवनीय इति तथापि प्रियसखीनामतिवल्लभवयस्यानां पुरः पुरतो मन्त्रितमालोचितम्। तथा केयूरकस्य हस्ते महाश्वेतायै संदिष्टं संदेशः प्रेषितः तत्रोत्तरभाव्यनर्थापरिज्ञाननिमित्तमित्याह—**न खल्विति**। न खलु निश्चयेनाहं मन्दभागिनी एतन्न जानामि नाकलयामि। किं तदित्याह—**शठेति**। शठो मूर्खो यो विधिर्ब्रह्मा तेन वा, उत्सन्नो दृप्तो मन्मथः कंदर्पस्तेन वा, पूर्वं कृतो योऽपुण्यसंचयः पापभरस्तेन वा, मृत्युलक्षणो यो हतको हत्याकृत्तेन वा, अन्येनानिर्दिष्टनाम्ना केनापि वा मम विप्रलम्भको वियोगरूपोऽयं चन्द्रापीड आनीतः प्रापितः। पूर्वपरिचिन्तितं निरस्यन्नाह—**कोऽपीति**। कोऽप्ययं न कदाचिद्दृष्टः, नानुभूतः न च श्रुत आकर्णितः, न चिन्तितो ध्यातः, नोत्प्रेक्षितः पुनःपुनर्विलोकितो यन्मां विडम्बयितुं कदर्थनां कर्तुमुपागतः प्राप्तः। **यस्येति**। यस्य चन्द्रापीडस्य दर्शनमात्रेण कारणभूतेन हृदयेन[1] कर्तृभूतेन संयम्य बद्ध्वा दत्तेव समर्पितेवेन्द्रियैः करणैः करणभूतैः शरपञ्जरे काशघटितगृहे निक्षिप्य हृदयेन समर्पितेव। तथा मन्मथेन कंदर्पेण करणभूतेन दासीकृत्य हृदयेनोपनीतेव प्रापितेव। तथानुरागेण चन्द्रापीडविषयकेण कृत्वा हृदयेन निर्यातितेव निःसारितेव। तथा गृहीतमूल्येनात्तवेतनेन गुणगणेन करणभूतेन हृदयेन विक्रीतेव विक्रयीकृतेव। अतोऽहमुपकरणीभूतोपस्करभूतास्मि। यथा गृहोपकरणं यत्र तत्रोपयोगि न तथाहमित्यर्थः। भावशबलत्वं पोषयन्नाह—**नेति**। तेन चपलेन न मे कार्यं प्रयोजनमिति क्षणमिव क्षणसदृशं संकल्पमकरोदप्रणयत्। इयं निर्वेदावस्था। तामुपमर्द्य पुनरपि रतिभावावस्थामाह—**कृतेति**। कृतसंकल्पा च विहितसंकल्पा च। अन्तर्गतेनेति चन्द्रापीडेत्यादि त्रिष्वपि संबध्यते। त्रयाणामेव हृदये स्थितत्वात्परिहासप्रश्नाभिहितत्वान्नियुक्तानि। तान्येवाह—**हृदयेति**। हृदये य उत्कम्पो ग्लानिविशेषस्तेन चलितेन कम्पितेन चन्द्रापीडेन हे मिथ्याविनीते, यदि मया न कृत्यं तदैषोऽहं गच्छामि व्रजामीति कृत्वा परिहसितेव कृतहास्येव। तथा तस्य चन्द्रापीडस्य यः परित्यागस्तस्य सं-

---

**टिप्प०**—1 पुनः सर्वं ग्रन्थमाधुर्यं चूर्णीकृतवान् दैवहतकः। क्वात्र 'हृदयेन' इति कर्तृपदम्? न खलु एकस्य हृदयस्य संयमनकार्ये स्वारस्यम्। अविचारशीलोयमाह—'इन्द्रियैः शरपञ्जरे निक्षिप्य समर्पितेव'। इन्द्रियवराकाणां सविधे कीदृशाः शराः? अत एव सर्वोयं मोहप्रपञ्चः। टीकानुरोधेन–कविहृदयाभिमतः पाठो निरस्यते, मन्दमतिना कल्पितो दुष्पाठस्तु उपरि स्थाप्यत इति हन्त महान्मेऽपराधः। अस्तु। सहृदयाः एवं किल मूलं पठेयुः—"मां विडम्बयितुमुपागतः, यस्य दर्शनमात्रेणैव संयम्य दत्तेवेन्द्रियैः, शरपञ्जरे निक्षिप्य समर्पितेव मन्मथेन, दासीकृत्योपनीतेवानुरागेण, गृहीतगुणपणेन विक्रीतेव हृदयेन, उपकरणीभूतास्मि।" गुणरूपं पणम् (मूल्यम्) गृहीत्वा हृदयेन विक्रीतेव। अत एव उपकरणीभूतास्मि विक्रेयद्रव्यीभूतास्मि, इत्यर्थः। अन्यत्स्पष्टम्।

---

**पाठा०**—१ दग्धहृदयेन गृहीता गच्छामि; दग्धहृदयेन पञ्चबाणेन न खलु जानामि गृहीता गच्छामि. २ केयूरकहस्ते. ३ उपन्यस्तः; उपनतः. ४ दर्शनमात्रकेण. ५ अनुरागेण गृहीतगुणगणेन विक्रीतेव. ६ अशरणीभूतास्मि.

चन्द्रापीडेन[1], तत्परित्यागसंकल्पसमकालप्रस्थितेन कण्ठलग्नेन पृष्टेव जीवितेन, 'अविशेषज्ञे, पुनरपि प्रक्षालितलोचनया दृश्यतामसौ जनः, प्रत्याख्यानयोग्यो न वा' इति तत्कालागतेनाभिहितेव बाष्पेण, 'अपनयामि ते सहासुभिर्धैर्यावलेपमि'ति निर्भर्त्सितेव मनोभुवा, पुनरपि तथैव चन्द्रापीडाभिमुखहृदया बभूव ।

तदेवमस्तमितप्रतिसमाधानबलात्[2]प्रेमावेशेनास्वतन्त्रीकृता परवशेवोत्थाय जालवातायनेन तमेव क्रीडापर्वतक[3]मवलोकयन्त्यतिष्ठत् । तत्रस्था च सा तमानन्दजलव्यवधानोद्विग्नेव स्मृत्या ददर्श, न चक्षुषा । अङ्गुलीगलितस्वेदपरामर्शभीतेव चिन्तया लिलेख, न चित्रतूलिकया । रोमाञ्चतिरोधानशङ्कितेव हृदयेनालिलिङ्ग, न वक्षसा । तत्संगमकालातिपातासहेव मनो गमाय[4] नियुक्तवती, न परिजनम् । चन्द्रापीडोऽपि प्रविश्य स्वच्छन्दं[5] कादम्बरीहृदयमिव द्वितीयं

---

कल्पस्तदध्यवसायस्तत्समकालं प्रस्थितेन चलितेन कण्ठलग्नेन जीवितेन पृष्टेव प्रश्नविषयीकृतेव । अन्योऽपि यः प्रस्थानं करोति सोऽपि कण्ठे लगित्वा गच्छामीति प्रश्नपूर्वकं व्रजति । तत्कालागतेन तत्समयावच्छेदेन प्रादुर्भूतेन बाष्पेन नेत्राम्बुनेत्यभिहितेवेति कथितेव । इतिवाच्यमाह—**अविशेषेति** । हे अविशेषज्ञे, पुनरपि प्रक्षालितलोचनया त्वयासौ जनो दृश्यतामालोक्यताम् । न चाप्रत्याख्यानयोग्यो निराकरणयोग्यः । **इतीति** । इति मनोभुवा कंदर्पेण निर्भर्त्सितेवाधिक्षिप्तेव । इतियोत्यमाह—**अपेति** । ते तवासुभिः प्राणैः सह धैर्यावलेपं धीरिमाहंकारमपनयामि दूरीकरोमि । **पुनरपीति** । तथैव पूर्वोक्तप्रकारेणैव चन्द्रापीडस्याभिमुखं हृदयं यस्या एवंभूता पुनरपि बभूव जज्ञे ।

उत्कण्ठातिशयेन रतिभावं पुनः मो(पो)षयन्नाह—**तदेवमिति** । तदेवं पूर्वोक्तप्रकारेणास्तमितमस्ततां प्राप्तं सत्समाधानं किमनेन चपलेन कार्यमित्यादि निर्वेदरूपं तदेव बलं तस्मात्[1]प्रेमा चन्द्रापीडविषयकः स्मृतिरूपस्तस्यावेशेन प्रवेशेनास्वतन्त्रीकृता परायत्तीकृता परवशेव पराधीनेवोत्थायोत्थानं कृत्वा जालवातायनेन जालगवाक्षेण तमेव क्रीडापर्वतकमवलोकयन्ती पश्यन्त्यतिष्ठदासीत् । पुनर्भावानेवाह—**तत्रस्थेति** । तत्रस्था वातायनोपविष्टा सा तं चन्द्रापीडमानन्दजलेन हर्षाश्रुणा यद्व्यवधानं तेनोद्विग्नेवोद्वेगं प्राप्तेव स्मृत्यानुभवव्यतिरिक्तज्ञानेन ददर्शालोकयांचकार न चक्षुषा । अङ्गुलिभ्यो गलितो यः स्वेदस्तस्य परामर्शः संश्लेषस्तेन भीतेव त्रस्तेव चिन्तया लिलेख, न चित्रतूलिकया । तदाकृतिं भावनया भावितवती, न कूर्चिकया लिखितवतीत्यर्थः । **रोमाञ्च इति** । रोमाञ्चो रोमोद्गमस्तेन तिरोधानमाच्छादनं तेन शङ्कितेव हृदयेन चित्तेनालिलिङ्गाश्लेषं कृतवती । न वक्षसा भुजान्तरेण । **तस्येति** । तस्य चन्द्रापीडस्य यः संगमः संश्लेषस्तत्र कालातिपातः कालविलम्बस्तं सोढुमसहेवाशक्तेव गमाय[2] तदालिङ्गनाय मनो नियुक्तवती प्रेषितवती । न परिजनम् । अत्रायमभिप्रायः—आनन्दजलं व्यवधायकमिति न चक्षुषा तथादर्शनमित्युद्वेगः । अङ्गुलीगलितस्वेदेन चित्रतूलिकाविलिखनस्य विलोपो भयहेतुर्वक्षसालिङ्गनेन च रोमाञ्च एव व्यवधायक इति सर्वथा नानन्तरितालिङ्गनमिति शङ्काहेतुः । मनसः सत्वरगतिं मत्वा तस्य परिजनस्य तथात्वभावात्कालातिपातः । अत्र चानन्दजलादीनां स्मृत्यादीनां चातिशया व्यङ्ग्याः । नायिकामालम्ब्य भावशबलत्वमुक्त्वा नायकमाश्रित्य भावशबलत्वमाह—**चन्द्रापीडोऽपीति** । स्वच्छन्दं यत्कादम्बरीहृदयं तद्वदिव द्वितीयं मणिगृहं प्रविश्य शिलातल आस्तीर्णायां विस्तारितायामुभयतः पार्श्वद्वय

---

**टिप्प०—1** पुनरपि ग्रन्थाक्षरराणां दुर्दशा क्रियते । 'तदेवमस्तमितप्रतिसमाधानबला बलात्प्रेमावे०' इत्येव पाठः । अस्तमितं प्रतिसमाधानबलं धैर्यावलम्बनसामर्थ्यं यस्याः, अतएव प्रेमावेशेन बलात् अस्वतन्त्रीकृता, अत एव परवशेव उत्थाय, इति तदर्थः । 2 'गमागमाय' इत्येव पाठः । चन्द्रापीडान्तिके यातायाताय मनो नियुयोज, मनसो द्रुतगामित्वात् ।

---

पाठा०—१ चन्द्रापीडेन तत्परित्याग. २ बलाबलात्. ३ पर्वतम्. ४ गमागमाय; गमनागमने. ५ स्वच्छम्.

मणिगृहं शिलातलास्तीर्णायामुभयत उपर्युपरि निवेशितबहूपधानायां कुथायां निपत्य केयूरके-णोत्सङ्गेन[1] गृहीतचरणयुगलस्ताभिर्यथादिष्टेषु भूमिभागेषूपविष्टाभिः कन्यकाभिः परिवृतो दोला-यमानेन चेतसा चिन्तां विवेश । किं तावदस्या गन्धर्वराजदुहितुः कादम्बर्याः सहभुव एते विलासा एवेदृशाः सकललोकहृदयहारिणः, आहोस्विदनाराधितप्रसन्नेन भगवता मकरकेतुना मयि नियुक्ता, येन मां सास्रेण सरागेणाकूणित[2]त्रिभागेण हृदयान्तःपतत्स्मरशरकुसुमरजोरू-षितेनेव चक्षुषा तिर्यग्विलोकयति । मद्विलोकिता च धवलेन स्मितालोकेन दुकूलेनेव लज्जा-यात्मानमावृणोति । मल्लज्जाविवर्तमानवदना च प्रतिबिम्बप्रवेशलोभेनेव कपोलदर्पणमर्पयति । मदवकाशदायिनो हृदयस्य प्रथमाविनयलेखामिव कररुहेण शयनाङ्के लिखति । मत्ताम्बूल-वीटिकोपनयनखेदविधूतेन रक्तोत्पल[3]भ्रमभ्रमद्भ्रमरवृन्देन करतलेन स्विन्नं मुखमिव गृहीततमाल-

---

उपर्युपरि निवेशितानि स्थापितानि बहून्युपधानान्युच्छीर्षकाणि यस्यामेवंविधायां कुथायां प्रवेण्यां निपत्य केयू-रकेणोत्सङ्गेन गृहीतमात्तं चरणयुगलमङ्घ्रियुग्मं यस्य सः, ताभिर्यथादिष्टेषु यथायोग्यं कथितेषु भूमिभागेषूपविष्टाभिः कन्यकाभिः परिवृतः सहितो दोलायमानेन कम्पमानेन चेतसा कृत्वा चिन्तां विवेश । चिन्तामग्नो बभूवेत्यर्थः । किं तावदस्या गन्धर्वराजदुहितुः कादम्बर्याः सहभुवः स्वाभाविकाः सकललोकहृदयहारिण ईदृशा एते विलासा एव । आहोस्विद्वितर्के । अनाराधितश्चासौ प्रसन्नश्चैवंविधेन भगवता मकरकेतुनेति सावधारणं तेन मकरकेतुनैव मयि कादम्बरी नियुक्ता नियोजिता, येन मन्मथनियोगेन सास्रेणास्रं रुधिरं तेन, सरागेण स्नेहयुक्तेना-कूणितो वक्रीकृतस्त्रिभागो यस्मिन् । **हृदयेति** । हृदयान्तः पतन्तो ये स्मरशराः कंदर्पबाणास्त एव कुसुमानि तेषां रजः परागस्तेन रूषितेनेव चक्षुषा नेत्रेण तिर्यग्विलोकयति । इदं चिन्ताधिरूढामधिकृत्योक्तम् । अन्यथा प्रासादाधिरूढायास्तस्या विलोकनासंभवात् । एवमन्यानपि तद्व्यापारान्स्वानुकूलानेव चिन्तयन्नाह— **मदिति** । मद्विलोकिता सती लज्जया धवलेन स्मितालोकेन[2] शुभ्रत्वसाम्यादाह—**दुकूलेति** । दुकूलेनेवात्मा-नमावृणोत्याच्छादयति । प्रतिबिम्बमधिकृत्याह—**मदिति** । मल्लज्जया विवर्तमानं वदनं यस्या एवंविधापि प्रति-बिम्बस्य यः प्रवेशस्तस्य लोभेनेव कपोलदर्पणमर्पयति[3] । मुखविवर्तनेऽपि कपोलस्य तदभिमुखत्वादिति भावः । नखकर्षणचेष्टामधिकृत्याह—**मदिति** । ममावकाशदायिनो हृदयस्य प्रथमामाद्यामविनयलेखामिव कररुहेण पुनर्भवेण शयनस्य[4] पल्यङ्कस्याङ्क उत्सङ्गे लिखति । ताम्बूलप्रदानसमये तस्याः करकम्पक्रियामधिकृत्याह— **ममेति** । मम ताम्बूलवीटिकाया यदुपनयनं प्रापणं तस्माद्यः खेदः प्रयासस्तेन विधूतेन कम्पितेन, रक्तोत्पलं कोकनदं तस्य यो भ्रमस्तेन भ्रमद्भ्रमरवृन्दं मधुकरपटलं यस्मिन्नितादृशेन करतलेन गृहीततमाल-पल्लवेन(नेव) । भ्रमराणां तत्सादृश्यादिति भावः । **मदिति** । मद्विलोकनात्प्रेम्णा स्विन्नं मुखमिव[5] वीजयति ।

---

**टिप्प०**—1 अन्वयोऽशुद्धः पाठश्चापि । कादम्बर्या एते विलासाः सहजाः सकललोकहृदयहारिणः, उत मकरकेतुना नियुक्ताः, इत्यन्वयः । टीकाकारहतकस्तु 'कादम्बर्याः विलासाः स्वाभाविकाः, उत इयं कादम्बरी कामेन नियुक्ता,' इति विलासानां स्वाभाविकाऽस्वाभाविकत्वकोटिद्वये कादम्बरीमवतारयति । विलासानां कोटिद्वयप्रसङ्गे कादम्बर्याः संकथा सर्वथा मन्दमतित्वमेवेति स्थूलप्रज्ञोपि जानीयादित्यलम् । 2 मन्दहास्यप्रभया दुकूलेनेव आत्मानमाच्छादयति । 3 कपोल एव दर्पणः । परावर्तितवदनापि मम प्रतिबिम्बपतनलोभेन निजकपोलमभिमुखीकरोतीत्यर्थः । 4 शयनीयस्य मध्यभागे कामाकूतवशाद्यो नखैरुल्लेखस्तत्र कल्पयति यत् मह्यमवकाशदायिनो हृदयस्य अविनयरेखामिव कर्षति । 5 पुनरधोमुखः पपात—रक्तोत्पलभ्रमेण पतन्तो भ्रमरा यस्मिन्नीदृशेन अत एव गृहीततमालपल्लवेनेव करेण, दानपरि-श्रमेण स्विन्नं मुखं वीजयतीव । श्रमवशाद्विधुते हस्ते मुखवीजनस्य, भ्रमरपाते तमालपल्लवस्य चेत्युत्प्रेक्षा-द्वयम् । करे रक्तोत्पलभ्रम इति भ्रान्तिरिति त्रयाणां संकरः ।

---

पाठा०—१ उत्सङ्गे. २ कूणित. ३ लोभभ्रान्तभ्रमर. ४ खिन्नं.

पल्लवेनेव वीजयति । पुनश्चाचिन्तयत्—'प्रायेण मानुष्यकसुलभा लघुता मिथ्यासंकल्पसहस्रैरेवं[1] मां विप्रलभते, लुप्तविवेको यौवनमदो मदयति, मदनो वा । यतस्तिमिरोपहतेव यूनां दृष्टिरल्पमपि कालुष्यं महत्पश्यति । स्नेहलवोऽपि वारिणेव यौवनमदेन दूरं विस्तीर्यते[2] । स्वयमुत्पादितानेकचिन्ताशताकुला कविमतिरिव तरलता न किंचिन्नोत्प्रेक्षते । निपुणमदन[3]गृहीता चित्रवर्तिकेव तरुणचित्तवृत्तिर्न किंचिन्नालिखति । संजातरूपाभिमाना कुलटेवात्मसंभावना न क्वचिन्नात्मानमर्पयति । स्वप्न इवानुभूतमपि[4] मनोरथो दर्शयति । इन्द्रजालपिच्छिकेवासंभाव्यमपि प्रत्याशा पुरः स्थापयति' । भूयश्च चिन्तितवान्—'किमनेन वृथैव मनसा खेदितेन, यदि सत्यमेवेयं धवलेक्षणा मय्येवंजातचित्तवृत्तिस्तदा नचिरात्स एवैनामप्रार्थितानुकूलो मन्मथः प्रकटीकरिष्यति । स एवास्य संशयस्य छेत्ता भविष्यति' इत्यवधार्योत्थायोपविश्य च ताभिः कन्यकाभिः सहाक्षैर्गेयैश्च, विपञ्चीवाद्यैश्च, पाणविकैश्च, स्वरसंदेहविवादैश्च, तैस्तैरालापैः सुकुमारैः कलाविलासैः क्रीडन्नासांचक्रे । मुहूर्तं च स्थित्वा निर्गम्योपवनालोकनकुतूहलाक्षिप्तचित्तः क्रीडापर्वत[5]शिखरमारुरोह ।

---

**पुनरिति** । पुनरचिन्तयच्चिन्तितवान् । किं तदित्याह—**प्रायेणेति** । प्रायेण बाहुल्येन मानुष्यके भवे सुलभा सुप्रापा लघुता मिथ्या मुधा संकल्पसहस्रैर्मनोरथसहस्रैरेवं पूर्वोक्तप्रकारेण । मामित्यात्मनिर्देशः । विप्रलभते वञ्चयतीत्यर्थः । तथा लुप्तो विवेको येनैतादृशो यौवनमदस्तारुण्यगर्वो मदयति मदं जनयति । एवं मदनोऽपि । यतस्तिमिरोपहतेव यूनां दृष्टिरल्पमपि कालुष्यं महत्पश्यति । अल्पा[1]पि योषितां चित्तविकृतिर्बहुत्वेन जानातीत्यर्थः । स्नेहलवोऽपि प्रीतिलेशोऽपि वारिणेव यौवनमदेन दूरं विस्तीर्यते दूरं नीयते । **स्वयमिति** । स्वयमात्मनोत्पादिता अनेकेषामभिलषणीयवस्तूनां चिन्तास्तत्तद्विषयकमनोवृत्तयस्तासां शतं तेनाकुला व्याकुला तरलता तृष्णाविशेषः किंचिन्न नोत्प्रेक्षतेऽभिलषते अपि तु सर्वमेवोत्प्रेक्षत इति भावः । केव कविमतिरिव । सापि स्वयमुत्पादितानेकेषां वर्णनीयानां या चिन्ता स्मृतिस्तस्याः शतं तेनाकुला व्याप्ता सती किंचिन्न नोत्प्रेक्षते । अपि तु सर्वमेवोत्प्रेक्षालंकारविषयीकरोतीत्यर्थः । **निपुणेति** । निपुणोऽभिज्ञो यो मदनः कंदर्पस्तेन गृहीता स्वीकृता तरुणचित्तवृत्तिश्चित्रवर्तिकेव किंचिन्न नालिखति । अपि तु सर्वमेवालिखतीत्यर्थः । **संजातेति** । संजातं रूपस्य सौन्दर्यस्याभिमानोऽहंकारो यस्या एवंविधात्मसंभा[2]वना कुलटेव क्वचिन्न नात्मानमर्पयति । अपि तु सर्वत्रात्मानं दत्त इत्यर्थः । स्वप्न इवानु[3]भूतमपि मनोरथो दर्शयति । प्रत्याशा दुराशेन्द्रजालपिच्छिकेवासंभाव्यमपि पुरोऽग्रे स्थापयति प्रतिष्ठितं करोति । **भूयश्चेति** । पुनरप्यन्यच्चिन्तितवान् । धृतिमाह—**किमनेनेति** । अनेन पूर्वोदन्तेन वृथैव मुधैव मनसा खेदितेन किम्, यदि सत्यमेव धवलेक्षणा कादम्बरी मय्येवं जातचित्तवृत्तिस्तदा नचिरात्स्तोककालेनाप्रार्थित एवानुकूलो दाक्षिण्यवान्मन्मथः स एवैनां चित्तवृत्तिं प्रकटीकरिष्यति । **स एवेति** । स एव कंदर्प एव । **अस्येति** । अस्याश्चित्तवृत्तिर्मयि वर्तते न वेत्येवंरूपस्यास्य संशयस्य छेत्ता दूरीकर्ता भविष्यति । इत्यवधार्य निश्चयं कृत्वोत्थायोपविश्य च ताभिः पूर्वोक्ताभिः कन्यकाभिः सहाक्षैः पाशकैर्गेयैर्गानैश्च । विपञ्ची वाद्यं येषां तैश्च । पणवो वादित्रविशेषो विद्यते येषां ते पाणविकास्तैश्च । स्वराणां षड्जादीनां ये संदेहास्तेषां विवादैश्च । सुभाषितानि सूक्तानि तेषां गोष्ठीभिश्च । अन्यैश्च पूर्वोक्तव्यतिरिक्तैस्तैस्तैरालापैश्च सुकुमारैः कलाविलासैः क्रीडन्क्रीडां कुर्वन्नासांचक्रेऽधितस्थौ । मुहूर्तं च स्थित्वा तत्रावस्थानं विधाय तदन्तरं निर्गम्य बहिरागत्योपवनस्यालोकनं तस्य कुतूहलं कौतुकं तेनाक्षिप्तं चित्तं यस्य सः क्रीडापर्वतशिखरमारुरोहारूढवान् ।

---

टिप्प०—1 अल्पामपि विकृतिं बहुतरां जानातीत्यर्थः । 2 आत्मश्लाघा । 3 अननुभूतमपीत्येव पाठः । स्वप्न इव यूनां मनोरथः अननुभूतमपि द्रव्यादिकं नायिकानुरागादिकं च दर्शयतीत्यर्थः ।

---

पाठा०—१ एवमायास्य माम्. २ विसार्यते. ३ मन्मथ. ४ अननुभूतम्. ५ पर्वतक.

कादम्बरी तु [1]तं दृष्ट्वा चिरयतीति महाश्वेतायाः किल वर्त्मा[2]वलोकयितुं वि[3]मुच्यतां गवाक्षमित्युक्त्वानङ्गक्षिप्तचित्ता सौधस्योपरितनं शि[4]खरमारुरोह । तत्र च विरलपरिजना, स[5]कलशशिमण्डलपाण्डुरेणातपत्रेण हे[6]मदण्डेन निवार्यमाणातपा, चतुर्भिर्वालव्यजनैश्च फेनशुचिभिरुद्धूयमानैरुपवीज्यमाना, शिरसि कुसुमगन्धलुब्धेन भ्रमता भ्रमरकुलेन दिवापि नीलावगुण्ठनेनेव चन्द्रापीडाभिसरणवेषम[7]भ्यस्यन्ती, मुहुश्चामरशिखां समासज्य, मुहुश्छत्रदण्डमवलम्ब्य, मुहुस्तमालिकास्कन्धे करौ विन्यस्य, मुहुर्मद[8]लेखां परिष्वज्य, मुहुः परिजनान्तरितसकलदेहा नेत्रत्रि[9]भागेणावलोक्य, मुहुरावलितत्रिवलीवलया परिवृत्य, मुहुः प्रतीहारीवेत्रलताशिखरे कपोलं निधाय, मुहुर्निश्चलकरविधृतामधरपल्लवे वीटिकां निवे[10]श्य, मुहुरु[11]द्गीर्णोत्पलप्रहारपलायमानपरिजनानुसरणदत्तकतिपयपदा विहस्य तं विलोकयन्ती, तेन च विलोक्यमाना, महान्तमपि कालमतिक्रान्तं नाज्ञासीत् । आरुह्य च प्रतीहार्या निवेदितमहाश्वेताप्रत्यागमना तस्मादवततार । स्नानादिषु मन्दादरापि महाश्वेतानुरोधेन दिवसव्यापारमकरोत् ।

---

कादम्बरी तु तं चन्द्रापीडं दृष्ट्वा विलोक्य चिरयति विलम्बते इति महाश्वेतायाः किल वर्त्म मार्गमवलोकयितुं वीक्षितुं गवाक्षं वातायनं विमुच्यतामुद्घाट्यतामित्युक्त्वानङ्गक्षिप्तचित्ता सौधस्योपरितनं शिखरमारुरोहारूढवती । **तत्र चेति** । तस्मिन्स्थले । इतः कादम्बरीं विशेषयन्नाह—**विरलेति** । विरलः स्वल्पः परिजनो यस्याः सा । **सकलेति** । सकलं समग्रं यच्छशिमण्डलं चन्द्रबिम्बं तद्वत्पाण्डुरेण श्वेतेन हेमदण्डेन सुवर्णदण्डेनातपत्रेण छत्रेण निवार्यमाणो दूरीक्रियमाण आतपो यस्याः सा । उद्धूयमानैः कम्पमानैः फेनः कफस्तद्वच्छुचिभिर्निर्मलैश्चतुर्भिर्वालव्यजनैश्चामरैश्चोपवीज्यमाना । **शिरसीति** । शिरसि मस्तके कुसुमानां पुष्पाणां गन्धस्तत्र लुब्धेन गर्धेन भ्रमरकुलेन मधुकरवृन्देन भ्रमता पर्यटता । दिवापि भ्रमरकुलस्य नीलत्वात्तत्साम्येनाह—**नीलेति** । नीलं यदवगुण्ठनं शिरोवेष्टनं तेनेव । अभिसारिकावेषमधिकृत्याह—**चन्द्रेति** । चन्द्रापीडस्याभिसरणं तत्र यो वेषस्तमभ्यस्यन्त्यभ्यासं कुर्वन्ती उत्कण्ठिताचेष्टितान्याह—**मुहुरिति** । मुहुः क्षणमात्रं चामरशिखां वालव्यजनप्रान्तं समासज्यालम्ब्य । मुहुश्छत्रदण्डमवलम्ब्यालम्बनीकृत्य । मुहुस्तमालिकास्कन्धे करौ हस्तौ विन्यस्य संस्थाप्य । मुहुर्मदलेखां परिष्वज्याक्षिप्य । मुहुः परिजनेनान्तरितो व्यवहितः सकलदेहो यस्या एवंविधा सती नेत्रत्रिभागेणावलोक्य निरीक्ष्य । मुहुरावलितं त्रिवल्या वलयं मण्डलं यस्याः सा परिवृत्य परावर्तनं कृत्वा । मुहुः प्रतीहारी द्वाररक्षानियुक्ता स्त्री तस्या वेत्रलता यष्टिविशेषस्तस्याः शिखरे प्रान्ते कपोलं गल्लात्परप्रदेशं निधाय । मुहुर्निश्चलो निष्कम्पो यः करो हस्तस्तेन विधृतां वीटिकामधरपल्लव ओष्ठकिसलये निवेश्य स्थापयित्वा । मुहुरुद्गीर्णं क्षिप्तं यदुत्पलं तस्य प्रहारस्तेन पलायमानो यः परिजनस्तस्मिन्ननुसरणं तत्र दत्तानि कतिपयपदानि यया सा विहस्य हास्यं कृत्वा तं विलोकयन्ती तेन च चन्द्रापीडेन विलोक्यमानातिक्रान्तं व्यतीतं महान्तमपि कालं समयं नाज्ञासीन्न ज्ञातवती । इतश्चारुह्य चारोहणं कृत्वैव प्रतीहार्या द्वारपालिकया निवेदितं ज्ञापितं महाश्वेताप्रत्यागमनं यया सैवंविधा तस्मात्सौधादवततारोत्तीर्णा । स्नानादिषु मन्दादरापि शिथिलोद्यमापि महाश्वेतानुरोधेन दिवसव्यापारं दिनकृत्यमकरोद्व्यदधात् । चन्द्रापीडोऽपि तस्मात्क्रीडापर्वतशिखरा-

---

**टिप्प०—1 अत्रापि निपतति टीकाकारः । महाश्वेतामार्गदर्शनार्थं गवाक्षोद्घाटने आज्ञापिते पुनः सौधपृष्ठारोहणस्याप्रसक्तत्वात् । तस्मात्—तं ( क्रीडापर्वतकस्थं चन्द्रापीडम् ) दृष्ट्वा 'महाश्वेता चिरयति' इति तस्या आगमनमार्गमवलोकयितुम् ( सोयं व्याजः, वास्तवे तु चन्द्रापीडदर्शनार्थम् ) 'विमुच्य तं गवाक्षम्' अधिष्ठितं गवाक्षं त्यक्त्वा प्रासादस्य शिखरमारुरोह । इति पाठः, तदर्थश्च ।**

---

**पाठा०**—१ तातम्. २ अवलोकयितुमुद्यता. ३ विमुच्य तं गवाक्षमनङ्ग. ४ तलं कैलासशिखरमिव गौर्यारुरोह. ५ शशि. ६ विरञ्चितहेमदण्डेन. ७ वेषाभ्यासं कुर्वती मुहुः, वेषाभ्यासमिव कुर्वती कैलासशिखर इव गौरी मुहुः. ८ मदलेखां सखीम्. ९ त्रिभागेण मुहुः. १० विनिवेश्य. ११ उद्गीर्णकर्णोत्पलः, उद्धूर्णकर्णोत्पल.

चन्द्रापीडोऽपि तस्मादवतीर्य प्रथमविसर्जितेनेव कादम्बरीपरिजनेन निर्वर्तितस्नानविधिर्निरुपहतशिलार्चिताभिमतदैवतः क्रीडापर्वतक एव सर्वमाहारादिकमहःकर्म चक्रे ।

क्रमेण च कृताहारः क्रीडापर्वतकप्राग्भागभाजि, मनोहारिणि, हारीतहरिते, हरिणरोमन्थफेनशीकरासारे, सीरायुधहलभयनिश्चलकालिन्दीजलत्विषि, तरुणीचरणालक्तकरसशोणशोचिषि, कुसुमरजःसिकतिलतले, लतामण्डपोपगूढे, शिखण्डिताण्डवसंगीतगृहे, मरकतशिलातल उपविष्टो दृष्टवान्सहसैवातिबहलधाम्ना धवलेनालोकेन जलेनेव निर्वाप्यमाणं दिवसम्, मृणालवलयेनेव पीयमानमातपम्, क्षीरोदेनेव प्लाव्यमानां महीम्, चन्दनरसवर्षेणेव सिच्यमानान्दिगन्तान्, सुधयेव विलिप्यमानमम्बरतलम् । आसीच्चास्य मनसि—'किमु खलु भगवानोषधिपतिरकाण्ड एव शीतांशुरुदितो भवेत्, उत यन्त्रविक्षेपविशीर्यमाण-

---

दवतीर्योत्तीर्य प्रथमविसर्जितेनेवाद्यप्रहितेनेव कादम्बरीजनेन निर्वर्तितो विहितः स्नानविधिर्यस्य सः । निरुपहताखण्डा या शिला तस्यामर्चिता पूजिताभिमतदेवता येन सः क्रीडापर्वतक एव सर्वमाहारादिकमहःकर्म चक्रे ।

**क्रमेणेति ।** क्रमेणानुक्रमेण कृत आहारो भोजनं येन सः मरकतशिलातल उपविष्ट आसीनोऽतिवहलं धाम तेजो यस्मिन्नेवंविधेन धवलेन शुभ्रेणालोकेन जलेनेव निर्वाप्यमाणं विलुप्यमानं दिवसं दृष्टवानित्यन्वयः । मरकतशिलातलं विशेषयन्नाह—**क्रीडेति ।** क्रीडापर्वतकस्य प्राग्भागभाजि पूर्वप्रदेशवर्तिनि मनोहारिणि चित्तक्षोभजनके । मरकतानां नीलत्वादाह—**हारीतेति ।** हारीतः पक्षिविशेषो मृदङ्कुरस्तद्वद्धरिते नीले । **हरिणेति ।** हरिणानां मृगाणां यो रोमन्थश्चर्वितस्य चर्वणं तस्य फेनः कफस्तस्य शीकराणां वातास्तविप्रुषामासारो वेगवान्वर्षो यस्मिन् । **सीरेति ।** सीरायुधो रामो हलं सीरं तस्माद्भयं तेन निश्चला कालिन्दी यमुना तस्या जलं पानीयं तद्वत्त्विट् कान्तिर्यस्मिन् । **तरुणीति ।** तरुणीनां मानिनीनां यश्चरणालक्तकः पादरञ्जनार्थं यावकरसस्तेन शोणा रक्ता शोचिः कान्तिर्यस्मिन् । कुसुमानां पुष्पाणां रजो धूलिस्तेन सिकतिलं सिकतायुक्तं तलं यस्मिन् । लतामण्डपैरुपगूढे व्याप्ते । **शिखण्डितेति ।** शिखण्डिनां मयूराणां यत्ताण्डवं नृत्यं तस्य संगीतगृहं तस्मिन् । अथ चातपं सूर्यालोकं दृष्टवान् । कीदृशम् । मृणालवलयेनेव पीयमानमास्वाद्यमानम् । नायं सूर्यस्यातपः किंतु मृणालवलयस्येत्यर्थः । पुनर्महीं वसुधां दृष्टवान् । कीदृशीम् । क्षीरोदेनेव क्षीरसमुद्रेणेव प्लाव्यमानां वाह्यमानाम् । पुनर्दिगन्तरान्दृष्टवान् । कीदृशान् । चन्दनरसवर्षेणेव सिच्यमानानभिषेकविषयीक्रियमाणान् । तदनन्तरमम्बरतलं व्योमतलं दृष्टवान् । कीदृशम् । सुधया गृहधवलीकरणद्रव्येण विलिप्यमानं विलेपनविषयीक्रियमाणम् । **आसीच्चेति ।** अस्य चन्द्रापीडस्य मनस्येवमासीत् । खलु निश्चयेन । किमु भगवानोषधिपतिः शीतांशुश्चन्द्रोऽकाण्ड एवाप्रस्ताव एवोदितो भवेदुद्गतः स्यात् । उत यन्त्रस्य विक्षेपः प्रपातस्तेन विशीर्यमाणानि

---

**टिप्प०**—1 'प्रथमविसर्जितेनैव कादम्बरीपरिजनेन' इत्येव पाठः । पूर्वतः प्रेरितेन कादम्बरीपरिजनेन निर्वर्तितः स्नानव्यापारो यस्य सः, इत्यर्थः । 2 अन्तर्गतीक्रियमाणम् । 3 मरकतशिलातलोपविष्टश्चन्द्रापीडः अकस्मात् गगनधरण्यादिषु परितो व्याप्तमद्भुतं धवलिमानमपश्यत् येन हि अकाण्डे चन्द्रोदयादेराशङ्काऽस्य समभवदिति प्रघट्टकस्यास्य सारः । [ कादम्बर्या प्रेषितस्य हारस्यायं प्रकाश इति कविना कृतो भूमिकातिशयः । ]

---

**पाठा०**—१ निवर्तित. २ हरिणी. ३ समुपविष्टः. ४ वनेनेव; धवलेन. ५ दिगन्तरान्. ६ भगवानौषधिपतिः; केतकीगर्भपत्रपाण्डुरो भगवानोषधिपतिः.

पाण्डुरधारासहस्राणि धारागृहाणि मुक्तानि, आहोस्विदनिलविकीर्यमाणसीकरधवलितभुवनाम्बरसिन्धुः[3] कुतूहलाद्धरातलमवतीर्णा' इति ।

आलोकानुसारप्रहितचक्षुरद्राक्षीदनल्पकन्यकाकदम्बपरिवृतां ध्रियमाणधवलातपत्रामुद्धूयमानचामरद्वयां का[3]दम्बरीं प्रतीहार्या वामपाणिना वेत्रलतागर्भेणार्द्रवस्त्रशकलावच्छन्नमुखं चन्दनानुलेपनसनाथं नालिकेरसमुद्गकमुद्वहन्त्या दक्षिणकरेण दत्तहस्तावलम्बाम्, केयूरकेण च निःश्वासहार्ये निर्मोकशुचिनी धौते कल्पलतादुकूले दधता निवेद्यमानमार्गाम्, मालतीकुसुमदामाधिष्ठितकरतलया च तमालिकयानुगम्यमानामागच्छन्तीं मदलेखाम्, तस्याश्च समीपे तरलिकाम्, तया च सितांशुकोपच्छदे पटलके गृहीतं धवलताकारणमिव क्षीरोदस्य, सहभुवमिव चन्द्रमसः, मृणालदण्डमिव नारायणनाभिपुण्डरीकस्य, मन्दरक्षोभविक्षिप्तमिवामृ-

---

विशरारुतां प्राप्यमाणानि पाण्डुरधाराणां सहस्राणि येष्वेवंविधानि धारागृहाणि मुक्तानि । आहोस्विदिति वितर्के। अनिलेन वायुना विकीर्यमाणा विक्षिप्यमाणा ये सीकरा वातास्तवारीणि तैर्धवलितं शुभ्रीकृतं भुवनं यया सैवंविधाम्बरसिन्धुर्गङ्गा कुतूहलाद्धरातलं पृथ्वीतलमवतीर्णागता ।

आलोकस्यानुसारेण प्रहितं प्रेषितं चक्षुर्येनैवंभूतश्चन्द्रापीडः कादम्[4]बरीम्, अथ चागच्छतीं मदलेखाम्, अथ च तस्याः समीपे तरलिकाम्, तया च सितांशुकं श्वेतवस्त्रमुपच्छदं यस्मिन्नेतादृशे पटलके पात्रविशेषे गृहीतं हारं चाद्राक्षीत् । अथ कादम्[4]बरीं विशिनष्टि—**अनल्पेति** । अनल्पा बह्व्यो याः कन्यकाः कुमार्यस्तासां कदम्बः समूहस्तेन परिवृतां सहिताम् । **ध्रियमाणेति** । ध्रियमाणं धवलं शुभ्रमातपत्रं छत्रं यस्याः सा ताम् । उद्धूयमानं वीज्यमानं चामरद्वयं यस्याः सा ताम् । प्रतीहार्या द्वारागतजननिवेदनकारिण्या । **वामेति** । वेत्रलता गर्भे मध्ये यस्यैवंविधेन वामपाणिनापसव्यहस्तेन कृत्वार्द्रं यद्वस्त्रं तस्य शकलं खण्डं तेनावच्छन्नमाच्छादितं मुखं यस्यैवंभूतं चन्दनस्यानुलेपनेन सनाथं सहितं नालिकेरसमुद्गकं श्रीफलमध्यवर्तिगोलकमुद्वहन्त्या दक्षिणेन करेणापसव्यपाणिना दत्तो हस्तावलम्बो यस्याः सा ताम् । **केयूरकेणेति** । निःश्वासेन श्वासवातेन हार्ये हर्तुं योग्ये निर्मोकः कञ्चुकस्तद्वच्छुचिनी निर्मले धौते क्षालिते कल्पलतादुकूले दधता धारयतैवंविधेन केयूरकेण च निवेद्यमानो मार्गो यस्याः सा ताम् । अथ मदलेखां विशेषयन्नाह—**मालतीति** । मालती जाती तस्याः कुसुमानि पुष्पाणि तेषां दाम स्रक् तेन अधिष्ठितं अधिश्रितं करतलं यस्या एतादृश्या तमालिकया भुजिष्ययानुगम्यमानाम् । अथ हारस्य श्वेतत्वप्रकर्षमाश्रित्योत्प्रेक्षते—**धवलतेति** । क्षीरोदस्य क्षीरसमुद्रस्य या धवलता शुभ्रता तस्याः कारणमिव निमित्तमिव । एतेन क्षीरोदस्य स्वाभाविकी धवलता न, किं तु तद्धवलताया हेतुरेवायम् । क्षीरोदस्य हारगर्भत्वस्य वक्ष्यमाणत्वादन्तर्गतस्य हारस्येत्यर्थः । चन्द्रमसः शशिनः सहभुवमिव सहसमुत्पन्नमिव । **नारायणेति** । नारायणो विष्णुस्तस्य नाभिपुण्डरीकस्य तुन्दकूपिकासिताम्भोजस्य मृणालदण्डमिव । मन्दरो मेरुस्तस्य क्षोभेण विक्षिप्तं दूरीकृतममृतस्य पीयूषस्य फेनपिण्डो

---

**टिप्प०—**1 पाण्डुरवर्णानां जलधाराणाम् । 2 जलयन्त्र ('फुँहारा' इति भाषा) गृहाणि । 3 हन्त कीदृग्दौर्भाग्यं बाणस्य यत्सर्वथा बोधलेशरहितोपि टीकयितुं धार्ष्ट्यमाचरति । हारोपहरणाय न स्वयं कादम्बर्यागच्छत्, न चेदमनुरूपमपि । हारपरिचये प्रोच्यते—'गन्धर्वराजेनापि कादम्बर्यै' (दत्तः) । अपि कादम्बरी स्वयमेवं वदेत् ? अस्तु. वाचयतां स्पष्टमग्रे भवेद्यत् सतरलिका मदलेखैवानुप्रेषिताऽत्र । तस्मात्—'कादम्बरीप्रतीहार्या' इत्येव पाठः । वेत्रलतागर्भेण वामपाणिना नारिकेलसमुद्गकमुद्वहन्त्या कादम्बरीप्रतिहार्यां दत्तहस्तावलम्बामित्यर्थः । 4 अज्ञानमेवेदम् । मदलेखां विशिनष्टीति बोध्यम् ।

---

**पाठा०—**१ पारदरसधाराः, जलधाराः. २ सिन्धुर्धरातलमवतीर्णा कुतूहलाच्चालोक. ३ कादम्बरीप्रतीहार्या. ४ नारिकेल.

तफेनपिण्डनिकरम्, वासुकिनिर्मोकमिव मन्थनश्रमोज्झितम्, हास[1]मिव कुलगृहवियोगगलितम्, मन्दरमथनविखण्डिताशेषशशिकलाखण्डसंचयमिव संहृतम्, [2]प्रतिमागततारागणमिव जलनिधिजलादुद्धृतम्, दिग्ग[3]जकरसीकरासारमिव पुं[4]ञ्जीभूतम्, नक्षत्रमालाभरणमिव मदनद्विपस्य, श[5]रच्छकलैरिव कल्पितम्, कादम्बरीरूपवशीकृतमुनिजनहृदयैरिव निर्मितम्, गुरुमिव सर्वरत्नानाम्, यशोराशिमिवैकत्र घटितं सर्वसागराणाम्, प्रतिपक्षमिव चन्द्रमसः, जीवितमिव ज्योत्[6]स्निकायाः, लक्ष्मीहृदयमिव नलिनीदलगलज्जलबिन्दुविलासतरलम्, उत्कण्ठितमिव मृणालवलयधवलकरम्, शरच्छशिनमिव घनमुक्तांशुनिवहधवलितदिङ्मुखम्, म[7]न्दाकिनीमिव सुरयुवतिकुचपरिमलवाहिनम्, प्रभावर्षिणमतितारं हारम्। दृष्ट्वा चायमस्य चन्द्रापीड-

---

डिण्डीरपिण्डस्तस्य निकरमिव। **मन्थनेति** । मन्थनस्य श्रमः खेदस्तेनोज्झितं त्यक्तं वासुकिर्नागराजस्तस्य निर्मोकमिव कञ्चुकमिव। **कुलेति**। कुलगृहं पितृगृहं तस्य यो वियोगो भर्तृगृह आगमनं तस्मिन्नवसरे गलितं स्रस्तं हासमिवे[1]। दृश्यते हि पितृगृहाद्भर्तृगृहे व्रजन्त्याः पितृवात्सल्यवशाद्धासो गलितो भवति किं पुनरुद्वेग एव भवतीति। मन्दरमथनेन विखण्डिता या अशेषाः समग्राः शशिकलास्तासां संहृतं खण्डसंचयमिव। जलनिधिजलादुद्धृतं प्रतिमागतं प्रतिरूपागतं तारागणमिव नक्षत्रसमूहमिव पुञ्जीभूतम्। **दिगिति**। दिग्गजा दिग्दन्तिनस्तेषां कराः शुण्डादण्डास्तेषां सीकराणां सारमिव रहस्यमिव । **मदनेति**। मदनद्विपस्य कंदर्पहस्तिनो नक्षत्रमा[2]लासंज्ञितमाभरणमिव विभूषणमिव । **शरदिति** । शरद्धनात्ययस्तस्य शकलैरिव खण्डैरिव कल्पितं निर्मितं हृदयनिर्मलत्वात् । तदभिप्रायेणाह—**कादम्बिति** । कादम्बरी राजसुता तस्या रूपं सौन्दर्यं तेन वशीकृतानि यानि मुनिजनहृदयानि तैर्निर्मितमिव। सर्वरत्नानां समग्रमणीनां गुरुमिव श्रेष्ठमिव। सर्वसागराणां समग्रसमुद्राणामेकत्र घटितं यशोराशिमिव। चन्द्रमसः शशिनः प्रतिपक्षमिव। ज्योत्स्निकायाश्चन्द्रिकाया जीवितमिव। **नलिनीति** । नलिनी पद्मिनी तस्या दलानि पत्राणि तेभ्यो गलन्तः क्षरन्तो ये जलबिन्दवस्तेषां विलासस्तद्वत्तरलं चञ्चलम्, उत्कण्ठितं लक्ष्मीहृ[3]दयमिव। **मृणालेति**। मृणालानि बिसानि तेषां वलयं तद्वद्धवलाः करा यस्य स तम्। घनमुक्तो योंऽशुनिवहः किरणसमूहस्तेन धवलितं दिङ्मुखं येनैवंभूतं शरच्छशिनमिव। सुरयुवतिकुचानां यः परिमल आमोदस्तद्वाहिनं मन्दाकिनीमिवैतादृशं प्रभावर्षिणमतितारमतिमनोहरं हारम्। **दृष्ट्वा चेति**। दृष्ट्वा विलोक्य चन्द्रापीडः। **चन्द्रेति**। चन्द्रातपद्युतिवद्द्युतिर्यस्यै-

---

**टिप्प०—1 'हासमिव श्रियः कुलगृह०' इत्येव पाठः। लक्ष्मीहासत्वेनैवोत्प्रेक्षणेऽतिशयात्। 2 सप्तविंशतिमौक्तिकैः कृता माला। 3 लक्ष्मीहृदयमिवेत्यादयश्चतस्रः श्लेषोत्थापिता उपमाः, अत एवार्थद्वयम्। टीकाकारवराकस्य तु नास्य परिचयोऽपि। अत एव उत्कण्ठितमिवेति पृथगुपमामपि लक्ष्मीहृदयस्य विशेषणीचकार। अतः सर्वासामप्युपमानामनुक्तोऽर्थो निम्ने सूच्यते। लक्ष्मीहृद०—नलिनीदलगलज्जलबिन्दुविलास इव विलासः ( दीप्तिः ) यस्य ईदृशः तरलः ( मध्यमणिः ) यस्य तम् ( हारम् )। पक्षे टीकायां स्पष्टम्। उत्कण्ठितमिव मृणाल०—उत्सुकम् ( विरहिणम् ) इव मृणालवलयेन धवलौ करौ (संतापशान्त्यर्थम्) यस्य तम्। पक्षे टीकायाम्। शशिनमिव०—घनो निबिडो यो मुक्तानां (मौक्तिकानाम्) अंशुनिवहस्तेन धवलितदिङ्मुखम् ( हारम् )। पक्षे टीकायाम्। मन्दाकिनीमिवेति टीकाकारहतकस्याज्ञानम्। 'मन्दाकिनीप्रवाहमिव' इति पाठः। धारणात्परिमलवाहिनम् ( हारम् )। अवगाहनाच्च मन्दाकिनीप्रवाहम्।**

---

**पाठा०—**१ हासमिव श्रियः. २ प्रतिमातारा. ३ दिग्गजशीकरासरपुञ्जीभूतम्. ४ पुञ्जीकृतम्. ५ शरन्मेघशकलैः. ६ ज्योत्स्नायाः. ७ मन्दाकिनीप्रवाहम्.

श्चन्द्रातपद्युतिमुखो[1] धवलिम्नः कारणमिति मनसा निश्चित्य दूरादेव प्रत्युत्थानादिना समुचितोपचारक्रमेण[2] मदलेखामापतन्तीं[3] जग्राह[4]।

सा तु तस्मिन्नेव मरकतग्रावणि मुहूर्तमुपविश्य स्वयमुत्थाय तेन चन्दनाङ्गरागेणानुलिप्य ते च द्वे दुकूले परिधाप्य तैश्च मालतीकुसुमदामभिरारचितशेखरं कृत्वा तं हारमादाय चन्द्रापीडमुवाच—'कुमार, तवेयमपहस्तिता[5]हंकारकान्ता पेशलता प्रीतिपरवशं[6] जनं कमिव न कारयति। प्रश्रय एव ते ददात्यवकाशमेवंविधानाम्। अनया चाकृत्या कस्यासि न जीवितस्वामी। अनेन चाकारणाविष्कृतवात्सल्येन चरितेन कस्य न बन्धुत्वमध्यारोपयसि। एषा च ते प्रकृतिमधुरा व्यवहृतिः कस्य न वयस्यतामु[7]त्पादयति। कस्य[8] वा न समाश्वासयन्त्यमी[9] स्वभावसुकुमारवृत्तयो भवद्गुणाः। त्वन्मूर्तिरेवात्रोपालम्भ[10]मर्हति, या प्रथमदर्शन एव विश्रम्भमुपजनयति। इतरथा हि त्वद्विधे सकलभुवनप्रथितमहिम्नि प्रयुज्यमानं सर्वमेवानुचितमिवाभाति। तथा हि—संभाषणमप्यधःकरणमिवापतति। आदरोऽपि प्रभुताभिमानमिवानुमापयति। स्तुतिरप्यात्मो-

---

वंविधं मुखं यस्य सः। धवलिम्नो विशेषणं वा। पूर्वोपवर्णितमयं हार इवास्य धवलिम्नः कारणमिति मनसा निश्चित्य दूरादेव प्रत्युत्थानादिना समुचितेन योग्येनोपचारक्रमेणापतन्तीमागच्छन्तीं मदलेखां जग्राह प्रत्युद्गमेन तामासादितवान्।

**सा त्विति।** सा तु मदलेखा तस्मिन्नेव मरकतग्रावण्यश्मगर्भशिलायां मुहूर्तं क्षणमात्रमुपविश्यावस्थानं कृत्वा स्वयमात्मनोत्थाय तेन चन्दनाङ्गरागेण मलयजविलेपनेनानुलिप्य ते च पूर्वोक्ते द्वे दुकूले परिधाप्य तैश्च मालतीकुसुमदामभिर्जातीपुष्पस्रग्भिरारचितशेखरं विरचितावतंसं कृत्वा तं हारमादाय गृहीत्वा चन्द्रापीडमुवाचोक्तवती। किमुवाचेत्याह—**कुमारेति**। हे कुमार हे चन्द्रापीड, तवेयमपहस्तितो दूरीकृतोऽहंकारो ययैवंविधा कान्ता मनोहरा पेशलता सुन्दरता कमिव प्रीतिपरवशं जनं न कारयति। ते तव प्रश्रय एव विनय एवावकाशमवगाहं ददात्येवंविधानां पुरुषाणाम्। अनया चाकृत्याकारविशेषेण त्वं कस्य जीवितस्वामी नासि। अपि तु सर्वेषामित्यर्थः। अनेन चाकारणेनानिमित्तेनाविष्कृतं प्रकटीकृतं यद्वात्सल्यं हितं यस्मिन्नेवंविधेन चरितेन समाचरणेन कस्य बन्धुत्वं नाध्यारोपयसि। एषा च ते तव प्रकृत्या स्वभावेन मधुरा मिष्ठा व्यवहृतिर्व्यापारः कस्य न वयस्यतां मित्रतामुत्पादयति। स्वभावेन सुकुमारा वृत्तिर्येषामेवंविधा अमी भवद्गुणाः कस्य न समाश्वासयन्ति समाश्वासनां कुर्वन्ति। **त्वदिति**। अत्रार्थे त्वन्मूर्तिरेवोपलम्भमनुभवमर्हति साक्षात्कारयोग्या भवति। या प्रथमदर्शन एव प्रथमावलोकन एव विश्रम्भं विश्वासमुपजनयति। अतस्त्वद्विधे त्वत्सदृशे पुरुषे सकलभुवने प्रथितः प्रख्यातो महिमा माहात्म्यं यस्मिन्नेव प्रयुज्यमानं कथ्यमानं सर्वमनुचितमिवायोग्यमिवाभाति। तदेव दर्शयति—**तथा हीति**। संभाषणमपि जल्पनमप्यधःकरणमिवापतति। अनुचितेन सर्वोचितस्य संभाषणमनुचितमेव करोतीति न्यायादिति भावः। **आदर इति**। आदरोऽपि बहुमानोऽपि प्रभुताया ऐश्वर्यस्याभिमानमिवानुमापयति ज्ञापयति। स्तुतिरपि नुतिरप्यात्मन उत्सेक

---

**टिप्प०**—1 हन्त हन्त किं प्रलपति वैधेयः। 'चन्द्रातपद्युतिमुषो धवलिम्नः' इति पाठः। अयं हारः चन्द्रातपद्युतिं मुष्णाति तादृशस्य अस्य धवलिम्नः कारणमिति तदर्थः। 2 न बुद्धवान् वराकोऽर्थम्। प्रीतिकरणे भवन्मूर्तिः ( भवदाकृतिः ) एव उपालम्भं प्रतिक्षेपवचनम् ( ओलंभा, उलहना, इति भाषा ) अर्हतीत्यर्थः।

---

**पाठा०**—१ मुषो. २ समुचितेन. ३ आयान्तीम्. ४ प्रतिजग्राह. ५ अपहसित. ६ परवशं किमिव. ७ स्वताम्. ८ कं. ९ समावासयन्ति. १० उपलम्भम्.

त्सेकमिव सूचयति । उपचारोऽपि चपलतामिव प्रकाशयति । प्रीतिरप्यनात्मज्ञतामिव ज्ञापयति । विज्ञापनापि प्रागल्भ्यमिव जायते[1] । सेवापि चापलमिव दृश्यते । दानमपि परिभव इव भवति । अपि च स्वयं गृहीतहृदयाय किं दीयते । जीवितेश्वराय किं प्रतिपाद्यते । प्रथमकृतागमनमहोपकारस्य का ते प्रत्युपक्रिया । दर्शनदत्तजीवितफलस्य सफलमागमनं केन ते क्रियते । प्रणयितां चानेन व्यपदेशेन दर्शयति कादम्बरी, न विभवम् । अप्रतिपाद्या हि परस्वता सज्जनविभवानाम् । आस्तां तावद्विभवः, भवादृशस्य दास्यमप्यङ्गीकुर्वाणा नाकार्यकारिणीति नियुज्यते[2] । दत्त्वात्मानमपि वञ्चिता न भवति । जीवितमप्यर्पयित्वा न पश्चात्तप्यते । प्रणयिजनप्रत्याख्यानपराङ्मुखी च दाक्षिण्यपरवती[3] महत्ता सताम् । न च तादृशी भवति याचमानानां यादृशी ददतां लज्जा । यत्तु सत्यममुना व्यतिकरेण कृतापराधमिव

---

उत्कर्षस्तमिव सूचयति । उपचारोऽप्यभ्युत्थानादिरूपोऽपि चपलतामिव प्रकाशयति प्रकटीकरोति । प्रीतिरपि स्नेहोऽप्यनात्मज्ञतां स्वस्वरूपानभिज्ञतां ज्ञापयति । विज्ञापनापि विज्ञप्तिरपि प्रागल्भ्यमिव पाण्डित्यमिव जायते । सेवापि सपर्यापि चापलमिव दृश्यते । दानमपि परिभव इव पराभव इव भवति । प्रथितमहिमवत्त्वादितिभावः । अपि चेति युक्त्यन्तरे, स्वयं गृहीतं हृदयं येनैवंविधाय किं दीयते । अथ च जीवितेश्वराय किं प्रतिपाद्यते किं कथ्यते । अयं भावः—हृदयाधीनं जीवितं, हृदयं चेद्गृहीतं तदा जीवितेश्वर एव जातः । एवं सति तस्मै जीविताभिधानं किं वस्तु नेयम् । सर्वेषां वस्तूनां जीवितार्थत्वात् । एतदपरं किं प्रतिपाद्यम् । प्रतिपाद्यानां जीवितावधित्वात् । प्रथमं कृतं यदागमनं तदेव महोपकारो यस्यैवंविधस्य ते भवतः का प्रत्युपक्रिया । न कापीत्यर्थः । दर्शनेन दत्तं जीवितफलं येनैवंविधस्य ते तव सफलमागमनं केन क्रियते । अयं भावः—सर्वापेक्षयोत्कृष्टं जीवितफलं त्वयैव दत्तम् । इतः परं त्वत्सदृशमस्माकं किमपि नास्ति, येन त्वदागमनसाफल्यं क्रियते कादम्बर्यनेन व्यपदेशेन हारानयनमिषेण प्रणयितां स्नेहवत्तां त्वयि दर्शयति । न विभवमैश्वर्यम् । तवैतादृशं वस्तु नास्ति यादृशं मम वर्तत इत्येवम् । नन्वत्युत्तममुक्ताकलापस्य स्वविभवत्वप्रदर्शने कोऽयमस्वरस इत्यत आह—**अप्रतीति** । हीति निश्चितम् । सज्जनविभवानां परस्वता स्वीयपरकीयभावोऽप्रतिपाद्या वर्तते । सतां प्रवृत्तेः परोपकारनिमित्तकत्वेन तद्विभवस्यापि तथात्वादिति भावः । अथ यद्यपरितोषस्तदा विभवो हारादिरूपः स्वोत्कर्षहेतुस्तावदास्तां तिष्ठतु । किं तु भवादृशस्य दास्यमङ्गीकुर्वाणा नाकार्यकारिणीति नियुज्यते नाकृत्यविधायिनीति व्यपदिश्यते । **दत्त्वेति** । आत्मानमपि दत्त्वा त्वदधीनं कृत्वा वञ्चिता न भवति विप्रतारिता न स्यात् । जीवितमप्यर्पयित्वा न पश्चात्तप्यते न पश्चात्तापं करोति । (यत्) सतां सत्पुरुषाणां महत्ता गुरुता प्रणयो[1] विद्यते यस्मिन्नेवंभूतो यो जनस्तस्य प्रत्याख्यानं निराकरणं तत्र पराङ्मुखी प्रणयिजनाभीष्टप्रदाननिराकरणशीला न भवतीत्यर्थः । तत्र हेतुमाह—**दाक्षिण्येति** । दाक्षिण्यमनुकूलता तस्याः परवती । तदधीनेत्यर्थः । दाक्षिण्यं लज्जाधीनं स्यादित्यत आह—**न चेति** । ददतां वितरणं कुर्वतां यादृशी लज्जा त्रपा स्यात्तादृशी याचमानानां नीचानां च न स्यात् । **यत्त्विति** । तु पुनरर्थे । यत्पूर्वोक्तं तत्सत्यम् । ततः किमित्यत आह—**अमुनेति** । अमुना व्यतिकरेण त्वदागमनसंबन्धेन[2] त्वयि कृतापराधं विहितागसमि-

---

**टिप्प०**—1 सतां महत्त्वं तद्वर्तते यद्धि प्रणयिजनानां ( द्रव्योपहारदानस्य ) प्रत्याख्याने प्रतिषेधने पराङ्मुखम्, अर्थात् न कदाचित् प्रत्याख्यानं कुर्वन्ति; यतो हि दाक्षिण्यस्वाधीना सा महत्ता । 2 पुनः स्वारस्यं चूर्णीचकार चपलः । सज्जनानां हि ददतां लज्जा, न जाने स्वरूपयोग्यं दत्तं न वेति । याचकानां तु पूर्वमेव लाघवस्वीकारान्न सा । अत एव–अमुना हारसमर्पणव्यतिकरेण कृतापराधमिवात्मानं जानाति, यत्त्वत्स्वरूपयोग्यदानाऽभावेपि दातृत्वं स्वीकृतमिति ।

---

**पाठा०**—१ ज्ञायते. २ गृह्यते. ३ परवशा.

त्वय्यात्मानमवगच्छति कादम्बरी । तदयममृतमथन[1]समुद्भूतानां सर्वरत्नानाम[2]केशेष इति [3]शेष-नामा हारोऽमुनैव हेतुना बहुमतो भगवताम्भसांपत्या गृहमुपागताय प्रचेतसे दत्तः । पाश-भृतापि गन्धर्वराजाय, गन्धर्वराजेनापि कादम्बर्यै, तयापि त्वद्वपुरस्यानुरूपमाभरणस्येति विभावयन्त्या नभःस्थलमेवोचितं [4]सुधासूतो धाम्नो न धरेत्यवधार्यानुप्रेषितः । यद्यपि [5]गुणगणा-भरणभूषिताङ्गयष्टयो भवादृशाः क्लेशहेतुमितरजनबहुमतमाभरणभारमङ्गेषु नारोपयन्ति, तथापि कादम्बरीप्रीतिरत्र कारणम् । किं न कृतमुरसि शिलाशकलं कौस्तुभाभिधानं लक्ष्म्याः सहजमिति बहुमानमाविष्कुर्वता भगवता [6]शार्ङ्गपाणिना । [7]न च नारायणोऽत्रभवन्तमतिरि-च्यते । नापि कौस्तुभमणिरणुनापि गुणलवेन शेषमतिशेते । न चापि कादम्बरीमाकारानुकृति-कलयाप्यल्पीयस्या लक्ष्मीरनुगन्तुमलम् । अतोऽर्हतीयमिमं बहुमानं त्वत्तः । न चाभूमिरेषा प्रीतिप्रसरस्य । नियतं च भवता लग्नप्रणया [8]महाश्वेतोपालम्भसहस्रैः खेदयित्वा [9]स्वात्मानमुत्स्र-

---

वात्मानं कादम्बर्यवगच्छति जानाति । तदयममृतमथनात्समुद्भूतानां प्रकटितानां सर्वरत्नानामेकशेषोऽवशि-ष्टोऽतः शेषनामायं हारोऽमुनैव हेतुनैकशेषत्वेनाम्भसांपत्या भगवता समुद्रेण बहुमतो गृहमुपागताय प्राप्ताय प्रचेतसे वरुणाय दत्तोऽर्पितः । पाशभृतापि वरुणेनापि गन्धर्वराजाय दत्तः । गन्धर्वराजेनापि कादम्बर्यै दत्तः । तयाप्यस्याभरणस्य त्वद्वपुस्त्वदीयं शरीरमनुरूपं योग्यमिति विभावयन्त्या मनसि विभावनां कुर्वन्त्या । एतस्मि-न्नर्थे दृष्टान्तं प्रदर्शयन्नाह—**नभ इति** । सुधासुतश्चन्द्रस्य धाम्नस्तेजसो नभस्थलमेवोचितं योग्यं न धरा पृथ्वी-त्यवधार्य निश्चित्यानुप्रेषितोऽनुप्रहितः । **यद्यपीति** । यद्यपि भवादृशा भवत्सदृशाः पुरुषा गुणाः शौर्यादयस्तेषां गणः समुदायास्त एवाभरणानि तैर्भूषिता शोभिताङ्गयष्टिर्येषां ते तथा क्लेशहेतुः परिश्रमकारणमितरजनाः प्राकृतजनास्तैर्बहुमतमादरपूर्वकं स्वीकृतमाभरणभारं विभूषणवीवधमङ्गेषु हस्तपादादिषु नारोपयन्ति न स्थाप-यन्ति । **तथापीति** । यद्यप्येवमस्ति तथापि कादम्बरीप्रीतिरत्र हारधारणे कारणं नियामकम् । प्रीत्यान्यै-रपि तथा कृतमित्याह—**किं न कृतमिति** । लक्ष्म्याः श्रियः सहजं सार्धं समुत्पन्नमिति कृत्वा बहुमानं सत्का-रमाविष्कुर्वता प्रकटीकुर्वता भगवता शार्ङ्गपाणिना कौस्तुभाभिधानं शिलाशकलमुरसि किं न कृतं किं न विहितम् । न च नारायणस्तथा करोतु नाम । अहं तु तादृशो न भवामीत्यत आह—**न चेति** । नारायणः कृष्णोऽत्रभवन्तं त्वां न चातिरिच्यते नाधिको भवति । तथा च स्वानुरक्तप्रीतिसंरक्षणस्वभावसाम्येन त्वमपि स एवेत्यर्थः । न च हारोऽपि कौस्तुभापेक्षया न्यून इत्याह—**नापीति** । कौस्तुभमणिरणुनापि गुणलवेन शेषं शेषनामानं हारं नाप्यतिशेतेऽतिशयितो न भवति, एवं लक्ष्मीसादृश्यं कादम्बर्यामानयति—**न चेति** । लक्ष्मीः पद्माकारस्यानुकृतिरनुकरणं तस्य कलांशस्तयाप्यल्पीयस्यापि कादम्बरीमनुगन्तुं सादृश्यं कर्तुं नालं न समर्था । अतो हेतोरियं त्वत्तो भवत इयं बहुमानमर्हति योग्या भवति । नचेयं प्रीतिर्न भवतीत्याह—न च प्रीतिप्रसरस्य प्रीत्युत्कर्षस्य[1]ैषा[2]ऽभूमिरस्थानम्, अपि तु स्थानमेव । वैपरीत्ये बाधकमाह—**नियतेति** । नियतं निश्चितं भवता त्वया लग्नः[3] प्रणयः स्नेहो यस्यां एवंविधा महाश्वेता उपालम्भसहस्रैः खेदयित्वा खेदमुत्पाद्य स्वात्मानं

---

**टिप्प०**—1 ग्राम्यप्रियोयं पाठः । 'नभःस्थलमेवोचितं सुधासूतेः (चन्द्रस्य) धाम' इति पाठः; प्रमाणं च सहृदयाः । 2 एषा (कादम्बरी) प्रीतिप्रसरस्य अपात्रं न अपि तु पात्रमेवेत्यर्थः । 3 हन्त धिगविचा-रम् । 'त्वया भग्नप्रणया (भग्नः प्रणयो यस्याः ईदृशी कादम्बरी) महाश्वेतामुपालम्भसहस्रैः (ईदृशेन अद-क्षिणेन त्वया सद्भावो विहितः, अत्र चानीतः इति) खेदयित्वा आत्मानं नियतमुत्स्रक्ष्यति' इत्येव पाठः ।

---

पाठा०—१ उद्धृतानाम्, २ एकः शेषः, ३ लब्धनामा, ४ सुधासूतेर्धाम, ५ निजगुण, ६ शार्ङ्गिणा, ७ नापि, ८ महाश्वेताम्, ९ आत्मानम्.

क्ष्यति । अतएव महाश्वेता[1] तरलिकामपीमं[2] हारमादाय त्वत्सकाशं प्रेषितवती[3] । तयापि कुमारस्य संदिष्टमेव—'न खलु महाभागेन मनसापि कार्यः कादम्बर्याः प्रथमप्रणयप्रसरभङ्गः' इत्युक्त्वा च ताराचक्रमिव चामीकराचलस्य तटे तं तस्य वक्षःस्थले ववन्ध ।

चन्द्रापीडस्तु विस्मयमानः प्रत्यवादीत्—'मदलेखे, किमुच्यते[4] । निपुणासि, जानासि ग्राहयितुम्[5] । उत्तरावकाशमपहरन्त्या कृतं वचसि कौशलम् । अयि मुग्धे, के वयमात्मनः, के वा वयं ग्रहणाग्रहणस्य[6] वा । आगता खल्वियमस्तं कथा । सौजन्यशालिनीभिर्भवतीभिरुपकरणीकृतोऽयं जनो यथेष्टमिष्टेष्वनिष्टेषु[8] वा व्यापारेषु विनियुज्यताम् । अतिदक्षिणायाः खलु देव्याः कादम्बर्या निर्दाक्षिण्या[9] गुणा न कंचिन्न दासीकुर्वन्ती'त्युक्त्वा च कादम्बरीसंबद्धाभिरेव कथाभिः सुचिरं स्थित्वा विसर्जयांबभूव मदलेखाम् । अनति[10]दूरं गतायां च तस्यां क्रीडापर्वत[11]गतमुदय[12]गिरिगतमिव चन्द्रमसं चन्दनदुकूलहारधवलं चन्द्रापीडं द्रष्टुं समुत्सारित[13]वेत्रच्छत्रचामरचिह्ना निषिद्धाशेषपरिजना[14] तमालिकाद्वितीया

---

निजात्मानमुत्स्रक्ष्यति त्यक्ष्यति । अतएवातो हेतोर्महाश्वेतेमं हारमादाय गृहीत्वा त्वत्सकाशं भवत्समीपं तरलिकां प्रेषितवती प्रहितवती । तयापि महाश्वेतयापि कुमारस्य संदिष्टं कथितमेव । महाभागेन सत्पुरुषेण त्वया कादम्बर्याः प्रथमप्रणयप्रसरभङ्गो मनसापि न कार्यो न विधेयः । कायवाग्भ्यां तु सर्वथा निषेध एव सूचितः । इत्युक्त्वेत्यभिधाय चामीकराचलस्य मेरोस्तटे ताराचक्रमिव नक्षत्रसमूहमिव तं हारं तस्य वक्षस्थले ववन्ध । चन्द्रापीडस्तु विस्मयमानो विस्मयं कुर्वाणः प्रत्यवादीत्प्रत्यवोचत् । हे मदलेखे, त्वया किमुच्यते । त्वं निपुणासि पण्डितासि । अत एव ग्राहयितुं स्वीकारयितुं जानासि । उत्तरस्य प्रतिवचसोऽवकाशं प्रवेशयोग्यतामपहरन्त्या दूरीकुर्वन्त्या वचसि वाग्व्यापारे कौशलं पाण्डित्यं कृतम् । अयीति कोमलामन्त्रणे । हे मुग्धे, आत्मनो भवदपेक्षया के वयम् । युष्माकं देवयोनित्वादिति भावः । अथ च के वा वयं ग्रहणाग्रहणस्य वा । आगता खलु निश्चितम् इयमस्तं कथा । सौजन्यशालिनीभिः सुजनताशोभिनीभिर्भवतीभिरुपकरणीकृतोऽयं जनो यथेष्टमिष्टेष्वनिष्टेषु वा व्यापारेषु विनियुज्यतां प्रेर्यताम् । खलु निश्चितम् । अतिदक्षिणाया अत्युदारायाः । 'दक्षिणे सरलोदारौ' इति कोशः । कादम्बर्या निर्दाक्षिण्याः सर्वत्र भ्रमणशीला गुणाः कंचित्पुरुषं न दासीकुर्वन्ति । अपि तु सर्वानेव । इत्युक्त्वा चेत्यभिधाय च कादम्बरीसंबद्धाभिरेव कथाभिः सुचिरं स्थित्वा तां मदलेखां विसर्जयांबभूव गृहे गमनायानुज्ञापितवान् । तदनन्तरं तस्यां मदलेखायामनतिदूरं गतायां नातिदूरं प्राप्तायां चित्ररथसुता कादम्बरी पुनरपि द्वितीयवारमपि तदेव सौधशिखरमारुरोहारूढा । अत्र सौधशिखरं विशेषयन्नाह—**क्रीडेति** । क्रीडार्थं यः पर्वतः शैलस्तत्र गतम् । कमिव । उदयगिरिरुदयाचलस्तत्र गतमिव चन्द्रमसम् । चन्दनं मलयजम्, दुकूलं क्षौमम्, हारः शेषाभिधानः, एतैर्धवलं शुभ्रं चन्द्रापीडं द्रष्टुं वीक्षितुं समुत्सारितानि दूरीकृतानि वेत्रच्छत्रचामरचिह्नानि यया सा । निषिद्धो वर्जितोऽशेषः समग्रः परिजनः परिच्छदो

---

**टिप्प०—1 आत्मनः के वयम्? वयमात्मनोपि न प्रभवः, किमुतान्यस्येत्यर्थः । 2 इमं पाठत्वेनोल्लिखंष्टीकाकार एव निर्दाक्षिण्यः । कादम्बरीगुणान् निर्दाक्षिण्यान्वदेद् ग्रन्थकारः? अत एव—'निर्दाक्षिण्यमपि' इति पाठः । कादम्बर्या गुणा निर्दाक्षिण्यम् ( अनुदारमपि, मादृशम् ) अपि कं न दासीकुर्वन्ति, अपि तु सर्वमेवेत्यर्थः ।**

---

पाठा०—१ महाश्वेतया. २ तरलिका. ३ अनुप्रेषिता. ४ उच्यते. ५ कथयितुम्. ६ ग्रहणस्याग्रहणस्य. ७ गता. ८ अनिविष्टेषु. ९ निर्दाक्षिण्यमपि. १० अनतिचिरम्. ११ पर्वतक. १२ उदयगताम्. १३ उत्सारित. १४ परिजनानुगमना.

चित्ररथसुता पुनरपि तदेव सौधशिखरमारुरोह । तत्रस्था च पुनस्तथैव विविधविलासतरङ्गितैर्विकारिविलोकितैर्जहारास्य मनः । तथाहि मुहुर्मुहुर्नितम्बबिम्बन्यस्तवामहस्तपल्लवा प्रावृतांशुकानुसारप्रसारितदक्षिणकरा निश्चलतारका लिखितेव, मुहुर्जृम्भिकारम्भदत्तोत्तानकरतलतया तद्गोत्रस्खलनभिया निरुद्धवदनेव, मुहुरंशुकपल्लवताडितनिःश्वासामोदलुब्धमधुकरमुखरतया प्रस्तुताह्वानेव, मुहुरनिलगलितांशुकसंभ्रमद्विगुणीकृतभुजयुगलप्रावृतपयोधरतया दत्तालिङ्गनसंज्ञेव, मुहुः केशपाशाकृष्टकुसुमपूरिताञ्जलिसमाघ्राणलीलया कृतनमस्कारेव, मुहुरुभयतर्जनीभ्रमितमुक्ताप्रालम्बतया निवेदितहृदयोत्कलिकोद्गमेव, मुहुरुपहारकुसुमस्खलनविधुतकरतलतया कथितकुसुमायुधशरप्रहारवेदनेव, मुहुर्गलितरशनानिगडपतितचरणतया संयम्यार्पितेव मन्मथेन, मुहुश्चलितोरुविधृतशिथिलदुकूला, क्षितितलदोलायमानांशुकैकदेशाच्छा-

---

यया सा। तमालिका एव द्वितीया यस्याः सा च। तत्रस्था च सौधशिखरगता च पुनस्तथैव पूर्वोक्तरीत्यैव विविधा अनेकप्रकारा ये विलासा भ्रूसमुद्भवास्तैस्तरङ्गितैर्विकारिविलोकितैरस्य चन्द्रापीडस्य मनो जहार हृतवती। तदेव दर्शयति—**तथा हीति**। मुहुर्मुहुर्वारंवारं नितम्बबिम्बे आरोहबिम्बे न्यस्तः स्थापितो वामहस्तपल्लवो यया सा। प्रावृतं परिधानीकृतं यदंशुकं तदनुसारेण प्रसारितो दक्षिणकरो यया सा। **निश्चलेति**। निश्चला स्थिरा तारका कनीनिका यस्याः सा। अत एव लिखितेव चित्रितेव। **मुहुरिति**। जृम्भिकारम्भे जृम्भायाः प्रारम्भे दत्तं यदुत्तानं करतलं तस्य भावस्तत्ता तया। तस्य चन्द्रापीडस्य गोत्रमभिधानं तस्य स्खलनं तस्माद्या भीः भीतिस्तया निरुद्धवदनेव। **मुहुरिति**। अंशुकपल्लवेन ताडितो यो निःश्वासामोदस्तत्र लुब्धा ये मधुकरा भ्रमरास्तैर्मुखरो वाचालस्तस्य भावस्तत्ता तया प्रस्तुतं प्रारब्धमाह्वानं यया सैवंविधेव। **मुहुरिति**। अनिलेन गलितानि यान्यंशुकान्युत्तरीयाणि तेषां संभ्रमो विलासस्तेन द्विगुणीकृतं यद्भुजयुगलं तदेव प्रावृतमुत्तरीयं ययोः पयोधरयोस्तयोर्भावस्तत्ता तया दत्तालिङ्गनसंज्ञा संकेतो यया सैवंविधेव। **मुहुरिति**। केशपाशादाकृष्टानि यानि कुसुमानि तेन पूरितो योऽञ्जलिस्तस्य समाघ्राणलीलया कृत्वा कृतनमस्कारेव विहितप्रणामेव। पुनः करयोरलीकप्रदेशाभिमुखीकरणेन तदुत्प्रेक्षा। **मुहुरिति**। उभयतर्जनीभ्रमितो यो मुक्ताप्रालम्बो मुक्तालता तस्य भावस्तत्ता तया निवेदितो ज्ञापितो हृदयस्योत्कलिका हृल्लेखा तस्या उद्गमः प्रादुर्भावो यया सैवंविधेव। यथा हारो मया भ्राम्यते तथोत्कलिकया मच्चित्तमिति भावः। **मुहुरिति**। उपहारस्योपचारस्य यानि कुसुमानि तेभ्यः स्खलनेन विधुतं कम्पितं यत्करतलं तस्य भावस्तत्ता तया कथिता कुसुमायुधो मदनस्तस्य शरप्रहारवेदना पीडा यया सैवंभूतेव। **मुहुरिति**। गलिता स्रस्ता या रशना कटिमेखला सैव निगडोऽन्दुकस्तत्र पतितौ यौ चरणौ तयोर्भावस्तत्ता तया संयम्य बद्ध्वा मन्मथेनार्पितेव। **मुहुरिति**। चलि-

---

**टिप्प०**—1 वायुनाऽपसारितो योंऽशुकस्तदनुसारेण तत्सज्जीकरणव्याजेनेत्यर्थः। 2 मदनजागरणेन या जृम्भा जाता तत्र व्यात्तमुखस्य पिधानार्थं यो हस्त आवरणीकृतः स मन्ये प्रेमवशाच्चन्द्रापीडस्य नामनिःसरणभयेन मुखस्यावरणीकृत इत्याशयः। 3 दृश्यतां बुद्धिष्टीकयितुः। अंशुकपल्लवेन ताडिताः निःश्वाससौरभलुब्धा ये मधुकरास्तैर्मुखरतया शब्दायमानतया, इत्यर्थो वाच्यः। 4 अंशुकानां किमु भारो धृतस्तया! अस्तु, अनिलेन गलिते अंशुके संभ्रमवशाद् द्विगुणीकृतेन भुजयुगलेन एकस्योत्तरं द्वितीयेन भुजेन प्रावृतौ पयोधरौ यया अर्थाद् भुजद्वयवेष्टितकुचा। 5 अञ्जल्युपरि आघ्राणाय नमिते शिरसि नमस्कारचेष्टा जातेत्याशयः। 6 उत्कलिका उत्कण्ठा।

---

पाठा०—१ तरङ्गिभिः. २ विलोकितैः; विकारिभिर्विलोकितैः. ३ मुहुः. ४ असमावृत. ५ गोत्रस्खलनभयनिरुद्धवदनेव. ६ संभ्रमद्विगुणितभुजलतावृतपयोधरतया; संवरणसंभ्रमद्विगुणीकृतभुजयुगलप्रावृतपयोधरतया. ७ प्रलम्ब. ८ करतया. ९ निबिड. १० नियमित. ११ मुहुर्मुहुर्विचलित.

दितकुचा, चकितपरिवर्तनत्रुट्यत्त्रिवलीलता, [१]समस्तचिकुरकलापसंकलनाकुल[२]करतला, कटाक्षक्षेपधवलीकृत[३]कर्णोत्पलं वि[४]लक्ष्यमाणस्मितसुधाधूलिधूसरितकपोलं [५]साचीकृत्य वदनमनेकरस[६]भङ्गिभङ्गुरं विलोकयन्ती, तावदवतस्थे यावदु[७]पसंहतालोको लोहितो दिवसो बभूव ।

अथ हृदयस्थितकमलिनीरागेणेव रज्यमाने राजीवजीवितेश्वरे [८]सकललोकचक्रवालचक्रवर्तिनि भगवति पूष्णि[९], क्रमेण च दिनपरिलम्बनरोषरक्ताभिः कामिनीदृष्टिभिरिव संक्रामितशोणिम्नि व्योम्नि, संहृतशोचिषि जाते जरठहारीतहरितवाजिनि, रविविर[१०]हमीलितसरोजसंहतिषु हरितायमानेषु [११]कमलवनेषु, श्वेतायमानेषु कुमुदखण्डेषु, लोहितायमानेषु दिङ्मुखेषु,

---

ताभ्यामूरुभ्यां यथाकथंचिद्विधृतमपि शिथिलं दुकूलं यस्याः सा । क्षितितले दोलायमानो[1]ऽशुकस्योत्तरीयस्यैकदेशस्तेनाच्छादितौ कुचौ यथा सा । चकितं ससंभ्रमं यत्परिवर्तनं तेन त्रुट्यन्ती त्रिवलीलता यस्याः सा । समस्ताः समग्रा ये चिकुराः कुन्तलास्तेषां कलापः समूहस्तस्य संकलनं स्वकीयस्थले स्थापनं तेनाकुलं व्याक्षिप्तं करतलं यस्याः सा । किं कुर्वती । वदनं मुखं साचीकृत्य वक्रीकृत्यानेके रसास्तेषां भङ्गी रचनाविशेषस्तेन भङ्गुरं वक्रं यथा स्यात्तथा विलोकयन्ती । अथ वदनं विशेषयन्नाह—**कटाक्षेति** । कटाक्षाणां क्षेपस्तेन धवलीकृतं कर्णोत्पलं यस्मिन् । विलक्ष्यमाणं[2] यत्स्मितं तदेव सुधा तस्या धूलिस्तया धूसरितौ कपोलौ यस्मिन् । तावदवतस्थे यावदुपसंहत एकीभूत आलोको यस्मिन्नेवंविधो लोहितो रक्तो दिवसो बभूव । एतेन संध्यासमयो जात इति ज्ञापितम् ।

अथ प्रदोषसमयं वर्णयन्नाह—**अथेति** । जातायामदर्शनक्षमायां वेलायां कादम्बरी सौधशिखरात्क्रीडापर्वतकनितम्बाच्च चन्द्रापीडोऽवततारेत्यन्वयः । कस्मिन्सति । रागेणानुरज्यमाने सति रक्ततां प्राप्यमाणे सति । रक्तत्वसाम्यादाह—हृदयस्थितो यः कमलिनीरागस्तेनेव राजीवानां कमलानां जीवितं तस्येश्वरः स्वामी तस्मिन्सकलः समग्रो यो लोकस्तस्य चक्रवालं मण्डलं तस्य चक्रवर्तिनि सार्वभौमे भगवति माहात्म्यवति । जरठः परिणत एवंविधो यो हारीतो मृदङ्कुरस्तद्वद्धरिता नीला वाजिनो यस्य स तस्मिन् । पुनः कीदृशे । संहृतशोचिष्यात्तदीधितौ एवंविधे पू[3]ष्णि सूर्ये जाते सति । तथा क्रमेण च परिपाट्या दिनस्य सूर्यस्य परिलम्बनमस्तसमयस्तेन रोषो नायको दत्तसंकेतोऽद्यापि नागत इत्येवंरूपस्तेन रक्ताभिः कामिनीदृष्टिभिरिव संक्रामितः शोणिमा रक्तिमा यस्मिन्नेवंविधे व्योम्न्याकाशे सति । पुनः केषु । **रविरिति** । रविः सूर्यस्तस्य विरहो वियोगस्तेन मीलिताः संकुचिता याः सरोजसंहतयः कमलराजयस्ता[4]सु । पुनः केषु । कमलवनेषु नलिनखण्डेषु हरितायमानेषु नीलायमानेषु सत्सु । तथा कुमुदखण्डेषु कैरववनेषु श्वेतायमानेषु गौरवदाचरमाणेषु । प्रफुल्लितत्वादिति भावः । तथा लोहितायमानेषु रक्तायमानेषु दिङ्मुखेषु सत्सु । तथा नीलायमाने हरितायमाने शर्वरीमुखे प्रदोषे ।

---

**टिप्प०**—1 विभ्रमवशादुत्तरीयांशुकः स्वस्थानादपसृत्य भूमौ लम्बितः पुनश्च सविलासं स्वस्थानं स्थापितस्तेनाच्छादितकुचा । 2 'विलक्षस्मित' इत्येव पाठः । सलज्जं यत्स्मितमित्यर्थः । 3 हन्त कियद्वा जर्जरा सेयं टीकाकन्था ग्रथ्यताम् । दैवहतकः सोयं 'जरठहारीत०' पर्यन्तमेकविशेषणीचकार । किन्तु राजीवजीवितेश्वरे सकल······चक्रवर्तिनि भगवति पूष्णि (सूर्ये) कमलिनीरागेणेव रज्यमाने सति (स्वाभाविके रक्तवर्णे कमलिन्यनुरागस्योत्प्रेक्षा) । इति पृथगन्वयः । संक्रामितशोणिम्नि व्योम्नि, इति पृथक् । जरठहारीतहरितवाजिनि (सूर्ये) संहृतशोचिषि संकोचितप्रकाशे जाते सति, इति पृथक् । 4 हन्त ! रविविरहेण मीलिताः सरोजसंहतयो येषु ईदृशेषु कमलवनेषु हरितायमानेषु सत्सु इत्यर्थः ।

---

**पाठा०**—१ असंस्रस्त. २ करकमला. ३ कर्णोत्पल. ४ विलक्ष्यमाणसितधूलिधूसरकपोलम्; विलक्षस्मितसुधाधूलिधूसरितैककपोला; विलक्ष्यस्मितसुधाधूलिधूसरितकपोलम्, विलक्ष्य चास्मितसुधाधूलिधूसरितकपोलम्. ५ साचीकृत. ६ भ्रूभङ्गि. ७ उपसंहृत. ८ सकलचक्रवाकचक्रवालच्चित्तवर्तिनि. ९ उष्णदीधितौ. १० जनित. ११ कमलवनेषु निजसुहृदमृतमूर्तिसमालोकनाशया हर्षप्रकर्षसंदर्शितसितेष्विवोन्मुखेषु धवलायमानेषु कुमुदखण्डेषु.

नीलायमाने[1] शर्वरीमुखे, शनैःशनैश्च पुनर्दिनश्रीसमागमाशाभिरिवानुरागिणीभिः सहैव दीधितिभिरदर्शनतामुपगते भगवति गभस्तिमालिनि, तत्कालविजृम्भितेन च कादम्बरीहृदयरागसागरेणेवापूरिते[2] संध्यारागेण जीवलोके, कुसुमायुधानलदह्यमानहृ[3]दयसहस्रधूम इव जनितमानिनीनयनवारिणि[4] विस्तीर्यमाणे तरुणतमालत्विषि तिमिरे, दिक्करिकरावकीर्ण[5]-सीकरासार इव श्वेतायमानतारागणे गगने[6], जातायां चादर्शनक्षमायां वेलायां सौधशिखरादवततार कादम्बरी क्रीडापर्वतकनितम्बाच्च चन्द्रापीडः । ततोऽचिरादिव[7] गृहीतपादः प्रसाद्यमान इव कुमुदिनीभिः, कलुषमुखीः कुपिता इव प्रसादयन्नाशाः, प्रबोधाशङ्कयेव परिहरन्सुप्ताः कमलिनीः, लाञ्छनच्छलेन निशामिव हृदयेन समुद्वहन्, रोहिणीचरणताडनलग्नमलक्तकरसमिवोदयरागं दधानः, तिमिरनीलाम्बरां[8] दिवमभिसारिकामिवोपसर्पन्, अतिवल्लभतया विकिरन्निव सौभाग्यमुदगाद्भगवानीक्षणोत्सवः सुधासूतिः । उच्छ्रि[9]ते च कुसुमायुधाधिराज्यैकातपत्रे कुमुदिनीवधूवरे विभावरीविलासदन्तपत्रे श्वेतभानौ धवलितदिशि,

---

शनैःशनैः पुनर्दिनश्रियां यः समागमस्तस्याशाभिरिवानुरागिणीभिर्दीधितिभिः सह भगवति गभस्तिमालिनि सूर्येऽदर्शनतामदृश्यतामुपगते प्राप्ते सति । पुनः संध्यारागेण जीवलोक आपूरिते सति । केनेव । तत्कालविजृम्भितेन तदात्वप्रसृतेन कादम्बर्या हृदयरागस्तल्लक्षणो यः सागरः समुद्रस्तेनेव । पुनः कस्मिन् । विस्तीर्यमाणे विस्तारं प्राप्यमाणे । तरुणो नवीनो यस्तमालस्तापिच्छः तस्य त्विडिव त्विट् यस्मिन्नेवंविधे तिमिरेऽन्धकारे सति । तस्य नीलत्वेन साम्यादाह—**कुसुमेति** । कुसुमायुध एवानलो वह्निस्तेन दह्यमानं ज्वलमानं यद्धृदयसहस्रं तस्य धूम इव । कीदृशे । जनितमुत्पादितं मानिनीनां नयनेषु वारि येन तस्मिन् । अद्यापि पतिर्गृहे नागत इति दुःखेन मानिनीनयनेष्वश्रुसद्भाव इत्यर्थः । एतेन धूमसादृश्यं ध्वनितम् । **दिगिति** । दिक्करिणां दिग्गजानां ये कराः शुण्डादण्डास्तैरवकीर्णोऽवध्वस्तो यः सीकरासारस्तस्मिन्निव श्वेतायमाने दीप्यमाने तारागणे नक्षत्रसमूहे गगने व्योम्नि जाते सति । अन्वयस्तु प्रागुक्तः । ततस्तदनन्तरमचिरादिव स्तोककालेनेव सुधासूतिश्चन्द्र उदगादुदयं प्राप्तवान् । **गृहीतेति** । गृहीताः पादा यस्य सः । प्रसाद्यमान इव । काभिः । कुमुदिनीभिः कैरविणीभिः । कलुषमुखीः कुपिता इव आशा दिशः प्रसादयन्प्रसन्नीकुर्वन् । सुप्तानां कमलिनीनां प्रबोधो मा भूदित्याशङ्कया परिहरंस्त्यजन् । लाञ्छनच्छलेनाङ्कमिषेण निशामिव हृदयेन समुद्वहन्धारयन् । पुनः किं कुर्वाणः । उदयरागं दधानः । कमिव । रोहिण्याश्चरणेन रतिकलहेन यत्ताडनं तेन लग्नं अलक्तकरसमिव पानकद्रवमिव[2] । तिमिरमेव नीलमम्बरं वस्त्रमेतादृशीं दिवं नीलावगुण्ठनसाम्यादभिसारिकामिवोपसर्पन्गच्छन् । अतिवल्लभस्य भावोऽतिवल्लभता तया सौभाग्यं[3] विकिरन्निव विक्षिपन्निव । कीदृशः । भगवान्माहात्म्यवान् । पुनः किंविशिष्टः । ईक्षणानां नेत्राणामुत्सव इव । उच्छ्रिते च वृद्धिं प्राप्ते च कुसुमायुधः कंदर्पस्तस्याधिराज्यं साम्राज्यं तस्य एकमद्वितीयमातपत्रं तस्मिन् । कुमुदिनी कैरविणी सैव वधूस्तस्या वरः प्राणनाथस्तस्मिन् । पाण्डुरत्वसाम्येनाह—**विभावरीति** । विभावर्यास्त्रियामाया विलासार्थं दन्तपत्रं कर्णाभरणं तस्मिन्श्वेताः शुभ्रा भानवः किरणा यस्मिन् । धवलिताः शुभ्रीकृता दिशो येन स त[4]स्मिन् । चन्द्रालोकेन

---

**टिप्प०—**1 श्वेतायमानास्तारागणा यस्मिन्नित्यर्थः । 2 यावकद्रवमिवेत्युचितम् । 3 लोकानामतिप्रीतिपात्रतया तेषु सौभाग्यं प्रीतिं वर्षन्निव । 4 एवंविशिष्टे श्वेतभानौ उदिते सतीत्यन्वयः ।

---

**पाठा०—**१ तत्कालनिनर्तिषोपात्तभुजसहस्रविस्तारितसर्वपुरस्कृतगजचर्मणेव नीलायमाने. २ रागरस. ३ चक्रवाकहृदय. ४ नयनासारवारिणि. ५ आकीर्ण. ६ गगने जाते. ७ नचिरात्. ८ नीलाम्बरवराम्. ९ उदिते.

दन्तादिवोत्कीर्णे[1] भुवने, चन्द्रापीडश्चन्द्रातपनिरन्तरतयैव कुमुदमय्या[2] इव गृहकुमुदिन्याः कल्लोलधौत[3]सुधाधवलसोपाने तनुतरङ्गतालवृन्तवातवाहिनि सुप्तहंसमिथुने विरहवाचालचक्रवाकयुगले तीरे, कुमुददलावलीभिः पर्यन्तलिखितपत्रलतादन्तुरमवदातसिन्दुवारदामोपहारं हरिचन्दनरसैः प्रक्षालितं कादम्बरीपरिजनोपदिष्टं मुक्ताशिलापट्टं चन्द्रशीतलमधिशिश्ये। तत्रस्थस्य चास्याऽऽगत्याकथयत्केयूरकः 'देवी कादम्बरी देवं द्रष्टुमागता' इति।

अथ चन्द्रापीडः ससंभ्रममुत्थायागच्छन्तीम्, अल्पसखीजनपरिवृताम्, अपनीताशेषराजचिह्नाम्, इतरामिवैकावलीमात्राभरणाम्, अच्छाच्छेन चन्दनरसेन धवलीकृततनुलताम्, एककर्णावसक्तदन्तपत्राम्, इन्दुकलाकलिकाकोमलं कर्णपूरीकृतं कुमुददलं दधानाम्, ज्योत्स्नाशुचिनी कल्पद्रुमदुकूले बिभ्रतीम्, तत्कालरमणीयेन वेषेण साक्षादिव चन्द्रोदयदेवताम्, मदलेखया दत्तहस्तावलम्बां कादम्बरीमपश्यत्। आगत्य च सा प्रीतिपेशलतां दर्शयन्ती प्राकृते[5] परिजनोचिते भूतले समुपाविशत्। चन्द्रापीडोऽपि 'कुमार, अध्यास्यतां शिलातलमेव'

---

भुवनस्य व्याप्तत्वादाह—**दन्तेति**। दन्तादिवोत्कीर्णे भुवने विष्टपे जाते सति। चन्द्रापीडश्चन्द्रातपस्य चन्द्रालोकस्य निरन्तरता सर्वस्मिन्नभिव्याप्तिस्तया हेतुभूतया। एवं विरलकुमुदवत्या अपि। गृहकुमुदिन्याः कुमुदमय्याः कुमुदप्रकर्षवत्या[1] इव ये कल्लोलाः श्वेतिमोत्कर्षास्तैर्धौतं निर्मलीकृतं सुधया धवलं सोपानं यस्मिन्। तनवः सूक्ष्मा ये तरङ्गाः कल्लोलास्त एव वातहेतुत्वात्तालवृन्तानि व्यजनानि तेषां वातं वहत्येवंशीलं तस्मिन्। सुप्तानि हंसानां मिथुनानि यस्मिन्। विरहेण वियोगेन वाचालानि मुखराणि चक्रवाकयुगलानि यस्मिन्नेवंविधे तीरे। गृहदीर्घिकाया इति शेषः। कुमुदानां कैरवाणां दलावलीभिः पत्रश्रेणिभिः पर्यन्ते प्रान्ते लिखिताः पत्रलताः पत्रभङ्गयस्ताभिर्दन्तुरम्। तद्वदवदातानि सिन्दुवारदामानि निर्गुण्डीस्रजस्तेषामुपहारो यस्मिंस्तद्धरिचन्दनं गोशीर्षचन्दनं तस्य रसैः प्रक्षालितं धौतम्। कादम्बर्याः परिजनः परिच्छदस्तेनोपदिष्टं कथितं मुक्तावद्धवलं शुभ्रं शिलापट्टं चन्द्रेण शीतलमधिशिश्ये। शयनं चकारेत्यर्थः। तत्रस्थस्यास्य चन्द्रापीडस्य केयूरक आगत्येत्यकथयत्। इतिशब्दद्योत्यमाह—**कादम्बरीति**। कादम्बरी देवी देवं भवन्तं द्रष्टुमागता।

**अथेति**। तत्कथनानन्तरं ससंभ्रममुत्थाय स चन्द्रापीडः कादम्बरीमपश्यत्। अथ कादम्बरीं विशेषयन्नाह—**आगच्छन्तीमिति**। आगच्छन्तीमायान्तीम्। **अल्पेति**। अल्पः स्तोको यः सखीजनस्तेन परिवृताम्। अपनीतं दूरीकृतमशेषं समग्रं राजचिह्नं यया सा ताम्। अतएवेतरामिव पूर्वव्यावर्णितस्वरूपा[2]ऽभिन्नामिवैकावलीमात्रमाभरणं विभूषणं यस्याः सा ताम्। अच्छं चाच्छं चाच्छाच्छं तेन। अतिनिर्मलेनेत्यर्थः। एतादृशेन चन्दनरसेन धवलीकृता तनुलता यया सा ताम्। एककर्णेऽवसक्तं क्षिप्तं दन्तपत्रं यया सा ताम्। तथाविधदेशाचारत्वादिति भावः। पुनः किं कुर्वाणाम्। कर्णपूरीकृतं कुमुददलं कैरवपत्रं दधानाम्। कीदृशम्। इन्दुकला चन्द्रकला सैव कलिका तद्वत्कोमलं सुकुमारम्। पुनः किं कुर्वन्तीम्। ज्योत्स्नावच्छुचिनी पवित्रे कल्पद्रुमस्य दुकूले बिभ्रतीं दधानाम्। तत्कालरमणीयेन तत्समयमनोहरेण वेषेण नेपथ्येन साक्षाच्चन्द्रोदयदेवतामिव। मदलेखया दत्तो हस्तावलम्बः करावलम्बो यस्याः सा ताम्। अन्वयस्तु प्रागुक्तः। आगत्य च प्रीतिपेशलतां स्नेहसुन्दरतां दर्शयन्ती प्रकटयन्ती प्राकृते[3] नीचे परिजनस्य सेवकजनस्योचिते योग्ये भूतले

---

**टिप्प०**—1 विरलकुमुदापि गृहकुमुदिनी (सरसी) चन्द्रातपव्याप्ततया कुमुदमयी जाता, चन्द्रिकैव कुमुदस्थानीया जातेत्यर्थः। ईदृश्या गृहकुमुदिन्याः कल्लोलधौत० इत्यादिविशेषिते तीरे शिलापट्टं चन्द्रापीडोऽधिशिश्ये इति योजना। 2 पूर्ववर्णितस्वरूपकादम्बरीतो भिन्नामिवेति वाच्यम्। 3 'प्राकृतेव' इत्येव पाठः। साधारणस्त्रीव, इति तदर्थः। स्थानस्य प्राकृतमिति विशेषणं तु बाणसदृशस्य प्रतीपमेव।

---

**पाठा०**—१ दन्तिदन्ताम्. २ कुमुद इव. ३ धूत. ४ पत्रलतादन्तुरम्; दन्तपत्रलतम्. ५ प्राकृतेव.

इत्यसकृदनुबध्यमानोऽपि मदलेखया भूमिमेवाभजत । [1]सर्वासु चासीनासु तासु मुहूर्तमिव स्थित्वा वक्तुमुपचक्रमे चन्द्रापीडः—'देवि, [2]दृष्टिमात्रप्रीते दासजने संभाषणादिकस्यापि प्रसादस्य नास्त्यवकाशः, किमुतैतावतोऽनुग्रहस्य । न खलु चिन्तयन्नपि निपुणं तमात्मनो गुणलवमवलोकयामि, यस्यायमनुरूपोऽनुग्रहातिरेकः । अतिसरला तवेयमपगताभिमानमधुरा च सुजनता यदभिनवसेवकजनेऽप्येवमनुरुध्यते । [3]प्रायेण मामुपचारहार्यमदक्षिणं देवी मन्यते । धन्यः खलु परिजनः, ते यस्योपरि नियन्त्रणा स्यात् । आज्ञासंविभागकरणोचिते भृत्यजने क इवादरः । परोपकारोपकरणं [4]शरीरम्, तृणलवलघु च जीवितम् । [5]अपत्रपे त्वत्प्रतिपत्तिभिरुपायनीकर्तुम्[6]आगतायास्ते वयमेते शरीरमिदमेतज्जीवितमेतानीन्द्रियाणि एतेषाम्[7]अन्यतरदारोपय परिग्रहेण गरीयस्त्वम्' इति ।

अथैवंवादिनोऽस्य वचनमाक्षिप्य मदलेखा सस्मितमवादीत्—'कुमार, भवतु । अतियन्त्रणया खिद्यते खलु सखी कादम्बरी । किमर्थं चैवमुच्यते । सर्वमिदमन्तरेणापि वचन-

---

पृथिव्यां समुपाविशत्समुपविष्टः । चन्द्रापीडोऽपि हे कुमार, शिलातलमेवाध्यास्यतामिति मदलेखयाऽसकृद्वारंवारमनुबध्यमानोऽपि कथ्यमानोऽपि भूमिमेव वसुधामेवाभजताश्रितवान् । सर्वासु तास्वासीनासूपविष्टासु सत्सु मुहूर्तमिव स्थित्वा चन्द्रापीडो वक्तुं कथयितुमुपचक्रम उपक्रमं कृतवान् । किं तदित्याह—**देवीति** । हे देवि, दृष्टिमात्रेण प्रीते दासजने संभाषणादिकस्य जल्पनप्रभृतिकस्य प्रसादस्यानुग्रहस्यावकाशोऽवगाहो नास्ति । दृष्टिमात्रसमुद्भूतप्रीत्या तावन्मम हृदयं भृतं यावदस्य प्रवेशो नास्तीत्यर्थः । एतावतोऽनुग्रहस्य किमुत भण्यते । सर्वथा प्रवेशो नास्तीत्यर्थः । **न खल्विति** । निपुणं यथा स्यात्तथा चिन्तयन्नपि विचारयन्नप्यात्मनो गुणलवमवलोकयामि पश्यामि । यस्य गुणलवस्यायमनुरूपो योग्योऽनुग्रहातिरेकः प्रसादोत्कर्षः । अतिसरलाऽतिऋज्वी तवेयमपगतो दूरीभूतो योऽभिमानोऽहंकारस्तेन मधुरा मिष्टा सुजनता सौजन्यम् । अत्रार्थे हेतुं प्रदर्शयन्नाह—**यदिति** । यदभिनवे सेवकजनेऽपि नूतनभृत्येऽप्येवम[1]नुरुध्यतेऽनुग्रहविषयीक्रियते । **प्रायेणेति** । प्रायेण बाहुल्येनोपचारेण बाह्यविनयेन हार्यं वशीकर्तुं योग्यमत एवादक्षिणमनुदारं मां देवी मन्यते जानाति । खलु निश्चयेन । स एव परिजनो धन्यः कृतपुण्यः, यस्योपरि ते तव नियन्त्रणाज्ञा स्यात् । आज्ञालक्षणो यः संविभागो विभज्य किंचिदर्पणं तस्य करणं तत्रोचिते योग्ये भृत्यजने क इवादरो बहुमानाधिक्यम् । **परेति** । परस्य य उपकार उपकृतिस्तस्योपकरणं साधकं शरीरं तृणस्यार्जुनस्य यो लवो लेशस्तद्वल्लघु च जीवितम् । अत आगतायास्ते तव त्वत्[2]प्रतिपत्तिभिस्त्वद्भक्तिभिरुपायनीकर्तुमुपढौकनीकर्तुमहमपत्रपे लज्जे । एते वयम्, इदं शरीरम्, एतज्जीवितम्, एतानीन्द्रियाणि, एतेषां मध्यादन्यतरत्परिग्रहेण स्वीकारेण कृत्वा गरीयस्त्वमारोपय स्थापयेति । अन्यस्योपायनस्याभावात् । इदमेव तत्रोपायनम् ।

अथैवंवादिनोऽस्य चन्द्रापीडस्य वचनमाक्षिप्य निराकृत्य मदलेखा सस्मितमवादीदवोचत् । हे कुमार, भवतु यत्त्वयोक्तं तत्तथैवास्तु । परमतियन्त्रणयातिकथनेन खलु निश्चयेन । कादम्बरी खिद्यते खेदं प्राप्नोति । अतः किमर्थं चैवमुच्यते कथ्यते । वचनमन्तरेणापि कथनं विनैव सर्वमिदं पूर्वोक्तमनया कादम्बर्या [3]परिगृहीत-

---

**टिप्प०—1** एवमनुरोधः ( प्रीत्युपचारः ) क्रियते । 2 शरीरस्य स्वभावत एव अन्योपयोगित्वाज्जीवितस्य लघुत्वेन च, आगतां त्वां प्रति भक्तिभिः एतयोरुपायने अहं लज्जे इत्याशयः । 3 पतित्वेन मनसि स्वीकृतो भवानिति गूढं ध्वन्यते ।

---

**पाठा०—१** अथ सर्वासु चासीनासु मुहूर्तमिव. २ दृष्टिपातमात्र. ३ प्रायेण च. ४ शरीरकम्. ५ अपि त्रपे तव प्रतिपत्त्याद्युपायनीकर्तुम्; अत्र ये त्वत्प्रतिपत्तिभिरुपायनीकर्तुम्. ६ एवमागतायाः. ७ अन्यतरम्.

मनया परिगृहीतम्, किं पुनरमुनोपचारफल्गुना वचसा संदेहदोलामारोप्यते' इति । स्थित्वा च कंचित्कालं कृतप्रस्तावा 'कथं राजा तारापीडः, कथं देवी विलासवती, कथमार्यः शुकनासः, कीदृशी चोज्जयिनी, कियत्यध्वनि सा च, कीदृग्भारतं वर्षम्, रमणीयो वा मर्त्यलोकः' इत्यशेषं पप्रच्छ । एवंविधाभिश्च कथाभिः सुचिरं स्थित्वोत्थाय कादम्बरी केयूरकं चन्द्रापीडसमीपशायिनं समादिश्य परिजनं च शयनसौधशिखरमारुरोह । तत्र च सितदुकूलवितानतलास्तीर्णं शयनीयमलंचकार । चन्द्रापीडोऽपि तस्मिन्नेव शिलातले निरभिमानतामभिरूपतामतिगम्भीरतां च कादम्बर्याः निष्कारणवत्सलतां च महाश्वेतायाः, सुजनतां च मदलेखायाः, महानुभावतां च परिजनस्य, अतिसमृद्धिं च गन्धर्वराजलोकस्य, रम्यतां च किंपुरुषदेशस्य मनसा भावयन्केयूरकेण संवाह्यमानचरणः क्षणादिव क्षणदां क्षपितवान् ।

अथ क्रमेण कादम्बरीदर्शनजागरखिन्नः[1] स्वप्तुमिव तालतमालतालीकदलीकन्दलिनीं प्र[2]विरलकल्लोलानिलशीतलां वेलावनराजिमवततार तारापतिः । अभ्यर्णविरहविधुरस्य च कामिनीजनस्य निःश्वसितैरिवोष्णैर्म्लानिमनीयत चन्द्रिका । चन्द्रापीडविलोकनारूढमदनेव

---

मात्तम् । किं पुनरमुनोपचारेण फल्गुना निरर्थकेन वचसा किं वचनव्यापारेण संदेहदोलामारोप्यते । मन इति शेषः । इत्युक्तप्रकारेण कंचित्कालं स्थित्वा विलम्ब्य च कृतो विहितः अर्थात्प्रश्नस्य प्रस्तावोऽवसरो यया सैवंविधा सतीत्यशेषं समग्रं पप्रच्छापृच्छत् । इतिशब्दद्योत्यमाह—**कथमिति** । कथं केन प्रकारेण राजा तारापीडः । देवी विलासवती कथम् । कथं आर्यः शुकनासः । कीदृशी चोज्जयिनी विशाला । सा चोज्ज[1]यिनीतः कियत्यध्वनि मार्गे । कीदृग्भारतं वर्षं क्षेत्रम् । रमणीयो वा मनोहरो वा मर्त्यलोको मनुष्यलोकः । **एवमिति** । एवंविधाभिरेवंप्रकाराभिः कथाभिर्वार्ताभिः सुचिरं बहुकालं स्थित्वावस्थानं कृत्वोत्थाय कादम्बरी केयूरकं चन्द्रापीडसमीपशायिनं परिजनं च समादिश्यादेशं दत्त्वा शयनयोग्यं यत्सौधशिखरं तदारुरोहारूढवती । **तत्रेति** । तत्र तस्मिन्सौधतले सितं शुभ्रं यद्दुकूलं दुगूलं तस्य वितानं चन्द्रोदयस्तस्य तलमधोभागस्तत्रास्तीर्णं स्थापितं शयनीयं शय्यामलंचकारालंकृतवती । चन्द्रापीडोऽपि तस्मिन्नेव शिलातले निरभिमानतां निर्गर्वतामभिरूपतां विचक्षणतामतिगम्भीरतां च कादम्बर्याः निष्कारणवत्सलतां च निर्हेतुकहितकारितां च महाश्वेतायाः, सुजनतां च मदलेखायाः, महानुभावतां च परिजनस्य, अतिसमृद्धिं च गन्धर्वराजलोकस्य, रम्यतां मनोहरतां च किंपुरुषदेशस्य मनसा भावयंश्चिन्तयन्केयूरकेण संवाह्यमानौ लाल्यमानौ चरणौ पादौ यस्यैवंभूतः क्षणादिव क्षणमात्रेणेव क्षणदां त्रियामां क्षपितवान्क्षयं नीतवान् ।

इदानीं रात्रिशेषं चन्द्रास्तं सूर्योदयं च वर्णयंश्चन्द्रापीडकर्तव्यतामाह—**अथेति** । क्षणदाक्षयानन्तरं कादम्बर्या यत् दर्शनं अवलोकनं तेन जागरणं तेन खिन्नो रीणः स्वप्तुमिव शयनं कर्तुमिव तारापतिश्चन्द्रः । **वेलेति** । वेलाम्भसां वृद्धिस्तस्या वनराजिं कान्तारश्रेणिमवततारावतीर्णवान् । अथ वनराजिं वर्णयन्नाह—**तालेति** । तालस्तालवृक्षः, तमालस्तापिच्छः, ताली वृक्षविशेषः, कदली रम्भा, आसां कन्दलो[2] विद्यते यस्यां सा ताम् । **प्रविरलेति** । प्रविरलाः स्तोका ये कल्लोलास्तरंगास्तेषामनिलो वायुस्तेन शीतलां सुशीताम् । **अभ्यर्णेति** । अभ्यर्णस्तत्कालीनो यो विरहो[3] वियोगस्तेन विधुरस्य दुःखितस्य कामिनीजनस्योष्णैर्निःश्वसितैर्निःश्वासैरिव म्लानिं मलिनतां चन्द्रिका चन्द्रगोलिकानीयत प्राप्यत । **चन्द्रेति** । चन्द्रापीडविलोकनेन आरूढः प्राप्तो मदनो

---

टिप्प०—1 धन्या बुद्धिः ! इतः कियद्दूरे वर्तत इति तात्पर्यम् । 2 समूहः । 3 रात्रिसमाहृया कामिनोर्विच्छेदो जात इत्याशयः ।

---

पाठा०—१ प्रजागर. २ अविरल.

कुमुददलोपनीतनिशा पङ्कजेषु निपपात लक्ष्मीः । क्षणदापगमे च स्मृत्वा[1] कामिनीकर्णोत्पलप्रहारान्[2]उत्कण्ठितेष्विव क्षामतां व्रजत्सु पाण्डुतनुषु गृह[3]प्रदीपेषु, अनवरतशरक्षेपखिन्नानङ्गनिःश्वासविभ्रमेषु वहत्सु[4] लता[5]कुसुमपरिमलेषु[6] प्रभातमातरिश्वसु, सुमन्दर[7]लतागृहगहनानि च भियेव भजन्तीष्वरुणोदयोपप्लविनीषु तारकासु, क्रमेण च समुद्गते[8] चक्रवाकहृदयनिवासलग्नानुरागमिव लोहितं[9] मण्डलमुद्वहति सवितरि, शिलातलादुत्थाय चन्द्रापीडः प्रक्षालितमुखकमलः कृतसंध्यानमस्कृतिर्गृहीतताम्बूलः 'केयूरक, विलोकय देवी कादम्बरी प्रबुद्धा न वा, क्व वा तिष्ठति' इत्यवोचत् ।

गतप्रतिनिवृत्तेन च तेन 'देव, मन्दरप्रासादस्याधस्तादङ्गणसौधवेदिकायां महाश्वेतया सहावतिष्ठते[10]' इत्यावेदिते गन्धर्वराजतनयामालोकयितुमाजगाम । ददर्श च धवलभस्म[11]ललाटिकाभिरक्षमालापरिवर्तन[12]प्रचलकरतलाभिः पाशुपतव्रतधारिणीभि[13]र्धातुरागारुणाम्बराभिश्च परि-

---

यस्या एवंभूतेव । आरूढमदनतायास्तु शीतलस्थानावस्थितिः प्रजागरश्च स्यादित्याशयेनाह—**कुमुदेति** । कुमुददलानां कैरवपत्राणां उदरे मध्ये नीता परिकलिता निशा रात्रिर्यया सा । तेषां विकसितत्वात् । तदनन्तरमेव पङ्कजेषु कमलेषु लक्ष्मीर्निपपात । **क्षणदेति** । क्षणदाया निशाया अपगमे कामिनीनां रते यान्कर्णोत्पलप्रहारान्[1] अथ वान्यानपि क्रीडाविलासान्स्मृत्वा स्मरणं कृत्वा पुनर्द्रष्टुमुत्कण्ठितेष्विवात एवोत्कण्ठापरिपूर्त्या क्षामतां कृशतां व्रजत्सु गच्छत्सु तत एव पाण्डुतनुषु गृहदीपकेषु सत्सु । **अनवरतेति** । अनवरतं निरन्तरं यः शरक्षेपो बाणप्रक्षेपस्तेन खिन्नो रीणो योऽनङ्गः कंदर्पस्तस्य निःश्वासास्तेषां विभ्रमेषु[2], लता वल्ल्यस्तासां कुसुमानां पुष्पाणां परिमलो येष्वेवंविधेषु प्रभातमातरिश्वसु प्रत्यूषसमीरेषु वहत्सु । अरुणोदयेन उपप्लव उपद्रवो विद्यते यासामेवंविधासु तारकासु तारासु भियेव भीत्येव सुमन्दरो मेरुस्तस्य लता वीरुधस्ता इव ( एव ) गृहास्तेषां गहनान्यरण्यानि च भजन्तीष्वाश्रयन्तीषु । क्रमेण परिपाट्या चक्रवाको रथाङ्गाह्वयस्तस्य हृदयं तेन सह निवासस्तत्र लग्नोऽनुरागो यस्यैवंविधमिव लोहितं मण्डलं बिम्बमुद्वहति धारयति सवितरि सूर्ये च समुद्गत उदिते सति । शिलातलादुत्थाय प्रक्षालितं मुखकमलं येन सः, कृता संध्याया नमस्कृतिर्येन सः, गृहीतं भक्षितं ताम्बूलं येन सः, हे केयूरक, विलोकय देवी कादम्बरी प्रबुद्धा न वा । क्व वा तिष्ठतीत्यवोचत् ।

गतप्रतिनिवृत्तेन च तेन केयूरकेण हे देव, मन्दरप्रासादस्याधस्तादङ्गणं तत्र यत्सौधं तस्य वेदिकायां महाश्वेतया सहावतिष्ठते इत्यावेदिते कथिते सति गन्धर्वराजतनयामालोकयितुं वीक्षितुमाजगाम । तदनन्तरं महाश्वेतां कादम्बरीं च ददर्शावलोकयामास । अथ महाश्वेतां विशिनष्टि—**साक्षादिति** । साक्षान्मन्त्रदेवताभिरिव परिव्राजिकाभिस्तापसीभिरुपास्यमानाम् । ता विशिनष्टि—**धवलेति** । धवलं शुभ्रं यद्भस्म भूतिस्तस्य ललाटिका यासां ताभिः । **अक्षेति** । अक्षमाला जपमालास्तासां परिवर्तनं तेन प्रचलानि कम्प्राणि करतलानि यासां ताभिः । पशुपतेरीश्वरस्येदं पाशुपतं यद्व्रतं नियमविशेषस्तद्धारयन्तीत्येवंशीलास्ताभिर्धातुरागेण गैरिकेणारुणान्यम्बराणि यासां ताभिः । परिणता ये तालफला[3]स्तेषां वल्कलानि तान्येव लोहितानि रक्तानि वस्त्राणि यासां

---

**टिप्प०—1 रतार्थमपनीयमाने वस्त्रे प्रदीपोपशमार्थं कामिन्यः कर्णोत्पलं तदुपरि क्षिपन्ति, तं स्मृत्वा पुनस्तादृशप्रहारप्राप्त्यर्थमुत्कण्ठा प्रदीपानामित्याशयः । 2 धिङ् मन्दभाग्यम् । कंदर्पनिःश्वासानां विभ्रमा इव विभ्रमाः ( विलासाः ) येषां तादृशेषु । कामनिःश्वासायितेष्विति यावत् । 3 परिणतं यत्तालफलं तस्य यद्वल्कलं ( त्वक् ) तद्वत् लोहितानि ।**

---

**पाठा०—१ स्मृतकामिनीकर्णोत्पलप्रहारेषु. २ प्रहाराणाम्. ३ वासगृह. ४ भ्रमत्सु. ५ तरुलता. ६ आमोदिषु. ७ मन्दरगिरिलतां. ८ समुद्गतचक्रवाक. ९ आलोहितम्. १० अवतिष्ठति. ११ भस्मकृत. १२ मालिका. १३ चारिणीभिः.**

व्राजिकाभिः, परिणततालफलवल्कललोहितवस्त्राभिश्च रक्तपटव्रतवाहिनीभिः सितवसननिबिडनिबद्धस्तनपरिकराभिश्च श्वेतपटव्यजनाभिर्जटाजिनवल्कलाषाढधारिणीभिर्वर्णिचिह्नाभिस्तापसीभिः, साक्षादिव मन्त्रदेवताभिः पठन्तीभिर्भगवतस्त्र्यम्बकस्याम्बिकायाः कार्तिकेयस्य विश्रवणस्य कृष्णस्यार्यविलोकितेश्वरस्यार्हतो विरिञ्चस्य पुण्याः स्तुतीरुपास्यमानाम्, अन्तःपुराभ्यर्हिताश्च सादरं नमस्कारैराभाषणैरभ्युत्थानैरासन्नवेत्रासनदानैश्च गन्धर्वराजबान्धववृद्धाः संमानयन्तीं महाश्वेताम्, पृष्ठतश्च समुपविष्टेन किंनरमिथुनेन मधुकरमधुराभ्यां वंशाभ्यां दत्ते ताने कलगिरा गायन्त्या नारददुहित्या पठ्यमाने च सर्वमङ्गलमहीयसि महाभारते दत्तावधानां पुरो धृते च दर्पणे ताम्बूलरागवद्धकृषिणकान्धकारिताभ्यन्तरं दशनज्योत्स्नासिक्तमुत्सृष्टमधूच्छिष्टपट्टपाण्डुरमधरं विलोकयन्तीं शैवलतृष्णया कर्णपूरशिरीषप्रेषितोत्तानवि-

---

ताभिः । **रक्तेति** । रक्तो यः पटस्तस्य यद्व्रतं तद्वाहिनीभिस्तन्निर्वाहकारिणीभिः । अथ तापसीं विशिनष्टि—**सितेति** । सितवसनेन श्वेतवस्त्रेण निविडं यथा स्यात्तथा निबद्धः स्तनपरिकरः कुचाभोगो याभिः । श्वेतपटस्य व्यजनानि तालवृन्तानि यासां ताभिः । **जटेति** । जटाः सटाः, अजिनं मृगचर्म, वल्कलं चोचम्, आषाढः पालाशः, एतान्धारयन्तीत्येवंशीलास्ताभिः । वर्णी ब्रह्मचारी तस्य चिह्नं यासां ताभिः । किं कुर्वन्तीभिरेताभिः । पठन्तीभिरुच्चारयन्तीभिः । काः । भगवतस्त्र्यम्बकस्येश्वरस्य, अम्बिकाया गौर्याः कार्तिकेयस्य स्कन्दस्य विश्रवणस्य विश्रवसः, कृष्णस्य[1] जिनस्य, आर्यविलोकितेश्वरस्य बौद्धस्य, अर्हतस्तीर्थंकरस्य, विरिञ्चस्य ब्रह्मणः, पुण्याः पवित्राः स्तुतीर्नुतीः । पुनः किं कुर्वन्तीम् । अन्तःपुरेऽभ्यर्हिताः श्रेष्ठा गन्धर्वराजस्य बान्धवाः स्वजनास्तेषां वृद्धाः स्थविराः सादरं सत्कारपूर्वकं नमस्कारैः प्रणामैराभाषणैर्जल्पनैरभ्युत्थानैरुत्तिष्ठैनैरा[2]सन्ने समीपे वेत्रासनस्यासन्द्या दानैश्च कृत्वा संमानयन्तीं सत्कारं कुर्वन्तीं महाश्वेताम्। पुनः कीदृशीं कादम्बरीम् । पृष्ठतः समुपविष्टेन पश्चाद्भागस्थितेन किंनरमिथुनेन किंपुरुषयुग्मेन मधुकरवन्मधुराभ्यां वंशाभ्यां[3]सुपाङ्गाभ्यां ताने स्वरे दत्ते सति । नारदो देवब्रह्मा तस्य दुहित्या पुत्र्या मद्राभिधानया कलगिरा मनोज्ञवाण्या गायन्त्या गानं कुर्वन्त्या । पठ्यमाने गानद्वारा कथ्यमाने च सर्वमङ्गलैः समग्रश्रेयोभिर्महीयसि महाभारते दत्तावधानां न्यस्तचित्ताम् । पुनः किं कुर्वन्तीम् । पुरो धृतेऽग्रे स्थापिते दर्पणेऽधरं दन्तच्छदं विलोकयन्तीं पश्यन्तीम् । अथाधरं विशेषयन्नाह—**ताम्बूलेति** । ताम्बूलं नागवल्लीदलं तस्य रागस्तेन बद्धा या कृष्णिका श्यामता तयान्धकारितमन्धकारवदाचरितमभ्यन्तरं मध्यभागो यस्य तत् । **दशनेति** । दशनानां दन्तानां या ज्योत्स्ना चन्द्रिका तया सिक्तं सिञ्चितम् । **उत्सृष्टेति** । उत्सृष्टमुज्झितं मधु क्षौद्रं येनैवंविधो य उच्छिष्टपट्टो मदन[4]पिण्डस्तद्वत्पाण्डुरं श्वेतरक्तम् । **बद्धेति** । बद्धमण्डलं यथा स्यात्तथा भ्रमता भ्रमणं कुर्वता भवनकलहंसेन गृहकलहंसेन प्रभातकालीनो यः शशी चन्द्रस्तेनेव क्रियमाणा विधीयमाना गमनस[5]मये प्रणामयुक्ता प्रदक्षिणा यस्याः सा ताम् । कलहंसा[6]न्विशेषयन्नाह—**शैवलेति** । शैवलं शैवालं तस्य तृष्णया गर्धेन कर्णपूरीकृतं यच्छिरीषपुष्पं तस्मिन्प्रेषित उत्तान ऊर्ध्वमुखे

---

**टिप्प०**—1 बाणनिर्मितौ कृष्णपदस्य (वासुदेवार्थस्य) जिनार्थकरणं बुद्धिमत्त्वमेव टीकाकर्तुः । 2 धन्या बुद्धिः ! उत्थानैरित्येव भवति, न उत्तिष्ठनैरिति बोध्यं छात्रैः । एवंविधोपि टीकां कर्तुं प्रगल्भत इत्यहो साहसम् । 3 वेणुभ्याम्, 'बंसी' इति भाषा । 4 'मोम' इति ख्यातस्य पिण्डः । 5 अशुद्धमिदम् । भवनकलहंसेन क्रियमाणाः गमनं प्रणामः प्रदक्षिणाश्च यस्यास्ताम् । हंसः समीपे गमनं प्रणामं प्रदक्षिणां च कृत्वा कर्णपूरशिरीषं याचत इत्यर्थः । 6 कलहंसमित्येकवचनमेव योग्यम् ।

---

**पाठा०**—१ मौञ्जीवल्कल. २ शौद्धोदने. ३ विष्टरश्रवसो जिनस्यार्य. ४ अर्हतो वैश्वदेवस्य मार्तण्डस्य. ५ दर्शनागतगन्धर्व. ६ मिथुनकेन. ७ मधुराभ्याम्. ८ स्थानके; ताले. ९ नारददुहित्रा च सावित्र्या. १० पुरोविधृते परिजनेन. ११ मणिदर्पणे. १२ उत्सृष्ट. १३ पाटलम्.

लोचनेन बद्धमण्डलं भ्रमता भवनकलहंसेन प्रभातशशिनेव क्रियमाणगमनप्रणामप्रदक्षिणां कादम्बरीं च समुपसृत्य कृतनमस्कारस्तस्यामेव वेदिकायां[1] विन्यस्तमासनं भेजे। स्थित्वा च कंचित्कालं महाश्वेताया वदनं विलोक्य स्फुरितकपोलोदरं मन्दस्मितमकरोत्। असौ तु तावतैव विदिताभिप्राया कादम्बरीमब्रवीत्—'सखि, भवत्या गुणैश्चन्द्रापीडश्चन्द्रकान्त इव चन्द्रमयूखैरार्द्रीकृतो न शक्नोति वक्तुम्। जिगमिषति खलु कुमारः। पृष्ठतो दुःखमविदित-वृत्तान्तं राजचक्रमास्ते। अपि च युवयोर्दूरस्थितयोरपि स्थितेयमिदानीं कमलिनीकमलबा-न्धवयोरिव कुमुदिनीकुमुदनाथयोरिव प्रीतिराप्रलयात्। अतोऽभ्यनुजानातु[2] भवती' इति।

अथ कादम्बरी 'सखि[3], महाश्वेते, स्वाधीनोऽयं सपरिजनो जनः कुमारस्य स्व इवान्तरा-त्मा। क इवात्रानुरोधः' इत्यभिधाय गन्धर्वकुमारानाहूय 'प्रापयत कुमारं स्वां भूमिम्' इत्या-दिदेश। चन्द्रापीडोऽप्युत्थाय प्रणम्य प्रथमं महाश्वेतां ततः कादम्बरीं तस्याश्च प्रेमस्निग्धेन चक्षुषा मनसा च गृह्यमाणः 'देवि, किं ब्रवीमि। बहुभाषिणे न श्रद्दधाति लोकः। स्मर्तव्यो-ऽस्मि परिजनकथासु' इत्यभिधाय कन्यकान्तःपुरान्निर्जगाम। कादम्बरीवर्जो[4]ऽशेषः कन्यका-

---

विलोचने नेत्रे यस्य स तेनैवंविधां कादम्बरीं च। समुपसृत्य निकटे गत्वा कृतो नमस्कारो येनैवंभूतो यस्यां सा समुपविष्टास्ति तस्यामेव वेदिकायां विन्यस्तं स्थापितमासनं विष्टरं भेजेऽभजत्। तत्र कंचित्कालं स्थित्वा स्थितिं विधाय महाश्वेताया वदनं विलोक्य निरीक्ष्य स्फुरितं चलितं कपोलयोरुदरं मध्यप्रदेशो यस्मिन्नेतादृशं मन्दस्मितमीषद्धास्यमकरोत्। असौ महाश्वेता तु तावतैव स्मितमात्रेणैव विदितो ज्ञातोऽभिप्रायो यया सैवं-विधा सती कादम्बरीमित्यब्रवीत्। इतिशब्दद्योत्यमाह—**सखीति**। हे सखि आलि, भवत्या गुणैः कारण-भूतैश्चन्द्रापीडश्चन्द्रमयूखैः शशिकिरणैश्चन्द्रकान्त इव चन्द्रोपल इवार्द्रीकृतो वक्तुं कथयितुं न शक्नोति न समर्थो भवति। खलु निश्चयेन कुमारो जिगमिषति[1] विचलिष्यति। पृष्ठतो मद्गमनानन्तरमविदितवृत्तान्तमज्ञातोदन्त-मतएव दुःखं दुःखितराजचक्रं[2] नृपसमूह आस्ते वर्तते। अपि चेति युक्त्यन्तरे। युवयोः कादम्बरीचन्द्रा-पीडयोर्दूरस्थितयोरपीदानीं सांप्रतं कमलिनीकमलबान्धवयोरिव पद्मिनीसूर्ययोरिव कुमुदिनीकुमुदनाथ-योरिव कैरविणीचन्द्रमसोरिव प्रीतिः स्नेह आ प्रलयात्प्रलयं मर्यादीकृत्य आकल्पान्तादियं स्थिता। अतो हेतोर्भवत्यभ्यनुजानातु। गमनाज्ञां ददात्वित्यर्थः।

**अथेति**। एतच्छ्रवणानन्तरं कादम्बरी गन्धर्वकुमारानाहूयाह्वानं कृत्वेत्यादिदेशेत्यादिष्टवती। इतिशब्द-वाच्यमाह—**कुमारेति**। कुमारं चन्द्रापीडं स्वां भूमिं प्रापयत आपयत यूयम्। किं कृत्वा। इत्यभिधायेत्यु-क्त्वा। इतिशब्दार्थमाह—हे सखि महाश्वेते, अयं मल्लक्षणः सपरिवारो जनः कुमारस्य स्वान्तरात्मेव स्वाधी-नः स्ववशः। अतः कोऽत्रानुरोधः संकोचः। चन्द्रापीडोऽप्युत्थायोत्थानं कृत्वा प्रथममादौ महाश्वेतां प्रणम्य नमस्कृत्य ततस्तदनन्तरं कादम्बरीं प्रणम्य नमस्कृत्य तस्याः कादम्बर्याः प्रेमस्निग्धेन स्नेहचिक्कणेन चक्षुषा नेत्रेण मनसा च गृह्यमाण[3] इत्यभिधायोक्त्वा कन्यकान्तःपुरान्निर्जगाम निर्गतो बभूव। इतिशब्दार्थमाह—**देवीति**। हे देवि कादम्बरि, किं ब्रवीमि किं कथयामि। 'ब्रुवते हि फलेन साधवो न तु शब्देन' इति न्यायात्। अत्र हेतुमाह—यतो बहुभाषिणे वाचालाय लोको जनो न श्रद्दधाति न विश्वसिति। अत उपसंहरति—**परीति**। परिजनकथासु निजसेवकवार्तासु स्मर्तव्यः स्मरणीयोऽस्मि। अहमिति शेषः। तदनन्तरं कादम्बरी-

---

**टिप्प०**—1 गन्तुमिच्छति। 2 राजचक्रं दुःखमास्ते दुःखाकुलं यथा स्यात्तथा वर्तते। 3 वशी-क्रियमाण इत्यर्थः।

---

पाठा०—१ सुधावेदिकायाम्. २ अनुजानातु. ३ सखि स्वाधीनः. ४ वर्जमशेषकन्यकाजनः; वर्जमशेषस्तु कन्याजनः.

जनो गुणगौरवाकृष्टः परवश इव तं व्रजन्तमा बहिस्तोरणादनुवव्राज । निवृत्ते च कन्यकाजने केयूरकेणोपनीतं वाजिनमारुह्य[१] गन्धर्वकुमारकैस्तैरनुगम्यमानो हेमकूटात्प्रवृत्तो गन्तुम् । गच्छतश्चास्य चित्ररथतनया न केवलमन्तः, बहिरपि सैव सर्वाशानिबन्धनमासीत् । तथा हि—तन्मयेन मानसेनासह्यविरहदुःखानुशयलग्नामिव पृष्ठतः, कृतमार्गगमननिरोधामिव पुरस्तात्, वियोगाकुलहृदयोत्कलिकावेशात्क्षिप्तामिव[२] नभसि सम्यगालोकयितुं वदनम्, विरहातुरमानसामिवावस्थितामुरःस्थले, तामेव[३] ददर्श । क्रमेण च प्राप्य महाश्वेताश्रममच्छोदसरस्तीरे संनिविष्टमिन्द्रायुधखुरपुटानुसारेणैवागतमात्मस्कन्धावारमपश्यत् ।

निवर्तिताशेषगन्धर्वकुमारश्च सानन्देन सकुतूहलेन सविस्मयेन च स्कन्धावारवर्तिना जनेन प्रणम्यमानः स्वभवनं विवेश । संमानिताशेषराजलोकश्च[४] वैशम्पायनेन पत्रलेखया च सह 'एवं महाश्वेता, एवं कादम्बरी, एवं मदलेखा, एवं तमालिका, एवं केयूरकः,' इत्यनयैव कथया प्रायो दिवसमनैषीत् । कादम्बरीरूपदर्शनविद्विष्टेव[५] नास्य पुरे प्रीतिमकरोद्राजलक्ष्मीः । तामेव च

---

वर्जोऽशेषः समग्रः कन्यकाजनो गुणगौरवेणाकृष्ट आकर्षितः परवश इव परायत्त इव तं चन्द्रापीडं व्रजन्तं गच्छन्तमा बहिस्तोरणाद्बहिर्द्वारं मर्यादीकृत्यानुवव्राज पृष्ठतो जगाम । तदनन्तरं निवृत्ते च पश्चाद्वलिते च कन्यकाजने केयूरकेणोपनीतमानीतं वाजिनमारुह्यारोहणं कृत्वा तैः पूर्वोक्तैर्गन्धर्वकुमारकैरनुगम्यमानो हेमकूटाद्गन्तुं प्रवृत्तः । गच्छतो व्रजतोऽस्य चन्द्रापीडस्य चित्ररथतनया कादम्बरी न केवलमन्तर्बहिरपि सैव कादम्बरी सर्वाशानिबन्धनं समग्राभिलाषाणां कारणमासीद्बभूव । एतदेव दर्शयति—**तथा हीति** । तन्मयेन कादम्बरीमयेन मानसेन चित्तेन कृत्वासह्यं न सोढुं शक्यं यद्विरहदुःखं तस्यानुशयः संतापस्तेन पृष्ठतो लग्नामिव, पुरस्तादग्रे कृतो मार्गगमनस्य निरोधो यया सैवंविधामिव, वियोगेन विरहेणाकुलं यद्धृदयं चित्तं तस्मिन्नुत्कलिका हृल्लेखस्तस्या आवेशात्प्रवेशात्सम्यग्वदनमालोकयितुं[1] वीक्षितुं नभसि व्योम्नि क्षिप्तामिव पर्यस्तामिव । विरहेण वियोगेनातुरं पीडयितुं (पीडितम्) मानसं यस्या एवंविधामिवोरःस्थलेऽवस्थिताम् । तामेव कादम्बरीमेव ददर्शेक्षांचक्रे । क्रमेण परिपाट्या च महाश्वेताश्रमं प्राप्यासाद्याच्छोदसरस्तीरे संनिविष्टं स्थापितमिन्द्रायुधखुरपुटानुसारेणैवागतं प्राप्तमात्मनः स्वस्य स्कन्धावारं सैन्यनिवेशमपश्यदैक्षत ।

**निवर्तितेति** । निवर्तिताः पश्चाद्वलिताअशेषाः समग्रा गन्धर्वकुमारा येनैवंभूतश्च सानन्देन सप्रमोदेन । सैव प्रभुदर्शनादिति भावः । सकुतूहलेन कौतुकसहितेन । अत्यद्भुतगन्धर्वजनदर्शनात् । सविस्मयेन साश्चर्येण । तादृशमुक्ताप्रालम्बदर्शनात् । एवंविधेन च स्कन्धावारवर्तिना जनेन प्रणम्यमानो नमस्क्रियमाणः स्वभवनं स्वगृहं विवेश प्रवेशं कृतवान् । संमानितः संस्तुतोऽशेषः समग्रो राजलोको येनैवंभूतश्च वैशम्पायनेन पत्रलेखया च सहैवं महाश्वेता, एवं कादम्बरी, एवं मदलेखा, एवं तमालिका, एवं केयूरकः, इत्यनयैव कथया वार्तया प्रायो बाहुल्येन दिवसं वासरमनैषीत् । परिपूर्णीचकारेत्यर्थः । कादम्बर्या रूपदर्शनं तेन विद्विष्टेव विद्वेषं प्राप्तेव राजलक्ष्मीर्नास्य पुरेऽस्य[2]

---

टिप्प०—1 टीकाकारः सर्वं स्वारस्यं भ्रंशयामास । गमनस्य पश्चात् यद्वियोगदुःखं तस्यानुशयात्पृष्ठतो लग्नाम् [इति पृष्ठनिरोधः पृथक्], तन्मयेन मानसेन कृताग्रगमननिरोधाम् [इति संमुखतो निरोधः पृथक्], तन्मयमानसेन उत्कण्ठावेशात् नभसि क्षिप्तामिव [इति उपरितोनिरोधः पृथक्],आत्मनः ( कादम्बर्याः ) मुखं सम्यग् दर्शयितुं आत्मनो वक्षसि स्थिताम् [पृथक्] । 2 धन्यधन्यष्टीकाकारः, बाणशब्दशय्यायां 'पुर'शब्दस्य शरीरमर्थः स्यात्? अस्तु 'पुरेव' इत्येव पाठः । राजलक्ष्मीः पुरेव पूर्वमिव नास्य प्रीतिमकरोत्, कादम्बरीद्वेषात् । एतेन राजलक्ष्म्याः सपत्नीभावसूचनेन चन्द्रापीडस्य प्रभावातिशयो ध्वन्यते ।

पाठा०—१ अधिरुह्य. २ आवेशोत्क्षिप्ताम्; आवेशविक्षिप्ताम्. ३ तामेव मृगलोचनाम्. ४ संभावितप्रत्यक्षीकृतराजलोकः, संमानितराजलोकः. ५ द्विष्टयेव.

धवलेक्षणामाबद्धरणरणकेन चेतसा चिन्तयतो जाग्रत एवास्य जगाम रात्रिः। अपरेद्युश्च समुत्थिते भगवति रवावास्थानमण्डपगतस्तद्गतेनैव मनसा सहसैव प्रतीहारेण सह संप्रविशन्तं केयूरकं ददर्श। दूरादेव च क्षितितलस्पर्शिना मौलिना कृतपादपतनम् 'एह्येहि' इत्युक्त्वा प्रथममपाङ्गविसर्पिणा चक्षुषा, ततो हृदयेन, ततो रोमोद्गमेन, पश्चाद्भुजाभ्यां प्रधावितः पथि तमालिलिङ्ग गाढम्। उपावेशयच्चैनमात्मनः समीप एव। पप्रच्छ च स्मितसुधाधवलीकृताक्षरं क्षरत्प्रीतिद्रवमयमिव वचनमादृतः—'केयूरक, कथय कुशलिनी देवी ससखीजना सपरिजना कादम्बरी भगवती महाश्वेता च?' इति। असौ तु तेन राजसूनोः प्रीतिप्रकर्षजन्मना स्मितेनैव स्नपित इवानुलिप्त इव सद्य एवापगताध्वखेदः प्रणम्यादृततरमवोचत्—'अद्य कुशलिनी, यामेवं देवः पृच्छति।' इत्यभिधायापनीयार्द्रवस्त्रावगुण्ठितं बिससूत्रसंयतमुखमार्द्रचन्दनपङ्कन्यस्तबालमृणालवलयमुद्रं नलिनीपत्रपुटमदर्शयत्। उद्घाट्य च तत्र कादम्बरीप्रहितान्यभिज्ञानान्यदर्शयत्। तद्यथा—मरकतहरिन्ति व्यपनीतत्वञ्चि चारुमञ्जरीभाञ्जि क्षीरीणि पूगीफलानि, शुककामिनीकपोलपाण्डूनि ताम्बूलीदलानि, हरचन्द्रखण्डस्थूलशकलं च कर्पूरम्, अतिबहल-

---

शरीरे। 'घनो बन्धः पुरं पिण्डः' इति कोशः। प्रीतिमकरोत्। तामेव धवलेक्षणां कादम्बरीमाबद्धरणरणकेन निबद्धौत्कण्ठ्येन चेतसा चिन्तयतो ध्यायतो जाग्रत एव अस्य चन्द्रापीडस्य रात्रिर्जगाम। **अपरेद्युश्चेति**। अपरस्मिन्दिने भगवति रवौ समुत्थिते सति तद्गतेनैव कादम्बरीगतेनैव मनसास्थानमण्डपगतः सहसैवातर्कित एव प्रतीहारेण सह संप्रविशन्तं केयूरकं ददर्शाद्राक्षीत्। **दूरादेवेति**। दूरादेव दर्शनमात्रादेव क्षितितलं स्पृशतीत्येवंशीलेन मौलिना मस्तकेन कृतं पादपतनं येन तम्, एह्येहीत्युक्त्वेत्यभिधाय। इदं प्रीत्यतिशयनिवेदकम्। प्रथममादावपाङ्गविसर्पिणा नेत्रप्रान्तचारिणा चक्षुषा नेत्रेण, ततस्तदनन्तरं हृदयेन स्वान्तेन, ततस्तदनन्तरं रोमोद्गमेन रोमाञ्चोद्भवेन, ततः पश्चाद्भुजाभ्यां बाहुभ्यां प्रधावित उच्चलितः प्रथितं विख्यातं गाढमत्यर्थमालिलिङ्गोपगूहितवान्। एनं केयूरकं आत्मनः समीप एव आत्मीयासनाभ्यर्णे एवोपावेशयदस्थापयच्च। पुनः स्मितसुधाधवलीकृतान्यक्षराणि यस्मिंस्तत्क्षरत्स्रवद्यः प्रीतिद्रवस्तन्मयमिव तन्निर्मितमिवैतादृशं वचनमादृत आदरवान्पप्रच्छ। प्रश्नं चकारेत्यर्थः। किं तदित्याह—**केयूरकेति**। हे केयूरक, कथय ब्रूहि। कुशलिनी क्षेमवती देवी ससखीजना सपरिजना कादम्बरी वर्तते। तथा महाश्वेता भगवती। च। **असौ त्विति**। असौ केयूरकस्तु तेनानिर्वचनीयेन राजसूनोश्चन्द्रापीडस्य प्रीत्याः प्रकर्षस्तस्माज्जन्मोत्पत्तिर्यस्यैवंभूतेन स्मितेनैव स्नपित इव स्नानं कारित इव, अनुलिप्त इव विलिप्त इव सद्य एव तत्कालमेवापगतोऽध्वखेदः पथ(थि)श्रमो यस्य स प्रणम्य नमस्कृत्यादृततरमत्यादरपूर्वकमवोचदब्रवीत्। अद्य कुशलिनी सा वर्तते, यामेवं देवः पृच्छतीत्यभिधायेत्युक्त्वापनीय दूरीकृत्यार्द्रवस्त्रेण स्तिमितांशुकेनावगुण्ठितमाच्छादितं बिससूत्रेण मृणालतन्तुना संयतं बद्धं मुखं यस्य तत्। आर्द्रचन्दनपङ्को न्यस्तो यस्मिन्नेतादृशं बालमृणालवलयं नवीनतन्तुलकटकं तस्य मुद्रा यस्मिन्नेतादृशं नलिनीपत्रपुटमदर्शयदीक्षणविषयमकारयत्। उद्घाट्योन्मुच्य तत्र तस्मिन्कादम्बरीप्रहितानि राजपुत्रीप्रेषितान्यभिज्ञानानि चिह्नान्यदर्शयदवलोकनमकारयत्। तदेव दर्शयति—**तद्यथेति**। मरकतमरमगर्भं तद्वद्धरिन्ति नीलानि व्यपनीतत्वञ्चि दूरीकृतत्वग्भागानि चार्वी या मञ्जरी तद्भाञ्जि क्षीरीणि क्षीरयुक्तान्येतादृशानि पूगीफलानि क्रमुकफलानि। तथा शुककामिनी कीरपत्नी तस्याः कपोलौ तद्वत्पाण्डूनि श्वेतानि ताम्बू-

---

**टिप्प०—1 आर्द्रे चन्दनपङ्के न्यस्ता बाणमृणालवलयस्य मुद्रा (चिह्नम्, अन्यो नोद्घाटयितुं शक्नुयादिति) यस्मिन् तदित्यर्थः।**

---

पाठा०—१ सा. २ प्रविशन्तम्. ३ निभृतम्; प्रसृतम्. ४ तमालिलिङ्ग. ५ समुपावेशयत्. ६ वस्त्रकर्पट.

मृगमदामोदमनोहरं च मलयजविलेपनम् । अब्रवीच्च—'चूडामणिचुम्बिना कोमलाङ्गुलिविनिर्गत[1]लोहितांशुजालेनाञ्जलिना देवमर्चयति देवी कादम्बरी, महाश्वेता च सकण्ठग्रहेण कुशलवचसा, पर्यस्तशिखण्डमाणिक्यज्योत्स्नास्नपितललाटेन च नमस्कारेण मदलेखा, क्षितितलघटितसीमन्तमकरिकाकोटिकोणेन सकलकन्यालोकश्च, सचरणरजःस्पर्शेन च पादप्रणामेन तमालिका । संदिष्टं च तव महाश्वेतया—'धन्या खलु ते येषां न गतोऽसि चक्षुषोर्वि[2]षयम् । तथा नाम समक्षं भवतस्ते तुहिनशीतलाश्चन्द्रमया इव गुणा विरहे विवस्वन्मया इव वृ[3]त्ताः । स्पृहयन्ति खलु जनाः कथमपि दैवोपपादितायामृतोत्पत्तिवासरायेवातीतदिवसाय । त्वया वियुक्तं निर्वृ[4]त्तम[5]होत्सवालसमिव वर्तते गन्धर्वराजनगरम् । जानासि च मां कृतसकलपरित्यागाम्, तथाप्यकारणपक्षपातिनं भवन्तं द्रष्टुमिच्छत्यनिच्छन्त्या अपि मे वलादिव हृदयम् । अपि च बलवदस्वस्थशरीरा कादम्बरी । स्मरति च स्मेराननं स्मरकल्पं त्वाम् । अतः पुनरा-

---

लीदलानि नागवल्लीपत्राणि । तथा हरस्येश्वरस्य यश्चन्द्रखण्डस्तद्वत्स्थूलं शकलं खण्डं यस्यैतादृशं कर्पूरं हिमवालुका । तथातिवहलोऽतिनिबिडो यो मृगमदामोदः कस्तूरीपरिमलस्तेन मनोहरं रुचिरं यन्मलयजविलेपनं चन्दनाङ्गरागः । एतद्दर्शनानन्तरमब्रवीदवोचत् । चकारः समुच्चयार्थः । कादम्बरी देव्यञ्जलिना बद्धपाणिपुटेन देवं भगवन्तमर्चयति पूजयति । अथाञ्जलिं विशिनष्टि—**चूडेति** । चूडामणिः शिरोमणिस्तच्चुम्बिना तत्स्पर्शिना कोमलाङ्गुलिभ्यो मृदुकरशाखाभ्यो विनिर्गमो यस्यैवंभूतं लोहितं रक्तमंशुजालं किरणसमूहो यस्मिन्स तेन । महाश्वेता च सकण्ठग्रहेण निगरणसहितेन कुशलवचसा मङ्गलवाक्येन देवमर्चयतीत्यस्य सर्वत्र संबन्धः । तथा मदलेखा नमस्कारेण प्रणामेन । कीदृशेन । **पर्यस्तेति** । पर्यस्तं पतितं यच्छिखण्डमाणिक्यं शिखारत्नं तस्य ज्योत्स्ना कान्तिस्तया स्नपितं क्षालितं ललाटमलिकं यस्मिन्स तेन । सकलकन्यालोकश्च क्षितितले घटितो लग्नः सीमन्तः केशवेशवर्त्म तस्य मकरिकाभरणविशेषस्तस्याः कोटेरग्रभागस्य कोणोऽश्रिर्यस्मिन्नेवंविधेन चरणरजःस्पर्शेन सहवर्तमानेन पादप्रणामेन तमालिका । तथा तव महाश्वेतया संदिष्टं कथितं वर्तते । तदेव दर्शयति—**धन्या इति** । खलु निश्चयेन । ते धन्या जनाः यत्तदोर्नित्याभिसंबन्धादाह—**येषामिति** । येषां नृणां चक्षुषोर्नेत्रयोरविषयमगोचरं न गतोऽसि । तथा नाम भवतः समक्षं तत्प्रत्यक्षं ते तव गुणा औदार्यादयस्तुहिनं हिमं तद्वच्छीतलाः सुशीताश्चन्द्रमया इव विरहे त्वद्वियोगे विवस्वन्मया इव दाहजनकत्वात्सूर्यमया इव वृत्ताः संपन्नाः । एतेन विरहाधिक्यं सूचितम् । खलु निश्चयेन जनास्तन्नगरनिवासिनो लोकाः कथमपि महता कष्टेन दैवेन भाग्येनोपपादिताय विहितायामृतोत्पत्तिवासरायेव । यद्दिनेऽमृतं समुत्पन्नं समुद्राद्बहिर्निर्गतं तस्मिन्दिने त्रिभुवन आनन्दः समभूत् । अतोऽमृतोत्पत्तिवासरोपमानम् । अतीतदिवसाय पूर्वं यद्दिने त्वया सह संबन्धः समभूत्तद्वासराय स्पृहयन्ति वाञ्छयन्ति । त्वया वियुक्तं विरहितं, निवृत्तो दूरीभूतो यो महोत्सवः क्षणस्तेनालसमिवालस्योपेतमिव गन्धर्वराजनगरं वर्तते समस्ति । **कृत इति** । कृतो विहितः सकलवस्तुनः परित्यागो ययैवंविधां मां महाश्वेतां च त्वं जानासि, तथाप्यकारणेनानिमित्तेन पक्षपातिनं साहाय्यकारिणं भवन्तं त्वां द्रष्टुं वीक्षितुमनिच्छन्त्या अप्यवाञ्छन्त्या अपि मे मम हृदयं बलादिव हठादिवेच्छति स्पृहयति । अपि चेति हेत्वन्तरे । बलवदतिशयेनास्वस्थं पीडायुक्तं शरीरं देहो यस्याः सैवंविधा कादम्बरी स्मेराननं विनिद्रमुखं

---

**टिप्प०**—1 प्रमादोयं टीकाकर्तुः । येषां नेत्रयोर्गोचरं न गतोसि त एव धन्याः, येषां गतोसि ते तु तव वियोगेन तप्यन्त इत्यर्थः ।

---

पाठा०—१ विवरविनिर्गत. २ विषयम्. ३ संवृत्ताः. ४ विनिवृत्त. ५ महोत्सवानन्दम्.

गमनगौरवेणार्हसीमां गुणवदभिमानिनीं कर्तुम्। उदारजनादरो हि बहुमानमारोपयत्यवश्यम्। सोढव्या चेयमस्मद्विधजनपरिचयकदर्थना कुमारेण। भवत्सुजनतैव जनयत्यनुचितसंदेशप्रागल्भ्यम्। एष देवस्य शयनीये विस्मृतः शेषो हारः[1]' इत्युत्तरीयपटान्तसंयतं सूक्ष्मसूत्रविवरनिःसृतैरंशुसंतानैः संसूच्यमानं विमुच्य चामरग्राहिण्याः करे समर्पितवान्।

अथ चन्द्रापीडः 'महाश्वेताचरणाराधनतपःफलमिदं यदेवं परिजनेऽप्यनुसरणादिकं प्रसादभारमतिमहान्तमारोपयति देवी कादम्बरी' इत्युक्त्वा तत्सर्वं शिरसि कृत्वा स्वयमेव जग्राह। तेन च कादम्बर्याः कपोललावण्येनेव गलितेन, स्मितालोकेनेव[2] रसतामुपनीतेन, हृदयेनेव द्रुतेन, गुणगणेनेव विस्यन्दितेन[3], स्पर्शवता ह्लादिना सुरभिणा च विलेपनेन विलिप्य तमेव कण्ठे हारमकरोत्। आगृहीतताम्बूलश्च मुहूर्तादिवोत्थाय वामबाहुना स्कन्धदेशेऽवलम्ब्य[4] केयूरकमूर्ध्वस्थित एव कृतयथाक्रियमाणसंमानमुदितं प्रधानराजलोकं विसृज्य शनैः

---

स्मरकल्पं कंदर्पतुल्यं त्वां स्मरति गोचरीकरोति अतो हेतोः पुनर्द्वितीयवारं यदागमनगौरवं तेन कृत्वेमां कादम्बरीं गुणवत्त्वेऽभिमानो[1] विद्यते यस्या एवंविधां कर्तुमर्हसि योग्यो भवसि। हि निश्चितम्। उदारजनेष्वादरोऽवश्यं बहुमानं सत्कारमारोपयति। इयमस्मद्विधजनपरिचयजनिता या कदर्थना संकोचलक्षणा[2] सा च कुमारेण सोढव्या सहनीया। संदेशानौचित्यदोषं परिहरन्नाह—**भवदिति**। भवतस्तव सुजनतैव सज्जनतैवानुचितोऽयोग्यो यः संदेशस्तत्र प्रागल्भ्यं पाण्डित्यं जनयति निष्पादयति। एष देवस्य शयनीये शय्यायां विस्मृतो विस्मरणं प्राप्तः शेषाभिधानो हार इत्युत्तरीयपटः संव्यानपटस्तस्यान्तेन प्रान्ताञ्चलेन संयतं बद्धं सूक्ष्मं यत्सूत्रं तेषां विवराणि रोकाणि तेभ्यो निःसृतैर्विनिर्गतैरंशुसंतानैः किरणसमूहैः संसूच्यमानमभिव्यज्यमानं चामरग्राहिण्याः करे विमुच्य समर्पितवान्प्रदत्तवान्।

**अथेति**। हारप्रदानानन्तरं चन्द्रापीडस्तत्पूर्वप्रतिपादितं सर्वं शिरसि कृत्वा मस्तक आरोप्य स्वयमेवात्मनैव जग्राह गृहीतवान्। इतिशब्दार्थमाह—**महाश्वेतेति**। इदं महाश्वेतायाश्चरणयोराराधनं सेवनं तल्लक्षणं यत्तपस्तस्य फलं तस्माद्धेतोरेवममुना प्रकारेण परिजनेऽपि सत्यप्यनुसरणादिकमतिमहान्तं प्रसादभारमारोपयति देवी कादम्बरी। इत्युक्त्वेत्यभिधाय तत्पूर्वोक्तं शिरसि कृत्वा मस्तक आरोप्य जग्राह गृहीतवान्। **तेनेति**। तेनानिर्वचनीयस्वरूपेण स्पर्शवता ह्लादिना प्रमोदकारिणा सुरभिणा सुगन्धेन विलेपनेन विलिप्य कण्ठे तमेव हारमकरोदघटयत्। अथ श्वेतत्वसाम्याद्विलेपनमुत्प्रेक्षयन्नाह—**कादम्बर्या इति**। कादम्बर्या गलितेन च्युतेन कपोललावण्येन (इव) च, तथा रसतामुपनीतेन द्रवतां प्रापितेन स्मितालोकेनेवादृष्टरदहास्यप्रकाशेनेव, द्रुतेन विलीनेन हृदयेनेव चित्तेनेव, विस्यन्दितेन प्रस्रवितेन गुणगणेनेव। अन्वयस्तु प्रागेवोक्तः। **आगृहीतेति**। आगृहीतं ताम्बूलं येन स तथा मुहूर्तादिवोत्थाय वामबाहुना केयूरकं स्कन्धदेशेऽवलम्ब्यालम्बनं विधायोर्ध्वस्थित[3] एव कृतं विहितं यथाक्रियमाणं पूर्वपरम्परया विधीयमानं संमानं तेन मुदितं हर्षितमेवंविधं प्रधानं प्रकृष्टं राजलोकं सामन्तादिसेवकवर्गं विसृज्य गृहे गम्यतामित्युक्त्वा शनैः शनैर्मन्दंमन्दं गन्धमादननामानं

---

**टिप्प०**—1 आत्मानं गुणवन्तमभिमन्यते सा, चन्द्रापीडसदृशोपि ममान्तिकमागच्छतीति गुणवत्यहमित्यात्मन्यभिमान इत्याशयः। 2 लेशमपि स्वारस्यस्य न स्पृशति वराकः! अस्मद्विधानां गुणशून्यजनानां परिचयेन या कदर्थना (आत्मनोऽवमानः) सा सौजन्यवशात्कुमारेण सोढव्येत्यर्थः। 3 अनुपविष्ट एव, 'दण्डायमान एव'।

---

**पाठा०**—१ हारः प्रहितः. २ अवलोकेन. ३ निःस्पन्दितेन. ४ समवलम्ब्य.

शनैर्गन्धमादनं करिणं द्रष्टुमयासीत् । तत्र च स्थित्वा क्षणमिव तस्मै स्वयमेव निजनखांशुजालजटिलं समृणालमिव शष्पकवलमवकीर्य वल्लभतुरगमन्दुराभिमुखः प्रतस्थे । गच्छंश्चोभयतः किंचित्किंचिदिव तिर्यग्वलिततवदनः परिजनं विलोकयांबभूव ।

अथ चित्तज्ञैः प्रतीहारैः प्रतिषिद्धानुगमने निखिले समुत्सारिते परिजने केयूरकद्वितीय एव मन्दुरां प्रविवेश। उत्सारणभयसंभ्रान्तलोचनेषु प्रणम्यापसृतेषु मन्दुरापालेषु, इन्द्रायुधपृष्ठावगुण्ठनपटं किंचिदेकपार्श्वे गलितं समीकुर्वन्नुत्सारयंश्च कूणितनेत्रत्रिभागस्य दृष्टिनिरोधिनीं कुङ्कुमकपिलां केसरसटां खुरधारणीविन्यस्तचरणो लीलामन्दं मन्दुरादारुदत्तदेहभरः सकुतूहलमुवाच—'केयूरक, कथय मन्निर्गमादारभ्य को वा वृत्तान्तो गन्धर्वराजकुले, केन वा व्यापारेणावसरमतिनीतवती गन्धर्वराजपुत्री, किं वाकरोन्महाश्वेता, किमभाषत वा मदलेखा, के वाऽभवन्नालापाः, परिजनस्य भवतो वा को व्यापार आसीत्, आसीद्वा काचिदस्मदाश्रयिणी कथा'।

केयूरकस्तु सर्वमाचचक्षे—'देव, श्रूयताम्। निर्गते त्वयि हृदयसहस्रप्रयाणपटहकलकलमिव नूपुरनवक्वणितेन कन्यकान्तःपुरे कुर्वन्ती देवी कादम्बरी सपरिजना सौधशिखरमारुह्य

---

करिणं हस्तिनं द्रष्टुमीक्षितुमयासीदगमत् । तत्र चेति । गन्धमादनसमीपे क्षणमिव समयसदृशं स्थित्वा तस्मै हस्तिने स्वयमेवात्मनैव निजमात्मीयं यन्नखानामंशुजालं किरणपटलं तेन जटिलं व्याप्तम् । पाटलत्वसाम्यादाह—समृणालमिव बिसैः सहवर्तमानमिव शष्पकवलं नवतृणगुडेरकमवकीर्य पुरोऽवक्षिप्य वल्लभः प्रियो यस्तुरगोऽश्वस्तस्य मन्दुरा वाजिशाला तस्या अभिमुखः संमुखः प्रतस्थे चचाल । गच्छंश्च व्रजंश्चोभयतो द्वयोः पार्श्वयोः किंचित्तिर्यक् साचि विवलितं वदनं यस्य सः । परिजनं परिच्छदलोकं विलोकयांबभूवेक्षांचक्रे ।

**अथेति** । तन्निकटगमनानन्तरं चित्तज्ञैः प्रभोरभिप्रायविद्भिः प्रतीहारैर्द्वारपालैः प्रतिषिद्धं निवारितमनुगमनमनुयानं यस्यैवंविधे निखिले समग्रे परिजने सेवकजने समुत्सारिते दूरीकृते सति केयूरक एव द्वितीयो यस्यैवंभूतश्चन्द्रापीडो मन्दुरां वाजिशालां प्रविवेश प्रवेशं चकार । उत्सारणं दूरीकरणं तस्माद्यद्भयं तेन संभ्रान्तानि त्रस्तानि लोचनानि येषां तेषु मन्दुरापालेषु प्रणम्यापसृतेषु दूरीभूतेषु सत्सु, इन्द्रायुधपृष्ठस्यावगुण्ठनपटमाच्छादनवस्त्रं किंचिदेकपार्श्वे गलितं स्रस्तं समीकुर्वन्स्वस्थाने नयन्कूणितनेत्रत्रिभागस्येन्द्रायुधस्य दृष्टिनिरोधिनीं दृष्टिबाधाकारिणीं कुङ्कुमवत्कपिलां पिङ्गलां केसरसटां स्कन्धकेशश्रेणीमुत्सारयंश्चोच्चैःकुर्वन्खुरधारिण्यां खुरबन्धनशङ्कौ विन्यस्तौ स्थापितौ चरणौ येन सः लीलामन्दं यथा स्यात्तथा मन्दुरादारौ दत्तो देहभरो येन सः । सकुतूहलं सकौतुकं यथा स्यात्तथोवाचाब्रवीत् । हे केयूरक, कथय ब्रूहि मन्निर्गमान्मदीयचलनादारभ्य गन्धर्वराजकुले को वा वृत्तान्त उदन्तः । केन व्यापारेणावसरं समयं गन्धर्वराजपुत्री कादम्बर्यतिनीतवत्यतिक्रान्तवती । किं वा महाश्वेताकरोदन्वतिष्ठत् । वेति विकल्पार्थः सर्वत्र । मदलेखा किमभाषत किमवोचत् । के वालापा वचनव्यापारा अभवन् । परिजनस्य परिच्छदस्य भवतो वा को व्यापारो व्याकृ(पृ)तिरासीदभवत् । काचिदस्मदाश्रयिणी कथा वार्तासीत् ।

केयूरकस्तु सर्वं प्राणविषयीकृतमाचचक्षे कथयामास । **देवेति** । हे देव, श्रूयतामाकर्ण्यताम् । त्वयि निर्गते चलिते सति नूपुराणां पादकटकानां नवक्वणितेनाभिनवशब्दितेन हृदयानां सहस्राणि तेषां प्रयाणं प्रस्थानं तत्र यः पटहस्य कलकलः कोलाहलस्तमिव कन्यकान्तःपुरे कुर्वन्ती सृजन्ती देवी कादम्बरी सपरिजना सपरि-

**टिप्प०**—1 हन्त पुनः सर्वं ग्रन्थहृदयं चूर्णयति चन्दिलः! 'कुर्वति' इति सप्तम्यन्त एव पाठः। कन्यकान्तःपुरे नूपुरनवक्वणितेन हृदयसहस्राणां यत्प्रयाणम् (गृहं प्रत्यागच्छता त्वया सह प्रस्थानम्) तस्य पटहकलकलमिव कुर्वति सति। नूपुरशब्दा नासन्, मन्ये त्वया सह प्रस्थितानां कन्यकाहृदयसहस्राणां प्रयाणे पटहध्वनय एवाभूवन्नित्याशयः। इदानीं टीकाकारमहाशयस्यार्थेन तुलयन्तु मार्मिकाः।

---

पाठा०—१ तुरङ्गम. २ इन्द्रायुधस्य. ३ पार्श्वे. ४ खुरवारणी; खुरधोरणी. ५ वासरम्. ६ चक्रक्वणितेन. ७ कुर्वती.

तुरगधूलिरेखाधूसरं देवस्यैव गमनमार्गमालोकितवती । तिरोहितदर्शने च देवे मदलेखास्कन्धनिक्षिप्तमुखी प्रीत्या तं दिगन्तं दुग्धोदधिधवलैः प्लावयन्तीव दृष्टिपातैः सितातपत्रापदेशेन शशिनेर्ष्यया निवार्यमाणरविकिरणस्पर्शा[1] सुचिरं तत्रैव स्थितवती । तस्माच्च कथमपि सखेदमवतीर्य क्षणमिवावस्थानमण्डपे[2] स्थित्वोत्थाय स्खलनभियेव निवेद्यमानोपहारकुसुमशब्दायमानैर्मधुकरैः, जलधाराधवलनखमयूखोन्मुखानामनुगलं[3] गलद्भिर्वलयैः कण्ठबन्धानिवोपपादयन्ती केकारवोद्विग्ना भवनशिखण्डिनाम्, पदे पदे च कुसुमधवलान्करेण लतापल्लवान्[4] मनसा च देवस्य गुणगणानवलम्बमाना तमेव क्रीडापर्वतकमागतवती यत्र स्थितवान्देवः । तमुपेत्य च 'देवेनात्र मरकतशिलामकरिकाप्रणालप्रस्रवणसिच्यमानलतामण्डपे[5] सीकरिणि शिलातले स्थितम्, अत्र गन्धोदकपरिमललीनालिजालजटिलशिलाप्रदेशे स्नातम्, अत्र

---

च्छदा सौधशिखरं गृहाधित्यकामारुह्यारोहणं कृत्वा तुरगस्याश्वस्य धूलिरेखा रजःपङ्क्तिस्तया धूसरं मलिनं देवस्यैव भवत एव गमनमार्गमालोकितवती । तिरोहितमदृश्यीभूतं दर्शनं वीक्षणं यस्यैवंभूते च देवे मदलेखायाः स्कन्धोंऽसस्तत्र निक्षिप्तं स्थापितं मुखमाननं यया सैवंविधा प्रीत्या स्नेहेन दुग्धोदधिः क्षीरोदधिस्तद्वद्धवलैः शुभ्रैर्दृष्टिपातैस्तं दिगन्तं प्लावयन्तीव क्षालयन्तीव सितं शुभ्रं यच्चातपत्रं छत्रं तस्यापदेशेन व्याजेन । शुक्लत्ववर्तुलत्वसाम्यादाह—**शशीति** । शशी चन्द्रस्तेनेर्ष्यया स्पर्धया निवार्यमाणो दूरीक्रियमाणो रविकिरणानां सूर्यकिरणानां स्पर्शो यस्याः सैवंभूता सती सुचिरं चिरकालं तत्रैव सौधशिखरे स्थितवत्यवस्थानं कृतवती । तस्माच्च सौधशिखरात्सखेदं यथा स्यात्तथावतीर्यावतरणं कृत्वा क्षणमिवावस्थानमण्डपे स्थित्वोत्थाय स्खलनभियेव पतनभयेनेवोपहारस्य कुसुमानि तेष्वासमन्ताच्छब्दायमानैः शब्दं कुर्वाणैर्मधुकरैर्भ्रमरैर्निवेद्यमानेव विज्ञप्तिविषयीक्रियमाणेव । जलधारावद्धवलानां शुभ्राणां नखमयूखानां पुनर्भवकान्तीनामुन्मुखानां संमुखानामनुगलं निगरणमनुलक्षीकृत्य गलद्भिः पतद्भिर्वलयैः कटकैः करणभूतैर्भवनशिखण्डिनां गृहमयूराणां केकारवेणोद्विग्नोद्वेगं प्राप्ता सती कण्ठबन्धानुपपादयन्तीव रचयन्तीव । करेण हस्तेन पदे पदे च कुसुमधवलान्पुष्पवच्छुभ्राँल्लतापल्लवान्वल्लीकिसलयानि मनसा च देवस्य भवतो गुणगणान्गुणसमूहानवलम्बमानावलम्बनं कुर्वाणा तमेव पूर्वोक्तमेव क्रीडापर्वतकमागतवती । **यत्रेति** । यस्मिन्स्थले देवो भवान्पूर्वं स्थितवान् । तं क्रीडाचलमुपेत्यागत्य च, अत्र सीकरा विद्यन्ते यस्मिन्नेवंविधे शिलातले देवेन स्थितमासितम् । कीदृशे । मरकतस्य शिला तस्या मकरिकाप्रणाली मकरमुखो जलमार्गस्तस्य प्रस्रवणेन सिच्यमानो लतामण्डपो यस्य (यस्मिन्) तत्तस्मिन् । **अत्रेति** । अस्मिन्गन्धोदकस्य सुगन्धजलस्य यः परिमलस्तेन लीना लग्ना येऽलयो भ्रमरास्तैर्जटिलो व्याप्तः शिलाप्रदेशस्तस्मिन्स्नातं कृताप्लवम् । **अत्रेति** । अस्मिन्कुसुमानां धूल्या परागेण सिकतिले सिकतायुक्ते गिरिनदिकातटे

---

**टिप्प०**—1 सूर्येण सह चन्द्रस्य स्पर्धा 'त्वं कादम्बरीं यदि तापयेस्तर्ह्यहं त्वत्तापं निवार्य शीतलयेयम्' इति । अत एव सितातपत्रस्य तु व्याजमात्रं, शुक्लत्व-प्रकाशशालित्वादिगुणैश्चन्द्र एव सः । अत एव तेन निवार्यमाणातपेत्यर्थः । छत्रस्यापह्नवात्कैतवापह्नुतिरलंकारः । 2 अशुद्धमिदम् । 'निवेद्यमानोपहारकुसुमा' इत्येव पाठः । विरहविचित्ता सेयमुपहारकुसुमेषु स्खलिष्यतीति भयात् उपहारकुसुमोपरि शब्दायमानैर्मधुकरैः निवेद्यमानानि (स्वशब्दैः सूच्यमानानि 'पुष्पाण्यत्र, न स्खलितव्यम्' इति) उपहारकुसुमानि यस्यै सा; इति तदर्थः । 3 भवद्भिरहिता सा गृहशिखिनां दुःखिता भवतीति कण्ठेषु वलययोजनेन तान्मूकीकर्तुमिच्छति परं वलयप्रदानसमये तस्या नखमयूखेषु जलधाराभ्रमेण तद्ग्रहणाय ते उन्मुखा भवन्ति । अत एव समर्पणसमय एव ते वलयास्तेषां कण्ठादधः पतन्ति इत्याशयः । नखमयूखेष्वित्यत्र भ्रान्तिमान् व्यङ्ग्यः । कण्ठबन्धानुपपादयन्तीवेत्युत्प्रेक्षा तु स्फुटैव । 4 धारयन्तीत्यर्थः ।

---

पाठा०—१ करस्पर्शा. २ आस्थान. ३ अनुपलम्. ४ गृहलता. ५ हरितलता.

कुसुमधूलिसिकतिले[1] गिरिनदिकातटे[2] भगवानर्चितः शूलपाणिः, अत्र ह्रेपितशशधररोचिषि स्फटिकशिलातले भुक्तम्, अत्र संक्रान्तचन्दनरसलाञ्छने मुक्ताशैलशिलापट्टे[3] सुप्तम्' इति परिजनेन पुनरुक्तं निवेद्यमानानि देवस्यैव स्थानचिह्नानि पश्यन्ती क्षपितवती दिवसम्। दिवसावसाने च कथमपि महाश्वेताप्रयत्नादनभिमतमपि तस्मिन्नेव स्फटिकमणिशिलावेश्मन्याहारमकरोत्। अस्तमुपगते च भगवति, रवावुदिते चन्द्रमसि, तत्रैव कंचित्कालं स्थित्वा चन्द्रकान्तमयीव चन्द्रोदये प्रत्यार्द्रीकृततनुश्चन्द्रबिम्बप्रवेशभयेनेव करौ कपोलयोः कृत्वा किमपि चिन्तयन्ती मुकुलितेक्षणा क्षणमात्रं स्थित्वोत्थाय विमलनखनिपतितशशिप्रतिमाभरगुरूणीव कृच्छ्रादुत्क्षिपन्ती लीलामन्थरगमनपटूनि पदानि शय्यागृहमगात्। शयननिक्षिप्त[4]गात्रयष्टिश्च ततःप्रभृति प्रबलया शिरोवेदनया विचेष्टमाना दारुणेन च दाहरूपिणा ज्वरेणाभिभूयमाना केनाप्याधिना[5] मङ्गलप्रदीपैः कुमुदाकरैश्चक्रवाकैश्च सार्धमनिमीलितलोचना दुःखदुःखेन क्षणदामनैषीत्। उषसि च मामाहूय देवस्य वार्ताव्यतिकरोपालम्भाय सोपालम्भमादिष्टवती'।

---

भगवाञ्शूलपाणिरर्चितः पूजितः। **अत्रेति**। अस्मिन्ह्रेपिता लज्जिता शशधरस्य रोचिर्येन तस्मिन्स्फटिकशिलातले भुक्तम्। **अत्रेति**। अस्मिन्संक्रान्तः प्रतिबिम्बितो यश्चन्दनरसः स एव लाञ्छनं चिह्नं यस्मिन्नेवंविधे मुक्ताशैलशिलापट्टे सुप्तमिति परिजनेन पार्श्ववर्तिसेवकलोकेन देवस्य भवत एव स्थानचिह्नानि। पुनरुक्तं पृथक्पृथङ्निवेदनादिति भावः। निवेद्यमानानि कथ्यमानानि पश्यन्ती विलोकयन्ती दिवसं वासरं क्षपितवती क्षयं नीतवती। दिवसावसाने च दिनप्रान्ते च कथमपि महता कष्टेन महाश्वेताप्रयत्नादनभिमतमप्यसमीहितमपि तस्मिन्नेव स्फटिकमणिशिलावेश्मन्याहारं भोजनमकरोदकल्पयत्। **अस्तमिति**। अस्तमुपगते प्राप्ते च भगवति माहात्म्यवति रवौ सूर्ये, चन्द्रमसि कुमुदबान्धव उदित उदयं प्राप्ते सति, तत्रैव तस्मिन्प्रदेशे कंचित्कालं स्थित्वावस्थानं कृत्वा चन्द्रकान्तश्चन्द्रमणिस्तन्मयीव अतएव चन्द्रोदये प्रत्यार्द्रीकृता तनुर्यस्याः सा तथा चन्द्रबिम्बस्य यः प्रवेशस्तस्य भयं तेनेव कपोलयोः करौ कृत्वा किमपि चिन्तयन्ती ध्यायन्ती मुकुलितेक्षणा कुड्मलितलोचना क्षणमात्रं स्थित्वा तत उत्थाय। **विमलेति**। विमला निर्मला ये नखास्तेषु निपतिता याः शशिप्रतिमाश्चन्द्रप्रतिबिम्बानि तासां भरस्तेन गुरूणीव लीलामन्थरं यद्गमनं तत्र पटूनि पदानि चरणन्यासानि कृच्छ्रात्कष्टादुत्क्षिपन्त्युत्क्षेपं कुर्वन्ती शय्यागृहं शयनसद्मागादगमत्। शयने तल्पे निक्षिप्ता स्थापिता गात्रयष्टिर्यया सैवंविधा च। ततःप्रभृति[1] तद्दिनादारभ्य प्रबलया तीव्रया शिरोवेदनया विचेष्टमाना व्याकुलीक्रियमाणा दाहरूपिणा दारुणेन तीव्रेण च ज्वरेण तापेनाभिभूयमाना पराभूयमाना केनाप्याधिना मानसीव्यथया मङ्गलप्रदीपैः कुमुदाकरैश्चक्रवाकैश्च सार्धमनिमीलितेऽमुद्रिते लोचने यस्याः सा तथा। अथ कुमुदानां रात्रौ विकासाच्चक्रवाकानां च वियोगवशादनिमीलनमिति भावः। दुःखदुःखेन। अतिदुःखेनेति भावः। क्षणदां रात्रिमनैषीदयापयद्गमयामास। उषसि च प्रभाते मामाहूयाह्वानं कृत्वा देवस्य वार्ताव्यतिकरेण भवद्वृत्तान्तसमूहेन हेतुभूतेन उपालम्भाय[2] सोपालम्भं यथा स्यात्तथादिष्टवती कथितवती।

---

**टिप्प०—1** तत्कालादारभ्य। दिनादिति तु अविचार एव लेखकस्य। 2 टीकाकारात्का प्रत्याशा स्वारस्यस्य? 'व्यतिकरोपलम्भाय' इत्येव पाठः, वृत्तान्तव्यापारप्राप्तये सोपालम्भं सप्रतिक्षेपम् ('उचितज्ञोऽपि संभावित-महोदारस्यातिथेः राजकुमारस्य कुशलप्रवृत्तिमानेतुं न गच्छसि' इति) आदिष्टवतीति तदर्थः।

---

पाठा०—१ सिकताकर्दमिलगिरि. २ नदीकाननतटे. ३ शिलापट्टशयनीये. ४ क्षिप्त. ५ व्याधिना.

चन्द्रापीडस्तदाकर्ण्य जिगमिषुः 'अश्वोऽश्वः' इति वदन्भवनान्निर्ययौ । आरोपितपर्याणं च त्वरिततुरगपरिचारकोपनीतमिन्द्रायुधमारुह्य, पश्चादारोप्य पत्रलेखाम्, स्कन्धावारे संस्थापयित्वा वैशम्पायनम्, अशेषपरिजनं निवर्त्य च, अन्यतुरगारूढेनैव केयूरकेणानुगम्यमानो हेमकूटं ययौ । आसाद्य च कादम्बरीभवनद्वारमवततार । अवतीर्य द्वारपालार्पिततुरङ्गः कादम्बरीप्रथमदर्शनकुतूहलिन्या च पत्रलेखया चानुगम्यमानः प्रविश्य 'क्व देवी कादम्बरी तिष्ठति' इति संमुखागतमन्यतमं वर्षधरमप्राक्षीत् । कृतप्रणामेन च तेन 'देव, मत्तमयूरस्य क्रीडापर्वतकस्याधस्तात्कमलवनदीर्घिकातीरे विरचितं हिमगृहमध्यास्ते' इत्यावेदिते केयूरकेणोपदिश्यमानवर्त्मा प्रमदवनमध्येन गत्वा किंचिदध्वानम्, मरकतहरितानां कदलीवनानां प्रभया शष्पीकृतरविकिरणं हरितायमानं दिवसं ददर्श । तेषां च मध्ये निरन्तरनलिनीदलच्छन्नं हिमगृहमपश्यत् । तस्माच्च निष्पतन्तमार्द्रांशुकच्छलेनाच्छोदजलेनेव संवीतम्, बाहुलताविधृतैर्मृणालवलयैराभरणकैरिव धवलितावयवम्, आपाण्डुभिश्चैकश्रवणाश्रयैस्ताडङ्कीकृतैः केतकीगर्भदलैरुपहसितदन्तपत्रम्, आलिखितचन्दनललाटिकानि मुखारवि-

---

चन्द्रापीडस्तदाकर्ण्य श्रुत्वा जिगमिषुर्गन्तुमिच्छुरश्वोऽश्व इति वदन्ब्रुवन्भवनाद्गृहान्निर्ययौ निर्जगाम । आरोपितं स्थापितं पर्याणं पल्ययनं यस्मिन्नेतादृशं त्वरितं शीघ्रं तुरगपरिचारकेणोपनीतमानीतमिन्द्रायुधमारुह्यारोहणं कृत्वा पत्रलेखां पश्चात्पृष्ठभाग आरोप्य स्थापयित्वा स्कन्धावारे सैन्यवेशे वैशम्पायनं संस्थापयित्वाशेषपरिजनं समग्रपरिच्छदं निवर्त्य पश्चाद्व्याघुट्यान्यतुरगारूढेनैव केयूरकेणानुगम्यमानो हेमकूटं ययौ । कादम्बरीभवनद्वारमासाद्य प्राप्यावततारोत्तीर्णवांश्च । अश्वादिति शेषः । अवतीर्य च द्वारपालस्यार्पितस्तुरङ्गो येन स तथा कादम्बर्यां यत्प्रथमदर्शनं तत्र कुतूहलं विद्यते यस्या एवंविधया पत्रलेखयानुगम्यमानः प्रविश्य क्व देवी कादम्बरी तिष्ठतीति संमुखागतमन्यतमं वर्षधरं कञ्चुकिनमप्राक्षीत्पप्रच्छ । तेन कृतप्रणामेन चेत्यावेदिते कथिते सति । इतिशब्दद्योत्यमाह—**देवेति** । हे देव, मत्तमयूरकाभिधानस्य क्रीडापर्वतकस्याधस्तादधोभागवर्तिनि कमलवनदीर्घिकातीरे विरचितं हिमगृहमध्यास्तेऽधितिष्ठति । 'उपान्वध्याङ्वसः' इत्यधिकरणे द्वितीया । केयूरकेणोपदिश्यमानः प्रदर्श्यमानो वर्त्म मार्गो यस्य स तथा, प्रमदवनमध्येन किंचिदध्वानं मार्गं गत्वा मरकतवद्धरितानां नीलानां कदलीवनानां रम्भाकाननानां प्रभया कान्त्या शष्पीकृतानि बालतृणीकृतानि रविकिरणानि सूर्यरश्मयो यस्मिन्नत एव हरितायमानं नीलायमानं दिवसं दिनं ददर्शेक्षांचक्रे । तेषां च कदलीवनानां मध्ये निरन्तरं नलिनीदलैः कमलिनीपत्रैश्छन्नमाच्छादितं हिमगृहमपश्यदैक्षत । तस्माच्च गृहान्निष्पतन्तं बहिर्गच्छन्तं कादम्बर्याः शरीरपरिचारकं परिजनमद्राक्षीद्दृष्टवान् । अथ तस्याः परिचारकं विशेषयन्नाह—**आर्द्रेति** । आर्द्रं स्तिमितं यदंशुकं वस्त्रं तस्य च्छलेन श्वेताह्लादकत्वसाम्यादाह—**अच्छोदेति** । अच्छोदजलेनेव संवीतं रुद्धम् । 'संवीतं रुद्धमावृतम्' इति कोशः । बाहुलताविधृतैर्भुजलतास्थापितैर्मृणालवलयैस्तन्तुलकटकैराभरणकैरिव विभूषणैरिव धवलीकृताः शुभ्रीकृता अवयवा अपघना यस्य स तम् । आपाण्डुभिरीषच्छ्वेतैरेकश्रवण एवैककर्ण एवाश्रयोऽधिकरणं येषां तैस्ताडङ्कीकृतैस्ताडपत्रीकृतैरेवंविधैः केतकीगर्भदलैरुपहसितानि दन्तपत्राणि येन स तम् । पुनः किं कुर्वाणम् । दधानं बिभ्राणम् । कानि । मुखान्येवारविन्दानि कमलानि । कीदृशानि । आलिखिता

---

**टिप्प०—1 संस्थाप्येति स्थाने मूलेपि च्युतसंस्कृति पदं टीकाकारहस्तलाघवमेव । 2 रविकिरणा इत्यर्थः । 3 आवृतदेहमित्यर्थ उचितः ।**

---

**पाठा०**—१ अथ चन्द्रापीडः. २ वदन्पूर्ववृत्तचमत्कृतचेताः. ३ त्वरितपरिचारक. ४ नृत्यमयूरस्य. ५ दलानाम्. ६ ताटङ्कीकृतैः; तालङ्कीकृतैः.

न्दानि बद्धसौभाग्यपट्टानीव दधानम्, कृतचन्दनबिन्दुविशेषकांश्च दिवापि स्पर्शलोभस्थिते-न्दुप्रतिबिम्बानिव कपोलानुद्वहन्तम्, अपहृताशेषशिरीषसौभाग्याभिः शैवलमञ्जरीभिः कृत-कर्णपूरम्, कर्पूरधूलिधूसरेषु मलयजरसलवलुलितेषु बकुलावलीवलयेषु स्तनेषु न्यस्तनलिनी-पत्रप्रावरणम्, अनवरतचन्दनचर्चाप्रणयनपाण्डुरैः संतापरोषमृदितारक्तचन्द्रकरैरिव करैः कल्पितमृणालदण्डानि बिसतन्तुमयानि चामराणि बिभ्राणम्, उन्नालैश्च कमलैः कुमुदैः कुव-लयैः किसलयैः कदलीदलैः कमलिनीपलाशैः कुसुमस्तबकैश्चातपत्रीकृतैर्निवारितातपम्, जल-देवतानामिव समूहम्, वरुणश्रियामिव समागमम्, शरदामिव समाजम्, सरसीनामिव गोष्ठीबन्धम्, शिशिरोपचारनिपुणं कादम्बर्याः शरीरपरिचारकं शरीरप्रायं परिजनमद्राक्षीत्।

तेन च प्रणम्यमानः पादनखपतनभयादिव त्वरितापसृतेन दीयमानमार्गश्चन्दनपङ्कक्-

---

चन्दनस्य मलयजस्य ललाटिका पुण्ड्रविशेषो येषु तानि । विविधवर्णसाम्याद्बद्धसौभाग्यपट्टानीव । **कृतेति** । कृता विहिता चन्दनबिन्दुभिर्विशेषका येषु तान् । 'चित्रं पुण्ड्रविशेषकाः' इति कोशः । दिवापि दिवसेऽपि स्पर्शलोभेन स्थित इन्दुप्रतिबिम्बो येष्वेवंविधानिव कपोलानुद्वहन्तम् । **अपेति** । अपहृतं दूरीकृतमशेषं समग्रं शिरीषस्य वृक्षविशेषस्य सौभाग्यं याभिरेवंभूताभिः शैवलमञ्जरीभिर्जलशूकवल्लरीभिः कृतः कर्णपूरो येन स तम् । स्तनेषु कुचेषु न्यस्तं स्थापितं नलिनीपत्राणां प्रावरणमुत्तरीयकं येन स तम् । अथ च स्तनं विशेषयन्नाह—**कर्पूरेति** । कर्पूरस्य घनसारस्य धूली रजस्तया धूसरेष्वीषत्पाण्डुषु, मलयजरसलवैश्चन्दनद्रवलेशैर्लुलितेष्वेकीभूतेषु । बकुलावलीनां केसरराजीनां वलयानि येषु ते तथा तेषु । पुनः कीदृशम् । करैः करणभूतैश्चामराणि बिभ्राणम् । कीदृशैः करैः । प्रियविरहेण संतापरोषाभ्यां मृदिता मर्दिता आरक्ता नवोदिताश्चन्द्रकरास्तैरिवानवरतं निरन्तरं चन्दनचर्चा तस्याः प्रणयनं प्रापणं तेन पाण्डुरैः । कीदृशानि चामराणि । **कल्पित इति** । कल्पितो विहितो मृणालानां दण्डो येषु तानि । पुनः किंविशिष्टानि । बिसानां तन्तवस्तन्मयानि तन्निर्मितानि । उन्नालैः कमलैः, कुमुदैः कैरवैः, कुवलयैरुत्पलैः, किसलयैः पल्लवैः, कदलीदलै रम्भापत्रैः, कमलिनीपलाशैः पद्मिनीपत्रैः । 'पत्रं पलाशं छदनम्' इति कोशः । कुसुमस्तबकैः पुष्पगुच्छैः । 'गुच्छस्तबकगुच्छकाः' इति कोशः । एतैश्चातपत्रीकृतैश्छत्रीकृतैर्निवारितो दूरीकृत आतपः सूर्यालोको यस्य स तम् । जलदेवतानां जलाधिष्ठात्रीणां समूहमिव । सर्वदा जलक्लिन्नदेहत्वादिति भावः । वरुणः प्रचेतास्तस्य श्रियां समागममेकीभवनमिव । वरुणस्यापि जलाधीशत्वेन तस्य श्रियामप्यतिशीतलत्वात्तदुपमानम् । शरदां घनात्ययानां समाजमिव परिषदमिव । तासामपि शीतलत्वात्तदुपमानम् । सरसीनां सरतां गोष्ठीबन्धमिव । एकत्रीभूयोपवेशनं गोष्ठीबन्धः । कीदृशम् । शिशिरोपचाराः शीतलोपचारास्तत्र निपुणं दक्षं शरीरप्रायमित्यन्तरं गत्वा चोक्तं कादम्बरीपरिजनमद्राक्षीदित्यन्वयस्तु प्रागेवोक्तः ।

इदानीं समयोद्यानाद्युद्दीपनविभावान्वर्णयन्नाह—**तेन चेति** । तेन परिजनेन प्रणम्यमानो नमस्क्रियमाणः । कदलीतोरणानां तलेन प्रविश्य सर्वतो निसृष्टदृष्टिरिदं वक्ष्यमाणं सर्वं दृष्टवानित्यन्वयः । कीदृशः । प्रणामेन पादनखस्यैव कोमलत्वात्पतनं भविष्यतीति शङ्कया त्वरितमपसृतः परिजनस्तेन दीयमानो मार्गो यस्य सः । इतः कदलीतोरणं विशेषयन्नाह—**चन्दनेति** । चन्दनपङ्केन मलयजकर्दमेन कृता वेदिका येषाम् ।

---

**टिप्प०**—1 कृताश्चन्दनबिन्दव एव विशेषकास्तिलका येषु तान् । अत एव दिवापि स्पर्शलोभेन स्थिता इन्दोश्चन्द्रस्य प्रतिबिम्बा येषु तान् ( कपोलान् ) । रात्रौ तु चन्द्रोदयाद्बिन्दुप्रतिबिम्बाः संभवन्त्येव, परं चन्दनबिन्दवस्तथा प्रतीयन्ते यथा स्पर्शलोभवशाद्दिनेऽपि चन्द्रस्य प्रतिबिम्बाः स्थिता इत्यर्थः । मण्डलाकाराणां चन्दनबिन्दूनां चन्द्रबिम्बेन साम्यादियमुत्प्रेक्षा । 2 चन्दनपङ्केन लिप्तीकृता वेदिकाः परिष्कृतभूमयः ( बद्धतलभूमयः ) येषां तेषाम् ( तोरणानाम् ) ।

---

**पाठा०**—१ पदानि. २ कपोलफलकाम्. ३ ललितेषु. ४ बकुलावलयिषु; कुवलयावलिषु; ललितकुवलयेषु. ५ पयोधरेषु. ६ प्रणय. ७ प्रकटितचन्द्रकरैः; मृदितचन्द्रकरैः. ८ शरीरपरिचारिकाप्रायम्. ९ पादतलः पादनखतपनदाह.

तवेदिकानां पुण्डरीककलिकाघटितघण्टिकानां विकसितसिन्दुवारकुसुममञ्जरीचामराणां लम्बितस्थूलमल्लिकामुकुलहाराणामाबद्धलवङ्गपल्लवचन्दनमालिकानां दोलायमानकुमुददामध्वजानां मृणालवेत्रहस्ताभिर्गृहीतरुचिरकुसुमाभरणाभिर्मधुलक्ष्मी[1]प्रतिकृतिभिरिव द्वारपालिकाभिरधिष्ठितानां कदलीतोरणानां तलेन प्रविश्य सर्वतो निसृष्टदृष्टिर्दृष्टवान्क्वचिदुभयतटनिखाततमालपल्लवकृतवनलेखाः कुमुदधूलिवालुकापुलिनमालिनीश्चन्दनरसेन प्रवर्त्यमाना गृहनदिकाः, क्वचिन्निचुलमञ्जरीरचितरक्तचामराणां जलार्द्र[2]वितानकानां तलेषु सिन्दूर[3]कुट्टिमेष्वास्तीर्यमाणानि रक्तपङ्कजशयनानि, क्वचिदेलारसेन सिच्यमानानि [4]स्पर्शानुमेयरम्यभित्तीनि [5]स्फटिकभवनानि, क्वचिच्छिरीषपक्ष्मकृतशाद्वलानां मृणालधारागृहाणां शिखरमारोप्यमाणानां धाराकदम्बधूलिर्धूसरि[6]तानि यन्त्रमयूरकाणां कदम्बकानि, क्वचित्सहकार[7]रससिक्तैर्जम्बूपल्लवैराच्छाद्यमानाभ्यन्तराः पर्णशालाः, क्वचित्क्रीडितकृत्रिमकरिकलभयूथकाकुलीक्रियमाणाः काञ्चनक-

---

कलिकानां वाद्यघण्टिकानुकारादाह—**पुण्डरीकेति** । पुण्डरीकाणि सिताम्भोजानि तेषां कलिकाभिर्घटिता निर्मिता घण्टिकाः किङ्किण्यो येषाम् । विकसितानि विमुद्राणि सितानि सिन्दुवारस्य निर्गुण्ड्याः कुसुमानि तेषां मञ्जरीणां चामराण्यातपत्राणि येषाम् । लम्बिताः स्थूलमल्लिकामुकुलानां हारिणो हारा येषाम् । आबद्धा लवङ्गं देवकुसुमं तस्य पल्लवा ये[1]ष्वेवंविधा चन्दनमालिका तोरणार्थे मङ्गल्यं दाम येषाम् । 'तोरणार्थे तु मङ्गल्यं दाम चन्दनमालिका' इति कोशः । **दोलेति** । दोलायमानाः कम्पमानाः कुसुमदाम[2]ध्वजा येषाम् । **मृणालेति** । मृणालानां तन्तुलानां वेत्रं हस्ते यासां ताभिर्गृहीतानि स्वीकृतानि रुचिराणि मनोहराणि कुसुमाभरणानि पुष्पविभूषणानि याभिः । **मध्विति** । मधुलक्ष्म्या वसन्तश्रियः प्रतिकृतिभिः प्रतिरूपाभिरेवंविधाभिर्द्वारपालिकाभिरधिष्ठितानामाश्रितानाम् । सर्वं दृष्टवानिति पूर्वोक्तं स्पष्टीकुर्वन्नाह—**क्वचिदिति** । कस्मिंश्चित्प्रदेश उभयतटे निखाता आरोपिता ये तमालपल्लवास्तापिच्छकिसलयास्तैः कृता वनलेखा काननवीथी यासां ताः । कुमुदानां धूलिः परागः सैव वालुका सिकता तस्याः पुलिनं जलोज्झितं सैकतं मा[3]लत इत्येवंशीलाश्चन्दनरसेन मलयजद्रवेण प्रवर्त्यमाना विस्तार्यमाणा गृहनदिका भवनसरितः । **क्वचिदिति** । निचुलमञ्जरी हिज्जलवल्लरी तया रचितानि रक्तचामराणि येषामेतादृशानां जलार्द्रविता[4]नकानामम्भःक्लिन्नोल्लोचानां तलेषु सिन्दूरं नागजं तेन सहवर्तमानेषु कुट्टिमेष्वास्तीर्यमाणानि विस्तीर्यमाणानि रक्तपङ्कजशयनानि लोहितकमलशयनानि । **क्वचिदिति** । एला चन्द्रवाला तस्या रसेन सिच्यमानानि सेचनक्रियाविषयीक्रियमाणानि स्पर्शेन करसंस्पर्शेनानुमेया[5] अनुमातुं योग्या रम्या मनोहरा भित्तयः कुड्यानि येषामेवंविधानि स्फाटिकभवनानि । **क्वचिदिति** । कस्मिंश्चित्प्रदेशे शिरीषः कपीतनस्तस्य पक्ष्मभिः कोमलकेसरैः कृतशाद्वलानां विहितशादहरितानां मृणालधारागृहाणां बिसयन्त्रसद्मनां शिखरं प्रान्तमारोप्यमाणानामुपरिष्टान्नीयमानानां धाराकादम्बानां धूलिभी रजोभिर्धूसरितानि यन्त्रगृहवर्ति[6]मयूरकाणां कदम्बकानि मण्डलानि । **क्वचिदिति** । सह-

---

**टिप्प०**—1 यासु इति स्त्रीत्वं वाच्यम् । यासु(चन्दनमालिकासु)लवङ्गपल्लवा आबद्धा ईदृश्यश्चन्दनमालिकाः ( तोरणलम्बितानि पुष्पदामानि ) येषु तेषाम् । 2 कुसुमदामान्येव ध्वजा येषाम् । 3 धिङ्मन्दम् । कुमुदानां धूलिरेव वालुका तस्याः ( अर्थात्तन्निर्मिता ) पुलिनमाला सैकतश्रेणिर्यासां ता इति सरलोऽर्थः । 4 जलार्द्राणां चन्द्रातपानाम् 'चँदोवा' । 5 स्फटिकानां पारदर्शकत्वात्तद्भित्तयो न द्रष्टुं शक्याः किन्तु स्पर्शानुमेयाः । 6 यन्त्रात्मकमयूराणाम् ( यन्त्रनिर्मितमयूराणाम् ) । मृणालयुक्तजलधारागृहाणां शिखरे ( पृष्ठे ) परिचारिकाभिर्यन्त्रमयूरा नीता ये हि जलधारासमूहानां क्षोदैर्धूसरिता इत्यर्थः ।

---

**पाठा०**—१ प्रकृतिभि. २ जलार्द्रीकृत. ३ ससिन्दूर. ४ स्पर्शानुमेयभित्तीनि; स्पर्शानुमेयरम्यस्थितिप्रदेशानि. ५ अभ्र; अभ्रक. ६ धूसराणाम्; धूसरितानाम्. ७ तरुसक्तैः.

मलिनिकाः, क्वचिद्गन्धोदककूपेषु बद्धकाञ्चनसुधापङ्ककामपीठेषु स्थूलबिसलतादण्डघटितारकाणि[1] कृतकेतकदलद्रोणिकानि[2][3] कुवलयावलीरज्जुभिर्ग्रथ्यमानानि पत्रपुटघटीयन्त्रकाणि[4], क्वचित्स्फटिकबलाकावलीवान्तवारिधारा[5] लिखितेन्द्रायुधाः संचार्यमाणा मायामेघमालाः, क्वचिदुपान्तरूढयवाङ्कुरासु[6][7] तरत्तरुणमालतीकुड्मलदन्तुरिततरङ्गासु[8] हरिचन्दनद्रववापिकासु शिशिरीक्रियमाणा हारयष्टीः, क्वचिन्मुक्ताफलक्षोदरचितालवालकाननवरतस्थूलजलबिन्दुदुर्दिनमुत्सृजतो[9] यन्त्रवृक्षकान्[10], क्वचिद्विधुतपक्षनिक्षिप्तसीकरानीतनीहारा भ्रमन्तीर्यन्त्रमयीः पत्रशकुनिश्रेणीः, क्वचिन्मधुकरकिङ्किणीपङ्क्तिपटुतराबध्यमानाः[11] कुसुमदामदोलाः, क्वचिदुदरारूढनिर्गतोत्तालनलिनीच्छदाच्छादितमुखान्प्रवेश्यमानाञ्शातकुम्भान्[12][13], क्वचिद्घटितकदलीगर्भस्तम्भ-

---

कारा आम्रास्तेषां रसैः सिक्तैः सिञ्चितैर्जम्बूपल्लवैराच्छाद्यमाना अभ्यन्तराः पर्णशाला उटजाः । **क्वचिदिति ।** क्रीडितुं यत्कृत्रिमं निर्मितं करिकलभयूथकं तेनाकुलीक्रियमाणाः काञ्चनकमलिनिकाः सुवर्णनलिन्यः । कप्रत्यये च सर्वत्र ह्रस्वत्वम् । गन्धोदकस्य सगन्धजलस्य कूपेषूदपानेषु । कीदृशेषु । बद्धः काञ्चनस्य सुवर्णस्य सुधा गृहधवलीकरणद्रव्यं तस्य पङ्कः कर्दमस्तेन काममत्यर्थं पीठं येषु, स्थूलो यो बिसलताया दण्डस्तेन घटिता अरका[1] येषु, कृतानि[2] केतकदलानां द्रोणिकानि भाजनविशेषाणि येषु, कुवलयानामुत्पलानामावल्यः पङ्क्तयस्ता एव रज्जवस्तैर्ग्रथ्यमानानि बध्यमानान्येवंविधानि पत्रपुटलक्षणानि घटीयन्त्रकाण्युद्धाटकानि । **क्वचिदिति ।** स्फटिकस्य बलाका बिसकण्ठिकास्तासामावलीभिर्वान्ता मुक्ता वारिधारा जलधारा यासु, लिखितानीन्द्रायुधानि शक्रचापानि यासु, एवंविधाः संचार्यमाणाः[3] प्रेर्यमाणा मायामेघमालाः कृत्रिमजल(द)पङ्क्तयः । **क्वचिदिति ।** उपान्ते समीपे रूढा यवाङ्कुरा यासु, तरन्ति तरुणमालतीकुड्मलानि तैर्दन्तुरितास्तरंगाः कल्लोला यासु, हरिचन्दनस्य तैलपर्णिकस्य द्रवस्तस्य वापिकासु क्षुद्रकूपिकासु शिशिरीक्रियमाणाः शीतलीक्रियमाणा हारयष्टीर्मुक्ताकलापान् । एतेन विरहाधिक्यं वर्णितम् । **क्वचिदिति ।** मुक्ताफलं रसोद्भवं तस्य क्षोदेन चूर्णेन रचितं निर्मितमालवालकमावापस्थानकं येषांताननवरतं निरन्तरं स्थूला जलबिन्दवस्तेषां दुर्दिनमुत्सृजत उत्प्राबल्येन मुञ्चतः कुर्वतः एवंविधान्यन्त्रवृक्षकान्कृत्रिममहीरुहान् । **क्वचिदिति ।** विधुताः कम्पिता ये पक्षास्तैर्निक्षिप्ता ये सीकरास्तैरानीतो नीहारो हिमं याभिस्ता भ्रमन्तीर्भ्रमणं कुर्वन्तीः । एवंविधा यन्त्रमयीः पत्रशकुनिश्रेणीः । **क्वचिदिति ।** मधुकरा भ्रमरा एव किङ्किण्यः क्षुद्रघण्टिकास्तासां पङ्क्तिः श्रेणी तया पटुतरं[4] स्पष्टं यथा स्यात्तथा बाध्यमाना निरुध्यमाना कुसुमदामदोलाः पुष्पस्रक्प्रेङ्खाः । **क्वचिदिति ।** उदरे मध्य आरूढा निर्गता उद्गताः सुवर्णकलशादुत्तालोर्ध्वमुखी या नलिनी तस्याश्छदानि दलानि तैराच्छादितं पिहितं मुखं येषां तान्प्रवेश्यमानान्गृहान्तर्नीयमानाञ्शातकुम्भान्[5] । **क्वचिदिति ।** घटिता कदलीगर्भस्तम्भा एव

---

**टिप्प०**—1 चक्रान्तर्गतानि काष्ठनिर्मितान्यवयवानि, 'अरा' इति भाषा । 2 'कृतकानि' इत्येव पाठः । कृत्रिमाणि केतकदलानि ( केतकपत्राणि ) एव जलद्रोणिका जलाधारविशेषा येषु तानि । शिशिरोपचारवर्णनेऽस्मिन् सुगन्धिजलभृताः कूपा अपि तथा कृता येषामुपरि पत्रपुटरूपान् घटान् वहन्ति यन्त्राणि ( 'अरहट' ), जलाधारा अपि केतकपत्रैः कृतानीत्याद्यर्थो बोध्यः । 3 निर्माणकौशलेनैव परिचाल्यमानाः । 4 'क्वचिन्मधुकरकिङ्किणीपङ्क्तिपटुतररवा बध्यमानाः' इत्येव पाठः । मधुकरा एव किङ्किण्यास्तासां पङ्क्तेः पटुतरो रवः ( शब्दः ) यासु ताः । परिचारिकाभिर्बध्यमानाः ( कुसुमदामनिर्मिता दोलाः ) । 5 शातकुम्भानित्येव पाठं स्वीकृत्य तदर्थकरणसमये पलायांचक्रे मन्दः । अस्तु. 'शातकुम्भकुम्भान्' इत्येव पाठः । शातकुम्भस्य सुवर्णस्य कलशान्, येषामुदरेषु नलिन्यः उत्पन्नास्ततश्च मुखेभ्यो बहिः उन्नालास्ता निर्गताः, तत्पत्रैः कुम्भमुखमाच्छन्नम् । शैत्यार्थं शोभार्थं च वृक्षाधारविशेषः ।

---

**पाठा०**—१ घटितदण्डारकाणि. २ कृतक; कनक. ३ जलद्रोणिकानि. ४ कमलपत्रपुट. ५ बलाकावलीः. ६ प्ररूढ. ७ पाण्डुयवाङ्कुरासु. ८ सितरक्त. ९ अनवरतचन्दनरसस्थूल. १० पत्रवृक्षकान्. ११ पटुरवबोध्यमानाः; पटुतररवाबोध्यमानाः. १२ उन्नाल. १३ शातकुम्भकुम्भान्.

दण्डानि बध्यमानानि चारुवंशाकृतीनि कुसुमस्तबकातपत्राणि, कचित्करमृदितकर्पूरपल्लवरसेनाधिवास्यमानानि बिसतन्तुमयान्यंशुकानि, कचिल्लवलीफलद्रवेणार्द्रीक्रियमाणांस्तृणशूकमञ्जरीकर्णपूरान्, कचिदम्भोजिनीदलव्यजनैर्वीज्यमानानुपलभाजनभाजः शीतौषधिरसानन्यांश्चैवंप्रकाराञ्शिशिरोपचारोपकरणकल्पनाव्यापारान्परिजनेन कृतान्क्रियमाणांश्च वीक्षमाणो हिमगृहकस्य मध्यभागं हृदयमिव हिमवतः, जलक्रीडागृहमिव प्रचेतसः, जन्मभूमिमिव सर्वचन्द्रकलानाम्, कुलगृहमिव सर्वचन्दनवनदेवतानाम्, प्रभवमिव सर्वचन्द्रमणीनाम्, निवासमिव सर्वमाघमासयामिनीनाम्, संकेतसदनमिव सर्वप्रावृषाम्, ग्रीष्मोष्मापनोदोद्देशमिव सर्वनिम्नगानाम्, वडवानलसंतापापनोदननिवासमिव सर्वसागराणाम्, वैद्युतदहनदाहप्रतीकारस्थानमिव सर्वजलधराणाम्, इन्दुविरहदुःसहदिवसातिवाहनस्थानमिव कुमुदिनीनाम्, हरहुताशननिर्वापणक्षेत्रमिव मकरध्वजस्य[1], दिनकरकरैरपि सर्वतो जलयन्त्रधारासहस्रसमुत्सारितैरतिशीतस्पर्शभयनिवृत्तैरिव परिहृतम्, अनिलैरपि कदम्बकेसरोत्करग्राहिभिः कण्टकितैरिवानुगतम्, कदलीवनैरपि पवनचलितदलैर्जाड्यजनितवेपथुभिरिव परि-

---

दण्डा येष्वेवंविधानि बध्यमानानि चारुर्मनोहरो यो वंशो वेणुस्तद्वदाकृतिराकारो येषां तानि कुसुमस्तबकान्येवातपत्राणि छत्राणि। **कचिदिति**। करेण मृदितो यः कर्पूरपल्लवस्तस्य रसेनाधिवास्यमानानि सुगन्धीक्रियमाणानि बिसतन्तुमयानि तन्तुलतन्तुनिर्मितान्यंशुकानि वस्त्राणि। **कचिदिति**। लवली वल्लीविशेषस्तस्याः फलद्रवेणार्द्रीक्रियमाणान्। तृणानां शूकं किंशारुस्तस्य मञ्जर्य एव कर्णपूरान्कर्णाभरणानि। **कचिदिति**। अम्भोजिनी कमलिनी तस्या दलान्येव व्यजनानि तालवृन्तानि तैर्वीज्यमानानुपलभाजनभाजो दृषत्पात्रस्थिताञ्शीतौषधिरसान्, अन्यांश्चैवंप्रकाराञ्शिशिरोपचारोपकरणकल्पनाव्यापारान्परिजनेन परिच्छदेन कृतान्विहितान्क्रियमाणांश्च विधीयमानांश्च वीक्षमाणो हिमवतो गौरीगुरोर्हृदयमिव स्वान्तमिव, प्रचेतसो वरुणस्य जलक्रीडागृहमिव, सर्वाः समग्रा याश्चन्द्रकलास्तासां जन्मभूमिमिव, सर्वं यच्चन्दनवनं गन्धसारकाननं तस्य देवतानामधिष्ठात्रीणां कुलगृहमिव पितृसद्मेव; सर्वचन्द्रमणयश्चन्द्रकान्तास्तेषां प्रभवमिवोत्पत्तिमिव, सर्वे ये माघमासास्तपोमासास्तेषां यामिनीनां रात्रीणां निवासमिव वसतिस्थलमिव, सर्वप्रावृषां समग्रतपात्ययानां संकेतसदनमिव, सर्वनिम्नगानां समस्ततटिनीनां ग्रीष्मस्योष्णागमस्य ऊष्मा तापस्तस्यापनोदो दूरीकरणं तस्योद्देशमिव प्रदेशमिव, सर्वसागराणां समस्तसमुद्राणां वडवानलो वाडवस्तस्य यः संतापस्तस्यापनोदना दूरीकरणं तस्या निवासमिव वसतिमिव, सर्वजलधराणां समग्रमेघानां वैद्युतो यो दहन इरंमदस्तेन दाहस्तस्य प्रतीकारस्थानमिव प्रतिक्रियागृहमिव, कुमुदिनीनां कैरविणीनामिन्दुविरहेण दुःसहमसह्यं दिवसस्यातिवाहनमुल्लङ्घनं तस्य स्थानमिव, मकरध्वजस्य कंदर्पस्य हरस्येश्वरस्य यो हुताशनस्तृतीयनेत्रजो वह्निस्तस्य निर्वापणं निर्यातनं तस्य क्षेत्रमिव स्थानमिव, दिनकरस्य सूर्यस्य करैरपि सर्वतः समन्ताज्जलयन्त्रधारासहस्राणि तैः समुत्सारितैर्दूरीकृतैरतिशयेन यः शीतः स्पर्शः तस्माद्यद्भयं तेन निवृत्तैरिव परिहृतं परित्यक्तम्। अनिलैरपि पवनैरपि कदम्बस्य कादम्बस्य यः केसरोत्करस्तद्ग्राहिभिरत एव कण्टकितैरिव रोमाञ्चितैरिवानुगतं सहितम्[1]। कदलीवनैरपि रम्भाकाननैरपि पवनेन चलितानि कम्पितानि दलानि येषां तैरत एव जाड्येन जनितो

---

टिप्प०—1 पवनानामपि शैत्यं प्रतीतमभूदत एव तेपि रोमाञ्चमवहन्निस्युत्प्रेक्षाशयः।

---

पाठा०—१ मकरध्वजस्य सदनमिव वनदेवतानाम्.

वारितम्, अलिभिरपि कुसुमामोदमदमुखरैराबद्धदन्तवीणैरिव वाचालितम्, लताभिरपि मधुकरपटलजटिलाभिर्गृहीतनीलप्रावरणकाभिरिव विराजितमाससाद। क्रमेण च तत्रान्तर्बहिश्चातिवहलेन पिण्डहार्येणेवोपलिप्यमानोऽतिशीतलेन स्पर्शेनाऽमन्यतात्मनो मनश्चन्द्रमयं कुमुदमयानीन्द्रियाणि ज्योत्स्नामयान्यङ्गानि मृणालिकामयीं धियम्। अगणयच्च हारमयानर्ककिरणांश्चन्दनमयमातपं कर्पूरमयं पवनमुदकमयं कालं तुषारमयं त्रिभुवनम्।

एवंविधस्य च तस्यैकदेशे सखीकदम्बकपरिवृताम्, अशेषसरित्परिवारामिव भगवतीं गङ्गां हिमवतो गृहाचलगताम्, कुल्याभ्रमिभ्रमितेन कर्पूररसस्रोतसा कृतपरिवेषाया मृणालदण्डमण्डपिकायास्तले कुसुमशयनमधिशयानाम्, हाराङ्गदवलयरसनानूपुरैर्मृणालमयैर्निगडैरिव संयतामीर्ष्यया मन्मथेन, चन्दनधवले स्पृष्टामिव ललाटे शशलाञ्छनेन, बाष्पवारिवाहिनि चुम्बितामिव चक्षुषि वरुणेन, वर्धितनिःश्वासमरुति दष्टामिव मुखे मातरिश्वना, संतापप्रतप्त-

---

वेपथुः कम्पो येषामेतादृशैरिव परिवारितम्। अलिभिरपि भ्रमरैरपि कुसुमानामामोदः परिमलस्तज्जनितो मदस्तेन मुखरैर्वाचालैरत एवाबद्धा दन्तवीणा यैरेवंविधैरिव वाचालितं मुखरितम्। लताभिरपि वल्लीभिरपि मधुकराणां पटलं तेन जटिलाभिर्व्याप्ताभिर्गृहीतं स्वीकृतं नीलं प्रावरणं प्रच्छादनं याभिरेवंविधाभिरिव विराजितं शोभितमेतादृशं हिमगृहकस्य मध्यभागमाससाद प्राप्तवान्। **क्रमेणेति**। क्रमेण परिपाट्यान्तर्बहिश्चातिशीतलेन स्पर्शेनोपलिप्यमानः। ननु मूर्तव्यतिरेकेणोपदिग्धक्रिया न संभवतीत्याशयेनाह—**अतीति**। अतिवहलेनातिदृढेन पिण्डहार्येणेव पिण्डरूपेणाहर्तुं शक्यं पिण्डहार्यं तेनेव, एतेनातिशीतलस्पर्शस्य बाहुल्यतया हस्तग्राह्यत्वं सूचितम्। तथातिशीतलेन स्पर्शेनात्मनः स्वस्य मनश्चित्तं चन्द्रमयममन्यताऽजानात्। तथा कुमुदमयानि कैरवमयानीन्द्रियाणि करणानि, ज्योत्स्नामयानि चन्द्रिकामयान्यङ्गानि हस्तपादादीनि, मृणालिकामयीं बिसमयीं धियं बुद्धिम्। अमन्यतेत्यस्य सर्वत्र संबन्धः। तथार्ककिरणान्सूर्यकरान्। शुभ्रत्वायतत्वसाम्यादाह–हारमयान्मुक्ताप्रालम्बमयानगणयत्। अग्रेऽप्येतस्य संबन्धः। आतपं सूर्यालोकं चन्दनमयं मलयजमयम्। अतिशीतलत्वादिति भावः। तथा पवनं समीरं कर्पूरमयं घनसारमयम्। तद्गन्धयुक्तत्वात्। तथा कालं समयमुदकमयं जलमयम्। त्रिभुवनं त्रिविष्टपं तुषारमयं हिममयम्। अतिशीतलस्य शेषाधिवशात्किरणरूपतया सत्त्वेऽपि हाररूपतयागणयदित्यर्थः।

एवंविधस्य तस्य हिमगृहस्य एकदेश एकस्मिन्प्रदेशे सखीकदम्बकेन वयस्यासमूहेन परिवृताम्। अशेषसरित्परिवारां समग्रतटिनीपरिच्छदां हिमवतः पर्वतात् गृहाचलगतां गृहशिलागतां भगवतीं गङ्गामिव जाह्नवीमिव, विरहजनितपाण्डुरत्वसाम्यात्तदुपमानम्। अन्यासां च नद्युपमानम्। कुल्या सारणी तस्याभ्रमिर्भ्रमणं तया भ्रमितेन कर्पूररसस्रोतसा घनसारद्रवप्रवाहेण कृतो विहितः परिवेषः परिधिर्यस्या एवंविधाया मृणालदण्डमण्डपिकाया बिसदण्डमण्डपस्य तलेऽधोभागे कुसुमशयनं पुष्पशय्यामधिशयानां कृतस्वापाम्। **हारेति**। हारो मुक्ताप्रालम्बः, अङ्गदं बाहुकटकम्, वलयं कङ्कणम्, रसना काञ्ची, नूपुराणि पादकटकानि, एतैर्मृणालमयैर्बिसमयैर्निगडैरिवान्दुकैरिवेर्ष्यया स्पर्धया मन्मथेन कंदर्पेण संयतां बद्धाम्, चन्दनेन धवले शुभ्रीकृते ललाटेऽलिके शशलाञ्छनेन चन्द्रेण स्पृष्टामिवालिङ्गितामिव। शुभ्रत्ववक्रत्वसाम्याच्चन्द्रोपमानम्। बाष्पवारि नेत्राम्बु तद्वाहिनि चक्षुषि नेत्रे वरुणेन प्रचेतसा चुम्बितामिव। जलच्युतिसाम्याद्वरुणेनेत्युक्तम्। वर्धितो वृद्धिं प्राप्तो निःश्वासमरुदेतनवायुर्यस्मिन्नेवंविधे मुखे। वायुबाहुल्यादाह—मातरिश्वना वायुना दष्टामिव भक्षितामिव। संतापः संज्वर-

---

**टिप्प०**—1 शैत्यातिशयेन मुखवेपथुसमये उपर्यधोभागदन्तानां परस्परसंघट्टनजनितः शब्दो दन्तवीणा। 2 ग्रन्थगौरवघातकं धिङ् मन्दम्! 'गुहातलगताम्' इत्येव पाठः। हिमवतः हिमाचलस्य गुहातलस्थितां भगवतीं गङ्गामिव, इति स्फुटोऽर्थः। 3 चन्दनस्य चन्द्र उपमानमित्याशयः।

---

**पाठा०**—१ निरन्तरमधुकर. २ नीहारमयान्. ३ गुहातलगताम्; महीतले पतिताम्. ४ दष्टाम्.

ष्वध्यासितामिवाङ्गेष्वनङ्गेन, कंदर्पदाहदीपिते गृहीतामिव हृदये हुतभुजा, स्वेदिनि परिष्व-क्तामिव वपुषि जलेन, दैवतैरपि विलुप्यमानसौभाग्यामिव सर्वशः, हृदयेन सह प्रियतमस-मीपोपगतैरङ्गैरुपजनितदौर्बल्याम्, आश्यानचन्दनपाण्डुरं च रोमाञ्चमनवरतहारस्पर्शलग्नं मुक्ताफलकिरणपुञ्जमिवोद्वहन्तीं स्वेदसीकरिणीं च कपोलपालीम्, पक्षपवनेन वीजयद्भिरनु-कम्प्यमानामिवावतंसमधुकरैः, अवतंसमधुकररवदहनदग्धमिव श्रोत्रमपाङ्गनिर्गतेनाश्रुस्रो-तसा सिञ्चन्तीम्, अतिप्रवृत्तस्य चाश्रुणो निर्वाहप्रणालिकामिव कर्पूरकेतकीकलिकां कर्णे कलय-न्तीम्, आयतश्वासविधुतितरलितेन च संतापभयपलायमानेन देहप्रभावितानेनेवांशुकेन विमुच्यमानकुचकलशाम्, आपतत्प्रचलचामरप्रतिविम्बं च कुचकलशयुगलं प्रियान्तिकगमनौ-त्सुक्यकृतपक्षमिव करतलेन निरुन्धन्तीम्, मुहुर्मुहुर्भुजलतया तुषारशिलाशालभञ्जिकामा-लिङ्गन्तीम्, मुहुः कपोलफलकेन कर्पूरपुत्रिकामाश्लिष्यन्तीम्, मुहुश्चरणारविन्देन चन्दन-

---

स्तेन प्रतप्तेषूष्णेष्वङ्गेष्वनङ्गेन कंदर्पेणाध्यासितामाश्रितामिव । कुत्रचित् 'पतङ्गेन' इति पाठः । तत्र पतङ्गः सूर्यस्ता-पजनकत्वात् । तदाश्रितामित्यर्थः । कंदर्पदाहदीपिते मदनदाहज्वलिते हृदये । दाहजनकत्वसाम्यादाह—**हुत-भुजेति ।** हुतभुजा वह्निना गृहीतामिव स्वीकृतामिव । स्वेदिनि प्रस्वेदवति वपुषि जलेन नीरेण परिष्वक्ता-मिवाश्लिष्टामिव । एतेन स्वेदबाहुल्यं सूचितम् । दैवतैरप्यदृष्टैरपि सर्वशः सर्वप्रकारेण विलुप्यमानं लोपमाप्य-मानं सौभाग्यं यस्याः सा तामिव । हृदयेन चित्तेन सह सार्धं प्रियतमसमीपं प्राणप्रियनिकटमिवोपगतैरङ्गैः कृत्वोपजनितं विहितं दौर्बल्यं कृशत्वं यस्या एतादृशीम् । **आश्यानमिति ।** आश्यानं शुष्कं यच्चन्दनं मलयजं तेन पाण्डुरं शुभ्रं रोमाञ्चं चानवरतं निरन्तरं हारस्पर्शेन लग्नं मिलितं मुक्ताफलानां किरणा दीधितयस्तेषां पुञ्जः समूहस्तमिवोद्वहन्तीं धारयन्तीम् । अत्र चन्दनधवलीकृतस्य रोमोद्गमस्य मुक्ताकिरणसमूहोपमानम् । तथा स्वेदस्य घर्मजलस्य सीकरा विद्यन्ते यस्यामेतादृशीं कपोलपालीमुद्वहन्तीम् । चकारः समुच्चयार्थः । **अवेति ।** अवतंस उत्तंसस्तस्य मधुकरैर्भ्रमरैः पक्षपवनेन वीजयद्भिरनुकम्प्यमानामिवानुकम्पाविषयीक्रियमाणामिव । अव-तंसमधुकराणां रवः शब्दः स एव दाहकत्वाद्दहनो वह्निस्तेन दग्धमिव ज्वलितमिव । श्रोत्रं श्रवणमपाङ्गनिर्गते-नाक्षिबाह्यायातेनाश्रुस्रोतसा नेत्रजलप्रवाहेण करणभूतेन सिञ्चन्तीं सेकं कुर्वन्तीम् । अतिप्रवृत्तस्यातिप्रसृतस्या-श्रुणो नेत्रजलस्य निर्वाहार्थं सुखेन गमनार्थं प्रणालिकामिव जलमार्गमिव कर्पूरकेतकीकलिकां कर्पूरेणयुक्ता या केतकी तस्याः कलिका कोरकः तां कर्णे कलयन्तीं कलनां कुर्वन्तीं धारयन्तीम् । आयतो विस्तीर्णो यः श्वासः श्वसितं तस्माद्या विधुतिः कम्पस्तेन तरलितेन कम्पितेन संतापभयात्पलायमानेन धावता । अतिशुभ्र-त्वसचिक्कणत्वसाम्यादाह—**देहेति ।** देहप्रभावितानेनेव शरीरदीप्तिसमूहेनेवांशुकेन वस्त्रेण विमुच्यमानौ कुचावेव कलशौ यस्याः सा ताम् । आपतत्प्रचलचामरयोः प्रतिविम्बं यस्मिन्नेतादृशं कुचकलशयुगलं प्रियस्य वल्लभस्यान्तिकं समीपं तत्र गमने याने यदौत्सुक्यं रणरणकता तेन कृताः पक्षा येनैतादृशमिव करतलेन निरुन्धन्तीं निरोधं कुर्वन्तीम् । मुहुर्मुहुर्भुजलतया बाहुवल्ल्या तुषारशिला तस्याः शालभञ्जिकां पाञ्चालिकामा-लिङ्गन्तीमाश्लेषं कुर्वन्तीम् । मुहुः कपोलफलकेन कर्पूरपुत्रिकां घनसारपाञ्चालिकामाश्लिष्यन्तीमालिङ्गन्तीम् । मुहु-श्चरणारविन्देनाङ्घ्रिकमलेन चन्दनपङ्कस्य मलयजकर्दमस्य प्रतियातनां प्रतिमाम् । 'प्रतिमा यातनाविधिः । छायः

---

**टिप्प०**—1 सौन्दर्यमुग्धत्वाद्देवा अपि तस्या भर्तृप्रियत्वम् ( 'सुहाग' ) न्यूनीकृत्य आत्मनि तदासक्तिं कामयन्त इत्याशयः । 2 दूरगमनश्रमेण दौर्बल्यं भवत्येवेत्याशयः । 3 विरहोद्दीपनेन इत्यर्थः । 4 कर्पूरवत् ( शुभ्रा ) केतकीकलिका, कर्पूरवासिता केतकीकलिका वा ।

---

**पाठा०**—१ जलदेन. २ अवतंसकुसुम.

पङ्कप्रतियातनामामृशन्तीम्[1], स्तनसंक्रान्तेनात्ममुखेनापि कुतूहलिनेव परिवृत्य विलोक्यमानाम्, कर्णपूरपल्लवेनापि स्वप्रतिबिम्बशायिना[2] सोत्कण्ठेनेव चुम्ब्यमानकपोलफलकाम्, हारैरपि मुक्तात्मभिर्मदनपरवशैरिव प्रसारितकरैरालिङ्ग्यमानाम्, मणिदर्पणमुरसि निहितं विनोदितव्यमेतदिति[3] जीवितस्पर्शमयं[5] शपथं[4] शशिनमिव कारयन्तीम्, करिणीमिव संमुखागतप्रमदवनगन्धवारणप्रसारितकराम्, प्रस्थितामिवानभीष्टदक्षिणवातमृगागमनाम्, मदनाभिषेकवेदिकामिव कमलावृतचन्दनधवलपयोधरकलशावष्टब्धपार्श्वाम्, आकाशकमलिनीमिव

---

छन्दः कायो रूपं विम्वं मानकृती अपि' इति कोशः। आमृशन्तीं परामर्शं कुर्वन्तीम्। **स्तनेति**। स्तनयोः कुचयोः संक्रान्तेन प्रतिविम्बितेनात्ममुखेनापि स्वकीयवदनेनापि कुतूहलिनेव कौतुकिनेव परिवृत्य। उत्तानीकृत्येत्यर्थः। विलोक्यमानां वीक्ष्यमाणाम्। एतेन सौन्दर्यातिशयः सूचितः। एवं कर्णपूरपल्लवेनापि स्वप्रतिविम्बरूपेण शायिना शयनकारिणा। एतेनायतत्वं सूचितम्। सोत्कण्ठेनेव सोत्कलिकेनेव चुम्ब्यमानं चुम्बनविषयीक्रियमाणं कपोलफलकं यस्याः सा ताम्। हारैरपि मुक्ताकलापैरपि[1] मुक्तात्मभिर्मुक्तास्वरूपैर्मदनपरवशैरिवानज्ञायत्तैरिव प्रसारितकरैर्विस्तारितपाणिभिरालिङ्ग्यमानामाश्लिष्यमाणाम्। अत्र मुक्तात्मभिरालिङ्ग्यमानामित्यनेन तस्या अभिनवं सौभाग्यं वर्णितम्। उरसि निहितं वक्षसि स्थापितं मणिदर्पणं रत्नादर्शम्। वर्तुलत्वतादृशद्युतिमत्त्वसाधर्म्यात्। जीवितस्य स्पर्शो दानं तन्मयं शशिनमिव चन्द्रमिव। 'स्पर्शो वर्गाक्षरे दाने स्पर्शने स्पर्शके रुजि' इति कोशः। इति शपथं कारयन्तीम्। इतिशब्दद्योत्यमाह—**विनोदेति**। अद्य त्वया विनोदितव्यम्[2]। अन्यस्तु शशी शोकप्रदः, त्वया तु विनोदितव्यमेतदिति भावः। अत एव जीवितस्पर्शमयमिति विशेषणम्। **करिणीति**। हस्तिनीमिव। उभयोः शब्देन साम्यं प्रदर्शयन्नाह—**संमुखेति**। संमुखागतो यः प्रमदवनगन्धस्तस्य वारणं दूरीकरणं तत्र प्रसारितौ करौ यया सा। विरहाकुलितत्वेन प्रमदवनस्य गन्धस्य दुःखदायित्वात्तन्निवारणं युक्तमेवेति भावः। पक्षे संमुखागतः प्रमदो मदोत्कटो वनगन्धवारणो वनप्रभवो गन्धहस्ती तं प्रति प्रीत्या प्रसारितः करः शुण्डा यया सा ताम्। प्रस्थितामिव चलितामिव। उभयसाम्यं प्रदर्शयन्नाह—**अनभीष्टेति**। अनभीष्टमनीप्सितं दक्षिणो यो वातः स एव शीघ्रगामित्वान्मृगो[3] हरिणस्तस्यागमनं यस्याः सा ताम्। विरहिण्या दक्षिणो वायुरतीव दुःखदो भवतीति सर्वत्र प्रसिद्धम्। पक्षेऽनभीष्टो दक्षिणो वामतोऽपसव्यगो वातमृगो वातप्रमीर्यस्याः सा ताम्। स्त्रीणां प्रयाणे दक्षिणो मृगोऽपशकुनमिति वसन्तराजादौ प्रसिद्धम्। **मदनेति**। मदनस्य कंदर्पस्याभिषेकार्थं वेदिका संस्कृता भूमिस्तामिव। उभयोः साम्यमाह—**कमलेति**। कमलया[4] शोभयावृतौ चन्दनेन धवलौ पयोधरावेव कुचावेव पीनत्ववर्तुलत्वसाम्यात्कलशौ ताभ्यामवष्टब्धावाश्रितौ पार्श्वौ यस्याः। **आकाशेति**। आकाशं व्योम तस्य कमलिनी पद्मिनी तामिव। उभयोः साम्यमाह—

---

**टिप्प०—1 मुक्त आत्मा येषां जीवन्मुक्तैरपि मदनपरवशैरिति विरोधः। मुक्ताः मौक्तिकानि आत्मा स्वरूपं येषामिति विरोधपरिहारः। 2 एवमर्थे 'विनोदयितव्यम्' इति स्यात्। अतः 'नोदितव्यमद्य' इति पाठः। विरहोद्दीपकेन त्वया अद्य न उदेतव्यमिति चन्द्रं शपथं कारयन्तीमिति तदर्थः। शपथश्च जीवनस्पर्शरूप इति भावः। अन्यत्स्पष्टप्रायम्। 3 वातस्य दुःखदत्वेपि मृगरूपके किं स्वारस्यं (विरहिणीपक्षे)?, अत एव अनभीष्टं दक्षिणवातस्य मलयवायोः मृगस्य (मृगमदसौरभस्य, लक्षणया) च आगमनं यस्या इति व्याख्यातव्यम्। 4 उभयपक्षेपि नास्मिन्नर्थे स्वारस्यम्। शैत्यार्थं कमलदलैरावृतौ चन्दनधवलौ यौ पयोधररूपौ कलशौ ताभ्यामाक्रान्तपार्श्वामिति (नायिकापक्षे), माङ्गल्यार्थं कमलैराच्छादितमुखाश्चन्दनधवलीकृता ये पयोभृताः कलशास्तैराक्रान्तपार्श्वभूमिभागामिति (वेदिकापक्षे)।**

---

**पाठा०—१ आस्पृशन्तीम्. २ स्वप्रतिबिम्बपल्लवशायिना. ३ नोदेतव्यमद्येति. ४ त्वयाद्य. ५ जीवनस्य समयं शशिनम्; जीवनस्पर्शसमयं शशिनम्.**

स्वच्छाम्बरतलदृश्यमानमृणालकोमलोरुमूलाम्, कुसुमचापलेखामिव[1] मदनारोपितगुणकोटिकान्ततराम्[2], मधुमासदेवतामिव शिशिरहारिणीम्, मधुकरीमिव कुसुममार्गणाकुलाम्, चन्दनविलेपनामनङ्गरागिणीं च बालां मन्मथजननीं च मृणालिनीमभ्यर्थिततुषारस्पर्शां च कादम्बरीं व्यलोकयत्।

अथ सा यथादर्शनमागत्यागत्य चन्द्रापीडागमनमावेदयन्तं परिजनमुत्तरलतारकेण[3] चक्षुषा विलोक्य 'कथय। किं[4] सत्यमागतो दृष्टस्त्वया। कियत्यध्वनि क्वासौ' इति प्रतिमुखं निक्षिप्तनामाक्षरं[5] पप्रच्छ। प्रवर्धमानधवलिम्ना[6] चक्षुषा दृष्ट्वा च संमुखमापतन्तं तं दूरादेव वरारोहा, नवग्रहा करिणीवोरुस्तम्भविधृता, विचेष्टमानाङ्गी, कुसुमशयनपरिमलोपगतैः परवशामुखरै-

---

**स्वच्छेति**। स्वच्छं निर्मलं यदम्बरं वस्त्रं तस्य तलमधोभागस्तत्र दृश्यमानं विलोक्यमानं मृणालवत्कोमलमूरुमूलं सक्थिमूलं यस्याः सा ताम्। पक्षे स्वच्छं रजोरहितं यदम्बरतलं व्योमतलं तत्र दृश्यमानं मृणाललक्षणं कोमलं सुकुमारमुरु विस्तीर्णं मूलं बुध्नो यस्याः। **कुसुमेति**। कुसुमचापः पुष्पधनुस्तस्य लेखामिव। उभयसाम्यमाविःकर्तुमाह—**मदनेति**। मदनेन यौवनावस्थयारोपिता स्थापिता या गुणकोटिस्तया कान्ततरां मनोज्ञतराम्। पक्षे मदनेन कंदर्पेणारोपितोऽधिज्यीकृतो गुणकोटिमौर्वीप्रान्तस्तया कान्ततराम्। **मध्विति**। मधुमासो वसन्तमासस्तस्य देवतामिवाधिष्ठात्रीमिव। उभयसादृश्यमाह—**शिशिरेति**। शिशिरेण शीतलोपचारेण हारिणीं रुचिराम्। पक्षे शिशिरस्य ऋतुविशेषस्यापहारिणीम्। शिशिरापगमे हि मधुमासः प्रवर्तते। मधुकरीमिव भ्रमरीमिव। उभयसादृश्यमाह—**कुसुमेति**। कुसुमान्येव विरहवशान्मार्गणा बाणास्तैराकुलाम्। पक्षे कुसुमानां मार्गणमन्वेषणं तेनाकुलां व्यग्राम्। अथ च चन्दनस्य विलेपनमङ्गरागो यस्या एवंविधामपि न विद्यतेऽङ्गरागो यस्यामिति विरोधः। तत्परिहारस्तु—अनङ्गः कंदर्पस्तस्मिन्रागिणीमनुरागवतीमित्यर्थात्। बालामनाविष्कृतमन्मथाम्, अथ च मन्मथजननीमिति विरोधः। तत्परिहारस्तु—बालामनुद्वाहितामित्यर्थात्। मृणालिनीम्, अथ चाभ्यर्थितो वाञ्छितस्तुषारस्पर्शो ययेति विरोधः। कमलिन्यास्तुषारस्पर्शः सर्वथानिष्ट इति लोके प्रसिद्धम्। तत्परिहारस्तु—विरहतापोपशान्त्यर्थं मृणालं विद्यते यस्या इत्यर्थात्। एवंविधां कादम्बरीं व्यलोकयदपश्यत्।

अथ सा कादम्बरी यथादर्शनं यथावसरमागत्यागत्य चन्द्रापीडस्यागमनमावेदयन्तं कथयन्तं परिजनमुत्प्राबल्येन तरला चञ्चला तारका यस्मिन्नेतादृशेन चक्षुषा विलोक्य वीक्ष्य प्रतिमुखं निक्षिप्तानि स्थापितानि नामाक्षराणि यथा स्यात्तथा। प्रत्येकं प्रत्येकं नाम गृहीत्वेत्यर्थः। इति पप्रच्छेत्यप्राक्षीत्। इतियोत्यमाह—**कथयेति**। कथय ब्रूहि। किं सत्यमागतस्त्वया दृष्टः। कियत्यध्वनि। क्वासौ चन्द्रापीडः। तदनन्तरं प्रवर्धमानः प्रतिदिनमुपचीयमानो धवलस्य भावो धवलिमा यस्मिन्नेतादृशेन चक्षुषा नेत्रेण संमुखमापतन्तमागच्छन्तं तं दृष्ट्वा विलोक्य च कुसुमशयनादुत्तस्थावुत्थिता बभूवेत्यन्वयः। अथ कादम्बर्या विशेषणानि—**वरेति**। वरः श्रेष्ठ आरोहो नितम्बो यस्याः सा। 'नितम्बारोहौ स्त्रीकट्याः पश्चाज्जघनपार्श्वतः' इति कोशः। उर्वावेव स्तम्भौ ताभ्यां विधृता धृता। केव। नवः प्रत्यग्रो ग्रहो ग्रहणं यस्या एवंविधा करिणीव हस्तिनीव। सापि उरुर्विस्तीर्णो यः स्तम्भस्तत्र विधृता बद्धा स्यात्। विचेष्टमानानि चेष्टाविशेषणं प्राप्यमाणान्यङ्गानि यस्याः कुसुमशयनस्य

---

टिप्प०—1 गुणः आरोप्यते, न तु कोटिः। अत एव, आरोपितः गुणो ययोः ईदृशीभ्यां कोटिभ्याम् (प्रान्ताभ्याम्) कान्ततरा, इति व्याख्यातव्यम्। 2 दर्शनमनतिक्रम्य यथादर्शनम्, यस्यां यस्यामवस्थायां दृष्टस्तां तामवस्थामित्याशयः। 3 धिक्। ऊर्वोः स्तम्भेन सात्त्विकभावजातेन निश्चलत्वेन विधृता निस्पन्दा, इत्यर्थः।

---

पाठा०—१ कुसुमचापचापलेखाम्. २ कान्ताम्. ३ तारकेण कथय. ४ कथं सम्यक्. ५ निक्षिप्तनानाक्षरम्; निक्षिप्तेन चक्षुषानक्षरम्. ६ वर्धमान.

र्मधुकरकुलै[1]रिवाच्छाद्य[2]माना, संभ्रमच्युतो[3]त्तरीयका हारकिरणानुरसि कर्तुमिच्छन्ती, मणिकुट्टिमनिहितेन वामकरतलेन हस्तावलम्बनं निजप्रतिमामिव याचमाना, स्रस्तकेशकलापसंयमनश्रमितेन गलत्स्वेदसलिलेन दक्षिणकरेण समभ्युक्ष्येवात्मानमर्पयन्ती, [4]चलितत्रिकताम्रत्रिवलीत[5]रङ्गितरोमराजितया निष्पीड्यमानेव सर्वरसाननङ्गेन, अन्तःप्रविष्टललाटिकाचन्दनर[6]समिश्रमिव च[7]क्षुषा क्षरन्ती शिशिरमानन्दजलम्, आनन्दवारिबिन्दुवेणिकया [8]चलितावतंसधूलिधूसरं प्रियप्रतिमाप्रवेशलोभेनेव कपोलफलकं प्रक्षालयन्ती, ललाटिकाचन्दनभरेणेव किंचिदधोमुखी, तत्क्षणमपाङ्गभागयु[9]ञ्जिततारकया तन्मुखलग्नयेव दीर्घया दृष्ट्याकृष्यमाणा कुसुमशयनादुत्तस्थौ ।

---

परिमलस्तेनोपनतैः प्राप्तैरत एव परवशैरासमन्तान्मुखरैर्वाचालैरेवंविधैर्मधुकरकुलैर्भ्रमरसमूहैराच्छाद्यमानेव। संभ्रमेण सहसा च्युतमुत्तरीयकं प्रावरणं वस्त्रं यस्याः सैवंभूता सती हारकिरणानुरसि कर्तुमिच्छन्ती वाञ्छन्ती । एतेन हारकिरणोत्तरीयांशुकयोरतिस्वच्छत्वसाम्याद्भेदो न ज्ञात इति भावः । मणिकुट्टिमे निहितेन स्थापितेन वामकरतलेन निजप्रतिमां प्रति हस्तावलम्बनं याचमानेव प्रार्थ्यमानेव । एतेन स्वतः स्वशरीरधारणे न क्षमेति प्रदर्शितम् । स्रस्तो यः केशकलापोऽलकसमूहस्तस्य संयमनं बन्धनं तेन श्रमितेन श्रमं प्राप्तेन गलत्स्वेदसलिलेन क्षरद्धर्मवारिणा दक्षिणकरेण समभ्युक्ष्य। यस्यकस्यचिदर्पणं क्रियते तत्तु करेण प्रोक्षितस्यैवेत्यर्थः । आत्मानमर्पयन्त्यर्पणं कुर्वन्ती । चलितं यत्रिकं वंशाधर[2]स्तस्य ताम्रा स्वच्छा या त्रिवली तया तरङ्गिता रोमराजिस्तस्या भावस्तत्ता तया हेतुभूतयानङ्गेन कंदर्पेण सर्वरसान्निष्पीड्यमानेव मर्द्यमानेव । एतेन चलितत्रिकस्य पीडनयन्त्रसाम्यता प्रदर्शिता । किं कुर्वती । चक्षुषा नेत्रेण शिशिरं शीतलमानन्दजलं क्षरन्ती स्रवन्ती । शिशिरत्वे हेतुं प्रदर्शयन्नाह—**अन्तरिति** । अन्तःप्रविष्टो यो ललाटिकाचन्दनरसस्तेन मिश्रमिव संपृक्तमिव । पुनः किं कुर्वन्ती । आनन्दवारिणो बिन्दवो विप्रुषस्तेषां वेणिकया प्रवाहेण । 'धारा वेणी रयश्च सः' इत्यमरः । चलितः स्वस्थानाच्च्युतो योऽवतंसस्तस्य धूलिः परागस्तेन धूसरं मलिनं कपोलफलकं प्रियप्रतिमाप्रवेशलोभेन प्राणप्रियप्रतिबिम्बसंक्रान्तितृष्णयेव प्रक्षालयन्ती धावनं कुर्वन्ती । ललाटिकाया यश्चन्दनभरस्तेनेव किंचिदधोमुख्यवाङ्मुखी, तत्क्षणमपाङ्गभागोऽक्षिबाह्यान्तःप्रदेशस्तत्र युञ्जि[3]ता प्रेरिता तारका कनीनिका ययैवंविधया तस्य चन्द्रापीडस्य मुखमाननं तत्र लग्नयेव दीर्घया दृष्ट्याकृष्यमाणाकर्षणं क्रियमाणा । अन्वयस्तु प्रागेवोक्तः ।

---

**टिप्प०**—1 मधुकरेषु परवशविशेषणं न स्वारस्याय । अत एव, 'परवशा' स्तम्भाख्यसात्त्विकभावेन स्वयमुत्थातुमसमर्था । अतएव मधुकरैः उत्थाप्यमानेव, इत्यर्थः । एवं च 'उत्थाप्यमाना' इत्येव पाठः । 2 को वंशाधरः ? तस्य का त्रिवली ? अस्तु, चलितं यत्रिकं पृष्ठवंशस्य अधरास्थि, तेन ताम्यन्ती या त्रिवली (उदरस्थरेखात्रयम्) तया तरङ्गिता रोमराजिर्यस्यास्तद्भावस्तत्ता, तया । 3 युजधातोः 'युञ्जिते'तिरूपं कदापि न दृष्टं स्यात्, दृश्यतां टीकाकारकृपया !! अस्तु, सर्वमिदमज्ञानविजृम्भितम् । तत्क्षणम् ( चन्द्रापीडदर्शनक्षणे ) अपाङ्गभागे पुञ्जिता ( सर्वां शक्तिं गृहीत्वा पुञ्जभावेन स्थिता ) तारका यस्यामीदृश्या; तन्मुख( चन्द्रापीडमुख )लग्नया अत एव दीर्घया दृष्ट्या ( चक्षुषा ) आकृष्यमाणेव । दृष्टिस्तन्मुखे दृढसंबद्धा पुनश्च आकृष्यमाणा अत एव सा दीर्घीभूता ।

---

पाठा०—१ जालैः. २ उत्थाप्यमाना. ३ उत्तरीयांशुका. ४ वलित. ५ तरङ्गिणी. ६ रसम्; रसमिश्रान्. ७ चक्षुर्भ्याम्. ८ च चलित; घटित. ९ पुञ्जित.

चन्द्रापीडस्तु समुपसृत्य पूर्ववदेव तां महाश्वेताप्रणामपुरःसरं दर्शितविनयः प्रणनाम । कृतप्रतिप्रणामायां च तस्यां पुनस्तस्मिन्नेव कुसुमशयने उपविष्टायां[1] प्रतीहार्योपनीतां[2] जाम्बूनदमयीमासन्दिकां रोचिष्णुरत्नप्रत्युप्तपादां पादेनैवोत्सार्य क्षिताववेवोपाविशत् । अथ केयूरकः 'देवि, देवस्य चन्द्रापीडस्य प्रसादभूमिरेषा पत्रलेखा नाम ताम्बूलकरङ्कवाहिनी' इत्यभिधाय पत्रलेखामदर्शयत् । अथ कादम्बरी दृष्ट्वा ताम् 'अहो, मानुषीषु पक्षपातः प्रजापतेः' इति चिन्तयांबभूव । कृतप्रणामां च तां सादरम् 'एह्येहि' इत्यभिधायात्मनः समीपं सुकुतूहलपरिजनदृश्यमानां[3] पृष्ठतः समुपावेशयत् । दर्शनादेवोपारूढप्रीत्यतिशया च मुहुर्मुहुरेनां[4] सोपग्रहं करकिसलयेन पस्पर्श । चन्द्रापीडस्तु सपदि कृतसकलागमनोचितोपचारस्तदवस्थां चित्ररथतनयामालोक्याचिन्तयत्—'अतिदुर्विदग्धं हि मे हृदयमद्यापि न श्रद्दधाति । भवतु । पृच्छामि तावदेनाम्' इति निपुणालापेनातिप्रकाशमब्रवीत्[5]—'देवि, जानामि[6] कामरतिं निमित्तीकृत्य प्रवृत्तोऽयम्[7]-

---

तदनन्तरं चन्द्रापीडस्तु समुपसृत्योपसर्पणं कृत्वा पूर्ववदेव महाश्वेताप्रणामपुरःसरं तां कादम्बरीं दर्शितविनयः प्रणनाम नमश्चक्रे । तदनन्तरं कृतो विहितः प्रतिप्रणामोऽनुनमस्कारो ययैवंविधायां च तस्यां पुनस्तस्मिन्नेव कुसुमशयन उपविष्टायामासेदुष्यां प्रतीहार्या द्वारपालिकयोपनीतामानीतां जाम्बूनदमयीमासन्दिकां वेत्रासनम् । 'स्याद्वेत्रासनमासन्दी' इत्यभिधानकोशः । कीदृशैः । रोचिष्णुरत्नैः प्रत्युप्ताः पादा यस्याः सा तां पादेनैवं चरणेनैवोत्सार्य दूरीकृत्य क्षिताविव पृथिव्यामेवोपाविशदुपविष्टः । **अथेति** । उपवेशनानन्तरं केयूरको हे देवि, देवस्य पूज्यस्य चन्द्रापीडस्य प्रसादभूमिः प्रसन्नताधरित्र्येषा पत्रलेखा नाम ताम्बूलकरङ्कवाहिनीत्यभिधायेत्युक्त्वा पत्रलेखामदर्शयद्दृग्विषयतामप्रापयत । **अथेति** । दृग्विषयीकरणानन्तरं कादम्बरी तां दृष्ट्वा विलोक्य चिन्तयांबभूवेति चिन्तितवती । इतिशब्दद्योत्यमाह—**अहो इति** । प्रजापतेर्विधातुरहो मानुषीषु पक्षपातोऽङ्गीकारः । कृतः प्रणामो नमस्कारो ययैवं भूतां च सादरं सबहुमानं एहि एहि इत्यभिधायात्मनः समीपे स्वकीयनिकटे सह कुतूहलेन वर्तमानो यः परिजनः परिवारजनस्तेन दृश्यमानां विलोक्यमानां पृष्ठतः समुपावेशयन्निवेशितवती । अथ दर्शनादेव विलोकनादेवोपारूढः प्रादुर्भूतः प्रीतेरतिशय आधिक्यं यस्यां(स्याः)सा मुहुर्मुहुर्वारंवारमेनां पत्रलेखां सोपग्रहं सानुकूलनं करकिसलयेन पाणिपल्लवेन पस्पर्श स्पर्शं चकार । चन्द्रापीडस्तु सपदि शीघ्रं कृतो विहितः सकलः समग्र आगमनस्यागमने वोचितो योग्य उपचारो विनयो येन स तदवस्थां विरहविक्लवां चित्ररथतनयां कादम्बरीमालोक्य वीक्ष्याचिन्तयदध्यायत् । हीति निश्चितम् । मे मम हृदयं चेतोऽतिदुर्विदग्धमतिजडं यदद्यापि न श्रद्दधाति न निश्चयं करोति । इयमीदृश्यवस्था किं कामात्, अन्यप्रियनिमित्ताद्वेति प्रकारान्तरस्यासंभवात् । कामनिमित्तकत्वेऽवगतेऽपि विपरीतसंभावनेति दुर्विदग्धपदव्यङ्ग्यम्, अत एव निश्चयानुरोधेनाह—**भवत्विति** । कामनिमित्तक एवास्तु, परं तावदादावेनां पृच्छामीति कृत्वा निपुणालापेन नातिप्रकाशं नातिस्पष्टमब्रवीदवोचत् । हे देवि कादम्बरि, अहं जानामि कामनिर्वचनीयस्वरूपामरतिं निमित्ती-

---

**टिप्प०**—1 सस्नेहम् । 2 नातिरुचिरमिदम् । वस्तुतस्तु 'पृच्छामि तावदेनां निपुणालापेनेति' अचिन्तयदित्यस्य कर्मभूतो वाक्यार्थः । निपुणालापेन चतुरजनोचितालापेन ( व्यङ्ग्यार्थपूर्णेनेत्यर्थः ) एनां पृच्छामीति नायकोऽचिन्तयन्मनसि । तदनन्तरं 'प्रकाशमब्रवीत्' इति पाठः । अर्थः स्पष्टः ।

---

**पाठा०**—१ समुपविष्टायाम्. २ समुपनीताम्. ३ सकुतूहलं परिजनेन दृश्यमानाम्. ४ मुहुः. ५ इति प्रकाशं वाचम्. ६ जानासि. ७ अविरलसंतापतीव्रः.

विचलसंतापतन्त्रो व्याधिः । सुतनु, सत्यं न तथा [1]त्वामेष व्यथयति यथास्मान् । इच्छामि देह[2]दानेनापि स्वस्थामत्रभवतीं कर्तुम् । उत्कम्पिनीमनुकम्पमानस्य कुसुमेषुपीडया पतिताम-वेक्षमाणस्य पततीव मे हृदयम् । [3]अनङ्गदे तनुभूते ते भुजलते [4]गाढसंतापतया च दृष्ट्या वहसि स्थलकमलिनीमिव रक्तातामरसाम् । [5]दुःखितायां च त्वयि परि[6]जनोऽपि चानवरतकृताश्रुबि-

कृत्यायमविचलो यः संतापस्तस्य तन्त्र आधीन एवंविधो[1]ऽपि व्याधिः प्रवृत्तः । हे सुतनु हे कादम्बरि, सत्य-मिदं नौपचारिकं वचः, त्वामेष व्याधिर्न तथा व्यथयति पीडयति यथास्मान् । देहदानेनाप्यत्रभवतीं पूज्यां स्वस्थां सज्जां कर्तुमिच्छाम्यभिलषामि । उत्कम्पिनीं त्वां प्रत्यनुकम्पमानस्यानुकम्पां कुर्वाणस्य कुसुमेषुः कंदर्प-स्तस्य पीडया पतितां स्रस्तामवेक्षमाणस्य पश्यतो मे मम हृदयं चेतः पततीव । कादम्बर्या विरहकार्श्यं प्रकटय-न्नाह—**अनङ्गदे इति** । गाढसंतापतया तनुभूते ते भुजलते अनङ्गदे बाहुभूषणवर्जिते दृष्ट्या कृत्वा रक्तता-मरसां स्थलकमलिनीमिव त्वं वहसि । अत्र कृशभुजलतयोर्मृणालसाम्यम्, नेत्रयो रक्ततामरससाम्यमिति भावः । त्वयि दुःखितायां सत्यां परिजनोऽप्यनवरतं निरन्तरं कृतो योऽश्रुबिन्दुपातस्तेन वर्तते [2]प्रवृत्तो भवती-

**टिप्प०—1** धिग् ग्रन्थघातिनम्! सर्वथा अनुचितोऽत्र 'अपिः' । ग्रन्थस्य मेरुदण्डस्वरूपो व्यङ्ग्य-चमत्कारपूर्णोऽप्ययं भागटीकाकारेण न तत्त्वतः परिज्ञातः । सत्यं केवलं बालकवत् पर्यायशब्दान्वेषण एवाभिज्ञः सोयम् । अस्तु. वाक्संदर्भस्यास्य व्यङ्ग्योऽर्थः प्रकाश्यते । काम् ( अनिर्वचनीयाम् ) अरतिं निमित्तीकृत्येति प्रकटोऽर्थः । कामरतिं मदनानुरागमिति व्यङ्ग्योऽर्थः । देहदानेन शरीरावसानं कृत्वापि त्वां सुस्थां कर्तुमिच्छामीति प्रकटोऽर्थः । रतिकाले देहार्पणेनेति व्यङ्ग्योर्थः । अत्र 'सुतनु' इति संबोधनमपि रतकालिकं सर्वावयवसौन्दर्यं हृदयाकर्षकमभिव्यनक्ति । उत्कम्पिनीं व्याधिवशादत्यन्तकम्पवर्तीं त्वाम् अनु (लक्ष्यीकृत्य) कम्पमानस्य तव कम्पं दृष्ट्वा कम्पयुक्तस्येत्यर्थः । तथा पीडया कुसुमेषु पुष्पेषु पतितां शयि-तामवलोकमानस्य मे हृदयं पततीव तव कष्टं दृष्ट्वा बहिर्निर्गच्छतीव । इति प्रकटोऽर्थः । उत्कम्पिनीं प्रबल-कामोदयात्कम्प(सात्त्विकभाव)वर्तीं त्वाम् अनुकम्पमानस्य रमणद्वारा दयापात्रं कर्तुमिच्छतः, कुसुमेषु-(काम)पीडया पतितां शिथिलतनुम् अवेक्षमाणस्य मे हृदयं पततीव रमणाय धावतीवेति व्यङ्ग्योर्थः । अनङ्गदे इत्यादेः प्रकटोर्थो यथाकथंचित्प्रकटीकृत एव । हे अनङ्गदे ( कामवर्धिके! ) ते भुजलते काम-पीडया तनु(कृशी)भूते, गाढसंतापया दृष्ट्या च स्थले ( पद्मिनीचित्रिणीत्यादिनायिकाकीर्णस्थले ) कम-लिनीं पद्मिनीनायिकारूपमात्मानं वहसीव, तथा अरसां (शृङ्गाररहिताम्, रमणरूपशृङ्गारप्रयोजनरहिताम्) रक्तां अनुरक्तां वहसीव । तीव्रमदनसंतापसूचिकया दृष्ट्या पद्मिनीभूतस्यात्मनो रमणफलवञ्चितं मदनानुरागं सूचयसीवेति व्यङ्ग्योर्थः । 2 'पातेन वर्तते' इतोग्रे सर्वोपि पाठटीकाकारेण भ्रंशितः । अत एव 'अश्रुबिन्दुपातेन वर्तते मुक्ताभरणता । गृहाण स्वयंवरार्हाणि मङ्गलप्रसाधनानि । सकुसुमशिलीमुखा हि शोभते नवा लता' इति पाठः । टीकासाहाय्येन प्रकटोर्थो ज्ञायेत । अश्रुबिन्दुपातेन तासु(सखीषु)मुक्ता-नामाभरणयुक्तता, अर्थात् अश्रुद्वारा मुक्ताभूषणभूषिताः सन्तीति । व्यङ्ग्योर्थस्तु तव दुःखेन परिजने त्यक्त-भूषणता ( निराभरणता ), अत एव त्वं स्वयंवर(विवाह)योग्यानि मङ्गलाभरणानि गृहाण, नवा लता नास्ति बालता ( शैशवम् ) यत्र सा नवालता ( अर्थात् युवतिः, श्लेषे बवयोरभेदः ) सकुसुमशिली-मुखा कुसुमशिलीमुखेन ( पुष्पशरेण, कामेन ) सहिता शोभते, न पुनः कामेन रहिता । इति द्वयोः पाठयोस्तारतम्यं सहृदयैस्तुलनीयम् ।

**पाठा०—१** तामयं व्यथयति यथा माम्. २ देहप्रदानेन. ३ अनङ्गतनुभूते; अनङ्गदेवतनुभूते. ४ गाढसंतापया. ५ दुःखितायामपि त्वयि; अपि चानवरत. ६ परिजनेऽपि वा.

न्दुपातेन वर्तते । मुक्ताभरणतां गृहाण । स्वयंवरार्हाणि [२] प्रसाधनानि । [२] कुसुमशिलीमुखान्तर्हिता शोभते यथा लता' इति ।

अथ कादम्बरी बालतया स्वभावमुग्धापि कंदर्पेणोपदिष्टयेव प्रज्ञया तमशेषमस्याव्यक्तव्याहारसूचितमर्थं मनसा जगाह । मनोरथानां तु तावतीं भूमिमसंभावयन्ती शालीनतां चावलम्बमाना तूष्णीमेवासीत् । केवलमुत्पादितान्यव्यपदेशा तत्क्षणं तमाननामोदमधुकरपटलान्धकारितं मुखं द्रष्टुमिव स्मितालोकमकरोत् । ततो मदलेखा प्रत्यवादीत्—'कु[३]मार, किं कथयामि । दारुणोऽयमकथनीयः खलु संतापः । अपि च कुमारभावोपेतायाः किमिवास्या यन्न संतापाय । तथा हि । मृणालिन्याः शिशिरकिसलयमपि हुताशनायते । ज्योत्स्नाप्यातपायते । न[४]नु किसलयतालवृन्तवातैर्मनसि जायमानं किं न प[५]श्यति भवान्खेदम् । धीरत्वमेव प्राणसंधारणहेतुरस्याः' इति । [६]कादम्बरी तु हृदयेन तमेव मदलेखालाप-

---

त्यर्थः । एतेनाश्रुपातस्य नैरन्तर्यं सूचितम् । मुक्तानामाभरणानि तेषां भावो मुक्ताभरणता तां गृहाण स्वीकुरु । स्वयमात्मना वराणि प्रधानान्यर्हाणि योग्यानि प्रसाधनानि प्रतिकर्माणि । कुर्विति क्रियाध्याहारः । कुसुमानि पुष्पाणि, शिलीमुखा भ्रमराः; ताभ्यामन्तर्हिताच्छादिता यथा लता वल्ली शोभते राजते तथा त्वमपीति भावः । शुक्लत्वसाम्यान्मुक्तानां कुसुमसाम्यम्, नेत्राञ्जनस्य कृष्णत्वसाम्याद्भ्रमरसाम्यमिति भावः ।

**अथेति** । तदनन्तरं कादम्बरी बालतया शिशुतया स्वभावेन मुग्धापि सरलाशयापि कंदर्पेण मदनेनोपदिष्टयेव दर्शितयेव प्रज्ञया तमशेषं समग्रमव्यक्तव्याहारोऽस्फुटभाषितं तेन सूचितं ज्ञापितमुपभोगविषयकं रहःसंगमरूपं वार्थं मनसा जग्राह गृहीतवती । मनोरथानां त्वभिलाषाणां तु तावतीं भूमिं संगमरूपलक्षणामसंभावयन्त्यवितर्कयन्ती शाली[1]नतां दृष्टतां चावलम्बमाना । 'दृष्टेः शालीनशारदौ' इति कोशः । तूष्णीमेवासीत् । केवलमुत्पादितोऽन्यव्यपदेशो मिषं ययैवंभूता तत्क्षणमाननस्यामोदस्तस्माद्यन्मधुकरपटलं तेनान्धकारितमन्धकारवदाचरितं मु[२]खमाननं द्रष्टुमिव स्मितालोकं स्मितलक्षणमालोकं प्रकाशमकरोत् । स्मितेन दन्तज्योत्स्नाया वहिर्निर्गमेन प्रकाशसंभवात् । ततो मदलेखा प्रत्यवादीत् । कुमार, किं कथयामि किं ब्रवीमि । अयं दारुणस्तीव्रोऽकथनीयो वक्तुमशक्यः खलु निश्चयेन संतापः । अपि चेति युक्त्यन्तरे । कु[३]मारभावोपेताया अस्याः किमिव यन्न संतापाय भवति । तदेव दर्शयति—**तथा हीति** । मृणालिन्याः कमलिन्याः शिशिरकिसलयमपि हुताशनायते वह्निवदाचरति । ज्योत्स्नापि चन्द्रिकाप्यातपायते सूर्यालोकायते । नन्विति वितर्के । किसलयानि पल्लवास्त एव तालवृन्तानि तेषां वातैः पवनैर्मनसि जायमानं खेदं भवान्किं न पश्यति । अतोऽस्याः कादम्बर्या धीरत्व[४]मेव प्राणसंधारणे जीवितधारणे हेतुर्निमित्तमिति । कादम्बरी तु हृदयेन तमेव पूर्वोक्तमेव मदलेखालापं मदलेखाजल्पितमस्य चन्द्रापीडस्य प्रत्युत्तरीचकार । प्रतिवचः प्रादादित्यर्थः ।

**टिप्प०**—1 शालीनपदस्य अधृष्टः ( विनीतः ) इत्यर्थः, 'स्यादधृष्टे तु शालीनः' इत्यमरः । अग्रे टीकाकारशिरोमणेरिच्छा !! 2 अस्मिन्नर्थे 'तमाननामोद' इति 'तम्' अनन्वितं भवति । वस्तुतस्तु 'मुखम्' इति नास्त्येव । मधुकरपटलान्धकारितं तम् ( चन्द्रापीडम् ) द्रष्टुमिव स्मितालोकमकरोदिति पाठेऽस्मिन्स्पष्टोऽर्थः । 3 अत्रापि तत्याज सारमेवार्थम् । कुमारभावोपेतायाः ( कौमार्ययुक्ततया सुकुमारायाः ) अस्याः सर्वं संतापायेति प्रकटोऽर्थः । कुमारे ( अर्थात् त्वयि ) भावोपेताया अनुरक्तायाः अथवा कुत्सितो मारो यस्मादीदृशे त्वयि, किं वा कुत्सितो यो मारः तस्य भावोपेताया आवेशक्रियां प्राप्तायाः अस्याः विरहोद्दीपकतया सर्वमपि वस्तुजातं तापायेति व्यङ्ग्योर्थः । 4 हे धीर ! त्वमेव संप्रति अस्याः प्राणसंधारणे हेतुः, त्वां प्राप्यैव सेयं जीवितुं शक्नुयादिति गूढोऽर्थः ।

पाठा०—१ मङ्गलप्रसाधनानि. २ सकुसुमशिलीमुखा हि शोभते नवा लता. ३ सुकुमार. ४ ननु किसलय. ५ प्रश्यसि. ६ कादम्बरीहृदयेन.

मस्य प्रत्युत्तरीचकार । चन्द्रापीडोऽप्युभयथाघटमानार्थतया संदेहदोलारूढेनैव चेतसा महाश्वेतया सह प्रीत्युपचयचतुराभिः कथाभिर्[1]महान्तं कालं स्थित्वा तथैव महता यत्नेन मोचयित्वात्मानं स्कन्धावार[2]गमनाय कादम्बरीभवनान्निर्ययौ । निर्गतं च तुरङ्गममारुरुक्षन्तं पश्चादागत्य केयूरकोऽभिहितवान्—"देव, मदलेखा विज्ञापयति—'देवी कादम्बरी खलु प्रथमदर्शनजनितप्रीतिः पत्रलेखां निवर्त्यमानामिच्छति, पश्चाद्यास्यति' इति श्रुत्वा देवः प्रमाणम् ।" इत्याकर्ण्य चन्द्रापीडः 'केयूरक, धन्या स्पृहणीया च पत्रलेखा, यामेवमनुबध्नाति दुर्लभो देवीप्रसादः । प्रवेश्यताम् ।' इत्यभिधाय पुनः स्कन्धावारमेवा[3]जगाम । प्रविशन्नेव पितुः समीपादागतम[4]भिज्ञाततरमालेखहारकमद्राक्षीत् । धृततुरङ्गमश्च प्रीतिविस्फारितेन चक्षुषा दूरादेवापृच्छत्—'अङ्ग, कच्चित्कुशली तातः सह सर्वेण परिजनेन ? अम्बा च सर्वान्तःपुरैः ?' इति । अथासावुपसृत्य प्रणामानन्तरम् 'देव, यथाज्ञापयसि' इत्यभिधाय लेखद्वितयमर्पयांबभूव । युवराजस्तु शिरसि कृत्वा स्वयमेव च तदुन्मुच्य क्रमशः पपाठ—

'स्वस्त्युज्जयिनीतः सकलराजन्यशिखण्डशेखरीकृतचरणारविन्दः परममाहेश्वरो महाराजाधिराजो देवस्तारापीडः सर्वसंपदामायतनं चन्द्रापीडमुदञ्चच्चारुचूडामणिमरीचिचक्र-

---

एतत्कृतो मम विरहो मत्कृतश्चास्या इत्युभयथाघटमानार्थतया विरहतापः सोढुं शक्यो न वेति संदेहदोलारूढेनैव चेतसा महाश्वेतया सह प्रीत्युपचयो रसपुष्टिस्तत्र चतुराभिर्दक्षाभिः कथाभिर्वार्ताभिर्महान्तं कालं च स्थित्वावस्थानं कृत्वा तथैव पूर्वप्रकारेणैव महता यत्नेनात्मानं मोचयित्वा स्वस्य मुक्तिं विधाय स्कन्धावारगमनाय स्वसैन्यनिवेशगमनाय । 'स्कन्धावारोऽस्य तु स्थितिः' इति कोशः । चन्द्रापीडोऽपि कादम्बरीभवनान्निर्ययौ निर्जगाम । निर्गतं च तुरङ्गममश्वमारुरुक्षन्तमारोढुमिच्छन्तं पश्चादागत्य केयूरकोऽभिहितवान् । किं तदित्याह—**देवेति** । हे देव, मदलेखा विज्ञापयति विज्ञप्तिं करोति । एतदेव दर्शयति—**देवेति** । खलु निश्चयेन देवी कादम्बरी प्रथमदर्शनेन जनिता प्रीतिर्यस्या एवंभूता पत्रलेखां निवर्त्यमानामिच्छति समीहते । पश्चाद्यास्यति गमिष्यति । इति श्रुत्वा देवः प्रमाणम् । इत्याकर्ण्य चन्द्रापीडः प्रवेश्यतां गृहीत्वा गम्यतामित्यभिधायेत्युक्त्वा पुनः स्कन्धावारमेवाजगाम । इति शब्दयोत्यमाह—**केयूरकेति** । हे केयूरक, धन्या स्पृहणीया च पत्रलेखा यां पत्रलेखां दुर्लभो दुःप्रापो देवीप्रसादः कादम्बरीप्रसन्नता एवं अनुबध्नात्यनुबन्धं करोति । स्कन्धावारं प्रविशन्नेव पितुः समीपाज्जनकपार्श्वादभिज्ञाततरमतिशयेन ज्ञातपूर्वमासमन्तात्लेखहारकमुदन्तहारकमद्राक्षीत् । धृततुरङ्गश्च स्थापिताश्वश्च प्रीत्या स्नेहेन विस्फारितेन विस्तीर्णीकृतेन चक्षुषा दूरादेवापृच्छत् । हे अङ्ग । कच्चिदिति प्रश्ने । तातः पिता कुशली वर्तते । सर्वेण परिजनेन सह । तथा सर्वान्तःपुरैः सहाम्बा माता च कुशलिनीति । अथेति प्रश्नानन्तरमसावुपसृत्योपसरणं कृत्वा प्रणामानन्तरं नमस्कृतेरनु हे देव, यथाज्ञापयति यथा कथयसि तथास्तीति भावः । इत्यभिधाय लेखद्वितयमर्पयांबभूवार्पितवान् । युवराजस्तु चन्द्रापीडस्तु शिरसि कृत्वा मस्तके निधाय स्वयमेवात्मनैव तल्लेखद्वयमुन्मुच्योन्मुद्य क्रमशः पपाठ पठितवान् ।

किं तदित्याह—**स्वस्तीति** । स्वस्ति यथा स्यात्तथोज्जयिनीतो विशालातः सकलराजन्यानां समग्रभूपानां शिखण्डैश्चूडाभिः शेखरीकृतं चरणारविन्दं यस्य स परममाहेश्वरोत्युत्कृष्टशैवो महाराजाधिराजो महतां राज्ञामधीशस्तारापीडः सर्वसंपदां समग्रसमृद्धीनामायतनं गृहमेवंभूतं चन्द्रापीडमुदञ्चदुल्लसच्चारु मनोहारि यच्चूडामणि-

**टिप्प०**—1 'कुमारभाव'शब्दस्य कौमार्यं स्वस्मिन्ननुरागश्चेति प्रकारद्वयेन घटिततया । 2 धन्यः ! आलेखहारकः पत्रवाहकः ।

---

पाठा०—१ मधुरालापगर्भाभिः कथाभिः. २ निजस्कन्धावार. ३ अभिजगाम; जगाम. ४ अभिजाततरम्.

चुम्बिन्युत्तमाङ्गे चुम्बन्नन्दयति । कुशलिन्यः प्रजाः । किं नु कियानपि कालो [1]भवतो दृष्टस्य गतः । बलवदुत्कण्ठितं [2]नो हृदयम् । देवी च सहान्तःपुरैर्म्लानिमुपनीता । [3]अतो लेखवाचनवि[4]रतिरेव [5]प्रयाणकारणतां [6]नेतव्या' इति । शुकनासप्रेषिते द्वितीयेऽप्यमुमेवार्थं लिखितमवाचयत् । अस्मिन्नेवावसरे समुपसृत्य वैशम्पायनोऽपि लेखद्वितयमपरमात्मीयमस्मादभिन्नार्थमेवादर्शयत् ।

अथ 'यथाज्ञापयति तातः' इत्युक्त्वा तथैव च तुरगाधिरूढः प्रयाणपटहम[7]दापयत् । [8]समीपे स्थितं च म[9]हताश्वीयेन परिवृतं महाबलाधिकृतं बलाहकपुत्रं मेघनादनामानमादिदेश—"भवता पत्रलेखया सहागन्तव्यम् । नियतं च केयूरकस्तामादायैतावतीं भूमिभागमिष्यतीति, तन्मुखेन विज्ञाप्या प्रणम्य देवी कादम्बरी—'नन्वियं सा त्रिभुवननिन्दनीया निरनुरोधा निष्परिचया दुर्ग्रहा प्रकृतिर्मर्त्यानां येषामकाण्डविसंवादिन्यः प्रीतयो न गणयन्ति निष्कारणवत्सलताम् । एवं गच्छता मयात्मनो नीतः स्नेहः कपटकूटजालिक-

---

मरीचिचक्रं शिरोमणिदीप्तिपटलं तच्चुम्बिन्युत्तमाङ्गे शिरसि चुम्बंश्चुम्बनं कुर्वन्नन्दयति प्रमोदयति । प्रजाः प्रकृतयः कुशलिन्यो मङ्गलवत्यः सन्ति । **किं न्विति ।** किं [1]नु भवतो दृष्टस्य कियानपि कालः समयो गतो व्यतीतः तेन नोऽस्माकं बलवत्युत्कण्ठोत्कलिका जाता यस्मिन्नेतादृशं हृदयमस्ति । देवी च तवाम्बा सहान्तःपुरैर्म्लानिमुपनीता प्रापिता । अत्र सहान्तःपुरैरित्यनेनोपमातरोऽपि त्वां समीहन्त इति सौजन्यातिशयः सूचितः । अतो हेतोर्लेखवाचनस्य विरतिरेवावसानमेव प्रयाणका[2]रणतां प्रस्थाननिमित्ततां नेतव्या प्रापणीया । शुकनासेन प्रेषिते द्वितीयेऽपि लेखेऽमुमेवार्थं लिखितं लिपीकृतमवाचयदपठत् । अस्मिन्नेवावसरे समये समुपसृत्य समीपमागत्य वैशम्पायनोऽप्यपरमात्मीयं लेखद्वितयमस्मात्स्वकीयलेखादभिन्नार्थमेकाभिधेयमेव, अदर्शयद्दर्शितवान् ।

**अथेति ।** तद्वाचनानन्तरं यथाज्ञापयति यथाज्ञां दत्ते तातः पिता । इत्युक्त्वा तथैव पूर्ववदेव तुरगाधिरूढः प्रयाणपटहं प्रयाणभेरीमदापयद्दापितवान् । समीपे स्थितं महताश्वीयेन बलेन परिवृतं महाबलं सैन्यं तत्राधिकृतं नियुक्तं बलाहकस्य पुत्रं मेघनादनामानमादिदेशादिष्टवान् । भवता त्वया पत्रलेखया सहागन्तव्यं समेतव्यम् । नियतं निश्चितं केयूरकस्तां पत्रलेखामादाय गृहीत्वैतावतीं भूमिभागमिष्यतीति[3] तन्मुखेन केयूरकमुखेन प्रणम्य देवी कादम्बरी विज्ञाप्या विज्ञप्तिविषयीकरणीया । नन्विति वितर्के । तेषां मर्त्यानां या निरनुरोधा निर्गतः कस्याप्यनुरोधः स्वकार्यप्रतिबन्धो यस्यां, निर्गतः परि[4]चयः संख्यानुवृत्तिर्यस्याम् । **दुर्ग्रहेति ।** दुर्दुष्टो ग्रह आग्रहो हठो यस्यामेवंविधा प्रकृतिः स्वभावः सा प्रकृतिस्त्रिभुवननिन्दनीया स्यात् यत्तदोर्नित्याभिसंबन्धाद्येषां मर्त्यानामकाण्डेऽप्रस्तावे विसंवादिन्यो व्यभिचारिण्यः प्रीतयो निष्कारणवत्सलतां निर्निमित्तहितकारितां न गणयन्ति न मनस्यानयन्ति । एवममुना प्रकारेण गच्छता व्रजता मयात्मनः स्नेहः स्वकीया प्रीतिः क[5]पटं कैतवं तस्य कूटजालिका मिथ्याप्रपञ्चस्तद्रूपतां नीतः प्रापितः । भक्तिराराध्यत्वेन ज्ञानं वा साप्यलीका मिथ्या या

---

**टिप्प०**—1 परमवाहेश्वरटीकाकारो न जानाति यत् 'किं नु' इत्यस्य किं स्वारस्यम् । अस्तु 'किन्तु' इत्येव पाठः । 'सर्वं कुशलं किन्तु····' इति तदर्थः । 2 वाचनावसानं न कारणम्, अतः 'प्रयाणकालताम्' इत्येव पाठः । 3 इति शब्दोत्र नोचितः । 4 परिज्ञानम् । 5 कपटः ( कपटकारी ) यः कूटजालिकः असत्यव्यवहारवान् तद्भावस्ताम् ।

---

**पाठा०**—१ भवतोत्कृष्टस्य गतः; भवतो गतस्य. २ देवीसमेतं नो हृदयम्. ३ यतस्ततः. ४ अविरतिरेव. ५ प्रयाणकालताम्; प्रयाणकालता. ६ कल्याणिना नेतव्या. ७ अवादयत्. ८ समीपस्थितम्, समीपावस्थितम्. ९ महता श्वेताश्वीयेन.

ताम्, प्रापिता भक्तिरलीककाकुकरणकुशलताम्, पातितमुपचारमात्रमधुरं[1] धूर्ततायामात्मार्पणम्[2], प्रकटितं वाङ्मनसयोर्भिन्नार्थत्वम् । आस्तां तावदात्मा । अस्थानाहितप्रसादा दिव्ययोग्या देव्यपि वक्तव्यतां नीता । जनयन्ति हि पश्चाद्वैलक्ष्यमभूमिपातिता व्यर्थाः प्रसादामृतदृष्टयो[3] महताम् । न खलु तथा देवीं प्रति प्रबलज्ज्जातिभारमन्थरं मे हृदयं यथा महाश्वेतां प्रति । नियतमेनामलीकाध्यारोपणवर्णितासद्गुणसंभारामस्थानपक्षपातिनीमसकृदुपालप्स्यते देवी । तत्किं करोमि ? गरीयसी गुरोराज्ञा प्रभवति देहमात्रकस्य[4] । हृदयेन हेमकूटनिवासव्यसनिना लिखितं जन्मान्तरसहस्रस्य दास्यपत्रं देव्या[5] हस्ते न दत्तमस्याः । दविकगौल्मिकेनेव देवीप्रसादेन गन्तुं सर्वथा गतोऽस्मि पितुरादेशादुज्जयिनीम् । प्रसङ्गतो[6]

---

काकुर्वक्रोक्तिस्तस्याः करणे कुशलतां दक्षतां प्रापिता । उपचारो बाह्यविनयस्तन्मात्रेण मधुरं मिष्टमात्मार्पणं भवदीयोऽहमिति स्वस्यार्पणं धूर्ततायां पातितं क्षिप्तम् । **वाङ्मनसयोरिति** । 'अचतुर–' इत्यादिना निपातः । भिन्नार्थत्वं विसंवादित्वं प्रकटितमाविष्कृतम् । तावदादावात्मास्तां तिष्ठतु । ममेति शेषः । अस्थानेऽयोग्य आहितः स्थापितः प्रसादो ययात एवाह—दिव्यानां योग्योचितैवंविधा देव्यपि कादम्बर्यपि दूरदेशागतेन चन्द्रापीडेन कारणं विना कथं सख्यं प्राप्तेति वक्तव्यतां वचनीयतां नीता प्रापिता । मयेति शेषः । हि यस्मात्कारणादभूमिपातिता अस्थानपातिता व्यर्था निष्फलाः प्रसादामृतदृष्टयः प्रसन्नतापीयूषदृशः पश्चान्महतां वैलक्ष्यं जनयन्त्युत्पादयन्ति । स्थानविशेषे प्रीतिविशेषं प्रदर्शयन्नाह—**न खल्विति** । खलु निश्चये । न तथा देवीं प्रति कादम्बरीं प्रति प्रबला प्रकृष्टा या लज्जा त्रपा तस्या अतिभारोऽतिवीवधस्तेन मन्थरमलसं मे मम हृदयं चेतो यथा महाश्वेतां प्रति वर्तते । नियतं निश्चितमलीकाध्यारोपेण वर्णितः स्तुतोऽसद्गुणसंभारो यया तामस्थानेऽनुचितस्थले पक्षपातो विद्यते यस्या एवंविधामेनां महाश्वेतां देवी कादम्बर्यसकृद्वारंवारमुपालप्स्यते । उपालम्भं दास्यतीत्यर्थः । तत्किं करोमि । कोप्युपायो नास्तीत्यर्थः । अस्मिन्नर्थे हेतुं प्रदर्शयन्नाह—**गरीयसीति** । देहमात्रकस्य शरीरमात्रधारिणो गुरोराज्ञा निदेशो गरीयसी गरिष्ठा प्रभवति जायते । **हेमेति** । हेमकूटे निवासस्तद्व्यसनिना हृदयेन चित्तेन जन्मान्तरसहस्रस्य दास्यपत्रं लिखितमस्या देव्या हस्तेन दत्तम् । पितुरादेशाज्जनकनियोगादुज्जयिनीं गन्तुं सर्वथाहं गतोऽस्मि । केन । देवीप्रसादेन । कादम्बर्या माहात्म्येनेत्यर्थः । देवयोनित्वात्तस्या इति भावः । केनेव । दविकगौल्मिकेनेव वनेचरसमूहेनेव । सोऽपि देवी उपोदकी तदनुरोधेनैव

---

**टिप्प०**—1 लज्जाम् । 2 पुनः सर्वं मूलपाठं विनाश्य विरूपीकृतो ग्रन्थः । कियत्परिशोच्यतामनधिकारी । अस्तु. अत्रत्यं मूलं विलिख्य आवश्यकोर्थः सूच्यते । 'हृदयेन तु हेमकूटनिवासव्यसनिना लिखितं जन्मान्तरसहस्रस्य दास्यपत्रं देव्याः । न दत्तमस्याटविकस्य गौल्मिकेनेव देवीप्रसादेन गन्तुम्, सर्वथा गतोस्मि पितुरादेशादुज्जयिनीम् । प्रसङ्गतोऽसजनकथाकीर्तनेषु स्मर्तव्यश्चन्द्रापीडचण्डालः । मा चैवं मंस्थाः'''इति पाठः । टीका—तर्हि किं देवीं (कादम्बरीम्) सर्वथा विस्मृतवानेव, अत आह—गुरोः (पितुः) आज्ञा देहमात्रकस्य केवलं देहस्य प्रभवति, तज्जनितत्वात् । अत एव हि कुत्सासूचकः कप्रत्ययः । अतः केवलं देहमुज्जयिनीं नयामि । हृदयस्य तु हेमकूटनिवासो व्यसनतया परिणतः । अत एतादृशेन हृदयेन तु (कर्त्रा) नास्यैव जन्मनः कृते, अपि तु जन्मान्तरसहस्रस्य दास्यपत्रं लिखित्वा देव्याः समीपे दत्तम् (अतो हृदयं तन्निकटे स्थास्यति) । विस्मरणाभावे अन्यदपि कारणमाह–गौल्मिकेन सेनाधिकृतेन आटविकस्य वनचरस्येव, देव्याः (कादम्बर्याः) प्रसादेन अस्य (अर्थात् मद्रूपस्य जनस्य) गन्तुं न दत्तम्, सेनाध्यक्षो यथा चपलं वनेचरं नियमयति तथा देव्या अनुग्रहो मामपीत्यर्थः । किन्तु केवलं पितुरादेशाद्देहमात्रेणोज्जयिनीं गतोस्मि ।

---

**पाठा०**—१ पातितमुपचारमधुरम्; प्रकाशितमुपचारमात्रमधुरम्. २ धूर्ततयात्मार्पणम्. ३ वृष्टयः. ४ देवमात्रस्य, हि देवमात्रकस्य. ५ देव्या न दत्तमस्याटविकस्य गौल्मिकेनेव. ६ असंगत.

जनकथाकीर्तनेषु[1] स्मर्तव्यः खलु चन्द्रापीडः[2]। चण्डालो मा चैवं मंस्थाः, यथा जीवन्पुनर्देवीचरणारविन्दवन्दनानन्दमननुभूय स्थास्यति चन्द्रापीड इति। महाश्वेतायाश्च सप्रदक्षिणं शिरसा पादौ वन्दनीयौ। मदलेखायाश्च कथनीयः प्रणामपूर्वमशिथिलः कण्ठग्रहः। गाढमालिङ्गनीया च तमालिका। अस्मद्वचनादशेषः प्रष्टव्यः कुशलं कादम्बरीपरिजनः, रचिताञ्जलिना च भगवानामन्त्रणीयो हेमकूटः' इति। एवमादिश्य तम्, 'सुहृदादिसाधनम्[3]क्लेशयता शनैः शनैर्गन्तव्यम्[4]' इत्युक्त्वा वैशम्पायनं स्कन्धावारभरे न्ययुङ्क्त। स्वयमपि च तथारूढ एव गमनहेलाहर्षहेषारवकम्पितकैलासेन खुरताण्डवखण्डितभुवा[5] कान्तकुन्तलतावनवाहिना तरुणतुरगप्रायेणाश्वसैन्येनानुगम्यमानस्तमेव लेखहारकं पर्याणलग्नमभिनवकादम्बरीवियोगशून्येनापि हृदयेनोज्जयिनीमार्गं[6] पृच्छन्प्रतस्थे।

क्रमेण चातिप्रवृद्धप्रकाण्डपादपप्रायया, मालिनीलतामण्डपैर्मण्डलिततरुखण्डया, वनगज-

---

गच्छति। तथा प्रसङ्गतो जनकथा सौव(सेव्य)सेवककथा तस्यां कीर्तनेषु नामोच्चारणेषु खलु निश्चयेन चन्द्रापीडः स्मर्तव्यः स्मरणीयः। अयं चण्डालः कृतघ्नत्वादेवं मा मंस्था मा जानीयाः। यथा जीवन्पुनश्चन्द्रापीडो देव्याः कादम्बर्याश्चरणारविन्दस्याङ्घ्रिपद्मस्य वन्दनं नमस्करणं तस्माद्य आनन्दः प्रमोदस्तमननुभूयानुभवविषयीकृत्य स्थास्यति। अत्र काकुः। न स्थास्यतीत्यर्थः। इति महाश्वेतायाश्च सप्रदक्षिणं प्रदक्षिणासहितं यथा स्यात्तथा शिरसा मस्तकेन पादौ वन्दनीयौ नमस्करणीयौ। तथा मदलेखायाश्च प्रणामो नमस्कारस्तत्पूर्वकमशिथिलः कण्ठग्रहः कथनीयो वाच्यः। तथा गाढमत्यर्थमालिङ्गनीया परिरम्भणीया च तमालिका। अशेषः समग्रः कादम्बरीपरिजनोऽस्मद्वचनात्कुशलं श्रेयः प्रष्टव्यः। रचिताञ्जलिना च त्वया भगवान्हेमकूटः ना(आ)मन्त्रणीय आमन्त्रणीय इति पूर्वोक्तया दिशादिश्यादेशं दत्त्वा तं मेघनादम्, सुहृदादिसाधनं मित्रादिसैन्यमक्लेशयता खेदयता त्वया शनैः शनैर्गन्तव्यमित्युक्त्वा वैशम्पायनं स्कन्धावारभरे न्ययुङ्क्त नियोजितवान्। स्वयमपि च तथा पूर्वोक्तप्रकारेणारूढ एव गमनलक्षणा या हेला तया हर्षः तस्य हेषारवस्तेन कम्पितः कैलासो येन। **खुरेति**। खुरताण्डवेन खण्डिता भूर्येन स तेन। **कान्तेति**। कान्ता मनोहरा ये कुन्ता भल्लाः सरलत्वसाम्यात्त एव लतास्तासां वनं तद्वाहिना। **तरुण इति**। तरुणा नव्यास्तुरगाः प्रायेण बाहुल्येन यस्मिन्नेवंविधेनाश्वसैन्येनानुगम्यमानस्तमेव पूर्वोक्तमेव लेखहारकं पर्याणं पल्ययनं तत्र लग्नम्। **अभीति**। अभिनवः प्रत्यग्रो यः कादम्बरीवियोगस्तेन शून्येनापि हृदयेनोज्जयिनीमार्गं पृच्छन्प्रतस्थे चचाल।

**क्रमेण चेति**। स चन्द्रापीडः क्रमेण परिपाट्या शून्ययाऽटव्या दिवसं गत्वा वासरमतिक्रम्य। **परीति**। परिणतं रक्तं रविबिम्बं यस्मिन्नेवंभूते वासरे सायंसमयेऽटवीक्षेत्रैर्विरलीकृतो यो वनप्रदेशस्तस्मिन्। **चिरेति**। चिरप्ररूढस्य। बहुकालीनस्येत्यर्थः। रक्तचन्दनतरोः पत्राङ्गवृक्षस्योपरि महान्तं रक्तध्वजं पुरत एव ददर्शेत्यन्वयः। इतोऽटव्या विशेषणानि—**अतीति**। अतिप्रवृद्धोऽतिवृद्धिं प्राप्तः प्रकाण्डः स्कन्धो येषामेतादृशाः पादपा वृक्षाः प्रायो बाहुल्येन यस्यां सा तया। **मालीति**। मालिनीसंज्ञिता या लता वल्ल्यस्तासां मण्डपैर्मण्डलिताश्चक्रवालितास्तरुखण्डा वृक्षसमूहा यस्यां सा तया। **वनेति**। वनस्य यो गजपतिर्यूथनाथस्तेन पातिता भग्ना ये पादपा वृक्षास्तेषां परिहारो वर्जनं तन्निमित्तकप्रतिबन्धवशाद्वक्रीकृतो मार्गः पन्था

---

पाठा०—१ असज्जन. २ चन्द्रापीडचण्डालः. ३ सुहृदापि साधनम्. ४ आगन्तव्यम्. ५ भूमण्डलेन. ६ वार्ताम्.

पतिपातितपादपपरिहारवक्रीकृतमार्गया[1], जनजनिततृणपर्णकाष्ठकोटिकूटप्रकटितवीरपुरुषघात[2]-स्थानया, महापादपमूलोत्कीर्णकान्तारदुर्गया, तृषितपथिकखण्डितदलोज्झितामलकीफलनिकरया, विकसितकर[3]ञ्जमञ्जरीरजोविच्छुरिततटैस्तटतरुबद्धपटच्चर[4]कर्पटध्वजचिह्नैरिष्टिकास्थित-शुष्कपल्लवविष्टरानुमितपथिकविश्रामैर्विश्रान्तकार्पटिक[6]विस्फोटितधूलिधूसरकिसलयलाञ्छितोपकण्ठैः पत्रसंकरासुरभीकृताशिशिरपङ्किलविवर्णास्वादुजलैर्व्रततिग्रन्थिग्रथितपर्णपुटतृण[7]पूलीचिह्नानुमेयैर्जरत्कान्तारकूपैरसुलभसलिलतयानभिलषितोद्देशया, मधुबिन्दुस्यन्दिसिन्दुवारवनराजिरजोधूसरिततीराभिश्च कु[8]ञ्जकलताजालकैर्जटिलीकृतसैकताभिरध्वगोत्खातवालुकाकूप-

---

यस्यां सा तया । **जनेनेति** । जनेन लोकेन जनितं निष्पादितं यत्तृ[1]णं पर्णकाष्ठानां कोटी तस्याः कूटं शिखरं तादृशचिह्नेन प्रकटितं वीरपुरुषाणां घातस्थानं यस्यां सा तया । सांप्रतमपि तथा कुर्वन्तीति सर्वलोके प्रसिद्धम् । **महेति** । महापादपानामुच्चैस्तरवृक्षाणां मूला[2]नि प्रसिद्धान्युत्कीर्णानि यस्मिन्नेवंभूतं कान्तारं वनं तदेव विषमत्वाद्दुर्गं यस्यां सा तया । कान्तारं विशेषरूपम्, अटवी तु सामान्यरूपेति न पुनरुक्तदोषः । **तृषितेति** । तृषिताः पिपासिता ये पथिकजनास्तैः खण्डितानि द्वैधीकृतानि दलानि पत्राणि येषामेवंविधान्युज्झितानि रसास्वादानन्तरं त्यक्तान्यामलकीफलानि तेषां निकरः समूहो यस्यां सा तया । **जरमिति** । जरन्तो जीर्णा ये कान्तारकूपास्तैः कृत्वा न सुलभं सलिलं जलं यस्यां तस्या भावस्तत्ता तयानभिलषितो नेप्सितः । पान्थेनेति शेषः । उद्देशः प्रदेशो यस्याः सा तया । अथ कान्तारकूपान्विशिनष्टि—**विकसितेति** । विकसिता विनिद्रा ये करञ्जा नक्तमालास्तेषां मञ्जर्यस्तासां रजोभिः परागैर्विच्छुरितानि धूसरितानि तटानि कूपोपकण्ठा येषां तैः । **तटेति** । तटतरुषु कूपोपकण्ठसमुद्भववृक्षेषु बद्धाः पटच्च[3]रैर्श्चीरैः कर्पटध्वजः स एव कूपाभिव्यञ्जकं चिह्नं येषां तैः । **इष्टिकेति** । इष्टि[4]काः स्थिता येषु, शुष्कपल्लवविष्टराः संस्तारकास्तैरनुमिताः पथिकानां विश्रामा येषु तैः । **विश्रान्तेति** । विश्रान्ताः स्थिता ये कार्पटिकास्तैर्विस्फोटिता दूरीकृता या धूली रजस्तया धूसराणि मलिनानि किसलयानि पल्लवास्तैर्लाञ्छितश्चिह्नित उपकण्ठो येषां तैः । **पत्रेति** । पत्रसंकरैः पर्णसमूहैरसुरभीकृतान्यत एवाशिशिराण्यशीतलानि पङ्किलानि कर्दमयुक्तानि विवर्णान्यशुभवर्णान्यस्वादूनि स्वादु(द)रहितानि जलानि येषां तैः । **व्रततीति** । व्रततीनां वल्लीनां ग्रन्थिभिर्ग्रथिताः पर्णपुटयु[5]क्तास्तृणपूल्यस्ता एव चिह्नानि तैरनुमातुं योग्यैः । **शुष्केति** । शुष्का गिरीणां नद्य एव नदिकाः । स्वार्थे कः । 'केऽणः' इति ह्रस्वः । ताभिर्विषमीकृ[6]तं स्थपुटीकृमन्तरालं मध्यं यस्याः सा तया । अथ नदिका विशेषयन्नाह—**मध्विति** । मधुबिन्दुस्यन्दीनि यानि सिन्दुवारवनानि निर्गुण्डीकाननानि तेषां राजिः पङ्क्तिस्तस्या रजः परागस्तेन धूसरितानि तीराणि तटानि यासां ताभिः । **कुञ्जेति** । कुञ्जक[7]लताः प्रसिद्धास्तासां जालकैर्जटिलीकृतानि सैकतानि जलोज्झितपुलिनानि यासां ताभिः । **अध्वगैरिति** । अध्वगैः पथिकैरुत्खाताः खनिता वालुकासु कूपका विदारकास्तेषूपलभ्यमानं प्राप्यमाणं कलुषं

---

टिप्प०—1 तृण-पर्ण-काष्ठानां कोटिसंख्यका ये कूटाः तैः प्रकटितं वीरपुरुषाणामपि घातस्थानं यस्यां सा । वीरायिता अपि पान्थजनाः हिंस्रजन्तुभ्यो निजरक्षणार्थं तृणकाष्ठादीनां कूटं कृत्वा तन्मध्ये प्रविश्य निशि निवसन्तीति भयङ्करत्वं सूच्यते । 2 'मूलेषु उत्कीर्णाः निस्तक्ष्य निर्मिताः कान्तारदुर्गा वनदुर्गा मूर्तयो यस्याम्' इति केचित् । 3 बद्धा ये पटच्चराणां जीर्णवस्त्राणां कर्पटा वस्त्रखण्डास्त एव ध्वजचिह्नं येषामित्यर्थः । 'पटच्चरं जीर्णवस्त्र'मित्यमरः । 4 इष्टकासु स्थिता ये शुष्कपल्लवानां विष्टराः (उपवेशनार्थमास्तरणानि) तैः अनुमिताः । 5 तृषिताः पथिका रज्ज्वाः पात्रस्य चाभावे, तृणैर्गुरुभारां पूलीं निर्माय तत्र च पत्रपुटकं दृढमाधाय दीर्घलताभिर्बध्वा पत्रपुटकैर्जलमुदञ्चन्तीति युक्तिः । 6 उच्चावचीकृतम्, प्रावृड्जलप्रवाहे तलदेशो नतोन्नतो भवतीत्यर्थः । 7 क्षुद्रकुञ्जरूपेण जटिलीभूता लताः ।

---

पाठा०—१ पथया. २ वीरपुरुषहृदयघात. ३ कपिकच्छूच्छुरितमञ्जरी. ४ जरत्कर्पट. ५ इष्टकास्थित, इष्टकचित. ६ प्रस्फोटितचरण; प्रस्फुटित. ७ तृणपुली; तृणोलुपपुलाक. ८ अनुमितप्रमेयैः. ९ कुब्जक.

कोपलभ्यमानकलुषस्वल्पसलिलाभिः शुष्कगिरिनदिकाभिर्विषमीकृतान्तरालया, कुक्कुटकुलकौलेयकरटितानुमीयमानगुल्मगहनग्रा[1]मटिकया, शून्यया दिवसमटव्या गत्वा, प[2]रिणतरविबिम्बे बि[3]म्बारुणातपविसरे वासरे, निः[4]शाखीकृतकदम्बशाल्मलीपलाशबहुलैः शिखरशेषैकपल्लवविडम्बितातपत्रैः पादपैरू[5]र्ध्वस्थितप्ररोहस्थूलस्थाणुमूलग्रन्थिजटिलैश्च हरितालकपिलपक्ववेणुविट[6]परचितवृतिभिर्मृगभयकृततृणपुरुषकैर्विपाकपाण्डुभिः फ[7]लिनैः प्रियङ्गुप्रायैरटवीक्षेत्रैर्विरलीकृतवनप्रदेशे चि[8]त्रप्ररूढस्य र[9]क्तचन्दनतरोरुपरि बद्धम्, सरसपिशितपिण्डनिभैरलक्तकैरभिनवशोणितारुणेन रक्तचन्दनरसेन चा[10]र्द्रम्, जिह्वालतालोहिनीभी रक्तपताकाभिः केशकलापकान्तिना च कृष्णचामरावचूलेन प्रत्यग्रविशसितानां जीवानामिवावयवैरुपचितदण्डमण्डनम्,

---

मलिनं स्वल्पं स्तोकं सलिलं जलं यासु ताभिः । **कुक्कुटेति** । कुक्कुटकुलं ताम्रचूडवंशः, कौलेयकाः श्वानः तेषां रटितं शब्दितं तेनानुमीयमाना संभाव्यमाना गुल्मगहने ग्रामटिका क्षुद्रग्रामो यस्यां सा तया । अथ वासरं विशिनष्टि—**बिम्बेति** । बिम्बसंब[1]न्धि योऽरुणो रक्त आतपः सूर्यालोकस्तस्य विसरः समूहो यस्मिन् । 'समुदायराशिविसरव्राताः कलापो व्रजः' इति कोशः । तथैवंविधैः पादपैरटवीक्षेत्रैश्च विरलीकृतोऽनिबिडीकृतो यो वनप्रदेशो वनैकदेशस्तस्मिन् । अथ पादपान्विशिनष्टि—**निःशाखीति** । निःशाखीकृता निःशालीकृताः । वनेचरैरिति शेषः । एवंविधाः कदम्बा नीपाः शाल्मल्यो वृक्षविशेषाः, पलाशा ब्रह्मपादपा बहुला बाहुल्येन येषु तैः । अनेन सरलत्वाद्दण्डरूपत्वं सूचितम् । **शिखरेति** । शिखरं वृक्षाग्रं तत्र शेषोऽव[2]शिष्ट एकः पल्लवः किसलयं तेन विडम्बितान्यातपत्राणि छत्राणि यैः । अथ क्षेत्राणि विशेषयन्नाह—**ऊर्ध्वेति** । ऊर्ध्वस्थिताः प्ररोहा नवीनाङ्कुराः[3] स्थूलाः स्थाणवः शङ्कवश्च तेषां मूलग्रन्थिभिरङ्घ्रिग्रन्थिभिर्जटिलैर्व्याप्तैः । हरितालं नटमण्डनं तद्वत्कपिलाः पिङ्गला ये पक्ववेणुविट[4]पाः परिणतवंशवृक्षास्तेषां रचिता वृतिः सुगहना येषां तैः । **मृगेति** । मृगा हरिणास्ते[5]भ्यो भयं भीतिस्तस्मात्कृतास्तृणपुरुषाश्चञ्चापुरुषा येषु तैः । **विपाकेति** । विपाकेन परिणत्या पाण्डुभिः पाण्डुरैः । फलिनैः फलवद्भिः । 'फलवान्फलिनः फली' इति कोशः । प्रियङ्गुः श्यामा प्रायो बाहुल्येन येषु तैः । **सरसेति** । सरसोऽशुष्को यः पिशितपिण्डो मांसपिण्डस्तस्य निभैः सदृशैरलक्तकैर्यावकैः । तथाभिनवं प्रत्यग्रं यच्छोणितं रक्तं तद्वदरुणेन लोहितेन रक्तचन्दनं पत्राङ्गं तस्य रसेन चार्द्रं समुन्नम् । **जिह्वेति** । जिह्वा ए[6]व लता तद्वल्लोहिनीभी रक्ताभी रक्तापताकाभिर्लोहितवैजयन्तीभिः । **केशेति** । केशकलापवत्कान्तिर्यस्यैवंभूतेन कृष्णचामरस्य श्यामवालव्यजनस्यावचूलेनाधोमुखकूर्चकेन, प्रत्यग्रं तत्कालं विशसितानां हतानां जीवानामवयवैरपघनैरिवोप[7]-

---

टिप्प०—1 वासरे, बिम्बफलवत् अरुण आतपविसरो यस्मिन् एवंविधे सति । 2 शेषा एकैके (अर्थात् विरलीभूताः, गुच्छकीभूताः) ये पल्लवाः तैर्विडम्बितानि । कदम्बादीनामेकपत्रेणातपत्रत्वं न सिध्यति । 3 ऊर्ध्वस्थिता नवीनाङ्कुरा येषां ते, तादृशा ये स्थूलाः स्थाणवः निःशाखास्तरुस्तम्बाः तेषां मूलग्रन्थिभिः । 4 शाखाः । शाखार्थके विटपपदे सर्वत्र 'विटपि' भ्रमं तनुते भाग्यशाली । 5 तेषां भयाय ( मृगाः रक्षापुरुषान् ज्ञात्वा भयेन नागच्छेयुरिति ) । 6 जिह्वा लता इव तद्वल्लोहिनीभिरिति उपमितसमास एवोचितः, जिह्वाप्राधान्ये एव तासां लोहितत्वं वक्तुं शक्यम् । 7 जीवानामवयवैः उपरचितं दण्डस्य ( केतुदण्डस्य ) मण्डनं भूषणं यस्य तमिव, इत्येवम् 'इव'शब्दस्यान्वयो योग्यः, पताकानां जिह्वातुल्यत्वात् कृष्णचामरस्य केशसदृशत्वादित्याशयः ।

---

पाठा०—१ ग्रामया; ग्रामटिकया. २ परिणते रविबिम्बे. ३ संध्यारुणा. ४ निःशाखीकृतैः. ५ ऊर्ध्वीकृतप्ररोहस्थूलस्थितस्थाणुमूलग्रन्थिजटिलैः; अर्धोद्धृतप्ररोहन्मूलस्थूलस्थाणुग्रन्थिजटिलैः. ६ विटपिदलरचित; विटपदलविरचित; विटपपटलरचित. ७ फलितैः. ८ दूरत एवाचिरप्ररूढस्य. ९ रक्तचन्द्रनस्य तरोः. १० आर्द्रजिह्वा.

परिणतवराटकघटितबुद्बुदार्धचन्द्रखण्डखचितम् सुतमहिषरक्षणावतीर्णदिनकरावतारितशशिनेव विराजितशिखरम्, दोलायितशृङ्गसङ्गिलोहशृङ्खलावलम्बमानघर्घररवघोरघण्टया च घटितकेसरिसटारुचिरचामरया काञ्चनत्रिशूलिकया लिखितनभस्तलम्, इतस्ततः पथिकपुरुषोपहारमार्गमिवालोकयन्तम्, महान्तं रक्तध्वजं दूरत एव ददर्श ।

तदभिमुखश्च किंचिदध्वानं गत्वा केतकीसूचिखण्डपाण्डुरेण वनद्विरददन्तकवाटेन परिवृताम्, लोहतोरणेन नवारक्तचामरावलिपरिकरां कालायसदर्पणमण्डलमालां शवरमुखमालामिव कपिलकेशभीषणां बिभ्राणेन सनाथीकृतद्वारदेशाम्, अभिमुखप्रतिष्ठितेन च विनिहितरक्तचन्दनहस्तकतया रुधिरारुणयमकरतलास्फालितेनेव शोणितनवलोभलोलशिवाविलि-

---

चितो व्याप्तो यो दण्डः स एव मण्डनं यस्य स तम्। **परीति**। परिणताः पक्का ये वराटकाः कपर्दकास्तेषां (तैः) घटिता निर्मिता ये बुद्बुदाः स्थासका अर्धचन्द्राकृतिखण्डाश्च तैः खचितं व्याप्तम् । वर्तुलत्ववक्रत्वसाम्यादुत्प्रेक्षते—**सुतेति** । सुतो यमस्तस्य महिषो रक्ताक्षस्तस्य रक्षणं त्राणं तदर्थमवतीर्णो यो दिनकरः सूर्यस्तेनावतारितो यः शशी तेनेव विराजितं शोभितं शिखरमग्रभागो यस्य स तम् । **दोलेति** । दोलायिता या शृङ्गसङ्गिनी लोहशृङ्खला तत्रावलम्बमाना घर्घररवा काहलस्वरा घोरा भीषणा घण्टा यस्यां सा तया । **घटितेति** । घटिता या केसरिसटा तद्वद्रुचिराणि मनोहराणि चामराणि यस्यामेवंविधया काञ्चनत्रिशूलिकया लिखितं नभस्तलं येन स तम् । **इतस्तत इति** । इतस्ततः पथिकपुरुषाणामध्वनीनपुंसामुपहारमार्गमिव बलिपन्थानमिवालोकयन्तं पश्यन्तम् । अन्वयस्तु प्रागेवोक्तः ।

**तदिति** । तस्याभिमुखस्तत्संमुखः किंचिदध्वानं मार्गं गत्वाऽकारणक्रोधादयो द्रविडधर्मास्तद्वता जरीयसा पुरुषेणाधिष्ठितामाश्रितां चण्डिकामपश्यदित्यन्वयः । अथ चण्डिकां विशिनष्टि—**केतकीति** । केतक्या या सूचिस्त्रिपत्रकम् । 'त्रिपत्रकः सूचिरित्यभिधीयते' इत्यमरः । तस्य खण्डास्तद्वत्पाण्डुरेण शुभ्रेण, वनद्विरदा अरण्यहस्तिनस्तेषां दन्ता रदनास्तेषां कपाटेन लोकभाषया कटहरेण दन्तानिर्मितकपाटेन वा चतुर्दिक्षु परिवृताम् । आवृतामित्यर्थः । **लोहिते** । लोहमयं यत्तोरणं तेन सनाथीकृतो द्वारदेशो यस्यास्ताम् । किं कुर्वता तोरणेन । बिभ्राणेन दधता । काम् । कालायसं लोहविशेषस्तस्य यानि दर्पणमण्डलानि तन्मयी या माला वन्दनमाला ताम् । कीदृशम् । **नवेति** । नवानि यान्यारक्तचामराणि तेषामावलिः पङ्क्तिः सैव परिकरो यस्याम् । अत्र कालायसदर्पणस्यातिश्यामत्वाच्चामरस्यातिरक्तत्वाच्च तत्साम्येनोत्प्रेक्षते—**शवरेति** । कपिलकेशभीषणां शवरमुखमालामिव । तेषां तु मुखानि श्यामानि, केशाश्च पिङ्गाः । अत उपमानोपमेयसाम्यम् । **अभीति** । अभिमुखं संमुखम् । चण्डिकाया इति शेषः । प्रतिष्ठितेन स्थापितेन लोहमहिषेणाध्यासिताश्रिताञ्जनशिलावेदिका यस्याः सा ताम् । **विनीति** । विनिहिता दत्ता ये रक्तचन्दनहस्तकास्तेषां भावस्तत्ता तया रुधिरेणारुणं यद्यमकरतलं युग्मपाणितलं तेनास्फालितेनेव, लोचनयोरतिलौहित्यवशाद्रुधिरभ्रमेणाह—**शोणितेति** । शोणितस्य रुधिरस्य नवः प्रत्यग्रो लोभस्तेन लोला या शिवा जम्बुकप्रिया तया

---

टिप्प०—1 वस्तुतस्तु बुद्बुदवत् ( बुद्बुदसमानः पीनो मध्यभागो यस्य ) यः अर्धचन्द्रखण्डः ( अर्धचन्द्राकारं भूषणम् ) तेन खचितम् । चन्द्रखण्डे एकत्वमेवोचितं यतो ह्यग्रे उत्प्रेक्षते—सुतमहिषस्य रक्षणार्थमवतीर्णेन दिनकरेण स्वसहचरश्चन्द्रोऽप्यवतारित इति । चण्डिकागृहे प्रत्यहं पशुबलयो दीयन्ते तदर्थं यमः संनिहितः । एवं बलिव्याकुलतायां पशुबुद्ध्या मा केनचित् यममहिषो विहन्यतामिति सुतस्नेहेन सूर्योऽवतीर्ण इत्युत्प्रेक्षाशयः । 2 त्रिशूलिकाया एव एकं शृङ्गम् तद्बद्धा । 3 घटितं संयोजितं केसरिसटावत् चामरं यत्र तया । मौलिकलशलम्बिते त्रिशूले चामरोपि लम्ब्यते । 4 'शोणितलववलोभ' इत्येव कवेरभीष्टः पाठः । शोणितलव(लेश)स्य लोभ इति तदर्थः ।

---

पाठा०—१ परिणद्ध; हाटकघटितबुद्बुदपुटार्धचन्द्र. २ लोहशृङ्खलमाला. ३ केतकीसूचितखण्डपाण्डुना च. ४ कपाटेन. ५ रक्तचन्दननिहित. ६ शोणितलवलोभ; शोणितलोभ. ७ शिवालिह्यमान.

ह्यमानलोहितलोचनेन लोहमहिषेणाध्यासिताञ्जनशिलावेदिकाम्, क्वचिद्रक्तोत्पलैः शबरनिपातितानां वनमहिषाणामिव लोचनैः क्वचिदगस्तिकुड्मलैः केसरिणामिव करजैः क्वचित्किंशुककुसुमकुड्मलैः शार्दूलानामिव सरुधिरैर्नखरैः कृतपुण्यपुष्पप्रकराम्, अन्यत्राङ्कुरितामिव कुटिलहरिणविषाणकोटिकूटैः पल्लवितामिव सरसजिह्वाच्छेदशतैः कुसुमितामिव रक्तनयनसहस्रैः फलितामिव मुण्डमण्डलैः उपहारहिंसां दर्शयन्तीम्, शाखान्तरालनिलीनरक्तकुक्कुटकुलैः श्वभयादकालदर्शितकुसुमस्तबकैरिव रक्ताशोकविटपैर्विभूषिताङ्गणाम्, बलिरुधिरपानतृष्णया समागतैश्च वेतालैरिव तालैर्दीयमानफलमुण्डोपहाराम्, शङ्काज्वरकम्पितैरिव कदलिकावनैर्भयोत्कण्टकितैरिव श्रीफलतरुखण्डैस्त्रासोर्ध्वकेशैरिव खर्जूरवनैः समन्ताद्गहनीकृताम्, वनकरिकुम्भविदलितरक्तमुक्ताफलानि रुधिरारुणानि बलिसिक्थलुब्धमुग्धकृकवाकुग्रस्तमुक्तानि विकिरद्भिरम्बिकापरिग्रहदुर्ललितैः क्रीडद्भिः केसरिकिशोरकैरशून्योद्देशाम्, प्रभूतरुधिरदर्शनोद्भूतमूर्च्छाप-

---

विलिह्यमाने आस्वाद्यमाने लोहिते लोचने नेत्रे यस्य स तेन। **क्वचिदिति।** कस्मिंश्चित्प्रदेशे शबरनिपातितानां भिल्लव्यापादितानां वनमहिषाणां लोचनैरिव नेत्रैरिव रक्तोत्पलैः कोकनदैः। क्वचित्केसरिणां कण्ठीरवाणां करजैर्नखैरिवागस्तिकुड्मलैर्मुनिवृक्षमुकुलैः। **क्वचिदिति।** क्वचिच्छार्दूलानां द्वीपिनां सरुधिरैर्नखैरिव किंशुको ब्रह्मपादपस्तस्य कुसुमकुड्मलैः कृतो विहितः पुण्यः पवित्रः पुष्पप्रकरो यस्यां सा ताम्। **अन्यत्रेति।** अन्यस्मिन्स्थले कुटिलानि वक्राणि हरिणविषाणानि मृगशृङ्गाणि तेषां कोटयस्तासां कूटैः समूहैरङ्कुरितामिव प्ररोहितामिव। **सरसेति।** सरसा या जिह्वा रसनास्तासां छेदशतैः पल्लवितामिव किसलयितामिव। **रक्तेति।** रक्तानि नयनसहस्राणि तैः कुसुमितामिव पुष्पितामिव। मुण्डमण्डलैः फलितामिव संजातफलामिव। **उपेति।** उपहारहिंसां बलिप्रमथनं दर्शयन्तीं प्रकटयन्तीम्। चण्डिकायाः संमुखवेदिकां वर्णयित्वाङ्गणं वर्णयन्नाह—**शाखेति।** श्वभयात्कौलेयकभीतेः शाखान्तराले शाखाविचाले निलीनानि मध्यप्रविष्टानि यानि रक्तकुक्कुटकुलानि लोहितताम्रचूडपटलानि येष्वेवंविधैरकाले दर्शितकुसुमस्तबकैरिव रक्ताशोकविटपैर्लोहितकङ्केल्लिवृक्षैर्विभूषितं शोभितमङ्गणमजिरं यस्याः सा ताम्। बलेरुपहारस्य रुधिरपानं रक्तास्वादनं तस्य तृष्णया गर्धेन समागतैः तालैः। उच्चत्वसाम्येनाह—**वेतालैरिति।** तालफलानां मस्तकसाम्येनाह—**दीयमानेति।** दीयमानानि फलान्येव मुण्डानि शिरांसि तान्येवोपहारो बलिर्यस्यै सा ताम्। कदलिकावने कम्पातिशयं बिल्वखण्डे कण्टकातिशयं खर्जूरीवन ऊर्ध्वपत्रातिशयं व्यञ्जयितुमुत्प्रेक्षते—**शङ्केति।** शङ्का पशुवधदर्शनजनिता तस्या यो ज्वरस्तापस्तेन कम्पितैरिव कदलिकावनैः रम्भाकाननैः, भयेन भीत्योत्कण्टकितैरिव संजातरोमाञ्चैरिव श्रीफलतरुखण्डैः, त्रासेन भयेनोर्ध्वं केशा येषामेवंविधैरिव खर्जूरवनैः समन्ताद्गहनीकृताम्। सर्वतो व्याप्तामित्यर्थः। पुनः प्रकारान्तरेण तामेव विशेषयन्नाह—**वनेति।** वनकरिणां काननहस्तिनां कुम्भेभ्यो विदलितानि विनिर्गतानि रक्तमुक्ताफलानि। कीदृशानि। रुधिरेण रक्तेनारुणानि लोहितानि। पुनः कीदृशानि। बलिसिक्थेषूपहारकणेषु लुब्धा आसक्ता मुग्धा ये कृकवाकवस्ताम्रचूडास्तैः पूर्वं ग्रस्तानि गृहीतानि पश्चान्मुक्तानि तानि विकिरद्भिरितस्ततो विक्षिपद्भिः। अम्बिकायाः भैरव्याः परिग्रहेण स्वीकारेण दुर्दुष्टं ललितं चेष्टितं येषां तैः क्रीडद्भिः क्रीडां कुर्वद्भिः केसरिकिशोरकैर्नखरायुधबालकैरशून्य उद्देशः प्रदेशो यस्याः सा ताम्।

---

टिप्प०—1 रुधिरपानतृष्णया समागतैस्तालैरित्यन्वयोऽशुद्धः। ···समागतैर्वेतालैरिव तालैरित्युचितम्। 2 'रक्त' इति विशेषणयोजनं टीकाकर्तुरेव लाघवम्, 'रुधिरारुणानि' इत्यनुपदं दत्ततया पौनरुक्त्यात्। 3 रुधिराक्ततया पूर्वं गृह्णद्भिस्ततो मांसाद्यभावात्परित्यजद्भिरित्याशयः। 4 चण्डिकायाः।

---

पाठा०—१ लोहित. २ अगस्त्यतरुकुड्मलैः; अगस्तिकुसुमकुड्मलैः. ३ प्रकरोपहाराम्. ४ निरन्तरनिलीन. ५ तृष्णासमागतैः. ६ खर्जूर; खर्जुर. ७ विदलितवनकरिकुलकुम्भविदलितमुक्ताफलानि. ८ नवरुधिरारुणबलि.

तितेनेव प्रतिबिम्बितेनास्ततताम्रेण सवित्रान्तरीकृतैः[१] क्षतजप्रवाहैः[२] पिच्छिलीकृताजिराम्, अवलम्बमानदीप[३]धूमरक्तांशुकेन ग्रथितशिखिगलव[४]लयावलिना पिष्ट[५]पाण्डुरितघनघण्टा[६]मालभारिणा त्रापुषसिंहमुखमध्यस्थितस्थूललोह[७]कण्टकं दत्तदन्तदण्डार्गलं [८]गलत्पीतनीललोहितद[९]र्पणस्फुरितबुद्बुदमालं कपाटपट[१०]द्वयं दधानेन गर्भगृहद्वारदेशेन दीप्यमानाम्, अन्तःपिण्डिकापीठ[११]पातिभिश्च सर्वपशुजीवितैरिव शरणमुपागतै[१२]रलक्तकपटैरविरहितचरणमूलाम्, पतितकृष्णचामरप्रतिबि-

---

एतेन सिंहबाहुल्यं वर्णितम् । तद्वर्णनाच्च महाविपिनवासित्वं व्यङ्ग्यम् । क्षतजानि रुधिराणि तेषां प्रवाहैरोघैः पिच्छिलीकृतं विजिलीकृतमजिरमङ्गणं यस्याः सा ताम् । कीदृशैः क्षतजप्रवाहैः । **प्रतीति** । प्रतिबिम्बितेन संक्रान्तेनास्तताम्रेणास्तसमयरक्तेन सवित्रा[1] सूर्येणान्तरीकृतैर्व्यवधानीकृतैः । पतनसाम्येनाह—**प्रभूतेति** । प्रभूतं भूयिष्ठं यद्रुधिरं रक्तं तस्य दर्शनमवलोकनं तेनोद्भूता संजाता या मूर्च्छा तया पतितेनेव स्रस्तेनेव । **गर्भेति** । गर्भगृहमपवरकस्तस्य द्वारदेशेन प्रतीहारप्रदेशेन दीप(प्य)मानां शोभमानाम् । अथ द्वारदेशं विशेषयन्नाह—**अवलम्बेति** । अवलम्बमाना[2] ये दीपा गृहमणयस्तेषां धूमै रक्तानि रञ्जितान्यंशुकानि यस्मिन् । एतेन दीपकबाहुल्यं वर्णितम् । अवलम्बमाना दीपा धूमा उत्क्षिप्यमाणकृष्णागुरुसंबन्धिनो रक्तांशुकानि च यस्मिन्निति वा । द्वारदेशातिशयवर्णनमेतत् । **ग्रथितेति** । ग्रथिता गुम्फिताः शिखिनो मयूरास्तेषां गलवलयानां निगरणकण्टकानामावलयः श्रेणयो यस्मिन्स तेन । **पिष्टेति** । पिष्टव[3]त्पाण्डुरिता धूसरवर्णा घना निबिडा या घण्टास्तासां माला श्रेणिस्तां बिभर्तीत्येवं[4]शीलेन भारिणा । किं कुर्वता द्वारदेशेन । दधानेन बिभ्रता । किम् । कपाटस्याररस्य पटद्वयम् । तदेव विशिनष्टि—**त्रापुषेति** । त्रापुषः श्वेतरूप्यनिर्मितो यः सिंहो हर्यक्षस्तस्य मुखमध्यस्थितं स्थूलं लोहकण्टकं यस्मिन् । दत्ता दन्तदण्डस्यार्गला यस्मिन् । **गलदिति** । गल[5]न्तः स्रवन्तः पीतनीललोहिता इति त्रयोपादानं विविधवर्णोपलक्षणम् । तेषां दर्पणेभ्यः स्फुरिता विद्योतिता बुद्बुदाकृतयो द्युतिपुञ्जास्तेषां माला यस्मिन् । पुनः कीदृशीम् । **अन्तरिति** । अलक्तकपटैर्यावकरसरक्तवस्त्रैरविरहितं चरणयोर्मूलं यस्याः सा ताम् । चरणमूलेऽपि रक्तवस्त्राणि शोभातिशयार्थं ध्रियन्ते । तत्र हिंसितपशुजीवितानां रुधिरसंबन्धवशाद्रक्तपटारुण्यसाम्येनोत्प्रेक्षते । अन्तर्मध्यवर्तिनी या पिण्डिका[6] तस्याः पीठं तत्र पातिभिः पतनशीलैः आरुण्यव्यञ्जकमुक्त्वा चरणमूलसंबन्धनियामकमाह—**शरणेति** । शरणमुपागतैः सर्वपशुजीवितैरिव । रुधिरस्यापि जीवितेन सह गमनादुपमानोपमेयभावः । **पतितेति** । पतितानि कृष्णचामराणां प्रतिबिम्बानि[7] येष्वेवंविधानां परशुः परश्वधः, पट्टिशः शस्त्रविशेषः, एतत्प्रभृतीनां जीवविशसनशस्त्राणाम् । नीलातिशय-

---

टिप्प०—1 'ताम्रतरीकृतै'रिति रुचिरः पाठः । क्षतजप्रवाहाः पूर्वमेव रक्तवर्णाः, ततस्तु अस्तकालिकसूर्यप्रभया अत्यन्तमरुणीकृता इति तदाशयः । 2 दीपा न अवलम्बन्ते अपि तु वस्त्राणि, तस्मात् अवलम्बमानानि दीपधूमै रञ्जितान्यंशुकानि यस्मिन्निति वक्तव्यम् । 3 पिष्टेन पाण्डुरिताः [ पित्तलघण्टाः ] । 4 घनां घण्टामालां बिभर्ति तच्छीलेन घनघण्टामालभारिणा । 'इष्टकेषीकेत्यनेन' ह्रस्वः । तस्मात् 'मालभारिणा' इत्येव पाठो युक्तः । 5 'लसत्पीतनीले'त्यादिरेव पाठो युक्तः । लसत्सु संमुखे शोभमानेषु पीत–नील–लोहितवर्णेषु दर्पणेषु स्फुरिता ( प्रतिबिम्बिता ) बुद्बुदमाला बुद्बुदसमानाकारलोहशङ्कुश्रेणिर्यस्मिन् तत् । कपाटद्वये ये लोहकीलका जटितास्ते 'जगन्मोहन'[निजमन्दिरस्याग्रभागः]स्थदर्पणेषु प्रतिबिम्बिता इत्याशयः । 6 वेदिः तत्र यत्पीठम् मूर्तिस्थापनाय सिंहासनम् । 7 अज्ञानमिदम् । कृष्णानां चामराणां तेषु प्रतिबिम्बः पतितः, अत एव शिरश्छेदे सति लग्नं केशजालं येषु ईदृशानि दृश्यन्ते शस्त्राणि ।

---

पाठा०—१ ताम्रतरीकृतैः. २ क्षतजजल. ३ दीपधूपधूसर. ४ वलयावलम्बिना. ५ पिष्टपिण्डपाण्डुरित. ६ मालाधारिणा; मालभारिणा. ७ लोहकण्टकदत्तदन्तदण्डार्गलगलत्पीत. ८ लसत्. ९ तर्पण. १० पट्टा; पट्टक. ११ पट्ट. १२ अलक्तकपुटैः, अलक्तकरसरक्तपटैः.

म्बानां च शिरश्छेदलग्नकेश[1]जालकानामिव प[2]रशुपट्टिशप्रभृतीनां जीवविशसनशस्त्राणां प्र[3]भाभिर्बद्धबहलान्धकारतया पा[4]तालगृहवासिनीमिवोपलक्ष्यमाणाम्, रक्तचन्दनखचितस्फु[5]रत्फलपल्लवकलितैश्च बि[6]ल्वपत्रदामभिर्बालकमुण्डप्रालम्बैरिव कृतमण्ड[7]नाम्, शोणितता[8]म्रकदम्बस्तबककृतार्चनैश्च प[9]शूपहारपटहपटुरटितरसोल्लसितरोमाञ्चैरिवाङ्गैः क्रूरतामुद्वहन्तीम्, चारुचामीकरपट्टप्रावृतेन च ललाटेन शबरसुन्दरीरचितसिन्दूरतिलकबिन्दुना दा[10]डिमकुसुमकर्णपूरप्रभासेकलोहितायमानकपोलभित्तिना रुधिरताम्बूलारुणिताधरपुटेन भ्रू[11]कुटिकुटिलबभ्रुणा रक्तनयनेन मुखेन कुसुम्[12]भपाटलितदुकूलकलितया च देहलतया महाकालाभिसारिकावेशविभ्रमं बिभ्रतीम्, संपिण्डितनीलगुग्गुलधूपधूमारुणीकृताभिश्च प्रचलन्तीभिर्गर्भगृहदीपिकालताभिर-

---

वशादाह—**शिरश्छेदेति**। शिरश्छेदानन्तरं लग्नं केशानां जालकं समूहो येष्वेतादृशानामिव प्रभाभिः कान्तिभिर्बद्धो बहलो निबिडो योऽन्धकारस्तस्य भावस्तत्ता तया पातालगृहवासिनीमिवोपलक्ष्यमाणां दृश्यमानाम्। **रक्तेति**। रक्तचन्दनेन पत्राङ्गेन खचिता व्याप्ताः स्फुरन्तो दीप्यमाना ये फलपल्लवास्तैः(स्तैः) कलितैः सहितैर्बिल्वाः श्रीफलास्तेषां प[1]त्रदामभिः। वर्तुलत्वसाम्यादाह—**बालकेति**। बालकाः शिशवस्तेषां मुण्डानां शिरसां प्रालम्बैरिव ऋजुलम्बिपुष्पदामभिरिव कृतं मण्डनं यया सा ताम्। स्वाभाविकं तु कदम्बकेसरं कपिशमत आह—**शोणितेति**। शोणितेन ताम्रा रक्ता ये कदम्बस्तबका नीपगुच्छकास्तैः कृतमर्चनं पूजनं येषां तैरङ्गैर्हस्तपादादिभिः। शोणितरक्तनीपगुच्छस्य रोमोद्गमसादृश्यं वर्णयन्नाह—**पशूपहारेति**। पशूनामुपहारे बलिविधाने पटहानां दुन्दुभीनां यत्पटुरटितं स्पष्टशब्दितं तेन यो रसः। श्रोतुरिति शेषः। तेनोल्लसिता उल्लासं प्राप्ता रोमाञ्चा रोमहर्षणानि येषां तैरिव क्रूरतां रौद्रतामुद्वहन्तीं धारयन्तीम्। एतदर्थस्पष्टीकरणाय हेतूनाह—**चार्विति**। चारुर्मनोहरो यश्चामीकरपट्टः सुवर्णपट्टस्तेन प्रावृतेनाच्छादितेन ललाटेनालीकेन। कीदृशेन। **शबरेति**। शबरसुन्दरीभिर्भिल्लवनिताभी रचिता विहिताः। सिन्दूरस्य नागजस्य तिलकबिन्दवो यस्मिंस्तत्तेन। तथा मुखेन वदनेन। अथ मुखं विशिनष्टि—**दाडिमेति**। दाडिमः करकस्तस्य कुसुमं पुष्पं तस्य कर्णपूरं तस्य प्रभा कान्तिस्तस्याः सेकः संपर्कस्तेन लोहितायमाना कपोलभित्तिर्यस्मिंस्तत्तेन। **रुधिरेति**। रुधिरपानलक्षणं यत्ताम्बूलं तेनारुणितोऽधरपुटो यस्मिंस्तत्तेन। **भ्रुकुटीति**। भ्रुकुटिर्भ्रुकुटिस्तया कुटिले वक्रे बभ्रुणी यस्मिंस्तत्तेन। **रक्तेति**। रक्ते लोहिते नयने नेत्रे यस्मिंस्तत्तेन। पुनः कया। देहलतया। सरलत्वाल्लतासाम्यम्। यद्वा एतेन सौकुमार्यातिशयो वर्णितः। कीदृश्या। कुसुम्भेन कमलोत्तरेण पाटलितं श्वेतरक्तीभूतं यद्दुकूलं क्षौमं तेन कलितया सहितया देहलतया। महाकालो रुद्रस्तस्याभिसारिकाया वेषविभ्रमं नेपथ्यविलासं बिभ्रतीं धारयन्तीम्। **संपिण्डितेति**। संपिण्डितः पुञ्जीकृतो यो नीलगुग्गु[3]लुः पलंकषस्तस्य

---

**टिप्प०**—1 बिल्वपत्राणां मालासु मध्ये मध्ये रक्तचन्दनरञ्जितानि बिल्वफलान्यपि प्रोतानि, अत एवं प्रतीयते यद् बालकमुण्डानां माला परिहिता स्यादित्याशयः। 2 बभ्रुणी अर्थात् पिङ्गलवर्णे, के? इति विशेष्याभावादशुद्धोयं पाठः। 'भ्रुकुटिकुटिलबभ्रुनयनेन' इत्येव पाठः। भ्रूभङ्गेन कुटिले, बभ्रुणी पिङ्गलवर्णे च नयने यस्मिन् इति तदर्थः। 3 गुग्गुलु—धूपधूमेन अरुणवर्णीकृता गर्भगृहस्य दीपिकालताः (दीपशिखा वायुवशाल्लम्बाकारा भवन्ति, अत एव लतायिताः ता अङ्गुलय इव दृश्यन्त इत्युत्प्रेक्षा) वायुवशात्कम्पन्ते ताश्चैवमुत्प्रेक्ष्यन्ते यत् शोणितलवलोहिताभिरङ्गुलिभिर्वनमहिषं तर्जयतीव भगवती चण्डिका। तर्जनं हि कम्पमानाभिरङ्गुलिभिर्भवत्येव। दोषश्च वनमहिषस्य—त्रिशूलदण्डे स्व(महिष) कण्ठपीठस्य कण्डूयनमिति सर्वस्याशयः। नीलस्यापि गुग्गुलुधूपयोर्धूमस्य दीपिकाभिः संयोगे अरुणवर्णो जायते, संयोगवैचित्र्यात्। चूर्णहरिद्रयोः संयोगे यथाऽरुणवर्णः।

---

**पाठा०**—१ कलापानाम्. २ असिपरशु. ३ बहलबद्ध. ४ पातालगुहा. ५ स्फुरत्फलक. ६ बिल्वदामभिः. ७ कृतमण्डलाम्. ८ आताम्र. ९ अविरतपशूपहारपटहपटुरन्वितरसोत्तम्भितरोमाञ्चैः. १० दाडिमी. ११ भ्रुकुटिकुटिलभ्रुणा रक्तनयनेन; भ्रुकुटिकुटिलबभ्रुनयनेन. १२ पाटलितमुखदुकूल.

ङ्गुलीभिरिव महिषासुरशोणितलवालोहिनीभिः स्कन्धपीठकण्डूयनचलितत्रिशूलदण्डकृतापराधं वनमहिषमिव तर्जयन्तीम्, प्रबलकूर्चधरैश्छागैरपि धृतव्रतैरिव स्फुरदधरपुटैराखुभिरपि जपपरैरिव कृष्णाजिनप्रावृताङ्गैः कुरङ्गैरपि प्रतिशयनैरिव ज्वलितलोहितमूर्धरत्नरश्मिभिः कृष्णसर्पैरपि शिरोधृतमणिदीपकैरिवाराध्यमानाम्, सर्वतः कठोरवायसगणेन च रटता स्तुतिपरेणेव स्तूयमानाम्, स्थूलस्थूलैः शिराजालकैर्गोधागोलिकाकृकलासकुलैरिव दग्धस्थाण्वाशङ्कया समारूढैर्गवाक्षितेन, अलक्ष्मीसमुत्खातलक्षणस्थानैरिव विस्फोटकव्रणबिन्दुभिः कल्माषितसकलशरीरेण, कर्णावतंससंस्थापितया च चूडया रुद्राक्षमालिकामिव दधानेन, अम्बिकापादपतनश्यामललाटवर्धमानबुद्बुदेन, कुवादिदत्तसिद्धाञ्जनदानस्फोटितैकलोचनतया त्रिकालमि-

---

धूपधूमस्तेनारुणीकृताभी रक्तीकृताभिः प्रचलन्तीभिर्गर्भगृहस्यापवरकस्य दीपिकालताभिर्दशेन्धनवल्लीभिः । अत एव किंचिदारक्तकृष्णतया तत्साम्यप्रदर्शनार्थमाह—**अङ्गुलीति** । कीदृशीभिः । महिषासुरो दैत्यस्तस्य शोणितं तस्य लवस्तेनालोहिनीभिर्वनमहिषमरण्यरक्ताक्षं तर्जयन्तीं न्यक्कुर्वन्तीम् । कीदृशम् । स्कन्धपीठस्य यत्कण्डूयनं तेन चलितः कम्पितो यस्त्रिशूलदण्डः स एव कृतोऽपराधो येनैवंभूतम् । सजातीयकृतमहिषापराधाद्वनमहिषस्याप्यपराधः । **प्रबलेति** । प्रबलानि प्रकृष्टानि कूर्चानि चिबुकाधःस्थलवर्तिरोमाणि धरन्तीति धरैश्छागैरपि बस्तैरपि धृतव्रतैरिव स्वीकृतनियमैरिवाखुभिरप्युन्दुरैरपि स्फुरन्त्यधरपुटानि येषां तैः । जातिस्वभावोऽयम् । अतएव जपपरैरिव जापतत्परैरिव । **कृष्णेति** । कृष्णाजिनेन श्यामचर्मणा प्रावृतमङ्गं येषां तैः कुरङ्गैरपि सारङ्गैरपि प्रतिशयनैरिव प्रतितल्पैरिव । **ज्वलितेति** । ज्वलिता दीप्यमाना लोहिता रक्ता मूर्धनि शिरसि रत्नानां मणीनां रश्मयो रोचिषो येषां तैरेवंविधैः कृष्णसर्पैरपि भुजङ्गैरपि शिरोधृतमणिदीपकैरिव मस्तकन्यस्तग्रहमणिभिरिव । एतैराराध्यमानामुपास्यमानाम् । **सर्वत इति** । सर्वतः समन्ताद्रटता शब्दं कुर्वता कठोरवायसगणेन सकृत्प्रजासमूहेन च स्तुतिपरेण स्तूयमानां नूयमानाम् । अथ द्राविडधार्मिकं विशेषयन्नाह—**स्थूल इति** । स्थूलानि स्थूलानि च स्थूलस्थूलानि तैः शिराजालकैर्नाडीसमूहैर्गवाक्षितेन सर्वत्र जालकमयीभूतेन । तत्र शिराजालकस्य पीनस्थूलरूपतया तत्साम्येनाह—**गोधेति** । नीलत्वसाम्यात् । दग्धो ज्वलितो यः स्थाणुः कीलकस्तस्याशङ्कारेका तया । गोधा प्रसिद्धा, गोलिका पल्ली, कृकलासः सरटः एतेषां कुलैरिव समूहैरिव समारूढैराश्रितैः । **अलक्ष्मीति** । अलक्ष्म्या अश्रिया समुत्खातानि मूलत उन्मूलितानि यानि लक्षणानि सामुद्रकशास्त्रोक्तानि तेषां स्थानैरिव, विस्फोटकाः प्रसिद्धास्तेषां व्रणबिन्दुभिः कल्माषितं चित्रितं सकलं समग्रं शरीरं यस्य स तेन । **कर्णेति** । कर्णावतंसे संस्थापितया न्यस्तया चूडया शिखया रुद्राक्षमालिकामिव दधानेन धारयता । **अम्बिकेति** । अम्बिकायाः पार्वत्याः पादपतनेन श्यामं कृष्णं यल्ललाटमलिकं तत्र वर्धमानो बुद्बुदः स्थासको यस्य स तेन । शरीरं कदर्यरूपमुक्त्वा तत्प्रसङ्गेनेन्द्रियाणां दन्तादीनां कदर्यत्वं कपटक्रियासाधनानां चातिशयत्वं व्यञ्जयन्पुनस्तमेव विशेषयन्नाह—**कुवादीति** । कुवादी मिथ्यावादी तेन दत्तं सिद्धाञ्जनं नेत्रौषधं तस्य दानं नेत्रयोः प्रक्षेपस्तेन स्फोटितं नाशितमेकं लोचनं यस्य तस्य भावस्तत्ता तया । **त्रिकालमिति** ।

---

**टिप्प०**—1 न बुद्धोऽर्थो महाशयेन । 'प्रतिशयितैरिव' इति पाठः । अभीष्टप्राप्तये दिनमासादिनियतं भोजनादिपरित्यागपूर्वं देवताग्रे शयनं 'प्रतिशयनम्' । कृष्णचर्मधारिणो मृगा अपि कृतप्रतिशयना इव । 2 स्थूणः (शाखापत्ररहितो वृक्षः) । 3 'वर्धमानार्बुदेन' इत्येव पाठः । श्यामे ललाटे घर्षणजन्यः 'अर्बुदः' कृष्णवर्णः किणः (शुष्कं व्रणचिह्नम्) संजात इत्यर्थः ।

---

**पाठा०**—१ विरचिताङ्गुलीभिः. २ प्रलम्ब. ३ प्रतिशायितैः. ४ रुवता. ५ शिराजालैः. ६ गोधागृहगोधिका; गोधारगोधिका. ७ लक्ष्मी. ८ विस्फोट. ९ अर्बुदेन. १० कुवादिक. ११ स्फुटित.

तरलोचनाञ्जनदा[1]नादरश्लक्ष्णीकृतदारुशलाकेन, प्रत्यहं कटुकालाबुस्वेदप्रारब्धदंतुरताप्रतीकारेण, कथंचिदस्थानदत्तेष्टकाप्रहारतया शुष्कै[2]कभुजोपशान्तमर्दनव्यसनेन, उपर्युपर्यविश्रान्तकटुवर्तिप्रयोगवर्धिततिमिरेण, अश्मभेदसंगृहीतवराहदंष्ट्रेण, इङ्गुदीकोषकृतौषधाञ्जनसंग्रहेण, सूचिस्यूतशिरासंकोचितवामकराङ्गुलिना, कौशेयककोशा[3]वरणक्ष[4]तिव्रणितचरणाङ्गुष्ठकेन, असम्यक्कृतरसायनानीताकालज्वरेण, जरां गतेनापि दक्षिणापथाधिराज्यवरप्रार्थनाकदर्थितदुर्गेण, दुःशिक्षितश्र[5]वणादिष्टतिलकाबद्धविभवप्रत्याशेन, हरितपत्ररसाङ्गारमषीमलिनशम्बूकवाहिना, पट्टिकालिखितदुर्गास्तोत्रेण, धूमरक्तालक्तकाक्षरतालपत्र[6]कुहकतन्त्रमन्त्र-

---

त्रिकालं कालत्रये इतरस्मिन् एकस्मिंल्लोचने यदञ्जनदानं तदर्थमादर आग्रहस्तेन श्लक्ष्णीकृता दारुशलाका[1] येन । पुनः पुनर्नेत्राञ्जनसंबन्धेन दारुशलाकापि श्लक्ष्णीकृतात्यन्तमृदुतामापादितेत्यर्थः । एतेन निरवधिकदेवानां प्रियता दर्शिता । **प्रत्यहमिति ।** प्रत्यहं निरन्तरं कटुकं यदलाबु तुम्बीफलं तस्य यः स्वेदस्तन्निःसृतं जलं तेन प्रारब्धा दन्तुरतोन्नतदन्तता तस्याः प्रतीकारश्चिकित्सा येन । आमवातजडीकृतदेहस्य तैलविशेषमर्दनानन्तरं कारञ्जाग्नितप्तेष्टिकानां प्रहारः क्रियते । तमधिकृत्याह—**अस्थानेति ।** यत्राग्नितप्तेष्टिकाप्रहार उक्तो नास्ति तस्मिन्नङ्गे, अत एवास्थाने दत्तो य इष्टिकाप्रहारस्तस्य भावस्तत्ता तया । **शुष्केति ।** अचिकित्सित एकस्मिन्भुज उपशान्तं निष्ठा[2]प्राप्तं मर्दनव्यसनं यस्य स तेन । कुत्सिततैलप्रयोगवशाद्दीपालोके सत्यप्यन्धकार एवेत्यधिकृत्याह—**उपर्युपरीति ।** उपर्युपर्यविश्रान्तं निरन्तरं कटुकवर्तिप्रयोगेण वर्धितं तिमिरं[3] येन । **अश्मेति ।** अश्मभेदार्थं प्रस्तरखण्डार्थं संगृहीता आत्ता वराहाणां वनक्रीडानां दंष्ट्रा येन । **इङ्गुदीति ।** इङ्गुदी तापसद्रुमस्तस्य कोषः फलं तन्मध्ये कृत औषधाञ्जनयोः संग्रहो येन । तत्र स्थापितस्यौषधाञ्जनादेर्विशेषगुणकारित्वादि युक्तं । महासाहसिकत्वमप्याह—**सूचीति ।** सूच्या सीवन्या स्यूता प्रोता या शिरा । प्रकोष्ठसंबन्धिनीति शेषः । तया संकोचं प्रापिता वामकराङ्गुल्यो येनैतादृशविकृताङ्गप्रदर्शनेन लोकानामद्भुतमिदमिति बुद्धिजननात्पुनरपि तदेवाह—**कौशेयकेति ।** कौशेयकस्य कृमिकोशोत्थस्य कोशः कृमिगृहं तस्यावरणमावेष्टनं तस्माद्या क्षतिः संघृष्टिस्तया व्रणितश्चरणाङ्गुष्ठो यस्य स तेन । **असम्यगिति ।** न सम्यक्कृतमनभिज्ञत्वाद्रसायनं पारदकलङ्कादिकम् । बहुद्रव्यव्ययेनापि कार्यसिद्धेरभावात् । तेनानीतः प्रापितः कालज्वरो मरणपर्यवसायितापो यस्य स तेन । अनेन मुमूर्षोरपि वैराग्यं नोत्पद्यत इति लोभातिशयो व्यज्यते । **जरेति ।** जरां गतेनापि विस्रसां प्राप्तेनापि दक्षिणापथस्य यदधिराज्यमाधिपत्यं तस्य वरप्रार्थना तया कदर्थितोद्विग्नीकृता दुर्गा भवानी येन । **दुःशिक्षितेति ।** दुर्दुष्टं शिक्षितं तस्य श्र[4]वणादाकर्णनादिष्टेऽभिमतस्थानवर्तिनि तिलके कालके । 'तिलकः कालकः पिप्लुर्जडुलस्तिलकालकः' इति कोशः । तस्मिन्नाबद्धा मनसि निश्चिता विभवस्यैश्वर्यस्य प्रत्याशा प्राप्तिवाञ्छा येन । **हरितेति ।** हरितपत्राणां नीलपलाशानां रसेन कृत्वा योऽङ्गारस्य मषी मसी तया मलिनो यः शम्बूकः शङ्खस्तद्वाहिना । एतेन यत्किंचिल्लिखनव्यसनता सूचिता । **पट्टिकेति ।** पट्टिकायां लिखितं लिपीकृतं दुर्गास्तोत्रं यस्य येन वा स तेन । **धूमेति ।** धू[5]मवद्रक्तान्यलक्तस्य यावकस्याक्षराणि येष्वेवंविधानि तालपत्राणि

---

**टिप्प०—**1 एकं नेत्रं तु सिद्धाञ्जनाभासेन लुप्तमेव, उन्मीलिते द्वितीये लोचने तु शोभायै तत्रानियमाद्वा साधारणकज्जलम् (न तु सिद्धाञ्जनम्) इयद्दीयते येन प्रत्यहघर्षणात् दारुशलाका ('सलाई')पि श्लक्ष्णा जातेति सर्वस्याशयः । 2 आमवातकृतजाड्यवशादनेन अग्नितप्तेष्टकाप्रहारः प्रारब्धः, परं स ह्यस्थाने जातः । अत एव स हस्तः शुष्को जातः । अत एव वातो विनष्ट इति मत्वा अनेन तैलमर्दनाग्रहस्त्यक्त इत्याशयः । 3 नेत्ररोगविशेषः । आन्ध्यनाशाय कटुवर्तिप्रयोगः इयत्कृतो येन नेत्रमन्दत्वमधिकं जातमित्यर्थः । 4 'श्रमणाऽऽदिष्ट' इत्येव पाठः । दुःशिक्षितेन प्राप्तकुशिक्षेण श्रमणेन संन्यासिविशेषेण आदिष्टे तिलके ( सिद्धौषधिजनिते ललाटबिन्दौ ) इति तदर्थः । 5 धूमेन रञ्जितानि अलक्तकलिखितान्यक्षराणि येषु ।

---

पाठा०—१ आरब्ध. २ कथंञ्चिच्छुष्क. ३ कोशक. ४ रक्षित. ५ श्रमण. ६ कृतकुहकतन्त्रयन्त्रमन्त्र.

पुस्तिकासंग्राहिणा, जीर्णपाशुपतोपदेशलिखितमहाकालमतेन, आविर्भूतनिधिवादव्याधिना, संजातधातुवादवायुना, लग्नासुरविवरप्रवेशपिशाचेन, प्रवृत्तयक्षकन्यकाकामित्वमनोरथव्यामोहेन, वर्धितान्तर्धानमन्त्रसंग्रहेण, श्रीपर्वताश्चर्यवार्तासहस्राभिज्ञेन, असकृदभिमन्त्रितसिद्धार्थकाहतिधावितैः पिशाचगृहीतकैः करतलताडननिबिडीकृतश्रवणपुटेन, अवमुक्तशैवाभिमानेन, दुर्गृहीतालाबुवीणावादनोद्वेजितपथिकपरिहृतेन, दिवसमेव मशककणितानुकारि किमपि कम्पितोत्तमाङ्गं गायता, स्वदेशभाषानिबद्धभागीरथीभक्तिस्तोत्रनर्तकेन, गृहीततुरगब्रह्मचर्यतयान्यदेशागतोषितासु जरत्प्रव्रजितासु बहुकृत्वः संप्रयुक्तस्त्रीवशीकरणचूर्णेन, अतिरोषण-

---

येषामेतादृशा ये कुहका ज(जा)लिकास्तेषां तन्त्रा औषधप्रयोगाः, मन्त्राः शावरमन्त्राः, तेषां पुस्तिकास्तस्याः संग्राहिणा संग्रहकारिणा । **जीर्णेति** । जीर्णश्चिरकालीनो यः पाशुपतोपदेशो मनुष्यरुधिरेण होमप्रतिपादकशिक्षा तेन लिखितं लिपीकृतं महाकालमतमीश्वरमतं येन । एतेन केवलं वाममार्गोपदेष्टृत्वं सूचितम् । **आविर्भूतेति** । आविर्भूतः प्रकटीभूतः सर्वे मे मम निधय इति वादः स एव व्याधिर्यस्य स तेन । अत एवाह— **संजातेति** । संजातः समुत्पन्नो धातुवादस्य[1] ताम्रादेः सुवर्णादिकरणस्य स एव वायुर्विक्रिया यस्य स तेन । **लग्न इति** । लग्नोऽसुराणां पातालवासिदेवानां विवरप्रवेशलक्षणः पिशाचो यस्य स तेन । **प्रवृत्तेति** । प्रवृत्तः प्रस्तुतो यक्षकन्यका गन्धर्वपुत्र्यस्तासां यः कामित्वमनोरथो भोगेच्छाविशेषस्तद्विषये व्यामोहो यस्य स तेन । **वर्धितेति** । वर्धितो वृद्धिं नीतोऽन्तर्धानमदृश्यता तस्मिन्कर्तव्ये मन्त्रसंग्रहो यस्यैवंविधेन । **श्रीपर्वतेति** । श्रीपर्वतः श्रीशैलस्तस्याश्चर्यवार्ताश्चित्रकारिण्यः किंवदन्त्यस्तासां सहस्रं तस्मिन्नभिज्ञेन कुशलेन, तस्य शाम्भवत्वाद्द्रविडधार्मिकस्य जंगमत्वाच्चेति भावः । **असकृदिति** । असकृन्निरन्तरमभिमन्त्रिता ये सिद्धार्थकाः सर्षपास्तेषामाहतिः प्रक्षेपस्तया धावितैस्त्वरया प्रचलितैः पिशाचगृहीतकैः पिशाचाविष्टैः करतलताडनेन हस्ततलास्फोटनेन निबिडीकृतं[2] दृढीकृतं श्रवणपुटं कर्णकोटरं यस्य स तेन । एतेन पिशाचावेशविद्यावत्त्वं सूचितम् । **अवेति** । अवमुक्तस्त्यक्तः[3] शैवाभिमानोऽहमेव शैवो नान्य इति भावो येन । **दुरिति** । दुःखेन[4] गृहीता यालाबुवीणा तस्या वादनेनोद्वेजिता उद्वेगं प्रापिता ये पथिका अध्वगास्तैः परिहृतेन त्यक्तेन । **दिवसेति** । दिवस एव न तु रात्रौ मशकानां कणितं शब्दितं तदनुकारि किमप्यनिर्वचनीयं कम्पितोत्तमाङ्गं यथा स्यात्तथा गायता गानं कुर्वता । **स्वदेशेति** । स्वदेशस्य[5] सौवजनपदस्य या भाषा वाणी तया निबद्धं गुम्फितं यद्भागीरथी गङ्गा तस्या भक्तिस्तोत्रं तेन नर्तकेन नृत्यकारिणा । स्तोत्रं पठन्नेव नृत्यतीत्यर्थः । **गृहीतेति** । गृहीतं स्वीकृतं तुरगाणां ब्रह्मचर्यम् । प्रतिबन्धवशात् । न तु वैराग्येणेति । तस्य भावस्तत्ता तयान्येभ्यो देशेभ्यो जनपदेभ्य आगताः प्राप्ता उषिताश्च तासु जरन्त्योऽपि याः प्रव्रजिता आत्तव्रतास्तासु बहुकृत्वो बहुवारं संप्रयुक्तं स्त्रीवशीकरणस्य चूर्णं येन । एतेन महाकामुकत्वं सूचितम् । **अतीति** । अतिरोषणस्य भावस्तत्ता तया कदाचिद्दुर्नर्यस्ता विषमस्थापिता याष्टपुष्पिका सोलिका तस्याः पातेनोत्पादितः क्रोधो यस्य स तेन । निःशङ्क-

---

**टिप्प०**—1 संजातो धातुवादः (ताम्रादीनां सुवर्णादिकरणव्यतिकरः) एव वायुरोगो यस्य । 2 चिपिटीकृतम् । 3 विवक्षितविपरीतोऽयं पाठः, जरद् द्रविडस्य दुर्गुणपूर्णत्वप्रसङ्गे निरहङ्कारत्वगुणवर्णनस्यानुचितत्वात् । अत एव 'अविमुक्त' इत्येव पाठः, न विमुक्तः न त्यक्तः अहंकारो येनेति तदर्थः । 4 दुर्गृहीता वादनकालिकग्रहणप्रकारं विरहस्य परिधृता । 5 द्रविडदेशस्य ।

---

**पाठा०**—१ महापाशुपत. २ मन्त्रसाधनसंग्रहेण. ३ प्रहतिप्रधावितैः. ४ चिपिटीकृत. ५ श्रवणनासापुटेनाप्युक्त. ६ दिवसमशककणितानुकारिणा स्वरेण. ७ आगतासु. ८ प्रव्राजिकासु.

तया कदाचिद्दुर्न्यस्ताष्टपुष्पिकापातोत्पादितक्रोधेन चण्डिकामपि मुखभङ्गिविकारैर्भृशमुपहसता, कदाचिन्निवार्यमाणावासरुषिताध्वगारब्धबहुबाहुयुद्धपातभग्नपृष्ठकेन, कदाचित्कृतापराधबालकपलायनामर्षपश्चात्प्रधावितस्खलिताधोमुखनिपातोपलस्फुटितशिरःकपालभुग्नग्रीवेण, कदाचिज्जनपदकृतनवागतपरमधार्मिकादरमत्सरोद्बुद्धात्मना, निःसंस्कारतया यत्किंचनकारिणा, खञ्जतया मन्दं मन्दं संचारिणा, बधिरतया संज्ञाव्यवहारिणा, रात्र्यन्धतया दिवाविहारिणा, लम्बोदरतया प्रभूताहारिणा, अनेकशः फलपातनकुपितवानरनखोल्लेखच्छिद्रितनासापुटेन, बहुशः कुसुमावचयचलितभ्रमरसहस्रदंशशीर्णीकृतशरीरेण, सहस्रशः शयनीकृतासंस्कृतशून्यदेवकुलकालसर्पदष्टेन, शतशः श्रीफलतरुशिखरच्युतिचूर्णितोत्तमाङ्गेन, असकृदुत्सन्नदेवमातृगृहवास्यृक्षनखजर्जरितकपोलेन, सर्वदा वसन्तक्रीडिना जनेनोत्क्षिप्तखण्डख-

---

त्वाच्चण्डिकामपि मुखभङ्गिविकारैर्भृशमत्यर्थमुपहसता हास्यं कुर्वता । **कदाचिदिति** । कदाचित्कस्मिंश्चित्समये निवार्यमाणो य आवासो निवासस्तेन रुषिताः क्रोधं प्राप्ता येऽध्वगाः पान्थास्तैरारब्धं यद्बहुबाहुयुद्धं तेन पातः पतनं तस्माद्भग्नं स्फुटितं पृष्ठकं यस्य स तेन । **कदाचिदिति** । कृतापराधा विहितागसो ये बालकाः स्तनंधयास्तेषां पलायनं तस्मादमर्षः क्रोधसंभवस्तेन पश्चात्पृष्ठे प्रधावितः सन्स्खलितस्तेनाधोमुखनिपातस्तेनोपलेऽश्मनि स्फुटितं स्फोटं प्राप्तं शिरःकपालं भुग्ना वक्रा ग्रीवा च यस्य स तेन । **कदाचिदिति** । जनपदेनाधाराधेययोरैक्याज्जनपदस्थलोकेन कृतो नवागतपरमधार्मिकस्यादरस्तस्मिन्मत्सरस्तत्रोद्बुद्ध आत्मा येन । **निःसंस्कारेति** । निर्गतो दूरीभूतो वर्णसंस्कारो यस्मिंस्तस्य भावस्तत्ता तया । यत्किंचनकारिणा । अविहितकृत्यकारिणेत्यर्थः । **खञ्जेति** । खञ्जतया खोडतया मन्दं मन्दं यथा स्यात्तथा संचारिणा संचरणशीलेन । **बधिरेति** । बधिरतयाऽकर्णतया संज्ञया हस्तचालनादिकया व्यवहारिणा व्यवहरणशीलेन । **रात्र्येति** । रात्र्यन्धतया रजन्यामनवीक्षकत्वेन दिवाविहारिणा दिवससंचारिणा । **लम्बेति** । लम्बोदरतया प्रलम्बोदरतया प्रभूताहारिणा प्रचुरान्नभक्षकेण । **अनेकश इति** । अनेकोपायैर्वृक्षान्दोलनाद्युपायैः फलपातनं तेन कुपिताः कोपं प्राप्ता ये वानराः शाखामृगास्तेषां नखोल्लेखस्तेन छिद्रितं नासापुटं येन । **बहुश इति** । बहुशो बहुप्रकारेण कुसुमानां स्वभोगार्थमवचयश्चुण्टनं तेन चलिता भ्रमरा भृङ्गास्तेषां सहस्रं तस्य दंशा भक्षणानि तैः शीर्णीकृतं जीर्णीकृतं शरीरं यस्य स तेन। **सहस्रश इति** । सहस्रशः सहस्रवारं शयनीकृतान्यसंस्कृतान्यशोधितानि शून्यानि जनरहितानि देवकुलानि तेषु ये कालसर्पाः कृष्णनागास्तैर्दष्टेन भक्षितेन । **शतश इति** । श्रीफलतरुर्बिल्वतरुस्तस्य शिखरमग्रं तस्माच्च्युतिः पातः । फलस्येति शेषः । तेन चूर्णितमुत्तमाङ्गं शिरो यस्य स तेन । **असकृदिति** । असकृद्वारंवारमुत्सन्नमुद्वसं यद्देवमातृगृहं तद्वासिनो ये ऋक्षा भल्लूकास्तेषां नखैर्जर्जरितौ कपोलौ यस्य स तेन । **सर्वदेति** । सर्वदा सर्वकालं वसन्तक्रीडिना सुरभिक्रीडाकारिणा जनेनोत्क्षिप्ता या खण्डा भग्ना खट्वा पल्यङ्कस्तस्यामारोपिता स्थापिता या वृद्धा जीर्णा दासी कूटहारिका तया सह यो

---

**टिप्प०**—1 अष्टानां पुष्पाणां समाहारः अष्टपुष्पी, अज्ञाता अष्टपुष्पी अष्टपुष्पिका ('क'प्रत्ययः)। अज्ञातानि यानि कानिचिदष्टौ पुष्पाणि चण्डिकायाः पीठे दुःप्रकारेण विहितानि। तानि पुष्पाणि दैवात्पतितानि, कौतुकाय केनचित्पातितानि वा। ततस्तदुपरि द्रविडस्य क्रोधश्चण्डिकाया उपरि भवति यत्त्वं पुष्पाण्यपि रक्षितुं नापारयः, अत एव मुखभङ्गिविकारैस्तामुपहसतीत्याशयः। 2 नायमनुकूलोऽर्थः। शिक्षा—सत्सङ्गादिजनितसाधुवासनाहीनत्वेन अकार्येष्वपि प्रवृत्तेनेत्युचितोऽर्थः। 3 फलादिग्रहणार्थमारूढस्य स्वस्यैव। लोलुपत्वातिशयस्य विवक्षणात्। 4 हन्त वराकः पर्यायान्वेषण एव व्यग्रः। वसन्तक्रीडा 'होलिका'महोत्सवः। तत्र ह्येवंविधविरूपरूपकाणि ('स्वाँग') कौतुकिभिर्निस्सार्यन्ते।

---

**पाठा०**—१ आखुपुष्पिका. २ कदाचिन्निवार्यमाणावासिताध्वगारब्धबहुबाहुयुद्धपातभग्नपृष्ठेन कदाचिदनवरतभुजशिखरलोहिना शिरः कम्पनवक्रितग्रीवेण. ३ जानपद. ४ असारीकृत. ५ क्षतज.

द्वारोपितवृद्धदासीविवाहप्राप्तविडम्बनेन, अनेकायतनप्रतिशयितनिष्फलोत्थानेन, दौस्थित्यमपि विविधव्याधिपरिवृतं स्वकुटुम्बमिवोद्वहता, मूर्खतामपि बहुव्यसनानुगतां प्रसूतानेकापत्यामिव दर्शयता, क्रोधमप्यनेकदण्डाभि[१]घातनिर्मितबहुगात्रगण्डू[२]कं फलितमिव प्रकाशयता, क्लेशमपि सर्वावयवज्वलितदीपिकादाहव्रणविभावितं ब[३]हुमुखमिव प्रकटयता, परिभवमपि निष्कारणाक्रुष्टजनपददत्तपदाक्रुष्टिशतं प्र[४]वाहमिव दधानेन, शुष्कवनलताविनिर्मितबृहत्कुसुमकरण्डकेन, वेणुलतारचितपुष्पपातनाङ्कुशिकेन, क्षणमप्य[५]मुक्तकालकम्बलख[६]ण्डखोलेन जरद्द्रविडधार्मिकेणाधिष्ठितां चण्डिकामपश्यत् । तस्यामेव च [७]वासमरचय[८]त् ।

अथावतीर्य तुरगात्प्रविश्य भक्तिप्रवणेन चेतसा तां प्रणनाम । कृतप्रदक्षिणश्च पुनः

---

विवाह उद्वाहस्तेन प्राप्तं विडम्बनं कदर्थनं यस्य स तेन । **अनेकेति** । अनेकेष्वायतनेषु चैत्येषु प्रतिशयितं किंचित्फलप्राप्तिबुद्ध्या स्वापः कृतस्तेन तस्माद्वा निष्फ[१]लमुत्थानं जागरणं यस्य स तेन । एतेन वार्धकेऽप्यत्यन्तमुद्योगः सूचितः । **दुःस्थितेति** । दुःस्थितस्य भावो दौःस्थित्यमप्यसद्वृत्तमपि विविधा अनेकप्रकारा ये व्याधयः पीडास्तैः परिवृतम् । अनेनासद्वृत्तपरम्परा सर्वदा वर्तमानैवेति सूचितम् । यथा व्याधिरपि व्याध्यन्तरेण परिवृतो वृद्धिमेव जनयति तद्वद्दौःस्थित्यवृद्धिरेव सूचिता । अत एव तस्य विच्छेद एव नास्तीत्याह—**स्वकुटुम्बेति** । स्वकीयं कुटुम्बमिवात्मीयस्वजनमिवोद्वहतोद्वहनं कुर्वता । **मूर्खतेति** । मूर्खस्य भावो मूर्खता तामपि बहुभिर्व्यसनैरासक्तिभिरनुगतां सहिताम् । अतएव मूर्खताया व्यसनजनकत्वादाह—**प्रसूतेति** । प्रसूतानि जनितान्यनेकान्यपत्या[२]नि ययैवंविधामिव दर्शयतान्येभ्यः प्रकाशयता । **क्रोधमिति** । क्रोधं कोपमप्यनेके दण्डास्तेषां कलहावसरे योऽभिघातस्तैर्निर्मितो बहुगात्राणां गण्डू[३]कैः पिटको येन स तम् । अत एवाह—फलितमिव प्रकाशयताविष्कुर्वता । **क्लेशमिति** । क्लेशः परिश्रमस्तमपि सर्वेष्ववयवेषु ज्वलिता या दीपि[४]कास्तासां दाह इव यो दाहस्तस्माद्यानि व्रणानि देहविकृतिरूपाणि तैर्विभावितं लक्षितम् । अतएव बहुच्छिद्रवत्त्वाद्बहुमुखमिव प्रकटयता प्रकाशयता । **परीति** । परिभवमपि तिरस्कारमपि निष्कारणं निष्प्रयोजनमाक्रु[५]ष्टं आकर्षितो यो जनस्य पदोऽङ्घ्रिस्तेन दत्तं पदाक्रुष्टिशतं चरणप्रहारशतं यस्मिन् । अविच्छिन्नगतिमत्त्वात्प्रवाहमिव दधानेन बिभ्रता । **शुष्केति** । शुष्का या वनलता तया विनिर्मितो निष्पादितो बृहत्कुसुमकरण्डः पुष्पसंस्थापनस्थलं येन । **वेण्विति** । वेणुलतया रचिताः पुष्पपातनार्थमङ्कुशिका येन । **क्षणेति** । क्षणमप्यमुक्तोऽत्यक्तः कालकम्बलखण्डस्य कृष्णरल्लकप्रदेशस्य खोलो[६] येन । अन्वयस्तु प्रागेवोक्तः । **तस्यामिति** । तस्यामेव भूमौ वासं निवासमरचयद्रचितवान् ।

**अथेति** । तदनन्तरं तुरगादश्वादवतीर्य प्रविश्य च । चण्डिकायतनमिति शेषः । भक्तिप्रवणेन चेतसा तां प्रणनाम नमश्चक्रे । **कृतेति** । कृता विहिता प्रदक्षिणा येनैवंविधश्च पुनरपि प्रणम्य नमस्कारं कृत्वा प्र-

---

**टिप्प०**—1 अनेकवारान् अभोजनं देवाग्रे शयनसाहसं कृतं किन्तु तन्निष्फलमेव जातमित्यर्थः । अयमेवार्थः पूर्वं न ज्ञातो महाशयेन । 2 व्यसनान्येव मूर्खताया अपत्यानीत्युत्प्रेक्षाशयः । 3 बहुत्वमुचितं न ह्यनेकदण्डाभिघातैरेकगण्डकोत्पादने स्वारस्यम् । 'गात्रगण्डक'मित्येव च पाठः । गण्डका गात्रव्रण('गूमडा')विशेषाः । गण्डका एव क्रोधस्य फलरूपा इत्युत्प्रेक्षातात्पर्यम् । 4 द्रविडोत्पीडितजनैस्तदङ्गेषु प्रज्वालिताः (दाहार्थम्) । 5 'आक्रुष्ट' इत्येव पाठ उचितः । निष्कारणम् आक्रुष्टः शापादिभिस्तिरस्कृतो यो जनस्तस्य । 6 शिरस्त्राणायितमावरणम्, 'खोळ' इति जयपुरग्रामभाषायाम् । 'खोलकः पाकवल्मीकपूगकोषशिरस्त्रके' इति विश्वः ।

---

**पाठा०**—१ घात. २ गण्डकम्. ३ बहुसुखम्. ४ सप्रवाहमिव; शतसंप्रवाहमिव. ५ आमुक्त. ६ खण्डलोलेन. ७ आवासम्. ८ अरोचयत्.

प्रणम्य [१]प्रशान्तोद्देशदर्शनकुतूहलेन परिभ्रमन्नुच्चैरारटन्तमाक्रोशन्तं च कुपितं द्रविडधार्मिकमेकदेशे ददर्श। दृष्ट्वा च कादम्बरीविरहोत्कण्ठोद्वेगदूयमानोऽपि सुचिरं जहास। न्यवारयच्च तेन सार्धं [२]प्रारब्धकलहानुपहसतः स्वसैनिकान्। उपसान्त्वनैश्च कथमपि प्रियालापशतानुनयैः प्रशममुपनीय क्रमेण जन्मभूमिं जातिं विद्यां च कलत्रमपत्यानि विभवं वयःप्रमाणं प्रव्रज्यायाश्च कारणं स्वयमेव पप्रच्छ। पृष्टश्चासाववर्णयदात्मानम्। [३]अतीतस्वशौर्यरूपविभववर्णनवाचालेन तेन सुतरामरज्यत राजपुत्रः। विरहातुरहृदयस्य [४]विनोदनतामिवागात्। उपजातपरिचयश्चास्मै ताम्बूलमदापयत्। अस्तमुपगते च भगवति सप्तसप्तौ, आवासितेषु यथासंपन्नपादपतलेषु राजसूनुषु, शाखावसक्त[५]तपनीयपर्याणेषु क्षितितललुठनपांसुलसटावधूननानुमितोत्साहेषु गृहीतकतिपयशष्पकवलेषु पीतोदकेषु स्नानार्द्रपृष्ठतया विगतश्रमेषु पुरोनिखातकुन्तयष्टिषु संयतेषु वाजिषु, वाजिसमीपविरचितपर्ण[६]प्रस्तरे च दिवसगमन[७]खिन्नपरि-

---

शान्तो य उद्देशस्तस्य दर्शनस्य यत्कुतूहलं तेन परिभ्रमन्नितस्ततः संचरन्। उच्चैरुच्चस्वरेणारटन्तं पूत्कुर्वन्तमाक्रोशन्तं च कुपितं द्रविडधार्मिकमेकदेश एकस्मिन्प्रदेशे ददर्शैक्षांचक्रे। दृष्ट्वा विलोक्य। **कादम्बरीति**। कादम्बर्या विरहे योत्कण्ठा तज्जनितो य उद्वेगस्तेन दूयमानोऽपि पीड्यमानोऽपि सुचिरं चिरकालं यावज्जहास हास्यं चक्रे। न्यवारयच्च निवारणं कृतवांश्च। **तेनेति**। द्रविडधार्मिकेण सार्धं प्रारब्धकलहान्स्वसैनिकानुपहसतः। **उपेति**। उपसान्त्वनैः सामभिः प्रियालापानामिष्टवचनानां शतेनानुनयैरनुकूलनैश्च कथमपि महता कष्टेन प्रशमं शान्तभावमुपनीय प्राप्य जन्मभूमिमुत्पत्तिस्थलम्, जातिं ब्राह्मणत्वादिकाम्, विद्यां वेदाध्ययनादिरूपाम्, कलत्रं स्त्री, अपत्यानि पुत्रपुत्रीरूपाणि, विभवमैश्वर्यम्, वयःप्रमाणं वर्षपरिमाणम्, प्रव्रज्यायाश्च दीक्षायाश्च कारणं निदानम्, एतानि स्वयमेव पप्रच्छ प्रश्नविषयीचक्रे। पृष्टश्चासौ द्रविडधार्मिक आत्मानं स्वमवर्णयद्वर्णितवान्। **अतीति**। अतीतं व्यतिक्रान्तं यत्स्वकीयं शौर्यं पराक्रमः, रूपं सौन्दर्यम्, विभव ऐश्वर्यं, तेषां वर्णनं तत्र वाचालेन वाचाटेन तेन द्रविडधार्मिकेण राजपुत्रश्चन्द्रापीडः सुतरामतिशयेनारज्यतानुरक्तो बभूव। **विरहेति**। विरहेणातुरं हृदयं यस्यैवंभूतस्य राज्ञो विनोदनस्य भावो विनोदनता तामिव सोऽगात्। राज्ञश्चित्तविश्रान्तिस्थान(ग)तां जगामेत्यर्थः। **उपेति**। उपजातः प्राप्तः परिचयो यस्यैवंविधोऽस्मै द्रविडधार्मिकाय ताम्बूलं नागवल्लीदलमदापयद्दापितवान्। अथ च भगवति सप्तसप्तौ सूर्येऽस्तमुपगते सति चन्द्रापीडः परिजनेन सेवकजनेनैकदेश एकत्रस्थले संयतस्य बद्धस्येन्द्रायुधस्य पुरः परिकल्पितं प्रतीहारेण निवेदितं ज्ञापितं शयनीयं तल्पमगादित्यन्वयः। केषु सत्सु। राजसूनुषु नृपपुत्रेषु यथासंपन्नाः[1] पुष्पफलसमृद्धा ये पादपा वृक्षास्तेषां तलेष्वावासितेषु वसतिं प्रापितेषु सत्सु। पुनः केषु सत्सु। वाजिषु तुरङ्गमेषु संयतेषु बद्धेषु सत्सु। अथ वाजिविशेषणानि—**शाखेति**। शाखायामवसक्तान्यवलम्बितानि तपनीयस्य सुवर्णस्य पर्याणानि पल्ययनानि येषां तेषु। **क्षितीति**। क्षितितलं पृथ्वीतलं तत्र लुठनेन पांसुला याः सटाः केशसंहतयस्तासामवधूननेन कम्पेनानुमित उत्साहो येषां तेषु। **गृहीतेति**। गृहीताः कतिपये कियन्तः शष्पकवला बालतृणग्रासा यैस्तेषु। पीतान्युदकानि यैस्तेषु। **स्नानेति**। स्नानेनार्द्रं पृष्ठं येषां तेषां भावस्तत्ता तया विगतो दूरीभूतः श्रमो येषां तेषु। **पुर इति**। पुरोनिखाता अग्रे स्थापिताः कुन्तयष्टयो येषां तेषु। पुनः कस्मिन्सति। वाजिसमीपेऽश्वसविधे विरचितः कल्पितः पर्णानां पत्राणां प्रस्तरः संस्तरो येन तस्मिन्। दिवसं यावद्गमनेन खिन्ना पदातिजनाः परिकल्पिताः[2] प्रथमप्रहरक्रमेण संस्थापिता

---

**टिप्प०—1 यथा प्राप्ता इत्यर्थः। 2 अविचारितोयं पाठः। 'परिवर्तितयामिके' इत्युचितम्। गमनेन केचित्खिन्ना अत एवान्ये परिवर्तिता यामिका येन तस्मिन्निति तदर्थः।**

---

पाठा०—१ प्रशस्तदेवादर्शन. २ संरब्ध; समारब्ध. ३ अतीतस्वसौन्दर्यरूपविभववर्णनावाचालेन. ४ तच्चरितं विनोदनताम्. ५ अपनीत. ६ सस्तरे. ७ खिन्ने.

कल्पितयामिके सुषुप्सति सैनिकजने, कृतबहुपावकप्रभापीततमसि[1] दिवस इव विराजमाने सेनानिवेशे चन्द्रापीडः परिजनेनैकदेशे संयतस्येन्द्रायुधस्य पुरः परिकल्पितं प्रतीहारनिवेदितं शयनीयमगात्। निषण्णस्य चास्य तत्क्षणमेव पस्पर्श दुःखासिका हृदयम्। अरतिगृहीतश्च विसर्जयांबभूव राजलोकम्। अतिवल्लभानपि नाललाप पार्श्वस्थान्। निमीलितलोचनो मुहुर्मुहुर्मनसा जगाम किंपुरुषविषयम्। अनन्यचेताः सस्मार हेमकूटस्य[2]। निष्कारणबान्धवतामचिन्तयन्[3] महाश्वेतापादानाम्[4]। जीवितफल[5]मभिललाष पुनः पुनः कादम्बरीदर्शनम्। अपगताभिमानपेशलाय नितरामस्पृहयन्मदलेखापरिचयाय। तमालिकां द्रष्टुमाचकाङ्क्ष। केयूरकागमनमुत्प्रैक्षत। हिमगृहकमपश्यत्। उष्णमायतं पुनरुक्तं[6] निशश्वास। बबन्ध बान्धवेभ्यश्चाधिकां प्रीतिं शेषहारे। पश्चात्स्थितां पुण्यभागिनीममन्यत पत्रलेखाम्। एवं चानुपजातनिद्र एव तामनयन्निशाम्। उषसि चोत्थाय तस्य जरद्द्रविडधार्मिकस्येच्छया[7] निसृष्टैर्धनविसरैः पूरयित्वा मनोरथमभिमतमभिरमणीयेषु[8] प्रदेशेषु निवसन्नल्पैरेवाहोभिरुज्जयिनीमा-

---

यामिका यस्मिन्नेवंविधे सैनिकजने सुषुप्सति स्वपितुमिच्छति सति। कृतो विहितो यो बहुपावकः प्रभूताग्निस्तस्य प्रभया पीतं तमो यस्मिन्नेवंविधे दिनावसाने दिवस इव विराजमाने सेनानिवेशे सति। **निषण्णस्य चेति।** अस्य चन्द्रापीडस्य निषण्णस्योपविष्टस्य तत्क्षणमेव दुःखमासतेऽस्यामिति दुःखासिकारतिर्हृदयं[1] पस्पर्श स्पृष्टवती। **अरतीति।** अरत्योद्वेगेन गृहीत आक्रान्तश्च राजलोकं विसर्जयांबभूव शयनायानुज्ञां प्रदत्तवान्। **अतीति।** अतिवल्लभानप्यतिप्रियानपि पार्श्वस्थान्समीपवर्तिनो नाललाप न बभाषे। निमीलिते लोचने यस्यैवंभूतो मुहुर्मुहुः किंपुरुषविषयं मनसा चेतसा कृत्वा जगाम गतवान्। **अनन्येति।** न विद्यतेऽन्यस्मिन् चेतः चित्तं यस्यैवंभूतो हेमकूटस्य सस्मार स्मरणं चकार। 'मातुः स्मरति' इतिवत् हेमकूटस्येति षष्ठी। **निष्कारणेति।** महाश्वेतापादानां[2] निष्कारणबान्धवतां निर्हेतुकस्वजनतामचिन्तयत्। पुनःपुनर्वारंवारं कादम्बरीदर्शनमभिललाष वाञ्छयामास[3]। कीदृशम्। जीवितस्य फलमिव फलम्। **अपगतेति।** अपगतो दूरीभूतो योऽभिमानो गर्वस्तेन पेशलाय हृद्याय। 'पेशलं हृद्यं सुन्दरम्' इति कोशः। **मदेति।** मदलेखया सह यः परिचयः संस्तवस्तस्मै नितरां अस्पृहयत्स्पृहां चकार। तमालिकां द्रष्टुं विलोकयितुमाचकाङ्क्षाभिललाष। केयूरकस्यागमनमुत्प्रैक्षतोद्वक्ष्यत[4]। हिमगृहकमपश्यत्। उष्णमुष्णमायतं विस्तीर्णं पुनरुक्तं वारंवारं निशश्वास निश्वासान्मुमोच। बान्धवेभ्यः स्वजनेभ्योधिकां प्रीतिं शेषाभिधाने हारे बबन्ध बन्धितवान्। तदर्पितत्वेन तदुपरि रागाधिक्यमिति भावः। **पश्चादिति।** पश्चात्स्थितां पुण्यभागिनीं पत्रलेखाममन्यत ज्ञातवान्। **एवं चेति।** एवममुना प्रकारेण अनुपजातानागता निद्रा प्रमीला यस्यैवंभूत एव निशां रात्रिमनयद्यापितवान्। उषसि च प्रभात उत्थाय तस्य पूर्वव्यावर्णितस्वरूपस्य जरद्द्रविडधार्मिकस्येच्छया निसृष्टैर्दत्तैर्धनविसरैर्द्रव्यसमूहैर्मनोरथमभिलाषं पूरयित्वाभिरमणीयेषु प्रदेशेषु निवसन्निवासं कुर्वन्नल्पैरहोभिरेव स्तोकैरेव दिनैरुज्जयिनीं विशा-

**टिप्प०**—1 अरतिरिति स्यात्। वस्तुतस्तु दुःखस्य आसनम् आसिका अर्थात् दुःखप्राप्तिरित्यर्थः, 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' इति ण्वुच्। 2 तपस्वितया गौरववशात्पादशब्दयोगो बहुत्वं च। वस्तुतस्तु—'प्रसादानाम्' इत्युचित इव प्रतिभाति। 3 ववाञ्छेत्येवोचितम्, किमु स्वार्थे णिच्? 4 स्वस्य दशया कादम्बर्या अपि दशां कल्पयित्वा तत् (काद०) द्वारा तत्प्रेषणं स्वमनसैव समभावयदित्यर्थः। टीकाकारस्तु विचार्यः।

---

**पाठा०**—१ प्रभाप्रणाशिततमसि दिवसायमाने सेनानिवेशे. २ हेमकूटं; हेमकूटस्य रम्यताम्. ३ उत्कण्ठितोऽचिन्तयत्. ४ प्रसादानाम्. ५ जीवितमिव. ६ च मुहुर्निशश्वास. ७ स्वेच्छाविसृष्टैः. ८ मनोरथानभिमतेष्वतिरमणीयेषु; मनोरथमभिमतेष्वतिरमणीयेषु.

जगाम। आकस्मिकागमनप्रहृष्टसंभ्रान्तानां पौराणामर्घकमलानीव नमस्कारािञ्जलिसहस्राणि प्रतीच्छन्नतर्कित एव विवेश[1] नगरीम्।

अहमहमिकया च प्रधावितानतिरभसहर्षविह्वलान्परिजनान् 'द्वारि देव, चन्द्रापीडो वर्तते' इत्युपलभ्यास्य पिता निर्भरानन्दमन्दगमनो मन्दर इव क्षीरोदजलमुत्तरीयांशुकममलमागलितमाकर्षन्, प्रहर्षनेत्रजलबिन्दुवर्षी मुक्तमुक्ताफलासार इव कल्पपादपः, प्रत्यासन्नवर्तिभिर्जरापाण्डुमौलिभिश्चन्दनविलेपनैरनुपहतक्षौमधारिभिः[2] केयूरिभिरुष्णीषिभिः किरीटिभिः शेखरिभिर्बहुकैलासामिव बहुक्षीरोदामिव क्षितिं दर्शयद्भिः प्रतिपन्नासिवेत्रच्छत्रकेतुचामरैरनुगम्यमानो राजसहस्रैश्चरणाभ्यामेव प्रत्युज्जगाम। दृष्ट्वा[3] च पितरं दूरादेवावतीर्य वाजिनश्चूडामणिमरीचिमालिना मौलिना महीमगच्छत्। अथ प्रसारितभुजेन 'एह्येहि' इत्याहूय[4] पित्रा गाढमुपगूढः सुचिरं[5] परिष्वज्य तत्कालसंनिहितानां च माननीयानां[6]

---

लामाजगमायथौ। **आकस्मिकेति**। आकस्मिकमसंभावितं यदागमनं तेन प्रहृष्टाः प्रमुदिताः संभ्रान्ताश्च ये पौरास्तेषामर्घकमलानीव नमस्कारािञ्जलिसहस्राणि प्रतीच्छन्गृह्णन्नतर्कित एवासंभावित एव नगरीमुज्जयिनीं विवेश प्रवेशं चकार।

अहं पूर्वमहं पूर्वमित्यहमहमिका तया प्रधावितानुच्चलितानतिरभसेन जनितो यो हर्षः प्रमोदस्तेन विह्वलान्व्याकुलान्परिजनान्परिच्छदान्द्वारि द्वारदेशे हे देव, चन्द्रापीडो वर्तते इत्युपलभ्य प्राप्यास्य चन्द्रापीडस्य पिता तारापीडो निर्भरानन्देन निबिडप्रमोदेन मन्दं गमनं यस्यैवंभूतोऽमलं निर्मलमागलितमीषत्स्वस्थानाद्भ्रष्टमुत्तरीयांशुकमुपसंव्यानवस्त्रमाकर्षयन्स्वस्थानं नयन्। राज्ञो गौरत्वसाम्यादुत्तरीयांशुकस्य शुभ्रत्वसाम्यादाह—**मन्दरेति**। मन्दर इव मेरुरिव क्षीरोदजलम्। **प्रहर्षेति**। प्रहर्षात्प्रमोदान्नेत्रजलबिन्दून्वर्षतीत्येवंशीलः स तथा। जलबिन्दूनां शुचित्वे मुक्ताफलसाम्यमाह—**मुक्तेति**। मुक्तो मुक्ताफलानामासारो येनैवंविध इव कल्पपादपो[2] मन्दरतरुः। प्रत्यासन्नवर्तिभिर्जरा विस्रसा तया पाण्डवः श्वेता मौलयो येषां तैश्चन्दनानां विलेपनान्यङ्गरागा येषां तैः। **अन्वित**। अनुपहतमच्छिन्नं यत्क्षौमं दुकूलं तद्धारिभिः, केयूरमङ्गदं विद्यते येषां तैः, उष्णीषं पुष्पदाम विद्यते येषां तैः, किरीटं कोटीरं विद्यते येषां तैः, शेखर आपीडो विद्यते येषां तैः। अत एव बहुकैलासामिव। शेखराणां शुभ्रत्वादिति भावः। बहुक्षीरोदामिव। क्षौमादीनामतिशुभ्रत्वेन क्षीरोदसादृश्यात्। इत्येतादृशीं क्षितिं वसुधां दर्शयद्भिः प्रकाशयद्भिः। **प्रतीति**। प्रतिपन्नानि स्वीकृतानि वेत्रच्छत्रकेतुचामराणि यैरेवंविधै राजसहस्रैरनुगम्यमानः चरणाभ्यां पादाभ्यामेव प्रत्युज्जगामाभिमुखं प्रतस्थे। दृष्ट्वा च पितरं जनकं दूरादेव वाजिनोऽश्वादवतीर्य चूडामणिः शिरोमणिस्तस्य मरीचयः कान्तयस्ता[3] मलति धारयतीत्येवंशीलेन मौलिना मस्तकेन महीं वसुधामगच्छत्। पञ्चाङ्गं प्रणाममकरोदित्यर्थः। **अथेति**। प्रणामानन्तरं प्रसारितभुजेन विस्तारितबाहुना पित्रा एहि एहि इत्याहूय गाढमत्यर्थमुपगूढ आलिङ्गितः सुचिरं बहुकालं परिष्वज्यालिङ्ग्य तस्मिन्काले संनिहितानां समीपगतानां च माननीयानां पूज्यानां कृतो विहितो नमस्कारो येनैवंभूतश्चन्द्रापीडः करे गृहीत्वा बिला-

---

टिप्प०—1 सविशेषणः 'परिजनान्' इति द्वितीयान्तपाठो लेखकदोषः स्यान्मन्ये, अन्यथा टीकाकर्तुर्निस्सीममज्ञानं सिध्येत्। अस्तु। 'परिजनात्' इति पाठः। परिजनात् उपलभ्य संवादं प्राप्य। 2 कल्पपादप इव इत्यन्वयो बोध्यः। 3 चूडामणेर्मरीचिमाला अस्त्यस्य तादृशेन, इत्येवार्थं उचितः।

---

पाठा०—१ आविवेश. २ भारिभिर्हारिभिः. ३ चन्द्रापीडोऽपि दृष्ट्वा च. ४ आदरादाहूय. ५ सुचिरं गाढमुपगूढः. ६ माननीयानाममात्यानां महीपतीनां च क्रमेण.

कृतनमस्कारः करे गृहीत्वा विलासवतीभवनमनीयत राज्ञा । तथापि तथैव सर्वान्तःपुरपरिवारया प्रत्युद्गम्याभिनन्दितागमनः कृतागमनमङ्गलाचारो दिग्विजयसंबद्धाभिरेव कथाभिः कंचित्कालं स्थित्वा शुकनासं द्रष्टुमाययौ । तत्राप्यमुनैव क्रमेण सुचिरं स्थित्वा निवेद्य वैशम्पायनं स्कन्धावारवर्तिनं कुशलिनमालोक्य च मनोरमामागत्य विलासवतीभवन एव सर्वाः स्नानादिकाः परवश इव क्रिया निरवर्तयत् । अपराह्णे निजमेव भवनमयासीत् । तत्र च रणरणकखिद्यमानमानसः कादम्बर्या विना न केवलमात्मानं स्वभवनमवन्तीनगरं वा सकलमेव महीमण्डलं शून्यममन्यत । ततो गन्धर्वराजपुत्रीवार्ताश्रवणोत्सुकश्च महोत्सवमिवेप्सितवरप्राप्तिकालमिवामृतोत्पत्तिसमयमिव पत्रलेखागमनं प्रत्यपालयत् ।

ततः कतिपयदिवसापगमे मेघनादः पत्रलेखामादायागच्छत्, उपानयच्चैनाम् । कृतनमस्कारां च दूरादेव स्मितेन प्रकाशितप्रीतिश्चन्द्रापीडः प्रकृतिवल्लभामपि कादम्बरीसकाशात्प्रसादलब्धापरसौभाग्यामिव वल्लभतरतामुपागतामुत्थायातिशयदर्शितादरमालिलिङ्ग पत्रलेखाम्, मेघनादं च प्रणतं पृष्ठे करकिसलयेन पस्पर्श । समुपविष्टश्चाब्रवीत्—'पत्रलेखे, कथय तत्रभवत्या महाश्वेतायाः समदलेखाया देव्याः कादम्बर्याश्च कुशलम् । कुशली वा सक-

---

सवतीभवनं राज्ञानीयत प्राप्यत । तथापि विलासवत्यापि तथैव पूर्वोक्तरीत्यैव सर्वान्तःपुरस्थ परिवारो यस्याः सा तया प्रत्युद्गम्याभिमुखमागत्याभिनन्दितं श्लाघितमागमनं यस्य सः । कृतो विहित आगमनस्य मङ्गलाचारः क्रियाविशेषो यस्य सः । दिशां विजयः स्वायत्तीकरणं तत्संबद्धाभिस्तद्विषयिकाभिः कथाभिर्वार्ताभिः कंचित्कालं मातुर्गृहे स्थित्वा शुकनासं द्रष्टुं विलोकितुमाययावाजगाम । तत्राप्यमुनैव क्रमेण पूर्वोक्तन्यायेन सुचिरं बहुकालं स्थित्वा स्कन्धावारवर्तिनं कुशलिनं वैशम्पायनं निवेद्य विज्ञाप्यालोक्य निरीक्ष्य च मनोरमां वैशम्पायनजननीमागत्य विलासवतीभवन एव सर्वाः समग्राः स्नानादिकाः क्रियाः परवश इव परायत्त इव निरवर्तयन्निर्वर्तितवान् । अपराह्णे मध्याह्नात्परतो निजमात्मीयमेव भवनं कुमारोऽयासीदगात् तत्र च रणरणकेनोत्कण्ठया खिद्यमानं पीड्यमानं मानसं यस्यैवंविधः कादम्बर्या विना न केवलमात्मानं स्वभवनं स्वगृहमवन्तीनगरं सकलमेव महीमण्डलं शून्यममन्यतागणयत[2] । ततस्तदनन्तरं गन्धर्वराजपुत्र्या या वार्ता किंवदन्ती तस्याः श्रवणमाकर्णनं तत्रोत्सुक उत्कण्ठितश्च महोत्सवमिवोत्सवमिवेप्सितोऽभिलषितो यो वरस्तस्य प्राप्तिकालो लब्धिसमयस्तमिवामृतस्य पीयूषस्योत्पत्तिसमयस्तमिव पत्रलेखागमनं प्रत्यपालयत्प्रत्यपेक्षांचक्रे ।

तदनु तदनन्तरं कतिपयदिवसापगमे कियत्कालातिक्रमे मेघनादः पत्रलेखामादाय गृहीत्वागच्छदाययौ । एनां पत्रलेखामुपानयच्च राज्ञः समीपे प्रापयच्च । कृतनमस्कारां च तां दूरादेव स्मितेनेषद्धसितेन च प्रकाशिताविष्कृता प्रीतिर्येनैवंभूतश्चन्द्रापीडः प्रकृत्या स्वभावेन वल्लभामपि कादम्बरीसकाशात्प्रसादेन लब्धमपरं सौभाग्यं ययैवंविधामिवात एव वल्लभतरतामतिवल्लभतामुपागतां प्राप्तवतीमुत्थायातिशयदर्शितादरं यथा स्यात्तथा पत्रलेखामालिलिङ्गोपगूहनं चकार । मेघनादं च प्रणतं पृष्ठे करकिसलयेन हस्तपल्लवेन पस्पर्श स्पर्शं चकार । तदनन्तरं समुपविष्टश्चेत्यब्रवीदित्यवोचत् । इतिशब्दद्योत्यमाह—**पत्रलेखे इति** । हे पत्रलेखे, कथय निवेदय तत्रभवत्याः पूज्याया महाश्वेताया मदलेखया सहवर्तमानाया देव्याः कादम्बर्याश्च कुशलं वर्तते । कुशली वा सकलः समस्त-

---

**टिप्प०**—1 सर्वाण्यन्तःपुराणि परिवारो यस्य इत्यर्थो बोध्यः । 2 अगणयत् इति स्यात् ।

---

**पाठा०**—१ प्रत्युद्गम. २ एव. ३ कुमारभवनम्. ४ समुपविष्टां च; समुपविष्टा च ताम्. ५ कुशली वा बाह्यः सकलः; कुशलवानन्यः सकलः.

लस्तमालिकाकेयूरकादिपरिजनः[1] ?' इति । सात्रवीत्—'देव, यथाज्ञापयसि भद्रम् । [2]त्वामर्चयति शेखरीकृताञ्जलिना ससखीजना सपरिजना देवी कादम्बरी' इति । एवमुक्तवतीं पत्रलेखामादाय मन्दिराभ्यन्तरं विसर्जितराजलोको विवेश । तत्र चोत्ताम्यता मनसा धारयितुमपारयन्कुतूहलमतिप्रीत्या दूरमुत्सारितपरिजनः प्रविश्या[3]गारमचिरप्ररूढायाः स्थलकमलिन्याः पृथुभिरुन्नालैः पलाशैर्वि[4]रचितातपत्र[5]कृत्याया अध्यास्य मध्यभागमन्यतरस्य मरकतपताकायमानस्य [6]पत्रमण्डपस्य तले चरणारविन्देन समुत्सार्य सुखप्रसुप्तं हंसमिथुनमुपविश्याप्राक्षीत्—'पत्रलेखे, [7]कथय कथमसि स्थिता ? कियन्ति वा दिनानि ? कीदृशो वा देवीप्रसादः ? का वा गोष्ठ्यः समभवन् ? कीदृश्यो वा कथाः समजायन्त ? [8]को वातिशयेनास्मान्स्मरति ? कस्य वा [9]गरीयसि प्रीतिः ?' इति । एवं पृष्टा च व्यजिज्ञपत्—'देव, दत्तावधानेन श्रूयताम्, यथा स्थितास्मि, यावन्ति वा दिनानि, यादृशो वा देवीप्रसादः, यथा वा गोष्ठ्यः सम-

---

स्तमालिकाकेयूरकादिपरिजनः । सात्रवीदवोचत् । हे देव, यथाज्ञापयस्याज्ञां करोषि तथा भद्रं कुशलं वर्तते । शेखरीकृतो योऽञ्जलिस्तेन कृत्वा ससखीजना सवयस्या सपरिजना सपरिच्छदा च देवी कादम्बरी त्वां भवन्तमर्चयति पूजयति । इत्येवमुक्तवतीं कथितवतीं पत्रलेखामादाय गृहीत्वा । **विसर्जितेति** । विसर्जितो राजलोको येनैवंभूतो मन्दिराभ्यन्तरं विवेश प्रविष्टवान् । **तत्र चेति** । तस्मिन्नेव स्थल उत्ताम्यता विरहेणोत्तपता मनसा चेतसा कुतूहलमाश्चर्यं धारयितुं सम्यक्तया ज्ञातुमपारयन्नशक्नुवन्[1], अतिप्रीत्यातिस्नेहेन दूरमुत्सारितो विसर्जितः परिजनो येनैवंभूतोऽगारं गृहं प्रविश्य प्रवेशं कृत्वा पृथुभिर्विस्तीर्णैरुन्नालैः पलाशैः पत्रैर्विरचितं विहितमातपत्रकृत्यं छत्रकार्यं ययैवंविधायाः स्थलकमलिन्या मध्यभागमध्यास्याश्रित्यान्यतरस्य पूर्वोक्तस्य भिन्नस्य मरकतस्याश्मगर्भस्य या पताका वैजयन्ती तद्वदाचरमाणस्य पत्रमण्डपस्य तले सुखप्रसुप्तं हंसमिथुनं चरणारविन्देन समुत्सार्य दूरीकृत्य तत्रोपविश्याप्राक्षीत्प्रश्नमकार्षीत् । हे पत्रलेखे, कथय प्रतिपादय । कथं केन प्रकारेण स्थितासि । कियन्ति वा दिनानि वासराणि । स्थितेति शेषः । कीदृशः, पूर्वस्मादधिको न्यूनो वा देव्याः कादम्बर्याः प्रसादः प्रसन्नता । का वा गोष्ठ्योऽन्योन्यसंलापाः समभवन्संजाताः । कीदृश्यो वा कथाः सखीनां वार्ताः समजायन्त समभवन् । को वातिशयेन बाहुल्येनास्मान्स्मरति स्मरणविषयीकरोति । कस्य वा गरीयसि महीयसि मयि[2] विषये प्रीतिः स्नेहः । इत्येवममुना प्रकारेण पृष्टा प्रश्नविषयीकृता च व्यजिज्ञपद्व्यवेदयत् । तदेवाह—**देवेति** । हे देव, दत्तावधानेन चित्तैकाग्र्येण श्रूयतामाकर्ण्यताम् । तदेव दर्शयति—**यथेति** । यावन्ति दिनान्यहं स्थितास्मि, यादृशो वा देवीप्रसादः, यथा गोष्ठ्यः समभवन्, यादृश्यश्च कथाः समजायन्त

---

**टिप्प०**—1 संवरीतुमशक्नुवन्नित्यर्थो वक्तव्यः । 2 अत्रापि मन्ये लेखकदोष एव स्यात् । अन्यथा पामरात्पामरोपि 'महीयसि मयि' इति स्वमुखेन न विकत्थेत । किन्त्वेवंलेखकष्टीकाकारस्तु किम्, अक्षर मुखोपि न स्वीकर्तुमिष्यते । अस्तु. 'गरीयसी' इति दीर्घं प्रपठ्य 'मयि मद्विषये कस्य ( कादम्बरीमहाश्वेतादीनां मध्ये कस्य ) गरीयसी अत्यधिका प्रीतिः अस्ति' इत्यर्थः कर्तव्यः । किन्तु 'गरीयसी' इति दीर्घपाठो बुद्धिपूर्वकमेव नीचैः ( पाठान्तरेषु ) पातित इति लिङ्गेन तु टीकाकारस्यैव तदिदं हस्तलाघवमनुमेयं भवति । टीकायां सोयं पाठः पूर्वमुद्रितो दृष्ट इति मूलटीकयोः संवादाय हन्त ममापि 'गरीयसी' इति तिरस्कार्यः, 'गरीयसि मयि' इति तु उपरिस्थाप्योऽभवदिति कथं वा निष्कृतिः कर्तव्या ? विनाऽऽधारं टीकाकर्तुरक्षराणि वा कथं छिन्द्याम् ?

---

**पाठा०**—१ केयूरकादिः; केयूरकादिकः. २ त्वामेव. ३ अजिर; अगाररूढायाः. ४ उपरचित. ५ कृत्यस्य. ६ शयनमण्डपस्य तालस्य तले. ७ आगते मयि कथय. ८ यो वातिशयेन तव स्मरति यस्य वा त्वयि गरीयसी प्रीतिरस्तीति. ९ मयि गरीयसी.

भवन्, यादृश्यश्च कथाः समजायन्त। ततः खल्वागते देवे केयूरकेण सह प्रतिनिवृत्याहं[1] तथैव कुसुमशयनीयसमीपे समुपाविशम्। अतिष्ठं च सुखं नवनवाननुभवन्ती देवीप्रसादान्। किं बहुना प्रायेण मम चक्षुषि चक्षुः, वपुषि वपुः, करे करपल्लवम्[2], नामाक्षरेषु वाणी, प्रीतौ हृदयं देव्याः सकलमेव तं दिवसमभवत्। अपराह्णे च मामेवावलम्ब्य निष्क्रम्य हिमगृहकात्संचरन्ती यदृच्छया निषिद्धपरिजना वल्लभबालोद्यानं जगाम। तत्र च सुधाधवलां कालिन्दीजलतरङ्गमय्येव मरकतसोपानमालया प्रमदवनवेदिकामध्यारोहत्[3]। तस्यां च मणिस्तम्भावष्टम्भस्थिता[4] स्थित्वा च मुहूर्तमिव हृदयेन सह दीर्घकालमवधार्य किमपि व्याहर्तुमिच्छन्ती निश्चलधृततारकेण निष्पन्दपक्ष्मणा चक्षुषा मुखं मे सुचिरं व्यलोकयत्। विलोकयन्त्येव[5] च कृतसंकल्पा मदनाग्निं प्रवेष्टुमिच्छन्ती सस्नाविव स्वेदाम्भःस्रोतसि । स्रोतसेव[6] तरलीकृता समकम्पत। कम्पिताङ्गी च पतनभियेवागृह्यत विषादेन।

अथ मया विदिताभिप्रायया तन्मुखविनिवेशितनिष्कम्पनयनदत्तावधानया 'आज्ञापय'

---

एतत्सर्वं श्रूयतामित्यनेनान्वितम्। **तत इति**। तस्मात्स्थानात्खलु निश्चयेन देवे त्वय्यागते सति केयूरकेण सह प्रतिनिवृत्य पश्चाद्गता तथैव पूर्वोक्तरीत्यैव कुसुमशयनीयसमीपे[1] समुपाविशं समुपविष्टा । नवनवान्देवीप्रसादाननुभवन्त्यहं सुखमतिष्ठम्। किं बहुना जल्पितेन। प्रायेण बाहुल्येन मम चक्षुषि देवीचक्षुरिति देवीपदं प्रत्येकमभिसंबध्यते। चक्षुरित्यनेन संमुखमद्विषयकप्रेक्षणातिशयः। वपुषि वपुरित्यवियोगातिशयः । करे करपल्लवमिति मद्विषयकः कश्चिच्चमत्कारातिशयः। नामाक्षरेषु वाणीत्यनेन प्रश्नातिशयः। प्रीतौ हृदयमिति रहस्यप्रीत्यतिशयश्च व्यज्यते। देव्याः पूर्वोक्तं सकलमेव तं[2] दिवसमभवत्। अपराह्णे च मामेवावलम्ब्यालम्बनीकृत्य हिमगृहकान्निष्क्रम्य निर्गत्य यदृच्छया स्वेच्छया संचरन्ती व्रजन्ती निषिद्धपरिजना वल्लभं बालोद्यानं जगाम गतवती। **तत्र चेति**। तस्मिन्बालोद्याने सुधया पूर्वोक्तया धवलां शुभ्रां प्रमदवनवेदिकामध्यारोहदधिरोहणं कृतवती। मरकतस्य या सोपानमाला तया कालिन्दी यमुना तस्या जलतरङ्गाः प्रचुरा यस्या एवंविधयेव[3]। **तस्यां चेति**। प्रमदवनवेदिकायां मणिस्तम्भलक्षणो योऽवष्टम्भस्तस्मिन्स्थिता तदाधारेणासेदुषी। विरहातिशयं व्यञ्जयन्नाह—**स्थित्वा चेति**। मुहूर्तमिव स्थित्वावस्थितिं कृत्वा हृदयेन मनसा सह दीर्घकालमवधार्य निश्चित्य किमपि व्याहर्तुं कथयितुमिच्छन्त्यभिलषन्ती निश्चलं धृता तारका कनीनिका यस्मिन्, निष्पन्दं निश्चलं पक्ष्म नेत्ररोम यस्मिन्नेवंभूतेन चक्षुषा नेत्रेण मे मम मुखं सुचिरं बहुकालं व्यलोकयदपश्यत्। विलोकयन्त्येव पश्यन्त्येव कृतः संकल्पो यया सा। संकल्पकार्यमाह—**मदनेति**। मदन एवाग्निर्वह्निस्तं प्रवेष्टुं प्रवेशं कर्तुमिच्छन्ती वाञ्छन्ती। एतेन मदनदाहस्यासह्यतातिशयो द्योत्यते। अग्निप्रवेशस्य स्नानपूर्वकत्वादाह—**सस्नाविवेति**। स्वेदाम्भसो घर्मजलस्य स्रोतसि प्रवाहे सस्नाविव स्नानं कृतवतीव। एतेन स्वेदातिशयश्च व्यज्यते। स्रोतसा तरलीकृतेव समकम्पताचलत् । कम्पितमङ्गं यस्या एवंविधा च पतनभियेव विषादेनागृह्यतोपादीयत।

अथेत्यानन्तर्ये। विदितो ज्ञातोऽभिप्रायो यस्याः सैवंविधया मया तस्या कादम्बर्या मुखे विनिवेशिते स्थापिते निष्कम्पे नयने ताभ्यां कृत्वा दत्तमवधानं यया सा तया 'देवि, मामाज्ञापयाज्ञां देही'ति विज्ञापिते

---

**टिप्प०**—1 कादम्बर्याः पुष्पशय्येत्यर्थः। 2 तस्मिन् समग्रेपि दिने, देव्या मय्येव एकचित्तताभवदित्याशयः। 3 एवंविधयेव सोपानमालया प्रमदवनवेदिकामध्यारोहदिति योजना।

---

**पाठा०**—१ प्रतिनिवृत्ता. २ पल्लवः. ३ आरुरोह. ४ मणिस्थूणावष्टम्भास्थिता. ५ आलोकयन्ती. ६ स्वेदाम्भःस्रोतसेव.

इति विज्ञापिते निजावयवैरपि वेपथुमद्भिर्निवार्यमाणेव, रहस्यश्रवणलज्जयात्मप्रतिमामपि लिखितमणिकुट्टिमेन चरणाङ्गुष्ठेनापक्रमायेवामृशन्ती, भवनकलहंसान्कुट्टिमोल्लेखमुखरितनूपुरेण चरणारविन्देन विसर्जयन्ती, कर्णोत्पलमधुकरानपि स्विद्यद्वदनव्यजनीकृतेनांशुकपल्लवेनोत्सारयन्ती, ताम्बूलवीटिकाशकलमुत्कोचमिव दन्तखण्डितं शिखण्डिने ददती, वनदेवताश्रवणशङ्कितेव मुहुर्मुहुरितस्ततो विलोकयन्ती, वक्तुकामापि न शक्नोति स्म किंचिदपि लज्जाकलितगद्गदा गदितुं प्रयत्नतोऽपि च सा निःशेषम् । ज्वलता मदनानलेनेव दग्धा, अजस्रं प्रवहता नयनोदकेनेवोढा, प्रविशद्भिर्दुःखैरिवाक्रान्ता, पतद्भिः कुसुमचापशरैरिव शकलीकृता, निष्पतद्भिः श्वसितैरिव निर्वासिता, हृदयवर्तिभिश्चिन्ताशतैरिव विधृता, निःश्वास-

---

सति सा कादम्बरी वक्तुकामापि किंचिदपि न शक्नोति स्म न समर्था बभूव गदितुं वक्तुं प्रयत्नतोऽपि च सा निःशेषं समग्रम् । अथेतः कादम्बरीं विशेषयन्नाह—**निजेति** । वेपथुमद्भिः कम्पवद्भिर्निजावयवैरात्मीयापघनैर्निवार्यमाणेव । अन्योऽपि हस्तचालनादिना निवार्यते । **रहस्येति** । रहस्यस्य गुह्यस्य श्रवणमाकर्णनं तस्माद्या लज्जा त्रपा तयात्मप्रतिमामपि स्वकीयप्रतियातनामपि लिखितं कर्षितं मणिकुट्टिमं येनैवंभूतेन चरणाङ्गुष्ठेनापक्रमायेव तन्निवृत्तय इवामृशन्त्यामर्शं कुर्वन्ती । **भवनकलेति** । कुट्टिमं बद्धभूमिकं तस्योल्लेख उत्कर्षणं तेन मुखरितं वाचालं नूपुरं यस्यैवंभूतेन चरणारविन्देन भवनकलहंसानपि गृहकादम्बानपि विसर्जयन्ती मानसगमनायाज्ञां प्रयच्छन्ती । विरहवशात्सचिन्तायाः स्त्रियोऽङ्गुष्ठेन भूमिकर्षणं स्त्रीजातिस्वभावः । विसर्जयन्तीत्यनेन हंसापेक्षयापि गत्या शब्देन चरणारविन्दस्याधिक्यमिति व्यज्यते । **कर्णेति** । स्विद्यत्स्वेदं प्राप्नुवद्वदनं मुखं तत्र व्यजनीकृतो योंऽशुकपल्लवस्तेन कर्णोत्पलमधुकरानप्युत्सारयन्ती दूरीकुर्वन्ती । अनेन कर्णोत्पले सौगन्ध्यातिशयो द्योत्यते । **ताम्बूलेति** । ताम्बूलस्य नागवल्लीदलस्य वीटिका प्रसिद्धा तस्याः शकलं खण्डं दन्तखण्डितं रदनचर्वितमुत्कोचमिव लञ्चामिव शिखण्डिने कलापिने ददती प्रदानं कुर्वती । **वनेति** । वनस्यारण्यस्य देवताधिष्ठात्री तया श्रवणमाकर्णनं तेन शङ्कितेवेतस्ततश्चतुर्दिक्षु मुहुर्मुहुर्वारंवारं विलोकयन्ती पश्यन्ती । **ज्वलतेति** । दीप्तिमता मदनरूपोऽनलो वह्निस्तेन दग्धेव ज्वलितेव । अजस्रं निरन्तरं प्रवहता चलता नयनोदकेन नेत्राम्भसोढेव वाहितेव । **प्रविशद्भिरिति** । प्रविशद्भिः प्रवेशं कुर्वद्भिः । हृदय इति शेषः । एवंविधैर्दुःखैरसुखैराक्रान्तेव व्याप्तेव । पतद्भिरधोपरिपतनं कुर्वद्भिः कुसुमचापः कन्दर्पस्तस्य शरैर्बाणैः शकलीकृतेव खण्डीकृतेव । **निष्पतद्भिरिति** । निष्पतद्भिर्बहिर्निर्गच्छद्भिः श्वसितैः श्वासैर्निर्वासितेव हृदयाद्दूरीकृतेव । **हृदयेति** । हृदयवर्तिभिश्चिन्ताशतैर्विधृतेव रक्षितेव । **निःश्वासेति** । निःश्वासं वदनानिलं पिबन्ती-

---

टिप्प०—1 'न शक्नोति स्म किंचिदपि लज्जाकलितगद्गदा गदितुम् ।' अत्रैव वाक्यपूर्तिः । 'प्रयत्नतोपि चास्या निःशेषं ज्वलता' इत्यग्रिमवाक्यस्य पदद्वयमत्र योजितं टीकाकारपुंगवेन । 'प्रयत्नतोपि' 'निःशेषम्' इत्यनयोरत्र कियत्स्वारस्यमिति विभावयन्तु सहृदयाः । 2 निजावयवैरपीति 'अपि' पदमतिशयव्यञ्जकम्, एवंविधे कण्टकाकीर्णे मार्गे अन्ये तु निवारयेरन्नेव, किंतु निजाङ्गैरपि सा निवार्यमाणेत्याशयः । 3 स्वप्रतिबिम्बमपि लज्जावशात् ततः पलायनायेव स्पृशन्तीत्याशयः । 4 रहस्यश्रवणलज्जयेत्यत्रापि संबध्यते, ततश्च लज्जावशाद्भवनहंसानपि सशब्देन चरणेन ततो विसर्जयन्ती । चरणे नूपुरशब्दो नास्ति मन्ये तस्मात्स्थानादपसरणस्यैव स शब्द इत्याशयः । 'हंसापेक्षयापि···' इत्यादिटीकाकारोक्तिस्त्वकाण्ड एव । एवं सर्वत्र 'लज्जया' इत्यस्य संबन्धो बोध्यः । 5 अपसरणार्थं गुप्तं द्रव्यदानम् 'रिश्वत' इति यवनभाषा । अन्योप्यर्थी स्वाभीष्टस्थानादपसर्तुं कस्मैचिद् द्रव्यं ददाति । टीकाकारस्य त्वगाधं पाण्डित्यम् ।

---

पाठ०—१ मत्प्रतिमाम्. २ संस्विद्यद्वदन; स्विद्यद्वदन. ३ व्यजनक्षितेन. ४ उपवन. ५ लज्जाकुलितगद्गदतया. ६ चास्याः. ७ दग्ध्वा प्रवहता. ८ कीलिता. ९ आवृता. १० विश्वासपातिभिः.

पायिभिर्मधुकरकुलैरिव निपीता न प्रावर्तत वाणी । केवलं दुःखसहस्रगणनाय मुक्ताक्षमालिकामिव कल्पयन्ती गलद्भिरस्पृष्टकपोलस्थलैः शुचिभिरधोमुखी नयनजलबिन्दुभिर्दुर्दिनमदर्शयत् । तदा च तस्याः सकाशादशिक्षतेव लज्जापि लज्जालीलाम्, विनयोऽपि विनयातिशयम्, मुग्धतापि मुग्धताम्, वैदग्ध्यमपि वैदग्ध्यम्, भयमपि भीरुताम्, विभ्रमोऽपि विभ्रमिताम्, विषादोऽपि विषादिताम्, विलासोऽपि विलासम् । तथाभूता च 'देवि, किमिदम्' इति विज्ञापिता मया प्रमृज्य लोहितायमानोदरे लोचने दुःखप्रकर्षेणात्मनः समुद्बन्धनायेव मृणालकोमलया बाहुलतया वेदिकाकुसुमपालिकाग्रथितकुसुममालामवलम्ब्य

---

लेवंशील निःश्वासपायिनस्तैरेवंभूतैर्मधुकरकुलैर्भ्रमरसमूहैर्निपीतेव पानविषयीकृतेव । अतोऽस्या[1] वाणी वाङ् न प्रावर्तत न प्रवृत्ता बभूव, केवलं साऽधोमुख्यवाङ्मुखी दुःखानां सहस्रं तद्गणनाय पृथक्संख्यां कर्तुम् । शुचित्ववर्तुलत्वसाम्यादाह—**मुक्तेति** । मुक्तानामक्षमालिकां जपमालामिव कल्पयन्ती रचयन्ती । गलद्भिः स्रवद्भिरस्पृष्टमस्पर्शितं कपोलस्थलं अधोमुखत्वान्नम्रत्वात्परप्रदेशो यैरेवंविधैः शुचिभिर्नयनजलविन्दुभिः कृत्वा दुर्दिनं मेघजं तमोऽदर्शयद्दर्शितवती । मया पृष्टा केवलं रुदनमेव चक्रे इति भावः । **तदा चेति** । तस्मिन्काले तस्याः कादम्बर्याः सकाशात्समीपाल्लज्जापि त्रपापि लज्जाया लीला स्वभावः संकोचरूपस्तामशिक्षत शिक्षितवती । अशिक्षतेत्यस्य सर्वत्र संबन्धः । तथा च स्वाश्रयं संकुचितं करोतीति लज्जास्वभावः । लज्जाया अपि चेल्लज्जास्वभावोऽभ्यस्तस्तर्हि लज्जायाः संकोच एवेति न्यूनत्वमेव[2] सूचितं भवति । तथा विनयोऽपि शरीरावनतिरूपोऽपि विनयातिशयमनधिकताम् । एतेन विनयस्यापि न्यूनत्वं सूचितम् । तथा मुग्धतापि विशेषावगत्यभावरूपापि मुग्धतामभावरूपाम् । एवं सति मुग्धताया अभाव एव प्रौढत्वं सिद्धम् । अभावाभावे भावरूपा विशेषावगतिः प्रौढता । वैदग्ध्यमपि भावाभिव्यञ्जकक्रियावृद्धिरूपमपि वैदग्ध्यमेव वर्तत इति सूचितम् । तथा भयमपि क्रियाभिनिवेशनिवृत्तिरूपमपि भीरुताम् । एतेन भयमपि निवृत्तं सोत्साहरूपं मनो जातमिति सूचितम् । तथा विभ्रमोऽपि चित्तपरिवृत्तिलक्षणोऽपि विभ्रमिताम् । एतेनात्यन्तचित्तास्थैर्यं सूचितम् । तथा विषाद इष्टविषयेषु प्रातिकूल्यरूपोऽपि विषादिताम् । एतेनेष्टेष्वनुकूलतालक्षण उत्साह एव प्रसिद्ध इति ध्वनितम् । विलासोऽपि परव्यामोहनानुकूलव्यापाररूपोऽपि विलासम् । एतेन विचित्रैव चेष्टा स्वीकृतेति व्यज्यते । **तथाभूता चेति** । एवंरूपा सा कादम्बरी हे देवि, किमिदमिति मया विज्ञापिता पृष्टा सती लोहितायमानमारक्तमुदरं मध्यं ययोरेवंविधे लोचने प्रमृज्य प्रमार्जनं कृत्वा दुःखप्रकर्षेणात्मनः स्वस्य समुद्बन्धनायेव मृणालवत्कोमलया बाहुलतया कारणभूतया वेदिकाया या कुसुमपालिका तया ग्रथिता या कुसुममाला स्रक्तामवलम्ब्याश्रित्य

---

टिप्प०—1 'अस्याः' इति पदं कुत आकृष्टं टीकाकारशिरोमणिना ? दूरदूरतोपि तन्नात्र दृश्यते । अस्तु. पाठकमहाभागा विदन्त्वेतस्य रहस्यम्—'गद्गदा गदितुम्' अत्र पूर्ववाक्यसमाप्तिः । 'प्रयत्नतोपि चास्या निःशेषं ज्वलता' इत्यादि चाग्रिमवाक्यम् । अस्याः (कादम्बर्याः) वाणी निःशेषं संपूर्णावयवं यथा स्यात्तथा ज्वलता मदनानलेन दग्धा सती, प्रवहता नयनोदकेन ऊढा सती··· प्रयत्नतोपि न प्रावर्तत इति तदर्थः । इदानीं प्रशस्यतां टीकापाण्डित्यम् । 2 लज्जाया लज्जा जाता, अर्थात् लज्जावशाल्लज्जा संकुचिताऽभवदित्यनेन न्यूना लज्जा जातेति सूच्यते । यदि लज्जा प्रबला स्यात्तदाऽन्ततोपि चन्द्रापीडप्रणयः कथं वाचा प्रकटीक्रियेत ? किन्तु विश्रम्भवशात्तस्या न्यूनत्वे सति प्रणयप्रकटनं बभूवेति तात्पर्यम् । वस्तुतस्तु—एतावत्कालं लज्जा स्वकार्यं संकुचितभावं न जानाति स्म । तस्याः सकाशात् शिक्षणोत्तरमेव तं प्रकटितवतीति तात्पर्यम् ।

---

पाठा०—१ लज्जापि लज्जां लीलापि लीलां विनयोऽपि विनयोपदेशम्.

समुन्नतैकभ्रूलता मृत्युमार्गमिवालोकयन्ती दीर्घमुष्णं च निश्वसितवती । तद्दुःखकारणमुत्प्रेक्षमाणया च कथनाय पुनःपुनरनुबध्यमाना मया व्रीडया नखमुखविलिखितकेतकीदलानि लिखित्वेव वक्तव्यमर्पयन्ती विवक्षास्फुरिताधरा निश्वासमधुकरानिवोपांशु संदिशन्ती क्षितितलनिहितनिश्चलनयना सुचिरमतिष्ठत् ।

क्रमेण च भूयो मन्मुखे निधाय दृष्टिं पुनःपुनरथापूर्यमाणलोचनच्युतैर्मदनानलधूमधूसरां वाचमिव क्षालयन्ती बाष्पजलबिन्दुभिः, बाष्पजलबिन्दुव्याजेन च विलक्षस्मितस्फुरितैर्दशनांशुभिः साध्वसविस्मृतानपूर्वानभिधेयवर्णानिव ग्रथ्नती कथमपि व्याहाराभिमुखमात्मानमकरोत् । अब्रवीच्च माम्—'पत्रलेखे, वल्लभतया तस्मिन्स्थाने न तातो नाम्बा न महाश्वेता न मदलेखा न जीवितम्, यत्र मे भवती दर्शनात्प्रभृति प्रियासि । न जाने, केनापि कारणेनापहस्तितसकलसखीजनं त्वयि विश्वसिति मे हृदयम् । कमपरमुपालभे । कस्य वान्यस्य

---

समुन्नतैका भ्रूलता यया सैवंविधा मृत्युमार्गमिवालोकयन्ती पश्यन्ती दीर्घं लम्बायमानमुष्णं तप्तं च निश्वसितवती निश्वासं मुक्तवती । तस्य निश्वासमोचनस्य दुःखस्य कारणं नियामकमुत्प्रेक्षमाणया ज्ञातुमिच्छया मया कथनाय पुनःपुनरनुबध्यमाना व्रीडया लज्जया नखमुखेन नखराग्रेण विलिखितानि केतकीदलानि । अक्षरसाम्येनाह—लिखित्वेव वक्तव्यमभिधेयमर्पयन्ती । वक्तुमिच्छा विवक्षा तया स्फुरितावधरौ यस्याः सा । अधरकम्पमिषादुत्प्रेक्षते—**निश्वासेति** । निश्वासमधुकरानुपांशु रहसि संदिशन्तीव कथयन्तीव क्षितितले निहिते स्थापिते निश्चले नयने यया सा सुचिरं चिरकालं यावदतिष्ठत्स्थिता ।

क्रमेण परिपाट्या भूयो मन्मुखे दृष्टिं निधाय स्थापयित्वा पुनःपुनर्वारंवारम् । अथेत्यानन्तर्ये । आपूर्यमाणे लोचने ताभ्यां च्युतैर्गलितैर्बाष्पजलबिन्दुभिर्मदनानलस्य यो धूमस्तद्वद्धूसरां मलिनां वाचं वाचालतां क्षालयन्तीव । **बाष्पेति** । बाष्पजलबिन्दुव्याजेन विलक्षमभिनवं यत्स्मितं तेन स्फुरितैर्दीपितैर्दशनांशुभिर्दन्तमयूखैः साध्वसेन भयेन विस्मृतानपूर्वानभिधेयवर्णान्वाच्याक्षरान्ग्रथ्नतीव । अत्र बाष्पबिन्दूनां वर्तुलतयाक्षरसाम्यं दशनांशूनां विततता गुणसाम्येन ग्रन्थनमित्यर्थः । कथमपि महता कष्टेन व्याहाराभिमुखं भाषिताभिमुखमात्मानमकरोदन्वतिष्ठत् । मां प्रत्यब्रवीच्चावादीत् । हे पत्रलेखे, वल्लभस्य भावो वल्लभता तया तस्मिन्स्थाने न तातो न पिता, नाम्बा माता, न महाश्वेता न मदलेखा, न जीवितम् । यत्र स्थाने मे मम भवती दर्शनात्प्रभृत्यवलोकनादारभ्य प्रिया वल्लभासि । अहं न जाने नाकलयामि केनापि कारणेन हेतुनापहस्तितो दूरीकृतः सकलः समग्रः सखीजनो येनैवं मे मम हृदयं चेतस्त्वयि विषये विश्वसिति विश्वासं करोति । अपरं कमन्यं कमुपालभे । उपालम्भं ददामीत्यर्थः । अ-

---

टिप्प०—1 स्वबुद्ध्या संभावयन्त्या ( मया ) इत्यर्थ उचितः । 2 यया सा, इति मन्ये स्यात् । लेखकदोषाद्विभ्रष्टः स पाठः । अस्तु. 'नखमुखविलिखितकेतकीदला' इत्येव पाठः । नखमुखेन केतकीदलं तया लज्जास्वभावात्संघृष्टम्, तत्र कविरुत्प्रेक्षते स्ववक्तव्यं लिखित्वा अर्पयन्तीव । एवमधरस्फुरणेपि । 3 अमार्मिकता सेयम् । पुनः पुनरप्यापूर्यमाणेत्येव पाठः । 4 मदनानलधूमेन धूसरां मलिनाम् अस्पष्टामित्येवार्थः । न हि वाणी मूर्ता यत्र मालिन्येनोपमा स्यात् । 5 विलक्षस्मितेन सलज्ज-मन्दहास्येनेत्यर्थः । इदं तु महापाण्डित्यम् ।

---

पाठा०—१ मृत्युपाशमिवावलोकयन्ती. २ ततो दुःखकारणम्; तद्दुःखम. ३ केतकीदला. ४ अप्यापूर्यमाण. ५ लक्षः. ६ पूर्वाम्. ७ न तस्मिन्स्थाने.

कथयामि परिभवम् । केन वान्येन सह साधारणीकरोमि दुःखम् । दुःखभारमिमंमसह्यं निवेद्य भवत्यास्त्यक्ष्यामि जीवितम् । जीवितेनैव शपामि ते । स्वहृदयेनापि विदितवृत्तान्तेनामुना जिह्रेमि, किमुतापरहृदयेन । कथमिव मादृशी रजनिकरकिरणावदातं कौलीनेन कुलं कलङ्कयिष्यति । कुलक्रमागतां च लज्जां परित्यक्ष्यति । अकन्यकोचिते वा चापले चेतः प्रवर्तयिष्यति । साहं न संकल्पिता पित्रा, न दत्ता मात्रा, नानुमोदिता गुरुभिः, न किंचित्संदिशामि, न किंचित्प्रेषयामि, नाकारं दर्शयामि । कातरा चानाथेव बलादवलिप्तेन गुरुगर्हणीयतां नीता कुमारेण चन्द्रापीडेन । कथय महतां किमयमाचारः? किं परिचयस्येदं फलम्? यदेवमभिनवबिसकिसलयतन्तुसुकुमारं मे मनः परिभूयते । अपरिभवनीयो हि कुमारिकाजनो यूनाम् । प्रायेण प्रथमं मदनानलो लज्जां दहति, ततो हृदयम् । आदौ विनयादिकं कुसुमेषुशराः खण्डयन्ति, पश्चान्मर्माणि । तदामन्त्रये भवतीं पुनर्जन्मान्तरसमागमाय । नहि मे त्वत्तोऽन्या प्रियतरा । प्राणपरित्यागप्रायश्चित्ताचरणेन प्रक्षालयाम्यात्मनः कलङ्कम् ।' इत्यभिधाय तूष्णीमभूत् ।

---

न्यस्य कस्य वा परिभवं कथयामि निवेदयामि । केन वान्येन सह दुःखं साधारणीकरोमि । असह्यं सोढुमशक्यमिमं दुःखभारं भवत्या निवेद्य कथयित्वा जीवितं त्यक्ष्यामि दूरीकरिष्यामि । ते तव पुरस्ताज्जीवितेनैव शपामि शपथं करोमि । एतस्मादधिकः कोऽपि शपथो नास्तीति भावः । विदितवृत्तान्तेन ज्ञातस्वरूपेणामुना स्वहृदयेनापि जिह्रेमि लज्जां प्राप्नोमि । किमुतापरहृदयेन भण्यते । मादृशी स्त्री कथमिव रजनिकरश्चन्द्रस्तस्य किरणा गभस्तयस्तद्वदवदातं निर्मलं कुलं वंशः(तम्)कौलीनेन जनापवादेन कलङ्कयिष्यति मलिनयिष्यति । कुलक्रमागतां परम्परायातां च लज्जां त्रपां परित्यक्ष्यति परिहरिष्यति । अथवाऽकन्यकोचिते कन्यकाजनस्यानुचितेऽयोग्ये वा चापले चपलतायां चेतः प्रवर्तयिष्यति प्रवृत्तिं कारयिष्यति । साहं कादम्बरी न संकल्पिता पित्रा जनकेनोद्वाहार्थं न कस्यचित्संकल्पविषयीकृता । तथा न मात्राम्बया दत्तार्पिता । इदं सुष्ठु कृतमित्येवंप्रकारेण गुरुभिर्वृद्धैः नानुमोदिता । न किंचित्संदिशामि कथयामि । न किंचित्प्रेषयामि प्रेषणं करोमि । नाकारं देहविकृतिं दर्शयामि प्रकटयामि । कातरा चानाथेवाहं बलाद्धठेनावलिप्तेन दर्पितेन कुमारेण चन्द्रापीडेन गुरुर्गुर्वी या गर्हणीयता निन्द्यता तां नीता प्रापिता । त्वं कथय निवेदय, महतां सत्पुरुषाणाम् । किमिति प्रश्ने । अयमाचारः कुलक्रमागतव्यवहारः? किं वा परिचयस्य संस्तवस्येदं फलम्, यदेवंप्रकारेणाभिनवो यो बिसकिसलयस्य तन्तुस्तद्वत्सुकुमारं कोमलं मे मम मनोऽनेन परिभूयते पराभवविषयीक्रियते । हि यस्मात्कारणात्कुमारिकाजनोऽपरिभवनीयो यूनां पराभवितुं न योग्यः । **प्रायेणेति** । प्रायेण बाहुल्येन प्रथमं मदनानलो लज्जां त्रपां दहति भस्मीकरोति । ततो हृदयं चेतो दहति । तथा कुसुमेषुः कंदर्पस्तस्य शरा आदौ प्रथमं विनयादिकं खण्डयन्ति शकलीकुर्वन्ति । पश्चान्मर्माणि मर्मस्थानानि खण्डयन्ति । तदहं पुनर्जन्मान्तरे यः समागमः संबन्धस्तदर्थं भवतीमामन्त्रये आमन्त्रणं कुर्वे । मर्मविच्छेदेऽवश्यमरणसंभवादिति भावः । अत्रार्थे हेतुं प्रदर्शयन्नाह—**नहीति** । नहि मे मम त्वत्तोऽन्या प्रियतरा वल्लभतरा । प्राणपरित्यागलक्षणं यत्प्रायश्चित्तं तदाचरणेन तदासेवनेनात्मनः स्वस्य कलङ्कं प्रक्षालयामि पवित्रीकरोमि । इत्यभिधायेत्युक्त्वा तूष्णीमभूत् । मौनं चकारेत्यर्थः ।

---

**टिप्प०**—1 गुरुभिर्महद्भिर्गर्हणीयतामित्यर्थ उचितः ।

---

**पाठा०**—१ असह्यमद्य. २ कालीनेन. ३ अन्यकन्यकोचिते; अन्यकन्यकाजनोचिते. ४ सा चाहमसंकल्पिता मात्रा पित्रा न दत्ता. ५ कातरेव; इतरेव. ६ अनाथेव नीचेव. ७ अवलिप्तेव. ८ गुर्वीं गर्हणीयताम्. ९ अनभिभवनीयः; परिभवनीयः.

अहं तु यत्सत्यमविदितवृत्तान्ततया ह्रीतेव भीतेव विलक्षेव विसंज्ञेव सविषादं विज्ञापितवती—'देवि, श्रोतुमिच्छामि । आज्ञापय किं कृतं देवेन चन्द्रापीडेन ? को वापराधः समजनि ? केन वा खल्वविनयेन खेदितमखेदनीयं देव्याः कुमुदकोमलं मनः ? श्रुत्वा प्रथममुत्सृष्टजीवितायां मयि पश्चात्समुत्स्रक्ष्यसि जीवितम्' इति । एवमभिहिता च पुनरवदत्—'आवेदयामि ते । अवहिता शृणु । स्वप्नेषु प्रतिदिवसमागत्यागत्य मे रहस्यसंदेशेषु निपुणधूर्तः पञ्जरशुकसारिका दूतीः करोति । सुप्तायाः श्रवणदन्तपत्रोदरेषु व्यर्थमनोरथमोहितमानसः संकेतस्थानानि लिखति । स्वेदप्रक्षालिताक्षरानपि निपतितसाञ्जनाश्रुबिन्दुपङ्क्तिकथितात्मावस्थानान्मनोहरान्संमोहाशानुवर्तिनो मदनलेखान्प्रेषयति । निजानुरागेण बलादरञ्जयदलक्त-

---

अहं तु यत्त्वं वदसि तत्सत्यमवितथमविदितवृत्तान्ततया ह्रीतेव लज्जितेव, भीतेव त्रस्तेव, विलक्षेव वीक्षापन्नेव, विसंज्ञेव विगतचेतनेव, सविषादं यथा स्यात्तथा विज्ञापितवती । हे देवि कादम्बरि, श्रोतुं श्रवणविषयीकर्तुमिच्छाम्यभिलषामि । आज्ञापय प्रतिपादय । देवेन चन्द्रापीडेन किं कृतं किं विहितम् । को वापराध आगः समजनि समभूत् । खलु निश्चितम् । केन वाऽविनयेन देव्याः कादम्बर्या अखेदनीयं कुमुदवत्कोमलं सुकुमारं मनः खेदितं खेदं प्रापितम् । एतच्छ्रुत्वाकर्ण्याहं प्रथममुत्सृष्टजीवितायां त्यक्तप्राणितायां मयि सत्यां पश्चात्तदनन्तरं जीवितं त्वं समुत्स्रक्ष्यसि त्यक्ष्यसि । इत्येवं मयाभिहिता कथिता पुनर्भूयोऽवददवोचत् । आवेदयामि कथयामि ते तव । अवहिता दत्तावधाना त्वं शृण्वाकर्णय । स्वस्यैव विरहावस्थाविलासान्कुमाराध्यासवशात्तदनुबन्धित्वेन स्वप्नेषु पश्यन्त्याह—**स्वप्नेष्विति** । स्वप्नेषु प्रतिदिवसं प्रत्यहमागत्यागत्य निपुणो धूर्तो मे मम रहस्यसंदेशेषूपांशुसंदिष्टेषु । तत्र च कुमाराध्यासवशाच्छुकसारिकानां शब्दमधिकृत्याह—**पञ्जरेति** । पञ्जरस्थाः शुकाः कीराः सारिकाः पीतपादा दूतीः करोति । तन्मुखेनैव संदिष्टसंदेशान्कथापयतीत्यर्थः । श्रवणदन्तपत्रयोर्मुद्रारेखामधिकृत्याह—**सुप्ताया इति** । सुप्तायाः श्रवणदन्तपत्राणामुदरेषु व्यर्थः संगमाविषयो यो मनोरथोऽभिलाषस्तेन मोहितं मानसं यस्य सः । संकेतस्थानानि लिखति लिपीकरोति । कपोलयोः पत्रवल्लीलेखामधिकृत्याह—**स्वेदेति** । स्वेदेन घर्मवारिणा प्रक्षालितानि धौतानि अक्षराणि येषु तान् । **निपतितेति** । निपतिता ये साञ्जना अश्रुबिन्दवस्तेषां पङ्क्त्या कथितमात्मावस्थानं येषु तान्मनोहरान्संमोहानुवर्तिनः संमोहकारिणो मदनलेखान्प्रेषयति प्रेषणं करोति । स्वाभाविकचरणयोरारुण्यमधिकृत्याह—**निजेति** । निजानुरागेण बलाद्धठादार्द्रालक्तकरसेनेवाशुष्कयावकद्रवेणेव चरणावरञ्जयत् । नखानां स्वच्छतां व्यञ्जयंस्तेषु

---

टिप्प०—1 भूमण्डलेऽद्वितीयटीकाकारमहाशयः, यस्य व्युत्पत्त्या स्वल्पोपि संबन्धः सोपि जानीयात्—'अविदितवृत्तान्ततया सत्यम् ( निश्चितम् ) लज्जितेव अहम्' इत्यर्थो न तु यत्त्वं वदसि तत्सत्यम् । 2 लज्जावशात्किंकर्तव्यविमूढेव । 3 'पश्यन्त्याह' इति मन्ये स्यात् । 4 श्रवणस्थे ये दन्तपत्रे ( गजदन्तनिर्मित-पत्राकारावलंकारौ ) तयोः । 5 अत्राप्यस्पष्टा व्याख्या । स्वेदेन अक्षराणि प्रक्षालितानि, तथापि विरहजातरोदनेन या साञ्जना अश्रुबिन्दुपङ्क्तिस्तया कथिता ( सूचिता ) आत्मावस्था ( कामार्तदशा ) येषु तान्, संमोहेन ( चित्तभ्रमेण ) या मत्संगमस्याऽऽशा तदनुसारिणः मदनलेखान् ( प्रेमपत्राणि ) प्रेषयतीत्यर्थः । 6 अत्राप्यपतट्टीकाकारः । 'निजानुरागेणेव बलाद्रञ्जयत्यलक्तकरसेन चरणौ' इत्येव पाठः । सर्वत्र वर्तमानकालेनैव निर्देशात् । निजानुरागवत् रक्तेन यावकेन इति तदर्थः ।

---

पाठा०—१ प्रतिदिनम्, २ निपुणो धूर्तः. ३ पञ्जरशुकं सारिकां च दूतीकरोति. ४ अश्रुबद्धः. ५ आत्मावस्थानम्. ६ निजानुरागेणेव. ७ रञ्जयन्; रञ्जयति.

कर[1]सेनेव चरणौ । अविनयनिश्चेतनो नखप्रतिबिम्बितमात्मानं बहु मन्यते । उपवनेष्वेका-किन्या ग्रहणभयपलायमानायाः पल्लवलग्नांशुकदशाप्रतिहतगमनाया गृहीत्वेव सखीभिरर्पि-ताया मिथ्याप्रगल्भः पराङ्मुखायाः परिष्वङ्गमाचरति । स्तनस्थले मे लिखन्पत्रलेखां कुटि-लतामिवानृजुप्रकृतिः प्रकृतिमुग्धं मनः शिक्षयति । हृदयोत्कलिकातरङ्गवातैरिव शीतलैर्मुख-मरुद्भिः श्रमजलशीकरतारकितावलीकचाटुकारः कपोलौ वीजयति । स्वेदसलिलशिथिलित-ग्रहणगलितोत्पलशून्येनापि करेण यवाङ्कुरानिव नखकिरणाञ्शुद्धान्दुर्विदग्धः कर्णपूरीकरोति । वल्लभतरबालबकुलसेककालकवलीकृतान्सुरागण्डूषान्सकचग्रहमसकृद्धृष्टो मां पाययति । भव-नाशोकताडनोद्यतान्पादप्रहारान्दुर्बुद्धिविडम्बितः शिरसा प्रतीच्छति । मन्मथमूढमानसश्च

---

प्रतिबिम्बमधिकृत्याह—**अविनयेति** । मां मुक्त्वा गत इत्यविनयस्तेन निश्चेतनो नखेषु प्रतिबिम्बितमात्मानं बहुमन्यते । अधिकं जानातीत्यर्थः । यद्यपि नखेषु यः कश्चन प्रतिबिम्बस्तथापि तदध्यासवशात्तस्यैवेत्यर्थः । उप-वनेषु सर्वतः कोमलपल्लवानामाश्लेषमधिकृत्याह—**उपवनेष्विति** । उपवनेष्वेकाकिन्या असहायायाः केनचि-त्पुरुषेण ग्रहणं तस्माद्यद्भयं तेन पलायमानाया गच्छन्त्याः पल्लवेषु लग्ना या अंशुकदशा तया प्रतिहतं गमनं यस्या अत एव पराङ्मुखायाः सखीभिर्गृहीत्वेवार्पिताया मिथ्याप्रगल्भो मिथ्यैव विदग्धचरितश्चन्द्रापीडः परिष्वङ्गमा-चरत्यालिङ्गनं करोति । बहिरुपवनपल्लवाश्लेषमनुभूतम्, तदध्यासवशात्तत्कृताभिमतिमधिकृत्याह—**स्तनेति** । मे मम स्तनस्थले पत्रलेखां लिखन्ननृजुप्रकृतिः कुटिलस्वभावः कुटिलतामिव प्रकृतिमुग्धं मनः शिक्षयति । सस्वेदजलकणिकयोः कपोलयोर्व्यजनवातवीजितयोस्तदध्यासवशात्तत्कृताभिमतिमधिकृत्याह—**हृदयेति** । अलीकचाटुकारो मिथ्यैव चटुकृच्छ्रमजलशीकरैः श्वेतत्वसाम्येन तारकिताविव कपोलौ शीतलैर्मुखमरुद्भिर्वीज-यति पवनं करोति । कीदृशैरिव । हृदये योत्कलिका रणरणकता सैवास्थिरत्वात्तरंगाः कल्लोलास्तेषां वातैरिव । स्वेदसलिलेन शिथिलीकृतं यदुत्पलं तत्संरक्षणार्थं न्यस्तं यत्करतलं तन्नखप्रभायां तत्कृतयवाङ्कुरकर्णपूरबुद्धिम-धिकृत्याह—**स्वेदेति** । स दुर्विदग्धः करेण शुद्धान्नखकिरणान्पाण्डुरत्वसाम्याद्यवाङ्कुरानिव कर्णपूरीकरोति । कीदृशेन करेण । स्वेदसलिलेन शिथिलितं तस्य[2] ग्रहणे गलितं यदुत्पलं तेन शून्येनापि । अत्रापिशब्देन कर्ण-पूरीकृतोत्पलाभावेऽपि कर्णपूरकार्यं करोतीत्यर्थः । **वल्लभतरेति** । वल्लभतरा ये बालबकुला लघुकेसरास्तेषां सेककालस्तत्र कवलीकृतान्सुरागण्डूषान्मद्यचुलुकानसकृन्निरन्तरम् । अलीनां नीलत्वादाह[3]—**सकचेति** । सकचग्रहं धृष्टो मां पाययति पानं कारयति । **भवनाशोकेति** । अशोकस्य गृहकङ्केल्लिवृक्षस्य ताडनं तत्रो-द्यतान्पादप्रहारांश्चरणाभिघातान्दुर्बुद्ध्या विडम्बितः शिरसोत्तमाङ्गेन प्रतीच्छति वाञ्छति । अत्र तदध्यासवशा-दशोकस्यापि तद्रूपत्वेन चिन्तनमित्यर्थः । विरहेण मूढतां प्रदर्शयन्नाह—**मन्मथेति** । मन्मथेन मूढं मानसं

---

**टिप्प०**—1 अत्र कीदृश्यः सख्यः सन्ति ? अस्तु. 'लतासखीभिः' इत्येव पाठः । अर्थोपि वराकेण टीकाकारेण न बुद्धः । केनचित्पुरुषेण ग्रहणं न, चन्द्रापीडेन ग्रहणभयात्पलायमानायाः पल्लवासक्ताञ्चल-तया लतारूपाभिः सखीभिः गृहीत्वा दत्ताया इव लज्जावशाद्विवृत्तवदनाया मे आलिङ्गनं करोतीत्यर्थः । 2 तस्य कस्य ग्रहणे ? अस्पष्टं सर्वम् । स्वेदसलिलेन श्लथीकृतं यद् ग्रहणं ( धारणम् धारणसामर्थ्यम् ), तेन गलितं यदुत्पलं तच्छून्येन ( तद्रहितेन ) अपि स्वकरेण यवाङ्कुरानिव शुद्धान् ( केवलान् ) स्वनख-किरणानेव कर्णपूरीकरोतीत्यर्थः । 3 स्वप्नप्रलपितमिवासंबद्धमिदम् । बकुलसेककाले अयं चन्द्रापीडः स्वमुखेन मद्यगण्डूषान् कवलीकृत्य कचग्रहणपूर्वकं तान् मां बलात्पाययतीति तात्पर्यम् ।

---

**पाठा०**—१ रसेन. २ नखेपु प्रतिबिम्बितम्. ३ लतासखीभिः. ४ पराङ्मुखापरिष्वङ्गम्. ५ लताम्. ६ यवाङ्कुर-विकरानि. ७ ख. ८ सकचग्रहमगणितत्चेष्टः पातुं प्रार्थयते.

कथय हे पत्रलेखे, केन प्रकारेण निश्चेतनो निषिध्यते। प्रत्याख्यानमपीर्ष्यां संभावयति। आक्रोशमपि परिहासमाकलयति। असंभाषणमपि मानं मन्यते। दोषसंकीर्तनमपि स्मरणोपायमवगच्छति। अवज्ञानमप्यनियन्त्रणं प्रणयमुत्प्रेक्षते। लोकापवादमपि यशो गणयति' इति।

तामेवंवादिनीमाकर्ण्य प्रहर्षरसनिर्भरा मनस्यकरवम्—'अहो चन्द्रापीडमुद्दिश्य सुदूरमाकृष्टा खल्वियं मकरकेतुना। यदि च सत्यमेवं[1] कादम्बरीव्याजेन साक्षान्मनोभवचित्तवृत्तिः प्रसन्ना देवस्य, ततः सहजैः सादरं संवर्धितैः प्रत्युपकृतमस्य गुणैः, यशसा धवलिताः ककुभः, यौवनेन रतिरससागरतरङ्गैः पातिता रत्नवृष्टिः, यौवनविलासै[2]र्लिखितं नाम शशिनि, सौभाग्येन प्रकाशिता निजश्रीः, लावण्येनैन्दवीभिरिव वृष्टममृतं कलाभिः। तथा च चिराल्लब्धः कालो मलयानिलेन, समासादितोऽवसरश्चन्द्रोदयेन, प्राप्तमनुरूपं[3] फलं मधुमासकुसुमसमृद्ध्या, गतो मदिरा[4]रसदोषो गुणताम्, दर्शितं मुखं मन्मथयुगावतारेण' इति।

अथाहं प्रकाशं विहस्याब्रवम्—'देवि, यद्येवमुत्सृज कोपम्। प्रसीद। नार्हसि कामा[5]-

---

यस्यैवंविधः। स्वव्यामोहं तत्रैवारोपयन्नाह—**निश्चेतन इति**। त्वं कथय केन प्रकारेण निषिध्यते प्रतिषिद्धोऽप्युत्कटरागवशाद्धृष्टेव तिष्ठति। **प्रत्याख्यानेति**। प्रत्याख्यानं निराकरणमीर्ष्यामसूयां संभावयति संभावनां करोति। आक्रोशमपि निष्ठुरोक्तिमपि परिहासं हास्यमात्रमाकलयति चिन्तयति। असंभाषणमप्यजल्पनमपि मानं मन्यते जानाति। दोषसंकीर्तनमपि स्मरणोपायत्वेनावगच्छति जानाति। अवज्ञानमप्यवगणनमपि स्नेहस्य चाटूनि नियन्त्रणानि तद्रहितमनियन्त्रणं प्रणयं स्नेहमुत्प्रेक्षते। लोकापवादमपि यशो गणयत्याकलयति। इदं च सर्वं तद्विषयकोत्कटाध्यासवशाज्ज्ञेयम्।

इत्येवंवादिनीं तामाकर्ण्य प्रकृष्टो यो हर्षस्तल्लक्षणो यो रसस्तेन निर्भरा संपूर्णा मनस्येवमकरवमकल्पयम्। **अहो इति**। अहो इत्याश्चर्यम्। खलु निश्चितम्। चन्द्रापीडमुद्दिश्येयं कादम्बरी मकरकेतुना सुदूरमतिदूरमाकृष्टाकर्षिता। यदि च सत्यमेवावितथमेतदेव[1] तदा देवस्य चन्द्रापीडस्योपरि मनोभवच्चित्तवृत्तिः कादम्बरीव्याजेन साक्षात्प्रसन्ना। **तत इति**। अस्य चन्द्रापीडस्य सहजैः स्वभावजनितैः सादरं संवर्धितैर्वृद्धिं प्रापितैर्गुणैः प्रत्युपकृतं प्रत्युपकारः कृतः। यशसा कीर्त्या ककुभो दिशो धवलिताः शुभ्रिताः। **यौवनेति**। यौवनेन तारुण्येन रतिरसः शृङ्गाररसः स एव सागरः समुद्रस्तस्य तरंगैः कल्लोलैः कृत्वा रत्नवृष्टिः पातिता। तथा यौवनविलासैस्तारुण्यविभ्रमैः शशिनि चन्द्रे चन्द्रापीडेति नाम लिखितम्। **सौभाग्येति**। सौभाग्येन सुभगतया निजा श्रीरात्मशोभा प्रकाशिता प्रकटीकृता। **लावण्येति**। लावण्येन चातुर्येणैन्दवीभिश्चन्द्रसंबन्धिनीभिः कलाभिरिवामृतं पीयूषं वृष्टम्। पीयूषवृष्टिः कृतेत्यर्थः। तथा मलयानिलेन मलयवायुना चिराद्बहुकालात्कालः प्रस्तावो लब्धः। तथा चन्द्रोदयेनावसरः समासादितः। तथा मधुमासः सुरभिमासस्तस्य कुसुमसमृद्ध्यानुरूपं योग्यं फलं प्राप्तम्। **मदिरेति**। मदिरा कापिशायनं तस्य रसदोषो गुणतां गतः। मन्मथयुगावतारेण मुखं दर्शितम्। कादम्बर्यनुकूलतायां सत्यमेतत्सर्वमनुकूलं जातमित्यर्थः।

**अथेति**। तच्चिन्तनानन्तरं प्रकाशं प्रकटं विहस्याहमब्रवमवोचम्। हे देवि, यद्येवं तर्हि कोपमुत्सृज त्यज।

---

**टिप्प०**—1 हन्त विपरीता बुद्धिर्महाशयस्य, यद्यस्मिन् वाक्य एवोद्देश्य-विधेयभावः पूर्येत तदा 'ततः' इत्यग्रिमवाक्यस्यासंबन्धः स्यात्। तस्मात् कादम्बरीं व्याजीकृत्य (उद्दिश्य) मनोभवस्य चित्तवृत्तिर्यदि सत्यं प्रसन्ना, ततः सहजैः अस्य गुणैरुपकृतमित्यर्थः।

---

**पाठा०**—१ एवं तदा. २ विलासैः. ३ प्राप्तमनुरूपफलम्; प्राप्तरूपं फलम्. ४ मदिरामद. ५ कामापराधे.

पराधैर्देवं दूषयितुम् । एतानि [1]खलु कुसुमचापस्य चापलानि शठस्य, न देवस्य' इत्येव-मुक्तवतीं मां पुनः सकुतूहला सा प्रत्यभाषत—'योऽयं [2]कामः कोऽपि वा, कथय कानि कान्यस्य रूपाणि' इति । तामहं व्यजिज्ञपम्—'देवि, कुतोऽस्य रूपम् । अतनुरेष हुता-शनः । तथाहि । अप्र[3]काशयञ्ज्वालावलीः संतापं जनयति, अप्रकटयन्धूमपटलमश्रु पातयति, अदर्शयन्भस्मरजोनिकरं पाण्डुतामाविर्भावयति । न च तद्भूतमेतावति त्रिभुवनेऽस्य [4]शर-शरव्यतां यन्न यातं याति यास्यति वा । को [5]वास्मान्न त्रसति । गृहीतकुसुमकार्मुको बाणैर्ब-लवन्तमपि विध्यति । अपि चानेनाधिष्ठितानां कामिनीनां पश्यन्तीनां चि[6]न्ताप्रियमुखस[7]हस्र-संकटमम्बरतलम्, लिखन्तीनां दयिताकारानविस्तीर्णं महीमण्डलम्, गणयन्तीनां [8]वल्लभगु-

---

प्रसीद प्रसन्ना भव । कामापराधैर्देवं दूषयितुं नार्हसि न योग्या भवसि । **एतानीति ।** एतानि पूर्वोक्तानि खलु निश्चितं कुसुमचापस्य कंदर्पस्य चापलानि चेष्टितानि शठस्य, न देवस्य चन्द्रापीडस्य । इत्येवमुक्तवतीं मां पुनर्भूयः सुकुतूहला सकौतुका सा इति प्रत्यभाषत प्रत्यवोचत् । इतिशब्दद्योत्यमाह—**योऽयमिति ।** कोऽपि वा योऽयं कामः, कथय प्रतिपादय, कानि कान्यस्य रूपाणि । ततोऽहं तां कादम्बरीं व्यजिज्ञपं विज्ञप्तिम-करवम् । कुतोऽस्य रूपम् । एषोऽतनुर्महान्दश्यमानवह्नेर्विलक्षणो हुताशनः । तदेव दर्शयति—**तथाहीति ।** ज्वालावलीः शिखाश्रेणीरप्रकाशयन्नप्रकटीकुर्वन्संतापं जनयति । अप्रकटयन्नप्रकाशयन्धूमपटलमश्रु पातयत्य-श्रुपातं करोति । अदर्शयन्नप्रकटयन्भस्मलक्षणं रजोनिकरं पाण्डुतां पाण्डुरतामाविर्भावयति प्रकटयति । एता-वति त्रिभुवने त[1]न्न भूतम् । यत्तदोर्नित्याभिसंबन्धादाह—**यदिति ।** यदस्य मदनस्य शराणां बाणानां शरव्यतां वेध्यतां न यातं प्राप्तम् । न कोऽपि सांप्रतं शरव्यतां याति । कोऽप्यग्रे यास्यति । कोऽपि[2] नास्मांस्त्रसति । **गृहीतेति ।** गृहीतमात्तं कुसुमानां कार्मुकं धनुर्येनैवंविधो मदनो बाणैः शरैर्बलवन्तमपि विध्यति । अपिचेति युक्त्यन्तरे । **अनेनेति ।** अनेन कंदर्पेणाधिष्ठितानामाश्रितानां कामिनीनां हृदयस्य ह[3]सीयान्ह्रासकृत्काल आप-तति । अकस्मादागच्छतीत्यर्थः । अथ कामिनीनां विशेषणानि—किं कुर्वन्तीनाम् । चिन्ताजनितं यत्प्रियमु-खसहस्रं तेन संकटं संकीर्णं यदम्बरतलं तत्पश्यन्तीनां विलोकयन्तीनाम् । दयितस्य भर्तुर्य आकार आकृतिस्ते-नाविस्तीर्णं संकुचितं यन्महीमण्डलं तल्लिखन्तीनाम् । तथासंख्याननेकान्वल्लभगुणान्गणयन्तीनां गणनां विदध-

---

**टिप्प०**—1 तद् भूतं न, स प्राणी नास्तीत्यर्थः । 2 विपरीतः प्रलापः, अस्मात् को वा न त्रस्यति, अपि तु सर्वस्त्रस्यति । 3 हन्त कथमात्मानं संवृणुमः, अनधिकारिणा सर्वं धूलिसात्कृतम् ! ह्रसीयान् काल इति न सर्ववाक्यान्वयि । किञ्च 'चिन्तया प्रियमुखचन्द्रसहस्राणि' इति पाठः । प्रियगतचिन्तया (चिन्तावशात्) प्रियमुखचन्द्रसहस्राणि पश्यन्तीनां कामिनीनां कृते अम्बरतलं संकटं संबाधं (मुख-चन्द्रसहस्रसंकीर्णतया)। 'लिखन्तीनां दयिताकारानविस्तीर्णं महीमण्डलम्', [अनेनाधिष्ठितानाम् अत एव विनोदार्थं दयितस्य प्रतिकृतीर्लिखन्तीनाम् (कामिनीनाम् हृदये) महीमण्डलमविशालम्, यतो हि तच्चित्रिता दयिताऽऽकारास्तत्र न मान्ति ।] 'वल्लभगुणान् गणयन्तीनामल्पीयसी संख्या' [गुणगणनाकाले परार्धान्तापि संख्या अपर्याप्ता भवतीत्यर्थः ।] 'शृण्वतीनां प्रियतमकथामबहुभाषिणी सरस्वती', [प्रियतमकथां शृण्वतीनां कामिनीनां कृते वाग्देवतात्वेन प्रसिद्धापि सरस्वती न्यूनभाषिणी । अनन्तयापि कथया तासां श्रवणाशा न पूर्यत इत्यर्थः ।] 'ध्यायन्तीनां प्राणसमसमागमसुखानि ह्रसीयान् कालो हृदयस्यापतति' [ध्यानवेलायां कालः सहसैव समाप्यत इत्यर्थः ।]

---

पाठा०—१ खलु खलस्य. २ कामो वा; कामोऽपि. ३ प्रकाशयन्. ४ शरव्यताम्. ५ वास्य भ्रश्यति. ६ चिन्तया प्रिया. ७ चन्द्रसहस्राणि. ८ वल्लभगुणानल्पीयसी संख्या.

णानसंख्यान्, शृण्वन्तीनां प्रियतमकथामबहुभाषिणीं सरस्वतीम्, ध्यायन्तीनां प्राणसमसमागमसुखानि ह्रसीयान्कालो हृदयस्यापतति' इति ।

एतदाकर्ण्य च क्षणं विचिन्त्य प्रत्यवादीत्—'पत्रलेखे, यथा कथयसि तथा जनोऽयं कारितः कुमारे पक्षपातं पञ्चेषुणा । यान्यस्यैतानि रूपाणि समधिकानि वा तानि मयि वर्तन्ते । हृदयादव्यतिरिक्तासीदानीं भवतीमेव पृच्छामि । उपदिश त्वं यदत्र मे सांप्रतम् । एवंविधानां वृत्तान्तानामनभिज्ञास्मि । अपि च मे गुरुजनवक्तव्यतां नीताया नितरां लज्जिताया जीवितान्मरणमेव श्रेयः पश्यति हृदयम्' इति ।

एवंवादिनीं भूयस्तामहमेवमवोचम्—'अलमलमिदानीं देवि, किमनेनाकारणमरणानुबन्धेन । वरोरु, अनाराधितप्रसन्नेन कुसुमशरेण भगवता ते वरो दत्तः । का वात्र गुरुजनवक्तव्यता ? यदा खलु कन्यकां गुरुरिव पञ्चशरः संकल्पयति, मातेवानुमोदते, पितेव ददाति, सखीवोत्कण्ठां जनयति, धात्रीव तरुणतायां रत्युपचारं शिक्षयति । किमिवं कथयामि ते याः स्वयं वृतवत्यः पतीन् । यदि च नैवम्, अनर्थक एव तर्हि धर्मशास्त्रोपदिष्टः स्वयंवरविधिः ।

---

तीनाम् । तथा प्रियतमकथा अबहुभाषत इत्येवंशीलां सरस्वतीं श्रृण्वन्तीनामाकर्णयन्तीनाम् । तथा प्राणसमस्य भर्तुर्यः समागमस्तस्य सुखानि ध्यायन्तीनां चिन्तयन्तीनाम् ।

इत्येतदाकर्ण्य च क्षणं विचिन्त्य प्रत्यवादीत्प्रत्यवोचत् । किं तदित्याह—**पत्रलेखेति** । हे पत्रलेखे, यथा त्वं कथयसि तथायं जनः पञ्चेषुणा कंदर्पेण कुमारे पक्षपातं कारितः । तदेव स्पष्टीकरोति—**यानीति** । यानि त्वया कथितान्यस्य कंदर्पस्य रूपाणि तदपेक्षया समधिकानि मयि कादम्बर्यां वर्तन्त इत्यर्थः । अतिनिगूढत्वं यन्मम हृदि वर्तते तदपि भवतीमेव पृच्छामीत्याशयेनाह—**भवतीमिति** । भवतीं त्वामेव वा पृच्छामि प्रश्नं करोमि । अत्रार्थे हेतुमाह—**हृदयेति** । इदानीं सांप्रतं मम हृदयात्त्वमव्यतिरिक्ताऽभिन्नासि । अत एव त्वां पृच्छामीत्यर्थः । ततो यदत्र मे मम सांप्रतं युक्तं तदुपदिश कथय । अत्र हेतुमाह—**एवमिति** । एवंविधानां पूर्वोद्दिष्टानां वृत्तान्तानामहमनभिज्ञास्म्यकुशला । तस्मात्त्वदीयोपदेशस्यैव प्रतीक्षा क्रियते । मम त्वेतदेव प्रतिभातमित्याह—**गुरुजनेति** । गुरुजनेन मातृपित्रादिजनेन वक्तव्यतां वचनीयतां नीतायाः प्रापिताया नितरामत्यर्थं लज्जिताया मे मम मरणमेव श्रेय इति हृदयं चेतः पश्यति । जानातीत्यर्थः ।

इत्येवंवादिनीं भूयस्तामहमेवमवोचमब्रुवम् । हे देवि, अलमलं कृतम् । किमनेन व्यर्थेनाकारणमरणानुबन्धेन निष्प्रयोजनमृत्युप्रयासेन । **वरेति** । हे वरोरु, भगवता कुसुमशरेण ते तव वरो भर्ता दत्तः । भगवान्देव आराधित एव प्रसन्नः स्यात् । अयं तु न तथेत्याह—**अनाराधितेति** । अनाराधितप्रसन्नेन । **का वेति** । अत्र गुरुजने का वक्तव्यता का वचनीयता । **यदेति** । खलु निश्चितम् । यदा गुरुरिव पञ्चशरः कंदर्पः कन्यकां संकल्पयति दानेच्छाविषयीकरोति । मातेव जननीवानुमोदते एतत्सुष्ठु विहितमिति श्लाघते । पितेव जनक इव ददाति प्रयच्छति । सखीव वयस्येवोत्कण्ठामुत्कलिकां जनयत्युत्पादयति । धात्रीवोपमातेव तरुणतायां तारुण्यविषये रतिविषयको य उपचारो विभ्रमादिस्तं शिक्षयत्यभ्यासं कारयति । न च काश्चन स्वेच्छया पतिवरणं कुर्वन्तीत्याशयेनाह—**या इति** । याः पतीन्स्वयं वृतवत्यस्ता अपि कन्यकाः सन्ति । अतस्ते तव किमिव कथयामि किं ब्रवीमि । इदं त्वयापि समाचरणीयमिति ध्वनितम् । न चेदमाचरणीयमित्याशयेनाह—**यदि चेति** । यदीदं पत्युः स्वयंवरणं न कर्तव्यं तर्हि धर्मशास्त्रे स्मृत्यादावुपदिष्टः कथितः

---

**टिप्प०**—1 सन्तापजनकत्वादीनि ( पूर्वोक्तानि ) । 2 'भ्रातेव ददाति' इत्येव पाठः, गुरुरिवेतिपूर्वमुक्तत्वात् । 3 'कति वा कथयामि' इत्येव पाठः अन्यथा 'याः' इत्यस्य समन्वयो यथावन्न भवति । याः स्वयंवृतवत्यस्ताः कति कथयामि, बह्वयः सन्तीति तदर्थः ।

---

पाठा०—१ कुमारपक्षपातिना पञ्चशरेण. २ मे. ३ इदमपि च. ४ भ्रातेव. ५ तरुणतारत्युपचारम्. ६ कति च; कति वा.

तत्प्रसीद देवि, अलममुना मरणानुबन्धेन । शपे[1] ते पादपङ्कजस्पर्शेन । संदिश । प्रेषय माम् । यामि । आनयामि देवि, ते हृदयदयितम् ।'

इत्येवमुक्ते मया प्रीतिद्रवार्द्रया दृष्ट्या पिबन्तीव मां निरुध्यमानैरपि मकरकेतुशरजर्ज-रितां[2] भित्त्वेव लज्जां लब्धान्तरैर्निष्पतद्भिरनुरागविभ्रमैराकुलीक्रियमाणा, प्रियवचनश्रवण-प्रीत्या च स्वेदाश्लिष्टमुत्क्षिप्य रोमाञ्चजालकेन दधतीवोत्तरीयांशुकम्, प्रेङ्खत्कुण्डलमाणिक्य-पत्रमकरकोटिलग्नं च शशिकिरणमयं मरणपाशमिव[3] मकरकेतुना निहितं कण्ठे हारमुन्मोच-यन्ती, प्रहर्षविह्वलान्तःकरणापि कन्यकाजनसहजां लज्जामिवालम्ब्य[4][5] शनैः शनैरवदत्—'जा-नामि ते गरीयसीं प्रीतिम् । केवलमकठोरशिरीष[6]पुष्पमृदुप्रकृतेः कुतः प्रागल्भ्यमेतावन्नारीज-नस्य, विशेषतो बालभावभाजः कुमारीलोकस्य । साहसकारिण्यस्ता याः स्वयं संदिशन्ति, समुपसर्पन्ति वा स्वयम्, साहसं संदिशन्ति[7] । बाला जिह्रेमि । किं वा संदिशामि । अतिप्रियो-

---

स्वयंवरविधिरनर्थक एव निष्प्रयोजन एव । अतस्त्वं प्रसीद प्रसन्ना भव । हे देवि । **अलमिति** । अमुना मरणानुबन्धेनालं कृतम् । ते तव पादपङ्कजस्पर्शेन शपे शपथं कुर्वे । संदिशाज्ञापय । मां प्रेषय प्रेषणं कुरु । अहं यामि । ते हृदयदयितं देवं चन्द्रापीडमानयामि । त्वदन्तिक इति शेषः ।

इत्येवं पूर्वोक्तप्रकारेण मयोक्ते कथिते सति सा कादम्बरी शनैरवदत् । अथ कादम्बरीं विशेषयन्नाह—**प्रीतीति** । प्रीतिः स्नेहस्तस्य द्रवः पङ्कस्तेनार्द्रयोन्नया दृष्ट्या मां पिबन्तीव पानं कुर्वन्तीव लज्जां त्रपां भित्त्वा भेदं कृत्वा निरुध्यमानैरपि संध्रियमाणैरपि लब्धान्तरैः प्राप्तावकाशैर्निष्पतद्भिर्बहिर्निःसरद्भिरनुरागविभ्रमैरान्तर-प्रीतिविलासैराकुलीक्रियमाणा व्याकुलतां नीयमाना । कीदृशी । मकरकेतुशरैः कंदर्पबाणैर्जर्जरिता । **प्रियेति** । प्रियं यद्वचनं तस्य श्रवणमाकर्णनं तस्माद्या प्रीतिस्तया यः स्वेदस्तेनाश्लिष्टम् । आर्द्रमित्यर्थः । एवंविधमुत्त-रीयांशुकमुपसंव्यानवस्त्रं रोमाञ्चजालकेन रोमोद्गमसमूहेनोत्क्षिप्योन्नतं कृत्वा दधती धारयन्ती । किंविशि-ष्टमुत्तरीयांशुकम्[2] । **प्रेङ्खदिति** । प्रेङ्खच्चञ्चलत्कुण्डलं कर्णभूषणं तस्य माणिक्यपत्रं तत्र या मकरकोटिस्तस्यां लग्नं विलग्नम् । पुनः किं कुर्वन्ती । कण्ठे गले हारं मुक्ताकलापमुन्मोचयन्ती । कीदृशं हारम् । शशिकिरण-मयम् । अत्युज्ज्वलत्वाच्छशिप्रभाभिर्निष्पन्नमित्यर्थः । अत एव विरहमूर्च्छाजनकत्वान्मकरकेतुना निहितं स्थापितं मरणपाशमिव । **प्रहर्षेति** । प्रहर्षेण प्रमोदेन विह्वलमन्तःकरणं यस्याः सा । तथा कन्यकाजनस्य सहजां सहोत्पन्नां लज्जां त्रपामालम्ब्येवालम्बनीकृत्येव शनैःशनैर्मन्दं मन्दमवददवोचत् । ते तव मयि विषये गरीयसीं प्रीतिं स्नेहं जानामि । परं केवलमकठोरं सुकुमारं यच्छिरीषपुष्पं तद्वन्मृद्वी प्रकृतिर्यस्यैवंवि-धस्य नारीजनस्यैतावत्प्रागल्भ्यं कुतः स्यात् । तत्रापि बालभावभाजः कुमारीलोकस्य विशेषतस्तन्न स्यात् । कथं तर्हि रुक्मिण्यादेः श्रीकृष्णविषये रहः संदेशदूतप्रेषणादि वेत्यत आह—**साहसेति** । साहसकारिण्यो याः स्वयं संदिशन्ति संदेशं प्रेषयन्ति । स्वयं समुपसर्पन्ति समीपे गच्छन्ति । साहसं सत्त्ववृत्तिं संदिशन्ति[3] कथ-यन्ति । मायाशक्तिवशाद्गृहीतशरीराः । तास्त्विति । दिव्या एवेत्यर्थः । अहं तु तथाविधा न भवामीत्यत आह—**बाला इति** । अहं बाला प्राप्तयौवना, अतो जिह्रेमि त्रपापन्ना भवामि । बालत्वात्किमपि न स्फुरतीत्याह—किं वेति पक्षान्तरे । किं संदिशामि किं कथयामि । प्रियसंदेशविषयार्थस्य स्फुरणमेव प्रकटयति—**अतीति** ।

---

**टिप्प०**—1 द्वितीयान्तमिदं लज्जाया विशेषणम् । अत एव 'कीदृशीं लज्जाम् ?' कामबाणैर्जर्जरिताम् । अत एव सा लज्जा भेदने सुकरेत्यर्थः । 2 प्रेङ्खत्कुण्डलेति नांशुकस्य विशेषणम्, अपि तु हारस्य । 3 इद-मप्यशोभनम् । 'समुपसर्पन्ति वा ।' अत्रैव वाक्यसमाप्तिः । स्वयं संदिशन्ति' इति पूर्वमुक्तत्वात् अत्र 'स्वयं साहसं संदिशन्ती' इति प्रथमान्तपाठः । साहसरूपं स्वयं संदिशन्ती ( संदेशं प्रेषयन्ती ) बाला-ऽहं जिह्रेमि, इति संगतिः ।

---

**पाठ०**—१ शपामि ते. २ जर्जरिता. ३ मरणाय पाशमिव. ४ एव. ५ अवलम्ब्य. ६ पक्ष्म. ७ ६ संदिशन्ती; दिशन्ती.

ऽसीति पौनरुक्त्यम्, तवाहं प्रियात्मेति[1] जडप्रश्नः, त्वयि गरीयाननुराग इति वेश्यालापः, त्वया विना न जीवामीत्यनुभवविरोधः, परिभवति मामनङ्ग इत्यात्मदोषोपालम्भः, मनोभवेनाहं भवते दत्तेत्युपसर्पणोपायः, बलाद्धृतोऽसि मयेति बन्धकीधार्ष्ट्यम्, अवश्यमागन्तव्यमिति सौभाग्यगर्वः, स्वयमागच्छामीति स्त्रीचापलम्, अनन्यरक्तोऽयं[2] परिजन इति स्वभक्ति[3]निवेदनलाघवम्[4], प्रत्याख्यानशङ्कया न संदिशामीत्यप्रबुद्धबोधनम्[5], अनपेक्षितानुजीवित[6]दुःखदारुणा स्यामित्यतिप्रणयिता, ज्ञास्यसि मरणेन प्रीतिमित्यसंभाव्यम्[7]' इति ।

---

सर्वजनस्य प्रियत्वेऽनुभवसिद्धे त्वमतिप्रियोऽसीत्यग्निरुष्ण इतिवत्पुनरुक्तता । **तवेति** । तवाहं प्रियात्मा । प्रियो वल्लभ आत्मा यस्येति बहुव्रीहिः । इत्यपि जडस्य प्रश्नः । स्वविषयकप्रियत्वख्यापनाज्जडत्वमित्यर्थः । तदुक्तम्—'स्वरूपं वा प्रियो वापि वृत्तं पौरुषमेव वा । प्रकाशयन्स्वयं यस्तु स वै जडतरः स्मृतः' इति । त्वयि भवति गरीयाननुराग इत्यपि न, स्वकीयानां नायिकानां व्यङ्ग्यरूपतयैवानुरागप्रकाशनम् । सामान्यवनितानां तु वाच्यवृत्त्येवाह—**वेश्येति** । वेश्या गणिका तस्या आलापः, न तु कुलवत्याः । **त्वयेति** । त्वया विना भवव्यतिरेकेणाहं न जीवामि न प्राणान्धारयामि । इत्यपि अनुभवविरोधात् । जीवन्नपि न जीवामीति स्पष्ट एव विरोधः । **परीति** । मामनङ्गः कंदर्पः परिभवति पीडयति । इत्यपि न । आत्मनः कामुकत्वप्रकाशनेन कुलवधूनामनुचितदोषोपालम्भात्[1] । **मनोभवेति** । मनोभवेन कंदर्पेणाहं भवते दत्ता समर्पिता । इत्यपि न । कामुकत्वप्रकाशनरूपतया कुलस्त्रीणामनुचितोपसर्पणोपायत्वात् । **बलादिति** । बलाद्धठान्मया त्वं धृतोऽसि । इत्यपि न । तस्य बन्धकी कुलटा तस्या धार्ष्ट्यरूपत्वात् । **अवश्येति** । अवश्यं निश्चितमागन्तव्यम् । इत्यपि न । अस्य स्वसौभाग्यगर्वरूपत्वात् । स्वयमागच्छामि । इत्यपि न । स्त्रीचापलत्वात् । **अनन्येति** । अयं प्रत्यक्षोपलभ्यमानः परिजनः सेवकजनोऽनन्यरक्तस्त्वय्येवानुरक्तः । इत्यपि न । स्वयं स्वभक्तिनिवेदनस्य लाघवत्वात् । **प्रत्याख्यानेति** । प्रत्याख्यानं निराकरणं तस्य शङ्कयारेकया संदिशामि न संदेशप्रेक्षणं करोमि । इत्यपि न । इदं हि प्रसुप्तसिंहोत्थापनवदप्रबुद्धबोधनम्[2] । अज्ञातज्ञापनमित्यर्थः । **अनेति** । अनपेक्षितमसमीहितं त्वद्गमनानन्तरमनुजीवितं यस्मिन्नेतादृशं यद्दुःखं तेन दारुणा भीषणाहं स्याम् । इत्यपि न । इयं ह्यतिप्रणयितात्युत्कटस्नेहवत्ता । **ज्ञास्यसीति** । मरणेन मृत्युना त्वं प्रीतिं ज्ञास्यसि अग्रेऽवबोधो भविष्यति । इत्यपि न । इदं हि असंभाव्यम्[3] । तद्व्यतिरेकेणापि प्रीतेर्ज्ञायमानत्वादिति ॥

इति श्रीमत्तपोगणगगनाङ्गणगगनमणिभट्टारकसार्वभौमभट्टारकश्रीविजयसेनसूरीश्वराणां विजयराज्ये पातशाहश्रीअकब्बरप्रदापितोपाध्यायपदधारकश्रीशत्रुंजयकरमोचनाद्यनेकसुकृतकारकमहोपाध्यायश्रीभानुचन्द्रगणिविरचितायां कादम्बरीनिरन्तरव्याख्यायां प्रथमः परिच्छेदः ।

---

**टिप्प०**—1 कामुकतारूपस्य आत्मदोषस्य उपालम्भः निन्दा करणीया, न तु तन्निवृत्तये संदेशप्रेषणमित्यर्थः । 2 स प्रत्याख्यानं नाद्यावधि जानाति, 'प्रत्याख्यानशङ्कया न संदिशामि' इति वाचिकप्रेषणे तु स्वयमेव तस्मै प्रत्याख्यानप्रबोधनमिति भावः । 3 एवंविधदुःखान्यनुभवन्त्या मन्दभाग्याया मे बह्वपेक्षितस्य मरणस्यैवासंभवादित्याशयः ।

---

पाठ०—१ प्रिया नेति. २ अनुरक्तः. ३ स्वयं भक्ति. ४ निवेदनालापलाघवम्. ५ बोधनम्; उद्धतप्रतिबोधनम्. ६ अनुजीवि. ७ असंभाव्यम्; असंभाव्यमेव.

विश्वाभिनन्द्यबुधवन्द्यगुणा ह्युदारा
कादम्बरी[1] नरवरैरुपलालनीया ।
दैवाद्दिगम्बर[2]करोपनता त्विदानी—
मानीयतां हि 'चषकेण'[3] निजोपयोगम् ॥ १ ॥

रसगङ्गाधर[4]टीका सरला, साहित्यवैभवं[5] रुचिरम् ।
जयपुरवैभव-गाथासप्तशतीत्यादि यत्कृतिस्तेन ॥ २ ॥

जयपुरनरेन्द्रपूजिततैलङ्गाग्रण्य-कविशिरोमणिना ।
शरनन्दनन्दचन्द्रप्रमितसमायामिदं रचितम् ॥ ३ ॥

सन्मञ्जुनाथनामश्रीमथुरानाथशर्मनिर्मितिषु ।
कादम्बरीविचिन्तनचतुरां'श्चषकं' चकासयतु ॥ ४ ॥

इति श्रीजयपुरमहाराजाधिराजसंमानित-तैलङ्गभट्टान्ववायसंभूत-मञ्जुनाथोपनामक-कविशिरोमणिदेवर्षिभट्टश्रीमथुरानाथशास्त्रिसाहित्याचार्य-निर्मितं कादम्बरीचषकपूर्वार्धमपूर्यत ।




पाठा०—१ वर्ण्या नायिका, एतन्नाम्नी कथा, हाला चेति त्रिष्वपि सुयोजमिदम् । हालाया अपि वैद्यबुधैः प्रशस्तगुणत्वात् । २ अकिञ्चनः, जैनसंप्रदायी एतट्टीकाकारश्च । ३ एतन्नाम्ना अनेन टिप्पणेन, पानपात्रेण च । ४ रसगङ्गाधरः, सटीका गाथासप्तशती च 'निर्णयसागर'तः प्राप्या । ५ वैभवद्वयमिदं 'मथुरानाथशास्त्री—रेज़िडेन्सी रोड जयपुर'तः प्राप्यम् ।

का० ६१

# कादम्बरी



## उत्तरभागः ।

**देहद्वयार्धघटनारचितं शरीरमेकं ययोरनुपलक्षितसंधिभेदम् ।**
**वन्दे सुदुर्घटकथापरिशेषसिद्धौ सृष्टेर्गुरू गिरिसुतापरमेश्वरौ तौ ॥ १ ॥**

---

मेरुः स्नानभवैः सकुङ्कुमपयःपूरैः परीतोऽभव-
त्पीतस्तेन सुवर्णपर्वत इति ख्यातिं जगाम क्षितौ ।
देवीनृत्यविशीर्णहारमणिभिस्तारो गतस्तारका-
धारोऽसाविति यज्जनिव्यतिकरः सोऽव्याद्वृषाङ्कः प्रभुः ॥
श्रीमाञ्शान्तिः प्रभुरवतु वो गाढसर्वाङ्गबाधा
यं राजश्रीः सुभगमभजत्किं नु यस्य प्रभोर्न ।
तद्रागोऽन्तःकरणमविशद्युष्टचेष्टाविशिष्टं
वार्धिस्यन्दस्तटमिव विषं भोगिचूडामणीवत् ॥
जाग्रज्ज्योतिरकब्बरक्षितिपतेरभ्यर्णमातस्थिवा-
न्सिद्धाद्रैः करमोचनादिसुकृतं योऽकारयच्छाहिना ।
जीवानामभयप्रदानमपि यः सर्वत्र देशे स्फुटं
श्रीमत्पाठकपुंगवः स जयताच्छ्रीभानुचन्द्राभिधः ॥
तच्छिष्यः सुकृतैकभूर्मतिमतामग्रेसरः केसरी
शाहिस्वान्तविनोदनैकरसिकः श्रीसिद्धिचन्द्राभिधः ।
पूर्वं श्रीविमलाद्रिचैत्यरचनां दूरीकृतां शाहिना
विज्ञाप्यैव मुहुर्मुहुस्तमधिपं योऽकारयत्तां पुनः ॥
यावन्या किल भाषया प्रगुणितान्ग्रन्थानशेषांश्च ता-
न्विज्ञाय प्रतिभागुणैस्तमधिकं योऽध्यापयच्छाहिराट् ।
दृष्ट्वानेकविधानवैभवकलां चेतश्चमत्कारिणीं
चक्रेषु स्पृहमेति सर्वविदितं गोत्रं यदीयं पुनः ॥
प्रोच्चैः पञ्चसहस्रतुङ्गतुरगाञ्श्रीसिन्धुरान्दुर्धरा-
न्दत्त्वा प्राग्भवसंभवप्रणयतो धृत्वा करे यं जगौ ।
शाहिश्रीमदकब्बरक्षितिपतिस्त्यक्त्वा व्रतं दुष्करं
श्रीमत्संयमयामिनीशवसुधाधीशोऽधुना त्वं भव ॥
साक्षात्कंदर्परूपः क्षितितलविदितो वाचकव्रातशक्रः
स्मृत्वा वाक्यं गुरूणां गुरुवचनरतो भक्तिपर्वानगर्वात् ।
धीमान्षट्शास्त्रवेत्ता रचयति रुचिरां सज्जनैः श्लाघनीयां
टीकां कादम्बरीयां निजगुरुघटितां किंचिदूनस्थितां सः ॥

स्वयं करिष्यमाणोत्तरप्रबन्धनिष्प्रत्यूहसमाप्तयेऽभीष्टसमाचारप्राप्तस्वाभीष्टदेवताप्रणतिरूपं कृतं मङ्गलं शिष्या-ञ्शिक्षयितुमादावुपनिबध्नाति—**देहेत्यादिना**। तौ गिरिसुतापरमेश्वरौ वन्दे इति संबन्धः । तौ निरु-

व्याधूतकेसरसटाविकरालवक्त्रं हस्ताग्रविस्फुरितशङ्खगदासिचक्रम् ।
आविष्कृतं सपदि येन नृसिंहरूपं नारायणं तमपि विश्वसृजं नमामि ॥ २ ॥
आर्यं यमर्चति गृहे गृह एव लोकः पुण्यैः कृतस्य यत एव ममात्मलाभः ।

---

पाधिकसकललोकाभीष्टार्थदायकत्वेन प्रसिद्धावम्बाशंकरौ नमस्कुर्वे इत्यर्थः । अन्यतरनमस्कारेणैवाभीष्टसिद्धावुभयोपादानं शक्तेर्वागात्मकत्वाद्भगवतोऽर्थात्मकत्वादविकलशब्दार्थपरिस्फूर्त्यर्थमिति बोध्यम् । अहमित्यप्रयुञ्जानेन व्यङ्ग्यार्थ एव प्राधान्येन निरूप्यत इति ध्वनितम् । निर्गुणस्य वस्तुनो नमस्कारायोग्यतया परमेश्वरपदोपादानेनैव तत्सिद्धे निगरणार्थकगिरिपुत्रीसाहित्येन कारणगुणा हीति न्यायेन तस्या अपि तथात्वात्तदाराधकस्यानायासेनैव वाणीनिगरणं भवतीति सूचितम् । तच्छब्दसंबन्धिभूतं यच्छब्दार्थमाह—**ययोर्देहद्वयार्धघटनारचितमेकं शरीरम्** । अस्तीति शेषः । ययोः पार्वतीपरमेश्वरयोर्देहद्वयस्य स्त्रीपुरुषरूपदेहद्वयस्यार्धं स्त्रीदेहार्धं पुरुषदेहार्धं च तयोर्घटना संघट्टस्ताभ्यां वा घटना निर्माणं तेन रचितम् । स्वयं निष्पादितमित्यर्थः । ननु विजातीयोत्पन्नत्वेन कथमेकत्वमित्यत आह—**अन्विति** । अनुपलक्षितोऽप्रतीयमानः संधिः परस्परसंधानम् । संयोजनमिति यावत् । तत्कृतो भेदः स्त्रीत्वपुंस्त्वरूपो यस्येति समासार्थः । द्व्यणुकादिप्रक्रमेणारम्भे स्यादयं दोषः । अस्य चार्धनारीश्वरलीलाविग्रहस्यैकस्यैवोपलम्भाद्भिदप्रत्ययाभावादिति भावः । एतेनोत्तरमात्मकृत्या संधितायाः पितृपूर्वकृतेरर्धनारीश्वरविग्रहवदभेदः संदर्भशुद्ध्या सूचितः । तेनालौकिकचमत्कारिता च । नतिफलं दर्शयति—**सुदुर्घटेति** । सुदुर्घटः कादम्बरीप्रत्यागतपत्रलेखाकथिततत्संदेशानां किंचिद्ग्रथनकाल एव दैवात्परं लोकं गते बाणेऽन्येन केनापि कविना तथा विरचयितुमशक्यः कथापरिशेषः । 'कृदभिहिते' इति न्यायेन परिशिष्यमाणा कथेत्यर्थः । तत्सिद्ध्यै स्वरूपनिष्पत्त्यै । अयं भावः—पितुरुपरमे तत्कृतावुत्तरकथाविच्छेददर्शनादसमाप्तिरूपकलङ्कदूरीकरणाय पितृप्रसादप्राप्तवाग्वैभवस्तत्पुत्रस्तत्समाप्त्यै स्वयं यत्नं कृतवान् । स च तादृशपुरुषधौरेयाराधनं विना न सिध्यतीति । एवंविधाम्बेश्वरसद्भावे प्रमाणमाह—**सृष्टेरिति** । सृष्टेर्जगतो गुरू पितरौ । उत्पत्तिमन्निमित्तकारणभूतावित्यर्थः । नन्वीश्वरस्यैव निमित्तत्वं श्रुतं नाम्बाया इति चेत्, न तनीयांसमित्याद्युक्त्यवष्टम्भेन शक्तिरहितस्य तत्रासामर्थ्यावधारणादिति दिक् ॥ १ ॥

विघ्नसमसंख्यमङ्गलस्य कारणत्वावधारणाद्बहुविघ्नशङ्कया कृतं नतिरूपं मङ्गलान्तरमुपनिबध्नाति—**व्याधूतेति** । तं नारायणमपि नमामीत्यन्वयः । तमङ्गीकृतमत्स्याद्यवतारं निरस्तसमस्तदुःखं नारायणमपि क्षीरशायिनमपि । एतेन स्वस्य तत्रागम्यत्वं सूचयति । नमामि । प्रह्वीभवामीत्यर्थः । नन्वगम्यत्वे कथं नमस्करणीयतेत्यत आह—**येनेत्यादि** । क्षीरशायिना स्वसेवार्थं नृसिंहरूपं परस्परविरुद्धजात्याश्रयं सगुणस्वरूपमाविष्कृतम् । प्रकटीकृतमित्यर्थः । एतेन कर्मारब्धत्वं निवारयति । ध्यानार्थं तत्स्वरूपं विशेषणद्वाराह—**व्याधूतेत्यादिना** । व्याधूतानां कम्पितानां केसराणां स्कन्धवालानां सटाश्रेणयोऽग्रभागा वा ताभिरभक्तानां विशेषेण करालं भीषणं वक्त्रं मुखं यस्येति समासार्थः । तथा हस्ताग्रेषु विस्फुरितानि देदीप्यमानानि शङ्खगदासिचक्राणि पाञ्चजन्यकौमोदकीनन्दकसुदर्शनानि यस्य स इत्यर्थः । चतुर्भुजत्वमनेनोक्तम् । अज्ञानहिरण्यकशिपुध्वंस आद्यविशेषणेन, द्वितीयेन चासेः प्रत्यासन्नवधोपायत्वादितरेषामप्रत्यासन्नवधोपायत्वात्तादृशविघ्नध्वंसः सूचितः । प्रमाणमाह—**विश्वेति** । सर्वोत्पत्तिमन्निमित्तमित्यर्थः ॥ २ ॥

**आर्यमिति** । तं पितरमेवानतोऽस्मीत्यन्वयः । तं प्रसिद्धं पातीति व्युत्पत्त्या सर्वापद्रक्षकं जनकं बाणमानतोऽस्मि । नमस्कारेणाभिमुखीकरोमीत्यर्थः । एवकारेण नेदं पितृत्वमन्यत्रेति सूचयति । तच्छब्दसंबन्धिनमाह—लोक आर्यं यं गृहे गृह एवार्चतीति । लोकते गुणानिति व्युत्पत्त्या गुणग्राहको जनो गृहे गृह एव । एवकारः प्रातिस्विकतामाह । स्वस्वगृहे आर्यं कर्णपथप्राप्तमर्चति । स्तौतीत्यर्थः । श्लेषोपबृंहितामेतद्वाचीमाकर्ण्य श्रवणहृदयाह्लाददायितया मौलिमण्डलान्दोलनविरचनेन 'हृदि लग्नेन बाणेन' इत्यादिना । अद्य यावत्सहृदयहृदयः को वा तन्नोररीकरोतीति भावः । अन्यच्च पुण्यैरेव कृतस्य मम यत आत्मलाभः पुण्यैरेव धर्मैरेव । एतेन धर्ममा-

---

पाठा०—१ मया।

सृष्टैव येन च कथेयमनन्यशक्या वागीश्वरं पितरमेव तमानतोऽस्मि ॥ ३ ॥

याते दिवं पितरि तद्वचसैव सार्धं विच्छेदमाप भुवि यस्तु कथाप्रबन्धः ।
दुःखं सतां तदसमाप्तिकृतं विलोक्य प्रारब्ध एव स मया न कवित्वदर्पात् ॥ ४ ॥

गद्ये कृतेऽपि गुरुणा तु तथाक्षराणि यन्निर्गतानि पितुरेव स मेऽनुभावः ।
एकप्लवामृतरसास्पदचन्द्रपादसंपर्क एव हि मृगाङ्कमणेर्द्रवाय ॥ ५ ॥

गङ्गां प्रविश्य भुवि तन्मयतामुपेत्य स्फीताः समुद्रमितरा अपि यान्ति नद्यः ।

---

न्नारब्धत्वेनात्मनो देवांशत्वं प्रतिपादयति । कृतस्य निष्पादितस्य मम यतो बाणादात्मलाभो देहसंबन्धो जात इति शेषः । एतत्पुत्रत्वमेव मे धर्ममात्रारब्धत्वं सूचयति । येन च बाणेनानन्यशक्या तदितरजनेन कर्तुमशक्येयं प्रसिद्धा कथैव । एवकारोऽप्यर्थे । कादम्बरीविषयिणी कथापीत्यर्थः । सृष्टा । कल्पितेत्यर्थः । पुराणेतिहासादिष्वदृष्टापीयं कथा स्वयं निर्मिता निबद्धा चेति भावः । स्वयं निर्माणे हेतुगर्भं विशेषणमाह—**वागीश्वरमिति** । वाचां वाणीनामीश्वरं नियन्तारम् । स्वायत्तीकृतवाक्प्रपञ्चस्य किमशक्यमिति भावः ॥ ३ ॥

कविरिदानीं स्वमौद्धत्यं परिहरति—**यात इत्यादिना** । श्लोकद्वयेन । पितरि कथारब्धके बाणे दिवं स्वर्गं याते प्राप्ते सति तद्वचसैव तस्य बाणस्य वचसा । वचोभिरित्यर्थः । यः कथाप्रबन्धश्चरितगोष्ठीविस्तारो भुवि भूमण्डले विच्छेदं विनाशमाप प्राप्तवान् । ततः सतां सहृदयानां तदसमाप्तिकृतं तस्याः कथाया असमाप्तिरसंपूर्णता तत्कृतं तत्प्रयुक्तं दुःखम् 'हा, बाणारब्ध एतादृशः प्रबन्धो न समाप्तिमगात्' इत्याकारमधर्मफलं विलोक्य दृष्ट्वा तद्दुःखपरिहारार्थं मया प्रारब्ध एव । मया तत्पुत्रेण 'आत्मा वै पुत्रनामासि' इत्युक्तेस्तेनैव मया प्रारब्ध एवाविच्छेदेन समाप्तिं नीत एव । कवित्वदर्पान्न लोकोत्तरवर्णनानिपुणतरकविकर्मगर्वान्न । तथा च सहृदयान्तस्तापनिरासायैवायमारम्भः, न पुनः स्वकविताप्रौढिदर्पादिति भावः ।

गुरुणा पित्रा गद्ये कृते । जातावेकवचनम् । गद्येषु कृतेष्वित्यर्थः । यत्तथा पितृकृतगद्याक्षरतुल्यान्यक्षराण्यज्झल्समुदायात्मकान्यक्षराणि निर्गतानि प्रादुर्भूतानि स मे पितुरेव बाणस्यैवानुभावः सामर्थ्यम् । स्वशरीरमोचनसमये तथा तेनानुगृहीतो यथा नूतनकथापूरकगद्यावली तत्समानाकारैवाविरभूदिति भावः । उक्तमर्थमर्थान्तरन्यासेन द्रढयति—एको मुख्यः प्लवः प्रवाहो यस्मिंस्तादृशो योऽमृतरसः पीयूषद्रवस्तदास्पदं स्थानं यश्चन्द्रस्तत्पादसंपर्क एव तत्किरणसंबन्ध एव मृगाङ्कमणेश्चन्द्रकान्ताश्मनो द्रवाय स्रवाय भवतीति शेषः । यथा चन्द्रकान्तमणिश्चन्द्रकिरणसंपर्काद्द्रवीभवति तथा मद्वाण्यपि पितृवाक्संबन्धेनामृतस्राविणी भविष्यतीति भावः ॥ ५ ॥

अर्थान्तरन्यासं पद्यान्तरेण दर्शयति—**गङ्गामिति** । यथेतरा नद्यो यमुनाद्या भागीरथीसंभेदं कृत्वा पृथिव्यां तद्रूपतामेत्योद्दण्डाः सागरं गच्छन्ति एवमासमुद्रगे मत्तातवाणीस्रोतस्याख्यानसंधानार्थं पतिता

---

**टिप्प०**—1 गणनाथमर्चयित्वा कादम्बर्याः सनाथयंश्चपकम् ।
सन्मञ्जुनाथनामा मथुरानाथः कृतार्थोऽस्तु ॥ १ ॥

'स मया न कवित्वदर्पात्', 'तान्येव तस्य तनयेन तु संहृतानि', इत्यादिवचनैर्यः स्वस्य विनयमाख्याति तस्यैव मुखात् 'आत्मनो देवांशत्वोक्तिः' कियत्संगता स्यात्? अत एव सोयं पाठः प्रमाद एव टीकाकर्तुः । 'पुण्यैः कृतश्च यत एव मयात्मलाभः' इत्येव पाठः । मया पुण्यैः ( पूर्वजन्मकृतैः सुकृतैः ) यतः यस्मात् ( पितुः ) आत्मलाभः कृतः, जन्म लब्धमिति तदर्थः । 2 कथा तन्नामकं गद्यकाव्यम् । कादम्बरीकथानकस्य तु बृहत्कथामूलकत्वात् 'पुराणेतिहासादिष्वदृष्टे'त्यादिकथनं न स्वारस्याय । बृहत्कथामूलकत्वसाधनं मत्कृतभूमिकायां सहृदयैर्द्रष्टुं शक्यम् ।

---

पाठा०—१ एप च. २ एकः प्लव. ३ पादैः संपर्क.

आसिन्धुगामिनि पितुर्वचनप्रवाहे क्षिप्ता कथानुघटनाय मयापि वाणी ॥ ६ ॥

कादम्बरीरसभरेण समस्त एव मत्तो न किंचिदपि चेतयते जनोऽयम् ।
भीतोऽस्मि यन्न रसवर्णविवर्जितेन तच्छेषमात्मवचसाप्यनुसंदधानः ॥ ७ ॥

बीजानि गर्भितफलानि विकाशभाञ्जि वप्त्रैव[1] यान्युचितकर्मबलात्कृतानि ।
उत्कृष्टभूमिविततानि च[2] यान्ति पुष्टिं तान्येव तस्य तनयेन तु संहृतानि ॥ ८ ॥

अपि चेदानीमानीतस्यापि कुमारस्य न ददाति तरलतालज्जिता[3] लज्जैव दर्शनम्[4] । मनो-

---

मद्वाणी सिन्धुगामिनी भविष्यतीत्यर्थः । यथा यमुनादीनां परप्रवाहसंबन्धेन सिन्धुगामित्वम्, तथा मद्वचनप्रवाहोऽपि तातवाक्प्रवाहमिलित आसमुद्रं गमिष्यतीति भावः ॥ ६ ॥

ननूद्भटपितृवाण्या स्ववाणीं संयोजयतः कथं न भयं तत्राह—**कादम्बरी** । कादम्बरी कथा मद्यं च, तस्या रसः शृङ्गारादिः पानीयं च, तस्य भरेणाधिक्येन समस्त एव जनो जन्तुमात्रं मत्तः क्षीबः किंचिदपि न चेतयते । कर्तव्याकर्तव्यविधुरः सन्नानुसंधत्त इत्यर्थः । तथा च ममापि स्वान्तःपातित्वेन मत्ततया विवेकाननुसंधानान्न भीतिरिति भावः । एवं सति रसवर्णविवर्जितेन, रसः शृङ्गारादिस्तद्घटिताक्षरमालिकारहितमद्वाण्या पितृकृतग्रन्थशेषसंधानकर्ता भयं न प्राप्तोऽस्मि । तदनुसंधानाभावादित्यर्थः । रसेत्यादिना भीतिहेतुरुक्तः ॥ ७ ॥

मम पुनरेतन्निर्माणे न कोऽपि प्रयासलेश इत्याह—**बीजानीति** । तस्य वाणस्य तनयेन पुत्रेण नान्येन बीजानि संहृतानि कथाविषयीकृतानि पुष्टिं फलोद्रेकतां यान्ति । प्राप्नुवन्तीत्यर्थः । यानि बीजानि गर्भितफलान्यङ्कुरोत्पादनानुकूलशक्तिमन्ति वप्त्रैव वापकेनैव बाणेनोत्कृष्टभूमौ सर्वतोऽप्यधिककादम्बरीलक्षणायां भुवि विततानि गद्यादिरूपेण सर्वतः स्थापितानि उचितं कर्म रससेकादि तस्य बलात्सामर्थ्यात्कृतानि निष्पादितानि । विकाशः श्लेषाभिव्यक्तिस्तद्भाञ्जि तत्संपादकानि कृतानि । केनचिद्वापकेन गुल्मादिरहितभूम्युप्तानि शाल्यादिबीजानि जलसेकादिक्रियाबलादङ्कुरावस्थां प्रापितानि फलादिसंपन्नान्युपसंह्रियन्त इति श्लेषार्थः ॥ ८ ॥

अत्र च पूर्वकादम्बर्यां विभावानुभावव्यभिचारिसंयोगात्पुष्टो विप्रलम्भस्तत्र स्मृतिव्यभिचारिभावोदयात् 'आनयामि तं देवम्' इति पत्रलेखोक्तिस्मृतावुत्तरार्थे उत्तरितं कादम्बर्या निवेदयति पत्रलेखा चन्द्रापीडाय—**अपि चेत्यादिना** । अपि च । अन्यदपि शृण्वित्यर्थः । इदानीमपि तद्दर्शनं विना जीवितावसानकालेऽप्यानीतस्य मल्लोचनगोचरं प्रापितस्य कुमारस्य पृथिव्यां कंदर्पमूर्तेर्दर्शनं साक्षात्कारं प्रतिकूलादृष्टवशात्कुमारीस्वभावो लज्जेवेन्द्रियादिवृत्तीनां स्वच्छन्दचारसंकोचिका त्रपैव न ददाति । वर्तमानसामीप्ये लट् । न दास्यतीत्यर्थः । यद्वा वर्तमान एव वा लट् । प्रथमदर्शनवल्लज्जया तथाकृतमनुभूतमिदानीमपि सैवानुवर्तत इति पूर्वोत्तरावधिशून्यता निषेधस्य द्योत्यते । ननूत्कण्ठा लज्जां दूरीकरिष्यतीत्यत आह—**तरलतेति** । तरलता दर्शनोत्कण्ठारूपं चाञ्चल्यं चक्षुषोस्तेन लज्जिता लज्जां प्राप्ता । मयि विद्यमानायां दर्शनोत्कण्ठा जातेति लज्जाया लज्जोदयात्तत्र लज्जाव्याप्तिर्भूयसीति भावः । तस्यां च सत्यां प्रत्ययनिर्निमेषावलोकनं च कथं स्यादिति पुनरपि दिदृक्षा दैन्यं च व्यभिचारि व्यज्यते । लज्जितेयं दृष्टिः । तल्लक्षणं तु—'मनागञ्चितपक्ष्मा च किंचित्स्तब्धकनीनिका ।

---

**टिप्प०—1 अस्मिन्, पूर्वपद्ये च प्रकृताप्रकृतयोर्बिम्बप्रतिबिम्बभावाद् दृष्टान्तालंकारः । 2 असंबद्धमिवेदम् । वप्त्रा वपनकर्त्रैव उचितानां कर्मणां कर्षणादीनां बलात् यानि बीजानि उत्कृष्टभूमिषु विततानि प्रक्षिप्तानि, गर्भितफलानि गर्भितं ( गर्भस्थितं ) फलं येषां तानि ( फलोन्मुखानीति भावः ), अत एव विकासभाञ्जि कृतानि सन्ति वृद्धिं गच्छन्ति । तस्य ( वप्तुः ) पुत्रेण तु तान्येव फलोन्मुखानि वर्धमानानि च बीजानि संहृतानि नाशितानि । सुरसानि पितुर्वचनानि विरसैर्वचनैः संयोज्य नाशितानि मयेति स्वविनयः सूच्यते । टीकाकारकृता व्याख्या सहृदयैस्तुलया बोद्धव्या ।**

---

**पाठा०—**१ वप्त्रेव. २ गतातिपोषम्, च यान्ति पोषम्. ३ सुतरां लज्जितेव लज्जा. ४ दर्शनं दातुम्.

**भवविकारवेदनाविलक्षं वैलक्ष्यमेव न पुरस्तिष्ठति । अप्रतिपत्तिसाध्वसजडा जडतैव नोप-**

---

संप्रस्ताऽर्धपुटा दृष्टिर्लज्जिता लज्जिते स्त्रियः ॥' इति । यद्वा चिन्तासंतत्युपनीतं भवन्तं विभाव्य 'क्वाकार्यम्' इत्यादिवदुन्मादव्यभिचारिभावाक्रान्ताहेत्याह—**अपि चेति** । इदानीं भावनासमये । आ ईषदर्थे । ईषत्कालमल्पकालं नीतस्य भावनया पुरः प्रापितस्य तरलतोन्मादो लज्जा वेलेयवकार एवार्थे । संकल्पसमागमेष्वाभिमुख्यं प्राप्तस्य तरलतौत्सुक्यं दर्शनं न ददाति । अपि तु ददातीत्यर्थं इति वा । ननु तर्हि किमर्थं ताम्यसीत्यत आह—**लज्जितेति** । क्षणमात्रस्थायितया लज्जां प्राप्ता । तिरोभूतेत्यर्थः । औत्सुक्यस्य क्षणिकत्वेन संपूर्णदर्शनफलालाभादिति भावः । यद्वा पत्रलेखां प्रत्युपालम्भोक्तिः कादम्बर्याः । अस्मिन्काले सामस्त्येन नीतस्य देशान्तरं प्रापितस्य । त्वयेति शेषः । कुमारस्य कुत्सितमारस्य । दुर्बलमारस्येति यावत् । अन्यथा मां विहाय देशान्तरं कथं गच्छेदिति भावः । तत्संबन्धिनी तरलता लज्जिता दृष्टिर्लज्जैव । एवकारश्चार्थे । लज्जा च समुच्चयो दर्शनं न ददाति । तरलतागमनानन्तरं पुनरागमरूपा चञ्चलता तस्या एवाभावादिति भावः । लज्जिता दृष्टिः । दृष्टेर्लज्जात्वमस्थिरत्वेन फलालाभादिति भावः । कथं निरपत्रपस्तस्यै मुखं प्रदर्शयामीति त्रपापि दर्शनप्रतिबन्धकीभूता जातेति भावः । तथा च तस्य पुनरागमनमसंभावितमिति भावः । औत्सुक्यचिन्ताहर्षादीनां शबलता । तत्र स्थितस्यापि तस्य स्वप्नादिसाक्षात्कारेण चक्षुःफललाभेन पुनरपि दिदृक्षा दैन्यं च व्यभिचारी व्यज्यते । नन्वसन्तमपि भावमतिचतुराः स्त्रियः स्वाधीनसहजसिद्धचेष्टाविशेषैराविर्भावयन्तीति कथं तरलतादीनां तादृगाशयवत्त्वं निर्णेयमिति मयाक्षिप्ते सैवमाहेत्याह—**मनोभवेति** । मनोभवोऽतिविवेकिप्रभवः कामस्तस्य तत्कर्तृको विकारः कार्श्यपाण्डिमादिस्तज्जनिता वेदनाः संतापादिरूपास्ताभिर्विलक्षं विगतलक्षणम् । अप्रतिसंधीयमानमिति यावत् । वैलक्ष्यम् । 'लक्ष्यं वेध्ये च भावे च' इत्यभिधानाद्विविधभावभावो न पुरस्तिष्ठति । न पुरः स्थास्यतीत्यर्थः । तथा च कामविकारकीलिताया मे सहजचेष्टाविर्भावात्तरलतादीनामतिप्राबल्यादिति भावः । विकारपदं च सहजसिद्धस्नेहावलोकनन्यूनतां व्यनक्ति । मनोभवपदं च कामवेदनाबाह्येन्द्रियाविषयत्वं व्यनक्ति । ज्ञानार्थप्रकृतिकवेदनापदेनाज्ञायमानदुःखध्वंसाभावं व्यनक्ति । अत्रापि भविष्यदर्थे लट् । यद्वा दर्शनफलमाह—**मनोभवेति** । वैलक्ष्यदर्शनजनितकार्श्यपाण्डिमादिवैलक्षण्यं तदेव पुरः । प्रथममिति यावत् । न स्थास्यतीत्यर्थः । एतेन तस्य दुःसहतोक्ता । दुःसहत्वे हेतुगर्भं विशेषणमाह—**मनोभवेति** । उक्त एवार्थः । यद्वा संतापादिविकारवेदनास्थिरत्वेन निर्विण्णाह । वैलक्ष्यं संतापादिकृतं कार्श्यमोहादिकं न बहुकालं स्थास्यतीत्यर्थः । मध्ये स्वप्नसंकल्पसमागमेष्वाश्वासात् । अन्यथा तत्स्थैर्येऽल्पेनैव कालेन मरणसंभवात् । दुःखविमोकादिति भावः । एतदप्यकृतपुण्याया मे कुत इति निर्वेदध्वनिः । तदेव विशेषणद्वाराह—**मनोभवेति** । कंदर्पकृता विकाराः स्वप्नसंकल्पसमागमादयस्तत्कृता वेदना तथा समागमस्यास्थिरत्वेन पुनर्विरहदुःखानुसंधानं तेन विलक्षं मरणलक्षणविगमं प्राप्तमित्यर्थः । ननु गाढान्धकाराभिसरणशीलानां कामिनीचक्षुर्विषयाभावेऽपि त्वगिन्द्रियस्य स्पर्शः केन वा वारणीय इति मयोक्ते सैवमुत्तरितवतीत्याह—**अप्रतिपत्तीति** । जडता स्पर्शजन्यः स्तम्भाख्यः सात्त्विकभावः स एव नोपसर्पति । न यास्यतीत्यर्थः । अत्रापि भविष्यदर्थे लट् । यथाकथंचित्त्वयानीतस्यापि गाढान्धकारे दर्शनायोग्यस्य त्वगिन्द्रियस्पर्शसुखानुभवे प्रथमस्पर्शजन्यजडताप्रतिबन्धेन चुम्बनाद्यननुष्ठाने स्पर्शस्य निष्फलत्वेन तत्रापि दैववैमुख्येन विरहज्वरोपशान्तिमलभमानायाः स्पर्शो वृथैव भविष्यतीति भावः । ननु शारीरा भावाः क्षणस्थायिनो भवन्ति, उत्पन्नापि जडता न स्थास्यतीत्यत आह—**अप्रतिपत्तीति** । अप्रतिपत्तिः स्पर्शो ज्ञानं साध्वसं भयं मा कदाचित्कश्चिन्मा दर्शीति ताभ्यां जडा भावान्तरानुत्पादेन पदात्पदं दातुमसमर्था गाढान्धकारसंजातस्पर्शजायमानस्तम्भेन चुम्बनाद्यनुष्ठानेऽसामर्थ्यात्तथा क्रियमाणे दुःखानपगमादिति भावः । यद्वा जडता व्यभिचारिभावोऽपि दैवप्रातिकूल्यान्नापयास्यति । तत्र कारणमाह—अप्रतिपत्तिर्मोहः, साध्वसं भयम्, ताभ्यां जडा । स्थिरेत्यर्थः । तथा च जडतामोहभयव्यभिचारिणां शबलतयान्यापगम एव मया गन्तव्यमिति स्थिरेति भावः । यद्वा नास्ति प्रतिपत्तिर्ज्ञानं यस्यां साऽप्रतिपत्तिर्मूर्च्छा व्यभिचारिभावः । यावदेव त्वं तमानेष्यसि तावदेव मे मूर्च्छाभिभविष्यति । तदानयनसंभ्रमोत्थिताया मे मूर्च्छापगमानन्तरं यद्द्वयं बहुकालं स्थित्वा लोको ज्ञास्यतीति ताभ्यां जडा स्तब्धा । आविर्भवितुमशक्येति यावत् । जडता डलयोरैक्याज्जलता । स्वेदसात्त्विकभावो नाविर्भविष्यतीत्यर्थः । मूर्च्छाभयाभ्यां

**सर्पति । स्वयमुपसर्पणलघु लाघवमेव तत्प्रतिपत्तिस्थैर्यं नावलम्बते । बलात्तदानयनापराध-भीता भीतिरेव न संमुखीभवति । अथ कथंचिद्गुरुजनत्रपया वा, राजकार्यानुरोधेन वा,**

---

स्थातुमसमर्थया त्वया मयैव सह कुतो नागम्यत इति मयोदिते सैवमाहेत्याह—**स्वयमिति**। स्वयमुपसर्पणं तदननुमत्या स्वयं गमनं तेन लघु लाघवमेव तुच्छलाघवमेव तत्प्रतिपत्तिस्त्वयैवागन्तव्यमित्युपदेशज्ञानं तत्स्थैर्यं तत्स्थिरतां नावलम्बते । नावलम्बनं करोतीत्यर्थः । अन्यत्र ज्ञानस्य त्रिक्षणावस्थायित्वेऽपि युक्त्यनुपष्टम्भोपहितमिदं ज्ञानं क्षणमात्रमपि न तिष्ठतीति भावः । स्त्रीणां स्वयमुपसर्पणं लघुतापादकं नितरामननुमत्या कृतं नितरां राजकन्यानाम् । किंचैवमौत्सुक्यातिरेकेण कृतेऽपि तेनापि मदीयां निःसारतामाकलय्य विद्याधनसौन्दर्यादिगर्वेणानादरे कृते तव का प्रतिष्ठा, ममापि किं गौरवम्, तदुत्तरकालं च प्रयत्नाभावेन मम मरणमेव शरणं स्यादिति तुषकण्डनमेव फलितमिति शब्दशक्त्युद्भवो ध्वनिः । इह तु वर्तमान एव लट् । तेन पूर्वोत्तरावधिशून्यतां प्रत्यक्षप्रमाणगोचरतां च व्यनक्ति । यद्वा स्वयमुपसर्पणं स्वयं गमनं तेन लघुस्तूलादपि निःसाराहं तस्या मे लाघवमेव लघुभावमेव। दृष्ट्वेति शेषः । तत्प्रतिपत्तिस्तस्य चन्द्रापीडस्य प्रतिपत्तिर्मयि सर्वोत्कृष्टताबुद्धिः स्थैर्यं स्थिरत्वं नावलम्बते । न स्थिरतां यास्यतीत्यर्थः । अस्मिन्पक्षे भविष्यदर्थ एव लट् । तेन फलितमिदं भविष्यतीति ध्वन्यते । ननु तर्हि मयैव यथाकथंचिदयमानेय इति मयोदिते सैवमाहेत्याह—**बलेति**। बलात्तदरुच्या यत्तदानयनं त्वत्कृतं चन्द्रापीडानयनं स एवापराधस्तेन भीताया मे भीतिरेव न संमुखीभवति । एतदनुमोदनसांमुख्यं न करोतीत्यर्थः । इदमपि मया कथं वक्तव्यं त्वयानेय इति कदाचित्त्वया मदीयां दशामालोक्य पादपतनादिना बलादानीतस्य तथैव स्थितस्य मदपराधं गृह्णतोऽसन्मुखस्यानयनफलालाभेन लोकोपहास्यता परितापाधिक्यं च मे भवेदिति भावः । तस्मादेते सर्व एव पक्षाः प्रकृतानुपयुक्तत्वादनादरणीयाः । केवलं मनोवाक्कायकर्मभिस्तत्स्वीकार एव मय्यनुग्रहो गतागतेन च तदभावनिश्चयात्त्वया तथा यतनीयं मदनुग्रहे विलम्बालस्योपेक्षास्तस्य न भवन्ति । भवत्याश्च मत्प्राणत्राणसुकृतादिहलोकः परलोकश्च भवेत् । सख्यादीनामुपहासपात्रतां न यायाम्, जन्मसाफल्यं च यायां मित्रादिपारवश्यतां च न लभेयम् । गौरवसंरक्षणं भवेत् । नान्यं शरणमुपयायामित्याद्यत्यन्ततिरस्कृतवाच्याभिधाभिन्नमूलध्वनिः । तेन च प्रबन्धस्योत्तमता सूचिता । तेन चालौकिकरसास्वादनसामग्रीदार्ढ्यं च सूचितम् । अत्र सर्वत्र काव्यलिङ्गं विभावना चालंकारः । यद्वा भीतिरेव बलात्संमुखीभवतीति संबन्धः । एतत्प्राप्तौ पित्रादिभ्यो भयं त्यक्तमित्यर्थः । भीतिप्राप्तौ हेतुमाह—**बलादिति**। बलादरुच्या तदानयनं चन्द्रापीडानयनं स एवापराधो महासाहसिकत्वादिरूपस्तत्र भीता । भयहेतूनुत्प्रेक्षमाणेत्यर्थः । तथा चोत्प्रेक्षाया आरोपविषयत्वेनाहार्यभीतेरङ्गीकारादिति भावः । पूर्वोक्तं सर्वमप्यन्यथयन्त्याह—**अथेति**। अथशब्दः पूर्वापरितोषे इति प्रकरणाल्लभ्यते । मयि मद्विषये स्नेहात्प्रेम्णो हेतोः । हेतौ पञ्चमी । कृता विहिता यत्ना आनयनोपाया यया सा तया । प्रिया प्रियकर्त्री चासौ सखी चेति तया पत्रलेखयापि यदा यद्यानेतुमानयनाय न पारितो न शक्तः, तदा तर्हि सुतरामेवातिशयेनैव न किंचित् लघुतोत्कर्षः । तदा मम जीवितेन न किंचित्प्रयोजनमिति भावः । आनयनप्रकारमाह—**पादपतनेनापीति**। करणे तृतीया । पादयोश्चरणयोः पतनेन । दण्डवत्प्रणामेनापीत्यर्थः । आनयनाशक्तौ पूर्वपूर्वापरितोषेण तृतीयान्तान्हेतूनाह—**कथंचिदिति**। एतत्पदं सर्वतृतीयान्तेन संबध्यते । गुरुजनाः पितृमातृप्रभृतयस्तेषां त्रपा लज्जा तया

---

**टिप्प०—1** 'अथ' इति पक्षान्तरात्पूर्वम्, पत्रलेखाद्वारक-कादम्बरीसंदेशेऽस्मिन्—यदि कुमारोऽत्रानीतस्तर्हि लज्जा-वैलक्ष्य-जडतादिभिस्तत्सांमुख्यं न भविष्यतीति सर्वस्य तात्पर्यम् । तरलतया (चापल्येन) लज्जिता लज्जैव दर्शनं न ददाति (अन्तर्भावितण्यर्थः), लज्जापि लज्जिता जाता, अत एव सा कुमारस्य दर्शनं मे न दापयतीति वाक्यस्यार्थः । भविष्यत्सामीप्ये लट् । एवमेव-मनोभववेदनया विलक्षम् (अप्रतिभम्) वैलक्ष्यमेव (अप्रतिभत्वमेव) अग्रतो न तिष्ठति (अयमप्यन्तर्भावितण्यर्थः), वैलक्ष्यमेव मामग्रतो न स्थापयति, न स्थातुमवसरं ददातीत्यर्थः । जडतैव नोपसर्पति, नोपसर्पयतीत्येवंरूपेण सर्ववाक्येषु ण्यर्थमन्तर्भाव्य वाक्यार्थः परिकल्प्यते । टीकाकारदर्शितं पाण्डित्यं तु सीमातिगामि मार्मिकैः स्वयमवगन्तव्यम् ।

चिरावलोकितसहसंवर्धितबन्धुजनोत्कण्ठया वा, सुहृन्मुखकमलदर्शनेन वा, पुनरागमनखेदपरिजिहीर्षया वा, निजगृहावस्थानरुच्या वा, जन्मभूमिस्नेहेन वा, अनिच्छया वास्य जनस्योपरि पादपतनेनापि नानेतुमेव पारितो यदा मयि स्नेहात्कृतयत्नयापि प्रियसख्या पत्रलेखया तदा सुतरामेव न किंचित्। किं चाधुनाप्यधिकमुपजातम्। सैवाहं कादम्बरी याऽनेन कुमारेण मत्तमदमुखरमधुकरकुलकलकोलाहलाकुलिते कोककामिनीकरुणकूजिते विरहिजनमनोदुःखे विक-

---

वा। वाशब्दः पूर्वापरितोषे। राजकार्यं संधिविग्रहादि तस्यानुरोधोऽनुसरणं तेन वा। चिरेण बहुकालेनावलोकितो दृष्टो यः सहसंवर्धितः पांसुक्रीडनादिभिः सहवृद्धिं प्रापितो बन्धुजनो बान्धवलोकस्तस्योत्कण्ठया विरहासहनेन वा। सुहृदो मित्राणि। 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातः। तेषां मुखानि कमलानीवेत्युपमितसमासः। तेषां दर्शनेन सादरावलोकनेन वा। पुनरागमनं पुनरत्रागमः तेन यः खेद आयासस्तस्य परिहर्तुमिच्छा त्यागस्पृहा तयेति वा। पुनरपि यातायातश्रमो मा भूदितिविधयेत्यर्थः। निजं स्वकीयं यद्गृहं तत्रावस्थानं सुखवासस्तत्र रुचिः प्रीतिस्तयेति वा। जन्मभूमिर्जन्मस्थानं तत्र स्नेहः प्रेमा तेन वा। सर्वमेतत्संभावनामात्रेणोक्तम्। वस्तुतस्त्वस्य मल्लक्षणस्य जनस्य जन्तुमात्रस्योपर्यनिच्छाऽरुचिः। अप्रीतिरिति यावत्। तया वा। किंचेति पक्षान्तरे। सैवाहं कादम्बरी यानेन कुमारेण चन्द्रापीडेन। कुमुदानि विद्यन्ते यस्यां सा कुमुदिनी तस्याः कुमुदिन्याश्चतुरस्रजलक्रीडासरस्याः। पुष्करिण्या इति यावत्। तटे तीरे। सामीप्ये सप्तमी। हिमप्रचुरं गृहं हिमगृहं तस्मिन्मुक्तावन्निर्मलो मुक्ताखचितो वा यः शिलायाः पट्टः स एव शयनं शय्या तस्मिन्कुसुमानां स्रस्तरस्तमवलम्बत इत्येवंशीला तन्मात्रावलम्बिनी वीक्षिता दृष्टा। अधुना किमधिकमुपजातम्। इतः सप्तम्यन्तानि हिमगृहविशेषणानि—**मत्तेति**। मत्ताः क्षीबा अत एव मदेन मुखरा वाचाला ये मधुकरा भ्रमरास्तेषां कुलानि सजातीयवृन्दानि तेषां कलो मनोज्ञो यः कोलाहलः कलकलस्तेनाकुलिते व्याप्ते। **कोकेति**। कोकाश्चक्रवाकास्तेषां कामिन्यो योषितस्तासां करुणानि दीनानि कूजितानि विरुतानि यस्मिन्। कीदृशे कूजिते। **विरहीति**। विरहिण्यश्च विरहिणश्चैकशेषे विरहिणस्तेषां जनः समुदायः। विरहिणश्च ते जनाश्चेति वा। तेषां मनसि स्वान्त उत्पादितं दुःखं येन तस्मिन्। **विकचेति**। विकचानि विकस्वराणि दलानि

---

**टिप्प०**—1 अथेत्यारभ्य 'न किञ्चित्'पर्यन्तस्य 'यदि गुरुजनत्रपादिकारणैः कुमारो नानेतुं शक्येत तदापि न हानिः, मम जीवितमेव न रक्षणीयम्। किं तदा कुमारस्याऽनागमेन मे' इत्याशयः। 2 नेदं पदं दृश्यते मूले। तस्मात् 'जनितविरहिजनमनोदुःखे' इत्येव पाठः। किञ्च—'मत्तमदमुखरमधुकर०' इत्यारभ्य 'वीक्षिता' एतावत्पर्यन्ते मूले भूयान् पाठभेदः, अन्वयव्यत्यासश्च कृतष्टीकाकारेण। कियत्परिशोधयितुं शक्येत? न किल बाणस्य पुत्रोपि 'मत्त' इत्युक्तौ पुनः 'मदमुखर' इति विशेषणं प्रयुञ्जीत। 'मधुमदमुखर' इति हि तत्र पाठः। एवं स्थाने स्थाने। भूयानंशः पाठान्तरेषु धृतः। ततो विवेकिभिः स्वबुद्ध्यैव सर्वं समायोज्य ग्रन्थोद्धारकाय टीकाकारायाशीर्वादो देयः।

---

**पाठा०**—१ चिरावलोकितबन्धुजनदर्शनोत्कण्ठया वा. पुनरागमनचिरावलोकितसहसंवर्धितबन्धुजनदर्शनमुखेन वा सुहृन्मुखकमलावलोकनोत्कण्ठया वा. २ स्वजनस्य. ३ महास्नेहान्मदलेखया पादपतनेनापि गच्छन्. ४ अनुनेतुम्. ५ पारितः कृतयत्नयापि प्रियसख्या तदा. ६ अभ्यधिकम्. ७ उपयातम्. ८ मधुमद. ९ कुलकोलाहलाकुलित. १० कूजितजनित; कूजितेन जनित.

चदलारविन्दनि[1]स्यन्दसुगन्धमन्दगन्धवाहानन्दितदशदिशि प्रदोषसमये, विकसितकुसुमामोदमुकुलितमानिनीमानग्रहोन्मोचनहस्ते कुसुमायुधे, कर्पूरविशदकरनिकरनिर्भरावर्जितज्योत्स्नाजलासारवर्षिणि चन्द्रमसि, दूरविक्षिप्तदलनिवहकुमुदकाननामोदवासितदिगन्तायाः कुसुदिन्यास्तटे, चन्द्रकरस्पर्शप्रवृत्तशशिमणिशिखरनिर्झरझंकारिणि क्रीडापर्[2]वतनितम्बके, हृद्यहरिचन्दनरसकणिकाजालकच्छलेन तत्करतलस्पर्शसुखसंभवस्वेदजलनिवहमिव वहति तत्कालहारिणि मुक्ताशिलापट्टशयने, कुसुमामोदसुरभितदशदिशि तुषारकणनिकरहा[3]रिण्यपि बहिरेव देह[4]दाहमात्रकायहारिणि सर्वरमणीयानां संदोहभूते हिमगृहे कुसुमस्रस्तरावलम्बिनी वीक्षिता। ममापि चा[5]पुनरुक्ततद्दर्शनस्पृहे ते एवैते लोचने, ययोरा[6]लोकनपथमसौ यातः । तदेव चेदम-

---

पत्राणि येषामेवंविधानि यान्यरविन्दानि कमलानि तेषां निस्यन्दो रसो यस्मिन्नेवंभूतः सुगन्धः सुपरिमलो मन्दो मृदुर्यो गन्धवाहो वायुस्तेनानन्दिता वासिता दश दिशो यस्मिन् । **सर्वाणीति** । सर्वाणि समग्राणि यानि रमणीयानि मनोहराणि तेषां संदोहो दोहनं तस्माद्भूते निष्पन्ने तस्मिन् । पुनः कस्मिन्सति । कुसुमायुधे कंदर्पे सति । कीदृशे । विकसितानां विनिद्राणां कुसुमानां पुष्पाणामामोदः परिमलस्तेन करणभूतेन मुकुलित एकीभूतो यो मानिनीनां मनस्विनीनां मानग्रहोऽहंकारग्रन्थिस्तस्योन्मोचनं दूरीकरणं तस्मिन्हस्त इव हस्तस्तस्मिन् । पुनः कस्मिन्सति । चन्द्रमसि शशिनि सति । कीदृशे । कर्पूरो हिमवालुका तद्वद्विशदो निर्मलो यः करनिकरः किरणसमूहस्तेन निर्भरं यथा स्यात्तथाऽऽवर्जिता मुक्ता या ज्योत्स्ना चन्द्रिका सैव जलासारोऽम्भसां कणस्तं वर्षतीत्येवंशीलस्तस्मिन् । 'आसारोऽम्भसां कणः' इत्यभिधानाज्जलपदं पुनरुक्तम् । तच्चादोषाय, शाब्दपुनरुक्तित्वात् । तदुक्तं वृद्धकविभिः—'द्विरदबृंहितकरिकलभाश्वहेषाकरकङ्कणकरिहस्तेत्यादौ पुनरुक्तेरदोषत्वम्' । कथंभूतायाः कुमुदिन्याः । दूरं विक्षिप्तो दलनिवहः पत्रसमूहो यैरेवंविधानि यानि कुमुदकाननानि कैरववनानि तेषामामोदः परिमलस्तेन वासिताः सुगन्धं प्रापिता दिगन्ता यया सा तस्याः । पुनः कस्मिन्सति । क्रीडार्थं पर्वतः शैलस्तस्य नितम्बके कटके सति । 'मेखला मध्यभागोऽद्रेर्नितम्बः कटकश्च सः' इति हैमः । कीदृशे नितम्बे । चन्द्रकराणां स्पर्शस्तेन प्रवृत्तः प्रवृद्धो यः शशिमणिशिखरनिर्झरश्चन्द्रकान्तसानुझरस्तस्य झंकारो विद्यते यस्मिन्स तथा तस्मिन् । कीदृशे मुक्ताशिलापट्टशयने । हृद्यं मनोहरं यद्धरिचन्दनं तस्य रसस्य कणिकाः सूक्ष्माः कणास्तासां जालकानि तेषां छलं मिषं तेन । तस्य चन्द्रापीडस्य करस्तस्य तलस्तस्य स्पर्शस्तस्मात्सुखं सातं तस्मात्संभवा समुत्पत्तिर्यस्यैवंभूतो यः स्वेदजलनिवहस्तमिव वहतीति वहनं तत्तस्मिन् । एतेन सात्त्विकभावः सूचितः । पुनः कीदृशे शिलापट्टके । तत्कालं सद्यो हरत्याकर्षति जनानां चेत इत्येवंशीलः स तथा तस्मिन् । पुनः किंविशिष्टे । कुसुमानां पुष्पाणामामोदः परिमलस्तेन सुरभिता सुगन्धीकृता दशदिशो येन तत्तथा तस्मिन् । कीदृशे हिमगृहे । तुषारकणा हिमविप्रुषस्तेषां निकरेण समूहेन हारिण्यपि मनोहरत्वेऽपि बहिरेव बाह्यवृत्त्या देहदाहमात्रेण केवलं शरीरदाहज्वरोत्पादकत्वेन कायं देहं हरतीत्येवंशीलं तत्तथा तस्मिन् । यच्छीतलं तत्कथं दाहकमिति विरोधः । विरहित्वेन तत्परिहारः । अतएव विरोधाभासोऽलंकारः । ममापि च कादम्बर्या अप्यपुनरुक्ता प्रथमा तस्य चन्द्रापीडस्य दर्शनस्पृहावलोकनेच्छा ययोस्ते एवैते लोचने नेत्रे । यत्तदोर्नित्याभिसंबन्धात् । ते के । ययोर्नेत्रयोरालोकनपथं विलोकनमार्गमसौ चन्द्रापीडो यातः प्राप्तः । च पुन-

---

**पाठ०**—१ वृन्दनिष्यन्दानन्दितमन्दगन्धवहसुगन्धदशदिशि विकसितविविधकुसुमामोदमुकुलितमानिनीमानग्रहोन्मोचनदक्षकुसुमायुधि कर्पूरक्षोदमिश्रचन्दनपङ्कपिण्डे कुपितकामिनीविनोददक्षगेयमुखरपरिजने पुनरुक्तदर्शनाभ्युत्थानव्रीडितकञ्चुकिजने प्रदोषसमये जरठशरकाण्डविपाण्डुनिबिडकुण्डलोद्धृष्टलडहयुवतिगण्डस्थलान्यखण्डमण्डले मण्डयति गगनं चानवरतविस्फुरद्विशदकरनिर्भरावर्जितज्योत्स्नाजलसारवर्षिणि चन्द्रमसि. २ पर्वतकनितम्बे. ३ नीहारिण्यपि. ४ दाहमात्रकापहारिणि. ५ पुनरुक्त. ६ आलोचन.

प्रतिपत्तिशून्यं हतहृदयम्, येनान्तःप्रविष्टोऽपि न पारितो धारयितुम् । तदेव चैतच्छरीरं येन [1]तत्समीपे चिरमु[2]दासीनेन स्थितम् । स एव चायं पाणिः, योऽलीक[3]गुरुजनापेक्षी नात्मानं परिग्राहितवान् । अनपेक्षितपरपीडश्चन्द्रापीडोऽपि स एव, योऽत्र वारद्वयमागत्य प्रतिगतः । मय्येवोपक्षीणमार्गणतया वाकिंचित्करोऽन्यत्र पञ्चशरोऽपि स एव, यस्त्वयावेदितो मे ।

प्रतिज्ञातं च मया महाश्वेतायाः—'त्वयि दुःखितायां नाहमात्मनः पाणिं ग्राहयिष्यामि' [4]इति[1] । तामहं पुनरप्यवदम् । सा तु 'देवि, [5]मैवं स्म मनसि करोः । कुमतिरियम् । अतिदारुणोऽयं पापकारी मकरकेतुः कदाचिदृदृश्यमाने प्रियजने [6]जनितहृदयानुरागाज्जीवितमप्यप[7]हरति' [2]इत्यब्रवीत् । [8]तदपि नास्त्येव मे । मदनेन वा, दैवेन वा, विरहेण वा, यौवनेन वा,

---

र्थे । इदं प्रत्यक्षं तदेव हतहृदयं दैवेन हतं ताडितं हृदयं चेतः । कीदृशम् । अप्रतिपत्तिरज्ञानं तेन शून्यम् । तत्किम् । येन हृदयेनान्तःप्रविष्टोऽपि मध्यगतोऽपि धारयितुं ग्रहीतुं न पारितः । च पुनरर्थे । एतच्छरीरं तदेव । तत्किम् । येन शरीरेण तत्समीपे चन्द्रापीडसंनिधौ चिरं बहुकालमुदासीनेन तटस्थेन स्थितम् । स एवायं पाणिर्हस्तः । स कः । योऽलीकोऽसत्यो गुरुजनो मातृपित्रादिस्तमपेक्षते इत्येवंशीलः स तथात्मानं स न परिग्राहितवान् । अनपेक्षिता परस्य अर्थान्मम पीडा येनैवंविधश्चन्द्रापीडोऽपि स एव नान्यः । स कः । योऽत्र मत्पार्श्वे वारद्वयं द्विवारमागत्यागमनं कृत्वा प्रतिगतो निवृत्तः । मय्येव मयि विषय एव । नान्यत्रेत्यर्थः । उपक्षीणा नष्टा मार्गणा बाणाः शरा यस्य स उपक्षीणमार्गणस्तस्य भावस्तत्ता तया । वाशब्द इवार्थे । तथा चोपक्षीणमार्गणतया इव । अन्यत्र चन्द्रापीडादौ न किंचिद्दुःखादिकं करोतीत्यकिंचित्करः पञ्चशरोऽपि कामोऽपि स एव । स कः । यस्त्वया सख्या मे ममावेदितस्तत्स्वरूपज्ञापनपूर्वकं निवेदितः ।

महाश्वेताया मयेदं प्रतिज्ञातं च पुनरहं तां महाश्वेतामित्यवदमवादिषम् । इतीति किम् । तदेवाह—**प्रतिज्ञातमिति** । अङ्गीकृतं च । तदेव दर्शयन्नाह—**त्वयीति** । त्वयि महाश्वेतायां दुःखितायां नाहं कादम्बर्यात्मनः स्वपाणिं करं ग्राहयिष्यामि । उद्वाहं न करिष्यामीत्यर्थः । [3]सा तु महाश्वेतेत्यब्रवीत् । इतीति किम् । हे देवि, एवं मनसि चित्ते त्वं माकरोर्मा कार्षीः । 'मेऽटि' इत्यटो लोपः । तदकरणे हेतुं प्रदर्शयन्नाह—**कुमतिरिति** । कुत्सिता मतिः कुमतिरियं न सम्यग्बुद्धिः । कथमित्याह—**अतीति** । अयं पापकार्यधर्मजनको मकरकेतुः कंदर्पोऽतिदारुणोऽतितरां भीषणः कदाचिन्न सर्वदा दृश्यमानेऽवलोक्यमाने प्रियजने वल्लभजने जनितहृदयानुरागादुत्पादितमानसिकस्नेहाज्जीवितमपि जीवनमप्यपहरत्यपाकरोति । प्रियजनस्यादृश्यमानत्वं नास्तीत्याशङ्क्याह—**तदपीति** । तदपि प्रियजनादृश्यमानत्वं मे मम नास्त्येव न विद्यत एव । एतदेव स्पष्टीकुर्वन्नाह—**दैवेनेत्यादि** । मदनेन वा, कंदर्पेण वा, दैवेनादृष्टेन वा । विरहेण वियोगेन वा, यौवनेन तारुण्येन वा, अनुरागेन स्नेहेन वा,

---

**टिप्प०**—1 'किंचाधुनाप्यधिकमुपयातम्' इत्यारभ्य एतावत्पर्यन्तस्य—'न किञ्चिन्नवीनं जातम् । अहं कुमारादि च सर्वं तदेव । किञ्च महाश्वेतासविधे प्रतिज्ञावशाद्विवाहेऽप्यहं विवशा । अत एव कुमारागमनेन किं मे' इति प्रणयकोपसूचने तात्पर्यम् । 2 'हरति' । एतावत्पर्यन्ता पत्रलेखाया उक्तिः । एतदग्रे 'सा तु अब्रवीत्' इति पाठः । ततश्च 'सा तु अब्रवीत्' 'एतदग्रे 'तदपि नास्त्येव मे' एतदारभ्य 'तदानयनकथया' इति कादम्बर्युक्तिः । 3 'सा तु' इति मध्ये प्रक्षेपष्टीकाकारस्य पाण्डित्यम् । न हि सेयं महाश्वेताया उक्तिः । सा किल देवीति न तां संबोधयेत् । ''तामहं पुनरप्यवदम्—'देवि'-'' इत्यादिका पत्रलेखाया उक्तिः । अत एव मध्ये 'सा तु' इति प्रक्षेपो ग्रन्थभ्रंशाय ।

---

पाठा०—१ चिरंतत्समीपेऽपि. २ उदासीनं स्थितम्. ३ अलीकगुरुजनापेक्षणात्. ४ इति । सा तु. ५ मैतन्मनस्यकरो. ६ जनितहृदयानुरागः, हृदयानुरागात्. ७ हरति. ८ एतदपि.

अनुरागेण वा, मदेन वा, हृदयेन वा, अनेन वा केनापि दत्तः संकल्पमयः कुमारो जनसंनिधावपि केनचिदविभाव्यमानः सिद्ध इव सर्वदा मे ददाति दर्शनम् । अपि चासाविव नायमकाण्डपरित्यागनिष्ठुरहृदयः । अयमेवास्मद्विरहकातरः । नायं नक्तंदिवं लक्ष्म्या समाकुलः । न पृथिव्याः पतिः । न सरस्वतीमपेक्षते । न कीर्तिशब्दं वर्धयति । पश्यामि चाहर्निशमासीनोत्थिता भ्राम्यन्ती शयाना जाग्रती निमीलितलोचना चलन्ती स्वप्नायमाना शयने श्रीमण्डपे गृहकमलिनीषूद्यानेषु लीलादीर्घिकासु क्रीडापर्वतके बालगिरिनदिकासु च यथा तमज्ञजनविडम्बनैकहेतुं विप्रलम्भकं कुमारं ते तथा कथितमेव मया । तदलमनया तदानयनकथया' इत्यभिदधानाऽतर्किताागतमूर्च्छेव निमीलिताक्षी पक्ष्माग्रसंपिण्डितनयनजलवर्षिणी विलीयमानेवोत्पीड्यमानेवान्तर्जातमन्युवेगेन तथैव वेदिकावितानाभिदामांशुकावलम्बिन्यां

---

मदेन मत्ततया वा, हृदयेनान्तःकरणेन वा । अत्र वाशब्दः सर्वत्र विकल्पार्थः । किं विकल्पान्तरेण । अनेनानुद्दिष्टनाम्ना वा केनापि दत्तोऽर्पितः संकल्पमयः कल्पनात्मकः कुमारश्चन्द्रापीडो जनानां लोकानां संनिधावपि समीपेऽपि केनचिदविभाव्यमानोऽज्ञायमानागमनः सिद्ध इवाणिमाद्यष्टगुणोपेत इव मे मम सर्वदा दर्शनं ददाति वितरति । अपि चेति प्रकारान्तरे । असाविव चन्द्रापीड इवायं संकल्पककुमारोऽकाण्डेऽप्रस्तावे यः परित्यागो मोचनं तस्मिन्निष्ठुरं निर्दयं हृदयं यस्यैवंभूतो न । अयमेव संकल्पकुमार एवास्माकं विरहे वियोगे कातरो भीरुः । एतदर्थमन्यासक्तिप्रतिषेधद्वारा स्पष्टीकुर्वन्नाह—**नायमिति** । अयं पूर्वोक्तो नक्तंदिवमहर्निशं लक्ष्म्या रमया समाकुलो व्याकुलीभूतो न । तथा पृथिव्या वसुंधरायाः पतिः स्वामी न । तथा सरस्वतीं वाणीं नापेक्षते नेहते । तथा कीर्तिशब्दं यशोवादं न वर्धयति न वृद्धिं नयति । सर्वदा तत्स्वरूपमहं पश्यामीत्याशयेनाह—**पश्यामीति** । यथा येन प्रकारेण तं चन्द्रापीडाभिधमज्ञजनो मूर्खजनस्तस्य विडम्बनायां विरहादिरूपायामेकमद्वितीयं हेतुं कारणं विप्रलम्भकं वञ्चकं कुमारमहं कादम्बर्यासीनोपविष्टा, उत्थितोर्ध्वीभूता, भ्राम्यन्तीतस्ततः पर्यटन्ती । विरहादिति शेषः । शयाना स्वापं कुर्वाणा, जाग्रत्यशयाना, निमीलितलोचना मुद्रितनयना, चलन्ती स्वेच्छया गच्छन्ती, स्वप्नायमाना स्वप्नं पश्यन्ती, शयने शय्यायाम्, श्रीमण्डपे श्रियोपलक्षितजनाश्रये, गृहकमलिनीषु सदनपद्मिनीषु, उद्यानेषूपवनेषु, लीलादीर्घिकासु क्रीडावापीषु, क्रीडापर्वतके क्रीडाशैले, बालगिरिः क्रीडार्थं निर्मितः शैलस्तस्य नदिकासु स्वल्पतटिनीषु चाहर्निशमहोरात्रं पश्याम्यवलोकयामि । तथा तेन प्रकारेण मया कादम्बर्या कथितमेव पूर्वं निवेदितमेव । तदिति पूर्वोक्तहेतोरनया मानसिकप्रत्यक्षया । 'इदमः प्रत्यक्षगतम्' इत्युक्तेः । तस्य कुमारस्यानयनम् । उज्जयिन्या मत्समीपानयनमित्यर्थः । तस्य कथा वार्ता तया अलं मृतम् । इत्यभिदधानेति जल्पन्त्यतर्किताऽसंभाविता मूर्च्छा मोहो यस्याः सेव । सहसा प्राप्तमूर्च्छेवेत्यर्थः । निमीलिते मुद्रिते अक्षिणी लोचने यया सात एव पक्ष्मणां नेत्ररोम्णामग्रेऽग्रपरिभागेषु संपिण्डितं पिण्डीभूतं यन्नयनयोर्जलं तद्वर्षतीत्येवंशीला । तथान्तर्मध्ये जातो मिथ्या किं जीवितेनेत्यादिप्रभवो यो मन्युवेगः क्रोधरयस्तेन विलीयमानेव द्रुततां गच्छन्तीव, उत्पीड्यमानेवोत्प्राबल्येन पीडां प्राप्यमाणेव, तथैव तथावस्थैव वेदिका बद्धभूमिस्तस्या वितानमुल्लोचस्तस्य नाभिर्मध्यप्रदेशस्तत्र यद्दाम तन्निघ्नं यदंशुकं हस्तक्षतनिवारणार्थं वस्त्रं निबध्नन्तीति सार्वत्रिकी प्रसिद्धिस्तदवलम्बत इत्येवंशीलायां बाहुलतिकायां भुजलतायामाननं मुखमुपावेश्य संस्थाप्य तूष्णीं मौनेन तस्थौ स्थितवती । अत एवोत्कीर्णेव लोह(श)लाकाक्षोदितेव ।

---

पाठा०—१ अन्येन. २ आदाविवासौ. ३ तस्मादस्मद्विरहमरणभयहरः. ४ लक्ष्मीसमाकुलः. ५ उच्छ्रिता. ६ च गृहशयने. ७ गृहे कमलिनीषु; गृहदीर्घिकाकमलिनीषु. ८ अभिदधाना गुरुमन्युभारवेगा.

बाहुलतिकायामच्छसलिलप्रसूतायां[1] मृणालिकायामिव जलाहतिश्यामारुणतामरसमिवाननमुपावेश्य[2][3][4] तूष्णीमुत्कीर्णेव तस्थौ ।

अहं तु तच्छ्रुत्वा समचिन्तयम्—'सत्यमेव गरीयः खलु जीविताल‍म्बनमिदं वियोगिनीनाम्[5], यदुक्तं[6] संकल्पमयः प्रियो[7] नितरां[8] कुलाङ्गनानां विशेषतः कुमारीणाम्[9] । तथा हि । अनेन सार्धमकृतदूतिकापादपतनदैन्यान्यन्यानि[10] च प्रतिक्षणं समागमशतान्यकालरमणीयानि[11] स्वेच्छाभिसरणसौख्यान्यत्यन्तादूषितकन्यकाभावानि[12][13] सुरतानि, सुरतेषु चाकृतस्तनव्यवधानदुःखान्यालिङ्गनानि, अजनितव्रणदर्शनव्रीडानि नखदन्तपदानि[14], अनाकुलितकेशपाशाः कचग्रहमहोत्सवाः, शब्दविहीनानि निधुवनानि[15], अनुत्पादितगुरुजनविभावितक्षतवैलक्ष्याण्यधरख-

---

बाहुलतिकानने उत्प्रेक्षयन्नाह—**अच्छेति** । अच्छं निर्मलं यत्सलिलं पानीयं तस्मिन्प्रसूतोत्पन्ना या मृणालिनी कमलिनी तस्यामिव, जलस्य पानीयस्याहतिराघातस्तया श्यामं कृष्णं यदरुणं रक्तं तामरसं कमलमिव । सरलसुकुमारत्वसाधर्म्याद्बाहुलतिकाया मृणालिन्युपमानम् । वर्तुलत्वरक्तसादृश्यत्वेन मुखस्य तामरसोपमानत्वमिति भावः ।

**अहं त्विति** । तु पुनरर्थे । अहं पत्रलेखा तत्पूर्वोक्तसंकल्पमयः कुमारो जनसंनिधावपि ददाति दर्शनमिति श्रुत्वाकर्ण्य समचिन्तयमभृशम् । इदं सत्यमेवावितथमेव । इदं किम् । यदुक्तसंकल्पमयः संकल्पस्वरूपः प्रियः, खलु निश्चयेन, वियोगिनीनां विप्रलम्भवतीनां नितरामतिशयेन कुलाङ्गनानां कुलवधूनाम्, विशेषतो विशेषात्कुमारीणाम् । कुमारीति पदमनूढायां रूढम् । अतिशयेन गुरुर्गरीयः अतिशयार्थे ईयस्प्रत्ययः । जीवितस्य जीवनस्यालम्बनमाधारभूतम् । तदेव दर्शयति—**तथा हीति** । अनेन कुमारेण सार्धं समं न कृतानि विहितानि दूतिकायाः संचारिकायाः पादपतनादिदैन्यानि येभ्यस्तान्येवंविधान्यन्यानि[1] च प्रतिक्षणं प्रतिसमयं समागमस्य संयोगस्य शतानि । केचित्तु समागमस्य संभोगस्येति व्याख्यां कुर्वन्ति । तदसत् । एकक्षणे संभोगशतस्यासंभवात् । तथा कालो विरहदिवसस्तेन रमणीयानि मनोहराण्येवंविधानि स्वस्यात्मन इच्छेहा तयाभिसरणं समीहितस्थले गमनम्, अभिरमणं वा, तज्जनितानि सौख्यानि सुखान्यत्यन्तं परज्ञानाभावेनादूषितोऽदुष्टो कन्यकाभावो येष्वेवंभूतानि सुरतानि मैथुनानि । सुरतेषु च संभोगेषु च न कृतं न विहितं स्तनानां व्यवधानं तस्माद्दुःखं यैस्तान्येवंभूतान्यालिङ्गनान्युपगूहनानि । अजनिताऽनुत्पादिता व्रणदर्शनात्क्षतावलोकनाद्व्रीडा लज्जा यैस्तान्येतादृशानि नखदन्तयोः पदानि लक्ष्माणि । अनाकुलितः संबद्धः । विप्रकीर्ण इति यावत् । केशपाशः केशकलापो येष्वेवंविधाः कचानां केशानां ग्रहा एव महान्त उत्सवाः । शब्दैः सीत्कारैर्विहीनानि रहितानि निधुवनानि सुरतानि[2] । अनुत्पादितं न निर्मितं गुरुजनैर्मातृपित्रादिभिर्विभावितं ज्ञातं क्षतं व्रणं यैरेतादृशान्यत एव विलक्षणानि वैलक्ष्याणि भिन्नान्यधरस्यौष्ठस्य खण्डनान्येव विलसितानि क्रीडितानि । एतेन चन्द्रापीडसंभोगादप्यस्य संभोगस्य सर्वदा विलक्षणत्वमिति ध्वनितम् । **एवमिति** । एवमग्रे वक्ष्यमाणं चिन्तयन्त्या विचारयन्त्या एव मे ममानुरागस्य स्नेहस्य कथा वार्ता सैव रसस्तेन प्लावः स्नपनं तेनैव दिवसो

---

**टिप्प०—1 'अन्यानि' इति निष्प्रयोजनमेव । 'अन्यान्येव' प्रसिद्धसंभोगशतेभ्यः अन्यविधान्येव ( विलक्षणान्येव ) इति यदि स्यात्तर्हि समुचितमपि । 2 'सुरतेषु च' इत्यारभ्य 'निधुवनानि' इत्युक्तिः 'सुरतेषु सुरतानि' इति पर्यवसायिका स्यात्, अत एव 'शब्दविहीनानि चुम्बनानि' इत्येव पाठः । 3 प्रलपितमेतत्, न उत्पादितं गुरुजनैः विभावितेन ( लक्षितेन ) क्षतेन ( व्रणेन ) वैलक्ष्यम् ( लज्जा ) येषु तानि, इति स्पष्टोऽर्थः ।**

---

पाठा०—१ सलिलस्रोतसि. २ जलसंहति. ३ तरुण. ४ अवाङ्‍ निवेश्य. ५ विनोदश्च वियोगिनीनाम्. ६ यदुत; अन्तः. ७ प्रियजनः; प्रियतरः. ८ सुतराम्. ९ कुमारिकाणाम्. १० अन्यान्येव. ११ अन्यत्राकालनीयानि रमणीयानि. १२ दूषित. १३ भावचिह्नानि. १४ दन्तक्षतसुखानि. १५ चुम्बनानि.

ण्डनविलसितानि । नैनमन्धकारराशिरन्तरयति, न जलधरधारापातः स्थगयति, न नीहारनिकरस्तिरोदधाति' इत्येवं चिन्तयन्त्या एव मेऽनुरागकथारसप्लावेनेव[1] रक्ततामगाद्दिवसः। तत्क्षणं प्रकटितरागं हृदयमिव कादम्बर्यास्त्रपया पलायमानमदृश्यत रविमण्डलम्। पल्लवशयनमिव संध्यारागमरचयद्यामिनी । परिचारक इव चन्द्रमणिशिलातलेतल्पमकल्पयत्प्रदोषः[2] ।

अत्रान्तरे चागत्य स्वं स्वं[3] नियोगमशून्यं कुर्वाणा दूरतो दीपिकाधारिण्यो गन्धतैलावसिक्तसुरभिगन्धोद्गारिणीभिर्दीपिकाभिर्विरचितचक्रवालिका बालिकाः पर्यवारयन् । अथ निर्मललावण्यलक्षितानि दीपिकाप्रतिबिम्बानि ज्वलितानि मदनसायकस्य शल्यकानीवाङ्गलग्नानि समुद्वहन्तीं नवनिरन्तरकलिकाचितां चम्पकलतामिव तथास्थितां तां पुनर्व्यजिज्ञपम्—'देवि,

---

वासरो रक्ततामरुणतामगाज्जगाम । किमित्याकाङ्क्षायामाह—**नैनमिति** । अन्धकारस्य ध्वान्तस्य राशिः समूह एनं सूर्यं नान्तरयति । नान्तरायीकरोतीत्यर्थः । तथा जलधरस्य मेघस्य धारापातो जलासार एनं न स्थगयति । न स्तम्भयतीत्यर्थः । नीहारस्य हिमस्य निकरः समूह एनं सूर्यं न तिरोदधाति न च्छादयति । **तत्क्षणमिति**। मद्रागो न्यून इति त्रपया लज्जया पलायमानं नश्यमानं रविमण्डलं सूर्यबिम्बमदृश्यतावीक्ष्यत । जनैरिति शेषः । कीदृशम्। तत्क्षणं तत्कालं प्रकटित आविष्कृतो रागो येन तत्तथा । रक्तत्वसाम्यादाह—कादम्बर्या हृदयमिव स्वान्तमिव । **यामिनीति** । यामिनी रात्रिः संध्यारागमरचयदकरोत् । रक्तत्वसाम्यादाह—**पल्लवेति** । पल्लवानां किसलयानां शयनं शय्या तदिव । **परिचारक इवेति** । परिचारक इव सेवक इव प्रदोषो यामिनीमुखं चन्द्रं शशिनं मणेः शिलातलं मणिशिलातलं तल्पं शय्यामकल्पयदरचयत् । अत्रान्तर एवंविधसमये दूरतो दीपिकाधारिण्यो बालिका आगत्य पर्यवारयन्दूरीचक्रुः[2] । अन्धकारमिति शेषः । एकीबभूवुरिति वा । किं कुर्वन्त्यः । निरन्तरं दीपिकाः कर्तव्या इति स्वं स्वं स्वकीयं स्वकीयं नियोगमादेशमशून्यमवन्ध्यं कुर्वाणा विदधानाः । किंविशिष्टाः । **विरचितेति** । विरचिता निष्पादिता[3]श्चक्रवालिका मण्डलं याभिस्ताः । काभिः । दीपिकाभिः 'दीवी' इति जनप्रसिद्धाभिः । दीपिकाभिः कीदृशीभिः । गन्धतैलं सुगन्धस्नेहस्तेनावसिक्ताः सिञ्चिताः सुरभिगन्धमुद्गिरन्तीत्येवंशीलाभिः । **अथेति** । दीपिकानमनानन्तरमहं ताम् । पत्रलेखामिति[4] शेषः । पुनर्व्यजिज्ञपं विज्ञप्तिमकार्षम् । कीदृशीं ताम् । समुद्वहन्तीं धारयन्तीम् । कानि । दीपिकानां प्रतिबिम्बानि प्रतिच्छायारूपाणि प्रतिबिम्बानि । कीदृशानि । निर्मलं स्वच्छं यल्लावण्यं लवणिमा तेन लक्षितानि ज्ञातानि । अतिसुन्दरलावण्ये प्रतिबिम्बितानीत्यर्थः । 'मुक्ताफलस्य छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' उत्प्रेक्षते—मदनसायकस्य कामबाणस्य ज्वलितानि द्युषितान्यङ्गलग्नानि शल्यकानीवानिःसृताग्राणि बाणानीव । पुनः कीदृशीं ताम् । चम्पकस्य हेमपुष्पकस्य लतामिव शाखामिव तथास्थिताम् । चम्पकलतां कीदृशीम् । नवाः प्रत्यग्रा निरन्तरा व्यवधानरहिता याः कलिकाः कोरकास्ताभिश्चितां व्याप्ताम् । अत्र सरलत्वसादृश्याच्छरीरस्य चम्पकलतोपमानम् । दीपिकाप्रतिबिम्बानां कोरकाकृतित्वेन कलिकोपमानम् । कां विज्ञप्तिं कृतवतीत्याशयेनाह—**देवीति** । हे देवि कादम्बरि, त्वं प्रसीद प्रसन्ना भव । तथा खेदाभावोऽखेदस्तस्मै अर्हो

---

**टिप्प०**—1 धन्यष्टीकाकारः । कः प्रसङ्गोऽत्र सूर्यस्य ? तस्मात्—'एनं संकल्पमयं प्रियमित्यर्थो बोध्यः। 2 हन्त हन्त सुप्रभातं काव्यस्यास्य, यदेवंविधष्टीकाकारः । बालिकाः कादम्बरीं पर्यवेष्टयन् इति स्पष्टोर्थः । 3 विरचितं चक्रवालं याभिस्ताः, बहुव्रीह्यवयवः कप् । 4 प्रतिपदं प्रस्खलन्दयनीय एव दिगम्बरः सोयम् । तां कादम्बरीमिति बोध्यम् ।

---

पाठा०—१ प्लवेन परेण. २ तलम्. ३ स्वनियोगम्. ४ अवसेकसुरभिधूम. ५ ज्वलन्ति. ६ सायकशल्यानि. ७ तथावस्थिताम्.

प्रसीद । नार्हस्यखेदार्हा हृदयखेदकारिणं संतापमङ्गीकर्तुम् । संहर मन्युवेगम् । एषाहमादाय चन्द्रापीडमागतैव' इति । अथानेन देवनामग्रहणगर्भेण मद्वचसा विषापहरणमन्त्रेण विषमूर्च्छितेव झटित्युन्मील्य नयने सस्पृहं मामवलोक्य 'कः प्रदेशेऽस्मिन्' इति परिजनमपृच्छत् ।

अथ धवलवसनोल्लासितगात्रयष्टयः, द्वारप्रदेशसंपिण्डिताङ्ग्यः, परशुरामशरविवरविनिर्गता इव राजहंसपङ्क्तयः, कलहंसकलालापमधुररवैः प्रतिवाचमिव प्रयच्छद्भिर्नूपुरैः पतत्कर्णपूरपल्लवोल्लासितैश्चाज्ञाश्रवणाय धावद्भिरिव श्रवणैर्मौक्तिककुण्डलांशुजालकानि स्कन्धदेशनिक्षिप्तानि चामराणीव वहन्त्यः समाहतकपोलस्थलैः कुण्डलैर्बलादिव वाह्यमानाः, वाचालैः कर्णोत्पलमधुकरैः 'समाज्ञापय' इति व्याहरन्त्यः कन्यकाः समधावन् । आज्ञाप्रतीक्षासु च मुखक-

---

योग्या त्वं हृदये स्वान्ते खेदं करोतीत्येवंशीलं संतापमङ्गीकर्तुं स्वीकर्तुं नार्हसि न योग्या भवसि । तथा मन्युः क्रोधस्तस्य वेगं रयं संहर त्यज । कोपवृद्धिं मा कुर्वित्यर्थः । एषाहं पत्रलेखाख्या सखी चन्द्रापीडमादाय गृहीत्वागतैव । **अथेति ।** तच्छ्रवणानन्तरं विषमूर्च्छिता विषापहरणमन्त्रेणेव । अनेन देवनाम भवन्नामग्रहणं गर्भे यस्मिन्नेवंविधेन मम पत्रलेखाया वचसा वाक्येन झटिति शीघ्रं नयने नेत्रे उन्मील्योद्घाट्य सस्पृहं स्पृहायुक्तं यथा स्यात्तथा मां पत्रलेखामवलोक्य निरीक्ष्येति परिजनं सेवकलोकमपृच्छत्पप्रच्छ । इतीति किम् । अस्मिन्नासन्नप्रदेशे समीपस्थले कः । तिष्ठतीति शेषः ।

**अथेति ।** तदनन्तरं कन्यका कुमार्यः समधावंस्त्वरितं चेलुः । कन्यका विशेषयन्नाह—**धवलेति ।** धवलैः शुभ्रैर्वसनैर्वस्त्रैरुल्लासिताः शोभिता गात्रयष्टयो देहलता यासां ताः । **द्वारेति ।** द्वारप्रदेशे प्रतोलीदेशे संपिण्डितानि संकोचितान्यङ्गानि शरीराणि याभिस्ताः । उत्प्रेक्षते—परशुरामस्य जामदग्न्यस्य शरविवरेण बाणच्छिद्रेण विनिर्गता राजहंसानां पङ्क्तय इव । शुभ्रवस्त्रावृतत्वेन तासां हंसपङ्क्तिसाम्यं । तदुक्तं काव्यप्रकाशे—'साधर्म्यमुपमाभेदे' इति । किंविशिष्टाः कन्यकाः । नूपुरैश्चरणभूषणैरुपलक्षिता ज्ञाताः । उपलक्षणे तृतीया । नूपुराणि विशेषयन्नाह—**कलेति ।** कलहंसानां कादम्बानाम् । 'कादम्बास्तु कलहंसाः' इति हैमः । तेषां कला मनोहरा य आलापाः शब्दास्त इव मधुरा मिष्टा ये रवाः शब्दास्तैः प्रतिवाचं प्रत्युत्तरं प्रयच्छद्भिर्ददद्भिरिव । च पुनरर्थे । पुनः किंविशिष्टाः । श्रवणैः कर्णैरुपलक्षिताः । किंविशिष्टैः श्रवणैः । पतन्तो भ्रश्यन्तो ये कर्णपूरस्य कर्णाभरणस्य पल्लवाः किसलयास्तैरुल्लासितैरुद्भासितैः । अतएवोत्प्रेक्षते—श्रवणैः कीदृशैरिव । आज्ञाया निदेशस्य श्रवणं श्रुतिस्तदर्थं धावद्भिरिव त्वरितं गच्छद्भिरिव । पुनः किं कुर्वन्त्यः । वहन्त्यो धारयन्त्यः । कानि । मौक्तिकैर्मुक्ताफलैः खचितानि कुण्डलानि कर्णभूषणानि तेषामंशवः किरणास्तेषां जालकानि समूहाः । स्वार्थे कः । 'जालं समूह आनायगवाक्षक्षारकावपि' इत्यमरः । उत्प्रेक्षते—स्कन्धदेशे भुजशिरःप्रदेशे निक्षिप्तानि स्थापितानि चामराणीव वालव्यजनानीव । पुनः किंविशिष्टाः । समाहतानि ताडितानि कपोलस्थलानि गल्लात्परप्रदेशा यैरेवंविधैः कुण्डलैर्बलाद्धठाद्वाह्यमाना इवोत्पाद्यमाना इव । पुनः किं कुर्वन्त्यः । कर्णोत्पलानां श्रवणकुवलयानां वाचालैर्मधुकरैर्भ्रमरैरिति व्याहरन्त्य इवेति वदन्त्य इव । इतीति किम् । समाज्ञापय । आज्ञां देहीत्यर्थः । **आज्ञेति ।** कादम्बरी मरकतशिलातलेऽश्मगर्भदृषदुपरि न्यषीदत् । अतिष्ठदिति क्रियासंटङ्कः । किं कुर्वन्ती ।

---

**टिप्प०**—1 कार्तिकेयस्य स्पर्धया, शरेण क्रौञ्चपर्वतविवरं विधाय तद्द्वारेण अवरुद्धा हंसपङ्क्तयो निःसारिता जामदग्न्येनेति महाभारतकथाऽनुसंधेया । 2 कर्णैः (करणैः) मौक्तिककुण्डलांशुजालकानि वहन्त्य इति स्पष्टोऽर्थः । अस्तु. स्वातन्त्र्यं टीकाकारशिरोमणेः । 3 बलपूर्वकं गमनाय प्रेर्यमाणा इत्यर्थः ।

---

**पाठा०**—१ बहुलसित. २ समुल्लसित. ३ द्वारदेशसंदण्डिताः; द्वारप्रदेशप्रवेशसंपिण्डिताङ्ग्यः. ४ कलहंस. ५ कलापमधुरालापैः. ६ समन्तात्समधावन्. ७ आज्ञां प्रतीक्षमाणासु.

मलावलोकिनीषु च तासु क्रमेण दृष्टिं पातयन्ती मरकतशिलातले न्यषीदत्, अब्रवीच्च—'पत्रलेखे, न खलु प्रियमिति ब्रवीमि । त्वामेव पश्यन्ती संधारयाम्येव जीवितमहम् । तथापि यद्ययं ते ग्रहस्तत्साधय समीहितम्' इत्यभिधायाङ्गस्पृष्टनिवसनाभरणताम्बूलप्रदानप्रदर्शितप्रसादातिशया मां व्यसर्जयत् ।"

इत्यावेद्य च किंचिदिव नमितमुखी शनैः पुनर्व्यजिज्ञपत्—'देव, प्रत्यग्रदेवीप्रसादातिशयाहितप्रागल्भ्या दुःखिता च विज्ञापयामि । देवेनाप्येतदवस्थां देवीं दूरीकुर्वता किमिदमापन्नवत्सलायाः स्वप्रकृतेरनुरूपं कृतम् ?' इति । चन्द्रापीडस्तु तथोपालम्भगर्भं विज्ञप्तः पत्रलेखया

---

पातयन्ती क्षिपन्ती । काम् । दृष्टिं दृशम् । कासु । तासु कन्यकासु । कथम् । क्रमेणानुपूर्व्या । कथंभूतासु तासु । आज्ञाया निदेशस्य प्रतीक्षा प्रतीक्षणम् । प्रतिपालनमिति यावत् । यासां तास्तथा तासु । पुनः कीदृशीषु । मुखमेव कमलं पद्मम् । स्वामिन्या इति शेषः । तदेवावलोकितुं शीलं यासां तास्तथा तासु । अब्रवीच्चेत्युपवेशनानन्तरमित्यवोचत् । च पुनरर्थे । किमुवाचेत्याह—**पत्रेति** । हे पत्रलेखे । खलु निश्चयेन त्वद्गमनं प्रियमिष्टमितिहेतोरहं त्वां न ब्रवीमि न कथयामि । यतोऽहं त्वामेव । न त्वदन्यमित्यर्थः । पश्यन्ती विलोकयन्ती जीवितं जीवनं संधारयाम्येव दधाम्येव । अतः सर्वथा त्वद्गमनं मम नेष्टम् । तथापि यद्ययं कुमारानयनलक्षणस्ते तव ग्रहो हठः; तत्तर्हि समीहितं वाञ्छितं साधय विधेहि । इत्यभिधाय प्रतिपाद्य मां पत्रलेखां व्यसर्जयदप्रेषयत् । किंलक्षणां माम् । अङ्गस्पृष्टानि शरीरलग्नानि[2] यानि निवसनाभरणताम्बूलानि सुवस्त्रालंकारनागवल्लीदलानि तेषां प्रदानेन वितरणेन प्रदर्शितोऽन्येभ्यो ज्ञापितः प्रसादातिशयः प्रसन्नताधिक्यं यस्याः सा ताम् ।

इति पूर्वोक्तमावेद्य निवेद्य च किंचिदिवेषन्नमितं नम्रीकृतं मुखमास्यं यया सैवंविधा पत्रलेखा शनैर्मन्दंमन्दं पुनर्व्यजिज्ञपद्विज्ञप्तिमकार्षीत् । **देवेति** । हे देव हे स्वामिन्, अहं विज्ञापयामि विज्ञप्तिं करोमि । किंलक्षणाहम् । प्रत्यग्रो नवीनो यो देव्याः प्रसादः प्रसन्नता तस्यातिशय आधिक्यं तेनाहितमारोपितं प्रागल्भ्यं महत्त्वं यस्याः सा । परं दुःखिता च संजातदुःखा च सती । अथ विज्ञापनां विशदयति—**देवेनापीति** । देवेनापि स्वामिनापीदं स्वप्रकृतेः स्वस्वभावस्यानुरूपं सदृशं कृतं विहितम् । कथंभूतायाः स्वप्रकृतेः । आपन्नं प्राप्तं वत्सलत्वं[3] हितकारित्वं यया सा तस्याः । किं कुर्वता देवेन । दूरीकुर्वता त्यजता । काम् । देवीं कादम्बरीम् । कीदृशीम् । एषानन्तरोदितावस्था यस्याः सा ताम् । **चन्द्रापीड इति** । चन्द्रापीडस्तु पत्रलेखयोपालम्भगर्भमुपालम्भो गर्भे मध्ये यत्र क्रियायां स्यात्तथा विज्ञप्तो नितरामत्यन्तं पर्याकुलो व्याकुलोऽभवदिति क्रियासंटङ्कः । किंलक्षणः । स्वभावेन निसर्गेण धीरा स्थिरा प्रकृतिः स्वभावो यस्यैवंविधोऽपि । किं कृत्वा । कादम्बर्या देव्यास्तमालापमाकर्ण्य श्रुत्वा । किंलक्षणमालापम् । स्नेहोक्तिः स्नेहस्य प्रीतेरुक्तिः पुरःसरा मुख्या यत्र तम् । चेत्यपरम् । किं कृत्वा । स्तिमिते निश्चले पक्ष्मणी नेत्ररोमराजी ययोस्तयोर्भावस्तत्ता तया दुर्विषहमसह्यं दुःखं तेन यो बाष्पोऽस्रं तेनोपप्लुते व्याप्ते आयते विशाले अक्षिणी यस्य तत्तन्मुखं तस्याः पत्रलेखाया मुखमुत्प्रेक्ष्यो-

---

**टिप्प०—**1 प्रयासपूर्वकं गत्वा तदानयनं मम नाभीष्टमिति विब्बोकः सोयम् । 'विब्बोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः' इति तल्लक्षणम् । त्वद्गमनं प्रियमिति तु न केनचिदाशङ्कितमासीत् । 2 अर्थात् निजशरीरस्थानां निवसनाभरणानां तथा ताम्बूलस्य च प्रदानेन । ताम्बूलपर्यन्तस्य शरीरलग्नत्वविशेषणं तूपहासायैव । 3 'आपन्नवत्सलायाः' इत्युक्तौ वत्सलत्वं कुत आविर्भूतम् ? हन्त धिक् टीकाकारम् ! आपन्नेषु विपद्ग्रस्तजनेषु वत्सलायाः स्नेहवत्याः ( प्रकृतेः ) इति सुप्रसिद्धोऽर्थः ।

---

पाठा०—१ स्निग्धामिन्दीवरस्रवमिव मरकत. २ प्रत्यहं.

तं च कादम्बर्याः स्नेहोक्तिपुरःसरं च गम्भीरं च, संतापं च सपरिहासं च, साभ्यर्थनं च साभिमानं च, सावलेहं च सप्रसादं च, सनिर्वेदं च सानुरागं च, सकोपं च सनिर्विशेषं च सावष्टम्भं च, सात्मार्पणं च सोत्प्रासं च, सोपालम्भं च सानुक्रोशं च, सस्पृहं च सावधारणं च, मधुरमपि दुःश्रवम्, सरसमपि शोषहेतुम्, कोमलमपि कठोरम्, नम्रमप्युन्नतम्, पेशलमप्यहंकृतम्, ललितमपि प्रौढमालापमाकर्ण्योत्प्रेक्ष्योत्प्रेक्ष्य च स्तिमितपक्ष्मतया दुर्विषहदुःखबाष्पोपप्लुतायताक्षं तन्मुखं स्वभावधीरप्रकृतिरपि नितरां पर्याकुलोऽभवत्।

---

त्प्रेक्ष्य दृष्ट्वा दृष्ट्वा। आदरार्थे वीप्सा। अथो आलापं विशेषयन्नाह—**गम्भीरमित्यादि**। अत्र सर्वत्र चकारो वाक्यालंकारार्थः। गम्भीरं महार्थम्। सतापं तापेन सहवर्तमानम्। सपरिहासं परिहासेन सह वर्तमानम्। साभ्यर्थनमभ्यर्थना प्रार्थना तया सहवर्तमानम्। साभिमानं साहंकारम्। सावलेहमवलिह्यत आस्वाद्यत इत्यवलेहो रसस्तेन सहवर्तमानम्। अवज्ञया सहवर्तमानं वा। प्रसादोऽनुग्रहः, गुणो वा, तेन सहवर्तमानम्। निर्वेदः स्वावमाननं तेन सहवर्तमानम्। अनुरागो भक्तिस्तेन सहवर्तमानम्। कोपः क्रोधस्तेन सहवर्तमानम्। सनिर्विशेषं नितरां विशेष उत्कृष्टविशेषस्तेन सहवर्तमानम्। सावष्टम्भमवष्टम्भः स्तब्धता तेन सहवर्तमानम्, सात्मार्पणं सहात्मार्पणेन वर्तते यः स तम्। सोत्प्रासं सहोत्प्रासेनोत्कण्ठया वर्तमानम्। सोपालम्भं सहोपालम्भेन वर्तमानम्। सानुक्रोशं सहानुक्रोशेनामर्षेण वर्तमानम्। सस्पृहं सह स्पृहया वाञ्छया वर्तमानम्। सावधारणं विमर्शपूर्वकं च। विरोधाभासेन तमेव विशेषयन्नाह—**मधुरमित्यादि**। अत्र सर्वत्रापिशब्दो विरोधाभासालंकारद्योतनार्थः। मधुरमपि मिष्टमपि। दुःखेन श्रूयत इति दुःश्रवमिति विरोधः। आभासस्तु शृङ्गाराद्युपयुक्तार्थप्रदत्वलक्षणमाधुर्यस्य विवक्षणात्। सह रसेन वर्तमानमपि शोषस्य हेतुर्निदानमिति विरोधः। आभासस्तु सरसमिति शृङ्गारादिरसोपयुक्तमित्यर्थात्। कोमलं मृदुमपि कठोरमिति विरोधः। आभासस्तु कोमलमनिष्ठुराक्षरत्वमित्यर्थात्। नम्रं नमनशीलमप्युन्नतमुच्चैस्तरमिति विरोधः। आभासस्तु नम्रं पतत्प्रकर्षमित्यर्थात्। पेशलं सुकुमारमप्यहंकृतमिति विरोधः। आभासस्तु हृद्यमित्यर्थात्। ललितं लघ्वपि प्रौढं महदिति विरोधः। आभासस्तु ललितं सुकोमलबन्धमित्यर्थात्।

---

**टिप्प०**—1 स्नेहोक्तिपुरस्सरं च गंभीरं च, ससंतापं च सपरिहारं च, साभ्यर्थनं च साभिमानं च, इत्यादिरूपेण परस्परविसंवादिविशेषणद्वयस्य एकत्रसंनिवेशेन कादम्बर्या आलापस्य साधारणतोऽतिशयः सूच्यते। यथा हि–तत्र स्नेहोक्तिकातर्ये सत्यपि गाम्भीर्यमस्ति, विरहसंतापे सत्यपि कुमारसमागमप्रत्याशया तस्य विरहस्य परिहारोप्यस्ति (‘सपरिहासं’ च इति कल्पनं तु टीकाकारस्य गभीरा बुद्धिः)। अभ्यर्थनालाघवं यद्यस्ति तर्हि आत्माभिमानोऽप्यस्ति इति ग्रन्थकारस्य गुम्फनचातुर्यम्। ‘मधुरमपि दुःश्रवम्, सरसमपि शोषहेतुम्’, इत्यादिना अग्रे तु सोयमर्थः स्वयमेव स्पष्टीकृतः। किन्तु अक्षिणी निमील्य पर्यायशब्दान्वेषणमात्रे व्याकुलस्य टीकाकारशिरोमणेः कृपया मूलपाठस्य तदेतत्स्वारस्यं सर्वं कथाशेषम्। ‘सकोपं च सात्मार्पणं च, ससद्भावं च सोत्प्रासं च,’ टीकाकारेण तदेतन्निर्वासितम्। हन्त कियत्परिशोध्यतां टिप्पणेन?। 2 हन्त अस्थानेऽयमवलेहस्नेहः! धिक्। ‘सावहेलं च सप्रसादं च,’ इत्येव पाठः। अर्थात् तस्मिन्नालापे अवज्ञा यदि प्रकाशिता, तर्हि प्रसादोऽप्याविष्कृत इति तत्तात्पर्यम्।

---

पाठा०—१ ससंतापम्. २ सावहेलम्. ३ च. ससद्भावं च. ४ आकर्ण्याकर्ण्य. ५ अभूत.

अथ कादम्बरीशरीरादिवालापपदैरेव सहागत्य युगपद्गृहीतो हृदये मन्युना, कण्ठे जीवितेन, अधरपल्लवे वेपथुना, मुखे श्वसितेन, नासाग्रे स्फुरितेन, चक्षुषि बाष्पेण तुल्यवृत्तिर्भूत्वा कादम्बर्याः क्षरद्बाष्पविक्षेपपर्याकुलाक्षरमुच्चैः प्रत्युवाच—'पत्रलेखे, किं करोमि। अनेन[1] दुःशिक्षितेन ज्ञानाभिमानिना पण्डितंमन्येन दुर्विदग्धेन दुर्बुद्धिनालीकधीरेण स्वयंकृतं[2] मिथ्याविकल्पशतसहस्रभरितेनाश्रद्दधानेन मूढहृदयेन यद्यदेवानेकप्रकारं शृङ्गारनृत्ताचार्येण[3] भगवता मनोभवेनान्तर्गतविकारावेदनाय मामुद्दिश्य बाला बलात्कार्यते, तत्तदेवादृष्टपूर्वत्वाद्धि[4] दिव्यकन्यकानां रूपानुरूपलीलासंभावनया च तावतो मनोरथानप्यात्मन[5] उपर्यसंभावनया च सर्वं सहजमेवैतदस्या इति विकल्पसंशयदोलाधिरूढं मां ग्राहयतैवमीदृशस्य देव्या दुःखस्य तव

---

**अथेति।** पर्याकुलतानन्तरं चन्द्रापीडः क्षरन्यो बाष्पो नेत्राम्बु तस्य विक्षेप इतस्ततः पातनं पर्याकुलानि व्याप्तान्यक्षराणि यत्रेति क्रियाविशेषणम्। उच्चैर्बाढस्वरेण। पत्रलेखामिति शेषः। प्रत्युवाच प्रत्यब्रवीदिति क्रियासंटङ्कः। किं कृत्वा। कादम्बर्याः समं तुल्या सदृशी वृत्तिर्यस्य सेवंविधो भूत्वा। किंलक्षणः। उत्प्रेक्षते—कादम्बरीशरीरादिवालापपदैर्दुःखवचनपदैरेव सहागत्य। एभिरेतेष्वित्यध्याहारः। युगपदेकसमये गृहीतः। एभिः कैः, एतेषु केषु इत्यपेक्षायामाह—**हृदय इत्यादि।** हृदये चित्ते मन्युना क्रोधेन। गृहीत इति पूर्वोक्तं सर्वत्र संबध्यते। कण्ठे निगरणे जीवितेन प्राणितेन। वेपथुना कम्पेनाधर एव पल्लव इति रूपकं तस्मिन्। श्वसितेन निःश्वासेन मुख आनने। स्फुरितेन स्फुरणेन नासाग्रे नासिकान्ते। बाष्पेण रोदनेन चक्षुषि। जातावेकवचनम्। किमुवाचेत्याह—**पत्रलेखे इति।** हे पत्रलेखे, अहं किं करोमि। किंचित्कर्तुं न समर्थ इत्यर्थः। शृङ्गारश्च नृत्तं च तयोरुज्ज्वलदक्चालनाय आचार्य उपदेष्टा तेन। शृङ्गारस्य नृत्याचार्येण रङ्गाचार्येणेति वा। भगो माहात्म्यमस्यास्तीति भगवांस्तेन। 'भगोऽर्कज्ञानमाहात्म्यवैराग्यादिषु' इति वैजयन्ती। मनोभवेन कामेन यद्यदनेकप्रकारं मन्युजीवितवेपथुश्वसितपरितापादिकं बाला योषितो(त्) मामुद्दिश्य मदुद्देशेन बलाद्धठात्कार्यते निष्पाद्यते। किमर्थमित्याह—**अन्तरिति।** अन्तर्गतो यो विकारस्तस्यावेदनं ज्ञापनं तस्मै। तादर्थ्ये चतुर्थी। तत्तदनेन प्रत्यक्षेण मूढमज्ञानावृतं यद्धृदयं चित्तं तेन स्वयं कृतमात्मना विहितम्। न तु मयेत्यर्थः। इतो मूढहृदयं विशेषयन्नाह—**दुःशिक्षितेनेत्यादि।** दुर्दुष्टं शिक्षितमभ्यसितं यस्य तत्तथा तेन। ज्ञाने ज्ञानविषयेऽभिमानोऽहंकारो विद्यते यस्य तत्तथा तेन। पण्डितमात्मानं मन्यते यत्तत्तथा तेन। दुर्दुष्टं विदग्धत्वं छेकत्वं यस्य तत्तथा तेन। दुर्दुष्टा बुद्धिः प्रतिभा यस्य तत्तथा तेन। अलीकेन मिथ्याभिमानेन। धीरं साहसगुणोपेतं तेन मिथ्याविकल्पानामलीकमनोरथानां शतसहस्राणि लक्षास्तैर्भरितमाकीर्णं तेन। न श्रद्दधातीति शास्त्रोक्तं नावधारयतीत्यश्रद्दधानं तेन। कया। अदृष्टपूर्वत्वादनवलोकितपूर्वत्वाद्दिव्या मनोहरा याः कन्यकास्तासां रूपं सौन्दर्यं तस्यानुरूपा योग्या या लीला विलासस्तस्याः संभावनोत्कटकोटिकः संदेहस्तया। पुनः कया। आत्मनः स्वस्योपर्येषा मामिच्छत्येतादृशस्य मनोरथानप्यसंभावनया च। किं कुर्वता मूढहृदयेन। मामेवं ग्राहयता। ग्राहयतिर्द्विकर्मकः। एवं किम्। अस्याः कादम्बर्या एतत्परितापादिकं सर्वं सहजमेव स्वाभाविकमेव। किंलक्षणं माम्। विकल्पसंशययोर्दोलामधिरूढमाश्रितं तथा। तेनैवेति शेषः। मूढहृदयेनैवेदृशस्य पूर्ववर्णितस्य देव्या कादम्बर्या दुःखस्य तवोपालम्भस्य च हेतुतां नीतः प्रापितोऽस्मि। सर्वं यदसम्यक्तन्मूढहृदयेनैव कृतम्। न मयेति

---

पाठा०—१ अनेन दुरात्मना. २ स्वयंकृत. ३ नृत्याचार्येण. ४ पूर्वत्वाद्दिव्य. ५ मनोरथस्याप्यात्मना; मनोरथानामप्यात्मना.

चोपालम्भस्य हेतुतां नीतोऽस्मि[1]। मन्ये च ममापि मनोव्यामोहकारी कोऽपि शाप एवायम्। अन्यथाऽप्रबुद्धबुद्धेरपि येषु न संदेह उपपद्यते, तेष्वपि[1] स्फुटेषु मदनचिह्नेषु कथं मे धीर्व्यामुह्येत। तिष्ठन्त्वेव तावदतिसूक्ष्मतया दुर्विभाववृत्तीनि तानि स्मितावलोकितकथितविहृतलीलालज्जायितानि, यान्यन्यथापि संभवन्ति। चिरानुभूतात्मकण्ठसंसर्गसुभगं हारमिममकृतपुण्यस्य मे तत्क्षणमेव कण्ठे कारयन्त्या किमिव नावेदितम्? अपि च हिमगृहकवृत्तान्तस्तु तवापि प्रत्यक्ष एव। तत्किमत्र प्रणयकोपाक्षिप्तयाप्यन्यथा व्याहृतं देव्या? सर्व एवायं विपर्ययान्मम दोषः। तदधुना प्राणैरप्युपयुज्यमानस्तथा करोमि यथा नेदृशमेकान्तनिष्ठुरहृदयं जानाति मां

---

भावः। विचारणान्तरं प्रदर्शयन्नाह—**मन्य इति**। अहमिति मन्ये संभावयामि। इतीति किम्। ममायं कोऽप्यनिर्वचनीयो मनसश्चित्तस्य व्यामोहं वैचित्त्यं करोतीत्येवंशीलः शाप एव विरुद्धाशीर्वचनमेव। उक्तवैपरीत्ये आह—**अन्यथेति**। शापाभावेऽप्रबुद्धाऽजाग्रद्रूपा बुद्धिः प्रतिभा यस्यैवंविधस्य। मूर्खस्यापीत्यर्थः। येषु स्फुटेषु विशदेषु मदनचिह्नेषु कामलक्षणेषु संदेहो द्वापरो नोपपद्यते न जायते। एतानि दुःखजनकान्येवेति निश्चय एवोत्पद्यत इति भावः। तेष्वपि। मदनचिह्नेष्वपीत्यर्थः। कथं मे मम धीर्बुद्धिर्व्यामुह्येत व्यामोहं व्रजेत्। **तिष्ठन्त्विति**। तावदिदानीं तानि स्मितमीषद्धास्यम्, अवलोकितं वीक्षितम्, कथितं जल्पितम्, विहृतमितस्ततो गतम्, लीलया विलासेन लज्जायितानि त्रपयाचरितानि। एतान्यतिसूक्ष्मतया निकृष्टतया। अतएव दुर्विभावा दुर्ज्ञेया वृत्तिर्येषामेवंभूतानि तिष्ठन्तु। एतादृशनिकृष्टचिन्तयाऽलमित्यर्थः। तानि कानीत्याह—**यानीति**। यानि पूर्वोक्तानि। अन्यथापि स्नेहव्यतिरेकेणापि संभवन्ति। उपपद्यन्त इत्यर्थः। स्वास्मिंस्तस्याः स्नेहं प्रदर्शयन्नाह—**चिरेति**। चिरं चिरकालमनुभूतः प्राप्तो य आत्मनः स्वस्य। अर्थात्कादम्बर्याः। कण्ठसंसर्गो निगरणसंपर्कस्तेन सुभगं मनोहरमिमं प्रत्यक्षगतं हारं मुक्ताप्रालम्बं तत्क्षणमेव तस्मिन्समय एवाकृतमविहितं पुण्यं सुकृतं येनैवंविधस्य मे मम कण्ठे गले कारयन्त्या प्रक्षेपयन्त्या। सखिद्वारेति शेषः। किमिव नावेदितं किं न ज्ञापितम्। अहं त्वदर्थिनीति तदैव ज्ञापितमिति भावः। **अपि चेति**। अपि च प्रकारान्तरे। हिमगृहकस्य नीहारवच्छीतलसद्मनो वृत्तान्त उदन्तस्तवापि भवत्या अपि प्रत्यक्ष एव विदित एव। न केवलं ममैवेति भावः। तदिति हेत्वर्थे। **अत्रेति**। अस्मिञ्जने प्रणयः स्नेहस्तेन तस्माद्वा यः कोपः क्रोधस्तेनाक्षिप्तया प्रेरितया देव्या कादम्बर्या किमन्यथा व्याहृतम्। तदलमनया तदानयनकथयेत्यात्मकमित्यर्थः। **सर्व इति**। अयं सर्व एव समग्र एव विपर्ययादज्ञानान्मम दोषो वैगुण्यम्, न तु तत्त्वतः। **तदिति**। तत्तस्माद्धेतोरधुनाहं तथा करोमि रचयामि यथा देवी कादम्बरीदृशमेकान्तेनातिशयेन निष्ठुरं कठिनं हृदयं चेतो यस्यैवंविधं मां न जानाति।

---

**टिप्प०—1** 'अनेन दुःशिक्षितेन' इत्यारभ्य 'नीतोस्मि' इति पर्यन्तस्य दुरूहवाक्यस्य अन्वयानुसारिणीयं व्याख्या—अन्तर्गतविकारस्य (कामवासनायाः) आवेदनाय भगवता मनोभवेन मामुद्दिश्य बाला (कादम्बरी) अनेकप्रकारं यद्यदेव (चेष्टादिकम्) बलात् कार्यते, तत्तदेव अदृष्टपूर्वत्वात्, दिव्यकन्यकानां रूपस्यानुरूपा सेयं लीलास्तीति संभावनया, एतावतो मनोरथस्य आत्मन उपर्यसंभावनया (कादम्बर्या एतावानभिलाषो मदुपरि स्यादिति न मे संभावनेत्याशयः), च विकल्पसंशययोर्दोलामधिरूढं माम् 'सर्वमेव एतत् अस्याः सहजमेव (मनोवेदना विभ्रमादिकं वा यद्यत् प्रकाशितं तत्तत् स्वाभाविकमेव, न तु मद्विषयकम्)' इति ग्राहयता (बोधयता) दुःशिक्षितादिविशेषणविशिष्टेन मूढहृदयेन एवमीदृशस्य देव्याः (काद०) दुःखस्य तव चोपालम्भस्य हेतुतां नीतोऽस्मि। कामप्रणोदिता या याश्चेष्टा मयि कादम्बर्यां कृतास्ताः सर्वा न मामुद्दिश्य, इति मूढहृदयेन मह्यं बोधितम्। अत एव देव्या दुःखं तव चायमुपालम्भो जात इति सर्वस्याशयः। एतदनुसारेणैव मूलपाठो ज्ञेयः। टीका चानुसंधेया।

---

पाठा०—१ तेष्वतिस्फुटेषु. २ वियुज्यमानाः.

देवी' इत्येवं वदत्येव चन्द्रापीडेऽश्राविततैव प्रविश्य वेत्रहस्ता प्रतीहारी कृतप्रणामा व्यज्ञापयत्—"'युवराज, एवं समादिशति देवी विलासवती, कृतजल्पात्परिजनतः श्रुतं मया, यथा किल पृष्ठतः स्थिताऽद्य पत्रलेखात्र पुनः परागता' इति। न च मे त्वय्यस्यां च कश्चिदपि स्नेहस्य विशेषो विलसतीति मयैवेयं संवर्धिता। अपि च तवापि कापि महती वेला वर्तते दृष्टस्य। तदनया सहित एवागच्छ। मनोरथशतलब्धमतिदुर्लभं ते मुखकमलावलोकनम्" इति।

चन्द्रापीडस्तु तदाकर्ण्य चेतस्यकरोत्—'अहो संदेहदोलाधिरूढं मे जीवितम्। एवमम्बा निमेषमपि मामपश्यन्ती दुःखमास्ते। पत्रलेखामुखेन चैवमाज्ञापितमागमनाय मे निष्कारणवत्सलेन देवीप्रसादेन। आजन्मक्रमाहितो बलवाञ्जननीस्नेहः, वाञ्छाव्याकुलं हृदयम्, अमोच्यं तातचरणशुश्रूषासुखम्। प्रमाथी मन्मथहतकः, हारिणी गुरुजनलालना, दुःसहान्युत्कण्ठितानि, अनुबन्धिनी बान्धवप्रीतिः, कुतूहलिन्यभिनवप्रार्थना, मुखावलोकिनः कुलक्र-

---

किं कुर्वाणः प्राणैरप्युपयुज्यमानस्तदीप्सितं कुर्वाणः। इत्येवं चन्द्रापीडे वदत्येव कथयत्येव प्रतीहारी द्वारपालिका कृतः प्रणामो ययैवंभूता मातृपरिजनत्वेन कुमारप्रतीहार्यऽश्राविततैवानिवेदितैव प्रविश्य प्रवेशं कृत्वा व्यज्ञापयद्विज्ञप्तिमकार्षीत्। कीदृशी। वेत्रं हस्ते यस्याः सा। हे युवराज, देवी विलासवत्येवं समादिशत्याज्ञापयति। एवं किमित्याह—**कृतेति**। कृतो विहितो जल्पोऽन्योन्यालापो येनैवंविधात्परिजनतः सेवकवर्गान्मयेति श्रुतमित्याकर्णितम्। इतीति किम्। तदेव दर्शयति—**यथेति**। किलेति सत्ये। पृष्ठ इति पृष्ठतः। तस्प्रत्ययस्य सार्वविभक्तिकत्वात्। स्थिता विलम्बिता पत्रलेखायास्मिन्नहन्यत्रास्मिन्प्रदेशे पुनः परागता प्रत्यावृत्य समागता। पुनः किं समादिशतीत्याह—**न चेति**। मे मम त्वयि भवत्यस्यां पत्रलेखायां चेति हेतोः स्नेहस्य प्रेम्णः कश्चिदपि विशेषो न विलसति। न वर्तत इत्यर्थः। इतीति किम्। यत इयं पत्रलेखा मयैव संवर्धिता वृद्धिं प्रापिता। एतेनोभयोरपि मयैव प्रवर्धनात्त्वयि तस्यां च मम स्नेहः समान एवास्तीति ध्वन्यते। पुनः किं समादिशतीत्याह—**अपि चेति**। अपि च प्रकारान्तरे। तवापि भवतोऽपि दृष्टस्यावलोकितस्य कापि महती गुर्वी वेला कालविशेषो वर्तते। तत्तस्माद्धेतोरनया पत्रलेखया सहित एव समन्वित एवागच्छैहि। त्वमिति शेषः। यतस्ते तव मुखमेव कमलं तस्यावलोकनं वीक्षणमतिदुर्लभमतिदुःप्रापम्। कीदृशम्। मनोरथानां समीहितानां शतैर्लब्धं प्राप्तम्।

तु पुनश्चन्द्रापीडस्तत्पूर्वोक्तमाकर्ण्य श्रुत्वा चेतस्यकरोदचिन्तयत्। एवं किमित्यत आह—**अहो इति**। अहो इत्याश्चर्ये। मे मम जीवितं प्राणितं कादम्बरीसमीपे व्रजामि उत मातुः संनिधाविति संशयो द्वापरः स एव दोला दोलनं तामधिरूढमाश्रितम्। कथमित्याह—**अम्बेति**। एवं अम्बा विलासवती निमेषमपि निमीलितमात्रमपि मां चन्द्रापीडमपश्यन्त्यनवलोकयन्ती दुःखं यथा स्यात्तथास्ते तिष्ठति। तथा निष्कारणं निर्निमित्तं वत्सलेन हितकारिणा देव्याः कादम्बर्याः प्रसादेनानुग्रहेण पत्रलेखामुखेन च पत्रलेखावाक्येन च मे ममागमनायैवमाज्ञापितम्। **आजन्मक्रमेति**। जनन्या मातुः स्नेहो बलवान्बलिष्ठः। कीदृक्। आजन्मतो जन्म मर्यादीकृत्य क्रमेण मर्यादयाहित आरोपितः। जन्ममर्यादयारोपितत्वमेवास्य विशेषः। विशेषादत्रैव स्थातुमुचितमित्याशयः। हृदयं चेतो वाञ्छाभिरिच्छाभिर्व्याकुलम्। तातस्य पितुश्चरणौ पादौ तयोः शुश्रूषा सपर्या तस्याः सुखममोच्यं न मोक्तुं योग्यम्। मन्मथहतकः कंदर्पहतकः प्रमथ्नातीत्येवंशीलः प्रमाथी। चित्तोद्वेगकृदित्यर्थः। गुरुजनस्य मात्रादेर्लालना प्रतिपालना हारिणी मनोहरा। दुःसहानि सोढुमशक्यान्युत्कण्ठितान्युत्कण्ठाविषयीभूतानि। बान्धवानां स्वजनानां प्रीतिः स्नेहोऽनुबध्नातीत्येवंशीलानुबन्धिनी। गमनविघ्नकारिणीत्यर्थः। अभिनवस्यादृष्टपूर्वस्य वस्तुनः प्रार्थना वाञ्छा कुतूहलिन्याश्चर्यकारिणी। कुलक्रमेण पट्टपरम्परया आगताः प्राप्ता

---

पाठा०—१ आविततैव, २ अदृष्टस्य, ३ सदैव, ४ त्वन्मुख, ५ जन्म, ६ आकुलय; अनुकूलय.

मागता राजानः, जीवितफलं प्रियतमामुखावलोकनम्, अनुरक्ताः प्रजाः, गरीयान्गन्धर्वराजसुतानुरागः, दुस्त्यजा जन्मभूमिः, परिग्राह्या देवी कादम्बरी, कालातिपातासहं मनः, विप्रकृष्टमन्तरं हेमकूटविन्ध्याचलयोः' इत्येवं चिन्तयन्नेव प्रतीहार्योपदिश्यमानमार्गः पत्रलेखाकरावलम्बी जननीसमीपमगात्। तत्रैव च तमनेकप्रकारजननीलालनसुखाचिन्तितदुर्विषहहृदयोत्कण्ठं दिवसमनयत्।

उपनतायां चात्मचिन्तायामिवान्धकारितदशदिशि शर्वर्याम्, अनिवार्यविरहवेदनोन्मथ्यमानमानसाकुलेषु कलकरुणमुच्चैर्व्याहरत्सु चक्रवाकयुगलेषु, उत्तेजितस्मरशरं समुत्सर्पमाणेषु चन्द्रमसोऽङ्कोल्लधूलिधूसरालोकेष्वग्रमयूखेषु, विजृम्भमाणकुमुदिनीश्वासपरिमलग्राहिणि मन्दं-

---

राजानो भूभुजो मुखमाननमवलोकयन्तीत्येवंशीला मुखावलोकिनो वक्त्रवीक्षकाः । प्रियतमाः स्त्रियस्तासां मुखावलोकनं वक्त्रवीक्षणं जीवितस्य प्राणितस्य फलं साध्यम् । प्रजा जनपदवासिनो जना अनुरक्ता अनुरागिणः । गन्धर्वराजसुता कादम्बरी तस्यां तस्या वानुरागः स्नेहो गरीयानतिशयेन गुरुः । दुस्त्यजा दुःखेन मोक्तुं शक्या जन्मभूमिर्जन्मनः स्वोत्पत्तेर्भूमिः स्थलम् । तदुक्तमन्यत्र — 'जणणी जम्मुप्पत्ती पच्छिमनिद्दा सुभासियं वयणं । मणइट्ठं माणुस्सं पंच वि दुक्खेहिं मुच्चंति ॥' जननी जन्मोत्पत्तिः पश्चिमनिद्रा सुभाषितं वचनम् । मनसेष्टो मनुष्यः पञ्चापि दुःखाद्विमुच्यन्ते इति । कादम्बरी देवी परिग्राह्या परिणेतुं योग्या । कालस्यानेहसोऽतिपातो विलम्बस्तं न सहतीत्येवंशीलं मनः स्वान्तम् । तदीयमिति शेषः । हेमकूटविन्ध्याचलयोरन्तरं विचालं विप्रकृष्टं दूरम् । इत्येवं चिन्तयन्नेव विमृशन्नेव प्रतीहार्या द्वारनियुक्तयोपदिश्यमानः कथ्यमानो मार्गः पन्था यस्यैवंभूतः पत्रलेखायाः करं हस्तमवलम्बत इत्येवंशीलः स तथा जनन्या मातुः समीपमभ्यर्णमगादगमत् । तत्रैव मातुः समीपे तं दिवसं वासरमनयन्निनाय । कीदृशं दिवसम् । अनेकप्रकारं बहुविधं जनन्या मातुर्लालनसुखं तेनाचिन्तिताविज्ञाता दुर्विषहहृदयोत्कण्ठा यस्मिन्स तथा ।

रात्रौ विशेषं प्रदर्शयन्नाह—**उपेति** । उपनतायां च प्राप्तायां च शर्वर्यां रजन्याम् । कृष्णत्वसाम्यादाह—आत्मचिन्तायामिव चन्द्रापीडो मनसा मनोव्यापारेण स्मरस्य कंदर्पस्यायतनभूतं सद्मतां गतं प्राप्तं यत्कादम्बरीरूपं तस्य सस्मार । 'स्मृतौ च' इति सूत्रेण कर्मणि षष्ठी । शर्वरीं विशेषयन्नाह—**अन्धकारितेति** । अन्धकारिता अन्धकारं प्रापिता दशदिशो यस्यां सा तस्याम् । केषु सत्सु । चक्रवाकयुगलेषु द्वन्द्वचरमिथुनेषु सत्सु । किं कुर्वत्सु । कलं मधुरं करुणं दीनं यथा स्यात्तथोच्चैरुच्चस्वरेण व्याहरत्सु ब्रुवत्सु । कीदृशेषु । अनिवार्या निवारयितुमशक्या या विरहवेदना वियोगपीडा तयोन्मथ्यमानानि पीड्यमानानि मानसानि चेतांसि येषां तानि तत्तथा तेषु । पुनः केषु सत्सु । उत्तेजिता निशिताः स्मरशराः कंदर्पबाणा यैरिति क्रियाविशेषणम् । चन्द्रमसः शशिनोऽङ्कोल्लस्य वृक्षविशेषस्य धूलिः परागस्तद्वद्धूसर ईषत्पाण्डुर आलोकः प्रकाशो येषां ते तथा तेषु । एवंविधेषु समुत्सर्पमाणेषु विस्तरत्स्वग्रमयूखेषु प्रधानकिरणेषु । पुनः कस्मिन्सति । प्रदोषो यामिनीमुखं तस्यानिले वायौ मन्दंमन्दं शनैः शनैरावातुं प्रचलितुमारब्धे सति । किंलक्षणे प्रदोषानिले । विजृम्भमाणा विकसन्त्यो याः कुमुदिन्यस्तासां श्वासस्येव यः परिमलस्तं गृह्णातीत्येवंशीलः स तथा तस्मिन् । किंलक्षणश्चन्द्रापीडः ।

---

टिप्प०—1 प्रियतमायाः (कादम्बर्याः) मुखावलोकनमित्युचितम् । 2 मदीयमित्येवोचितम्, स्वस्यैव कथायाः प्रक्रान्तत्वात् । 3 उन्मथ्यमानमानसाश्च ते आकुलाश्च तेषु, अथवा विरहवेदनया उन्मथ्यमानेन मानसेन आकुलेष्वित्युचितम् । 4 'उत्तेजितस्मरशरसमुत्सर्पणेषु' इत्येव पाठो मनोरमः । न हि टीकाकार इवाऽवयाकरणो मूलकारः । 'गम्लृ सृप्लृ गतौ' इति धातुपाठात परस्मैपद्येव 'सृप्' धातुः । उत्तेजिताः स्मरशरा येन तादृशं समुत्सर्पणम् (समुदयः) येषां तेषु सत्सु इति तदर्थः । 5 विकासस्येव, इति तात्पर्यम् ।

---

पाठा०—१ अनुरक्ता प्रजा. २ भूमी. ३ वर्त्मा. ४ अचेतितम्. ५ शर. ६ मन्दमन्द.

मन्दमावातुमारब्धे प्रदोषानिले च, शयनवर्ती निमीलितलोचनोऽप्यप्राप्तनिद्राविनोदो हेमकूटागमनखेदान्निपत्य विश्रान्तेनेव पादपल्लवच्छायायाम्, जङ्घानुरोधरोहिणा लग्नेनेव संहतयोरूर्वोः, उल्लिखितेनेव विस्तारिणि नितम्बफलके, मग्नेनेव नाभिमुद्रायाम्, उल्लसितेनेव रोमराज्याम्, आरूढेनेव त्रिवलिसोपानहारिणि मध्यभागे, कृतपदेनेवोन्नतिविस्तारशालिनि स्तनतटे, मुक्तात्मनेव बाह्वोः, कृतावलम्बनेनेव हस्तयोः, आश्लिष्टेनेव कण्ठे, प्रविष्टेनेव कपोलयोः, उत्कीर्णेनेवाधरपुटे, ग्रथितेनेव नासिकासूत्रे, समुन्मीलितेनेव लोचनयोः, स्थितेनेव ललाटशालायाम्, अन्वितेनेव चिकुरभारान्धकारे, प्लवमानेनेव सर्वदिक्पथप्लाविनि लावण्यपूरप्लवे मनसा सस्मार स्मरायतनभूतस्य कादम्बरीरूपस्य।

उत्पन्नात्मीयबुद्धिश्च निर्भरस्नेहार्द्रचेतास्तत एव वासरादारभ्य तां प्रति गृहीतरक्षापरिकर इव यतो यत एव मण्डलितकुसुमकार्मुकं मकरध्वजमस्यां प्रहरन्तमालोकितवान्, ततस्तत

---

शयने शय्यायां वर्तत इत्येवंशीलः स तथा। पुनः कीदृक्। निमीलिते मुद्रिते लोचने नेत्रे येन स तथा। एवंविधोऽप्यप्राप्तोऽलब्धो निद्रायाः प्रमीलाया विनोदः सुखं येन स तथा। इतो मनो विशेषयन्नाह—**हेमकूट इति।** हेमकूटादागमनं तस्माद्यः खेदः परिश्रमस्तस्मान्निपत्य पादावेव पल्लवौ तयोश्छायातपाभावस्तस्यां विश्रान्तेनेव गृहीतविश्रमेणेव। जङ्घा नलकीलिनी तामनुरुणद्धीत्येवंशीलो जङ्घानुरोधी जङ्घानलकीलस्तं रोहतीत्येवंशीलं तत्तथा तेन संहतयोर्मिलितयोरूर्वोः सक्थ्नोर्लग्नेनेव मिलितेनेव। विस्तारिण्यायते नितम्बावेव फलकं तस्मिन्नुल्लिखितेनेव चित्रितेनेव। नाभिस्तुन्दकूपिका तस्य मुद्राकृतिविशेषस्तस्यां मग्नेनेव ब्रुडितेनेव। रोमराज्यां तनूरुहश्रेण्यामुल्लसितेनेवोच्छ्वसितेनेव। तथा त्रिवलिरेव सोपानानि तैर्हारिणि मनोहरे मध्यभागे वलग्नप्रदेश आरूढेनेवोपविष्टेनेव। उन्नतिरुच्चता, विस्तारो विस्तीर्णता, ताभ्यां शालत इत्येवंशीलं यत्स्तनतटं कुच एव तटं तस्मिन्कृतपदेनेव विहितस्थानेनेव। बाह्वोर्भुजयोर्मुक्तात्मनेव संस्थापितजीवेनेव। हस्तयोः करयोः कृतावलम्बनेनेव विहितालम्बनेनेव। कण्ठे निगरण आश्लिष्टेनेवालिङ्गितेनेव। कपोलयोर्गल्लातपरप्रदेशयोः प्रविष्टेनेव कृतप्रवेशेनेव। अधरपुट ओष्ठपुट उत्कीर्णेनेवोल्लिखितेनेव। नासिका नासैव सूत्रं तस्मिन्ग्रथितेनेव गुम्फितेनेव। लोचनयोर्नेत्रयोः समुन्मीलितेनेव विकसितेनेव। ललाटशालायामलिकगृहैकदेशे स्थितेनेवोपविष्टेनेव। कृतावस्थानेनेवेत्यर्थः। चिकुरभारः केशकलापः स एवान्धकारं तिमिरं तस्मिन्नन्वितेनेव सहितेनेव। सर्वदिक्पथानि प्लावयतीत्येवंशीले लावण्यपूरप्लवे चातुर्यपूरप्रवाहे प्लवमानेनेव स्नानं कुर्वाणेनेव।

**उत्पन्न इति।** च पुनस्तत एव वासराद्दिवसादारभ्य मर्यादीकृत्योत्पन्ना संजातात्मीया मदीयत्वलक्षणा बुद्धिर्यस्यां सा तथा। निर्भरः प्रबलो यः स्नेहः प्रेमा तेनार्द्रं चेतो यस्यैवंभूतः कुमारस्तां प्रति कादम्बरीं प्रति गृहीत आत्तो रक्षार्थं परिकरः परिच्छदो येनैवंभूत इव। यतो हेतोर्यत एव यस्मादेव मण्डलितं वक्रीकृतं कुसुमकार्मुकं पुष्पचापं येनैवंभूतं मकरध्वजं कंदर्पमस्यां कादम्बर्यां प्रहरन्तं ताडयन्तमालोकितवान्दृष्टवान्। ततो हेतो-

---

**टिप्प०—**1 मुक्तः आत्मा स्वस्वरूपं येन तेनेव। बाह्वोर्मध्ये मनः स्वं मुक्तवदित्यर्थः। मनसो जीवकल्पनाऽनुचिता। 2 'यतो यतः, ततस्ततः' इति वीप्साया इदमेव तात्पर्यं यत् यस्मिन् स्थानेऽवकाशे वा दृष्टवान् तस्मिन्नेव, अर्थात् सर्वत्रैवेति। टीकाकारचूडामणिस्तु तदिदमस्पृशन्नेव विस्वरं प्रलपति। अहो धन्यं साहसं टीकाकरणे!।

---

**पाठा०—**१ अनुरोधरोहिणा; अनुसाराधिरोहिणा. २ सुसंहतयोः. ३ लिखितेनेव. ४ सर्वतः. ५ लावण्यपयःपूर. ६ समुत्पन्न.

एवात्मानमन्तरेऽर्पितवान् । 'एवमम्लानमालतीकुसुमकोमलतनौ निर्घृणं प्रहरन्न लज्जसे' इत्युपालभमान इव दिवसमुत्तरलतारयान्तर्बाष्पया दृष्ट्या कुसुमचापम, पुनः स्मरशरप्रहारमूर्च्छितां संज्ञामिव लम्भयितुं तामवयवैरुवाह स्वेदजललवानुत्ससर्ज च दीर्घदीर्घान्निःश्वासमारुतान् । तच्चेतनालम्भमुदित इव च सर्वाङ्गीणं क्षणमपि न मुमोच रोमाञ्चम् । सह्यते हृदयेन वेदना न वेति तद्वार्तां प्रष्टुमिव नियुक्तेन मनसा शून्यतामधार्षीत् । तत्प्रतिवार्ताकर्णनायेव च गृहीतमौनः सर्वदैवातिष्ठत् । तदाननालोकनान्तरितमिव सर्वमेव नाद्राक्षीत् । चन्द्रबिम्बेऽपि नास्य दृष्टिररमत । तदालापपूरितश्रोत्रेन्द्रिय इव न किंचिदपरमन्तःकर्णं कृतवान् । वीणाध्वनयोऽप्यस्य बहिरेवासन् । सुभाषितान्यपि न प्रवेशमलभन्त । सुहृद्वाचोऽपि परुषा इवाभवन् । बान्धवजनजल्पितान्यपि नासुखायन्त । भावावगमभीत्येव यथापूर्वं न कस्यचिद्दर्शन-

---

स्तत एव तद्दिवसादेवात्मानमन्तरे मध्येऽर्पितवान्दत्तवान् । **एवमिति** । अम्लानं सद्यस्कं यन्मालत्याः कुसुमं पुष्पं तद्वत्कोमला सुकुमारा या तनुः शरीरं तस्यां निर्घृणं निष्कृपमेवममुना प्रकारेण । दिवसमित्युपलक्षणमहोरात्रस्य । तेनाहोरात्रं प्रहरंस्ताडयन्न लज्जसे न त्रपां प्राप्नोषि । उत्प्राबल्येन तरला चञ्चला तारा कनीनिका यस्यां सा तया । अन्तर्मध्ये वाष्पोऽश्रु यस्यामेवंविधया दृष्ट्या नेत्रेण कुसुमचापं कंदर्पमित्युपालभमान इवोपालम्भं ददान इव । एतेनात्यन्तदैन्यमाविष्कृतम् । खेदो घर्मस्तदेव जलं तस्य लवा विप्रुषस्तानवयवैरुपघ्नैरुवाहावहत् । च पुनरर्थे । अतिशयेन दीर्घा दीर्घदीर्घास्तानेवंभूतान्निःश्वासमारुतानुत्ससर्जोन्मुमोच । किं कर्तुम् । उत्प्रेक्षते—पुनर्वारंवारं स्मरस्य शरा बाणास्तैः प्रहारस्ताडनं तेन मूर्च्छितां मोहप्राप्तां तां कादम्बरीं संज्ञचेतनां लम्भयितुमिव प्रापयितुमिव । यथान्यः कश्चिन्मूर्च्छितस्य खेदजललववत्स्वल्पजलं निःश्वाससमानमारुतांश्च मुञ्चतीति वस्तुगतिः । स चन्द्रापीडः सर्वाङ्गे भवः सर्वाङ्गीणस्तं रोमाञ्चं रोमोद्गमं क्षणमपि न मुमोच । क्षणमात्रं तद्विरहितो नाभूदित्यर्थः । उत्प्रेक्षते—तस्याः कादम्बर्याश्चेतना चैतन्यं तस्या आलम्भः प्राप्तिस्तेन मुदित इव हर्षित इव । **सह्यत इति** । स मनसा शून्यतामधार्षीद्बभार । किंलक्षणेन मनसा । तस्यै कादाम्बर्यै इति वार्तां प्रष्टुं नियुक्तेनेव प्रेषितेनेव । इतीति किम् । हृदयेन वेदना पीडा सह्यते न वेति । **तदिति** । गृहीतं मौनमभाषणं येनैवंविधः सर्वदा निरन्तरमतिष्ठदस्थात् । उत्प्रेक्षते—तस्याः कादम्बर्याः प्रतिवार्तां प्रत्युत्तरं तस्या आकर्णनायेव । श्रवणायेवेत्यर्थः । **तदाननेति** । स सर्वमेव नाद्राक्षीन्नापश्यत् । किंलक्षणं सर्वम् । उत्प्रेक्षते—तस्या आननं मुखं तस्यालोकनं वीक्षणं तेनान्तरितमिव व्यवहितमिव । **चन्द्रबिम्ब इति** । चन्द्रबिम्बेऽपि शशिमण्डलेऽप्यस्य चन्द्रापीडस्य दृष्टिश्चक्षुर्नारमत न चिरमस्थात् । विरहोत्कर्षे तापकारित्वात् । **तदालापेति** । स चन्द्रापीडः किंचिदप्यपरं शब्दजातं कर्णस्यान्तरन्तःकर्णं न कृतवान् । द्विकर्मकोऽयं धातुः । उत्प्रेक्षते—तस्याः कादम्बर्या आलापस्तेन पूरितं भृतं श्रोत्रेन्द्रियं यस्यैवंविध इव । कर्णानां करणत्वं दर्शयन्नाह—**वीणेति** । वीणानां वल्लकीनां ध्वनयः शब्दा अस्य चन्द्रापीडस्य बहिरेव बाह्यभूता एवासन्नभूवन् । **सुभाषितानीति** । सुभाषितानि समीचीनोक्तयस्तान्यपि प्रवेशं मध्यगमनावकाशं नालभन्त न प्राप्नुवन् । **सुहृदिति** । सुहृदां मित्राणां वाचो वाण्योऽपि परुषा इव कठिना इवाभवन् । **बान्धवेति** । बान्धवजनस्य बन्धुलोकस्य जल्पितान्यपि कथितान्यपि नासुखायन्त । सुखमिवाचरन्ति सुखायन्ते । अद्यतन्यामात्मनेपदेऽसुखायन्त इति रूपम् । **भाव इति** । यथा येन प्रकारेण पूर्वं विरहदशाया अर्वाग्दर्शनं नादान्न ददौ तथेदानीमपि । तत्रो-

---

**टिप्प०—**1 विभिन्नवचनयोः कोयमुपमानोपमेयभावः ? कश्चार्थः ? अस्तु. सुखं वेदयन्ते सुखायन्ते इति विग्रह उचितः । 'सुखादिभ्यः कर्तृवेदनायाम्' इति क्यङ् । अद्यतन्यामित्यपि प्रलापः, शुकोक्तौ कवेरुक्तौ वा नेयमद्यतनी घटना । 2 धन्या बुद्धिः ! विरहदशायाः पूर्वं यथा दर्शनमदात् तथा इदानीं न ददावित्यर्थः ।

---

पाठा०—१ तनोः. २ अन्तर्बाष्पार्द्रया; स्तुतबाष्पार्द्रया. ३ लवम्. ४ हृदयवेदना. ५ चास्य दृष्टिर्नारमत. ६ परिपूरित. ७ किंचिदपि.

मदात् । अनवरतमुक्तज्वालेन मदनहुतभुजान्तर्दह्यमानोऽपि गुरुजनत्रपया न सद्यःसमुद्धृतार्द्रारविन्दशयनमभजत । न सरसबिसलताजालकानि[1] गात्रेष्वकरोत् । न जललवमौक्तिकक्षोदतारकितान्यजरठ[2]पद्मिनीपत्राणि पार्श्वेऽप्यकारयत् । न कुसुमपल्लवस्रस्तररचनामादिदेश । नानवरतधारापातो[3]ल्लसितशिशिरसीकराबद्धदुर्दिनं ददर्शापि धारागृहम् । न मकरन्दसंततसं[4]पातशीतलाभ्यन्तराणि हर्म्योद्यानलताभवनान्यप्यसेवत । न मलयजजललुलितपृष्ठेषु मणिकुट्टिमेष्वप्यलुठदिच्छया । न तुहिनकरकरनिकर[5]संक्रान्तिहृद्येषु ललनाकरकलितचन्द्रकान्तमणिदर्पणेष्वप्यसंक्रामयदात्मसंपातम्[6] । किं बहुना, नाश्यानहरिचन्दनरसचर्चामप्याचरणाददापयत् ।

---

त्रपेक्षते—भावस्य चित्ताभिप्रायस्यावगमो ज्ञानं तस्माद्भीतिर्भयं तयेव, यदि कश्चिद्विलोकयिष्यति तदा ज्ञास्यत्येष विरहादेवंभूत इति भीत्येवेत्यर्थः । स चन्द्रापीडः सद्यस्तत्क्षणं समुद्धृतान्युत्खातान्यार्द्राणि जलक्लिन्नानि यान्यरविन्दानि कमलानि तेषां शयनं शय्यां नाभजत नाशेरत । कया । गुरुजना मातृपित्रादयस्तेषां त्रपा लज्जा तयेति सर्वत्र वक्ष्यमाणेषु संबन्धनीयम् । भृशं तापो न भविष्यतीत्याह—**अनेति** । किंकुर्वाणोऽपि । दह्यमानोऽपि । कथम् । अन्तर्मध्ये । केन । मदनहुतभुजा कंदर्पवह्निना । कीदृशेन । अनवरतं मुक्ता ज्वाला येनैवंभूतेत्यर्थः । **नेति** । सरसानि जलार्द्राणि बिसानि मृणालानि तेषां लता वल्लयस्तेषां जालकानि समूहा गात्रेष्वङ्गेषु नाकरोन्नान्वतिष्ठत् । पूर्वोक्तहेतोरेवेति भावः । **नेति** । जललवा अम्भो(द)बिन्दवस्त एव मौक्तिकक्षोदास्तैस्तारकितानि तारावदाचरितानि यान्यजरठानि कोमलानि पद्मिनीपत्राणि नलिनीदलान्यपि । व्यस्तक्रमोऽत्रापिशब्दः । पार्श्वे पृष्ठे नाकारयत् । सेवकैरिति शेषः । **नेति** । कुसुमानां पल्लवाः प्रत्यग्रदलानि, कुसुमानि च पल्लवाश्चेति द्वन्द्वसमासो वा, तेषां स्रस्तरस्तस्य रचनां नादिदेश नादिष्टवान् । **नेति** । स चन्द्रापीडो धारागृहमपि न ददर्श नाद्राक्षीत् । किंलक्षणं धारागृहम् । अनवरतं निरन्तरं धारापातेनोल्लसिता ये शिशिराः शीतलाः सीकरा वातास्तजलविप्रुषस्तैराबद्धं दुर्दिनं मेघजं तमो यस्मिंस्तत्तथा । **नेति** । स चन्द्रापीडो हर्म्येषु गृहेषु यदुद्यानं तस्य लता वल्लयस्ता एव भवनानि गृहाण्यपि नासेवत नाभजत । किंलक्षणानि । मकरन्दस्य मरन्दस्य संततं निरन्तरं संपातः संपतनं तेन शीतलानि शिशिराण्यभ्यन्तराणि मध्यभागा येषां तानि । **न मलयजेति** । स मणीनां कुट्टिमानि बद्धभूमिकानि । 'कुट्टिमं त्वस्य बद्धभूः' इति हैमः । तेष्वपीच्छयेहया नालुठन्नाशेरत । किंलक्षणेषु । मलयजस्य चन्दनस्य जलं पानीयं तेन लुलितान्यार्द्रीकृतानि पृष्ठानि येषां तेषु । **नेति** । स ललनानां योषितां करास्तैः कलिता धृता ये चन्द्रकान्तमणिभिः खचिता दर्पणा आदर्शास्तेष्वप्यात्मनः स्वस्य संपातं प्रतिबिम्बं न संक्रामयन्न संक्रामणमकारयत् । किंलक्षणेषु । तुहिनकरश्चन्द्रस्तस्य करनिकरः किरणसमूहस्तस्य संक्रान्तिः संक्रमस्तया हृद्या मनोहरास्तेषु । **किं बहुनेति** । किं बहुना किं बहुजल्पितेन । चरणौ मर्यादीकृत्याचरणं तस्मादाश्यानमीषच्छुष्कं यद्धरिचन्दनं तस्य रसस्तेन चर्चा पूजा तामपि नादापयद्दातुं न प्रेरयति स्म ।

---

टिप्प०—1 समूहान् इत्याशयः । 2 पद्मिनीपत्राणि न तारावदाचरितानि । अत एव जललवमौक्तिकक्षोदैः तारकितानि ( संजाताः तारका येषु तानि ) इतच् । 3 समीपे इत्युचितम् । 4 आत्मनः संतापं तेषु न संक्रमयामासेति 'संतापम्' इति पाठ उचितः प्रतिभाति । चन्द्रकान्तसांनिध्यात्तापस्य लाघवमिति । असंक्रामयत्' इति तु मन्ये लेखकदोषः स्यात्, अन्यथा 'समक्रामयत्' इत्युचितम् ।

---

पाठा०—१ जालानि. २ अजठर; जरठ. ३ निपात. ४ मकरन्दसंपात. ५ तुहिनकरनिकर. ६ संतापम्.

एवमेव केवलं रात्रौ दिवा चाकृतनिर्वृतिराज्वलताप्यदहनात्मकेन दहताप्यक्षतस्नेहेन्धनेन दुःखानुभवनायैव भस्मसादकुर्वता मदनदहनेनान्तर्बहिश्च क्वाथ्यमानदेहः शोषमगात्, आर्द्रतां पुनः प्रतिक्षणाधीयमानवृद्धिं नात्याक्षीत्। एवं च निष्प्रतिक्रियतया दुस्त्यजतया वातिविसंस्थुलेनोपास्यमानोऽपि मनसिजेनाकारमेव लोकलोचनेभ्योऽरक्षत्, न कुसुमशरसायकेभ्यो जीवितम्। तनोरेव तानवमङ्गीचकार, न लज्जायाः। शरीरस्थितावेवानादरं कृतवान्, न कुलस्थितौ। प्रजा एवान्वरुध्यत, न मन्मथोत्कलिकाः। सुखमेवावधीरयामास, न धैर्यम्। एवं चास्य पुरः कादम्बरीरूपगुणावष्टम्भाहितप्राणेन बलवतानुरागेणाकृष्यमाणस्य, पश्चाद्गुरुजनप्रतिबन्धदृढतरेण महीयसा स्नेहेन च वार्यमाणस्य, गम्भीरप्रकृतेः सरित्पतेरिव चन्द्रमसा सुदू-

---

एवमिति। स चन्द्रापीडो मदन एव दहनो वह्निस्तेनान्तर्हृदये बहिरवयवादौ क्वाथ्यमान उत्काल्यमानो देहः शरीरं यस्यैवंविधः शोषं क्षीणत्वमगात्प्राप। किंलक्षणः। एवमेव पूर्ववत्। रात्रौ निश्यपरं दिवा दिवसेऽकृताऽविहिता निर्वृतिर्मनःस्वास्थ्यं येन सः। किंलक्षणेन मदनदहनेन। आ समन्ताज्ज्वलता प्रज्वलता। पुनः कीदृशेन। अदहनात्मकेनावह्निस्वरूपेणापि दहता भस्मीकुर्वता। पुनः कीदृशेन। न क्षतमक्षीणं स्नेहलक्षणमिन्धनमेधो येन स तथा तेन। पुनः किं कुर्वता। दुःखस्यासातस्यानुभवनं साक्षात्करणं तस्मै तदर्थमेव। तादर्थ्ये चतुर्थी। सर्वं भस्म भस्मसादकुर्वताऽघटयता। शरीरव्यतिरेकेण दुःखानुभवाभावादिति भावः। शरीरशोष आर्द्रता न भवतीत्याशयेनाह—**न पुनरिति**। न पुनरार्द्रतां मृदुतां स्नेहवत्तां वाऽत्याक्षीत्तत्याज। आर्द्रतां विशेषयन्नाह—**प्रतीति**। प्रतिक्षणं प्रतिसमयमाधीयमानारोप्यमाणा वृद्धिर्यस्याः सा ताम्। **एवं चेति**। स लोकानां जनानां लोचनानि नेत्राणि तेभ्य आकारमिङ्गितमरक्षद्रक्षयामास। परं कुसुमशरः कामस्तस्य सायका बाणास्तेभ्यो जीवितं प्राणितं नारक्षत्। किंविशिष्टः सः। उपास्यमानोऽपि सेव्यमानोऽपि। केन। मनसिजेन कामेन। किंलक्षणेन। अतिविसंस्थुलेनातिव्याकुलेन। वीक्षापन्नेनेति यावत्। तन्निदानमाह—**निष्प्रतीति**। निर्गता प्रतिक्रिया प्रतीकारो यस्यां क्रियायां तस्या भावस्तत्ता तया। दुःखेन त्यज्यत इति दुस्त्यजस्तस्य भावस्तत्ता तया वा। **तनोरेवेति**। तनोः शरीरस्य तानवं कृशत्वमङ्गीचकार स्वीचक्रे। न लज्जायास्त्रपायाः। लज्जाधिक्यमेवाङ्गीकृतवानिति भावः। **शरीरेति**। शरीरस्य देहस्य स्थितिर्धारणं तस्यामेवानादरणमनाग्रहं कृतवान्। न कुलस्याभिजनस्य स्थितौ मर्यादायाम्। **प्रजा इति**। प्रजा एव प्रकृतिरेवान्वरुध्यत न्यर्वार्यत। न मन्मथस्य कंदर्पस्योत्कलिका उत्कण्ठाः। **सुखमिति**। स चन्द्रापीडः सुखमेव सौख्यमेवावधीरयामासावगणयामास। न धैर्यं न साहसम्। **एवं चेति**। एवं पूर्वोक्तप्रकारेणास्य चन्द्रापीडस्य कादम्बर्या रूपं सौन्दर्यं गुणो गाम्भीर्यादिस्तयोरवष्टम्भेनावलम्बेनाहिताः स्थापिताः प्राणा येनैवंभूतेन बलवता बलिष्ठेनानुरागेणाभ्यन्तरस्नेहेन पुरोऽग्र आकृष्यमाणस्य हठान्नीयमानस्य, गुरुजनो मातृपित्रादिस्तस्य प्रतिबन्धः प्रतिरोधस्तेन दृढतरेणातिनिबिडेन महीयसातिमहता स्नेहेन प्रीत्या च पश्चात्पृष्ठे वार्यमाणस्य पृष्ठे निषिध्यमानस्य। केन कस्येव। चन्द्रमसा शशिना सुदूरमतिविप्रकृष्टमुल्लास्यमानस्यापि गम्भीरप्रकृतेरलब्धमध्यस्य। राजपक्षे गम्भीरस्वभाव-

---

टिप्प०—1 आकारम् आकृतिम्। विरहसूचिकामाकृतिं न प्रकटयामासेति तात्पर्यम्। 2 सेयं टीकाकारस्य बुद्धिः। न किल विरहिणां सेवकभावमङ्गीकरोति कामः। अत एव 'आयास्यमानः' इत्येव पाठः। खेद्यमान इति तदर्थः। 3 अतिविषमेण (दारुणेन) इत्यर्थः। 4 न वराकोऽर्थमबुध्यत। कर्मणि प्रत्ययः. अत एव 'अन्वरुध्यन्त' इत्येव पाठः। चन्द्रापीडेन प्रजा एव अन्वरुध्यन्त अकाम्यन्त अर्थात् प्रजानामेवाऽनुरोधः कृतः, न मन्मथोत्कण्ठानामिति तदाशयः।

---

पाठा०—१ निर्वृतिना. २ दुःखानुभावनायेव. ३ चाति. ४ आयास्यमानोऽपि. ५ कुलक्रमस्थितौ. ६ अन्वरुध्यन्त. ७ कृष्यमाणस्य. ८ गम्भीर.

रमुल्लास्यमानस्यापि मर्यादावशादात्मानं स्तम्भयतः कथंकथमपि कतिपयेष्वपि सहस्रसंख्यायमानेष्वतिक्रान्तेषु वासरेषु, एकदा रणरणकसकाशादिवान्तरलब्धावस्थानो[1] निर्गत्य बहिर्नगर्यास्तरङ्गसङ्गशीतशीकरासारमरुन्ति[2][3] कलक्वणितकलहंसचक्रवाकचक्रवालाक्रान्तसरससुकुमारसैकतानि सिप्रातटान्यनुसरन्, युज्यमानांश्च[4] विरलीभवतश्च संघट्टमानांश्च विश्लिष्यतश्चोत्सहमानांश्च लम्बमानांश्च परापततश्च विच्छिन्नपङ्क्त्यवस्थानान्[5] स्खलतोऽपि पततोऽप्यवसीदतोऽपि च यथाशक्ति सादिभिरुत्पीडितान्निःसहतया दूरागमनखेदमतित्वरया[6] चागमनकार्यगौरवमावेदयतो दूरादेवातिबहूनिव तुरंगमानद्राक्षीत् ।

दृष्ट्वा चोत्पन्नकुतूहलस्तेषां परिज्ञानायान्यतमं पुरुषं प्राहिणोत् । आत्मनाप्यूरुदघ्नेन पयसो-

---

स्य । एवंभूतस्य सरित्पतेः समुद्रस्येव मर्यादावशात् । राजपक्षे कुलक्रमागतस्थितिः । समुद्रपक्षे जलागमनलक्षणा च मर्यादा तद्वशादात्मानं स्वं स्तम्भयतो रक्षतः कथंकथमपि महता कष्टेन कतिपयेषु कियत्सु सहस्रसंख्यायमानेषु सहस्रसंख्यामिवाचरमाणेषु वासरेषु दिवसेष्वतिक्रान्तेषु गतेषु सत्सु एकदा एकस्मिन्समये रणरणकसकाशादिवौत्सुक्यपार्श्वादिवान्तर्मध्येऽलब्धमप्राप्तमवस्थानमवस्थितिर्येनैवंभूतो नगर्या अवन्त्या बहिर्निर्गत्य बहिरागत्य दूरादेव दूरत एवातिबहूनिव तुरंगमानश्वानद्राक्षीदपश्यत् । किं कुर्वन् । तरङ्गाणां वीचीनां सङ्गः संस्पर्शस्तेन शीताः शीतला ये शीकरा वातास्तवारीणि तेषामासारा वर्षणं येष्वेवंविधा मरुतो वायवो येषु तानि । क्वचित् 'सीकरसाराणि' इति पाठः । कलानि मनोहराणि क्वणितानि शब्दितानि येषामेवंविधा ये कलहंसाः कादम्बाश्चक्रवाका द्वन्द्वचरास्तेषां चक्रवालं समूहस्तेनाक्रान्तानि व्याप्तानि सरसानि सजलानि सुकुमाराणि कोमलानि सैकतानि सिकतामयानि सिप्रानद्यास्तटानि तीराण्यनुसरन्नाश्रयन् । तुरंगमान्विशेषयन्नाह—**युज्येति** । युज्यमानान्परस्परं योगं प्राप्नुवतः । अविरला विरलाः संपद्यन्त इति विरलीभवतस्तान् । एकीभवत इत्यर्थः । संघट्टन्ते संयुज्यन्त इति संघट्टमानास्तान् । आस्फाल्यमानानित्यर्थः । **विश्लिष्यत इति** । विश्लिष्यतः । भिन्नीभवत इत्यर्थः । तान् । उत्सहन्त इत्युत्सहमानास्तान् । उत्साहयुक्तानित्यर्थः । लम्बन्त इति लम्बमानास्तान् । स्वशरीरं दीर्घीकुर्वतः । परा सामस्त्येनापतन्त आगच्छन्तस्तान् । विच्छिन्नं विच्छेदं प्राप्तं पङ्क्त्या लेखयावस्थानं येषां ते तथा तान् । धावतां पङ्क्तिविच्छेदः प्रत्यक्षसिद्ध एव । स्खलत इति स्खलतस्तान्स्खलनं प्राप्नुवतः । अत एव पततोऽपि गिरतोऽपि । अत एवावसीदतोऽप्यवसादनं प्राप्नुवतोऽपि । शक्तिमनतिक्रम्य यथाशक्ति सादिभिरश्ववारैरुत्पीडितानुत्प्राबल्येन पीडितांस्ताडितान् । सहनं सहः निर्गतः सहो येभ्यस्ते निःसहास्तेषां भावस्तत्ता तया । असमर्थतयेत्यर्थः । दूरादागमनं तज्जनितो यः खेदः प्रयासस्तमतित्वरयातिशीघ्रेणागमनं तेन यत्कार्यस्य कृत्यस्य गौरवं गुरुत्वं चावेदयतः परेभ्यो ज्ञापयतः ।

**दृष्ट्वा चेति** । दृष्ट्वा विलोक्योत्पन्नं प्रकटीभूतं कुतूहलमाश्चर्यं यस्यैवंभूतस्तेषां तुरंगमाणां परिज्ञानाय कस्येमे इति ज्ञानार्थमन्यतमं पुरुषं प्राहिणोत्प्रहितवान् । ऊरू परिमाणं यस्यैवंभूतेन पयसा जलेनात्मनापि सिप्रानदीमुत्तीर्य तस्मिन्नेव स्थले भगवतो माहात्म्यवतः कार्तिकेयस्य षण्मुखस्यायतने चैत्ये तस्य प्रहितपुरुषस्य

---

**टिप्प०—1** टीकाकारस्य बुद्धिवैभवमेतत् । 'रणरणकवशादिवान्तरलब्धावस्थानः' इत्येत्र पाठः । उत्कण्ठावशादिव अन्तः राजभवनस्याभ्यन्तरे न लब्धमवस्थानं येन । राजभवने स्थातुमशक्नुवन्नित्याशयः । 2 धन्या भाषा ! सत्यावश्यकत्वे अश्यमानानिति वक्तव्यम् ।

---

**पाठा०—**१ अन्तरलब्ध. २ तरङ्गशीत. ३ आकारमरुन्ति; असाराणि. ४ नातिदूरमिव चरणाभ्यामेव बभ्राम । आम्यंश्च रुद्रतनया(सुता) यतनं रयेणागच्छतः सावष्टम्भया गत्या त्वरितखुरसंचारान्युज्यमानांश्च. ५ पङ्क्त्यवस्थानम्; पङ्क्त्यवस्थितान्. ६ दूरगमन.

त्तीर्य सिप्रां तस्मिन्नेव भगवतः कार्तिकेयस्यायतने तत्प्रतिवार्तां प्रतिपालयन्नतिष्ठत् । तत्रस्थश्च कुतूहलात्तस्मिन्नेव वाजिवृन्दे निक्षिप्तदृष्टिः पार्श्वस्थितां हस्तेनाकृष्य पत्रलेखामवादीत्—'पत्रलेखे, पश्य । यँ एष पुर एवार्ककिरणनिवारणोल्लासितया प्रेङ्खदालोललम्बशिखया मयूरपिच्छमय्या वङ्किकया दुर्विभाव्यवदनोऽश्ववारो ज्ञायते, केयूरकोऽयम्' इति । यावत्तया सहैव निरूपयत्येव, तावत्तस्मात्प्रहितपुरुषादुपलब्धाँत्मावस्थानं दृष्टिपथ एवावतीर्य तुरंगमादापतन्तं दूराद्रुतागमनधूलिधूसरश्यामीकृतशरीरं परिवर्तितमिवेतराकारेणोज्झिताङ्गरागसंस्कारमलिनेन वपुषा विषादशून्येन च मुखेनान्तर्दुःखसंभारपिशुनया च दृष्ट्या दूरत एवापृष्टामपि कष्टां कादम्बरीसमामवस्थामनक्षरमावेदयन्तं केयूरकमद्राक्षीत् ।

दृष्ट्वा च दर्शितप्रीतिरेह्येहीत्याहूय ससंभ्रमप्रणतोपसृतमतिदूरप्रसारिताभ्यां दोर्भ्यां पर्य-

---

प्रतिवार्तां प्रत्युत्तरं प्रतिपालयन्विलोकयन्नतिष्ठत्तस्थौ । **तत्रस्थ इति ।** तत्र चैत्ये स्थितश्च कुतूहलात्कौतुकात्तस्मिन्नेव पूर्वप्रतिपादित एव वाजिवृन्देऽश्वसमूहे निक्षिप्ता स्थापिता दृष्टिर्दृग्येनैवंभूतः पार्श्वस्थितां समीपस्थां पत्रलेखां हस्तेन करेणाकृष्याकर्षणं कृत्वावादीदवोचत् । किमवादीदित्याह—**पत्रलेखे इति ।** हे पत्रलेखे, पश्यावलोकय । य एष पुरोऽग्र एवार्ककिरणाः सूर्यरश्मयस्तेषां निवारणे दूरीकरण उल्लासितयोल्लासं प्राप्तया प्रेङ्खन्ती दीप्यन्ती आलोला चञ्चला लम्बायता शिखाग्रं यस्याः सा तथा तया । मयूरपिच्छैः कलापिबर्हैर्निष्पन्ना मयूरपिच्छमयी । 'प्राचुर्यविकारार्थे' इति मयट् । तयैवंविधया वङ्किकया शीकरिण्या दुर्विभाव्यं दुःखेन ज्ञातुं शक्यं वदनमाननं यस्यैवंभूतोऽश्ववारोऽयं केयूरक इति ज्ञायते संभाव्यते । स यावद्यावत्कालं तया सह पत्रलेखया सममेवं निरूपयत्येव कथयत्येव, तावत्कालं तस्मात्प्रहितपुरुषात्प्रेषितनरादुपलब्धं ज्ञातमात्मनः स्वस्यावस्थानमुपवेशनं येनैवंभूतं केयूरकं कादम्बर्या अनुचरमद्राक्षीदपश्यदिति दूरेणान्वयः । किं कुर्वन्तं केयूरकम् । दूरादापतन्तमागच्छन्तम् । किं कृत्वा । अवतीर्यावरोहणं कृत्वा । कस्मात् । तुरंगमादश्वात् । कस्मिन् । दृष्टिपथ एव दृग्विलोकन एव । चन्द्रापीडस्येति शेषः । दृष्टेः पन्था दृष्टिपथः । 'ऋक्पूरब्धूःपथामानक्षे' इत्यच् । इतः केयूरकं विशेषयन्नाह—**द्रुत इति ।** द्रुतं शीघ्रं यदागमनं तेन धूल्या रजसा धूसरमीषत्पाण्डुरमत एव श्यामीकृतं शरीरं यस्य सः । उत्प्रेक्षते—इतरो भिन्नो य आकार आकृतिस्तेन परिवर्तितमिव विनिमयीकृतमिव । उज्झितो दूरीकृतो योऽङ्गरागो विलेपनं संस्कारश्चाधिवासनं ताभ्यां मलिनेन कश्मलेन वपुषा शरीरेण विषादो हर्षाभावस्तेन कृत्वा शून्येन निस्तेजसा मुखेनाननेन चान्तर्मध्ये यद्दुःखमसातं तस्य संभारः समूहस्तस्य पिशुनया ज्ञापिकया दृष्ट्या च चक्षुषा च दूरत एव दूरप्रदेशादेवापृष्टामप्यप्रश्नविषयीकृतामपि कष्टं विद्यते यस्यां सा कष्टा ताम् । अस्त्यर्थेऽच्प्रत्ययः । एवंविधां कादम्बर्याः समां अवँस्थां दशामनक्षरं वाग्व्यापाररहितं यथा स्यात्तथावेदयन्तं ज्ञापयन्तमद्राक्षीदिति । अन्वयस्तु पूर्वमेवोक्तः ।

**दृष्ट्वा चेति ।** दृष्ट्वा च विलोक्य च तं केयूरकं दर्शिता प्रकटिता प्रीतिः स्नेहो येनैवंभूतो दोर्भ्यां भुजाभ्यां पर्यष्वजताश्लिष्यत् । किं कृत्वा । एह्येह्यागच्छेत्याहूयाह्वानं कृत्वा । कीदृशं केयूरकम् । ससंभ्रमेणादरेण प्रणतश्चासावुपसृतश्च तम् । न त्वपसरन्तमित्यर्थः । कथंभूताभ्यां दोर्भ्याम् । अतिदूरं प्रसारिते विस्तारिते ताभ्याम् ।

---

**टिप्प०—**1 छत्रिकया । स्वल्पं छत्रम् । 2 'कादम्बरीसमवस्थाम्' इत्येव पाठः । कादम्बर्याः समवस्थाम् ( अवस्थितिम् ) इति तदर्थः ।

---

पाठा०—१ य एव पुरुषः पुरः. २ छत्रिकया. ३ अवस्थानम्. ४ अपृष्टम्. ५ ससंभ्रमप्रणयप्रणत.

ष्वजत तम् । अपसृत्य पुनः कृतनमस्कारे तस्मिन्ननामयप्रश्नवचसा संवर्ग्य[1] सर्वानेव तत्सहायान्पुरःस्थितं पुनः पुनः सस्पृहमालोक्य केयूरकमवादीत्—'केयूरक, त्वद्दर्शनेनैव भद्रं देव्याः सपरिवारायाः कादम्बर्या इत्येतदावेदितम् । आगमनकारणमपि विश्रान्तः[2] सुखितः कथयिष्यसि' इत्युक्त्वा संभ्रान्तागतारोहकढौकितां करिणीमारुह्य 'कुतोऽस्य जनस्य सुखिता' इत्यभिदधानमेव केयूरकं पृष्ठतः कृत्वा पत्रलेखां चारोप्य स्वभवनमयासीत् । तत्र च निषिद्धाशेषराजलोकप्रवेशः प्रविश्य वल्लभोद्यानं सपरिवारेण केयूरकेण सहोत्ताम्यता चेतसाऽचेतितमेव दिवसकरणीयं निर्वर्तयामास[3] । निर्वर्त्य[4] च पत्रलेखाद्वितीयः सुदूरोत्सारितपरिजनः केयूरकमाहूयाब्रवीत्—'केयूरक, कथय देव्याः कादम्बर्याः समदलेखाया महाश्वेतायाश्च संदेशम्' इत्यभिहितवति चन्द्रापीडे पुरः सप्रश्रयमुपविश्य केयूरकोऽप्यवादीत्[5]—

'देव, किं विज्ञापयामि नास्ति मयि संदेशलवोऽपि देव्याः कादम्बर्याः समदलेखाया

---

**अपसृत्येति** । अपसरणं कृत्वा पुनः कृतो विहितो नमस्कारो नतिर्येनैवंभूते तस्मिन्केयूरके सत्यनामयस्य प्रश्नः पृच्छा तस्य वचस्तेन सर्वानेव समग्रानेव तस्य केयूरकस्य सहायान्सहागतान्संवर्ग्य[1] संतोष्य पुरःस्थितमग्रतः स्थितं पुनः पुनः सस्पृहं साभिलाषमालोक्य समीक्ष्य चन्द्रापीडः केयूरकमवादीदवोचत् । किमवादीदित्याशयेनाह—**केयूरक इति** । हे केयूरक, तव दर्शनालोकनं तेनैव सपरिवारायाः सपरिच्छदाया देव्याः कादम्बर्या भद्रं कल्याणमित्येतदावेदितं कथितम् । **आगमनेति** । स चन्द्रापीडः स्वस्य भवनं गृहमयासीदगच्छदित्यन्वयः । किं कृत्वा । आगमनकारणं निदानं तदपि विश्रान्तः कृतविश्रामः सुखितः संजातसुखः स त्वं कथयिष्यसि निवेदयिष्यसीत्युक्त्वा प्रोच्य । क्वचित् 'सुखी नः कथयिष्यसि' इति पाठो दृश्यते । तेन नः अस्माकमिति तस्यार्थः । पुनः किं कृत्वा । संभ्रान्तः ससंभ्रम आगतो य आरोहको हस्तिपकस्तेन ढौकितामानीतां करिणीं हस्तिनीमारुह्यारोहणं कृत्वा अस्य केयूरकलक्षणस्य जनस्य कुतः कस्मात्सुखिता इत्यभिदधानमिति ब्रुवन्तमेव केयूरकं पृष्ठतः पृष्ठप्रदेशे पत्रलेखां चारोप्यारोपणं कृत्वेत्यर्थः । स्वभवनमयासीदित्यन्वयस्तु प्रागेवोक्तः । **तत्र चेति** । स चन्द्रापीडो दिवसकरणीयं वासरकृत्यं निर्वर्तयामास कृतवान् । किं कृत्वा । सह परिवारेण परिच्छदेन वर्तते यः स सपरिवारः एवंभूतेन केयूरकेण सह समं वल्लभमुद्यानमारामं प्रविश्य प्रवेशं कृत्वा । किंलक्षणः सः । निषिद्धो निवारितोऽशेषाणां समग्राणां राजलोकानां प्रवेशो येन सः । कीदृशं दिवसकरणीयम् । उत्ताम्यतातिव्याकुलेन चेतसाऽचेतितमेवाज्ञातमेव । **निर्वर्त्य चेति** । स चन्द्रापीडः केयूरकमाहूयाह्वानं कृत्वाब्रवीदवोचत् । किं कृत्वा । निर्वर्त्य विधाय । दिवसकरणीयमिति शेषः । चन्द्रापीडं विशेषयन्नाह—**पत्रलेखेति** । पत्रलेखैव द्वितीया यस्य सः । सुदूरं दूरं उत्सारितो दूरीकृतः परिजनः सेवकवर्गो येन सः । किमब्रवीदित्याशयेनाह—**केयूरक इति** । हे केयूरक, देव्याः कादम्बर्याः समदलेखाया मदलेखया सह वर्तमानायाः । कादम्बर्या विशेषणम् । महाश्वेतायाश्च संदेशं वाचिकं कथय निवेदयेति चन्द्रापीडेऽभिहितवति कथितवति सति पुरोऽग्रे सप्रश्रयं सविनयमुपविश्य निषद्य । केयूरकोऽप्यवादीदुवाच ।

किमुवाचेत्याह—**देव इति** । देव, किं विज्ञापयामि किं विज्ञप्तिं करोमि । यदादिष्टं तदेव वदेत्याह—**नास्तीति** । मयि विषये देव्याः कादम्बर्याः समदलेखाया महाश्वेताया वा संदेशलवोऽपि वाचिकादेशोऽपि

---

**टिप्प०**—1 नेयं गुम्फनशय्या कवेः । अत एव 'संवर्ध्य' ( समादृत्य ) इत्येव पाठः ।

---

**पाठा०**—१ संवर्ध्य; समावर्ज्य. २ विश्रान्तसुखितः. ३ निवर्तयामास. ४ निवर्त्य. ५ अगादीव.

महाश्वेताया वा । यदैव पत्रलेखां मेघनादाय समर्प्य[1] प्रतिनिवृत्य[2] मयायं देवस्योज्जयिनी-गमनवृत्तान्तो निवेदितः, तदैवोर्ध्वं विलोक्य दीर्घमुष्णं च निःश्वस्य सनिर्वेदम् 'एवमेतत्' इत्युक्त्वोत्थाय महाश्वेता पुनस्तपसे स्वमेवाश्रमपदमाजगाम । देव्यपि कादम्बरी झटिति हृदये द्रुघणेनेवा[3]भिहता ह्यतर्कितापतिता[4]शनिनेव मूर्ध्नि ताडिता, अन्तःपीडाकूणननिमीलितेन[5] चक्षुषा मूर्च्छितेव, मुषितेव, परिभूतेव, वञ्चितेव च, उन्मुक्तेव[6] चान्तःकरणेन, अविदित-महाश्वेतागमनवृत्तान्ता, चिरमिव स्थित्वोन्मील्य नयने, विलक्षेव, लज्जितेव[7], विस्मृतेव, विस्मयस्तब्धदृष्टिः 'महाश्वेतायाः कथय' इति सासूयमिव मामादिश्य, मदलेखायां पुनर्वलि-तमुखी सविलक्षस्मितम् 'मदलेखे, अस्ति केनचिदपरेणैतत्कृतं करिष्यते वा यत्कुमारेण चन्द्रापीडेन' इत्येवमभिदधत्युत्थाय निवारिताशेषपरिजनप्रवेशा शयनीये निपत्योत्तरवाससोत्त-माङ्गमवगुण्ठ्य निर्विशेषहृदयवेदनां मदलेखामप्यनालपन्ती सकलमेव तं दिवसमस्थात् ।

परेद्युश्च[8] प्रातरेवोपसृतं माम् 'एवं दृढतरशरीरेषु[9] म्रियमाणेष्विव[10] भवत्स्वहमीदृशीमव-

---

नास्ति न विद्यते । तन्निदानमाह—**यदैवेति** । यदैव यस्मिन्नेव क्षणे पत्रलेखां मेघनादाय समर्प्य समर्पणं कृत्वा प्रतिनिवृत्य परावृत्य मया केयूरकेण देवस्य भवत उज्जयिन्यामवन्त्यां यद्गमनं तस्य वृत्तान्त उदन्तो निवेदितः कथितः, तदैव तस्मिन्नेव क्षण ऊर्ध्वं विलोक्य निरीक्ष्य दीर्घमायतमुष्णं च निःश्वस्य निःश्वासं मुक्त्वा सनिर्वेदं स्वावमाननसहितं यथा स्यात्तथा । एतदेवमेव निश्चयेन चन्द्रापीडो गत इत्युक्त्वोत्थानं कृत्वा महाश्वेता पुनस्त-पसे तपोऽर्थं स्वमेवात्मीयमेवाश्रमपदं स्थानमाजगामाययौ । कादम्बर्यपि सकलमेव तं दिवसमस्थादतिष्ठदिति दूरेणान्वयः । इतः कादम्बरीं विशेषयन्नाह—झटिति तत्कालं हृदये स्वान्ते द्रुघणेन घनेनाभिहतेव ताडितेव । अतर्कितमचिन्तितमापतितो योऽशनिर्वज्रं तेन मूर्ध्नि मस्तके ताडितेवाभिहतेव । अन्तःपीडा मानसी व्यथा तया कूणनं क्रन्दनं तेन निमीलितेन मुद्रितेन चक्षुषा नेत्रेण मूर्च्छितेव मोहं प्राप्तेव । मुषितेव गृहीतसर्वस्वेव । परिभूतेव पराभवं प्रापितेव । वञ्चितेव वञ्चनाविषयीकृतेव । अन्तःकरणेन चित्तेनोन्मुक्तेव त्यक्तेव । अविदितोऽज्ञातो महाश्वेताया गमनवृत्तान्तो यया सैवंभूता कादम्बरी चिरमिव बहुकालमिव स्थित्वा नयने नेत्रे उन्मील्योन्मुद्य, विलक्षेव वीक्षापन्नेव, लज्जितेव त्रपितेव, विस्मृतेव विस्मरणं प्राप्तेव, विस्मय आश्चर्यं तेन स्तब्धा दृष्टिर्यस्या एवंभूता महाश्वेतायाः कथय निवेदय । चन्द्रापीडो गत[2] इति शेषः । इति सासूयं सेर्ष्यं मामादिश्य प्रतिपाद्य, मदलेखायां विषये पुनर्वलितं मुखं यस्या एवंविधा सती विलक्षं यत्स्मितं तेन सह वर्तमानं यथा स्यात्तथा हे मदलेखे, केनचिदनिर्दिष्टनाम्ना परेणैतद्गमनलक्षणं कृतमस्ति । करिष्यते वा यत्कुमारेण चन्द्रापीडेन कृतमिति । एवमभिदधती कथयन्त्युत्थायोत्थानं कृत्वा निवारितो दूरीकृतोऽशेषपरिजनस्य समग्रसेवकलोकस्य प्रवेशो यया सा शयनीये शय्यायां निपत्य पतनं कृत्वोत्तरवाससोत्तरीयवस्त्रेणोत्तमाङ्गं शिरोऽवगुण्ठ्याच्छाद्य निर्गतो विशेषो यस्या एवंविधा हृदयवेदना चित्तपीडा यस्यास्ताम् । समानदुःखामित्यर्थः । एवंभूतां मदलेखामप्यना-लपन्त्यभाषयन्ती सकलमेव तं दिवसमस्थादित्यन्वयस्तु प्रागेवोक्तः ।

**परेद्युश्चेति** । अपरदिने प्रातरेव प्रभात एवोपसृतमागतं मामित्युपालभमानेवोपालम्भं ददानेव । इतीति किम् । एवं पूर्वोक्तप्रकारेण दृढतरमतिशयेन कठिनं शरीरं येषामेवंभूतेषु भवत्सु केयूरकप्रभृतिषु । उत्प्रेक्षते—म्रियमाणेष्वि[3]व मरणं प्राप्यमाणेष्विवाहं कादम्बरीदृशीमवस्थां दशामनुभवाम्यनुभवविषयीकरोमि । पार्श्ववर्तिभिः

---

**टिप्प०—1** अप्रतिभेव । 2 महाश्वेतायाः कारणादेव ममेयं दशा, यतस्तयैव कुमारोऽत्रानीतः । अत-एव तस्यै ममेमां दशां निवेदयेति सासूयमुच्यते । टीकाकारस्तु न बुद्धवानाशयम् । 3 आम्यप्रियोयं पाठः । न हि कविरेवमश्लीलं लपेत् । अतो 'ध्रियमाणेष्वेव' इत्येव पाठः । अर्थात् भवत्सु वर्तमानेष्वेव ।

---

**पाठा०—१** समर्प्यागतेन. २ प्रतिनिवर्त्य. ३ अयोघनेन. ४ शुष्काशनिना. ५ मिलितेन. ६ उन्मत्ता. ७ लक्षि-तेव. ८ अपरेद्युः. ९ दृढशरीरेषु. १० म्रियमाणेष्विव.

स्थामनुभवामि' इत्युपालभमानेव, 'न मे भवद्भिः पार्श्ववर्तिभिः कार्यम्' इति निर्भर्त्सयन्तीव 'किं मे पुरस्तिष्ठसि' इत्यन्तर्मन्युवेगेन तर्जयन्तीव च बाष्पपूरोद्रेकोत्कम्पपर्याकुलया दृष्ट्या चिरमालोकितवती । तया दृष्टश्च[1] तथादुःखितया देव्यादिष्टमेव गमनायात्मानं मन्यमानोऽहमनिवेद्यैव देव्यै देवपादमूलमुपागतोऽस्मि । तच्च देवैकशरणजनजीवितपरित्राणाकुलमतेः केयूरकस्य विज्ञापनाकर्णनावधानदानेन प्रसादं कर्तुमर्हसि[2] ।

देव, श्रूयताम् । यदैव ते प्रथमागमनेनामोदिना मलयानिलेनेव चलितं समस्तमेव तत्कन्यकालतावनम्, तदैव सकलभुवनमनोभिरामं भवन्तमालोक्य वसन्तमिव, रक्ताशोकतरुलतामिवारूढवान्मकरकेतनस्ताम् । इदानीं तु महान्तमायासमनुभवति त्वदर्थे कादम्बरी । तस्या[3] हि दिनकरोदयादारभ्य दिवसकरकान्तोपलानलस्येव निःशब्दस्यापवनेरितस्याधूमस्याभस्मनः प्रज्वलतो मकरध्वजहुतभुजो न परिजनकरकमलकलितकोमलपल्लव-

---

समीपस्थायिभिर्भवद्भिर्मे मम न कार्यं न कृत्यमिति निर्भर्त्सयन्तीव निर्भर्त्सनां कुर्वन्तीव । मे मम पुरोऽग्रे किं तिष्ठसीत्यन्तर्मन्युवेगेनान्तःक्रोधरयेण तर्जयन्तीव तर्जनां कुर्वन्तीव । तथा बाष्पो नेत्राम्बु तस्य पूरः प्रवाहस्तस्योद्रेक आधिक्यं तेन य उत्प्राबल्येन कम्पो वेपथुस्तेन पर्याकुला व्याप्ता तया दृष्ट्या दृशा चिरं बहुकालमालोकितवती निरीक्षितवती । तथादुःखितया तेन प्रकारेण दुःखं प्राप्तया देव्या कादम्बर्या दृष्टोऽवलोकित आत्मानं गमनायादिष्टमेवाज्ञापितमेव मन्यमानोऽहं देव्यै कादम्बर्यै अनिवेद्यैवाननुज्ञाप्यैव देवस्य भवतः पादमूलं चरणसमीपमुपागतोऽस्म्यायातोऽस्मि । **तच्चेति** । तत्तस्मात्कारणाद्देव एव भवानेवैकः शरणं यस्यैवंविधो यो जनः कादम्बरीलक्षणस्तस्य जीवितं प्राणितं तस्य परित्राणं रक्षणं तस्मै आकुला मतिर्यस्यैवंभूतस्य केयूरकस्य विज्ञापना विज्ञप्तिस्तस्या आकर्णनं श्रवणं तस्मिन्नवधानदानेन चित्तप्रदानेन प्रसादं कर्तुं त्वं देवोऽर्हसि योग्यो भवसि ।

हे देव, श्रूयतामाकर्ण्यताम् । विज्ञप्यन्तरमिति शेषः । यदैव यस्मिन्नेव क्षणे ते तव प्रथमागमनेनाद्यागमनेन । उत्प्रेक्षते—आमोदिना[1] सुगन्धिना मलयानिलेनेव मलयमारुतेनेव समस्तमेव समग्रमेव तत्कन्यकालतावनं कन्यका एव लतास्तासां वनं चलितं क्षुब्धम्, तदैव तस्मिन्नेव क्षणे सकलं यद्भुवनं जगत्तस्य मनोभिरामं चेतोरुचिरं वसन्तमिव भवन्तं त्वामालोक्य निरीक्ष्य रक्ता याऽशोकतरुलता तामिव तां कादम्बरीं मकरकेतनः कंदर्प आरूढवान्प्रविष्टवान् । **इदानीं त्विति** । सांप्रतं तु तवार्थः प्रयोजनं तस्मिन् । निमित्ते सप्तमी । तथाच त्वन्निमित्तं कादम्बरी महान्तमायासं श्रममनुभवति । करोतीत्यर्थः । **तस्या इति** । हीति निश्चये । तस्याः कादम्बर्या दिनकरस्य सूर्यस्योदय उद्गमनं तस्मादारभ्य । तन्मर्यादीकृत्येत्यर्थः । दिवसकरकान्तोपलो दृषत्तस्यानलो[2] वह्निस्तस्येव मकरध्वज एव हुतभुग्वह्निस्तस्य प्रज्वलतो दीप्तिमतः परिजनः सेवकवर्गस्तस्य करा एव कमलानि[3] तैः कलिता धृता ये कोमलपल्लवा मृदुकिसलयानि तेषां लास्यलीला नृत्यक्रीडा तया न प्रसरभङ्गो न प्रचारहानिः । उभयानलयोः साम्यं प्रदर्शयन्नाह—**निःशब्दस्येति** । निर्गतः शब्दो ध्वनिविशेषो यस्मात्स तस्य, अपवनेरितस्य न पवनेन वायुनेरितः प्रेरितस्तस्य । अधूमस्य न विद्यते धूमो दहनकेतनो यस्मिन्स तस्य । अभस्मनो न विद्यते भस्म भूतिर्यस्मिन्स तस्य । एतेन सूर्यकान्तानलेन निःशब्दत्वादिधर्मैः साम्यं

---

**टिप्प०—1** मलयानिलेन आमोदिना सुगन्धिना, भवदागमनेन आमोदिना हर्षजनकेन, 'प्रमोदामोदसंमदाः' इत्यमरः । 2 सूर्यस्पर्शेनाग्निजनकः सूर्यकान्तमणिः । 3 परिजनहस्तेषु कमलत्वारोपणं बाणपुत्रस्य स्थूलतैव ।

---

**पाठा०—१** दृष्टश्च तथा दुःखितया; दृष्टश्च दुःखितया. २ अर्हति देवः । देव श्रूयताम्. ३ तथाहि.

लास्यलीलया प्रसरभङ्गः । नानुत्तालतालवृन्तवान्तजलजडकणिकासारसेकेन निवृत्तिः[1] । न सरसहरिचन्दनपङ्कच्छटाच्छुरणेन छेदः । न विदलितमुक्ताफलवालुकापटलोद्धूलनेन[2] व्युपरमः । नोत्कीलितयन्त्रमयकलहंसपङ्क्तिमुक्ताम्बुधारेण धारागृहेण प्रशमः । यथा यथा चलितजलयन्त्रविगलिताभिरतिशिशिरशीकरनिकरतारकिताभिरम्बुधाराभिराहन्यते तथा तथा वैद्युतानलसहोदर इव स्फुरति मदनपावकः । सुतरां च शिशिरः कुन्दकलिकाकलापमञ्जरीमिव विकासयति स्वेदजललवजालकसंततिमुपचारः । चित्रं चेदम् । मकरकेतुहुतभुजा दह्यमानमप्यग्निशौचमंशुकमिव नितरां निर्मलीभवति लावण्यम् । मन्ये च मृदुस्वभावमपि जलमिव मुक्ताफलतामुपगतं कठिनीभवत्युत्कण्ठितं हृदयमबलाजनस्य, यत्तादृशेनातिसंतापेनापि न विलीयते । बलवती खलु वल्लभजनसंगमाशा, यत्तथाविधमप्यनुभववेदनाविह्वलितप्राणमति-

---

शीतलद्रव्यादिना तदितरवह्नेरेतस्य भिन्नत्वमाविष्कृतमिति भावः । नानुत्तालानि यानि तालवृन्तानि व्यजनानि तेभ्यो या वान्ताः पतिता जलस्य जडाः शीतलाः कणिकास्तासामासारो वर्षणं तेन सेकः सिञ्चनं तेन निवृत्तिर्नाशः । अस्य मकरध्वजहुतभुज इति पूर्वेणान्वयः । **न सरसेति** । सरसो यो हरिचन्दनपङ्को घर्षितश्चन्दनद्रवस्तस्य छटया धारया छुरणं सिञ्चनं तेन न छेदो विनाशः । **विदलित इति** । न च विदलितानि स्फोटितानि यानि मुक्ताफलानि मौक्तिकानि तेषां वालुकाः सिकतास्तासां पटलानि समूहास्तैरुद्धूलनमुद्वर्तनं तेन व्युपरमो निवृत्तिः । **नोत्कीलित इति** । न चोत्कीलिता उत्कोरिता या यन्त्रमया यन्त्रनिष्पन्नाः कलहंसपङ्क्तयः कादम्बश्रेणयस्ताभिर्मुक्ता अम्बुधारा यस्मिन्नेवंभूतेन धारागृहेण यन्त्रधारासदनेन प्रशमः प्रशमनम् । **यथा यथेति** । इयं कादम्बरी यथा यथा अम्बुनोऽम्भसो धाराभिराहन्यत आच्छोट्यते, तथा तथा मदनपावकः कंदर्पवह्निः स्फुरति दीप्तिमान्भवति । किंलक्षणो मदनवह्निः । उत्प्रेक्षते—विद्युतोऽयं वैद्युतः स चासावनलश्च तस्य सहोदर इव बन्धुरिव । किंलक्षणाभिरम्बुधाराभिः । चलितं कम्पितं यज्जलयन्त्रं ततो विगलिताभिः पतिताभिः । पुनः किंलक्षणाभिः । अत्यन्तं शिशिरः शीतलो यः शीकरनिकरो वाताक्षिप्तजलकणसमूहस्तेन तारकिताभिर्नक्षत्रिताभिः । **सुतरां चेति** । उपचारः प्रतिक्रिया स्वेदस्य घर्मस्य जललवा अम्भःकणास्तेषां जालकानि युगपदनेकेषां पातलक्षणानि तेषां संततिः समूहस्तां विकासयति प्रगुणीकरोति । तद्वुष्णो भविष्यतीत्याशयेनाह—**सुतरां चेति** । सुतरामतिशयेन शिशिरः शीतलः । अधिकविरहिणो विधुरपि सवितरतीत्यादिवदेतस्याः शिशिरोऽप्युपचारोऽधिकतर उष्णो बभूवेत्यर्थः । कीदृशीं संततिम् । कुन्दस्य कुसुमं कुन्दः पुष्पवृक्षो वा तस्य कलिकाः कोरकास्तासां कलापः समूहस्तस्य मञ्जरीमिव । वर्णनीयाया जललवसंततेः कुन्दकलिकाकलापमञ्जरीसदृशसंभावनयोत्प्रेक्षालंकारः । तदुक्तम्—'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति काव्यप्रकाशे । **चित्रमिति** । इदं चित्रमाश्चर्यम् । इदं किम् । मकरकेतुरेव हुतभुग्वह्निस्तेन दह्यते ज्वाल्यत इति दह्यमानं ज्वाल्यमानमपि लावण्यं सौन्दर्यं नितरामतिशयेन निर्मलीभवति विशदीभवति । कीदृशं लावण्यम् । उत्प्रेक्षते—अग्निना शौचं शुद्धमंशुकं वस्त्रमिव । **मन्य इति** । अहमिति मन्ये जाने । इतीति किम् । अबलाजनस्य स्त्रीजनस्य मृदुस्वभावमपि कोमलमप्युत्कण्ठितं हृदयं मुक्ताफलतामुपगतं मौक्तिकत्वं प्राप्तं जलमिव पानीयमिव कठिनीभवति । दृढीभवति । यदिति हेत्वर्थे । यतो हेतोस्तादृशेनातिसंतापेनापि न विलीयते न विलयं गच्छति । **बलवतीति** । खलु निश्चयेन वल्लभः प्रियो यो जनस्तस्य संगमो मेलापकस्तस्याशा वाञ्छा बलवती बलीयसी । यद्यस्मात्कारणात्तथाविधो योऽनुभवः साक्षात्कारस्तेन या वेदना पीडा तया विह्व-

---

**टिप्प०—1 अग्निना शौचं शुद्धिर्यस्य ईदृशमिति वाच्यम् ।**

---

पाठा०—१ नियृत्तिः, निर्वृतिः. २ उद्धूननेन. ३ दन्त. ४ कलापि. ५ प्राणाम्.

**कष्टं प्राण्यते । किं करोमि, कथय कथं कथ्यते, कया वृत्त्या वर्ण्यते, कीदृशेनोपायेन प्रदर्श्यते, केन प्रकारेणावेद्यते, कया युक्त्या प्रकाश्यते, कतमया वेदनयोप[1]नीयते । त[2]दुत्कण्ठास्वप्नेषु विग[3]लितवेदनाः स्फुटं प्राणिन[4]ः, प्रतिदिवसं दृश्यमानोऽपि यन्न पश्यसि ता[5]मीदृशीमवस्थाम् । प्रचण्डकि[6]रणसहस्रातपसहानि कमलानि शयनीकृतानि म्लानिमुपनयन्त्या दिवसकरमूर्तिरपि निर्जिता तया निजोष्मणा ।**

**निष्करुणेन चाकारणवामेन[7] कामेन मर्थ्यमानास्तास्ताश्चेष्टाः करोति । तथा हि । सासोढमदनवेदने, त्वमतिकठिने मनसि निवससि' इति मृदुनि कुसुमशयने कथमपि सखी-**

---

लिताः प्राणा यत्रेति क्रियाविशेषणम् । अतिकष्टं मया प्राण्यते जीव्यते । **किं करोमीति** । प्रतिदिवसं प्रतिवासरं दृश्यमानोऽपि साक्षात्क्रियमाणोऽपि तामीदृशीं पूर्वव्यावर्णितामवस्थां दशां यन्न पश्यसि यन्न जानासि तत्कथय ब्रूहि । किं करोमि किं कुर्वे । कथं कथ्यते केन प्रकारेण भण्यते । कया वृत्त्या आरभट्यादिकया वर्ण्यते वर्णनाविषयीक्रियते । कीदृशेनोपायेन सामादिना प्रदर्श्यते दृग्विषयीक्रियते । केन प्रकारेणावेद्यते निवेद्यते । कया युक्त्या युक्तिरुपपत्तिस्तया केन हेतुना वा प्रकाश्यते प्रकटीक्रियते । कतमया कतरया वेदनया ज्ञानेनोप[2]नीयते प्राप्यते । निश्चयकोटिमिति शेषः । यदातु 'उपमीयते' इति पाठस्तदा कतमया वेदनया पीडयोपमां प्राप्यत इत्यर्थः । दृश्यमानोऽपि न पश्यसीति तस्य वैगुण्यं परिजिहीर्षुराह—**तदुत्कण्ठेति** । तदुत्कण्[3]ठालक्षणेषु स्वप्नेषु निद्रादृष्टान्तःकरणजन्येषु ज्ञानेषु विगलितवेदना विगतदुःखाः स्फुटं प्रकटं प्राणिनोऽसुमन्तः स्युः । तेन त्वमप्युत्कण्ठानिद्रां प्राप्तो विगतवेदनो जानन्नपि न जानासीति फलतीत्यर्थः । **प्रचण्डेति** । प्रचण्डानि तीव्राणि यानि किरणसहस्राणि तेषामातपो वर्चस्तं सहन्त इत्येवंभूतानि शयनीकृतानि शय्यीकृतानि कमलानि पद्मानि म्लानिं ग्लानिमुपनयन्त्या प्रापयन्त्या तया कादम्बर्या निजोष्मणा स्वकीयतापेन दिवसकरमूर्तिरपि दिवसकरबिम्बमपि निर्जिता तिरस्कृता ।

तथा निष्करुणेन निर्दयेनाकारणवामेन निर्हेतुकप्रतिकूलेन । अर्थात्कामेन मथ्यमाना विलोड्यमानास्तास्ताश्चेष्टाः कायव्यापाररूपाः करोति निर्मिमीते । तदेव दर्शयति—**तथा हीति** । सासोढा मदनस्य कंदर्पस्य वेदना पीडा यया तस्याः संबोधनं हे सासोढमदनवेदने । अतिकठिनेऽतिकर्कशे मनसि चित्ते । चन्द्रापीडस्येति शेषः । त्वं निवसस्यवतिष्ठसीति कृत्वा मृदुनि सुकुमारे कुसुमशयने पुष्पशय्यायां सखीजनेन कथमपि महता कष्टेन

---

**टिप्प०**—1 पुनः प्रमादः । केयूरकस्य सेयमुक्तिः, अत एव 'तया' इत्युचितम् । 2 'उपमीयते' इत्येव पाठः । 'उपनीयते' इति तु श्रवणेप्यसमञ्जसम् । 3 हन्त ! किमकाण्डे प्रलपति महाभागः । उत्कण्ठालक्षणः स्वप्नः ? कोऽस्यार्थः ? अस्तु. सर्वमिदमज्ञानम् 'कतमया वेदनयोपमीयते । बलवती तदुत्कण्ठा । स्वप्नेषु विगलितचेतनाः स्फुटं प्राणिनः ।' इति पाठः । 'स्वप्ने दृश्यमानोपि तद्वेदनां न दूरीकर्तुमिच्छसि' । इति शङ्कायाः परिहारार्थमाह—स्वप्नेषु (दृश्यमानाः) प्राणिनः स्फुटं विगलितचेतनाः चैतन्यविहीना भवन्ति । यतो हि प्रतिदिनं दृश्यमानोपि तस्यास्तादृशीमवस्थां न पश्यसि । यदि चैतन्यं स्यात्तर्हि अवश्यं तस्या दुर्दशां पश्येः इत्यर्थः । किन्तु टीकाकारचूडामणिः 'बलवती तदुत्कण्ठा' एतद्घटितमुत्कण्ठापदं 'स्वप्नेषु विग०' इत्यग्रिमवाक्यस्थेन 'स्वप्नेषु' इत्यनेन संयोज्य 'उत्कण्ठास्वप्नेषु' इति पदमाविष्कुर्वन्नलौकिकं तद्व्याख्यानमाह । भाग्यं नः ? 4 सासोढेति प्रलापस्य कोर्थः ? अस्तु. अत्रापि ग्रन्थचूर्णीकरणम् । सोढा मदनवेदना येन तादृशे । अत एव अतिकठिने मनसि ( चन्द्रापीडस्य ) वससि । ततश्च कठिनस्थले निपतितत्वात्ते पीडा स्यादिति सखीभिः सा मृदुनि कुसुमशयने पात्यते । सोढमदनवेदने ( सप्तम्येकवचनम् ) सा इत्यनयोर्योगेन 'सासोढमदनवेदने !' इति संबोधनजन्म ।

---

**पाठा०**—१ उपमीयते. २ बलवती तदुत्कण्ठा स्वप्नेषु. ३ विगलितचेतनाः. ४ प्रतिदिनम्. ५ तादृशीम्. ६ दिनकरकिरण. ७ वामनेन. ८ कथ्यमानाः.

जनेन पात्यते । कुसुमशयनगता च संतापगलितचरणतलालक्तकलवपाटलितैश्च शय्याकुसुमैः कुसुमशरेण शरतामुपनीतैः सरुधिरैरिव हृदयात्पतितैर्भयमुपजनयति । सर्वाङ्गीणमनङ्गशरनिवारणाय कवचमिव भवदनुस्मरणरोमाञ्चमुद्वहति । रोमाञ्चिनि कुचयुगले श्वासगलितमंशुकं निदधाना त्वत्पाणिग्रहणतृष्णया कण्टकशयनव्रतलीलामिव दक्षिणकरकमलमनुभावयति । वामं तु वामकपोलभरजडाङ्गुलिमुल्लसत्पद्मरागवलयप्रभांशुरज्यमानं ज्वलितमदनहुताशनविप्लुष्यमाणमिव हस्तकमलं विधुनाति । नलिनीदलव्यजनपवनविक्षिप्यमाणकर्णकुवलयं वदनमजस्रस्रवदश्रुभयपलायमानलोललोचनमिव बिभर्ति । प्रतिक्षणं क्षामतां व्रजन्ती न केवलं मङ्गलवलयम्, पतनभयेन दोलायमानं हृदयमपि मुहुर्मुहुः पाणिपल्लवेनारुणद्धि । शिशिरवारिक्षोदक्षरिण्या लीलाकमलमालिकयेव वपुषि निहितया सखीजनहस्तपरम्परया परिक्ला-

---

पात्यते शयनं कार्यते । च पुनरर्थे । कुसुमशयनगता पुष्पशय्यां प्राप्ता कादम्बरी तस्याः संतापेन गलितो यश्चरणतलालक्तकः पादतलयावकरसस्तस्य लवो लेशस्तेन पाटलितैः श्वेतरक्तीभूतैः शय्याकुसुमैः शयनीयपुष्पैः कुसुमशरेण कामेन शरतां बाणतामुपनीतैः प्रापितैः सरुधिरैः सशोणितैर्हृदयात्पतितैरिव स्रस्तैरिव भयं भीतिमुपजनयत्युत्पादयति । **सर्वाङ्गीणमिति** । सर्वाङ्गीणं समग्रदेहव्यापिनं भवतस्तवानुस्मरणमनुचिन्तनं तस्माद्यो रोमाञ्चो रोमोद्गमस्तमनङ्गस्य कंदर्पस्य शरा बाणास्तेषां निवारणं दूरीकरणं तदर्थं कवचमिव संनाहमिवोद्वहति धारयति । या रोमाञ्चिनि रोमोद्गमवति कुचयुगले पयोधरयुगे श्वासेन निःश्वासेन गलितं स्रस्तं यदंशुकं वस्त्रं निदधाना स्थापयन्ती तव पाणिग्रहणस्य तृष्णया वाञ्छया कण्टकशयनमेव व्रतं तस्य लीलामिव दक्षिणकरकमलमपसव्यपाणिपद्ममनुभावयत्यनुभवविषयीकरोति । **वामं त्विति** । वामभागवर्ती यः कपोलो गल्लोपरप्रदेशस्तस्य भरो भारस्तेन जडाः स्तब्धा जाता अङ्गुलयो यस्यैवंभूतमुल्लसद्विकसत्पद्मरागवलयं लोहितककटकं तस्य प्रभाया अंशवः किरणास्तै रज्यमानं रक्तीक्रियमाणं । ज्वलितो यो मदन एव हुताशनो वह्निस्तेन विप्लुष्यमाणमिव प्रज्वाल्यमानमिव वामं हस्तकमलं करकमलं विधुनाति कम्पयति । 'धूञ् कम्पने' स्वादिः क्र्यादिश्च । एतेन सात्त्विकभाव उक्तः । स्वभावोक्तिं वर्णयन्नाह—**नलिनीति** । नलिन्याः कमलिन्या दलानि पत्राणि तेषां व्यजनं तालवृन्तं तस्य पवनो वायुस्तेन विक्षिप्यमाणमितस्ततः क्रियमाणं कर्णयोः श्रवणयोः कुवलयं कुवलयपत्रं यस्मिन्नेवंभूतं वदनं मुखमजस्रं निरन्तरं स्रवत्क्षरद्यदश्रु नेत्राम्बु तस्माद्यद्भयं भीतिस्तेन पलायमानं नश्यमानं लोललोचनमिव तरलनयनमिव बिभर्ति धारयति । प्रतिक्षणं अनुक्षणं क्षामतां शरीरकृशतां व्रजन्ती कादम्बरी, तव विरहेणेत्यर्थः । न केवलं मङ्गलवलयं सौभाग्यकटकं पतनभयेन हस्ताच्च्युतिभीत्या दोलावच्चंचलत्वमाचरन्तं किन्तु हृदयमपि स्वान्तमपि मुहुर्मुहुर्वारंवारं पाणिपल्लवेन करकिसलयेनारुणद्ध्यावरणं करोति । करपल्लवे मुखस्य हृदये च करस्य व्यवस्थापनम् । विरहिजनस्वभावोऽयमिति भावः । **शिशिरेति** । शिशिरं शीतलं यद्वारि जलं तस्य क्षोदः पृषत्तं क्षरतीत्येवंशीलया वपुषि शरीरे निहितया स्थापितया सखीजनस्य हस्तपरम्परया पाणिश्रेण्या । क्षरद्वारिसाम्याद्युत्प्रेक्ष्यते—लीलायै क्रीडार्थं कमलानां पद्मानां मालिकयेव परिक्लाम्यति । ग्लानिं प्राप्नोतीत्यर्थः ।

---

**टिप्प०—1** अश्रुभयेन पलायमाने अर्थात् पलायनोद्यते अत एव लोले चञ्चले लोचने यस्मिन् तादृशम् । लोलतायां अश्रुभयस्य हेतुत्वमुत्प्रेक्ष्यते । अयमाशयो ज्ञेयः ।

---

पाठा०—१ सखीनां सर्वाङ्गीणम्. २ तृषया. ३ दक्षिणं. ४ अनुभवति. ५ भरसजलाङ्गुलिम्. ६ विधुनोति. ७ कुवलयदलं. ८ रुणद्धि.

म्यति। तथा च चरणयुगलेन रसनाकलापम्, नितम्बविस्तारेण मध्यम्, संगमाशया हृदयम्, हृदयेन भवन्तम्, उरसा बिसिनीपलाशप्रावरणम्, कण्ठेन जीवितम्, करकमलेन कपोलपालीम्, त्वदालापेनाश्रुपातम्, ललाटफलकेन चन्दनलेखिकाम्, अंसेन वेणीमधुना धारयति। त्वद्दिदृक्षया विघटमानं हृदयमभिवाञ्छति। गोत्रस्खलनेनेव जीवितेन लज्जते। प्रियसख्येव मूर्च्छया मनसि मुहुर्मुहुः स्पृश्यते। परिजनेनेव च रणरणकेन मदनपरवशा कुसुमशयनादुत्थाप्यते। परिचारिकयेवार्त्या स्रस्ताङ्गी संचार्यते। मुहुः पवनप्रेङ्खोलितमुत्कण्ठाव्यजनपल्लवभङ्गभयकम्पितमिव लतामण्डपमधिवसति। मुहुः सत्कोशकलिकं बिसवलयसंरक्षणरचिताञ्जलिपुटमिव स्थलकमलिनीवनमधिशेते। मुहुरुद्बन्धनभयादिव निरन्तरकिस-

---

एतेन विरहाधिक्यमाविष्कृतम्। तदेव प्रपञ्चयन्नाह—**तथा चेति**। अधुना सांप्रतं चरणयुगलेन पादयोर्युग्मेन रसनाकलापं कटिमेखलां धारयति धत्ते। एतेन कटिप्रदेशस्य कृशत्वमाविष्कृतम्। **नितम्बेति**। नितम्ब आरोहस्तस्य विस्तारेण विष्कम्भेन मध्यं विलग्नम्। धारयतीत्यस्य सर्वत्रानुषङ्गः। **संगमेति**। संगमस्य मेलापकस्याशा वाञ्छा तयैव हृदयं स्तनान्तरम्। धारयतीत्यर्थः। तदुक्तम्—'आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां सद्यःपाति प्रणयिहृदयं विप्रयोगे रुणद्धि' इति। **हृदयेनेति**। हृदयेन 'सर्वं वाक्यं सावधारणमि'त्युक्तेर्भवन्तमेव त्वामेव धत्ते। नान्यमित्यर्थः। **उरसेति**। उरसा वक्षस्थलेन बिसिन्या नलिन्याः पलाशानि पत्राणि तेषां प्रावरणमुत्तरीयकं धारयति। विरहजनितदाहोपशामकत्वेन तद्धारणमिति भावः। कण्ठेन निगरणेन जीवितं प्राणितम्। एतेन कण्ठगतप्राणा सांप्रतं समस्तीति ध्वनितम्। **करेति**। करकमलेन पाणिपद्मेन कपोलपालीं गल्लात्परप्रदेशलेखां धत्ते। विरहिजनस्वभावोक्तिरियम्। **त्वदिति**। तव संबन्धी य आलापस्त्वत्किंवदन्ती तेनाश्रुपातं रोदनम्। **ललाटेति**। ललाटफलकेन भालपट्टेन चन्दनलेखिकां मलयजरचनाम्। एतेन तदितरालंकृतिशून्यत्वं सूचितम्। **अंसेनेति**। अंसेन स्कन्धेन वेणीं प्रवेणीम्। एतेन केशानामनियन्त्रितत्वमाविष्कृतम्। **त्वदिति**। तव दिदृक्षा द्रष्टुमिच्छा तया हृदयं स्तनान्तरं विघटमानं भेदमापद्यमानमप्यभिवाञ्छति समीहते। हृदयविघटनेन तदन्तस्थायिनस्तव चक्षुषा दर्शनं स्यादिति भावः। **गोत्रेति**। सा कादम्बरी जीवितेन प्राणितेन लज्जते त्रपते। केनेव। गोत्रस्य नाम्नः स्खलनं विपर्ययेण ग्रहणं तेनेव। **प्रियसख्येवेति**। मुहुर्मुहुर्वारं वारं मूर्च्छया मोहेन मनसि चित्ते स्पृश्यत आश्लिष्यते। कयेव। प्रियसख्येव वल्लभवयस्ययेव। **परीति**। रणरणकेनोत्कण्ठया मदनपरवशा कामपराधीना कुसुमशयनात्पुष्पशयनीयादुत्थाप्यत उत्थानं कार्यते। केनेव। परिजनेनेव। परिच्छदजनेनेव। **परीति**। आर्त्या मानसीव्यथया स्रस्तं पतितमङ्गं यस्याः सैवंविधा सती संचार्यते संचरणं कार्यते। कयेव। परिचारिकयेव दूत्येव। **मुहुरिति**। मुहुर्वारं वारं पवनेन वायुना प्रेङ्खोलितं कम्पितम्। उत्प्रेक्षते—उत्कण्ठयोत्कलिकया व्यजनार्थं पल्लवभङ्गः किसलयध्वंसस्तस्माद्भयं तेन कम्पितमिव धूतमिव। एवंविधं लतामण्डपं वल्लीजनाश्रयमधिवसत्यधितिष्ठति। **मुहुरिति**। मुहुर्वारंवारं सच्छोभना कोशकलिका बीजोत्पत्तिस्थलकोरको यस्मिन्। अत एवोत्प्रेक्षते—बिसानां तन्तूनां यद्वलयं कटकं तस्य संरक्षणं तदर्थं रचितमञ्जलिपुटं येनैवंभूतमिव स्थलकमलिनीवनमधिशेते शयनं करोति। 'अधिशीङ्स्थासां—'इत्यनेनाधिकरणस्य कर्मत्वम्। **मुहुरिति**। उद्बन्धनभयादिव गलपाशविधानभीतेरिव निरन्तरमव्यवहितं किसल-

---

**टिप्प०—1 पूर्वत एव कृशः कटिप्रदेशो विरहेणातिकाश्यं नीतः, अत एव तस्मात्स्थानात्स्खलित्वा काञ्चीकलापः पादयोः प्राप्तः। 2 विश्लिष्यत्, निर्गत्य भवत्समीपे गच्छत् इति तात्पर्यम्। 3 वारं वारं पार्श्वपरिवर्तनं कार्यत इत्यर्थः। दूत्येव इति टीकाकारबुद्धिस्तु श्लाघ्यैव। परिचारिकया सेविकया इव। 4 मृणालानि मे रक्षणीयानि इति प्रार्थनार्थं मन्ये अञ्जलिपुटमेव रचितमित्युत्प्रेक्षा।**

---

**पाठा०—१ मध्यभागम्. २ स्खलितेनेव. ३ परवशा. ४ उत्कोश; सत्कोश. ५ नलिनी.**

लयाच्छादितलतापाशमुद्यानमासेवते । मुहुर्निष्पतदविरतरोदनाताम्रनयनप्रतिबिम्बं स्रस्तरास्तरणत्रासनिमज्जत्कमलमिवोपवनसरोजलमवगाहते ।

तस्मादुत्थाय तमालवीथीमुपैति । तस्यां शाखावलम्ब्योर्ध्वभुजलतानिहितनिमीलितलोचनवदना चम्पकदलमालिकोद्बद्धदेहाशङ्कामुत्पादयन्ती मुहूर्तं विश्रम्य संगीतकगृहमाविशति । ततो मधुरमुरजरवलयललितलास्यलीलयोद्वेज्यमाना मयूरीव मुक्तधारं धारागृहमभिपतति । ततोऽपि घनैर्जलधारासीकरपुलकितकाया कादम्बकलिकेव कम्पमाना शुद्धान्तकमलिनीतीरमुपसर्पति । तस्माच्च भवनकलहंसरवमसहमाना प्रस्थिता तत्कालावतारितनूपुरयुगला निपुणप्रेक्षामिव क्षामतामभिनन्दति । वलयरचनाम्लायितमृणालकुपितैरिव भवनवापीचक्रवाकमिथुनैः कूजितेन खेद्यते । शय्याविलासमृदितकुसुमसंचयामर्षितैरिव प्रमदवनमधुकरैर्विरुते-

---

यैर्नवीनपल्लवैराच्छादितस्तिरोहितो लता एव पाशो यस्मिन्नेवंभूतमुद्यानमारामं मुहुर्वारंवारमासेवते । आश्रयतीत्यर्थः । **मुहुरिति ।** निष्पतदन्तःप्रविशदविरतं निरन्तरं यद्रोदनं परिदेवनं तेनाताम्र ईषद्रक्ते ये नयने नेत्रे तयोः प्रतिबिम्बं प्रतिच्छाया यस्मिन् । अत एवोत्प्रेक्षते—स्रस्तरे संस्तारके यदास्तरणमुपरिस्थापनं तस्माद्यस्त्रासो भयं तेन विमज्जद्बुडत्कमलं पद्मं यस्मिन्नेवंभूतमिवोपवनं समीपवर्ति काननं तस्य सरोजलं पानीयं मुहुर्वारंवारमवगाहते । अवगाहनं करोतीत्यर्थः ।

**तस्मादिति ।** तस्मात्सरोजलादुत्थायोत्थानं कृत्वा बहिर्निर्गत्येत्यर्थः । तमालवीथीं तापिच्छलेखामुपैत्यागच्छति । **तस्यामिति ।** वीथ्यां शाखावलम्बिनी योर्ध्वभुजलता बाहुवल्ली तस्यां निहितं स्थापितं निमीलिते मुद्रिते लोचने नेत्रे यस्मिन्नेतादृशं वदनमाननं यया सा । चम्पको हेमपुष्पकस्तस्य पुष्पाणि चम्पकानि तेषां दलानि पृथक्कृता अवयवास्तेषां मालिका स्रक्तया उद्बद्धो नियन्त्रितो यो देहो लक्षणया गलप्रदेशस्तस्याशङ्कामारेकामुत्पादयन्ती जनयन्ती मुहूर्तं क्षणमात्रं विश्रम्य विश्रान्तिं गृहीत्वा संगीतकगृहं नाट्यसदनमाविशति प्रविशति । ततस्तस्माद्गृहान्मधुरो मिष्टो यो मुरजरवो मृदङ्गशब्दस्तस्य लयस्तानविशेषस्तेन ललिता मनोहरा या लास्यलीला नृत्यविनोदस्तया मयूरीव शिखण्डिनीवोद्वेज्यमानोद्वेगं प्राप्यमाणा मुक्तधारं पतज्जलं धारागृहमभिपतत्यभिगच्छति । **ततोऽपीति ।** तस्मादपि गृहाद्घना निबिडा या जलधारा तस्याः सीकरो वातास्तवारि तेन पुलकितः संजातरोमाञ्चः कायो यस्याः सा । कादम्बस्य[1] वृक्षविशेषस्य कलिका कोरकः सेव कम्पमाना वेपथुं प्राप्यमाणा शुद्धान्तस्यान्तःपुरस्य याः कमलिन्यस्तासां तीरं प्रतीरमुपसर्पति गच्छति । **तस्माच्चेति ।** तस्माच्छुद्धान्तकमलिनीतीराद्भवनं गृहं तत्रस्था ये कलहंसाः कादम्बास्तेषां रवं शब्दमसहमाना सोढुमसमर्था प्रस्थिता चलिता तत्कालं तदानीमवतारितं दूरीकृतम् । चरणादिति शेषः । नूपुरयुगलं पादकटकद्वन्द्वं यया सैवंभूता । निपुणप्रेक्षामिव विबुद्धबुद्धिमिव । क्षामतां कृशतामभिनन्दति स्तौति । पण्डितं प्रेक्ष्य सुतरां सूक्ष्मा भवतीति भावः । चेत्क्षामता जायते तदा नूपुरयुगलं पादयोरन्तरेणान्तरेव पततीति व्यङ्ग्यम् । **वलयेति ।** वलयस्य कटकस्य रचना निर्माणं तेन म्लायितं[2] म्लानतां प्रापितं यन्मृणालं तन्तुलं तेन कुपितैः कोपं प्राप्तैरिव । भवनस्य वाप्यो दीर्घिकास्तासां चक्रवाकमिथुनानि द्वन्द्वचरद्वन्द्वानि तैः कूजितेन शब्दितेन सा खेद्यते खेदं प्राप्यते । **शय्येति ।** शय्याविलासेन शयनीयविभ्रमेण मृदितो मर्दितो यः कुसुमसंचयः पुष्पप्रकरस्तेनामर्षितैरिवामर्षं प्राप्तैरिव । अन्तःपुरोचितं वनं प्रमदवनं तस्य मधुकरैर्भ्रमरैर्विरुतेन कूजितेनोद्वेज्यते उद्वेगं

---

**टिप्प०**—1 कदम्बकलिकेत्येव पाठः । 2 'म्लापित' इति पाठः शुद्धः । कादम्बर्याः स्ववलयरचनया मृणालानि ( चक्रवाकभोज्यानि ) म्लानिं नीतानि, अत एव कुपितास्ते कूजितेन तां खेदयन्तीत्याशयः ।

---

पाठा०—१ निपतित. २ शाखावलम्ब्यूर्ध्व. ३ मुक्तवारिधार. ४ ततो नवजलधरधारा. ५ कदम्ब. ६ युगलम्. ७ आम्लापित. ८ मधुकरकुलैः.

नोद्वेज्यते । निर्भरोत्[1]कण्ठागीतनिर्जितरवरोषितैरिवाङ्गणसहकारपिकवृन्दैः कलकलेनाकुलीक्रियते । मदनपाण्डुगण्डपरिभूतगर्भपत्रकान्तिभिर्विद्धेवोद्यानकेतकीसूचिभिरुद्भूतवेदना भवति । एवंप्रायैश्च मदनदुश्चेष्टितायासैः परिणाममुपैति दिवसः ।

चन्द्रोदये चास्यास्तिमिरमयीवापैति धृतिः, कमलमयमिव दूयते हृदयम्, कुमुदमय इव विजृम्भते मकरकेतनः, च[2]न्द्रकान्तमयमिव प्रक्षरति नयनयुगलम्, उदधिजलमयानीव प्र[3]वर्धन्ते श्वसितानि, चक्रवाकमया इव विघटन्ते मनोरथाः, शीतज्वरातुरेव मणिकुट्टिमोदरसंक्रान्तस्य तुषारकिरणमण्डलस्योपरि वेपथुलुलिततरलाङ्गुलीनिकरं करयुगलं प्रसारयन्ती श[4]शिसंतापमनक्षरं कथयति । सीत्कारेषु दशनांशुव्याजेन मन्मथशरजर्जरितहृदयप्रविष्टानिन्दुकिरणानिवोद्गिरति । वेपथुषु व्यजनीकृतकदलीदलकम्पोपदेशमिव गृह्णाति । विजृम्भिकासु

---

प्राप्यते । **निर्भरेति ।** निर्भरं यथा स्यात्तथोत्कण्ठया यद्गीतं तेन निर्जितो यो रवः शब्दस्तेन रोषितैरिव रोषं प्राप्तैरिवाङ्गणमजिरं तत्र यः सहकारश्चूतस्तत्रस्थाः पिकाः कोकिलास्तेषां वृन्दैः समूहैः कलकलेन कोलाहलेनाकुलीक्रियते व्याकुलीक्रियते । **मदनेति ।** मदनेन कंदर्पेण पाण्डुः शुभ्रो यो गण्डः कपोलात्परप्रदेशस्तेन परिभूता न्यक्कृता गर्भपत्रकान्तिर्मध्यदलरु[1]ग्यैरेवंविधैरुद्यानस्य केतक्यस्तासां सूचयस्त्रिपत्रकरूपाः । 'त्रिपत्रकः सूचिरभिधीयते' इति वैजयन्तीकारः । अग्राणि वा । तैर्विद्धेव भिन्नेवोद्भूतवेदना प्रादुर्भूतपीडा भवति जायत एव । **एवमिति ।** एवंप्रायैरेवंप्रकारैर्मदनस्य कंदर्पस्य दुश्चेष्टितानि दुर्विलसितानि तेषामायासैः प्रयासैः परिणामं परिपक्वताम् । अवसानमिति यावत् । दिवसो वासर उपैति गच्छति ।

**चन्द्रोदये चेति ।** च पुनरर्थे । चन्द्रोदये शशाङ्कोदयेऽस्याः कादम्बर्या धृतिः संतोषः । 'धृतिः स्थैर्यम्' इति भूपालः । अपैति गच्छति । अत एवोत्प्रेक्षते— तिमिरमयीव तिमिरात्मिकेव । तिमिरस्य चन्द्रोदये नाशात्तत्साम्यं धृतेः । **कमलेति ।** हृदयं मानसं दूयते संकुचितं भवति । अत एवोत्प्रेक्षते—कमलमयमिव पद्मघटितमिव । कमलानामेव चन्द्रोदये संकोचसंभवाद्धृदयस्य तत्तुल्यता । **कुमुदेति ।** मकरकेतनः कंदर्पो विजृम्भते उज्ज्वलो भवति । अत एवोत्प्रेक्षते—कुमुदमय इव कैरवात्मक इव । चन्द्रोदये कैरवाणामेव विजृम्भणात्तत्तुल्यता । **चन्द्रकान्तेति ।** नयनयुगलं नेत्रयुग्मं प्रक्षरति । अश्रुपातं करोतीत्यर्थः । अत एवोत्प्रेक्षते—चन्द्रकान्तश्चन्द्रमणिस्तन्मयमिव तद्घटितमिव । चन्द्रोदये चन्द्रोपलस्यैव प्रक्षरणादिति भावः । **उदधीति ।** श्वसितानि श्वासाः प्रवर्धन्ते । वृद्धिं गच्छन्तीत्यर्थः । अत एवोत्प्रेक्षते—उदधिजलं समुद्रपानीयं तन्मयानीव । तत्स्वरूपाणीव । चन्द्रोदय उदधिजलस्यैव प्रवर्धनादिति भावः । **चक्रवाकेति ।** मनोरथा अभिलाषा विघटन्ते वियुज्यन्ते । अत एवोत्प्रेक्षते—चक्रवाका रथाङ्गाह्वयास्तन्मया इव तद्घटिता इव । **शीतेति ।** शीतज्वरेणातुरा पीडितेव । मणिकुट्टिमस्य रत्नबद्धभूमेरुदरं मध्यं तत्र संक्रान्तस्य प्रतिबिम्बितस्य तुषारकिरणश्चन्द्रस्तस्य मण्डलं बिम्बं तस्योपर्युपरिष्टाद्वेपथुः कम्पस्तेन लुलितः कम्पितस्तरलो मनोहरोऽङ्गुलिनिकरः करशाखासमूहो यस्मिन्नेवंभूतं करयुगलं पाणियुग्मं प्रसारयन्ती विस्तारयन्ती अनक्षरं यथा स्यात्तथा शशिसंतापं चन्द्रसंतापं कथयति । करकम्पनेनैव तन्निवेदनादिति भावः । **सीत्कारेष्विति ।** सीत्कारेषु सीत्कृतेषु दशना दन्तास्तेषामंशवः किरणास्तेषां व्याजेन मिषेण मन्मथशरेण कंदर्पबाणेन जर्जरितं शिथिलीकृतं यद्धृदयं स्वान्तं तत्र प्रविष्टान्संक्रमितानिन्दुकिरणानिव चन्द्रकरानिवोद्गिरति वमति । **वेपथुष्विति ।** वेपथुषु कम्पेषु व्यजनीकृतानि तालवृन्तीकृतानि यानि कदलीदलानि रम्भापत्राणि तेभ्यः कम्पस्तस्योपदेशमिव शिक्षामिव गृह्णाति । **विजृम्भिकास्विति ।** विजृम्भिकासु

टिप्प०—1 येषामित्युचितम् ।

---

पाठा०—१ उत्कर्ष. २ चन्द्रकान्तमणिमयम्. ३ वर्धन्ते. ४ शशिनः संतापम्. ५ निर्जित.

कण्ठागतजीवितनिर्गममार्गमिवोपदिशति । गोत्रस्खलितविलक्षस्मितेषु हृदयनिपतितमदनशरपुष्परज इव वमति । बाष्पमोक्षेषु स्थूलाश्रुसंतानवेणिकावाहिनी विलीयत इव । शशिमणिदर्पणेषु विस्फुरितानेकप्रतिबिम्बनिभेन शतधेव विदलति । कुसुमशयनेषु परिमललालसागतालिमालाकुलिता धूमायत इव । अमलकमलस्रस्तरेषु किञ्जल्करजःपुञ्जपिञ्जरिता ज्वलतीव । स्वेदप्रतीकारेषु विशदकर्पूरक्षोदधूलीधवलिता भस्मीभवतीव । न विज्ञायते किं मुग्धतया, किं विलासेन, किमुन्मादेन, संगीतमृदङ्गध्वनितेषु केकाशङ्कया धारागृहमरकतमणिमयूरमुखानि स्थगयति । दिवसावसानेषु विश्लेषभीता मृणालसूत्रैश्चित्रभित्तिविलिखितानि चक्रवाकमिथुनानि संघटयति । चिन्तारतारम्भेषु मणिप्रदीपानवतंसोत्पलैस्ताडयति । उत्कण्ठालेखेषु संकल्पसमागमाभिज्ञानानि लिखति । दूतीसंप्रेषणेषु स्वप्नापराधोपालम्भान्संदिशति ।

---

विजृम्भणेषु कण्ठागतं निगरणप्राप्तं यज्जीवितं तस्य निर्गममार्गमिव निःसरणपन्थानमिवोपदिशति कथयति । **गोत्रेति** । गोत्रस्खलितानि पूर्वव्यावर्णितानि तेषु यानि विलक्षस्मितानि तेषु हृदयनिपतिताः स्वान्तान्तःप्रविष्टा ये मदनशराः कंदर्पबाणास्तेषां पुष्परज इव कुसुमपराग इव वमत्युद्गिरति । **बाष्पमोक्षेष्विति** । बाष्पो नेत्राम्बु तस्य मोक्षेषु मोचनेषु स्थूलानि यान्यश्रूणि तेषां संतानं परम्परा तस्य वेणिका प्रवाहस्तां वहतीत्येवंशीला सती विलीयत इव द्रवीभवतीव । **शशीति** । शशिमणिदर्पणेषु चन्द्रकान्तादर्शेषु विस्फुरितानि चमकितान्यनेकप्रतिबिम्बानि तेषां निभेन मिषेण शतधा शतप्रकारेण विदलतीव खण्डीभवतीव । **कुसुमशयनेष्विति** । कुसुमशयनेषु पुष्पशयनीयेषु परिमले लालसा लम्पटा या गतालिमाला भ्रमरपङ्क्तिस्तयाकुलिताकुलीकृता सती धूमायत इव धूमवदाचरतीव । **अमलेति** । अमलानि निर्मलानि यानि कमलानि नलिनानि तेषां स्रस्तरेषु संस्तारकेषु किञ्जल्कं केसरं तस्य रजःपुञ्जः कणिकानिकरस्तेन पिञ्जरिता पीतरक्तीकृता सती ज्वलतीवोद्धुषतीव । **स्वेदेति** । स्वेदो घर्मस्तस्य प्रतीकाराः प्रतिक्रियास्तेषु विशदः शुचिर्यः कर्पूरक्षोदो हिमवालुकाचूर्णं तस्य धूली रजस्तया धवलिता शुभ्रीकृता सती भस्मीभवतीव भूतिभावं भजतीव । **नेति** । न विज्ञायते नावबुध्यते मयेति शेषः । किं तदित्याह—**किमिति** । किं मुग्धतयाऽप्रगल्भतया, किंवा विलासेन विभ्रमेण, किंवोन्मादेन चित्तविप्लवेन, संगीतार्थं यानि मृदङ्गध्वनितानि मुरजशब्दितानि तेषु केका मयूरवाण्यस्तासां शङ्कया आरेकया धारागृहे यन्त्रगृहे मरकतमणिर्नीलमणिस्तेन निर्मितानि मयूरमुखानि शिखण्डिवदनानि स्थगयत्याच्छादयति । **दिवसेति** । दिवसावसानेषु वासरप्रान्तेषु । बहुदिवसापेक्षं चैतत् । अन्यथैकदिवसस्यैकमेवावसानं स्यात् । विश्लेषभीता वियोगभीता मृणालसूत्रैस्तन्तुलतन्तुभिश्चित्रभित्तावालेख्योपलक्षितकुड्ये विलिखितानि चित्रितानि यानि चक्रवाकमिथुनानि द्वन्द्वचरद्वन्द्वानि संघटयति संयोजयति । **चिन्तेति** । चिन्तया संकल्पमात्रेण ये रतारम्भा मैथुनारम्भास्तेषु मणिप्रदीपान्रत्नगृहमणीनवतंसः शेखरस्तस्योत्पलानि कुवलयानि तैस्ताडयति ताडनां करोति । **उत्कण्ठेति** । उत्कण्ठयोत्कलिकया ये लेखाः पत्राणि तेषु संकल्पेन कल्पनामात्रेण ये समागमा मेलापास्तेषामभिज्ञानानि मनःप्रत्यायकचिह्नानि लिखति लिपीकरोति । **दूतीति** । दूत्यः संचारिकास्तासां संप्रेषणेषु स्वप्ने स्वप्नावस्थायामपराध आगस्तस्योपालम्भा उपालम्भा इति लोकप्रसिद्धास्तान्संदिशति कथयति ।

---

**टिप्प०—1 परागमिव इति वक्तव्यम् । स्मितं नास्ति, मन्ये कंदर्पबाणभूतानां कुसुमानाम् ( हृदयप्रविष्टानाम् ) रज एवास्तीत्युत्प्रेक्ष्यते । स्मितस्य श्वैत्यवर्णनात् । 2 परिमललालसया ( इच्छया ) आगता या अलिमाला, इति स्पष्टोऽर्थः । 3 उद्धुष्यत इव ।**

---

पाठा०—१ कण्ठनाल. २ निष्पतित. ३ प्रस्तरे; संस्तरेषु. ४ जर्जरिता. ५ उज्ज्वलति. ६ धूलि. ७ संगीतक. ८ संघट्टयति.

अपि च तस्याश्चन्दनपरिमल इव दक्षिणानिलेन सह समागच्छति मोहः। चक्राह्वशाप इव निशया सहापतति प्रजागरत्रासः। प्रतिरुतानीव वलभीकपोतकूजितैः सहाविर्भवन्ति दुःखानि। मधुकर इवोपवनकुसुमामोदेन सहोपसर्पति मरणाभिलाषः। तथा च जलकणिकेव पद्मिनीपलाशस्थिता कम्पते। प्रतिच्छायेव स्फटिकोपलसलिलमणिदर्पणमणिकुट्टिमतलेषु दृश्यते। नलिनीव शशिकरस्पर्शेन म्लायति। हंसीव सरसमृणालिकाहारव्यतिकरेण जीवति। शरदिव कुमुदकुवलयसंपर्कमनोहरगन्धवहा सकुसुमबाणा च विजृम्भते। चन्द्रमूर्तिरिव कमलप्रकरस्खलितपादपल्लवा संचरन्ती निशां नयति। कुमुदिनीव रजनिकरकिरणकृतजागरा दिवसमलीकनिद्रयातिवाहयति। मुररिपुजलशयनलीलेव मन्दोच्छ्वसितशेषा

---

अपि चेति युक्त्यन्तरे। तस्याः कादम्बर्याश्चन्दनपरिमल इव मलयजामोद इव दक्षिणानिलेनावाचीमारुतेन सह मोहो मूर्च्छा समागच्छति। **चक्राह्वेति**। निशया त्रियामिन्या सह चक्राह्वो रथाङ्गाह्वयस्तस्य शापः पृथग्भवनलक्षणस्तद्वदिव प्रजागरत्रासो जागरणभयमापतत्यागच्छति। **प्रतीति**। वलभी गृहोपरिभागस्तस्यां कपोताः पारावतास्तेषां कूजितै रटितैः सह प्रतिरुतानीव प्रतिश्रुतानीव[1] दुःखान्यसुखान्याविर्भवन्ति प्रकटीभवन्ति। **मधुकर इति**। उपवनस्य कुसुमानि पुष्पाणि तेषामामोदो दूरगामी गन्धस्तेन सह मधुकर इव। जात्येकवचनम्। मरणाभिलाषो मृत्युवाञ्छोपसर्पति समीपमायाति। प्रकारान्तरेण तां वर्णयन्नाह— **तथा चेति**। पद्मिनी कमलिनी तस्याः पलाशानि पत्राणि तेषु स्थिता जलकणिकाऽम्भोबिन्दुरिव कम्पते चलते। एतेनोभयोः साधर्म्यमाविष्कृतमिति भावः। **प्रतीति**। स्फटिकोपलश्च सलिलं च मणिदर्पणश्च मणिकुट्टिमतलानि च तेषु प्रतिच्छायेव प्रतिबिम्बमिव[2] दृश्यते। जनैरिति शेषः। **नलिनीति**। शशिकराश्चन्द्रकिरणास्तेषां स्पर्शः संयोगविशेषस्तेन नलिनीव म्लायति म्लानिं प्राप्नोति। नलिन्याः सूर्यविकासित्वेन, अस्याश्च विरहव्याकुलितचित्तत्वेन शशिकरस्पर्शादेव म्लानिरिति भावः। **हंसीवेति**। सरसा रसोपयुक्ता या मृणालिन्यः कमलिन्यस्तासां हारा मुक्ताप्रालम्बास्तेषां व्यतिकरेण संबन्धेन हंसीव वरटेव जीवति प्राणिति। हंसीपक्षे मृणालिकाया आहारो भोजनं तेन प्राणवृत्तिं करोतीत्यर्थः। **शरदिवेति**। कुमुदं श्वेतकमलं सूर्यविकासि, कुवलयं चन्द्रविकासि, एतेषां संपर्कः संबन्धस्तस्माद्यो मनोहरगन्धस्तं वहतीति वहा[3]। **सकुसुमबाणा चेति**। सह कुसुमेन पुष्पेण वर्तमाना बाणा वृक्षविशेषा यस्याः यस्यां[4] वा। एवंविधा सती शरदिव घनात्यय इव सा विजृम्भते। इतस्ततः प्रसरतीत्यर्थः। **चन्द्रमूर्तिरिति**। कमलानां नलिनानां प्रकरः समूहस्तस्मिन्स्खलिताः स्खलनं प्राप्ताः पादा अङ्घ्रयः किरणा वा त एव पल्लवा यस्याः सैवंविधा चन्द्रमूर्तिरिव संचरन्ती व्रजन्ती निशां नयति। रात्रिं गमयतीत्यर्थः। **कुमुदिनीति**। रजनिकरश्चन्द्रस्तस्य किरणैरंशुभिः कृतो विहितो जागरो[5] जागरणं यस्याः सैवंविधा कुमुदिनीव कैरविणीवालीकनिद्रया दिवसमतिवाहयति। गमयतीत्यर्थः। अत्रालीकनिद्रत्वं नेत्रकुमुदिन्योर्निद्राभावेन संकोचमात्रापेक्षया मन्तव्यम्। **मुररिपुरिति**। मुररिपुः कृष्णस्तस्य जलशयनलीलेव मन्दं मन्दमुच्छ्वसितमेव शेषो यस्याः सा कादम्बरी किमप्यनिर्वचनीयस्वरूपं चिन्तयति ध्यायति। जलशयनलीलापक्षे मन्दं मन्दमुच्छ्वासित उच्छ्वासं प्राप्तः। संजातोच्छ्वास इति यावत्।

---

**टिप्प०—1 पारावतकूजितैः सह यथा तेषां प्रतिरुतान्याविर्भवन्ति तथा तस्या दुःखानि प्रकटीभवन्तीत्याशयः। टीकाकारेण तु मन्ये 'प्रतिश्रुत' शब्दस्य दुर्दशा कृता। 2 कार्श्यातिशयात् सा प्रतिच्छायेव दृश्यते। अथवा विरहतापवशादेतेषु पदार्थेषु सा निपतति, अत एव प्रतिच्छायेव। 3 शरत्पक्षे कुमुदादिसंपर्केण मनोहरो गन्धवहो यस्याम्। 4 कादम्बरी तु सकुसुमबाणा कुसुमबाणेन कामेन सहिता। 5 कुमुदिन्याः किरणैर्जागरः विकासो भवतीति ज्ञेयम्।**

---

**पाठा०—१** दर्पणकुट्टिम; दर्पणतलकुट्टिम. २ कुवलयकमल. ३ प्रजागार.

निमीलितलोचना किमपि चिन्तयति । मलयनिम्नगेव सरसहरिचन्दनकिसलयलाञ्छितेषु शिलातलेष्वभिपतति । कुन्दकलिकेव तुषारसिक्तपल्लववर्तिनी वनानिलेनायास्यते । भुजंगीवासह्यसंतापालिङ्गितचन्दना शिखिकुलकोलाहलेन ताम्यति । हरिणीव केसरिकाननं परिहरति । कुसुमघटितशिलीमुखमनोहरान्मदनचापादिव प्रमदवनात्त्रस्यति । जानकीव पीतरक्तेभ्यो रजनिचरेभ्य इव चम्पकाशोकेभ्यो बिभेति । उषेव स्वप्नसमागमेनापि कृतार्थतामेति । ग्रीष्मलक्ष्मीरिवानुदिनमतिक्षामा श्यामा भवति ।

सर्वथा तस्याः कंदर्पवेदनयाङ्गानि, दिवसैर्जीवितसंधारणवस्तूनि, वलयरचनया गृहकमलिनीमृणालानि, उपदेशैः सखीजनवचनानि, शय्यापरिकल्पनेनोपवनकुसुमानि, अनवरत-

---

शेषः शेषनागो यस्यां सा तथेत्यर्थः । **मलयेति** । मलयनिम्नगेव दक्षिणाचलसरिदिव सरसो निविडरसो यो हरिचन्दनश्चन्दनद्रुमस्तस्य किसलयानि पल्लवास्तैर्लाञ्छितेषु चिह्नितेषु शिलातलेष्वभिपतति । शेत इत्यर्थः । **कुन्देति** । कुन्दः पुष्पविशेषस्तस्य कलिकेव कोरक इव तुषारेण हिमेन सिक्तो यः पल्लवः किसलयस्तस्मिन्वर्तत इत्येवंशीला । विरहव्याकुलितत्वेन हिमसिक्तपल्लवोपरि कृतशयनेत्यर्थः । वनानिलेन वनवायुनायास्यत आयासं प्राप्यते । कुन्दकलिकापक्षे तुषारसिक्तपल्लववर्तिनीति कण्ठ्यम् । **भुजंगीति** । प्रबलविरहस्य घर्मस्य वाऽसह्यः सोढुमशक्यो यः संतापस्तप्तिस्तेनालिङ्गितं चन्दनं चन्दनद्रुमो वा यया सैवंविधा सती भुजङ्गीव सर्पिणीव शिखी मयूरस्तस्य कुलं समूहस्तस्य कोलाहलः कलकलस्तेन ताम्यति खेदं प्राप्नोति । **हरिणीति** । केसरो वकुलो विद्यते यस्मिन्नेवंविधं केसरिणोपलक्षितं वा यत्काननं वनं हरिणीवैणीव परिहरति त्यजति । **कुसुमेति** । कुसुमेषु पुष्पेषु घटिता लग्ना ये शिलीमुखा भ्रमराः, पक्षे कुसुमान्येव घटिता रचिताः शिलीमुखा वा, तैर्मनोहराद्रुचिरान्मदनचापादिव कंदर्पधनुष इव प्रमदवनादन्तःपुरोचितवनात्त्रस्यति त्रासं प्राप्नोति । **जानकीति** । पीताश्च रक्ताश्च पीतरक्तास्तेभ्यश्चम्पकाशोकेभ्यः पीतं रक्तं रुधिरं यैस्तेभ्यो रजनिचरेभ्य इव निशाचरेभ्य इव जानकीव सीतेव बिभेति भयं प्राप्नोति । **उषेवेति** । स्वप्ने निद्रावस्थायां समागमो मेलापकस्तेनापि कृतार्थतां कृतकृत्यतामेति गच्छति । केव । उषेव । यथोषा बाणसुता स्वप्नदशायां प्रद्युम्नसमागमे कृतार्था जाता तथेयमपीत्यर्थः । **ग्रीष्मेति** । ग्रीष्मलक्ष्मीरिव निदाघश्रीरिवानुदिनं प्रतिदिनमतिक्षामातिकृशा श्यामा कृष्णा भवति जायते । पक्षेऽतिक्षामा श्यामा रात्रिर्यस्यामिति समासः । 'रजनीव मतिः श्यामा' इत्यभिधानचिन्तामणिः ।

**सर्वथेति** । सर्वप्रकारेण तस्याः कादम्बर्याः कंदर्पवेदनया कामव्यथयाङ्गानि हस्तपादादीनि । दिवसैरिति बहुवचनं बहुत्वोपलक्षकम् । बहुभिर्वासरैर्जीवितस्य प्राणितस्य संधारणवस्तूनि प्राणाधारभूताः पदार्थाः निःशेषमत्यन्तं क्षीणानि स्तोकानि जातानीत्यर्थः । तदेव दर्शयन्नाह—**वलयेति** । दाघज्वरोपशमार्थं वलयानां कटकानां रचना निर्माणं तया गृहकमलिन्याः सदननलिन्या मृणालानि बिसानि । **उपदेशैरिति** । उपदेशैरुपदेशः शिक्षा तस्य प्रदानैः सखीजनस्यालीजनस्य वचनानि । **शय्येति** । शय्यायाः शयनीयस्य परिकल्पनेन विरचनेनोप-

---

**टिप्प०**—1 बहुव्रीहौ कृते 'अतिक्षामश्यामा' इति स्यादिति न ज्ञातं वराकेण । अत एव अतिक्षामश्यामेत्येव साधु । कादम्बरी तु—अतिक्षामा चासौ श्यामा चेति । 'ग्रीष्मनिशालक्ष्मीरिवानुदिनमतिक्षामा भवति' इति पाठे तु उभयत्र अतिक्षामत्वं ( कृशत्वम्, लघुत्वं च) वर्तत एव ।

---

पाठा०—१ चन्दनशाखा. २ शिखिशकुन्त. ३ अपि. ४ ग्रीष्मनिशा. ५ अतिक्षामा भवति. ६ साधारम्.

मोक्षेण मदनायुधानि निःशेषं क्षीणानि। किं बहुना, संप्रति तस्यास्त्वन्नामा सर्वसखीजनः[1], त्वत्संबद्धानि सर्वरहस्यानि, त्वत्समागमोपायान्वेषिणः सर्वसमवायाः[2], त्वद्वार्तोपलम्भनपराः[3][4] सर्वप्रश्नाः, त्वद्वृत्तान्तमुखरः परिजनः, त्वदालापनिर्मिताः सर्वविनोदाः, त्वदाकारमयश्चित्रकलाभ्यासः, त्वदुपालम्भगर्भा मागधीमङ्गलगीतयः, त्वद्दर्शनपुनरुक्ताः स्वप्नाः, त्वत्परिहासप्राया मदनज्वरदाहविप्रलापाः, त्वन्नामग्रहणैकोपायगम्यप्रबोधा मोहमहावेगाः' इत्यावेदयन्तं च केयूरकम् 'भवतु[5]। संप्रति न शक्नोम्यतः परं श्रोतुम्' इत्यामीलनदत्तसंज्ञेव[6] कादम्बरीव्यथाश्रवणवेदनासंभवानुकम्पयेव चन्द्रापीडमाक्रमन्ती[7] मूर्च्छा न्यवारयत्, न तु पुनरवस्थानिवेदनपरिसमाप्तिः[8]।

तथामूर्च्छानिमीलितश्च तामेवानुध्यायन्निव[9] ससंभ्रमप्रतिपन्नशरीरेण केयूरकेण संभावितालवृन्तया च पत्रलेखयानुभाव्यार्थसञ्ज्ञया[10] च नियत्या संज्ञां लम्भितश्चन्द्रापीडः स्वकृतपीडा-

---

वनकुसुमानि। अनवरतं निरन्तरं मोक्षेण मोचनेन मदनायुधानि कंदर्पशस्त्राणि। **किं बहुनेति**। किं बहुवक्तव्येनेत्यर्थः। **संप्रतीति**। संप्रतीदानीं तस्याः कादम्बर्याः। तवैव नाम विद्यते यस्य स त्वन्नामा। एवंविधः सर्वसखीजनो वयस्याजनः। **त्वदिति**। त्वय्येव संबद्धानि लग्नानि सर्वरहस्यानि सर्वगुह्यानि। त्वदितरसमागमो मेलापस्तस्योपायः कारणं तमन्वेषयन्तीत्येवंशीला अन्वेषिणः सर्वसमवायाः समग्रजनसमूहाः। तव वार्ता कुशलं तस्योपलम्भनमुपलब्धिस्तस्मिन्परास्तत्पराः सर्वप्रश्नाः सर्वाण्यनुयोजनानि। **त्वदिति**। तव वृत्तान्तः प्रवृत्तिस्तत्र मुखरो वाचाल एवंविधः परिजनः परिच्छदः। **त्वदिति**। तव आलापः संभाषस्तेन निर्मिता रचिताः सर्वविनोदाः समग्रक्रीडाविलासाः। **त्वदिति**। तवाकार आकृतिस्तेन निष्पन्नस्त्वदाकारमयश्चित्रकलया आलेख्यविज्ञानस्याभ्यासः। पुनः पुनर्वारंवारम्। **त्वदिति**। तवोपालम्भो गर्भे मध्ये यासां ता मागधीनां मङ्गलपाठिकानां मङ्गलगीतयः कल्याणार्थगानानि। **त्वदिति**। त्वद्दर्शनेन त्वदवलोकनेन पुनरुक्ताः पुनर्भाषिताः स्वप्नाः। तव परिहासप्राया उपहाससदृशा मदनज्वरदाहाद्विप्रलापा विरुद्धोक्तयः। 'विप्रलापो विरुद्धोक्तिः' इत्यमरः। **त्वन्नामेति**। तव नाम्नो ग्रहणमेवैकोऽद्वितीयो य उपायः प्रपञ्चस्तेन गम्याः प्रबोधा बोधनानि येषामेवंभूता मोहमहावेगा मौढ्यमहारयाः इति पूर्वोक्तप्रकारेणावेदयन्तं कथयन्तम्। **केयूरकमिति**। नेत्रयोरामीलनान्मुद्रणाद्दत्तसंज्ञेव दत्ता संज्ञा संकेतो यथा सा विहितचेष्टेव। कयेव। कादम्बर्या व्यथाश्रवणमाकर्णनं तस्माद्वेदनायाः संभवस्तस्मिन्ननुकम्पा दया तयेव चन्द्रापीडमाक्रमन्ती मूर्च्छा न्यवारयन्न्यषेधयत्। इतीति किम्। यत्त्वया प्रोक्तं तद्भवत्वस्तु। संप्रतीदानीमतः परं श्रोतुमाकर्णयितुं न शक्नोमि न समर्थो भवामि। न तु पुनरवस्थाया निवेदनं तस्य वेदनायाः परिसमाप्तिः पर्यन्तः।

**तथेति**। तेन प्रकारेण मूर्च्छानिमीलितो मौढ्येन मुद्रितश्च तामेव कादम्बरीमेवानुध्यायन्स्मरन्निव सह संभ्रमेण त्वरया प्रतिपन्नं विधृतं स्वीकृतं शरीरं यस्यैवंभूतेन केयूरकेण, संभावितं संगृहीतं तालवृन्तं व्यजनं ययैवंभूतया पत्रलेखयानुभाव्यो योऽर्थस्तत्र सञ्ज्ञया समर्थया च नियत्याऽदृष्टविशेषेण संज्ञां चेतनां लम्भितः

---

टिप्प०—1 सखीजनोपि त्वन्नामसहितः। 2 धिक् टीकाम्। इतरस्य का कथा? त्वत्समागमोपायस्य अन्वेषिणः समवायाः समूहाः। वस्तुतस्तु व्यापाराः। 3 त्वद्दर्शनेन पुनरुक्तं येषु। अर्थात् पूर्वं दृष्टस्य तव स्वप्नसंदर्शनेन पुनरुक्तिः (आवृत्तिः) भवतीत्याशयः। 4 त्वन्नामग्रहणरूपेण एकमात्रोपायेन गम्यः प्राप्यः प्रबोधो मोहापगमो येषु एवंविधा महान्तो मूर्च्छावेगाः। टीकाकारस्य तु मौढ्यमहारयाः उचिता एव। 5 अनुभावयितुम् (अनुभवविषयीकारयितुम्) योग्यः।

---

पाठा०—१ सर्वः सर्वतः. २ सर्वे. ३ अपालम्भ; उपालम्भ. ४ तत्पराः. ५ भवति. ६ आमीलनादत्त. ७ आक्रामन्ती. ८ निवेदनवेदन; वेदन. ९ आध्यायन्. १० अनुभाव्यार्थम्.

पराधेन भीतमिव लज्जितमिव विलक्षमिव निभृतस्थितं केयूरकमन्तर्बाष्पोपरुध्यमानकण्ठः कथमपि[1] स्खलिताक्षरं प्रत्युवाच—'केयूरक, येन प्रकारेणैवमेकान्तनिष्ठुरहृदयमात्मन्यनुत्पन्न- रागमेव[2] मां संभाव्य देव्या कादम्बर्या दूरीकृतपुनर्मदागमनसंभावनया[3] न त्वमागमनायादिष्टः, न संदिष्टं वा किंचिन्महाश्वेतया समुपहृतानुबन्धया[4], मदलेखया वा त्वन्मुखेन नोपालब्धोऽस्मि, तथा[5] मयि पत्रलेखया सर्वमाख्यातम्, तदभिजाततया महानुभावत्वादुदारतया समानशील- तया दक्षिणतया चैकान्तपेशलतया च स्वभावस्यात्मानमात्मना[6] न कलयति देवी कादम्बरी। चन्द्रमूर्तेरालोकेनैव[7] निश्चेतनस्य चन्द्रकान्ताख्यस्य पाषाणखण्डस्यार्द्रभावोपगमनमेवायत्तम्, न पुनस्तत्कराकर्षणम्। नितरां पक्षपातिनोऽपि च मधुकरस्याभिगमनमेवाधीनम्, मकरन्द- लाभे तु कलिकाश्रयिणी जृम्भैव[8] प्रभवति। दिवससंतापक्लान्तेन चोन्मुखता कुमुदाकरेण करणीया, विकासयति[9] पुनस्तं ज्योत्स्नाभिरामा रजन्येव। निर्भरमन्तःसरसतायां सत्या-

---

प्रापितश्चन्द्रापीडः स्वयं कृता या पीडा तस्या अपराध आगस्तेन भीतमिव त्रस्तमिव, लज्जितमिव त्रपितमिव, विलक्षमिव वीक्षापन्नमिव, निभृतस्थितं निश्चलस्थितं केयूरकमन्तर्बाष्पेणोपरुध्यमानः कण्ठो यस्यैवंविधश्चन्द्रा- पीडः कथमपि महता कष्टेन स्खलिताक्षरं यथा स्यात्तथा प्रत्युवाच प्रोक्तवान्। किमुवाचेत्याह—**केयूरक इति।** हे केयूरक, येन प्रकारेणैवमेकान्तेन निष्ठुरं कठिनं हृदयं चेतो यस्यैवंविधमात्मनि कादम्बरीविषयेऽनु- त्पन्नरागमजनितस्नेहं मामेव संभाव्य ज्ञात्वा देव्या कादम्बर्या दूरीकृतः पुनर्द्वितीयवारं यन्मदागमनं तस्य संभा- वना तया त्वमागमनाय नादिष्टो न कथितः। तथा महाश्वेतया किंचिन्न संदिष्टं न कथितम्। कीदृशया। समु- पहृतो दूरीकृतोऽनुबन्धोऽत्याग्रहो यया सैवंविधया। मदलेखया वा त्वन्मुखेन त्वदाननेन नोपालब्धोऽस्मि नोपालम्भं प्रापितोऽस्मि। **तथा मयीति।** मद्विषयकं सर्वं पत्रलेखयाख्यातं कथितम्। **तदिति।** तत्पूर्वो- क्तमभिजाततया कुलीनतया महाननुभावो माहात्म्यं यस्यास्तस्या भावस्तत्त्वं तस्मादुदारतया रूपानुगुणत्वेन समानं शीलं स्वभावो यस्यास्तस्या भावस्तत्ता तया दक्षिणतया सरलतया। 'दक्षिणे सरलोदारौ' इत्यमरः। स्वभावस्य प्रकृतेरेकान्तेन निश्चयेन पेशलतया हृद्यतया। अत्रात्मशब्दः स्वरूपवाची तेनात्मानं स्वं रूपं देवी कादम्बर्यात्मना स्वेनैव न कलयति न जानाति। यादृशं भङ्ग्या भणितं वेश्ययावबुध्यते, न तादृशं कुलस्त्रियेति भावः। तदेव दर्शयन्पुनः प्रकारान्तरेणात्मदोषं दूरीकुर्वन्नाह—**चन्द्रेति।** चन्द्रमूर्तेः शशाङ्कबिम्बस्यालोके- नैव प्रकाशेनैव निश्चेतनस्य चेतनारहितस्य चन्द्रकान्ताख्यस्य शशिमण्यभिधानस्य पाषाणखण्डस्य दृषच्छ- कलस्यार्द्रभावस्य द्रवीभावस्योपगमं प्रापणमेव आयत्तं स्वाधीनम्। न पुनस्तत्कराकर्षणं तत्किरणाक्षेपः। **नितरामिति।** नितरामत्यर्थं पक्षपातिनोऽपि वाजगामिनोऽपि, पक्षे पक्षपातिनोऽपि पक्षकारिणोऽपि, मधु- करस्य भ्रमरस्याभिगमनमेव संमुखागमनमेवाधीनमायत्तम्। तु पुनरर्थे। मकरन्दलाभे तु मकरन्दप्राप्तौ तु कलिका कोरकस्तामाश्रयतीत्येवंशीला जृम्भैव जृम्भणमेव प्रभवति समर्थीभवति। **दिवसेति।** दिवसस्य वासरस्य संतापस्तप्तिस्तेन क्लान्तेन पीडितेन कुमुदाकरेण कैरवसमुदायेनोन्मुखता संमुखता करणीया कार्या तं पुनर्विकासयति विकस्वरतां नयति ज्योत्स्ना कौमुदी तयाभिरामा मनोहरा रजन्येव निशैव। **निर्भरमिति।** निर्भरं यथा स्यात्तथान्तर्मध्ये सरसस्य भावः सरसता तस्यां सत्यामपि मधुमासो वसन्तस्तस्य लक्ष्मीः श्रीस्तस्याः

---

**टिप्प०—1 एकान्तपेशलतया अत्यन्तमार्दवेन, अतिधीरतया वा। 2 द्व्यर्थान्वेषणं व्यर्थायितम्। अत्यन्तमनुकूलस्य, भृशं पक्षपोषकस्य वा, इत्येवार्थः। 3 विकासः।**

---

**पाठा०—१ किमपि. २ अनुरागम्. ३ पुनर्दूरीकृतमदागमन. ४ समुपाहृत. ५ तथानया. ६ आत्मना च. ७ आलोकेनापि. ८ जृम्भिका. ९ विकासयति न पुनस्तम्.**

मपि मधुमासलक्ष्मीपरिग्रहाद्विना पल्लवानुरागदर्शनस्य कृते किं करोतु पादपः ? तत्र देव्याः कादम्बर्या एवाज्ञापराधिनी, ययाऽधरस्पन्दितमात्रप्रतीक्षे[1] पुरःस्थायिनि दासजने निष्करुणतयात्मानमव्यापारयन्त्या सुखप्रतिपन्थिनी[2] दुःखदानैकनिपुणा परहृदयपीडानपेक्षिणी लज्जापेक्षिता, न जीवितसंदेहदायिनी देव्याः समाचष्ट[3]। अथवा[4] देव्याः परिजनस्यापि कोऽयमेवंविधो व्यामोहः, यदनिच्छन्त्यपि[5] बलादसौ न व्यापारिता। कीदृशी चरणतलप्रतिबद्धस्य[6] दासजनस्योपरि लज्जा, कीदृशं वा गौरवम्, को वानुरोधः, अविश्वस्तचित्तता वा केयमीदृशी, यदेवमात्मनः शिरीषपुष्पकोमलस्येयमतिदारुणा पीडाऽङ्गीकृता, न कृतार्थितो मे मनोरथः। अथवा क्रमागतमन्तर्धानं वामलोचनानाम्, विशेषतोऽपरित्यक्तनिःशेषबालभावानामनतिप्रबुद्ध[7]मुग्धमनसिशयानां कन्यकानाम्, यल्लज्जा[8] न पारिता नामास्मिञ्जने स्वयं परित्यक्तुं देव्या।

---

परिग्रहः स्वीकारस्तस्माद्विना पल्लवस्य किसलयस्यानुरागदर्शनं तस्य कृते तदर्थं पादपो वृक्षः किं करोतु। किं कुर्यादित्यर्थः। **तत्रेति**। तस्मिन्प्रदेशे देव्याः कादम्बर्या आज्ञैव निदेश एवापराधिन्यपराधवती, ययाज्ञया केवलमधरस्पन्दितमधरस्पन्दितमात्रं तस्मिन्प्रतीक्षा विलम्बो यस्य स तस्मिन्। ओष्ठस्फुरणानन्तरमेव कार्यकारिणीत्यर्थः। पुरःस्थायिन्यग्रे दासजने सेवकजने निष्करुणतया निर्दयतयात्मानं स्वमव्यापारयन्त्याऽनियोजयन्त्या सुखस्य सौख्यस्य प्रतिपन्थिनी वैरिणी, दुःखस्यासुखस्य दानं वितरणं तत्रैकाऽद्वितीया निपुणाभिज्ञा, परहृदयस्यान्यचित्तस्य पीडा वेदना तामनपेक्षतेऽसमीहत इत्येवंशीला लज्जा त्रपाऽपेक्षितेहितेयं जीवितसंदेहदायिनी प्राणितसंदेहकारिणीति देव्याः कादम्बर्या न समाचष्ट नाख्यातवती। अथवेति प्रकारान्तरे। देव्याः कादम्बर्या अस्य परिजनस्यापि परिच्छदस्यापि कोऽयमनिर्वचनीयस्वरूप एवंविध एतादृशो व्यामोहो मूढता यदसौ कादम्बर्यनिच्छन्त्यप्यनभिलषन्त्यपि बलाद्धठान्न व्यापारिता न प्रेरिता। **कीदृशीति**। चरणतले प्रतिबद्धस्य लग्नस्य दासजनस्य सेवकलोकस्योपर्युपरिष्टात्कीदृशी लज्जा त्रपा। वाथवा गौरवं गुरुत्वं कीदृशम्। को वानुरोधः प्रतिबन्धः। केयमीदृश्यविश्वस्तचित्तताऽविश्रम्भमनस्कता यस्माद्धेतोरेवममुना प्रकारेणात्मनः स्वस्य शिरीषपुष्पवत्कोमलस्य सुकुमारस्येयमतिदारुणात्युग्रा पीडाङ्गीकृता स्वीकृता। मे मम मनोरथोऽभिलाषो न कृतार्थितो न सफलीकृतः। अथवेति युक्त्यन्तरे। वामलोचनानां मनस्विनीनामन्तर्धानं तिरोधानं क्रमागतं परिपाट्या समागतमेव। विशेषतो विशेषादेवापरित्यक्तो निःशेषो बालभावो याभिस्तासाम्। **अनतीति**। नातिप्रबुद्धं यन्मुग्धं मनस्तस्मिञ्शयानां स्थितानां कन्यकानां कुमारीणाम्। नामेति कोमलामन्त्रणे। यदस्मिञ्जने चन्द्रापीडलक्षणे स्वयमात्मना देव्या कादम्बर्या लज्जा त्रपा परित्यक्तुं विमोक्तुं न पारिता न शक्ता,

---

**टिप्प०**—1 'चन्द्रमूर्तेरालोकेन' इत्यारभ्य 'किं करोतु पादपः' एतत्पर्यन्तं सदृशेन अप्रस्तुतेन वाच्यार्थेन सदृशस्य प्रस्तुतस्य कादम्बरीचन्द्रापीडयोर्व्यवहारस्य गम्यत्वादप्रस्तुतप्रशंसा ( सामान्यात् सामान्यस्य गम्यतारूपा, पञ्चमी )। केषांचिन्मते प्रतिवस्तूपमा। 2 सर्वथा ग्रन्थस्वारस्यं न स्पृशति दूरतोपि। 'देव्याः समवस्था' इत्येव पाठः। देव्याः कादम्बर्याः आज्ञाया एवाऽपराधो यया हि मादृशे दासजने संमुखस्थितेऽपि ( अहं तु आज्ञानुकूल एवासम्, पुनः किं कारणमासीद्विरहसंतापानुभवस्येति भावः ) आत्मानम् ( अर्थात्स्वम् आज्ञाम् ) अव्यापारयन्त्या अप्रदिशन्त्या लज्जाया अपेक्षा कृता, देव्याः कादम्बर्याः समवस्थायाः परिस्थितेः ( विरहविकलतायाः ) अपेक्षा न कृता, या हि लज्जा देव्या जीवितसंदेहदायिनीति स्पष्टस्तस्यार्थः। 3 आत्ममनोभावस्य गोपनमिति यावत्। 4 धिङ्‌ मौढ्यम्। अनतिप्रवृद्धः ( न अतिवृद्धिं गतः ) मनसिशयः कामो यासां तासामित्यर्थः।

---

**पाठा०**—१ प्रतीक्ष्ये. २ परिपन्थिनी. ३ समवस्था. ४ अथवास्य परिजनस्यापि देव्या अपि; अथवा जनस्यास्योपरि देव्या अपि. ५ अनेच्छन्त्यापि बलादसौ न व्यापारितः. ६ प्रतिबद्धदासजनस्य. ७ अनभिबुद्ध. ८ लज्जां न पारितम्.

मदलेखा तु द्वितीयं हृदयमस्याः । तया किमेवमहार्यसंयमधनैर्मुनिभि[1]रप्यरक्षितहृ[2]दयापहारेणानिग्राह्यचौरेण शुचिभिरप्यपरिहार्यस्प[3]र्शेनाबहिष्कार्यचाण्डालेन भस्मीकृतापर्यवसानप्राणिसहस्रेणानिर्वाप्यश्मशानाग्निना सर्वदोषाश्रयेणाशरीरव्याधिना रूपापहारिणा [4]काण्डव्याधेन मर्मभेदिनालीकधनुर्धरेण सद्यःप्राणापहारक्षमेणाकालमृत्युनाऽनिरूपितस्थानास्थानप्रवर्तिना परापकार[5]कृतार्थेन हृदयवासिनाऽपरप्रत्ययेन स्वयोनिना कामेन दुरात्मनायाऽऽस्यमानं देवीशरीरमुपेक्षितम् । किमिति तत्रस्थस्यैव मे कर्णे नावेदितम् ? अधुना श्रुत्वापि दिवसक्रमगम्येऽध्वनि किं करोमि ? मलयानिलाहतलताकुसुमपातस्याप्यसहं देवीशरीरम् । वज्रसारकठिनहृ[6]दयैरस्मद्विधैरपि दुर्विषहाः स्मरेषवः । न ज्ञायते निमे[7]षमात्रेणैव किं वा भवतीति । प्रायेण च देव्या-

---

तदस्या देव्या मदलेखा तु द्वितीयं हृदयम् । तया मदलेखया किमेवं पूर्वोक्तप्रकारेण दुरात्मना कामेनायास्यमानं पीड्यमानं देवीशरीरमुपेक्षितमुपेक्षाविषयीकृतम् । इतः कामं विशेषयन्नाह—**अहार्येति** । न हार्यं हर्तुं योग्यं संयमधनं व्रतधनं येषामेवंविधैर्मुनिभिरपि वाचंयमैरप्यरक्षितो हृदयापहारः प्राणापहरणं यस्मात्स तेन । **अनीति** । न निग्रहीतुं योग्योऽनिग्राह्य एवंविधश्चौरस्तस्करस्तेन । **शुचिभिरिति** । शुचिभिरपि पवित्रैरप्यपरिहार्यः परिहर्तुमशक्यः स्पर्शो यस्य स तेन । **अबहिरिति** । अबहिष्कार्याण्या[1]भ्यन्तरकृत्यानि तेषु चाण्डालेन मातङ्गेन । **भस्मीति** । भस्मीकृतमपर्यवसानमनन्तं प्राणिसहस्रं येन स तेन । **अनिति** । अनिर्वा[2]प्यमविध्मातं यच्छ्मशानं पितृवनं तस्याग्निरिवाग्निस्तेन । **सर्वेति** । सर्वदोषाणां समग्रदूषणानामाश्रयेणाधारभूतेन । **अशरीरेति** । न विद्यते शरीरं यस्मिन्नेवंभूतो [3]व्याधिरामयस्तेन । **रूपेति** । रूपं सौन्दर्यमप[4]हरतीत्येवंशीलेन रूपापहारिणा । **काण्डेति** । काण्डेन[5] बाणेन विध्यतीति काण्डव्याधस्तेन । **मर्मेति** । मर्मभेदिनाऽवेध्यस्थलघातकेन । **अलीकेति** । अलीको मिथ्या धनुर्धरो धनुष्मांस्तेन । **सद्य इति** । सद्यस्तत्कालं यः प्राणापहारोऽनुग्रहणं तत्र क्षमेण समर्थेन । **अकालेति** । अकालेनाप्र[6]स्तावेन मृत्युना मरणेन । **अनिरूपितेति** । अनिरूपितेऽदर्शिते ये स्थानास्थाने योग्यायोग्यस्थले तत्र प्रवर्तिना प्रवर्तनशीलेन । **परेति** । परस्य योऽपकारोऽपकृतिस्तेन कृतार्थेन कृतकृत्येन । **हृदयेति** । हृदये चित्ते वसतीत्येवंशीलेन । **अपरेति** । अपर[7]स्मिञ्शत्रावपि प्रत्ययो विश्वासो यस्य स तेन । स्वयोनिनात्मयोनिना । **किमितीति** । तत्रस्थस्यैव हेमकूटस्थस्यैव मे मम कर्णे श्रोत्रे । जात्येकवचनम् । किमिति केन हेतुना नावेदितं न कथितम् । **अधुनेति** । सांप्रतं श्रुत्वाप्याकर्ण्यापि दिवसानां वासराणां क्रमः परिपाटी तेन गम्ये गन्तुं योग्येऽध्वनि मार्गेऽहं किं करोमि । न किमपि कर्तुं समर्थ इत्यर्थः । **मलयेति** । मलयानिलेन मलयवायुनाहतं ताडितं यल्लताकुसुमं तस्य यः पातः पतनं तस्याप्यसहं सोढुमसमर्थं देव्याः कादम्बर्याः शरीरं देहम् । लतापुष्पपातेनापि ग्लानिं प्राप्नोतीत्यर्थः । **वज्रेति** । वज्रं हीरकस्तस्य सारो मध्यं तद्वत्कठिनं हृदयं चेतो येषामेवंविधैरपि स्मरेषवः कंदर्पबाणा दुर्विषहा दुःखेन सोढुं शक्या इति न ज्ञायते नावबुध्यते । इतीति किम् । निमेषमात्रेणैव निमीलनमात्रेणैव किं भवति किं जायते । **प्रायेणेति** । प्रायेण बाहुल्येन देव्यापि कादम्बर्याप्ययमर्थो दुःखलक्षणोऽनुभवनीय

---

**टिप्प०—**1 अबहिष्कार्यश्चासौ चाण्डालश्च । अन्यश्चाण्डालः समीपादितो बहिष्कर्तुं शक्यः कामस्तु न तथेति स्पष्टोर्थः । 2 निर्वापणविशेषणमग्नेरेवोचितं न श्मशानस्येति न निर्वाप्यो यः श्मशानाग्निस्तेनेत्येवार्थः । 3 अशरीरोपि विध्यति इति । तथा च यस्य शरीरं नास्ति तथापि वेधनकारिणेति सुन्दरोऽर्थः । 4 कामो न सौन्दर्यमपहरति । अत एव सौन्दर्येण (परकीयेण) अपहरति धैर्यादपनयतीति रूपापहारीत्यर्थः । अथवा अरूपश्चासौ अपहारी चेत्यर्थः । 5 अकाण्डे विध्यतीत्येवोचितोऽर्थः । 6 अकाले मृत्युस्तेन । 7 नास्ति परेण प्रत्ययो यस्य, स्वसंवेद्य इत्यर्थः ।

---

**पाठा०—**१ असंरक्षित. २ प्राणहृदय. ३ स्पर्शनचाण्डालेन. ४ अकाण्ड. ५ कृतान्तेन. ६ हृदयैरपि. ७ निमेषेणैव किं भवतीति.

प्यनुभवनीय एवायमर्थः। यथा चास्य दुःखैकदानव्यसनिनो दुर्घटघटनापण्डितस्य यत्किंचनकारिणो निष्कारणकुपितस्य हतविधेः सर्वतो विसंस्थुलं[1] समारम्भं पश्यामि, तथा जानामि नैता[2]वता स्थास्यतीति। अन्यथा क निष्प्रयोजनाश्व[3]मुखानुसरणेनामानुषभूमिगमनम्, क च तत्र तृषितस्याच्छोददर्शनम्, क तत्र तीरे[4] विश्रान्तस्यामानुषगीतध्वनेराकर्णनम्, क तज्जिज्ञासागतस्य महाश्वेतावलोकनम्, क तत्र तरलिकया सह तवाभिगमनेन मद्गमनप्रस्तावः, क महाश्वेतया सह हेमकूटगमनम्, क तत्र देवीवदनदर्शनम्, क रागोत्पत्तिर[5]स्मिञ्जने देव्याः, क वाऽपरिपूर्णमनोरथस्य मे पितुरलङ्घनीयाऽऽगमनाज्ञा। तत्सुदूरमारोप्य पातिता वयं खल्वनेनाकार्यकारिणास्मत्कर्मबलनियोगदक्षेण दग्धवेधसा। तथापि देवीं संभावयितुं प्रयतामहे।'

इत्यभिदधत्येव चन्द्रापीडे 'नितरामयमनेनैव कादम्बरीवृत्तान्तेन संतापितः, तत्किमपर[6]महमेनमात्मतेजसा संतापयामि' इत्युत्पन्नदय इव भगवांस्तिग्मदीधितिरुत्तप्तकनकद्रवस्फुलिङ्गपिङ्गल[7]द्युति दिग्विकीर्णधूर्जटिजटामण्डलानुकारि[8] संजहार करसहस्रम्। अस्तानुसारेण च रवे-

---

एवानुभवविषयीकरणीय एव। **यथा चेति**। दुःखस्यैकमद्वितीयं दानं तत्र व्यसनमासक्तिर्विद्यते यस्य स तस्य। **दुर्घटेति**। दुःखेन घटितुं योग्या दुर्घटा एवंविधा या घटना पदार्थानामन्योन्यं संबन्धस्तत्र पण्डितस्य विबुधस्य। यत्किंचन यदेव तदेव करोतीत्येवंशीलस्य यत्किंचनकारिणः। निष्कारणं निर्निमित्तं कुपितस्य कोपं प्राप्तस्यास्य हतविधेर्दुष्टविधातुर्यथा सर्वतः सर्वत्र विसंस्थुलं विसदृशं समारम्भं निर्माणं पश्याम्यवलोकयामि। **तथेति**। तेन प्रकारेणेति जानाम्याकलयामि। इतीति किम्। **नेति**। एतावतैतावत्कालं न स्थास्यति नावस्थानं करिष्यति। अन्यथेत्युक्तविपर्यये। निष्प्रयोजनेन निष्कारणेनाश्वमुखाः किंनरास्तेषामनुसरणेनानुगमनेनामानुषभूमिगमनं मनुष्यरहितक्षितौ यानम्। क केति महदन्तरे। तत्रामानुषभूमौ तृषितस्य पिपासितस्याच्छोददर्शनं क। **तत्रेति**। तत्राच्छोदनाम्नस्तीरे विश्रान्तस्य गृहीतविश्रामस्यामानुषाः किंनरास्तेषां गीतध्वनेर्गेयशब्दस्याकर्णनं श्रवणं क। तस्य ज्ञातुमिच्छा तज्जिज्ञासा तयागतस्य प्राप्तस्य महाश्वेताया अवलोकनं निरीक्षणं क। तत्र महाश्वेतावलोकनस्थले तरलिकया सह तव केयूरकस्याभिगमनेनागमनेन मद्गमनप्रस्तावो मदीययानावसरः क। महाश्वेतया सह सार्धं हेमकूटगमनं क। तत्र हेमकूटे देवीवदनदर्शनं कादम्बरीमुखावलोकनं क। अस्मिन् जने देव्याः कादम्बर्या रागोत्पत्तिः क। अपरिपूर्णमनोरथस्यापरिपूर्णाभिलाषस्य मे मम पितुर्जनकस्यालङ्घनीयानतिक्रमणीयागमनाज्ञागमननियोगः क। **तदिति**। तत्तस्माद्धेतोः सुदूरमत्युच्चैरारोप्यारोहणं कारयित्वा अनेनाकार्यकारिणाऽकृत्यकारिणास्माकं यत्कर्मबलं तस्य नियोगो व्यापारणं तत्र दक्षेण विबुधेन दग्धवेधसा ज्वलितधात्रा। खलु निश्चयेन वयं पातिता अधःस्थलं प्रापिताः। **तथापीति**। तथाप्येवं सत्यपि देवीं संभावयितुमाश्वासयितुं प्रयतामहे प्रयत्नं कुर्महे।

इत्यभिदधत्येवेति कथयत्येव चन्द्रापीडे नितरामतिशयेनायं चन्द्रापीडोऽनेन पूर्वोक्तेनैव कादम्बरीवृत्तान्तेन कुमारिकोदन्तेन संतापितः संतापं प्रापितः। तत्किमेनं चन्द्रापीडमात्मतेजसा स्वकीयवर्चसा परं संतापयामि। इत्युत्पन्नदय इवेति संजातकृप इव भगवांस्तिग्मदीधितिः सूर्यः करसहस्रं संजहारापससार[1]। करसहस्रं विशेषयन्नाह—**उत्तप्तेति**। उत्तप्तमुष्णीकृतं यत्कनकं सुवर्णं तस्य द्रवो रसस्तस्य स्फुलिङ्गः कणस्तद्वत्पिङ्गला कपिला द्युतिः कान्तिर्यस्मिंस्तत्तथा। दिग्विकीर्णा विक्षिप्ता या धूर्जटिजटा ईश्वरसटास्तासां मण्डलं तदनुकारि तत्सादृश्यकरणशीलम्। **अस्तेति**। रवेः सूर्यस्यास्तानुसारेणास्तसमयानुसरणेन च वासरोऽपि दिवसोऽपि

---

**टिप्प०**—1 अपसारयामासेत्युचितम्।

---

**पाठा०**—१ विसंस्थुलं. २ नैवायमेतावता. ३ अश्वमुखमिथुन. ४ तत्तीरे. ५ अनुराग. ६ पर. ७ पिङ्गलगलद्द्युति. ८ मण्डलाकारी.

र्वासरोऽपि यथोच्छ्रिततरुशिखरावलम्बिनो रक्तातपच्छेदानाकर्षन्नपससार । क्रमेण[1] च संजातकरुणानुबन्धयेव संध्ययाप्युपरि जलार्द्रपट इव प्रसार्यमाणे खरागपटले, निशागमेनाप्येवम् 'अस्य शून्यताविक्लवस्य मा भूद्दर्शनम्' इत्याप्तेनेव[2] सर्वतो नीलीपरिलम्बमानायामिव भ्राम्यमाणायां तिमिरलेखायाम्, कमलेष्वपि दुःसहत्वाच्छोषकारिणः संतापस्य तल्पकल्पनाभीतेष्विव संकुचत्सु, कुमुदेष्वपि शुचिस्वभावतयार्द्रार्द्रेषु शयनसंपादनायेवाहमहमिकयोद्दलत्सु, चक्रवाकेष्वपि सहचरीविरहविधुरेषु कादम्बरीसमीपगमनोपदेशदानायेव कलकरुणमुच्चैर्मुहुर्मुहुर्[3]व्याहरत्सु, चन्द्रमस्यपि भगवति सकल[4]भुवनैकातपत्रे सुधारजतकलशे पूर्वदिग्वधूवदनचन्दनतिलके गगनतललक्ष्मीलावण्यमहाह्रदे सकललोकाह्लादकारिणि सुधालिप्तैः करैरिव स्प्रष्टुम्, उच्छ्वासहेतुना तं ज्योत्स्नाजलेन[5] च सेक्तुम्, उदयगिरिशिखरमारूढे, प्रौढे प्रदोषसमये चन्द्रापीडस्तस्मिन्नेव वल्लभोद्याने, चन्द्रातपस्पर्शदर्शितविशदजललवोद्भेदहारिणि चन्द्रमणिशिला-

---

यथोच्छ्रितं अत्युच्चं यथा स्यात्तथा तरूणां वृक्षाणां शिखराण्यग्राणि तेष्ववलम्बिनो गृहीतावलम्बनो(ना)रक्तो य आतपस्तस्य छेदाः खण्डास्तानाकर्षन्नाकृष्टिं कुर्वन्नपससारापसृतवान् । **क्रमेण चेति** । क्रमेण च परिपाट्या च संजातः समुत्पन्नः करुणायाः कृपाया अनुबन्धः संबन्धो यस्यामेवंविधयेव संध्ययाप्युपर्युपरिष्टाज्जलेनार्द्रः खिन्नो यः पटस्तस्मिन्निव खरागपटले व्योमरागसमूहे प्रसार्यमाणे विस्तार्यमाणे । **निशेति** । एवं निशागमेनापि शून्यता विमनस्कता तया विक्लवस्य विह्वलस्यास्य राज्ञो मा भूद्दर्शनमवलोकनमित्याप्तेनेव शिष्टेनेव सर्वतः सर्वत्र नीली शैवलं तद्वत्सामस्त्येन परिलम्बमानायां[1] प्रसृतायामिव तिमिरलेखायां तमिस्रवीथ्यां भ्राम्यमाणायामितस्ततो विक्षिप्यमाणायां सत्याम् । **कमलेष्वपीति** । शोषकारिणः शोषकर्तुः संतापस्य क्लेशस्य दुःसहत्वाद्दुःखेन सोढुं शक्यत्वाद्धेतोर्या तल्पकल्पना शयनीयकल्पना तया भीतेष्विव भयं प्राप्तेष्विव कमलेष्वपि संकुचत्सु संकोचं प्राप्यमाणेषु सत्सु । **कुमुदेष्वपीति** । कुमुदेष्वपि कैरवेष्वपि शुचिस्वभावतया निर्मलप्रकृतितया । आर्द्राश्चार्द्राश्च[2] आर्द्रार्द्रास्तेष्वत्यन्तं जलसमुन्नेषु । अहं पूर्वमहं पूर्वमित्यहमहमिका तया शयनसंपादनायेव तल्पकल्पनायेवोद्दलत्सून्मिषत्सु सत्सु । चक्रवाकेष्वपि सहचरेष्वपि सहचारिण्यश्चक्रवाक्यस्तासां विरहो वियोगस्तेन विधुरेषु पीडितेषु सत्सु । कादम्बर्याः समीपमभ्यर्णं गमनं यानं तस्योपदेशस्तस्य दानायेव कलं करुणं यथा स्यात्तथोच्चैरुच्चस्वरेण मुहुर्मुहुर्वारंवारं व्याहरत्सु ब्रुवत्सु सत्सु । **चन्द्रमस्यपीति** । भगवति माहात्म्यवति सकलभुवनस्य समस्तलोकस्यैकमद्वितीयमातपत्रं छत्रं तस्मिन्सुधाया रजतकलशे रौप्यकुम्भे । पूर्वदिगेव वधूः स्त्री तस्या वदनं मुखं तस्मिंश्चन्दनतिलके मलयजपुण्ड्रे । गगनतलमाकाशतलं तस्य लक्ष्मीः शोभा तस्या लावण्यं चातुर्यं तस्य महाह्रदे । सकललोकस्य समस्तभुवनस्याह्लादं प्रमोदं करोतीत्येवंशीलः स तथा तस्मिन् । सुधालिप्तैरमृतस्निग्धैः करैर्हस्तैः स्प्रष्टुं स्पर्शं कर्तुमिव । तथोच्छ्वासहेतुनादरकारणेन[3] तं चन्द्रापीडं ज्योत्स्ना कौमुदी सैव जलं पानीयं तेन च सेक्तुं सिञ्चनं कर्तुमिव । उदयगिरिरुदयाचलस्तस्य शिखरं सानुमारूढ आरोहिते सति । प्रौढे महति प्रदोषसमये यामिनीमुखलक्षणे चन्द्रापीडस्तस्मिन्नेव पूर्वोक्त एव वल्लभोद्याने वल्लभाभिधाने वने । **चन्द्रातपेति** । चन्द्रातपस्य चन्द्रालोकस्य यः स्पर्शः संबन्धस्तेन दर्शितः प्रकटीकृतो विशदं निर्मलं यज्जलं तस्य लवोंऽशस्तस्योद्भेदः प्राकट्यं तेन हारिणि मनोहर एवंविधे चन्द्रमणेश्चन्द्रकान्तरत्नस्य शिलातलेऽङ्गानि

---

**टिप्प०—1 वस्तुतस्तु 'नीलीपरिलम्बनायामिव' इति पाठः । नीली नीलवर्णयुक्ता या परिलम्बना तिरस्करिणी तस्यामिव तिमिरलेखायां भ्राम्यमाणायाम् । 2 आर्द्राणीति क्लीबतैवोचिता, कुमुदानां नपुंसकलिङ्गत्वात् । 3 उच्छ्वासहेतुना जीवनकारणेन ।**

---

पाठा०—१ क्रमेणैव. २ प्राप्तेनेव. ३ मुहुः. ४ समस्त. ५ ज्योत्स्नाजलेनेव.

तले विमुच्याङ्गानि चरणसंवाहनोपसृतं केयूरकमवादीत्—'केयूरक, किमाकलयसि[1], याव-द्वयं परापतामस्तावत्प्राणान्धारयिष्यति[2] देवी कादम्बरी ? पारयिष्यति वा तां विनोदयितुं मदलेखा ? आगमिष्यति वा पुनस्तत्समाश्वासनाय महाश्वेता ? मत्परिचयोद्वेजिता प्रतिपत्स्यते वा शरीरस्थितये तयोरभ्यर्थनाम्[3] ? द्रक्ष्यामि वा पुनस्तस्याः स्मेरसृक्कोपान्तमालोलतारकमुत्र-स्तहरिणशावकायतेक्षणं[4] मुखम् ?' इति ।

स तु व्यज्ञपयत्—'देव, धैर्यमवलम्ब्य[5] गमनाय यत्नः क्रियताम् । तिष्ठतु तावदासन्न-वर्ती[6] सखीजनः परिजनो वा । तस्या हि त्वदालोकनेच्छैव स्वेच्छया निमेषितुमपि न ददाति । समागमाशयैवावष्टब्धं हृदयम् । श्वसितमेव मुखे वहितम्[7] । रोमाञ्च एव क्षणमपि शरीरं न मुञ्चति । दिवानिशं बाष्प एव लोचनपथस्थायी । प्रजागर एव रात्रावपि दत्त-

---

हस्तपादादीनि विमुच्य संस्थाप्य । एतेन गात्रस्यातिशैथिल्यं सूचितम् । चरणस्य संवाहनं मर्दनं तस्मिन्नुपसृतं समीपागतं केयूरकमवादीदब्रवीत् हे केयूरक, किं त्वमाकलयस्याकलनां करोषि । यावत् यावता कालेन वयं परापतामस्तत्र गच्छामस्तावत्कालं देवी कादम्बरी प्राणानसून्धारयिष्यति प्राणधारणां करिष्यति । अथवा तां कादम्बरीं विनोदयितुं मदलेखा पारयिष्यति समर्था भविष्यति । वेति विकल्पार्थे । महाश्वेता पुनर्द्वितीयवारं तस्याः कादम्बर्याः समाश्वासनायाश्वासनां कर्तुमागमिष्यति यास्यति न वा । **मदिति** । मया सार्धं यः परि-चयः परिचितिस्तेनोद्वेजिता उद्विग्ना तयोर्महाश्वेतामदलेखयोरभ्यर्थनां प्रार्थनां शरीरस्थितये देहधारणाय प्रतिप-त्स्यते न वाङ्गीकरिष्यति न वा । अङ्गीकरिष्यतीत्यर्थः[1] । **द्रक्ष्यामीति** । वेति पूर्ववत् । पुनर्द्वितीयवारं तस्याः कादम्बर्या मुखमाननं द्रक्ष्यामि दृग्विषयीकरिष्यामि वा । मुखं विशेषयन्नाह—**स्मेरेति** । स्मेरं विनिद्रं सृक्कयोरो-ष्ठप्रान्तयोरुपान्तं समीपं यस्मिन् । **आलोलेति** । आलोला चञ्चला तारका कनीनिका यस्मिंस्तथा । **उत्रस्तेति** । उत्रस्तश्चकितो यो हरिणशावको मृगशिशुस्तद्वदायते[2] विस्तीर्णे अक्षिणी यस्मिंस्तत्तथा ।

**स त्विति** । स केयूरको व्यज्ञपयद्विज्ञप्तिमकरोत् । किं तदित्याह—**देवेति** । हे देव हे स्वामिन्, धैर्यं सत्त्वमवलम्ब्यावलम्बनीकृत्य गमनाय यानाय यत्न उद्यमः क्रियतां विधीयताम् । **तिष्ठत्विति** । तावदादा-वासन्नवर्ती समीपस्थायी सखीजन आलिवर्गः परिजनो वा परिच्छदो वा तिष्ठतु । अत्रावस्थानं करोत्वित्यर्थः । **तस्या हीति** । हि निश्चितम् । तस्याः कादम्बर्यास्त्वदालोकनेच्छैव त्वन्निरीक्षणवाञ्छैव स्वेच्छया स्वातन्त्र्येण निमेषितुमपि निमेषं कर्तुमपि न ददाति न दत्ते । सर्वदा निमेषरहितैव तिष्ठतीति भावः । समागमो मेलापक-स्तस्याशा वाञ्छा तयैवावष्टब्धं स्तब्धतां प्राप्तं हृदयं चेतः । अन्यथा स्फुटितं स्यादिति भावः । **श्वसित-मिति** । मुख आनने श्वसितमुच्छ्वसितमेव वहितं[3] प्रवाहरूपतया चलितम् । **रोमाञ्चेति** । रोमाञ्च एव रोमोद्गम एव क्षणमपि क्षणमात्रमपि शरीरं देहं न मुञ्चति न त्यजति । सर्वदा तस्या रोमाञ्चलक्षणः सात्त्विकभाव एव तिष्ठतीति भावः । **दिवेति** । दिवानिशमहर्निशं बाष्प एव लोचनपथस्थायी नेत्रमार्गस्थायी । अहोरात्रं रुदन-मेव करोतीति भावः । **प्रजागर इति** । प्रजागरणमेव रात्रावपि निशायामपि दत्तदृष्टिर्न्यस्तदृग्वर्तते । रात्रा-

---

**टिप्प०**—1 मूलकारेण जिज्ञासार्थं प्रश्न एव कृतः, एवंस्थले निश्चयकरणमनुचितमेव । 2 न खलु हरिणशिशुर्नयनयोरुपमानम्, अपि तु तन्नयने । अत एव हरिणशावकस्येव आयते अक्षिणी यस्येति विग्रह उचितः । 3 सर्वत्र 'समागमाशयैव' इत्यस्यानुषङ्गः, अत एव समागमाशया मुखे श्वसितमेव अवहितम्, समागमप्रत्याशया सर्वदा मुखे निश्वासो दत्तावधानोऽस्तीति भावः । टीकाकारस्यार्थः संप्रति तुलनीयः ।

---

**पाठा०**—१ मां कलयसि; मामालपसि. २ संधारयिष्यति. ३ अभ्यर्थना; अभ्यर्थनात्. ४ आयताक्षं. ५ सम-वलम्ब्य. ६ आसन्नसखीजनः. ७ विहितम्; अवहितम्.

दृष्टिः । अरतिरेव नैकाकिन्याः क्षाम्यत्यवस्थानम् । जीवितमेव कण्ठस्थानान्नापसरति' ।

एवं[1] वदन्तं तमा[2]दिदेश विश्रान्तये केयूरकम् । आत्मनापि गमनचिन्तां प्राविशत् । यदि तावदकथयित्वानभिपत्य[3] चरणयोरनाघ्रातः शिरस्यगृहीताशीः सहसानुत्संकलित[4] इव[5] तातेनाम्बयोक्तमपक्रम्य[6] गच्छामि, ततो गतस्यापि मम कुतः सुखम्, कुतः श्रेयः, कुतो वोच्च[7]फलावाप्तिः, कीदृशी वा हृदयनिर्वृतिः । अथवा तिष्ठतु तावदियमुत्तरकालगामिनी चिन्ता । अपक्रम्य गत[9] एव कथमहम्, यत्तातेन[10] दुस्तराहवार्णवोत्तरणमहासेतुबन्धादवन्ध्य[11][12]वाञ्छितफलप्रदानकल्पद्रुमादहित[13]विक्रान्तियशोनिष्क्रान्तिद्वारार्गलदण्डादशेष[14]भुवनभवनोत्तम्भनस्तम्भात्स्वभुजादवारोप्य मय्येव राज्यभार आरोपितः[15], तदनाख्याय पदमपि निर्याते मय्यवश्यमपरिमित[16]करितुरगरथगमनसंक्षोभितधरातलैः, आलोलकदलिकाकाननाकुलीकृतभास्वद्भस्ति-

---

वपि निद्रां न गच्छतीति भावः । **अरतिरिति** । एकाकिन्या अद्वितीयाया अवस्थानमरतिरेवाधृतिरेव न क्षाम्यति न सहते । अरतिरेवैकाकिनी न मुञ्चतीति भावः । **जीवितमेवेति** । कण्ठस्थानान्निगरणस्थलाज्जीवितमेव प्राणितमेव नापसरति न दूरीभवति । प्राणाः कण्ठगता एव वर्तन्त इति भावः ।

एवं वदन्तं जल्पन्तं तं केयूरकं विश्रान्तये विश्रामायादिदेशादेशं दत्तवान् । आत्मनापि स्वेनापि गमनचिन्तां प्राविशत्प्रवेशं कृतवान् । तच्चिन्तां प्रदर्शयन्नाह—यदीति चेदर्थे । तावदादावकथयित्वानापृच्छ्य चरणयोरनभिपत्यापतित्वा प्रणाममकृत्वा शिरस्युत्तमाङ्गेऽनाघ्रातो न चुम्बितोऽगृहीताशीरनात्ताशीर्वादः सहसैकपदेऽनुत्संकलित इव स्वेच्छाप्रवृत्तपुरुष इव तातेन पित्रा, अम्बया जनन्या उक्तं प्रतिपादितमपक्रम्योल्लङ्घ्य गच्छामि व्रजामि । ततो हेत्वर्थे । तस्माद्गतस्यापि मम कुतः सुखं सौख्यम्, कुतः श्रेयः कल्याणम्, कुतो वोच्चं महद्यत्फलं साध्यं तस्यावाप्तिः प्राप्तिः । कीदृशी हृदयस्य चित्तस्य निर्वृतिः संतुष्टिः । अथवेति पक्षान्तरे । उत्तरकाल आयतिस्तत्रागामिन्यागमनशीला येयं मानसिकी प्रत्यक्षा चिन्तार्तिस्तावत्सांप्रतं तिष्ठत्वास्ताम् । **अपक्रम्येति** । अपक्रम्य व्यावृत्य गत एव कथमहम्, तातेन पित्रा दुःखेन तीर्यत इति दुस्तर एतादृशो य आहवार्णवः संग्रामसमुद्रस्तस्योत्तरण उल्लङ्घने महान्सेतुबन्धःपालिबन्धस्तस्मात् । अवन्ध्यं योग्यं यद्वाञ्छितफलं समीहितसाध्यं तस्य प्रदाने वितरणे कल्पद्रुमः कल्पवृक्षस्तस्मात् । **अहितेति** । अहितस्य शत्रोर्यद्विक्रान्तियशः पराक्रमाभिख्या तस्य निष्क्रान्तिद्वारं निर्गमप्रतोली तस्मिन्नर्गलादण्डः प्रतिषेधकाष्ठं तस्मात् । अशेषाणि समग्राणि यानि भुवनानि विष्टपानि तान्येव भवनं गृहं तस्योत्तम्भनं धारणं तत्र स्तम्भः स्थूणा तस्मात् । एवंविधात्स्वभुजात्स्वकीयबाहोरवारोप्योत्तार्य मय्येव मद्विषय एव राज्यभार आधिपत्यवीवध आरोपितो न्यस्तः, तत्तस्माद्धेतोरनाख्यायानापृच्छ्य पदमपि क्रममात्रमपि मयि निर्याते निर्गते सत्यवश्यं निश्चितमपरिमिता असंख्या ये करितुरगरथा गजाश्वस्यन्दनास्तेषां गमनं यानं तेन संक्षोभितं क्षोभं प्रापितं धरातलं वसुधातलं यैस्ते तथा तैः । आलोलानि चञ्चलानि यानि कदलिका पताका एव काननानि वनानि तैराकुलीकृता भास्वद्भस्तयो रविकिरणा यैस्ते तथा तैः । ऊर्ध्वं

---

टिप्प०—1 धिङ् मूढताम् । किं तर्हि मदलेखादयः सख्यस्तां मुञ्चन्ति? अत एव अरतिस्तामेकाकिनी न त्यजति । सर्वदा तिष्ठतीत्यर्थः । 2 अग्रे आगामित्वात्परोक्षेति वक्तव्यम् । 3 अपक्रम्य स्वेच्छया पलाय्य कथमहं गतः अर्थात् गतः स्याम् गच्छेयम्, यतो हि मदुपरि पित्रा स्वभुजादवतार्य भार आरोपित इत्यग्रेण संबन्धः ।

---

पाठा०—१ एवंच. २ एनम्. ३ अनिपत्य. ४ उत्संकलित; उच्छृङ्खलित. ५ एव. ६ अम्बया वाक्रम्य; अम्बया वक्तव्यमपक्रम्य. ७ किं श्रेयः. ८ वा फलावाप्तिः. ९ गम्यत एव कथमयम्. १० तातेन. ११ दुस्तरदुःखार्णव. १२ अवध्य. १३ अहितजन. १४ अशेषभवन. १५ समारोपितः. १६ गज.

भिः, ऊर्ध्वंध्रियमाणधवलातपत्रमण्डलच्छायान्तरितवासरव्यतिकरैः, अतिबहलरेणूद्गमावि-च्छेदापूरितभुवनकुहरैः, पुरःप्रसृतजवनवाजिभिः, अनुसंतानलग्नवेतण्डप्रायसाधनैः, श्रान्तैरपि बुभुक्षितैरप्यकृतगतिविलम्बैरापयोधेरष्टाभ्यो दिग्भ्यो राजभिरनुधावितव्यम् । तिष्ठन्तु तावत्सेवापरा राजानः । सुखपरिभुक्ताः प्रजा अपि तातस्नेहात्परित्यक्तपुत्रदाराः पृष्ठतो लगन्तीति मे चेतसि । अपि च तातस्यापि कोऽपरोऽस्ति, यस्मिन्मदीयं स्नेहं संक्रमय्य मय्यपक्रान्ते, 'यातु किमनेन गतेनागतेन वा' इत्यविनयकोपितोऽवष्टम्भं कृत्वा स्थास्यति । कस्य चापरस्य मुखमालोकयन्ती सुखायमानहृदया मत्प्रत्यानयनाय कृतार्तप्रलापा न तातमेवाकुलीकरोत्यम्बा । ताते च पृष्ठतो लग्नेऽष्टादशद्वीपमालिनी मेदिन्येव लग्ना भवतीति । तदा मया क गतम्, क स्थितम्, क विश्रान्तम्, कं यातम्, क भुक्तम्, कापसृतम्, कात्मा मया गोपायितव्यः,

---

ध्रियमाणं यद्धवलातपत्रं श्वेतच्छत्रं तस्य मण्डलं वृत्तं तस्य छायातपाभावस्तेनान्तरितस्तिरोहितो वासरव्यतिकरो दिवसवृत्तान्तो यैस्ते तथा तैः । अतिबहला अतिनिबिडा ये रेणवो धूलयस्तेषामुद्गमः प्रादुर्भावस्तस्याविच्छेदेन संतानेनापूरितानि भरितानि भुवनकुहराणि त्रिविष्टपच्छिद्राणि यैस्ते तथा तैः । पुरोऽग्रे प्रसृताः प्रसरणं प्राप्ता जवनदेशोत्पन्ना वाजिनो हया येषां ते तथा तैः । अनुसंतानमनुसैन्यसमूहं लग्नाः संबद्धा ये वेतण्डा गजास्तेषां प्रायो बाहुल्येन साधनं सैन्यं येषां तैः । कृष्णत्वसाधर्म्यात् । अत एवोत्प्रेक्षते—आ समन्तात्पयोदैरिव मेघैरिव श्रान्तैरपि खिन्नैरपि बुभुक्षितैरपि क्षुधितैरप्यकृतोऽविहितो गतौ गमनविषये विलम्बो मन्दता यैरेवंविधैः पयोधिं समुद्रं मर्यादीकृत्याष्टाभ्यः पूर्वादिदिग्भ्यो राजभिर्नृपैरनुधावितव्यं मत्पृष्ठे त्वरितगत्या समेतव्यम् । एतेन राज्ञां स्वामिकार्योद्यतत्वं सूचितम् । **तिष्ठन्त्विति** । सेवापराः सपर्यायां तत्परा राजानो भूभुजस्तावत्सांप्रतं तिष्ठन्त्वासताम् । **सुखेति** । सुखेन प्रतिबन्धकाभावेन परिभुक्तमुपभोगादिकं यासां ता एवंविधाः प्रजा अपि प्रकृतयोऽपि तातस्नेहात्पितुः प्रीतेः परित्यक्तपुत्रदारा उज्झितसुतयोषितः सत्यः पृष्ठतः पृष्ठं लगन्ति लगिष्यन्ति । भविष्यदर्थे वर्तमाना । इति मे मम चेतसि मनसि । वर्तत इति शेषः । अपिचेति विचारान्तरे । **तातस्यापीति** । तातस्यापि मत्पितुरपि कोऽपरोऽन्योऽस्ति । यस्मिन्मद्भिन्ने जने मदीयं मद्विषयकं स्नेहं प्रीतिं संक्रमय्य संक्रमणं कृत्वा मय्यपक्रान्ते गते सति, 'यातु व्रजतु । अनेन गतेन, आगतेन वा, किम्' इत्यविनयेन पितृनियोगाकरणलक्षणेन कोपितः क्रोधं प्रापितोऽवष्टम्भं स्थैर्यं कृत्वा स्थास्यत्यवस्थानं करिष्यति । **कस्य चेति** । च पुनरर्थे । अपरस्य मद्भिन्नस्य कस्यचिदनिर्दिष्टनाम्नो मुखं वदनमालोकयन्ती पश्यन्ती सुखं करोतीति सुखायते सुखायत इति सुखायमानं हृदयं चेतो यस्याः सा, तथा मम प्रत्यानयनं पश्चादानयनं तदर्थं कृतो विहित आर्तः प्रलापः पीडितरोदनं यया सैवंविधाम्बा माता न तातमेव न पितरमेवाकुलीकरोति ? भविष्यदर्थे वर्तमाना । व्याकुलीकरिष्यतीत्यर्थः । **ताते चेति** । ताते पितरि । पृष्ठत इति सार्वविभक्तिकस्तस् । पृष्ठे लग्ने प्राप्ते सत्यष्टादशसंख्याकानि द्वीपान्यन्तरीपाणि मलति धारयतीत्येवंशीला मालिनी मेदिन्येव वसुधैव लग्ना भवतीति । पृष्ठसंचारिणी भविष्यतीत्यर्थः । तदैतस्मिन्काले मया क गतं क गम्यम्, क स्थितं क स्थातव्यम्, कविश्रान्तं क विश्रमितव्यम्, क यातं क गन्तव्यम्, क भुक्तं क भोजनं कर्तव्यम्, कापसृतं कापसरितव्यम्, मयात्मा क गोपायितव्यो रक्षितव्यः ।

---

**टिप्प०—1 यवनदेशः प्रसिद्धो न जवनदेशः। अतः जवनाः जव(वेग)शालिनो ये वाजिन इत्येवार्थः ।**

---

**पाठा०**—१ अष्टाभ्योऽपि. २ अवश्यमनुधावितव्यम्. ३ लगिष्यन्ति. ४ गतेन वा. ५ वापरस्य. ६ मेदिनीव. ७ भवति. ८ प्रस्थितम्. ९ क वा खादितं क पीतं क सुप्तं कापसृतमित्यनुयुञ्जानेभ्यः कथं कात्मा. १० गोपयितव्यः.

समासादितेन चात्र कथं मया वदनं दर्शयितव्यम्, पृष्टेन वा किमुत्तरं दातव्यम्? अथापि कथंचिद्दैवनियोगान्निःसृतोऽस्मि, तथाप्यनायासनीयं तातमेवं महीयस्यायासे, तातप्रसादाददृष्टदुःखामम्बां वा निजापक्रमणशोकार्णवे पातयता[1] किं कृतं भवत्यपुण्यवता? अपि च सुब[2]हुदिवसप्रवासोपतप्तः स्कन्धावारोऽपि मेऽद्यापि न परापतति, तेनापरसंविधानादर्धपथादेव निवृत्य पुनः प्र[3]धावितव्यम् ।

अथावेद्य तातस्याम्बायाश्च ताभ्यां च विसर्जितः संविधानेन गच्छामि, तत्रापि किमिति कथयामि—'मम स्नेह[4]दुःखिता गन्धर्वराजपुत्री कादम्बरी मामुद्दिश्य मकरकेतुनायास्यमाना दुःखं तिष्ठतीति ।' 'किं वा बलवान्मे तस्यामनुरागः । न[5] तया विनाहं प्राणान्संधारयामीति ।' 'किं[6] तस्या मम च द्वयोरपि जीवितनिब[7]न्धनहेतुभूतया महाश्वेतया तत्परिणयनाय मे संदिष्टमिति ।' 'किं वा तद्दुःखमपारयन्सोढुमयं केयूरकस्तद्भक्त्या मामानेतुमागत इति ।' 'अपरोऽपि वा कश्चिद्व्यपदेशो न शक्यत एव पुनर्गमनाय कर्तुम् । संप्रत्येव समधिकाद्वर्षत्रयात्प्रसाध्य

---

समासादितेन च पुनः प्राप्तेन च मया कथं वदनं दर्शयितव्यमन्येभ्यः प्रकाशयितव्यम् । पृष्टेन वा प्रश्नविषयीकृतेन मया किमुत्तरं प्रतिवचो दातव्यं प्रदेयम् । **अथापीति** । अथेति विचारणान्तरे । कथंचिदपि महता कष्टेनापि दैवनियोगाद्विधिनिर्देशान्निःसृतोऽस्मि निर्गतोऽस्मि । तथापि निःसृतेनाप्येवमनायासनीयमखेदनीयं तातं पितरं महीयस्यत्यन्तदीर्घ आयासे प्रयासे, तातप्रसादात्पितुरनुग्रहाददृष्टदुःखामनवलोकितकृच्छ्रामम्बां मातरं वा निजस्य स्वस्यापक्रमणं निर्गमनं तस्माद्यः शोकः शुक्स एवार्णवः समुद्रस्तस्मिन्पातयताक्षेपयताऽपुण्यवता पापिना मया किं कृतं भवति किमाचरितं स्यात् । **अपि चेति** । अपि च युक्त्यन्तरे । सुबहवश्च ते दिवसाश्च सुबहुदिवसास्तान्यावत्प्रवासो देशान्तरे स्थितिस्तेनोपतप्तो व्याकुलीकृत एतादृशो मे मम स्कन्धावारोऽपि सैन्यनिवेशोऽप्यद्यापीदानीमपि न परापतति नागच्छति । तेन हेतुनार्धपथादर्धमार्गान्निवृत्य व्याघुट्यापरसंविधानाद[1]परसैन्यग्रहणाद्धेतोः पुनः कालान्तरे मया प्रधावितव्यम् । त्वरितगत्या गन्तव्यमिति भावः ।

अथेति विचारान्तरे । तातस्य पितुः, अम्बायाश्च मातुः, आवेद्य निवेद्य ताभ्यां च मातृपितृभ्यां विसर्जितो गमनाय दत्ताज्ञः संविधानेनोत्तमप्रकारेण गच्छामि व्रजामि । **तत्रापीति** । तत्राप्यावेदने । किं किमिति कथयामीति ब्रवीमि । इति वाच्यमाह—**ममेति** । मम स्नेहेन मत्प्रीत्या दुःखिता दुःखं प्राप्ता गन्धर्वराजपुत्री देवगायनन्नृपाङ्गजा कादम्बरी मां चन्द्रापीडमुद्दिश्याश्रित्य मकरकेतुना कंदर्पेणायास्यमाना खेदं प्राप्यमाणा दुःखं यथा स्यात्तथा तिष्ठति निषीदति । 'किंवा बलवान्' इत्यारभ्य 'महाश्वेतया तत्परिणयनाय मे संदिष्टम्' इत्यन्तं स्पष्टम् । **किं वेति** । किंवा इति कथयामीति पूर्वेण संबन्धः । इति किम् । तद्दुःखं कादम्बर्या दुःखं सोढुं तितिक्षितुमपारयन्नशक्नुवन् । अयं प्रत्यक्षः केयूरकस्तस्या गन्धर्वपुत्र्या भक्त्यान्तरस्नेहेन मां चन्द्रापीडमानेतुं तत्र प्रापयितुमागतः समायातः । **अपरोऽपीति** । अपरोऽप्येतद्भिन्नोऽपि कश्चिदन्यो व्यपदेशो मिषं पुनर्गमनाय कर्तुं न शक्यत एव न पार्यत एव । **संप्रत्येति** । सांप्रतमेव समधिकात्किंचिदधिकवर्षत्रयात्संव-

---

टिप्प०—1 स्वयंकृतप्रसङ्गमपि विस्मरति वराकः । सकलराजकसैन्यानुधावनस्य कारणं चन्द्रापीडपलायनमुक्तम् । ततश्च मम पुनः प्रवासे सति अपरसंविधानात् अपरस्मान्नवीनाद् मम गमनरूपघटनाविशेषात् अर्धमार्गादेव परावर्तमानेन मम स्कन्धावारेण पुनः प्रधावितव्यमित्यर्थः । टीकाकारस्याक्षराणि तु स एव बुध्यताम् ।

---

पाठा०—१ पातयसि. २ स बहु. ३ धावितव्यम्. ४ स्नेहेन. ५ नानया. ६ किं च. ७ विबन्ध.

वसुधां प्रत्यागतोऽस्मि । अद्यापि साधनमेव न परापतति । अकथयित्वा च गमनकारणं कथमात्मानं मोचयामि ? कथं वा मुञ्चतु तातोऽम्बा वा ? तत्सुहृत्साध्येऽस्मिन्नर्थेऽनर्थपतितः किं करोम्येकाकी ? वैशम्पायनोऽप्यसंनिहितः पार्श्वे मे । कं पृच्छामि ? केन सह निरूपयामि । को मे समुपदिशतु ? को वापरो मे निश्चयाधानं करोतु ? कस्यापरस्य वा विवेकिनी प्रज्ञा ? कस्य वान्यस्य श्रुतं श्रोतव्यम् ? को वापरो वेत्ति वक्तुम् ? कस्य वापरस्य मय्यसाधारणस्नेहः ? केन वापरेण सह समानदुःखो भवामि ? को वापरो मयि दुःखिते दुःखी, सुखिते सुखी ? को वापरो रहस्यावेदनस्थानम् ? कस्यापरस्योपरि कर्तव्यभारमवक्षिप्य निर्वृतात्मा तिष्ठामि ? कस्य वापरस्य मत्कार्ये पर्याकुलता ? को वापरो मया कोपितं तातमम्बां च परिबोध्य मामानेतुं समर्थः ?' इत्येवं चिन्तयत एवास्य सा क्षपा दुःखदीर्घापि क्षयमगमत् ।

प्रातरेव च किंवदन्तीं शुश्राव, यथा किल 'दशपुरं यावत्परागतः स्कन्धावारः' इति । तां च

---

त्सरत्रितयात् । हेत्वर्थे पञ्चमी । वसुधां पृथ्वीं प्रसाध्यात्मसात्कृत्वा प्रत्यागतः पश्चाद्व्यावृत्तोऽस्मि । अद्यापि सांप्रतमपि साधनमेव सैन्यमेव न परापतति न विश्रामं गृह्णाति । **अकथयित्वेति** । गमनकारणं यात्रानिदानमकथयित्वा चाविनिवेद्यात्मानं कथं केन प्रकारेण मोचयामि मोचनविषयीकरोमि । **कथमिति** । तातोऽम्बा माता वा कथं वा मुञ्चतु त्यजतु । मामिति शेषः । **तदिति** । तस्मात्कारणात्सुहृत्साध्ये मित्रनिष्पाद्येऽस्मिन्नर्थेऽहमनर्थपतितः कष्टगतः सन्नेकाक्यद्वितीयः । किं करोमि किं कुर्वे । वैशम्पायनोऽपि शुकनासपुत्रोऽपि मे मम पार्श्वेऽसंनिहितोऽनिकटवर्ती । अतः कं जनं पृच्छामि प्रश्नविषयीकरोमि । केन पुंसा सह निरूपयाम्यात्मस्वरूपं कथयामि । कः पुमान्मे मम समुपदिशतु कथयतु । को वापरोऽन्यो मे मम निश्चयाधानं निर्णयोत्पत्तिं करोतु सृजतु । कस्य वा अपरस्य जनस्य विवेकिनी विवेकवती प्रज्ञा प्रतिभा । अन्यस्य कस्य वा जनस्य श्रुतं शास्त्रं श्रोतव्यमाकर्णनीयम् । 'श्रुतं शास्त्रावधृतयोः' इत्यमरः । अपरः को वा पुमान्वक्तुं जल्पितुं वेत्ति जानाति । कस्य वापरस्य मय्यसाधारणस्नेहो निरुपमप्रीतिः । अपरेण केन सहाहं समानदुःखो भवामि । सदृशवेदनः स्यामित्यर्थः । अपरः को वा मयि दुःखिते दुःखी दुःखवान्, मयि सुखिते सुखी सुखवान्स्यात् । अपरः को वा रहस्यावेदनस्थानं गुह्यनिवेदनस्थलम् । कस्यापरस्य जनस्योपरि कर्तव्यभारं कृत्यवीवधमवक्षिप्यारोप्य निर्वृतात्मा सुखितात्मा तिष्ठामि निषीदामि । अपरस्य कस्य वा पुंसो मत्कार्ये मत्कृत्ये पर्याकुलता व्याकुलता । अपरः को वा मया कोपितं क्रोधं प्रापितं तातमम्बां च परिबोध्य प्रतिबोध्य प्रतिबोधं दत्त्वा मामानेतुं समर्थः । **क्षपेति** । एवममुना प्रकारेणास्य चन्द्रापीडस्य चिन्तयत एव ध्यायत एव सा क्षपा रात्रिर्दुःखेन कृत्वा दीर्घाप्यायतापि क्षयं नाशमगमज्जगाम ।

**प्रातरिति** । प्रातरेव प्रभात एव च । इतीति किंवदन्तीं जनश्रुतिं शुश्राव श्रुतवान् । इतियोत्यमाह—**यथेति** । किलेति सत्ये । दशपुरं यावत्स्कन्धावारः सैन्यं परागतः समायातः । **तां चेति** । तां किंवदन्तीं

---

**टिप्प०**—1 न गृहं परावर्तते । 2 सुष्ठु शोभनम् ( चतुर्दिग्भवप्रतिबन्धरहितम् ) यत् हृदयं तेन साध्ये अस्मिन्नर्थे प्रियाप्राप्तिरूपे अर्थे, अनर्थः पतितः व्याघातः समुपस्थित इति केचित् । ततश्च 'अनर्थः पतितः' इत्येव पाठः । 3 'मां नेतुं समर्थः' इत्येवोचितः पाठः । नेतुं कादम्बर्याः समीपे प्रापयितुमिति तदर्थः ।

---

पाठा०—१ माम्. २ अनर्थः. ३ किं करोमि कम्. ४ श्रोतव्यं वा. ५ वेत्ता. ६ सुखी वा. ७ अनुकोपितं. ८ नेतुम्. ९ निशा. १० किंवदन्तीम्. ११ दशपुरीम्.

श्रुत्वा समुच्छ्वसितचेताश्चकार चेतसि—'अहो धन्योऽस्मि। अहो विधेर्भगवतोऽनुग्राह्योऽस्मि, यस्य मेऽनुध्यानानन्तरमेव परागतो द्वितीयं हृदयं वैशम्पायनः' इति। प्रहर्षपरवशश्च प्रविशन्तमालोक्य दूरत एव कृतप्रणामं केयूरकमवादीत्—'केयूरक, करतलवर्तिनीं सिद्धिमधुनावधारय। प्राप्तो[1] वैशम्पायनः' इति। स तु तदाकर्ण्य गमनपरिलम्बकृतया[2] चिन्तयान्तःशून्य एव 'भद्रकमापतितम्, महती हृदयनिर्वृतिर्देवस्य जाता' इत्यभिदधदेवोपसृत्योपविश्य पार्श्वे, वैशम्पायनागमनालापमेवानुबध्य मुहूर्तमिव संज्ञोत्सारितसमस्तपरिजनं चन्द्रापीडं व्यज्ञपयत्—'देव, सर्वतो विस्फुरन्ती तडिदिव बलाहकोन्नाहम्[3], उपारूढश्यामिका मेघलेखेव सलिलागमनम्, उपदर्शितपाण्डुच्छविः प्राचीव चन्द्रोदयम्, परिमलग्राहिणी मलयानिलागतिरिव वसन्तमासावतारम्, समुच्छ्वसितमकरध्वजा[4] मधुमासलक्ष्मीरिव पल्लवोद्भेदम्, उल्लसितरागा[5] पल्लवोद्गतिरिव कुसुमनिर्गमम्, विकसितकाशकुसुममञ्जरीव शरदारम्भम्, अवस्थैवेयमावेदयति[6] निःसंशयं देवस्य गमनम्। अवश्यं च देवस्य देवीप्राप्त्या भवितव्यम्। केन कदा

---

श्रुत्वाकर्ण्य समुच्छ्वसितमुल्लसितं चेतः स्वान्तं यस्यैवंविधश्चेतसि चित्ते चकार कृतवान्। इतीति शेषः। तदेव दर्शयन्नाह—**अहो इति**। अहो इत्याश्चर्ये। अहं धन्यः कृतपुण्योऽस्मि। अहो इति पूर्ववत्। भगवतो माहात्म्यवतो विधेर्विधातुरनुग्राह्योऽनुग्रहविषयीकरणयोग्योस्मि। तन्निदानमाह—**यस्येति**। यस्य मे मम चन्द्रापीडस्यानुध्यानानन्तरमेवानुस्मरणानन्तरमेव द्वितीयं हृदयं वैशम्पायनो मन्त्रिपुत्रः परागतः समायातः। अमुना प्रकारेण प्रहर्षपरवशः प्रमोदपरतन्त्रः। च पुनरर्थे। प्रविशन्तं प्रवेशं कुर्वन्तं दूरत एव दविष्ठप्रदेशादेव कृतप्रणामं विहितनमस्कारं केयूरकमालोक्य निरीक्ष्येत्यवादीदिदमब्रवीत्। इतिवाच्यमाह—**केयूरक इति**। हे केयूरक, अधुना सांप्रतं करतलवर्तिनीं हस्ततलगतां सिद्धिं कार्यनिष्पत्तिमवधारय जानीहि। यतो वैशम्पायनः प्राप्तः समागतः। **स त्विति**। स केयूरकस्तत्पूर्वोक्तमाकर्ण्य निशम्य गमनस्य यात्रायाः परिलम्बो विलम्बस्तेन कृतयोत्पादितया चिन्तयार्त्यान्तःशून्य एव 'भद्रकं कल्याणमापतितं संजातम्। देवस्य भवतो महत्यायता हृदयनिर्वृतिश्चित्तसंतुष्टिर्जाता।' इत्यभिदधदेवेति कथयन्नेवोपसृत्योपसरणं कृत्वा पार्श्वेऽन्तिक उपविश्यास्थाय मुहूर्तमिव मुहूर्तमात्रं वैशम्पायनस्यागमनमर्थादभिमुखयानमालापं संलापमनुबध्यारभ्य संज्ञयोत्सारितो दूरीकृतः समस्तपरिजनः समग्रसेवकजनो येनैवंभूतं चन्द्रापीडं व्यज्ञपयद्विज्ञप्तिविषयीचक्रे। **देव इति**। हे देव हे स्वामिन्, इयमवस्थैव निःसंशयं निरारेकं देवस्य भवतो गमनं यानमावेदयति कथयतीति दूरेणान्वयः। केवेत्यपेक्षायामाह—**सर्वत इति**। बलाहकस्य मेघस्योन्नाहमागमनं सर्वतोऽभितो विस्फुरन्ती देदीप्यमाना तडिदिव विद्युदिव। आवेदयतीत्यस्य सर्वत्र संबन्धः। तथा सलिलस्याम्भस आगमनमुपारूढा प्राप्ता श्यामिका यथैवंविधा मेघस्य लेखा पङ्क्तिरिव। तथा चन्द्रस्य शशिन उदयमुद्गमनमुपदर्शिता पाण्ड्वी छविः कान्तिर्ययैवंविधा प्राचीव पूर्वदिगिव। तथा वसन्तमासस्य मधुमासस्यावतारं प्रादुर्भावं परिमलमामोदं गृह्णातीत्येवंशीला मलयानिलस्य मलयाचलवायोरागतिरिवागमनमिव। तथा पल्लवस्य किसलयस्योद्भेदमुद्गमनं समुच्छ्वसितो वृद्धिं प्राप्तो मकरध्वजो मदनो यस्यामेतादृशी मधुमासलक्ष्मीरिव वसन्तमासश्रीरिव। तथा कुसुमस्य पुष्पस्य निर्गमं निःसरणमुल्लसित उल्लासं प्राप्तो रागो रक्तता यस्यामेतादृशी पल्लवोद्गतिरिव किसलयोद्भेद इव। तथा शरदारम्भं घनात्ययप्रारम्भं विकलिता विनिद्रिता काशकुसुममञ्जरीव। इयमवस्थैव देवस्य गमनं यानमावेदयतीत्यन्वयस्तु प्रागेवोक्तः। **अवश्यं चेति**। देवस्य स्वामिनोऽवश्यं निश्चयेन देवीप्राप्त्या भवितव्यम्। अत्रार्थ उपपत्तिमाह—**केनेति**। केन पुरुषेण कदा वा कस्मिन्काले ज्योत्स्नारहितश्चन्द्रिकावर्जितश्चन्द्रमाः कुमुदबा-

---

पाठा०—१ प्राप्तो द्वि. २ गगन. ३ उन्नादम्. ४ अभ्युच्छ्रित. ५ रागपल्लव. ६ आवेदयति देवस्य.

वावलोकितो ज्योत्स्नारहितश्चन्द्रमाः, कमलाकरो वा मृणालिकया विना, उद्यानभागो वा लताशून्यः। अपि च न राजत एव सहकारकुसुममञ्जरीपरिग्रहमन्तरेण सर्वजनसुभगोऽपि कुसुममासः, असंभावितदानलेखालक्ष्मीकं वा वदनं यूथाधिपतेः। किंतु यावद्वैशम्पायनः परापतति, यावच्चैतेन[1] सह गमनसंविधानं[2] निरूपयति देवः, तावदवश्यं कालक्षेपेण भाव्यम्। यादृशी च[3] अकालक्षमा देव्याः शरीरावस्था तादृशी निवेदितैव मया। सर्वोऽपि प्रत्याशया धार्यते। देव्यास्तु पुनर्देवदर्शनेनाद्ययावन्निष्प्रत्याशमेव हृदयं केनाश्वासनेन वर्तताम्। मद्वार्तोपलम्भादेतदुपपत्स्यते चेतसि—'यथास्ति कार्यं मे जीवितेन, दुःखान्यपि सहन्ती धारयाम्येतदिति।' अतो विज्ञापयामि, चेतसा त्वग्रतो गत एव देवः, शरीरेणाप्यनुपदमुच्चलित एव। किमपरं मयात्र स्थितेन साधनीयम्। तद्देवागमनोत्सवावेदनाय गमनानुज्ञया प्रसादं क्रियमाणमिच्छति मे प्रणयप्रसाददुर्ललितं हृदयमिदानीमेव।'

इति विज्ञापिते केयूरकेणान्तःपरितोषविकसितया विकचनीलोत्पलपुञ्जमालिकयेव दृष्ट्या

---

न्धवोऽवलोकितो निरीक्षितः। वाथवा मृणालिकया कमलिन्या विना कमलाकरस्तडागः। वाथवोद्यानभागो वनप्रदेशो लताशून्यो वल्लीरहितः। अपि चेति युक्त्यन्तरे। सहकारस्याम्रस्य कुसुममञ्जरी तस्याः परिग्रहमन्तरेण स्वीकारव्यतिरेकेण सर्वजनसुभगोऽपि समग्रलोकप्रियोऽपि कुसुममासो वसन्तमासो न राजत एव न शोभत एव। असंभाविता(न)संभावनाविषयीकृता दानलेखाया मदवीथ्या लक्ष्मीः श्रीर्यस्मिन्नेवंविधं यूथाधिपतेर्यूथनाथस्य वदनम्। न राजत इत्यस्य सर्वत्र संबन्धः। **किंत्विति**। किंतु यावद्यावता कालेन वैशम्पायनो मन्त्रिसुतः परापतत्यागच्छति, यावच्चैतेन सह वैशम्पायनेन सार्कं गमनसंविधानं यात्राप्रकारं देवो भवान्निरूपयति प्रकाशयति, तावदवश्यं निश्चितं कालक्षेपेण दिनगमनिकया भाव्यं भवितव्यम्। **यादृशीति**। यादृशी च देव्याः कादम्बर्याः शरीरावस्था देहदशाऽकालक्षमा समयासहा वर्तते तादृशी मया निवेदितैव विज्ञप्तिविषयीकृतैव। **सर्व इति**। सर्वोऽपि पदार्थः प्रत्याशया प्रतिवाञ्छया धार्यते ध्रियते। **देव्यास्त्विति**। तु पुनरर्थे। देव्याः कादम्बर्याः पुनर्द्वितीयवारं देवदर्शनेन भवदवलोकनेन अद्य यावदेतद्दिवसमारभ्य हृदयं चित्तं निष्प्रत्याशमेव निराशमेव वर्तते, तर्हि केनाश्वासनेन वर्तताम्। **मदिति**। मद्वार्ताया मत्प्रवृत्तेरुपलम्भात्प्राप्तेरेतच्चेतसि चित्त उपपत्स्यते प्रादुर्भविष्यति। तदेव दर्शयन्नाह—**यथेति**। मे मम जीवितेन प्राणितेन कार्यं कृत्यमस्तीति हेतोर्दुःखान्यपि कृच्छ्राण्यपि सहन्ती सहमानैतच्छरीरं धारयामि। **अत इति**। अतःकारणादहं विज्ञापयामि विज्ञप्तिं करोमि। किं तदित्याह—**चेतसा त्विति**। देवो भवांश्चेतसा स्वान्तेनाग्रतः पुरतो गत एव, तथा शरीरेणापि देहेनाप्यनुपदं पश्चात्त्वरितमेव। 'अनुपदं क्लीबमव्ययम्' इत्यमरः। उच्चलित एव प्रचलित एव। **किमिति**। मया केयूरकेणात्रस्थितेन भवत्समीपावस्थितेनापि किमपरं पूर्वोक्तादन्यत्साधनीयं करणीयम्। **तदिति**। तत्तस्माद्धेतोर्देवस्य स्वामिनो गमनं यानं तदेवोत्सवो महस्तस्यावेदनं ज्ञापनं तस्मै गमनस्य प्रयाणस्यानुज्ञादेशस्तया क्रियमाणं विधीयमानं प्रसादमिदानीमेव सांप्रतमेव मे मम प्रणयेन स्नेहेन यः प्रसादः प्रसन्नता तेन दुर्ललितमुच्छृङ्खलं हृदयमिच्छत्यभिलषति।

केयूरकेणेति विज्ञापिते विज्ञप्तिविषयीकृते सति, अन्तर्मध्ये यः परितोषः संतुष्टिस्तेन विकसितया विनिद्रया दृष्ट्या दृशा। अत एवोत्प्रेक्षते—विकचा विकस्वरा या नीलोत्पलपुञ्जमालिका नीलकुवलयस्रक्तयेव दर्शितः

---

टिप्प०—1 आगमनमित्युचितम्।

---

पाठा०—१ तेन. २ विधानम्. ३ वा. ४ दर्शनेऽद्य. ५ आश्वासेन. ६ उपालम्भात. ७ उत्पत्स्यते. ८ स्थितेनापि.

दर्शित[1]प्रसादश्चन्द्रापीडः प्रत्युवाच—'किमुच्यते ? कस्यापरस्येदृशोऽस्मद्दुःखासहिष्णुरनपेक्षितस्वशरीरशक्तिरुत्साहः ? कस्यापरस्येदृशी देशकालज्ञता ? को वापरोऽस्मास्वेवं निर्व्याजभक्तिः ? तत्साधु चिन्तितम् । गम्यतां देव्याः प्राणसंधारणाय, [2]ममागमनप्रत्ययार्थं च पत्रलेखाप्यग्रतस्त्वयैव सह [3]यातु देवीपादमूलम् । इयमपि प्रसादभूमिरेव देव्याः । इमामप्यालोक्य कियत्यपि धृतिरवश्यमुत्पद्य[4]त इति मे चेतसि । अपि चास्या अपि देव्यामस्त्येव स्नेहो भक्तिश्च' इत्यभिधाय पृष्ठत [5]उपविष्टामेवं तां पत्रलेखामद्राक्षीत् । सा तु किंचिदवनतमुखी 'निजाज्ञाक्षराणि प्रयच्छतु देवः' इति व्यज्ञपयत् । कृतप्रस्थितिनिश्चयायां च तस्यां मेघनादाह्वानाय प्रतीहारीमादिदेश ।

आदेशानन्तरमेव [7]चागतं दूरतः प्रणतमाज्ञाप्रतीक्षं स्वयमेवाहूय सोपग्रहमादिदेश—'मेघनाद, यस्यां भूमौ पत्रलेखानयनाय मया त्वं [8]प्रस्थापितस्तां [9]भूमिमेव पत्रलेखामादाय केयूरकेण सहाग्रतो गच्छ । अहमपि वैशम्पायनमालोक्यानुपदमेव ते तुरङ्गमैः परागतः' इत्या-

---

प्रकाशितः प्रसादः प्रसन्नता येनैवंभूतश्चन्द्रापीडः प्रत्युवाच प्रत्यब्रवीत् । किं तदित्याह—**किमिति** । किमुच्यते किं कथ्यते । **कस्येति** । कस्यापरस्यान्यस्येदृश एतादृगस्माकं यद्दुःखं तस्यासहिष्णुरसहनशीलोऽनपेक्षिताऽवाञ्छिता स्वशरीरस्य निजदेहस्य शक्तिः सामर्थ्यं यस्मिन्नेवंविध उत्साहः प्रगल्भता । **कस्येति** । कस्यानिर्दिष्टनाम्न ईदृश्यनिर्वचनीया देशः प्रदेशः कालः समयस्तयोर्ज्ञता ज्ञातृता । **को वेति** । को वापरो जनोऽस्मास्वस्मद्विषयेष्वेवं पूर्वोक्तप्रकारेण निर्व्याजं निर्दम्भं यथा स्यात्तथा भक्तिर्यस्य स तथोक्तः । तदिति हेत्वर्थे । तस्माद्धेतोः साधु यथा स्यात्तथा चिन्तितमालोचितम् । चिन्तितस्य विशेषणं वा । साधु शुभं चिन्तितम् । चिन्ताविषयीकृतमित्यर्थः । **गम्यतामिति** । देव्याः कादम्बर्याः प्राणसंधारणायासुधृतये । ममागमनं तत्र यानं तस्य प्रत्ययो विश्वासस्तदर्थं च त्वया गम्यतां व्रज्यताम् । देव्याः कादम्बर्याः पादमूलं चरणसमीपं पत्रलेखापि त्वयैव सहाग्रतः पुरतो यातु व्रजतु । **इयमिति** । इयमपि पत्रलेखापि देव्याः कादम्बर्याः प्रसादभूमिरेवानुग्रहस्थानमेव । **इमामिति** । इमां पत्रलेखामप्यालोक्य निरीक्ष्य कियत्यपि कियन्मात्रा नतु समग्रा धृतिः संतुष्टिरवश्यं निश्चयेन । कादम्बर्या भाविनीति शेषः । इति मे मम चेतसि चित्त उत्पद्यत उद्भाव्यते । बुध्येति शेषः । **अपि चेति** । अपि चेति प्रकारान्तरे । अस्याः पत्रलेखाया अपि देव्यां कादम्बर्यां स्नेह आभ्यन्तरप्रीतिर्भक्तिश्चाराध्यत्वेन ज्ञानमस्त्येव । एवकारोऽयोगव्यवच्छेदार्थः । इति पूर्वोक्तमभिधाय कथयित्वा पृष्ठतः पृष्ठे । सार्वविभक्तिकस्तस् । उपविष्टां स्थितामेव पत्रलेखामद्राक्षीद्व्यलोकयत् । **सा त्विति** । सा पत्रलेखा । तु पुनरर्थे । विलोकनानन्तरमित्यर्थः । किंचित्स्वल्पमवनतं नम्रं मुखमाननं यस्या एवंविधा सती निजाया आत्मीयाया आज्ञाया निदेशस्याक्षराणि वचनानि देवो भवान्प्रयच्छतु ददातु । त्वं व्रजेति स्वमुखेन कथयेत्यर्थः । इति व्यज्ञपयद्विज्ञप्तिमकार्षीत् । **कृतेति** । कृतो विहितः प्रस्थितेर्गमनस्य निश्चयो यस्या एवंविधायां च तस्यां पत्रलेखायां सत्यां मेघनादस्यात्मसेवकस्याह्वानमाहूतिस्तस्मै प्रतीहारीं द्वारपालिकामादिदेशादिष्टवान् ।

आदेशानन्तरमेव नियोगाव्यवहितमेवागतं च दूरतः प्रणतं प्रविष्टप्रदेशान्नतमाज्ञां यावत्प्रतीक्षा विलम्बो यस्यैवंभूतं स्वयमेवात्मनैवाहूयाह्वानं कृत्वा सोपग्रहं सादरमादिदेशादिष्टवान् । हे मेघनाद, यस्यां भूमौ पत्रलेखाया आनयनायानयनकृते मया त्वं पूर्वं स्थापितो न्यस्तस्तां भूमिं यावत्पत्रलेखामादाय गृहीत्वा केयूरकेण सह सार्धमग्रतो गच्छ व्रज । अहमपि वैशम्पायनमालोक्य निरीक्ष्य ते तवानुपदमेवानुचरणन्यासमेव तुरङ्गमै-

---

**पाठा०**—१ चन्द्रप्रसारः. २ मदागमन. ३ प्रयातु. ४ उत्पत्स्यते. ५ समुपविष्टम्. ६ एवं नेति पत्रलेखामप्राक्षीत्. ७ आगतं च. ८ स्थापितः. ९ भूमिं यावत्पत्र.

दिश्य, 'यदाज्ञापयति देवः'[1] इति कृतनमस्कृतौ त्वरितगमनसंविधानाय निष्क्रान्ते मेघनादे 'देव, किमतःपरं विलम्बेन' इत्यभिधाय, मेघनादनिर्गमानन्तरं[2] गमनप्रणामोत्थितं केयूरकं सस्नेहमाहूय, सबाष्पया दृष्ट्या पुनःपुनरालोक्य, परिष्वज्य च सपुलकाभ्यां दोर्भ्याम्, आत्मकर्णादपनीयानेकवर्णरुचिरं संदेशमिव कर्णाभरणमस्य कर्णे कृत्वा कण्ठागतबाष्पगद्गदिकागृह्यमाणाक्षरमवादीत्[3]—'केयूरक, त्वया तु मे देवीसंदेशो नानीत एव । तत्किं तव हस्ते तदनुरूपं संदिशाम्यपूर्वम्[4]? विज्ञापयितव्या देवी । तत्रापि किमलीकलज्जाजलभारोद्वहनेन त्वामायासयामि । यात्येव पत्रलेखा देवीपादमूलम् । इयं विज्ञापयिष्यति' इत्यभिदधदेवातर्कितोपनतात्मविरहपीडाम्, अमङ्गलशङ्कया कृतयत्नामपि बाष्पवेगमपारयन्तीं संधारयितुम्, उत्प्लुताबद्धलक्षशून्यदृष्टिसंचारणां[5] चरणपाताभिमुखीं पत्रलेखां प्रणयेनाभिमुखो भूत्वा बद्धाञ्जलिरभाषत—'पत्रलेखे, साञ्जलिबन्धेन शिरसा प्रणम्य मदीयेन विज्ञाप्या

---

र्वाजिभिः । करणे तृतीया । परागतः समागत इति । यदाज्ञापयत्याज्ञां ददाति देव इत्यादिश्य कथयित्वा कृता नमस्कृतिः प्रणामो येनैवंभूते त्वरितं शीघ्रं यद्गमनं यानं तस्य संविधानं करणं तस्मै निष्क्रान्ते बहिर्निर्गते मेघनादे, हे देव, अतःपरं विलम्बेन किमित्यभिधायोक्त्वा मेघनादनिर्गमादनन्तरमव्यवहितं गमनाय यात्रायै यः प्रणामः प्रणतिस्तस्मा उत्थितं केयूरकं सस्नेहं सप्रीति यथा स्यात्तथाहूयाह्वानं कृत्वा सबाष्पया सरोदनजलया दृष्ट्या दृशा पुनःपुनर्वारंवारमालोक्य निरीक्ष्य सपुलकाभ्यां सरोमाञ्चाभ्यां दोर्भ्यां भुजाभ्यां परिष्वज्य चालिङ्ग्य चात्मकर्णात्स्वकीयश्रवणादपनीय दूरीकृत्यानेकवर्णै रक्तपीतादिभी रुचिरं मनोहरम् । अत एवोत्प्रेक्षते—विविधवर्णैरक्षरै रुचिरं संदेशमिव वाचिकमिव । एवंविधं कर्णाभरणं श्रवणभूषणमस्य केयूरकस्य कर्णे श्रोत्रे कृत्वा कण्ठागतो यो बाष्पो रोदनं तस्माद्या गद्गदिका गद्गदेत्यव्यक्तध्वनिस्तया गृह्यमाणान्युच्चार्यमाणान्यक्षराणि यथा स्यात्तथावादीदवोचत् । किं तदित्याह—**केयूरक इति** । हे केयूरक, त्वया भवता । तु पुनरर्थे । मे मम देव्याः कादम्बर्याः संदेश उदन्तो नानीत एव न प्रापित एव । तत्तस्माद्धेतोस्तव हस्ते तस्याः कादम्बर्या अनुरूपं योग्यमपूर्वं नवीनं किं संदिशामि प्रतिवाचिकं यच्छामि । देवी कादम्बरी त्वया विज्ञापयितव्या विज्ञप्तिविषयीकार्या । तत्राप्यपूर्वविज्ञापनेऽलीका या लज्जा त्रपा तस्या जालं समूहस्तस्य भारो वीवधस्तस्योद्वहनेन त्वामायासयामि परिश्रममुत्पादयामि । पत्रलेखा देवीपादमूलं कादम्बरीचरणसमीपं यात्येव व्रजत्येव । अत इयमेव विज्ञापयिष्यति विज्ञप्तिं करिष्यति । इत्यभिदधदेवेति कथयन्नेव प्रणयेन स्नेहेनाभिमुखो भूत्वा संमुखीभूय बद्धाञ्जलिः पत्रलेखामभाषताब्रवीदित्यन्वयः । पत्रलेखां विशेषयन्नाह—**अतर्कितेति** । अतर्किताऽचिन्तितोपनता प्राप्तात्मनः स्वस्य विरहपीडा वियोगव्यथा यस्याः सा ताम् । पुनः किं कुर्वन्तीम् । अमङ्गलशङ्कयाऽशुभारेकया कृतयत्नामपि विहितोद्यमामपि बाष्पवेगं नेत्राम्बुप्रवाहं संधारयितुं संस्थापयितुमपारयन्तीमशक्नुवन्तीम् । उत्प्लुताबद्धलक्षाऽविषयीकृतविषयात एव शून्या या दृष्टिर्दृक् तस्याः संचारणं यस्याः सा ताम् । चरणपातोऽभिवादनं तं प्रत्यभिमुखीं संमुखीम् । किमुवाचेत्याह—**पत्रलेखे इति** । हे पत्रलेखे, मदीयेन मामकीनेन साञ्जलिबन्धेनाञ्जलिबन्धेन सहवर्तमानेन शिरसोत्तमाङ्गेन प्रणम्य नमस्कृत्य देवी

---

**टिप्प०—1 'अनुत्फुल्लाबद्धलक्ष्य०' इति पाठः । अनुत्फुल्लम् अविकस्वरम् [ अविशदप्रकटनपरत्वादिति भावः ], तथा अबद्धलक्ष्यं विषयमलक्ष्यीकृत्य प्रवृत्तम् ( विरहदुःखस्यात्यन्तमुत्पीडनात् ), अत एव शून्यं निर्विषयं दृष्टिसंचारणं यस्यास्तामिति तदर्थः ।**

---

**पाठा०**—१ यथा. २ निर्गमन. ३ गद्गदिकाक्षरम्. ४ प्रतिसंदिशानि. ५ उत्फुल्ल.

देवी कादम्बरी, येन[1] सर्वखलानां धुरि लेखनीयेन तथा प्र[2]थमदर्शनेऽपि वत्सलत्वात्स्वभावस्य दर्शितप्रसादातिशयां देवीं प्रणामेनाप्य[3]संभाव्य गच्छता प्रज्ञा जडतया, ज्ञानं मौढ्येन, धीरता त[4]रलत्वेन, स्नेहलता रौक्ष्येण, गौरवं लघुतया, प्रियंवदता पारुष्येण, मृदुहृदयता नैष्ठुर्येण, स्थै[5]र्यं चञ्चलतया, द[5]यालुता निस्त्रिंशत्वेन, आर्जवं माया[6]जालेन, सत्यवादितालीककाकुसंपादनेन, दृढभक्तितावज्ञानेन, पेशलता कौटिल्येन, लज्जा धार्ष्ट्येन, औदार्यं क्षुद्रतया, दाक्षिण्यममहानुभावतया, प्रश्रयोऽभिमानेन, कृतज्ञता कृतघ्नतया, शीलं पौरोभा[7]ग्यतया, सर्वगुणा एव[8] दोषैः प[9]रिवृताः । स कमिवापरं गुणमवलम्ब्य पुनः परिग्रहाय विज्ञापयतु । केन च[10]ाङ्गीकरोतु देवी । किमुपदर्शितालीकात्मार्पणेन न प्रतारितं देव्या हृदयमिति, किं प्रकृतिपेशलं हृदयमपहृत्य नापक्रान्तोऽस्मीति, किमियं प्राणसंदेहकारिणी निष्करुणेन शरीरावस्था नोपेक्षितेति, किमह[11]मस्या न कारणमित्येत[12]त्सर्वदोषाश्रयेणाप्यनुवृत्त्या चरणावाराधि-

---

कादम्बरी विज्ञाप्या विज्ञप्तिविषयीकार्या। किं तदित्याह—येनेति । स्वभावस्य प्रकृतेर्वत्सलत्वाद्धितकारित्वात्प्रथमदर्शनेऽप्याद्यावलोकनेऽपि तथा तेन प्रकारेण दर्शितः प्रकाशितः प्रसादातिशयः प्रसन्नताधिक्यं ययैवंविधां देवीं कादम्बरीं प्रणामेनापि नमस्कृत्याप्यसंभाव्यासंभावनाविषयीकृत्य गच्छता व्रजता येन सर्वखलानां समग्रदुर्जनानां धुर्यादौ लेखनीयेन गणनीयेन मया सर्वगुणा ऐश्वर्यादयो दोषैर्वैगुण्यैः परि[1]वृताः । स्वस्वरूपमापादिता इत्यर्थः । तदेव दर्शयन्नाह—प्रज्ञेति । प्रज्ञा प्रतिभा जडतया मूर्खतया, ज्ञानं मौढ्येन मूढतया, धीरता धैर्यं तरलत्वेन तरलतया, स्नेह[2]लता रौक्ष्येण रूक्षतया, गौरवं गुरुता लघुतया लघुत्वेन, प्रियंवदता मिष्टभाषित्वं पारुष्येण काठिन्येन, मृदुहृदयता सुकुमारचित्तता नैष्ठुर्येण निष्ठुरत्वेन, स्थैर्यं स्थिरता चञ्चलतया चाञ्चल्येन, दयालुता कृपालुता निस्त्रिंशत्वेन निष्कृपत्वेन, आर्जवमृजुत्वं मायाजालेन निकृतेर्जालतया, सत्यवादिता अलीकभाषित्वमलीकासत्या या काकुर्वक्रोक्तिस्तस्याः संपादनेन निष्पादनेन, दृढभक्तिता स्थिराराध्यताऽवज्ञानेनावगणनेन, पेशलता हृद्यता कौटिल्येन कुटिलतया, लज्जा त्रपा धार्ष्ट्येन धृष्टतया, औदार्यमुदारता क्षुद्रतया तुच्छतया, दाक्षिण्यं सरलत्वममहानुभावतयाऽमाहात्म्यतया, प्रश्रयो विनयोऽभिमानेनाहंकृत्या, कृतज्ञता कृतवित्त्वता कृतघ्नतयाऽकृतज्ञतया, शीलमाचारः पौरोभाग्यतया दोषैकदृक्तया । 'दोषैकदृक्पुरोभागी निकृतस्त्वनृजुः शठः' इत्यमरः । सर्वगुणा एव दोषैः परिवृता इत्यन्वयस्तु प्रागेवोक्तः । स इति । स चन्द्रापीडः कमिव कथमिव कथमपरं पूर्वोक्तगुणेभ्यो भिन्नं गुणमवलम्ब्यावलम्बनीकृत्य पुनर्द्वितीयवारं परिग्रहाय स्वीकाराय विज्ञापयतु विज्ञप्तिं कारयतु । केन च गुणेन देवी कादम्बर्यङ्गीकरोतु स्वीकरोतु । मामिति शेषः । किमिति । उपदर्शितं यन्मिथ्यात्मार्पणमलीकं मिथ्यात्मनोऽर्पणं प्रदानं तेन देव्याः कादम्बर्या हृदयं चेतः किं न प्रतारितं न वञ्चितमिति । प्रकृत्या स्वभावेन पेशलं हृद्यं हृदयमपहृत्याहृत्य किं नापक्रान्तोऽस्मि न गतोऽस्मीति । इयं प्राणसंदेहकारिणी शरीरावस्था देहदशा निष्करुणेन निष्कृपेण किं नोपेक्षितोपेक्षाविषयीकृता । अहं किमस्या अवस्थाया न कारणं न निदानमित्येतत्सर्वदोषाश्रयेणापि सर्ववैगुण्याधारभूतेनाप्यनुवृत्त्यानुकूल्येन चरणौ पादावाराधितौ सेविताविति वा । तदेवमात्मना सर्वप्रकारेण सर्वगुणहीनस्यापि समग्रगुण-

---

टिप्प०—1 'परिवर्तिताः' इत्येव पाठः । प्रज्ञा जडतया परिवर्तिता, ज्ञानं मौढ्येन परिवर्तितम्, इत्यादि लिङ्गवचनव्यत्ययेन योजनीयम् । यस्मिन् स्थिता प्रतिभा पर्यवसाने जडतारूपेण परिणतेत्येव सर्वत्र तात्पर्यं बोध्यम् । 2 स्नेहं लातीति स्नेहलः तद्भावः स्नेहलता, स्निग्धता । 3 देव्याः कादम्बर्या इत्यर्थः ।

---

पाठा०—१ येन सर्वाभिलापणीयेन तथा. २ प्रथमदर्शनेन. ३ असंभाव्यागच्छतां सर्वखलानां धुरि लेखनीयेन प्रज्ञा. ४ तारल्येन. ५ धैर्यं भीरुतया दयालुता. ६ मायामन्त्रेण. ७ पौरोभाग्येन. ८ एवम्. ९ परिवर्तिताः; परावृत्ताः. १० वा. ११ अस्याः संदिशामि न कारणम्. १२ अन्तर.

ताविति वा। तदेवमात्मना सर्वगुणहीनस्यापि मे देवीगुणा एवावलम्बनम्। इयमेव ते स्वभावसरसा दूरस्थमपि मदनहुतभुजा दह्यमानं रक्षत्येव सरलता, मुहुर्मुहुराह्वयत्येव स्नेहलता, आनयत्येव स्थिरप्रतिज्ञता, ढौकयत्येव दक्षिणता, अभिपद्यत एव वत्सलता, चरणपतितं न निर्भर्त्सयत्येव मृदुहृदयता, उत्थाप्य संभावयत्येव महानुभावता, आलपत्येव प्रियंवादिता, ददात्येव हृदयेऽवकाशमत्युदारता। यच्च तथापि गत्वा निर्लज्जहृदयः पुनर्वदनदर्शनदानसाहसमङ्गीकरोमि, अत्रापि सत्प्रकृतयो देवीप्रसादा एव कारणम्। एते हि विशदत्वादुदारभावात्संगतत्वाच्च क्षणपरिचिता अपि समारोपितजीवितप्रत्याशा न किंचिन्न कारयन्ति। स्मारयन्ति सेव्यताम्, देव्याश्चरणपरिचर्यायै समुत्साहयन्ति, शिक्षयन्ति सेवाचातुर्यम्, उपदिशन्त्याराधनोपायान्, चाटुकारो भवेत्यसकृदाज्ञापयन्ति, एवं स्वीयतामिति स्वयमेवोपदर्शयन्ति, मुखावलोकिनामकालोपसर्पणकोपेऽनुनयन्ति, परितोषावसरेऽनुगृह्णन्ति गुणानुवादेन, लज्जापसृतं हठादाकृष्योपसर्पयन्ति, नान्यत्र क्षणमपि ददत्यवस्थातुम्।

---

रहितस्यापि मे मम देवीगुणा एव कादम्बरीगुणा एवावलम्बनमाश्रयः। **इयमिति**। इयमेव ते तव स्वभावेन प्रकृत्या सरसा स्निग्धा दूरस्थमपि दविष्ठमपि मदनहुतभुजा कंदर्पाग्निना दह्यमानं ज्वलमानं सरलता ऋजुता रक्षत्येव पालयत्येव। मुहुर्मुहुर्वारंवारं स्नेहलता स्नेहलस्य भावः स्नेहलताह्वयत्येव निमन्त्रयत्येव। स्थिरप्रतिज्ञता दृढसंगरतानयत्येव प्रापयत्येव। दक्षिणता चातुर्यता ढौकयत्येव प्राभृतीकरोत्येव। वत्सलता हितकारिताऽभिपद्यत एवाङ्गीकरोत्येव। मृदुहृदयतार्जवचित्तता चरणपतितं पादप्रणतं जनं न निर्भर्त्सयत्येव न तिरस्करोत्येव। महानुभावता साधुस्वभावतोत्थाप्योत्थानं कारयित्वा संभावयत्येव प्रीणयत्येव। प्रियवादिता मिष्टवक्तृताऽऽलपत्येव संभाषयत्येव। अत्युदारतातिवितरणता हृदये चित्तेऽवकाशमन्तरं ददात्येव प्रयच्छत्येव। **यच्चेति**। यत्तथा गत्वापि निर्लज्जहृदयो निस्त्रपचेताः पुनर्द्वितीयवारं वदनदर्शनस्य दानं तस्मिन्साहसं धैर्यमङ्गीकरोमि स्वीकरोमि। अत्रापि वदनदर्शनेऽपि सत्प्रकृतयः शोभनस्वभावा देव्या गन्धर्वपुत्र्याः प्रसन्नता लक्ष्येणानुग्रहा एव कारणं निमित्तम्। **एते हीति**। हीति निश्चितम्। एते प्रसादा विशदत्वान्निर्मलत्वादुदारभावात्सरलत्वेन संगतत्वाच्च मिलितत्वाच्च क्षणं समयमात्रं परिचिता अपि परिचितविषयीभूता अपि समारोपिताः स्थापिताः जीवितस्य प्राणितस्य प्रत्याशा वाञ्छा यैरेवंविधाः किंचिन्न कारयन्तीति न, अपि तु कारयन्त्येव। तदेवाह—**स्मारयन्तीति**। सेव्यतां सपर्यायोग्यताभावं स्मारयन्ति स्मरणविषयीकारयन्ति। देव्याः कादम्बर्याश्चरणपरिचर्यायै क्रमसेवायै समुत्साहयन्त्युत्साहं कारयन्ति। सेवाचातुर्यं सपर्यादक्षतां शिक्षयन्ति पाठयन्ति। आराधनोपायान्समाराधनहेतूनुपदिशन्ति कथयन्ति। चाटुकारश्चटुकृत्त्वं भवेत्यसकृद्वारंवारमाज्ञापयन्त्याज्ञां ददति। एवममुना प्रकारेण स्वीयतामास्यतामिति स्वयमेवात्मनैवोपदर्शयन्ति प्रकाशयन्ति। मुखावलोकिनामास्यनिरीक्षकाणामकालेऽप्रस्तावे उपसर्पणमागमनं तज्जनितो यः कोपस्तस्मिन्ननुनयन्ति प्रसादयन्ति। परितोषावसरे संतुष्टिक्षणे गुणानुवादेन गुणकथनेनानुगृह्णन्त्यनुग्रहं कुर्वन्ति। लज्जया त्रपयापसृतं पश्चाद्गतं हठाद्बलादुपसर्पयन्ति समीप आनयन्ति। अन्यत्रान्यस्मिन्स्थले क्षणमप्यवस्थातुमवस्थानं कर्तुं न ददति न

---

**टिप्प०**—1 ते स्वभावसरसा सरलता दूरस्थमपि मदनहुतभुजा दह्यमानं ( माम् ) रक्षत्येवेत्यन्वयो बोद्धव्यः। 2 चतुरता, ( भाववाचिनः पुनर्भावप्रत्ययो नोचित इति चातुर्यताऽचातुर्यमेव )। 3 महाहृदयता। वितरणकथा तु क्षुद्रा। 4 मुखावलोकितमिति पाठे तु—मुखावलोकितं मुखावलोको जातो यस्मिन् ( मुखावलोकजनितम् ) मम दुर्जनस्येति शेषः। मम मुखदर्शनजनितमकालोपसर्पणप्रभवं कोपम् अनुनयन्ति उपशमयन्ति, इत्यर्थः।

---

**पाठा०**—१ एव. २ विहीन. ३ अपि माम्. ४ स्थिरप्रकृतिता; स्थिरप्रज्ञता. ५ अभ्युपपद्यते. ६ प्रियंवादिता; प्रियनेदिता. ७ स्मरयति; स्मरयन्ति. ८ चाटुकारा भवन्तु. ९ मुखावलोकितम्. १० कोपम्. ११ अनुतपन्ति.

अपि चैतेऽनुग्राहकत्वादेवापरित्याज्याः, गुरुत्वादेव कृतावष्टम्भाः, विस्तीर्णत्वादेवालङ्घनीयाः, प्रभूतत्वादेवापरिहार्याः । तदेभिरहं विनाप्यागमनाज्ञया सुदूरमपक्रान्तोऽपि बलादेवाकृष्य देवीपादमूलमानीय' इति । यया [1]वानपेक्षितगमनाज्ञया निर्यन्त्रणत्वाद्गतोऽहमिति वि[2]ज्ञप्तम्, सैव वाणी विज्ञापयति—'यथा च मे न निष्फलमागमनं भवति, जगद्वा शून्यम्, तथा देव्याऽऽत्मसंधारणायात्मनैव यत्नः कार्यः' इति संदिश्य पुनराह—

'पत्रलेखे, त्वयापि यान्त्याध्वनि न मद्विरहपीडा भावनीया, न शरीरसंस्कारेऽनादरः करणीयः, नाहारवेलातिक्रमणीया, न येनकेनचिदज्ञातेन पथा यातव्यम्, न यत्रतत्रैवानिरूप्यावस्थातव्यम्, उषितव्यं वा । न यस्यकस्यचिदपरिज्ञायमानस्यान्तरं दातव्यम्, सर्वदा शरीरेऽप्रमादिन्या भाव्यम् । किं करोमि । त्वत्तोऽपि मे वल्लभतरा देवीप्राणाः, येनैवमेकाकिनी तेषां संधारणाय वि[3]सर्जितासि । अपि च मम जीवितमपि तवैव हस्ते वर्तते । [4]तन्नियतं त्वयात्मा यत्नेन परिरक्षणीयः' इत्युक्त्वा सस्नेहं परिष्वज्य केयूरकं [5]पुनस्तदवधानदानाय संविधाय 'महाश्वेताश्रमं यावत्पुनस्त्व[6]यैव सहानया मन्नयनायागन्तव्यम्' इत्यादिश्य व्यसर्जयत् ।

---

प्रयच्छन्ति । **अपि चेति ।** अपि च प्रकारान्तरेण एते देवीप्रसादा अनुग्राहकत्वादेवानुग्रहकारित्वादेवापरित्याज्या अपरिमोच्याः । गुरुत्वादेव गरीयस्त्वादेव कृतो विहितोऽवष्टम्भ आधारो यैस्ते तथोक्ताः । विस्तीर्णत्वादेव विशालत्वादेवालङ्घनीया अनतिक्रमणीयाः । प्रभूतत्वादेव बाहुल्यादेवापरिहार्या अत्याज्याः । एतेषां द्वितीयोऽर्थः स्वयमूह्यः । तदिति हेत्वर्थे । एभिः प्रसादैरहमागमनस्याज्ञा निदेशस्तां विनापि सुदूरं दविष्ठमपक्रान्तोऽपि गतोऽपि बलाद्धठादेवाकृष्याकर्षणं कृत्वा देव्याः कादम्बर्याः पादमूलं चरणसमीपमानीय इति । **ययेति ।** अनपेक्षिताऽनीहिता गमनस्य यात्राया आज्ञा नियोगो ययैवंविधया वाण्या निर्यन्त्रणत्वादहं गत इति विज्ञप्तं कथितम् । सैव वाणी विज्ञापयति विज्ञप्तिं करोति । किं तदित्याह—**यथेति ।** तथा मे ममागमनं निष्फलं निष्प्रयोजनं न भवति । जगद्वा शून्यमुद्वसितं न स्यात् । तथा देव्या कादम्बर्यात्मसंधारणायात्मरक्ष[1]णायात्मनैव स्वेनैव यत्नः परिश्रमः कार्यः । इति संदिश्य कथयित्वा पुनर्द्वितीयवारमाह—

हे पत्रलेखे, त्वयापि भवत्यापि यान्त्या व्रजन्त्याध्वनि मार्गे मम विरहो वियोगस्तस्य पीडा व्याधिर्न भावनीया न भावनाविषयीकार्या । न विचारणीयेत्यर्थः । शरीरस्य संस्कारे परिकर्मणि नानादरोऽनुद्यमः करणीयो विधातव्यः । आहारवेला भोजनसमयो नातिक्रमणीया नोल्लङ्घनीया । अज्ञातेनानाकलितेन येनकेनचित्पथा मार्गेण न यातव्यं न गन्तव्यम् । यत्रतत्रैव यस्मिंस्तस्मिन्वा स्थलेऽतिगम्यं नानिरूप्यानवलोक्यावस्थातव्यमासितव्यमुषितव्यं वा [2]वसितव्यं वा । न यस्यकस्यचिदपरिज्ञायमानस्यानुपलक्षितस्यान्तरमवकाशो हार्दं वा दातव्यं प्रदेयम् । सर्वदा सर्वप्रकारेण शरीरे तनावप्रमादिन्यानालसिन्या भाव्यं भवितव्यम् । अहं किं करोमि किं कुर्वे । त्वत्तोऽपि भवत्या अपि मे मम देवीप्राणाः कादम्बर्यसवो वल्लभतरा अतिशयेन प्रियाः । **येनैवमिति ।** येन कारणेनैवममुना प्रकारेण तेषां प्राणानां संधारणाय रक्षणाय त्वमेकाकिन्यसहाया विसर्जिता प्रहितासि । अपि च युक्त्यन्तरे । मम जीवितं प्राणितमपि तवैव भवत्या एव हस्ते वर्तते नान्यस्येत्यर्थः । अत्रैवकारोऽन्ययोगव्यवच्छेदार्थः । तत्तस्मान्नियतं त्वयात्मा प्राणो यत्नेनोद्यमेन परिरक्षणीयो रक्षितव्यः । **इत्युक्त्वा** कथयित्वा सस्नेहं सहार्दं परिष्वज्यालिङ्ग्य केयूरकं पुनस्तस्याः पत्रलेखाया अवधानं समाधानं तस्य दानं वितरणं तदर्थं संविधाय कृत्वा महाश्वेताया आश्रमं मुनिस्थानं यावत्, अनया पत्रलेखया त्वयै[3]व भवतैव सह मन्नयनाय मदाकारणायागन्तव्यं समेतव्यमित्यादिश्येत्युक्त्वा व्यसर्जयदप्रैषीत् ।

**टिप्प०**—1 विवाहद्वाराऽहं सनाथीकर्तव्य इति गूढमाकूतम् । 2 वस्तव्यमिति तात्पर्यम् । 3 अनया सह त्वयैवागन्तव्यमिति तात्पर्यम् । केयूरकस्य प्राधान्यं पत्रलेखायाश्चाप्राधान्यमित्याशयः ।

पाठा०—१ च. २ विज्ञप्तः. ३ विसर्जितव्या. ४ तदात्मा. ५ च पुनः. ६ त्वयानयैव सह.

निर्गतायां च केयूरकेण सह पत्रलेखायाम् 'किं शीघ्रमेते यास्यन्ति न वेति, अन्तरा वा गच्छतां परिलम्ब[1] उत्पत्स्यते न वेति, कियद्भिर्वा दिवसैः परापतिष्यन्ति' इत्यनयैव चिन्तया शून्यहृदयः क्षणमिव स्थित्वा स्कन्धावारवार्तास्फुटीकरणाय वार्ताहरं विसर्ज्य बहुदिवसान्तरितदर्शनस्य वैशम्पायनस्य प्रत्युद्गमनायात्मानं मोचयितुं पितुः पादमूलमयासीत्[2]। तत्र[3] चोभयतः ससंभ्रमापसृतप्रतीहारमण्डलवितीर्णविस्तीर्णालोकनमार्गो दूरादेवापसव्यजानुकरतलावलम्बितविमलमणिकुट्टिमोदरसंक्रान्तप्रतिमो द्विगुणायमानायतकुन्तलकलापः पितुः प्रणाममकरोत्।

अथ तारापीडस्तथा दूरत एव कृतप्रणामं चन्द्रापीडमालोक्य निर्भरस्नेहगर्भेण सलिलभरमन्थरेणेव[4] जलधरध्वानैनिभेन[5] स्वरेण सधीरम्[6] 'एह्येहि' इत्याहूय ससंभ्रमप्रधावितमपि संभावितशुकनासप्रणाममुपसृत्य[7] पार्श्वे भूमावुपविशन्तमाकृष्य हठात्पादपीठे समुपवेश्यापरिसमाप्तावलोकनस्पृहेण चक्षुषा सुचिरमालोक्यास्योपारूढयौवनभराभिरामतराण्यङ्गप्रत्य-[8]

---

केयूरकेण सह पत्रलेखायां निर्गतायां सत्यां किमेते केयूरकप्रभृतयः शीघ्रमाशु यास्यन्ति गमिष्यन्ति न वा। अथवा गच्छतां व्रजतामन्तरा मध्ये परिलम्बो विलम्ब उत्पत्स्यते भविष्यति न वा। कियद्भिः कियन्मात्रैर्दिवसैर्वासरैः परापतिष्यन्त्यागमिष्यन्ति। अनयैव चिन्तयार्त्या शून्यं मूढं हृदयं यस्यैवंभूतः क्षणमिव क्षणमात्रं स्थित्वा स्कन्धावारस्य सैन्यस्य वार्ता प्रवृत्तिस्तस्याः स्फुटीकरणं प्रकटीकरणं तस्मै वार्ताहरं संदेशहारकं विसर्ज्य गमनायादेशं दत्त्वा बहुदिवसैरन्तरितं व्यवधानीकृतं दर्शनमवलोकनं यस्यैवंविधस्य वैशम्पायनस्य प्रत्युद्गमनायाभिमुखयानायात्मानं स्वं मोचयितुमुत्कलीकर्तुं पितुस्तारापीडस्य पादमूलं चरणसमीपमयाद्गतवान्। **तत्रेति।** उभयत उभयपार्श्वे ससंभ्रमेणापसृतं[1] किंचित्पश्चाद्गतं यत्प्रतीहारमण्डलं द्वारपालसमूहं तेन वितीर्णो दत्तो विस्तीर्णो विशाल आलोकनमार्गो निरीक्षणपन्था यस्य सः। **दूरादेवेति।** दूरादेव दविष्ठादेवापसव्यो दक्षिणो जानुर्नलकीलकः करतलं हस्ततलं ताभ्यामवलम्बितमालम्बनीकृतं विमलं निर्मलं यन्मणिकुट्टिमस्य मणिबद्धभूमेरुदरं मध्यं तत्र संक्रान्ता प्रतिबिम्बिता प्रतिमा मूर्तिर्यस्य सः, अत एवोभयत्र दृश्यमानत्वाद्द्विगुणायमानो द्विगुणवदाचरमाण आयतो विस्तीर्णः कुन्तलकलापः केशसमूहो यस्यैवंभूतश्चन्द्रापीडः पितुस्तारापीडस्य प्रणामं नमस्कारमकरोदसृजत्। 'कुट्टिमोऽस्त्री निबद्धा भूः' इत्यमरः।

**अथेति।** प्रणामानन्तरं तारापीडस्तथा तेन प्रकारेण दूरत एव दविष्ठादेव कृतप्रणामं विहितनमस्कारं चन्द्रापीडमालोक्य निरीक्ष्य निर्भरं यथा स्यात्तथा स्नेहो हार्दं गर्भे मध्ये यस्मिन्नेतादृशेन सलिलभरः पानीयभरस्तेन मन्थरेणेव स्निग्धेनेव जलधरस्य मेघस्य ध्वानो ध्वनिस्तस्य निभेन सदृशेन स्वरेण शब्देन सधीरं यथा स्यात्तथा एह्येह्यागच्छागच्छेत्याहूयाह्वानं कृत्वा ससंभ्रमं सादरं सचकितं वा प्रधावितमपि त्वरितगत्या चलितमपि संभावितः संभावनाविषयीकृतः शुकनासस्य प्रणामो नमस्कारो येन स तमुपसृत्योपसरणं कृत्वा पार्श्वे भूमौ पृथिव्यामुपविशन्तं निषीदन्तं हठादाकृष्याकर्षणं कृत्वा पादपीठे पदासने समुपवेश्योपवेशनं कारयित्वाऽपरिसमाप्ताऽपरिपूर्णाऽवलोकनस्य निरीक्षणस्य स्पृहा वाञ्छा यस्यैवंविधेन चक्षुषा नेत्रेण सुचिरं चिरकालं यावत्, आलोक्य निरीक्ष्यास्य चन्द्रापीडस्योपारूढं प्राप्तं यद्यौवनं तारुण्यं तस्य भरः संभारस्तेनाभिरामतराण्यतिमनोहराण्यङ्गप्रत्यङ्गानि हस्ता-

---

टिप्प०—1 ससंभ्रमम् संभ्रमेण सहितम् अपसृतमित्यर्थः।

---

पाठा०—१ विलम्बः. २ अगात्. ३ तत्रैव. ४ एव; नव. ५ ध्वनिना ध्वनिगम्भीरेण. ६ धीरम्. ७ उपसृज्य. ८ अङ्गोपाङ्गानि.

ङ्गानि पाणिना स्पृष्ट्वा दर्शयञ्शुकनासमवादीत्—'शुकनास, पश्येयमायुष्मतश्चन्द्रापीडस्योत्सर्पिणी महानीलमणिप्रभेव कनकशिखरिणः, गण्डमण्डलोद्भासिनी मदलेखेव गन्धद्विपस्य, उपहितकान्तिपतिपरभागा[1] लक्ष्मच्छायेव चन्द्रमसः, विकासशोभापेक्षिणी मधुकरावलीव कमलाकरस्य, रूपालेख्योन्मीलनकालाञ्जनवर्तिका, तारुण्यभरजलधरोत्तान[2]श्यामिका, उज्ज्वलत्कन्दर्पदीपकज्जलशिखा, स्फुरत्प्रतापानलधूमराजी, मकरध्वजोपवनतमालवल्ली, मनोभव[3]दोषारम्भबालतिमिरोद्गतिः, उद्वाहमङ्गलभ्रूसंज्ञा श्मश्रुराजिलेखा समन्तात्समुद्भिन्ना। विवाहमङ्गलयोग्यां दशामारूढोऽयम् । तद्देव्या विलासवत्या सह समेत्याभिजनरूपा[4] निरूप्यतां काचिज्जगति[5] राजकन्यका । दृष्टं हि दुर्लभदर्शनं वत्सस्य वदनम् । संप्रति वधूमुखकमलदर्शनेनानन्दयाम[6] आत्मानम्' इत्युक्तवति तारापीडे शुकनासः प्रत्युवाच—

---

ङ्गुलिप्रभृतीनि पाणिना हस्तेन स्पृष्ट्वा स्पर्शं कृत्वा शुकनासं मन्त्रिमुख्यं दर्शयन्नवलोकनं कारयन्नवादीदब्रवीत् । हे शुकनास, पश्यावलोकय । आयुष्मतो जीवितवतः चन्द्रापीडस्येयं प्रत्यक्षोपलभ्या श्मश्रुराजिः कूर्चश्रेणिस्तस्या लेखा रेखा समन्तात्सर्वतः समुद्भिन्ना प्रकटिता । श्यामत्वसाधर्म्यादुत्प्रेक्षते—कनकशिखरिणः सुवर्णाचलस्योत्सर्पिण्यूर्ध्वगामिनी महानीलमणीनां स्थूलेन्द्रनीलरत्नानां प्रभेव कान्तिरिव । गन्धद्विपस्य गन्धेभस्य गण्डमण्डल उद्भासितुं शीलं यस्या एवंविधा मदलेखेव दानलेखेव । उपहित आच्छादितः कान्तिपतिना[1] सूर्येण परभागो गुणोत्कर्षो यस्याः सैवंविधा चन्द्रमसः कुमुदबान्धवस्य लक्ष्मच्छायेव कलङ्कप्रभेव । 'परभागो गुणोत्कर्षः' इत्यमरः । विकासशोभां विकस्वरलक्ष्मीमपेक्षत[2] इत्येवंशीला कमलाकरस्य मधुकरावलीव भ्रमरपङ्क्तिरिव । रूपालेख्यस्य रूपचित्रस्योन्मीलनं प्रकाशनं तत्र कालाञ्जनस्य कृष्णकज्जलस्य वर्तिकेव वर्तिका लेखिनी । तारुण्यभरो यौवनातिशयः स एव जलधरो मेघस्तस्योत्ताना[3] अतिशायिनी श्यामिकेव श्यामिका । उज्ज्वलन्दीप्यन्यः कन्दर्पः कामः स एव प्रदीपः स्नेहप्रियस्तस्य कज्जलमञ्जनं तस्य शिखेव शिखा । स्फुरन्नुल्लसन्यः प्रतापः कोशदण्डजं तेजः स एवानलो वह्निस्तस्य धूमराजीव धूमराजी । मकरध्वजस्य मनोभवस्योपवनमरण्यं तस्य तमालवल्लीव तमालवल्ली । मनोभवः कंदर्पः स एव दोषारम्भो यामिनीप्रारम्भस्तस्य बालान्यपरिपक्वानि यानि तिमिराण्यन्धकाराणि तेषामुद्गतिरिवोद्गतिः । उद्वाहस्य पाणिपीडनस्य मङ्गलं शुभक्रिया तस्य भ्रूसंज्ञेव भ्रूसंज्ञा । हे शुकनास, त्वं पश्येत्यन्वयस्तु प्रागेवोक्तः । तत्तस्माद्धेतोर्विवाहमङ्गलयोग्यामुद्वाहक्रियायोग्यदशामारूढोऽयम् । चन्द्रापीड इत्यर्थः । तत्तस्मात्कारणादभिजन[4]रूपा प्रशस्ताकृतिः काचिदनिर्दिष्टनाम्नी जगति पृथिव्यां राजकन्यका राजकुमारिका विलासवत्या देव्या सह समेत्य मिलित्वा निरूप्यतां[5] कथ्यताम् । **दृष्टमिति** । हीति निश्चयेन । दुर्लभं दुष्प्रापं दर्शनमवलोकनं यस्यैवंविधं वत्सस्य सूनोर्वदनमाननं दृष्टमवलोकितम् । संप्रतीदानीं वध्वा मुखकमलं तस्य दर्शनेन निरीक्षणेनात्मानं स्वमानन्दयामः प्रीणयामः । इति तारापीड उक्तवति कथितवति सति शुकनासः प्रत्युवाच प्रत्यब्रवीत् ।

---

**टिप्प०—**1 पुनः प्रमादान्मार्गं परित्यजति । 'उपहितकान्तिपरभागा' इत्येव पाठः । उपहितो जनितः कान्तेः परभाग उत्कर्षो यस्या इति तदर्थः । सूर्यो वराकश्चन्द्रकलङ्कस्य गुणोत्कर्षं कदाऽऽच्छादयति ? ततष्टीकाकृतोऽर्थः शशशृङ्गायितः । 2 विकासस्य लक्ष्मीः शोभा इत्येवोचितम् । 3 'उद्दामश्यामिका' इत्येव रुचिराक्षरम् । उद्दामा उत्कटा । 4 'अतिजनरूपा' इति पाठे जनानू अतिक्रान्तं रूपं यस्या इत्यर्थः । 5 दृश्यताम्, अन्विष्यतामित्यर्थ उचितः ।

---

पाठा०—१ कान्तिपर. २ उन्नाम; उद्दाम. ३ मनोभवविकार. ४ संमन्त्र्य. ५ जगतीराज; जगतीपति. ६ आनन्दय मे.

'साधु चिन्तितं देवेन। अनेन तु सहृदयेन हृदये समारोपिता एव सर्वविद्याः, संभाविता एव सर्वा[1]ः कलाः, स्वीकृता एव सर्वप्रजाः, गृहीता ए[2]व सर्वदिग्वधूनां कराः, स्थापितैव निश्चला कुटुम्बिनीपदे राजलक्ष्मीः, ऊढैव चतुरुदधिमेखलाकलापभूषणा भूः। किमतः परमवशिष्यते, येना[3]नेन न परिणीयते' इत्यभिहितवति शुकनासे लज्जावनम्रवदनश्चन्द्रापीडश्चकार चेतसि—'अहो संवादः, येन मे कादम्बरीसमागमोपायचिन्तासमकालमेवेदृशी तातस्य बुद्धिरुत्पन्ना। तद्य[4]दुच्यते—अ[5]न्धकारे प्रविष्टस्यालोकः, वनगहनप्रविष्टस्य देशिकदर्शनम्, महार्णवपतितस्य यानपात्रा[6]भ्यागमनम्, म्रि[7]यमाणस्योपर्यमृतवृष्टिरिति, तदे[8]तदापतितं मयि। सर्वथा वैशम्पायनदर्शनमात्रकान्तरिता वर्तते मे कादम्बरीप्राप्तिः' इत्येवं चिन्तयत्येव चन्द्रापीडे क्षितिपतिरुत्तस्थौ। उत्थाय च तमेव विनयावनत[9]पूर्वकायं समवलम्ब्यांसदेशे सकलमेदिनीभारोद्वहनगुरुणा दोर्दण्डेन शनैःशनैः संचरञ्शुकनासेनानुगम्यमानो विलासवतीभवनमगमत्। गत्वा च ससंभ्रमकृताभ्युत्थानामिन्दूदयावलोकनविलोलामिव समुद्रवेलां

---

किमुवाचेत्याह—**साध्विति**। साधु शोभनं चिन्तितं विचारितं देवेन स्वामिना। सहृदयेन सज्जनेनानेन तु चन्द्रापीडेन हृदये सर्वविद्याः कलादिकाः समारोपिता एव प्राप्ता एव। सर्वाः कला विज्ञानानि संभाविता एव ज्ञाता एव। सर्वप्रजाः समग्रप्रकृतयः स्वीकृता एवाङ्गीकृता एव। सर्वदिग्वधूनां समग्रककुन्नारीणां कराः पाणयो गृहीता एव ग्रहणविषयीकृता एव। कुटुम्बिनीपदे जायास्थाने राज्यलक्ष्मीर्निश्चला स्थिरा स्थापितैव न्यस्तैव। चतुरुदधयश्चतुःसमुद्रास्त एव मेखलाकलापो भूषणं यस्यामेवंविधा भूः पृथ्वी ऊढैव परिणीतैव। अतोऽपरमन्यत्किमवशिष्यत उर्वरितं भवति, येनानेन न परिणीयते न पाणिग्रहणं क्रियते। इत्यभिहितवतीत्युक्तवति शुकनासे लज्जया त्रपया अवनम्रं नतं वदनं यस्यैवंविधश्चन्द्रापीडश्चेतसि चित्ते चकाराकरोत्। अहो संवादो विसंवादाभावः। येन कारणेन मे मम कादम्बर्याः समागमोपायचिन्तासमकालमेव तातस्य पितुरीदृशी बुद्धिरुत्पन्ना। तद्यदुच्यते प्रतिपाद्यते जनैस्तदेतन्मय्यापतितमागतम्। तत्किमित्याह—**अन्धकार इति**। अन्धकारे तिमिरे प्रविष्टस्य निविष्टस्यालोकः प्रकाशः। वनस्यारण्यस्य गहनं गह्वरं तत्र प्रविष्टस्य देशि[1]कदर्शनं स्वदेशोत्पन्नजनावलोकनम्। महार्णवः समुद्रस्तस्मिन्पतितस्य यानपात्रस्य पोतस्याभ्यागमनं प्राप्तिः। म्रियमाणस्य मरणं व्रजत उपर्यमृतवृष्टिः सुधासेक इति सर्वथा सर्वप्रकारेण वैशम्पायनस्य दर्शनमात्रकमवलोकनमात्रकं तेनान्तरिता व्यवहिता मे मम कादम्बरीप्राप्तिर्वर्तते इत्येवं चिन्तयत्येव विचारयत्येव चन्द्रापीडे क्षितिपतिस्तारापीड उत्तस्थावुत्थितवान्। उत्थाय चोत्थानं कृत्वा। **तमेवेति**। सकला समग्रा या मेदिनी वसुधा तस्या भारो वीवधस्तस्योद्वहनेन धारणेन गुरुणा गरिष्ठेन दोर्दण्डेन भुजदण्डेन विनयेनावनतो नम्रीभूतः पूर्वकायो देहादिभागो यस्यैवंभूतं तमेव चन्द्रापीडमेवांसदेशे स्कन्धप्रदेशे समवलम्ब्यालम्बनीकृत्य शनैःशनैर्मन्दं मन्दं संचरन्व्रजञ्शुकनासेनानुगम्यमानोऽनुयायमानो विलासवतीभवनं पट्टराज्ञीसदनमगमज्जगाम। **गत्वा चेति**। गत्वा च गमनं कृत्वा च ससंभ्रमं संभ्रमेण सह कृतं विहितमभ्युत्थानमुत्थानं ययैवंविधाम्। अत एवोत्प्रेक्षते—इन्दूदयस्य चन्द्रोदयस्यावलोकनं निरीक्षणं तेन विलोलां चञ्चलां समुद्रस्य जलधेर्वेलामिवाम्भसो वृद्धिमिव विला-

टिप्प०—1 'आदेशकदर्शनम्' इति पाठे मार्गप्रदर्शकस्य दर्शनमित्यर्थः।

पाठा०—१ सर्वाः प्रजाः. २ एव दिग्व. ३ वदनेन. ४ तदुच्यते. ५ अन्धकार. ६ अभ्यागमः. ७ म्रियमाणस्येवानम्रे चोपरि. ८ एव. ९ अवनम्र.

विलासवतीमूर्ध्वस्थित एवावादीत्—'देवि[1], पश्यैषा त्वमपि वधूमुखावलोकनसुखस्य कृते न ताम्यसीत्युपालभमानेव[3] देवीम्, वत्सस्य यौवनारम्भसूत्रपातरेखा, आवयोस्तारुण्यदुर्विलसितनिवर्तनाज्ञा, विजृम्भमाणा श्मश्रुरागशोभा विवाहमङ्गलसंपादनायादिशति। त्वमपरं किमादिशसीति प्रष्टव्या। तदादिशतु देवी कथ्यमानेऽपि किमपरम्। अद्याप्यपहरसि वदनमन्यतो व्रीडया। पृष्टा वा कर्तव्यं नाज्ञापयसि। वरमातासि संवृत्ता। जानामि चन्द्रापीडस्योपर्यप्रीतिरेषा, यदेवमेतत्कार्येष्वनादरोऽवधीरणा च' इत्येवंविधैर्नर्मप्रायैरालापैः सुखायमानचेताश्चिरमिव स्थित्वा शरीरस्थितिसंपादनाय निरगमत्।

चन्द्रापीडोऽपि शुकनासमुखेनैव वैशम्पायनप्रत्युद्गमनायात्मानं मोचयित्वा जननीभवन एव निर्वर्तितशरीरस्थितिर्वैशम्पायनप्रत्युद्गमनसंविधानविनोदेनैव तं दिवसमनयत्। अवतीर्णायां च तस्यां यामिन्यां सुहृद्दर्शनौत्सुक्येन शयनगतोऽपि जाग्रदेव समधिकमिव यामद्वयं

---

सवतीमूर्ध्वस्थित एव शुकनासोऽवादीदब्रवीत्। किमवादीदित्याह—देवीति। हे देवि हे स्वामिनि, पश्य विलोकय। एषा विलासवती त्वमपि भवत्यपि वधूमुखस्यावलोकनसुखं निरीक्षणसौख्यं तस्य कृते न ताम्यसि न खेदं करोषि। इति देवीं विलासवतीमुपालभमानेवोपालम्भं ददानेव वत्सस्य चन्द्रापीडस्य यौवनारम्भस्य सूत्रपातरेखेव रेखा। नवीनप्रारम्भे शिल्पिभिः सूत्रपातरेखा क्रियत इति सर्वसंमतम्। आवयोः शुकनासराज्ञोस्तारुण्यस्य[1] यौवनस्य दुर्विलसितानि दुश्चेष्टितानि तेभ्यो निवर्तनस्य दूरीभवनस्याज्ञेव आज्ञा। अत्र सर्वत्र रूपकम्। एवंविधा विजृम्भमाणा विस्तारं प्राप्यमाणा श्मश्रुरागशोभा कूर्चरागच्छविर्विवाहलक्षणं यन्मङ्गलं शुभक्रिया तस्य संपादनाय करणायादिशति कथयति। त्वं विलासवत्यपरमन्यत्किमादिशसि कथयसीति प्रष्टव्या पृच्छाविषयीकार्या। तत्तस्माद्धेतोः कथ्यमानेऽऽप्युच्यमानेऽपि किमप्यपरमन्यद्देवी किमादिशतु किं कथयतु। अद्यापि व्रीडया लज्जयान्यतो वदनं मुखमपहरसि तिर्यग्मुखं स्थापयसि। पृष्टा वा पृच्छाविषयीकृता वा कर्तव्यं कृत्यं नाज्ञापयसि नाज्ञां ददासि। त्वं वरमाता संवृत्ता जातासि। अहं जानाम्याकलयाम्येषा चन्द्रापीडस्योपर्यप्रीतिररुचिः, यदेवमेतत्कार्येषु पूर्वोक्तकृत्येष्वनादरोऽनुत्साहोऽवधीरणावज्ञा च। एवंविधैरेतादृशैर्नर्मप्रायैर्बर्करसदृशैः[2]। 'बर्करः पशुनर्मणोः' इति हैमानेकार्थः। आलापैः संभाषणैः सुखायमानं सुखकृच्चेतो यस्यैवंविधश्चिरमिव चिरसदृशं स्थित्वा शरीरस्थितेर्देहस्थितेः संपादनं करणं तस्मै निरगमन्निर्ययौ।

चन्द्रापीडोऽपि शुकनासमुखेनैव, न तु स्वमुखेन, वैशम्पायनस्य प्रत्युद्गमनमभिमुखयानं तस्मा आत्मानं स्वं मोचयित्वा मोक्षणं कारयित्वा जननीभवन एव मातृगृह एव निर्वर्तिता निष्पादिता शरीरस्थितिर्देहधारणात्मिका येन स वैशम्पायनप्रत्युद्गमनस्य संविधानं करणं तदेव विनोदः क्रीडा तेनैव तं दिवसमनयत्प्रापयत्[3]। अवतीर्णायामागतायां तस्यां यामिन्यां रात्रौ सुहृदो मित्रस्य। 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातः। तस्य दर्शनमवलोकनं तत्रौत्सुक्यमुत्सुकत्वं तेन शयनगतोऽपि शय्याप्राप्तोऽपि जाग्रदेव जागरूक एव समधिकमिव[4] समधिकसदृशं यामद्वयं प्रहरयुग्मं स्थित्वावस्थानं कृत्वा चन्द्रपादैः शशिकिरणैर्द्विगुणीकृतो द्विगुणतां नीतो मन्मथस्य कन्दर्पस्योत्साहः प्रगल्भता यस्यैवंविधश्चन्द्रापीडो गमनस्य संज्ञा ज्ञापनं तदर्थं यः शङ्खनादो जलजध्वनि-

---

टिप्प०—1 पुनर्भ्रान्तः। आवयोः तव (राज्ञ्याः) मम चेत्यर्थः। 2 परिहासबहुलैरित्येवार्थः समुचितः। बर्करपर्यायस्तु इन्द्रस्य टीका बिडौजाः। परिहासस्त्वत्र—चन्द्रापीडस्योपरि तवाऽप्रीतिरित्युक्त्वा उभयोः प्रणयकलहोत्पादनरूपः। 3 अगमयदित्यर्थ उचितः। 4 किञ्चिदधिकं यामद्वयमित्याशयः।

---

पाठा०—१ देव. २ त्वमपि च. ३ उत्ताम्यसि. ४ एव. ५ विलसितेच्छाविनिवर्त. ६ राजि. ७ निरगाव.

स्थित्वा परिवर्तयद्भिरिव स्वकान्त्या नीलिमानमम्बरतलस्य, अपहरद्भिरिव हरिततां तरुगहनानाम्, अधस्तादपि छिद्रयित्वेव प्रविशद्भिः, निर्वासयद्भिरिव तरुतलच्छायाम्, दरीकु[१]हरकुञ्जोदरेष्वपि निलीनं तिमिरमक्षान्त्येव प्रविश्योत्पाटयद्भिः, विवरप्रवेशव्याजेन च रसातलमिव प्रवेष्टुमारब्धैः, अन्यथा पुनर्धवलयद्भिरिव धवलतां सौधानाम्, उद्धूलयद्भिरिव कर्पूररेणुना दिङ्मुखानि, लिम्पद्भिरिव सान्द्रचन्दनद्रवेण यामिनीम्, उन्नामयद्भिरिव मेदिनीम्, उपनयद्भिरिव द्याम्, संक्षिपद्भिरिव तारकाग्रहनक्षत्रमण्डलानि, विस्तारयद्भिरिव सरित्पुलिनानि, पृथक्पृथक्कमलवनान्युत्पीड्येव[२] धारयद्भिः, उद्दलितदलविकासानेकीकुर्वद्भिरिव कुमुदाकरान्, अपि च पर्यस्तैरिव शिखरिशिखरेषु[३], आवर्जितैरिव प्रासादमूर्धसु, तरद्भिरिव जलतरङ्गेषु, पिण्डीभूय वहद्भिरिव रथ्यामुखेषु, प्रसारितैरिव सैकतस्थलेषु, हंससार्थैः सहैकीभूतैरिव, संविभक्तैरिव चन्द्राश्रयप्रसुप्तकामिनीकपोललावण्येन, क्षालितैरिव चन्द्रकान्त-

---

स्तस्मा आदिदेशानुज्ञां दत्तवान्। इतश्चन्द्रपादान्विशेषयन्नाह—**परिवर्तयद्भिरित्यादि।** स्वकान्त्या स्वकीयदीधित्याम्बरतलस्याकाशतलस्य नीलिमानं नीलतां परिवर्तयद्भिरिव परावर्तं कुर्वद्भिरिव, नीलिमानं गृहीत्वा श्वेतिमानं ददद्भिरिवेत्यर्थः। तरुगहनानां तरुगह्वराणां हरिततां पीतनीलतामपहरद्भिरिव गृह्णद्भिरिव। दूरीकुर्वद्भिरिवेत्यर्थः। अधस्तादप्यधोभागमपि प्रविशद्भिः प्रवेशं कुर्वद्भिः। अत एवोत्प्रेक्षते—छिद्रयित्वेव छिद्राणि कृत्वेव तरुतलानां छायातपाभावस्तां निर्वासयद्भिरिव बहिःकुर्वद्भिरिव। निर्विषयीकुर्वद्भिरिवेत्यर्थः। दरी गुहा कुहराणि सुषिराणि कुञ्जोदराणि वृक्षैर्वृतान्तरस्थानमध्यभागास्तेष्वपि प्रविश्य निलीनं गुप्ततया स्थितं तिमिरं तमोऽक्षान्त्येव क्रुधेवोत्पाटयद्भिरिवोत्पाटनं कुर्वद्भिरिव। विवराणि सुषिराणि तेषु प्रवेशोऽन्तर्गमनं तस्य व्याजो मिषं तेन च रसातलं पृथ्वीतलं प्रवेष्टुं प्रवेशं कर्तुमारब्धैः कृतप्रारम्भैः। अन्यथान्यप्रकारेण सौधानां गृहाणां धवलतां शुभ्रतां पुनर्द्वितीयवारं धवलयद्भिरिव धवलीकुर्वद्भिरिव। कर्पूररेणुना हिमवालुकाक्षोदेन दिङ्मुखानि दिशां वदनान्युद्धूलयद्भिरिवोद्वर्तयद्भिरिव। सान्द्रः स्निग्धो यश्चन्दनद्रवो मलयजरसस्तेन यामिनीं त्रियामां लिम्पद्भिरिव लिम्पनं कुर्वद्भिरिव। मेदिनीं वसुधामुन्नामयद्भिरिवोच्चैः कुर्वद्भिरिव। द्यां दिवमुपनयद्भिरिव। तारकास्ताराः, ग्रहाः शुक्रादयः, नक्षत्राण्यश्विन्यादीनि, तेषां मण्डलानि बिम्बानि संक्षिपद्भिरिव संक्षेपं कुर्वद्भिरिव। सरित्पुलिनानि नदीजलोज्झितप्रदेशास्तानि विस्तारयद्भिरिव विस्तारं प्रापयद्भिरिव। पृथक्पृथगन्यदन्यत्कमलवनानि पङ्कजारण्यान्युत्पीड्य संमर्द्य धारयद्भिरिव। कुमुदाकरान्कैरवसमूहानुद्दलितो दूरीकृतो दलानां पत्राणां विकासो येषां तानेकीकुर्वद्भिरिवापृथग्भावं कुर्वद्भिरिव। अपि च शिखरिणां पर्वतानां शिखरेषु पर्यस्तैरिव पतितैरिव। प्रासादा देवभूपानां गृहास्तेषां मूर्धान उपरितनप्रदेशास्तेष्वावर्जितैरिव विस्तारितैरिव। 'हर्म्यादिर्धनिनां वासः प्रासादो देवभूभुजाम्' इत्यमरः। जलतरङ्गेष्वम्भःकल्लोलेषु तरद्भिरिव। पिण्डीभूय पिण्डतां प्राप्य वहद्भिरिव प्रवहद्भिरिव रथ्यामुखेषु। सैकतस्थलेषु पुलिनस्थलेषु प्रसारितैरिव प्रसरणं प्राप्तैरिव। हंसानां सितच्छदानां सार्थैः संघातैः सहैकीभूतैरिवैकभावतां गतैरिव। चन्द्राश्रये शिरोगृहे प्रसुप्ता या कामिनी कंदर्पवती स्त्री तस्याः कपोलो गल्लातपरप्रदेशस्तस्य लावण्यं मुक्ताफलस्य छायेव तरलत्वं तेन संविभक्तैरिव संविभागीकृतैरिव। 'कुट्टिमोऽस्त्री निबद्धा भूश्चन्द्रशाला शिरोगृहम्' इत्यमरः। चन्द्र-

---

**टिप्प०**—1 धूल्या विच्छुरयद्भिः। 2 चन्द्रिकायां जृम्भमाणायां तारकादीनि न्यूनप्रकाशतया संक्षिप्तानि भवन्तीत्याशयः। 3 चन्द्रकिरणैः श्वेतेषु कुमुदाकरेषु मिथः पृथग्भावो न प्रतीयत इत्याशयः।

---

**पाठा०**—१ दरीगहन. २ एव धारयद्भिरिव. ३ शेखरेषु.

च्युतजलधारासहस्रैः । तथा च गर्भगृहेष्वप्यविहतप्रवेशैः, दन्तवलभीभ्योऽपि लब्धपरभागैः, पद्मिनीपत्रखण्डेष्वप्यखण्डितधवलिमभिः, आरामेष्वपि दिवसबुद्धिमुत्पादयद्भिः, परस्परोद्भिन्नक्रमेणोद्गिरद्भिरिव, आवर्जयद्भिरिव, विक्षिपद्भिरिव, विस्तारद्भिरिव, वर्षद्भिरिव सर्वतो ज्योत्स्नाप्रवाहम्, कादम्बरीसमागमत्वरादानाय स्मरसर्वास्त्रमोक्षमिव कुर्वद्भिश्चन्द्रपादैर्द्विगुणीकृतमन्मथोत्साहो गमनसंज्ञाशङ्खनादायादिदेश ।

अथ गगनतललब्धविस्तारः, विजृम्भमाण इव दिक्कुञ्जेषु, आवर्तमान इवाभ्रंलिहनगरीप्राकारमण्डलाभ्यन्तरे, समारोहन्निवोत्तुङ्गगोपुराट्टालकशिखराणि, चलन्निव हर्म्यान्तरालेषु, विकसन्निव चतुष्कचत्वरेषु, प्रसरन्निव राजमार्गेषु, परिभ्रमन्निव भवनसंकटेषु, प्रविशन्निवोद्याननगवनगह्वरेषु, संमूर्च्छन्निव प्रासादकुक्षिषु, तत्क्षणप्रतिबोधितानां गृहसरोजिनीसारसानामनुवर्त्यमान इव तारतरदीर्घेण रणितेन, विच्छिद्यमान इव मुहुर्मुहुः स्वभावगद्गदेन

---

कान्तेभ्यश्च्युताः पतिता या जलधारास्तासां सहस्रैः क्षालितैरिव धौतैरिव । तथा च गर्भगृहेष्वपवर्गेष्वप्यविहतोऽप्रतिषिद्धः प्रवेशो येषां तैः । दन्तवलभीभ्योऽपि रदनच्छदाधारेभ्योऽपि लब्धः प्राप्तः परभागो गुणोत्कर्षो यैः । पद्मिन्या नलिन्याः पत्रखण्डेष्वपि दलसमूहेष्वप्यखण्डितोऽत्रुटिता धवलिमा श्वेतता येषां तैः । किं कुर्वद्भिः । आरामेष्वपि कृत्रिमवनेष्वपि दिवसबुद्धिं वासरधियमुत्पादयद्भिर्निष्पादयद्भिः । परस्परमन्योन्यमुत्प्राबल्येन भिन्नो विद्धोऽयमनेन भिन्नोऽनेनायमित्यादिक्रमेणोद्गिरद्भिरिव क्षरद्भिरिव, आवर्जयद्भिरिव मुञ्चद्भिरिव, विक्षिपद्भिरितस्ततो विक्षेपं कुर्वद्भिरिव, विस्तारयद्भिरिव प्रसारयद्भिरिव, वर्षद्भिरिव वृष्टिं कुर्वद्भिरिव सर्वतः समन्ततो ज्योत्स्नाभरप्रवाहम्, कादम्बर्याः समागमो मेलापस्तस्य त्वरादानाय स्मरस्य कंदर्पस्य सर्वास्त्राणि तेषां मोक्षं कुर्वद्भिरिव सृजद्भिरिव ।

**अथेति** । शङ्खनादादेशानन्तरं शङ्खध्वनिर्जलजनिनाद उदतिष्ठदुत्थितो बभूव । इतः शङ्खनिनादं विशेषयन्नाह—**गगनतलेत्ति** । गगनतले व्योमतले लब्धः प्राप्तो विस्तारो येन सः । दिक्कुञ्जेषु ककुम्निकुञ्जेषु विजृम्भमाण इव कोशं प्राप्यमाण इव । अभ्रंलिहो व्योमव्यापी यो नगर्याः प्राकारमण्डलो वप्रपरिधिस्तस्याभ्यन्तरे मध्य आवर्तमान इव भ्रममाण इव । उत्तुङ्गान्यत्युच्चानि यानि गोपुराणां प्रतोलीनामट्टालकानि तदुपरिवर्तिसदनानि तेषां शिखराणि शृङ्गाणि तानि समारोहन्निव समारोहणं कुर्वन्निव । हर्म्याणि भवनानि तेषामन्तरालेषु विचालेषु चलन्निव गच्छन्निव । चतुष्काणि संजवनानि चत्वराङ्गनानि चतुर्मार्गाणि वा तेषु विकसन्निव विकासं प्राप्नुवन्निव । राजमार्गेषु श्रीपथेषु प्रसरन्निव विस्तरन्निव । भवनसंकटेषु गृहसंकीर्णस्थानेषु परिभ्रमन्निव भ्रमणं कुर्वन्निव । उद्यानस्य वनस्य नगाः पर्वतास्तेषां वनान्यरण्यानि तेषां गह्वराणि गहनान्युद्यानानि च नगाश्च गह्वराणि च । इतरेतरद्वन्द्वो वा । तेषु प्रविशन्निव प्रवेशं कुर्वन्निव । प्रासादानां देवभूपसद्मनां कुक्षिष्वभ्यन्तरप्रदेशेषु संमूर्च्छन्निव समर्थीभवन्निव । तत्क्षणं तत्कालं प्रतिबोधितानां जागरितानां गृहसरोजिन्यः सदननलिन्यस्तासां सारसा लक्ष्मणास्तेषामतिशयेन तारोऽत्युच्चध्वनिस्तारतरस्तेन दीर्घेणायतेन रणितेन

---

**टिप्प०**—1 गर्भगृहाः अभ्यन्तरगृहाः । 2 गजदन्तनिर्मिता उपरिगृहाः । 'नमद्वलीका वलभीर्युवानः' इति माघः । 3 इमनिच्प्रत्ययान्तस्य सर्वत्र स्त्रीत्वं प्रयुङ्क्ते इति तु क्षेत्रियो व्याधिः । पुंस्त्वमुचितम् । 4 परस्परम् उद्भिन्नम् ( उद्भेदो विकासः ) तस्य क्रमेण ।

---

पाठा०—१ प्रवर्तयद्भिरिव वर्षद्भिरिव. २ गमन. ३ अभ्यन्तरेषु. ४ वलयन्; वलन्. ५ नगगह्वरेषु.

भवनहंसानां कलरवेण, निर्धार्यमाण[1] इव च श्रोत्रप्रवेशिना गमनवेलाप्रणामसंभ्रान्तस्य वाराङ्गनाजनस्य चलवलयनूपुररसनाकलकलेन, तारदीर्घतरः शङ्खध्वनिरुदतिष्ठत् ।

अनन्तरं चोत्थाप्यमानैश्चोत्थितैश्चाकृष्यमाणैश्चाकृष्टैश्चारोप्यमाणपर्याणैश्च पर्याणितैश्च नीयमानैश्चानीयमानैश्च विलभ्यमानैश्चाच्छिद्यमानैश्चागच्छद्भिश्चागतैश्च पूज्यमानैश्च पूजितैश्च पङ्क्तिस्थितैश्च वाह्यमानैश्च तिष्ठद्भिश्च प्रतिपालयद्भिश्च पर्याप्तराजद्वाराङ्गणैरप्रभूतचत्वरैर्निस्तुषितसकलरथ्यान्तरतयान्तर्बहिश्च संकटायमाननगरीविस्तारैस्तुरङ्गमसहस्रैस्तत्क्षणं कुन्तवनमयमिवान्तरिक्षम्, खुररवमयीव मेदिनी, हेषारवमयानीव श्रोत्रविवराणि, फेनपिण्डस्तबकमयमिव युवराजभवनद्वाराङ्गणम्, खलीनरवमय्य इव दशदिशः, अश्वालंकाररत्नप्रभामया इवाभवञ्शशाङ्करश्मयः । अचिराच्च गृहीतसमायोगोऽङ्गणात्तमिन्द्रायुधमारुह्य पुरस्ताच्चलिते-

---

शब्दितेनानुवर्त्यमान इवानुगम्यमान इव । स्वभावेन प्रकृत्या गद्गदेन गद्गदरूपेण भवनहंसानां गृहसितच्छदानां कलरवेण मनोज्ञशब्देन मुहुर्मुहुर्वारंवारं विच्छिद्यमान इव विच्छेदं प्राप्यमाण इव । श्रोत्रप्रवेशिनां कर्णचारिणां गमनवेला यात्रावसरस्तस्यां प्रणामो नमस्कारस्तत्र संभ्रान्तस्य सादरस्य वाराङ्गनाजनस्य वेश्याजनस्य चलानि चञ्चलानि वलयानि कटकानि, नूपुराणि पादकटकानि, रसनाः काञ्च्यः, तासां कलकलेन कोलाहलेन निर्धार्यमाण इव निश्चीयमान इव । तारोऽत्युच्चध्वनिस्तेन दीर्घतरोऽत्यायतः ।

**अनन्तरं चेति** । ध्वनेरुत्थानानन्तरमुत्थाप्यमानैश्चोत्थानं क्रियमाणैः, उत्थितैरूर्ध्वीभूतैः, आकृष्यमाणैराकर्षणं क्रियमाणैः, आकृष्टैराकर्षितैश्च, आरोप्यमाणं ध्रियमाणं पर्याणं पल्ययनं येषु तैः पर्याणितैर्धृतपल्ययनैश्च, नीयमानैः प्राप्यमाणैः, आनीयमानैरानयनं क्रियमाणैश्च, विलभ्यमानैर्विलम्भनं क्रियमाणैः, आच्छिद्यमानैश्च, आगच्छद्भिरागमनं कुर्वद्भिः, आगतैः समायातैश्च, पूज्यमानैरभ्यर्च्यमानैः पूजितैरर्चितैश्च, पङ्क्तिस्थितैश्च पङ्क्त्या श्रेण्या स्थितैः, वाह्यमानैर्भारोद्वहनं कार्यमाणैर्वहद्भिश्च, तिष्ठद्भिरवस्थानं कुर्वद्भिः, प्रतिपालयद्भिः प्रतिपालनां कुर्वद्भिश्च, पर्याप्तं परिपूर्णं राजद्वाराङ्गणं नृपप्रतोल्या अजिरं यैः । 'गृहावग्रहणी देहल्यङ्गणं चत्वराजिरे' इत्यमरः । अप्रभूतमसमर्थं चत्वरं बहुमार्गं येषां तैः । निस्तुषितानि निःशेषं भृतानि सकलरथ्यान्तराणि समग्रवीथीविवराणि यैस्तेषां भावस्तत्ता तयान्तर्मध्ये बहिश्च संकटायमानः संकीर्णायमानो नगर्या अवन्त्या विस्तारो यैरेवंविधैस्तुरङ्गमसहस्रैस्तत्क्षणं तत्कालं कुन्तवनमयमिव भल्लकाननैर्निर्मितमिवान्तरिक्षमाकाशम् । खुराः शफास्तेषां रवः शब्दस्तन्मयीव मेदिनी पृथ्वी, हेषा हेषाः तासां रवस्तन्मयानीव श्रोत्रविवराणि कर्णच्छिद्राणि । 'हेषा हेषा तुरङ्गाणाम्' इति हैमः । फेनपिण्डः कफपुञ्जस्तस्य स्तबकैर्गुच्छैर्निर्मितमिव युवराजभवनद्वाराङ्गणम् । खलीनानां कविकानां रवाः शब्दास्तन्मय्य इव दशदिशो दशककुभः । अश्वालंकारस्य तुरंगमालंकृते रत्नानि मणयस्तेषां प्रभास्त्विषस्तासां प्राचुर्यात्तन्मया इव शशाङ्करश्मयश्चन्द्रकिरणा अभवन् । अचिरात्स्तोककालं यावत् गृहीत आत्तः समायोगः संबन्धो येनैतादृशं यदङ्गणमजिरं तस्मात्तमिन्द्रायुधं पूर्वव्यावर्णितस्वरूपमारुह्यारोहणं कृत्वा पुरस्तादग्रतश्चलितेन प्रस्थितेनालोकहेतोः प्रकाशनिमित्तम् ।

टिप्प०—1 निर्वार्यमाण इति पाठः । निःशेषेण वार्यमाण इति तदर्थः । 2 उत्थानं कार्यमाणैः इत्युचितम् । 3 विलोभ्यमानैरिति पाठे, केनापि विलोभनद्रव्येण लोभमुत्पाद्य आनीयमानैरित्यर्थः । 4 अन्यहस्तात् आकृष्य नीयमानैरित्यर्थः । 5 घोटकोपरि भल्लानामुल्लसितत्वात्कुन्तवनप्रचुरमिवेत्यर्थः । 6 प्राचुर्ये मयट् । विकारार्थे निर्देशस्तु अज्ञानमेवास्य । 7 प्रकाशस्य कारणात् चन्द्रमण्डलसदृशेन, छत्रस्य प्रकाशशालित्वात् ।

---

पाठा०—१ भवनकलहंसानाम्. २ इव श्रोत्र. ३ चलचपल. ४ क्वणत्कलकलेन; गुणत्कलकलेन. ५ विलस्यमानैः. ६ अपङ्क्तिस्थितैश्च. ७ अप्रतिपातयद्भिश्च; निष्पतद्भिश्च ८ अपर्याप्त. ९ निस्तुच्छित. १० अङ्गणगतम्.

नालोकहेतोर्द्वितीयचन्द्रमण्डलेनेव हंसधाम्ना मङ्गलातपत्रेणावेद्यमाननिर्गमो यथादर्शनमितस्ततः तुरङ्गमगतैरेव प्रणम्यमानो राजपुत्रसहस्रैः, प्रसुप्तपुरजनतयाऽसंबाधेनापि राजवर्त्मना बहुत्वात्तुरङ्गमबलस्य कृच्छ्रलब्धसंचारः कथंकथमपि निर्जगाम नगर्याः। निर्गतस्य चादूरत एव निर्भरत्वाज्ज्योत्स्नापूरस्याच्छतया च दुर्विभाव्यपानीयामुपरि कलकूजितानुमीयमानोत्रस्तहंससार्थोत्पतनव्यतिकराङ्गुलिनानीयमानामिव सर्वतो जडतरतरङ्गानिलस्पर्शमात्रोपलक्ष्यसलिलसंनिधिमुत्तीर्य शिप्राम्, अतिप्रहतत्वादसंकटत्वाच्च वर्धयतेव गमनोत्साहमतिविस्तीर्णेनापि पुरोविस्तारितेनेव चन्द्रपादैर्दशपुरगामिना मार्गेण प्रावर्तत गन्तुम्।

अथोह्यमानैरिव रयवाहिना सकलदिङ्मुखप्रसृतेन ज्योत्स्नाजलस्रोतसा वैशम्पायनालोकनत्वरितस्य चन्द्रापीडमनस इव तुल्यं वहतो जङ्घानिलेनेन्द्रायुधस्याकृष्यमाणैरिव वाजिभि-

---

अत एवोत्प्रेक्षते—द्वितीयचन्द्रमण्डलेनेव द्वितीयशशाङ्कबिम्बेनेव हंसवद्धाम कान्तिर्यस्यैवंभूतेन मङ्गलातपत्रेण शुभसूचकच्छत्रेणावेद्यमानो ज्ञायमानो निर्गमो यस्यैवंविधश्चन्द्रापीडो यथा दर्शनं स्यात्तथेतस्ततस्तुरङ्गमगतैरश्वारूढैरेव राजपुत्रसहस्रैर्नृपसुतसहस्रैः प्रणम्यमानो नमस्क्रियमाणः, प्रसुप्तो यः पुरजनस्तस्य भावस्तत्ता तयाऽसंबाधेनाप्यसंकटेनापि राजवर्त्मना राजमार्गेण तुरङ्गमबलस्याश्वसाधनस्य बहुत्वात्कथंकथमपि कृच्छ्रेण कष्टेन लब्धः प्राप्तः संचारः संचरणं येनैवंभूतो नगर्या अवन्त्या निर्जगाम निर्ययौ। निर्गत्य च निर्गमनं कृत्वा चादूरत एवादविष्ठ एव ज्योत्स्नायाश्चन्द्रिकायाः पूरस्य प्रवाहस्य निर्भरत्वाद्बहुलत्वादच्छतया स्वच्छतया च दुर्विभाव्यं दुःखेन ज्ञातुं शक्यं पानीयं जलं यस्याः सा ताम्, उपर्युपरिष्टात्कलकूजितेन मनोहरध्वनितेनानुमीयमानोऽनुमानविषयीक्रियमाण उत्रस्तश्चकितो यो हंससार्थः सितच्छदसमुदायस्तस्योत्पतनमुड्डयनं तस्य व्यतिकरो वृत्तान्तस्तेन। पङ्क्तिसाम्यादुत्प्रेक्षते—अङ्गुलिना करशाखया नीयमानामिव प्राप्यमाणामिव। सर्वतः सर्वत्र जडतरोऽतिशीतलो यस्तरङ्गः कल्लोलस्तस्यानिलः पवनस्तस्य स्पर्शमात्रेण संयोगमात्रेणोपलक्ष्यो ज्ञातुं शक्यः सलिलसंनिधिः पानीयसमीपं यस्याः सा तामेवंविधां शिप्रां नदीमुत्तीर्योत्तरणं कृत्वा। अतिप्रहतत्वादतिक्षुण्णत्वादसंकटत्वादसंबाधत्वाच्च, गमनस्य यात्राया उत्साहमुद्योगं वर्धयता वृद्धिं प्रापयतेव, अतिविस्तीर्णेनाप्यतिविस्तृतेनापि पुरोऽग्रे चन्द्रपादैः शशिकिरणैर्विस्तारितेनेव विस्तीर्णीकृतेन, एवंविधेन दशपुरगामिना दशपुरानुयायिना मार्गेणाध्वना गन्तुं प्रावर्तत प्रवृत्तोऽभूत्।

अथ रयवाहिना रयसा वेगेन वहति स तथा तेन सकलदिङ्मुखप्रसृतेन सकलदिङ्मुखानि समग्रककुबाननानि तेषु प्रसृतेन विस्तृतेन ज्योत्स्नैव जलं पानीयं तस्य स्रोतः प्रवाहस्तेनोह्यमानैरिव वहनं प्राप्यमाणैरिव वैशम्पायनस्यालोकनं निरीक्षणं तत्र त्वरितस्योत्सुकस्य चन्द्रापीडमनस इवेन्द्रायुधस्य तुल्यं सदृशं वहतश्चलतोऽस्य जङ्घानिलेनाकृष्यमाणैरिवाकृष्टैरिव वाजिभिरश्वैः। योऽत्युत्कृष्टगामी भवति स मन्दचारिणमाकर्ष-

---

**टिप्प०**—1 पुनः पाठभ्रंशेन ग्रन्थं चूर्णीकृतवांष्टीकाकारः। 'उपरि कलकूजितानुमीयमानोत्रस्तहंससार्थोत्पलव्यतिकरां पुलिनायमानामिव' इति पाठः। उपरि कलकूजितेन अनुमीयमानः उत्रस्तः उच्चैस्त्रासं गतः (सैन्याश्वानां खुररवादिति भावः) हंससार्थः (हंससमूहः) यस्मिन् ईदृशः उत्पलव्यतिकरः उत्पलसंचयो यस्यां तथाभूताम्, अत एव पुलिनायमानामिव जलपरित्यक्तसैकतायितामिव स्थितां (शिप्राम्)। अयं भावः-शिप्राया उत्पलसंचये श्वेतवर्णा हंससमूहास्तथा मिश्रिता यथा कलकूजितेन तेषामनुमानं भवति [उन्मीलितालंकारः, सादृश्याद्द्वयोर्भेदस्थगनेपि यदि कुतोपि हेतोर्भेदस्फूर्तिः]। ज्योत्स्नापूरस्य च स्वच्छतया जलं पृथग् न विभाव्यते अत एव सा शिप्रा पुलिनायमाना दृश्यत इत्यर्थः। 2 रयः अकारान्तः, अतो रयेणेत्येव स्यात्। 3 चन्द्रापीडमनसस्तुल्यं वहता इन्द्रायुधस्य जङ्घारवेण आकृष्यमाणैरित्यन्वयः।

---

**पाठा०**—१ समागतैः. २ अच्छतया. ३ अप्युपरि. ४ उत्पन्नव्यतिकरपुलिनायमानामिव; 'उत्पलव्यतिकरां पुलिनायमानामिव. ५ जलतरङ्ग. ६ अतिप्रभूतत्वात्. ७ गमनोत्साहविस्तीर्णेन. ८ पुनः. ९ मानसस्यैव; मानसोऽस्य.

स्तावत्येवा[1]पररात्रवेलया योजनत्रितयमेवालङ्घयत् । अथाध्वश्रमापहरणायेव प्रवृत्ते वातुमाह्लाद-कारिणि निर्भरज्योत्स्नाजलावगाहादार्द्रार्द्रस्पर्शेऽवश्यायशीकरवर्षिणि [2]रजोलुलितविविधवन-पल्लवानिलवीजिते विनिद्रकुमुदिनीप[3]रिमलन[4]लग्नपरिमले परिमलाहितजडिम्नि [5]रजनीविराम-पिशुने मातरिश्वनि, क्रमेण चापरदिग्वधूवदनचुम्बिनि [6]तदा कल्पकाले च दुर्विषहशर्वरीविरह-चिन्तयेवासन्नदिनकरोदयविषादेनेवाप्रदोषादुत्तानितमुखैः कुमु[7]दराशिभिः पी[8]यमानस्य धाम्नः परिक्षयेणेव सर्वाम्बरसरःपयःपायिपयोदविभ्रमाश्वरजःसंघा[9]तोपघातेनेव पाण्डुतां [10]गतवति चन्द्रबिम्बे, प्रत्यग्रगगनलक्ष्मीवियोगसंतापोज्झिते धवलोत्तरीयांशुक इव शशाङ्कलग्ने गलति चन्द्रिकालोके, अपरजलधिपातिना ज्योत्स्नाजलप्रवाहेणेव सहसा फेनबुद्बुदावलिष्विव [11]नश्य-

---

त्येव तावत्या एवापररात्रवेलयापररात्र उच्चन्द्रस्तस्या वेलावसरस्तया योजनत्रितयमेव द्वादशक्रोशानेवालङ्घयदुल्लङ्घितवान् । **अथेति** । योजनत्रितयोल्लङ्घनानन्तरमध्वश्रमो मार्गक्लमस्तस्यापहरणायेव दूरीकरणायेव मातरिश्वनि वायौ वातुमितस्ततश्चलितुं प्रवृत्ते सति । इतो वायुं विशेषयन्नाह—**आह्लादेति** । आह्लादः प्रमोदस्तं करोतीत्येवंशीलः स तथा तस्मिन् । निर्भरं यो ज्योत्स्नाजलस्यावगाहोऽवगाहनं तेनार्द्रार्द्रोऽतिशयेनार्द्रः क्लिन्नः स्पर्शो यस्य स तथा तस्मिन् । 'आर्द्रः क्लिन्नेऽभिधेयवत्' इति विश्वः । अवश्यायस्तुहिनं तस्य शीकरा वातास्तकणास्तान्वर्षतीत्येवंशीलः स तथा तस्मिन् । रजोलुलिता धूलीमिश्रिता विविधा अनेकप्रकारा ये वनपल्लवा अरण्यकिसलयानि तेषामनिलो वायुस्तेन वीजिते प्रेरिते । विनिद्रा विमुद्रा या कुमुदिनी कैरविणी तस्याः परिमलनं विमर्दनं तेन लग्नः परिमलो यस्य स तथा तस्मिन् । परिमलेनाहिता स्थापिता जडिमा यस्मिन्स तस्मिन् । रजन्या विरामोऽवसानं तस्य पिशुने सूचके । **क्रमेण चेति** । क्रमेण परिपाट्या तदा तस्मिन्कल्प[1]काले प्रभाते सति च पाण्डुतां शुक्लतां चन्द्रबिम्बे शशिमण्डले गतवति प्राप्तवति सति । कथंभूते । अपरदिगेव पश्चिमदिगेव वधूः वनिता तस्या वदनं मुखं चुम्बतीत्येवंशीलः स तस्मिन् । पाण्डुतानिदानं प्रदर्शयन्नाह—**दुर्विषहेति** । दुर्विषहा दुःखेन सोढुं शक्या या शर्वरी रात्रिस्तस्या विरहो वियोगस्तस्य चिन्तयेवार्त्येव, आसन्नः समीपवर्ती यो दिनकरोदयः सूर्योद्गमस्तस्माद्यो विषादः खेदस्तेनेव, आप्रदो[2]षात्प्रदोषाभावादुत्तानितमुखैरूर्ध्वीकृताननैरेतादृशैः कुमुदराशिभिः कैरवश्रेणिभिः पीयमानस्यास्वाद्यमानस्य धाम्न आलोकस्य परिक्षयेणेव विनाशेनेव । सर्वं यदम्बरमेव सरस्तटाकं तस्य पयःपायिनो ये पयोदा मेघास्तेषां विभ्रमो यस्मिन्नेतादृशो योऽश्वरजःसंघातस्तेन य उपघातस्तेनेव । पुनश्चन्द्रं विशेषयन्नाह—**प्रत्यग्रेति** । प्रत्यग्रा नवीना या गगनलक्ष्मीर्व्योमश्रीस्तस्या वियोगसंतापो विरहज्वरस्तेनोज्झिते विमुक्ते । धवलोत्तरीयांशुकस्येदं विशेषणम् । शशाङ्कलग्ने चन्द्रसंबद्धे चन्द्रिकालोके चन्द्रकलिकाप्रकाशे गलति क्षरति सति । अङ्गलग्नशुक्लत्वसाम्यादुत्प्रेक्षते—धवलं शुक्लं यदुत्तरीयांशुकमुपरिवस्त्रं तदिवे[3]त्युत्प्रेक्षा । **अपरेति** । अपरजलधिपातिना पश्चिमसमुद्रावगाहिना ज्योत्स्नाजलप्रवाहेणेव सहसा तारकापङ्क्तिषु नक्षत्रश्रेणिषु नश्यन्तीषु विलयं गच्छन्तीषु सत्सु । वर्तुलत्वश्वेतत्वसादृश्यादुत्प्रेक्षते—फेनबुद्बुदावलिष्विव कफयुक्तस्थासकश्रेणिष्विव ।

टिप्प०—1 'तदाकल्पकेनेव' इति पाठः । तस्याः (अपरदिग्वध्वाः) आकल्प एव आकल्पकः (वेषरचना, प्रसाधनम्) तेनेव, चन्द्रेण अपरदिग्वध्वा वदनचुम्बनं कृतम् अत एव तत्रस्थचन्दनाद्यङ्गरागेणेवेत्याशयः । काले इति पाठे तु 'कल्यकाले' प्रत्यूषकाले इति स्यात् । 'प्रत्यूषोहर्मुखं कल्यः' इत्यमरः । 2 आप्रदोषात् प्रदोषमभिव्याप्य । 3 चन्द्रस्य पाण्डुतागमने तदाकल्पकेनेव इत्यादीनि पञ्च कारणान्युत्प्रेक्षितानि । संतप्ते अङ्गे वस्त्रधारणमशक्यम्, अत एवोज्झिते अंशुके इव चन्द्रालोके (प्रकाशे) गलति निपतति सति ।

पाठा०—१ इव. २ रयलुलिताः. ३ परिमिलन. ४ लग्नपरिमलाहित. ५ रजनि. ६ तदाकल्पकेनेव. ७ कुमुदराशिभिः. ८ आपीयमानस्य. ९ संघातेनेव. १० उपगतवति. ११ न स्पृशन्तीषु.

न्तीषु तारकापङ्क्तिषु, गलदवश्यायक्षालनादिव शनैःशनैर्दलितमुक्तागौरज्योत्स्नानुभावमुत्सृजन्तीष्वाशासु, पुनर्विभाव्यमानसहजश्यामकान्तिषु सलिलादिवोन्मज्जत्सु तरुलताविटपेषु, समुल्लसति पूर्वदिग्वधूकर्णपूररक्ताशोकपल्लवेऽम्बरसरस्तामरसे दिवसमुखकरिकुम्भसिन्दूररेणौ तरणिरथरक्तध्वजांशुके संध्यारागे, संध्यातपरचितान्तेष्वालग्नदावानलेष्विव वयःसंघातैर्जनिताशिवमुत्सृज्यमानेषु निवासपादपेषु, सशेषनिद्रालसैश्चिरप्रसारणाविशदजङ्घाङ्घ्रिभिर्हठाकृष्टदीर्घपदसंचारिभिर्मृगकदम्बकैरुन्मुच्यमानासूषरशय्यासु, इच्छावखण्डितोत्खातपल्वलोपान्तरूढमुस्ताग्रन्थिष्वरण्यगह्वराभिमुखेषु वराहयूथेषु, निशावसानप्रचारनिर्गतैर्गोधनैरितस्ततो धवलायमानासु ग्रामसीमान्तारण्यस्थलीषु, आलोक्यमानजनपदविनिर्गमेषु प्रसूयमानेष्विव ग्रामेषु, यथार्ककिरणावलोकोद्गमं चोन्नाम्यमान इव पूर्वदिग्भागे, समुत्सार्यमाणास्विवाशासु,

---

**गलदिति** । गलन्क्षरन्योऽवश्यायो हिमं तेन क्षालनादिव धावनादिव शनैर्मन्दं मन्दं दलितमुक्तावद्गौरा या ज्योत्स्ना चन्द्रकलिका तस्या अनुभावो माहात्म्यं तमुत्सृजन्तीषु त्यजन्तीष्वाशासु दिक्षु । 'ज्योत्स्नावितानम्' इति पाठो दृश्यते । तत्र ज्योत्स्नालक्षणं वितानमुल्लोच इत्यर्थो ज्ञेयः । **पुनरिति** । पुनर्विभाव्यमाना पुनर्ज्ञायमाना सहजा स्वभावजा श्यामा कान्तिर्येषामेवंभूतेषु तरुलताविटपेषून्मज्जत्सूपर्यागच्छत्सु । अत उत्प्रेक्षते—सलिलादिव जलादिव । पुनः कस्मिन्सति । संध्यारागे समुल्लसत्युल्लासं प्राप्ते सति । संध्यारागं विशेषयन्नाह—**पूर्वेति** । पूर्वदिक्शक्रदिक्सैव वधूः स्त्रीस्तस्याः कर्णपूराय रक्ताशोकपल्लवेऽरुणकङ्केल्लिकिसलये, अम्बर एव सरस्तटाकस्तस्मिंस्तामरसे महोत्पले, दिवसमुखमेव करिकुम्भस्तत्र सिन्दूररेणौ नागजक्षोदे । तरणेः सूर्यस्य रथः स्यन्दनस्तस्य रक्तध्वजांशुकेऽरुणवैजयन्तीवस्त्रे । वयःसंघातैः पक्षिसमूहैर्जनिताशिवमुत्पन्नाशुभं[1] यथा स्यात्तथा निवासपादपेष्ववस्थानवृक्षेषूत्सृज्यमानेषु त्यज्यमानेषु सत्सु । कीदृशेषु । संध्यातपेन[2] रचिता व्याप्ता अन्ता येषां तेषु । अत एव रक्तपीतत्वसाम्यादुत्प्रेक्षते—आलग्नदावानलेष्विवासंबद्धवनवह्निष्विव । सह शेषेण वर्तते या सा सशेषा सावशेषा एवंविधा निद्रा प्रमीला तया अलसैर्मन्दैश्चिरप्रसारणेनाविशदा अस्फुटा जङ्घाङ्घ्रयो येषां तैः । हठेनाकृष्टो यो दीर्घपदस्तेन संचारिभिः संचरणशीलैरेवंविधैर्मृगकदम्बकैर्हरिणसमूहैरूषरशय्यासु कठिनशयनीयासून्मुच्यमानासु त्यज्यमानासु सत्सु । **इच्छेति** । इच्छया स्वातन्त्र्येणावखण्डिता द्वैधीकृता उत्खाता मूलत उत्पाटिताः पल्वलोत्खातं सरस्तस्योपान्ते समीपे रूढानां मुस्तानां ग्रन्थयो यैरेवंविधेषु वराहयूथेषु क्रोडसंघातेष्वरण्यगह्वराभिमुखेष्वटवीगह्वरसंमुखेषु सत्सु । निशाया अवसानं प्रान्तस्तस्मिन्प्रचारार्थं गोचरार्थं निर्गतैरितस्ततो गोधनैर्गोयूथैर्धवलायमानासु श्वेतायमानासु ग्रामसीमोपशल्यं तस्यान्ते या अरण्यस्थल्यस्तासु सत्सु । 'ग्रामान्त उपशल्यं स्यात्सीमसीमे स्त्रियामुभे' इत्यमरः । **आलोक्येति** । आलोक्यमानो निरीक्ष्यमाणो जनानां पदविनिर्गमो येष्वेवंविधेषु ग्रामेषु सत्सु । पदविनिर्गमसाम्यादुत्प्रेक्षते—प्रसूयमानेष्विव प्रसूतिं कुर्वाणेष्विव । प्रसूतावपि प्रथमं पदविनिर्गम एव भवतीति भावः । अर्ककिरणानां सूर्यरश्मीनामवलोकः प्रकाशस्तस्योद्गममनतिक्रम्य[3] करोतीति यथार्ककिरणावलोकोद्गममित्यव्ययीभावः । तेन चोन्नाम्यमान उच्चैः क्रियमाणे पूर्वदिग्भागे शक्रदिक्प्रदेशे सति । आशासु दिशासु समुत्सार्यमाणासु दूरीक्रि-

---

टिप्प०—1 हन्त! अशिवः स्वयं टीकाकारः । अन्यथा सर्वमङ्गले प्रातःकाले का अशिवकथा! 'जनितारवम्' इति पाठः । पक्षिणः कोलाहलं कृत्वा उड्डीयन्ते । 2 'सन्ध्यातपपरिगतेषु' इत्येव सत्पाठः । 3 कः प्रलाप इति न ज्ञायते । अवलोकस्य स्थाने आलोकेति पाठः । अर्ककिरणानामालोकोद्गमम् अनतिक्रम्य ( सूर्यप्रकाशेन सहेति भावः ) पूर्वदिग्भागे उन्नाम्यमाने इव । अर्कप्रकाशो यथा यथा भवति तथा तथा प्रतीयते यत् केनचित् पूर्वदिग्भागः उत्क्षिप्य ध्रियमाण इवास्तीति ।

---

पाठा०—१ अवश्यायसलिल. २ गलित; शीलित. ३ गौरम्. ४ ज्योत्स्नानुभवम्. ५ परिगतेषु. ६ आरावम्. ७ हठादाकृष्ट; दूराकृष्ट. ८ प्ररूढ.

अपसर्पत्स्विवारण्येषु, विस्तार्यमाणास्विव ग्रामसीमासु, उत्तानीभवत्स्विव सलिलाशयेषु, अवच्छिद्यमानेष्विव शिखरिषु, उद्ध्रियमाणायामिव मेदिन्याम्, अदृश्यतामिव यान्तीषु[2] कुमुदिनीषु, तिरोधानकारिणीं नीलतिरस्करिणीमिव करैरुत्सार्य तिमिरमालां विरहविधुरां कमलिनीमिवालोकयितुमुदयगिरिशिखरमारूढे भगवति सप्तलोकैकचक्षुषि[3] सप्तवाहे, विहायस्तलमुद्भास्य दिगन्तराण्युद्भासयन्तीषु सकलजगद्दीपिकासु दिवसकरदीधितिषु, दृष्टिप्रसरक्षमायां वेलायां सहसैवाग्रतोऽर्धगव्यूतिमात्र इव रात्रिप्रयाणकायातम्, अन्तःक्षोभभीतेन रसातलेनेवोद्गीर्यमाणम्, असोढसंघातभरया मेदिन्येव विक्षिप्यमाणम्, अपर्याप्त[4]प्रमाणाभिर्दिग्भिरिव संह्रियमाणम्[5], अपरिमाणरजोनिरोधाशङ्कितेन गीर्वाणवर्त्मनेवावकीर्यमाणम्, अर्कावलोकेनेव[6] सह विस्तीर्यमाणम्[7], आयासितायततरदृष्टिभिरप्यदृष्टपर्यन्तम्, अनुजीवि[8]भूभृच्छतसहस्रकल्पिता[9]-

---

यमाणास्विव । तज्ज्ञापकनक्षत्राणां तिरोधानादिति भावः । ग्रामसीमासूपशल्येषु विस्तार्यमाणासु । अरण्येषु वनेष्वपसर्पत्स्विवापसरणीक्रियमाणेष्विव । सलिलाशयेषु जलाश्रयेषूत्तानीभवत्स्विवोर्ध्वीभवत्स्विव । शिखरिष्वद्रिष्ववच्छिद्यमानेष्विव[1] खण्डशः क्रियमाणेष्विव । मेदिन्यां वसुधायामुद्ध्रियमाणायामिवोत्पाद्यमानायामिव । कुमुदिनीषु कैरविणीष्वदृश्यतामचाक्षुषतां यान्तीष्विव गच्छन्तीष्विव । करैः किरणैस्तिमिरमालामन्धकारश्रेणीमुत्सार्य दूरीकृत्य । कृष्णसाधर्म्यादुत्प्रेक्षते—तिरोधानकारिणीमन्तर्धानजनिकां नीलतिरस्करिणीमिव नीलजवनिकामिव । 'प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा' इत्यमरः । विरहविधुरां वियोगविह्वलां कमलिनीं पद्मिनीमालोकयितुं विलोकयितुमिवोदयगिरेः पूर्वाद्रेः शिखरं सानुमारूढे प्राप्ते भगवति माहात्म्यवति सप्तलोकस्यैकचक्षुरिव चक्षुस्तस्मिन्सप्त वाहास्तुरंगा यस्य स तस्मिन् । सहस्रकिरण इत्यर्थः । विहायस्तलं व्योमस्तलमुद्भास्य प्रकाश्य दिगन्तराणि दिशां विचालान्युद्भासयन्तीषु प्रकाशयन्तीषु सकलजगतां सकलविश्वानां दीपिकासु प्रकाशिकासु दिवसकरस्य सूर्यस्य दीधितिषु कान्तिषु सत्सु । दृष्टिप्रसरे क्षमायां समर्थायां वेलायामवसरे सहसैवैकपद एव । **अग्रेति ।** अग्रतः पुरोऽर्धगव्यूतिमात्रेऽर्धक्रोशमात्र इव स्कन्धावारं सैन्यमद्राक्षीद्व्यलोकयत् । 'वरूथिनी चमूश्चक्रं स्कन्धावारोऽस्य तु स्थितिः' इति हैमः । इतः स्कन्धावारं विशेषयन्नाह—**रात्रीति ।** रात्रिप्रयाणकेन निशागमनेन आयातमागतम् । अन्तर्मध्ये यः[2] क्षोभस्त्रासस्तेन भीतं चकितमेवंविधेन रसातलेन वडवामुखेनोद्गीर्यमाणमिवोद्वम्यमानमिव । असोढोऽक्षमितः संघातस्य समुदायस्य भरो ययैवंविधया मेदिन्या वसुधया विक्षिप्यमाणमिवेतस्ततः क्रियमाणमिव । यदि वासोढसंघातभरया मेदिन्येव संक्षिप्यमाणं समासीक्रियमाणम् । अपर्याप्तप्रमाणाभिरप्राप्तेयत्ताभिर्दिग्भिः ककुब्भिः संह्रियमाणमिव संगृह्यमाणमिव । अपरिमाणमसंख्यं यद्रजस्तेन निरोधोऽवकाशरोधस्तेनाशङ्कितेनारेकितेन गीर्वाणवर्त्मनेवाकाशेनेवावकीर्यमाणं विक्षिप्यमाणम् । अर्कावलोकेनेव सूर्यावलोकेनेव सह विस्तीर्यमाणं विस्तारं प्राप्यमाणम् । आयासिता आयासं प्रापिता आयततरा दीर्घतरा या दृष्टयस्ताभिरप्यदृष्टोऽनवलोकितः पर्यन्तः प्रान्तो यस्य तत्तथा । अनुजीविनां सपर्याकारिणां

---

टिप्प०—1 इयत्तया गृह्यमाणेष्विव । 2 रसातलेन स्कन्धावारः पूर्वं स्वान्तर्धृतः, परम् बलानामन्तःक्षोभेन भीतत्वात्स स्कन्धावारस्तेन उद्गीर्णः ( उद्वान्तः ) इत्याशयः ।

---

पाठा०—१ चावसर्पत्सु; अपसार्यमाणेषु. २ उपयान्तीषु. ३ सप्तलोकचक्षुषि. ४ पर्याप्त. ५ संक्रियमाणम्. ६ अर्ककिरणावलोकेन; अर्ककिरणालोकेन. ७ विस्तीर्णम्. ८ अतिजीव; अनिर्जीव. ९ कलित.

वष्टम्भं संचारिणं द्वितीयमिव मेदिनीसंनिवेशम्, [1]अजलवाहिनीप्रवेशगम्भीरं प्राणिमय[2]मपर-पारमष्टममिव महासमुद्रम्, उद्रिक्तरजःसं[3]ततिदूरतया चापरिस्फुटविभाव्यसर्ववृत्तान्तमपीत-स्ततो वलितधवलकदलिकोद्भासितानेककरिघटासहस्रसंकुलम् अविरल[4]बलाकावलीविभ्राजि-ताम्भोदसंघातं मूर्तिमन्तमिव मेघसमयारम्भम्, आवासभूमिग्रहणसंभ्रमा[5]भिप्रधाविताशंख्य-करितुरगनरपरम्परोर्मिसंबाधतया [6]मन्दमन्दरास्फालनलुलितकल्लोलजालाकुलस्य महाजलधे-र्लीलया निविशमानं स्कन्धावारमद्राक्षीत् ।

दृष्ट्वा चाकरोच्चेतसि—'अहो भद्रकं भवति, यद्यचिन्तितागमन एव प्रविश्य वैशम्पा-यनं पश्यामि' इति । एवं चिन्तयित्वा छत्रचामरादिभिः स्वचिह्नैः सह निवारिताशेषराज-पुत्रलोको जवविशेषग्राहिभिस्त्रिचतुरैस्तुरङ्गमैरनुगम्यमानो मूर्धानमावृत्योत्तरीयेण, रयविशे-षग्राहिणेन्द्रायुधेन नानाव्यापारव्यग्रसकललोकमचिन्तित एव स्कन्धावारमाससाद । प्रविशंश्च

---

भूभृतां राज्ञां पर्वतानां च यच्छतसहस्रं लक्षं तेन कल्पितोऽवष्टम्भ आश्रयो यस्य तत्तथा । संचारिणं संचरण-शीलं द्वितीयमपरं मेदिन्या वसुधायाः संनिवेशमिव रचनाविशेषमिव । न विद्यते जलं यस्यामेवंविधा वाहिनी सेना तस्याः प्रवेशेनागमनेन गम्भीरं गभीरं प्राणिमयं प्राणिभिर्निष्पन्नम् । न विद्यते परः पारो यस्य तत्तथा । अत एवोत्प्रेक्षते—अष्टमं महासमुद्रमिव महाजलधिमिव । उद्रेकाद्रजःसंततेर्दूरस्य भावो दूरता तया चापरि-स्फुटोऽप्रकटो विभाव्यो ज्ञेयः सर्ववृत्तान्तोऽखिलोदन्तो यस्मिंस्तत्तथा । एवंविधमपीतस्ततो वलिता वायुना पश्चा-द्वलिता या धवलकदलिकाः श्वेतवैजयन्त्यः । 'कदली वैजयन्त्यां च रम्भायां हरिणान्तरे' इति विश्वः । ताभिरुद्भासिताः शोभिता एतादृशा अनेके ये करिणो हस्तिनस्तेषां घटाः समुदायास्तासां सहस्रं तेन संकुलं संकीर्णम् । श्वेतकदलिकासाम्यादुत्प्रेक्षते—अविरला निविडा या बलाकावली बिसकण्ठिकाश्रेणिस्तया विभ्रा-जितः शोभितोऽम्भोदसंघातो जलदसमूहो यस्मिन्नेवंभूतं मूर्तिमन्तं मेघसमयारम्भमिव जलदकालप्रारम्भमिव । आवासार्थं यद्भूमिग्रहणं तत्र संभ्रमेणाभिप्रधावितास्त्वरितगत्या चलिता असंख्याः संख्यातुमयोग्या ये करि-तुरगनरा हस्त्यश्वमनुष्यास्तेषां परस्परं मिथ ऊर्मिवत्कल्लोलकवत्संबाध आघातो यस्मिंस्तस्य भावस्तत्ता तया मन्दं शनैर्यन्मन्दरस्य मेरोरास्फालनमासमन्ताद्भ्रमणं तेन लुलितमेकीभूतं कल्लोलजालं तरंगपटलं तेनाकुलस्य व्याकुली-भूतस्य महाजलधेर्महासमुद्रस्य लीलया क्रीडया निविशमानं स्थाप्यमानं सैन्यमद्राक्षीदित्यन्वयस्तु प्रागेवोक्तः ।

दृष्ट्वा च विलोक्य च चेतसि चित्तेऽकरोत् । अहो इत्याश्चर्ये । भद्रकं क्षेमं भवति जायते, यद्यचिन्तित-मतर्कितमागमनं यस्यैवंभूतोऽहं प्रविश्य प्रवेशं कृत्वा वैशम्पायनं पश्याम्यवलोकयामि । एवममुना प्रकारेण चिन्तयित्वा मनसि कृत्वा छत्रचामरादिभिरातपवारणवालव्यजनप्रमुखैः स्वचिह्नै राजलक्ष्मभिः सह सार्धं निवा-रितः प्रतिषिद्धोऽशेषराजपुत्रलोको येनैवंभूतो जवविशेषग्राहिभिर्गतिविशेषगामिभिस्त्रयश्च चत्वारश्च त्रिचतुरास्तै-स्तुरङ्गमैरश्वैरनुगम्यमानोऽनुयायमान उत्तरीयेणोपरिवस्त्रेण मूर्धानमुत्तमाङ्गमावृत्याच्छाद्य रयविशेषग्राहिणा जव-विशेषगामिनेन्द्रायुधेनाश्वेन नानाव्यापारेण व्यवहारेण व्यग्रो व्याकुलः सकललोको यस्मिन्नेवंभूतं स्कन्धावारं सैन्यनिवेशमचिन्तित एवाससाद प्राप्तवान् । प्रविशंश्च प्रवेशं कुर्वंश्च प्रत्यावासकं प्रत्यावासं वहन्नेव व्रजन्नेव कस्मि-

---

टिप्प०—1 भ्रष्टोयं पाठः । 'उद्रिक्तरजःसंततिपूरतया' इत्येव पाठः । उद्रिक्तः ( अतिशयितः ) रजःसंततीनां ( धूलिनिवहानाम् ) पूरः प्रवाहो यस्मिन् तत्तया, इति तदर्थः । 2 मन्दरास्फालनेऽपि 'मन्दम्' इति कथनं मन्दतैव । 'अमन्दम्' ( अतिमात्रम् ) इत्युचितम् ।

---

पाठा०—१ जल. २ अपरम्; अपरमपारम्. ३ संततेः पूरतया; संततिपूरतया. ४ बलबलाक. ५ अभिधावित. ६ अमन्द.

प्रत्यावासकं वहन्नेव 'कस्मिन्प्रदेशे वैशम्पायनावासः' इति पप्रच्छ। ततस्तत्संनिहिताभिः स्त्रीभिरितरत्वादप्रत्यभिज्ञाय यथारब्धकर्मव्यग्राभिरेवोद्बाष्पशून्यवदनाभिः 'भद्र, किं पृच्छसि। कुतोऽत्र वैशम्पायनः' इत्यावेद्यमाने 'आः पापाः, किमेवमसंबद्धं प्रलपथ' इति शून्यहृदय एव ताः प्रतारयन्, अन्तर्भिन्नहृदयत्वान्नापराः पृच्छन्नेवोत्त्रस्त इव हरिणशावकः, यूथपरिभ्रंशविलोल इव करिकलभः, धेनुविरहादुत्कर्ण इव तर्णकः, न किंचिद्वदन्, न किंचिदाकर्णयन्, न किंचिन्निरूपयन्, न क्वचित्तिष्ठन्, न कंचिदाह्वयन्, क्वागतोऽस्मि, किमर्थमागतोऽस्मि, क्व चलितोऽस्मि, क्व गच्छामि, किं पश्यामि, किमारब्धं मया, किं वा करोमि, इति सर्वमेवाचेतयमानोऽन्ध इव, बधिर इव, मूक इव, जड इव, आविष्ट इव, कटकमध्यदेशं यावत्तादृशेनैव वेगेनावहत्।

अथेन्द्रायुधप्रत्यभिज्ञानाद्वार्तयैवानुप्रधावितराजपुत्रदर्शनाच्च देवश्चन्द्रापीड इति समन्तात्ससंभ्रमप्रधावितानामचेतितोत्तरीयस्खलनानामुद्बाष्पशून्यदृष्टीनां दूरादेव लज्जया प्रणामक्रियया च सममेवावनमतां राजन्यसहस्राणां मुखान्यवलोक्य 'क्व वैशम्पायनः' इत्यपृच्छत्।

---

न्प्रदेशे वैशम्पायनावास इति पप्रच्छेति पृष्टवान्। ततस्तदनन्तरं यथारब्धं यत्कर्म क्रिया तेन व्यग्राभिरेवोद्बाष्पेण शून्यं वदनं यासां ताभिस्तस्य वैशम्पायनावासस्य संनिहिताभिः समीपवर्तिनीभिः स्त्रीभिरितरत्वाद्भिन्नत्वादप्रत्यभिज्ञायानुपलक्ष्य हे भद्र हे शुभवन्, किं पृच्छसि किं प्रश्नं करोषि। अत्र वैशम्पायनः कुतः। इत्यावेद्यमान इति ज्ञाप्यमाने आः पापाः पापिष्ठाः, किमसंबद्धमसमञ्जसं प्रलपथेति शून्यहृदय एव विमनस्कचित्त एव ताः स्त्रियः प्रतारयन्वञ्चयन्नन्तर्मध्ये भिन्नं हृदयं यस्य तस्य भावस्तत्त्वं तस्मादपरा अन्या न पृच्छन्न पृच्छां कुर्वन्नेवोत्त्रस्तश्चकितो हरिणशावक इव मृगबाल इव। यूथात्स्वजातिसमुदायाद्यः परिभ्रंशो भिन्नीभावस्तेन विलोलश्चपलः करिकलभ इव हस्तिनस्त्रिंशदब्दकरिपोत इव। 'कलभस्त्रिंशदब्दकः' इति हैमः। धेनुविरहात्सुरभिवियोगादुत्कर्ण उच्चश्रवणस्तर्णक इव वत्सक इव। न किंचिद्वदन्नब्रुवन्, न किंचिदाकर्णयन्नशृण्वन्, न किंचिन्निरूपयन्कथयन्, न क्वचित्तिष्ठन्गतिनिवृत्तिं कुर्वन्, न कंचिदाह्वयन्नाह्वानं कुर्वन्, क्वागतोऽस्म्यायातोऽस्मि, किमर्थं किंप्रयोजनमागतोऽस्मि, क्व कुत्र चलितोऽस्मि, क्व गच्छामि व्रजामि, किं पश्यामि किमवलोकयामि, किं मयारब्धं प्रारब्धम्, किं वा करोमि सृजामीति पूर्वोक्तं सर्वमेवाचेतयमानोऽज्ञायमानः, अन्ध इव गताक्ष इव, बधिर इवाकर्ण इव, मूक इवावागिव, जड इव चेतनारहित इव, आविष्ट इव भूतग्रस्त इव, कटकमध्यदेशं यावत्, तादृशेनैव वेगेन जवेनावहद्बभ्राम।

**अथेति।** सैन्यान्तःप्रवेशानन्तरमिन्द्रायुधस्य प्रत्यभिज्ञानाच्चिह्नाद्वार्तयैव किंवदन्त्यैवानुप्रधाविताः पृष्ठे त्वरितगत्या चलिता एवंविधा राजपुत्रा नृपसूनवस्तेषां दर्शनाच्चावलोकनाच्च देवश्चन्द्रापीड इति कृत्वा समन्ताद्युगपत्ससंभ्रमेणादरेण प्रधावितानां त्वरितगत्या चलितानाम्, अचेतितमज्ञातमुत्तरीयस्खलनमुपरिवस्त्रपतनं यैस्तेषाम्, उद्बाष्पेण रोदनेन शून्या रिक्ता दृष्टयो येषाम्, तैर्दूरादेव दविष्ठादेव लज्जया त्रपया प्रणामक्रियया नमस्क्रियया च सममेव युगपदेवावनमतां प्रणामं कुर्वतां राजन्यसहस्राणां क्षत्रियसहस्राणां मुखान्याननान्य-

---

**टिप्प०**—1 उद्बाष्पम् ( उद्गताश्रु ) अत एव हर्षशून्यं वदनं यासां ताभिरित्यर्थ उचितः। 2 तिरस्कुर्वन्, अपसारयन्।

---

**पाठा०**—१ तत्संनिहित. २ प्रलपयन्ति; प्रलपत. ३ एवमेव. ४ कलभकः. ५ न किंचित्पश्यन्न. ६ न किंचिदालपन्न. ७ का दिग्गन्तव्या मया किम्. ८ अचिन्तय. ९ राजपुत्रलोकदर्शनात्.

ततश्च ते सर्वे सममेव 'आसिंस्तरुतलेऽवतरतु तावद्देवः । ततो यथावस्थितं विज्ञपयामः' इति न्यवेदयन् ।

चन्द्रापीडस्य तेन तेषां स्फुटाख्यानादपि कष्टतरेण वचसान्तःशल्यगर्भं स्फुटितमिव हृदयमासीत् । केवलं तत्कालप्रणयिनी मूर्च्छा सा धारणमकरोत् । तुरगादवतारितं च कुथोपविष्टं च पितुः समवयोभिरनतिक्रमणीयैर्मूर्धाभिषिक्तपार्थिवैर्धृतमात्मानं न वेदितवान् । उपलब्धसंज्ञोऽपि च वैशम्पायनस्यादर्शनात्—'किमेतत् । काहं वर्ते । किं वा मयैतच्चरितम्' इति भ्रमारूढ इव मुह्यद्भिरिवेन्द्रियैः सर्वमेवानुत्प्रेक्षमाणः केवलं स्कन्धावारागमनेनैव तस्याभावादन्यदसंभावयन्, दुर्विषहपीडाभिहतेनेव चेतसा 'किमारटामि, किं हृदयमवष्टभ्य तूष्णीमासे, किमात्मानमाहत्य हृदयात्प्राणैर्वियोजयामि, किमेकाकी कांचिद्दिशं गृहीत्वा प्रव्रजामि' इति कर्तव्यमेव नाध्यगच्छत् । अन्तर्द्रवन्निव दह्यमान इव स्फुटन्निव सहस्रधा दुःखेन चकार चेतसि—'अहो मे रम्योऽप्यरमणीयः संवृत्तो जीवलोकः । वसन्त्यपि

---

वलोक्य निरीक्ष्य क्व वैशम्पायन इत्यपृच्छदिति प्रश्नमकार्षीत् । ततः पृच्छानन्तरं ते च सर्वे जनाः सममेव युगपदेव विचार्य विमर्श्यास्मिंस्तरुतले वृक्षाधोऽवतरतूत्तरतु तावद्देवो भवान् । तत उत्तरणानन्तरं यथावस्थितं यथाभूतं विज्ञपयामो निवेदयाम इति न्यवेदयन्कथयामासुः ।

चन्द्रापीडस्य तेषां जनानां स्फुटं प्रकटमाख्यानं कथनं तस्मादपि तेन कष्टतरेणातिकृच्छ्रेण वचसा वाक्येनान्तःशल्यं गर्भे यस्यैतादृशं हृदयं स्फुटितमिव विघटितमिवासीदभवत् । तत्काले तदात्वे प्रणयः स्नेहो विद्यते यस्या एवंविधा सा मूर्च्छा केवलं धारणमकरोत् । तुरगादश्वादवतारितमुत्तारितं च कुथोपविष्टं परिस्तोमोपविष्टम् । 'प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः' इत्यमरः । पितुः समं सदृशं वयोऽवस्था येषां तैरनतिक्रमणीयैरनुल्लङ्घनीयैर्मूर्धाभिषिक्तपार्थिवैः कृतराज्याभिषेकनृपैर्धृतमात्मानं स्वं न वेदितवान्न ज्ञातवान् । उपलब्धा प्राप्ता संज्ञा संज्ञानं चेतना येनैवंभूतोऽपि वैशम्पायनस्यादर्शनादनवलोकनात् ( आत्मतत्त्वं स्वस्वरूपं तस्य दर्शनान्निरीक्षणात् ) किमेतत्, काहं वर्ते, कुत्र स्थलेऽहमस्मि, किं वा मयैतच्चरितमेतच्चेष्टितमिति भ्रमारूढ इव संशयापन्न इव मुह्यद्भिरिव मोहं प्राप्नुवद्भिरिवेन्द्रियैः करणैः सर्वमेव समग्रमेवानुत्प्रेक्षमाणोऽनालोकमानः केवलं स्कन्धावारागमनेनैव केवलं सैन्यस्यैवागमनेन तस्य वैशम्पायनस्याभावादन्यत्तद्भिन्नमसंभावयन्नसंभावनाविषयीकुर्वन्दुर्विषहा दुःसहा या पीडा तयाभिहतेनेव ताडितेनेव चेतसा मनसा किमारटामि पूत्करोमि, किं हृदयं चेतोऽवष्टभ्यावष्टम्भनं कृत्वा तूष्णीमासे मौनेन तिष्ठामि, किमात्मानं स्वमाहत्याहननं कृत्वा हृदयात्प्राणैरसुभिर्वियोजयामि विभिन्नो भवामि । किमहमेकाक्यसहायः कांचिद्दिशं ककुभं गृहीत्वा समादाय प्रव्रजामि गच्छामीति कर्तव्यमेव कृत्यमेव नाध्यगच्छन्न प्राप्तवान् । अन्तर्मध्ये द्रवन्निव द्रवीभवन्निव, दह्यमान इव प्रज्वाल्यमान इव, सहस्रधा सहस्रप्रकारेण दुःखेन स्फुटन्निव द्विधाभवन्निव, चेतसि चित्ते चकार कृतवान् । अहो इत्याश्चर्ये । मे मम रम्योऽपि रुचिरोऽपि जीवलोको जीवाधारक्षेत्रमरमणीयोऽ-

---

टिप्प०—1 अयं भागष्टीकायामसंबद्धः, उपरितो भ्रमेण पतितः स्यात् । 2 'केवलस्कन्धावार' इत्येव पाठः । वैशम्पायनशून्यस्य केवलस्य स्कन्धावारस्याऽऽगमनेन वैशम्पायनस्याभावात् विनाशात् अन्यत् किंचिदप्यसंभावयन् ( मरणमेव तर्कयन्नित्यर्थः ) ।

---

पाठा०—१ ततः सर्वे; ततस्ते सर्वे. २ चेतितवान्. ३ आत्मनश्च दर्शनात्. ४ अनुत्प्रेक्ष्यमाणः. ५ केवल. ६ स्कन्धावारानुगमननिवासादसावन्यत्. ७ हतेन चेतसा. ८ आहत्य हठात्; आहन्मि हृदयात्. ९ इतिकर्तव्यताम्. १० नाधिगच्छत्; अत्यगच्छत्. ११ वसन्ती.

शून्यीभूता पृथिवी। सचक्षुषोऽप्यन्धाः ककुभो जाताः। सुनिष्पन्नमपि हतं जन्म। सुरक्षितमपि मुषितं जीवितफलम्। कं[1] परं पश्यामि। कमालपामि। कस्मै विश्रम्भं कथयामि। केन सह सुखमासे। किमद्यापि मे जीवितेन कादम्बर्यापि च[2]। वैशम्पायनस्य कृते क्व[3] कं पृच्छामि। कमभ्यर्थये। को मे ददातु पुनस्तादृशं मित्ररत्नम्। कथं मया तातस्य शुकनासस्य चात्मा वैशम्पायनेन विना दर्शयितव्यः। किमभिधाय च तनयशोकविह्वलाम्बा[4] मनोरमा वा संस्थापयितव्या। किं भूमिः काचिदसिद्धा तां साधयितुं पश्चात्स्थितः। उत नरपतिः कश्चिदसंघटितस्तत्संघटनाय पश्चात्परिलम्बितः। आहोस्वित्काचि[6]द्विद्याऽगृहीता[7] तां ग्रहीतुं मयोत्संकलितः' इत्येतानि चान्यानि चान्तरात्मना चिरमधोमुख एव विकल्प्य हृदयास्फुटनाद्विलक्ष्य[8]मिवापराधिनमिव महापातकिनमिवात्मानं मन्यमानो वदनमदर्शयञ्शनैः[9] शनैः कृच्छ्रादिव तानप्राक्षीत्—'मय्यागते किं कश्चिदेवंविधोऽन्तरे सङ्ग्राम उत्पन्नः, व्याधिर्वा[10] कश्चिदाशुकार्यसाध्यरूपः समुपजातः, येनैतदतर्कितमेव महावज्रपतनमुपनतम्' इति।

ते त्वेवं पृष्टाः सर्वे सममेव करद्वया[11]पिहितश्रुतयो व्यज्ञपयन्—'देव, शान्तं पापम्।

---

मनोहरः संवृत्तो निष्पन्नः। वसन्त्यपि लोकसमाकुलापि पृथिवी वसुधा शून्यीभूतोद्वसीभूता। सचक्षुषोऽपि सनेत्रस्यापि ककुभो दिशोऽन्धा गतचक्षुषो जाताः। सुष्ठु निष्पन्नमपि संजातमपि जन्म हतं व्यापादितम्। निरर्थकं जातमित्यर्थः। सुष्ठु यथा स्यात्तथा रक्षितमपि गोपितमपि जीवितस्य फलं साध्यं मुषितं लुण्ठितम्। कं परं पश्यामि कमन्यमवलोकयामि। कमालपामि कं व्याहरामि। कस्मै विस्रम्भमाशयं कथयामि निवेदयामि। केन सह सुखं यथा स्यात्तथा समुपविशामि। अहमिति शेषः। किमद्याप्यद्यप्रभृति मे मम जीवितेन प्राणितेन कादम्बर्यापि च। वैशम्पायनस्य कृतेऽहं क्व कं पृच्छामि कं प्रश्नं करोमि। कं पुरुषमभ्यर्थये प्रार्थये। कः पुरुषः पुनस्तादृशं मित्ररत्नं सुहृन्मणिं मे ददातु प्रयच्छतु। मया चन्द्रापीडेन तातस्य पितुः शुकनासस्य मन्त्रिमुख्यस्य च वैशम्पायनेन विना कथमात्मा दर्शयितव्यो दर्शनीयः। तनयशोकविह्वला सुतशोचनविधुराम्बा माता मनोरमा वा मन्त्रिपत्नी वा किमभिधाय किं कथयित्वा संस्थापयितव्या संस्थाप्या। किं भूमिः काचिदनिर्दिष्टनाम्न्यसिद्धाऽसाधिता तां साधयितुमात्मसात्कर्तुं पश्चात्पृष्ठे स्थितः। उतेति पक्षान्तरे। कश्चिन्नरपतिर्भूधनोऽसंघटितोऽमिलितस्तस्य संघटनाय मेलापककृते पश्चात्पृष्ठे परिलम्बितो विलम्बितः। आहोस्विदिति वितर्के। काचिद्विद्या मन्त्रतन्त्रादिरूपाऽगृहीता न स्वीकृता तां ग्रहीतुं स्वीकर्तुं मया सहोत्संकलितो दूरीभूतः। इत्येतानि पूर्वोक्तान्यन्यानि चान्तरा मध्य आत्मना मनसा चिरं बहुकालमधोमुख एव नीचैर्मुख एव विकल्प्य विकल्पनां कृत्वा हृदयस्य वक्षसोऽस्फुटनादद्वैधीभावाद्विलक्ष्यमिवावीक्षापन्नमिवापराधिनमिव सागसमिव महापातकिनमिव महापापकारिणमिवात्मानं स्वं मन्यमानो ज्ञायमानो वदनं मुखमदर्शयन्नप्रकाशयञ्शनैः शनैर्मन्दं मन्दं कृच्छ्रादिव कष्टादिव ताञ्जनानप्राक्षीदपृच्छत्। मय्यागतेऽत्रायाते कश्चिदेवंविधोऽन्तरे विचाले सङ्ग्रामः समितिः किमुत्पन्नः संजातः। अथवा कश्चिदनिर्दिष्टनामा स व्याधिरामय आशु शीघ्रमर्यादन्तं करोतीत्येवंशीलः स तथा भेषजादिभिः साधयितुं निवारयितुमशक्यमसाध्यं रूपं स्वरूपं यस्य स तथा समुपजातः समुत्पन्नः। येन कारणेनैतदतर्कितमेवाविचारितमेव महावज्रपतनं पविपतनमुपनतं प्राप्तमिति।

ते तु जना एवममुना प्रकारेण पृष्टाः कृतप्रश्नाः सममेव युगपत्सर्वे करद्वयेन हस्तद्वयेनापिहिता आच्छादिताः श्रुतयः श्रोत्राणि यैरेवंभूता व्यज्ञपयन्विज्ञप्तिं चक्रुः। **देवेति**। हे देव, पापममङ्गलं शान्तं विलयं गतम्।

---

पाठा०—१ कं पश्यामि. २ वा. ३ क्व गच्छामि कम्. ४ वा. ५ मनोरमाम्बा. ६ कच्चिद्विद्या काचिदगृहीता. ७ अगृहीता. ८ विलक्षं. ९ शनैः. १० महाव्याधिः. ११ अपिहित.

द्देवशरीरमिव साग्रं[1] वर्षशतं ध्रियते वैशम्पायनः ।' इत्येतदाकर्ण्य चो[2]ज्जीवित इवानन्दबाष्पनिर्भरः संभाव्य तान्सर्वानेव कण्ठग्रहेणावादीत्—'जीवतो वैशम्पायनस्यान्यत्र क्षणमप्यवस्थानमसंभावयता मयैवं पृष्टा भवन्तस्तज्जीवतीत्येतानि तु तावत्कर्णे कृतान्यक्षराणि । अधुना किं वृत्तमस्य येनासौ नागतः, क्व वा स्थितः, केन वा प्र[3]सङ्गेन, कथं वा तमेकाकिनमुत्सृज्यायाता भवन्तः, कथं वा भवद्भिर्बलादपि नानीतोऽसावित्येतदवगन्तुमुत्ताम्यति मे हृदयम्' इति ।

ते[4] चैवं पृष्टा व्यज्ञपयन्—"देव, श्रूयतां यथावृत्तम् । पृष्ठतः स्कन्धावारमनुपालयद्भिः शनैः शनैर्वैशम्पायनेन सह भवद्भिरागन्तव्यमित्यादिश्य ग[5]तवति देवे त[6]स्मिन्दिवसे सुगृहीतत्वाद्घासेन्धनादिकस्योपकरणजातस्य न दत्तमेव प्रयाणं स्कन्धावारेण । अन्यस्मिन्नहन्याहतायां प्रयाणभेर्यां सज्जीक्रियमाणे साधने प्रातरेवास्मान्वैशम्पायनोऽभ्यधात्—'अतिपुण्यं ह्यच्छोदाख्यं सरः पुराणे श्रूयते । तदस्मिन्स्नात्वा प्रणम्य चास्यैव तीरभाजि सिद्धायतने भगवन्तं भवानीप्रभुं महेश्वरं शशाङ्कशकलशेखरं व्रजामः । दिव्यजनसेविता केन कदा पुनः

---

वैशम्पायनः साग्रं वर्षशतं पञ्चविंशत्यधिकहायनशतं ध्रियते । आयुः कर्मणेति शेषः । किमिव । देवशरीरमिव । इत्येतत्पूर्वोक्तमाकर्ण्य श्रुत्वा चोज्जीवित इवोत्प्राणित इवानन्दस्य हर्षस्य बाष्पो नेत्राम्बु तस्य निर्भरो यस्मिन्नेवंभूतस्तान्सर्वानेव कण्ठग्रहेण गलालिङ्गितेन संभाव्य संतुष्टान्कृत्वावादीदब्रवीत् । किमवादीदित्याशयेनाह—**जीवत इति** । जीवतः प्राणान्धरतो वैशम्पायनस्यान्यत्रान्यस्मिन्प्रदेशे क्षणमप्यवस्थानमसंभावयताऽसंभावनां कुर्वता मया चन्द्रापीडेनैवं पूर्वोक्तप्रकारेण भवन्तो जनाः पृष्टाः प्रश्निताास्तज्जीवतीत्येतानि त्वक्षराणि वर्णास्तावदादौ कर्णे श्रोत्रे कृतानि । अधुना सांप्रतमस्य वैशम्पायनस्य किं वृत्तं जातम्, येन हेतुनासौ वैशम्पायनो नागतो नायातः । **क्व वेति** । कुत्र वा स्थितोऽवस्थानं कृतवान्, केन वा प्रसङ्गेन संबन्धेन स्थितः, कथं वा केन प्रकारेण तं वैशम्पायनमेकाकिनमुत्सृज्य त्यक्त्वा भवन्त आयाता आगताः । कथं वा भवद्भिर्युष्माभिर्बलादपि हठात्कारेणासौ मन्त्रिसुतो नानीतः । इत्येतदवगन्तुं ज्ञातुं मे मम हृदयमुत्ताम्यति । उत्पीडयतीत्यर्थः ।

ते चैवममुना प्रकारेण पृष्टाः प्रश्नविषयीकृताः सन्त इति व्यज्ञपयन्निति विज्ञप्तिं चक्रुः । एतद्दर्शयन्नाह—हे देव हे स्वामिन्, यथावृत्तं यथाभूतं श्रूयतामाकर्ण्यताम् । पृष्ठतः पश्चाद्भागे स्कन्धावारं सैन्यं शनैः शनैर्मन्दं मन्दमनुपालयद्भिरनुरक्षद्भिर्वैशम्पायनेन सह भवद्भिर्युष्माभिरागन्तव्यमित्यादिश्य कथयित्वा देवे चन्द्रापीडे गतवति चलिते सति तस्मिन्दिवसे देवप्रयाणकदिने घासो यवसमिन्धनमिध्म । आदिशब्दाद्धस्त्यश्वादीनां भक्ष्यम् । एतत्प्रभृत्युपकरणजातस्य सामग्रीसमूहस्य सुगृहीतत्वात्सुलभत्वात्स्कन्धावारेण न दत्तमेव न कृतमेव प्रयाणं चलनम् । अन्यस्मिन्नहनि तद्व्यतिरिक्तदिने प्रयाणभेर्यां गमनदुन्दुभावाहतायां ताडितायामश्वादिके साधने सज्जीक्रियमाणे सति आरोहणार्थमारोप्यमाणपर्याणादिके सति, प्रातरेव प्रत्यूष एवास्मान्वैशम्पायन इत्यभ्यधादित्यूचिवान् । इतिद्योत्यमाह—**अतीति** । अतिपुण्यमतिपवित्रं ह्यच्छोदाख्यमच्छोदाभिधानं सरस्तटाकं पुराणे श्रूयत आकर्ण्यते । तस्माद्धेतोरस्मिन्सरसि स्नात्वा स्नानं कृत्वास्यैव सरसस्तीरभाजि तटभाजि सिद्धायतने चैत्ये शशाङ्कस्य चन्द्रस्य शकलं खण्डं तदेव शिखरो मुकुटो यस्यैवंभूतं भगवन्तं माहात्म्यवन्तं भवान्याः पार्वत्याः प्रभुं स्वामिनम् । क्वचित् 'भवाभवप्रभुम्' इति पाठोऽपि दृश्यते । तेन तत्र नित्यानित्यस्वामिनमित्यर्थः । महेश्वरं

---

पाठा०—१ साग्र. २ तु. ३ प्रसङ्गेन स्थितः. ४ ते पृष्टाः. ५ आगतवति. ६ तस्मिंस्तु दिवसे. ७ वास. ८ तदच्छोदसरः. ९ वा.

स्वप्नेऽपि भूमिरियमालोकिता' इत्यभिधाय चरणाभ्यामेवाच्छोदसरस्तीरमयासीत्। तत्र चातिरम्यतयैव सर्वतो दत्तदृष्टिः संचरन्, अमरकामिनीश्रोत्रशिखरारोहणप्रणयोचितैस्तरङ्गानिलाहतिविलोलवृत्तिभिः किसलयैरविरलकुसुममकरन्दलोभपुञ्जितानां च मत्तमधुलिहां मञ्जुना सिञ्जितरवेण दूरादाह्वयन्तमिव, मरकतमणिश्यामया प्रभयानुलिम्पन्तमिव समं दशदिग्भागान्, अदत्तदिवसकरकिरणप्रवेशतया दिवाप्यन्तर्निशीथिनीमिव[1] बिभ्राणम्, चिरपरिचितैरपि मेघोद्गमाशङ्कया मुहुर्मुहुरुन्मुक्तमधुरकेकारवैर्वनशिखण्डिभिरुत्कंधरैरवलोक्यमानम्, पदमिव जलदकालस्य, प्रतिपक्षमिव सर्वसंतापानाम्, निजावासमिव जडिम्नः, निर्गममार्गमिव सुरभिमासस्य, आश्रयमिव मकरध्वजस्य, उत्कण्ठाविनोदस्थानमिव रतेः, आस्पदमिव सर्वरमणीयानाम्, अनवरतवलित[2]सुरभिशीतलाच्छोदसरस्तरङ्गमारुताभिवीजिताभ्यन्तरशिलातलमन्यतमं तटलतामण्डपमद्राक्षीत्।

दृष्ट्वा च तमतिचिरान्तरितदर्शनं भ्रातरमिव तनयमिव सुहृदमिव चानन्यदृष्टिर्विस्मृत-

---

रुद्रं प्रणम्य नमस्कृत्य च व्रजामो गच्छामः। दिव्यजनसेविता केनास्मत्पक्षपातिना स्वप्नेऽपि स्वापदशायामपि कदा कस्मिन्काले पुनः 'पुनर्विशेषयोः' इयं भूमिरियं वसुधाऽऽलोकितावलोकितेत्यभिधायेत्युक्त्वा चरणाभ्यामेव पादचारेणेत्यर्थः। अच्छोदसरस्तीरमयासीदाययौ। तत्र च तस्मिन्नच्छोदसरस्यतिरम्यतयातिमनोहरतयैव सर्वतो दत्ता न्यस्ता दृष्टिर्दृग्येनैवंभूतो वैशम्पायनः संचरन्गच्छन्नन्यतमं यत्तटं तीरं तत्र लतामण्डपमद्राक्षीद्व्यलोकयदिति दूरेणान्वयः। इतो लतामण्डपं विशेषयन्नाह—**अमरेति**। अमराणां देवानां कामिन्यः स्त्रियस्तासां श्रोत्रशिखराणि कर्णाग्राणि तेष्वारोहणे यः प्रणयः स्नेहस्तत्रोचितैर्योग्यैस्तरंगाणां कल्लोलानामनिलो वायुस्तस्याहत्या आहननेन विलोला चञ्चला वृत्तिर्येषां तैरेवंभूतैः किसलयैः पल्लवैरविरलो निविडो यः कुसुमानां पुष्पाणां मकरन्दो मरन्दस्तस्य लोभस्तृष्णा तेन पुञ्जितानामेकीभूतानां च मत्तमधुलिहां क्षीबभ्रमराणां मञ्जुना रुचिरेण सिञ्जितं ध्वनितं तस्य रवेण शब्देन करणभूतेन दूरादाह्वयन्तमिवाहूतिं कुर्वन्तमिव। **मरकतेति**। मरकतमणिरश्मगर्भरत्नं तद्वच्छयामया श्यामलया प्रभया कान्त्या सममेकपदे दशदिग्भागान्दशककुभां प्रदेशाननुलिम्प(य)न्तमिवानुलिम्पनं कुर्वन्तमिव। न दत्तो दिवसकरस्य सूर्यस्य किरणप्रवेशः करप्रवेशो येन तस्य भावस्तत्ता तया दिवापि दिवसेऽप्यन्तर्मध्ये निशीथिनीमिव रात्रिमिव बिभ्राणं धारयन्तम्। 'निशा निशीथिनी रात्रिः' इति हैमः। **चिरपरिचितैरिति**। चिरपरिचितैरपि चिरपरिशीलितैरपि मेघस्योद्गम उदयस्तस्याशङ्कारेका तया मुहुर्मुहुर्वारंवारमुन्मुक्तो मधुरो मिष्टः केकारवो यैरेवंभूतैर्वनशिखण्डिभिररण्यमयूरैरुत्कंधरैरुद्ग्रीवैरवलोक्यमानं निरीक्ष्यमाणम्, जलदकालस्य प्रावृट्समयस्य पदमिव स्थानमिव, सर्वसंतापानां समग्रतापानां प्रतिपक्षमिव शत्रुमिव, जडिम्नः शैत्यस्य निजावासमिव स्वाश्रयमिव, सुरभिमासस्य वसन्तमासस्य निर्गममार्गमिव निर्गमनपन्थानमिव, मकरध्वजस्य कंदर्पस्याश्रयमिव निवासमिव, रतेः कंदर्पस्त्रिय उत्कण्ठाविनोदस्थानमिवोत्कलिकाविलासपदमिव, सर्वरमणीयानां समग्रमनोहराणामास्पदमिव गृहमिव, अनवरतं निरन्तरं वलिताः पश्चादायाता ये सुरभयः सुगन्धाः शीतलाः शिशिरा अच्छोदसरसस्तरंगाः कल्लोलास्तेषां मारुतेन वायुनाभिवीजितमभ्यन्तरशिलातलं यस्य स तमन्यतमं तटलतामण्डपमद्राक्षीदित्यन्वयस्तु प्रागेवोक्तः।

**दृष्ट्वा चेति**। अतिचिरकालेनान्तरितं व्यवहितं दर्शनमवलोकनं यस्यैवंभूतं तं लतामण्डपं दृष्ट्वा विलोक्य च भ्रातरमिव सहोदरमिव, तनयमिव सुतमिव, सुहृदमिव मित्रमिव, न विद्यतेऽन्यस्मिन्दृष्टिर्यस्यैवंभूतो विस्मृतो

---

पाठा०—१ निशीथम्. २ चलित.

निमेषेण चक्षुषा विलोकयन्, स्तम्भित इव, मूर्च्छयोन्मुच्यमान इवेन्द्रियैः, झगित्युन्मुक्ताङ्गः, समुपविश्य भूमौ किमप्यन्तरात्मना स्मरन्निव, अनुध्यायन्निव निर्विकारवदनो गलितलोचनपयोधारासंतानस्तूष्णीमधोमुखस्तस्थौ । तथावस्थितं तमवलोक्यास्माकमुदपादि चेतसि चिन्ता—येन केनचिदपह्रियन्त एव रसिकहृदयाः परिणामधीरमतयोऽपि, किं पुनः कुतूहलास्पदे प्रथमे वयसि वर्तमानाः । तस्मान्नियतमियमस्येमामतिमनोहरां भूमिमालोक्य भावयतो हृदयविकृतिरीदृशी जातेति । नचिराच्च तमेवमवदाम वयम्—'दृष्टा दर्शनीयानामवधिरेषा । तदुत्तिष्ठ । संप्रति निर्वर्तयामः स्नानविधिम् । अतिमहती वेला । सज्जीभूतं साधनम् । प्रयाणाभिमुखः सकलः स्कन्धावारस्त्वां प्रतिपालयन्नास्ते । किमद्यापि विलम्बितेन' इति । स त्वेवमुक्तोऽप्यस्माभिरश्रुतास्मदीयालाप इव, जड इव, मूक इव, अशिक्षित

---

विस्मरणं प्राप्तो निमेषो निमीलनं यस्यैवंभूतेन चक्षुषा विलोकयन्पश्यन्स्तम्भित इव स्तब्धतां नीत इव, मूर्च्छया मोहेनेन्द्रियैः करणैरुन्मुच्यमान इवोत्प्राबल्येन त्यज्यमान इव, झगिति शीघ्रमुन्मुक्तान्यङ्गानि येन सः । अतिशैथिल्यादिति भावः । भूमौ पृथिव्यां समुपविश्योपवेशनं कृत्वान्तरात्मना मनसा किमप्यनिर्वचनीयं स्मरन्निव स्मृतिगोचरीकुर्वन्निव, अनुध्यायन्निवानुचिन्तयन्निव, निर्विकारं निर्विकृतिकं वदनमाननं यस्य सः । गलिता स्रस्ता लोचनाभ्यां या पयोधाराश्रुधारा तस्याः संतानं यस्मिन्नेवंभूतस्तूष्णीं मौनेनाधोमुखो नीचैर्मुखस्तस्थौ स्थितवान् । तथावस्थितं तदवस्थाप्राप्तं च तं वैशम्पायनमवलोक्य निरीक्ष्यास्माकं चेतसि चित्ते चिन्तार्तिरुदपाद्युत्पन्ना । परिणामेऽवसाने धीरा स्थिरा मतिर्बुद्धिर्येषां ते तथा एवंविधा अपि रसिकहृदयाः कामिजना येनकेनचित्प्रकारेणापह्रियन्त एव वशीक्रियन्त एव । किं पुनः कुतूहलास्पदे कौतुकस्थाने प्रथम आद्ये वयस्यवस्थायां वर्तमानाः स्थिताः । जना इति शेषः । तस्मादिति हेत्वर्थे । नियतं निश्चितमिमामतिमनोहरामतिरमणीयां भूमिं वसुधामालोक्य निरीक्ष्यास्य वैशम्पायनस्येति भावयतश्चिन्तयत ईदृशी हृदयविकृतिश्चित्तविप्लुतिर्जातोत्पन्ना । नचिराच्चाचिरकालेन तं वैशम्पायनमेवं वयमवदाम जल्पाम । दर्शनीयानां विलोकनीयानामेषा भूरवधिः सीमा दृष्टावलोकिता । तदिति हेत्वर्थे । उत्तिष्ठोत्थानं कुरु । संप्रतीदानीं स्नानविधिमाप्लवनविधिं निर्वर्तयामो निष्पादयामः । अतिमहत्यतिगरीयसी वेला वारा जातेति शेषः । साधनं सैन्यं सज्जीभूतं सज्जं जातम् । सकलः समग्रः स्कन्धावारः सैन्यलोकः प्रयाणाभिमुखो गमनाभिमुखस्त्वां वैशम्पायनं प्रतिपालयन्निरीक्षन्नास्ते तिष्ठति । अद्यापि सांप्रतमपि किं विलम्बितेन । किं कालक्षेपणेनेत्यर्थः । स तु वैशम्पायन एवं पूर्वोक्तप्रकारेणास्माभिरुक्तोऽपि कथितोऽश्रुतोऽनाकर्णितोऽस्मदीय आलापो येन स इव, जड इवाचेतन इव, मूक इव एड एव, अशिक्षित इवापाठित एव, (न) वक्तुं

---

टिप्प०—1 अत्र पाठो विच्छिन्नः । अत एव विच्छिन्नस्य मध्यभागस्य अन्तमात्रावशेषेण 'मूर्च्छया' इत्यनेन सह 'उन्मुच्यमान इव' इत्यस्य संबन्धो बलादेव टीकाकारेणाऽऽकृष्टः । 'लिखित इव, सुचिरमूर्ध्व एव स्थित्वा अपारयन्नङ्गानि धारयितुम् (आवेशवशादङ्गानि धारयितुमशक्नुवन्), आक्रम्यमाण इव मूर्च्छया' इति मध्ये पाठः । एतदग्रे 'उन्मुच्यमान इवेन्द्रियैः' इति पाठः । टीकाकारमहाशयेन तु ध्वंसावशेषेण 'मूर्च्छया' इति पदेन सह बलात्कारेण 'उन्मुच्यमानः' इत्यस्य संबन्धः कृतः । 2 'जाता' इति मूल एव पाठः । न परिशेषस्यावश्यकता ।

---

पाठा०—१ इव लिखित इव सुचिरमूर्ध्व एव स्थित्वापारयन्निवाङ्गानि धारयितुमाक्रम्यमाण इव मूर्च्छया; इवोत्कीर्ण इव पुस्तमय इव सुचिरम्. २ झगिति. ३ हृदयो. ४ अवस्थितं च. ५ अचिरात्. ६ वेला जाता. ७ असदालापः.

इव, वक्तुं न किंचिदपि प्रत्युत्तरमदात्। तमेव केवलमनिमेषपक्ष्मणा निश्चलस्तब्धतारकेण संतताश्रुस्रोतसा लिखितेनेव चक्षुषा लतामण्डपमालोकितवान्।

पुनःपुनश्चास्माभिरागमनायानुरुध्यमानस्तद्ग्रथितदृष्टिरेवास्मान्परिच्छेदनिष्ठुरमाह स—'मया तु न यातव्यमस्मात्प्रदेशात्। गच्छन्तु भवन्तः स्कन्धावारमादाय। न युक्तं भवतां चन्द्रापीडभुजबलपरिरक्षितं गते तस्मिन्महासाधनं गृहीत्वास्यां भूमौ क्षणमप्यवस्थानं कर्तुम्' इत्युक्तवन्तं च तमकस्मान्नाम किंचिदस्य दैवादेव वैराग्यकारणमुत्पन्नमित्याशङ्क्य सानुनयमागमनाय पुनःपुनः प्रतिबोध्य तादृशासंबद्धानुष्ठानेन जातपीडा निष्ठुरमप्यभिहितवन्तो वयम्—'एवं न युक्तमस्माकं स्थातुम्। भवतः पुनर्देवस्य तारापीडस्यानन्तरादार्यशुकनासाल्लब्धजन्मनो देव्या विलासवत्याङ्कलालितस्य देवेन चन्द्रापीडेन सहैकत्र संवृद्धस्य तथा विद्यागृहे महता यत्नेनैव शिक्षितस्य युक्तमिदम्?, यज्ज्येष्ठे भ्रातरि सुहृदि वत्सले भर्तरि जगन्नाथे च गुणवति च भवति सर्वमर्पयित्वा गते तत्परित्यागेनात्रावस्थानम्। कस्यापरस्येदृशो युक्तायुक्तपरिच्छेदः? तिष्ठतु तावदस्माकं तवोपरि स्नेहो भक्तिर्वा। अस्मिंस्तु शून्या-

---

जल्पितुं किमपि प्रत्युत्तरं प्रतिवचोऽदाद्दौ। तमेव लतामण्डपमेव केवलमेकमनिमेषं निमीलनरहितं पक्ष्म यस्मिंस्तत्तेन, निश्चला स्थिराऽत एव स्तब्धा तारका कनीनिका यस्मिंस्तत्तेन, संततं निरन्तरमश्रुस्रोतो नेत्राम्बुप्रवाहो यस्मिंस्तत्तेन, लिखितेनेव चित्रितेनेव चक्षुषा नेत्रेण लतामण्डपमालोकितवान्निरीक्षितवान्।

पुनः पुनश्चास्माभिरागमनायाऽत्रानयनकृतेऽनुरुध्यमानोऽनुरोधं क्रियमाणः। तस्मिंल्लतामण्डपे ग्रथिता लग्ना दृष्टिर्यस्यैवंभूत एवास्मान्परिच्छेदनिष्ठुरं निश्चयपरुषमाह स कथयामास। मया त्वस्मात्प्रदेशान्न यातव्यं न गन्तव्यम्। भवन्तो यूयं स्कन्धावारं सैन्यमादाय गृहीत्वा गच्छन्तु व्रजन्तु। तस्मिंश्चन्द्रापीडे गते सति चन्द्रापीडस्य राज्ञो भुजबलेन बाहुवीर्येण परिरक्षितं महासाधनं महासैन्यं गृहीत्वादायास्यां भूमौ क्षणमप्यवस्थानं कर्तुं भवतां युष्माकं न युक्तं न न्याय्यम्। इति पूर्वोक्तप्रकारेणोक्तवन्तं कथितवन्तं च तं वैशम्पायनम्। नामेति कोमलामन्त्रणे। अकस्मान्निष्कारणतोऽस्य वैशम्पायनस्य दैवादेव विधेरेव वैराग्यकारणं विरक्ततानिदानं किंचिदुत्पन्नं संजातम्। इत्याशङ्क्येत्यारेक्य सानुनयं सविनयं पुनःपुनरागमनायाऽत्रानयनकृते प्रतिबोध्य प्रतिबोधं दत्त्वा तादृशं तथाविधं यदसंबद्धानुष्ठानमनुचिताचरणं तेन जातपीडा उत्पन्नबाधा वयं निष्ठुरमपि परुषमप्यभिहितवन्तः कथितवन्तः। एवमस्माकं स्थातुं न युक्तं न युक्तिमत्। तारापीडस्य राज्ञोऽनन्तरादव्यवहितात्। तत्सदृशादित्यर्थः। आर्यशुकनासाल्लब्धं प्राप्तं जन्मोत्पत्तिर्येन स तस्य देव्या विलासवत्या अङ्कः क्रोडस्तेन लालितस्य पालितस्य, देवेन चन्द्रापीडेन सहैकत्रैकस्मिन्स्थले संवृद्धस्य वृद्धिं प्राप्तस्य, तथा विद्यागृहे विद्याभ्यसनसद्मनि महता यत्नेनैव गरीयसा प्रयासेनैव शिक्षितस्य शिक्षां ग्राहितस्य भवतस्तव न्याय्यमिदं युक्तम्[1]? यद्यस्मात्कारणाज्ज्येष्ठे वृद्धे भ्रातरि सहोदरे सुहृदि मित्रे वत्सले हितकारके भर्तरि पोषके जगन्नाथे विश्वनायके गुणवति च भवति वैशम्पायने सर्वं समग्रमर्पयित्वा वितीर्य गते सति तत्परित्यागेन तद्राहित्येनात्राच्छोदसरस्यवस्थानम्, कस्यापरस्य त्वद्भिन्नस्येदृशो युक्तायुक्तयोर्न्याय्यान्याय्ययोः परिच्छेदो (निर्णीयते)। अस्माकं तवोपरि स्नेहः प्रीतिर्भक्तिर्वा आराध्यत्वेन ज्ञानं तावत्तिष्ठत्वास्ताम्। अस्मिंस्तु शून्यारण्ये जनरहिताटव्यामेकाकिनमसहायं भवन्तमु-

---

**टिप्प०—1** काकुः। अस्माकं तु अत्रावस्थानं न युक्तम्, भवतस्तु इदम् (अवस्थानम्) युक्तम्? अपि तु न युक्तमित्यर्थः।

---

**पाठ०—१** अनुबुध्यमानः; अनुबध्यमानः. २ तम्.

रण्ये भवन्तमेकाकिनमुत्सृज्य गताः सन्तो देवेन चन्द्रशीतलप्रकृतिना चन्द्रापीडेनैव किं वक्तव्या वयम्? किमन्यो देवश्चन्द्रापीडः, अन्यो वा भवान्? तदुन्मुच्यतामयं संमोहः। गमनाय धीराधीयताम्'।

इत्यभिहितोऽस्माभिरीषदिव विलक्षहासेन वचनेनास्मानवादीत्—किमहमेतावदपि न वेद्मि, यद्गमनाय मां भवन्तः प्रबोधयन्ति। अपि च चन्द्रापीडेन विना क्षणमप्यहमन्यत्र न पारयामि स्थातुम्। एषैव मे गरीयसी परिबोधना। तथापि किं करोमि। अनेनैव क्षणेन सर्वत्र विगलितं मे प्रभुत्वम्। तथाहि—स्मरन्निव किमपि मनो नान्यत्र प्रवर्तते, पश्यन्तीव किमपि न दृष्टिरन्यतो वलति, आसक्तमिव क्वापि हृदयं किमपि न जानाति, निगडिताविव पदमपि दातुं न चरणावुत्सहेते। कीलितेव चास्मिन्नेव स्थाने तनुः। तदात्मना त्वहमसमर्थो यातुम्। अथ बलाद्भवन्तो मां निनीषवः, तत्रापि चलितस्यास्मात्प्रदेशादात्मनो जीवितधारणं न संभावयामि। अत्र तु पुनस्तिष्ठतो यदेतदन्तर्हृदये किमप्यनवसीयमानं विपरिवर्तते मे, येनैव विधृतोऽस्मि, तेनैवावश्यं धार्यन्ते प्राणा इति चेतसि मे। तदलं निर्बन्धेन। गच्छन्तु भवन्तः। भवतु यावज्जीवमातृप्तेश्चन्द्रापीडदर्शनसुखम्। अल्पपुण्यस्य तु तन्मे

---

त्सृज्य त्यक्त्वा गताः सन्तो वयं चन्द्रवच्छीतलप्रकृतिना शिशिरस्वभावेन देवेन चन्द्रापीडेनैव किं वक्तव्याः किं कथनीयाः? किमन्यस्त्वदितरो देवश्चन्द्रापीडोऽन्यो वा चन्द्रापीडाद्भिन्नो भवांस्त्वम्? तदिति हेत्वर्थे। अयं संमोहोऽज्ञानमुन्मुच्यतां त्यज्यताम्। गमनाय धीर्बुद्धिराधीयतां स्वीक्रियताम्।

इति पूर्वोक्तप्रकारेणास्माभिरभिहितः कथित ईषदिव मनागिव विलक्षं वीक्षापन्नं हासो हास्यं यस्मिन्नेवंविधेन वचनेनास्मानवादीदब्रवीत्। अहमेतावदप्येतावन्मात्रमपि किं न वेद्मि न जानामि, यद्यस्मात्कारणाद्भवन्तो मां गमनाय प्रबोधयन्ति प्रबोधं कुर्वन्ति। अपि चेति प्रकारान्तरे। चन्द्रापीडेन विनान्यत्रान्यस्मिन्प्रदेशेऽहं क्षणमपि स्थातुं न पारयामि न समर्थो भवामि। एषैव पूर्वोक्तैव मे मम गरीयसी गरिष्ठा परिबोधना प्रतिबोधः। **तथापीति**। अहं किं करोमि किं कुर्वे। अनेनैव क्षणेन समयेन मे मम प्रभुत्वं सामर्थ्यं सर्वत्र सर्वस्मिन्स्थले विगलितं विनष्टम्। तदेव दर्शयन्नाह—**तथाहीति**। मनोऽन्यत्र किमपि न प्रवर्तते। अत उत्प्रेक्षते—स्मरन्निव स्मृतिं कुर्वन्निव। दृष्टिर्दृक्किमप्यन्यतो न वलति न पश्चान्निवर्तते। अत उत्प्रेक्षते—पश्यन्तीव विलोकयन्तीव। हृदयं चेतः क्वापि कुत्रापि किमपि न जानाति नावकलयति। अत उत्प्रेक्षते—आसक्तमिवालग्नमिव। चरणौ पादौ पदमपि दातुं नोत्सहेते नोत्साहं कुर्वाते। अत उत्प्रेक्षते—निगडिताविव नियन्त्रिताविव। अस्मिन्नवस्थाने मे तनुः शरीरं कीलितेव कील्या नियन्त्रितेव। तत्तस्मात्कारणादात्मना तु स्वेन त्वहं यातुमितो गन्तुमसमर्थोऽक्षमः। अथेति प्रकारान्तरे। भवन्तो यूयं बलाद्धठान्मां वैशम्पायनं निनीषवो नेतुमिच्छवः। तत्रापि तस्मिन्नपि प्रदेशेऽस्मात्प्रदेशाच्चलितस्य गन्तुं प्रवृत्तस्यात्मनः स्वस्य जीवितधारणं न संभावयामि। नावकलयामि। **अत्र त्विति**। अस्मिन्स्थले पुनस्तिष्ठतो मे यदेतदन्तर्हृदये चेतसि किमप्यनिर्दिष्टनामकमनवसीयमानमज्ञायमानं विपरिवर्तते विपरिभ्रमति। येनैवाहं विधृतोऽस्मि। इति मे मम चेतस्यस्ति। इति द्योत्यमाह—**तेनैवेति**। तेनैव हृदयान्तर्वर्तिना प्राणा असवोऽवश्यं निश्चयेन धार्यन्ते ध्रियन्ते। तत्तस्माद्धेतोर्निर्बन्धेनात्याग्रहेणालं कृतम्। भवन्तो यूयं गच्छन्तु व्रजन्तु, चन्द्रापीडस्य दर्शनमवलोकनं तदेव तस्माद्वा सुखं यावज्जीवं

---

**टिप्प०**—1 विलक्षहासेन सलज्जस्मितेन। 2 'स्मरदिव' इति पाठः। मनसो नपुंसकत्वात्।

**पाठा०**—१ वदनेन. २ इवान्यत्र. ३ अस्मिन्नेव. ४ अवसीयमानम्; अवस्थीयमानम्. ५ चेतसि. ६ अनुभवन्तु. ७ चन्द्रापीडमुखदर्शन.

प्राप्तमपि करतलादेवैवमाच्छिद्य दैवेन नीतम्' इत्यभिदधानश्च कौतुकात् 'किमेतत्, येनैवं भाषसे। नायासि देवस्य चन्द्रापीडस्य समीपम्' इत्यस्माभिः पुनःपुनः पृष्टोऽप्यभ्यधात्—'लज्जेऽहमेवं वक्तुम्। तथापि शपामि वयस्यचन्द्रापीडस्यैव जीवितेन, यदि किंचिदपि जानामि, यत्केन कारणेन न शक्नोम्यतो[1] गन्तुमिति। अपि च भवतामपि प्रत्यक्ष एवायं वृत्तान्तः। तद् व्रजन्तु भवन्तः' इत्युक्त्वा तूष्णीमभूत्[2]।

मुहूर्तादिव चोत्थाय तेषु तेषु रम्यतरेषु तरुतलेषु लतागहनेषु[3] सरस्तीरेषु तस्मिंश्च देवायतने किमपि नष्टमिवान्विष्यन्ननन्यदृष्टिर्बभ्राम। भ्रान्त्वा च चिरमिव खिन्नान्तरात्मा सनिर्वेदमूर्ध्वं[4] निःश्वस्य तस्मिँल्लतागहने[5] पुनरुपविश्य तस्थौ। वयमपि कृतवीरुत्संनिधानास्तत्प्रतिबोधनप्रत्याशया[6] स्थिता एव। गतवति समधिक इव यामद्वये शरीरस्थितिकरणायास्माभिरभ्यर्थितः प्रत्युवाच—'वयस्यचन्द्रापीडस्य खल्वमी स्वजीवितादपि वल्लभतराः प्राणाः। तद्यदि बलादपि परित्यज्य मां गच्छन्ति, तथाप्येषां संधारणे मया यत्नः[7] कार्यः। किं पुनरगच्छतामेव। चन्द्रापीडदर्शनेनैव चाहमर्थी। न मृत्युना। तदभ्यर्थनैवात्र निष्फला' इत्य-

यावत्प्राणधारणं तावदातृप्तेर्भवतु संपद्यताम्। अल्पपुण्यस्य तु मे मम तद्दर्शनसुखं प्राप्तमपि लब्धमपि करतलादेव हस्ततलादेव। एवं पूर्वोक्तन्यायेनाच्छिद्याक्षिप्य दैवेन विधिना नीतं गृहीतमित्यभिदधान इति ब्रुवाणश्च, कौतुकात्कुतूहलेनैतत्किं वर्तते, येन हेतुना त्वमेवं भाषस एवं वदसि। देवस्य चन्द्रापीडस्य समीपमभ्यर्णं नायासि नागच्छसि। इत्यस्माभिः पुनः पुनर्वारंवारं पृष्टोऽप्यनुयुक्तोऽप्यभ्यधादवोचत्। अहमेवं वक्तुं कथयितुं लज्जे त्रपामि। तथापि लज्जावत्त्वेऽपि वयस्यचन्द्रापीडस्यैव जीवितेन प्राणितेन शपामि शपथं करोमि, यद्यहं किमपि जानाम्यवकलयामि। केन कारणेनातो गन्तुं यन्न शक्नोमि न समर्थो भवामीति। अपि च युक्त्यन्तरे। भवतामपि युष्माकमप्ययं वृत्तान्त उदन्तः प्रत्यक्ष एवानुभवसिद्ध एव। तत्तस्माद्धेतोर्भवन्तो व्रजन्तु गच्छन्तु। इत्युक्त्वा तूष्णीमभूत्। मौनेन स्थितवानित्यर्थः।

मुहूर्तादिवोत्थाय चोत्थानं कृत्वा च तेषु तेषु रम्यतरेष्वतिमनोहरेषु तरुतलेषु वृक्षतलेषु लतागहनेषु वल्लीगह्वरेषु सरस्तीरेषु तटाकतटेषु तस्मिंश्च देवायतने चैत्ये किमपि किंचिदपि नष्टमिव गतमिवान्विष्यन्शोधयन् न अन्यस्मिन्दृष्टिर्यस्यैवंभूतो बभ्राम भ्रमणं चकार। चिरमिव चिरकालसदृशं भ्रान्त्वा च भ्रमणं कृत्वा खिन्नः खेदं प्राप्तोऽन्तरात्मा मनो यस्य स सनिर्वेदं सखावमाननमूर्ध्वमुपरिष्टान्निःश्वस्य निःश्वासं मुक्त्वा तस्मिन्पूर्वोक्ते लतागहने पुनर्द्वितीयवारमुपविश्योपवेशनं कृत्वा तस्थौ स्थितवान्। कृतं विहितं वीरुधां वल्लीनां संनिधानं सामीप्यं यैरेवंविधा वयमपि तस्य वैशम्पायनस्य प्रतिबोधनं तस्य प्रत्याशा वाञ्छा तया स्थिता एव। समधिके किंचिदधिके यामद्वये प्रहरद्वितये गतवति व्यतीते सति शरीरस्थितिकरणाय देहधारणाकृतेऽस्माभिरभ्यर्थितः प्रार्थितः प्रत्युवाच प्रत्यब्रवीत्। वयस्यस्य मित्रस्य चन्द्रापीडस्य खलु निश्चयेनामी प्राणाः स्वजीवितादपि स्वकीयजीवितव्यादपि वल्लभतराः। अतिशयेन प्रिया इत्यर्थः। तत्तस्माद्धेतोर्बलादपि हठादपि यदि मां परित्यज्य मुक्त्वा गच्छन्ति व्रजन्ति, तथाप्येषां प्राणानां संधारणे रक्षणे मया यत्नः प्रयासः कार्यः। अगच्छतामव्रजतामेवैषां किं पुनर्भण्यते। चन्द्रापीडदर्शनेनैव चन्द्रापीडावलोकनेनैवाहमर्थी प्रयोजनवान्। न मृत्युना न कालधर्मेण। तस्मा-

टिप्प०—1 'ऊर्ध्वं च निःश्वस्य' इत्येवोचितः पाठः।

पाठा०—१ शक्नोमि. २ अभवत्. ३ लतागृहेषु. ४ ऊर्ध्वं च. ५ अन्यतरस्मिन्; अन्यतमस्मिन्; ६ प्रतिबोधना. ७ प्रयत्नः.

भिधायोत्थाय स्नात्वा कन्दमूलफलैर्वनवासोचितां शरीरस्थितिमकरोत् । निर्वर्तित[1]शरीरस्थितौ तस्मिन्वयमपि कृतवन्तः । अनेनैव[2] च क्रमेण विस्मितान्तरात्मानो[3] रात्रौ च दिवा च किमेतदिति तद्वृत्तान्त[4]मेवानुभावयन्तो दिनत्रयं स्थित्वा निष्प्रत्याशास्तदागमनानयनयोः सुकृतशम्ब[5]लसंविधानं तत्परिकरं तत्र स्थापयित्वा चागता वयम् । यच्चाग्रतो न प्रेषितः संवाद[6]कस्तदेकं तावदन्तरा गच्छतो देवस्यासौ न परापतत्येवं[7] । अपरमपि चिरात्प्र[8]विष्टमात्रस्यैव देवस्य मा पुनरागमनक्लेशोऽभूत्' इति ।

चन्द्रापीडस्य तु तं स्वप्नेऽप्यनुत्प्रेक्षणीयं वैशम्पायनवृत्तान्तमाकर्ण्य युगपदुद्वेगविस्म[9]याभ्यामाक्रान्तहृदयस्योदपादि चेतसि[10]—'किं पुनरीदृशस्य सर्वपरित्यागकारिणो वनवासैकशरणस्य वैराग्यस्य कारणं भवेत् । स्वयं च न पश्यामि किंचित्स्खलितम् । तातप्रसादात्तु मामिव तमपि चरणतल[11]लुलितचूडामणयोऽर्चयन्त्येव राजानः । ममेव तस्यापि चेच्छा[12]धिकेषु सर्वोपभोगेषु न किंचिदपि हीयते । ममेव तस्याप्याज्ञा न विहन्यत एव । अहमिव[13] सोऽपि प्रसा[14]-

---

द्धेतोरत्र निष्फलैवाभ्यर्थना प्रार्थना । इत्यभिधायेत्युक्त्वोत्थायोत्थानं कृत्वा स्नात्वा च कन्दमूलफलैः कृत्वा वनवासस्योचितां योग्यां शरीरस्थितिं देहसाधनमकरोदकल्पयत् । निर्वर्तिता निष्पादिता शरीरस्थितिर्येनैवंविधे तस्मिन्वैशम्पायने सत्यपि वयमपि कृतवन्तो निष्पादितवन्तः । शरीरस्थितिमिति शेषः । अनेनैव क्रमेण परिपाट्या विस्मितो विस्मयं प्राप्तोऽन्तरात्मा येषामेवंभूता वयं रात्रौ निशायां च दिवा वासरे च किमेतदिति तद्वृत्तान्तं तदुदन्तमनुभावयन्तोऽनुचिन्तयन्तो दिनत्रयं स्थित्वावस्थानं कृत्वा तस्य वैशम्पायनस्यागमनमानयनं च तयोर्निष्प्रत्याशा निराशाः सन्तः सुकृतमेव[2] शम्बलं पाथेयं तस्य संविधानं करणं तस्य तदेव च परिकरं परिच्छदं तत्र तस्मिन्प्रदेशे स्थापयित्वा च वयमागता आयाताः । **यच्चेति** । यदग्रतः संवादकः[3] संदेशहारको न प्रेषितो न प्रहितः । तत्र नियामकद्वयम् । तदेव दर्शयन्नाह—**तदेकमिति** । एकं तावद्देवस्य गच्छतोऽन्तरा मध्येऽसौ न परापतत्येव न मिलितुं शक्नोत्येव । अपरमप्यन्यदपि नियामकम् । चिराद्बहुकालेन प्रविष्टमात्रस्यागतमात्रस्य देवस्य पुनर्द्वितीयवारमागमनक्लेशो माभूत् । माङ्योगे लुङ् ।

चन्द्रापीडस्य तु स्वप्नेऽपि स्वप्नदशायामप्यनुत्प्रेक्षणीयमवितर्कणीयं वैशम्पायनवृत्तान्तं मन्त्रिसुतोदन्तमाकर्ण्य श्रुत्वा युगपत्समकालमुद्वेगोऽरतिर्विस्मय आश्चर्यं च ताभ्यामाक्रान्तं व्याप्तं हृदयं चेतो यस्यैवंभूतस्य चन्द्रापीडस्येति चेतस्युदपाद्युत्पन्नम् । ईदृशस्यानिर्वचनीयस्य सर्ववस्तुनः परित्यागं करोतीत्येवंशीलस्य वनवास एवैकमद्वितीयं शरणं यस्यैवंभूतस्य वैराग्यस्य कारणं निदानं किं पुनर्भवेत् । स्वीयमात्मीयं च स्खलितं वैगुण्यं किंचिन्मनाङ् न पश्यामि नावलोकयामि । तातप्रसादात्पितुरनुग्रहात् तु मामिव चन्द्रापीडमिव तमपि वैशम्पायनमपि चरणतलेऽङ्घ्रितले लुलिता लुठिताश्चूडामणयः शिरोमणयो येषामेतादृशो राजानो भूभुजोऽर्चयन्त्येव पूजयन्त्येव । ममेव चन्द्रापीडस्येव तस्यापि वैशम्पायनस्यापीच्छाधिकेषु समीहाभ्यधिकेषु सर्वेषूपभोगेष्वङ्गनादिषु न किंचिदपि मनागपि हीयते । न्यूनं न भवतीत्यर्थः । हीयत इति कर्तरिप्रयोगः । ममेव तस्यापि वैशम्पायनस्याप्याज्ञा निदेशोऽन्यैर्न विहन्यत एव न खण्ड्यत एव । अहमिव चन्द्रापीड इव सोऽपि वैशम्पाय-

---

**टिप्प०**—1 अत्र अपिप्रयोगः प्रमादः । 2 विरूपीकृतवान् ग्रन्थमिह । 'सुकृतबलसंविधानम्' इति पाठः । सुष्ठुकृतं बलस्य ( सैन्यादेः ) संविधानं यस्मिन् तथोक्तं तत्परिकरम् ( वैशम्पायनस्य परिकरं परिजनादिकम् ) तत्रैव स्थापयित्वा इति तदर्थः । 3 'संवाद' इत्येव पाठः ।

---

**पाठा०**—१ निवर्तित. २ अनेन चैव. ३ आत्मनो. ४ तम्. ५ बल. ६ संदेशकः; संवादः. ७ एवम्. ८ प्रविष्टकायमात्रस्य. ९ सय. १० चिन्ता. ११ लुठित. १२ वाञ्छाधिकेषु. १३ अहमपि. १४ प्रसादात्करोति.

दान्करोत्येव । मत्त इव तस्मादपि बिभेत्येवापराधिजनः । मयीव तस्मिन्नपि सर्वाः संपदः । तमप्यालोक्य मामिवोत्पद्यते स्पृहा लोकस्य । [1]अथागच्छंस्तातेनाम्बया [2]वाऽऽर्यशुकनासेन मनोरमया च तनयस्नेहोचितेन सौहार्देन न संभावितः ? विनयाधिक्येच्छुना तातेन शुकनासेन वा किंचित्पीडाकरमभिहितम् ? ताडितो वा ? तत्रापि नैवासावेवं[3] स्नेहतः पिशुनस्वभावो वा, गुरुजनाभक्तो वा, गुणोपादानविमुखो वा, तरलचित्तो वा, यत्किंचनकारी यः कश्चिदिव क्षुद्रप्रकृतिर्[4]राढ्यपुत्रतागर्वितो दुःशिक्षितो दुर्विनीतो वा, पुत्रैकतादुर्ललितो वा, यो जन्मनः प्रभृति सर्वप्रकारोपकारिणो गुरुजनस्योपरि खेदमेवं कुर्यादनुबन्धाद्विरमेद्वा । प्रशमस्यापीदृशस्य नैष कालः । अद्याप्यसौ विद्वज्जनोचिते गार्हस्थ्य एव न निवेशितः, देवपितृमनुष्याणामानृण्यमेव नोपगतः, अगत्वा चानृण्यमृणत्रयेण बद्धः क गतः ? न तेन पुत्रपौत्रसंतत्या वंशः प्रतिष्ठां नीतः । नानन्तदक्षिणैर्महाक्रतुभिरिष्टम् । न सत्रकूपप्रपाप्रासादतटाकारामादिभिः [5]कीर्त-

---

नोऽपि प्रसादान्वस्त्रादिप्रदानरूपान्करोत्येव सृजत्येव । मत्त इव मदिव तस्मादपि वैशम्पायनादप्यपराधिजनो बिभेत्येव भीतिं प्राप्नोत्येव । मयीव मदिव तस्मिन्नपि वैशम्पायनेऽपि सर्वाः समग्राः संपदो विभूतयः । तमपि वैशम्पायनमप्यालोक्य निरीक्ष्य मामिव चन्द्रापीडमिव लोकस्य जनस्यापि स्पृहा वाञ्छोत्पद्यते जायते । आगच्छन्नसौ तातेनाम्बया वार्यशुकनासेन मनोरमया वा तनयः पुत्रस्तस्मिन्स्नेहः प्रीतिस्तस्योचितेन योग्येन सौहार्देन प्रीत्या न संभावितो नालोचितः ? विनयः प्रश्रयस्तस्याधिक्यमधिकता तदिच्छतीत्येवंशीलेन तातेन शुकनासेन वा किंचिन्मनाक्पीडाकरं पीडाजनकमभिहितं कथितम् । ताडितो वा प्रहतो वा । तत्रापि ताडनादिष्वप्यसौ वैशम्पायनो मद्विषये स्नेहतः[1] स्नेहान्नैव पिशुनस्वभावः खलप्रकृतिः । गुरुजनानां पित्रादीनां वाऽभक्तोऽनाराधकः । गुणानामुपादानं ग्रहणं तत्र विमुखः पराङ्मुखो वा । तरलं चित्तं यस्य स तथा चञ्चलहृदयो वा । यत्किंचन यत्तत्करोतीत्येवंशीलः स तथा यः कश्चिदिव क्षुद्रप्रकृतिस्तुच्छस्वभाव आढ्यपुत्रतया वा, गर्वितः स्मयं प्राप्तो दुःशिक्षितो दुरध्यापितो दुर्विनीतो वा प्रश्रयरहितः, पुत्रस्यैकतैक्यं तया दुर्ललितो दुश्चेष्टितो वा । यो जन्मनः प्रभृत्युत्पत्तिमारभ्य सर्वप्रकारेणोपकारिण उपकृतिविधायिनो गुरुजनस्य मातृप्रमृतिलोकस्योपर्येवं खेदं कुर्याद्विदध्यात् । अनुबन्धात्[2]संबन्धाद्वा विरमेन्निवर्तेत । ईदृशस्यैतादृशस्य प्रशमस्यापि नैष कालो नायं समयः । अत्र सर्वत्र वाशब्दो विकल्पार्थः । अद्याप्यद्य यावत्, स वैशम्पायनो विद्वज्जनोचिते पण्डितलोकयोग्ये गार्हस्थ्ये गृहस्थाश्रम एव न निवेशितो न स्थापितः । देवाश्च पितरश्च मनुष्याश्च तेषामानृण्यमनृणभावमेव नोपगतो न प्राप्तः । सुतोत्पादकत्वाभावादिति भावः । आनृण्यमगत्वाऽप्राप्य च ऋणत्रयेण पूर्वोक्तेन बद्धो नियन्त्रितः क गतः क प्राप्तः । तेन वैशम्पायनेन पुत्रपौत्रसंतत्या वंशोऽन्वयो न प्रतिष्ठां नीतो न प्रौढिमारोपितः । अनन्ता अपरिमिता दक्षिणा यज्ञसमाप्तेरनन्तरं दानं येष्वेवंविधैर्महाक्रतुभिर्महायज्ञैर्नेष्टं न यज्ञाः कृताः । **सत्रेति** । सत्राणि दानशालाः, कूपा अवटाः, प्रपाः पानीयशालाः, प्रासादा देवभूपानां सद्मानि, तटाकानि सरांसि आरामाः कृत्रिमवनानि, एतत्प्रभृतिभिः [3]कीर्तनैर्नामभिर्मेदिनी वसुधा

---

**टिप्प०**—1 'नैवासावेवं वञ्चन–पिशुनस्वभावो वा' इत्यपि पाठः । असौ ( वैशम्पायनः ) एवं वञ्चनः प्रतारकः पिशुनः खलः स्वभावो यस्य तथाभूतो नास्तीत्यन्वयः । 2 अनु पश्चाद् बन्धः आनुगत्यं तस्मात् । 3 'आपूर्तैः कीर्तनैः' इति पाठः । आसमन्तात् विश्वजनानां तृप्तिसाधनैः कर्मभिः, कीर्तनैः कीर्तनीयैः कार्यैः ।

---

पाठा०—१ अप्यागच्छन्. २ च. ३ एवमस्नेहलः; एव वञ्चना; एव मम स्नेहस्य. ४ राजपुत्रता. ५ अपूर्वैः कीर्तनैः.

नैरलंकृता मेदिनी । नाकल्पस्थायि दिशोयायि यशो विप्रकीर्णम् । न गुरवोऽनुवृत्त्या सुखं स्थापिताः । न स्निग्धबन्धूनामुपकृतम् । न प्रणयिनो निर्विशेषविभवतां नीताः । न साधवः परिवर्धिताः । नानुजीविनः संविभक्ताः । न[2] दृष्टाः श्रुता वाऽङ्गनाः । न जातेन जीवलोकसुखान्यनुभूतानि । न तेन पुरुषार्थसाधनानां धर्मार्थ[3]कामानामेकोऽपि हि प्राप्तः । किमेतत्तेन कृतम्?' इत्याक्षिप्तचेताश्चिन्तयं[4]श्चिरमिव तस्मिन्नेव तरुतले स्थित्वा शून्यहृदयोऽपि यथाक्रियमाणप्रसादसंमानसंभावनासंभावितं विस[5]सर्ज सकलमेव राजकम् । उत्थाय तत्क्षणकृतमुत्तम्भिततुङ्गतरतोरणाबद्धचन्दनमालमुभयपार्श्वे स्थापितोत्पल्लवमुखपूर्णहेमकलशम्, द्वारात्प्रभृति सिक्त[6]मृष्टभूविभागम्, अन्तर्बहिश्च प्रकीर्णसुरभिकुसुमप्रकरम्, इतस्ततः संचरता कर्मान्तिकलोकेन गृहीतविविधभृङ्गारम्, मणिचामरतालवृन्तरत्नपादुकाद्युपकरणपाणिभिर्वारवनिताभिश्चाकीर्णम्, वितानतलवर्तिना मदामोदाधिवासितदि[7]गाननेन राजहस्तिना गन्धमादनेन सनाथीकृ-

---

नालंकृता न विभूषिता । आकल्पस्थाय्यायुगान्तस्थायि दिशोयायि दिग्गमनशीलं च यशः श्लोको न विप्रकीर्णं न विस्तारितम् । गुरवो हिताहितोपदेष्टारोऽनुवृत्त्यानुकूल्येन सुखं यथा स्यात्तथा न स्थापिता नैकत्र स्थितिं कारिताः । स्निग्धाः स्नेहवन्तो ये बन्धवो भ्रातरस्तेषां नोपकृतमुपकृतिर्न कृता । प्रणयिनः सुहृदो निर्विशेषविभवतामशेषैश्वर्यतां न नीता न प्रापिताः । साधवः सज्जना न परिवर्धिता न वृद्धिं प्रापिताः । अनुजीविनः सेवका न संवि[1]भक्ता न संविभागीकृताः । न[2] कामुकतया दृष्टा वीक्षिताः श्रुता आकर्णिता वाङ्गनाः स्त्रियः । जातेनोत्पन्नेन सता जीवलोकसुखानि सांसारिकसौख्यानि नानुभूतानि । न भुक्तानीत्यर्थः । तेन वैशम्पायनेन पुरुषार्थसाधनानां पुरुषार्थकरणानां धर्मार्थकामानां मध्य एकोऽप्यन्यतरोऽपि न प्राप्तः । तेन वैशम्पायनेनैतत्किं कृतं किं विहितम् । इति पूर्वोक्तप्रकारेणाक्षिप्तचेता व्याकुलहृदयश्चिरमिव बहुकालसदृशं चिन्तयन्ध्यायंस्तस्मिन्नेव पूर्वोक्त एव तरुतले वृक्षतले स्थित्वा शून्यं हृदयं चेतो यस्यैवंभूतोऽपि यथायोग्यं क्रियमाणा विधीयमाना प्रसादो वस्त्रादिप्रदानम्, संमानमत्यादरः, तयोः संभावना चिन्तना तया संभावितं संस्कृतं सकलमेव समग्रमेव राजकं राजसमूहं विससर्ज गृहगमनाय निदेशं दत्तवान् । उत्थायोत्थानं कृत्वा तत्क्षणं तत्कालं कृतं विहितमुत्तम्भितं नियन्त्रितं तुङ्गतरमुच्चैस्तरं यत्तोरणं तत्राबद्धा चन्दनमाला यस्मिन् । **उभयेति ।** उभयपार्श्वयोर्वामदक्षिणयोः स्थापितो विन्यस्त उदूर्ध्वं पल्लवो मुखे यस्यैवंभूतः पूर्णहेमकलशो यस्मिन् । द्वारात्प्रभृति प्रतोल्या आरभ्य सिक्तः सिञ्चितो मृष्टः शोधितो भूमिभागो यस्मिन् । अन्तर्बहिश्च प्रकीर्णोऽवध्वस्तः सुरभिकुसुमानां सुगन्धपुष्पाणां प्रकरः समूहो यस्मिन् । इतस्ततः संचरता भ्रमता कर्मान्तिकलोकेन सेवकजनेन गृहीतो विविधोऽनेकविधो भृङ्गारः कनकालुका यस्मिन् । **मणीति ।** मणिखचिता एताः चामराणि वालव्यजनानि, तालवृन्तानि व्यजनानि, रत्नानां मणीनां पादुका 'पावडी' इति प्रसिद्धा आदौ यस्मिन्नेतादृशमुपकरणमुपस्करः पाणौ हस्ते यासामेवंविधाभिर्वारवनिताभिर्वेश्याभिराकीर्णं भृतम् । **वितानेति ।** वितानमुल्लोचस्तस्य तलमधोभागस्तत्र वर्तिना मदस्य दानस्य य आमोदः परिमलस्तेन अधिवासितं सुरभीकृतं दिशं[3] आननं येनैवंभूतेन राजहस्तिना नृपकरिणा गन्धमादनेन सनाथीकृतं सहितमेकपार्श्वं यस्मिन् । अपरपार्श्वेऽपि तदितरपार्श्वेऽपि कल्पितं विरचितमिन्द्रायुधस्याश्वस्यावस्थानमुपवेशनस्थलं यस्मिन् । उपवाहयितुं

---

**टिप्प०**—1 सम्यक् स्वधनांशदानेन परितोषिताः । 2 एतस्मात्पूर्वं 'नाभ्यागताः कृता निस्तृषः' इति पाठोप्यावश्यकः । अभ्यागताः याचका मनोरथपूरणेन निस्तृषो निर्लालसा न कृता इत्यर्थः । 3 दिशामिति बहुवचनं युक्तम् ।

---

**पाठा०**—१ विशेष. २ न दृष्टश्रुताभ्यागताः कृताः निस्तृपः न; नाभ्यागताः कृता निस्तृषः न. ३ काममोक्षाणाम्. ४ चिरमेव. ५ विसर्ज्य. ६ संमृष्ट. ७ दिङ्मण्डलेन.

तैकपार्श्वम्, अपरपार्श्वेऽपि कल्पितेन्द्रायुधावस्थानम्, उपवाह्यकरेणुकाक्रान्तबाह्याङ्गणम्, अशेषद्वारावहितबहुवेत्तृलोकम्, महत्त्वाद्गम्भीरतयानेकसत्त्वशरणतया च महाजलनिधिमनुकुर्वाणम्—तथा हि सवेलावनमिव यामावस्थितानेककरिघटापरिकरेण, अन्तःप्रविष्टमहाशैलमिव गन्धमादनेन, सकल्लोलमिव संचरत्संभ्रान्तकर्मान्तिकलोकोर्मिपरम्पराभिः, सावर्तमिव प्राहरिकजनमण्डलावस्थानैः, सलक्ष्मीकमिव वराङ्गनाभिः, सरत्नमिव महापुरुषैः, सहंसमालमिव सितपताकाभिः, सफेनपटलमिव कुसुमप्रकरैः, हरिमिवानन्तभोगपरिकरं कायमानमविशत्।

प्रविश्य चागृहीतप्रतिकर्मतया मलिनवेशाभिरुद्विग्नदीनमुखीभिरितस्ततो वराङ्गनाभिर्यामिकलोकेन कर्मान्तिकैश्च प्रणम्यमानस्तूष्णीमिवालोककारकेणेव मदामोदेनावेदिते निसृष्ट-

---

योग्या उपवाह्या याः करेणुका हस्तिन्यस्ताभिराक्रान्तं व्याप्तं बाह्याङ्गणं यस्मिन् । **अशेषेति** । अशेषाणि समग्राणि यानि द्वाराणि तेष्ववहितः स्थापितो बहुवेत्तृ[1]लोको यस्मिन् । महत्त्वादायतत्वाद्गम्भीरतयाऽलब्धमध्यतयानेके ये सत्त्वाः प्राणिनस्तेषां शरणतयाश्रयतया च महाजलनिधिं महासमुद्रमनुकुर्वाणं विडम्बमानम् । तत्सादृश्यादिति भावः । तदेव दर्शयन्नाह—**तथा हीति** । सह वेलावनेन वर्तमानमिव । केन । यामावस्थिताश्चतुष्किकास्थिता या अनेककरिघटास्तासां परिकरेणोपस्करेण । उच्चैस्त्वसाम्यात्करिघटानां वनसाम्यम्; परिकरस्य श्वेतत्वसाम्याद्वेलायाः सादृश्यम् । अन्तःप्रविष्टो मध्यगतो महाशैलो महान्पर्वतो यस्मिन्नेवंभूतमिव । केन । गन्धमादनेन । गन्धमादननाम्ना गजेनेत्यर्थः । उच्चत्वकृष्णत्वसाम्याद्गन्धमादनस्य पर्वतोपमानम् । सह कल्लोलेन तरङ्गेण वर्तमानमिव । काभिः । संचरन्त इतस्ततो भ्रमन्तः संभ्रान्ताश्चकिता ये कर्मान्तिकलोकाः सेवकजनास्त एवोर्मिपरम्पराः ताभिः । सहावर्तेन पयसां भ्रमेण वर्तमानमिव । कैः । प्राहरिका ये जनास्तेषां मण्डलेनावस्थानैरुपवेशनैः । सह लक्ष्म्या वर्तमानमिव । काभिः । वराङ्गनाभिर्वरयोषिद्भिः । एतेन तासां लक्ष्मीतुल्यता सूचिता । सह रत्नेन मणिना वर्तमानमिव । कैः । महापुरुषैः सत्पुरुषैः । एतेन महापुरुषाणां रत्नसादृश्यमाविष्कृतम् । सह हंसमालया सितच्छदपङ्क्त्या वर्तमानमिव । काभिः । सितपताकाभिः श्वेतवैजयन्तीभिः । तासां हंसपङ्क्तिसादृश्यादिति भावः । सह फेनपटलेन वर्तमानमिव । कैः । कुसुमानां पुष्पाणां प्रकरैः समूहैः । हरिमिव[2] कृष्णमिव । अनन्तः संख्यातुमयोग्यो यो भोगस्तस्य परिकरः परिवारो यस्मिन् । हरिपक्षेऽनन्तस्य शेषनागस्य भोगः शरीरं तदेव परिकरो यस्येत्यर्थः । एवंविधं कायमानमविशत् । प्रवेशं चकारेत्यर्थः ।

प्रविश्य च प्रवेशं कृत्वा चागृहीतमनात्तं प्रतिकर्माङ्गसंस्कृतं याभिस्तासां भावस्तत्ता तया मलिनः श्यामो वेषो नेपथ्यं यासां ताभिः । उद्विग्नमुद्वेगं प्राप्तमत एव दीनं स्वल्पतया दृश्यमानं मुखं यासामेवंविधाभिः । इतस्ततः संचरद्भिरिति शेषः । वराङ्गनाभिर्वरयोषिद्भिर्यामिकलोकेन चतुष्किकास्थितजनेन कर्मान्तिकैश्च दासादिभिश्च प्रणम्यमानो नमस्क्रियमाणस्तूष्णीमिव जोषमिवालोककारकेण[4] जनोत्सारकवेत्रिणा मदो दानं तस्यामोदेन परिमलेन चावेदिते ज्ञापिते गन्धमादने गजविशेषे निसृष्टा दत्ता शून्योपयोगरहिता दृष्टिर्दृग्येनैवंभूतः

---

**टिप्प०**—1 अयं लेखकदोषः स्याद् यत् 'वेत्रिलोक' इति स्थाने 'वेत्तृ' इति दृश्यते । अस्तु. वेत्री राजप्रासादे वेत्रदण्डधारी । 2 'सहरिमिवानन्तभोगपरिकरैः' इत्येव पाठो योग्यः । पूर्वं महाजलनिधिसाम्यस्य प्रकान्तत्वात् 'हरिमिव' इत्युक्तौ स्वातन्त्र्येण हरेः साम्ये सिद्धे पूर्वप्रकान्तस्य तस्य स्पष्टमसंगतिः । अनन्तैः भोग्यवस्तूनां परिकरैः समारम्भैः सहरिमिव (हरिणा शयानेन नारायणेन सहितमिव) । पक्षेऽर्थष्टीकायाम् । 3 पटमण्डपम् । 4 राज्ञां समीपे 'आलोकय' इति आलोकं दर्शनं जनयति स आलोककारकः तेनेव हस्तिनो मदामोदेन आवेद्यमाने सूच्यमाने ।

---

पाठा०—१ अवस्थित. २ यामकस्थित. ३ वाराङ्गनाभिः. ४ च.

शून्यदृष्टिर्गन्धमादने शनैःशनैर्वासभवनमयासीत् । तत्र चापनीतसमायोगो विमुच्यापि शयनीये तरुतालवृन्तानिलेन संवीज्यमानोऽङ्गसंवाहकारिभिश्च शनैःशनैरपनीयमानागमनखेदः सकलरजनीप्रजागरखिन्नोऽपि चाप्राप्तनिद्रासुखो दुःखासिकया पुनरपि दुःखान्तरहेतुं चिन्तामेवाविशत्—'यदि तावदप्रतिमुक्तस्तातेनाम्बया वा, महति शोकार्णवे निक्षिप्य तौ, तनयविरहशोकविक्लवं तातं शुकनासमम्बां च मनोरमामनाश्वास्यास्मादेव प्रदेशाद्गच्छामि, तदा मयापि वैशम्पायनस्यानुकृतं भवति । निवृत्त्य पुनर्गमने चामुक्तिपक्षमाशङ्कते मे हृदयम् । तत्किं करोमि ? अथवाऽस्थान एवाप्रतिमुक्तिशङ्का मे, प्रियसुहृदात्मानं मां च परित्यजताप्यपरेण प्रकारेण गमनमुत्पादयता कादम्बरीसमीपगमनोपायचिन्तापर्याकुलमतेरुपकृतमेव । तदधुना वैशम्पायनप्रत्यानयनाय यान्तं न तातो नाम्बापि नार्यशुकनासोऽपि निवारयितुं शक्नोति माम् । गतश्च वैशम्पायनसहितस्तेनैव पार्श्वेन पुरस्ताद्गमिष्यामि ।' इति निश्चित्य तत्कालकृतं

---

शनैःशनैर्मन्दं मन्दं वासभवनं वासगृहमयासीदगमत् । **तत्रेति** । तस्मिन्वासभवनेऽपनीतो दूरीकृतः समायोगः संबन्धः । अन्येषामिति शेषः । येनैवंभूतोऽङ्गानि हस्तपादादीनि विमुच्य । तत्प्रयोजकप्रयत्नाभावादिति भावः । शयनीये शय्यायां तरूणां वृक्षाणां तालवृन्तानि व्यजनानि तेषामनिलेन वायुना संवीज्यमान उद्धूयमानोऽङ्गस्य शरीरस्य संवाहः संमर्दस्तत्कारिभिस्तत्करणशीलैश्च । शनैःशनैर्मन्दंमन्दमपनीयमानो दूरीक्रियमाण आगमनखेदो यस्यैवंभूतः । सकला समग्रा या रजनी तस्यां प्रजागरो जागरणं तेन खिन्नोऽपि खेदं प्राप्तोऽपि दुःखेन कृच्छ्रेणासिकावस्थानं तयाऽप्राप्तं निद्रासुखं येनैवंविधः पुनरपि द्वितीयवारमप्येकस्माद्दुःखादन्यानि दुःखानि दुःखान्तराणि तेषां हेतुं निदानभूतां चिन्तां मानसीव्यथामविशत्प्रविष्टोऽभूत् । **यदिति** । तावदादौ तातेन तारापीडेनाम्बया विलासवत्या वाऽप्रतिमुक्तोऽविसृष्टस्तौ मातृपितरौ महति गरिष्ठे शोकार्णवे शुक्समुद्रे निक्षिप्य पातयित्वा । **तनयेति** । तनयस्य वैशम्पायनस्य विरहो वियोगस्तस्मात्यः शोकस्तेन विक्लवं विधुरं तातं शुकनासमम्बां च मनोरमामनाश्वास्याश्वासनामकृत्वास्मादेव प्रदेशात्स्थानाद्यदि गच्छामि व्रजामि, तदा मयापि चन्द्रापीडेनापि वैशम्पायनस्यानुकृतं भवति सादृश्यं कृतं स्यात् । निवृत्त्य व्याघुट्य पुनर्गमने च मे मम हृदयं चेतोऽमुक्तिपक्षमाशङ्कत आरेकते । तदिति हेत्वर्थे । अहं किं करोमि किं कुर्वे । अथवेति पक्षान्तरे । मे ममाप्रतिमुक्तिशङ्का ततो मोचनं स्यान्न वेति संदेहः अस्थान एवानवसर एव । अयुक्तैवेत्यर्थः । यतः प्रियसुहृदा वल्लभमित्रेण वैशम्पायनेनात्मानं स्वं मां च चन्द्रापीडं परित्यजता त्यागं कुर्वताप्यपरेणान्येन प्रकारेण विधानेन गमनं यात्रामुत्पादयतोत्पत्तिं कुर्वता कादम्बर्या गन्धर्वसुतायाः समीपेऽभ्यर्णे गमनं यानं तस्योपायचिन्तया पर्याकुला व्याकुला मतिर्यस्यैवंभूतस्य ममोपकृतमेव । उपकारः कृत इत्यर्थः । एतन्मिषेण तत्र गमनं सुखेन भविष्यतीत्यर्थः । तत्तस्माद्धेतोर्वैशम्पायनस्य प्रत्यानयनं पश्चादानयनं तस्मै यान्तं व्रजन्तं न तातस्तारापीडो नाम्बापि विलासवत्यपि नार्यशुकनासोऽपि मां चन्द्रापीडं निवारयितुं प्रतिषेधयितुं शक्नोति समर्थो भवति । **गतश्चेति** । तत्र प्राप्तश्च वैशम्पायनसहितस्तेनैव पूर्वपरिशीलितेन पार्श्वेन वामदक्षिणयोरन्यतरेण पुरस्तादग्रे गमिष्यामि व्रजिष्यामि इति निश्चित्य निश्चयं कृत्वा तत्कालकृतं तदात्वविहितं वैश-

---

**टिप्प०**—1 गात्रात् अपनीतः समायोगः परिच्छदो येन । 2 अननुमत इति यावत् । 3 पितृभ्यामविसर्जनपक्षम् ।

---

**पाठा०**—१ तनु. २ वीज्यमानो. ३ निःक्षिप्य. ४ अस्थानप्रतिमुक्ति. ५ गमनमप्युत्पादयता. ६ अग्रतो.

वैशम्पायनवियोगदुःखं परिणामसुखमौषधमिव बहु मन्यमानो मुहूर्तमिव स्थित्वा विश्रान्तः सुखितैरङ्गैरापूरिते तृतीयार्धयामशङ्खे शरीरस्थितिकरणायोदतिष्ठत् । उत्थाय च यत्रैव कादम्बरी तत्रैव वैशम्पायन इति स्वधैर्यावष्टम्भेनैव संस्तभ्य हृदयं शून्यान्तरात्मा पुनरेव संवर्गिताशेषराजलोकः[2] शरीरस्थितिमकरोत् ।

कृताहारश्चान्तर्ज्वलतो मदनानलस्य वैशम्पायनविरहशोकाग्नेश्च बहिरपि संतापदानाय साहायकमिव कर्तुमुपरिस्थितश्चातिकष्टमष्टास्वपि दिक्षु युगपत्प्रसारितकरः करोम्ययत्नेनैव संतापमित्याकलय्येव गगनतलमध्यमारूढे सवितरि, आतपव्याजेन रजतद्रवमिवोत्तप्तमुद्गिरति रश्मिजाले, निर्भिद्य विशन्तीष्विव शरीरमातपकणिकासु, पुञ्ज्यमानप्राणिसंघातासु[3] तलप्रवेशात्संकटायमानासु पादपच्छायासु, बहिरालोकयितुं चाप्यपारयन्तीषु दृष्टिषु[4], ज्वलत्स्विव[5] दिङ्मुखेषु, दुःस्पर्शासु भूमिषु, निःसंचारेषु पथिषु, संकटप्रपाकुटीरोदरोदपीतिपुञ्जितेष्वध्वन्येषु[6], नाडिंधमश्वासातुरेषु[7] स्वनीडावस्थायिषु पत्त्ररथेषु, पल्वलान्तर्जलप्रवेशितेषु महिष-

---

म्पायनस्य वियोगदुःखं विरहकृच्छ्रमौषधमिव, अर्थात्कटुकभैषज्यमिव, परिणामे प्रान्ते सुखं सौख्यकृद्बहु यथा स्यात्तथा मन्यमानो जानानो मुहूर्तमिव घटिकाद्वयसदृशमिव स्थित्वा विश्रान्तो विश्रामं गतः सुखितैः सुखं प्राप्तैरङ्गैस्तृतीयोऽर्धो यस्मिन्नेवंविधो यो यामः प्रहरस्तस्य शङ्खे जलज आपूरिते वादिते सति शरीरस्थितिकरणायोदतिष्ठदुत्थितो बभूव । उत्थाय चोत्थानं कृत्वा यत्रैव यस्मिन्नेव स्थले कादम्बरी तत्रैव तस्मिन्नेव प्रदेशे वैशम्पायन इति स्वधैर्यावष्टम्भेनैव स्वकीयसत्त्वावलम्बनेनैव हृदयं चेतः संस्तभ्य संस्तम्भनं कृत्वा शून्योऽन्तरात्मा चेतो यस्य स तथा पुनरेव द्वितीयवारमेव संवर्गित एकीभूतोऽशेषः समग्रो राजलोको यस्यैवंभूतः शरीरस्थितिं देहपालनामकरोदकल्पयत् ।

कृतो विहित आहारो भोजनं येनैवंविधश्च सन्मदनानलस्य कामवह्नेरन्तर्मध्ये ज्वलतः प्रज्वलतः सतो वैशम्पायनस्य विरहो वियोगस्तस्माद्यः शोकः शुक् स एवाग्निर्वह्निस्तस्य च बहिरपि ज्वलतः सतः संतापदानाय तप्तिवितरणाय साहायकमिव साहाय्यमिव कर्तुं विधातुमुपरिस्थितश्चातिकष्टमतिकृच्छ्रमष्टास्वपि दिक्षु युगपदेकवारं प्रसारितकरो विस्तारितकिरणोऽयत्नेनैवाप्रयासेनैवाहं संतापं करोमीत्याकलय्येवाकलनां कृत्वेव गगनतलमध्यं सवितरि सूर्य आरूढे प्राप्ते सति, आतपव्याजेनालोकमिषेणोत्तप्तमुष्णीकृतं रजतद्रवमिव रूप्यरसमिव रश्मिजाले किरणसमूह उद्गिरत्युद्वमति सति, शरीरं देहं निर्भिद्य द्विधा कृत्वा विशन्तीष्विव प्रवेशं कुर्वन्तीष्विवातपकणिकासु सत्सु । पुञ्ज्यमानः संघातीक्रियमाणः प्राणिसंघातो जीवसमूहो यास्वेवंविधासु पादपच्छायासु तलप्रवेशादधोगमनात् । किरणानामिति शेषः । संकटायमानासु संकीर्यमाणासु सत्सु । बहिरप्यालोकयितुं वीक्षितुं दृष्टिषु नेत्रेष्वपारयन्तीष्वशक्नुवतीषु सत्सु । ज्वलत्स्विव दह्यमानेष्विव दिङ्मुखेष्वाशाननेषु सत्सु । दुर्दुःखेन स्पर्शो यासामेवंविधासु भूमिषु सत्सु, निःसंचारेषु संचरणरहितेषु पथिषु मार्गेषु सत्सु । संकटा अविस्तीर्णा याः प्रपाः पानीयशालास्तासां कुटीराणि तेषामुदरेषु मध्येषूदकस्य पानमुदपीतिस्तदर्थं पुञ्जितेषु संघीभूतेष्वध्वन्येष्वध्वनीनेषु सत्सु । नाडिं धमतीति नाडिंधम एवंविधो यः श्वासो निःश्वासस्तेनातुरेषु पीडितेषु स्वनीडानि स्वकीयकुलायास्तेष्ववस्थायिष्ववस्थानकारिषु पत्त्ररथेषु पक्षिषु सत्सु । पल्वलान्यखातसरांसि तेषामन्तर्जले प्रवेशितेषु प्रवेशं कारि-

---

टिप्प०—1 'संवर्जितराजलोकः' इत्येव पाठः । विसर्जितो राजन्यगणो येन सः, शरीरस्थितिकरणे विसर्जनस्यैवोचित्यात् ।

---

पाठा०—१ निद्राविश्रान्तसुखितैः; स्थित्वा विश्रान्तसुखितैः २ संवर्जितराजलोकः. ३ पुञ्जमान. ४ दृष्टिषु आलोकेषु, दुरालोकेषु. ५ दिङ्मुखेषु ज्वलत्स्विव. ६ निःसंकट, ७ नाडिंधम.

वृन्देषु, अरविन्ददलशकलकिंजल्कविच्छुरितमिच्छाविलोडितोत्त्रुटितबिसकाण्डच्छेददन्तुरं निपानसरःपङ्कमारोहत्सु करियूथेषु, रक्ततामरसकान्तिषु ललनाकपोलोपान्तेषु दलितमुक्ताक्षोदानुकारिणीषु विराजमानासु घर्मजलकणिकावलीषु, [2]स्मर्यमाणायां ज्योत्स्नायाम्, गृह्यमाणेषु तुषारगुणेषु, [3]वाञ्छयमाने पयोदकालाभ्यागमे, अभ्यर्थ्यमाने दिवसपरिणामे, प्रदोषदर्शनाकाङ्क्षिषु हृदयेषु, उत्थाय सरस्तीरकल्पितमनवरतापतज्जलासारसेकनिवारितोष्णकरकिरणसंतापम्, एकसंतानावलीधा[4]रावर्षवेगवाहिन्या निर्झरिण्येव कुल्यया परिक्षिप्तम्, अन्तरालम्बितजलजम्बूप्रवालाहितान्धकारम्, आमुक्तकुसुमपल्लवलतावृताखिलस्तम्भसंच[5]यम्, आमोदमानसरसस्फुटितारविन्दराशिदत्तप्रकरम्, आकीर्णसरसबिसका[6]ण्डम्, अकाण्डकल्पितप्रावृट्कालमितस्ततो वर्षन्तीभिः शैवलप्रवालमञ्जरीभिः, जलदेवताभिरिव सद्यःस्नानार्द्र-

---

तेषु महिषवृन्देषु रक्ताक्षसमूहेषु सत्सु । **अरविन्देति ।** अरविन्दस्य कुशेशयस्य दलशकलानि पत्रखण्डानि किंजल्कं च केसरं ताभ्यां विच्छुरितं कर्बुरितमिच्छया विलोडितेन मथनेनोत्त्रुटितानि यानि बिसकाण्डानि तेषां छेदास्तैर्दन्तुरं मनोहरमेतादृशं निपानसरो 'निवाण' इति लोके प्रसिद्धं यत्सरस्तटाकं तस्य पङ्कं कर्दमं करियूथेषु हस्तिवृन्देष्वारोहत्सु प्रविशत्सु सत्सु । रक्तं यत्तामरसं कमलं तद्वत्कान्तिर्येषामेवंविधेषु ललनानां कपोलानामुपान्तेषु समीपेषु सत्सु[1] । **दलितेति ।** दलिता मृदिता या मुक्ता मौक्तिकानि तासां क्षोदश्चूर्णं तदनुकारिणीषु तत्सादृश्यकरणशीलासु घर्मजलस्य प्रस्वेदस्य कणिकानामावलीषु श्रेणिषु विराजमानासु शोभमानासु सत्सु। ज्योत्स्नायां चन्द्रिकायां स्मर्यमाणायां स्मृतिगोचरीक्रियमाणायां सत्याम्, तुषारगुणेषु हिमगुणेषु गृह्यमाणेषु सत्सु। पयोदकालस्य प्रावृट्समयस्याभ्यागम आगमने वाञ्छयमान ईप्स्यमाने सति। दिवसस्य वासरस्य परिणामेऽवसानेऽभ्यर्थ्यमाने प्रार्थ्यमाने सति । प्रदोषो यामिनीमुखं तस्याकाङ्क्षिषु वाञ्छकेषु हृदयेषु मनःसु सत्सु, उत्थायोत्थानं कृत्वा जलमण्डपमयासीदिति दूरेणान्वयः। जलमण्डपं विशेषयन्नाह—**सर इति ।** सरसस्तटाकस्य तीरं तटं तस्मिन्कल्पितं विहितमनवरतं निरन्तरमापतन्क्षरन्यो जलासारो वेगवद्वृष्टिस्तेन सेकः सिञ्चनं तेन निवारितो दूरीकृत उष्णकरस्य सूर्यस्य किरणसंतापो येन स तम् । एकसंतानानामेकपरम्परामावलीभिर्यो धारावर्षस्तस्य वेगं वहतीत्येवंशीलया निर्झरिण्येव नद्येव कुल्यया सारिण्या परिक्षिप्तं वलयितम् । **अन्तरेण ।** अन्तरा मध्य आलम्बि[2]तानि जलजम्बूप्रवालानि वेतसकिसलयानि तैराहितः स्थापितोऽन्धकारो यस्मिन् । **आमुक्तेति ।** आमु[3]क्ता मुकुलकुसुमपल्लवा याभिरेवंविधा या लता वल्ल्यस्ताभिरावृत आच्छादितोऽखिलस्तम्भसंचयः समग्रस्थूणासमूहो यस्मिन् । **आमोदेति ।** आमोदमानानि विदूरगगन्धवन्ति सरसानि रसोपयुक्तानि स्फुटितानि विकसितानि यान्यरविन्दानि कमलानि तेषां राशिः समूहस्तस्य दत्तः प्रकरो निवहो यस्मिन् । **आकीर्णेति ।** आकीर्णानि व्याक्षिप्तानि सरसबिसकाण्डानि मृणालसमूहा यस्मिन् । अकाण्डेऽप्रस्तावे कल्पितः कृतः प्रावृट्कालो वर्षासमयस्तमिव । काभिः । शैवलानि तेषां प्रवालमञ्जर्यः किसलयवल्लर्यस्ताभिः । किं कुर्वन्तीभिः । इतस्ततो वर्षन्तीभिर्यत्र तत्र निपतन्तीभिः । पुनः कीदृशं जलमण्डपम् । वल्लीभिर्वाराङ्गनाभिर्वारयोषिद्भिरुपेतं सहितम् । कथंभूताभिः । सद्यस्तत्कालं यत्स्नानं तेनार्द्रः समुन्नश्चिकु-

---

टिप्प०—1 इयमव्युत्पन्नता तु चिरानुवृत्तैव टीकाकारस्य । ललनाकपोलेषु इति न स्वतन्त्रम्, अपि तु रक्ततामरससदृशेषु ललनाकपोलेषु (अधिकरणेषु) घर्मजलकणिकावलीषु विराजमानासु सतीष्वित्यन्वयः। 2 अन्तरा मध्ये आलम्बितानि लम्बनेन गृहीतानि जलानि यैः तादृशा ये जम्बूनां प्रवालाः पल्लवाः तैः, जम्बूपल्लवानां हारित्याधिक्याच्छ्यामतेत्याशयः। 3 आमुक्ताभिस्तस्मिन्स्थाने न्यस्ताभिः कुसुमपल्लवलताभिरावृत इति सरलोऽर्थः। 4 पाठान्तरेषु नीचैर्विधृतं विशेषणद्वयमपि ग्रन्थस्थं रसिकैरायोज्यमेतन्मध्ये ।

---

पाठा०—१ त्रुटित. २ सर्यमाणायां च. ३ आवाञ्छयमाने. ४ धारावेग. ५ संचयमतनुहरिचन्दनचर्चार्द्रमरकतश्यामपद्मिनीपलाशास्तीर्णसमस्तभूतलमामोद. ६ काण्डाकाण्डकल्पित.

चिकुरहस्ताभिरुपगृहीतसुरभिकोमलजलार्द्रकाभिरनाश्यानचन्दनाङ्गरागहारिणीभिर्हारवलय-मात्राभरणाभिरवतंसितबालशैवलप्रवालाभिर्मृणालतालवृन्तकर्पूरपटवासहरिचन्दनचन्द्रकान्त-मणिदर्पणाद्युपकरणपाणिभिर्वह्वीभिर्वाराङ्गनाभिरुपेतम्, परिभवस्थानमिव निदाघसमयस्य, निदानमिव शीतकालस्य, निवेशमिव[1] वारिवाहानाम्, तिरस्कारमिव रविकिरणानाम्[2], हृदय-मिव सरसः, सहायमिव हिमगिरेः[3], स्वरूपमिव जडिम्नः, आवासमिव विभावरीणाम्, प्रत्याघातमिव दिवसस्य जलमण्डपमयासीत् ।

तत्र चातिरम्यतया क्षुभितमकरध्वजोत्कलिकासहस्रविषमं जलासारशिशिरतया संधु-क्षितसुहृद्वियोगानलं[5] महासमुद्रमिव गम्भीरं तं दिवसमेकाकी कथंकथमपि[6] स्वधैर्ययानपात्रेणा-लङ्घयत् । लोहितायमानातपे च सायाह्ने निर्गत्य बहुलगोमयोपलेपहरिते मन्दमन्दमारुता-

---

रहस्तः केशकलापो यासां ताभिः । आर्द्रत्वसाम्यादुत्प्रेक्षते—जलदेवताभिरिव जलाधिष्ठात्रीभिरिव । **उपेति** । उपगृहीताः स्वीकृताः सुरभयः कोमला मृदवो जलार्द्रकाः क्लिन्नवासांसि याभिस्तास्ताभिः । 'जलार्द्रा क्लिन्नवाससि' इत्यभिधानचिन्तामणिः । **अनेति** । अनाश्यानोऽशुष्को यश्चन्दनाङ्गरागश्चन्दनविलेपनं तेन हारिणीभी रुचिराभिः । **हारेति** । हारश्च वलये चेति द्वन्द्वः । केवले हारवलये हारवलयमात्रमाभरणमलंकारो यासां ताभिः । **अवेति** । अवतंसिताः शेखरीकृता बाला नव्याः शैवलप्रवालाः शैवलकिसलयानि याभिः । **मृणालेति** । मृणालानि बिसानि, तालवृन्तानि व्यजनानि, कर्पूरो हिमवालुका, पटवासः पिष्टातः, हरिचन्दनं चन्दनम्, चन्द्रकान्तमणयश्चन्द्रमणयः, दर्पणो मुकुरः, एत आदौ येषामेतादृशमुपकरणमुपस्करः पाणौ हस्ते यासां ताभिः । **परीति** । निदाघसमयस्योष्णकालस्य परिभवस्थानमिव पराभवस्थलमिव । शीतकालस्य शिशिरसमयस्य निदानमिव कारणमिव । वारिवाहानां मेघानां निवेशमिवाश्रममिव । रविकराणां सूर्यकिरणानां तिरस्कारमिव न्यक्कारमिव । **हृदयमिति** । सरसस्तटाकस्य हृदयमिव मध्यमिव । सहायमिव सखायमिव हिमगिरेस्तुहिनाचलस्य । क्वचित् 'सहोदरमिव' इति पाठः । तत्र भ्रातरमिवेत्यर्थः । जडिम्नो जडतायाः स्वरूपमिव स्वलक्षणमिव । विभावरीणां रजनीनामावासमिव गृहमिव । दिवसस्य वासरस्य प्रत्याघातमिव प्रहारमिव जलमण्डपमयासीदित्यन्वयस्तु प्रागेवोक्तः ।

**तत्र चेति** । तस्मिन्स्थलेऽतिरम्यतयातिमनोहरतयैकाक्यसहायस्तं दिवसं कथंकथमपि महता कष्टेन स्वकीयं यद्धैर्यं तदेव यानपात्रं वाहनं तेनालङ्घयदुल्लङ्घितवान् । दिवसं विशेषयन्नाह—**क्षुभितेति** । क्षुभितं क्षुब्धं यन्मकरध्वजस्य कंदर्पस्योत्कलिकासहस्रमुत्कण्ठासहस्रं तेन विषमं विकटं जलस्याम्भस आसारो वेगवद्वृष्टिस्तेन शिशिरतया शीतलतया संधुक्षितः प्रकटीकर्तुमारब्धः सुहृद्वियोगानलो[2] मित्रविरहानलो येन स तम् । महासमुद्रमिव महाजलधिमिव गम्भीरं गभीरम् । विरहाकुलितचेतस्कत्वादप्राप्तप्रान्तमित्यर्थः । लोहितायमानो रक्तायमान आतप आलोको यस्मिन्नेतादृशे च सायाह्ने संध्यायां निर्गत्य गृहाद्बहिरागत्य बहुलं दृढं यद्गोमयं छगणं तेनोपलेप उपलिम्पनं तेन हरिते नीले नीलवर्णे, मन्दं मन्दं यथा स्यात्तथा मारुतेन वायुनाहतस्ताडितोऽत

---

**टिप्प०**—1 ग्राम्योयमर्थः । उपगृहीताः जलार्द्रिकाः (जलार्द्राः) पद्मपत्रतालवृन्तानि याभिरित्यर्थः । 'तथा जलार्द्रापवनैर्न निर्ववौ' इति माघः । 2 'सुहृद्वियोगौर्वानलम्' इत्येव पाठः । जलासारेण और्वः ( वाडवः ) अनल एव संधुक्ष्यते, न साधारणः ।

---

पाठा०—१ निवेशनम्. २ रविकराणाम्. ३ हिमगिरेः स्वरूपमिव. ४ हृदय. ५ वियोगौर्वानलम्. ६ कथमपि.

हतोत्तरलायमानधवलकुसुमप्रकरशोभिनि वासभवनाङ्गणे क्षणमिवास्थाने समासन्नपार्थिवैः सह वैशम्पायनालापेनैव 'स्थित्वा द्वितीय एव यामे चलितव्यम् । सज्जीकुरुत साधनम्' इत्यादिश्य बलाध्यक्षमृक्षोदय एव विसर्जिताशेषराजलोको वासभवनमध्यवसत् । अथातिचिरान्तरितोज्जयिनीदर्शनोत्सुको विनापि प्रयाणनान्द्या सकल एव कटकलोकः संवृत्य[1] प्रावर्तत गन्तुम् । आत्मनाप्यलब्धनिद्राविनोदोऽवतरत्येव[2] तृतीये यामे तुरगकरिणीप्रायवाहनेनानतिबहुना राजलोकेन सह विरलकटकसंमर्देन वर्त्मनाऽवहत् । अथाध्वनैव सह क्षीणायां यामवत्याम्, रसातलादिवोन्मज्जत्सु सर्वभावेषु, उन्मीलन्तीष्विव दृष्टिषु, पुनरिवान्यथा सृज्यमाने जीवलोके, विभज्यमानेषु निम्नोन्नतेषु, विरलायमानेष्विव वनगहनेषु, संकुचत्स्विव तरुलतागुल्मेषु, गगनतलमारोहन्त्याः पदे इव बहुललाक्षारसा[3]लोहिते दिवसश्रियः, अवश्यायसेकान्नवपल्लव इवोद्भिद्यमाने पूर्वाशालतायाः, कमलिनीराग[4]दायिनि दिवसकरबिम्बे विस्पष्टे, प्रभातसमये, कटकलोकेनैव सह परापतितवानुज्जयिनीम् ।

---

एवोत्तरलायमान उत्कम्पायमानो यो धवलकुसुमप्रकरः श्वेतपुष्पनिकरस्तेन शोभिनि शोभायमाने वासभवनाङ्गणे निवासगृहाजिर आस्थान आस्थानसभायां समासन्नाः पार्श्ववर्तिनो ये पार्थिवा राजानस्तैः सह वैशम्पायनस्यालापेन किंवदन्त्या क्षणमिव क्षणसदृशं स्थित्वास्थाय द्वितीय एव यामे प्रहरे चलितव्यं प्रस्थातव्यम्, साधनं सैन्यं सज्जीकुरुत सज्जयत । बलाध्यक्षं सेनापतिमित्यादिश्येत्यादेशं दत्त्वा ऋक्षोदय एव नक्षत्रोदय[1] एव विसर्जितो गृहगमनाय दत्ताज्ञः अशेषः समग्रो राजलोको येनैवंभूतो वासभवनमध्यमवसदध्यतिष्ठत् । अथेति प्रकारान्तरे । अतिचिरकालेनान्तरितं तिरोहितं यदुज्जयिन्याः[2] पुष्पकरण्डिकाया दर्शनमवलोकनं तेनोत्सुक उत्कण्ठितः सकल एव समग्र एव कटकलोकः सैन्यजनः संवृत्य सज्जीभूयेत्यर्थः । विनापि प्रयाणनान्द्या यात्रापटहवादनं विनापि गन्तुं प्रावर्तत प्रवृत्तोऽभूत् । आत्मनापि स्वेनाप्यलब्धोऽप्राप्तो निद्रायाः प्रमीलाया विनोदो विलासो येनैवंभूतः । तृतीये तार्तीयीके यामे प्रहरेऽवतरत्येवावतारं प्राप्नुवत्येव, तुरगा अश्वाः, करिण्यो हस्तिन्यः, ता एव प्रायो बाहुल्येन वाहनं युग्यं यस्यैवंभूतेनानतिबहुना स्वल्पेन राजलोकेनोपजनेन सह विरलस्तुच्छः कटकस्य सैन्यस्य संमर्दः संबाधो यस्मिन्नेतादृशेन वर्त्मना मार्गेणावहदगमत् । अथेति प्रकारान्तरे । अध्वनैव मार्गेणैव सह यामवत्यां त्रियामायां क्षीणायां सत्यां सर्वभावेषु समग्रपदार्थेषु रसातलादिव पातालादिवोन्मज्जत्सूपर्यागच्छत्सु, दृष्टिषु दृक्षून्मीलन्तीष्विव विकसन्तीष्विव, पुनरिव द्वितीयवारमिव जीवलोकेऽन्यथान्येन प्रकारेण सृज्यमाने निष्पाद्यमाने, निम्नानि चोन्नतानि च निम्नोन्नतानि तेषु भावेषु[3] विभज्यमानेषु पृथक्क्रियमाणेषु सत्सु, वनगहनेष्वरण्यगह्वरेषु विरलायमानेष्विवाऽनिबिडायमानेष्विव सत्सु, तरवो वृक्षाः, लता वल्ल्यः, गुल्मा गुच्छाः, तेषु संकुचत्स्विव संकोचं प्राप्नुवत्स्विव, दिवसश्रियो वासरलक्ष्म्या गगनतलं व्योमतलमारोहन्त्या आरोहणं कुर्वन्त्या बहुषु निबिडो यो लाक्षारसो जतुद्रवस्तेनालोहित ईषद्रक्ते पदे इव[4] चरणन्यासे इव, पूर्वाशालतायाः प्राचीवल्लया अवश्यायो हिमं तस्य सेकात्सिञ्चनान्नवपल्लवे इव नवीनकिसलये इवोद्भिद्यमान उद्भेदं प्राप्यमाणे कमलिन्या मृणालिन्या रागदायिनि प्रीतिप्रदे दिवसकरबिम्बे सूर्यमण्डले सति विस्पष्टे, प्रभातसमये प्रत्यूषक्षणे कटकलोकेनैव सैन्यजनेनैव सहोज्जयिनीं विशालां परापतितवान्प्राप्तवान् ।

**टिप्प०**—1 रजनीप्रारम्भ एवेत्यर्थः । 2 संज्ञाया एवं पर्यायकरणं महापाण्डित्यं टीकाकर्तुः । 3 निम्नोन्नतेषु भागेषु प्रकाशोदयात्स्पष्टदर्शनेन विभज्यमानेषु पृथग्रूपेण दृश्यमानेषु सत्सु । 4 सूर्यबिम्बस्य वासरलक्ष्मीपदत्वेन, आशालतापल्लवत्वेन चोत्प्रेक्षा ।

**पाठा०**—१ सज्जीभूय. २ सद्योऽवतरन्नेव. ३ लाक्षारस. ४ कमलिनीराग.

अथ दूरत एव प्रसृतिद्वन्द्वसंस्थितैश्च पुञ्ज्यमानैश्च पुञ्जितैश्चाबद्धमण्डलैश्चोपविष्टैः वलितैश्च दत्तकतिपयशून्यपदैश्च निर्वर्त्यमानैश्चागच्छद्भिश्चोन्मुखैश्चाधोमुखैश्चोद्बाष्पदृष्टिभिश्च विवर्णदीनवदनैश्च महाकष्टशब्दमुखरैश्च दुःखाधिक्याहितमौनैश्च मुनिभिरपि मुमुक्षुभिरपि वीतरागैरपि निःस्पृहैरप्युदासीनैरपि दुर्जनैरपि स्नेहपरवशैः पितृभिरिव सुहृद्भिरिव स्निग्धबन्धुभिरिव च नगरीनिर्गतैरार्त्यापृच्छ्यमानं कथ्यमानं च विचार्यमाणं चानुभाव्यमानं च वैशम्पायनवृत्तान्तमेव समन्ताच्छुश्राव । शृण्वंश्च चकार चेतसि—'बाह्यस्य तावज्जनस्येयमीदृशी समवस्था किं पुनर्येनासावङ्केन लालितः संवर्धितो वा बालचाटवोऽस्यानुभूताः । तदतिकष्टं मे वैशम्पायनेन विना तातस्य शुकनासस्याम्बाया मनोरमाया वा दर्शनम्' इत्येवं चिन्तयन्नासानिहितोद्बाष्पदृष्टिरदृष्टसर्ववृत्तान्त एव विवेशोज्जयिनीम् ।

अवतीर्य च स राजकुलद्वारि प्रविशन्नेवार्यशुकनासभवनं सह देव्या विलासवत्या गतो

---

**अथेति** । उज्जयिनीगमनानन्तरं दूरत एव दविष्ठादेव प्रसृतैः पाणिः प्रसृतिस्तस्य द्वन्द्वेन संस्थितैरूर्ध्वंदर्मानैर्योजिताञ्जलिभिरित्यर्थः । पुञ्ज्यमानैः संघीक्रियमाणैश्च पुञ्जितैः संघीकृतैश्चाबद्धं कृतं मण्डलं यैरेवंविधैश्चोपविष्टैर्निषण्णैश्च वलितैर्गतैश्च दत्तानि कतिपयानि कियन्ति शून्यपदानि यैरेवंभूतैश्च निर्वर्त्यमानैः पश्चादागच्छद्भिश्चागच्छद्भिः समागच्छद्भिश्चोन्मुखैरूर्ध्वाननैश्च, अधोमुखैर्नीचैर्मुखैश्च, उदूर्ध्वं बाष्पो यास्त्वेवंविधा दृष्टयो येषामेवंविधैश्च, विवर्णानि विच्छायानि दीनानि करुणानि वदनानि मुखानि येषामेतादृशैश्च, महान्तो ये कष्टशब्दा हाहाप्रभृतयस्तैर्मुखरैर्वाचालैश्च, दुःखाधिक्येनाहितं विहितं मौनं यैरेवंविधैश्च मुनिभिरपि मुमुक्षुभिरपि वाचंयमैरपि वीतरागै रागरहितैरातैरपि निःस्पृहैर्निरीहैरपि, उदासीनैर्मध्यस्थैरपि, दुर्जनैः खलैरपि, स्नेहपरवशैः प्रीतिपराधीनैः, पितृभिरिव जनकैरिव, सुहृद्भिरिव मित्रैरिव, स्निग्धबन्धुभिरिव हितकृद्भ्रातृभिरिव च नगर्या उज्जयिन्या निर्गतैर्बहिरागतैः पूर्वोक्तजनैरार्त्या पीडयापृच्छ्यमानं पृच्छाविषयीक्रियमाणं कथ्यमानमुच्यमानं च विचार्यमाणं च विचारविषयीक्रियमाणं चानुभाव्यमानं भावनाविषयीक्रियमाणं च वैशंपायनस्य वृत्तान्तमुदन्तमेव समन्तात्सर्वत्र शुश्रावाकर्णयामास । शृण्वंश्चेति चेतसि चित्ते चकार । बाह्यस्य बहिःस्थस्य तावज्जनस्य लोकस्येदृशी समवस्था दशा येनासौ वैशम्पायनोऽङ्केन क्रोडेन लालितः पालितः संवर्धितो वृद्धिं प्रापितः । अस्य वैशम्पायनस्य बालचाटवः शिशुचाटवः । 'चटु चाटु प्रियप्रायम्' इति हैमः । अनुभूता अनुभवविषयीकृतास्तेषां किं पुनर्भण्यते । तत्तस्माद्धेतोर्मे मम वैशम्पायनेन विना तातस्य शुकनासस्य अम्बाया मनोरमाया वा दर्शनमवलोकनमतिकष्टमतिकृच्छ्रम् । इत्येवं पूर्वोक्तप्रकारेण चिन्तयन्ध्यायन्नासायां गन्धज्ञायां निहिता स्थापितोद्बाष्पा दृष्टिर्येन । अदृष्टोऽनिरीक्षितः सर्ववृत्तान्तो येनैवंभूत एवोज्जयिनीं विशालां विवेश प्रविष्टवान् ।

अवतीर्यावरोहणं कृत्वा च स चन्द्रापीडो राजकुलद्वारि नृपकुलप्रतोल्यां प्रविशन्नेव प्रवेशं कुर्वन्नेवार्यशुकना-

---

**टिप्प०**—1 अमोयं टीकाकृतः । 'दूरत एव प्रभृति द्वन्द्वस्थितैश्च पुञ्जितैश्च' इत्यादिः पाठः । वैशम्पायनवृत्तान्तचर्चायै लोकानां नानाविधाऽवस्थितिः । दूरत एव प्रभृति दूरादेव आरभ्य केचिद् द्वन्द्वस्थिता द्वाभ्यां मिलित्वा स्थिताः, केचित् पुञ्जिताः, इत्याद्याशयः । 2 अशुद्धमिदम् । 'निवर्तमानैः' आगत्य परावर्तमानैः, सहसा अनिष्टवार्ताश्रवणशङ्कयेत्यर्थः ।

---

**पाठा०**—१ प्रभृतिद्वन्द्वस्थितैः. २ पुञ्जितैश्च पुञ्ज्यमानैश्च. ३ मण्डलैश्चोर्ध्वैश्च. ४ चलितैश्च वलितैश्च. ५ अधिक. ६ निःसङ्गैरपि. ७ निस्पृहैः. ८ चाकर्ण्यमानं च. ९ चानुवर्ण्यमानं च. १० यैः. ११ बाल. १२ नासाग्र.

राजेति शुश्राव । श्रुत्वा च [1]निर्वर्त्य [2]तत्रैव जगाम । गच्छंश्च समीपवर्ती 'हा वत्स वैशम्पायन, अद्यापि मदङ्कलालनोचितो बाल एवासि । कथं त्वमेकाकी व्यालशतसहस्रभीषणे निर्मानुषे तस्मिञ्शून्यारण्ये स्थितः । [3]केन तत्रापि सर्वसत्त्वव्याघातकारिणी शरीररक्षा कृता । [4]केन वैषम्यप्रतिपन्थिनी शरीरस्थितिः संपादिता । केन निद्रासुखदायि शयनीयमुपकल्पितम् । कस्त्वयि बुभुक्षिते तृषिते सुषुप्सति वा दुःखितो ममोत्सङ्गमुत्सृज्य । समानसुखदुःखा वधूरपि न पुत्रक, त्वयोपात्ता । आगतमात्रस्यैव ते पितरम[5]नुज्ञाप्यात्यर्थं वधूमुखमालोकयिष्यामीति यन्मया चिन्तितं केवलं तन्मे मन्दपुण्याया न संपन्नम् । अपरं तवापि [6]दर्शनं [7]दुर्लभं भूतम् । वत्स, यत्र तेऽवस्थातुमभिरुचितं नयस्व [8]तत्रैव मामपि पितरं विज्ञप्य । त्वामपश्यन्ती न जीवामि । तात, त्वयाहं शैशवेऽपि नावमानिता, कुतस्तवेयमेकपद एवेदृशी निष्ठुरता जाता । आ जन्मनः प्रभृति न दृष्टमेव यस्य कुपितमाननम्, तस्य ते कुतोऽयमेवं-

---

सभवनं विलासवत्या सह राजा तारापीडो गत इति शुश्रावाकर्णयामास । श्रुत्वाकर्ण्य च निर्वर्त्य[1] व्यावृत्य तत्रैवार्यशुकनासभवन एव जगाम गतवान् । गच्छन्व्रजंश्च समीपवर्ती निकटस्थो विलासवत्या देव्या स्वयं संस्थाप्यमानां निवार्यमाणामपि मनोरमामेतान्यन्यानि च वचनानि विप्रलपन्तीं ब्रुवन्तीमश्रौषीदिति दूरेणान्वयः । इतियोत्यमाह—**हा वत्सेति** । हा इति खेदे । हे वत्स वैशम्पायन, अद्यापि सांप्रतमपि मदङ्के क्रोडे लालनं तत्रोचितो योग्यो बाल एवासि । कथं त्वमेकाक्यसहायो व्यालानां सर्पाणां शतसहस्रं लक्षं तेन भीषणे भैरवे निर्मानुषे मनुष्यवर्जिते तस्मिन्पूर्वोक्ते शून्यारण्ये ग्रामादिरहितकान्तारे स्थितः । केन तत्रापि शून्यारण्येऽपि सर्वसत्त्वानां समग्रप्राणिनां व्याघातं प्रतिबन्धं करोतीत्येवंशीला शरीररक्षा कृता विहिता । केन विषमस्य भावो वैषम्यं तस्य प्रतिपन्थिनी शत्रुभूता शरीरस्थितिः संपादिता निष्पादिता । केन निद्रायाः सुखं सौख्यं ददातीत्येवंशीलं यच्छयनीयं शयनस्थलमुपकल्पितम् । त्वयि वैशम्पायने बुभुक्षिते क्षुधिते, तृषिते पिपासिते, सुषुप्सति वा स्वापं कर्तुमिच्छति वा । मम मनोरमाया उत्सङ्गमङ्कमुत्सृज्य[3] त्यक्त्वा को दुःखितो दुःखवान् । समाने सदृशे सुखःदुःखे यस्या एवंविधा वधूरपि, हे पुत्रक हे सूनो, त्वया नोपात्ता नाङ्गीकृता । आगतमात्रस्यैव समागतमात्रस्यैव ते तव पितरं शुकनासमनुज्ञाप्यानुज्ञां गृहीत्वात्यर्थं भृशं वधूमुखं पत्नीवदनमालोकयिष्यामीति यन्मया चिन्तितं विचारितं केवलं तन्मे मम मन्दपुण्यायाः स्वल्पसुकृताया न संपन्नं न जातम् । अपरं तवापि च भवतोऽपि दर्शनमवलोकनं दुर्लभं दुष्प्रापं भूतं जातम् । यदि वत्स, यत्र तेऽवस्थातुमवस्थानं कर्तुमभिरुचितं रुचिविषयीभूतम्, तर्हि पितरं जनकं विज्ञप्य विज्ञप्तिं कृत्वा तत्रैव सरस्तीर एव मामपि मनोरमां नयस्व प्रापय । अन्यथा त्वामपश्यन्त्यनवलोकयन्ती न जीवामि न प्राणिमि । 'तातः पितरि पुत्रेऽपि' इत्युक्तत्वात् हे तात हे पुत्र, त्वया भवताहं मनोरमा शैशवेऽपि शिशुत्वेऽपि नावमानिता नावगणिता । तव भवत इयमेकपद एव सहसैव कुतो निष्ठुरता कठिनता जाता प्रादुर्भूता । यस्य भवतः कुपितं कोपं प्राप्तमाननं मुखमा[4] जन्मनः प्रभृति जन्म-

---

टिप्प०—1 'निवृत्त्य' राजभवनात्परावृत्त्य इत्येव पाठो योग्यः । 2 वैषम्यस्य प्रतिपन्थिनी अर्थात् अस्वास्थ्यविघातिनी ते शरीरस्थितिः कृता । 3 न सम्यक् संबन्धः । 'त्वयि बुभुक्षिते तृषिते सुषुप्सति वा को दुःखितः ? ममोत्सङ्गमुत्सृज्य (गतेन) समानसुखदुःखा वधूरपि त्वया नोपात्ता' इत्यन्वय उचितः । 4 'आ' इत्यधिकम् । 'जन्मनः प्रभृति' इत्येव पाठः ।

---

पाठा०—१ निर्वर्त्य; निःसृत्य; निवृत्त्य. २ तत्रैव च. ३ केन तेन ते तत्रापि. ४ केन वा. ५ अभ्यर्थ्य. ६ वदनदर्शनम्. ७ दुर्लभीभूतम्. ८ मामपि तत्रैव.

विधो मय्यकस्मादेव कोपो यदेवं परित्यज्य स्थितोऽसि ? गतोऽप्यागच्छ । शिरसा प्रसादयामि त्वाम् । कोऽपरोऽस्ति मे ? देशान्तरपरिचयान्मुक्तो नामास्मासु स्नेहः ? क्षणमप्यनन्तरितदर्शनस्य चन्द्रापीडस्योपरि कथं तवेदृशी निःस्नेहता जाता ? तात, न भद्रकं त[१]आपतितम् । सर्व एव सुखं स्थापनीयो गुरुजनो दुःखं स्थापितः । न जानाम्येवं कृत्वा किं त्वया प्राप्तव्यम् ।' एतानि चान्यानि चान्तर्भवनगतां प्रत्यग्रतनयविर[२]हविह्वलां स्वयं देव्या विलासवत्या संस्थाप्यमानामपि मनोरमां विप्रलपन्तीमश्रौषीत् ।

तेन चातिकरुणेन तत्प्रलापविषेण विह्वल इव निद्रागमेनेव घूर्णमानो निश्चेतनतामनीयत। कथंकथमपि सहजसत्त्वावष्टम्भेनैव संस्तम्भितात्मा प्रविश्य पितुरपि लज्जमानो वदनमुपदर्शयितुमधोमुख एव निस्पन्दसर्वाङ्गेण मन्दराद्रिणेव शुकनासेन सह मथनावसानस्ति[३]मितमिव महार्णवं प्रणम्य पितरं दूरत एवोपाविशत् । उपविष्टं च तं क्षणमिव दृष्ट्वा राजान्तर्बाष्पभरग[४]द्गदेन ध्वनिनाभ्यर्णवर्ष इव जलधरोऽभ्यधात्—'वत्स चन्द्रापीड, जानामि ते स्वजीवितादपि समभ्यधिकां भ्रातुरुपरि प्रीतिम् । पीडा च सुखैकहेतोर्वल्लभजनादेवासंभाव्यायासं[५]मु-

---

दिनादारभ्य न दृष्टमेव न निरीक्षितमेव, तस्य ते तवाकस्मादेव निर्निमित्तादेव मयि विषय एवंविध एतादृशोऽयं कोपः कुतः । यद्यस्माद्धेतोरेवं पूर्वोक्तप्रकारेण परित्यज्य विहाय स्थितोऽसि । त्वं गतोऽपि सन्नागच्छेहि । त्वां भवन्तं शिरसा मस्तकेन । पादपतनेनेत्यर्थः । प्रसादयामि प्रसन्नीकरोमि । अपरोऽन्यः को मे ममास्ति। नामेति कोमलामन्त्रणे । एकस्माद्देशादन्यो देशो देशान्तरं तस्य परिचयः संस्तवस्तस्मादस्मासु मनोरमाप्रभृतिषु स्नेहः प्रेम मुक्तस्त्यक्तः । क्षणमपि समयमप्यनन्तरितमव्यवहितं दर्शनं यस्यैवंविधस्य चन्द्रापीडस्योपरीदृशी कथं तव निःस्नेहता निःप्रेमता जाता प्रादुर्भूता । तात पुत्र, ते तव भद्रकं कल्याणं नापतितं न जातम् । सर्व एव दुःखं स्थापितो गुरुजनः सुखं स्थापनीयः । एवं कृत्वैवं विधाय किं त्वया प्राप्तव्यं प्रापणीयम्, एवमहं न जानामि नाकलयामि । अन्तर्भवनं मध्यगृहं तत्र गतां प्राप्तां प्रत्यग्रो नवीनो यस्तनयविरहः सुतवियोगस्तेन विह्वलां विधुराम् । मनोरमाया विशेषणे । मनोरमां विप्रलपन्तीमश्रौषीदित्यन्वयस्तु प्रागेवोक्तः ।

**तेनेति ।** तेन पूर्वोक्तेनातिकरुणेनातिदीनेन तस्य मनोरमायाः प्रलापविषेण विलापरूपगरलेन विह्वल इव विधुर इव निद्रागमेनेव प्रमीलागमेनेव घूर्णमानो निश्चेतनतामनीयताप्राप्यत । कथंकथमपि महता कष्टेन सहजं निसर्गजं यत्सत्त्वं धैर्यं तस्यावष्टम्भेनैवाश्रयणेनैव संस्तम्भित आत्मा येनैवंभूतः प्रविश्य प्रवेशं कृत्वा पितुरपि जनकादपि वदनमाननमुपदर्शयितुमवलोकनं कारयितुं लज्जमानस्त्रपमानोऽधोमुख एव नीचैर्मुख एव निस्पन्दं निश्चेष्टं सर्वाङ्गं समग्रं शरीरं यस्यैवंविधेन मन्दराद्रिणेव स्वर्गिगिरिणेव शुकनासेन सह मथनस्यावसानं प्रान्तस्तेन स्तिमितो निश्चलो यो महार्णवः समुद्रस्तं रूपकमेवंभूतं पितरं जनकं प्रणम्य नमस्कृत्य दूरत एवोपाविशन्निषण्णो बभूव । उपविष्टं निषण्णं च तं क्षणमिव समयसदृशं दृष्ट्वा विलोक्यान्तर्बाष्पो मध्यनेत्राम्बु तस्य भरस्तेन गद्गदेन ध्वनिना शब्देनाभ्यर्णे समीपे वर्षो यस्यैवंभूतो जलधरो मेघ इव राजा तारापीडोऽभ्यधादवादीत् । हे वत्स हे चन्द्रापीड, अहं जानाम्याकलयामि ते तव स्वजीवितादपि स्वप्राणितादपि भ्रातुर्वैशम्पायनस्योपरि समभ्यधिकामुत्कृष्टां प्रीतिम् । पीडा च सुखस्यैकोऽद्वितीयो हेतुर्निदानमेवंविधाद्वल्लभजनादेवासंभाव्या[२]यासमतर्कित-

---

**टिप्प०**—1 समुद्रस्तत्सदृशमित्यर्थः । 2 सर्वोयमविचारः । 'वल्लभजनादेवाऽसंभाव्या समुत्पद्यते, तयैव हि न किञ्चिन्न क्रियते ?' इति पाठः । सुखहेतोर्वल्लभजनात् असंभावनीया या पीडा समुत्पद्यते तयैव किञ्चिन्न क्रियते इति न, अपि तु सर्वं क्रियते ( जनेन ) इति तदर्थः ।

---

पाठा०—१ समापतितम्. २ विरहशोकविह्वलम्. ३ स्तिमितमहार्णवम्. ४ गद्गद. ५ संभवति.

त्पद्यते । तथैव हि न किंचिन्न क्रियते । तज्जन्मनः स्नेहस्य वयसः शीलस्य श्रुतस्य गुरुजनानुशासनस्य विनयाधानस्य च सर्वस्यैवानुचितमिमं भ्रातुः सुहृदश्च ते वृत्तान्तमाकर्ण्य त्वद्दोषमाशङ्कते मे हृदयम् ।' इत्येवंवादिनो नरपतेर्वचनमाक्षिप्य युगपच्छोकामर्षाभ्यामन्धकारिताननः प्रावृडारम्भ इव तडिल्लतादुष्प्रेक्ष्यो विस्फूर्जितेनेव स्फुरिताधरेण शुकनासोऽब्रवीत्—

'देव, यदि चन्द्रमस्यूष्मा, दहने चातिशीतलत्वम्, अंशुमालिनि वा तमः, तमस्विन्यां वा दिवसः, महोदधौ वा शोषः, क्षितेरधारणं वा शेषे, परार्थानुद्यमो वा साधोः, अप्रियवचननिर्गमो वा स्वजनमुखात्संभाव्यते, ततो युवराजेऽपि दोषः । तत्किमेवमेवानिरूप्य तस्यानात्मजस्य मूढप्रकृतेर्दुर्जातस्य राजापथ्यकारिणो मातृपितृघातिनो मित्रद्रुहः कृतघ्नस्य कर्मचण्डालस्य महापातकिनः कृते कृतयुगावतारयोग्यमात्मनोऽपि गुणवन्तमत्युदारचरितं चन्द्रापीडमेवं संभावयति देवः । न ह्यतः परमपरं कष्टतमं किंचिदपि पीडाकारणम्, यद्गुणेषु वर्तमानो

---

प्रयासं यथा स्यात्तथोत्पद्यते संजायते । तथैव तेन प्रकारेणैव । हीति निश्चितम् । किंचिन्न क्रियते । अपि तु सर्वं क्रियत एव । यथैव प्रीतिस्तथैव दुःखमपि वल्लभजनादेवातर्कितं जायत इति भावः । तत्तस्माद्धेतोस्ते तव भ्रातुर्बान्धवस्य सुहृदो मित्रस्य च वृत्तान्तमुदन्तमाकर्ण्य श्रुत्वा त्वद्दोषं त्वद्वैगुण्यं मे मम हृदयं चेत आशङ्कत आरेकते । कीदृशं त्वद्दोषम् । जन्मन उत्पत्तेः, स्नेहस्य प्रेम्णः, वयसोऽवस्थायाः, शीलस्य स्वभावस्य, श्रुतस्य ज्ञानस्य, गुरुजनानुशासनस्य गुरुशिक्षायाः, विनयाधानस्य प्रश्रयस्थापनस्य, सर्वस्यैव समग्रस्यैवेममनुचितमयोग्यम् । इत्येवंवादिनो ब्रुवतो नरपते राज्ञो वचनं वाक्यमाक्षिप्य निराकृत्य युगपत्समकालं शोकः शुक्, अमर्ष ईर्ष्या, ताभ्यामन्धकारितमन्धकारवदाचरितमाननं मुखं यस्यैवंभूतो विस्फूर्जितेन दीप्तिमता स्फुरितः कम्पितो योऽधर ओष्ठस्तेन शुकनासोऽब्रवीदवोचत् । स्फुरितसाधर्म्यादाह—तडिल्लता विद्युल्लता तया दुष्प्रेक्ष्यो दुरालोकनीयः प्रावृडारम्भ इव वर्षाप्रारम्भ इव ।

किमुवाचेत्याह—**देवेति** । हे देव, यदि चन्द्रमसि चन्द्र ऊष्मा तापः, दहनेऽग्नावतिशीतलत्वमतिशिशिरत्वम्, अंशुमालिनि सूर्ये वा तमोऽन्धकारम्, तमस्विन्यां त्रियामायां वा दिवसः, महोदधौ समुद्रे वा शोषो जलनाशः, शेषेऽनन्ते क्षितेः पृथिव्या अधारणमवहनम्, साधोः सज्जनाद्वा परस्यान्यस्यार्थः कृत्यं तत्रानुद्यमोऽनुद्योगः, स्वजनमुखादात्मीयलोकवदनादप्रियवचनस्यानिष्टवाक्यस्य निर्गमो निःसरणम् । एतेभ्यो यद्येतानि संभाव्यन्ते संभावनाविषयीक्रियन्ते, ततो युवराजेऽपि चन्द्रापीडेऽपि दोषः संभाव्यते । तत्किमेवमेवानिरूप्याज्ञात्वा नात्मानं जानातीत्यनात्मज्ञस्तस्य, मूढा प्रकृतिः स्वभावो यस्य स तस्य, दुर्जातस्य दुर्भवस्य, राज्ञो नृपस्यापथ्यकारिणो हितविघातिनो मातृपितृघातिनो जननीजनकविध्वंसिनो मित्रद्रुहः सुहृद्घातिनः कृतं हन्तीति कृतघ्नस्तस्य कर्मणैव चण्डालः श्वपचस्तस्य महापातकिनो महापापकारिण एवंभूतस्य वैशम्पायनस्य कृते कृतयुगे योऽवतारोऽवतरणं तस्य योग्यमुचितमात्मनोऽपि भवतोऽपि गुणवन्तमौदार्यादिगुणयुक्तमत्युदारचरितमत्युत्कृष्टचरित्रं चन्द्रापीडं देव एवं संभावयति संभावनां करोति । **नहीति** । अतोऽदोषेषु दोषोद्भावनतः परमन्यदपरं किंचिदपि वस्तु कष्टतमं पीडाकारणं न । तदेव दर्शयन्नाह—**यदिति** । यद्गुणेषु वर्तमान इतरजनेनापि पाम-

**टिप्प०**—1 धिङ् मन्दम् । 'तडिल्लतादुष्प्रेक्ष्यः प्रावृडारम्भ इव (स्थितः) विस्फूर्जितेनेव वज्रनिर्घोषेणेव स्फुरिताधरेण (स्वरेण) शुकनासोऽब्रवीत् ।' इत्यर्थः । 'स्फूर्जथुर्वज्रनिर्घोषे' इत्यमरः । 2 नार्थो बुद्धः । अतःपरं न किंचिदपि पीडाकारणं यद् गुणेषु वर्तमानो (जनः) इतरजनेनापि दोषेषु संभाव्यते (दोषसंबद्धत्वेन तर्क्यते), गुरुजनेन तु संभाव्यतैव इति स्पष्टम् ।

पाठा०—१ तया. २ युगपदाक्षिप्य वचनम्. ३ एव. ४ वा शीतलत्वम्. ५ च. ६ महोदन्वति. ७ सज्जन. ८ अराजपथ्यकारिणः. ९ चाण्डालस्य. १० कष्टतरम्.

दोषेषु संभाव्यत इतरजनेनापि, किं पुनर्गुरुजनेन ? यो गुणी गुणैरेवाराधनीयः । कस्यापरस्यात्मा गुणवाननेन ज्ञापनीयः ? अपि च जन्मनः प्रभृति देवस्य देव्या विलासवत्याश्चाङ्कलालनया यो न गृहीतस्तस्य मरुत इव दुर्ग्रहप्रकृतेश्चन्द्रापीडोऽपि किं करोतु ? स्वयमेवोत्पद्यन्त एवंविधाः शरीरसंभवा महाकृमयः, सर्वदोषाश्रया महाव्याधयः, अन्तर्विषा महाव्यालाः, विनाशहेतवो महोत्पाताः, भुजङ्गवृत्तयो महावातिकाः, वक्रचारिणो महाग्रहाः, तमोमयाः प्रदोषाः, मलिनात्मकाः कुलपांसवः, निःस्नेहाः खलाः, निर्लज्जाः कृपणकाः, निःसंज्ञाः पशवोऽपि च, अकाष्ठा दहनाः, निर्गुणा जालिनः, अतीर्था जलाशयाः, निर्गौरवाः खरप्रकृतयः, अशिवमूर्तयो महाविनायकाधिष्ठिताः, ये सकलङ्काः कृपाणा इव स्नेहेनैव पारुष्यं लभन्ते । मलिनस्वभावाः करिकपोला इव दानेनैव मलिनतरतामापद्यन्ते । निर्वर्तयो मणि-

---

रलोकेनापि दोषेषु संभाव्यते । गुरुजनेनापि पितृलोकेनापि तु तत्संभावने किं पुनर्भण्यते किं पुनः कथ्यते । कर्तव्योपदेशमाह—**य इति** । यो गुणी गुणवान्स गुणैरेवाराधनीयः सेवनीयः । अनेन गुणिजनेन कस्यापरस्यात्मा स्वयं गुणवाञ्ज्ञापनीयः प्रकाशनीयः । **अपि चेति** । अपि च युक्त्यन्तरे । जन्मनः प्रभृत्युत्पत्तेरारभ्य देवस्य तारापीडस्य देव्या विलासवत्याश्चाङ्कलालनया क्रोडपरिपालनया यो न गृहीतो न स्वायत्तीकृतस्तस्य वैशम्पायनस्य मरुत इव वायोरिव दुर्ग्रहा प्रकृतिः स्वरूपं यस्यैवंभूतस्य चन्द्रापीडोऽपि किं करोतु । किं कुर्यादित्यर्थः । अथ वैशम्पायनोत्पत्तिवैगुण्यमाविष्कुर्वन्नाह—**स्वयमेवेति** । एवंविधा एतादृशाः शरीरसंभवा देहोत्पन्ना महाकृमयः क्षुद्रजन्तवः, सर्वदोषाणामाधारभूता महाव्याधयो महारोगाः, अन्तर्मध्ये विषं येषामेवंविधा व्यालाः सर्पाः, विनाशस्य विध्वंसस्य हेतवः कारणानि महोत्पाताः क्षितिकम्पनादिरूपाः, भुजङ्गवत्सर्पवद्वृत्तिर्वर्तनं येषामेवंविधा महावाता एव महावातिकाः स्वार्थे कः । वक्रगामित्वेन भुजङ्गसादृश्यम् । वक्रचारिणः कुटिलगामिनो महाग्रहा राहुप्रभृतयः, तमोमया अन्धकारप्रचुराः प्रदोषा यामिनीमुखानि, मलिनाः कश्मला आत्मानो येषां ते कुलस्यान्वयस्य पांसवो रेणवो दोषजनकाः, निस्नेहाः प्रीतिवर्जिताः खलाः, निर्लज्जा निस्त्रपाः कृपणका निष्कृपाः, निःसंज्ञा हेयोपादेयादिज्ञानविकलाः पशवोऽपि च तिर्यञ्चोऽपि च, अकाष्ठा दहना वह्नयः, निर्गुणा औदार्यादिगुणरहिता जालिनो वागुरिकाः, अतीर्था उत्तरणमार्गविकला जलाशयाः पानीयस्थानानि, निर्गौरवा महत्त्ववर्जिताः खरप्रकृतयः कठिनस्वभावाः, अशिवमूर्तयोऽकल्याणमूर्तयो महाविनायकैर्महाविघ्नैरधिष्ठिताः । इयं विरोधोक्तिः । येऽशिवमूर्तयो भवन्ति ते महाविनायकाधिष्ठिता न भवन्तीति महाविरोधः । एते सर्वेऽपि स्वयमेवात्मनैवोत्पद्यन्ते जायन्ते । तथा वैशम्पायनोऽपि, नतु मददृष्टस्य कारणतेत्यर्थः । ये जनाः कृपाणा इव खड्गा इव सकलङ्काः । जनपक्षे जनापवादाश्रयाः, खड्गपक्षे सच्चिह्नाः । स्नेहेनैव प्रेम्णा तैलादिना च पारुष्यं कठिनतां भजन्त आश्रयन्ति । 'स्नेहस्तैलादिकरसद्रव्ये स्यात्सौहृदेऽपि च' इति विश्वः । करिकपोला इव हस्तिगल्लातपरदेशा इव मलिनस्वभावाः कश्मलप्रकृतयः । दानेनैव मदेनैव । पक्षे वितरणेनैव । मलिनतरतामतिकृष्णतामापद्यन्ते प्राप्नुवन्ति । 'दानं गजमदे त्यागे' इति विश्वः । निर्वर्तयो वर्तिरहिता मणि-

---

टिप्प०—1 न बुद्धवानर्थम् । ये निर्गुणाः [ गुण(सूत्र)रहिताः ] ते जालिनः ( जालयुक्ताः ) कथं भवेयुः; जाले सूत्राणामपेक्षितत्वात् इति विरोधः । एते तु गुण( विनयादि )रहिताः जालिनः कपटकारिणश्च । 2 शिवमूर्तिभिन्नाः ।

---

पाठा०—१ अवबोधनीयः. २ असंभवाः. ३ क्षपणकाः.

प्रदीपा इव प्रसादेनैव ज्वलन्ति । अङ्गलग्ना भुजङ्गा[1] इव दाक्षिण्यपरिग्रहेणैवेतरे वामाः संजायन्ते । गुणमुक्ताः सायका इव सपक्षाश्रयेण फलेनैव दूरं विक्षिप्यन्ते । सरागाः पल्लवा इव दिवसारूढ्यैवापरज्यन्ते । भूतिपरामृष्टा दर्पणा इवाभिमुखेन सर्वं प्रतीपं गृह्णन्ति । अन्तरस्वच्छवृत्तयः सलिलाशया इव गाढावगाहनेनैव कालुष्यमुपयान्ति । ये च स्निग्धेष्वपि रूक्षाः, ऋजुष्वपि वक्राः, साधुष्वप्यसाधवः, गुणवत्स्वपि दुष्टप्रकृतयः, भर्तर्यप्यभृत्यात्मानः, रागिष्वपि क्रुद्धाः, निरीहादप्यादित्सवः, मित्रेष्वपि द्रोहिणः, विश्वस्तानामपि घातकाः, भीतेष्वपि प्रहारिणः, प्रीतिपरेष्वपि द्वेषिणः, विनीतेष्वप्युद्धताः, दयापरेष्वपि निर्दयाः, स्त्रीष्वपि शूराः, भृत्येष्वपि क्रूराः, दीनेष्वपि दारुणाः । येषां च विपरीतानां गुरव एव लघवः,

---

प्रदीपा इव रत्नसदृशेन्धना इव प्रसादेनैव प्रसन्नतयैव ज्वलन्ति दीप्यन्ते । 'प्रसादोऽनुग्रहे काव्यप्राणस्वास्थ्यप्रसत्तिषु' इति विश्वः । अङ्गलग्नाः शरीरसंसृष्टा भुजङ्गा इव सर्पा इव । इतरे पामरजना वामाः प्रतिकूलाः संजायन्ते । केन । दाक्षिण्यं लज्जा तेन परिग्रहः स्वीकारस्तेनैव । गुणः प्रत्यञ्चा औदार्यादिश्च । 'गुणः प्रदानरूपादौ मौर्व्यां सूदे वृकोदरे' इति विश्वः । ताभ्यां मुक्ता रहिताः सायका इव बाणा इव सह पक्षेण पिच्छेन स्वजनवर्गेण च वर्तमानः सहितः सपक्षः । स एवाश्रयो यस्यैवंभूतेन फलेन लोहादिमयेन साध्येन च । दूरं विक्षिप्यन्ते विकीर्यन्ते । 'पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः । केशादेः परतो वृन्दे बले सखिसहायके' इति विश्वः । रागो रक्तिमा प्रीतिश्च ताभ्यां सहवर्तमानाः सरागाः पल्लवा इव किसलया इव दिवसारूढ्यैव दिनवृद्ध्यैवापरज्यन्ते विरक्तीभवन्ति । 'रागोऽनुरक्ते मात्सर्ये क्लेशादौ लोहितादिषु' इति विश्वः । भूतिर्भस्म संपच्च ताभ्यां परामृष्टा आलिङ्गिता दर्पणा इवादर्शा इव । आभिमुख्येन संमुखत्वेन हेतुना सर्वं प्रतीपं पराङ्मुखं गृह्णन्ति ग्रहणं कुर्वन्ति । 'भूतिर्मातङ्गशृङ्गारे जातौ भस्मनि संपदि' इति विश्वः । 'वामं प्रसव्यं प्रतीपं प्रतिलोममपष्ठु च' इति हैमः । अन्तरे विचाले स्वच्छा निर्मला वृत्तिर्येषामेवंविधाः सलिलाशया इव पानीयाश्रया इव गाढमत्यर्थमवगाहनेनैवावलोकनेनैवातिपरिचयेनैव च कालुष्यं कलुषतामुपयान्ति गच्छन्ति । ये च स्निग्धेष्वपि स्नेहलेष्वपि रूक्षा अस्निग्धाः, ऋजुष्वपि सरलेष्वपि वक्रा वामाः, साधुष्वपि सज्जनेष्वप्यसाधवो दुष्टाः, गुणवत्स्वपि गुणोपयुक्तेष्वपि दुष्टप्रकृतयोऽशुभस्वभावाः, भर्तर्यपि स्वामिन्यप्यभृत्यात्मानोऽसेवकाः, रागिष्वपि रक्तेष्वपि क्रुद्धाः कोपवन्तः, निरीहादपि निःस्पृहादप्यादित्सवो ग्रहणेच्छवः, मित्रेष्वपि सुहृत्स्वपि द्रोहिणो द्रोहकर्तारः, विश्वस्तानामपि विश्वासप्रतिपन्नानामपि घातका हिंसकाः, भीतेष्वपि त्रस्तेष्वपि प्रहारिणः प्रहारकारिणः, प्रीतिपरेष्वपि स्नेहपरेष्वपि द्वेषिणो द्वेषवन्तः, विनीतेष्वपि विनयवत्स्वप्युद्धता दुर्विनीताः, दयापरेष्वपि कृपातत्परेष्वपि निर्दया निःकृपाः, स्त्रीष्वपि प्रमदास्वपि शूराः सुभटाः, भृत्येष्वपि सेवकेष्वपि क्रूराश्चण्डाः, दीनेष्वपि दुःखितेष्वपि दारुणा भीषणाः । **येषां चेति** । येषां विपरीतानां वामवृत्तीनां गुरव एव

---

**टिप्प०—**1 मणिरूपाः प्रदीपाः प्रसादेन स्वच्छतया ज्वलन्तीत्यर्थो बोध्यो विवेकिभिः । 2 धिङ् मन्दम् । कोऽत्र श्लेषनिर्वाहः ? 'अङ्गलग्ना भुजा इव' इत्येव पाठः । अङ्गसंबद्धा भुजा यथा एकस्य दाक्षिण्य-(दक्षिणत्व)व्यपदेशेन तदितरे अपरे भुजाः वामा वामभागवर्तिनो जायन्ते, तथैव इतरे पामरजनाः सारल्यस्वीकारेण प्रतिकूला जायन्ते । 3 तात्पर्यात्क्रोशान्दूरे । अन्तः अभ्यन्तरे अस्वच्छा कलुषा सपङ्का च वृत्तिर्येषां ते सलिलाशया इव गाढावगाहनेन अतिप्रणयेन अतिविलोडनेन च कालुष्यं मालिन्यम् आविलत्वं च भजन्त इत्यर्थः ।

---

पाठा०—१ भुजाः, २ निक्षिप्यन्ते.

नीचा एवोच्चैः, अगम्या एव गम्याः, कुदृष्टिरेव सद्दर्शनम्, अकार्यमेव कार्यम्, अन्याय एव न्यायः, अस्थितिरेव स्थितिः, अनाचार एवाचारः, अयुक्तमेव युक्तम्, अविद्यैव विद्या, अविनय एव विनयः, दौःशील्यमेव सुशीलता, अधर्म एव धर्मः, अनृतमेव सत्यम्। येषां[१] च क्षुद्राणां प्रज्ञा[२] पराभिसंधानाय न ज्ञानाय श्रुतम्[३], पराक्रमः प्राणिनामुपघाताय नोपकाराय, उत्साहो धनार्जनाय न यशसे, स्थैर्यं व्यसनासङ्गाय न चिरसंगताय, धनपरित्यागः कामाय न धर्माय। किं बहुना सर्वमेव येषां दोषाय न गुणाय।

तदसावपीदृश एव कोऽप्यपुण्यवानुत्पन्नो[४] यस्यैवं कुर्वतो मित्रमहं चन्द्रापीडस्य कथं तस्य द्रोहमाचरामीति नोत्पन्नं चेतसि। एवं कृते चलितवृत्तानां[५] शासिताऽवश्यं तारापीडो देवः पीडितान्तरात्मा मयि कोपं करिष्यतीत्येवमपि नाशङ्कितं मनसा। मातुरहमेवैको जीवितनिबन्धनम्, कथं मया विना वर्तिष्यत इत्येतस्य नृशंसस्य हृदये नापतितम्। पिण्डप्रदो वंशसंतानार्थमहमुत्पादितः पित्रा[६] कथमननुज्ञातस्तेन सर्वपरित्यागं करोमीत्येतदपि यथाजातस्य

---

शास्तार एव लघवो लघिष्ठाः, नीचा एवाधोवर्तिन एवोच्चैरुच्चाः, अगम्या एवासेव्या एव गम्याः सेव्याः, कुदृष्टिरेव कुदर्शनमेव सद्दर्शनं शोभनतमम्, अकार्यमेवाकृत्यमेव कार्यं कृत्यम्, अन्याय एवानीतिरेव न्यायो नीतिः, अस्थितिरेवामर्यादैव स्थितिर्मर्यादा, अनाचार एवानाचरणमेवाचार आचरणम्, अयुक्तमेवान्याय्यमेव युक्तं न्याय्यम्, अविद्यैवाज्ञानमेव विद्या ज्ञानम्, अविनय एवाप्रश्रय एव विनयः, दौःशील्यमेव दुःस्वभाव एव सुशीलता सुस्वभावता, अधर्म एवापुण्यमेव धर्मो वृषः, अनृतमेवासत्यमेव सत्यं सूनृतम्। येषां च क्षुद्राणां तुच्छबुद्धीनां श्रुतं ज्ञानं प्रज्ञा[1] प्रतिभा तस्यां पर उत्कृष्ट इत्यभिसंधानाय ज्ञानाय न ज्ञापनाय तत्त्वज्ञानाय, पराक्रमो बलं प्राणिनामुपघाताय विनाशाय नोपकाराय नोपकृतये, उत्साहः प्रगल्भता धनार्जनाय द्रव्यार्जनाय न यशसे न श्लोकाय, स्थैर्यं स्थिरता व्यसनानि मद्यादीनि तेषामासङ्गायासक्तये न चिरसंगताय न चिरमैत्रीहेतवे, धनपरित्यागो धनविसर्जनं कामाय मैथुनाय न धर्माय न सुकृताय। किं बहुना किं बहूक्तेन येषां दुरात्मनां सर्वमेव दोषाय वैगुण्याय न गुणाय हिताय।

तत्तस्माद्धेतोरसावपि वैशम्पायन ईदृश एव पूर्वोक्तसदृश एव कोऽप्यपुण्यवान्पापवानुत्पन्नः संजातः, यस्य वैशम्पायनस्यैवं कुर्वतश्चन्द्रापीडस्याहं मित्रं तस्य चन्द्रापीडस्य कथं द्रोहमाचरामि कुर्वे इति चेतसि नोत्पन्नं नागतम्। एवं कृते सति चलितवृत्तानां भ्रष्टाचाराणां शासिता शिक्षादायकस्तारापीडो देवोऽवश्यं पीडितान्तरात्मा संतापितस्वान्तो मयि विषये कोपं करिष्यति विधास्यतीत्येवमपि मनसा हृदयेन नाशङ्कितं नारेकितम्। मातुर्मनोरमाया जीवितनिबन्धनं[2] प्राणितदानमहमेक एव। कथं तर्हि मया विना मद्व्यतिरेकेण वर्तिष्यते वर्तनं करिष्यतीत्येतस्य वैशंपायनस्य नृशंसस्य निर्दयस्य हृदये चेतसि नापतितं नागतम्। वंशसंतानार्थमन्वयपरम्परायै अहं वैशम्पायनः पिण्डप्रदः पित्रा जनकेनोत्पादितो निष्पादितस्तेन पित्राननुज्ञातोऽदत्ताज्ञः सर्वपरित्यागं ( कथम् ) करोमि प्रण-

---

टिप्प०—1 अजानन्नपि यत्किञ्चित्प्रलपति। प्रज्ञा श्रुतं चेत्येकस्मिन्वाक्ये न संगृहीतम्। 'न ज्ञानाय', एतदुत्तरम् 'श्रुतं मायाजालाय, नोपशमाय।' इति पाठः। शास्त्रज्ञानं कपटप्रपञ्चाय न शान्तये, इति तदर्थः। 2 जीवितस्य निबन्धनं कारणमिति भावः।

---

पाठा०—१ तेषाम्. २ ज्ञानं पराति. ३ मायाजालाय; मालजालाय. ४ अपुण्य एवानुत्पन्नः नोपशमाय. ५ चलितवृत्तीनाम्. ६ पित्राहम्.

न बुद्धौ संजातम् । तदेवमसत्पथप्रवृत्तेन नष्टात्मना सुदूरमुद्भ्रान्तेन दुर्दर्शमदृष्टं[1] तावन्न नाम कुदृष्टिना दृष्टम् । दृष्टमपि येन न दृष्टं तस्याज्ञानतिमिरान्धस्य किं क्रियताम् । अपरमसौ तिर्यङ्महता यत्नेन शुक इव पाठितः पुष्टश्च देवेन । अथवा विनोददानात्तिरश्चामपि सफल एव शिक्षणायासो भवति । तेऽपि पोषिताः पोषितरि स्नेहमाबध्नन्ति । तेऽपि कृतं जानन्ति । तेऽपि परिचयमनुवर्तन्ते । तेषामपि सहजस्नेहो[2] मातापित्रोरुपरि दृश्यत एव । न पुनरस्य नष्टोभयलोकस्य पापकारिणो दुर्जातस्य, यस्य सर्वमेवाधस्ताद्गतम् । अपि चेदृशाचरितेन तेनाप्यवश्यमेव कस्यांचित्तिर्यग्योनौ पतितव्यं येन तावद्दुरात्मना[3] जातेन केवलं सुखं[4] न स्थापिताः सर्व एव वयम्, अपरमेवं[5] दुःखार्णवे निपातिताः[6] । सर्व एव ह्यनाक्षिप्तचेताः प्रवर्तते[7] स्वहिताय परहिताय च[8] । तस्य तु पुनरस्मानेवं दुःखं स्थापयतो न स्वहितं नापि च परहितम्[9] । किमनेनैवमात्मद्रुहा कृतमिति मतिरेतावन्न[10] बोधपदवीमवतरति । सर्वथा दुःखायैवास्माकं

---

यामीत्येतदपि यथाजातस्य मूर्खस्य बुद्धौ ज्ञप्तौ न संजातं नोत्पन्नम् । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः । तत्तस्माद्धेतोरेवममुना प्रकारेणासत्पथः कुमार्गस्तत्र प्रवृत्तेन नष्ट आत्मा यस्यैवंभूतेन सुदूरमतिदूरमुद्भ्रान्तेन प्राप्तभ्रमेण दुर्दैवं तावदादौ । नामेति कोमलामन्त्रणे । कुदृष्टिना कुत्सितज्ञानेन दुर्दृष्ट्या दशावस्था यस्मिन्नेतादृशमदृष्टं न दृष्टं नावलोकितम्[1] । येन दृष्टमप्यवलोकितमपि न दृष्टं न निरीक्षितम् । 'दशा वर्ताववस्थायां वस्त्रान्ते स्युर्दशा अपि' इति विश्वः । यदि वा 'अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम्' इत्यभिधानात्तदुभयमपि भयं न दृष्टमित्यर्थः । अथवाऽदृष्टं तु न दृश्यत एव । तदपि विपश्चिद्भिर्दृश्यते । अयं तु सुतरां मूर्खो येन तपस्विन्यगम्या भवतीति दृष्टमपि न दृष्टमित्यर्थः । तस्य वैशम्पायनस्याज्ञानमेव तिमिरं तमिस्रं तेनान्धस्य गताक्षस्य किं क्रियतां किं विधीयताम् । अपरमन्यदसौ तिर्यगविवेकविकलत्वात्पशुरूपो महता यत्नेन महोद्यमेन शुक इव कीर इव पाठितोऽध्यापितो देवेन तारापीडेन पुष्टश्च पुष्टीकृतश्च । अथवेति पक्षान्तरे । विनोददानात्क्रीडावितरणात्तिरश्चामपि सफल एव सार्थक एव शिक्षणायासः शिक्षाप्रयासो भवति । तेऽपि तिर्यञ्चोऽपि पोषिताः सन्तः पोषितरि पोषके स्नेहं प्रीतिमाबध्नन्ति । कुर्वन्तीत्यर्थः । तेऽपि तिर्यञ्चोऽपि कृतं जानन्ति । कृतज्ञा भवन्तीत्यर्थः । तेऽपि तिर्यञ्चोऽपि परिचयं संस्तवमनुवर्तन्तेऽनुगच्छन्ति । तेषामपि तिरश्चामपि मातापित्रोरुपरि सहजस्नेहः स्वाभाविकप्रेमा दृश्यत एव ईक्ष्यत एव । नष्टो गत उभयलोक इहलोकपरलोकौ यस्यैवंभूतस्य पापकारिणोऽपकर्तुर्जातस्य दुष्टोत्पन्नस्य । कु(सुम)पुत्रस्येत्यर्थः । अस्य वैशम्पायनस्य न पुनः प्रीतिः । मातापित्रोरुपरीत्यर्थः । अस्य वैशम्पायनस्य सर्वमेव विज्ञानादिकमधस्तादधो गतम् । अपि चेति युक्त्यन्तरे । तेनापि वैशम्पायनेनापीदृशाचरितेनेदृक्समाचरितेनाप्यवश्यमेव कस्यांचित्तिर्यग्योनौ पतितव्यं येन वैशम्पायनेन दुरात्मना दुष्टात्मना तावज्जातेनोत्पन्नेन सर्वे एव[2] वयं सुखं न स्थापिताः । अपरमन्यदेवममुना प्रकारेण दुःखार्णवे दुःखसागरे निपातिताः । दुःखातिशयेन ब्रुडिता इति भावः । सर्वे एव । जन इति शेषः । अनाक्षिप्तचेताः सुस्थिरान्तःकरणः स्वहिताय आत्महिताय, परहिताय इतरजनहितार्थं च प्रवर्तते यत्नमातनोति । तस्य वैशम्पायनस्य तु पुनः अस्मानेवं दुःखं स्थापयतो दुःखं कुर्वतो न स्वहितं नात्महितम्, नापि च परहितं नाप्यन्यहितम् । अनेनैव वैशम्पायनेनैवात्मद्रुहात्मघातकेन किं कृतं किं विहितमिति मतिरिति बुद्धिरेतावद्बोधपदवीं[3] ज्ञानमार्गं नावतरति

**टिप्प०**—1 दुःखेन दृष्टुं शक्यम् अदृष्टं शुभाशुभकर्मजनितं भाग्यं तु येन कुदृष्टिना न दृष्टम्, किन्तु येन दृष्टम् ( दर्शनविषयभूतं सदाचारादिकम् ) अपि न दृष्टं नालोचितमिति भावः । 2 सर्वे वयं केवलं सुखं न स्थापिता इत्येव न, अपि तु दुःखार्णवे पातिता इति सरलोऽप्यर्थः प्रहेलीकृतः । 3 'मतिरेव तावन्न' इत्येव पाठः ।

---

**पाठा०**—१ दुर्दर्शनेन; दुर्दर्शम्. २ सहजन्मस्नेहः. ३ दुरात्मजातेन. ४ दुःखम्. ५ अपि त्वेवंविधे. ६ निपतिताः. ७ प्रवर्तमानः. ८ वा प्रवर्तते. ९ न परहितमपि. १० एवमेतावत्; एव तावत्.

तस्य पापकर्मणो ग्रहोपसृष्टस्य जन्म ।' इत्युक्त्वा हेमन्तकालोत्पलिनीमिवोद्बाष्पां दृष्टि[1]मुद्वहन्, उद्वेपिताधरश्च बहिरलब्धनिर्गमेण स्फुटन्निवान्तर्मन्युपूरेण निःश्वसन्नेवावतस्थौ[2] ।

तदवस्थं च तं तारापीडः प्रत्युवाच—'एतत्खलु प्रदीपेनाग्नेः प्रकाशनम्, वासरालोकेन भास्वतः समुद्भासनम्, अवश्यायलेशैराह्लादनममृतांशोः, मेघाम्बुबिन्दुभिरापूरणं पयोधेः, व्यजनानिलैरतिवर्धनं[3] प्रभञ्जनस्य, यदस्मद्विधैः परिबोधनमार्यस्य । तथापि प्राज्ञस्यापि बहुश्रुतस्यापि विवेकिनोऽपि धीरस्यापि सत्त्ववतोऽप्यवश्यं दुःखातिपातेन विशुद्धमपि वर्षसलिलेन सर इव मानसं कलुषीक्रियते सर्वस्य । कलुषीकृते च मानसे किमिदमिति सर्वमेव दर्शनं नश्यति । न चित्तमालोचयति । न बुद्धिर्बुध्यते । न विवेकोऽपि विविनक्ति । येन ब्रवीत्यदः[4] । मत्तो लोकवृत्तमार्य एव सुतरां वेत्ति ।[5] किमस्ति कश्चिदसावियति लोके, यस्य निर्विकारं यौवनमतिक्रान्तम् ? यौवनावतारे हि शैशवेनैव सह गलति गुरुजनस्नेहः । वयसैव सहारोहत्यभिनवा प्रीतिः । वक्षसैव सह विस्तीर्यते वाञ्छा । बलेनैव सहोपचीयते मदः । दोर्द्वये-

---

नावगच्छति । सर्वथा सर्वप्रकारेणास्माकं दुःखायैव दुःखहेतोरेव तस्य पापकर्मणो दुष्कृतकारिणो ग्रहोपसृष्टस्य ग्रहग्रहिलस्य जन्मोत्पत्तिः । इत्युक्त्वा हेमन्तकालस्य[1] प्रसूनसमयस्योत्पलिनीं कमलिनीमिवोद्बाष्पां दृष्टिं दृशमुद्वहन् । हेमन्तकमलिन्यप्युद्बाष्पा स्यादतो दृक्साम्यम् । उद्वेपित उत्कम्पितोऽधर ओष्ठो यस्यैवंभूतश्च बहिरलब्धो निर्गमो निर्गमनं यस्यैवंभूतेनान्तर्मध्यवर्तिमन्युपूरेण क्रोधसमूहेन स्फुटन्निव द्वैधीभवन्निव निःश्वसन्नेव निःश्वासं मुञ्चन्नेवावतस्थौ[2] स्थितवान् ।

सैवावस्था दशा यस्यैतादृशं च तं शुकनासं तारापीडः प्रत्युवाच प्रत्यब्रवीत् । खल्विति निश्चयेन । एतत्प्रदीपेन गृहमणिनाग्नेर्वह्नेः प्रकाशनं प्रज्वालनम्, वासरालोकेन दिवसप्रकाशेन भास्वतः सूर्यस्य समुद्भासनमुत्तेजनम्, अमृतांशोश्चन्द्रस्यावश्यायलेशैस्तुहिनकणैराह्लादनं प्रमोदोत्पादनम्, पयोधेः समुद्रस्य मेघाम्बु जीमूतजलं तस्य बिन्दुभिः पृषद्भिरापूरणं भरणम्, प्रभञ्जनस्य वायोर्व्यजनानिलैस्तालवृन्तपवनैरतिवर्धनमतिवृद्धिप्रापणम्, यद्यस्माद्धेतोरस्मद्विधैरस्मत्सदृशैरार्यस्य भवतः शुकनासस्य परिबोधनं प्रतिबोधदानम् । **तथापीति ।** एवं सत्यपि प्राज्ञस्यापि बहुश्रुतस्याप्यनेकशास्त्रज्ञस्यापि विवेकिनोऽपि पृथगात्मवतोऽपि धीरस्यापि स्थिरप्रकृतेरपि सत्त्ववतोऽपि साहसवतोऽप्यवश्यं निश्चितं दुःखातिपातेन कृच्छ्रातिपातेन विशुद्धमपि निर्मलमपि सर्वस्य मानसं वर्षसलिलेन वृष्टिपानीयेन सर इव तटाक इव कलुषीक्रियते मलिनीक्रियते । कलुषीकृते च मानसे चित्ते किमिदमिति सर्वमेव समग्रमेव दर्शनं सामान्यज्ञानं नश्यति । न चित्तं मन आलोचयति विचारयति । न बुद्धिर्धिषणा बुध्यते । बोधं प्रयातीत्यर्थः । न विवेकोऽपि पृथगात्मभावोऽपि विविनक्ति पृथक्करोति । येन कारणेन । अदोऽव्यक्ते नपुंसकम् । ब्रवीति वक्ति । मत्तस्तारापीडाल्लोकवृत्तं जनचरितमार्य एव पूज्य एव भवान्सुतरामतिशयेन वेत्ति जानाति । किमिति प्रश्ने । कश्चित्कोऽपीयति लोक एतावति भुवनेऽस्ति विद्यते, यस्य निर्विकारं विकृतिरहितं यौवनं तारुण्यमतिक्रान्तं व्यतीतम्? यौवनावतारे हि तारुण्यप्रादुर्भावे हि शैशवेन बाल्येन सह गुरुजनेषु मातृपितृषु स्नेहः प्रीतिर्गलति क्षरति । वयसा सहावस्थया सहाभिनवा प्रत्यग्रा प्रीतिरारोहत्यारूढा भवति । वक्षसोरसा सह वाञ्छा स्पृहा विस्तीर्यते विस्तीर्णा स्यात् । बलेनैव पराक्रमेणैव सह मदो दर्प उपचीयत उपचयं प्राप्नोति ।

---

**टिप्प०—1** मार्ग-पौषमासात्मकः शीतकालः । **2** 'अव'पूर्वकस्य तिष्ठतेरात्मनेपदित्वमिति न विज्ञातं वराकेण । अस्तु. 'अवतस्थे' इत्येव पाठः ।

---

पाठा०—१ उदवहत्. २ अवतस्थे. ३ अभिवर्धनम्. ४ ब्रवीमि. ५ अन्यदा तु मत्तः. असदसत्तः.

नैव सह स्थूलतामापद्यते धीः । मध्येनैव सह कार्श्यमुपयाति श्रुतम् । ऊरुयुगलेनैव सहो-पचीते[1]ऽविनयः । श्मश्रुभिरेव सहोज्जृम्भते मलिनताहेतुर्मोहः । आकारेणैव सहाविर्भवन्ति हृदयाद्विकाराः । तद्यथा धवलमपि सरागं सर्वथा[2] दीर्घीभवदपि न दीर्घं पश्यति चक्षुः । अनुपहतेऽपि न प्रविशति गुरूपदेशः श्रोत्रे । स्त्रीरागिण्यपि न विद्यान्तरं विन्दति हृदये । न स्थैर्यमस्थिरप्रकृतौ तरलतायाम् । परित्याज्येषु व्यसनेष्वासङ्गेषु[3] विकाराणां च कारणं[4] प्रायः सरसता । सा च सर्वमेव जलप्रायं[5] कुर्वाणा वर्षातिवृद्ध्यै[6]वोपजायते । अपि च दिवसो दोषागमाय, दोषागमोऽनालोकाय, अनालोकोऽसद्दर्शनार्थम्, असद्दर्शनमविवेकाय, अवि-वेकोऽसन्मार्गप्रवृत्तये, असन्मार्गप्रवृत्तं च मोहान्धं चेतो भ्राम्यदवश्यमेव स्खलति[7] । स्खलिते चेतसि तल्लग्ना पतत्येव लज्जा । त्रपावरणशून्ये च हृदि प्रविश्य पदं कुर्वन्केन वा

दोर्द्वयेनैव बाहुयुगलेनैव सह धीर्बुद्धिः स्थूलतां स्थविष्ठतामापद्यते प्राप्नोति । मध्येनैव विलग्नेनैव कार्श्यं कृश-तामुपयाति प्राप्नोति श्रुतं ज्ञानम् । ऊरुयुगलेनैव सक्थियुग्मेनैव सहाविनयो हृदयमुपचीयते[1] पुष्टीभवति । श्मश्रु-भिरेव कूर्चैरेव सह मलिनताहेतुर्मोहो मौढ्यमुज्जृम्भते विकासं प्राप्नोति । आकारेण सहाकृत्या सह हृदया-द्विकारा विकृतय आविर्भवन्ति प्रकटीभवन्ति । तदेव दर्शयन्नाह—**तद्यथेति** । धवलमपि शुभ्रमपि चक्षु-र्नेत्रं सरागमेव सर्वथा दीर्घीभवदपि न पश्यति दीर्घम् । दीर्घदर्शित्वं न भवतीत्यर्थः । अनुपहतेऽप्यप्रतिहतेऽपि श्रोत्रे श्रवणे गुरूपदेशो गुरूणां हिताहितोपदेष्टॄणामुपदेशः सुकृताचरणनिर्देशो न प्रविशति न प्रवेशं करोति । स्त्रीषु रागो विद्यते यस्यैवंभूतेऽपि हृदय एकस्या विद्यायाः सकाशादन्या[2] विद्या विद्यान्तरं न विन्दति न लभते । अस्थिरप्रकृतौ[3] चलस्वभावायां तरलतायां चञ्चलतायां सत्यां न स्थैर्यं न स्थिरता । परित्याज्येषु वर्जनीयेषु व्यसनेषु सप्तसु, विकाराणां चानृतभाषकत्वादिरूपाणां चासङ्गेष्वासक्तिषु कारणं निदानं प्रायो बाहुल्येन सर-सता रसिकत्वं स्यात् । सा च सरसता सर्वमेव समग्रमेव जलप्रायं कुर्वाणा विदधाना वर्षातिवृद्ध्यैव । वर्षा वर्षणम् । पक्षे वर्षाणां वत्सराणामतिवृद्ध्यैवोपजायत उत्पद्यते । **अपि चेति** । अपि च प्रकारान्तरेण । दिवसा दोषागमाय दोषागमश्चानालोकायानिरीक्षणायाप्रकाशाय च स्यात् । अनालोकश्चासद्दर्शनार्थमसम्यग्ज्ञानार्थं च स्यात् । असद्दर्शनं चाविवेकायापृथगात्मने भवति । अविवेकश्चासन्मार्गप्रवृत्तयेऽसत्पथप्रवृत्तये स्यात् । अस-न्मार्गप्रवृत्तं च भ्राम्यदितस्ततः परिभ्रमन्मोहेनान्धं चेतोऽवश्यमेव स्खलति निपतति । स्खलिते च स्खलनं प्राप्ते चेतसि चित्ते सति तल्लग्ना चेतःसंबद्धा लज्जा त्रपा पतत्येव यात्येव । त्रपैव लज्जैवावरणमाच्छादनं तेन

टिप्प०—1 'अविनयः' इति यदा पाठः, तदाऽस्य 'धार्ष्ट्यम्' इत्यर्थः स्यात् । 2 धिगज्ञानम् । एका विद्या यद्यायाता तर्हि का न्यूनता? स्त्रीरागिण्यपि हृदये साधारणस्त्री एव अन्तरम् अवकाशं लभते, विद्यारूपा स्त्री न लभते इत्यर्थः । 3 अस्थिरस्य जनस्य प्रकृति( स्वभाव )भूतायां चञ्चलतायां स्थैर्यं न भवतीत्यर्थः । 4 सरसता रसिकता सजलता च । सा च सरसता सजलता सर्वं जलप्रायं कुर्वाणा वर्षा-णाम् ( वृष्टीनाम् ) अतिप्रवृद्धतया जायते । एवं सरसता अर्थात् रसिकता सर्वं जडप्रायं कुर्वाणा वर्षाणाम् ( उपभोगकालभूतानां वत्सराणाम् ) अतिप्रवृद्ध्या भवतीत्यर्थः । 5 टीकाकारेण श्लेषश्चूर्णित एव । दिवसो दोषाया ( रात्रेः ) आगमाय, तथा रसिकंमन्यानां दिवसो दोषाणाम् आगमाय । दोषाणां दोषायाश्च आगमः अनालोकाय अज्ञानाय अदर्शनाय च । अनालोकः अदर्शनम् अज्ञानं च, असद्दर्शना-र्थम् । असतां मन्दानां दुश्चरितानामिति यावत् दर्शनार्थम् असत्यदर्शनार्थं च । अविवेकः आत्मानात्म-विवेकः कार्येषु विवेकाभावश्च । एवमग्रेऽनुसंधेयम् ।

पाठा०—१ अपचीयते विनयः, अपचीयते हृदयम्, उपचीयते हृदयमविनयः. २ सर्वदा. ३ आसङ्गः. ४ कारणानाम्. ५ जनं वशप्रायम्. ६ वर्षेति वृध्या. ७ स्खलिते च.

विनिवारितो दुर्निवारः सर्वा[1]विनयहेतुः कुसुमधन्वा ? विलसति च कुसुममार्गणे केन कार्येण छिद्रसहस्राणि न भवन्ति; यैः सत्त्वमेवाधस्ताद्व्रजति । सत्त्वे चाधो गते किमाश्रित्य न ग[2]लति शीलम् ? किम[3]वलम्बनं विनयस्य ? किं करोत्वनाधारं धैर्यम् । क्व पदमाधत्तां धीः । क्व समाधानमाबध्नात्ववष्टम्भः । केन वावष्टभ्य ब[4]लान्निश्चलीकृतं मनः । विप्रतिपद्यमानानि केन नियन्त्रितानीन्द्रियाणि । जगन्निन्द्यानि केन निवारितानि दुश्चरितानि । केन वालोकभूतेन तमोभिवृद्धिहेतुरुत्सारितो दोषाभिषङ्गो दृष्टेरुपहन्ता । किं वा दृश्यतामसति बहुदर्शित्वे । बहुदर्शित्वं च तावतः कालस्यैवासंभवात्कुतो भवतु प्रथमे वयसि ? येनान्वयव्यतिरेकाभ्यां निश्चित्य वर्जयति मलिनताम् । अपि च परि[5]णामेऽपि पुण्यवतां केषांचिदेव हि केशैः सह धवलिमानमापद्यन्ते चरितानि । तन्मोह[6]विषयमहाहौ मदविकारगन्धमा[7]तङ्गे दुर्विलसितैकराज्ये रतिनिद्रावेश्मनि नवरागपल्लवोद्गमली[8]लान्तविशेषदुश्चरितचक्रवर्तिनि तारु-

---

शून्ये रिक्ते च हृदि हृदये प्रविश्य प्रवेशं कृत्वा पदं स्थानं कुर्वन्विदधत्केन वा पुरुषेण सर्वस्य समग्रस्याविनयस्याप्रश्रयस्य हेतुः कारणं कुसुमधन्वा कंदर्पो दुर्निवारो दुःखेन निवारयितुं शक्यो विनिवारितो निषिद्धः । कुसुममार्गणे कंदर्पे विलसति विलासं कुर्वति सति केन कार्येण हेतुभूतेन छिद्रसहस्राणि विवरसहस्राणि न भवन्ति न संजायन्ते, यैश्छिद्रसहस्रैः सत्त्वमेव साहसमेवाधस्तादधो व्रजति । सत्त्वे चाधो गते किमाश्रित्य किमाश्रयणं कृत्वा शीलं वृत्तं न गलति न क्षरति । विन[1]यस्य प्रश्रयस्य किमवलम्बनं किमाधारः । अनाधारमनाश्रयं धैर्यं सत्त्वं च किं करोतु । किं कुर्यादित्यर्थः । धीर्बुद्धिः क्व कुत्र पदं स्थानमाधत्तां विदधताम् । अव[2]ष्टम्भ उद्योगः । 'अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि । आरम्भस्तु त्वरायां स्यादुद्यमे वधदर्पयोः' इति विश्वः । अवलम्बनं वा क्व समाधानं सुखमाबध्नातु निबध्नातु । केन वावष्टभ्य वशीकृत्य बलाद्धठान्मनश्चेतो निश्चलीकृतम् । केन विप्रतिपद्यमानान्युन्मार्गप्रवृत्तानीन्द्रियाणि करणानि नियन्त्रितानि वशीकृतानि । केन जगन्निन्द्यानि विश्वगर्हितानि दुश्चरितानि दुश्चेष्टितानि निवारितानि दूरीकृतानि । आलोकभूतेन प्रकाशरूपेण केन वानिर्दिष्टनाम्ना दोषाणां व्यसनादीनां रात्रेश्चाभिषङ्गः संबन्ध उत्सारितो दूरीकृतः । कीदृशो दोषाभिषङ्गः । तमोऽज्ञानं तमिस्रं च तयोरभिवृद्धिस्तस्य हेतुः कारणम् । पुनः कीदृक् । दृष्टेर्दृशो ज्ञानस्य चोपहन्ता उपघातकः । असति बहुदर्शित्वे किं वा दृश्यतां किमवलोक्यताम् । तावतः कालस्यैवेयतः समयस्यैवासंभवाद्बहुदर्शित्वमनेकपदार्थावलोकित्वम् । तच्च प्रथम आद्ये वयस्यवस्थायां कुतो भवतु कुतो जायताम् । येन सति सद्भावोऽन्वयः, असत्यसद्भावो व्यतिरेकः, ताभ्यां निश्चित्य निर्णयं कृत्वा मलिनतां वाच्यतां वर्जयति दूरीकरोति । **अपि चेति** । अपि च युक्त्यन्तरे । प्रदर्शने परिणामेऽपि । वार्धकेऽपि । हीति निश्चये । पुण्यवतां सुकृतवतां केषांचिदेव, न तु सर्वेषाम्, केशैः कचैः सह चरितानि चरित्राणि धवलिमानं श्वेतिमानमापद्यन्ते प्राप्नुवन्ति । 'सुकृती पुण्यवान्धन्यः' इति हैमः । सर्वस्य स्खलितं स्यादिति प्रदर्शयन्नाह—**तन्मोहेति** । तदिति हेत्वर्थे । मोहो मूर्च्छा, विषयाः शब्दस्पर्शरूपरसगन्धाख्याः, त एव महाहयो महासर्पा यस्मिन् । मदो मुद् मोहसंभेदस्तस्य विकारा विकृतयस्त एव गन्धमातङ्गा गन्धेभा यस्मिन् । दुर्विलसितं दुश्चेष्टितं तदेवैकमद्वितीयं राज्यमाधिपत्यं यस्मिन् । रतिः कामाभिलाषः, निद्रा प्रमीला, तयोर्वेश्मनि गृहे नवरागो नवीनानुरागः स एव पल्लवः

---

**टिप्प०—1** 'गलिते च शीले' इति पाठ आवश्यक एव प्रक्रमस्य भङ्गप्रसङ्गात् । 2 अवष्टम्भः स्थैर्यमित्यर्थः, अन्यत्तु भ्रममात्रम् ।

---

पाठा०—१ मकरकेतुः. २ गलतु. ३ गलिते च शीले किम्. ४ बलम्. ५ अतिपुण्य. ६ मोहविषविषयमहाहौ; मोहविषयविषमहाहौ. ७ मातङ्ग. ८ लीलातर.

ण्यावतारे सर्वस्यैव विषमतरविषयमार्गपतितस्य स्खलितमापतति । किमेवमार्येण लालनीयस्य पालनीयस्य शिशुजनस्योपर्यावेशो गरीयान्गृहीतः, यदनुचितमपत्यस्नेहस्याक्रोशगर्भमेवमुक्तम् । स्वप्नायमानानामपि यद्गुरूणां मुखेभ्यो निष्क्रामति शुभमशुभं वा शिशुषु तदवश्यं फलति । गुरवो हि दैवतं बालानाम् । यथैवाशिषो गुरुजनवितीर्णा वरतामापद्यन्ते, तथैवाक्रोशाः शापताम् । तद्वैशम्पायनमुद्दिश्य कोपावेशादेवमतिपरुषमभिदधत्यार्ये महती मे चेतसः पीडा समुत्पन्ना । स्वयमारोपितेषु तरुषु यावदुत्पद्यते स्नेहः, किं पुनरङ्गसंभवेष्वपत्येषु । तदुत्सृज्यतामयममर्षवेगो वैशम्पायनस्योपरि । विरूपकं तु तेन न किंचिदप्याचरितम् । सर्वपरित्यागं कृत्वा स्थित इत्येतदपि कारणमविज्ञाय किमेवं दोषपक्षे निक्षिपामः ।

---

किसलयं तस्योद्गमलीलाऽन्ते पर्यवसाने येषामेतादृशानि विशेषदुश्चरितानि विशेषदुश्चेष्टितानि तेषां चक्रवर्तिनि सार्वभौम एवंविधे तारुण्यस्य यौवनस्यावतारे प्रादुर्भावे विषमतरः कठिनतरो यो विषयमार्गः कामपन्थास्तत्र पतितस्य स्रस्तस्य सर्वस्यैव समग्रस्यैव, अर्थाज्जनस्य, स्खलितमापतति । स्खलना स्यादित्यर्थः । तथार्येण पूज्येन भवता शुकनासेन लालनीयस्य लालनां कर्तुं योग्यस्य पालनीयस्य रक्षां कर्तुं योग्यस्यैवंविधस्य शिशुजनस्य बालजनस्योपरि किमेवं किंनिमित्तं गरीयान्गरिष्ठ आवेशो गृहीत आत्तः, यद्यस्माद्धेतोरपत्यस्नेहस्य प्रसूतिप्रेम्णोऽनुचितमयोग्यमाक्रोशोऽभिषङ्गः स एव गर्भे मध्ये यस्यैतादृशमेवमुक्तं कथितम् । एतादृशं वाक्यं सर्वथा न वाच्यमित्याशयेनाह—**स्वप्नायेति** । स्वप्नायमानानामपि निद्रायमाणानामपि गुरूणां हिताहितप्राप्तिपरिहारोपदेष्टॄणां मुखेभ्यो वदनेभ्यः शिशुषु बालेषु यच्छुभमशुभं वा निष्क्रामति निःसरति तदवश्यं निश्चयेन फलति । तच्छब्दवाच्योऽर्थः शिशूनां संजायत इत्यर्थः । तन्नियामकमाह—**गुरव इति** । हीति निश्चये । बालानां शिशूनां गुरवो मातृपितरो दैवतं परममिष्टम् । अत्रार्थे दृष्टान्तं प्रतिपादयन्नाह—**यथैवेति** । यथैव येन प्रकारेणैव गुरुजनैर्वितीर्णा दत्ता आशिषो मङ्गलसमेतान्याशीर्वचनानि वरतां 'वाञ्छितं वृणीष्वे'ति प्रसन्नताप्रेरितं तपस्विनां वचो वरस्तस्य भावस्तत्ता तामापद्यन्ते भजन्ते । 'तपोभिरिष्यते यत्तु देवतादेर्वरो मतः' इति कात्यः । तथैव तेन प्रकारेणैवाक्रोशास्तिरस्काराः शापतां 'तवानिष्टं भूयादिति क्रोधाविष्टतपस्विनां वचः शाप'स्तस्य भावस्तत्ता तां प्रतिपद्यन्ते । तत्तस्मात्कारणाद्वैशम्पायनमुद्दिश्याश्रित्य कोपस्य क्रुध आवेशादभिनिवेशादेवार्ये परुषं कठिनमभिदधति कथयति सति मे मम चेतसो हृदयस्य महती गुर्वी पीडा समुत्पन्ना प्रादुर्भूता । तन्निदानमाविष्कुर्वन्नाह—**स्वयमिति** । स्वयमात्मना रोपितेष्वूत्तमेषु तरुषु वृक्षेषु यावत्स्नेह उत्पद्यते प्रादुर्भवति । अङ्गसंभवेषु शरीरसमुत्पन्नेष्वपत्येषु प्रजासु किं पुनर्भण्यते किं कथ्यते । तत्तस्माद्धेतोर्वैशम्पायनस्योपर्ययं प्रत्यक्षोपलभ्यमानोऽमर्षवेगः क्रोधसंभव उत्सृज्यतां त्यज्यताम् । वैशम्पायनस्य निर्दोषतां प्रकटयन्नाह—**विरूपकमिति** । तु पुनरर्थे । तेन वैशम्पायनेन न किंचिदपि विरूपकं विरुद्धमाचरितं सेवितम् । सर्वपरित्यागस्तु दूषणं न भवतीत्याशयेनाह—**सर्वपरित्याग इति** । सर्वपरित्यागं कृत्वा स्थित इत्येतदपि कारणं निदानमविज्ञायाज्ञात्वा किमेवमेव दोषपक्षे वैगुण्यकक्षायां वयं निक्षिपामो निक्षेपं कुर्मः । तस्य

---

**टिप्प०**—1 'एवम्' इत्थमित्युचितम् । 2 'तावत्' इत्येव वाक्यस्यालंकारभूतः प्रयुज्यमानो दृश्यते, न 'यावत्' । इह च 'यावत्' इति केवलं वाक्यशोभायै । अत एव 'तावत्' इत्येव पाठः ।

---

पाठा०—१ लालनीयस्य; लालनीयपालनीयस्य. २ वा तदवश्यम्. ३ स्वारोपितेषु; स्वयं रोपितेषु. ४ तावत्. ५ निक्षिप्तः.

कदाचिद्[1]गुणीभवत्येवमयमविनयनिष्पन्नो दोष एव । आनीयतां तावदसौ । बुध्यामहे किमर्थमयमेवंविधस्तस्य वयसोऽनुचितोऽपि संवेग उत्पन्नः । ततो यथायुक्तं विधास्यामः ।'

इत्युक्तवति तारापीडे पुनः शुकनासोऽभ्यधात्—'अत्युदारतया वत्सलत्वाच्चैवमादिशति देवः । अन्यदत:[2]परं किमिवास्य विरूपकं भवेत्, य[3]द्युवराजमुत्सृज्य क्षणमप्यन्यत्रावस्थानमात्मेच्छया चेष्टितम् ।'

इत्युक्तवति शुकनासे कशयेवान्तस्ताडितो दोषसंभावनयाऽनया पितुरुद्बाष्पदृष्टिरुपविष्ट एवोपसृत्य चन्द्रापीडः शनैः शनैः शुकनासमवादीत्—'आर्य, यद्यपि निरु[4]क्तितो वेद्मि न मदीयेन दोषेण नागतो वैशम्पायन इति, तथापि तातेन संभावितमेव । कस्य वापरस्य संभावना नोत्पन्ना । मिथ्यापि तत्तथा यथा गृहीतं लोकेन, विशेषतो गुरुणा । प्रसिद्धिर-

---

अपि गुणे निक्षेपमाशङ्कयन्नाह—**कदाचिदिति** । एवं तादृक्कारणमपेक्ष्यायमविनयनिष्पन्नोऽप्रश्रयजनितो दोष एव कदाचिद्गुणीभवति । गुणः स्यादित्यर्थः । अथ कर्तव्यमाह—**आनीयतामिति** । तावदादावसौ वैशम्पायन आनीयतामानयनविषयीक्रियतामिति बुध्यामहे जानीमहे । वयमिति शेषः । अयमेवंविध ईदृशस्तस्य वैशम्पायनस्य वयसोऽवस्थाया अनुचितोऽप्ययोग्योऽपि किमर्थं किंप्रयोजनाय संवेगः सर्वपरित्यागलक्षण उत्पन्नः प्रादुर्भूतः । ततस्तत्प्रयोजनं ज्ञात्वैव यथायुक्तं यथोचितं तद्विधास्यामः करिष्यामः ।

इति पूर्वप्रतिपादितप्रकारेण तारापीड उक्तवति सति पुनर्द्वितीयवारं शुकनासोऽभ्यधादब्रवीत् । किमभ्यधादित्याशयेनाह—**अतीति** । अत्युदारस्य भावोऽत्युदारता तयातिस्फारतया वत्सलत्वाच्च हितकारित्वाच्च देवस्तारापीड एवं पूर्वप्रतिपादितमादिशति कथयति । अनेन विरुद्धं न कृतमिति नृपोक्तं प्रतिक्षिपन्नाह—**अतःपरमिति** । अतःपरमन्यद्भवदपि किमिव विरूपकं विरुद्धं भवेत् । एतदेव विशदीकुर्वन्नाह—**यदिति** । यद्यस्माद्धेतोर्युवराजं चन्द्रापीडमुत्सृज्य त्यक्त्वात्मेच्छया स्वातन्त्र्येण क्षणमन्यत्रान्यस्मिन्स्थलेऽवस्थानमुपवेशनमाचेष्टितमाचरितम् । अतःपरं विरुद्धं किं भवेदित्यर्थः ।

इति शुकनास उक्तवति कथितवति सत्यनया पितुर्दोषसंभावनया कशयेव चर्ममय्या रज्ज्वेवान्तर्मध्ये ताडितो व्यथित उद्गूर्ध्वं बाष्पो नेत्राम्बु यस्यामेवंविधा दृष्टिर्यस्यैवंभूत उपविष्ट एवासीन एवोपसृत्योपसरणं कृत्वा चन्द्रापीडः शनैः शनैर्मन्दं मन्दं शुकनासमवादीदब्रवीत् । किमवादीदित्याशयेनाह—**आर्य इति** । हे आर्य हे पूज्य, यद्यपि निरुक्तितस्त्वदुक्तित एवाहं वेद्मि जानामि । न मदीयेन मामकीनेन दोषेण वैगुण्येन वैशम्पायनो नागत इति, तथाप्येवं सत्यपि तातेन पित्रा संभावितमेव संभावनाविषयीकृतमेव । मद्वैगुण्यमिति शेषः । अपरस्य कस्य वा संभावना नोत्पन्ना । मिथ्यासंभावने न दोष इत्याशयेनाह—**मिथ्यापीति** । मिथ्याप्यसत्यमपि तत्तथा सत्यमेव । तत्रार्थे हेतुमाह—**यथेति** । यथा गृहीतं यथा श्रुतं लोकेन जनेन, विशेषतो गुरुणा पित्रादिना, निर्णीतेरर्वाक्तत्तथैव स्यात् । परमार्थतस्तदसत्यं जनप्रसिद्धौ किं स्यादित्याशयेनाह—**प्रसिद्धिरिति** । दोषो वैगुण्यम्, गुणा औदार्यादयः, त एवाश्रय आधारो यस्या एवंविधा प्रसिद्धिः प्रवादोऽफलवती निःप्रयोजनात्रास्मिँल्लोकेऽयशसेऽकीर्तये स्यात् । ननु दोषाश्रयप्रसिद्धेरयशोजनकत्वं प्रसिद्धं परं गुणाश्रय-

---

टिप्प०—1 हठेन ग्रन्थग्रथनकन्था, नन्विति स्वयमुत्पादितः शङ्काभासश्च निरर्थक एव । 'प्रसिद्धिरत्राऽयशसे यशसे वा दोषगुणाश्रया फलति' इत्येव पाठः । दोषगुणौ आश्रित्य उत्पन्ना प्रसिद्धिः ( कश्चित्प्रवादः ) अत्र संसारे अयशसे यशसे वा फलति कल्पते । दोषाश्रया प्रसिद्धिः अयशसे, गुणाश्रया तु यशसे प्रभवतीति सुस्पष्ट आशयः ।

---

पाठा०—१ गुणो भवति. २ इतः परम्. ३ यदद्य. ४ निरुक्तः.

त्रायशसे यशसे वा दोषगुणाश्रया वाऽफलवती। परत्र फलदायी कुत्रोपयुज्यते परमार्थः? तदस्या दोषसंभावनायाः प्रायश्चित्तमार्यो दापयतु मे वैशम्पायनानयनाय गमनाभ्यनुज्ञां तातेन। नान्यथा मे दोषशुद्धिर्भवति। किं कारणम्। अनागते तु वैशम्पायने तातस्यानया संभावनया नापगन्तव्यम्। अपगते च मयि वैशम्पायनेनागन्तव्यम्। यद्यसावन्येनानेतुमेव पार्येत तदा तातस्याप्यनुल्लङ्घनीयवचनैरवनिपतिसहस्रैरानीत एव स्यात्। तदार्यः कारयतु मे गमनानुज्ञया प्रसादम्। न च तुरंगमैर्गच्छतो मे दृष्टायां भूमौ स्वल्पोऽपि गमनपरिक्लेशः। वैशम्पायनमादायागतमेव मामवधारयत्वार्यः। अपि च बाह्यखेदादसह्योऽन्तःखेद एवैतद्वियोगजन्मा। अनुपदमेव स्कन्धावारमादायागच्छतीत्यमुना हेतुना विना तेनागतोऽहम्। अन्यथा जन्मनः प्रभृति कदा मया गतं स्थितं क्रीडितं हसितं पीतमशितं सुप्तं प्रबुद्धमुच्छ्वसितं

---

प्रसिद्धेः कथं तज्जनकत्वमिति चेन्न। अयं गुणवान्प्रसिद्धः, परमनेनेत्थं विहितम्, तर्हि महान्पापिष्ठः, इत्याद्यकीर्तिसद्भावात्। परत्र परलोके फलदायी फलप्रदः परमार्थस्तत्त्वं कुत्रोपयुज्यते कुत्रोपयोगी स्यात्। न कुत्रापीत्यर्थः। दोषसंभावनाया नैर्मल्योपायं प्रदर्शयन्नाह—**तदस्या इति**। तदिति तत्तस्माद्धेतोरस्याः पूर्वोक्ताया दोषसंभावनाया वैशम्पायनस्यानयनं तस्मै गमनं यानं तस्याभ्यनुज्ञाज्ञा तां प्रायश्चित्तं प्रायः पापं तस्य चित्तं विशोधनम्। 'प्रायः पापं विनिर्दिष्टं चित्तं तस्य विशोधनम्' इति कृष्णभट्टचां प्रक्रियाटीकायाम्। तातेनार्यो दापयतु। प्रेरणे द्विकर्तृकता प्रसिद्धैवेत्यदोषः। एतद्व्यतिरेकेण न शुद्धिरित्याशयेनाह—**नान्यथेति**। मे मम दोषशुद्धिर्नान्यथा नान्यप्रकारेण भवति। तत्र किं निदानमित्याह—**किमिति**। तत्र किं कारणं किं निमित्तम्। तदेव स्पष्टयन्नाह—**अनागत इति**। तु पुनरर्थे। अनागतेऽनायाते वैशम्पायने तातस्य पितुरनया संभावनया नापगन्तव्यं न दूरीभवितव्यम्। अपगते च याते च मयि सति वैशम्पायनेनागन्तव्यम्। आयातव्यमित्यर्थः। अन्यः कश्चित्तदानयनं करिष्यतीत्यारेकां दूरीकुर्वन्नाह—**यदीति**। यद्यसौ वैशम्पायनोऽन्येन मदितरेणानेतुमेव पार्येत शक्येत, तदा तातस्यापि तारापीडस्याप्यनुल्लङ्घनीयमनाक्रमणीयं वचनं वचो यैरेवंभूतैरवनिपतिसहस्रैरानीत एव स्यात्। तत्तस्मादार्यो गमनस्यानुज्ञयाज्ञया प्रसादं प्रसन्नतां कारयतु। तातेनेति शेषः। तव गच्छतो भूयान्क्लेशो भावीत्याशयेनाह—**नचेति**। दृष्टायां निरीक्षितायां भूमौ तुरंगमैरश्वैर्गच्छतो व्रजतो मे मम स्वल्पोऽपि गमनपरिक्लेशः प्रयाणखेदो न च स्यात्। आर्यो भवान्वैशम्पायनमादाय गृहीत्वागतमेवायातमेव मामवधारयत्वाकलयतु। बाह्यखेदापेक्षयाभ्यन्तरखेदाधिक्यं प्रदर्शयन्नाह—**अपि चेति**। बाह्यखेदादेतद्वियोगजन्मा वैशम्पायनविरहोत्पन्नोऽन्तःखेद एवासह्योऽसहनीयः। तर्हि तं मुक्त्वा त्वमेकाकी कथमत्रागत इत्याशङ्कां निरस्यन्नाह—**अनुपदमिति**। अनुपदमनुचरणन्यासं स्कन्धावारं सैन्यमादाय गृहीत्वागच्छत्यायाति। इत्यमुना हेतुना निमित्तेन तेन वैशम्पायनेन विनाहमागत आयातः। **अन्यथेति**। उक्तवैपरीत्य आजन्मनः प्रभृति जन्मदिनादारभ्य कदा वैशम्पायनेन विना मया गतं यातम्, स्थितमवस्थितम्, क्रीडितं रमितम्, हसितं हास्यं कृतम्, पीतं पानं कृतम्, अशितं भक्षितम्, सुप्तं शयितम्,

---

**टिप्प०**—1 दोषसंभावनायाः प्रायश्चित्त(शोधन)भूतां वैशम्पायनानयनाय गमनाभ्यनुज्ञां तातेन (पितृद्वारा) आर्यो मे दापयतु, इति स्पष्टा योजना प्रहेलिका कृताऽत्र। 2 'एभिरवनिपतिसहस्रैः' इत्येव पाठः। 'एभिः' इत्यनेन स्कन्धावारस्थितैरेतैरानेतुं शक्य एवाऽभविष्यदित्यर्थः स्फुटीभवति। टीकाकारस्तु यथाजातः।

---

**पाठा०**—१ आगत. २ नागन्तव्यम्. ३ एभिरवनिपति. ४ अभ्यनुज्ञया. ५ कष्टायाम्; दुष्टायाम्. ६ स्वप्नेऽपि ७ एवमेतद्वियोगजन्मा; एव मे तद्वियोगजन्मा. ८ अन्यदा.

वा विना वैशम्पायनेन ? यच्च श्रुत्वा तस्मादेव प्रदेशान्न गतोऽस्मि, तेन्मा तेनैव तुल्योऽभूव-मिति । तदप्रतिगमनदोषाद्रक्षन्तु मामार्याः ।'

इत्यभिहितवति चन्द्रापीडेऽन्तःपीडोपरागरक्ते रक्ततामरसानुकारिणि मुखे सपक्षपातां षट्पदावलीमिव दृष्टिं निवेश्य 'एवं गमनाय विज्ञापयति युवराजः । किमाज्ञापयति देवः' इति शनैःशनैः शुकनासो राजानमप्राक्षीत् ।

तथा पृष्टश्च शुकनासेन किंचिदिव ध्यात्वा तारापीडः प्रत्यवादीत्—'आर्य, मया ज्ञात-मेतेष्वेव दिवसेषु संपूर्णमण्डलस्येन्दोर्ज्योत्स्नामिव करावलम्बिनीं वत्सस्य वधूं द्रक्ष्यामीति, यावदयमपरोऽन्तर्हिताशापथो जलदकाल इव प्रत्यूहकारी वैशम्पायनवृत्तान्तो विलोमप्रकृतिना विधात्राऽन्तरा पातितः । यथा चायुष्मताभिहितमेवैतत् । न तमन्यः शक्नोत्यानेतुम् । न च तेन विनायमत्र स्थातुम् । तदवश्यमेव तावन्निस्तरितव्यो व्यसनार्णवोऽमुना पोतेन । वैश-

---

प्रबुद्धं जागरितम्, उच्छ्वसितं श्वसितं वा । **यच्चेति** । यद्वैशम्पायनवृत्तान्तं श्रुत्वाकर्ण्य तस्मादेव प्रदेशात्तद्वृत्तान्तश्रवणस्थलादेवाहं न गतोऽस्मि । तदहं मा तेनैव वैशम्पायनेन तुल्यः सदृशोऽभूवं भवेयमिति । गुरोर्निदेशव्यतिरेकेण तदवस्थाने मद्गमने चोभयोः सादृश्यं स्यादिति भावः । तत्तस्माद्धेतोरप्रतिगमनदोषात्तत्पृष्ठिप्रधावनाभावदूषणादार्या मां रक्षन्तु ।

इत्यभिहितवतीत्युक्तवति चन्द्रापीडेऽन्तःपीडान्तर्व्याधिस्तस्या उपराग उपप्लवस्तेन रक्ते लोहितेऽत एव रक्तं यत्तामरसं कमलं तस्यानुकारिण्यनुकरणशील एवंविधे मुख आनने सह पक्षपातेन वाजपातेन तदङ्गीकारेण वा वर्तते या सा सपक्षपाता तामेतादृशीं षट्पदावलीमिव भ्रमरपङ्क्तिमिव दृष्टिं दृशं निवेश्य संस्थाप्यैवं पूर्वोक्तप्रकारेण गमनाय यात्रायै युवराजश्चन्द्रापीडो विज्ञापयति विज्ञप्तिं करोति । देवो भवान्किमाज्ञापयति किमाज्ञां दत्त इति शनैःशनैर्मन्दंमन्दं शुकनासो राजानं तारापीडमप्राक्षीदपृच्छत् ।

शुकनासेन तथा तेनैव प्रकारेण पृष्टश्च किंचिदिव क्षणमात्रं ध्यात्वा विमृश्य तारापीडः प्रत्यवादीत्प्रत्यब्रवीत् । किमब्रवीदित्याशयेनाह—**आर्य इति** । हे आर्य हे पूज्य, इति मया यावज्ज्ञातमवबुद्धम् । इतियोग्यमाह—**एतेष्विति** । एतेष्वेव वर्तमानेष्वेव दिवसेषु वासरेषु संपूर्णमण्डलस्यान्यूनबिम्बस्येन्दोश्चन्द्रस्य ज्योत्स्नामिव करावलम्बिनीं हस्तावलम्बिनीं वत्सस्य पुत्रस्य । चन्द्रापीडस्येत्यर्थः । वधूं स्नुषां द्रक्ष्याम्यवलोकयामि । तावदयमपरो भिन्नोऽन्तर्हितस्तिरोहित आशा वाञ्छा दिक्च तस्याः पथो मार्गो येनैवंभूतो जलदकाल इव मेघसमय इव प्रत्यूहकारी विघ्नकारी विघ्नजनको वैशम्पायनवृत्तान्तो मन्त्रिसुतोदन्तो विलोमप्रकृतिना प्रतिकूलाभिप्रायेण विधात्रा विधिनान्तरा मध्ये पातित आनीतः । विज्ञप्तिसाफल्यं दर्शयन्नाह—**यथेति** । यथा येन प्रकारेण चायुष्मता भवताभिहितं प्रतिपादितं तदेतदेवमेवेत्थमेव । तदेव दर्शयति—**नेति** । तं वैशम्पायनोऽन्य आनेतुमानयनं कर्तुं न शक्नोति । तेन वैशम्पायनेन विनायं चन्द्रापीडोऽत्र स्थातुमत्रावस्थानं कर्तुं न च शक्नोति । तत्तस्माद्धेतोरमुना गमनलक्षणेन पोतेन प्रवहणेन तावदादावश्यमेव व्यसनार्णवः कष्टसमुद्रो निस्तरितव्यो निस्तारं प्रापयितव्यः । तव प्रसूरपि गमनप्रतिबन्धकारिणी भविष्यतीत्यपि नाशङ्कनीयमित्याह—**वैशम्पा-**

---

**टिप्प०—1 'रक्षतु मामार्यः' इत्येकवचनमेव ग्रन्थशैलीसमुचितम्, पूर्वमपि 'अवधारयत्वार्यः' इत्यादि प्रोक्तम् । 2 'सपयःपाताम्बुदावलीमिव' इत्यपि पाठो मनोरमः । पयःपातेन ( वर्षणेन ) सहितां मेघावलीमिव, स्रवदश्रुजलामिति यावत् । 3 करेभ्यः किरणेभ्य आपातिनी ज्योत्स्ना । करे हस्ते आपातिनी ( कृतपाणिग्रहणा ) वधूः ।**

---

पाठा०—१ यश्च. २ तस्मात्. ३ चन्द्रापीडेऽन्तःपीडोपरागरक्तामरसानुकारिणि; चन्द्रापीडेऽपि रागरक्ते रक्ततामरसानुकारिणि. ४ षट्पदालीम्; अम्बुदावलीम्. ५ एव. ६ मे दुष्कृतिना.

म्पायनप्रत्यानयनाय चावश्यं देव्यपि विलासवती विसर्जयिष्यत्येवैनमिति निश्चयो मे। तद्यातु। किंत्वतिदूरं वत्सेन गन्तव्यम्। तद्गणकैः सहादरादार्यो दिवसं लग्नं च गमनायास्य निरूपयतु, संविधानं च कारयतु' इत्येतदभिधाय शुकनासमुद्बाष्पलोचनश्चिरमिव चन्द्रापीडमालोक्याहूय च विनयावनम्रमंसदेशे शिरसि बाह्वोश्च पाणिना स्पृशन्नादिशत्—'वत्स, गच्छ त्वमेव प्रविश्याभ्यन्तरं मनोरमासहिताया मातुरावेदयात्मगमनवृत्तान्तम्।' इत्यादिश्य चन्द्रापीडमात्मना शुकनासमादाय स्वभवनमयासीत्।

चन्द्रापीडस्तु तामक्लिष्टवर्णां कादम्बरीसंवरणस्रजमिव गमनाभ्यनुज्ञां हृदयेनोद्वहन्प्रहृष्टान्तरात्माप्यपहर्षदृष्टिः प्रविश्य कृतनमस्कारो मातुः समीपे समुपविश्यात्मदर्शनद्विगुणीभूतवैशम्पायनविरहशोकविह्वलां मनोरमामाश्वास्यावादीत्—'अम्ब, समाश्वसिहि। वैशम्पायनानयनाय तातेन मे गमनमादिष्टम्। तत्कतिपयदिवसान्तरितं वैशम्पायनाननदर्शनोत्सवम[3]विकल्पं त्वं मामेव विसर्जय'। सा त्वेवमभिहिता प्रत्युवाच—'तात, किमात्मगमनवचसा

---

**यनेति।** वैशम्पायनं प्रत्यानयनाय चानेतुं विलासवती देव्यप्येनं चन्द्रापीडं विसर्जयिष्यत्येव प्रेषयिष्यत्येवेति मे मम निश्चयो निर्णयोऽस्ति। तद्यातु गच्छतु। किंतु वत्सेन मत्सुतेनातिदूरमतिदविष्ठं गन्तव्यं यातव्यम्। तत्तस्माद्धेतोर्गणकैर्ज्योतिर्विद्भिः सहादरादार्यो भवानस्य चन्द्रापीडस्य गमनाय दिवसं दिनं लग्नं च मेषादिकं निरूपयतु विचारयतु। च पुनरर्थे। संविधानं गमनसामग्रीं च कारयतु विधापयतु। इत्येतत्पूर्वोक्तं शुकनासमभिधायोक्त्वा उदूर्ध्वं बाष्पो हर्षाश्रु ययोरेतादृशे लोचने यस्यैवंभूतस्तारापीडश्चिरमिव चन्द्रापीडमालोक्य निरीक्ष्याहूय चाह्वानं कृत्वा च विनयेनावनम्रमवनतं चन्द्रापीडमंसदेशे स्कन्धदेशे शिरस्युत्तमाङ्गे बाह्वोर्भुजयोश्च पाणिना हस्तेन स्पृशन्स्पर्शं कुर्वन्नादिशत्। हे वत्स, गच्छ व्रज त्वमेव, मनोरमासहिताया मातुर्विलासवत्या अभ्यन्तरम्। गृहस्येति शेषः। प्रविश्य प्रवेशं कृत्वात्मगमनवृत्तान्तमावेदय ज्ञापय। इति चन्द्रापीडमादिश्येत्याज्ञां दत्त्वात्मना स्वयं शुकनासमादाय गृहीत्वा स्वभवनं स्वगृहमयासीदगच्छत्।

चन्द्रापीडस्त्वक्लिष्टः शोभनो वर्णो रक्तपीतादिरक्षरं वा यस्यामेवंविधां कादम्बर्याः संवरणमङ्गीकरणं तस्य स्रजमिव मालामिव तां गमनाभ्यनुज्ञां यात्रानिर्देशं हृदयेन चेतसोद्वहन्धारयन्प्रहृष्टः प्रमुदितोऽन्तरात्मा यस्यैवंभूतोऽप्यपगतो हर्षो यस्या एतादृशी दृष्टिर्यस्यैवंविधः प्रविश्य प्रवेशं कृत्वा कृतनमस्कारो विहितप्रणामो मातुर्जनन्याः समीपे यथोचितप्रदेशे समुपविश्योपवेशनं कृत्वात्मनः स्वस्य दर्शनेनावलोकनेन द्विगुणीभूतो द्विगुणतां प्राप्तो वैशम्पायनस्य विरहः शोकस्तेन विह्वलां व्याकुलामेवंभूतां मनोरमामाश्वास्याश्वासनां कृत्वावादीदवोचत्। किमुवाचेत्याह—हे अम्ब हे मातः, समाश्वसिह्याश्वासनां कुरु। यतो वैशम्पायनस्यानयनं तदर्थं तातेन पित्रा मे मम गमनं यानमादिष्टं कथितम्। तत्तस्माद्धेतोः कतिपये च ये दिवसा वासरास्तैरन्तरितं व्यवहितं वैशम्पायनस्याननदर्शनं वक्त्रनिरीक्षणं तत्रोत्सवमुत्सवभूतमविकल्पं कल्पनारहितं मामेव[2] त्वं विसर्जय गमनाज्ञां देहि। **सा त्विति।** सा मनोरमैवममुना प्रकारेणाभिहिता प्रोक्ता सती प्रत्युवाच प्रत्यब्रवीत्। किमुवाचेत्याह—**तातेति।** हे तात हे पुत्र, आत्मगमनवचसा स्वप्रयाणवाक्येन किं मां समाश्वासयसि समाश्वासनां करोषि। मे मम। खल्विति निश्चये। त्वयि भवति तस्मिंश्च वैशम्पायने को विशेषस्तदि-

---

**टिप्प०—1** सोयं स्थूलबुद्धेर्विलासः। अभ्यन्तरम् (प्रासादस्य) प्रविश्य, आत्मवृत्तान्तं मातुरावेदय इत्येव ग्रन्थाशयः। 2 'मामेव' इति निरर्थकप्रायम्। अत एव '°त्सवं मामविकल्पं विसर्जय' इत्येव पाठो मनोरमः।

---

**पाठा०—१** उद्वाष्पलोचनम्. २ इह. ३ उत्सुकं मामविकल्पं विसर्जय त्वम्.

मां समाश्वासयसि । कः खलु मे त्वयि तस्मिंश्च विशेषः । तदेकधा तमेकं न पश्यामि कठिनहृदया[१] । त्वयि पुनर्गते च[२] दयितस्यादर्शने जीवितप्रतिबन्धहेतुभूतं त्वद्दर्शनं तदपि दूरीभवति । तन्न गन्तव्यम् । वत्स[३], एकेनापि हि युवयोरावां[४] पुत्रवत्यौ[५] द्वे अपि । नागतो नामासौ निष्ठुरात्मा' इत्युक्तवत्यां मनोरमायां विलासवती धीरमुवाच—'प्रियसखि, तव मम चैवमेतद्यथा त्वया[६] प्रोक्तम् । अयं पुनर्वैशम्पायनेन विना कं पश्यतु ? तदास्ताम् । किमेतन्निवारयसि[७] । वारितेनाप्यनेन नैव स्थातव्यम् । मन्ये च पित्राप्ययमेतदेवाकलय्य गमनायानुमोदितः । तद्यातु । वरमावाभ्यां कतिपय[८]दिवसाननयोरप्यदर्शनकृतान्क्लेशाननुभूतान्न[९] पुनरस्य वैशम्पायनानवलोकन[१०]दुःखदीनं दिने दिने वदनमीक्षितुम्[११] । तदुत्तिष्ठ । गच्छावो गमनसंविधानाय वत्सस्य चन्द्रापीडस्य ।' इत्यभि[१२]दधत्येव मनोरमां हस्ते गृहीत्वोत्थाय चन्द्रापीडेनानुगम्यमाना निजावासमयासीत् ।

---

तरत्वलक्षणः । तदेव स्पष्टीकुर्वन्नाह—**तदिति** । तत्तस्माद्धेतोरेकधैकवारं तमेकं वैशम्पायनं कठिनहृदया[1] न पश्यामि नावलोकयामि । त्वयि भवति पुनर्गते प्रस्थिते च दयितस्य[2] वैशम्पायनस्यादर्शनेऽनिरीक्षणे जीवितस्य जीवनस्य प्रतिबन्धहेतुभूतं गमनविघ्नभूतं त्वद्दर्शनं त्वदवलोकनं तदपि तत्र गतत्वेन दूरीभवति । तन्न गन्तव्यम् । हे वत्स हे पुत्र, एकेनापि हि युवयोश्चन्द्रापीडवैशम्पायनयोरावां विलासवतीमनोरमे पुत्रवत्यौ द्वे अपि । नामेति कोमलामन्त्रणे । असौ वैशम्पायनो निष्ठुरात्मा निर्दयप्रकृतिर्नागतो नायातः । इत्युक्तवत्यामिति भाषितवत्यां मनोरमायां वैशम्पायनजनन्यां सत्यां विलासवती चन्द्रापीडसवित्री धीरं यथा स्यात्तथोवाचाब्रवीत्—हे प्रियसखि, तव भवत्या मम विलासवत्या एवमेतत्तथैवेदं यथा येन प्रकारेण त्वया प्रोक्तम् । पुनरयं चन्द्रापीडो वैशम्पायनेन विना कं पश्यत्ववलोकयतु । तत्तस्माद्धेतोरास्तां तिष्ठतु । किमेतद्गमनं निवारयसि निवारणं करोषि । वारितेनाप्यनेन चन्द्रापीडेन नैव स्थातव्यम् । नैवात्र स्थेयमित्यर्थः । **मन्ये इति** । अहं मन्ये जानामि । एतदेव पूर्वोक्तमेवाकलय्याकलनां कृत्वायं चन्द्रापीडो गमनाय यात्रायै अनुमोदितोऽभ्यनुज्ञातः । तत्तस्मात्कारणाद्यातु व्रजतु । आवाभ्यां मनोरमाविलासवतीभ्यां कतिपयदिवसान्यावत् । अनयोरपि चन्द्रापीडवैशम्पायनयोरप्यदर्शनकृतानवलोकनजनितान[3]नुभूताननुभवविषयीकृतान्क्लेशान्विषादान्वरं शुभम्, परं वैशम्पायनस्यानवलोकनमनिरीक्षणं तस्माद्यद्दुःखं कृच्छ्रं तेन दीनं सकरुणमस्य चन्द्रापीडस्य दिने दिने वदनमाननमीक्षितुं न पुनर्वरं शुभम् । तदिति हेत्वर्थे । उत्तिष्ठोत्थानं कुरु । वत्सस्य चन्द्रापीडस्य गमनसंविधानाय प्रस्थानसामग्र्यै आवां गच्छावो व्रजाव इत्यभिदधती कथयन्त्येव मनोरमां हस्ते पाणौ गृहीत्वादायोत्थायोत्थानं कृत्वा चन्द्रापीडेनानुगम्यमानानुयायमना निजावासं स्वभवनमयासीदगात् ।

---

**टिप्प०**—1 'कठिनहृदयम्' इत्येव पाठः । तस्मिन् गते, तं कठिनहृदयम् (आक्रोशः, यो हि निःस्नेहतया स्थितः) एकं न पश्यामि । 2 अविचाररमणीयोयं पाठः । न हि पुत्रस्यार्थे विशेष्यरूपेण दयितप्रयोगः स्वारसिकः । तस्मात्–'यदपि तस्यादर्शने जीवितप्रतिबन्धभूतम्' इत्येव पाठः । अर्थस्तु टीकातो ज्ञायेतैव । 3 'आवाभ्याम् अनुभूतान् क्लेशान् वरम्' इति पाठो लोकोत्तरबुद्धिगम्यः । अत एव 'वरमावाभ्यां कतिपयदिवसाननयोरप्यदर्शनकृताः क्लेशा अनुभूताः, न पुनरस्य वैशम्पायनाऽनवलोकनदुःखदीनं दिने दिने मुखमीक्षितम्' इत्येव पाठः । कतिपयदिवसान् यावत् आवाभ्यामनुभूताः अनयोः अदर्शनकृताः क्लेशा अपि वरम्, वैशम्पायनानवलोकनदुःखेन दीनं दिने दिने अस्य (चन्द्रापीडस्य) मुखम् ईक्षितं न पुनर्वरम्, इति तदर्थः ।

---

**पाठा०**—१ कठिनहृदयम्. २ यदपि तस्यादर्शने. ३ वत्सेन. ४ पुत्रेण. ५ द्वे पुत्रवत्यौ. ६ त्वयोक्तम्. ७ एवं निवारयसि; एवं वारयसि. ८ कतिपयात्. ९ कृताननुभूतान्; कृताः क्लेशा अनुभूताः. १० वैशम्पायनाननावलोकन. ११ ईक्षितम्. १२ इत्येवं.

चन्द्रापीडोऽपि मातुः समीपे गमनालापेनैव क्षणमिव स्थित्वा गृहमगात् । तत्र चापनीतसमायोगो गमनायोत्ताम्यता हृदयेन गणकानाहूय रहस्याज्ञापितवान्—'यथा विना [१]परिलम्बेन मे गमनं भवति, तथा भवद्भिरार्यशुकनासाय पृच्छते ताताय वा दिनमावेदनीयम्' इति । एवमादिष्टास्ते [२]ऽयज्ञापयन्—'देव, यथा सर्वे एव ग्रहाः स्थिताः, [३]तथास्मन्मतेन देवस्य गमनमेव वर्तमानेन शस्यते । अपरमपि कर्मानुरोधाद्राजेच्छैव कालः । [४]तत्रापि न कार्यमेवाहर्निरूपणया । राजा कालस्य कारणम् । यस्यामेव वेलायां [५]चित्तवृत्तिः सैव वेला सर्वकार्येषु' इति विज्ञापिते मौहूर्तिकैः पुनस्तानब्रवीत्—'तातेनैवमादिष्टमिति ब्रवीमि । अन्यदा[६]त्यन्तिकेषु कार्येषु कार्यपराणां [७]प्रतिक्षणोत्पादिषु च दिवसनिरूपणैव कीदृशी । तत्तथा [८]कथयिष्यत यथा श्व एव मे गमनं भवेत्' इति । 'देवः प्रमाणम्' इत्यभिधाय गतेषु च तेषु शरीरस्थितिकरणायोदतिष्ठत् । [९]निर्वर्तितशरीरस्थितिं च मौहूर्ति[१०]कांस्ते पुनः प्रविश्य शनैर्न्यवेदयन्—कृतोऽस्माभिर्देवादेशः । सिद्धश्च तनयविरहविक्लवतयार्यशुकनासस्य । तदतिक्रान्ते श्वस्तनेऽ-

---

चन्द्रापीडोऽपि मातुर्जनन्याः समीपे गमनालापेनैव यात्रावार्तयैव क्षणमिव स्थित्वा गृहमगादगमत् । तत्र तस्मिन्गृहेऽपनीतो दूरीकृतः [1]समायोगः संबन्धो येनैवंभूतो गमनाय प्रस्थानाय हृदयेन स्वान्तेनोत्ताम्यतोत्तपता गणकाञ्ज्योतिर्विद आहूयाकार्य रहस्येकान्त आज्ञापितवानाज्ञां दत्तवान् । किमाज्ञापितवानित्याशयेनाह—**यथेति** । यथा मे मम परिलम्बेन विना गमनं प्रस्थानं भवति, तथा भवद्भिर्युष्माभिः पृच्छत आर्यशुकनासाय ताताय वा दिनं दिवसमावेदनीयं कथनीयम् । एवमादिष्टाः प्रोक्तास्ते ज्योतिर्विदो व्यज्ञापयन्विज्ञप्तिं चक्रुः । कां विज्ञप्तिं कृतवन्त इत्याशयेनाह—**देव इति** । हे देव हे स्वामिन्, यथा येन प्रकारेण सर्वे एव ग्रहाः सूर्यादयो लग्ने स्थितास्तथा तेन प्रकारेणास्मन्मतेन देवस्य भगवतो गमनमेव प्रस्थानमेव [2]वर्तमानेन कालेन शस्यते श्लाघ्यते । मुहूर्ताभावेऽपि गमनप्रकारं प्रदर्शयन्नाह—**अपरमपीति** । कर्मानुरोधात्कार्याग्रहाद्राज्ञो नृपस्येच्छैव कालो मुहूर्तः । तत्रापीच्छामुहूर्तनिरूपणया शुभाशुभदिनगवेषणया न कार्यं न प्रयोजनम् । तत्र हेतुमाह—**राजेति** । राजा नृपः कालस्य मुहूर्तस्य कारणम् । यस्यामेव वेलायां समये चित्तवृत्तिर्मनःप्रवृत्तिः सर्वकार्येषु समग्रकृत्यकरणेषु सैव वेलाऽवसरः । मौहूर्तिकैर्गणकैरिति विज्ञापिते विज्ञप्ते सति पुनर्द्वितीयवारं तान्गणकानब्रवीदकथयत् । तातेन पित्रैवं दिवसगवेषणादिकमादिष्टं कथितमिति हेतोरहं ब्रवीमि कथयामि । अन्यदान्यस्मिन्काल आत्यन्तिकेष्ववश्यकरणीयेषु तथा प्रतिक्षणं प्रतिसमयमुत्पादिषूत्पत्तिकरणशीलेषु कार्येषु च कार्यपराणां कृत्यतत्पराणां दिवसनिरूपणा दिनगवेषणैव कीदृशी । तत्तस्माद्धेतोस्तथा तेन प्रकारेण यूयमित्य[3]कथयिष्यत न्यवेदयिष्यत । यथा श्व एवागामिदिन एव मे मम गमनं चलनं भवेदिति । देवः प्रमाणं यथा भवदनुशासनमित्यभिधायेत्युक्त्वा तेषु गणकेषु गतेषु प्रयातेषु सत्सु च शरीरस्थितिकरणाय देहव्यापारकृत उदतिष्ठदुत्थितो बभूव । [4]निर्वर्तिता संपादिता शरीरस्थितिर्येनैवंभूतं तं पुनस्ते मौहूर्तिकाः प्रविश्य प्रवेशं कृत्वा शनैर्मन्दंमन्दं [5]न्यवेदयन्विज्ञपयन् । अस्माभिर्ज्योतिर्विद्भिर्देवस्य भवत आदेशो निदेशः कृतो विहितः । तनयस्य वैशम्पायनस्य विरहो वियोगस्तेन विक्लवतया विह्वलतयार्यशुकनासस्य च सिद्धो निष्पन्नः । ततस्तस्माद्धेतोरतिक्रान्ते व्यतीते श्वोभवः श्वस्तनस्तस्मिन्नहन्यागामिदिवसे रात्रौ निशायामितोऽस्मात्प्रदेशाद्देवेन भवता

---

टिप्प०—1 अपनीतसमायोगः उन्मुक्तपरिच्छदः । 2 'वर्तमाने न शस्यते' वर्तमाने काले न शस्यते इति पाठः । 3 'कथयिष्यथ' इत्येव पाठः । 4 'निर्वर्तिता' इति पाठः । 5 व्यज्ञपयन् ।

---

पाठा०—१ विलम्बन. २ व्यज्ञपयन्. ३ तस्मात्. ४ तत्र न. ५ चित्तनिर्वृतिः. ६ आत्ययिकेषु. ७ प्रतीक्षण. ८ कथयथ; कथयिष्यथ. ९ निर्वर्तित. १० ते प्रविश्य.

हनि रात्रावितः प्रस्थातव्यं देवेन' इत्यावेदिते तैः 'साधु कृतम्' इति[1] मुदितचेतास्तानभिष्टुत्य दृष्टिविषयवर्तिनीमेव कादम्बरीं च वैशम्पायनं च मन्यमानः, अप्रविष्टायामेव[2] पत्रलेखायां परापतामीत्यग्रप्रधावितेनावधारयंश्चेतसा,[3] चतुःसमुद्रसारभूतानिन्द्रायुधरयानुगामिनस्तुरंगमानगणेयानवगणिततुरंगमगमनखेदानुत्साहिनो राजपुत्रांश्च निरूपयन्ननन्यकर्मा तं दिवसमेकां च यामिनीं कथंकथमप्यस्थात्।

अथानुरक्तकमलिनीसमागमाप्राप्तिसंतापादिव समं दिवसेनास्तमुपगतवति तेजसांपतौ, तेजःपतिपतनाच्चितानलमिव संध्यारागमपराशया सह विशति पश्चिमे गगनभागे,[4] संध्यानलस्फुलिङ्गनिकर इव स्फुरति तारागणे, दिवसविरामान्मूर्च्छागमेनेव तमसा निमीलयमानेषु दिङ्मुखेषु, निवासाभिमुखमुखरेषु वियद्वियोगदुःखादिव कृतान्तप्रलापेषु[5] वयःसमूहेषु, जनितप्रकाशं जन्मेवालोक्य[6] दोषागमं निरालोकं गर्भमिव तमःप्रविष्टे पुनर्जीवलोके, निजालोकाद्विकाशितपूर्वदिग्वधूवदने जन्मान्तरागत इवोदयगिरिवर्तिनि नक्षत्रसमागमसुखमनुभवति भगवति भूयोभूयः स्वकान्तिनिर्भरान्निष्कलङ्क इव नक्षत्रनाथे, विस्पष्टायां निशीथिन्याम्, प्रस्थान[7]-

---

प्रस्थातव्यं चलितव्यम्। तैर्गणकैरित्यावेदित इति ज्ञापिते साधु कृतं शुभं विहितमिति मुदितचेताः प्रमुदितमनास्ताञ्ज्योतिर्विदोऽभिष्टुत्य स्तुतिं कृत्वा दृष्टिविषयवर्तिनीमेव प्रत्यक्षगतामेव कादम्बरीं वैशम्पायनं च मन्यमानो ज्ञायमानोऽप्रविष्टायामेवाप्राप्तायामेव पत्रलेखायामहं परापतामि गच्छामीत्यग्रप्रधावितेन पुरस्तात्त्वरितगत्या चलितेन चेतसा स्वान्तेनावधारयन्निश्चिन्वंश्चतुःसमुद्रेषु चतुरम्भोनिधिषु सारभूतान्हृद्यभूतानिन्द्रायुधस्य रयो वेगस्तस्यानुगामिनोऽनुयायिनोऽगणेयानसंख्येयांस्तुरङ्गमानश्वानगणितोऽवमानितस्तुरंगमेनाश्वेन गमनं चलनं तस्मात्खेदो यैस्तानुत्साहिन उत्साहवतो राजपुत्रांश्च नृपसुतान्निरूपयन्पश्यन्। न विद्यतेऽन्यत्कर्म यस्य सोऽनन्यकर्मा तं दिवसमेकां च यामिनीं कथंकथमपि महता कष्टेनास्थात्तस्थौ।

अथेति प्रकारान्तरे। अनुरक्ता या कमलिनी नलिनी तस्याः समागमः संयोगस्तस्याप्राप्तिरलब्धिस्तया यः संतापस्तप्तिस्तस्मादिव दिवसेन समं सार्धं तेजसांपतौ श्रीसूर्येऽस्तमुपगतवति प्राप्तवति सति। तेजःपतिपतनात्सूर्यपतनात्। रक्तत्वसाम्यादाह—अपराशया पश्चिमया सह पश्चिमे गगनभागे चितानलमिव चितावह्निमिव संध्यारागं विशति प्रविशति सति। संध्यानलस्य स्फुलिङ्गा अग्निकणास्तेषां निकरे समूह इव तारागणे स्फुरति दीप्यमाने सति। दिवसस्य विरामादवसानान्मूर्च्छागमेनेव मोहागमेनेव तमसाऽन्धकारेण दिङ्मुखेषु दिशाननेषु निमील्यमानेषु संकोच्यमानेषु। निवासस्याभिमुखाः संमुखाश्च ते मुखरा वाचालाश्च तेषु वियत आकाशस्य वियोगस्तस्य यद्दुःखं तस्मादिव कृतो विहितोऽन्तःप्रलापो[1] विलापो यैरेवंभूतेषु वयःसमूहेषु पक्षिसंघातेषु। जनितो विहितः प्रकाश आलोको येनैवंभूतं जन्मेवालोक्य विलोक्य दोषागमनं त्रियामागमं निरालोकं निःप्रकाशं गर्भमिव भ्रूणमिव तमःप्रविष्टे पुनर्जीवलोके विष्टपे सति। निजालोकात्स्वप्रकाशाद्विकाशितं प्रकाशितं पूर्वदिगेव वधूस्तस्या वदनं येन स तस्मिञ्जन्मान्तरागत इव भवान्तरागत इवोदयगिरिवर्तिन्युदयाचलस्थिते भूयोभूयो वारंवारं स्वकान्तिनिर्भरात्[2] स्वदीप्तिसंभारान्निष्कलङ्के इव नक्षत्रनाथे चन्द्रे भगवति नक्षत्रसमागमसुखं तारकामेलापकसौख्यमनुभवत्यनुभवविषयीकुर्वति सति। निशीथिन्यां त्रियामायां विस्पष्टायां प्रकटायां

---

टिप्प०—1 'कृतार्तप्रलापेषु' कृतः आर्तप्रलापो यैस्तेषु। 2 ग्रामीणष्टीकाकारः। कान्त्यतिशयाच्च निष्कलङ्कत्वम्। अत एव 'स्वकान्तिनिर्झरात्' इत्येव पाठः।

---

पाठा०—१ इति ताम्. २ प्रविष्टायाम्. ३ अग्रतः. ४ दिग्गगनभागे. ५ आर्तप्रलापेषु. ६ समालोक्य. ७ प्रस्थानमङ्गल.

मङ्गले प्रणामायोपगतं चन्द्रापीडं पीडयान्तर्विलीयमानेव[1] बाष्पोत्पीडमपारयन्ती निवारयि[2]-तुमत्यायताभ्यामपि नेत्राभ्यां कृतप्रयत्नाप्यमङ्गलशङ्कया विलासवती तं मन्यु[3]रागावेगगद्गदि-कोपरुध्यमानाक्षरमवादीत्—

'तात[4], युज्यते ह्यङ्कलालितस्य गर्भरूपस्य प्रथमगमने गरीयसी हृदयपीडा, यस्मिन्प्रथम-मेवाङ्कादपैति । मम पुनर्नेदृशी प्रथमगमनेऽपि ते पीडा समुत्पन्ना, यादृशी तव गमने-नाधुना । दीर्यते[5] इव मे हृदयम् । समुत्पाट्यन्त इव मर्माणि । उत्क्वथ्यत इव शरीरम् । उत्प्लवत[6] इव चेतः । विघटन्त इव संधिबन्धनानि । निर्यान्तीव[7] प्राणाः । न किंचित्समाद-धाति धीः । सर्वमेव शून्यं पश्यामि । न पारयाम्यात्मानमिव हृदयं धारयितुम् । धृतोऽपि बलादागच्छति मे बाष्पोत्पीडो मुहुर्मुहुः[8] । समाहितापि मङ्गलसंपादनाय ते[9] चलति मतिः । न जानाम्येव किमुत्पश्यामीति । किंनिमित्तं चेयमीदृशी मे[10] हृदयपीडेत्येतदपि न वेद्मि । किं[11] बहुभ्यो दिवसेभ्यः कथमप्यागतो मे वत्सो झटित्येव पुनर्गच्छतीति । किं वैश-

---

सत्यां प्रस्थानमङ्गले सति गमनश्रेयसि सति, प्रणामाय नमस्कारायोपगतमागतं चन्द्रापीडं पीडया बाधयान्त-र्विलीयमानेव विलयं प्राप्यमाणेवात्यायताभ्यामतिविस्तीर्णाभ्यामपि नेत्राभ्याममङ्गलशङ्कयाऽश्रेयसारेकया कृतप्र-यत्नापि विहितोद्यमापि बाष्पोत्पीडमश्रुप्रवाहं निवारयितुं दूरीकर्तुमपारयन्त्यशक्नुवती एवंविधा विलासवती तत्र स्थितत्वाद्वैशम्पायने मन्युः क्रोधो रागश्चन्द्रापीडे स्वाङ्गजत्वात् तयोरावेग आवेशस्तेन या गद्गदिका गद्गद-ध्वनिस्तयोपरुध्यमानान्युपरोधं प्राप्यमाणान्यक्षराणि यथा स्यात्तथेति क्रियाविशेषणम् । अवादीदब्रवीत् ।

किमवादीदित्याशयेनाह—**तातेति** । हे तात हे पुत्र । हीति निश्चितम् । अङ्कलालितस्य क्रोडपालितस्य गर्भरूपस्य भ्रूणस्वभावस्य प्रथमगमन आद्यप्रयाणे हृदयपीडा गरीयसी युज्यते विलोक्यते, यस्मिन्प्रथममेवा-ङ्कात्क्रोडादपैति गच्छति । मम विलासवत्याः पुनस्ते तव प्रथमगमनेऽपि नेदृश्येतादृशी पीडा समुत्पन्ना संजाता, यादृशी तव गमनेनाधुना सांप्रतं जायते । तदेव प्रदर्शयन्नाह—**दीर्यत इति** । मे मम हृदयं दीर्यत इव विदीर्णं जायत इव । मर्माणि संधिस्थानानि समुत्पाट्यन्त इवोत्खन्यन्त इव । शरीरं देहमुत्क्वथ्यत इवोत्काल्यत इव । चेतो मन उत्प्लवत इवोत्प्लुत्योत्प्लुत्य गच्छतीव । संधिबन्धनानि विघटन्त इव भिद्यन्त इव । प्राणा निर्या-न्तीव निःसरन्तीव । धीर्बुद्धिर्न किंचित्समादधाति समाधानं करोति । सर्वमेव जगच्छून्यं रिक्तं पश्याम्यवलोक-यामि । आत्मानमिव हृदयं स्वान्तं धारयितुं न पारयामि न शक्नोमि । धृतोऽपि रक्षितोऽपि बलाद्धठान्मे मम बाष्पोत्पीडोऽश्रुप्रवाहो मुहुर्मुहुर्वारंवा[1]रमागच्छत्यायाति । ते तव मङ्गलसंपादनाय श्रेयःकरणाय समाहितापि सं-स्थापितापि मतिश्चलति भ्रमति । इत्यहं न जानाम्येव नावकलयाम्येव—किमुत्पश्यामि किमवलोकयामि । किंनिमित्तं च किंकारणं चेयमीदृश्येतादृशी मे मम हृदयपीडा चित्तार्तिरित्येतदप्यहं न वेद्मि न जानामि । किं बहुभ्यः प्रचुरेभ्यो दिवसेभ्यः कथमपि महता कष्टेन मे मम वत्स आगत आयातो झटित्येव शीघ्रमेव पुनर्गच्छति व्रज-तीति हेतोर्महती पीडा जायत इति सर्वत्रानुषङ्गः । किं वैशम्पायनस्य वियोगाद्विरहादुद्विग्नस्योद्वेगं प्राप्तस्यैका-किनोऽसहायस्य ते तव गमनं प्रस्थानं समुत्प्रेक्ष्य विलोक्येति । वैशम्पायनस्य[2] वृत्तान्ताद्वैशम्पायनोदन्तादात्मनः

---

**टिप्प०**—1 'बलादागच्छति मे बाष्पोत्पीडो मुहुः । मुहुः समाहितापि मङ्गलसंपादनाय०' इति पाठः । मुहुः समाहितापि मतिश्चलति इति तदर्थः । 2 'उत वैशम्पायनवृत्तान्ता०' इति पाठः । 'न पुनः' इत्यस्य न युक्तत्वम् ।

---

**पाठा०**—१ निलीयमान. २ वारयितुम्; पातुम्. ३ मन्यूद्गमावेग; आवेग. ४ जातमात्रापि तेऽङ्कलालितस्य गर्भरूपस्य प्रथमगमने गरीयसी हृदयपीडा यस्मिन्प्रथमेनाङ्कादर्पिते. ५ यतो दीर्यते. ६ उच्चयवते. ७ उन्मथ्यत इव मनः निर्यान्तीव. ८ मुहुः. ९ चलति. १० हृदय. ११ बहुभ्यः.

-म्पायनवियोगादुद्विग्नस्य गमनमेकाकिनस्ते समुत्प्रेक्ष्येति । न[1] पुनर्वैशम्पायनवृत्तान्तादात्मन एव दुः[2]खिततयेति । न चैवंविधया पीडया वैशम्पायनानयनाय गच्छतस्ते मे गमनं विनिवारयितुं पारयति वाणी । हृदयं पुनर्नेच्छत्येव त्वदीयं गमनम् । तदीदृशीं मे पीडां विभा[3]व्य यथा पुरा स्थितं न तथा क्वचिदा[4]संगमावध्यतिदीर्घकालमायुष्मता स्थातव्यम् । अस्य चार्थस्य कृते साञ्जलिबन्धेन शिरसाभ्यर्थये वत्सम्' इत्यादिशन्तीं स्वमातरं सुदूरं प्रसारितावनम्रमूर्तिश्चन्द्रापीडो[5] व्यजिज्ञपत्—'अ[6]म्ब, तदा दिग्विजयप्रसङ्गात्स्थि[7]तम् । अधुना पु[8]नरयमेव कालक्षेपो यावत्तमुद्देशं परापतामि । तत्पुनश्चिरागमकृता न[9] भावनीया मनागपि हृदये पीडां[10] त्वया' इत्येवं विज्ञप्ता चन्द्रापीडेन संनिरुध्योद्वा[11]ष्पवेगान् कथं कथमपि संस्तभ्यात्मानं निर्वर्तितगमनमङ्ग[12]ला, गलता प्रस्नवेण सिञ्चन्ती, शिरसि चोपाघ्राय गा[13]ढं सुचिरमालिङ्ग्य, गच्छद्भिरिव प्राणैः कृच्छ्रान्मुमोच तं[14] माता । मुक्तश्च मात्रा पितुः प्रणतये वासभवनमगमत् ।

---

स्वस्यैव दुःखिततया पीडितत्तया पुनर्न मम हृदयपीडेत्यर्थः । एवंविधयैतादृश्या पीडया वैशम्पायनानयनाय गच्छतो व्रजतस्ते तव गमनं विनिवारयितुं निषेधयितुं न वाणी वाक्पारयति समर्था भवति । हृदयं चेतः पुनस्त्वदीयं तावकीनं गमनं नेच्छत्येव नाभिलषत्येव । तत्तस्माद्धेतोर्मे ममेदृशीं पीडां विभाव्य ज्ञात्वा यथा येन प्रकारेण पुरा पूर्वं स्थितं विलम्बितं क्वचित्कस्मिंश्चित्स्थले संगमो मेलापस्तस्यावधिर्मर्यादा आसंगमावधेरा संगमावधि इत्यव्ययीभावः । अतिदीर्घकालमतिचिरकालमायुष्मता भवता न तथा स्थातव्यं स्थेयम् । अस्य च पूर्वोक्तस्यार्थस्य कृतस्य कृते सहाञ्जलिबन्धेन वर्तमानः साञ्जलिबन्धः । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । तेनैवंभूतेन शिरसोत्तमाङ्गेन वत्सं सुतमभ्यर्थयेऽभियाचे इति पूर्वोक्तमादिशन्तीं कथयन्तीं स्वमातरं स्वजननीं सुदूरं सुतरां दूरं प्रसारिताऽवनम्रावनामिता मूर्तिर्येनैवंभूतश्चन्द्रापीडो व्यजिज्ञपद्विज्ञप्तिमकार्षीत् । तदेवाह—**हे अम्ब इति** । हे मातः, तदा तस्मिन्काले दिशां विजय आत्मसात्करणं तस्य प्रसङ्गः संबन्धस्तस्मात्स्थितं विलम्बितम् । अधुना सांप्रतं पुनरयमेव कालक्षेपः समयविलम्बो यावद्यावता कालेन तमुद्देशं वैशम्पायनालंकृतप्रदेशं परापतामि गच्छामि । तत्तस्माद्धेतोः पुनश्चिरेण बहुकालेनागमनं तेन कृता विहिता या पीडा सा मनागपि हृदये चेतसि न भावनीया न विचारणीया । चन्द्रापीडेनेति विज्ञप्ता कथिता विलासवत्युद्बाष्पवेगानुदश्रुप्रवाहान्संनिरुध्यावष्टभ्य कथंकथमपि महता कष्टेनात्मानं स्वं संस्तभ्य पतन्तं निवार्य, निर्वर्तितं विहितं गमनमङ्गलं प्रयाणश्रेयो ययैवंभूता । किं कुर्वती । गलता क्षरता प्रस्नवेण स्तनोद्गतदुग्धेन सिञ्चन्ती सेचनं कुर्वन्ती । अनेन स्नेहाधिक्यमाविष्कृतम् । शिरसि चोपाघ्राय सुचिरं बहुकालं गाढं दृढमालिङ्ग्याश्लिष्य माता विलासवती गच्छद्भिर्निःसरद्भिः प्राणैरसुभिरिव कृच्छ्रात्कष्टात्तं चन्द्रापीडं मुमोच तत्याज । मुक्तश्च मात्रा जनन्या पितुस्तारापीडस्य प्रणतये नमस्कृतये वासभवनं निवासगृहमगमदगच्छत् ।

---

**टिप्प०**—1 'आसङ्गमाबध्य दीर्घकालम्' इति पाठः । आसङ्गम् आसक्तिम् आबध्य आस्थाय दीर्घकालं न स्थातव्यमिति तदर्थः । 2 'संनिरुध्य बाष्पवेगान्' इत्येव पाठः ।

---

**पाठा०**—१ अन्तः; उत; पुनः पुनः. २ दुःखितयेति. ३ विज्ञाय. ४ आसंगमावध्यदीर्घकालम्. ५ व्यज्ञपयद. ६ मातः; अहं च मातः. ७ स्थितोऽसि. ८ अयमेव मे; इयानेव मे. ९ मनागपि हृदये न भावनीया; मनागपि न हृदये भावनीया. १० अम्बया पीडा; त्वया पीडा. ११ बाष्प. १२ मङ्गलप्रस्नवेण; मङ्गलाकुलताप्रस्नवेण. १३ गाढं गाढम्. १४ तम्.

तत्र च 'देव, गमनाय नमस्करोति युवराजः' इत्यावेदिते द्वाररक्षिणा, प्रविश्य क्षोणीतलनिवेशितशिरसा[१] शयनवर्तिनो ननाम दूरस्थित एव पितुः पादौ । अथ तथा प्रणतमालोक्य किंचिदुन्नमितपूर्वकायः, शयनगत एवाहूय तं पिता चक्षुषा पिबन्निव, प्रेम्णा परिष्वज्य गाढमिव[२] सहसोद्गता[३]विरलबाष्परय[४]पर्याकुलाक्षोऽन्तःक्षोभावेगक्षिप्ताक्षर[५]मवादीत्—'वत्स, पित्राहं[६] दोषेषु संभावित इत्येषा मनागपि मनसि वत्सेन दुःखासिका न कार्या । विनयाधानात्प्रभृति सम्यक्परीक्षितोऽस्यस्माभिः । परीक्ष्य च गुणगणैरेवाधिगम्यो राज्यभारस्त्वय्यारोपितो न तनयस्नेहादेव । राज्यं हि नामैतत्पृथ्वीभारेणैवातिदुरुद्वहम्[७], महीभृत्संबाधतयैवातिसंकटम्, कुटिलनीतिप्रचारेणैवातिदुःसंचारम्, चतुःसमुद्रव्याप्त्यैवाति[८]महत्, महासाधनप्रसाध्यतयैवातिदुःसाध्यम्[९], अपर्यवसानकार्यतन्त्रजालेनैवातिगहनम्,

---

**तत्र चेति ।** तत्र वासभवने । हे देव ऐश्वर्यादिगुणैर्विराजमान, गमनाय यात्रायै युवा चासौ राजा चेति युवराजश्चन्द्रापीडो नमस्करोति प्रणमति । इति द्वाररक्षिणा द्वारपालेनावेदिते ज्ञापिते सति प्रविश्य प्रवेशं कृत्वा । अन्तर्वासभवनमित्यर्थः । क्षोण्याः पृथिव्यास्तल उपरितनो भागस्तत्र निवेशितं स्थापितं यच्छिर उत्तमाङ्गं तेन करणभूतेन शयनवर्तिनः शय्यागतस्य पितुर्जनकस्य पादौ चरणौ दूरस्थित एव विप्रकृष्टगत एव ननाम प्रणतवान् । **अथेति ।** अथानन्तरं तथा प्रणतं पूर्वोक्तरीत्या नतं युवराजमालोक्य निरीक्ष्य किंचिदीषदुन्नमित ऊर्ध्वीकृतः पूर्वकायः प्रथमशरीरभागो येन स शयनगत एव शय्यास्थित एवाहूयाह्वानं कृत्वा तं युवराजं पिता जनकश्चक्षुषा नेत्रेण पिबन्निव । आदरेणावलोकनं पानमुच्यत इति भावः । प्रेम्णा प्रीत्या गाढमिव गाढसदृशं परिष्वज्यालिङ्ग्य सहसा झटित्युद्गत उत्पन्नो योऽविरलो निबिडो बाष्पोऽश्रु तस्य रयो वेगस्तेन पर्याकुले व्याप्ते अक्षिणी यस्य स तथा । अन्तश्चेतसि यः क्षोभस्तस्यावेगस्त्वरिः (त्वरा) तेन क्षिप्ताक्षरमविस्पष्टाक्षरं यथा स्यात्तथावादीदब्रवीत् । तदाह—**वत्सेति ।** हे वत्स हे पुत्र, पित्रा जनकेनाहं दोषेष्वपराधेषु संभावितो गणित इत्येषा मनागपि किंचिदपि मनसि चित्ते वत्सेन दुःखमास्तेऽस्यामिति दुःखासिका चिन्ता न कार्या । **विनयेति ।** विनयो गुरूणामभ्युत्थानादिस्तस्याधानं शिक्षणं तत्प्रभृति तद्दिनादारभ्य सम्यक्प्रकारेणास्माभिः परीक्षितोऽसि परीक्षाविषयीकृतोऽसि । **परीक्ष्य चेति ।** परीक्षां कृत्वैव च गुणा गाम्भीर्यादयस्तेषां गणाः समूहास्तैरेवाधिगम्यः प्रापणीयो राज्यभारस्त्वय्यारोपितः, न तनयस्नेहादेव नाङ्गजप्रीतेर्गुणवत्त्वादेव त्वयि राज्यभार आरोपितोऽस्ति । न पुत्रस्नेहादेवेति भावः । अथ राज्यस्वरूपं निरूपयन्नाह—**राज्यमिति ।** नामेति कोमलामन्त्रणे । हीति निश्चये । एतद्राज्यमाधिपत्यं पृथ्वीभारेणैव वसुधावीवधेनैवातिदुरुद्वहं दुःखेनोद्वोढुं शक्यम् । तथा महीभृतां राज्ञां संबाधतया संघट्टतयैवातिसंकटमतिसंबाधम् । तथा कुटिला वक्रा या नीती राजस्थितिस्तस्याः प्रचारेणैव प्रसरणेनैव अतिदुःसंचारं दुःखेन संचरितुं शक्यम् । तथा चत्वारो वेदप्रमिता ये समुद्रा जलधयस्तेषु व्याप्त्यैव व्यापकतयैवातिमहदत्यायतम् । तथा महासाधनं महासैन्यं तेन प्रसाध्यतयैवातिदुःसाध्यमतिदुःखेन साधयितुं शक्यम् । तथाऽपर्यवसानान्यनन्तानि कार्याणि कृत्यानि यत्रैवंभूतं तन्त्रजालं स्वराष्ट्रचिन्तासमूहं तेनैवातिगहनमिति । 'निबिडं तन्त्रं स्वराष्ट्रचिन्ता स्यात्' इति हैमः । उत्तुङ्ग उच्चो यो वंशोऽन्वयस्तत्र प्रतिष्ठिततयैव

---

**टिप्प०—1 विनयाधानं शिक्षादानं तत्प्रभृति तदारभ्य । 2 महीभृद्भिः पर्वतैः राजभिश्च संबाधतया संकुलतया । 3 उत्तुङ्गा ये वंशाः वेणवः कुलानि च तेषु प्रतिष्ठिततया, इत्युभयार्थस्वारस्यम् ।**

---

**पाठा०**—१ निवेशितशिराः. २ गाढमप्रौढ. ३ उद्भूत. ४ बाष्पपर्याकुल. ५ क्षोभविक्षिप्त. ६ अहं दोषेऽपि; अनर्हदोषेषु. ७ पृथिवी. ८ समुद्रपर्यन्तभुवनव्याप्त्यैव. ९ दुःसाधनम्.

उत्तुङ्गवंशप्रतिष्ठिततयैवातिदुरारोहम्, अहितसहस्रोद्धरणेनैवातिदुरुद्धरम्[1], अपि च सम-वृत्तितयैवातिविषमम्, अनेकतीर्थकल्पनयैव दुरवतारम्, कण्टकशोधनेनैव[2] दुर्ग्रहम्, अखिलप्रजापालनव्यवहारेणैव[3] दुःपालम्[4], नाविक्रान्ते[5] नामहोत्साहे नाप्रियवादिनि नासत्य-संधे नाप्राज्ञे[6] नाविवेकिनि नाकृतज्ञे नानुदारव्यवहृतौ नासंविभागशीले नान्यायवर्तिनि नाधर्म-रुचौ नाशास्त्रव्यवहारिणि नाशरण्ये नाब्रह्मण्ये नाकृपालौ नामित्रवत्सले नावश्यात्मनि नानि-र्जितेन्द्रिये[8] नासेवके पदमेवादधाति। यः खलु समग्रैर्गुणैराकृष्य बलात्प्रतिबन्धमस्य चञ्च-

---

प्रतिष्ठां प्राप्ततयैव दुःखेनारुह्यत इति दुरारोहम्। अहितानां शत्रूणां सहस्रं तस्योद्धरणेनैवोत्खननेनैव दुरुद्धरं दुःखेनोद्धर्तुं शक्यम्। पुनः प्रकारान्तरेण प्रतिपादयन्नाह—**अपि चेति**। समाऽविषमा[1] या वृत्तिर्वर्तनं तयै-वातिविषमं कठिनम्। तस्याः कर्तुमशक्यत्वादिति भावः। इयं विशेषोक्तिः[2]। अनेकानि यानि तीर्थान्युपायास्तेषां कल्पनं प्रयोगस्तेनैव दुःखेनावतीर्यत इति दुरवतारम्। दुस्तरमित्यर्थः। 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायम-न्त्रिषु' इति हलायुधः। 'तीर्थं योनौ जलावतारे च' इत्यमरः। अनेकजलावतरणेनैव नद्यादि सूत्तरं भवति। इदं तु दुरुत्तरमिति विशेषोक्तिः। कण्टकाः खलास्तेषां शोधनेन दूरीकरणेन दुर्ग्रहं दुःखेन ग्रहीतुं शक्यम्। अखिलाः समग्रा याः प्रजा जनपदवासिनो लोकास्तासां पालनं रक्षणम्। एतदेव व्यवहारो व्यवसायस्तेनैव दुःपालं दुःखेन पालयितुं योग्यं[3] राज्यमेतादृशेषु पुरुषेषु पदं स्थानमादधाति करोतीत्यन्वयः। आङ्पूर्वस्य दधातेः करणार्थत्वादित्यर्थः। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। तानेवाह—**नाविक्रान्त इत्यादि**। विक्रमणं विक्रान्तिः सा विद्यते यस्मिन् स विक्रान्तस्तद्भिन्नोऽविक्रान्तस्तस्मिन्। पराक्रमरहित इत्यर्थः। महानु-त्साहो विद्यते यस्मिन्स महोत्साहस्तद्भिन्नोऽमहोत्साहस्तस्मिन्। निरुद्यम इत्यर्थः। प्रियं वदतीत्येवंशीलः प्रियवादी तद्भिन्नोऽप्रियवादी तस्मिन्। कटुकभाषिणीत्यर्थः। सत्या सन्धा प्रतिज्ञा यस्येति सत्यसंधः। 'संवित्संधास्था-भ्युपायः' इति हैमः। तद्भिन्नोऽसत्यसंधस्तस्मिन्। प्रतिज्ञाभङ्गकारिणीत्यर्थः। प्राज्ञश्चतुरस्तद्भिन्नोऽप्राज्ञस्तस्मिन्। मूर्ख इत्यर्थः। विवेचनं विवेकः स विद्यते यस्मिन्स विवेकी तद्भिन्नोऽविवेकी तस्मिन्। सदसद्व्यत्यस्तकारिणी-त्यर्थः। कृतं जानातीति कृतज्ञस्तद्भिन्नोऽकृतज्ञस्तस्मिन्। निर्गुण इत्यर्थः। उदारा स्फारा व्यवहृतिर्व्यवसायो यस्येत्युदारव्यवहृतिस्तद्भिन्नोऽनुदारव्यवहृतिस्तस्मिन्। कुत्सितव्यवहारकारिणीत्यर्थः। सम्यग्विभजनं संविभाग-स्तस्य शीलं स्वभावो यस्मिन्स संविभागशीलस्तद्भिन्नोऽसंविभागशीलस्तस्मिन्। यथोचितानर्पक इत्यर्थः। अन्यायोऽनीतिस्तत्र वर्तत इत्येवंशीलोऽन्यायवर्ती तस्मिन्। न्यायवर्जित इत्यर्थः। न विद्यते धर्मरुचिर्यस्य सोऽधर्मरुचिस्तस्मिन्। सर्वथा पापकारिणीत्यर्थः। न शास्त्रेण कामन्दक्यादिना व्यवहरतीत्येवंशीलोऽशास्त्रव्यव-हारी तस्मिन्। स्वेच्छाव्यवहारिणीत्यर्थः। न शरणाय योग्योऽशरण्यस्तस्मिन्। अत्रायक इत्यर्थः। न ब्रह्मनि-ष्ठोऽब्रह्मण्यस्तस्मिन्। ब्राह्मणाहितकारिणीत्यर्थः। न विद्यते कृपा दया यस्मिन्सोऽकृपालुस्तस्मिन्। दयावर्जित इत्यर्थः। न विद्यते मित्रेषु वत्सलत्वं स्निग्धत्वं यस्येत्यमित्रवत्सलस्तस्मिन्। वयस्यहितवर्जित इत्यर्थः। न वश्य आत्मा यस्येति सोऽवश्यात्मा तस्मिन्। अनियन्त्रितात्मनीत्यर्थः। अनिर्जितान्यवशीकृतानीन्द्रियाणि येन सोऽ-निर्जितेन्द्रियस्तस्मिन्। अनिरुद्धेन्द्रिय इत्यर्थः। न सेवत इत्यसेवकस्तस्मिन्। सपर्यावर्जित इत्यर्थः। कस्मि-न्राज्यं पदं दधातीत्याशयेनाह—**यः खल्विति**। खलु निश्चये। यः पुमान्समग्रैः सकलैर्गुणैः क्षान्त्यादिभि-

---

**टिप्प०—1** नातिमृदुर्नातितीक्ष्णा च। 2 इयं प्रलापोक्तिः, तस्या असंपर्कात्। अपि तु समवृत्तित्वेऽपि विषमतेति विरोधः। 3 'दुष्पालम्' इत्यस्याग्रे अविवेकिना टीकाकृता परित्यक्तः 'सर्वाशाप्राप्त्यैव' इत्यादिः पाठो यः पाठान्तरेषु धृतोऽवश्यं द्रष्टव्यः।

---

**पाठा०—१** दुर्धरम्. २ कटक. ३ व्यापारेण. ४ दुःपालनम्; दुष्पारम्; दुष्पाल्यम्. ५ सर्वाशाप्राप्त्यैव च दुष्प्रापम्, नामहासत्त्वे नास्थिरप्रकृतौ नादातरि नास्थूललक्ष्ये नाशुचौ नाविक्रान्ते नातिक्रान्ते. ६ अप्रज्ञे. ७ नापु-रुषान्तरज्ञे. ८ अनियतेन्द्रिये.

लप्रकृतेः कर्तुं समर्थस्तत्रास्ते । गुरवोऽप्यपगतस्खलितभीतयस्तत्रैव समारोपयन्त्येतदालोचितपरावराः । तदनेनैव बोद्धव्यमिदं वत्सेन नास्ति मयि दोष इति ।

अपि च संप्रति कस्मिन्भारमवक्षिप्याणुमपि दोषमाचरसि । त्वयैव सकललोकानुरञ्जने यतितव्यम् । गतः खलु कालोऽस्माकम् । [1]अस्माभिरस्खलितैश्चिरं पदे स्थितम् । न पीडिताः प्रजा लोभेन । नोद्वेजिता गुरवो मानेन । न विमुखिताः सन्तो मदेन । नोत्रासिताः प्राणिनः क्रोधेन । न हासित आत्मा हर्षेण । न हतः परलोकः कामेन । न राजधर्मोऽनिरुद्धः । स्वरुच्या वृद्धाः समासेविता न व्यसनानि । सतां चरितान्यनुवर्तितानि नेन्द्रियाणि । धनुरवनामितं न मनः । वृत्तं रक्षितं न शरीरम् । वाच्याद्भीतं न मरणात् । [2]उपभुक्तानि [3]सुर-

---

बलाद्धठादाकृष्याकर्षणं कृत्वा चञ्चलप्रकृतेरस्थिरस्वभावस्यास्य राज्यस्य प्रतिबन्धं प्रतिरोधं कर्तुं विधातुं समर्थः क्षमः स्यात् । तत्र तस्मिन्पुंसि राज्यमास्ते तिष्ठति । तथा परं चावरं च परावरम् । आलोचितं विमृष्टं परावरं प्रकृष्टाधमस्वरूपं यैस्त आलोचितपरावराः । विशेषेणापगता स्खलिताच्छ्रंशाद्भीतिर्येषां ते व्यपगतस्खलितभीतय एवंविधा गुरवः कुलक्रमायातसचिवमुख्यास्तत्रैव तस्मिन्नेव जन एतदाधिपत्यमारोपयन्ति स्थापयन्ति । तत्तस्माद्धेतोरनेनैव राज्यप्रदानलक्षणहेतुना वत्सेन बोद्धव्यं ज्ञातव्यम् । मयि विषये दोषो वैगुण्यं नास्ति । तत्सद्भावे राज्यप्रदानसंभावनैव (न) स्यादिति भावः ।

पुनः प्रकारान्तरेण शिक्षापूर्वकं वैगुण्याभावं दूरीकुर्वन्नाह—**अपि चेति** । सांप्रतमधुना कस्मिन्वैशम्पायनादौ राज्यभारमवक्षिप्य न्यस्य स्वयमेकाकित्वेनागमनादणुमपि दोषमाचरसि करोषि । त्वयैव भवतैव सकलानां समग्राणां लोकानां जनपदनिवासिनृणामनुरञ्जने चित्ताह्लादजनने यतितव्यं प्रवर्तितव्यम् । यद्यपि एतद्दोषाचरणे न दोषस्तथापि बृहद्दोषाचरणशङ्कासंकुचितस्वान्ता जनाः कदापि प्रसक्तिभाजो न स्युरिति शिक्षाप्रदानमिति भावः । तातेनैव जनानुरञ्जनं कथं न क्रियत इत्याह—**गत इति** । खल्विति निश्चये । अस्माकं जनानुरञ्जनलक्षणः कालः समयो गतो व्यतीतः । अस्माभिरस्खलितैः स्खलनवर्जितैश्चिरं बहुकालं पदे राज्ये स्थितम् । लोभेन लिप्सया प्रजाः प्रकृतयो न पीडिता न व्यथिताः । [2]मानेनाहंकारेण गुरवो हिताहितप्राप्तिपरिहारोपदेष्टारो वा नोद्वेजिता नोद्वेगं प्रापिताः । मदेन मुन्मोहसंभेदेन सन्तः साधवो न विशेषेण मुखिता [3] दण्डिताः । क्रोधेन रोषेण प्राणिनोऽसुमन्तः न उत्रासितास्त्रासं प्रापिताः । हर्षेण प्रमोदेनात्मा न हासितो हास्यं नीतः । कामेन मनोभवेन परलोक आगामिभवो न हतो न विनाशितः । न राजधर्मो वधादिरूपोऽनि[4]रुद्धोऽनिषेवितः । स्वरुच्या निजाभिलाषेण वृद्धा ज्यायांसः समासेविताः पर्युपासिताः, न व्यसनानि मद्यपानप्रभृतीनि । सतां साधूनां चरितान्याचरणान्यनुवर्तिनान्यनुगमनविषयीकृतानि, नेन्द्रियाणि करणानि, तदनुगामित्वं न कृतम् । सर्वदा तदाज्ञावैमुख्येन स्थितमिति भावः । धनुः कोदण्डमवनामितं वक्रीकृतम्, न मनो हृदयम् । वृत्तं सदाचरणं रक्षितम्, न शरीरं देहः । शरीरानपेक्षत्वेन तदाचरितमित्यर्थः । वाच्याज्जनापवादाद्भीतं त्रस्तम्, न मरणान्मृत्योः ।

---

**टिप्प०—1** धिङ्‍ मन्दभाग्यम् । राज्यभारयुक्तत्वे दोषाचरणं न संभवति । तत् स्वीकृतराज्यभारस्वमपि स्वीयं भारं कस्मिन्नवक्षिप्य दोषमाचरितुं शक्नुयाः ? अत एव न त्वयि अणोरपि दोषस्य संभव इत्याशयः । हन्त हन्त ! 'अणुमपि' इति पदस्य स्वारस्यमज्ञात्वैव सोयं प्रलाप इति पीडिताः स्मः टीकाकृताऽनेन । 2 मानेन गुरवः पीडिता भवन्ति, उत संतुष्टाः ? अत एव 'अवमानेन' इत्येव पाठः । 3 कः संदेहः प्रलापेऽस्मिन् ? न विमुखिताः न पराङ्मुखीकृता इत्यर्थः । 4 अनिरुद्धः अनिषेवितः ? इति कोयं प्रलापः ? अस्तु. 'न हतः परलोकः कामेन' एतावत्पर्यन्तमेव नञ्प्रक्रमः । एतदग्रे-'राजधर्मोऽनुरुद्धो न स्वरुचिः' इति पाठः । राजधर्मस्यानुरोधः कृतः स्वरुचेर्न इति तदर्थः । अग्रे च 'वृद्धाः समासेविता न व्यसनानि ।'

---

**पाठा०—१** अस्खलितेन च चिरं पदं स्थितं; मयास्खलितेनैव चिरं पदे स्थितम्; अस्माभिरस्खलितैः पादैः. २ उपभुक्तानि च. ३ सुरलोकेऽपि दुर्लभानि.

लोकदुर्लभानि सर्वविषयोपभोगसुखानि । यौवनेच्छया[१] पर्याप्तमकार्यपरिहरात् । कार्यानुष्ठानाच्चोपार्जितः परोऽपि[२] लोकः । चेतसि मे त्वज्जन्मना च[३] कृतार्थ एवास्मि । तदयमेव मे मनोरथः, दारपरिग्रहात्प्रतिष्ठिते त्वयि सकलमेव मे[४] राज्यभारमारोप्य जन्मनिर्वाहलघुना हृदयेन पूर्वराजर्षिगतं[५] पन्थानमनुयास्यामीति । अस्य च मेऽतर्कितमेवा[६]यमग्रतः प्रतिरोधको वैशम्पायनवृत्तान्तः स्थितः । मन्ये च न संपत्तव्यमेवानेन । अन्यथा क्व वैशम्पायनः, क्व चैवंविधमस्य स्वप्नेऽप्यसंभावनीयं समाचेष्टितम् ? तद्गतेनापि तथा कर्तव्यं वत्सेन, यथा न चिरकालमेष मे मनोरथोऽन्तर्हृदय एव विपरिवर्तते' इत्यभिधाय किंचिदु[७]त्तानितेन मुखेनैव[८] संपीडितं हृदयमिव ताम्बूलमर्पयित्वा व्यसर्जयत् ।

चन्द्रापीडस्तु तया पितुः संभावनया सुदूरमुन्नमितोऽप्यवनम्रतरमूर्तिरुपसृत्य[९] पुनः प्रणा-

---

जीवनादपि यशोवल्लभत्वमित्यनेन सूचितम् । सुरलोके त्रिविष्टपे दुर्लभानि दुःप्रापाणि यानि सर्वविषयाणां रूपरसगन्धस्पर्शशब्दरूपाणामुपभोगः प्रतिवारमासेवनं तस्य सुखानि सौख्यान्युपभुक्तान्यास्वादितानि[1] । 'यः सकृद्भुज्यते भोग उपभोगोऽङ्गनादिकः' इति प्राञ्चः । अकार्यपरिहारादकृत्यत्यागाद्यौवनेच्छया तारुण्यस्पृहया पर्याप्तं भृतम् । कार्यं दानादिरूपं तस्यानुष्ठानादाचरणात्परोऽपि लोक आगामिभवोऽप्युपार्जितः स्वायत्तीकृतः । सदाचरणेनावश्यं देवायुर्बुद्धमित्यर्थः । त्वज्जन्मना च त्वदुत्पत्त्या[2] च कृतार्थः कृतकृत्य एवाहमस्मीति मे मम चेतसि वर्तते । तत्तस्माद्धेतोरयमेव मे मम मनोरथोऽभिलाषो वर्तते । अयमेवेति क इत्यपेक्षायामाह—**दारेति** । दारपरिग्रहात्स्त्रीस्वीकारात्प्रतिष्ठिते प्रतिष्ठां प्राप्ते त्वयि भवति सकलमेव समग्रमेव मे राज्यभारमाधिपत्यधुरमारोप्य न्यस्य जन्मनो नृभवस्य निर्वाह आयुःक्षयं यावत्परिपालनं तेन लघुना तुच्छेन[3] हृदयेन । केवलं जन्मपालनप्रवृत्तत्वेन तदितरसमग्राशाविमुक्तत्वेन च चेतसो लघुत्वमिति भावः । पूर्वे राजर्षयो गताश्चलिता यस्मिन्नेवंविधं पन्थानं मार्गमनुयास्याम्यनुगच्छामि । इत्यस्य मे मम मनोरथस्यातर्कितमेवाचिन्तितमेवाग्रतः पुरः प्रतिरोधकः प्रतिबन्धकृद्वैशम्पायनस्य शुकनासमुतस्य वृत्तान्त उदन्तः स्थितः । अहमिति मन्ये । अनेन मनोरथेन न संपत्तव्यं न भवितव्यम् । अन्यथेत्युक्तवैपरीत्ये । क्वेति महदन्तरे निपातः । वैशम्पायनो मनोरमाङ्गजः क्व । अस्य च वैशम्पायनस्य स्वप्नेऽपि निद्रादशायामप्यसंभावनीयमचिन्तनीयमेवंविधं समाचेष्टितं समाचरितं क्व । तदिति हेत्वर्थे । गतेनापि चलितेनापि वत्सेन पुत्रेण भवता तथा कर्तव्यं तथा विधेयं यथैष पूर्वोक्तो मे मम मनोरथोऽन्तर्हृदये हृदयमध्ये न विपरिवर्तते न विलीनो भवति । इत्यभिधायोक्त्वा किंचिदीषदुत्तानितेनोर्ध्वीकृतेन मुखेनैवाननेनैव संपीडितं[4] चर्चितं हृदयमिव स्वान्तमिव ताम्बूलं नागवल्लीदलमर्पयित्वा वितीर्य व्यसर्जयत्प्राहिणोत् ।

तदनन्तरं चन्द्रापीडस्तु तया पूर्वोक्तया पितुस्तारापीडस्य संभावनया विचारणया सुदूरं यथा स्यात्तथोन्नमितोऽप्युच्चैर्भूतोऽप्यवनम्रतरमूर्तिरतिशयेन नमिततनुरुपसृत्योपसरणं कृत्वा पुनः प्रणामेन नमस्कारेणोन्नमि-

---

**टिप्प०**—1 एतदारभ्य 'चेतसि' इतिपर्यन्तो ग्रन्थष्टीकाकारेण भ्रष्टीकृतः । तस्मात्—'उपभुक्तानि च सुरलोकेपि दुर्लभानि सर्वविषयोपभोगसुखानि यौवने । इच्छया पर्याप्तम् । अकार्यपरिहारात् कार्यानुष्ठानाच्च उपार्जितः पारम्परोपि लोकः, इति चेतसि मे ।' इति पाठः । अर्थः स्पष्टः । इच्छया पर्याप्तम् इच्छापूर्वकं विलसितमित्यर्थः । 2 'त्वज्जन्मना कृतार्थ एवास्मि' इति पृथग् वाक्यम् । 'चेतसि मे' इति पूर्वसंबद्धम् । 3 तुच्छेनापि पूर्वराजर्षिपथानुगमन् ? धन्योसि । जन्मनो निर्वाहः समुचितकार्यसंपादनं तेन लघुना भारशून्येन । 4 'संपिण्डितम्' पिण्डीभावेनाऽऽकुञ्चितमित्येव सम्यक् ।

---

**पाठा०**—१ यौवनेनेच्छया. २ पारम्परोऽपि लोकः; परलोकः. ३ च तावत्. ४ इमम्. ५ सेवितम्. ६ अतर्कित, ७ उन्नामिते मुखेनैव. ८ संपिण्डितम्. ९ अपसृत्य.

मेनो[1]न्नमितात्मा निर्ययौ । निर्गत्य च शुकनासभवनमयासीत् । तत्र च तनयचिन्तापरीतमुन्मुक्तमिवेन्द्रियैः शून्यशरीरं शुकनासमवारिताश्रुपातोपहतमुखीं च मनोरमां प्र[2]णम्य, तादृशाभ्यामेव ताभ्यां संभाव्याशिषा समारोपयन्त्यामिव[3] स्वदुःखभारमनुमतो निवर्तनाय, तयोर्निवर्तिताननो मुहुर्मुहुराद्वारनिर्गतं गत्वाग्रतो ढौकितमपि कृतापसर्पणमकृतहर्ष[4]हेषारवमनुत्कर्णकोशमसुखस्वनममनस्कमनाविष्कृतगमनोत्साहं दीनमिन्द्रायुधमालोक्यापि पुनर्निवारणाशङ्कया वैशम्पायनावलोकनत्वरया कादम्बरीसमागमौत्सुक्येन चाकृतपरिलम्बो मनागप्यारुह्य रयेणैव निरगान्नगर्याः । निर्गत्य च सिप्रातटे तत्प्रस्थानमङ्गलावस्थानायोपकल्पितं कायमानमप्रविश्य, बहिरेव गतो युवराज इति जनितकलकलेनातर्किततत्कालगमनसंभ्रान्तेन परिजनेन राजपुत्रलोकेन चेतस्ततो धावतानुगम्यमानो गव्यूतित्रितयमिव गत्वा, सुलभपयोयवसे प्रदेशे निवासमकल्पयत् । उत्ताम्यता हृदयेनाऽप्रभातायामेव[5] यामिन्यामुत्थाय पुनरवहत् ।

---

तात्मोर्ध्वीकृतात्मा निर्ययौ निरगात् । निर्गत्य च शुकनासस्य वृद्धसचिवस्य भवनं सदनमयासीदगात् । **तत्र चेति** । तस्मिन्गृहे तनयस्य सुतस्य चिन्तार्तिस्तया परीतं व्याप्तमिन्द्रियैः करणैरुन्मुक्तमिव त्यक्तमिव । अतएव शून्यशरीरं शून्यदेहं शुकनासमवारितोऽनिषिद्धो योऽश्रुपातस्तेनोपहतं मुखमाननं यस्या एतादृशीं च मनोरमां वैशम्पायनजननीं च प्रणम्य नमस्कृत्य तादृशाभ्यां शोकाकुलिताभ्यामेव ताभ्यां शुकनासमनोरमाभ्यामाशिषा आशीःप्रदानेन संभाव्य सत्कृत्य स्वस्य दुःखं सुतविरहजं तस्य भारो वीवधस्तं समारोपयन्त्यामिव स्थापयन्त्यामिव ताभ्यां निवर्तनाय गमनायानुमतोऽनुज्ञातस्ततस्तयोर्विषये मुहुर्मुहुर्वारंवारं निर्[1]वर्तितमभिमुखीकृतमाद्वारगतमाप्रतोलीगमनपर्यन्तमाननं मुखं येनैवंभूतोऽग्रतो गत्वा, ढौकितमपि कृतं विहितमपसर्पणमपसरणं येनैवंभूतम् । न कृतो न विहितो हर्षहेषारवः प्रमोदध्वनिर्येन स तम् । अत्र नञो भावादन्भावः । न विद्यत उत्कर्णकोशो यस्य स तम् । अनूर्ध्वीकृतकर्णयुगमित्यर्थः । असुखोऽसौख्यकारी स्वनः शब्दो यस्य स तम् । न विद्यते मनोऽर्थाद्गमनविषये यस्य स तम् । नाविष्कृतो न प्रकटीकृतो गमनस्योत्साहः प्रगल्भता येन स तम् । दीनं दुःखितमेतादृशमिन्द्रायुधमश्वमालोक्यापि वीक्ष्यापि पुनर्निवारणं पुनर्गमनप्रतिषेधस्तस्य शङ्कयारेकया वैशम्पायनस्यावलोकनं निरीक्षणं तस्य त्वरा त्वरिस्तस्याः ( तया ) कादम्बर्याः समागमः संगमस्तस्मिन्नौत्सुक्यं रणरणकस्तेन चाकृतः परिलम्बो विलम्बो येनैवंभूतश्चन्द्रापीडो मनागपि योग्यं यानमारुह्यारोहणं कृत्वा रयेणैव वेगेनैव नगर्याः पुरीतो निरगान्निर्ययौ । निर्गत्य च निर्गमनं कृत्वा सिप्रा नाम्नी नदी तस्यास्तटे तीरे तस्य चन्द्रापीडस्य यत्प्रस्थानमङ्गलार्थमवस्थानं तदर्थमुपकल्पितं कृतं कायमानं तृणौकस्तदप्रविश्य प्रवेशमकृत्वा, बहिरेव युवराजश्चन्द्रापीडो गत इति जनितकलकलेन समुत्पन्नकोलाहलेनातर्कितमचिन्तितं तत्कालं तदात्वं यद्गमनं यानं तेन संभ्रान्तेन चकितेन परिजनेन परिच्छदेन राजपुत्रलोकेन चेतस्ततो धावता वेगेन गच्छतानुगम्यमानोऽनुयायमानो गव्यूतित्रितयमिव सार्धयोजनमिव गत्वा गमनं विधाय सुलभानि सुप्रापाणि पयोयवसानि जलतृणानि यत्रैवंभूते प्रदेशे निवासं वसतिमकल्पयदकरोत् । 'यवसं तृणमर्जुनम्' इति कोशः । उत्ताम्यतोत्प्राबल्येन खिद्यता हृदयेन चित्तेनाऽप्रभातायामविभातायामेव यामिन्यां रजन्यामुत्थायोत्थानं कृत्वा पुनरवहदगमत् ।

**टिप्प०—1 'तयोः निवर्तिताननः आद्वारनिर्गतम्' इति पाठस्य 'निवर्तितम् अभिमुखीकृतम् आद्वारगतम् आननं येन' इति समासः कथं भवेत्? 'निवर्तिताननः' इति समासमध्ये 'आद्वारगतम्' इति कथं बलान्निपतितम्? तस्मात्—'मुहुराद्वारनिर्गतेः' इति पाठः । आद्वारनिर्गतेः द्वारान्निर्गमनपर्यन्तं मुहुस्तयोः निवर्वितं परावर्तितं वदनं येन ।**

पाठा०—१ उत्तंसित. २ प्रणिपत्य. ३ इव च. ४ हेषारवः. ५ एवम्.

वहंश्च तस्मादेव वासरादारभ्यैवमचेतित एव "परापत्य कृतापक्रान्तेस्त्रपया पृष्ठतोऽनुगम्य बलाद्दत्तकण्ठग्रहः 'क परं पलाय्यते' इति वैशम्पायनस्य वैलक्ष्यमपनयामि, एवं तत्समागमसुखमनुभूय निष्कारणप्रसन्नामनघामतर्कितोपनतमदवलोकनोपजातहर्षविशेषां पुरस्ताद्गमनसिद्धये पुनर्महाश्वेतां पश्यामि, एवं महाश्वेताश्रमसमीपे पुनःस्थापिताशेषतुरगसैन्यस्तया सहैव हेमकूटं गच्छामि, एवं तत्र मत्प्रत्यभिज्ञानसंभ्रमधावितेनेतस्ततः कादम्बरीपरिजनेन प्रणम्यमानः प्रविश्य मदागमननिवेदनोत्फुल्लेनयनेन सखीजनेनापह्रियमाणपूर्णपात्राम्, 'कासौ, केन कथितम्, कियद्दूरे वर्तते' इति तत्प्रश्नोन्मुखीम्, तत्क्षणोत्पन्नया तापोपशान्त्या त्रपया च युगपदुरसि [3]निहितं पद्मिनीपत्रमपनीयोत्तरीयांशुकाञ्चलं कुचावरणतामुपनयन्तीम्, आभरणतां नीतानि कमलिनीमृणालान्यपास्य भूषणेभ्योऽधिकां स्वशरीरशोभामेव सर्वाभरणस्थानेषु धारयन्तीम्, तापोपशमार्पितहारमात्राभरणाम्, अत्युल्बणहरिचन्दनचर्चान्तरि-

---

वहंश्च गच्छंश्च तस्मादेवात्मगमनोपलक्षितादेव वासराद्दिनादारभ्यारम्भं कृत्वैवैतान्यग्रे वक्ष्यमाणान्यन्यानि तदितराणि च चिन्तयन्विमर्शयन्नचेतिता अज्ञाताः क्षुत्क्षुधा, पिपासा तृट्, आतपो घर्मः, श्रम आयासः, उज्जागरो जागरः, एतेषां व्यथा पीडा येनैवंभूतो दिवारात्रावहर्निशेवावहदगच्छदिति दूरेणान्वयः। एतानि कानीत्यपेक्षायामाह—**अचेतित इति**। अचेतित एवाज्ञात एव परापत्य गत्वा त्रपया लज्जया कृता विहितापक्रान्तिरपक्रमणं येनैवंभूतस्य वैशम्पायनस्य पृष्ठतोऽनुगम्यानुगमनं कृत्वा बलाद्दत्तो विहितः कण्ठग्रहः कण्ठालिङ्गनं येनैवंभूतोऽहं परं केवलं क्व पलाय्यते कुत्र पलायनं क्रियत इति वैलक्ष्यं वैगुण्यमपनयामि दूरीकरोमि। एवं तस्य वैशम्पायनस्य समागमः संगमस्तस्मात्सुखं सौख्यमनुभूयास्वाद्य, निष्कारणमनिमित्तं प्रसन्नं विकसितं मनश्चेतो यस्याः सा तामनघां निष्पापामतर्कितमविचारितमुपनतं प्राप्तं यन्मदवलोकनं मद्वीक्षणं तेनोपजात उत्पन्नो हर्षविशेषोऽतिशायिप्रमोदो यस्याः सा तां पुरस्तादग्रे यद्गमनं तस्य सिद्धये। निर्विघ्नगमनायेत्यर्थः। पुनः पूर्वविशेषयोरित्युक्तेः, पूर्वं प्रथमं महाश्वेतां पश्याम्यवलोकयामि। एवंप्रकारेण महाश्वेताया आश्रमसमीपे मुनिस्थानाभ्यर्णे पुनः स्थापितं न्यस्तमशेषं समग्रं तुरगसैन्यमश्वानीकं येनैवंभूतोऽहं तया महाश्वेतया सहैव सार्धमेव हेमकूटं हेमकूटाभिधानं नगं गच्छामि व्रजामि। एवंप्रकारेण तत्र नगे सोऽयं चन्द्रापीड इति मम प्रत्यभिज्ञानं तस्माद्यः संभ्रम आदरः। 'संभ्रमस्त्वादरे भये' इति कोशः। तेन प्रधावितेनोच्चैश्चलितेनेतस्ततः कादम्बर्याः परिजनेन परिच्छदेन प्रणम्यमानो नमस्क्रियमाणः प्रविश्य प्रवेशं कृत्वा। इतः कादम्बरीं विशेषयन्नाह—**मदेति**। ममागमनं तस्य निवेदनं कथनं तेनोत्फुल्ले विकसिते नयने यस्यैवंभूतेन सखीजनेनालिसमुदायेनापह्रियमाणं गृह्यमाणं पूर्णपात्रं पूर्णानकं यस्याः सा ताम्। 'उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते। वस्त्रमाल्यादि तत्पूर्णपात्रं पूर्णानकं च तत्' इति हैमः। क्वासौ चन्द्रापीडः, केन जनेनेदं चन्द्रापीडसमागमनं कथितम्, कियद्दूरे वर्तत इति यत्तस्य जनस्य प्रश्ना नियोजनानि तत्रोन्मुखीमूर्ध्वाननाम्। तत्क्षणं तत्कालं युगपत्समकालमुत्पन्नया संजातया तापोपशान्त्या तदुपशमेन त्रपया लज्जया चोरसि हृदये निहितं स्थापितं पद्मिनीपत्रं कमलिनीदलमपनीय दूरीकृत्योत्तरीयांशुकं संव्यानवस्त्रं तस्याञ्चलं प्रान्तप्रदेशं कुचयोः स्तनयोरावरणतामाच्छादनतामुपनयन्तीं प्रापयन्तीम्। आभरणतां भूषणतां नीतानि प्रापितानि कमलिन्याः सरोजिन्या मृणालानि बिसान्यपास्य दूरीकृत्य भूषणेभ्य आभरणेभ्योऽधिकामतिशायिनीं स्वं स्वकीयं यच्छरीरं देहस्तस्य शोभा तामेव सर्वाभरणस्थानेषु समग्रभूषणस्थलेषु धारयन्तीं बिभ्रतीम्। तापोपशमार्थं तत्सिद्धीकरणार्थं अर्पितो दत्तः केवलं हारो हारमात्रमाभरणं भूषणं यस्याः सा ताम्। अत्युल्बणमत्यु-

**टिप्प०**—1 'दिवारात्रौ चाऽवहत्' इत्यस्य दिवा दिने रात्रौ चेत्यर्थ उचितः।

**पाठ०**—१ परिपलाय्यते. २ नयनसखी. ३ निहित. ४ उपनीतानि. ५ मृणालानि.

तलावण्यशोभान्यङ्गानि करपरामर्शप्रयत्नेन दर्शनीयतरतां नयन्तीम्, अङ्गलग्नानि शयनीय-कृतकमलकुमुदकुवलयदलकिञ्जल्कशकलानि पुलकोद्गमेनैवापास्यन्तीम्, कपोलसङ्गिनीं च मणिदर्पणे विलोक्यायथास्थितां करेण कबरीमंसदेशे निवेशयन्तीम्, आनन्दजन्मना नेत्र-पुटावर्जितेन बाष्पसलिलेनैव मकरध्वजानलसंतापाय जलाञ्जलिमिव प्रयच्छन्तीम्, उत्सृ-ष्टशेषेणाश्यानमलयजरसेनैवाङ्गलग्नेन भस्मनेव मदनहुतभुजो निवृत्तिमावेदयन्तीम्, अभ्यु-त्थानप्रसङ्गेनैव कुसुमशय्यां दूरीकुर्वन्तीम्, कादम्बरीमालोकयन्, दर्शनीयावलोकनफलेन चक्षुषी कृतार्थतां नयामि। एवं मदलेखां साञ्जलिप्रणामेन कण्ठग्रहेण संभाव्य, चरणपतितां पत्रलेखामुत्थाप्य, केयूरकं पुनःपुनः परिष्वज्य निर्भरम्, एवं महाश्वेतोपपादितोद्वाहमङ्गल-त्वरितसखीवृन्दनिर्वर्तितवैवाहिकस्नानमङ्गलविधिर्भुव इव वर्षाभिषिक्तायाः करग्रहणं देव्या

---

त्कटं यद्धरिचन्दनं गोशीर्षचन्दनं तेन चर्चा पूजा तयान्तरिता व्यवहिता लावण्यशोभा येषामेवंविधान्यङ्गानि प्रतीकाः करेण परामर्शो मार्जनं तत्र प्रयत्नः प्रयासस्तेन दर्शनीयतरतामतिशयेन विलोकनीयतां नयन्तीं प्रापयन्तीम्। 'मुक्ताफलस्य छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥' इति प्राञ्चः। तथाङ्गलग्नानि शरीरसंबद्धानि यानि शयनीयंकृतानि तलिनीकृतानि कमलं पद्मम्, कुमुदं श्वेतकमलम्, कुवलयमुत्पलम्, एतेषां दलानि पत्राणि किंजल्कं केसरं तस्य शकलानि खण्डानि चैतानि पुलकोद्गमेनैव रोमाञ्चोद्गमेनैवापास्यन्तीं निराकुर्वन्तीम्। शरीरस्याङ्कुरितत्वेन तत्पातादिति भावः। 'श्वेते तु तत्र कुमुदं कैरवं गर्दभाह्वयम्' इति हैमः। कपोलसङ्गिनीं च गल्लातपरप्रदेशलग्नां च कबरीं वेणीमयथास्थितामयथास्थायिनीं मणिदर्पणे रत्नादर्शे विलोक्य निरीक्ष्यांसदेशे स्कन्धप्रदेशे निवेशयन्तीं स्थापयन्तीम्। आनन्दाजन्मोत्पत्तिर्यस्यैवंभूतेन नेत्रपुटाभ्यामावर्जितेनाहृतेन बाष्पसलिलेनैव नेत्राम्बुनैव मकरध्वज एवानलस्तस्य संतापः संज्वरस्तस्मै जलाञ्जलिमिव प्रयच्छन्तीं ददतीम्। जलाञ्जलिप्रदानेनैव सर्वथा तदभावः सूचितः। उत्सृष्टशेषेण दूरीकृतावशेषेणाश्यानः शुष्को यो मलयजरसश्चन्दनद्रवस्तेन शुक्लत्वसाम्याद्भस्मनेव भूत्वेव मदनहुतभुजः कंदर्पवह्नेर्निवृत्तिमुपशममावेदयन्तीं कथयन्तीम्। निर्वाणवह्नेरनन्तरं भस्मैवावशिष्यत इति भावः। अभ्युत्थानमुत्थानं तस्य प्रसङ्गेनैव संबन्धेनैव कुसुमशय्यां पुष्पशयनीयं दूरीकुर्वन्तीं निराकुर्वन्तीमहमेतादृशीं कादम्बरीमालोकयन्पश्यन्दर्शनीयस्यावलोकनीयस्यावलोकनं निरीक्षणं तदेव फलं साध्यं तेन चक्षुषी नेत्रे कृतार्थतां साफल्यतां नयामि प्रापयामि। एवं पूर्वोक्तप्रकारेण साञ्जलिप्रणामेन पाणिसंयोजनादिकृतनमस्कारेण कण्ठग्रहेण कण्ठाश्लेषेण मदलेखां संभाव्य सन्मान्य, पत्रलेखां चरणपतितामुत्थाप्य, केयूरकं च निर्भरं यथा स्यात्तथा पुनः पुनर्वारंवारं परिष्वज्यालिङ्ग्य एवं महाश्वेतयोपपादितं विहितमुद्वाहमङ्गलं पाणिग्रहणकल्याणं यस्य स त्वरितं शीघ्रं सखीवृन्देनालिसमूहेन निर्वर्तितो विहितो वैवाहिक उद्वाहसंबन्धी स्नानमङ्गलविधिर्यस्यैवंभूतो वर्षाभिषिक्ताया जलदसिञ्चिताया भुव इव पृथिव्या इव देव्याः कादम्बर्याः करग्रहणं निर्वर्तयामि करोमि। एवं पूर्वोक्तप्रकारे-

---

**टिप्प०**—1 प्रतीकान् इत्युचितम्। 2 ग्राम्य एव। अशयनानि (अतथाभूतान्यपि) शयनानि कृतानि इति शयनीकृतानि तल्पीकृतानि इति पाठः। 3 स्वयं तु अवैयाकरणत्वात् स्थाने स्थाने 'कुर्वन्ती' इति प्रयुक्त एव, सोढमपि च तत्। परं मूलग्रन्थे 'कुर्वतीम्' इत्येवास्ति, नान्यथेति बोध्यं विद्यार्थिभिः। 4 वज्रमतिर्महोदयः। सखीपदस्वारस्येन किं न ज्ञायते यत्—'सखीवृन्देन निर्वर्तितो वैवाहिकस्नानमङ्गलविधिर्यस्याः तथाभूतायाः कादम्बर्याः' इति पाठानुसारी अर्थ उचितः?

---

पाठा०—१ शयनीकृत. २ कुवलयकिञ्जल्क; किञ्जल्ककुवलयदल. ३ अपश्यन्तीम्. ४ कपोलसङ्गिनीम्. मणिदर्पणेनालोक्य. ६ उपस्थिताम्. ७ कृतार्थयामि. ८ च संभावयामि. ९ संभाव्य. १० पुनः. ११ विधेः. १२ करग्रहणं निर्वर्तयामि.

निर्वर्तयामि । एवमतिबहलकुङ्कुमकुसुमधूपा[1]नुलेपनामोदोद्दीपितहृदयजन्मनि वासभवने शयन[2]-वर्तिनो मम समीपमुपविश्य क्ष[3]णमपि कृतनर्मालापायां निर्गतायां मदलेखायां त्रपावनम्र-मुखीमनिच्छन्तीं किल बलाद्दोर्भ्यामादाय शयनीयम्, शयनीयादङ्कमङ्काच्च हृदयम्, देवीं कादम्बरीमारोपयामि । एवमु[4]द्घटनीवीग्रन्थिदृढतरार्पि[5]तपाणिद्वयायास्त्रपानिमीलितलोचने चु[6]म्बन्नवञ्चितात्मा चिराद्भवामि । एवं सुरैरपि दुर्लभं तदधरामृतमा तृप्तेर्निपीय सुजीवितमात्मानं करोमि । एवमतिकोमलतयान्तर्विलीय विशन्त्या इ[7]वाङ्गं गाढालिङ्गनसुखरसभरेण मकरध्वजानलदग्धशेषं निर्वापयामि शरीरम् । एवं परवत्यापि स्वेच्छाप्रवृत्तयेव निष्प्रयत्नयाप्यभियुञ्जानयेवापसर्पन्त्यापि [8]कृतात्मार्पणयेव संगोपितसर्वाङ्ग्याप्युपदर्शि[9]तभावयेव देव्या कादम्बर्या सह न किमपि सर्वजनसुलभमपि योगैकगम्यम्, स्पर्शवि[10]षयमपि हृदयग्राहि, मोहनमपि प्रसादनमिन्द्रियाणाम्, उद्दीपनमपि मदनहुतभुजो नि[11]र्वृतिकरम्, उपाहितसर्वाङ्गस्वेदमप्या-

---

णातिबहलानि निबिडानि कुङ्कुमानि केसराणि, कुसुमानि पुष्पाणि, धूपास्तुरुष्काः, अनुलेपनानि विलेपनानि, एतेषामामोदः परिमलस्तेनोद्दीपितः प्रगुणीकृतो हृदयजन्मा कामो यस्मिन्नेतादृशे वासभवने निवासगृहे शयनीयवर्तिनस्तल्पगतस्य मम समीपमभ्यर्णं क्षणमप्युपविश्यास्थाय कृतो नर्मालापो हास्यालापो ययैवंभूतायां मदलेखायां निर्गतायां बहिर्गतायां सत्यां त्रपया लज्जयावनम्रमवनतं मुखं यस्याः सैवंभूतामनिच्छन्तीमवाञ्छन्तीम् । किलेति सत्ये । बलाद्धठाद्दोर्भ्यां बाहुभ्यामादाय गृहीत्वा शयनीयं शय्याम्, शयनीयादङ्कमुत्सङ्गम्, अङ्काच्च हृदयं स्तनान्तरं देवीं कादम्बरीमारोपयाम्युपरि स्थापयामि । **एवमिति** । उद्घटा या नीव्युंच्चयस्तस्या ग्रन्थिस्तस्यां दृढतरमतिनिबिडमर्पितं स्थापितं पाणिद्वयं करयुगलं यया सा तथा तस्यास्त्रपया लज्जया निमीलिते मुद्रिते लोचने नेत्रे चुम्बंश्चुम्बनं कुर्वन् । चिराद्बहुकालमवञ्चितात्मा कृतार्थीकृतात्मा भवामि । **एवमिति** । तदनन्तरं सुरैरपि देवैरपि दुर्लभं दुष्प्रापं तस्या अधरामृतं दन्तवस्त्रपीयूषमातृप्तेः पानेच्छानिवृत्तिपर्यन्तं निपीय पानं कृत्वा सुष्ठु जीवितं प्राणितं यस्यैवंभूतमात्मानं करोमि सृजामि । एवमतिकोमलतयातिमृदुतयान्तर्मध्ये विलीय द्रवीभूयाङ्गं शरीरं विशन्त्येव प्रवेशं कुर्वन्त्येव गाढं निबिडं यदालिङ्गनमुपगूहनं तस्य सुखं सौख्यं तस्य रसस्तस्य भर आधिक्यं तेन मकरध्वज एवानलो वह्निस्तेन दग्धशेषं प्रज्वलनादुर्वरितं शरीरं देहं निर्वापयामि शीतलीकरोमि । एवमिति पूर्वोक्तमिव परवत्यापि पराधीनयापि स्वेच्छाप्रवृत्तयेव यदृच्छासंचारिण्येव, निष्प्रयत्नयापि कृतिरहितयाप्यभियुञ्जानयेवाभिनोदयन्त्येव, अपसर्पन्त्याप्यपसरणं कुर्वन्त्यापि कृतो विहित आत्मनोऽर्पणं ययैवंभूतयेव, संगोपितानि गुप्तानि सर्वाङ्गानि ययैवंभूतयाप्युत्प्राबल्येनोपदर्शितो भावोऽभिप्रायो ययैवंभूतयेव देव्या कादम्बर्या सह तत्किमप्यनिर्वचनीयं सर्वजनानां समग्रनराणां सुलभमपि सुप्रापमपि योगेन चित्तैकाग्र्यलक्षणेनैकं केवलं गम्यं ज्ञेयम् । 'एके मुख्यान्यकेवलाः' इति कोशः । स्पर्शस्य विषयमपि हृदयग्राहि स्तनान्तरग्रहणशीलम्, मोहनमपि वैचित्त्यजनकमपि प्रसादनं प्रसन्नकृदिन्द्रियाणां करणानाम्, उद्दीपनमप्यतिप्रकाशकमपि मदनहुतभुजः कामवह्नेर्निर्वृतिकरमुपशमकरम्, उपाहितः स्थापितः सर्वाङ्गेषु [2]खेदो घर्मजल

---

**टिप्प०**—1 नीवी अधोवस्त्रबन्धनम् । 2 'उपाहितसर्वाङ्गखेदमपि' उपाहितो जनितः सर्वेषामङ्गानां खेदः श्रमो यस्मिन् तत्, इति पाठः ।

---

पाठा०—१ धूपानुलेपन. २ शयनीयवर्तिनो मम समीपम्; शयनवर्ती मत्समीपे समुपविश्य. ३ क्षणमिव. ४ उद्गाढ. ५ पाणिद्वयाम्. ६ अचुम्बितात्मा. ७ अङ्गमङ्गम्. ८ कृतोपसर्पणया. ९ उद्दर्शित. १० विषमम्. ११ निर्वृत्ति.

ह्लादकरम्, उपजनितविषमोच्छ्वासश्रमस्वेदमपि ससीत्कारपुलकजननम्, अनुभूयमानम-प्युत्पादितानुभूयमानस्पृहम्, सहस्रवारानुभूतमप्यपुनरुक्तम्, अतिस्पष्टमप्य[1]निर्देश्यस्वरूपम्, [2]अचिन्त्यमसमासङ्गमतुलस्पर्शमनुपमरसमनाख्येयप्रीतिकरं परमध्यानसहस्राधिगतं निर्वाण[3]-मिवापर[4]प्रकारं सुरताख्यं सुखान्तरमनुभूय निमेषमप्यकृतविरहस्त[5]या सह तेषु तेषु रम्येषू[6]-द्देशेषु रममाणः [7]स्वभावरम्यमपि रमणीयतरतां यौवनमुपनयामि । एवमु[8]त्पन्नविश्रम्भां देवी-मेवाभ्यर्थ्य वैशम्पायनस्यापि मदलेखया सह घटनां कारयामि" इत्येतानि चान्यानि च चिन्त-यन्नचेतितक्षुत्पिपासातपश्रमोऽ[9]जागरव्यथो दिवारात्रौ चावहत् ।

एवं च वहतोऽप्यस्य दवीयस्तयाध्वनोऽर्धपथ एव कालसर्पो वर्त्मनः, प्रबलप[10]ङ्को ग्रीष्मस्य, निशागमो गभस्तिमतः, स्वर्भानुरमृतदीधितेः, धूमोद्गमो वज्रानलस्फुरितानाम्, मदागमो

---

येनैवंभूतमप्याह्लादकरं प्रमोदजनकम्, उपजनित उत्पादितो विषमो दुःसह उच्छ्वासश्रमस्वेदो येन तत् । तत्रो-च्छ्वासः श्वासः, श्रमः खेदः, स्वेदो घर्मजलम्, एतादृशमपि ससीत्कारं ससीत्कृतं यथा स्यात्तथा पुलकजननं रोमाञ्चोत्पादकम्, अनुभूयमानमपि साक्षात्क्रियमाणमप्युत्पादिता जनितानुभूयमानस्य साक्षात्क्रियमाणस्य स्पृहा वाञ्छा येन तत् । सहस्रवारमनेकवारमनुभूतमपि सेवितमप्यपुनरुक्तमनाम्रेडितम्, अतिस्पष्टमप्यतिप्रकटमप्य-निर्देश्यं दर्शयितुमशक्यं स्वरूपं स्वभावो यस्य तत् । अचिन्त्यमिदमेतदिति चिन्तयितुमशक्यम् । न विद्यते समा-सङ्गः संबन्धो यस्य तत् । अतुलो निरुपमः स्पर्शो यस्य तत् । अनुपमः सर्वेभ्योऽतिशायी रसो यस्य तत् । अनाख्येयां कथयितुमशक्यां प्रीतिं स्नेहं करोतीति करः । अनाख्येयप्रीतेः करोऽनाख्येयप्रीतिकरः । अन्यथा कर्मणि वृद्धौ कारः स्यात् । परममुत्कृष्टं यद्ध्यानमेकप्रत्ययसंततिस्तस्य सहस्रं तेनाधिगतं सहितमपरप्रकारमि-तरस्वरूपं निर्वाणमिव ब्रह्मेव । सुरतेत्याख्या यस्यैवंभूतं सुखान्तरमेकस्मात्सुखादन्यत्सुखं सुखान्तरमनुभूयानु-भवविषयीकृत्य निमेषमपि चक्षुर्निमीलनमात्रमपि तया सहाकृतो विरहो वियोगो येनैवंभूतोऽहं तेषु तेषु रम्येषु मनोहरेषूद्देशेषु प्रदेशेषु रममाणः क्रीडां कुर्वाणः स्वभावेन निसर्गेण रम्यं रमणीयमपि यौवनं तारुण्य-मतिशयेन रमणीयं रमणीयतरं तस्य भावस्तत्ता तां उपनयामि प्रापयामि । **एवमिति** । पूर्वोक्तरीत्योत्पन्नः संजातो विश्रम्भो विश्वासो यस्याः सैवंविधां देवीं कादम्बरीमभ्यर्थ्य प्रार्थनां कृत्वैव वैशम्पायनस्यापि मदलेखया सह घटनां संबन्धं कारयामि विरचयामि । अवहदित्यन्वयस्तु पूर्वमुक्तः ।

**एवमिति** । पूर्वोक्तप्रकारेण वहतोऽपि गच्छतोऽप्यध्वनो मार्गस्य दवीयस्तयातिदूरतया । 'दवीयश्च दविष्ठं च सुदूरे दीर्घमायतम्' इत्यमरः । अर्धपथ एवार्धमार्ग एव जलदकालो वर्षासमयो बभूवाजनिष्ट । तमेव विशे-षयन्नाह—**कालेत्यादि** । वर्त्मनो मार्गस्य कालसर्पः कृष्णाहिः । गमनविघ्नकारित्वादुपमानम् । ग्रीष्मस्य निदा-घस्य प्रबलपङ्को बहुलकर्दमः । पङ्कः कर्दमः । गभस्तिमतः श्रीसूर्यस्य निशागमो रजन्या उद्भवः, रविकरप्रसर-प्रतिरोधकारित्वात् । अमृतदीधितेश्चन्द्रस्य स्वर्भानू राहुः । सर्वतस्तत्प्रकाशप्रतिरोधकत्वात् । वज्रं पविस्तस्यानलो वह्निस्तस्य स्फुरितानां विस्फूर्जितानां धूमोद्गमो धूमप्रादुर्भावः । यदि वा धूमोद्गमो धूमकेतोरुदयः । यथा धूमकेतोरुदयेन सर्वसस्यानां विनाशस्तथैवानेन वज्रानलस्येति भावः । मकरध्वजकुञ्जरस्य कंदर्पगजस्य मदागमो

---

**टिप्प०—1** अविचारितमिदम् । 'प्रबलकम्पः' इति पाठः । ग्रीष्मस्य तापनिवृत्त्या, अथवा प्रबलझ-ञ्झावातात् प्रबलकम्पकरः ।

---

**पाठा०—१** अनिर्दिश्य. २ अचिन्त्यसमागमम्. ३ निर्वाणसुखम्. ४ प्रकाशम्. ५ तथैव. ६ देशेषु. ७ स्वयमेव रम्यम्. ८ उत्पन्नसद्भावविश्रम्भाम्. ९ जागर. १० कम्पः.

मकरध्वजकुञ्जरस्य, मरणान्धतमसप्रवेशो विरहातुराणाम्, अमोघकालपाश[1]वागुरोत्कण्ठितकामिहरिणानाम्, अभेद्यलोहार्गलदण्डो दिग्वारणानाम्, अच्छेद्यहिञ्जीरशृङ्खला वाहानाम्, अनुन्मोच्यनिगलबन्धोऽध्वगानाम्, अलङ्घ्यकान्तारलेखा प्रोषितानाम्, कालायसपञ्जरोपरोधो जीवलोकस्य, उद्गर्जन्न[2]लिकुलगवलमलिनघनघटाभोगभीषणो विषमविस्फूर्जितध्वनिर्विषमतरतडिद्गुणाकर्षी मण्डलितविकटशक्रकार्मुकोऽनवरत[3]धाराशरासारवर्षप्रहारी पुरोमार्गमु[4]परुन्धन्विरुद्ध इवान्धकारितमुखो निस्त्रिंशशतसहस्रसंपातदुष्प्रेक्ष्योऽक्षिणी प्रतिघ्नन्निवाशुगमनविघ्नकारी बभूव जलदकालः।

तत्र[5] च प्रथममस्य चेतना[6]हारिभिर्मूर्च्छावेगैर[7]न्धकारतामनीयन्त दश दिशः, ततो जल-

---

दर्पागमः। कामोद्दीपकत्वात्तस्येति भावः। विरहातुराणां वियोगपीडितानां मरणमेवान्धतमसं निविडं तमस्तस्य[1] प्रवेशः। विरहिजनस्य प्राणापहारित्वात्। उत्कण्ठोत्कलिका जाता येषां त उत्कण्ठिताः। इतो जातार्थे। एतादृशाः कामिन एव हरिणाः कुरङ्गास्तेषाममोघः सफलः कालः श्याम[2]वर्णः पाशवागुरा बन्धनरज्जुः। दिग्वारणानां दिग्गजानामभेद्यो भेत्तुमशक्यो लोहस्यायसोऽर्गलदण्डः परिघयष्टिः। तत्करा[3]घातैर्दुर्भेद्यत्वात्। वाहानामश्वानामच्छेद्यश्छेत्तुमशक्यो यो हिञ्जीरः पादपाशस्तस्य शृङ्[4]खला। अध्वगानां पथिकानामनुन्मोच्यस्त्यक्तुमशक्यो निगलबन्धो निगडबन्धः। विघ्नकारित्वात्। प्रोषितानां गतभर्तृकाणामलङ्घ्या लङ्घितुमशक्या कान्तारलेखा वनराजिः। जीवलोकस्य जीवाधारक्षेत्रस्य कालायसस्य लोहविशेषस्य पञ्जरं लोकप्रसिद्धं तेनोपरोधो गमनप्रतिबन्धः। जीवलोकमभितो वर्तमानत्वेन गतेः प्रतिरोधकत्वेन च पञ्जरोपमानं मेघसमयस्येति भावः। किं कुर्वन्। उत्प्राबल्येन गर्जन्गर्जितं शब्दं कुर्वन्। अलिकुलानि भ्रमरकुलानि, गवला अरण्यमहिषाः, तद्वन्मलिनाः कृष्णा घनघटा मेघपङ्क्तयस्तासामाभोगो विस्तारस्तेन भीषणो भयानकः। विषमा वक्रा विस्फूर्जितस्य विजृम्भितस्य ध्वनिर्यस्य स तथा। विषमतरोऽतिकठिनो यस्तडिद्गुणो विद्युद्गुणस्तमाकर्षतीत्येवंशीलः स तथा। मण्डलितं मण्डलाकारं संजातं विकटं विपुलं शक्रकार्मुकमिन्द्रधनुर्यस्मिन्स तथा। 'विकटं विपुलं बृहत्' इति कोशः। अनवरतं निरन्तरं धारा एव शरा बाणास्तेषामासारवर्षो वेगवद्वृष्टिस्तेन प्रहरतीत्येवंशीलः स तथा। पुरोमार्गमग्रपन्थानमुपरुन्धन्प्रतिरोधं कुर्वन्विरुद्ध इव शत्रुरिवान्धकारितं संजाता[5]न्धकारं मुखमाननं यस्य स तथा। निस्त्रिंशानां खड्गानां यच्छतसहस्रं लक्षं तस्य संपातः पतनं तद्वद्दुष्प्रेक्ष्यो दुःखेन प्रेक्षितुं श[6]क्यः। अक्षिणी चक्षुषी प्रतिघ्नन्निव। प्रतिहन्तीति प्रतिघ्नन्। शत्रन्तः। प्रतिघातं कुर्वन्निव। आशुगमनस्य शीघ्रगतेर्विघ्नकारी प्रतिबन्धजनको वर्षासमयो बभूवेत्यन्वयस्तु प्रागेवोक्तः।

तत्र च जलदकाले प्रथममादावस्य चन्द्रापीडस्य चेतोहारिभिश्चित्तग्राहिभिर्मूर्च्छावेगैर्मोहसंवेगैर्दश दिशो दश ककुभोऽन्धकारं तिमिरं तस्य भावस्तत्ता तामनीयन्त प्रापि[7]तवन्तः। दश दिशोऽन्धकारतां प्रापिता इत्यर्थः।

---

टिप्प०—1 तत्र, इत्युचितम्। 2 कामिहरिणानाम् अमोघा कालपाश एव ( यमसंबन्धिनी गलबन्धनरज्जुरेव ) वागुरा बन्धनयन्त्रम्। 3 वर्षासु पङ्किलभूमौ हस्तिनां पादाः प्रोथन्तीति तेषां गमनदुष्करत्वादर्गलेत्यर्थः। 4 सवेगं गमनाभावात्। 5 शत्रुः कथमन्धकारितमुखः? अत एव विरुद्धः (दस्युः 'डाकू') परिज्ञातो मा भवेयमिति स्वरूपविलोपार्थं मस्यादिना समाच्छादितमुखो भवति। जलदकालस्तु—अन्धकारितम् अन्धकाराच्छन्नम् ( दृष्टिशक्तिविहीनम् ) मुखम् ( लोकानाम् ) यस्मिन् तादृशः। स्थगितसूर्याचन्द्रतया अन्धकारयुक्तं वदनं लोकानामत्रेत्याशयः। 6 दस्युस्तु खड्गशतसहस्रसंपातभीषणः। 7 प्राप्यन्त, इत्यर्थं उचितः।

---

पाठा०—१ पाशोत्कण्ठित; पाशविरुद्धोत्कण्ठित. २ अलिगवय; अलिगणकुवलय. ३ धारासार. ४ अवरुन्धन्. ५ ततः. ६ चेतः. ७ अन्धकारम्.

धरैः । अग्रतः समुत्प्लुतेन[1] चेतसा क्वाप्यगम्यत, पृष्ठतो हंसैः । पुरस्तात्परिमलिनोऽस्य निःश्वासमरुतः[2] प्रावर्तन्त, पश्चात्कदम्बवाताः । पूर्वं तुलितनीलोत्पलवनकान्ति नयनयुगलमस्य सलिलं समुत्ससर्ज, चरममम्भोमुचां वृन्दम् । आदावापूर्यमाणमुद्वेगोत्कलिकासहस्रपर्याकुलं[3][4] मनोऽस्याभवत्, अवसाने स्रोतस्विनीनां पात्रम् । अपि च दुस्तरैर्नदीपूरैरेव सहावर्धन्त[5] मन्मथोन्माथाः । वर्षाजलविलुलितैः[6][7] कमलाकरैरेव सह ममज्ज कादम्बरीसमागमप्रत्याशा । धारारयासहैः[8] कन्दलैरेव सहाभिद्यत हृदयम् । अम्भोदवाताहतैर्धाराकदम्बकुड्मलैरेव सहाकम्पतोत्कण्टकिता तनुः । अनवरतजलपतनजर्जरितपक्ष्मभिः[10] शिलीन्ध्रैरेव सह ताम्रतामधत्त नयनयुगलम्[11] । उत्कूलसलिलोत्खन्यमानमूलैः सरित्तटैरेव सहापतन्प्राणाः[12] । परिमलमयैर्मालतीमुकुलैरेव[13] सह व्यजृम्भन्त[14] रणरणकाः[15] । तथातिगुरुनिर्घातैरेवाभज्यन्त[16] मनोरथाः ।

---

ततस्तदनन्तरं जलधरैर्मेघैः । अग्रतः प्रथमतः समुत्प्लुतेन सम्यगुत्पतितेन चेतसा हृदयेन क्वाप्यनिर्दिष्टस्थलेऽगम्यत गमनमकार्यत । पृष्ठतः पृष्ठभागे हंसैश्चक्राङ्गैर्गतम् । पुरस्तात्पूर्वमस्य चन्द्रापीडस्य परिमलिनः परिमलयुक्ता निःश्वासमरुतः घ्राणवायवः प्रावर्तन्त । पश्चात्कदम्बवाताः प्रवर्तितवन्तः । पूर्वं तुलिता सदृशीकृता नीलोत्पलानां नीलकमलानां वनं काननं तस्य कान्तिर्द्युतिर्येनैवंभूतं नयनयुगलं नेत्रयुग्ममस्य चन्द्रापीडस्य सलिलं जलं समुत्ससर्जोन्मुमोच । चरमं पश्चादम्भोमुचां मेघानां वृन्दं समूहम् । आदौ च प्रथमं चास्य चन्द्रापीडस्योद्वेगेनाऽरत्याऽऽपूर्यमाणं भ्रियमाणमुत्कलिका हृल्लेखास्तासां सहस्रं तेन पर्याकुलं व्याप्तमेतादृशं मनश्चित्तमभवत् । अवसाने प्रान्ते । पश्चादित्यर्थः । स्रोतस्विनीनां नदीनां पात्रं तीरद्वयान्तरम् । 'पात्रं च भाजने योग्ये पात्रं तीरद्वयान्तरे' इति विश्वः । उद्वेगेनोद्वाहुलकेनापूर्यमाणम् । जलैरिति शेषः । 'उद्वेगः क्रमुकीफले । उद्वेगोऽप्युद्वाहुलकोद्वेजनोद्गमनेषु च' इति विश्वः । उत्कलिका वीचयस्तासां सहस्रं तेन पर्याकुलं चाभवत् । अपि चेति प्रकारान्तरे । दुःखेन ततुं शक्यन्त इति दुस्तरास्तैरेतादृशैर्नदीपूरैस्तटिनीप्लवैरेव सह मन्मथस्य कंदर्पस्योन्माथा उन्मथनान्यवर्धन्तैधिषत । वर्षाजलानि वृष्टिपानीयानि तैर्विलुलितैरितस्ततः पर्यस्तैः कमलाकरैरेव पद्मसमूहैरेव सह कादम्बर्या गन्धर्वपुत्र्याः समागमो मेलापस्तस्य प्रत्याशा वाञ्छा ममज्जाब्रुडत् । धारा वेगेन जलपातास्तासां रयो वेगस्तमसहन्त इति धारारयासहास्तैः कन्दलैरेव सह हृदयं चेतोऽभिद्यत भेदमापादितवान् । अम्भोदवातेन जलदवायुनाहतास्ताडिता ये धाराकदम्बा धारया ये विकसन्ति ते धाराकदम्बास्तेषां कुड्मलैर्मुकुलैरेव सहोत्कण्टकिता सरोमाञ्चा तनुः शरीरमकम्पत कम्पयुक्ता बभूव । अनवरतं निरन्तरं यज्जलपतनमम्भोनिपतनं तेन जर्जरितं शिथिलीकृतं पक्ष्मोपरिवर्ति रोम येषामेवंभूतैः शिलीन्ध्रैर्भूमिस्फोटैः सह नयनयुगलं नेत्रयुग्मं ताम्रतामीषद्रक्ततामधत्त बभार । उत्प्राबल्येन यानि कूलसलिलानि तैरुत्खन्यमानानि पात्यमानानि मूलान्यधोभागा येषामेवंभूतैः सरित्तटैस्तटिनीतीरैः सह प्राणा असवोऽपतन्भ्रंशमापुः । परिमलप्रधानानि परिमलमयानि मालतीनां वल्लिविशेषाणां मुकुलैः कुड्मलैरेव सह रणरणका उत्कण्ठा व्यजृम्भन्त विकासमभजन्त । तथातिगुरुनिर्घातैरेव मनोरथा

---

**टिप्प०—1 न सहन्ते इत्युचितम् । 2 रक्तवर्णैः कन्दल्याख्यलतायाः पुष्पैः 'विडम्ब्यमाना नवकन्दलैस्ते' इति कालिदासः । 3 परस्परमाघ्नतोर्वातयोर्यो वेगो नीचैर्निष्पतति सशब्दः स निर्घात उच्यते । 'कुरुकुलनिधनोत्पातनिर्घातवातः' इति वेणी० ।**

---

पाठा०—१ समुपप्लुतेन. २ निःश्वसित. ३ आदावपूर्वम्. ४ उद्वेग. ५ अवर्धत. ६ वर्ष. ७ लुलितैः. ८ प्राभिद्यत हृदयं कादम्बरीसमागमप्रत्याशाधारया सह रयात्कन्दलैरुद्भिद्यत नवाम्भोदवाताहतैर्धाराकादम्बकुड्मलैरेव. ९ धारायासकन्दलैरेवाभिहतहृदयम्, नवाम्भोदवाताहतैः कदम्बकुड्मलैरेव सहोदकम्पोत्कण्ठिता. १० जर्जरितैः पक्ष्मभिः. ११ युगलं च, युगम्. १२ अपतन्त कामबाणाः अपतन्. १३ कुसुमैः. १४ उज्जृम्भन्त. १५ रणरणकः. १६ तथातिगुरुभिर्घातैरेव; तथापि गुरुभिर्यातैरेव; तथा गुरुभिर्घनैरेव.

तीक्ष्णतर[१]कोटिभिः केतकीसूचिभिरेवात्रुत्स्यन्त[२] मर्माणि । उच्छिखैः शिखिभिरेवा[३]दह्यन्त गात्राणि । अन्धकारितदिशा मेघ[४]तमसैवावर्धत मोहा[५]न्धकारम् । तिरस्कृतध्वान्तेन तडिदातपेनैवातन्यत संतापः । भ[६]रेणैव गम्भीरगर्जितैकसंतानोत्कम्पितध[७]रापीठबन्धैर्नभसि नवघनैः, घ[८]नजलधारातिपातवाचालितचञ्चुभिरन्तराले चातकैः, उद्दाममहा[९]रावराविभिरवनिमूले[१०] दर्दुरैः, अनवरत[११]झांकाररवजर्जरितधाराम्बुभिराशासु जलदानिलैः, उन्मुक्तमदकलकेकाकोलाहलैः काननेषु कलापिभिः, असमशिखरोपलस्खलनकलकलमुखरैर्गिरिषु निर्झरैः, उल्लोलकल्लोलास्फालविस्[१२]फारितविषमनिर्घोषझां[१३]कारिभिः स[१४]रित्सु पूरैः, सर्वतश्च विततेन स्थलीषु, संह[१५]तेन कन्दरेषु, उच्चण्डेन शिखरिषु, कलेनाम्बुषु, पटुना पर्वततटेषु, मृदुना शाद्वलेषु, चारुणा

---

अभिलाषा अभज्यन्त भङ्गमापुः । तीक्ष्णतरातिशयेन तीक्ष्णा कोटिरग्रभागो येषामेवंभूतैः केतकीसूचिभिर्वल्लीविशेषकण्टकैरेव सह मर्माणि मर्मस्थानान्यत्रुट्यन्ताच्छिद्यन्त । उदूर्ध्वं शिखा येषामेवंभूतैः शिखिभिर्मयूरैरेव गात्राण्यङ्गान्यदह्यन्त प्राज्वलन् । अन्धकारितदिशा मेघतमसैव मोहान्धकारमवर्धतैधिष्ट । तिरस्कृतं न्यक्कृतं ध्वान्तं तिमिरं येनैवंभूतेन तडिदातपेनैव विद्युदालोकेनैव संतापः संज्वरोऽतन्यत व्यस्तार्यत । **भरेण चेति** । भरो भारस्तेन गम्भीरं गभीरं यद्गर्जितं स्तनितं तस्यैकं प्रधानं संतानं परम्परा तेनोत्प्राबल्येन कम्पितश्चलितो धरायाः पृथ्व्याः पीठबन्धो यैस्ते यथा तैर्नवघनैर्नवीनजलधरैर्नभसि व्योम्नि । अन्तराले विचाले चातकैर्नभोम्बुपैः । कीदृशैः । घना निविडा या जलधारास्तासामतिपातोऽतिपतनं तेन वाचालिता मुखराश्चञ्चवश्चञ्चुपुटिका येषां ते तथा तैः । अवनिमूले पृथिव्यां दर्दुरैर्भेकैः । कीदृशैः । उद्दामः कठिनो यो महारावो महाध्वनिस्तस्य राविभिर्जल्पिभिः । आशासु दिशासु जलदानिलैर्मेघमारुतैः । कीदृशैः । अनवरतं निरन्तरं झांकाररवो झंझावातध्वनिस्तेन जर्जरितानि[३] शिथिलितानि धाराम्बूनि यैस्ते तथा तैः । काननेष्वरण्येषु कलापिभिर्मयूरैः । कथंभूतैः । उन्मुक्तो यो मदस्तेन कलो मनोहरः केकाया मयूरवाण्याः कोलाहलः कलकलो येषां ते तथा तैः । गिरिषु पर्वतेषु निर्झरैर्झरैः । 'उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः' इत्यमरः । किंविशिष्टैः । असमा विषमा ये शिखरोपलाः सानुप्रस्तरास्तेषु स्खलनेन भ्रंशेन यः कलकलः कोलाहलस्तेन मुखरैर्वाचालैः । सरित्सु तटिनीषु पूरैः प्लवैरम्बुवृद्धिभिः । किंभूतैः । उल्लोला उत्प्राबल्येन चञ्चला ये कल्लोलास्तरंगास्तेषामास्फालोन्योन्याघातस्तेन विस्फारितो विस्तारितो यो विषमनिर्घोषोऽसमध्वनिस्तेन झांकारिभिर्घोतिभिः । एवं सर्वतश्च[४] स्थलीष्वकृत्रिमस्थलभूमिषु विततेन विस्तृतेन, कंदरेषु दरीषु संहतेन प्रतिहतेन, शिखरिषु पर्वतेषूच्चण्डेनात्युग्रेण, अम्बुषु पानीयेषु कलेन मनोहरेण, पर्वततटेष्वद्रिवप्रेषु पटुना स्पष्टेन, शाद्वलेषु शादहरितेषु मृदुना कोमलेन, कपोलेषु गल्लात्परप्रदेशेषु चारुणा मनोहरेण, शाखिषु वृक्षेषु सान्द्रेण निबिडेन,

---

**टिप्प०—1 'अतुद्यन्त' अपीड्यन्त, इत्येव पाठ उचितः । त्रुट्यतेः परस्मैपदित्वात् । 2 ध्वनिर्न ज्ञातष्टीकाकारेण । शिखिभिरग्निभिरित्यपि व्यज्यते । उच्छिखैः उद्गतज्वालैरिति तत्रार्थः । 3 अनवरतझांकाररवेण ( झांकाररवपूर्वकम् ) जर्जरितानि धाराजलानि यैः । 4 नभसि घनैः, अन्तराले चातकैर्विततेन स्थलीषु च सर्वतो विततेन धाराखेण, इत्यन्वयः ।**

---

**पाठा०—**१ तीक्ष्णान्तर. २ अतुद्यन्त. ३ शिखरैः. ४ निशामेघ. ५ मोहान्धकारः. ६ भरेण च. ७ धारापीठ. ८ घनजलधरधारानिपातरभसवाचालित; घनजलवाचातिरभसवाचालित. ९ महारावहारिभिः; महावारराविभिः. १० तले. ११ झंकार. १२ विस्फुटित. १३ उद्गारिभिः. १४ सरित्पूरैः. १५ संभृतेन.

कपोलेषु, सान्द्रेण शाखिषु, तनुना तृणोपलेषु[1], उल्बणेन तालीवनेषु, यथाधाराश्मपतनमा-[3] कर्ण्यमानेन सर्वप्रकारमधुरेण हृदयप्रवेशिना[4] धारारवेणोत्कलिकाकलितो न रात्रौ न दिवा न ग्रामे नारण्ये नान्तर्न बहिर्न वने नोपवने न वर्त्मनि नावासे न वहन्न तिष्ठन्न वैशम्पायनस्मरणेन न कादम्बरीसमागमानुध्यानेन कथंचिदपि न क्वचिदपि निर्वृतिमेवाध्यगच्छत् ।

अनधिगतनिर्वृतिश्चातिकष्टतया वज्रानलस्येव जलदसमयेन्धनस्य मदनहुतभुजो भस्मसात्कर्तुमेवोद्यतस्य धीरस्वभावोऽपि प्रकृतिमेवोत्ससर्ज । प्लावितसकलधरातलैर्धाराजलैरप्यशोष्यत । द्योतितदशदिशा शतह्रदालोकेनापि मूर्च्छान्धकारेऽक्षिप्यत । आह्लादितजीवलोकैर्जलदानिलैरप्यदह्यत । पयोभारमेदुरैर्घनैरपि तनुतामानीयत । पाटलितशाद्वलैः शक्रगोपकैरपि पाण्डुतां प्रत्यपद्यत । कुसुमधवलैः कुटजैरपि रागपरवशोऽक्रियत । तथापि[6] सकलजगज्जी-

तृणानामुपलाः[1] समूहास्तेषु तनुना तुच्छेन, तालीवनेषूल्बणेनोग्रेण, धारयाश्मपतनं[2] यथा भवति तथाकर्ण्यमानेन श्रूयमाणेन, सर्वप्रकारैर्मधुरेण मिष्टेन, हृदयप्रवेशिना चित्तप्रविष्टेन, धारारवेण जलसंपातध्वनिनोत्कलिका हृल्लेखस्तेन कलितो व्याप्त एवंभूतश्चन्द्रापीडो न रात्रौ निशायाम्, न दिवा दिवसे, न ग्रामेऽवसथे, नारण्ये वने, नान्तरे मध्ये गृहस्य, न बहिर्गृहादन्यत्र, न वने कानने, नोपवने नगराभ्यर्णवर्तिवाटिकायाम्, न वर्त्मनि मार्गे, नावासे सौधे, न वहन्गच्छन्, न तिष्ठन् स्थितिं कुर्वन्, न वैशम्पायनस्य स्मरणेन[3], स्मृत्या, न कादम्बर्याः समागमस्य मेलापकस्यानुध्यानेनानुचिन्तनेन कथंचिदपि महता कष्टेन न क्वचिदपि न कुत्रापि निर्वृतिमेव चित्तस्वास्थ्यमेवाध्यगच्छदप्रापत् ।

अनधिगताऽप्राप्ता निर्वृतिश्चित्तस्वास्थ्यं यस्यैवंभूतश्चातिकष्टतयातिकृच्छ्रतया वज्रानलस्येव भिदुराग्नेरिव जलदकालः प्रावृट् तस्य समयोऽवसरः स एवेन्धनमिध्मा यस्यैवंभूतस्य मदनहुतभुजः कामाग्नेर्भस्मसात्कर्तुमेवोद्यतस्य कृतोद्यमस्य धीरस्वभावोऽपि स्थैर्यप्रकृतिरपि प्रकृतिमेव स्वभावमेव चन्द्रापीड उत्ससर्ज तत्याज । तदेव दर्शयन्नाह—**प्लावितेति** । प्लावितं जलसात्कृतं सकलं धारातलं यैरेवंभूतैर्धाराजलैरप्यशोष्यत शोषं प्राप्तवान् । अपिशब्दः सर्वत्र विरोधालंकृतिद्योतनार्थः । द्योतिताः प्रकाशिता दश दिशो येनैवंभूतेन शतह्रदालोकेन विद्युत्प्रकाशेनापि मूर्च्छा मोहः सैवान्धकारं तमिस्रं तस्मिन्नक्षिप्यत चिक्षिपे । आह्लादितः प्रमोदितो जीवलोको यैरेवंभूतैर्जलदानिलैर्झञ्झावायुभिरप्यदह्यत प्राज्वल्यत । पयोभारेण जलवीवधेन मेदुरैः पुष्टैरपि घनैर्मेघैस्तनुतां क्षीणतामानीयताप्राप्यत । पाटलितानि श्वेतरक्तीकृतानि शाद्वलानि शादहरितानि यैरीदृशैः शक्रगोपकैरप्यमिरजोभिरपि पाण्डुतां धवलतां प्रत्यपद्यत स्वीचक्रे । 'श्वेतरक्तस्तु पाटलः' इत्यमरः । कुसुमैः पुष्पैः कृत्वा धवलैः शुभ्रैरेतादृशैः कुटजैर्गिरिमल्लिकाभिरपि रागपरवशोऽनुरक्त्यधीनोऽक्रियताकल्प्यत । तथाप्येवं सत्यपि सकल-

**टिप्प०—1** समूहार्थे उपलोऽप्रसिद्धः । अत एव 'तृणोलपेषु' तृणेषु उलपेषु (गुल्मायितासु लतासु) 'गुल्मिन्युलप इत्यपि' इत्यमरः । 2 अश्मपतने वक्ष्यमाणं माधुर्यं न भवति, अत एव 'यथाधारासंपतनम्' इत्येव पाठः । 3 न वर्त्मनि नावासे इत्यादि पूर्वं सप्तम्यन्तमुपात्तम्, अग्रेपि 'न क्वचिदपि' इति अधिकरणनिर्देशेनैवोपसंहारः कृत इति 'स्मरणेन' 'अनुध्यानेन' इति तृतीयान्तपाठः स्थूल एव । 'न वैशम्पायनस्मरणे, न कादम्बरीसमागमानुध्याने, न कथंचिदपि' इत्येव पाठः । 4 ईदृशस्य मदनहुतभुजः अतिकष्टतया अतिक्लेशदायकत्वेन, इत्यन्वयः प्रहेलीकृतष्टीकाकृता । 5 'बीरबहुट्टी' इति भाषाख्यातैर्वर्षाकीटैः । 6 'तथाहि' इति पाठ उचितः ।

**पाठा०—१** पल्वलेषु. २ तृणोलपेषु. ३ यथाधारापतन; यथाधारासंपतन. ४ हृदयं प्रविशता धारा. ५ सकलधाराजलैः. ६ तथा च.

वनहेतुनापि जीवित[1]संदेहदोलामारोपितो जलदकालेन, उत्कूलगामिषु विधिविलसितेषु सरित्पूरेषु चोत्प्लवमानः, अनव[2]रतवर्षाजलजनितेषु मूर्च्छागमेषु पङ्कपटलेषु च निमज्जन्, जलभरस्थगितवर्त्मनि वि[3]लोचने च [4]स्खलन्, विकासिनीषु कादम्बरीप्राप्तिचिन्तासु धाराकदम्बरजोवृष्टिषु [5]चामीलयन्, अनुबन्धिषु गमनविघ्नेषु जलधरध्वनितेषु च [6]मुह्यन्, सुदुर्लङ्घ्यवेगान्युत्कण्ठितानि सहस्रशः स्रोतांसि चोल्लङ्घयन्, घनो[7]पाहितवृद्धिना कादम्बरीसमागमौत्सुक्येन पयःप्लवरयेण चोह्यमानः, जीवितप्रत्याशामवर्हन्, तुरङ्गमांश्च परित्यजन्, तर्ज्यमान इव तडिद्भिः; अवष्टभ्यमान इव जलधरैः, निर्भर्त्स्यमान इव विस्फूर्जितैः, शकलीक्रियमाण इव शतशो निस्त्रिंशवृत्तिभिर्धारासारैः, निरुद्धास्वपि जलदकालेनैवाशुगमनविघ्नभूतास्वाशासु कादम्बरीसमागमाशा सुतरां नारुध्यतास्य, [9]यया तादृशेऽपि यथास्थाननिगडितसमस्तप्राणिनि प्रावृट्काले कलामप्यकृतपरिलम्बोऽनीय[10]त तं पन्थानम् । धाराहतिविकूणिताक्षेण च मुहुर्मुहुर्व[11]लितान-

---

जगतः समग्रविश्वस्य जीवनहेतुनापि प्राणितकरेणापि जीवितस्य संदेहो द्वापरः स एव दोला प्रेङ्खा तां जलदकालेन मेघसमयेनारोपितः स्थापितः । कूलस्योर्ध्वमुत्कूलं गच्छन्तीत्येवंशीलान्युत्कूलगामीनि तेषूत्कूलगामिषु विधेर्विधातुरेव विलसितं चेष्टितं येष्वेतादृशेषु सरित्पूरेषु च नदीप्लवेषु चोत्प्लवमानस्तरन्ननवरतं निरन्तरं वर्षाजलैर्वृष्टिपानीयैर्जनितेषु विहितेषु मूर्च्छागमेषु मोहागमेषु पङ्कपटलेषु च कर्दमसमूहेषु च निमज्जन्ब्रुडन्, जलभरेण स्थगित आच्छादिते वर्त्मनि मार्गे लोचने नेत्रे च स्खलन्स्खलनां प्राप्नुवन् । विकासिनीषु विनिद्रासु कादम्बरीप्राप्तिचिन्तासु, धाराकदम्बाः येषां धारया पुष्पोद्गमो भवति ते धाराकदम्बाः, तेषां रजोवृष्टिष्वेतत्परागवर्षासु चामील[यन्]संकुचन् । अनुबन्धोऽन्योन्यं सापेक्षभावः स विद्यते येष्वेवंविधेषु गमनविघ्नेषु यात्राप्रतिबन्धेषु जलधरस्य मेघस्य ध्वनितेषु गर्जितेषु च मुह्यन्मोहं प्राप्नुवन्, सुतरां दुर्लङ्घ्यो वेगो रयो येषामेवंभूतान्युत्कण्ठितानि सहस्रशः स्रोतांसि तटिन्यादीनि चोल्लङ्घयन्नतिक्रामन् । घनो मेघो जलदस्तेनोपहिता स्थापिता वृद्धिर्येनैवंभूतेन कादम्बर्याः समागमस्यौत्सुक्येन रणरणकेन पयसः प्लवः पूरस्तस्य रयो वेगस्तेन चोह्यमानो वहमानो जीवितप्रत्याशां प्राणितसमीहामवहन्नधारयन् । तुरंगमानश्वांश्च परित्यजन्परिहरन्, तडिद्भिर्विद्युद्भिस्तर्ज्यमान इव तिरस्क्रियमाण इव, जलधरैर्मेघैरवष्टभ्यमान इव प्रतिरुध्यमान इव, विस्फूर्जितैर्जलदचेष्टितैर्निर्भर्त्स्यमान इव निर्भर्त्सनां क्रियमाण इव । शतशो निस्त्रिंशाः खड्गास्तेषां वृत्तिरिव वृत्तिर्वर्तनं येषामेवंभूतैर्धारासारैर्धाराया आसारैर्वेगवद्वर्षैः शकलीक्रियमाण इव खण्डीक्रियमाण इव, अस्य चन्द्रापीडस्य जलदकालेन मेघसमयेनैवाशुगमनस्य शीघ्रयात्राया विघ्नभूतासु प्रतिबन्धकारिणीष्वाशासु दिशासु निरुद्धास्वपि कादम्बरीसमागमाशा सुतरामत्यर्थं नारुध्यत न प्रत्यबध्यत, ययाऽऽशया तादृशेऽपि पूर्वोक्तलक्षणेऽपि यथास्थानं यथास्थलं निगडिताः संनाहिताः समस्ताः प्राणिनो येनैवंभूते प्रावृट्काले वर्षासमये कलामपि घटिकामात्रमपि न कृतो विहितः परिलम्बो विलम्बो येनैवंभूतस्तं पन्थानमनीयत प्राप्यत । कथंभूतः । अनुगम्यमानोऽनुयायमानः । केन । वाजिसैन्येनाश्वबलेन । एतदेव विशेषयन्नाह—**धारेति** । धाराणामाहत्याभिघातेन विकूणितेऽर्धमीलिते अक्षिणी

---

टिप्प०—1 उत्कूलं प्रतिकूलं गच्छन्ति तादृशानि विधिविलसितानि, कूलम् अतिक्रम्य गच्छन्ति तादृशाः सरित्पूराः इति बोध्यम् । 2 'आमीलन्' नेत्रे संकोचयन्, इत्येव पाठस्तदर्थश्च । टीकाकारस्तु दूरतः प्रणम्यः । 3 घनं घना ( प्रचुरा ) वा उपाहिता वृद्धिर्यस्य ईदृशेन समागमौत्सुक्येन । 4 'जीवितप्रत्याशामनिर्वहतस्तुरङ्गमांश्च परित्यजन्', मार्गगमनखेदेन अग्रे चलनशक्तिमवहतोऽश्वांस्तत्रैव त्यजन्निति पाठः अर्थश्च । 5 वज्रनिर्घोषैरित्यर्थः, 'स्फूर्जथुर्वज्रनिर्घोषः' इत्यमरः ।

---

पाठा०—१ जीवनसंदेह. २ वर्ष. ३ लोचने. ४ स्वलविकासिनीषु. ५ अमीलन्. ६ विमुह्यन्. ७ उपाहृत. ८ अनिर्वहंस्तुरंगमांश्च; अनिर्वहस्तुरंगमांश्च. ९ आशया तया; यथा. १० असौ. ११ विवलित; चलित.

मिताननेन श्च्योतदासक्तिसंपिण्डितकेसराग्रेणैकसंतानकर्दमानुमग्नखुरेणादृश्यनिम्नोन्नतस्खलद्गतिना विशीर्यमाणपर्याणसमायोगेनोपर्युपरिवाहिनीतीरोत्तारसंतानावानपृष्ठेनापचीयमानबलजवोत्साहेन वाजिसैन्येनानुगम्यमानो जीवितसंधारणाय यथा तथा निर्वर्तिताशनमात्रकोऽभ्यर्हितराजलोकवचसाप्यप्रतिपन्नशरीरसंस्कारो दिवसमेव केवलमवहत् ।

वहंश्च त्रिभागमात्रावशिष्टेऽध्वनि निवर्तमानं मेघनादमद्राक्षीत् । दृष्ट्वा च दूरत एव कृतनमस्कारं तमप्राक्षीत्—'तिष्ठतु तावत्पुरस्तात्पत्रलेखागमनवृत्तान्तप्रश्नः । वैशम्पायनवृत्तान्तमेव तावत्पृच्छामि । अयि, दृष्टस्त्वयाच्छोदसरसि वैशम्पायनः ? पृष्टो वावस्थानकारणम् ? पृष्टेन वा किंचित्कथितं न वा ? पश्चात्तापी वास्मत्परित्यागेन ? स्मरति वास्माकम् ? पृष्टोऽसि वानेन किंचिन्मदीयम् ? उपलब्धो वाभिप्रायः ? उत्पन्नो वालापो युवयोः ? मातापित्रोर्वा संदिष्टं किंचित् ? प्रतिबोधितो वा त्वयागमनाय ? आवेदितं वास्य

---

येन तत्तथा । मुहुर्मुहुर्वारंवारं वलितानि परावर्तितान्यानमितानि चाननानि मुखानि येन तत्तथा । च्योततीति च्योतत्प्रस्वेदस्तस्यासक्तिः संपर्कस्तेन संपिण्डितानि मिलितानि केसराणां स्कन्धरोम्णामग्राणि प्रान्तानि यस्मिंस्तत्तथा । एकं संतानं परम्परा यस्मिन्नेवंभूतः कर्दमः पङ्कस्तत्रानुमग्ना ब्रुडिताः खुराः शफा यस्य तत्तथा । अदृश्यं यन्निम्नोन्नतस्थलं तत्र स्खलन्ती गतिर्गमनं यस्य तत्तथा । विशीर्यमाणो विदीर्यमाणः पर्याणसमायोगः पल्ययनसंबन्धो यस्य तत्तथा । उपर्युपरि वाहिनीनां नदीनां तीराणां तटानामुत्तारस्तेषां संतानानि तैरवाना अशुष्काः पृष्ठयो यस्य तत्तथा । बलं सामर्थ्यम्, जवो वेगः, उत्साहः प्रगल्भता, एतेषां द्वन्द्वः । पश्चादपचीयमानानि प्रतिक्षणं हीनतां प्राप्यमाणानि बलजवोत्साहादीनि यस्य तत्तथा, जीवितसंधारणाय प्राणितधारणाकृते यथा तथा येन केन प्रकारेण निर्वर्तितं विहितमशनमात्रं केवलं भोजनं येन सः । अभ्यर्हितः पूजितो यो राजलोकस्तस्य वचसापि वाक्येनाप्यप्रतिपन्नोऽनङ्गीकृतः शरीरसंस्कारो देहशुश्रूषा येनैवंभूतः । केवलं दिवसमेवावहदचलत् ।

वहंश्च त्रिभागमात्रमवशिष्टमुद्धरितं यस्मिन्नेवंविधेऽध्वनि मार्गे निवर्तमानं पश्चाद्वलमानं मेघनादं स्वसपर्याकारिणमद्राक्षीद्व्यलोकयत् । दृष्ट्वा च विलोक्य च दूरत एव कृतो विहितो नमस्कारः प्रणामो येनैवंभूतं तमप्राक्षीदपृच्छत् । तावदादौ पुरस्तात् पत्रलेखागमनवृत्तान्तप्रश्नस्तिष्ठतु । वैशम्पायनस्य वृत्तान्तमुदन्तमेव तावत्पृच्छामि प्रश्नविषयीकरोमि । **अयीति** । अयीति विषादे । 'अयि क्रोधे विषादे च संभ्रान्तस्मरणेऽपि च' इति विश्वः । अच्छोदसरस्यच्छं निर्मलमुदकं जलं यस्मिन् । उदकस्योदादेशः । एवंविधे तटाके वैशम्पायनस्त्वया दृष्टो विलोकितः । अवस्थानकारणं तत्रावस्थाननिदानं पृष्टो वा पृच्छाविषयीकृतो वा । पृष्टेन वा तेन किंचित्कथितं प्रोक्तं न वा । अस्मत्परित्यागेन तस्य पश्चात्तापोऽनुतापोऽस्ति वा, अस्माकं स्मरति स्मृतिगोचरीकरोति वा । कर्मणि षष्ठी । अनेन वैशम्पायनेन किंचित्त्वं मदीयं मत्संबन्धि पृष्टोऽसि वा । उपलब्धो ज्ञातो वा तस्याभिप्राय आशयः । युवयोर्भवतोरुत्पन्नः संजातो वालापः संलापः । मातापित्रोर्जननीजनकयोः किंचित्संदिष्टं कथितं वा । त्वया भवताऽऽगमनाय प्रतिबोधितो वा प्रतिबोधं प्रापितो वा । अस्य वैशम्पायनस्य मदीय-

---

**टिप्प०**—1 प्रस्वेदपदं न दृश्यते मूले, अत एव च्योतत् स्खलत् आसक्त्या अन्योन्यसंश्लेषेण पिण्डितं घनतां गतं केसराग्रं यस्य तथोक्तेनेत्यर्थः । 2 तेन, इत्यर्थः ।

---

**पाठा०**—१ पिण्डित; संपीडित. २ अनुलग्न; मग्नोन्मग्न. ३ पूर. ४ विशीर्यता वाजी. ५ निवर्तित. ६ अभ्युद्धत. ७ दिवसमवहदेव केवलम्. ८ त्रिभागावशिष्टे. ९ वर्तमानम्. १० परस्तात्. ११ अपि. १२ च. १३ उपालब्धो वाभिप्रायो वाक्यम्; उपलक्षितो वाभिप्रायस्त्वया. १४ परिबोधितः

मदीयमागमनम् ? नापयास्यति वा तस्मात्प्रदेशात् ? दास्यति वा दर्शनम् ? ग्रहीष्यति वास्मदनुनयम् ? आगमिष्यति वा पुनर्मया सह ? किं कुर्वन्दिवसमास्ते ? को वा विनोदोऽस्य तिष्ठतः' इति ।

स त्वेवं पृष्टो व्यज्ञपयत्–"देव, देवेन तु 'वैशम्पायनमालोक्यानुपदमेव तुरंगमैरागत एवाहम्' इत्यादिश्य विसर्जितोऽहम् । अच्छोदसरसः प्रतीपं वैशम्पायनो गत इत्येषान्तरा वार्तैव नोपयाता । चिरयति च देवे जलदसमयारम्भमालोक्य कदाचिदेतेषु दिवसेषु देवेन तारापीडेन देव्या विलासवत्यार्यशुकनासेन च कृतप्रयत्नोऽपि न मुच्यत एवागन्तुं देवश्चन्द्रापीडः । त्वया चैकाकिना न स्थातव्यमेवास्यां भूमौ । परागतप्रायाश्च वयम् । तन्निवर्तयास्मादेव प्रदेशादित्यभिधाय पत्रलेखया केयूरकेण च त्रिचतुरैः प्रयाणकैरप्राप्त एवाच्छोदं यावद्बलान्निवर्तितोऽस्मि" इति एवमावेद्य विरराम । विरतवचनं च तं पुनरपृच्छत् । किमाकलयस्यद्यतनेनाह्ना यावत्परापतिता पत्रलेखा नेति । स तु व्यज्ञपयत्––'देव, यद्यन्तरा कश्चिदन्तरायो न भवति विलम्बकारी, तदा विना संदेहेन परापतितैवेत्यवगच्छति मे हृदयम् ।'

---

मागमनमावेदितं निवेदितं वा तस्मात्प्रदेशात्स्थानान्नापयास्यति न गमिष्यति वा । दर्शनं दास्यति वा । अस्माकमिति शेषः । अस्माकमनुनयं प्रणतिं ग्रहीष्यति वा । पुनर्मया सहागमिष्यति वागमनं करिष्यति वा । किं कुर्वन्किंविदधद्दिवसं दिनमास्ते तिष्ठति । अस्य वैशम्पायनस्यात्र तिष्ठतः स्थितिं कुर्वतः को विनोदः का केलिरिति ।

स तु मेघनाद एवं पृष्टः सन्व्यज्ञपयद्विज्ञप्तिं चकार । किं कथितवानित्याशयेनाह––**देव इति** । हे देव हे स्वामिन्, देवेनैव भवतैव वैशम्पायनमालोक्य निरीक्ष्यानुपदमनुचरणन्यासं तुरंगमैरश्वैरहमागत एवेत्यादिश्येत्युक्त्वाहं मेघनादाभिधो विसर्जितो गमनायानुज्ञातः । अच्छोदसरसः प्रतीपं वामं प्रदेशं वैशम्पायनो गत इत्येषा वार्तैव किंवदन्त्येवान्तरा विचाले । मार्गस्येति शेषः । नोपयाता न प्राप्ता । 'प्रतिकूलं तु विलोममपसव्यमपष्ठुरम् । वामप्रसव्यप्रतीपं प्रतिलोममपष्ठु च' इति हैमः । मया पूर्वं त्वं विसर्जितः कथमत्रागत इत्याकाङ्क्षायामाह––**चिरयति चेति** । जलदसमयारम्भं वर्षाप्रारम्भमालोक्य निरीक्ष्य देवे चिरयति विलम्बं कुर्वति सति एतेषु दिवसेषु वर्षावासरेष्वागन्तुमागमनाय कृतप्रयत्नोऽपि विहितोद्यमोऽपि देवश्चन्द्रापीडो देवेन तारापीडेन जनकेन, देव्या विलासवत्या मात्रा, आर्यशुकनासेन वृद्धमन्त्रिणा च कदाचिन्न मुच्यत एव । न स्वसमीपाद्दूरीक्रियत एव । त्वया चास्यां भूमावेकाकिनाऽसहायेन न स्थातव्यमेव न स्थेयमेव । परागतप्रायाश्च प्राप्तप्रायाश्च वयं पत्रलेखाकेयूरकाख्याः । ततोऽस्मादेव प्रदेशात्त्वं निवर्तय पश्चाद्वलेत्यभिधायेत्युक्त्वा पत्रलेखया केयूरकेण च त्रिचतुरैः प्रयाणकैः प्रस्थानकैरच्छोदं यावत्, अप्राप्त एव बलाद्धठान्निवर्तितः पश्चाद्वलितोऽस्मीत्यावेद्य निवेद्य विरराम विरतो बभूव । विरतवचनं मौनावलम्बिनं च तं मेघनादं पुनरपृच्छत् । किं तदित्याह––**किमिति** । किमाकलयसि किं जानासि । अद्यतनेनाह्ना दिवसेन यावत्, पत्रलेखा परापतिता प्राप्ता नेति न प्राप्ता वा । स तु मेघनादो व्यज्ञपयत्––हे देव, यद्यन्तरा मध्ये कश्चिदन्तरायः प्रत्यूहो विलम्बकारी परिलम्बकृन्न भवति न स्यात्, तदा संदेहेन विना निःसंदेहं परापतितैव तत्र गतैव मे मम हृदयं चेत इत्यवगच्छति जानातीति ।

---

टिप्प०––1 'अच्छोदसरसः समीपे' इति पाठः स्पष्टः । 2 'निवर्तस्व' ( परावर्तस्व ) इत्येव पाठः । प्रेरणार्थस्तु टीकाकृतो विचारदारिद्र्यम् । 3 त्रिचतुर्दिवससाध्यैः प्रयाणकैः अप्राप्तः अर्थात् यावता त्रिचतुरदिवसैरच्छोदसरः प्राप्यते ततः स्थानात्पूर्वमेवाहं परावर्तित इत्याशयः ।

---

पाठा०––१ आगमनम्. २ एवमापृष्टः; एवमादिष्टः. ३ विज्ञपयेत्. ४ अथाच्छोद. ५ नोपयाता; चोपजाता. ६ मुच्येत. ७ निवर्तस्व. ८ विनिर्वर्तितः. ९ किमु कलयसि. १० अद्य तेन. ११ भविष्यति.

इत्युक्तवति मेघनादे घनसमयवर्धिताभोगमकरध्वजार्णवमध्यपातिनीं[1] स्वानुमानात्कादम्बरीमुत्प्रेक्ष्योत्प्रेक्ष्य विक्लवीभवतः पर्यवर्त्यन्त[2] इवास्य जलधराः कालपुरुषैः, तडितो मदनानलशिखाभिः, अवस्फूर्जितं प्रेतपतिपटहस्वनैः, आसारधाराः स्मरेषुभिः, आमन्द्रगर्जितं[3] मकरध्वजधनुर्ज्यागुञ्जिताभोगेन, कलापिकेकाः कालदूतालापैः, केतकामोदो विषपरिमलेन, खद्योताः प्रलयानलस्फुलिङ्गराशिभिः[4], अलिवलयानि कालपाशैः, बलाकाश्रेणयः प्रेतपतिपताकाभिः, आपगाः सर्वक्षयमहापूरप्लवैः, दुर्दिनानि कालरात्र्या, कुटजतरवः कृतान्तहासैः । अपि च शरीरेऽपि सत्त्वं कातरतया, बलं क्षामतया, कान्तिर्वैवर्ण्येन, मतिर्मोहेन, धैर्यं विषादेन, हसितं शुचा, नयनमश्रुणा, आलपनं मौनेन, अङ्गान्यसहतया[5], करणान्यपाटवेन, सर्वमेवारत्या[6][7] ।

---

मेघनाद उक्तवति कथितवति सति घनसमयो वर्षाकालस्तेन वर्धितो वृद्धिं प्रापित आभोगो विस्तारो यस्यैवंभूतो यो मकरध्वज एवार्णवः समुद्रस्तस्य मध्यपातिनीं तदन्तर्गतां स्वानुमानादपि । यथा तस्या दुःखेन विरहेणाहं दुःखवान्, तथा मद्विरहेण सापि भविष्यतीत्यनुमानं तस्मादित्यर्थः । कादम्बरीमुत्प्रेक्ष्योत्प्रेक्ष्य हृदयवर्तिनीं विलोक्य विलोक्य विक्लवीभवतो विह्वलीभवतोऽस्य चन्द्रापीडस्य जलधरा मेघाः कालपुरुषैर्यमकिंकरैः पर्यवर्त्यन्त[1] इवात्मसात्क्रियन्त इव । स्वस्वरूपमापाद्यन्त इवेति यावत् । अतो जलधराः कालपुरुषा एव बभूवुरित्यर्थः । एवमग्रेऽपि पर्यवर्त्यन्त इवेति यथायोग्यं योज्यम् । तडितो विद्युतो मदन एवानलो वह्निस्तस्य शिखाभिर्ज्वालाभिः पर्यवर्त्यन्त इव । अवस्फूर्जितं करालगर्जितं प्रेतपतिर्यमस्तस्य पटहो ढक्का तस्य स्वनैः शब्दैः पर्यवर्त्यत इव । क्वचित् 'प्रेतपुरीपटहस्वनेन' इत्यपि पाठः । आसारधारा वेगवद्वृष्टिधाराः स्मरस्य कंदर्पस्येषवो बाणास्तैः पर्यवर्त्यन्त इव । आमन्द्रगर्जितं गम्भीरस्तनितं मकरध्वजधनुषो ज्या प्रत्यञ्चा तस्या गुञ्जितं शब्दितं तस्याभोगेन विस्तारेण पर्यवर्त्यत इव । कलापिकेका मयूरवाण्यः कालदूता यमप्रहितजनास्तेषामालापैः संभाषणैः । केतकस्य क्रकचच्छदस्यामोदः परिमलो विषं गरलं तस्य परिमलेन । खद्योता ज्योतिरिङ्गणाः प्रलयस्य कल्पान्तस्यानलो वह्निस्तस्य स्फुलिङ्गा अग्निकणास्तेषां राशिभिः समूहैः पर्यवर्त्यन्त इव । 'खद्योतो ज्योतिरिङ्गणः' इति हैमः । अलिवलयानि भ्रमरकटकानि[2] कालपाशैर्यमबन्धनैः । बलाकाश्रेणयो विसकण्ठिकासमूहाः प्रेतपतिर्यमस्तस्य पताकाभिर्वैजयन्तीभिः । आपगा नद्यः सर्वेषां क्षयो विनाशो येभ्य एवंविधैर्महापूरस्य प्लवैः प्रवाहैः । दुर्दिनानि मेघजनिततमांसि कालरात्र्या मृत्युप्रदनिशया 'कादम्बिनी मेघमाला दुर्दिनं मेघजं तमः' इति हैमः । कुटजतरवो गिरिमल्लिकाः कुटजवृक्षपुष्पाणि कृतान्तस्य यमस्य हासैः स्मितैः । पर्यवर्त्यन्त इवेत्यर्थः । **अपि चेति** । अन्यदपि शरीरेऽपि देहेऽपि सत्त्वं साहसं कातरतया भीरुकतया[3], बलं स्थामं क्षामतया क्षीणतया, कान्तिर्द्युतिः । शरीरस्येति शेषः । वैवर्ण्येन कालिकया । विच्छायतयेत्यर्थः । मतिर्बुद्धिर्मोहेनाज्ञानेन, धैर्यं धीरिमा विषादेनावसादेन, हसितं हास्यं शुचा शोकेन, नयनं नेत्रमश्रुणा वाष्पेण, आलपनं जल्पनं मौनेन जोषेण, अङ्गानि प्रतीका असहतयाक्षमतया, करणानीन्द्रियाण्यपाटवेनापटुतया, सर्वमेव समग्रमेवारत्योद्वेगेन कृत्वा ।

---

टिप्प०—1 पर्यवर्त्यन्त परस्परं विनिमयं प्राप्यन्तेव, जलधराः कालपुरुषा अबुध्यन्तेत्याशयः । एवं तडितो मदनानलशिखा अज्ञायन्तेत्यादिः सर्वत्रार्थो बोद्धव्यः । 2 अन्धवत् वलयस्य कटकपर्यायकरणमनिर्वचनीयां व्युत्पत्तिं सूचयति । भ्रमरसमूहा इत्यर्थः । 3 पर्यवर्त्यत, साहसस्य परिवर्ते कातरत्वमभवदित्यर्थः ।

---

पाठा०—१ मध्यपातिनी. २ परिवर्तन्ते; परिवर्त्यन्ते; ३ आमन्द्रम्. ४ रश्मिभिः. ५ असहितया. ६ सर्वं च. ७ रजन्या.

दिवसैश्चोल्लिख्यमानमिवानवरतवाहिनाश्रुपूरप्रवाहेणावभज्यमानमिव । संततैर्निश्वासप्रभञ्जनैरुत्खन्यमानमिव । संततैः सान्तर्मदनदुःखोत्कलिकासहस्रैरजस्रपातिभिरितस्ततो जर्जरीक्रियमाणमिव । अपि च सहस्रैर्मकरध्वजशरासारैर्वपुषैव च सह क्षीयमाणमिव स्वल्पावशेषं संकल्पलिखितेन निर्विशेषवृत्तिना कादम्बरीशरीरेणैव सह कण्ठलग्नं कथंकथमपि जीवितं धारयन्, धाराधरक्लिन्नतीरतरुतलम्, आप्लावितोपान्तहरितशाद्वलम्, अशेषतटलतावनम्, अनवरतरोधोजलप्रवेशकलुषितप्रान्तम्, अवशीर्यमाणोद्दण्डकुमुददलगहनम्,

---

दिवसैर्दिनैश्चोल्लिख्यमानमिवोत्कीर्यमाणमिव, अनवरतवाहिना निरन्तरप्रवर्तिनाश्रुपूरप्रवाहेण नेत्रजलप्लवरयेणावभज्यमानमिव मर्द्यमानमिव, सततैर्निरन्तरैः सविस्तृतैर्वा निश्वासप्रभञ्जनैः घ्राणवायुभिरुत्खन्यमानमिवोत्पाट्यमानमिव, सततैरत एवाजस्रपातिभिर्निरन्तरपतनशीलैः सान्तर्मदनस्य कंदर्पस्य यद्दुःखमसातं तस्योत्कलिकासहस्रैर्हृल्लेखासहस्रैरितस्ततः प्रेरणेन जर्जरीक्रियमाणमिव शिथिलीक्रियमाणमिव । अपि च सहस्रैः सहस्रसंख्याकैर्मकरध्वजस्य मदनस्य शरासारैर्बाणवेगवृष्टिभिर्वपुषा शरीरेणैव च सह क्षीयमाणमिव क्षीणतां प्राप्यमाणमिव । स्वल्पं स्तोकं यदवशेषमुर्वरितं संकल्पलिखितं कल्पनाकल्पितं तेन निर्विशेषवृत्तिना स्वरूपमात्रवर्तिना कादम्बरीशरीरेणेव सह कण्ठलग्नं निगरणासक्तं कथंकथमपि महता कष्टेन जीवितं प्राणितं धारयन्बिभ्रन्(त्) । तदेवाच्छोदं सर आससाद प्राप्तवान् । इतोऽच्छोदं विशेषयन्नाह—**धारेति** । धाराधरेण क्लिन्नमार्द्रं तीरस्य तटस्य तरूणां वृक्षाणां तलमधोभागो यस्मिंस्तत्तथा । आप्लावितो जलेन धौत उपान्तः समीपवर्ती हरितो नीलः शाद्वलप्रदेशो यस्य तत्तथा । 'शाद्वलः शादहरिते' इत्यमरः । अशेषे समग्रे तटे तीरे लतावनं वल्लीकाननं यस्मिंस्तत्तथा । अनवरतं निरन्तरं रोधस्तटं तस्य जलप्रवेशेन पानीयागमेन कलुषितो मलिनीकृतः प्रान्तः प्रवेशो यस्य तत्तथा । अवशीर्यमाणानि भ्रश्यमानानि यान्युद्दण्डान्युन्नालानि कुमुदानि कैरवाणि तेषां

---

**टिप्प०**—1 'दिवसै'रित्यारभ्य 'जीवितं धारयन्' एतत्पर्यन्तो ग्रन्थः पर्यायान्वेषणमात्रपाटवेन टीकाकारेण अनुचितान्वयं कृत्वा सर्वोपि भ्रष्टीकृतः । 'दिवसैः' इति 'तदेव अच्छोदमाससाद' इत्यत्रान्वेति । कतिपयैर्दिवसैश्चन्द्रापीडः अच्छोदं प्रापेति स्पष्टोऽर्थः । उल्लिख्यमानमिवानवरतवाहिनाऽश्रुपूरेण, (अश्रुप्रवाहेण उल्लिख्यमानमिव उत्कीर्यमाणमिव, इति तदर्थः) निश्वासप्रभञ्जनैः अपभज्यमानमिव, इत्यादिरग्रेऽप्यन्वयः सुस्पष्ट एव । किन्तु—दिवसैः उल्लिख्यमानमिव, अश्रुप्रवाहेणापभज्यमानमिव, इत्यादिरूपेणान्तपर्यन्तमन्वयं व्यत्यस्य सर्वामपि कादम्बरीं गरलीचकार । शरैर्जर्जरीकरणं पामरेणापि परिज्ञातम्, किन्तु टीकाकारशिरोमणिस्तत्परिवर्त्य 'उत्कलिकासहस्रैर्जर्जरीक्रियमाणमिव' इत्यादि व्याख्याति । अजस्रपातिभिरिति विशेषणमत्र सुन्दरतयाऽन्वेति, उत मकरध्वजशरासारैरित्यत्र, इति तु सहृदयैरेव विवेक्तव्यम् । पाठकानां सौकर्याय शुद्धं पाठमुल्लिखामि, शब्दानामर्थष्टीकातोऽपि ज्ञातुं शक्यः । "दिवसैश्चोल्लिख्यमानमिवाऽनवरतवाहिनाऽश्रुपूरेण, अवभज्यमानमिव संततैर्निश्वासप्रभञ्जनैः, उत्खन्यमानमिव मदनदुःखोत्कलिकासहस्रैः, अजस्रपातिभिरितस्ततो जर्जरीक्रियमाणमिव मकरध्वजशरासारैः, वपुषैव सह क्षीयमाणमिव स्वल्पावशेषसंकल्पलिखितेन निर्विशेषवृत्तिना कादम्बरीशरीरेण सह कण्ठलग्नं कथंकथमपि जीवितं धारयन्", [ वपुर्यथा क्षीणं जातं तथा जीवितमपि क्षीणम् । स्वल्पः अवशेषो यस्य तादृशेन तथा संकल्पेन मनःकल्पनया लिखितेन, निर्विशेषवृत्तिना स्वशरीरादभिन्नेन कादम्बरीशरीरेण सह, कादम्बरीशरीरं यथा भावनावशात्कण्ठालिङ्गनसक्तं तथा खेदातिशयात् जीवितमपि कण्ठागतमित्यर्थः । ]
2 आसेव्यतटलतावनम् । इत्येव पाठः ।

---

**पाठा०**—१ प्रवाहिता; वाहिता रथवाहिना. २ धारा. ३ अपभज्यमानम्; विभज्यमानम्. ४ संततैः. ५ शेषसंकल्प. ६ इव. ७ धाराधरजल. ८ उपान्तं. ९ आसेव्य; अशेष. १० प्रवेशं. ११ कुसुमकुमुद.

आमग्नकमलखण्डम्, उत्प्लवमानाश्यानकिंजल्कदलकमलम्, आजर्जरितकह्लारकुवलयम्, उद्भ्रान्तभ्रमदलिवलयम्, उड्डीनहंससार्थत्यक्तम्, अनवस्थानसारसारसितकरुणम्, अवशिष्ट-दलतलनिलीयमानोच्चकितचक्रवाकयुगम्, उत्कम्पितकादम्बकदम्बकाश्रीयमाणोपकूलनड्वलम्, उत्कलविरुतकलापिबकबलाककलापाध्यासितोपान्तपादपम्, आहतं प्रावृषान्यदिव, दृष्ट-पूर्वमप्यदृष्टपूर्वमिव, अदत्तदृष्टिसुखम्, अनुत्पादितहृदयाह्लादम्, अनुपजनितमानसप्रीति, तदेवाच्छोदमुपाहितद्विगुणदुःखमाससाद ।

आसाद्य चोपसर्पन्नेव सर्वाश्ववारानादिदेश । 'कदाचिदसौ वैलक्ष्यादस्मानालोक्यापस-र्पत्येव, तच्चतुर्ष्वपि पार्श्वेष्ववहिता भवन्तु भवन्तः' इत्यात्मनापि तुरगगत एव खिन्नोऽप्य-खिन्न इव विचिन्वंल्लतागहनानि वृक्षमूलानि शिलातलानि लसन्मण्डपांश्च समन्ताद्बभ्राम । भ्राम्यंश्च यदा न क्वचिदपि किंचिदवस्थानचिह्नमप्यद्राक्षीत्तदा चकार चेतसि—'नियतमसौ

---

दलानि पत्राणि तैर्गहनं निबिडम् । दुरवगाहमित्यर्थः । आमग्नं त्रुडितं कमलखण्डं पद्मवनं यस्मिंस्तत्तथा । उत्प्लवमानान्युत्प्राबल्येनोदुदूर्ध्वं तीर्यमाणान्यनाश्यानान्यशुष्काणि किंजल्कदलानि कमलानि च यस्मिंस्तत्तथा । 'किंजल्कः केसरोऽस्त्रियाम्' इत्यमरः । आ समन्ताज्जर्जरितानि शिथिलितानि कह्लारकुवलयानि यस्मिंस्तत्तथा । तत्र कह्लारं सौगन्धिकम् । 'सौगन्धिकं तु कह्लारम्' इत्यमरः । कुवलयानि प्रतीतानि । उद्भ्रान्तं चकितं च तद्भ्रमत्कमलाभावादलिवलयं भ्रमरसमूहो यस्मिंस्तत्तथा । उड्डीनैः संडीनैर्हंससार्थैश्चक्राङ्गसमूहैस्त्यक्तमुज्झितम् । 'प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः' इत्यमरः । क्वचित् 'उड्डीनहंससार्थम्' इत्येव पाठः । तत्रोड्डीना हंसानां सार्थाः समूहा यस्मिन्नित्यर्थः । न विद्यतेऽवस्थानं मेघसद्भावाद्येषां तेऽनवस्थाना एवंविधाः सारसा लक्ष्मणा-स्तेषामारसितं रटितं तेन करुणं दीनम् । अवशिष्टानि यानि दलानि पत्राणि तेषां तले निलीयमानमाश्रीयमाण-मुच्चकितमुत्त्रस्तं चक्रवाकयुगलं रथाङ्गाह्वयुग्मं यस्मिंस्तत्तथा । उत्कम्पितास्त्रस्ता ये कादम्बानां हंसानां कदम्बकाः समूहास्तैराश्रीयमाण उपकूलस्य नड्वलः । 'नडप्रायो नडकीयोऽनड्वांश्च नड्वलश्च सः' इति हैमः । प्रदेशो यस्मिं-स्तत्तथा । उत्प्राबल्येन कलं मनोहरं विरुतं येषामेवंविधाः कलापिनो मयूराः, बका बकोटाः, बलाका विस-कण्ठिकाः, तेषां कलापाः समूहास्तैरध्यासित आश्रित उपान्तपादपः समीपवृक्षो यस्य तत्तथा । प्रावृषा प्रावृट्-कालेनाहतं पीडितं तेनान्यदिवेतरदिव । दृष्टपूर्वमपि विलोकितपूर्वमप्यदृष्टपूर्वमिवानिरीक्षितपूर्वमिव । अदत्तं दृष्टेर्नेत्रस्य सुखं सातं येन तत्तथा । अनुत्पादितोऽविहितो हृदयस्य चेतस आह्लादः प्रमोदो येन तत्तथा । अनु-पजनिताऽकृता मानसस्य स्वान्तस्य प्रीतिः स्नेहो येन तत्तथा । उपाहितं स्थापितं द्विगुणं दुःखं येन तत्तथा । आससादेत्यन्वयस्तु प्रागेवोक्तः ।

आसाद्य च प्राप्य चोपसर्पन्नेवोपसरन्नेव सर्वान्समग्रानश्ववारान्सादिन इत्यादिदेशाज्ञां दत्तवान् । इतियोग्य-माह—**कदेति** । कदाचिदसौ वैशम्पायनो वैलक्ष्याद्व्रीडापन्नत्वतोऽस्मानालोक्य निरीक्ष्यापसर्पत्येवापयात्येव । तच्चतुर्ष्वपि पार्श्वेषु भवन्तो यूयमवहिताः सावधाना भवन्तु । इत्यात्मनापि स्वेनापि तुरगगत एवाश्वाधिरूढ एव खिन्नोऽपि खेदं प्राप्तोऽप्यखिन्न इवाप्राप्तखेद इव विचिन्वन्विलोकयंल्लतागहनानि वल्लीगह्वराणि वृक्षमूलानि पादपबुध्नानि शिलातलानि प्रसिद्धानि लसन्मण्डपांश्च प्रतिदिवसवर्धमानवीरुज्जनाश्रयांश्च समन्ताद्दिक्ष्वबभ्राम । भ्राम्यंश्च पर्यटंश्च यदा क्वचिदपि कुत्रापि स्थले किंचिदपि स्वल्पमप्यवस्थानचिह्नं निवासाभिज्ञानं नाद्राक्षीन्न

---

**टिप्प०—**1 उड्डीनैस्त्यक्तमिति विचारदारिद्र्यम् । अत एव 'उड्डीनहंसमालम्' इत्येव पाठः । 2 'अनवस्थानसारसात्तकरुणकूजितम्' (अनवस्थानैः सारसैः आत्तं स्वीकृतं करुणकूजितं यत्र तत्) ।

---

**पाठा०—**१ अजर्जरित. २ हंसमालम्. ३ आश्रितमान. ४ मुक्तकलविरुत; उत्ककलविङ्क. ५ कलाप. ६ दृष्टमप्य-पूर्वमिव, अन्यदिवादृष्टपूर्वमिव. ७ इव. ८ सर्वान्. ९ लता.

पत्रलेखासकाशान्मदागमनमुपलभ्य प्रथममेवापक्रान्तो येनावस्थानचिह्नमात्रकमपि कथमपि नोपलक्ष्यते । निरुद्धोद्देशं गतश्च काप्यस्माभिरसावेवान्विष्टोऽपि न दृष्टः । तत्कष्टतरमापतितम् । वैशम्पायनमदृष्ट्वास्मात्प्रदेशात्पदमपि गन्तुं पादावेव नोत्सहेते । मे मन्मथशरविक्षिप्ताश्च कादम्बरीदर्शनमात्रालम्बनाः क्षणमपि विलम्बमन्तरीकर्तुमक्षमाः क्षामतया मा यासिषुः प्राणाः । सर्वथा विनष्टोऽस्मि, न दृष्टा देवी कादम्बरी, नापि वैशम्पायन' इति । एवमुत्पन्ननिश्चयोऽप्यपरिच्छेद्यस्वभावत्वात्प्रत्याशायाः कदाचिदस्य वृत्तान्तस्याभिज्ञा महाश्वेतापि भवत्येव । तत्तां तावत्पश्यामि । ततो यथायुक्तं प्रतिपत्स्य इत्यारोप्य हृदये तदाश्रमस्यैव नातिदूरे निवेशिततुरगसैन्यः सैन्यसमायोगमपनीय सर्पनिर्मोकपरिलघुनी घनोज्झितज्योत्स्नाभिरामे परिधाय वाससी तथास्थितपर्याणमेवेन्द्रायुधमारुह्य महाश्वेताश्रममुपाजगाम ।

---

व्यलोकयत् तदेति चेतसि चित्ते चकार निर्ममे । नियतं निश्चितमसौ वैशम्पायनः पत्रलेखायाः सकाशात्समीपान्मदागमनं चन्द्रापीडागमनमुपलभ्य प्राप्य प्रथममेवादावेवापक्रान्तो गतो येन कारणेनावस्थानचिह्नमात्रकमपि निवासज्ञापकाभिज्ञानमात्रमपि कथमपि महता कष्टेन नोपलक्ष्यते न ज्ञायते । निरुद्धोद्देशं निरुद्धप्रदेशं गतश्च प्रायश्चासावेव वैशम्पायन एवास्माभिरन्विष्टोऽपि विलोकितोऽपि क्वापि न दृष्टो न दृक्पथमायातः । तत्तस्माद्धेतोः कष्टतरमतिकृच्छ्रमापतितमायातम् । तदेव प्रदर्शयन्नाह—**वैशम्पायनेति** । वैशम्पायनमदृष्ट्वानवेक्ष्यास्मात्प्रदेशात्पदमपि गन्तुं पादावेव नोत्सहेते नोद्यमं कुर्वाते । मे मम मन्मथः कंदर्पस्तस्य शरैर्बाणैर्विक्षिप्ता नोदिताश्च प्राणा असवः गताः कथं नेत्याकाङ्क्षायामाह—**कादम्बरीति** । केवलं कादम्बरीदर्शनमेवालम्बनं येषां ते तथा । तद्दर्शनावलम्बनेन स्थिता इत्यर्थः । अन्तरा मध्ये क्षणमपि निमेषमात्रमपि विलम्बं कर्तुं विधातुमक्षमा असमर्थाः क्षामतया क्षीणतया मा यासिषुः प्राणाः । न विलोकिता देवी कादम्बरी न वैशम्पायन इति हेतोः सर्वथा सर्वात्मनाहं विनष्टो गतप्राय एवास्मि । एवमुत्पन्ननिश्चयोऽपि संजातनिर्णयोऽप्यपरिच्छेद्यस्वभावत्वादनवेद्यप्रकृतित्वात्प्रत्याशायाः प्रतिलिप्सायाः अस्य पूर्वोक्तवृत्तान्तस्य कदाचिदभिज्ञा वेत्री महाश्वेतापि भवत्येव । तत्तस्माद्धेतोस्तावदादौ तां महाश्वेतां पश्यामि विलोकयामि । ततस्तदनन्तरं यथायुक्तं यथोचितं प्रतिपत्स्येऽङ्गीकरिष्ये हृदये चेतसीत्यारोप्येत्याधाय तस्या महाश्वेताया आश्रमस्य गुम्फाया नातिदूरे नातिविप्रकृष्टे निवेशितं स्थापितं तुरगसैन्यमश्वबलं येनैवंभूतः सैन्यसमायोगं वाहिन्याः संबन्धमपनीय दूरीकृत्य सर्पस्याहेर्निर्मोकः कञ्चुकः । 'फणोऽहिकोशे तु निर्ल्वयनी निर्मोककञ्चुकाः' इति हैमः । तद्वत्परिलघुन्यगुरुणी, घनेन मेघेनोज्झिता त्यक्ता या ज्योत्स्ना चन्द्रिका तद्वदभिरामे मनोहरे वाससी वस्त्रे परिधायं परिधानं कृत्वा । अत्र वस्त्रद्वयग्रहणं देशाचारविशेषादेव मन्तव्यम् । यथा पूर्वं स्थापितं तथैव स्थितं पर्याणं पल्ययनं यस्यैवंभूतमेवेन्द्रायुधमश्वमारुह्यारोहणं कृत्वा महाश्वेताश्रममुपाजगामोपाययौ ।

---

**टिप्प०**—1 न कोऽप्यस्यार्थः । अत एव 'निरुद्देशम्' ( नास्ति उद्देशो यत्र तथा तत् ) इत्येव पाठः । 2 'एवम्' अस्माभिः अन्विष्टोपि न दृष्टः, इत्येव पाठः । 3 वाक्यादौ 'मे' इति प्रयोगोप्यवैयाकरणत्वम् । अतः मे इति पूर्वान्वयि, मे पादौ नोत्सहेते इति । 4 आशायाः स्वभावो न इदंतया निश्चेतुं शक्यः नानारूपा आशा भवतीत्याशयः ।

---

पाठा०—१ प्रथमतरम्. २ मात्रकमपि. ३ निरुद्देशम्. ४ कष्टम्, कष्टतमम्. ५ क्षामतयामी प्राणाः; क्षोभमयप्राणाः. ६ अपहाय.

तत्र च प्रविशन्नेवावतीर्य महाश्वेतावलोकनकुतूहलात्पश्चादाकृष्टेनेन्द्रायुधपरिजनेनानुगम्यमानो विवेश । प्रविश्य च गुहाद्वार एव धवलशिलातले समुपविष्टामधोमुखीमसह्यमन्युवेगोत्कम्पितसर्वावयवामनवरतनयनजलवर्षिणीमुच्चण्डवाताहतां लतामिवोद्बाष्पदीनदृष्ट्या कथंकथमपि तरलिकया विधृतशरीरां महाश्वेतामपश्यत् । दृष्ट्वा च तां तादृशीमस्योदपादि हृदये —'मा नाम देव्याः कादम्बर्या एव किमप्यनिष्टमुत्पन्नं भवेत् । येनेयमीदृश्यवस्था हर्षहेतावपि मदागमनेऽनुभूयते महाश्वेतया ।' इत्याशङ्काभिन्नहृदयोऽयमुड्डीनैरिव प्राणैः पदे पदे स्खलन्निव पतन्निव मुह्यन्निवोपसृत्योपविश्य च तस्यैव शिलातलस्यैकदेशे प्रोद्बाष्पविषण्णवदनः किमेतदिति तरलिकामपृच्छत् । सा तु तथावस्थाया अपि महाश्वेताया एव मुखमवलोकितवती ।

अथानुपसंहृतमन्युवेगापि गद्गदिकावगृह्यमाणकण्ठा महाश्वेतैव प्रत्यवादीत्—"महाभाग, किमियमावेदयति वराकी । यया दुःखाभिघातैककठिनहृदयया पुनरप्यदुःखश्रवणार्हेऽपि

---

तत्र च तदाश्रमे प्रविशन्नेव प्रवेशं कुर्वन्नेवावतीर्यावतरणं कृत्वा । अश्वादिति शेषः । महाश्वेताया अवलोकनं निरीक्षणं तस्मिन्यत्कुतूहलमाश्चर्यं तस्मात्पश्चादाकृष्टेनाकर्षितेनेन्द्रायुधस्य परिजनः परिच्छदस्तेनानुगम्यमानोऽनुयायमानो विवेश प्रवेशं कृतवान् । प्रविश्य च प्रवेशं कृत्वा च गुहाद्वारे या धवलशिला तस्यास्तले समुपविष्टां निषण्णामधोमुखीं नीचैर्मुखीं महाश्वेतामपश्यद्व्यलोकयत् । कीदृशीम् । असह्यो विसोढुमशक्यो यो मन्युः क्रोधः शोको वा । 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । तस्य वेगो रयस्तेनोत्कम्पिता उच्चलिताः सर्वावयवाः समग्रापघना यस्याः सा ताम् । अनवरतं निरन्तरं नयनजलं नेत्राम्बु वर्षतीत्येवंशीला सा ताम् । अत एवोत्प्रेक्ष्यते—उच्चण्डोऽत्युग्रो यो वातो वायुस्तेनाहतां ताडितां लतामिव । 'उच्चण्डस्त्वतिकोपनः' इति हैमः । उद्बाष्पोद्गताश्रुरेवंविधा दीना दुःखिता दृष्टिर्दृग्यस्या एतादृश्या तरलिकया कथंकथमपि महता कष्टेन विधृतं धारितं शरीरं यस्याः सा ताम् दृष्ट्वा च निरीक्ष्य च तादृशीं तथावस्थां महाश्वेताम्, अस्य चन्द्रापीडस्य हृदय उदपाद्युत्पन्नम् । तदेव प्रकटयन्नाह—नामेति कोमलामन्त्रणे । देव्याः कादम्बर्या एव किमप्यनिर्दिष्टनामकमनिष्टमशिवमुत्पन्नं प्रादुर्भूतं भवेत् । येन हेतुनेयं प्रत्यक्षोपलभ्येदृश्येतत्प्रकारावस्था दशा महाश्वेतया हर्षहेतावपि प्रमोदनिदानभूतेऽपि मदागमने अनुभूयतेऽनुभवविषयीक्रियते इत्याशङ्कारेका तया भिन्नं विदीर्णं हृदयं चेतो यस्यैवंभूतोऽयं चन्द्रापीड उड्डीनैरिवोड्डीयगतैरिव प्राणैरसुभिरत एव पदे पदे स्खलन्निव स्खलनां प्राप्नुवन्निव, पतन्निव, भ्रश्यन्निव, मुह्यन्निव मोहं गच्छन्निव, उपसृत्य समीप आगत्य तस्यैव शिलातलस्यैकदेश एकप्रदेश उपविश्य च प्रोद्बाष्पेण प्रकृष्टाश्रुणा विषण्णं विलक्षं वदनमाननं यस्यैवंभूतः किमेतदिति तरलिकामपृच्छदप्रश्नयत् । सा तरलिका । तु पुनरर्थे । तथावस्थाया अपि तथाविधदुःखदग्धाया अपि महाश्वेताया एव मुखमाननमवलोकितवती निरीक्षितवती ।

**अथेति** । तदनन्तरम् । अनुपसंहृतोऽदूरीकृतो मन्युवेगो यया सैवंविधापि गद्गदिकया गद्गदध्वनिनावगृह्यमाणो रुध्यमानः कण्ठो यस्याः सा महाश्वेतैव प्रत्यवादीत्प्रत्यब्रवीत् । हे महाभाग, किमियं वराकी शोचनार्हा । 'वराकः संगरे शोच्ये' इति विश्वः । आवेदयति कथयति । दुःखस्याभिघातः प्रहारस्तेनैकमद्वितीयं कठिनं कठोरं हृदयं भुजान्तरं यस्या एवंविधया यया मया पुनरप्यदुःखश्रवणार्हेऽपि दुःखं श्रोतुमयोग्येऽप्यात्मीयं

---

टिप्प०—1 प्रोद्बाष्पः प्रकृष्टाश्रुरित्येवोचितम् । 2 'अदुःखश्रवणार्हः' इति प्रथमान्तमेवोचितम् ।

---

पाठा०—१ तत्र च प्रवेश एव; तत्राप्रविशन्नेव. २ इन्द्रायुधेन परिजनेन च; इन्द्रायुधेन परिजनेन राजपुत्रैश्च. ३ किमिति नावेदयते; किमपि नावेदयते. ४ पुनरदुःखश्रवणार्होऽप्यात्मीयदुःखं प्रापितः, पुनरप्यदुःखश्रवणार्होऽप्यात्मीयदुःखं श्रावितः.

दुःखमात्मीयं श्रावितम्, सैवाहं मन्दभाग्या महाभाग, जीवितव्यसनिनी निर्लज्जा निर्घृणा च दुःश्रवणमपि श्रावयामि दुःखमिदम् । श्रूयताम् । केयूरकाद्भवद्गमनमाकर्ण्य विदीर्यमाणमनसा न मया चित्ररथस्य मनोरथः पूरितः, न मदिरायाः प्रार्थना कृता, नात्मनः समीहितं संपादितम्, न गृहाभ्यागतस्य चन्द्रापीडस्य प्रियमनुष्ठितम्, न चापि हृदयवल्लभसमागमनिर्वृता प्रियसखी कादम्बरी वीक्षितेत्युत्पन्नानेकगुणवैराग्या गाढबन्धान्कादम्बरीस्नेहपाशानपि छित्त्वा पुनः कष्टतरतपश्चरणायात्रैवायाता, यावदत्र महाभागस्येव तुल्याकृतिमुन्मुक्तमिवान्तःकरणेन शून्यशरीरमुत्तरलमुखमुत्प्लुताबद्धलक्ष्यशून्यया दृष्ट्या प्रनष्टमिव किमपीतस्ततो विलोकयन्तं ब्राह्मणयुवानमपश्यम् । स तु मामुपसृत्यानन्यदृष्टिरदृष्टपूर्वोऽपि प्रत्यभिजानन्निव, असंस्तुतोऽपि चिरपरिचित इव, असंभावितोऽप्युपारूढप्रौढप्रणय इव, अस्निग्धोऽपि परवानिव, प्रेम्णा शून्योऽपि किमप्यनुस्मरन्निव, दुःखिताकारोऽपि

---

स्वकीयं दुःखमसातं श्रावितं श्रवणगोचरीकारितम् । हे महाभाग, सैवाहं मन्दभाग्या हीनादृष्टा जीवितव्ये व्यसनमासक्तिर्यस्याः सा तथा निर्लज्जा निस्त्रपा निर्घृणा निष्करुणा चेदं दुःखं दुष्टं श्रवणमाकर्णनं यस्येति दुःश्रवणमेतादृशमपि श्रावयामि श्रुतिगोचरीकारयामि श्रूयतामाकर्ण्यतामिति । केयूरकाद्भवद्गमनं तव प्रस्थानमाकर्ण्य विदीर्यमाणं मनो मानसं यस्याः तया । स्फुटमानहृदयेत्यर्थः । मया महाश्वेतया चित्ररथस्य पितुर्मनोरथोऽभिलाषो न पूरितो न पूर्णीकृतः । नापि मदिराया मातुः प्रार्थना याञ्चा कृता । नात्मनः स्वकीयस्य समीहितं वाञ्छितं संपादितं निष्पादितम् । न गृहाभ्यागतस्य स्वकीयसदनागतस्य चन्द्रापीडस्य प्रियमिष्टमनुष्ठितमादरितम् । न चापि हृदयस्य चेतसो वल्लभो जनस्तस्य समागमेन निर्वृता संजातसंतोषा, एतादृशी प्रियसखी वल्लभवयस्या कादम्बरी वीक्षिता विलोकितेति हेतोरुत्पन्नं प्रादुर्भूतं यदनेकगुणमुत्कृष्टं वैराग्यं विरागता तस्याः[2] समन्ताद्गाढ[3]बन्धोऽत्युग्रग्रन्थिस्तस्मात्कादम्बरीस्नेहपाशानपि छित्त्वा छेदं विधाय पुनर्द्वितीयवारं कष्टतरमत्युग्रतरं यत्तपश्चान्द्रायणादि तस्य चरणायासेवनायात्रैव गुम्फायामेव यावत् आयातागता तावत्, अत्र महाभागस्य भवतस्तुल्याकृतिं सदृशाकारमन्तःकरणेन चित्तेनोन्मुक्तमिव त्यक्तमिव, अत एव शून्यशरीरमिन्द्रियव्यापाररहितदेहमुत्तरलमुखमुत्कम्प्रं मुखं यस्य स तमुत्प्लुतमुत्पतितमाबद्धं यल्लक्ष्यं वेध्यं तेन शून्यया निरवधानया दृष्ट्या दृशा प्रनष्टमिव गतमिव किमपि किंचिदितस्ततोऽपि विलोकयन्तं पश्यन्तं ब्राह्मणयुवानमपश्यं व्यलोकयम् । स तु मामुपसृत्य मत्समीपमागत्य नान्यस्मिन्दृष्टिर्यस्य स तथादृष्टपूर्वोऽप्यनिरीक्षितपूर्वोऽपि प्रत्यभिजानन्निव सोऽयं देवदत्त इति प्रत्यभिज्ञानप्रत्यक्षेणावगच्छन्निव, असंस्तुतोऽप्यपरिचितोऽपि चिरपरिचित इव बहुकालविहितपरिचितिरिव, असंभावितोऽप्यसंभावनाविषयीकृतोऽप्युपारूढोऽङ्कुरितः प्रौढो महान्प्रणयः स्नेहो यस्मिन्नेतादृश इव, अस्निग्धोऽप्यवत्सलोऽपि परवानिव पराधीन इव । 'परतन्त्रः पराधीनः परवान्नाथवानपि' इत्यमरः । प्रेम्णा स्नेहेन शून्योऽपि किमप्यनुस्मरन्निव किंचित्स्मृतिगोचरीकुर्वन्निव, दुःखितो दुःखं प्राप्त आकारो यस्यैवंविधोऽपि सुखमिवाचरतीति [5]सुखायते

---

टिप्प०—1 पूर्वकथामपि विस्मृतवान् । चित्ररथ-मदिरे कादम्बर्याः पिता च माता च । 2 यस्याः सा, ईदृशयहमिति व्याख्यातव्यम् । 3 गाढो बन्धो येषाम् अतिनिबिडो ग्रन्थिर्येषां तान्, इति व्याख्या बोद्धव्या । 4 उत्प्लुता बाष्पाच्छन्ना, अबद्धलक्ष्या ( अस्थिरा ) निर्विषया या ( दृष्टिः ) तया । 5 घोरमज्ञानं वराकस्य । सुखं वेदयन्निवेति सुखायमान इव, सुखं मम संजातमिति प्रकटयन्निवेत्याशयः । 'सुखादिभ्यः कर्तृवेदनायाम्' इति क्यङ् ।

---

पाठा०—१ निष्करुणापि. २ श्रूयताम्. ३ भवतो गमनम्; भवदागमनम्. ४ विदीर्णमानसा. ५ गृहात्प्रत्यागतस्य. ६ निवृत्ता. ७ भित्वा. ८ तुल्यवयसमाकृतिमन्तम्.

सुखायमान इव, तूष्णीमपि स्थितः प्रार्थयमान इव, अपृष्टोऽप्यावेदयन्निवात्मीयामेवावस्थाम्, [1]अभिनन्दन्निव, अनुशोचन्निव, हृष्यन्निव, कृष्यन्निव, विषीदन्निव, बिभ्यदिव, अभिभवन्निव, हृत इव, आकाङ्क्षन्निव, अनुस्मरन्निव विस्मृतम्, अनिमेषेण निश्चलस्तब्धपक्ष्मणान्तर्[2]बाष्पपूरार्द्रेण कर्णान्तचुम्बिना विकसितेनेवामुकुलिततारकेण चक्षुषा मत्त इवाविष्ट इव वियुक्त इव पिबन्निवाकर्षन्निवान्तर्विशन्निव च सुचिरमालोक्याब्रवीत्—

'[3]वरतनु, सर्व एव हि जगति जन्मनो वयस आकृतेर्वा सदृशमाचरन्न वचनीयतामेति। तव पुनरेकान्तवामप्रकृतेर्[4]विधेरिव विसदृशानुष्ठाने कोऽयं प्रयत्नः? यदियमक्लिष्टमालतीसुकुमारा मालेव कण्ठप्रणयैकयोग्या तनुरनुचितेनामुना [5]कष्टतरतपश्चरणपरिक्लेशेन [6]ग्लानिमुपनीयते। रूपवयसोरनुरूपेण सुमनोहारिणी लतेव रसाश्रयिणा फलेन कथं न संयोज्यते। जातस्य हि रूपगुणविहीनस्यापि जन्मोपनतानि जीवलोकसुखान्यनुभूय शोभते [7]परत्रसंबन्धी

---

वेति सुखायमान इव। तूष्णीमपि स्थितो मौनमाधाय स्थितोऽपि प्रार्थयमान इव याञ्चां कुर्वन्निव। 'तूष्णीकं तु स्मृतं मौने मौनं शीले त्वनव्ययम्' इति विश्वः। अपृष्टोऽप्यप्रश्नीकृतोऽप्यात्मीयां स्वकीयामेवावस्थां दशामावेदयन्निव ज्ञापयन्निव, अभिनन्दन्निव श्लाघां कुर्वन्निव, अनुशोचन्निव शुचं विदधदिव, हृष्यन्निव हर्षन्निव, कृष्यन्निव विलिखन्निव, विषीदन्निव विषादं प्राप्नुवन्निव, बिभ्यदिव भयं प्राप्नुवन्निव, अभिभवन्निव तिरस्कुर्वन्निव, हृत इव मुषित इव, आकाङ्क्षन्निव वाञ्छन्निव, विस्मृतमनुस्मरन्निव, अनिमेषेण निमेषरहितेन निश्चलं निष्कम्पं स्तब्धं पक्ष्म नेत्ररोम यस्य तत्तथा तेनान्तर्बाष्पो मध्यागताश्रु। क्वचित् 'क्षरद्बाष्प' इति पाठः। तस्य पूरः समूहस्तेनार्द्रेणोन्नेन कर्णान्तं श्रोत्रान्तं चुम्बतीत्येवंशीलेन कर्णान्तचुम्बिना। अत एव विकसितेनेव विनिद्रेणेवामुकुलिता कुड्मलिता तारका कनीनिका यस्मिंस्तत्तथा तेन। एवंविधेन चक्षुषा नेत्रेण मत्त इव क्षीब इव, आविष्ट इव भूतग्रस्त इव, वियुक्त इव विभिन्न इव, पिबन्निव पानं कुर्वन्निव। अत्यादरेणावलोकनं पानमिति प्राञ्चः। आकर्षन्निवाकर्षणं कुर्वन्निव, अन्तर्विशन्निव मध्ये प्रवेशं विदधदिव च, सुचिरं बहुकालमालोक्य निरीक्ष्याब्रवीदवोचत्।

हे वरतनु प्रशस्तदेहे, सर्व एव हि जनो जगति लोके जन्मन उत्पत्तेर्वयसोऽवस्थाया आकृते रूपस्य वा सदृशमनुरूपमाचरन्कुर्वाणो न वचनीयतां निन्द्यतामेति गच्छति। तव भवत्याः पुनरेकान्तेन निश्चयेन वामा प्रतिकूला प्रकृतिः स्वभावो यस्यैवंभूतस्य [1]विधेरिव विधातुरिव विसदृशानुष्ठानेऽसदृशाचरणे कोऽयं प्रयत्नः प्रयासः। यद्यस्मादियं तनुः शरीरमक्लिष्टाऽव्यथिता या मालती जातिस्तद्वत्सुकुमारा सुकोमला मालेव स्रगिव कण्ठे यः प्रणयो रक्षणस्नेहस्तत्रैकाद्वितीया केवलं वा योग्योचिताऽमुनानुचितेनायोग्येन कष्टतरं यत्तपश्चरणं तस्य परिक्लेशः परिश्रमस्तेन ग्लानिं म्लानिमुपनीयते प्राप्यते। रूपं सौन्दर्यं वयोऽवस्थाविशेषस्तयोरनुरूपेण योग्येन रसं माधुर्यादि[2]लक्षणमाश्रयतीत्येवंशीलेन फलेन साध्येन कथं न संयोज्यते संयुक्तीक्रियते। केव। लतेव वल्लीव। यथा लता फलेन संयोज्यते। उभयोः साम्यमाह—सुमनोहारिणी सुमनसः पुष्पाणि ताभिर्हारिणी रुचिरा तनुः। पक्षे सुमनसः सज्जनास्तेषां हारिणी मनोज्ञा। हि यस्मात्कारणाद्रूपगुणादिविहीनस्यापि सौन्दर्यगुणरहितस्यापि जातस्योत्पन्नस्य जन्तोर्जन्मन्युपनतानि प्राप्तानि जीवलोकसुखानि सांसारिकसौख्यान्यनुभूय

---

टिप्प०—1 यथा विधिर्वामस्वभावस्तथा त्वमपि विलासपरित्यागात् वयसोननुरूपस्य तपसश्चाचरणात् वामस्वभावेत्युपमा। 2 रसाश्रयिणा रसाधिष्ठानभूतेन (रसिकेन) फलेन यौवनोपभोगस्य फलस्वरूपेण न संयोज्यते तनुरिति स्पष्टीकरणीयम्।

---

पाठा०—१ अभिनिन्दन्. २ क्षरद्बाष्प. ३ सुतनु. ४ विधोः. ५ कष्टतमेन तपश्चरण. ६ म्लानिम्. ७ फलसंबन्धी.

तपश्चरणपरिक्लेशः, किं पुनराकृतिमतो जनस्य । तद्दुःखयति मामयमस्यास्ते स्वभावसरसायास्तनोर्मृणालिन्या इव तुहिनपातस्तपःपरिक्लेशः । यदि च त्वादृशी जीवलोकसुखेभ्यः पराङ्मुखी तपसा क्लेशयन्त्यात्मानं तदा वृथा वहति धनुरधिज्यं कुसुमकार्मुकः । निष्कारणे-मुदयति चन्द्रमाः । वृथा वसन्तमासाभ्यागमः । निष्फलानि कुमुदकुवलयकह्लारकमलाकर-विलसितानि । निष्फला जलदसमारम्भाडम्बराः । निरर्थकान्युपवनानि । किं ज्योत्स्नया, किं वा लीलासरित्पुलिनैर्मलयानिलेन वा' इति ।

अहं तु देवस्य पुण्डरीकस्यैव वृत्तान्तादपेतकौतुका सर्वथा तं वदन्तम् 'अपि कस्त्वम्, कुतो वा समायातः, किमर्थं वा मामेवमभिदधासि' इत्यपृष्ट्वैवान्यतोऽगच्छम् । गत्वा च देवार्चनकुसुमान्याचिन्वती तरलिकामाहूयाब्रवम्—'तरलिके, योऽयं युवा कोऽपि ब्राह्मणाकृतिरस्यावलोकयतो वदतश्चान्यादृश एवाभिप्रायो मयोपलक्षितः । तन्निवार्यतामयं यथा पुनरत्र नागच्छति । अथ निवारितोऽपि यद्यागमिष्यति तदावश्यमेवास्याभद्रकं भवि-

साक्षात्कृत्य परत्रसंबन्धी परभवसक्तस्तपश्चरणपरिक्लेशः शोभते शोभां प्राप्नोति । आकृतिमतः सौन्दर्योपेतस्य जनस्य किं पुनः । भण्यत इति शेषः । तत्तस्मात्कारणात्ते तव स्वभावेन प्रकृत्या सरसाया रसोपयुक्ताया अस्यास्तनोर्देहस्य मृणालिन्याः कमलिन्यास्तुहिनपात इव हिमनिपतनमिवायं तपःपरिक्लेशो मां दुःखयति दुःखं करोति । यदि च त्वादृश्यनन्यरूपा जीवलोकसुखेभ्यः पराङ्मुखी निवर्तिताननात्मानं तपसा क्लेशयन्ती शोषयन्ती, तदा कुसुमकार्मुकः कंदर्पोऽधिज्यं ज्यामधिरूढं धनुः कार्मुकं वृथा मुधा वहति धारयति । निष्कारणं निष्प्रयोजनं चन्द्रमाः शशाङ्क उदयत्युद्गच्छति । वृथा मुधा वसन्तमासस्य सुरभिमासस्याभ्यागम आगमनम् । कुमुदानि कैरवाणि, कुवलयानि श्वेतकमलानि, कह्लारं सौगन्धिकम्, कमलानि पद्मानि, एतेषामाकराः समूहास्तेषां विकसितानि हसितानि निष्फलानि निरर्थकानि । जलदस्य समारम्भः प्रारम्भस्तस्याडम्बराः समाटोपा निष्फला निरर्थकाः । उपवनानि आरामाणि निरर्थकानि निष्प्रयोजनानि । ज्योत्स्नया चन्द्रिकया किम् । न किमपीत्यर्थः । लीलासरित्पुलिनैः क्रीडानदीसैकतैः किम् । किं वा मलयानिलेन मलयाचलमरुता वा किमिति ।

अहं तु देवस्य पुण्डरीकस्यैव वृत्तान्तादुदन्तादपेतं गतं कौतुकं कुतूहलं यस्याः सैवंविधा सर्वथा सर्वात्मना तं वदन्तं ब्रुवन्तमपि कस्त्वं को भवान्, कुतो वा कस्मात्प्रदेशात्समायातः समागतः, किमर्थं वा किंप्रयोजनं मां महाश्वेताभिधानामेवमभिदधासि कथयसि, इत्यपृष्ट्वैव प्रश्नमकृत्वैवान्यतोऽपरस्मिन्स्थलेऽगच्छमव्रजम् । गत्वा च देवस्य महेशितुरर्चनं पूजनं तस्मै कुसुमानि पुष्पाण्याचिन्वत्यवचयं कुर्वन्ती तरलिकामाहूयाह्वायाब्रवमकथयम् । हे तरलिके, योऽयं प्रत्यक्षोपलभ्यो युवा तरुणः कोऽप्यनिर्दिष्टनामा ब्राह्मणस्य विप्रस्याकृतिराकारो यस्य स तथा । अस्य यूनोऽवलोकयतः पश्यतो वदतश्च ब्रुवतश्चान्यादृश इव कामिजनसदृश इवाभिप्राय आशयो मयोपलक्षितो ज्ञातः । तत्तस्माद्धेतोरयं निवार्यतां प्रतिषिध्यताम्, यथा पुनर्द्वितीयवारमत्र मत्समीपे नागच्छति नाभ्येति । अथ निवारितोऽपि प्रतिषिद्धोऽपि यद्यागमिष्यति तदावश्यमेव निश्चितमेव

टिप्प०—1 सर्वथा असंगतः पाठः । त्वादृशी 'आत्मानं क्लेशयति' इत्येवोचितः । 2 पाठान्तरकरणेन विरूपीकृतम् । 'कोऽयं युवा ब्राह्मणाकृतिः? कोऽप्यस्याऽवलोकयतो वदतश्चान्यादृश एवाभिप्रायो मयोपलक्षितः' इति पाठः । इदानीं यथेच्छमभिरोच्यतां सहृदयैः ।

पाठा०—१ अस्याः. २ उदेति. ३ व्यर्थः. ४ च. ५ सर्वथा तथा; सर्वं तथा. ६ देवतार्चन. ७ अपचिन्वन्ती; उच्चिन्वन्ती. ८ कोऽप्यस्य. ९ विलोकयतः; न विलोकयता. १० यदि. ११ अस्यैव.

ष्यति' इति । स तु निवार्यमाणोऽपि दु[1]र्निवारवृत्तेर्मदनहतकस्य दोषैर्भवितव्यतया वानर्थस्य नात्याक्षीदेवानुबन्धम् ।

अतीतेषु केषुचिद्दिवसेष्वेकदा[2] गाढायां[3] यामिन्याम्[4], उद्गिरत्स्विव [5]भरेणोद्दीपितस्मरानलं ज्योत्स्नापूरमिन्दुमयूखेषु, लब्धनिद्रायां तरलिकायाम्, अप्राप्तसुखा[6] संतापनिर्गत्यास्मिन्नेव[7] शिलातले विमुक्ताङ्गी, कह्लारसुरभिणा[8] मन्दमन्देनाच्छोदानिलेनावीज्यमाना[9], वर्णसुधाकूर्चकैरिव करैर्धवलितदशाशामुखे चन्द्रमसि निहितदृष्टिः 'अपि नामायमेभिरमृतवर्षिभिरखिलजगदाह्लादकारिभिः[10] करैश्चन्द्रमास्तमपि हृदयवल्लभं मे वर्षेत्' इत्याशंसाप्रसङ्गेन, देवस्य सुगृहीतनाम्नः पुण्डरीकस्य स्मरन्ती, कथमभाग्यैर्मे मन्दपुण्यायास्तादृशस्यापि[11] दिव्याकृतेर्महापुरुषस्य तस्य नभसोऽवतीर्णस्य भाषितमलीकमुपजातम्, जातानुकम्पेन वा यथाकथं[12]चिज्जीवितुमित्येव समाश्वासिता जीवितप्रिया तपस्विन्यपि येन पुनर्दर्शनमेव तेन[13] मम[14] न

---

तस्य यूनोऽभद्रकमकल्याणं भविष्यतीति । स तु युवा तरलिकया निवार्यमाणोऽपि प्रतिषिध्यमानोऽपि दुर्निवारा वारयितुमशक्या वृत्तिर्वर्तनं यस्यैवंभूतस्य मदनहतकस्य हत्याकारिणः कंदर्पस्य दोषैर्दूषणैरनर्थस्योत्पातस्य भवितव्यतया वाग्रे भाविततया वानु[1]बन्धं स्नेहं नात्याक्षीन्न तत्याज ।

दिवसेषु केषुचिदतीतेषु गतेषु सत्सु, एकदैकस्मिन्समये गाढायां तीव्रायां यामिन्यामुद्दीपित उत्तेजितः स्मर एवानलो वह्निर्येनैवंभूतं ज्योत्स्नापूरं चन्द्रिकासमूहमिन्दुमयूखेषु चन्द्रकिरणेषूद्गिरत्सु विमुञ्चत्सु सत्सु, लब्धनिद्रायां प्राप्तप्रमीलायां तरलिकायामप्राप्तमल[2]ब्धं सुखं सौख्यं यया सैवंविधाहं संतापं संज्वरं तस्य[3] निर्गत्या निर्गमनहेतुनास्मिन्नेव शिलातले विमुक्ताङ्गी न्यस्तदेहा कह्लारं सौगन्धिकं तेन सुरभिणा सुगन्धिना मन्दमन्देनाच्छोदानिलेनाच्छोदवायुना वीज्यमानोद्धूयमाना, वर्णसुधा श्वेतसुधा तस्याः कूर्चकैः कुञ्चिकाभिरिव करैः किरणैर्धवलितं शुभ्रीकृतं दशसंख्याका या आशा दिशस्तासां मुखं येनैवंविधे चन्द्रमसि कुमुदबान्धवे निहिता स्थापिता दृष्टिर्दृग्यया सा निहितदृष्टिः, अपि नामेति कोमलामन्त्रणे । अयं चन्द्र एभिरमृतवर्षिभिः पीयूषस्राविभिरत एवाखिलजगतः समग्रविश्वस्याह्लादकारिभिः प्रमोदजनकैः करैः किरणैः कृत्वा चन्द्रमाः शशाङ्को मे मम तमपि हृदयवल्लभं चित्तप्रियं वर्षेद्वृष्टिं कुर्यात् । इत्येवंरूपाशंसा स्पृहा तस्याः प्रसङ्गेन संबन्धेन देवस्य पूज्यस्य सुष्ठु गृहीतं नाम यस्यैवंभूतस्य पुण्डरीकस्य स्मरन्ती स्मृतिपथमानयन्ती । 'अधीगर्थदयेशां कर्मणि' इति षष्ठी । मे मम मन्दपुण्याया हीनसुकृताया अभाग्यैर्दुर्दैवैस्तस्य कपि[4]ञ्जलस्य नभसो व्योमादवतीर्णस्योत्तरितस्य तादृशस्य दिव्याकृतेः सुन्दराकारस्य महापुरुषस्यापि कथं भाषितं जल्पितमलीकं मिथ्योपजातम् । वाथवा जातानुकम्पेन समुत्पन्नकरुणेन यथाकथंचित्प्रकारेण केवलं जीवितुं प्राणितुमित्येव हेतोः समाश्वासिताश्वासनां कारिता येन हेतुना जीवितप्रिया प्राणितवल्लभा तपस्विनी वरा[5]क्यसि तेन हेतुना मम पुनर्दर्शनमेव न दत्तं पुनः समीपे

---

**टिप्प०**—1 मत्प्रत्याशया अनुसरणमित्येवार्थः । 2 'अनवाप्तनिद्रासुखा' इत्येव पाठः । 3 धन्या व्युत्पत्तिः ! 'निर्गत्या' इत्यनेन निःसारणरूपो णिजर्थः कथं प्रतीयेत ? 'संतापान्निर्गत्यास्मिन्नेव' इति पाठः । संतापवशाद् बहिर्निर्गत्य अस्मिन्नेव शिलातले विमुक्ताङ्गीति तदर्थः, यस्य सेयं दुर्दशा चन्द्रमहोदयेन कृता । 4 कृपासिन्धो ! व्योमात् ( अर्थात् व्योम्नः ) न कपिञ्जलोऽवतीर्णः, अपि तु स्वयं चन्द्र एवावतीर्णः । कपिञ्जलस्तु गगने निलीनः । 5 शुद्धः प्रलापोयम् । 'जातानुकम्पेन वा यथाकथंचिज्जीवतु जीवितप्रिया तपस्विनी इत्येवमेव समाश्वासितासि' इति पाठः । अर्थः स्पष्टः ।

---

पाठा०—१ दुर्निवार्य. २ चैकदा. ३ विगाढायाम्. ४ रजन्याम्. ५ उद्दीपितं. ६ अप्राप्तनिद्रासुखा; अनवाप्तनिद्रासुखा. ७ संतापनिर्गत्या. ८ सुगन्धिना. ९ वीज्यमाना. १० कारिकरैः. ११ तादृशोऽपि. १२ जीवतु जीवितप्रिया तपस्विनीत्येवमेव समाश्वासितासि. १३ अनेन. १४ मे.

दत्तम् । किं करोतु देवः सुगृहीतनामा पुण्डरीको यः परासुरेवोत्क्षिप्य नीतः । कपिञ्जलस्तु जीवन्गतः, कथमियता कालेन गतेनापि निष्करुणेन वार्तापि मे न संपादिता' इत्येतानि चान्यानि चालजालानि दुर्जीवितगृहीता चिन्तयन्ती जाग्रत्येवातिष्ठम् ।

अथ निभृतपदसंचरणम्, आ चरणादुत्कण्टकमनवरतनिपतितमदनशरशल्यनिकरनिचितमिव शरीरमुद्वहन्तम्, उद्धिकासिकेतकरजःपटलधवलं प्रथमतरमेव भस्मसात्कृतमिव मदनहुतभुजा, भुजाग्रेण कुण्डलीकृतमृणालमुपर्युषितशासनवलयमिवावश्यमरणाय सकलजगदप्रतिहतशासनेन कुसुमधन्वना विसर्जितं दधानम्, उद्भूतसाध्वसोत्कम्पतरलितया केतकीगर्भसूच्या क परं गम्यते हतोऽसि मयेति मन्मथप्रथमसहायस्य चन्द्रमसः कलयेव कर्णान्तलग्नया तर्ज्यमानम्, उद्वेगावर्जितेन नयनजलस्रोतसात्मने जलमिव प्रयच्छन्तम्, आत्मे-

---

नागतम् । देवः सुगृहीतनामा पुण्डरीकः किं करोतु कुर्यात् । यः परासुरेव मृत एवोत्क्षिप्योत्पाट्य नीतः प्रापितः । स्वर्गमिति शेषः । कपिञ्जलस्तु जीवन्गतः । कथं तेनापीयता कालेन निष्करुणेन मे मम वार्तापि किंवदन्त्यपि न संपादिता न विहिता । इत्येतानि च पूर्वोक्तान्यन्यानि च पुरो वक्ष्यमाणान्यालजालानि स्वप्नान्तर्गतप्रायाणि दुर्दुष्टं यज्जीवितं तेन गृहीतात्मसात्कृता चिन्तयन्ती ध्यायन्ती जाग्रती सजागरैवातिष्ठं स्थिता ।

अथेति तदनन्तरम् । तमेव युवानमद्राक्षं व्यलोकयमिति दूरेणान्वयः । तमेव विशेषयन्नाह—**निभृतेति** । निभृतमशब्दं यथा स्यात्तथा पदानामङ्घ्रीणां संचरणं यस्य स तम् । आ चरणाच्चरणं मर्यादीकृत्य । उत्कण्टकम् । संजातरोमोद्गममित्यर्थः । एतादृशं शरीरं देहमुद्वहन्तं धारयन्तम् । अत एवोत्प्रेक्षते—अनवरतं निरन्तरं निपतिता लग्ना ये मदनशराः कंदर्पबाणास्तेषां शल्यनिकरस्तेन निचितमिव व्याप्तमिव । उद्धिकास्युन्निद्रो यः केतकः क्रकचच्छदस्तस्य रजःपटलं परागसमूहस्तद्वद्धवलं शुभ्रम् । अत एवोत्प्रेक्षते—प्रथमतरमेवादावेव मदनहुतभुजा कामाग्निना भस्मसात्कृतमिव । शुक्लत्वसाम्याद्भस्मोपमानमित्यर्थः । भुजाग्रेण बाहुप्रान्तेन कुण्डलीकृतं कुण्डलवदाचरितं मृणालं बिसकटकं दधानं बिभ्राणम् । 'कटको वलयोऽस्त्रियाम्' इत्यमरः । शुक्लत्वसाम्यादुत्प्रेक्षते—सकलजगत्यप्रतिहतमनिराकृतं शासनमाज्ञा यस्यैवंविधकुसुमधन्वना कंदर्पेणावश्यमरणाय निश्चितप्राणविमुक्तये विसर्जितं दत्तमुपर्युषितं स्थापितं शासनवलयमिवाज्ञावलयमिव । यथा कश्चित्सांयुगीनो राज्ञा दत्तमवश्यं सङ्ग्राममरणाय वीरवलयं भुजाग्रेण बध्नाति तथैवानेन भुजाग्रेणावश्यं मरणाय कंदर्पदत्तं शासनवलयं बद्धमिवेति भावः । मन्मथस्य कंदर्पस्य प्रथमसहायस्यादावेव साहाय्यकारिणश्चन्द्रमसः कुमुदबान्धवस्य कलया षोडशांशेन कर्णान्तलग्नया श्रोत्रान्तप्राप्तयेति तर्ज्यमानमिव तिरस्क्रियमाणमिव । इतियोत्यमाह—**उद्भूतेति** । उद्भूतमुत्पन्नं यत्साध्वसं भयं तस्मादुत्कम्पस्तेन तरलितया चञ्चलया केतकीगर्भसूच्या क्रकचच्छदमध्यवर्तित्रिपत्रकेण । 'त्रिपत्रकः सूचिरभिधीयते' इत्यमरः । तया, मया त्वं हतो व्यापादितोऽसि । अतः क्व परमग्रे गम्यते । उद्वेगः संतापस्तेनावर्जितेन दत्तेन नयनजलस्रोतसा नेत्राम्बुप्रवाहेणात्मने स्वस्मै जलमिव प्रयच्छन्तं ददतम्, आत्मेच्छयैव स्वकीयवाञ्छयैव मत्करग्रहणाय मत्पाणिपीडनाय स्वेदाम्भसा घर्म-

---

टिप्प०—1 अपि चतुष्पादयं पशुः ? पदयोः संचरणमित्युचितम् । 2 तर्जनाय 'तर्जनी'नामवाहिनी अङ्गुलिरेव व्यवह्रियते, अत एव 'करशाखया' इत्येव पाठः सम्यक् । नायिकाया अनिच्छायामपि तत्कालाभिसरणेन भयं जातमिति तज्जनितकम्पवती कर्णान्तलग्ना केतकीगर्भत्रिपत्री नास्ति अपि तु तर्जनाय सेयं चन्द्रमसोऽङ्गुलिरेवास्तीति सर्वस्याशयः । 3 'जलाञ्जलिम्' इत्येव सम्यक् । अन्तसमये तस्यैव स्वारस्यात् ।

---

पाठा०—१ आलजालानि; आलापजालानि. २ यद्दुर्जीवित. ३ आचरणादुत्कण्टकितम्; आपतन्तं तमुत्कण्टकिततनुम्. ४ उद्धिकासकेतकद् उद्धिकाशिकेतकी. ५ मदनहतभुजाग्रेण. ६ मृणालिकावलयम्. ७ अपर्युषित, अपर्युषितम्. ८ अवश्यम्. ९ करशाखया. १० सलिल. ११ जलाञ्जलिम्.

च्छयैव मत्करग्रहणाय निर्वर्तितस्नानमिव स्वेदाम्भसा, न युक्तमेव ते परहृदयमविज्ञायोपगन्तुमिति पदे पदे निवार्यमाणमिव गुरुणोरुस्तम्भेन, दूरत एव मदालिङ्गनालीकाशया प्रसारितभुजयुगलम्, उत्कलिकासहस्रविषमं रागसागरमिव प्रतरन्तम्, अनवरतप्रवृत्तैराकृष्यमाणमिव पुरस्तादीर्घैर्निःश्वासमरुद्भिः उह्यमानमिव दिङ्मुखप्लाविना ज्योत्स्नापूरेण, रणरणकशून्यम्, उच्छुष्काननम्, प्रोन्मुक्तं सत्त्वेन, प्रतिपन्नं कृपणतया, अवधीरितं धैर्येण, संगृहीतं तरलतया, विसर्जितं लज्जया, अधिगतं धार्ष्ट्येन, दूरीकृतं परलोकभीत्या, विमुक्तं युक्तायुक्तविचारेण, संकल्पजन्मन एव केवलं वशे स्थितम्, आविष्टमिव मत्तमिवोन्मादादापतन्तम्, दूरतोऽपि दिवसनिर्विशेषेण चन्द्रातपेन विभाव्यमानं तमेव युवानमद्राक्षम्।

दृष्ट्वा च तं तादृशं निःस्पृहाप्यात्मनि परं भयमुपगतवती चेतस्यचिन्तयम्—'अहो, कष्टमापतितम्। यद्ययमुन्मादादागत्य पाणिनापि स्पृशति मां तदा मयेदमपुण्यहतकं शरीर-

---

जलेन निर्वर्तितस्नानमिव विहिताप्लवमिव, परहृदयमन्यचित्तमविज्ञायाज्ञात्वोपगन्तुं तत्समीपे यातुं ते तव न युक्तमेव न न्याय्यमेवेति गुरुणा बृहत्तरेणोरुस्तम्भेन जङ्घास्थूणया पदे पदे निवार्यमाणमिव प्रतिषिध्यमानमिव, दूरत एव दविष्ठत एव मदालिङ्गनस्य मदीयोपगूहनस्यालीकाशया मिथ्यावाञ्छया प्रसारितं विस्तारितं भुजयुगलं बाहुयुग्मं येन स तम्। उत्कलिका हृल्लेखास्तासां सहस्रं तेन विषमं व्याकुलं रागसागरमिवानुरतिसमुद्रमिव प्रतरन्तमुत्तरन्तम्। अनवरतप्रवृत्तैर्निरन्तरप्रवर्तितैर्दीर्घैरायतैर्निःश्वासमरुद्भिः घ्राणवायुभिः पुरस्तादग्र आकृष्यमाणमिवाकृष्टिं विधीयमानमिव, दिङ्मुखप्लाविना दिग्वदनक्षालकेन ज्योत्स्नापूरेण चन्द्रिकाप्रवाहेणोह्यमानमिव वहमानमिव, रणरणकेनौत्सुक्येनोत्प्राबल्येन शुष्कं रूक्षमाननं मुखं यस्य स तम्। सत्त्वेन साहसेन प्रोन्मुक्तं त्यक्तम्, कृपणतया प्रतिपन्नं दैन्यत्वेनाङ्गीकृतम्, धैर्येण धीरिम्णावधीरितमवहीलितम्, तरलतया परिप्लवनया संगृहीतं स्वीकृतम्, लज्जया त्रपया विसर्जितं दूरीकृतम्, धार्ष्ट्येन निर्लज्जतागुणेनाधिगतं प्राप्तम्, परलोकभीत्यागामिभवभयेन दूरीकृतम्, युक्तायुक्तविचारेण न्याय्यान्याय्यवितर्केण विमुक्तं त्यक्तम्, केवलं संकल्पजन्मन एव मनोभवस्यैव वशे तन्त्रे स्थितम्, आविष्टमिव भूतगृहीतमिव, मत्तमिव क्षीबमिव, उन्मादाच्चित्तविप्लवत आपतन्तमागच्छन्तम्। दूरतोऽपि दविष्ठादपि दिवसान्निर्गतो विशेषो यस्यैवंभूतेन। दिवससदृशेनेत्यर्थः। चन्द्रातपेन शशाङ्कालोकेन विभाव्यमानं प्रकाश्यमानम्। अहं तं युवानमद्राक्षमित्यन्वयस्तु पूर्वमुक्तः।

तं वैशम्पायनं तादृशं तथावस्थं दृष्ट्वा च निरीक्ष्य च निस्पृहापि गततृष्णाप्यात्मनि परं भयमुपगतवती प्राप्तवती इति चेतसि चित्तेऽचिन्तयं चिन्तितवती। अहो इति खेदे। कष्टं कृच्छ्रमापतितम्, यद्ययं युवोन्मादादागत्य मां पाणिना स्पृशति स्पर्शं करोति तदा मया महाश्वेतयेदमपुण्यहतकं शरीरमुत्स्रष्टव्यमुज्झितव्यम्।

---

टिप्प०—1 धिक्। ऊर्वोः स्तम्भः सात्त्विकभावेन जाड्यम् (अचलनम्) अत्र विवक्षितम्। 2 अनुरागः उत्कलिकानाम् उत्कण्ठानां सहस्रेण दुस्तरः, सागरस्तु उत्कलिकानां तरङ्गाणां सहस्रेण। अत एव श्लेषोत्थापितः 'रागसागरः' इति रूपकालंकारः। भुजप्रसारणे च सागरोत्तरणस्योत्प्रेक्षा, इति सेयं प्रधानम्। 3 ज्योत्स्नारूपेण प्रवाहेण प्लाव्यमानमिव (तार्यमाणमिव)। टीकाकारस्तु यथाजातः।

---

पाठा०—१ मकर. २ अदूरतः. ३ प्रवृत्तेः. ४ रणक. ५ धिकृतम्. ६ भीषया. ७ अङ्गीकृतं स्वरुच्या विमुक्तम्. ८ केवलम्. ९ अकरवम्. १० कष्टतरम्. ११ यद्ययमेवमुन्मादात्; यद्ययमेत्य स्वयमुन्मादात्.

मुत्स्रष्टव्यम्। तच्चिरादेवस्य पुण्डरीकस्य पुनर्दर्शनप्रत्याशया दुःखोत्तरमप्यङ्गीकृतं[2] व्यर्थतां मे यातं[3] प्राणसंधारणम्' इति। स त्वेवं विचिन्तयन्तीमेव मामुपसृत्याब्रवीत्—'चन्द्रमुखि, हन्तुमुद्यतो मामयं कुसुमशरसहायश्चन्द्रमाः। तच्छरणमागतोऽस्मि, रक्ष मामशरणमनाथमार्तमप्रतीकारक्षममात्मना त्वदायत्तजीवितम्। शरणगतपरित्राणं हि तपस्विनामपि धर्म एव। तद्यदि मामात्मप्रदानेन नात्र संभावयसि तदा हतोऽहमाभ्यां कुसुमशरशिशिरकराभ्याम्' इति। अहं तु तदाकर्ण्य धिगित्युत्तमाङ्गनिर्गतज्वालेव रोषानलेन निर्दहन्तीव तम्, उन्मिषद्बाष्पस्फुलिङ्गया दृष्टया तर्दातर्जयन्तीव, आपादतलादुत्कम्पितगात्रयष्टिराविष्टेव, आत्मानमप्यचेतयमाना क्रोधावेगरूक्षाक्षरमवदम्—'आः पाप, कथमेवं वदतो मामुत्तमाङ्गे ते न निपतितं वज्रम्? अवशीर्णा वा न सहस्रधा जिह्वा? विह्वलतां न गता वा वाणी? नष्टानि वा नाक्षराणि? मन्ये च न सन्त्येव तेऽस्मिञ्शरीरे सकललोकशुभाशुभसाक्षिभूतानि पञ्चमहाभूतानि। येनैवं

---

तत्तस्मात्कारणाच्चिराच्चिरकालेन देवस्य पुण्डरीकस्य पुनर्दर्शनप्रत्याशया पुनरवलोकनवाञ्छया दुःखादसातादुत्तरमुत्तरकालमङ्गीकृतमपि स्वीकृतमपि प्राणसंधारणं मे मम व्यर्थतां निष्फलतां यातं प्राप्तम्। इत्येवं विचिन्तयन्तीमेव ध्यायन्तीमेव स तु युवा मामुपसृत्य मत्समीपमागत्याब्रवीदवोचत्। किं तदित्याह—हे चन्द्रमुखि हे शशाङ्कमुखि, मामयं कुसुमशरः कामस्तस्य सहायः साहाय्यकारी चन्द्रमाः कुमुदबान्धवो हन्तुं व्यापादयितुमुद्यत उद्युक्तः। तदिति हेत्वर्थे। शरणं त्राणमागतोऽस्मि। अशरणमत्राणमनाथमनीश्वरमार्तं प्रपीडितमप्रतीकारक्षममप्रतिक्रियासहं मां रक्ष त्राहि। त्वदायत्तं जीवितं प्राणितं यस्य स तम्। हि यस्मात्कारणात्तपस्विनां तपोवतामप्ययं धर्म एव यच्छरणागतस्य रक्षणं त्राणम्। तद्यदि मामात्मप्रदानेन स्वार्पणेनात्र न संभावयसि न संभावनाविषयीकरोषि तदाभ्यां कुसुमशरशिशिरकराभ्यां कामबाणचन्द्राभ्यामहं वैशम्पायनो हतो व्यापादितोऽस्मि। इति पूर्वोक्तमहं महाश्वेता तदाकर्ण्य श्रुत्वा धिगिति धिगस्त्विति उत्तमाङ्गाच्छिरसो निर्गता प्रादुर्भूता ज्वालार्चिर्यस्या एवंविधेव रोषानलेन क्रोधवह्निना तं वैशम्पायनं निर्दहन्तीव ज्वालयन्तीव उन्मिषन्तः प्रकटीभवन्तो बाष्पस्फुलिङ्गा अश्रुवह्निकणा यस्यामेवंभूतया दृष्ट्या दृशा। तदव्यक्ते नपुंसकम्। आतर्जयन्तीव तिरस्कुर्वन्तीव। आपादतलात्पादतलं मर्यादीकृत्योत्कम्पिता प्रचलिता गात्रयष्टिरङ्गयष्टिर्यस्याः सा तथा। आविष्टेव भूतगृहीतेव। आत्मानमपि स्वमप्यचेतयमानाज्ञायमाना क्रोधस्य क्रुध आवेगस्त्वरिस्तेन रूक्षाक्षरमस्निग्धवर्णं यथा स्यात्तथावदमब्रवम्। आः पाप हे पापिष्ठ, एवं मां वदतो ब्रुवतः कथं ते तवोत्तमाङ्गे शिरसि न निपतितं वज्रं पविः, सहस्रधा सहस्रप्रकारेण जिह्वा रसना नावशीर्णा न शटिता, वाणी भाषा विह्वलतां विक्लवतां वा न गता, न नष्टानि वने प्रपलायितानि वाक्षराणि वर्णा वा। मन्येऽहं जाने च ते तवास्मिञ्शरीरे देहे सकललोकानां समग्रजनानां शुभाशुभयोर्वर्यावर्ययोः पुण्यपापयोः साक्षिभूतानि पञ्चमहाभूतानि पृथिव्यतेजोवाय्वाकाशलक्षणानि न सन्त्येव एतदर्थे हेतुमाह—येनेति। येन कारणेनैवं वदन्ब्रुवन्नग्निना

---

**टिप्प०**—1 दुःखोत्तरं दुःखबहुलं, दुःखमुत्तरं ( अनन्तरम् ) वा यस्य, ईदृशं प्राणसंधारणमङ्गीकृतमपि व्यर्थतां यातम्। 2 'त्वदायत्तं मे जीवितम्।' इत्येव पाठः। अन्यथा 'आत्मना' इति पदस्यान्वयो न घटेत। 'त्वदायत्तं मे' इति व्यस्तपाठे तु 'अशरणादिविशिष्टं माम् आत्मना ( स्वशरीरेण ) रक्ष, इति पूर्ववाक्यान्वयः। 3 सर्वमिदमसंगतम्। 'तदातर्जनायेव ( तस्य वैशरूपा० भर्त्सनायेव ) आपादतलादुत्कम्पितगात्रयष्टिः,' इति पाठः।

---

पाठा०—१ चिराद. २ अङ्गीकृत्य. ३ एवं, एव. ४ अप्रतीकाराक्षमम. ५ त्वदायत्तं मे जीवितम्. ६ प्रसादेन. ७ शिशिरकिरणाभ्याम्. ८ झटिति, झगिति. ९ तर्जनायैव. १० हताश. ११ एवंवादिनस्तव नोत्तमाङ्गे.

वदन्नाग्निना भस्मीकृतोऽसि, न वायुना धूतोऽसि, नाम्भसा प्लावितोऽसि, न धरित्र्या रसातलं प्रवेशितोऽसि, नापि तत्क्षणमेवाकाशेनात्मनिर्विशेषतां नीतोऽसि, अव्यवस्थितो व्यवस्थितेऽस्मिँल्लोके कुतस्त्वमुत्पन्न एवंविधः? यस्तिर्यग्जातिरिव कामचारी न किंचिदपि वेत्सि। येनैवं खलु हतविधात्रा केनाप्युपदर्शितमुखरागः स्वपक्षपातमात्रप्रवृत्तिरनिरूपितस्थानास्थानवादी शुक इव वक्तुमेवं शिक्षितस्तेनैव किमुत तस्यामेव जातौ न निक्षिप्तोऽसि, येनैकान्तहासहेतुरेवं वदन्नपि न क्रोधमुत्पादितवानसि? त्वदुक्तेर्दुःखिताहं ते संविभागमिमं करोमि, येनात्मवचनानुरूपां जातिमापन्नो नैवास्मद्विधाः कामयसे इत्युक्त्वा चन्द्राभिमुखी भूत्वा कृताञ्जलिः पुनरवदम्—'भगवन्, परमेश्वर, सकलभुवनचूडामणे, लोकपाल, यदि मया देवस्य पुण्डरीकस्य दर्शनात्प्रभृति मनसाप्यपरः पुमान्न चिन्तितस्तदाऽनेन मे सत्यवचनेनायमलीककामी मदुदीरितायामेव जातौ पततु' इति।

---

वह्निना न भस्मीकृतो न भस्मसाद्विहितोऽसि। न वायुना समीरेणाधूतः कम्पितोऽसि। नाम्भसा जलेन प्लावितः प्रवाहितोऽसि। न धरित्र्या पृथिव्या रसातलमधोलोकं प्रवेशितोऽसि क्षिप्तोऽसि। नापि तत्क्षणमेव तस्मिन्नेव च क्षण आकाशेन नभसात्मनिर्विशेषतां स्वतुल्यतां नीतोऽसि प्रापितोऽसि। अव्यवस्थितो व्यवस्थामप्राप्तः पञ्चभूतात्मकतया व्यवस्थितेऽस्मिँल्लोके कुतस्त्वमुत्पन्नः प्रादुर्भूत एवंविध एतादृशो यस्तिर्यग्जातिरिव पशुजातिरिव कामचारी स्वैरविहारी न किंचिदपि वेत्सि जानासि। येनैवम्। खल्विति निश्चये। हतविधात्रा पापिष्ठब्रह्मणा केनापि[1] कारणेनोपदर्शितः प्रकटितो मुख आस्ये रागोऽनुरक्तिर्येन स तथा। स्वपक्षपातमात्रे स्वपक्षरक्षणमात्रे प्रवृत्तिः प्रवर्तनं यस्य स तथा। अनिरूपितमज्ञातं यत्स्थानास्थानं वक्तव्यावक्तव्यस्थलं तत्र वदतीत्येवंशीलः शुक इव कीर इव। सोऽपि दर्शितमुखरागः स्वपक्षपातनमात्रे प्रवृत्तः स्थानास्थानवादी च भवति। तद्वदेवैवं वक्तुं जल्पितुं शिक्षितः शिक्षां ग्राहितस्तेनैव हतविधात्रा किमुत कथं तस्यामेव तिर्यग्जातौ न निक्षिप्तोऽसि। एकान्तेन निश्चयेन हासस्य हेतुर्निदानमेवं[2] वदन्नपि जल्पन्नपि क्रोधं कोपं नोत्पादितवानसीति काकूक्तिः। अतस्त्वदुक्तेस्त्वत्कथितस्यान्यथा[3] कर्तुमहं त इमं संविभागं विभज्य प्रदानं करोमि। येन संविभागेनात्मवचनस्य स्वकीयोक्तेरनुरूपां योग्यां जातिं तिर्यग्जन्म आपन्नः प्राप्तो नैवास्मद्विधा अस्मत्सदृशाः कामयसेऽभिलषसे' इत्युक्त्वेत्यभिधाय चन्द्रस्य शशाङ्कस्याभिमुखीभूत्वा संमुखीभूय कृताञ्जलिः संयुतकरद्वया पुनरवदमब्रवम्। 'पाणिः प्रसृतः प्रसृतिस्तौ युतौ पुनरञ्जलिः' इति हैमः। हे भगवन् हे माहात्म्यवन्, हे परमेश्वर परमैश्वर्यवन्, हे सकलभुवनचूडामणे समग्रविष्टपशिरोमणे, हे लोकपाल जगद्रक्षक, यदि मया महाश्वेतया देवस्य पुण्डरीकस्य दर्शनात्प्रभृति तदवलोकनदिवसादारभ्य मनसापि चित्तेनाप्यपरस्तदन्यः पुमान्न चिन्तितो न ध्यातः, तत्तस्माद्धेतोरनेन सत्यवचनेनायं पुरःस्थोऽलीककामी मिथ्याकामवान्मदुदीरितायामेव मदुक्तायामेव जातौ जन्मनि पततु गच्छत्विति। 'जातिः सामान्यजन्मनोः' इत्यमरः।

---

**टिप्प०**—1 'केनापि' एतावन्मात्रस्य कारणेनेत्यर्थोऽसंगतः। वस्तुतस्तु—'येनैवं खलु हतविधिना समुपदर्शितवदनरागः' इत्येव पाठः। अर्थस्तु स्पष्टः। 2 'येनैकान्तहासहेतु वदन् क्रोधमपि' इति पाठः। एकान्तहासहेतु इति वदन्निति क्रियाया विशेषणम्। 3 त्वदुक्तेः त्वत्कथनाद्दुःखिताहं ते संविभागं दण्डमिमं करोमीत्यर्थः।

---

पाठा०—१ आहतः; अपहृतः. २ पयसा. ३ धात्र्या रसातलम्. ४ लोकत्रये. ५ हतविधिना. ६ समुपदर्शितवदनरागः. ७ किमिति; किमु. ८ क्षिप्तः. ९ येन. १० हासहेतुं वदन्. ११ त्वदुरुक्तेस्तेऽहम्. १२ अस्मद्विधां.

मद्वचसोऽस्यानन्तरमेव च न वेद्मि किमसह्यवृत्तेर्मदनज्वरस्यावेगात्, उत सद्योविपाकस्यात्मनो दुष्कृतस्य गौरवात्, आहोस्विन्मद्वचसः सामर्थ्यादेव छिन्नमूलस्तरुरिवाचेतनः क्षितावपतत्। अतिक्रान्तजीवितेऽस्मिन्कृताक्रन्दान्तर्जनाच्छ्रुतवती यथासौ महाभागस्यैव मित्रं भवति" इत्युक्त्वा च त्रपावनम्रमुखी महीं महीयसाश्रुवेगेन तूष्णीमेवाप्लावितवती।

चन्द्रापीडस्य तु तदाकर्ण्य कर्णान्तायतलोचनद्वयामीलनमग्नदृष्टेर्भ्रष्टवचनसौष्ठवस्य 'भगवति, कृतप्रयत्नायामपि भगवत्यामपुण्यभाजास्मिञ्जन्मनि मया न प्राप्तं देव्याः कादम्बर्याश्चरणपरिचर्यासुखम्, तज्जन्मान्तरेऽपि मे भगवती संपादयित्री भूयात्' इति गदत एव कादम्बरीसमागमाप्राप्तिदुःखेनेव भेदोन्मुखं मुकुलमिव शिलीमुखाघातात्स्वभावसरसं हृदयमस्फुटत्।

अथ महाश्वेतायाः शरीरमुत्सृज्य संभ्रमप्रतिपन्नचन्द्रापीडशरीरायां 'भर्तृदारिके, किं लज्जया। पश्य तावदन्यथैव कथमप्यास्ते देवश्चन्द्रापीडोऽयम्। भग्नेवास्य ग्रीवा न मूर्धानं

---

अस्य मद्वचसोऽनन्तरमेव न वेद्मि न जाने। असह्यासहनीया वृत्तिर्वर्तनं यस्यैवंविधस्य मदनज्वरस्य कामसंतापस्य वेगात्। उत इति वितर्के। सद्यस्तत्कालं विपाकोऽनुभवनं यस्यैवंविधस्यात्मनः स्वकीयस्य दुष्कृतस्य पापस्य गौरवाद्गुरुत्वात्। आहोस्विदिति तर्के। वचस एव सामर्थ्याच्छक्तेरेव छिन्नं छेदितं मूलं बुध्नं यस्यैवंभूतस्तरुरिव वृक्ष इवाचेतनश्चेतनारहितः क्षितौ पृथिव्यामपतत्। अस्मिन्वैशम्पायनेऽतिक्रान्तजीविते च गतप्राणिते च सति कृताक्रन्दा विहितार्तस्वरान्तर्जनान्मध्यजनाच्छ्रुतवत्याकर्णितवती। यथासौ महाभागस्य महापुरुषस्य मित्रं वयस्यो भवति इत्युक्त्वेत्यभिधाय च त्रपया लज्जयावनम्रं मुखं यस्याः सैवंविधा महीयसा गरीयसाश्रुवेगेन नेत्राम्बुप्रवाहेण तूष्णीमेव महीमाप्लावितवती।

चन्द्रापीडस्य तु तदाकर्ण्य श्रुत्वा हृदयमस्फुटदित्यन्वयः। कीदृशस्य। कर्णं यावदायतं विस्तीर्णं यल्लोचनद्वयं तस्यामीलनं मुद्रणं तेन मग्ना दृष्टिर्यस्य स तथा तस्य। भ्रष्टं नष्टं वचनस्य वचसः सौष्ठवं शोभनत्वं यस्य स तथा तस्य। किं कुर्वतः। इति गदत इति ब्रुवतः। इतियोत्यमाह—**भगवतीति**। हे भगवति हे देवि, कृतप्रयत्नायामपि विहितोद्यमायामपि भगवत्यामपुण्यभाजा पापभाजास्मिञ्जन्मनीह भवे देव्याः कादम्बर्याश्चरणपरिचर्यासुखं क्रमसेवासातं न प्राप्तं तज्जन्मान्तरेऽप्यन्यभवेऽपि मे मम भगवती भवती संपादयित्री जनयित्री भूयादितीवोत्प्रेक्षते। कादम्बरीसमागमस्याप्राप्तिदुःखेनेव भेदोन्मुखं प्रस्फुटनोन्मुखं मुकुलमिव कुड्मलमिव शिलीमुखस्याघाताद्भ्रमराभिघातात्। यथा भ्रमराभिघातात्कुड्मलं भेदोन्मुखं स्फुटति, तथैव चन्द्रापीडस्य तच्छ्रुत्वा स्वभावेन प्रकृत्या सरसं कोमलं हृदयमस्फुटदिति भावः।

**अथेति**। हृदयस्फोटानन्तरं महाश्वेतायाः शरीरमुत्सृज्य विमुच्य संभ्रमेणादरेण प्रतिपन्नमङ्गीकृतं चन्द्रापीडस्य शरीरं यया सा तथा तस्याम्। इत्युक्त्वेत्यभिधाय मुक्तं परित्यक्तमार्तं पीडितं वचो यया सा तथा तस्यां तरलिकायां सत्याम्। इतियोत्यमाह—**हे भर्तृदारिके इति**। हे महाश्वेते, किं लज्जया त्रपया। तावदादौ पश्य विलोकय। अयं देवश्चन्द्रापीडोऽन्यथैवेतरप्रकारेणैव कथमप्यास्ते तिष्ठति। अस्य चन्द्रापीडस्य ग्रीवा

---

**टिप्प०**—1 'स तु मद्वचसोऽस्यानन्तरमेव' इति पाठः। स वैशम्पायनः। 2 'कृताक्रन्दात्तत्परिजनाच्छ्रुतवती' इत्येव पाठः। 3 मया। 4 धन्या बुद्धिः! भूयादिति आशीर्लिङा भगवतस्तदिदं काम्यते।

---

पाठा०—१ स च मे वचसोऽस्यानन्तरमेव; स तु मद्वचनानन्तरम्. २ आच्छिन्नमूलः. ३ अपक्रान्त. ४ च तस्मिन्. ५ कृताक्रन्दात्तत्परिजनाच्छ्रुतवती; कृताक्रन्दात्तत्परिजनतः श्रुतम्. ६ प्लावितेन. ७ तत्तत्. ८ ससंभ्रम. ९ चन्द्रापीडः. १० मग्नैव.

धारयति । विचालितो[1]ऽपि न किंचिच्चे[2]तयते । नान्तःप्रविष्टतारके समुन्मीलयति विलोचने[3] । नायं यथाव[4]स्थितानां गात्राणामावरणं क[5]रोति । नोच्छ्व[6]सिति हृदयेन । हा देव चन्द्रापीड, चन्द्राकृते, कादम्बरीप्रिय, क्वेदानीं त्वया विना गम्यते' इत्युक्त्वा[7] मुक्तार्तवचसि तरलिकायाम्, तिर्यगाभुग्नचन्द्रापीडमुखनिहितनिखिलस्तब्धदृष्टिनिश्चे[8]ष्टायां महाश्वेतायाम्, 'आः पापे दुष्टतापसि, किमिदं त्वया[9] कृतम् । अपा[10]कृताखिलजगत्पीडस्य तारापीडस्य कुलमुत्सारितम्[11] । अनाथीकृताः प्रजाः सहास्माभिः । भग्नाः पन्थानो गुणानाम् । अर्गलिताः ककुभोऽर्थिलोकस्य । कस्य वदनमीक्षतां[12] लक्ष्मीः ? कोऽवलम्बनं भवतु भूमेः ? कं सेवन्तां सेवकाः ? त्वया विना संप्रति व्यसनमेव सेवा संवृत्ता[13] । वृत्तं[14] समानशीलत्वम् । अस्तमिता च[15] परिजनश्लाघा । लघूकृतो भृत्यादरः । दूरं गतानि प्रियालपितानि । समाप्ताः[16] परित्यागकथाः । त्वं कथं कथावशेषीभूतोऽसि ? भूतपूर्वाः कमुपयान्तु संप्रति[17] प्रजाः[18] ? क्व[19] संप्रति साधूनां

---

कंधरा भग्नेव त्रुटितेव मूर्धानं शिरो न धारयति न धत्ते। विचालितोऽपि परावर्तितोऽपि न किंचित् चेतयते न संज्ञां लभते। अन्तर्मध्ये प्रविष्टे तारके कनीनिके ययोरेवंविधे विलोचने नेत्रे न समुन्मीलयति न विकासयति। अयं यथावस्थितानां गात्राणामङ्गानां नावरणमाच्छादनं करोति। हृदयेन भुजान्तरेण नोच्छ्वसिति नोच्छ्वासं गृह्णाति। हा इति खेदे। हे देव हे पूज्य, हे चन्द्रापीड, चन्द्रवच्छशाङ्कवदाकृतिराकारो यस्य तस्य संबोधनं हे चन्द्राकृते, हे कादम्बरीप्रिय हे गन्धर्वसुताप्राणप्रिय, त्वया विना भवद्व्यतिरेकेण मया क्वेदानीं सांप्रतं गम्यत इति। तिर्यगाभुग्ना वक्रा चन्द्रापीडमुखे निहिता स्थापिता निखिला समग्रा स्तब्धा निश्चला दृग्यया सा तस्यामेवंविधायां निश्चेष्टायां निर्गतशरीरव्यापारायां महाश्वेतायां सत्याम्, इति परिजने सेवकजन आरटति पूत्कुर्वति सति। इतियोत्यमाह—**आः पापे इति**। आः इति खेदे। पापे पापकारिणि दुष्टतापसि, त्वया भवत्येदं किं कृतं किं विहितम्। अपाकृता दूरीकृताखिलजगतः समग्रविश्वस्य पीडा येनैवंभूतस्य तारापीडस्य कुलं वंश उत्सारितं उच्छेदितम्। दूरीकृतमिति यावत्। अस्माभिः सह प्रजाः प्रकृतयोऽनाथीकृता विनायकीकृताः। वयमप्यनाथीभूता इत्यर्थः। गुणानां शौर्यादीनां पन्थानो मार्गा भग्ना भ्रंशं प्राप्ताः। अर्थिलोकस्य याचकजनस्य ककुभो दिशोऽर्गलिताः कृतपरिघाः संजाताः। लक्ष्मीः पद्मा कस्य वदनमीक्षतां विलोकताम्। भूमेः पृथिव्याः को वावलम्बनमालम्बनं भवतु। सेवकाः सपर्याकारिणः कं पुमांसं सेवन्तामुपासन्ताम्। त्वया[2] विना भवद्विना सेवा सपर्या संप्रति व्यसनमेव कष्टमेव संवृत्ता जाता। समानशीलत्वं सदृशस्वभावत्वम्। 'शीलं स्वभावे सद्वृत्ते' इत्यमरः। वृत्तमतीतम्। 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिश्चले' इत्यमरः। परिजनस्य परिच्छदस्य श्लाघा[3] प्रशंसास्तमितास्तं प्राप्ता। भृत्यानां किंकराणामादरः सन्मानप्रदानं लघूकृतः स्वल्पीकृतः। प्रियालपितानि मिष्टभाषितानि दूरं गतानि दविष्ठदेशं प्राप्तानि। परित्यागकथा दानकिंवदन्त्यः समाप्ताः। विलयं गता इत्यर्थः। **त्वमिति।** चन्द्रापीडः कथं केन प्रकारेण कथावशेषीभूतः कथा एवावशेषोऽवशिष्टा यस्मिन्नेवंभूतो जातोऽसि। पूर्वं भूता भूतपूर्वाः संप्रति प्रजाः कमुपयान्तु कमाश्रयन्तु। क्व साधूनां सज्जनानां संप्रति समाधानं चित्तप्रमोदजन-

---

**टिप्प०—1 'निश्चेष्टायामेव महाश्वेतायाम्' इत्येव पाठः। 2 'युवराज ! त्वया विना०' इति पाठः। 3 'अस्तमिता च परिजनकथा' इत्येव पाठः।**

---

पाठा०—१ विचलितः. २ किंचिदपि. ३ लोचने. ४ यथास्थितानाम्; यथावस्थितपतितानाम्. ५ ईष्टे. ६ नमनागप्युच्छ्वसित्येव. ७ उक्त्वा उन्मुक्तार्तवचसि; इत्युन्मुक्तार्तवचसि. ८ निश्चल. ९ त्वयापकृपया. १० अपाकृत; अकृत. ११ उत्सादितम्. १२ उद्वीक्षताम्. १३ वृत्ता. १४ निवृत्तम्. १५ अश्रान्तपरिजन. १६ समाप्ता परित्यागकथा; पर्याप्ता परित्यागवार्ता. १७ सांप्रतम्. १८ प्रज्ञाः. १९ किम्.

समाधानम् ? अधुना धूर्धरे त्वयि विपन्ने कः समुद्वहतु देवेन तारापीडेनोढां धुरम् ? धीर-[1]स्यापि ते कथं कातरस्येव शुचा भिन्नं हृदयम् ? दयालोरपि ते केयमद्येदृशी जाता निर्दय-ता[3]स्मासु ? देव, प्रसीद सकृदप्याज्ञापय ? देहि[4] [5]भक्तजनस्याभ्यर्थनाम् । प्रतिपद्यस्व प्राणान् । न त्वया विना क्षणमपि प्राणिति पुत्रवत्सलो देवस्तारापीडः, न देवी विलासवती, [6]नाप्यार्यः शुकनासः, न मनोरमा, न राजानः, नापि प्रजाः । परित्यज्य च सर्वानेकाकी क्व प्रस्थि-तोऽसि ? कुतस्तवेयमेकपद एवेदृशी निष्ठुरता जाता ? क्व सा गुरुजनस्योपरि भक्तिर्यदेवं[7]-मनपेक्ष्य प्रयासि' इत्युक्तवत्यवनितलविमुक्तात्मन्यारटति परिजने, [8]तदाकर्णनोत्कर्णे 'हा हा, किमेतत्' [9]इत्युद्भ्रान्तमनसि समापतति राजपुत्रलोके, [10]समुत्प्लुतोत्पक्ष्मनयनदर्शिनि चन्द्रापी-डवदननिवेशितदृशि दीनतरहेषारवकृताक्रन्दे शुचेव पर्यायोत्क्षिप्तखुरचतुष्काहतक्ष्मातले मुहु-र्मुहुरात्मोन्मोचनायेवाच्छोटितखरखलीनकनकशृङ्खलायोगे तुरंगमतां मुमुक्षतीवेन्द्रायुधे, पत्र-लेखानिवेदितचन्द्रापीडागमना चन्द्रोदयोल्लासिनी वेलेव महोदधेः समकरध्वजा, व्याजीकृत्य

---

नम् । अधुना धूर्धरे राज्यभारधरणक्षमे त्वयि भवति विपन्ने मृते देवेन तारापीडेनोढां धुरं कः समुद्वहतु को दधातु । धीरस्यापि वीरस्यापि ते कथं कातरस्येव भीरोरिव शुचा शोकेन भिन्नं स्फुटितं हृदयं भुजान्तरम् । दया-लोरपि कृपालोरपि ते तव केयमद्येदृशी निर्दयता निष्करुणता जातोत्पन्नास्मासु सेवकजनेषु । हे देव, प्रसीद प्रसन्नो भव । सकृदप्येकवारमप्याज्ञापयाज्ञां देहि । भक्तजनस्याभ्यर्थनां प्रार्थनां देहि[1] वितर । प्रतिपद्यस्वाङ्गीकुरुष्व प्राणानसून् । त्वया विना भवद्व्यतिरेकेण क्षणमपि समयमात्रमपि पुत्रवत्सलस्तारापीडो न प्राणिति । न जीव-तीत्यर्थः । तथा देवी विलासवती न प्राणितीत्यस्य सर्वत्र संवन्धः । नाप्यार्यः पूज्यः शुकनासः । न मनोरमा शुकनासस्य स्त्री । नान्ये राजानः कियद्ग्रामाधिपतयः । न प्रजाः प्रकृतयः । परित्यज्य च विहाय च सर्वानेका-क्यसहायः क्व प्रस्थितः क्व चलितोऽसि । कुतः कस्मात्तवेयमेकपद एव सहसैवेदृशी निष्ठुरता कठिनता जाता । क्व साऽनिर्वचनीयस्वरूपा गुरुजनस्योपरि पूज्यलोकस्योपरि भक्तिराराध्यत्वेन ज्ञानं श्रद्धा वा । 'श्रद्धारचनयो-र्भक्तिः' इत्यमरः । यद्यस्मादेवंताननपेक्ष्यानादृत्य प्रयासीत्युक्तवत्यवनितले विमुक्तो न्यस्त आत्मा येन स तस्मिन्नेवंभूते परिजन आरटत्याक्रन्दं कुर्वति सति । तस्याकर्णनं श्रवणं तेनोत्कर्ण ऊर्ध्वीकृतश्रवणे । हा हा इति खेदे । किमेतदेतत्किमित्युद्भ्रान्तं व्याकुलं मनो यस्य स तस्मिन्नेवंभूते राजपुत्रलोके समापतति समागच्छति सति । समुत्प्लुते नम्रीभूते उत्पक्ष्मणी ययोरेवंभूताभ्यां नयनाभ्यां पश्यतीत्येवंशीलः स तथा तस्मिन् । चन्द्रापीडस्य वदने मुखे निवेशिता स्थापिता दृग्येन स तथा तस्मिन् । दीनतरं यथा स्यात्तथा हेषारवेण हेषाध्वनिना कृत आक्रन्दः पूत्कृतिर्येन स तथा तस्मिन् । शुचेव शोकेनेव पर्यायेणानुक्रमेणोत्क्षिप्तमुत्पाटितं यत्खुरचतुष्कं तेन हतं क्ष्मातलं येन तस्मिन् । मुहुर्मुहुर्वारंवारमात्मनः स्वस्योन्मोचनाय मुक्तय इवा[2]च्छोटितं खरं कठिनं खलीनं मुखयन्त्रणं कनकशृङ्ख-लायोगो येन स तस्मिन् । 'कविका तु खलीनोऽस्त्री' इत्यमरः । तुरंगमतामश्वतां मुमुक्षतीव मोक्तुमिच्छतीवेन्द्रा-युधे । पत्रलेखया निवेदितं ज्ञापितमे[3]कमद्वितीयं चन्द्रापीडागमनं यस्याः सा । चन्द्रोदयेनोल्लसतीत्येवंशीला सा

---

टिप्प०—1 धन्यष्टीकाकारः । 'अवधेहि (अवधानेन शृणु) भक्तजनाभ्यर्थनाम्' इति पाठः । 2 आ-च्छोटितः संछिन्नः खरस्य खलीनस्य कविकायाश्च शृङ्खलायोगो येन, इत्यर्थः । 3 अमूला सेयं व्याख्या ।

---

पाठा०—१ धीर. त्वयि; धूर्धरे त्वयि. २ शरीरम्. ३ अस्मासु ते. ४ अवधेहि. ५ भक्तजनाभ्यर्थनाम्. ६ नार्यशुकनासः. ७ अनपेक्ष्य. ८ तदाकर्ण्योत्कर्ण्ये. ९ उद्भ्रान्ते राजपुत्रलोके. १० समुल्ललित.

महाश्वे[१]तादर्शनं मातापित्रोः पुरः प्रतिपन्नश्रृङ्गारवेषाभरणा, रणन्[२]नूपुरयुगेन मुखरमेखलादा[३]म्ना रम्योज्ज्वला[४]कल्पेन कल्पितानङ्गबलविभ्रा[५]न्तिना गृहीतसुरभिमाल्यानुलेपनपटवासाद्युपकरणेन नातिबहुना परिजनेनानुगम्यमाना, पुरः केयूरकेणोपदि[६]श्यमानमार्गा, पत्रलेखाहस्तावलम्बिनी, मदलेखया सह कृतालापा—'मदलेखे, पत्रलेखा कथयति प्र[७]त्यहमहं पुनस्तस्यैकान्तनिष्ठुरहृदयस्य शठमतेर्नि[८]र्घृणमनसो निःस्पृहागमनमेव न श्रद्दधे। किं न स्मरसि तत्तस्य मदवस्थामश्रद्दधानस्य हिमगृहके म[९]द्वितविमर्शाय दुर्विदग्धबुद्धेर्वक्रभाषितम्, यत्र सस्मितमालोकितया त्वयैवास्मै सुतरामे[१०]वासंशयकारि प्रत्युत्तरं दत्तम्। तदसौ मरणेऽपि मे न श्रद्दधात्येवे[११]मामव-

---

तथा[1] महोदधेः समुद्रस्य वेलेवाम्भसो वृद्धिरिव। सह मकरध्वजेन कामेन वर्तत इति समकरध्वजा। मातापित्रोः पुरो महाश्वेतादर्शनं व्याजीकृत्य मिषीकृत्य प्रतिपन्नेऽङ्गीकृते श्रृङ्गारवेषाभरणे उज्ज्वलनेपथ्यभूषणे यया सा तथा। रणञ्शब्दं कुर्वन्यन्नूपुरयुगं पा[2]दकटकयुग्मं तेन मुखरं वाचालं यन्मेखलादाम काञ्चीदाम तेन रम्यं मनोहरमुज्ज्वलं निर्मलं यदाकल्पं वेषस्तेन। 'आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्' इत्यमरः। कल्पिता घटितानङ्गबलस्य कामसैन्यस्य विभ्रान्तिर्भ्रमो येन स तथा तेन। गृहीतान्यात्तानि सुरभिमाल्यानि सुगन्धस्रजोऽनुलेपनं विलेपनम्, पटवासः पिष्टातः, एते आदौ येषामेवंविधान्युपकरणानि येन स तथा तेन। नातिबहुना नातिभूयसा परिजनेन परिच्छदेनानुगम्यमानानुयायमाना। पुरोऽग्रे केयूरकेणोपदिश्यमानः प्रदर्श्यमानो मार्गः पन्था यस्याः सा। पत्रलेखानाम्नी ताम्बूलकरण्डकवाहिनी तस्या हस्तं करमवलम्बतीत्येवंशीला मदलेखया सह कृतो विहित आलापो यया सा। तदेवाह—**हे मदलेखे इति**। हे मदलेखे, पत्रलेखा प्रत्यहं कथयति ब्रवीति। अहं पुनस्तस्य चन्द्रापीडस्यैकान्तेन निष्ठुरं हृदयं यस्य शठा निकृता मतिः बुद्धिर्यस्य स तस्य निर्घृणं निर्दयं मनो यस्य स तथा तस्य निःस्पृहा[3]गमनमेव केवलमदर्थागमनमेव न श्रद्दधे न मन्ये। त्वं तत्किं न स्मरसि न स्मृतिगोचरीकरोषि। तस्य चन्द्रापीडस्य मदवस्थां मदीयदशामश्रद्दधानस्यास्थामकुर्वाणस्य हिमगृहके मद्वितं[4]विमर्शाय दुर्विदग्धबुद्धेरचतुरमतेर्वक्रभाषितं वक्रोक्तिजल्पितं वि[5]मर्शय विचारय यत्र सस्मितं सहास्यं यथा स्यात्तथालोकितया निरीक्षितया त्वयैवास्मै चन्द्रापीडाय सुतरामेवात्यन्तमे[6]वासंशयकारि अनारेकाकृत्प्रत्युत्तरं प्रतिवचो दत्तम्। तदसौ

---

**टिप्प०**— 1 समुद्रवेला मकररूपेण ध्वजेन सहिता, कादम्बरी तु सकामा। 2 इमानि सर्वाणि 'परिजनेन' इत्यस्य विशेषणानि। अत एव 'रणत् नूपुरयुगं यस्य' इत्यादिर्बहुव्रीहिः सर्वत्रोचितः। टीकाकारधुंगवेन तु यत्कृतं तत्स्वानुरूपमेव। 3 हन्त ग्रन्थोपरि क्रकचघातः! 'निस्पृहस्यागमनमेव' इति पाठः। 4 'मद्विमर्शाय' इति पाठः। मम गवेषणाय 'अहं तदनुरागिणी अस्मि न वेति' मद्विषयकनिश्चयाय दुर्विदग्धबुद्धेः शठमतेः (प्रयोजितकूटमतेरिति भावः) टीकाकारस्तु प्रणयकलहोपालम्भमविजानन् विस्वरं प्रलपति। 5 वक्रभाषितं तत्किं न स्मरसि? इति संबन्धः। 'विमर्शय' इति तु निर्मूलः प्रलापः। 6 पाठकमहाभागाः! टीकाकृतट्टीका सेयं गङ्गाप्रवाहयोरया, किमधिकं वच्मि। असंशयकृदुत्तरदानं शोभते किमु विदग्धगोष्ठ्याम्? 'संशयकारि' इत्येव पाठः। तत्र कविशिरोमणिना बाणेन मदलेखाया द्व्यर्थतया संशयात्मकमेवोत्तरमुपनिबद्धम्—'कुमारभावोपेतायाः किमिवास्या यन्न संतापाय' इत्यादि।

---

पाठा०—१ कादम्बरीदर्शनम्. २ नूपुरेण; नूपुरयुगा. ३ दामा. ४ वाससा. ५ विभ्रमेण. ६ अपदिश्यमान. ७ अन्यत्. ८ निर्घृणस्यागमनम्; निस्त्रिंशस्यागमनम्; नृशंसस्यागमनम्. ९ मद्विमर्शाय. १० संशयकारि. ११ एवेमावस्थाम्; एवमवस्थाम्.

स्याम्। [1]अन्यथा यदि मदर्थे दुःखमेवमियमनुभवतीत्ये[2]तदस्याभविष्यत्तदा तथा गमनमेव नाकरिष्यत्। [3]तथागतोऽप्यसौ यत्किमपि वक्तव्यस्त्वयैव। मया पुनर्दृष्टोऽपि नालपितव्यो नोपालब्धव्यो न चरणपतितस्याप्यनुनयो ग्राह्यो नाहं प्रियसख्या प्रसादनीया' इत्यभिदधानैवाचेतितागमनखेदा कादम्बरी चन्द्रापीडदर्शनायोत्ताम्यन्ती तत्रैवाजगाम।

[4]आगम्य चोद्धृतामृतमिव रत्नाकरम्, इन्दुविरहितमिव निशाप्रबन्धम्, अस्तमिततारागणमिव गगनम्, [5]अपचितकु[6]सुमशोभमिवोपवनम्, उत्खातकर्णिकमिव कमलम्, उत्खण्डिताङ्कुरमिव मृ[7]णालम्, अवलुप्ततर[8]लमिव हारम्, उन्मुक्तजीवितं चन्द्रापीडमद्राक्षीत्। दृष्ट्वा च तं सहसा 'हा किमिदम्' इत्यधोमुखी धरातलमुपयान्ती कथंकथमपि मु[9]क्ताक्रन्दया मदलेखयाधार्यत। पत्रलेखा पुनरुन्मुच्य कादम्बरीकरतलमचेतना क्षितिमु[10]पागमत्। चि[11]राच्च लब्धसंज्ञापि कादम्बरी तथैव मूढेव निश्चलस्तब्धदृष्टिराविष्टेव, स्तम्भितेव, निष्प्रयत्ना, निःश्वसितुमपि वि[12]स्मृता, अन्तर्मन्युभारनिष्पन्देव चन्द्रापीडवदनस[13]मर्पिताक्षी, श्यामारुणानना ग्रहोपरक्तेन्दु-

मरणेऽपि मे ममेमामवस्थां न श्रद्दधालेव न चेतस्यवबुध्यते। अ[1]न्यथोक्तविपर्यये। यदि मदर्थे चन्द्रापीडनिमित्तमेवेयं कादम्बरी दुःखमनुभवत्यनुभवविषयीकरोतीत्येतदस्य चन्द्रापीडस्या[2]भविष्यत्तदा तथा गमनमेव तादृग्गमनमेव नाकरिष्यत्। तथागतोऽपि तेन प्रकारेणागतोऽप्यसौ चन्द्रापीडो यत्किमपि त्वयैव भवत्यैव वक्तव्यो मया पुनर्दृष्टोऽपि निरीक्षितोऽपि नालपितव्यो न संभावितव्यः। नोपालब्धव्यो नोपालम्भो दातव्यः। चरणपतितस्यापि पादप्रणतस्याप्यनुनयः प्र[3]णामो न ग्राह्यो न ग्रहीतव्यः। नाहं प्रियसख्या वल्लभवयस्यया प्रसादनीया प्रसन्नीकार्या। इत्यभिदधानैवेतिब्रुवाणैवाऽचेतितागमनखेदाऽज्ञातागमनसादा कादम्बरी चन्द्रापीडस्य दर्शनाय वीक्षणायोत्ताम्यन्त्युत्प्राबल्येन खेदं कुर्वन्ती तत्रैव महाश्वेताश्रमं आजगाम।

आगम्य चागमनं कृत्वैव चोन्मुक्तजीवितं त्यक्तप्राणितं चन्द्रापीडमद्राक्षीद्व्यलोकयत्। कः कमिवेत्यपेक्षायामाह—**उद्धृतेति**। उद्धृतं गृहीतममृतं पीयूषं यस्मादेवंभूतं रत्नाकरमिव समुद्रमिव। इन्दुना चन्द्रेण विरहितं वियुक्तं निशाप्रबन्धमिव रात्रिसंबन्धमिव। अस्तमितोऽस्तंप्राप्तस्ताराणां नक्षत्राणां गणो यस्मिन्नेतादृशं गगनमिव व्योमेव अपचिता दूरीकृता कुसुमशोभा पुष्पलक्ष्मीर्यस्मादेवंभूतमुपवनमिवाराममिव। उत्खाता त्रोटिता कर्णिका बीजकोशो यस्मादेतादृशं कमलमिव पद्ममिव। उत्खण्डिता उच्छेदिता अङ्कुरा अङ्कूरा यस्यैवंविधं मृणालं कमलमिव। अवलुप्तो दूरीकृतस्तरलो मध्यमणिर्यस्मादेतादृशं हारमिव मुक्ताकलापमिव। 'तरलश्चञ्चले खड्गे हारमध्यमणावपि' इति विश्वः। चन्द्रापीडमद्राक्षीदित्यन्वयस्तु पूर्वोक्त एव। दृष्ट्वा च तं चन्द्रापीडं सहसैकपदे। हा इति खेदे। किमिदमित्यधोमुखी नीचैर्मुखी धरातलं पृथ्व्यास्तलमुपयान्ती गच्छन्ती कथंकथमपि महता कष्टेन मुक्ताक्रन्दयापि विहितफूत्कृत्यापि मदलेखयाधार्यत धृता। पत्रलेखा पुनः कादम्बरीकरतलमुन्मुच्य त्यक्त्वा क्षितिं वसुधामुपागमत्प्राप्तवती। चिराच्च बहुकालेन लब्धा प्राप्ता संज्ञा चेतना यया सैवंभूतापि कादम्बरी तथैव तस्थाविति दूरेणान्वयः। कादम्बरीं विशेषयन्नाह—**मूढेति**। मूढेव मूर्च्छितेव निश्चला निमेषरहितात एव स्तब्धा दृष्टिर्यस्याः सा तथा। आविष्टेव भूतग्रस्तेव स्तम्भितेवावरुद्धेव। अतएव निष्प्रयत्ना(पि) निरुद्यमा निःश्वसितुमपि निःश्वासं ग्रहीतुमपि विस्मृता विस्मरणं गता। अन्तर्मन्युभारः शोकसंभारस्तेन निष्पन्देव निश्चेष्टेव चन्द्रापीडवदने समर्पिते दत्ते

टिप्प०—1 'अन्यच्च' इत्येव पाठः। 2 'एतदस्य चेतस्यभविष्यत्' इति पाठः। 3 अनुनयो मानवत्याः प्रसादनम्। प्रणामार्थस्तु पुंगवत्वमेव।

पाठा०—१ अन्यच्च. २ अस्य चेतस्यभविष्यत्. ३ तत्र गतः. ४ आगत्य. ५ अवचित. ६ फलकुसुम. ७ मृणालिनीम्. ८ तरलमणिम्. ९ संक्रन्दया. १० उपागता. ११ अचिरात्. १२ विस्मृत्यार्थ. १३ संदानिताक्षी.

बिम्बेव पौर्णमासी निशा, निशितपरशुपातोत्कम्पिनी लतेव वेपिताधरकिसलया, लिखितेव स्त्रीस्वभावविरुद्धेन चेतसा तस्थौ । [१]तथावस्थितां च तामुन्मुक्तार्तनादा सपादपतनं मदलेखाब्रवीत्—'प्रियसखि, प्रसीद । उत्सृ[२]जेमं मन्युसंभारमर[३]टन्ती । बाष्पमोक्षेणामुच्यमानेऽस्मिन्नियत[४]मतिभारोत्पीडितं तटाकमिव [५]सरसमृदु नियतं सहस्रधा स्फुटति ते [६]हृदयमित्यपेक्षस्व देवीं मदिरां देवं च चित्ररथम् । त्वया विना कुलद्वयमपि नास्ति' इत्युक्तवतीं मदलेखां कादम्बरी विहस्याब्रवीत्—

'अ[७]य्यु[८]न्मत्तिके, कुतोऽस्य मे वज्रसारकठिनस्य हतहृदयस्य स्फुटनम्, [९]यन्नालोक्यैवं सहस्रधा स्फुटितम् । अपि च या जीवति तस्याः सर्वमिदम्, माता पिता बन्धुरात्मा सख्यः परिजन इति । मया पुनर्म्रियमाणया जीवितभूतं कथंकथमपि समासादितमिदं प्रियतमशरीरं यज्जीवदजीवद्वा संभोगेनानुमरणेन वा द्विधापि सर्वदुःखानामेवोपशान्तये । तत्किमिति देवेनागच्छता मदर्थं प्राणांश्चोत्सृजता सुदूरमारोपितं गुरुतां च नीतमात्मानमश्रुपात-

---

अक्षिणी चक्षुषी यया सा तथा शुचा श्यामं क्रोधेनारुणं रक्तमाननं मुखं यस्याः सा तथा । केव । ग्रहेण राहुणा राहुग्रासेनोपरक्तमिन्दुबिम्बं चन्द्रमण्डलं यस्यामेवंविधा पौर्णमासीनिशेव । निशितस्तीक्ष्णो यः परशुः कुठारस्तस्य पातः पतनं तेनोत्कम्पितुं शीलं यस्याः सा तथैतादृशी लतेव वल्लीव । वेपितः कम्पितोऽधरकिसलयं ओष्ठपल्लवो यस्याः सा तथा । लिखितेव चित्रितेव स्त्रीस्वभावश्चञ्चलप्रकृतिस्तस्या विरुद्धेन स्थैर्येण चेतसा चित्तेन तस्थावित्यन्वयस्तु पूर्वमेवोक्तः । तथावस्थितां तेन प्रकारेणासेदुषीं च तां कादम्बरीमुन्मुक्त आर्तनादः करुणध्वनिर्यया सैवंभूता मदलेखा सपादपतनं यथा स्यात्तथाब्रवीदवोचत् । किं तदित्याह—**प्रियेति** । हे प्रियसखि, प्रसीद प्रसन्ना भव । इमं मन्युसंभारमुत्सृज त्यज । किं कुर्वन्ती । अरटन्ती रुदनमविदधती । बाष्पमोक्षेण कृत्वास्मिन्मन्युभारेऽमुच्यमानेऽतिभारेणातिवीवधेनोत्पीडितं दुःखितं सरसं च तन्मृदु च सरसमृदु । रसोपयुक्तं सुकुमारं चेत्यर्थः । तटाकमिव कासार इव नियतं निश्चितं ते तव हृदयं भुजान्तरं सहस्रधा स्फुटति । भविष्यद्वर्तमाना । स्फुटिष्यतीत्यर्थः । तटाकमपि रसः पानीयं तेन स्रुतं मृदु च स्यादिति तदुपमानम् । 'रसो जलं रसो हर्षः' इति कोषः । [1]इति हेतोः । अवेक्षस्व विलोकय । देवीं मदिरां निजजननीं देवं च चित्ररथं स्वजनकम् । त्वया विना कुलद्वयमपि मातृपक्षः पितृपक्षश्च नास्ति न विद्यते । इत्युक्तवतीमिति निवेदितवतीं मदलेखां कादम्बरी विहस्य स्मितं कृत्वाब्रवीत् ।

अयि उन्मत्तिके, मे ममास्य वज्रस्य पवेः सारं मध्यं तद्वत्कठिनस्य कठोरस्य हतहृदयस्य कुतः स्फुटनं द्वैधीभावो यन्नैवमालोक्य निरीक्ष्य सहस्रधा स्फुटितम् । अपि चेति युक्त्यन्तरे । या जीवति प्राणिति तस्याः स्त्रियो माता जननी, पिता जनकः, बन्धुः स्वजनः, आत्मा जीवः, सख्यो वयस्याः, परिजनः परिच्छद इति सर्वमिदं स्यात् । मया पुनः कादम्बर्या म्रियमाणया प्राणान्परित्यजन्त्या कथं कथमपि इदं प्रियतमशरीरं जीवितभूतं प्राणभूतं समासादितं प्राप्तं यज्जीवद्वाऽजीवद्वा संभोगेन मैथुनेनानुमरणेन वा सहगमनेन द्विधाप्युभयप्रकारेणापि सर्वदुःखानामेव समग्रकृच्छ्राणामेवोपशान्तये निवृत्तये । मदर्थं मत्कृते देवेन चन्द्रापीडेनाऽऽगच्छतागमनं कुर्वता प्राणांश्चासूंश्चोत्सृजता परित्यजता सुदूरमत्युच्चैरारोपितमारोहणं कारितम् । गुरुतां च नीतं महत्त्वं च प्रापितम् ।

---

**टिप्प०**—1 'इति' पदं विरूपमेवात्र । 'स्फुटति ते हृदयमिदम् । अपेक्षस्व०…' इत्येव पाठः ।

---

**पाठा०**—१ तथास्थितां तु. २ एनम्. ३ आरटन्ती; अनारटन्ती. ४ अतिजलभार. ५ मृदुसरसम्. ६ हृदयमिदम्. ७ अपि. ८ उन्मत्तके. ९ आलोक्यैव यन्न.

मात्रेण लघूकृत्य पातयामि । कथं स्वर्गगमनोन्मुखस्य देवस्य रुदितेनामङ्गलं करोमि । कथं वा पादधूलिरिव पादावनुगन्तुमुद्यता हर्षस्थानेऽपि रोदिमि । किं मे दुःखमेवंविधम् । अधुना तु मे सर्वदुःखान्येव दूरीभूतानि । किमद्यापि रुद्यते । यदर्थं कुलक्रमो न गणितः, गुरवो नापेक्षिताः, धर्मो नानुरुद्धः, [1]जनवादान्न भीतम्, लज्जा परित्यक्ता, मदनोपचारैः सखीजनः खेदितः, दुःखिता मे प्रियसखी महाश्वेता, तस्याः कृते प्रतिज्ञातमन्यथा जातं [2]मयेत्येतदपि चेतसि न कृतम्, तस्मिन्मदर्थमेवोज्झितप्राणे प्राणेश्वरे, प्राणान्प्रतिपालयन्ती त्वयैवं किमुक्ताहम् । [3]अस्मिन्समये [4]मरणमेव जीवितम् । जीवितं पुनर्मरणम् । तद्यदि ममोपरि स्नेहं करोषि मत्प्रियं हितं वा, [5]तन्ममोपरि स्नेहाबद्धयापि प्रियसख्या तथा कर्तव्यं यथा न तातोऽम्बा [6]च मच्छोकादात्मानं परित्यजतः, यथा च मयि, [7]वाञ्छितं मनोरथं त्वयि पूरयतः, [8]परलोकगताया अपि मे जलाञ्जलिदानाय पुत्रकस्त्वयिभवः । यथा [9]च मे सखीजनः परिजनो वा न स्मरति, शून्यं वा [10]मद्भवनमालोक्य न दिशो गृह्णन्ति तथा करिष्यसि ।

---

ममात्मानमश्रुपातमात्रेण नेत्राम्बुनिर्गमनेन तत्किमिति किमर्थं लघूकृत्य पातयामि । स्वर्गगमन उन्मुखस्याभिमुखस्य देवस्य चन्द्रापीडस्य रुदितेनाश्रुपातेन कथममङ्गलम शिवं करोमि । पादधूलिरिव चरणरज इव पादावनुगन्तुमुद्यता कथं वा हर्षस्थाने रोदिमि रुदनं करोमि एवंविधं किं मे दुःखम् । अधुना तु मे मम सर्वदुःखान्येव दूरीभूतानि । किमद्यापि मया रुद्यते । यदर्थं यत्कृते कुलक्रमोऽन्वयस्थितिर्न गणितो नापेक्षितः । गुरवो हिताहितप्राप्तिपरिहारोपदेष्टारो नापेक्षिता न समीहिताः । धर्मो नानुरुद्धो न नियन्त्रितः । जनवादात्कौलीनान्न भीतं न त्रस्तम् । 'स्यात्कौलीनं लोकवादे' इत्यमरः । लज्जा त्रपा परित्यक्ता मुक्ता । मदनोपचारैः कामोपशमनक्रियाभिः सखीजनः खेदितः खेदं प्रापितः । दुःखिता पीडिता मे मम प्रियसखी महाश्वेता । तस्या महाश्वेतायाः कृते प्रतिज्ञातमङ्गीकृतं तदन्यथा वैपरीत्येन जातं मयेत्येतदपि चेतसि न कृतम् । मदर्थं कादम्बर्या एवोज्झितप्राणे त्यक्तजीविते तस्मिंश्चन्द्रापीडाख्ये प्राणेश्वरे प्राणानसून्प्रतिपालयन्ती रक्षन्ती त्वयैवं भवत्या किमुक्ताहं किं भणिता । अस्मिन्समये सांप्रतकाले मरणमेव जीवितं प्राणत्यागमेव प्राणितम् । जीवितं पुनर्मरणं प्राणत्यागः । त्रपाजनकत्वात् । तद्यदि ममोपरि स्नेहं प्रीतिं मत्प्रियं मद्वल्लभं हितमायतिसुन्दरं वा त्वं करोषि विदधासि तन्मम कादम्बर्या उपरि यः स्नेहः प्रेम तेनाबद्धया संदानितयापि प्रियसख्या वल्लभवयस्या (त्वया) तथा कर्तव्यं तथा विधेयं यथा तातश्चित्ररथोऽम्बा मदिरा च मच्छोकान्मद्विरहजनितदुःखादात्मानं न परित्यजतः प्राणमोक्षणं न कुरुतः । यथा मयि वाञ्छितं मनोरथमभिलषितं कामं त्वयि पूरयतः परिपूर्णीकुरुतः । परलोकगताया अन्यभवं प्राप्ताया अपि मे मम जलाञ्जलिदानाय मृतस्य पानीयप्रदानार्थायं पुत्रकस्त्वयि भवः । यथा च मे मम सखीजनः परिजनो वा परिच्छदलोको वा दुःखाभिभूतो भृत्यजनो न स्मरति न स्मृतिगोचरीकरोति । शून्यं रिक्तं वा मद्भवनं मद्गृहमालोक्य निरीक्ष्य दिशो न गृह्णन्ति । अन्यत्र न यान्तीत्यर्थः । त्वं मद-

---

**टिप्प०—1 मदलेखया प्राणांस्त्यजन्ती एवमुक्ता, न तु प्रतिपालयन्ती । अत एव 'त्वयैव किं वक्ष्येऽहम्' इत्येव पाठः । 2 नीचैर्दत्ते पाठान्तरेऽपि सहृदयैर्देया दृष्टिः । 3 तन्ममोपरीत्यस्याऽऽम्रेडनं दृष्ट्वा पाठान्तरमनुसंधेयम् । 4 'अयम्' कः ? अत एव नीचैः पाठान्तरमेव सम्यक् ।**

---

**पाठा०**—१ जनापवादात्. २ मम. ३ अस्मिंस्तु. ४ मरणमेव श्रेयो न जीवितं मे सर्वप्रकारलज्जाकरं तु जीवितं न पुनर्मरणम्. ५ तन्मदीयमप्यात्मनि स्नेहमारोप्य. ६ वा. ७ अवाञ्छितम्. ८ येन परलोकगताया अपि मे जलाञ्जलिदायी पुत्रको भविष्यति. ९ वापि. १० भवनम्.

पुत्रकस्य मे भवनाङ्गणे सहकारपोतस्य त्वया मच्चिन्तयैव[1] माधवीलतया सहोद्वाहमङ्गलं स्वयमेव निर्वर्तनीयम्[2] । मच्चरणतललालितस्याशोकविटपस्य[3] कर्णपूरार्थमपि न पल्लवः[4] खण्डनीयः । मत्संवर्तिताया मालत्याः कुसुमानि देवतार्चनायैवोच्चेयानि । वासभवने मे शिरोभागनिहितः कामदेवपटः पाटनीयः । मया स्वयं रोपिताश्चूतवृक्षा[5] यथा फलं गृह्णन्ति तथा संवर्धनीयाः । पञ्जरबन्धदुःखाद्वराकी कालिन्दी सारिका शुकश्च परिहासो द्वावपि मोक्तव्यौ । मदङ्कशायिनी नकुलिका स्वाङ्क एव शाययितव्या । पुत्रको मे बालहरिणस्तरलकः कस्मिंश्चित्तपोवने[6] समर्पणीयः । पाणितलसंवर्धितं मे जीवंजीवमिथुनं[7] क्रीडापर्वते[8] यथा न विपद्यते तथा कर्तव्यम्[9] । पादसहसंचारी[10] हंसको यथा न हन्यते केनचित्तथा विधेयः[11] । अपरिचितगृहवसतिः[12] सा च बलाद्विधृता तपस्विनी वनमानुषी वन एवोत्स्रष्टव्या । क्रीडापर्वतकः कस्मैचिदुपशान्ताय तपस्विने प्रतिपादयितव्यः । शरीरोपकरणानि मे ब्राह्मणेभ्यः[13] प्रतिपादनीयानि । वीणा पुनरात्मन एवाङ्कप्रणयिनी कार्या[14] । अपरमपि यत्ते रोचते तदपि स्वीकर्तव्यम् । अहं

---

लेखा तथा करिष्यसीत्यर्थः । मे मम पुत्रकस्य भवनाङ्गणे सहकारपोतस्य त्वया भवत्या मच्चिन्तयैव[1] मम चिन्तयैव माधवीलतयातिमुक्तकलतया सहोद्वाहमङ्गलं विवाहकल्याणं स्वयमेवात्मनैव निर्वर्तनीयं करणीयम् । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः । मच्चरणयोर्मदङ्घ्र्योस्तलमधोभागस्तेन लालितस्य[2] पालितस्याशोकविटपस्य कङ्केलिवृक्षस्य कर्णपूरार्थमपि श्रवणभूषणार्थमपि न पल्लवः किसलयः खण्डनीयश्छेदनीयः । मत्संवर्धिताया मयैव वृद्धिं नीताया मालत्या जात्याः कुसुमानि पुष्पाणि देवतार्चनायैव देवपूजार्थमेवोच्चेयानि ग्राह्याणि । वासभवने निवाससद्मनि मे मम शिरोभागे मस्तकप्रदेशे निहितः स्थापितः कामदेवपटः पाटनीयः खण्डशः कार्यः । मया स्वयमात्मना रोपिता उप्ताश्चूतवृक्षा आम्रवृक्षा यथा फलं गृह्णन्ति तथा संवर्धनीया वृद्धिं प्रापणीयाः । पञ्जरबन्धदुःखाद्वराक्यनाथा कालिन्दीनाम्नी सारिका पीतपादा शुकश्च परिहासाख्यो द्वावपि मोक्तव्यौ मोचनीयौ । मदङ्कशायिनी मदीयक्रोडशयनकारिणी नकुलिका पिङ्गलिका स्वाङ्क एव स्वकीयक्रोड एव शाययितव्या शयनं कारयितव्या । मे मम पुत्रकस्तरलकश्चञ्चलो बालहरिणः शिशुकुरङ्गः कस्मिंश्चित्तपोवने मुनिस्थाने समर्पणीयः प्रदातव्यः । मे मम पाणितलेन करतलेन संवर्धितं वृद्धिं प्रापितं जीवंजीवकमिथुनं विषदर्शनमृत्युकयुग्मं चकोरयुगलं क्रीडापर्वते यथा न विपद्यते विलयं न याति तथा कर्तव्यं तथा विधेयम् । पादाभ्यां सहसंचारी हंसको यथा केनचिन्न हन्यते न व्यापाद्यते तथा विधेयः कर्तव्यः । अपरिचिता गृहवसतिः सौधावस्थानं ययैवंविधा तपस्विनी वराकी वनमानुषी बलाद्धठाद्विधृता गृहीता सा च वन एवोत्स्रष्टव्या मोच्या । क्रीडापर्वतकः 'पवयी' इति प्राकृतलोके । कस्मैचिदनिर्दिष्टनाम्न उपशान्ताय शीतलप्रकृतये तपस्विने मुनीश्वराय प्रतिपादयितव्यः प्रदातव्यः । शरीरस्य देहस्य मे ममोपकरणानि ब्राह्मणेभ्यो विप्रेभ्यः प्रतिपादनीयानि दातव्यानि । वीणा वल्लकी पुनरात्मनः स्वस्यैवाङ्के प्रणयः स्नेहो यस्याः सैवंविधा कार्या । अपरमप्यन्यदपि यद्वस्तु ते तव रोचते रुचिविषयीभवति तदपि वस्तु स्वीकर्तव्यमङ्गीकार्यम् । अहं कादम्बरी पुनरिममात्मानमेतैः शीतलवस्तुभिः कृत्वा दग्धशेषं[3] ज्वलितोर्वरितमुज्ज्वला

---

टिप्प०—1 न प्रसङ्गः सम्यक् । अत एव—'मच्चितया' ( मत्पालितया ) इति पाठः । 2 पुष्पितीकृतस्य 'पादाघातादशोकः०' इति । 3 प्रियवियोगावस्थायां शीतलैरप्येभिर्वस्तुभिर्मम शरीरमदह्यत, दग्धशेषमेव तच्छरीरं संप्रति चितानले निर्वापयामीत्याशयः ।

---

पाठा०—१ इव. २ निवर्तनीयम्. ३ बालाशोक. ४ पल्लवलवः. ५ वृक्षकाः. ६ क्वचित्. ७ जीवंजीवक. ८ क्रीडापर्वतके. ९ कार्यम्. १० चारी. ११ विधेयम्. १२ वसति तपस्विनी बलाद्धृता; निवासा बलाद्विधृता तपस्विनी. १३ सर्वाण्येव ब्राह्मणसात्कर्तव्यानि. १४ कर्तव्या.

पुनरिमममृतकिरणरश्मिभिरनाश्यानचन्दनचर्चाभिरनवरतधारागृहासारसेकैरनेकसंतानतुहिनकिरणकिरणनिकरतारकिततारहारार्पणैर्मणिदर्पणप्रणयनेन मलयजजलार्द्रपद्मिनीपत्रास्तरणेन सरसबिसकिसलयप्रस्तरैरकठोरमृणालतल्पकल्पनयोगविकसितकमलकुमुदकुवलयशयनीयैश्च दग्धशेषमुज्ज्वलचिताज्वालामालिनि विभावसौ देवस्य कण्ठलग्ना निर्वापयाम्यात्मानम्' इत्यभिदधानैव कृतावधारणानुबन्धां मदलेखामवक्षिप्योपसृत्य महाश्वेतां कण्ठे गृहीत्वा निर्विकारवदनैव पुनस्तामवादीत्—

'प्रियसखि, तवास्ति कीदृश्यपि प्रत्याशा ययानुरागपरवशा पुनः समागमाकाङ्क्षिणी क्षणे क्षणे मरणाभ्यधिकानि दुःखान्यनुभवन्ती जीवितमलज्जाकरमननुशोच्यमनुपहसनीयमवाच्यं धारयसि। मम पुनः सर्वतो हताशायाः सापि नास्ति। तदामन्त्रये प्रियसखीं पुनर्जन्मा-

---

दीप्ताश्रितायाश्चितेर्ज्वाला अर्चिषस्ताभिर्मालत इत्येवंशीलः स तथा तस्मिन्नेवंभूते विभावसावग्नौ देवस्य राज्ञः। 'देवः सुरे वने राज्ञि देवमाख्यातमिन्द्रियम्' इति यादवप्रकाशः। कण्ठे निगरणे लग्नासक्ता निर्वापयामि शीतलीकरोमि। एतेन वह्नितप्तेर्विरहजनिततापस्याधिक्यमसूचि। एतैः कैरित्यपेक्षायामाह—**अमृतेत्यादि।** अमृतकिरणश्चन्द्रस्तस्य रश्मिभिः किरणैरनाश्यानमशुष्कं यच्चन्दनं मलयजं तस्य चर्चाभिः समालम्भनैरनवरतं निरन्तरं धारागृहाणामासारो वेगवद्वृष्टिस्तेन सेकैः सेचनैरनेकसंताना अनेकपरंपरा ते तुहिनकिरणस्य चन्द्रमसः किरणास्तेषां निकरः समूहस्तेन तारकिताः संजाततारका ये तारा उज्ज्वला हारा मुक्ताकलापास्तेषामर्पणैर्न्यसनैर्मणिदर्पणानां रत्नादर्शानां प्रणयनेन ग्रहणेन। अत्यन्तशीतलत्वात्तेषामिति भावः। मलयजजलेन चन्दनपानीयेनार्द्राणि स्विन्नानि यानि पद्मिनी कमलिनी तस्याः पत्राणि दलानि तेषामास्तरणेन प्रस्तरणेन सरसानि रसोपेतानि बिसकिसलयानि तन्तुलपल्लवास्तेषां प्रस्तरैरास्तरैरकठोराणि मृदूनि यानि मृणालानि तैः सह तल्पकल्पनयोगो विद्यते येषां तानि विकसितानि यानि कमलकुमुदकुवलयानि तेषां शयनीयैश्च। अन्वयस्तु प्रागेवोक्तः। इति पूर्वप्रतिपादितमभिदधाना ब्रुवाणा एव कृतो विहितोऽवधारणे देहपरित्यागेऽनुबन्धो निश्चयो यया सैवंविधां मदलेखामवक्षिप्य दूरीकृत्य महाश्वेतामुपसृत्य समीपे गत्वा कण्ठे निगरणे गृहीत्वा। कण्ठाश्लेषं विधायेत्यर्थः। निर्विकारवदना एव शुग्जनितविकृतिवर्जितानना एव पुनस्तां महाश्वेतामवादीदवोचत्।

हे प्रियसखि महाश्वेते, तव भवत्याः कीदृश्यप्यनिर्दिष्टनाम्न्यपि प्रत्याशा लिप्सा वर्तते यया प्रत्याशयानुरागपरवशानुरत्याधीना पुनर्द्वितीयवारं पुण्डरीकस्य समागमस्तस्याकाङ्क्षिणी तद्वाञ्छाविधायिनी क्षणे क्षणे मरणेभ्योऽधिकानि दुःखानि कृच्छ्राण्येवमनुभवन्त्यनुभवविषयीकुर्वन्ती। अलज्जाकरमत्रपोत्पादकमननुशोच्यमविमर्श्यमनुपहसनीयं परेषामनुपहसनार्हमवाच्यमवचनीयमेवंविधं जीवितं धारयसि दधासि। मम पुनः सर्वतोऽभितो हता ध्वस्ताशा वाञ्छा यस्याः सैवंविधायाः सापि प्रत्याशापि नास्ति। तत्तस्माद्धेतोरहं पुनर्जन्मान्तरे

---

**टिप्प०—1 किरणकिरणेति ग्राम्यप्रियः पाठः। 'अनेकसंतानतानतुहिनकरकिरण०' इत्यादिरधोद्धृतः पाठः। अनेके संतानानाम् (विस्तृतीनाम्) तानाः (विस्ताराः) येषां तथाभूता ये तुहिनकर(चन्द्र)-किरणाः, अग्रे टीकायाम्। 2 'विधारणानुबन्धाम्' इत्युचितः पाठः। कृतो विधारणे देहपरित्यागे इत्यादिस्तस्यार्थः स्यात्।**

---

पाठा०—१ श्यम्. २ अनेकसंतानतुहिनकरकिरण; अनन्तसंतानतुहिनकरकिरण. ३ किसलयैः स्रस्तरैः; किसलयस्रस्तरैः. ४ मृणालिनी. ५ उद्विकासकमलकुमुदकुवलय; विकसितकुमुदकुवलय. ६ उज्ज्वलितचितानले ज्वालामालिनि. ७ अभिदधाना कृतमरणानुबन्धा. ८ विदारण. ९ अवच्छिद्य. १० अपसृत्य च. ११ मरणादधिकानि. १२ पुनर्जन्मान्तरे.

न्तरसमागमाय' इत्यभिधायोत्पद्यमानपुलककेसरोद्भासिनी, असमसाध्वसानिलाहता, उत्कम्पोत्तरङ्ग्यमाणा, आनन्दबाष्पवेगोर्मितरला, संगलत्स्वेदमकरन्दबिन्दुनिस्यन्दिनी, मुकुलायमाननयनकुमुदा कुमुदिनीव चन्द्रापीडचन्द्रास्तमयविधुरा, तदवस्थेऽपि हृदयवल्लभे समागमसुखमिवानुभवन्ती सरभसमुपरि पर्यस्तचिकुरहस्तोद्वान्तकुसुमनिवहेन मूर्ध्नार्चयित्वा चन्द्रापीडचरणौ स्रवत्स्वेदामृतार्द्राभ्यां [२]कराभ्यामुत्क्षिप्याङ्केन धृतवती ।

अथ तत्करस्पर्शेनो[३]च्छ्वसत इव चन्द्रापीडदेहाज्झटिति तुहिनमयमिव स[४]कलमेव तं प्रदेशं [५]कुर्वाणमव्यक्तरूपं किमपि चन्द्रधवलं ज्योतिरिवो[६]ज्जगाम । अनन्तरं चा[७]न्तरिक्षे क्षरन्तीवामृतमशरीरिणी वागश्रूयत—'वत्से महाश्वेते, पुनरपि त्वं मयैव स[८]माश्वासितव्या वर्तसे । तत्ते पु[९]ण्डरीकशरीरं मल्लोके मत्तेजसाप्याय्यमानमविनाशि भूयस्त्वत्स[१०]मागमनाय तिष्ठत्येव । इदमपरं मत्तेजोमयं स्वत एवाविनाशि विशेषतोऽमुना कादम्बरीकरस्पर्शेनाप्याय्यमानं [११]चन्द्रापीडशरीरं शापदोषाद्विमुक्तम[१२]प्यन्तरात्मना कृतशरीरसंक्रान्तेर्योगिन इव शरीरमत्रैव भवत्योः

---

भवान्तरे समागमाय मेलापकाय प्रियसखीमामन्त्रये निमन्त्रये । इत्यभिधायेत्युक्त्वोत्पद्यमानः संजायमानो यः पुलको रोमाञ्चः स एव केसरं कुङ्कुमं तेनोद्भासिनी शोभमानाऽसमं विषमं यत्साध्वसं भयं तस्मादनिलः श्वासप्रवृद्धिस्तेनाहता ताडिता, उत्कम्पेनोत्तरङ्ग्यमाणोच्चैर्नीयमाना, आनन्दबाष्पवेगोर्मिभिर्हर्षाश्रुरंहस्तरंगैस्तरला चञ्चला, सम्यक्प्रकारेण गलन्स्वेदो घर्मजलं स एव मकरन्दबिन्दुस्तस्य निस्यन्दिनी क्षरणशीला मुकुलायमाने संकोचं प्राप्यमाणे नयने एव कुमुदे यस्याः सा कुमुदिनीव कैरविणीव चन्द्रापी[२]ड इव चन्द्रः शशाङ्कस्तस्यास्तमयोऽस्तमनं तेन विधुरा दुःखिता । 'विधुरं प्रत्यभावे स्यात्कष्टविश्लेषयोरपि' इति विश्वः । तदवस्थेऽपि तादृशरूपेपि हृदयवल्लभे प्राणप्रिये समागमसुखमिव मेलापकसातमिवानुभवन्ती साक्षात्कुर्वन्ती सरभसमुपरि पर्यस्तो निपतितो यश्चिकुरहस्तः केशकलापस्तस्मादुद्वान्तः कुसुमानां पुष्पाणां निवहो येनैवंविधेन मूर्ध्ना शिरसा चन्द्रापीडस्य चरणौ पादावर्चयित्वा पूजां कृत्वा स्रवन्क्षरन्यः स्वेद एवामृतद्रवस्तेनार्द्राभ्यामुन्नाभ्यां कराभ्यामुत्क्षिप्योत्थाप्याङ्केन क्रोडेन धृतवती धारितवती । अथेति चरणन्यसनानन्तरं तस्याः कादम्बर्याः करस्पर्शेन पाणिसंश्लेषेणोच्छ्वसत इव उज्जीवत इव चन्द्रापीडदेहाज्झटिति शीघ्रं सकलमेव समग्रमेव तं प्रदेशं तुहिनमयमिव हिमनिर्मितमिव कुर्वाणं विदधानमव्यक्तरूपमप्रकटस्वरूपं चन्द्रवद्धवलं शुभ्रं ज्योतिस्तेज इवोज्जगाम प्रादुर्बभूव ।

अनन्तरं तदनन्तरं चान्तरिक्ष आकाशेऽमृतं पीयूषं क्षरन्तीव स्रवन्तीवाशरीरिणी वाग्वाण्यश्रूयताकर्ण्यत । एतदेव स्पष्टीकुर्वन्नाह—**वत्से इति** । हे वत्से हे पुत्रि महाश्वेते, पुनरपि त्वं मयैव समाश्वासितव्याश्वासनं कारितव्या वर्तसे । तत्ते तव पुण्डरीकशरीरं मल्लोके मत्तेजसा मद्धाम्नाप्याय्यमानं शीतलीक्रियमाणमत एवाविनाश्यविनश्वरं भूयः पुनरपि त्वया सह समागमो मेलापस्तस्मै तिष्ठत्येव । इदमपरमन्यन्मत्तेजसा निष्पन्नं मत्तेजोमयमतः स्वत एव स्वभावत एवाविनाश्यविनश्वरं विशेषतः कादम्बरीकरस्पर्शेनाप्याय्यमानं शीतलीक्रियमाणं चन्द्रापीडशरीरं शापदोषाद्विमुक्तमपि रहितमप्यन्तरात्म[३]ना मध्यवर्तिना जीवेन कृता विहिता शरीरे देहान्तरे संक्रान्तिः संक्रमणं तस्य योगिन इव आपरमाणुवेदिनो योगिनस्तस्येव भवत्योर्महाश्वेताकादम्बर्योः प्रत्ययार्थं विश्वासार्थमाशा-

---

टिप्प०—1 'कुमुदिनीव' इति उपमानुरोधेन 'नयने कुमुदे इव' इत्युपमितसमास एवोचितः । 2 'चन्द्रापीडश्चन्द्र इव' इत्युचितम् । 3 आत्मना कृता शरीरे ( अपरस्य पुरुषस्य शरीरे ) संक्रान्तिः प्रवेशो येन तस्य, अन्यस्मिन् शरीरे कृतप्रवेशस्य योगिनः पूर्वशरीरं यथा तिष्ठति तथेत्याशयः ।

---

पाठा०—१ उत्पुद्यमान. २ हस्ताभ्याम्. ३ समुच्छ्वसित. ४ सकलमपि. ५ कुर्वत. ६ एव. ७ अन्तरिक्षे. ८ समाश्वासिता. ९ पुण्डरीक. १० समागमाय. ११ चन्द्रापीडस्य शरीरम्. १२ आत्मना.

प्रत्ययार्थमा शापक्षयादास्ताम्। नैतदग्निना संस्कर्तव्यम्। नोदके प्रक्षेप्तव्यम्। नापि वा समुत्स्रष्टव्यम्। यत्नतः परिपालनीयमा समागमप्राप्तेः' इति। तां तु श्रुत्वा किमेतदिति विस्मिताक्षिप्तहृदयः सर्व एव परिजनो गगनतलनिवेशितनिर्निमेषलोचनो लिखित इव पत्रलेखावर्जमतिष्ठत्। पत्रलेखा तु तेन तस्य ज्योतिषस्तुषारशीतलेनाह्लादहेतुना स्पर्शेन लब्धसंज्ञोत्थायाऽऽविष्टेव वेगाद्धावित्वा परिबद्धकहस्तादाच्छिद्येन्द्रायुधम् 'अस्मद्विधानां यथा तथा भवतु, त्वं पुनरेवमेकाकिनि विना वाहनं दूरं प्रस्थिते देवे क्षणमप्यवस्थातुं न शोभसे' इत्यभिदधाना तेनैवेन्द्रायुधेन सहात्मानमच्छोदसरस्यक्षिपत्।

अथ तयोर्निमज्जनसमयानन्तरमेव तस्मात्सरसः सलिलाच्छैवलोत्करमिव शिरसि लग्नं गलज्जलबिन्दुसंदोहमयथालम्बिदीर्घशिखं मुखोपरि परस्परासक्तैरसंस्कारमलिनतया चोपसूचितचिरोर्ध्वबन्धं जटाकलापमुद्वहन्, जलार्द्रदेहासक्तेन बिसतन्तुमयेनेव ब्रह्मसूत्रेणोद्भासमानः, म्लानारविन्दनीलपलाशपृष्ठपाण्डुरेण जीर्णमन्दारवल्कलेनाबद्धपरिकरः, करेणानना-

---

पक्षयाच्छापक्षयं मर्यादीकृत्यात्रैवास्मिन्नेव स्थल आस्तां तिष्ठतु। एतच्छरीरमग्निना वह्निना न संस्कर्तव्यं न संस्कारः कार्यः, नोदके जले प्रक्षेप्तव्यं प्रक्षेपः कार्यः, नापि वा समुत्स्रष्टव्यं त्यजनीयम्। आसमागमप्राप्तेर्यावत्संगमं यत्नतः परिपालनीयम्। महोद्यमेन रक्षणीयमित्यर्थः। तां तु पूर्वोक्तां वाणीं श्रुत्वाकर्ण्य किमेतदिति विस्मितेन विस्मयेनाक्षिप्तहृदयश्चमत्कृतचेताः सर्व एव परिजनो गगनतले निवेशिते स्थापिते निर्निमेषे निमेषोन्मेषरहिते लोचने नेत्रे येन सः। अत एव लिखित इव चित्रित इव पत्रलेखां वर्जयित्वातिष्ठत्। पत्रलेखा तु तेन तस्य ज्योतिषस्तुषारवद्धिमवच्छीतलेनाह्लादहेतुना प्रमोदकारकेण स्पर्शेन संश्लेषेण लब्धसंज्ञा प्राप्तचैतन्योत्थायोत्थानं कृत्वाविष्टेव भूतग्रस्तेव वेगाज्जवाद्धावित्वा धावनं कृत्वा परिबद्धकहस्तादश्वपालककरादिन्द्रायुधमाच्छिद्य बलाद्गृहीत्वाप्यस्मद्विधानामस्मत्सदृशानां यथा तथा भवतु। त्वं पुनरेकाकिनि विना वाहनं यानं विना दूरं प्रस्थिते चलिते देवे क्षणमपि समयमात्रमप्यवस्थातुमवस्थितिं कर्तुं न शोभसे न शोभां प्राप्नोषीत्यभिदधानेति ब्रुवाणा तेनैवेन्द्रायुधेन सहात्मानं स्वमच्छोदसरस्येवाक्षिपच्चिक्षेप।

**अथेति।** अच्छोदसरसि पातानन्तरं तयोः पत्रलेखातुरङ्गमयोर्निमज्जनसमयो ब्रुडनकालस्तस्मादनन्तरं पश्चादेव तस्मात्सरसस्तटाकस्य सलिलादम्भसस्तापसकुमारको मुनिबालकः सहसैवैकपद एवोदतिष्ठदुत्थितो बभूव। किं कुर्वन्। जटाकलापं सटासमूहमुद्वहन्धारयन्। कृष्णत्वसाम्यादुत्प्रेक्षते—शिरसि मस्तके लग्नं विलग्नं शैवलोत्करमिव शैवालसमूहमिव गलत्क्षरज्जलबिन्दूनां संदोहो यस्मिन्स तथा। न यथास्थानमालम्बत इत्येवंशीलं तत्तथा, दीर्घायता शिखा चूडा यस्य तत्तथा। मुखस्य वदनस्योपर्युपरिष्टात्परमन्योन्यमासक्तेः संश्लेषादसंस्कारेण केशमार्जनाभावेन मलिनतया चोपसूचितो ज्ञापितश्चिरकालीन ऊर्ध्वबन्धो यस्य तत्तथा। पुनः कीदृशः। ब्रह्मसूत्रेण यज्ञोपवीतेनोद्भासमान उत्प्राबल्येन शोभमानः। कीदृशेन ब्रह्मसूत्रेण। जलेनाम्भसार्द्र उन्नो देहः शरीरं तत्रासक्तेन संबद्धेन। अत एवोत्प्रेक्षते-बिसतन्तुमयेनेव तन्तुलतन्तुनिष्पन्नेव। पुनः कीदृक्। जीर्णं चिरकालीनं यन्मन्दारस्य वल्कलं चोचं तेनाबद्धः परिकरो येन सः। कीदृशेन। म्लानान्यरविन्दानि

टिप्प०—1 विना वाहनम्, एकाकिनि देवे दूरं प्रस्थिते सति, इत्यन्वयः। 2 अम्लानमित्येवोचितम्।

पाठ०—१ संप्रत्ययार्थम्. २ संस्कार्यम्. ३ उदके वा क्षेप्तव्यमुत्स्रष्टव्यं प्रयत्नतः. ४ विस्मय. ५ एव गगन. ६ हृदयः. ७ परिवर्धक. ८ अस्मिन्विध्यतां यथा ते तथा त्वं पुनरप्येवमेकाकिनि देवे विना वाहनं दूरं प्रस्थिते क्षणमप्यवस्थातुं न शोभस इत्यभिदधाना तेनैव; अस्मद्विधा तु यथा त्वं पुनरेवमेकाकी विना वाहनं दूरं प्रस्थिते देवे क्षणमपि न तिष्ठन्शोभस इत्यभिदधाने तेनैव. ९ सरःसलिलात्. १० अयथातथालम्बि. ११ उद्भासमानः. १२ अम्लान. १३ अरविन्दिनीपलाश. १४ पाण्डुना.

वरोधिनीर्जटाः समुत्सारयन्, अश्रुजलच्छलेनाच्छोदसरःसलिलमिवान्तःप्रविष्टमि[1]वाताम्राभ्या-
मुद्वहंल्लोचनाभ्याम्, उद्विग्नाकृतिस्तापसकुमारकः सहसैवोदतिष्ठत् । उत्थाय च दूरत एवोद्दा-
मबाष्पजलनिरोधपर्याकुलयाप्य[2]लब्धलक्ष्यया दृष्ट्या विलोकयन्तीं महाश्वेतामुपसृत्य शोकगद्ग-
दमवादीत्–'गन्धर्वराजपुत्रि, ज[3]न्मान्तरादिवागतोऽपि प्रत्यभिज्ञायतेऽयं जनो न वा' इति ।

सा त्वेवं पृष्टा शोकानन्दमध्यवर्तिनी स[4]संभ्रममुत्थाय कृतपा[5]दवन्दना प्रत्यवादीत्—
'भगवन्कपिञ्जल, अहमेवंविधाऽपुण्यवती या [6]भवन्तमपि न प्रत्यभिजानामि ? [7]अथ युक्तैवे-
दृशी मय्यनात्मज्ञायां संभावना याहमेका[8]न्तत [9]एव व्यामोहहता स्वर्गं गतेऽपि देवे पुण्ड-
रीके जीवामि । तत्कथय केनासावुत्क्षिप्य नीतः ? किमर्थं वा नीतः ? किं वास्य वृत्तम् ?
क्व वर्तते ? किं वा तवोपजातम् ? येनैतावतापि कालेन [10]वार्तापि न दत्ता । [11]कुतो वा त्वमे-
काकी देवेन विना [12]समागतः ?

स त्वेवं पृष्टो महाश्वेतया विस्मयोन्मुखेन कादम्बरीपरिजनेन चन्द्रापीडानुगामिना च
राजपुत्रलोकेनोपर्युपरि पातिना वीक्ष्यमाणः प्रत्यवादीत्—"गन्धर्वराजपुत्रि, श्रूयताम् ।

---

कमलानि तेषां नीलपलाशानि पत्राणि तेषां पृष्ठं पृष्ठभागस्तद्वत्पाण्डुरेण श्वेतेन । किं कुर्वन् । करेण हस्तेन
समुत्सारयन्दूरीकुर्वन् । काः । जटाः । जटाः कीदृशीः । आननमवरुन्धन्तीत्येवंशीला आननावरोधिन्यस्ताः ।
अश्रुजलच्छलेन नेत्राम्बुमिषेणाच्छोदसरसः सलिलं पानीयमन्तःप्रविष्टमिवाताम्राभ्यामीषद्रक्ताभ्यां लोचनाभ्यां
नेत्राभ्यामुद्वहन्धारयन् । उद्विग्नोद्वेगं प्राप्ता आकृतिराकारो यस्य स तथा । अम्भसस्तापसकुमारक उदतिष्ठदि-
त्यन्वयस्तु प्रागेवोक्तः । उत्थाय चोत्थानं कृत्वा च दूरत एवोद्दाममत्युग्रं यद्बाष्पजलमश्रुपानीयं तस्य निरोधः
प्रतिबन्धस्तेन पर्याकुलयापि व्याकुलयाप्य[1]लब्धमप्राप्तं लक्ष्यं वेध्यं ययैवंविधया दृष्ट्या दृशा विलोकयन्तीं
पश्यन्तीं महाश्वेतामुपसृत्य समीपे गत्वा शोकेन गद्गदमव्यक्ताक्षरं यथा स्यात्तथावादीदब्रवीत् । हे गन्धर्वरा-
जपुत्रि, जन्मान्तरादागतोऽप्ययं जनस्त्वया प्रत्यभिज्ञायत उपलक्ष्यते न वेति ।

सा तु महाश्वेता त्वेवं पृष्टा प्रश्नविषयीकृता शोकश्चानन्दश्च शोकानन्दौ तयोर्मध्यवर्तिनी ससंभ्रमं सादरं यथा
स्यात्तथोत्थाय कृतं पादवन्दनं चरणनमस्कृतिर्यया सैवंविधा प्रत्यवादीत्प्रत्यब्रवीत् । हे भगवन्कपिञ्जल, अहमे-
वंविधाऽपुण्यवती या भवन्तमपि त्वामपि न प्रत्यभिजानामि नोपलक्षयामि । अथ मय्यनात्मज्ञायामात्मज्ञान-
वर्जितायामीदृशी संभावना युक्तैव न्याय्यैव या महाश्वेताहमेकान्तत एव व्यामोहोऽज्ञानं तेन हता पीडिता स्वर्गं
गतेऽपि देवलोकं प्राप्तेऽपि देवे पूज्ये पुण्डरीके जीवामि प्राणिमि । तदिति हेत्वर्थे । कथय प्रतिपादय केन
पुंसासौ पुण्डरीक उत्क्षिप्योत्थाप्य नीतः । किमर्थं वा किंप्रयोजनं वा नीतः । किं वास्य पुण्डरीकस्य वृत्तं चरि-
त्रम् । क्व कुत्र वर्तते । तव भवतः किं वोपजातं किं जज्ञे, येनैतावतापि कालेनानेहसा वार्तापि किंवदन्त्यपि
न दत्ता । कुतो वा कस्मात्प्रदेशाद्वा त्वमेकाक्यसहायो देवेन पुण्डरीकेण विना समागतोऽत्रायातः ।

स तु कपिञ्जलो महाश्वेतयैवं पृष्टो नियोजित उपरि चोपरि चोपर्युपरि पतितुं शीलं यस्य स तेनेत्युभयोर्वि-
शेषणम् । विस्मयेनाश्चर्येणोदूर्ध्वं मुखमाननं यस्यैवंभूतेन कादम्बरीपरिजनेन गन्धर्वपुत्रीपरिच्छदेन चन्द्रापीड-
मनुगच्छतीत्येवंशीलेन राजपुत्रलोकेन च वीक्ष्यमाणो विलोक्यमानः प्रत्यवादीत्प्रत्यब्रवीत् । हे गन्धर्वराजपुत्रि,

---

टिप्प०—1 लुप्तबुद्धिष्टीकाकारः । पर्याकुलत्वे अलब्धलक्ष्यत्वं स्वत एवेति, 'अपि'पदस्य न स्वार-
स्यम् । तस्मात् 'आबद्धलक्ष्यया ( लक्ष्यं प्रति व्यापारितया )' इत्येव पाठः ।

---

पाठा०—१ आताम्रायताभ्याम्. २ बद्धलक्ष्यया. ३ जन्मान्तरागतः; जन्मान्तरगतः. ४ ससंभ्रमाकुलम्.
५ प्रमाणा. ६ त्वयाप्यात्मनः कारणादेवं संभाविता. ७ अथवा. ८ एकान्ते. ९ इव. १० वार्तामपि न दत्तवानसि.
११ कुतोऽपि. १२ एवागतोऽसीति.

अहं हि तथा कृतार्तप्रलापामपि त्वामेकाकिनीं समुत्सृज्य वयस्यस्नेहादाबद्धपरिकरः 'क मे प्रियसुहृदमपहृत्य गच्छसि' इत्यभिधाय तं पुरुषमनुबध्नञ्जवेनोदपतम् । स तु मे प्रतिवचनमदत्त्वैव गीर्वाणवर्त्मनि विस्मयोत्फुल्लनयनैरवलोक्यमानो वैमानिकैः, अवगुण्ठितमुखीभिरवमुच्यमानगमनमार्गो दि[1]व्याङ्गनाभिः, अभिसारिकाभिरालोलतारकेक्षणाभिरितस्ततः प्रणम्यमानस्तारकाभिः, अम्बरसरःकुमुदाकरमतिक्रम्य तारागणं च[2]न्द्रिकाभिरामसकललोकं चन्द्रलोकमगच्छत् । तत्र च महोदयाख्यायां सभायामिन्दुकान्तमये महति पर्यङ्के तत्पुण्डरीकशरीरं स्थापयित्वा मामवादीत्—'कपिञ्जल, जानीहि मां चन्द्रमसम् । अहं ख[3]लूदयं गतो जगदनुग्रहाय स्वव्यापारम[4]नुतिष्ठन् अनेन ते प्रियवयस्येन कामापराधाज्जीवितमुत्सृजता निरपराधः संशप्तः 'दुरात्मन्निन्दुहतक, यथाहं त्वया करैः संता[5]पित उत्पन्नानुरागः सन्नसंप्राप्तहृदयवल्लभासमागमसुखः प्राणैर्वियोजितस्तथा त्वमपि कर्मभूमिभूतेऽस्मिन्भारते वर्षे जन्मनि जन्म[6]-

---

श्रूयतामाकर्ण्यताम् । अहं हि तथा तेन प्रकारेण कृतो विहित आर्तो दीनः प्रलापः प्रियाश्रितकाल्पनिकव्याहारो यया सा तामपि त्वामेकाकिनीमसहायां समुत्सृज्य त्यक्त्वा वयस्यस्नेहान्मित्रप्रीतेराबद्धः परिकरः कटिप्रदेशो येन सः । **केति** । कुत्र मे मम प्रियसुहृदं वल्लभवयस्यमिममपहृत्यापहरणं कृत्वा गच्छसि प्रयासीत्यभिधायेत्युक्त्वा तं पुरुषमनुबध्नन्ननुधावञ्जवेन वेगेनोदपतमूर्ध्वमगच्छम् । स तु पुमान्मे मम प्रतिवचनं प्रत्युत्तरमदत्त्वैवाकथयित्वैव गीर्वाणवर्त्मन्याकाशे विस्मयेनाश्चर्येणोत्फुल्लानि विकसितानि नयनानि नेत्राणि येषां तैर्वैमानिकैर्विमानवासिभिः सुरैरवलोक्यमानो वीक्ष्यमाणोऽवगुण्ठितान्याच्छादितानि मुखानि यासां ताभिर्दिव्याङ्गनाभिरभिसारिकाभिर्याः स्वयमेव प्रियमभियान्ति ता अभिसारिकास्ताभिरवमुच्यमानस्त्यज्यमानो गमनमार्गो यस्य सः । आलोलाश्चञ्चलास्तारकाः कनीनिका येष्वेतादृशे ईक्षणे यासां ताभि[1]स्तारकाभिस्ताराभिरितस्ततः प्रणम्यमानो नमस्क्रियमाणः । अम्बरमेव सरस्तस्मिन्कुमुदाकरमिव । कुमुदसमूहमिवेत्यर्थः । एवंविधं तारागणं तारकासमूहमतिक्रम्योल्लङ्घ्य चन्द्रिका ज्योत्स्ना तयाभिरामो रमणीयः सकललोकः समग्रजनो यस्मिन्नेतादृशं चन्द्रलोकमगच्छदगमत् । **तत्र चेति** । चन्द्रलोके महोदया इत्याख्या यस्याः सा तथा तस्यां सभायां संसदीन्दुकान्तस्तेन निष्पन्न इन्दुकान्तमये महत्यायते पर्यङ्के पल्यङ्के तत्पुण्डरीकशरीरं स्थापयित्वा न्यस्य मामवादीदवोचत् । हे कपिञ्जल, चन्द्रमसं ग्रहं मां जानीह्यवबुद्ध्यस्व । स्वव्यापारं परिभ्रमणलक्षणमनुतिष्ठन्कुर्वञ्जगतोऽनुग्रहायाभ्युपपत्तयेऽहमुदयं गतः । अनेन ते तव प्रियवयस्येन कामापराधात्कन्दर्पागसो जीवितमुत्सृजता त्यजताहं निरपराधोऽपि निरागाः संशप्तः शापविषयीकृतः । तदेव दर्शयन्नाह—**दुरात्मन्निति** । हे दुरात्मन् हे दुष्टात्मन्, हे इन्दुहतक, यथाहं त्वया करैः किरणैः संतापितः पीडितः उत्पन्नः संजातोऽनुरागोऽनुरतिर्यस्यैवंभूतः सन् असंप्राप्तमलब्धं हृदयवल्ल[2]भस्य समागमसुखं येन सः, प्राणैरसुभिर्वियोजितः पृथक्कृतः, तथा त्वमपि भवानपि कर्मभूमितां भूते प्राप्ते 'यत्रैव क्रियते कर्म कर्मभूमिरतो मता । यत्रैव भुज्यते तद्धि भोगभूमिस्तु सापरा ॥' इत्युक्तः । अकर्मभूमिः कर्मभूमिः संपद्यत इति कर्मभूमीभूत इति वा । अस्मिन्भारते वर्षे भरतक्षेत्रे जन्मनि जन्मन्येवोत्पन्नानुरागः

---

**टिप्प०**—1 तारकाणामपि तारकाः, ता अपि आलोलाः, किं कारणमालोलत्वे ? नेदं बोद्धुमपि प्रभवति टीकाकारः । अस्तु. 'दिव्याङ्गनाभि'रित्यस्याग्रे-'त्यज्यमानोऽभिसारिकाभिरालोलतारकेक्षणाभिः', इति पाठः । मादाक्षीदिति भयेन विलोलतारके ईक्षणे यासामीदृशीभिः अभिसारिकाभिः परिह्रियमाण इति तदर्थः । 2 वल्लभाया इत्युचितम्, मूलं विस्मृतवान् हन्त ।

---

**पाठा०**—१ दिव्याङ्गनाभिसारिकाभिः. २ चन्द्राभिराम. ३ उदयगतः. ४ अनुकुर्वन्. ५ संताप्य. ६ प्राप्त.

न्येवोत्पन्नानुरागोऽप्राप्तसमागमसुखस्तीव्रतरां[1] हृदयवेदनामनुभूय जीवितमुत्स्रक्ष्यसि'[2] इति । अहं तु तेनास्य शापहुतभुजा झटिति[3] ज्वलित[4] इव निरगाम्[5] । किमनेनात्मदोषानुबन्धेन निर्विवेकबुद्धिना शप्तोऽस्मीत्युत्पन्नकोपः 'त्वमपि मत्तुल्यदुःखसुख[6] एव भविष्यसि' इति प्रतिशापमस्मै प्रायच्छम् । अपगतामर्षश्च विवेकमागतया बुद्ध्या विमृशन्महाश्वेताव्यतिकरमस्याधिगतवानस्मि । वत्सा तु महाश्वेता मन्मयूखसंभवादप्सरसः कुलाल्लब्धजन्मनि गौर्यामुत्पन्ना । तया[7] चायं भर्ता स्वयं वृतः । अनेन च[8] स्वयंकृतादेवात्मदोषान्मया[9] सह मर्त्यलोके वारद्वयमवश्यमुत्पत्तव्यम् । अन्यथा जन्मनि जन्मन्येषा[10] वीप्सैव न चरितार्था भवति । तद्यावदयं[11] शापदोषादपैति[12] तावदस्यात्मना विरहितस्य शरीरस्य मा विनाशोऽभूदिति मयेदमुत्क्षिप्य समानीतम् । वत्सा च महाश्वेता समाश्वासिता । तदिदमत्र मत्तेजसाप्याय्यमानमा[13] शापक्षयात्स्थितम् । अधुना त्वं गत्वैनं[14] वृत्तान्तं श्वेतकेतवे निवेदय । महाप्रभावोऽसौ कदाचिदत्र प्रतिक्रियां काञ्चिदपि करोति' इत्युक्त्वा मां व्यसर्जयत् ।

---

संजातानुरतिरप्राप्तहृदयवल्लभासमागमसुखोऽलब्धप्राणप्रियामेलापकसौख्यस्तीव्रतरां वेदनामतिकठिनामसातामनुभूय जीवितं प्राणितमुत्स्रक्ष्यसि त्यक्ष्यसीति । अहं त्वस्य पुण्डरीकस्य तेन शापहुतभुजा शापवह्निना झटिति शीघ्रं ज्वलित इव दग्ध इव निरगां[1] निरगच्छम् । किमनेन पुण्डरीकेण । आत्मदोषस्यानुबन्धः संबन्धो यस्मिन्स तेन निर्विवेकबुद्धिना तत्त्वातत्त्वविचारवियुक्तमतिना शप्तोऽहमस्मीति हेतोरुत्पन्नः प्रादुर्भूतः कोपो यस्य सोऽहं त्वमपि भवानपि मत्तुल्यदुःखसुख एव मत्सदृशकृच्छ्रसौख्य एव भविष्यसीति प्रतिशापमस्मै पुण्डरीकाय प्रायच्छमदासिषम् । अपगतो दूरीभूतोऽमर्षः क्रोधो यस्मात्स तथा । एवंविधश्चाहं विवेकः[2] पृथगात्मता तमागतया प्राप्तया बुद्ध्या प्रतिभया विमृशन्विचारयन्नस्य पुण्डरीकस्य महाश्वेताव्यतिकरं गान्धर्वपुत्रीवृत्तान्तमधिगतवाञ्ज्ञातवानस्मि । वत्सा तु महाश्वेता मन्मयूखसंभवान्मदीयकान्तिसमुत्पन्नादप्सरसः स्वर्गिवध्वाः कुलादभिजनाल्लब्धजन्मनि प्राप्तोद्भवायां गौर्यामुत्पन्ना संजाता । 'सजातीयगणे गोत्रे देहेऽपि कथितं कुलम्' इति विश्वः । तया च महाश्वेतया चायं भर्ता पुण्डरीकः स्वयं वृतः । अनेन च पुण्डरीकेण च स्वयंकृतादेवात्मदोषादेव मया सह चन्द्रमसा सार्धं वारद्वयं मर्त्यलोके मनुष्यक्षेत्रेऽवश्यमुत्पत्तव्यम् । अन्यथोक्तविपर्यये जन्मनि जन्मन्येषा वीप्सैव न चरितार्था कृतार्था भवति । तद्यावदयं पुण्डरीकः शापदोषादपैति दूरीभवति तावत्कालमस्य पुण्डरीकस्यात्मना जीवेन विरहितस्य शरीरस्य मा विनाशोऽभूदिति हेतोर्मया चन्द्रमसेदमुत्क्षिप्योत्पाट्य समानीतम् । वत्सा च महाश्वेता समाश्वासिता । अत्र तल्पे तदिदं शरीरं मत्तेजसा मद्धाम्नाप्याय्यमानं शीतलीक्रियमाणमा शापक्षयाच्छापक्षयपर्यन्तं स्थितम् । अधुना त्वं गत्वैनं वृत्तान्तं श्वेतकेतवे मुनीश्वराय निवेदय । असौ महाप्रभावः कदाचिदत्र कांचित्प्रतिक्रियामपि प्रतीकारमपि करोति । इत्युक्त्वा मां कपिञ्जलं व्यसर्जयद्गमनाज्ञां दत्तवान् ।

---

**टिप्प०—**1 उदयं गतश्चन्द्रः कस्मिन् गर्ते पतितोऽभूद् योऽधुना 'निरगात्' ? सर्वेयं लीला टीकाकारचूडामणेः । 'निरागाः' इति पाठः । निरागाः ( निरपराधः ) अहं शापाग्निना झटिति उद्दीपित इवेत्युत्पन्नकोपः प्रतिशापं प्रायच्छमित्यर्थः । 2 मोहाद्विरुद्धो ( अर्थात् तात्त्विकः ) विचार एव विवेकः । टीकाकारपुंगवस्तु–देहात्मनोः पृथक्तया परिज्ञानं वैदान्तिकविवेकं सर्वत्रोद्घोषयतीति महाभाग्यं ग्रन्थस्यास्य ।

---

पाठ०—१ तीव्रतमाम्. २ उत्स्रजिष्यति. ३ झगिति; धगिति. ४ समुद्दीपित; उद्दीपित. ५ निरगात्. ६ सुखदुःख. ७ अनया. ८ च संप्रति. ९ शापदोषात्. १० जन्मनीति. ११ तत्तथा; तद्यावत्. १२ शापदोषो व्यपैति. १३ आप्यायितम्. १४ वृत्तान्तमिमम्.

अहं तु विना[1] वयस्येन शोकावेगान्धो[2] गीर्वाणवर्त्मनि[3] धावन्नन्यतममतिक्रोधनं वैमानिकमलङ्घयम् । स तु मां दहन्निव रोषहुतभुजा भ्रूकुटीविकरालेन चक्षुषा निरीक्ष्याब्रवीत्—'दुरात्मन्, मिथ्यातपोबलगर्वित, यदेवमतिविस्तीर्णे गगनमार्गे त्वयाहमुद्दामप्रचारिणा तुरंगमेणेवोपलङ्घितस्[4]तस्मात्तुरंगम एव भूत्वा मर्त्यलोकेऽवतर' इति[5] । अहं तु तमुद्बाष्पपक्ष्मा कृताञ्जलिरवदम्—'भगवन्, वयस्यशोकान्धेन त्वं मयोल्लङ्घितो नावज्ञया[6] । तत्प्रसीद । उपसंहर शापमाशु त्वमिमम्' इति[7] । स तु मां पुनरवादीत्—'यन्मयोक्तं[8] तन्नान्यथा भवितुमर्हति । तदेतत्ते करोमि । कियन्तमपि कालं यस्यैव वाहनतामुपयास्यसि[9] तस्यैवावसाने स्नात्वा विगतशापो भविष्यसि' इति ।

एवमुक्तस्तु पुनस्तं[10]महमवदम्—'भगवन्, यद्येवं ततो विज्ञापयामि । तेनापि मत्प्रियवयस्येन[11] पुण्डरीकेण चन्द्रमसा सह शापदोषान्मर्त्यलोक एवोत्पत्तव्यम् । तदेतावन्तमपि भगवान्प्रसादं करोतु मे दिव्येन चक्षुषावलोक्य, यथा तुरङ्गमत्वेऽपि मे तेनैव प्रियवयस्येन सहाऽवियोगेन कालो यायात्' इति । स त्वेवमुक्तो मुहूर्तमिव ध्यात्वा पुनर्मामवादीत्—'अनया

---

अहं तु वयस्येन मित्रेण विना शोकस्य शुच आवेगस्तेनान्धो गताक्षो गीर्वाणवर्त्मनि देवपथि धावंस्त्वरया गच्छन्नन्यतमं वैमानिकानां मध्येऽन्यमतिक्रोधनमत्यन्तकोपनं वैमानिकं देवमलङ्घयं व्यतिक्रमम् । स तु वैमानिको मां रोषहुतभुजा क्रोधवह्निना दहन्निव भस्मीकुर्वन्निव भृकुटिर्भ्रूकुटिस्तया विकरालेन विकृतेन । भीषणेनेति यावत् । चक्षुषा नेत्रेण निरीक्ष्यावलोक्याब्रवीदवोचत् । हे दुरात्मन् दुष्टात्मन्, मिथ्या वृथा तपोबलेन तपस्तेजसा गर्वित गर्वं प्राप्त, यदेवमतिविस्तीर्णेऽतिवितते गगनमार्गे व्योमपथि त्वया भवताहमुद्दामप्रचारिणोद्धतगमनशीलेन तुरंगमेणेवाश्वेनेवोपलङ्घित उल्लङ्घितस्तस्मात्त्वं मर्त्यलोके तुरंगम एव ययुरेव[1] भूत्वा मर्त्यलोके मनुष्यभूमाववतरावतारं गृहाणेति । अहं तु तं वैमानिकमुदूर्ध्वं बाष्पो यस्मिन्नेतादृशं पक्ष्म यस्य स तथा कृताञ्जलिः संयोजितपाणिरवदमब्रुवम् । हे भगवन्, वयस्यस्य मित्रस्य शोकः शुक् तेनान्धस्तेन मया त्वमुल्लङ्घितो नावज्ञयाऽज्ञातनया । तदिति हेत्वर्थे । प्रसीद प्रसन्नो भव । त्वमिमं शापमाशूपसंहर निवर्तय । स तु वैमानिकः पुनर्द्वितीयवारमवादीदब्रवीत् । यन्मयोक्तं कथितं तदन्यथा कथितादन्यद्भवितुं नार्हति । तत्तस्माद्धेतोरेतत्ते तव करोम्यनुतिष्ठामि । कियन्तमपि कालमनेहसं यस्यैव पुंसो वाहनतां युग्यतामुपयास्यस्युपगमिष्यसि तस्यैव पुंसोऽवसानेऽन्ते स्नात्वा स्नपनं कृत्वा विगतशापः शापनिर्मुक्तो भविष्यसि इति ।

एवमुक्तस्तु पुनस्तं वैमानिकमहमवदम्—हे भगवन्, यद्येवं ततो हेतोर्विज्ञापयामि विज्ञप्तिं करोमि । किं तदित्याह—**तेनेति** । तेनापि मत्प्रियवयस्येन पुण्डरीकेण चन्द्रमसा चन्द्रेण सह शापदोषान्मर्त्यलोक एवोत्पत्तव्यं जन्म ग्रहीतव्यम् । तत्तस्मात्कारणादेतावन्तमपीयन्मात्रमपि भगवान्मे मम प्रसादं करोतु दिव्येन चक्षुषा ज्ञानलोचनेनावलोक्य निरीक्ष्य यथा तुरंगमत्वेप्यश्वत्वेऽपि तेनैव प्रियवयस्येन सहावियोगेन संयुक्तेन कालोऽनेहा यायाद्गच्छेदिति । स त्वेवं पूर्वोक्तप्रकारेणोक्तः कथितो मुहूर्तमिव ध्यात्वा ध्यानं कृत्वा पुनर्मामवादीदभ्य-

---

**टिप्प०**—1 पुनः पुङ्गवत्वं प्रदर्श्यते । 'ययुरश्वोऽश्वमेधीयः' इति कोषादश्वमेधाश्व एव ययुः, न तु अश्वसामान्यम् ।

---

**पाठा०**—१ विनाकृतः. २ शोकावेशान्धः. ३ गीर्वाणवर्त्मना. ४ उल्लङ्घितः. ५ इति वोढव्यं त्वया. ६ अवज्ञायाः; अवज्ञानात्. ७ इमं शापमुपसंहरेति. ८ दत्त एव शापः संप्रति मया नान्यथा. ९ वाह्यताम्. १० तम्. ११ मे प्रिय.

स्नेहलतया ते मर्मार्द्रीकृतं[1] हृदयम्। तदालोकितं मया। उज्जयिन्यामपत्यहेतोस्तपस्यतस्तारापीडनाम्नो राज्ञः सनिदर्शनं चन्द्रमसा तनयत्वमुपगन्तव्यम्। वयस्येनापि ते पुण्डरीकेण तन्मन्त्रिण एव शुकनासनाम्नः। त्वमपि तस्य[2] महोपकारिणश्चन्द्रात्मनो राजपुत्रस्य वाहनतामुपयास्यसि' इति। अहं तु तद्वचनानन्तरमेवाधः[3] स्थिते महोदधौ न्यपतम्। तस्माच्च तुरङ्गीभूयैवोदतिष्ठम्। संज्ञा तु मे तुरंगमत्वेऽपि[4] न[5] व्यपगता। येनायं मयास्यैवार्थस्य कृते किंनरमिथुनानुसारी भूमिमेतामानीतो देवं[6]चन्द्रमसोऽवतारश्चन्द्रापीडः। योऽप्यसौ प्राक्तना[7]नुरागसंस्कारादभिलषन्नजानन्त्या त्वया शापाग्निना निर्दग्धः सोऽपि मे वयस्यपुण्डरीकस्यावतारः' इति।

एतच्छ्रुत्वा[8] "हा देव पुण्डरीक, जन्मान्तरेष्वविस्मृतमदनुराग, मत्प्रतिबद्धजीवित, मच्छरण, मन्मुखावलोकिन्, मन्मयसकलजीवलोक, लोका[9]न्तरगतस्यापि तेऽहमेव राक्षसी विनाशायोपजाता। दग्धप्रजापतेरियदेव मन्निर्माणे दीर्घजीवितप्रधाने च प्रयोजनं निष्पन्नं यत्पुनःपुनस्ते व्यापादनम्। स्वयं हत्वा च पापकारिणी कमु[10]पालभे? किं[11] ब्रवीमि[12], किमा[13]क्रन्दामि,

---

धात्। ते तवानया स्नेहलस्य भावः स्नेहलता तयानार्द्रमार्द्रं संपन्नमित्यार्द्रीकृतं मम हृदयं चेतः। तत्तस्मादालोकितं निरीक्षितं मया। उज्जयिन्यां विशालायामपत्यहेतोः संतानार्थं तपस्यतस्तपः कुर्वतस्तारापीडनाम्नो राज्ञः सनिदर्शनं सदृष्टान्तं[1] चन्द्रमसा चन्द्रेण तनयत्वं पुत्रत्वमुपगन्तव्यमुपयातव्यम्। ते तव वयस्येनापि पुण्डरीकेण तन्मन्त्रिण एव शुकनासनाम्नस्तनयत्वमुपगन्तव्यं प्राप्तव्यम्। त्वमपि भवानपि तस्य महोपकारिणो महोपकृतिकर्तुश्चन्द्र एवात्मा यस्यैवंभूतस्य राजपुत्रस्य राजसूनोर्वाहनतामुपयास्यस्युपगमिष्यसीति। अहं तद्वचनानन्तरमेव तद्भाषितादन्वधःस्थिते महोदधौ समुद्रे न्यपतं पतितवान्। तस्माच्च महोदधेस्तुरङ्गीभूयैवाश्वीभूयैवोदतिष्ठमुत्थितोऽभूवम्। तुरंगमत्वेऽपि मे मम संज्ञा नैव व्यपगता नैवापगता। येनायं मयास्यैवार्थस्य कृते किंनरमिथुनानुसारी एतामेतावतीं भूमिमानीतो देवं[2]चन्द्रमसोऽवतारश्चन्द्रापीडः। योऽप्यसौ वैशम्पायनः प्राक्तनः पूर्वभवसंबन्धी योऽनुरागोऽनुरतिस्तस्य संस्काराद्भावनारूपादभिलषन्वाञ्छन्नजानन्त्याज्ञायमानया त्वया शापाग्निना निर्दग्धो ज्वालितः सोऽपि मे मम वयस्यपुण्डरीकस्यावतारः।

इत्येतच्छ्रुत्वा निशम्य। हा खेदे। हे देव पुण्डरीक, जन्मा[3]न्तरेषु भवान्तरेष्वविस्मृतो विस्मृतिमप्राप्तो ममानुरागो यस्य तस्य संबोधनम्। मय्येव प्रतिबद्धं जीवितं प्राणितं यस्य तस्य संबोधनम्। मम शरणं यस्य संबोधनम्। मन्मुखमवलोकत इत्येवंशीलस्तस्य संबोधनम्। मन्मयो मद्व्याप्तः। मत्स्वरूप इति यावत्। सकलजीवलोको यस्य तस्य संबोधनम्। ते तव लोकान्तरगतस्यापि भवान्तरप्राप्तस्यापि विनाशाय मरणायाहमेव राक्षस्युपजाता प्रादुर्भूता। दग्धप्रजापतेर्भस्मीभूतविधातुर्मन्निर्माणे मज्जनने दीर्घजीवितप्रदाने च चिरंजीवित्ववितरणे चेयदेवैतावदेव प्रयोजनं कृत्यं निष्पन्नं संजातं यत्पुनःपुनस्ते व्यापादनं मारणम्। स्वयमात्मना हत्वा चाहं पापकारिणी कमुपालभे। कस्योपालम्भं ददामीत्यर्थः। किं ब्रवीमि किं वच्मि। किमाक्रन्दाम्याक्रन्दं करोमि।

---

**टिप्प०**—1 भगवन् कस्य दृष्टान्तः? अस्तु. सनिदर्शनम् निदर्शनेन अभिज्ञानेन (अयं चन्द्र एव, यतो हि चन्द्रापीडेति नामाऽस्याभिज्ञानम् इति) सहितम्, इत्यर्थः। 2 'देवस्य चन्द्रमसः' इति स्यात्। वस्तुतस्तु—'आनीतश्चन्द्रमसोवतारः' इत्येव पाठः। 3 बहुवचनक्षेपो निरर्थकः। 'जन्मान्तरेऽपि' इत्येव पाठः।

---

**पाठा०**—१ आर्द्रितम्. २ तस्यैव परमोपकारिणः. ३ अधःस्थितः. ४ तुरंगमत्वेन. ५ नैवोपयाता. ६ तदेव. ७ प्राक्तनादेव. ८ एतच्छ्रुत्वा महाश्वेता. ९ कथं लोकान्तर. १० किम्. ११ कम्. १२ ब्रवीमि कस्मै कथयामि. १३ कम्.

कमुपयामि[1] शरणम्, को वा करोतु मयि दयाम्, याचेऽहमात्मनैवाधुना[2]। 'देव, प्रसीद। कुरु दयाम्। देहि मे प्रतिवचनम्' इत्येतान्यक्षराण्युच्चारयन्त्यपि लज्जे। मन्ये च तवाप्येवमुत्पन्नं[3] मन्दभाग्यायां मयि वैराग्यं येनैवमपि विप्रलपन्त्यां[4] न प्रतिवचनं ददासि[5]। हा, हतास्म्यनेनैवात्मनो जीवितस्योपर्यनिर्वेदेन[6]" इत्युन्मुक्तार्तनादा सोरस्ताडमवनावात्मानमपातयत्[7]।

कपिञ्जलस्तु तथार्तकृतप्रलापां[8] तां सानुकम्पमवादीत्—'गन्धर्वराजपुत्रि, कस्तवात्र दोषो येनैवमनिन्दनीयमात्मानं निन्दापदैर्योजयसि। को नाम[9] वाधुना सुखपाके[10]ऽनुभवनीये दुःखस्यावसरः, येनैवात्मानं[11] शुचा व्यापादयसि। यदसह्यतरं[12] तत्त्वया[13] निर्व्यूढं हतहृदयस्यास्यैव[14] समागमप्रत्याशया। यथा च शापदोषादिदमुपगतं[15] भवत्योर्द्वयोरपि दुःखं तथा मया कथितमेव। चन्द्रमसोऽपि भारती भवतीभ्यां श्रुतैव। तदुन्मुच्यतामयमात्मनो वयस्यस्य चाश्रेयस्करः शोकानुबन्धः[16]। द्वयोरेव[17] श्रेयसे यदेव भवत्याङ्गीकृतं तदेवानुबध्यतां व्रतपरिग्रहोचितं

---

कं शरणं त्राणमुपयामि गच्छामि। मयि विषये दयां कृपां को वा करोतु विदधातु। अधुना सांप्रतमहमात्मनैव याचे प्रार्थये। हा देव, प्रसीद प्रसन्नो भव। दयां कृपां कुरु। मे मम प्रतिवचनं प्रत्युत्तरं देहि वितर। इत्येतान्यक्षराणि वर्णानुच्चारयन्त्यपि कथयन्त्यपि लज्जे त्रपे। मन्ये च जाने च मन्दभाग्यायां भाग्यरहितायां मयि वैराग्यं विरक्तत्वं तवाप्येवमुत्पन्नं संजातं येनैवं विप्रलपन्त्यामपि विलापं कुर्वन्त्यामपि प्रतिवचनं प्रत्युत्तरं न ददासि न प्रयच्छसि। हा इति खेदे। अहं हता व्यापादितास्मि। अनेनैवात्मनः स्वस्य जीवितस्य प्राणितस्योपर्यनिर्वेदेनाऽस्वावमानेनेत्युन्मुक्त आर्तनादः करुणस्वरो यया सा। 'निर्वेदः स्वावमाननम्' इति। सोरस्ताडं वक्षस्ताडनं यथा स्यात्तथावनौ पृथिव्यामात्मानमपातयत्पातितवती।

कपिञ्जलस्तु तथा तेन प्रकारेणार्तः करुणः कृतो विहितः प्रलापो यया सा तां सानुकम्पं सदयं यथा स्यात्तथावादीदवोचत्—हे गन्धर्वराजपुत्रि, कस्तव भवत्या अत्र दोषो दूषणम्, येनैवमनिन्दनीयमगर्हणीयमात्मानं स्वं निन्दापदैर्गर्हावाक्यैर्योजयसि संयुक्तं करोषि। नामेति कोमलामन्त्रणे। को वाधुनेदानीं सुखपाकेऽनुभवनीये सति सुखफलस्य साक्षात्कारे कर्तव्ये सति दुःखस्य कृच्छ्रस्यावसरः प्रस्तावः। येनैवं येन हेतुना शुचा कृत्वात्मानं व्यापादयसि शरीरात्पृथक्करोषि। यदसह्यतरं सोढुमशक्यं तत्त्वया निर्व्यूढमतिक्रान्तं हतं हृदयं यस्यैवंभूतस्यास्य पुण्डरीकस्य समागमो मेलापस्तस्य प्रत्याशया वाञ्छया। यथा च भवत्योर्द्वयोः शापदोषादिदं दुःखमसातमुपगतं प्राप्तं मया कथितमेव निवेदितमेव। चन्द्रमसोऽपि चन्द्रस्यापि भारती वाणी भवतीभ्यां श्रुतैवाकर्णितैव। तदयमात्मनो वयस्यस्य चाश्रेयस्करोऽकल्याणकृच्छोकानुबन्धः शोचनप्रबन्ध उन्मुच्यतां त्यज्यताम्। द्वयोरेव श्रेयसे शुभार्थं यदेव भवत्याङ्गीकृतं स्वीकृतं तदेव व्रतपरिग्रह उचितं योग्यं तपोऽनुबध्यतां

---

टिप्प०—1 विचित्रो बहुव्रीहिष्टीकाकारकृपा। 'तथा कृतार्तप्रलापाम्' इत्येव पाठः। 2 अत्र एवकारस्य किं प्रयोजनमिति टीकाकारस्य नावधानम्। 'येनैवमात्मानं शुचा व्यापादयसि' इत्येव पाठः। येनाऽवसरेण एवम् (अनेन प्रकारेण) आत्मानं व्यापादयसीति तदर्थः। 3 टीकाकारस्त्वेवमाह। किन्तु 'यदसह्यं तत्त्वया निर्व्यूढम्, दृढीकृतं च हृदयं समागमप्रत्याशया' इति पाठान्तरम्। यथेच्छमुपादीयतां विज्ञैः।

---

पाठा०—१ किम्. २ अपराद्धा. ३ उत्पन्नमेव. ४ विलपन्त्या. ५ मे ददासि. ६ अनिर्वेदना. ७ सोरस्ताडनम्. ८ तथा कृतार्त. ९ को वा. १० सुखमात्रके. ११ यदेवम्. १२ अलब्धयतरम्. १३ तु. १४ दृढीकृतहृदयस्य. १५ उपनतम्. १६ शोकानुबन्धावेगः. १७ अपि.

तपः। तपसो हि[1] सम्यक्कृतस्य नास्त्यसाध्यं नाम किंचित्। देव्या हि गौर्या[2] तपसः प्रभावाद-तिदुरासदं स्मरारेरपि यावदासादितं[3] देहार्धपदम्। एवं त्वमपि नचिरात्[4]तथैव मे वयस्यस्याङ्के निजतपःप्रभावात्पदमवाप्स्यसि' इति महाश्वेतां पर्यबोधयत्। उपशान्तमन्युवेगायां च महा-श्वेतायां विषण्णदीनमुखी कादम्बरी कपिञ्जलमप्राक्षीत्—'भगवन्[6]कपिञ्जल, पत्रलेखया त्वया चास्मिन्सरसि जलप्रवेशः कृतस्तत्किं तस्याः[7] पत्रलेखायाः संवृत्तमित्यावेदनेन प्रसादं करोतु भगवान्' इति। स तु प्रत्यवादीत्—'राजपुत्रि[8], सलिलपातानन्तरं न कश्चिदपि तद्वृत्तान्तो मया ज्ञातः। तदधुना क चन्द्रात्मकस्य चन्द्रापीडस्य, क्व[10] पुण्डरीकात्मनो[11] वैशम्पायनस्य जन्म, किं वास्याः पत्रलेखाया वृत्तमिति सर्वथैवास्य वृत्तान्तस्यावगमनाय[12] गतोऽहं प्रत्यक्ष-लोकत्रयस्य तातस्य श्वेतकेतोः पादमूलम्' इत्यभिदधान एव गगनमुदपतत्।

अथ गते तस्मिन्विस्मयान्तरितशोकवृत्तान्ता[13] चन्द्रापीडमालोक्य[14] गलितनयनपयसि यथा-स्थानमपसृत्य[15] स्थितवति[16] सपरिजने राजपुत्रलोके कादम्बरी महाश्वेतामवादीत्—'प्रियसखि,

---

क्रियताम्। हि यस्माद्धेतोः सम्यक्प्रकारेण कृतस्य तपसश्चान्द्रायणादेः। नामेति कोमलामन्त्रणे। किंचिदसाध्य-मकर्तव्यं नास्ति। अत्रार्थे निदर्शनं प्रदर्शयन्नाह—गौर्या पार्वत्या तपसश्चान्द्रायणादेः प्रभावान्माहात्म्यात्स्मरा-रेपि महादेवस्यापि अतिदुःखेनासाद्यत इति दुरासदम्। अर्धं देहस्य देहार्धः। 'अर्धं नपुंसकं' इति समासः। तदेव पदं स्थानमासादितं प्राप्तम्। एवं त्वमपि नचिरात्स्तोककालेन तथैव वयस्यस्य पुण्डरीकस्याङ्के क्रोडे निजतपःप्रभावात्पदमवाप्स्यसीति महाश्वेतां पर्यबोधयत्प्रतिबोधयामास। उपशान्तः प्रशान्तो मन्युवेगः शोकरयो यस्याः सा तस्यां महाश्वेतायां च विषण्णा विलक्षा चासौ दीनमुखी च विषण्णदीनमुखी कादम्बरी कपिञ्जलमप्राक्षीदपृच्छत्—हे भगवन्कपिञ्जल, पत्रलेखया त्वया चास्मिन् सरसि अच्छोदतटाके जलप्रवेशः पानीयावगाहः कृतः। तदिति हेत्वर्थे। तत्तस्मात्तस्याः पत्रलेखायाः किं संवृत्तं किं संजातमित्यावेदनेनेति प्रक-थनेन भगवान्कपिञ्जलः प्रसादमनुग्रहं करोतु विदधातु। स तु मुनिः प्रत्यवादीत्प्रत्यब्रवीत्। किं तदित्याह—**राजपुत्रीति**। हे राजपुत्रि नृपसुते, सलिलपातानन्तरं जलपतनाव्यवहितं तद्वृत्तान्तः पत्रलेखोदन्तो न कश्चि-दपि मया ज्ञातोऽवगतः। तस्मादधुना सांप्रतं क चन्द्रात्मकस्य शशिस्वरूपस्य चन्द्रापीडस्य जन्मोत्पत्तिः[1], क पुण्डरीकात्मनो वैशम्पायनस्य जन्म, अस्याः पत्रलेखायाः किं वा वृत्तं जातमिति सर्वस्य वृत्तान्तस्यावगमनाय ज्ञानाय प्रत्यक्षलोकत्रयस्य साक्षात्कृतत्रिविष्टपस्य श्वेतकेतुनाम्नो मत्तातस्य पादमूलं चरणसमीपमहं गतः[2] प्राप्त इत्यभिदधान इति ब्रुवाणो गगनं व्योमोदपतदुत्पतितो बभूव।

**अथेति**। उत्पतनानन्तरं तस्मिन्कपिञ्जले गते याते सति विस्मयेनाश्चर्येणान्तरितो व्यवहितः शोकवृत्तान्तो यस्याः सैवंविधा कादम्बरी महाश्वेतामवादीदवोचत्। कस्मिन्सति। यथास्थानमपसृत्य संस्थितवति सपरिजने सपरिच्छदे राजपुत्रलोके सति। कीदृशे। चन्द्रापीडमालोक्य निरीक्ष्य गलितं च्युतं नयनपयो नेत्रजलं यस्य स तस्मिन्। किमवादीत्तदाह—**प्रियेति**। हे प्रियसखि हे वल्लभवयस्ये, त्वया सह भवत्या सार्धं तुल्यं सदृशं दुःखं

---

**टिप्प०**—1 'क चन्द्रात्मकस्य चन्द्रापीडस्यात्मा, पुण्डरीकात्मकस्य वैशम्पायनस्य च जन्म,' इति पाठः। 2 'प्रस्थितोहम्' इति पाठः। अयमहं प्रस्थितो भवामीत्याशयः।

---

**पाठा०**—१ अपि. २ गौर्यास्तपः. ३ समासादितम्. ४ अचिरात्. ५ निजतपसः. ६ भगवन्. ७ तस्याः संवृ-त्तम्. ८ भगवति. ९ आयात. १० आत्मा. ११ पुण्डरीकात्मकस्य. १२ अवगमाय. १३ वृत्तान्ते. १४ आलोक्या-लोक्य. १५ अपसृत्यापसृत्य. १६ संस्थितवती.

तुल्यदुःखितां त्वया सह नयता न खल्वसुखं स्थापितास्मि भगवता विधात्रा । अद्य मे शिरः समुद्घाटितम् । अद्य ते वदनं दर्शयन्ती प्रियसखीति चाभाषमाणा न लज्जे । तवाप्यहमद्यैव प्रियसखी संजाता । संप्रति मरणं जीवितं वा न दुःखाय मे । तत्कोऽपरः प्रष्टव्यो मया ? केन वापरेणोपदेष्टव्यम् ? तदेवं गते यत्करणीयं तदु[2]पादिशतु मे प्रियसखी । नाहमात्मना किंचिदपि वेद्मि, किं कृत्वा श्रेयः' इत्युक्तवतीं कादम्बरीं महाश्वेता प्रत्यवादीत्—'प्रियसखि, किमत्र प्रश्नेनोपदेशेन वा । यदेवेयमनतिक्रमणीया प्रियतमसमागमप्रत्याशा कारयति, तदेव करणीयम् । पुण्डरीकवृत्तान्तोऽद्य[3] कपिञ्जलाख्या[4]नात्स्फुटीभूतः । [5]तत्कालं तु वाङ्मात्रकेणैव समाश्वासितया मया न पारितमन्यत्किंचिदपि [6]वक्तुम् । [7]तत्त्वमन्यत्किं करोषि यस्याः प्रत्यय-स्थानमिदं चन्द्रापीडशरीरमङ्क एवास्ते । [8]तदन्यथात्वेऽस्य क[9]रणीयचिन्ता । यावत्पुनरि[10]दम-विनाशि तिष्ठति तावदेव तस्यानुवृत्तिं मुक्त्वा किमन्यत्करणीयम् । अप्रत्यक्षाणां हि देवतानां

---

विद्यते यस्याः सा तुल्यदुःखिनी तस्या भावस्तुल्यदुःखिता तां नयता प्रापयता भगवता विधात्रा । खलु निश्चयेन । असुखं न स्थापितास्म्यसुखे न रक्षितास्मि । अद्य मे शिरः समुद्घाटितम् । अद्य मया शिरः कर्षि-तमित्यर्थः । अद्य ते तव वदनं दर्शयन्त्यवलोकनं कारयन्ती प्रियसखि इति भाषमाणेति जल्पमाना न लज्जे न त्रपे । समदुःखत्वादिति भावः । तवापि भवत्या अप्यद्यैवाहं प्रियसखी वल्लभवयस्या संजाता । पूर्वं भवत्या एव दुःखितत्वेन वचनमात्रेण प्रियसखित्वमभूत्, सांप्रतं तु समदुःखसुखित्वेनेति भावः । संप्रतीदानीं मरणं जीवितं वा मे मम पूर्वोक्तहेतोरेव न दुःखाय दुःखहेतवे । तत्तस्माद्धेतोरपरोऽन्यः को मया प्रष्टव्यः पृच्छाविषयीकार्यः । केन वापरेणान्येनोपदेष्टव्यमुपदेशो दातव्यः । तदेवं गते प्राप्ते सति यत्करणीयं यदेव विधेयं तत्प्रियसखी मे ममोपादिशतु कथयतु । नाहमात्मना किंचिदपि वेद्मि किं कृत्वा श्रेयः कल्याणं स्यात् । इत्युक्तवतीं कादम्बरीं महाश्वेता प्रत्यवादीत्प्रत्यब्रवीत्–हे प्रियसखि, अत्रास्मिन्नर्थे प्रश्नेन पृच्छयोपदेशेन वा किम् । यदेवेयमनतिक्र-मणीयानुल्लङ्घनीया प्रियतमसमागमप्रत्याशा वल्लभजनमेलापकसमीहा कारयति निष्पादयति तदेव करणीयं कार्यम् । भवत्या इति शेषः । पुण्डरीकस्य वृत्तान्त उदन्तोऽद्य कपिञ्जलस्याख्यानात्कथनात्स्फुटीभूतः प्रकटी-भूतः । तत्कालं तदात्वे वाङ्मात्रकेणैव वचनमात्रेणैव समाश्वासितयाश्वासनं कारितया मयान्यत्किंचिदपि वक्तुं कथयितुं न पारितं न शक्तम् । तत्तस्माद्धेतोस्त्वमन्यदितरत्किं करोषि विदधासि । यस्या भवत्याः प्रत्ययस्थानं विश्वासस्थलमिदं चन्द्रापीडशरीरमङ्क उत्सङ्ग एवास्ते तिष्ठति । तत्तस्मात्कारणादस्य शरीरस्यान्यथात्वेऽनेकस्था-यित्वे करणीयचिन्ता कर्तव्यचिन्ता । यावत्पुनरिदमविनाशि तिष्ठति तावदेव[3] तस्य शरीरस्यानुवृत्तिं सपर्यां मुक्त्वा किमन्यत्करणीयं विधेयम् । हि यस्मात्कारणादप्रत्यक्षाणां परोक्षाणां देवतानां देवानां मृन्मृत्तिका, अश्मा दृषत्,

---

टिप्प०—1 तुल्यं यथा तथा दुःखिताम् इत्यर्थ उचितः । वस्तुतस्तु–'तुल्यदुःखताम् (तुल्यं दुःखं ययोः ते तुल्यदुःखे, तत्ताम्) इत्येव पाठः सम्यक् । 2 अद्य मे शिरः समुद्घाटितं समुन्नमितं (विधात्रा) । 3 कोऽर्थं इति स्वयं जानीयात्, लेखे प्रमादकारी लेखको वा । कदाचित् 'अनेवंस्थायित्वे करणीया चिन्ता ।' इति पाठः स्यात् । शरीरस्यैवमेव अस्थितौ (विकारे सति) चिन्ता कार्या, इति तदर्थः । 4 सर्वत्र अस्थाने एवकारं प्रगृह्णाति महोदयः । 'तावदस्याऽनुवृत्तिं मुक्त्वा' इत्येव पाठः ।

---

पाठा०—१ तुल्यदुःखतां कुर्वता तेन चिरात्खल्वद्य सुखम्. २ उपदिशतु. ३ त्वद्य. ४ हस्तात्. ५ तदा तु. ६ कर्तुम्. ७ तत्किमन्यत्. ८ तदन्यथा त्वस्य. ९ करणीया. १० अविनाशि तावदेव.

मृदश्म[1]काष्ठमय्यः प्रतिमाः श्रेयसपूजो[2]सत्कारेणोपचर्यन्ते। किं पुनः प्रत्यक्ष[3]देवस्य चन्द्रापीडनामान्तरितस्य चन्द्रमसो मूर्तिरनाराधित[4]प्रसन्ना'।

इत्युक्तवत्यां [5]महाश्वेतायां कादम्बरी तूष्णीमेवो[6]त्थाय तरलिकया मदलेखया चोत्थाप्य तामखेदार्हां चन्द्रापीडतनुम्, अन्यतरस्मिञ्छीतवातातपव[7]र्षादिसर्वद्वन्द्वदोषरहिते शिलातले [8]शनैःशनैरखेदयन्ती स्था[9]पयित्वा, अपनीतशृङ्गारवेषाभरणा, मङ्गलमात्रकावस्थापितैककररत्नवलया, [10]स्नानशुचिर्भूत्वा परिधाय धौतशुचिनी दुकूले, प्रक्षाल्य पुनःपुनर्गाढलग्नमधरकिसलये ताम्बूलरागम्, उपर्युपरि निमीलितागतबाष्पवेगोत्तरललोचना, अन्यदेव किं[11]मप्यचिन्तित[12]मनुत्प्रेक्षितमशिक्षित[13]मनभ्यस्तमनुचितम[14]पूर्वं बाला बलाद्विलोम[15]प्रकृतिनाकार्यपण्डितेन दग्धवेधसा कार्यमाणा, यान्येव सुरभिकुसुम[16]धूपानुलेपनानि सुरतोपभोगायानीतानि तैरेव देवतोचितामपचितिं संपाद्य चन्द्रापीडमूर्तौ, मूर्तिमतीव शोकवृत्ति[17]रार्तरूपा रूपान्तरमिव [18]क्षणेनेवा-

---

काष्ठं दारु, एतैर्निष्पन्ना मृदश्मकाष्ठमय्यः प्रतिमा मूर्तयः श्रेयोहेतुत्वाच्छ्रे[1]यसानि दधिदूर्वादीनि, पूजार्चा पुष्पादिभिः, सत्कारोऽभ्युत्थानादिः, एतेषां समाहारस्तेनोपचर्यन्ते पूज्यन्ते। किं पुनः प्रत्यक्षदेवस्य चन्द्रापीड[2]नाम्नोऽन्तरितस्य व्यवहितस्य चन्द्रमसो मूर्तिः प्रतिमाऽनाराधितप्रसन्नानासेवितप्रमुदिता।

इत्युक्तवत्यां महाश्वेतायां कादम्बरी तूष्णीं मौनमेवोत्थायोत्थानं कृत्वा तरलिकया मदलेखया च तामखेदार्हां सुकुमारां चन्द्रापीडतनुमुत्थाप्य तत उत्थानं कारयित्वान्यतरस्मिञ्छीतं च वातश्चातपश्च वर्षा च शीतवातातपवर्षास्ता एवादौ येषामेवंविधाः सर्वद्वन्द्वदोषास्तै रहिते वर्जिते। एतत्प्रतिपक्षग्रहणाद्द्वन्द्वता बोध्या। शिलातले शनैःशनैरखेदयन्ती सादमनुत्पादयन्ती स्थापयित्वा स्थापनां कृत्वापनीतो दूरीकृतः शृङ्गारवेष आभरणं च यया सा। केवलं मङ्गलार्थं मङ्गलमात्रमवस्थापितमवस्थानं कारितमेक[3]करे रत्नवलयं मणिकटकं यया सा। स्नानेनाप्लवेन शुचिर्भूत्वा धौते क्षालिते शुचिनी पवित्रे दुकूले चोचे परिधाय परिधानं कृत्वा गाढलग्नमत्यन्तसंयुक्तमधरकिसलय ओष्ठपल्लवे ताम्बूलरागं पुनःपुनर्वारंवारं प्रक्षाल्य प्रक्षालनं कृत्वोपर्युपरि निमीलिते मुद्रित आगतबाष्पवेगे समागतनेत्राश्रुरये उत्तरललोचने चञ्चलनयने यस्याः सैवंविधा कादम्बरी बाला बलाद्धठाद्विलोमप्रकृतिना प्रतिकूलस्वभावेनाकार्यपण्डितेनाकृत्यविचक्षणेन दग्धवेधसा ज्वलितविधात्रान्यदेव किमप्यचिन्तितमविमृष्टमनुत्प्रेक्षितमतर्कितमशिक्षितमपठितमनभ्यस्तं पुनःपुनः कृतापरिवर्तनमनुचितमन्याय्यमपूर्वमभिनवं कार्यमाणा विधाप्यमाना, यान्येव सुरभिकुसुमधूपानुलेपनानि सुरभिकुसुमानि सुगन्धपुष्पाणि, धूपः प्रसिद्धः, अनुलेपनं विलेपनं एतानि सुरतस्य मैथुनस्योपभोगायानीतानि तैरेव चन्द्रापीडमूर्तौ चन्द्रापीडस्य शरीरे देवतोचितां देवयोग्यामपचितिमर्चां संपाद्य विधाय। मूर्तिमती देहधारिणी शोकवृत्तिरिवार्तरूपा पीडास्वरूपा क्षणेनेव समयेनेव

---

**टिप्प०**—1 शुद्धः प्रलापः। 'प्रतिमाः श्रेयसे (कल्याणाय) पूजानमस्कारेणोपचर्यन्ते' इति पाठः। पूजासहितेन नमस्कारेण। 2 चन्द्रापीडेति नाम्ना अन्तरितस्य, वास्तवे चन्द्रमा एव नाममात्रस्य व्यवधानमित्याशयः। 3 अवस्थापितः एकः करे रत्नवलयो यया, एकैकस्मिन् करे एकमेकं वलयमवस्थापितमित्याशयः।

---

**पाठा०**—१ काष्ठमयाः. २ पूजानमस्कारेण चन्द्रस्य. ३ प्रत्यक्षदेवस्य चन्द्रस्य. ४ प्रपन्ना. ५ महाश्वेतायां तूष्णीम्. ६ सहोत्थाय. ७ वर्षादिद्वन्द्व. ८ शनैः. ९ स्थापितावशेषरत्नवलया; स्थापयित्वापनीतशृङ्गारवेषग्रहणा; मङ्गलमात्रकावस्थापितैककरभूषणा. १० स्नाता शुचिः. ११ किंचिदपि. १२ अनुपक्षिप्तम्. १३ अभ्यस्तम्. १४ अपूर्वं विलोम. १५ विलोमप्रकृतिना. १६ अनुलेपनादीनि. १७ आर्तिरूपा. १८ तत्क्षणेनैवागता; तत्क्षणेनैवोपगता.

गता, विगतजीवितेव शून्यमुखी, मुखावलोकिनी चन्द्रापीडस्य, पीडितोत्पीडितहृदयापि रक्षन्ती बाष्पमोक्षम्, उद्दामवृत्तेः शोकादपि मरणादपि कष्टतमामवस्थामनुभवन्ती, तथैवाङ्के समारोपितचन्द्रापीडचरणद्वया, दूरागमनखिन्नेनापि बुभुक्षितेनाप्यप्रतिपन्नस्नानपानभोजनेनापि मुक्तात्मना राजपुत्रलोकेन स्वपरिजनेन च सह निराहारा तमशेषं दिवसमक्षिपत्।

यथैव च दिवसमशेषं क्षपितवती तथैव तां गम्भीरमेघोपरोधभीमामनवरतगर्जितध्वानकम्पितहृदयबन्धामाबद्धकलकलापिकुलकेकाकोलाहलाकुलितचेतोवृत्तिमुद्दामदर्दुरारटितबधिरितश्रोत्रेन्द्रियां दुर्दर्शतडित्संपातपीडितदिशमतिनिर्ह्रादापादितभुवनज्वरां ज्वलत्खद्योतनिकरजर्जरिततरुगहनतलतमःप्रसरभीषणतमां तमस्विनीमपि दूरीकृत्याऽबलासहभुवं भीतिम्, अपरित्यक्तचन्द्रापीडचरणकमला, अचेतितस्वशरीरखेदा जाग्रती समुपविष्टैव क्षणमिव क्षपां क्षपितवती। प्रातश्च तदुन्मीलितं चित्रमिव चन्द्रापीडशरीरमवलोक्य शनैःशनैः पाणिना

---

रूपान्तरमाकारान्तरमागतेव। विगतजीवितेव गतप्राणेवात एव शून्यमुखी। चन्द्रापीडस्य मुखमाननमवलोकते पश्यतीत्येवंशीला। पीडितेन पीडयोत्पीडितं व्याप्तं हृदयं वक्षो यस्या एवंविधापि बाष्पमोक्षमश्रुपातं रक्षन्ती रुन्धन्त्युद्दामा कठिना वृत्तिर्वर्तनं यस्यैवंभूताच्छोकादपि खेदादपि मरणादपि मृत्योरपि कष्टतमामतिशयेन कृच्छ्रामवस्थां दशामनुभवन्ती साक्षात्कुर्वन्ती। तथैव पूर्वोक्तरीत्या अङ्क उत्सङ्गे समारोपितं स्थापितं चन्द्रापीडचरणद्वयं यया सा। दूराद्यदागमनं तेन खिन्नेनापि संजातखेदेनापि बुभुक्षितेनापि क्षुधितेनाप्यप्रतिपन्नान्यनङ्गीकृतानि स्नानपानभोजनान्याप्लवपानभक्षणानि येन स तथा तेन। मुक्त आत्मा येन स तथा तेनैवंविधेन राजपुत्रलोकेन स्वपरिजनेन च कादम्बरीपरिच्छदेन च सह निराहारा निर्गतभोजना तमशेषं समग्रं दिवसं दिनमक्षिपन्निर्गमयामास।

यथैव च येन प्रकारेण दिवसमशेषं क्षपितवती तथैव तेन प्रकारेण समुपविष्टैवासेदुष्येव क्षणमिव क्षपां त्रियामां क्षपितवतीति दूरेणान्वयः। 'शर्वरी क्षणदा क्षपा' इति हैमः। अथ तां विशेषयन्नाह—गम्भीरो यो मेघस्तेनोपरोधः प्रतिबन्धस्तेन भीमां भीषणाम्। अनवरतं निरन्तरं यो गर्जितध्वानः स्तनितशब्दस्तेन कम्पितो हृदयबन्धो भुजान्तरबन्धो यया सा ताम्। आबद्धं मिलितं यत्कलं मनोज्ञं कलापिकुलं मयूरान्ववायस्तस्य केकावाण्यस्तासां कोलाहलेन कलकलेनाकुलिता व्याकुलीकृता चेतोवृत्तिर्यया सा ताम्। उद्दामं भीषणं यद्दर्दुराणां भेकानामारटितं पूत्कृतं तेन बधिरितं बधिरीकृतं श्रोत्रेन्द्रियं यया ताम्। दुर्दर्शो दुर्निरीक्ष्यो यस्तडित्संपातो विद्युत्पातस्तेन पीडिता दिशः ककुभो यया सा ताम्। अतिनिर्ह्रादेनातिगर्जितेनापादितो विहितो भुवनस्य ज्वरस्तापो यया सा ताम्। ज्वलन्दीप्यमानो यः खद्योतानां ज्योतिरिङ्गणानां निकरः समूहस्तेन जर्जरितं शिथिलीभूतं यत्तरुगहनानां तलेऽधोभागे तमोऽन्धकारं तस्य प्रसरो विस्तारस्तेन भीषणतमामतिभैरवामेतादृशीं तमस्विनीं तमोयुक्तामप्यबलया सहभुवं सहोत्पन्नां भीतिं भयं दूरीकृत्य निराकृत्य। कीदृशी कादम्बरी। अपरित्यक्तमनुज्झितं चन्द्रापीडचरणकमलं यया सा। अचेतितोऽविचारितः स्वशरीरखेदो यया सा। जाग्रती जागरा क्षणमिव क्षपां क्षपितवती। अन्वयस्तु प्रागेवोक्तः। **प्रातश्चेति**। प्रत्यूषे तदुन्मीलितं विकसितं चित्रमिव चित्र-

---

**टिप्प०**—1 त्यक्तात्मना जीवितनिरपेक्षेणेत्यर्थः। 2 कुले कलशब्दस्य किं स्वारस्यम्? आबद्धः कलः (मधुराऽस्फुटः स्वनः) यैः तथाविधानां कलापिकुलानां केकाकोलाहलैरित्यादिरर्थो वाच्यः। 3 तमोयुक्ता रात्रिरिति विशिष्य वक्तव्यं, ज्योत्स्न्या अपि रात्रेः सत्त्वात्। 4 जागरा किम्? अस्वपतीत्यर्थः।

---

**पाठा०**—१ पीडोत्पीडित. २ अक्षपयत्. ३ कलापिकेका. ४ आकुलीकृत. ५ दृशम्. ६ अशनिनिर्घाततर्जनापादित; अशनिनिर्ह्रादतर्जनापादित. ७ गहनतर. ८ चरणाचेतितशरीर. ९ आलोक्य.

स्पृशन्ती पार्श्वस्थितां मदलेखामवादीत्—'प्रियसखि मदलेखे, न वेद्मि किं रुचेर्वशादुत निर्विकारतयैवेति, अहं तु तादृशीमेवेमां तनुमवलोकयामि । तत्त्वमपि तावदादरतो निरूपय' इति । एवमुक्ता मदलेखा तां प्रत्यवादीत्—'प्रियसखि, किमत्र निरूपणीयम् । अन्तरात्मनो विरहाद्[2]व्यापारमात्रकमस्यामुपरतम् । अन्यत्तादृशमेवेदं व्याकोशशतपत्राकारं[3] मनागप्यनुन्मुक्तं श्रिया वदनम् । तथा[4] च संवेल्लिताग्रभागः स्निग्धः कुन्तलकलापः । तथैवेयमिन्दुशकलानुकारिणः कान्तिर्ललाटस्य । तादृशमेवेदमामुकुलितनीलोत्पलद्युतिहारि कर्णान्तायतं लोचनद्वयम्[5] । तथैव चेमावहसतोऽपि[6] विकसिताविवोद्भासितकपोलमूलौ[7] सृक्कोपान्तौ । तादृश एवाभिनवकिसलयच्छविरधरः । तथैव चेदं विद्रुमालोहितनखाङ्गुलीतलं पाणिपादम् । तदेवेदमविगलितसहजलावण्यसौकुमार्याणां[8] सौष्ठवमङ्गानाम्[9] । तत्सत्या सा[10] भारती, कपिञ्जला-

---

कारालेखितमिव चन्द्रापीडशरीरमवलोक्य निरीक्ष्य शनैःशनैर्मन्दंमन्दं पाणिना हस्तेन स्पृशन्ती स्पर्शं कुर्वन्ती पार्श्वस्थितां मदलेखामवादीदभ्यधात् । किमुवाचेत्याह—हे प्रियसखि मदलेखे, अहं न वेद्मि न जाने । किं रुचेर्वशादभिलाषवशतः, उत निर्विकारतया निर्विकृतितया चेति । अहं तु तादृशीमेव पूर्वविलोकितामेवेमां तनुमवलोकयामि पश्यामि । तत्त्वमपि तावदादरतः संभ्रमतो निरूपय विलोकयेति । एवमुक्ता प्रतिपादिता मदलेखा तां प्रत्यवादीत्प्रत्यवोचत्—हे प्रियसखि कादम्बरी, किमत्र निरूपणीयं विलोकनीयम् । अन्तरात्मनोऽन्तर्वर्तिजीवस्य विरहाद्वियोगाद्व्यापारमात्रकं परिस्फुरणादिकमस्यां चन्द्रापीडस्य तनावुपरतं स्थितम् । अन्यत्तादृशमेव पूर्वावलोकितसदृशमेव । एतदेव स्पष्टयन्नाह—**इदमिति** । व्याकोशं विकसितं यच्छतपत्रं पद्मं तस्याकार आकृतिर्यस्यैवंविधं[1] मनागपीषदपि श्रियानुन्मुक्तमत्यक्तमिदं प्रत्यक्षगतं वदनं मुखम् । 'सहस्रपत्रं कमलं शतपत्रं कुशेशयम्' इत्यमरः । तथा च संवेल्लितश्चलो[2]ऽग्रभागो यस्यैवंभूतः स्निग्धः सचिक्कणः[3] कुन्तलकलापः केशसमूहः । 'चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः' इत्यमरः । तथैव चेयमिन्दुशकलं चन्द्रखण्डमनुकरोत्येवंशीलस्य ललाटस्यालिकस्य कान्तिर्द्युतिः । तादृशमेवेदमामुकुलितमाकुड्मलितं यन्नीलोत्पलं नीलपद्मं तस्य द्युतिं हरतीत्येवंशीलं कर्णान्तं यावदायतं विस्तीर्णं लोचनद्वयं नेत्रयुगमम् । तथैव चाहसतोऽपि हास्यमकुर्वतोऽपीमौ विकसिताविव विनिद्राविवोद्भासिते कपोलमूले याभ्यां तावुद्भासितकपोलमूलौ । एवंभूतौ सृक्कयोरोष्ठप्रान्तयोरुपान्तौ समीपौ । सृक्कशब्दोऽदन्तः क्लीबश्च । 'प्रान्तावोष्ठस्य सृक्किणी' इत्यमरः । तादृश एवाभिनवो नूतनो यः किसलयः पल्लवस्तद्वच्छविः कान्तिर्यस्यैवंभूतोऽधर ओष्ठः । तथैव पूर्ववदेवेदं विद्रुमं हेमकन्दलस्तद्वदालोहितं रक्तं नखा नखराः अङ्गुलयः करशाखास्तलमधोभागः । नखाश्चाङ्गुलयश्च तलं चेतीतरेतरद्वन्द्वः । एतादृशौ पाणिपादौ[4] यस्य तत् । 'द्वन्द्वश्च प्राणि—' इत्येकवद्भावः । तदेवेदमविगलितमच्युतं यत्सहजलावण्यं स्वाभाविकलवणिमा तेन सौकुमार्याणां[5] मृदूनामङ्गानां हस्तपादानां सौष्ठवं शोभनत्वम् । तत्तस्मात्कारणात्सा भारती वाणी सत्या यथार्था, कपिञ्जलेनावेदितो निवेदितश्च शापवृत्तान्तः सत्य इति संभावयामि संभा-

---

**टिप्प०**—1 आकार इवाकारो यस्येत्यर्थः । 2 संवेल्लित आकुञ्चित इत्यर्थो वाच्यः । 3 धन्यधन्यो भवान्, 'चिक्कणः' इत्येव मुखारविन्दाद्वक्तव्यम् 'चिक्कणो मसृणः स्निग्धः' इति ह्यमरः । 4 स्वयमेकवद्भावः सूच्यते, तथापि 'पाणिपादौ' लिख्यते? अस्पष्टश्च विग्रहः, तस्मात्—'विद्रुमवदालोहितं नखाङ्गुलितलं यस्य तथाविधं पाणिपादमिति वक्तव्यम् । 5 धिक् । न विगलितं स्वाभाविकं लावण्यस्य सौकुमार्यं येषाम् ।

---

**पाठा०**—१ आभाष्येदमब्रवीत्—मदलेखे. २ विरहान्नव्यापारमात्रकमस्याः परमन्यत्. ३ सकोश. ४ तथायं; तथैवायम्. ५ लोचनयुगलम्. ६ एतौ. ७ विहसितौ. ८ तथैव चेदम्. ९ अङ्गानां लावण्यम्. १० असौ.

वेदितश्च शापवृत्तान्त इति संभावयामि' इत्युक्तवत्यां मदलेखायामानन्दनिर्भरा महाश्वेतायै दर्शयित्वा चन्द्रापीडचरणतलनिबद्धजीविताय राजपुत्रलोकायापि दर्शितवती।

स तु विस्मयोत्फुल्ललोचनः सर्व एवावनितलनिवेशितशिराः प्रणम्य चन्द्रापीडचरणौ रचिताञ्जलिर्जानुद्वयेनावनौ स्थित्वा कादम्बरीं[1]व्यज्ञापयत्—'देवि, त्वत्प्रभावोऽयं यदेवास्मानपुण्यवतः परित्यज्य दूरं गतस्यापि देवस्य ता[2]दृशमेवेदं[3]प्रसन्नेन्दुमण्डलद्युतिहारि वीक्ष्यते वदनम्। तथैव चेदं चरणयुगल[4]मवभाति पुरेव प्रो[5]त्फुल्लतामरसच्छायम्। तथैव च पुन[6]ः प्रसादानु[7]भवप्रत्याशालालसं हृदयम्। अन्यच्चैतन्मनु[8]ष्यलोकेषु केन[9] कदा वा दृष्टं श्रुतमनुभूतं वा यदस्माभिः पुण्यवद्भिः' इत्यभिहितवति राजलोके ससखीजना [10]संपरिजना चोत्थाय स्वयमेवा[11]वचित्य देवतार्[11]चनकुसुमानि स्नात्वा निर्वर्तितचन्द्रापीडशरीरपूजासंस्कारा शरीरस्थितिकरणायादिदेश सकलमेव राजलोकम्। निर्वर्तित[12]स्नानाशने च तस्मिन्नात्मनापि महाश्वेतयोपनीतानि तयैव सह सपरिवारा फलान्युप[13]भुक्तवती। कृताहारा च पुनस्तथैव चन्द्रापीडचरणाव[14]ङ्केनोद्वहन्ती तमपि दिवसमनयत्।

---

वनां करोमि। इत्युक्तवत्यामिति प्रतिपादितवत्यां मदलेखायामानन्देन प्रमोदेन निर्भरा कादम्बरी महाश्वेतायै दर्शयित्वा दर्शनं कारयित्वा चन्द्रापीडस्य चरणतले निबद्धं जीवितं प्राणितं यस्य स तथा तस्मै राजपुत्रलोकायापि दर्शितवती दर्शनं कारितवती।

स तु राजपुत्रलोको विस्मयेनाश्चर्येणोत्फुल्ले विकसिते लोचने यस्य सः। सर्व एव समग्र एवावनितले निवेशितं स्थापितं शिर उत्तमाङ्गं येन स तथा। चन्द्रापीडचरणौ प्रणम्य नमस्कृत्य रचिताञ्जलिर्नियोजितकरो जानुद्वयेन नलकीलयुग्मेनावनौ पृथिव्यां स्थित्वा कादम्बरीं व्यज्ञापयद्विज्ञप्तिमकार्षीत्। कां विज्ञप्तिं चकारेत्याशयेनाह—**देवीति**। हे देवि कादम्बरि, अयं त्वत्प्रभावो भवत्या एव माहात्म्यं यदेवास्मानपुण्यवतः सुकृतरहितान्परित्यज्य दूरीकृत्य दूरं दविष्ठं गतस्यापि प्राप्तस्यापि देवस्य तादृशमेवेदं प्रसन्नं निर्मलं यदिन्दुमण्डलं चन्द्रबिम्बं तस्य द्युतिं कान्तिं हरतीत्येवंशीलं वदनं मुखं वीक्ष्यतेऽवलोक्यते। तथैवेदं चरणयुगलं पादयुग्ममवभाति शोभते। कीदृशम्। पुरेव पूर्ववदेव प्रोत्फुल्लं विकसितं यत्तामरसं कमलं तद्वच्छाया कान्तिर्यस्य तत्। तथैव च पुनः प्रसादस्यानुभवप्रत्याशालालसं लम्पटं हृदयं चेतः। अन्यच्चैतन्मनुष्यलोकेष्वैदंयुगीनमर्त्यलोकेषु केन वा कदा वा कस्मिन्काले वा दृष्टमवलोकितं श्रुतमाकर्णितं यदस्माभिः पुण्यवद्भिरनुभूतं साक्षात्कृतम्। इत्यभिहितवति कथितवति राजलोके सह सखीजनेन वर्तते या सा ससखीजना, सहपरिजनेन परिच्छदेन वर्तते या सा सपरिजना चोत्थायोत्थानं कृत्वा स्वयमेव देवतानामर्चनं पूजनं तदर्थं कुसुमानि पुष्पाण्यवचित्यावचयं कृत्वा स्नात्वा स्नानं विधाय निर्वर्तितो विहितश्चन्द्रापीडशरीरस्य पूजासंस्कारो यया सा। तत्र पूजार्चा, संस्कारोऽधिवासनम्। सकलमेव समग्रमेव राजलोकं शरीरस्य स्थितिर्यस्मात्तच्छरीरस्थितिर्भोजनं तस्य करणं विधानं तदर्थमादिदेशादेशं दत्तवती। निर्वर्तिते विहिते स्नानाशने येन स तथा तस्मिन्। तस्मिंश्च राजलोके सत्यात्मनापि स्वेनापि महाश्वेतयोपनीतान्यानीतानि तया महाश्वेतया सह तथैव सपरिवारा फलान्युपभुक्तवती। कृतो विहित आहारो ययैवंविधा च पुनस्तथैव पूर्ववदेव चन्द्रापीडचरणावङ्केनोत्सङ्गेनोद्वहन्ती धारयन्ती तमपि दिवसमनयद्यापितवती।

---

पाठा०—१ व्यज्ञपयत्; व्यजिज्ञपत्. २ तथैव. ३ प्रसन्नमिन्दुः प्रसन्नप्रभमिन्दुः. ४ अविकारि. ५ प्रणम्यते. ६ पुनःपुनः. ७ अनुभवन. ८ मानुष्येषु एतन्मनुष्येषु. ९ कदा वा; केन कदा. १० सपरिवारा. ११ उच्चितदेवतार्चनकुसुमा. १२ निवर्तित. १३ उपयुक्तवती. १४ अङ्के कृत्वोद्वहन्ती.

अन्येद्युश्च संजातदृढतरप्रत्यया चन्द्रापीडशरीराविनाशं प्रति मदलेखामवादीत्—'प्रियसखि, देवस्य शरीरमिदमुपचरन्तीभिरवश्यमाशयाऽऽशापक्षयादस्माभिरधुनात्र स्थातव्यम् । तददिदमत्यद्भुतं वृत्तान्तं तातस्याम्बायाश्च गत्वा निवेदय । येन नान्यथा मां संभावयतो दुःखेन वा मदीयेन न तिष्ठतः । यथा मामेवंविधां दुःखभागिनीमागत्य न पश्यतस्तथा करिष्यसि । न शक्नोम्यहं तातमम्बां च दृष्ट्वा शोकवेगं धारयितुम् । मया चोपरतमेव देवमालोक्य न रुदितम् । सा किमपरमधुना निःसंशयितजीविते देवे प्रतिपन्ननियमा रोदिमि' इत्यभिधाय तां व्यसर्जयत् ।

गत्वाऽऽगतया च तया 'प्रियसखि, सिद्धं तेऽभिवाञ्छितम् । एवं संदिष्टं तातेन चित्ररथेनाम्बया च मदिरया गाढंगाढं पुनरालिङ्ग्य शिरस्युपाघ्राय च वक्तव्यावयोर्वचनात् 'वत्से, कालमेतावन्तं मनस्येव नैतदावयोरासीद्यथा जामातृसहिता वत्सा द्रष्टव्येति । तदयमेवावयोः परमानन्दो यद्वत्सया स्वयं जामाता वृतः । तत्राप्यपरं भगवतो लोकपालस्य

---

अन्येद्युरन्यस्मिन्काले चन्द्रापीडशरीरस्याविनाशोऽविनश्वरत्वं तं प्रति संजातः समुत्पन्नोऽतिशयेन दृष्टो दृढतरः प्रत्ययो विश्वासो यस्याः सा तथा मदलेखामवादीदभ्यधात्—हे प्रियसखि, देवस्य चन्द्रापीडस्येदं शरीरमुपचरन्तीभिरुपचारं कुर्वन्तीभिरा शापक्षयाच्छापक्षयं यावदस्माभिरधुना सांप्रतमवश्यं निश्चितमाशया वाञ्छयात्राच्छोदसरसोऽभ्यर्णे स्थातव्यम् । तदिदमत्यद्भुतमत्याश्चर्यं वृत्तान्तमुदन्तं तातस्याम्बायाश्च गत्वा निवेदय कथय । येनान्यथान्यप्रकारेण मां कादम्बरीं ( न ) संभावयतो विचारयतो मदीयेन दुःखेन वा तिष्ठतः स्थितवतः । यथा मामेवंविधां दुःखभागिनीमागत्य समेत्य न पश्यतो नालोकयतः मातापितराविति शेषः । तथा त्वं करिष्यसि रचयिष्यसि । अहं तातं पितरमम्बां मातरं च दृष्ट्वावलोक्य शोकवेगं धारयितुं स्तम्भयितुं न शक्नोमि न समर्था भवामि । मया चोपरतमेव निवृत्तमेव देवं चन्द्रापीडमालोक्य न रुदितं न रुदनं कृतम् । निःसंशयितं निश्चितं जीवितं यस्यैवंविधे देवे चन्द्रापीडे न रोदिमि इति प्रतिपन्नः स्वीकृतो नियमोऽभिग्रहो यया सैवंविधा साहमधुना किमपरं रोदिमीत्यभिधायेत्युक्त्वा च तां मदलेखां व्यसर्जयत्प्राहिणोत् ।

गत्वाऽऽतया च तत्र गमनं कृत्वा प्रतिनिवृत्तया च तया मदलेखया हे प्रियसखि, ते तवाभिवाञ्छितं सिद्धं निष्पन्नम् । तातेन चित्ररथेनाम्बया च मदिरयैवं संदिष्टं कथितम् । एवमिति किमित्यपेक्षायामाह—**गाढंगाढमिति** । गाढंगाढं पुनःपुनरालिङ्ग्योपगूहनं कृत्वा शिरस्युत्तमाङ्ग उपाघ्रायावघ्राय चावयोर्वचनादस्मद्भाषिताद्वक्तव्या भाषितव्या । हे वत्से, एतावन्तं कालं मनस्येव नैतदावयोरासीद्यथा जामातृसहिता दुहितुः पतियुक्ता वत्सा पुत्री द्रष्टव्या विलोक्येति । तत्तस्मात्कारणादयमेवावयोः परम उत्कृष्ट आनन्दो यद्वत्सया पुत्र्या स्वयमेव जामाता वृतोऽङ्गीकृतः । तत्रापि वरणेऽप्यपरमन्यद्भगवतो लोकपालस्य चन्द्रमसोऽवतारः । तत्क-

---

टिप्प०—1. कियत्प्रलापो निवार्यताम्? मदीयेन दुःखेन दुःखितौ न तिष्ठतः ( न तिष्ठेताम् ) इत्याशयः । 2 कोयं प्रलापः? दुहितुः पतियुक्ता वत्सेत्यनेन वत्साया अपि दुहिता, तस्याः पतिरित्यर्थः प्रतीयते । निजपतियुक्ता वत्सा ( पुत्री ) द्रष्टव्येति सरला व्याख्या ।

---

पाठ०—१ प्रतिपद्य. २ अवश्यमा. ३ अत्यद्भुतं भूतम्; अद्भुतरूपम्. ४ येनान्यथा. ५ यया. ६ अपि. ७ गतागतया. ८ गाढतरमालिङ्ग्य. ९ वत्सयैव.

चन्द्रमसोऽवतारः । तत्कल्याणैः शापावसाने जामात्रा सहैवानन्दबाष्पनिर्भराननारविन्दं ते द्रक्ष्यावः' इत्यावेदिते निर्वृतेनान्तरात्मना दैवतवदुपचरन्ती तच्चन्द्रापीडशरीरमतिष्ठत् ।

अथापगतवति जलदसमये, घननिरोधोद्बन्धादिवोन्मुक्ते जीवलोके, प्रसरन्तीष्विवाशासु, फलभारावनम्रकलमवनपिञ्जरासु ग्रामसीमासु, काशकुसुमधवलास्वरण्यस्थलीषु, सेव्यतामुपगतेषु प्रासादतलेषु, कह्लारहारिषु पल्वलेषु, कुमुदामोदशीतलासु यामवतीषु, शेफालिकापरिमलग्राहिषु निशावसानमातरिश्वसु, चन्द्रप्रभाभिरामेषु प्रदोषेषु, उद्दामफुल्लेन्दीवररजोवाससुरभिषु वासरेषु, सलिलापसरणक्रमतरङ्ग्यमाणासु सुकुमारतीरसैकतरेखासु, सुखोत्तारतामापन्नास्वापगासु, पङ्कपरिहरणशुष्केष्वप्रहतरूढतृणोलपच्छन्नेषु मन्दाश्यानकर्दमोद्भिद्यमानाभिनवपदवीकेषु पुनरपि पार्थिवलोकेन प्रवर्तितेषु प्राञ्जलवर्त्मसु, जम्बालविगमात्स-

---

ल्याणैर्मङ्गलैः शापस्यावसाने प्रान्ते जामात्रा सहैवानन्दवाष्पेण निर्भरं यदाननारविन्दं मुखपद्मं ते तवावां द्रक्ष्याव आलोकयिष्यावः । इत्यावेदिते कथिते निर्वृतेन स्वस्थेनान्तरात्मना दैवतवद्देववत्तच्चन्द्रापीडशरीरमुपचरन्त्युपचर्यां कुर्वन्त्यतिष्ठत्स्थितवती ।

**अथेति** । कियद्दिनानन्तरं जलदसमये मेघकालेऽपगतवति व्यतिक्रान्ते सति घनस्य मेघस्य निरोधोऽवग्रहः स एव बन्धस्तस्मादिवोन्मुक्ते पृथग्भूते जीवलोके सत्याशासु दिशासु प्रसरन्तीष्विव प्रसर्पन्तीष्विव, फलभारेण सस्यवीवधेनावनम्राण्यवनतानि यानि कलमाः शालयस्तेषां वनान्यरण्यानि तैः पिञ्जरासु पीतरक्तासु ग्रामसीमासूपशल्येषु । 'पीतरक्तस्तु पिञ्जरः' इति हैमः । काशकुसुमैर्धवलासु श्वेतास्वरण्यस्थलीषु, सेव्यतामुपगतेषु प्राप्तेषु प्रासादतलेषु सौधानामधोभागेषु, कह्लारेण सौगन्धिकेन हारिषु मनोहरेषु पल्वलेष्वाखातसरःसु, कुमुदानां कैरवाणामामोदेन शीतलासु शिशिरासु यामवतीषु रात्रिषु, शेफालिका वल्लीविशेषस्तस्याः परिमलमामोदं गृह्णन्तीत्येवंशीलेषु निशाया रात्रेरवसानं प्रान्तस्तस्य मातरिश्वसु वायुषु सत्सु, चन्द्रप्रभाः शशिज्योत्स्नास्ताभिरभिरामेषु मनोहरेषु प्रदोषेषु यामिनीमुखेषु । 'प्रदोषो यामिनीमुखम्' इति हैमः । उद्दामफुल्लानि विकसितानि यानीन्दीवराणि नीलकमलानि तेषां रजः परागस्तस्य वासो गन्धस्तेन सुरभिषु सुगन्धिषु वासरेषु दिनेषु सत्सु, सलिलस्य पानीयस्यापसरणं दूरीभवनं तस्य क्रमस्तेन तरङ्ग्यमाणासूत्कलिकायमानासु सुकुमारं मृदु यत्तीरं तटं तस्य सैकतरेखासु जलोज्झितस्थलपङ्क्तिषु, सुखेनोत्तार उत्तरणं तस्य भावः सुखोत्तारता तामापन्नासु प्राप्तास्वापगासु नदीषु सत्सु, पङ्कस्य कर्दमस्य परिहरणं दूरीकरणं तेन शुष्केषु वल्लूरेषु । 'वल्लूरं स्याद्वनक्षेत्रे वाहनोषरयोरपि । वल्लूरमाहुः संशुष्कमांसशूकरमांसयोः' इति विश्वः । अप्रहतान्यविनष्टानि यानि रूढानि प्रादुर्भूतानि तृणानि यवसानि तेषामुलपाः समूहास्तैश्छन्नेष्वाच्छादितेषु । मन्दस्तुच्छो य आश्यानोऽशुष्कः कर्दमः पङ्कस्तेनोद्भिद्यमाना प्रादुर्भूयमानाभिनवा प्रत्यग्रा पदवी मार्गो येषु तानि तेषु । पुनरपि पार्थिवलोकेन राजलोकेन प्रव-

टिप्प०—1 'निर्भरमाननारविन्दम्' इति पाठः, समासचातुर्यं टीकायाः स्यात् । 2 वर्षासु किं प्रासादतलानि परित्याज्यानीति राजाज्ञा? तस्मात्—'सेव्यतामुपगतेषु पादपतलेषु' इति पाठः । वर्षाभयात् वृक्षाधस्तले न शक्यमवस्थातुम् । संप्रति तु न तथेत्याशयः । 3 जलेऽपगतेपि वालुकासु तरङ्गचिह्नैः सतरङ्गास्विवेत्याशयः । 4 सुकुमाराः तीरस्य सैकतरेखा यासां तासु । 5 अप्रहतेषु खिलेषु (धान्यनिवेशस्थानेषु) रूढैः तृणोपलैः आवृतेषु । 'द्वे खिलाप्रहते समे' कोषः । 6 'पान्थलोकेनेत्येव पाठः । राजभिः क्षुण्णे तु मार्गे दूरदूरं पान्थपदव्येव लुप्यते ।

पाठा०—१ तत्कतिपयेनैव कालेन. २ निर्भरमानन. ३ निर्वृत्तेन. ४ बन्धात. ५ फलभरादवनम्र; कणिशभरावनम्र. ६ आपिञ्जरासु. ७ पादपतलेषु. ८ कुसुम. ९ शेफाली; काली. १० सलिलाश्रयेषु. ११ सलिलापसरणक्रमतरंगमाणपाण्डुसुकुमारतीरसैकतरेखासु. १२ रूढौलप. १३ पान्थलोकेन.

र्वतस्तुरगखुरसहासु भूमिष्वेकदा चन्द्रापीडचरणमूलोपविष्टां कादम्बरीमुपसृत्य मेघनादो व्यजिज्ञपत्—

'देवो युवराजश्चिरयतीत्युत्ताम्यता हृदयेन देवेन तारापीडेन देव्या विलासवत्यार्यशुकनासेन च वार्ताहराः प्रहिताः । ते च देव्या एव शोकशल्यघटनां परिहरद्भिर्यथावृत्तं सर्वमाख्यायास्माभिरभिहिताः–भवता हस्ते देवेन चन्द्रापीडेन न किंचित्प्रतिसंदेष्टव्यम् । नापि देव्या कादम्बर्या । तदकृतविलम्बा एव गत्वैवमखिलवृत्तान्तं लोकार्तिहरायावनितलपतये देवदेवाय तारापीडायावेदयत' इत्येवमभिहितास्तु तेऽस्मान्मन्युनिर्भराः प्रत्यवदन्—'यथा भवद्भिः कथितं तत्तथा । तिष्ठतु तावत्क्रमागतस्नेहो भक्तिरनुवृत्तिर्वा । कार्यगौरवकृतं कुतूहलमेव देवावलोकनं प्रति बलात्प्रेरयत्यस्मान् । यदि भवतामपि वार्तामात्रकोपलभ्य एवायमर्थः, ततो युज्यतेऽस्माकं भवद्भ्यः समुपलभ्य प्रतिगमनम् । अथ नयनविषयगामी तदा वयमपि नेदृशा एवापुण्यकर्माणो ये न पश्यन्ति देवम् । अस्माभिरपि चिरतरं चरणपरिचर्यया देवस्य पवित्रित एवात्मा । अस्माकमपि सर्वदा दर्शनगोचरावस्थानेन प्रसादं कृत-

---

र्तितेषु क्षुण्णेषु प्राञ्जलवर्त्मसु सुकुमारमार्गेषु सत्सु । जम्बालविगमात्कर्दमापगमात्सर्वतोऽभितस्तुरगानामश्वानां खुराः शफास्तान्सहन्ते क्षमन्ते इति तुरगखुरसहास्तास्वेवंविधासु भूमिषु वसुधास्वेकदैकस्मिन्समये चन्द्रापीडस्य चरणयोर्मूलं समीपं तत्रोपविष्टां स्थितां कादम्बरीमुपसृत्य समीपमागत्य मेघनादो व्यजिज्ञपज्ज्ञापयामास ।

किं तदित्याह—**देवेति** । देवो युवराजश्चन्द्रापीडश्चिरयति विलम्बयतीत्युत्ताम्यतोत्प्राबल्येन खेदं कुर्वता हृदयेन चेतसा देवेन तारापीडेन देव्या विलासवत्यार्यशुकनासेन च वार्ताहरा लेखहारकाः प्रहिताः प्रेषिताः । ते च वार्ताहरा देव्याः शोक एव शल्यं शरीरान्तर्गतलोहखण्डस्तस्य घटनां रचनां परिहरद्भिर्वर्जयद्भिरस्माभिर्यथावृत्तं यथाभूतं सर्वं समग्रमाख्याय कथयित्वाभिहिताः कथिताः । भवता युष्माकं हस्ते देवेन चन्द्रापीडेन न किंचित्प्रतिसंदेष्टव्यं न प्रतिकथनीयम् । नापि देव्या कादम्बर्या । तत्तस्मात्कारणादकृतो विलम्बः कालक्षेपो यैरेवंविधा एव गत्वा गमनं कृत्वैवाखिलं समग्रं वृत्तान्तमुदन्तं लोकानां जनानामार्तिः पीडा तस्या हरायावनितलपतये भूतलस्वामिने देवदेवाय राजाधिराजाय तारापीडायावेदयत न्यवेदयत इत्येवमभिहिताः कथितास्तु तेऽस्मान्मन्योः क्रोधस्य निर्भरो येष्वेतादृशाः प्रत्यवदन्प्रत्यूचुः । किं तदित्याशयेनाह—**यथेति** । यथा येन प्रकारेण भवद्भिः कथितमुक्तं तत्तथा तेन प्रकारेणास्तु । क्रमागतः परम्परयागतः स्नेहः प्रेम,भक्तिराराध्यत्वेन ज्ञानम्, अनुवृत्तिरनुवर्तनं वा तिष्ठत्वास्ताम् । परं कार्यस्य कृत्यस्य गौरवं गुरुत्वं तेन कृतं विहितं कुतूहलमेव कौतुकमेव देवस्य चन्द्रापीडस्यावलोकनं वीक्षणं प्रत्यस्मान्बलाद्धठात्प्रेरयति नोदयति । यदि भवतामपि केवलं वार्ता वार्तामात्रकं तेन उपलभ्य प्राप्य एवायमर्थः प्रयोजनम् । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । ततो युज्यते घटतेस्माकं भवद्भ्यः समुपलभ्य कथयित्वा प्रतिगमनं प्रतियानम् । अथ नयनविषयं चक्षुर्गोचरं गच्छतीत्येवंशीलोऽर्थः, तदा वयमपि नेदृशा एवापुण्यकर्माणोऽशुभकृत्यकारिणो ये न देवं पश्यन्त्यवलोकयन्ति । अस्माभिरपि देवस्य चिरतरं चिरकालं चरणपरिचर्यया पादसेवयात्मा पवित्रित एव । अस्माकमपि सर्वदा सर्वकालं दर्शनगोचरमवलोकनविषयं यदवस्थानमवस्थितिस्तेन प्रसादमनुग्रहं देवः कृतवानेव विहितवानेव । अद्य

---

**टिप्प०**—1 'निवेदयत' इत्येव । न्यवेदयतेति लेखकदोष एव स्यात् । 2 अर्थात् प्रत्यक्षदर्शनस्य नावसरः, केवलं संवादप्राप्तिरेव वशः । 3 प्रवृत्तिम् ( संवादम् ) प्राप्य गमनमित्यर्थ उचितः ।

---

**पाठा०**—१ सहासु संजातासु. २ देवि देवः. ३ अस्माभिर्यथावृत्तं समाख्याय. ४ भवता तु हस्तेन. ५ अखिललोक. ६ हरये. ७ देवाय. ८ कारयति. ९ भवतां वार्ता. १० मात्रकलभ्यः. ११ युज्यत एव. १२ अपि च. १३ एव केऽप्यगुणाः. १४ देवचरणपरिचर्यया. १५ प्रसादीकृतवान्.

वानेव देवः। किमद्य जातं येन देवस्य पादारविन्दवन्दनाप्रसादेनासंविभज्य विसृज्यामहे। त एव वयं पादलग्नाश्चरणरेणवः। तद्विज्ञाप्य देवीं देवस्य युवराजस्य पादप्रणामेनास्माकं सफलयतु भवानागमनपरिश्रमम्। अन्यथा भूमिमेतावतीमागत्य संभवे सत्यप्रत्यक्षीकृतयुवराजशरीरा गताः सन्तः किं देवंदेवेन तारापीडेन वक्तव्या वयम्। किं वास्माभिर्देवो विज्ञापयितव्यः' इत्यावेदिते, 'देवी प्रमाणम्' इति विज्ञाप्य पुनस्तूष्णीं स्थितवति मेघनादे, तत्कालसमुत्प्रेक्षितानाश्वास्यश्वशुरकुलवैक्लव्या, विलीयमानेव शुचा, अन्तःसंचितं बाष्पमाकुलिततरलतारकाभ्यामापिबन्ती लोचनाभ्याम्, उद्गदिकयावगृह्यमाणकण्ठी, कथंकथमपि चिरात्कादम्बरी प्रत्युवाच—'स्थान एव हि तैरगमनमङ्गीकृतम्। अनवलोक्य देवमेवमेव याताः सन्तः किमुच्यन्ताम्? अपि च वृत्तान्त एवायमेवंविधो लोकातीतो यत्रावलोकनेनापि न संप्रत्ययः समुत्पद्यते, किं पुनरनालोकनेनापि। कैतवमात्रकोपदर्शितप्रेमपल्लवा वल्ल-

---

किं जातं किं जज्ञे येन देवस्य चन्द्रापीडस्य पादारविन्दस्य चरणकमलस्य वन्दना नमस्कृतिः सैव प्रसादस्तेनासंविभज्यासंविभागीकृत्य विसृज्यामहे। ते तव वयं पादलग्नाश्चरणरेणवः पादधूलयः। तद्विज्ञाप्य विज्ञप्तिं कृत्वा देवीं कादम्बरीं देवस्य युवराजस्य पादप्रणामेनास्माकमागमनपरिश्रमं भवान्मेघनादः सफलयतु सफलीकरोतु। अन्यथोक्तवैपरीत्ये। एतावतीं भूमिमागत्य संभवे सति दर्शनयोग्यतायां सत्यामप्रत्यक्षीकृतं युवराजशरीरं यैस्तेऽप्रत्यक्षीकृतयुवराजशरीरास्ते च ते गताश्चेति कर्मधारयः। एवंविधा गताः सन्तो वयं देवदेवेन तारापीडेन किं वक्तव्याः किं कथनीयाः। अस्माभिर्देवस्तारापीडः किं विज्ञापयितव्यः किं वा निवेदयितव्य इत्यावेदिते ज्ञापिते देवी प्रमाणं यदादिशति देवी तत्कर्तव्यमिति विज्ञाप्य निवेद्य तूष्णीं स्थितवति मौनं कृतवति मेघनादे, तत्कालं समुत्प्रेक्षितं वितर्कितमनाश्वास्यमाश्वसनावार्जितं श्वशुरकुलस्य स्वपतिवंशस्य वैक्लव्यं विह्वलता यया सा तथा। शुचा शोकेन विलीयमानेव विलयं प्राप्यमाणेवान्तःसंचितं मध्ये संघातीकृतं बाष्पमश्र्वाकुलिते व्याकुलीभूते तरले चञ्चले तारके कनीनिके ययोरेवंभूताभ्यां लोचनाभ्यां नेत्राभ्यामापिबन्ती पानं कुर्वन्ती, उत्प्राबल्येन गद्गदिकया गद्गदस्वरेणावगृह्यमाणो निरुध्यमानः कण्ठो यस्याः सा तथा। कथंकथमपि महता कष्टेन चिराद्बहुकालेन कादम्बरी प्रत्युवाच प्रत्यब्रवीत्। हि निश्चितम्। तैर्लेखहारकैरगमनमयानमङ्गीकृतं स्वीकृतं तत्स्थान एव युक्तमेव। देवं चन्द्रापीडमनवलोक्यानिरीक्ष्यैवमेव यथागतं तथैव याताः पश्चाद्वलिताः सन्तस्तत्र तैः किमुच्यतां किं कथ्यताम्। अपि चेति युक्त्यन्तरे। अयमेवंविधो वृत्तान्त उदन्तो लोकातीतोऽनिर्वचनस्वरूपो यत्र यस्मिन्वृत्तान्तेऽवलोकनेनापि निरीक्षणेनापि न संप्रत्ययो न विश्वासः समुत्पद्यते संजायते। अनालोकनेनाप्यनिरीक्षणेनापि किं पुनर्भण्यते। सुतरामविश्वासो भवत्येवेति भावः। कैतवमात्रेण केवलदम्भेनोपदर्शिताः प्रकटिताः प्रेमपल्लवाः स्नेहकिसलया यैस्ते तथा वल्लभतममतिशयेन

---

टिप्प०—1 'कैतवमात्रोपदर्शितप्रेमफला वल्लभतमजीविता वयमपि यावत्पश्यामस्तम्' इत्येव पाठः। कपटमात्रेण प्रकटितं प्रेमफलम् ( प्रणयकार्यम् ) याभिस्ताः, अस्माभिः स्वप्रणयकार्यं दम्भरूपेणैव प्रकटितं यदि अस्माकं प्रेम सत्यमभविष्यत् तर्हि अस्माभिरपि जीवितमत्यक्ष्यत। अत एव—चन्द्रापीडादपि वल्लभतमं जीवितं यासाम् ईदृश्यो वयमिति।

---

पाठा०—१ विसर्ज्यामहे. २ कृतशरीराः. ३ देवेन. ४ च. ५ तत्कालम्. ६ गद्गदिकावगृह्यमाणकण्ठा; उद्गदिकावगृह्यमाणकण्ठी; उद्गदिकयावगृह्यमाणकण्ठी. ७ देवदेवम्. ८ किमुच्यताम्; किमुच्यन्तात एव. ९ अयमेवंविधो लोकातीतो वृत्तान्तः. १० फलाः.

भतमजीविता वयमपि यावत्पश्यामस्तं तावदनपेक्षितप्राणवृत्तयः स्नेहसं[1]द्भावनया सद्भृत्या न पश्यन्तीत्य[2]घटमानकमिदम्। तदपरिलम्बितं प्रवेश्यताम्। पश्यन्तु देवम्। सं[3]फलयित्वागमनपरिश्रमेण सार्धं लोचने ततो यास्यन्ति' इत्याज्ञानन्तरं च मेघनादेन प्रवेशितान्दू[4]रत एव समं बाष्पपातेन पञ्चाङ्गालिङ्गितमहीतलांश्चन्द्रापीडचरणवन्दनसद्भावनिहितोत्पक्ष्मनिभृतदृष्टींस्ताननन्यदृष्टिश्चि[5]रमिवालोक्य कादम्बरी स्वयमेवा[6]भाषत—

'भद्रमुखाः, परित्यज्यतामयं क्रमागतस्नेहसद्भावसु[7]लभः शोकावेगः। य[8]त्खल्वनालोचितावधि दुःखावसानमेव दुःखं तन्मरणभीरोर्भवतु नाम शोकावेगाय। यत्पुनः सुखोदर्कं तत्पुरःस्थितया सुखप्रत्याशयैवान्तरितं नापतति हृदये। तदेष वृत्तान्त एवंविधो येन न केवलमत्र निरवकाशता शोकस्य, प्रत्युत सुदूरभिन्नवृत्तेर्विस्मयस्यावसरः। किमत्र परिबोधनेन,

---

प्रियं जीवितं प्राणितं येषामेवंविधा वयमपि तं चन्द्रापीडं यावत्पश्यामोऽवलोकयामस्तह्येते लेखहारका अनपेक्षिता असमीहिताः प्राणवृत्तयो यैरेवंभूताः स्नेहस्य सद्भावो विद्यते यस्यामेवंविधया स्नेहसद्[1]भावनया सद्भृत्याः सदनुचरा न पश्यन्ति न विलोकयन्तीत्यघटमानकमयुक्तमिदम्। तदपरिलम्बितमविलम्बितं प्रवेश्[2]यतां प्रवेशं कार्यताम्। देवं चन्द्रापीडं पश्यन्त्ववलोकयन्तु। आगमनपरिश्रमेण प्रयासेन सार्धं लोचने नेत्रे सफलयित्वा कृतार्थीकृत्य ततस्तदनन्तरं यास्यन्ति गमिष्यन्तीत्याज्ञा निदेशस्तदनन्तरं च मेघनादेन प्रवेशितान्दूरत एव दविष्ठादेव बाष्पपातेनाश्रुपातेन समं द्वे जानुनी, द्वौ करौ, उत्तमाङ्गं चेति पञ्चाङ्गैरालिङ्गितमाश्लिष्टं महीतलं भूमितलं यैस्ते तथा तान्। चन्द्रापीडस्य चरणयोः पादयोर्वन्दनं नमस्करणं तस्य सद्[3]भावेऽस्तित्वे निहिताः स्थापिता उदूर्ध्वं पक्ष्म नेत्ररोम यासामेवंविधा निभृता निश्चला दृष्टयो दृशो यैस्ते तथा तान्। न विद्यतेऽन्यस्मिन्दृष्टिर्यस्याः सैवंभूता कादम्बरी चिरमिव चिरसदृशमालोक्य निरीक्ष्य स्वयमेवात्मनैवाभाषतावोचत्।

किं तदित्याह—**भद्रेति**। भो भद्रमुखाः शुभाननाः, क्रमागतः परम्परायातो यः स्नेहसद्भावः प्रेमसत्ता तेन सुलभः सुप्रापोऽयं शोकावेगः शुग्रयः परित्यज्यतां परिमुच्यताम्। अनालोचितोऽविमृष्टोऽवधिर्मर्यादा यस्य तत्तथा, दुःखमेवावसाने प्रान्ते यस्यैवं तद्दुःखमेव मरणभीरोः[4] कातरस्य। खल्विति निश्चयेन। शोकावेगाय भवतु। यत्पुनः सुखः सुखकृदुदर्क उत्तरकालजन्यं फलं यस्यैवंभूतं दुःखं पुरःस्थितयाग्रे वर्तमानया सुखप्रत्याशयैव सौख्यलिप्सयै[5]वान्तरितं व्यवहितं हृदये चित्ते नापतति नागच्छति। 'आयतिस्तूत्तरः काल उदर्कस्तद्भवं फलम्' इति हैमः। तत्तस्माद्धेतोरेष वृत्तान्त उदन्त एवंविधो येन कारणेन (न) केवलमत्र शोकस्य शुचो निरवकाशता निःप्रवेशता, प्रत्युत सुदूरं भि[6]न्ना वृत्तिर्वर्तनं यस्यैवंभूतस्य विस्मयस्याश्चर्यस्यावसरः प्रस्तावः। अत्रास्मिन्विषये परिबोधनेन ज्ञापनेन किम्। न किमपीत्यर्थः। एतदेव विशिनष्टि—अन्यत्र मनुष्येष्वदृष्टपूर्वो-

---

**टिप्प०**—1 'स्नेहसंभावनीयाः' इति पाठः। स्नेहेन संभावनीया आदरणीयाः। 2 'प्रवेश्यन्ताम्' (ते वार्ताहराः) इत्येव पाठः। 3 असंबद्धमिदम्। वन्दने यः सद्भावः प्रणयस्तेन निहिता उत्पक्ष्मा निभृता दृष्टियैस्तानित्यर्थः। 4 मरणाद्भीतस्यैव तदिदं दुःखं भोक्तव्यम्, अन्यथा तत्समये मरणमेवोचितमित्याशयः। 5 सुखस्य प्रत्याशा दुःखे व्यवधानभूता भवति, अत एव दुःखं न जायत इत्यर्थः। 6 अतिविरुद्धा वृत्तिर्यस्य, एवंविधस्थले विस्मयो न संभवतीत्याशयः।

---

**पाठा०**—१ सद्भावनीयाः. २ अघटमानम्. ३ सफलयन्तु. ४ अदूरतः. ५ चिरमवलोक्य. ६ अलपत्. ७ सुलभ. ८ न खलु.

अन्यत्राद्दष्टपूर्वो मनुष्येषु [1]प्रत्यक्षीकृत एवायं वृत्तान्तो भवद्भिरपि । [2]दृष्टं च पुरे[3]वाक्षततनोर्देवस्य वदनम् । सं[4]भाषणापि या देवेन विना न संभवति सापि संभावितैव । तद्गम्यताम[5]धुना वार्तोत्सुकमतेर्देवस्य पादमूलम् । न चायं प्रत्यक्षदृष्टोऽप्युपरतशरीराविनाशवृत्तान्तः प्रकाशनीयः । दृष्टोऽस्माभिरच्छोदसरसि तिष्ठत्येतदेवावेदनीयम् । [5]यतः कारणादुपरतिः खल्ववश्यंभाविनी प्राणिनां [6]कथंचित्प्रत्ययमुत्पादयति । शरीराविनाशः पुनः प्राणैर्विनाकृतानां दृश्यमानोऽप्यश्रद्धेय एव । तदस्याऽऽवेदनेन सुदूरस्थितमपि गुरुजनं मरणसंशये निक्षिप्य वर्तमाने प्रयोजनमेव नास्ति । प्रत्यागतजीविते जीवितेश्वरे स्वयमेवायमद्भुतभूतोऽर्थो गु[7]रुजनेष्वाप्रकटीभविष्यति' ।

इत्येवमादिष्टाश्च ते [8]व्यज्ञापयन्—'देवि, कि[9] विज्ञापयामः । द्वाभ्यामेवापरिज्ञानमस्य वस्तुनः संभवेदगमनेनास्मदीयेनाकथनेन वा । तदस्माकं तु ह[10]स्ते द्वयमप्येतन्नास्ति । युवराजवैशम्पायनयोर्[11]वार्तां विना दुःखं तिष्ठता देवेन तारापीडेन देव्या विलासवत्यार्यशुकनासेन

---

ऽनवलोकितपूर्वोऽयं वृत्तान्तो भवद्भिरपि युष्माभिरपि प्रत्यक्षीकृत एव । साक्षात्कृत एवेति भावः । अक्षततनोरखण्डितशरीरस्य देवस्य चन्द्रापीडस्य वदनं पुरेव दृष्टमवलोकितम् । संभाषणाप्यन्योन्यालापोऽपि या देवेन विना न संभवति नोपपद्यते सापि संभाषणापि संभावितैव संभावनाविषयीकृतैव । तदिति हेत्वर्थे । तत्तस्मात्कारणाद्वार्तायां प्रवृत्तौ उत्सुकोत्कण्ठिता मतिर्बुद्धिर्यस्यैवंविधस्य देवस्य तारापीडस्य पादमूलं चरणसमीपं युष्माभिरधुना गम्यतां यायताम् । अयं प्रत्यक्षदृष्टोऽपि साक्षान्निरीक्षितोऽप्युपरतं निर्जीवं यच्छरीरं तस्याविनाशस्तथैवावस्थानं तस्य वृत्तान्त उदन्तो न च प्रकाशनीयो न प्रकटीकार्यः । तर्हि किं वाच्यमित्याशयेनाह—दृष्ट इति । अच्छोदसरसि तिष्ठति विद्यते, दृष्टो विलोकितोऽस्माभिरेतदेवावेदनीयं कथनीयम् । यतः कारणादुपरतिर्मरणम् । खलु निश्चयेन । प्राणिनामवश्यंभाविनी कथंचित्प्रत्ययं विश्वासमुत्पादयति । प्राणैर्विनाकृतानां रहितानां शरीराविनाशः पुनर्दृश्यमानोऽपि विलोक्यमानोऽप्यश्रद्धेय एवास्थारहित एव । तदस्यावेदनेन ज्ञापनेन सुदूरस्थितमप्यतिदविष्ठस्थितमपि गुरुजनं श्वशुरजनं मरणसंशये मृत्युद्वापरे निक्षिप्य वर्तमाने प्रयोजनमेवार्थ एव नास्ति । प्रत्यागतं पश्चादागतं जीवितं यस्यैवंविधे जीवितं प्राणितं तस्य ईश्वरे चन्द्रापीडे स्वयमेवायमद्भुतोऽर्थो गुरुजनेषु श्वशुरकुलेष्[1]वा समन्तात्प्रकटीभविष्यति सर्वं विदितं भविष्यति ।

इत्येवमादिष्टाः कथिताश्च ते व्यज्ञापयन्विज्ञप्तिं चक्रुः । हे देवि, किं विज्ञापयामः कां विज्ञप्तिं कुर्मः । अनिवेदनरूपस्यास्य वस्तुनो द्वाभ्यामेवापरिज्ञानं संभवेत् । एतदेव स्पष्टयन्नाह—**अगमनेनेति** । अस्मदीयेनाऽगमनेनाऽयानेनाऽकथनेन वाऽनिवेदनेन वा, तद्द्वयमप्यस्माकं तु हस्ते पाणौ नास्ति । अस्मदधीनं न विद्यत इत्यर्थः । तत्प्रदर्शयन्नाह—**युवराजेति** । युवराजश्चन्द्रापीडो वैशम्पायनो मन्त्रिसुत एतयोर्वार्तां प्रवृत्तिं विना दुःखं तिष्ठता कृच्छ्रेण स्थितिं कुर्वता देवेन तारापीडेन देव्या विलासवत्यार्यशुकनासेन च सं[3]भाव्य विचार्य प्रेषि-

---

**टिप्प०—1** नीचैः पाठो द्रष्टव्यः । जीवाद्विना संभावना ( शरीरगता कान्तिः ) न संभवति, सा भवद्भिः संभावितैव दृष्टैवेत्याशयः । 2 'आङ्' निपातस्य नासीत्स्वारस्यम् । अत एव 'गुरुजने जने वा' इति पाठगतस्य 'वा'पदस्य सत्तां सूचयति । 3 'संभाष्य' ( सौम्याः ! गम्यतामित्यादरेण संबोध्य ) इत्येव पाठो योग्यः ।

---

**पाठा०—**१ प्रत्यक्षतः. २ च दृष्टं च; दुष्टो दुष्टं च. ३ पुनरेवाक्षत; पुनरेवाविकृत. ४ संभावनापि या जीवाद्विना. ५ यतः कारणम्; किं कारणम्. ६ न कथंचित्. ७ गुरुजने जने वा प्रकटीभविष्यति. ८ व्यज्ञपयन्. ९ किंचिज्ज्ञापयामः. १० हस्तात्. ११ विना वार्ताम्; वार्तया विना.

च संभाव्य प्रेषितानामप्रोषितजीवितानामगमनं तु दूरापेतमेव। गत्वापि दयिततमतनयवार्ताश्रवणलालसस्य राज्ञो देव्या आर्यशुकनासस्य दुःखप्लुताक्षीण्युद्वीक्ष्य मुखानि निर्विकारवदनानामस्माकमवस्थानमशक्यमेव' इति विज्ञापिता तैः 'एवमेतत्' इत्युक्त्वा कादम्बरी मेघनादमवादीत्—'मेघनाद, वेद्मि संस्तुतजनस्यैतदनुचितमिति। तथापि गुरूणां चेतःपीडामवेक्ष्यमाणया मयैवमभिहितम्। इतरदपि दुःखमायाति। कीदृशं भवति किं पुनरिदं महावज्रपतनसदृशम्। तदेतदपि भवतु। एभिः सहापरः कश्चिच्छ्रद्धेयवचाः प्रत्यक्षदृष्टसकलवृत्तान्तः संप्रत्ययाय व्रजतु' इति।

एवमादिष्टस्तु मेघनादो व्यज्ञापयत्—'देवि, राजलोके तु का कथा। भृत्यवर्गोऽपि सकल एवायं कन्दमूलफलाशी निश्चयं कृत्वा स्थितो यथास्माकं मध्यादेकेनापि देवपादान्विना न प्रतीपं गन्तव्यमिति। भृत्या अपि त एव ये संपत्तेर्विपत्तौ सविशेषं सेवन्ते। समुन्नम्यमानाः सुतरामवनमन्ति। आलाप्यमाना न समालापाः संजायन्ते। स्तूयमाना

---

तानां प्रहितानामप्रोषितजीवितानाममृतानामगमनं तु दूरापेतमेव दूरापास्तमेव। द्वितीयं पक्षं प्रतिक्षिपन्नाह—**गत्वेति**। तत्र गत्वापि दयिततमोऽतिवल्लभो यस्तनयः सुतस्तस्य वार्ता प्रवृत्तिस्तस्याः श्रवणमाकर्णनं तत्र लालसस्य सस्पृहस्य राज्ञो देव्या आर्यशुकनासस्य दुःखेन प्लुतानि ब्रुडितान्यक्षीणि येष्वेवंविधानि मुखानि वक्त्राण्युत्प्राबल्येन वीक्ष्य निरीक्ष्य निर्विकारवदनानां शोकादिविकृतिवर्जितानामस्माकमवस्थानमशक्यमेव दुष्करमेव। तैर्लेखहारकैरिति विज्ञापितेति निवेदिता एवमेतत्सत्यमेवेदमित्युक्त्वा कादम्बरी मेघनादमवादीदब्रवीत्। किं तदित्याह—**मेघनादेति**। हे मेघनाद, अहं वेद्मि जानामि संस्तुतजनस्य परिचितजनस्यैतदनिवेदनरूपमनुचितमयोग्यमिति। तथापि गुरूणां श्वशुरादीनां चेतःपीडामवेक्ष्यमाणया विलोक्यमानया मयैतत्पूर्वोक्तमभिहितं कथितम्। इतरदप्येतद्भिन्नमपि दुःखमायाति तदा कीदृशं महावज्रपतनसदृशं महापविपाततुल्यं भवति। किं पुनरिदं दुःखम्। तदेतदपि 'तुष्यतु दुर्जनः' इति न्यायेन वज्रपतनोपमं दुःखमपि भवति पततु। परमेभिर्लेखहारकैः सह श्रद्धेयं मान्यं वचो यस्य स तथा प्रत्यक्षं दृष्टोऽवलोकितः सकलवृत्तान्तः समग्रोदन्तो येनैवंविधोऽपर एतद्भिन्नः कश्चित्संप्रत्ययाय विश्वासाय व्रजतु गच्छतु।

एवमादिष्टस्त्वेवं प्रोक्तस्तु मेघनादो व्यज्ञापयत्। हे देवि राजलोके नृपवर्गे तु का कथा का वार्ता कथ्यते। सकल एवायं भृत्यवर्गोऽपि सेवकसमूहोऽपि कन्दमूलफलान्यश्नातीत्येवंशील इति निश्चयं निर्णयं कृत्वा स्थितोऽस्ति निषिद्धोऽस्ति। कोऽसौ निश्चय इत्यपेक्षायामाह—**यथेति**। यथास्माकं मध्यादेकेनापि देवपादांश्चन्द्रापीडचरणान्विना न प्रतीपं विलोमं गन्तव्यं न व्याघुट्य यातव्यमिति। भृत्या अपि अनुचरा अपि त एव ये संपत्तेः संपत्तितः विपत्तौ विपदि सविशेषं पूर्वतोऽधिकं सेवन्ते सपर्यां कुर्वन्ति। समुन्नम्यमानाः समुन्नतिं प्राप्यमाणाः सुतरामत्यर्थमवनमन्ति नम्रीभवन्ति। आलाप्यमानाः संभाष्यमाणाः सम आलापो येषां ते समालापाः सदृशभाषिणो न संजायन्ते न भवन्ति। स्तूयमाना नूयमाना नोत्सिच्यन्ते नोत्सेकं गच्छन्ति।

---

**टिप्प०**—1 'अवेक्ष्यमाणया' इति स्थाने अयं पाठो लेखकदोष एव। यदि तु टीकाकारकृपा तर्हि तु कोऽस्य पुरस्कारः? 2 'इतरदपि दुःखमतर्कितं कीदृशं भवति, (अर्थात् साधारणप्रियवियोगजनितदुःखमेव अनिर्वाच्यं भवति), इदं (पुत्रवियोगजम्) तु किं पुनः? अयमेव पाठः।

---

**पाठ०**—१ संभाष्य. २ अगमनं दूरत एव. ३ अवस्थानमनुचितमशक्यमेव. ४ अवेक्षमाणया; अपेक्षमाणया. ५ आपतति; अतः. ६ श्रद्धेयवाक्यः. ७ व्रजतु संप्रत्ययायेति. ८ भृत्यवर्गेऽपि.

नोत्सिच्यन्ते । क्षिप्यमाणा नापरागं[1] गृह्णन्ति । उच्यमाना न प्रतीपं भाषन्ते । पृष्टा हितं[2]प्रियं विज्ञपयन्ति । अनादिष्टाः कुर्वन्ति । कृत्वा न जल्पन्ति । पराक्रम्य न विकत्थन्ते । विकत्थ्यमाना[3] अपि लज्जामुद्वहन्ति । महाहवेष्वग्रतो ध्वजभूता इव लक्ष्यन्ते । दानकाले पलाय्य पृष्ठतो निलीयन्ते । धनात्[4]स्नेहं बहु मन्यन्ते । जीवितात्पुरो मरणमभिवाञ्छन्ति । गृहादपि स्वामिपादमूले सुखं तिष्ठन्ति । येषां च तृष्णा चरणपरिचर्यायाम्, असंतोषो हृदयाराधने, [5]व्यसनमाननावलोकने, वाचालता गु[6]णग्रहणे, कार्पण्यमपरित्यागे भर्तुः । ये च विद्यमानेऽपि स्वात्म[7]न्य[8]स्वाधीनसकलेन्द्रियवृत्तयः, पश्यन्तोऽप्यन्धा इव, शृण्वन्तोऽपि बधिरा इव, वाग्मिनोऽपि मूका इव, जानन्तोऽपि जडा इव, अनुपहतकरचरणा अपि पङ्गव[9] इव, क्लीबा इवाकिंचित्कराः, स्वात्मनः[10] स्वामिचि[11]न्तादर्शे प्रतिबिम्बवद्वर्तन्ते । तत्स[12]र्वमेवंस्थितो

---

क्षिप्यमाणास्तिरस्क्रियमाणा नापरागं विरक्ततां गृह्णन्त्याददते । उच्यमानाः । विरूपमिति शेषः । भाष्यमाणा न प्रतीपं प्रतिकूलं भाषन्ते ब्रुवते । पृष्टा अनुयोजिता हितं च तत्प्रियं च हितप्रियं विज्ञपयन्ति निवेदयन्ति । अनादिष्टा अकथिताः कुर्वन्ति । कार्याणीति शेषः । कृत्वा न जल्पन्ति न कथयन्ति । पराक्रम्य पराक्रमं कृत्वा न विकत्थन्ते न श्लाघन्ते । विकत्थ्यमाना अपि श्लाघ्यमाना अपि लज्जां त्रपामुद्वहन्ति धारयन्ति । महाहवेषु महारणेष्वग्रतो ध्वजभूता इव केतुभूता इव लक्ष्यन्ते विलोक्यन्ते । 'अभ्यामर्दः समाघातः सङ्ग्रामाभ्यागमाहवाः' इत्यमरः । दानकाले पलाय्य पलायनं कृत्वा पृष्ठतो निलीयन्ते निलीना भवन्ति । धनाद्द्रव्यात्स्नेहं प्रेम बहु मन्यन्तेऽधिकं गणयन्ति । जीवितात्प्राणितात्पुरोऽग्रे । स्वामिन इति शेषः । मरणं मृत्युमभिवाञ्छन्त्यभिलषन्ति । गृहादपि सौधादपि स्वामिपादमूले स्वकीयाधीशचरणोपान्ते सुखं यथा स्यात्तथा तिष्ठन्ति । येषां च सेवकानां चरणपरिचर्यायां पादसेवायां तृष्णा स्पृहा । हृदयाराधने चित्तप्रसादनेऽसंतोषः । आननावलोकने मुखनिरीक्षणे व्यसनमासक्तिः । वाचालता मुखरता गुणग्रहणे परगुणानां शौर्यादीनामादाने । भर्तुः स्वामिनोऽपरित्यागेऽमोचने कार्पण्यं कृपणत्वम् । ये च सेवका विद्यमानेऽपि स्वात्मनि जीवति सत्यप्यस्वाधीनसकलेन्द्रियवृत्तयोऽस्वाधीना अनायत्ताः सकलेन्द्रियाणां वृत्तयो येषां ते तथा । पश्यन्तोऽपि विलोकयन्तोऽप्यन्धा इव गताक्षा इव । परच्छिद्रान्वेषणेऽन्धत्वमिति भावः । शृण्वन्तोऽप्याकर्णयन्तोऽपि बधिरा इव । परापवादश्रवण इत्यर्थः । वाग्मिनोऽपि वचस्विनोऽपि मूका इवावाच इव । परदूषणवक्तव्यतायामिति भावः । 'वाग्मी वाचस्पतौ पटौ' इति विश्वः । जानन्तोऽप्यवबुध्यन्तोऽपि जडा इव मूर्खा इव । प्रभुप्रतिपादितकथादिश्रवणेष्वित्यर्थः । कराश्च चरणाश्च करचरणम् । 'द्वन्द्वश्च प्राणितूर्य–' इत्येकवद्भावः । अनुपहतमखण्डितं करचरणं येषां ते तथैवंविधा अपि पङ्गव इव श्रोणा इव, क्लीबा इव षण्ढा इव, अकिंचित्करा निरर्थकाः । स्वात्मनः[2] स्वस्वामिनोऽधिपतेश्चिन्ता सैवादर्शो मुकुरस्तस्मिन्प्रतिबिम्बवत्प्रतिच्छायवद्वर्तन्ते । तत्सर्वमेवाव्यक्तं

---

**टिप्प०**—1 'अनुपहतकरचरणा अपि कुणय इव पङ्गव इव' इत्येव पाठः । कररहितः कुणिः, विकलपादः पङ्गुः, ते तु करपदसत्तायामपि तद्रहिता इत्यर्थः । 2 'स्वात्मना स्वामिचित्तादर्शे प्रतिबिम्बवत्' इत्येव पाठः । स्वामिनश्चित्तरूपे आदर्शे ( दर्पणे ) स्वात्मना प्रतिबिम्बवत् वर्तन्ते, स्वामिनश्चित्ते सर्वदा येषां स्थितिर्भवतीत्याशयः ।

---

पाठा०—१ अपराधम्; अपरज्यन्ते. २ प्रियहितम्; प्रियं हितम्. ३ कथ्यमानाः. ४ नापि. ५ व्यसनतानवलोकने. ६ गुणाग्रहणे. ७ आत्मनि. ८ न स्वाधीन. ९ कृपणा इव पङ्गवः; कुणप इव पङ्गवः. १० स्वात्मना. ११ चित्ता. १२ सर्वः.

भृत्यलोकः[1]। देवस्य च स्थाने देवी वर्तते। तदाज्ञापितं कृतमवधारयतु देवी' इत्युक्त्वा मेघनादस्त्वरितकनामानं[2] कुमारबालसेवकमाहूय[3] तैः सह व्यसर्जयत्।

अथ[4] सुबहुदिवसापगमे वार्ता[5] विनोत्ताम्यन्ती[6] चन्द्रापीडस्यैवागमनायोपयाचितं[7] कर्तुमवन्तीनामनगरीदेवतानामवन्तीमातृणामायतनं[8] निर्गता विलासवती 'देवी, दिष्ट्या वर्धसे। प्रसन्नास्तेऽवन्तिमातरः। परागता युवराजवार्ताहराः[9]' इति सहसैव संभ्रमप्रधावितात्[10] परिजनादुपश्रुत्यानन्दबाष्पजललुलितया[11] जलार्द्रेन्दीवरस्रजेव विक्षेपदीर्घया दृष्ट्यार्चयन्तीव चिरं दृष्ट्वा ककुभः, मृगाङ्गनेव परिभ्रष्टबालपोता, पूत्कृत्य[12] प्राकृतेवार्ता, 'केनेदममृतं मे वाक्छलाद्वृष्टम्? कस्यानुकम्पास्मिञ्जने जाता? केन दृष्टाः[13]? कियद्दूरे वर्तन्ते[14]? किं वा तैः[15] कथितं

---

नपुंसकम्। अयमेवंस्थितो भृत्यलोको गोप्यजनः। देवस्य च चन्द्रापीडस्य च स्थाने देवी वर्तते। तत्तस्मादाज्ञापितमादिष्टं कृतं निष्पादितं देवीकादम्बर्यवधारयतु जानातु। इत्युक्त्वेत्यभिधाय मेघनादस्त्वरितकनामानं कुमारबालसेवकं चन्द्रापीडभृत्यमाहूयाह्वानं कृत्वा तैर्लेखहारकैः सह व्यसर्जयत्प्राहिणोत्।

**अथेति।** तत्प्रेषणानन्तरं सुबहूनामनेकेषां दिवसानामपगमे सति वार्ता प्रवृत्तिं विनोत्ताम्यन्ती खेदं कुर्वन्ती चन्द्रापीडस्यैवागमनायोपयाचितं वाञ्छितं कर्तुं विधातुमवन्तीनामनगरीदेवतानां विशालापुरीदेवानामवन्तीमातॄणां ब्राह्मयाद्या मातरः सप्त तासां चायतनं गृहं निर्गता निर्याता। इतश्च हे देवि, त्वं दिष्ट्या भाग्येन वर्धसे वृद्धिं प्राप्नोषि। प्रसन्नास्ते तवावन्तिमातरः। युवराजवार्ताहराश्चन्द्रापीडकिंवदन्तीकथकाः। संदेशहरा इत्यर्थः। परागताः समायाता इति सहसैवैकपद एव संभ्रमेणादरेण प्रधावितात्परिजनात्सेवकजनादुपश्रुत्याकर्ण्यानन्दबाष्पजलं हर्षाश्रुपानीयं तस्मिंलुलितया लुठितया जलक्लिन्नया। नीलसाधर्म्यादुत्प्रेक्षते—जलार्द्रेन्दीवरस्रजेव जलनुन्ननीलपद्ममालयेवार्चयन्ती पूजयन्तीव विक्षेपेण दीर्घया दृष्ट्या दृशा चिरं चिरकालं ककुभो दिशो दृष्ट्वावलोक्य। परिभ्रष्टो गतो बालो मूर्खः पोतः शिशुर्यस्याः सा तथा। 'बालोऽर्भके च मूर्खे स्यात्' इत्यमरः। एवंविधा मृगाङ्गनेव हरिणीव पूत्कृत्योच्चै रटित्वा प्राकृतेव पामरेवार्ता पीडिता केन वार्ताकेन वाक्छलाद्वचनोपधेरिदममृतं पीयूषं वृष्टम्। तेन वचनच्छलादमृतमेव वृष्टमिति भावः। अस्मिञ्जने कस्य पुंसोऽनुकम्पा दया जाता समुत्पन्ना। केन पुंसा दृष्टा अवलोकिताः। क्व वा दृष्टाः कुत्र दृष्टाः। कियद्दूरे दविष्ठे वर्तन्ते। किं वा तैः कथितं प्रोक्तं मे मम वत्सस्य पुत्रस्य कुशलं कल्याणमितीतस्ततः पृच्छन्त्येव प्रश्नं कुर्वन्त्येव तांल्लेखहारकान्दूरत एवाद्राक्षीद्विलोकितवती। त्वरितकसमेतांस्तांल्लेखहारकानालोक्य निरीक्ष्य तस्मिन्नेव मातृगृहाङ्गणे स्थिता विलासवती तेषामाह्वानायाहूतायादिदेशाज्ञापितवती। कथंभूतांल्लेखहारकान्।

---

**टिप्प०**—1 'तत्सर्व एवायमेवं स्थितो भृत्यलोकः' इत्येव पाठः। अयं भृत्यलोकः सर्व एवम् (पूर्वोक्तरूपेण) स्थितः। 2 यदाज्ञापितं तत्तस्मिन्समये एव कृतं जानातु भवती इत्यर्थः। 3 टीकाकारस्याद्भुतं साहसं यत्किञ्चिदप्यज्ञात्वा टीकाकरणे गल्भनम्। 'चन्द्रापीडो मे समागच्छेत्तर्हि एवमुपहारान् दद्याम्' इति प्रार्थना—'दीयते यत्तु देवेभ्यो मनोराज्यस्य सिद्धये। उपयाचितकं दिव्यं दोहदं तद्विदुर्बुधाः॥' इति जटाधरः। 4 'अवन्तिनगरीदेवतानाम्' इत्येवोचितम्।

---

**पाठा०**—१ भृत्यजनः. २ त्वरितः. ३ कुमारसेवकम्. ४ अथ सा बहु. ५ वार्तया. ६ उत्ताम्यती. ७ उपयाचितकम्. ८ अवन्तीनगरदेवतानामवन्तीमातृणाम्. ९ वार्ता. १० ससंभ्रमप्रतिधावितात्. ११ परिचारिकाजनात्. १२ फूत्कृत्य. १३ दुष्टः. १४ वर्तते. १५ तेन; अनेन.

कुशलं मे वत्सस्य ?' इति पृच्छन्त्येवाद्राक्षीत् । इतस्ततो यथादर्शन[1]संबन्धशः प्रधावितेन नरपतिप्रतिबद्धेनाप्रतिबद्धेन चोज्जयिनीनिवासिना जनेन[2] "आगतः युवराजः, कियद्दूरे भवद्भिः परित्यक्तः, दिवसेष्वेतेषु क्व वर्तते, क्व वा भवद्भिर्यात्वा[3] दृष्टः, क्व वातिकष्टस्तेनातिवाहितो वाहनमात्रसाधनेन धाराधरागमः । तुरगपृष्ठगतस्य मन्ये वहत एवास्यापक्रान्तः । त्वरितक एतद्वेत्ति, किमनेन विदितेनापि ? एतत्कथयतु, यदर्थमयं क्लेशः कृतो युवराजेन स[4] दृष्टो वैशम्पायनः प्रत्यानीतो वा ? मिलितो[5]ऽस्य पत्रलेखासहितो मेघनादः ? दत्तः[6] कथं कश्चिदपि संदेशो देववर्धनेन ? मे मित्रमेवासावद्यारभ्य । राभसिकतयैव विनाशं[7] बलाद्गतस्य बलधर्मणो वत्सस्य बिभेम्येव वार्तां पृच्छन्नपि[8] । जीवत्यसावस्य वाजी यो[9] युवराजेन प्रसादीकृतः । प्रसीदत[10], सादिनां प्रथमस्य पृथुवर्मणो[11] मातुलस्य मे कथयत वार्ताम् । उत्प्रे-

---

इत्येतानि चान्यानि च प्रतिपदं प्रतिचरणन्यासं पृच्छ्यमानानपि प्रश्नविषयीक्रियमाणानप्यदत्तवचसोऽकथितप्रतिवचसः । एतानि कानीत्यपेक्षायामाह—**यथादर्शनेति** । यथादर्शनं[1] यथावलोकनं तस्य संबन्धशः संबन्धेभ्यः प्रधावितेनातित्वरितेन नरपतिप्रतिबद्धेन नृपसक्तेनाप्रतिबद्धेन राजसपर्यावर्जितेन चोज्जयिनीनिवासिना विशालावास्तव्येन जनेन, आगतः समायातो युवराजश्चन्द्रापीडो भवद्भिर्युष्माभिः कियद्दूरे परित्यक्तो मुक्तः । एतेषु दिवसेषु क्व वर्तते । भवद्भिर्युष्माभिर्लेखहारकैः क्व वा कुत्र यात्वा गत्वा दृष्टोऽवलोकितः । तेन युवराजेन वाहनमात्रसाधनेन केवलाश्वसैन्येनातिकष्टो[2]ऽतिदुःखदो धाराधरागमो जलदसमयः क्व वातिवाहितः कुत्रातिक्रान्तः । अहं च मन्येऽस्य युवराजस्य तुरगपृष्ठगतस्याश्वारूढस्य वहत एव व्रजत एवापक्रान्तो गतो वर्षासमयः । त्वरितक एतत्पूर्वोक्तं वेत्ति जानाति । अनेन विदितेनापि ज्ञातेनापि किम् । एतन्मदुक्तं कथयतु ब्रूहि यदर्थं यद्धेतोर्युवराजेन चन्द्रापीडेनायं क्लेशः कृतो विहितः । स वैशम्पायनो दृष्टोऽवलोकितः प्रत्यानीतो वा पश्चादानीतो वा । अस्य युवराजस्य पत्रलेखासहितो मेघनादो मिलितः संघटितः । देववर्धनेन तन्नाम्ना पुंसा कश्चिदपि संदेशो वाचिकं कथं दत्तो वितीर्णः ? अद्या[3]रभ्याद्यप्रभृत्यसौ मे मम मित्रं वर्तते । राभसिकतयैवानालोचितवृत्त्यैव बलाद्धठाद्विनाशं बलात्पाथेयाद्गतस्य प्राप्तस्य बालधर्मणो वत्सस्य पुत्रस्य वार्तां किंवदन्तीं पृच्छन्नपि प्रश्नयन्नप्यहं बिभेम्येव भयं प्राप्नोम्येव । असौ जीवति[4] प्राणित्यस्य युवराजेन चन्द्रापीडेन यो वाजी तुरंगमः प्रसादीकृतः प्रदत्तः । यूयं प्रसीदत प्रसन्ना भवत । सादिनां यन्तॄणां मध्ये प्रथमस्याद्यस्य पृथुवर्मणो मातुलस्य

---

टिप्प०—1 'यथादर्शनं संवशः प्रधावितेन' इत्येव पाठः । टीकाकारमहाभागेन विचित्ररूपं कृत्वा स व्याख्यातः । यथादर्शनम् ( दर्शनकालोत्तरमेव ) पृथक् पृथक् समूहीभूय प्रधावितेन उज्जयिनीवासिना जनेन 'इति···पृच्छ्यमानान्' इति तदर्थः । 2 'क्व वातिकष्टैस्तेनातिवाहितः' इत्येव पाठः । न किल जलदकालः कष्टः । अत एव पाठस्वारस्यं विचार्यम् । 3 भ्रष्टीकृतोऽत्रापि पाठः । 'मे मित्रमेव असौ (देववर्धनः) । अद्यारभ्य राभसिकतयैवात्मना बलाद्गतस्य' इत्येव पाठः । राभसिकतया ( वेगशालितया, अनालोचितप्रवृत्ततया वा ) हठादेव स्वतः ( स्वेच्छया ) गतस्य, इति तदर्थः । 4 अत्रापि पाठनिर्माणे हस्तलाघवम् । 'जीवत्यसौ, अस्य वाऽऽजीवो युवराजेन प्रसादीकृतः ?' असौ ( बलधर्मा ) जीवति ? असै युवराजेन आजीवः ( जीवनोपायः, वेतनम् ) किमु प्रसादीकृतः, इत्येव पाठः । परीक्ष्यतां तारतम्यं सहृदयैः ।

---

पाठा०—१ यथादर्शनं सर्वशः. २ अनुगतः; आयातः; ३ गत्वा. ४ दृष्टः सः. ५ मिलितो वास्य; मिलितो वा तस्य. ६ न दत्तः. ७ आत्मना. ८ प्रष्टुमपि. ९ वो. १० प्रसीदतास्य. ११ पृथुवर्मनः.

क्षामहे महानश्ववारैरनुभूतः क्लेश इति। कुशलं महाश्वपतेरश्वसेनस्य? श्वशुरोऽसावस्माकम्। विस्मयः कृतोऽस्मत्पित्रापि, यच्चिह्नकमपि भवतां हस्ते न किंचित्प्रहितम्। आहितभर एवासौ युवराजभवने दृष्टो भवद्भिर्भ्राता मे भरतसेनः? सपरिजनस्य सेनापतेर्भद्रं भद्रसेनस्य? सेवाव्यसनी सूनुर्मे कुमारवर्मा। तत्र चलगतिर्बलाधिकृतस्य का वार्तावन्तिसेनस्य? रोषितस्तेनासीन्नासीरार्थं युवराजः। राजकुले कः प्रसादवित्तो वर्धनो मान्यते वा? केन वा किं लब्धमेतावद्भिर्दिवसैः? राजनिका बहवः खल्वभिनवसेवका जाताः। यातु तावत्सर्वमेवान्यत्। येन दृष्टः स कथयतु सर्वसेनसूनोर्वीरसेनस्य वार्ताम्। पितर्युपरते प्रथममेव स प्रविष्टो यात्राम्। मात्राऽस्य दुःखान्तरितप्रत्यग्रपतिमरणशोकादशनक्रियैव परित्यक्ता। न विद्म एवं कथं सा जीवति' इत्येतानि चान्यानि च प्रतिपदं पृच्छ्यमानानप्यदत्तवचसो नासाग्रस्थितमन्युगर्भदृष्टीनाविष्टानिवाध्वश्रमनिःसहाङ्गानपि पदाकृष्टिसंभावितोद्यमाऽऽयासि-

---

मातृभ्रातुर्वार्तां प्रवृत्तिं कथयत। उत्प्रेक्षामह आशङ्कामहेऽश्ववारैः सादिभिर्महान्भूयान्क्लेशोऽनुभूत इति। महाश्वपतेर्महाश्वसाधनाधिपतेरश्वसेनस्य कुशलं भद्रं वर्तते। अस्माकमसौ श्वशुरो भवति। अस्मत्पित्राप्यस्मदीयजनकेनापि विस्मयः कृतः, भवतां हस्ते यत्किंचिच्चिह्नकमप्यभिज्ञानकमपि न प्रहितं न प्रेषितम्। आहितः स्थापितो भरो भारो यस्मिन्नेवंविधोऽसौ युवराजभवने भवद्भिर्भ्राता मे भरतसेनो दृष्टोऽवलोकितः। सपरिजनस्य सपरिच्छदस्य सेनापतेर्भद्रसेनस्य भद्रं वर्तते। सेवाव्यसनी कुमारवर्मा मे मम सूनुः पुत्रः। तत्र चलगतिर्बलाधिकृतस्यावन्तिसेनस्य का वार्ता किंवदन्ती। तेनावन्तिसेनेन नासीरार्थमग्रयानार्थं युवराजो रोषितः कोपित आसीत्। 'नासीरं त्वग्रयानं स्यादवमर्दस्तु पीडनम्' इति हैमः। राजकुले नृपकुले को वा मान्यते पूज्यते, प्रसादे प्रसन्नतायां वित्तं यस्यैवंभूतो वर्धमानो वृद्धिं प्राप्यमाणः। एतावद्भिर्दिवसैर्दिनैः केन वा किं लब्धं किं प्राप्तम्। अनुजीविष्विति शेषः। राजनिका राज्ञः संबन्धिनः। खलु निश्चयेन। बहवोऽनेकेऽभिनवा नूतनाः सेवकाः सपर्याकारिणो जाताः संपन्नाः। यातु तिष्ठतु तावत्सर्वमेवान्यदितरत्। अव्यक्ते नपुंसकम्। एतेन नवीनसपर्याकारिवार्तायां सर्वथानादरः सूचितः। येन दृष्टो वीक्षितः स कथयतु निवेदयतु सर्वसेनसूनोर्वीरसेनस्य वार्ता कुशलम्। पितरि जनक उपरते मृते सति प्रथममेवादावेव स यात्रां व्रज्यां प्रविष्टो गतः। अस्य वीरसेनस्य मात्रा जनन्या दुःखेन सूनुसक्तेनान्तरितो व्यवहितो यः प्रत्यग्रो नूतनः पतिमरणशोको भर्तृमृत्युशुक् तस्मादशनक्रियैव भोजनविधिरेव परित्यक्तोज्झिता। न विद्मो न जानीम एवममुना प्रकारेण सा कथं जीवति कथं प्राणिति। आदिदेशेत्यन्वयस्तु पूर्वमेवोक्तः। इतो लेखहारकान्विशेषयन्नाह—**नासेति**। नासाग्रे नासिकाप्रान्ते संस्थितो मन्युः दैन्यं गर्भे यस्या एवंविधा दृष्टीर्दृशो येषां ते तथा तान् आविष्टानिव भूतग्रस्तानिवाध्वश्रमेण निःसहान्यसक्तान्यङ्गानि येषामेवंविधानपि पदानामाकृष्टिराकर्षस्तेन संभावितोऽनुमितो य उद्यम

---

टिप्प०—1 अत्रापि पाठभ्रंशः 'सेवाव्यसनी सूनुर्मे कुमार(कपाल)वर्मा, तत्र अवलगति बलाधिकृतः? (मम सूनुविषये सेनाधिकारी सज्जते, तदनुकूलोस्ति?), तस्य का वार्ताऽवन्तिसेनस्य?' इति पाठः। 2 धन्यं व्याकरणं टीकाकारपुंगवस्य। 'आजीवनिकाः (ग्रासाच्छादनमात्रभागिनः) बहवः खल्वभिनवसेवका जाताः' ग्रासाच्छादनमात्रमादाय बहवः पामरा नवीनाः सेवका जाता इति तेषामाक्रोशः। 3 दृष्टय इत्युचितम्।

---

पाठा०—१ पित्रा स्वचिह्नकम्. २ कलापवर्मा; कपालवर्मा. ३ तत्र लगति; तत्र चलति; तत्रावलगति. ४ बलाधिकृतस्तस्य. ५ वर्तमाने. ६ आजीवनिकाः. ७ एवं. ८ अदत्तप्रतिवचसः

तया गत्या गच्छतश्चातिमलिनपटच्चराच्छादितानसंस्कारमलिनकायाननेकोद्बद्धाध्वधूलिपरुष-मूर्धजान्, ध्वजानिवाध्वक्लेशस्य, आश्रयानिव श्रमस्य, पदन्यासानिव दौर्मनस्यस्य, आवासानिव प्रवासस्य, संदर्भानिव सर्वदुःखानाम्, दूरत एव त्वरितकसमेतांस्ताँल्लेखहारकान्। आलोक्य च तस्मिन्नेव मातृगृहाङ्गणे स्थिता तेषामाह्वानायादिदेश।

अनन्तरं चातर्कितापतितदर्शनद्विगुणितदुःखावेगान्मुषितानिव, उन्मुक्तानिवेन्द्रियैः, दारुमयानिव शून्यशरीरान्, निर्जीवानिवोपसर्पतः पुरस्तात्पतन्तीव बाष्पान्धा साध्वसस्खलितचरणकमला कतिचिद्गत्वा पदानि, गद्गदतरमुच्चैरकृतप्रणामानेवावादीत्—'भद्राः, कथयताशु वत्सस्य मे वार्तामात्रम्। इदं त्वन्यथैव किमपि कथयति मे हृदयम्, अप्रत्ययमेवाश्रयते। वत्सो दृष्टो वा न भवद्भिः?' इत्येवं पृष्टास्तु ते सहसागतबाष्पवेगमवनिनिवेशितोत्तमाङ्गाः प्रणामापदेशेनोत्सृज्य कृच्छ्रादिवाभिमुखमुन्नमितवदना व्यज्ञापयन्—'देवि, दृष्टोऽस्माभिरच्छोदसरस्तीरे युवराजः। शेषमेष त्वरितको निवेदयिष्यति।' इत्यभिवदत एव तानुद्बाष्पमुखी प्रत्युवाच—

---

उद्योगस्तेनायासितयायासं प्राप्तया गत्या गच्छतो व्रजतोऽतिमलिनं यत्पटच्चरं जीर्णवस्त्रम्। 'पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ' इत्यमरः। असंस्कारेणानधिवासनेन मलिनो मलाक्रान्तः कायो येषां तान्। अनेका विविधा उत्प्राबल्येन बद्धा लग्ना अध्वधूलयो मार्गरेणवस्ताभिः परुषाः कठिना मूर्धजाः केशा येषां ते तथा तान्। लग्नधूलिसाम्यादुत्प्रेक्षते—अध्वक्लेशस्य मार्गखेदस्य ध्वजानिव चिह्नानीव। 'ध्वजश्चिह्ने पताकायां ध्वजः शौण्डिकशेफसोः' इति विश्वः। श्रमस्याश्रयानिवाधारानिव, दौर्मनस्यस्याप्रसन्नचित्तस्य पदन्यासानिव, प्रवासस्य परदेशगमनस्यावासानिवालयानिव, सर्वदुःखानां संदर्भानिव गुम्फानिव।

**अनन्तरं चेति।** तदाह्वानानन्तरमतर्कितमचिन्तितमापतितं संजातं यद्दर्शनमवलोकनं तेन द्विगुणितो दुःखावेगो येषां ते तथा तान्। मुषितानिव चौरैर्लुण्ठितानिव, इन्द्रियैः करणैरुन्मुक्तानिव त्यक्तानिव, दारुमयानिव काष्ठनिर्मितानिव शून्यशरीरान्, निर्जीवानिव विगतात्मन इव, उपसर्पतः समीप आगच्छतः पुरस्तात्पतन्तीव स्रंसन्तीव बाष्पेणाश्रुणान्धा गताक्षा साध्वसं भयं किं कथयिष्यन्त्येत इति वितर्कजनितं तस्मात्स्खलितं स्खलनां प्राप्तं चरणकमलं यस्याः सा तथा कतिचित्पदानि गत्वा गद्गदतरं यथा स्यात्तथा उच्चैर्बाढस्वरेणाकृतप्रणामानेवाविहितनमस्कारानेव तानवादीत्। भद्राः, यूयमाशु शीघ्रं मे मम वत्सस्य वार्तामात्रं कथयत। इदं तु मे मम हृदयं चेतोऽन्यथैव किमपि कथयत्यप्रत्ययमेवाविश्वासमेवाश्रयते। मे मम वत्सो दृष्टोऽवलोकितो भवद्भिर्युष्माभिर्न वेति। इत्येवं पृष्टास्तु ते लेखहारकाः सहसैव सद्य एवागतो बाष्पवेगो यथा स्यात्तथावनौ निवेशितं स्थापितमुत्तमाङ्गं शिरो यैस्ते तथा प्रणामापदेशेन नमस्कृतिमिषेणोत्सृज्य कृच्छ्रादिव कष्टादिवाभिमुखं संमुखमुन्नमितमुच्चैःकृतं वदनं यैस्ते तथा व्यज्ञापयन्विज्ञप्तिं चक्रुः। किं कथयामासुरित्याकाङ्क्षायामाह—**देवीति**। हे देवि, अच्छोदसरस्तीरेऽस्माभिर्युवराजो दृष्टः। शेषमवशिष्टमेष त्वरितको युवराजभृत्यो निवेदयिष्यति कथयिष्यति इत्यभिवदत एवेति ब्रुवत एव तानुदूर्ध्वं बाष्पो नेत्राम्बु यस्मिन्नेवंभूतं मुखमाननं यस्याः सा विलासवती प्रत्युवाच प्रत्यब्रवीत्।

---

**टिप्प०**—1 तेन आच्छादितान् संवीतानित्यर्थो बोध्यः। 2 किम् उत्सृज्य? अन्वये चस्खाल वराकः। सहसाऽऽगतं बाष्पवेगं प्रणामापदेशेनोत्सृज्य इत्यन्वयः।

---

**पाठा०**—१ अनेकधैवोद्बद्धः. २ आश्रमानिव; श्रमस्यावासानिव. ३ अदूरतः. ४ पतन्ती. ५ चरणानि. ६ सगद्गदस्वरम्. ७ वार्ताम्. ८ कथमपि करोति मे हृदयम्. ९ भ्रियते गम वत्सो दृष्टो वा भवद्भिः. १० उपसृत्य उपसृज्य. ११ व्यज्ञापयन्.

'किमपरमयं[1] तपस्वी निवेदयिष्यति ? दूरतः प्रभृत्यपसृतप्रहर्षेणैवोपसर्पणेन, प्रतिलेखमालिकाशून्यैः शिरोभिः, आविषण्णदीनैराननैः, प्रयत्नसंरक्षिताश्रुमोक्षदुःखिताभ्यां[3] लोचनाभ्याम्, मन्मुखसमक्षमधारणेन[4] च दृष्टैर्यदावेदितव्यं तद्भवद्भिरेवावेदितम् । हा वत्स, जगदेकचन्द्र, चन्द्रापीड, चन्द्रानन, चन्द्रशीतलप्रकृते, चन्द्राभिरामगुण, लोचनानन्दभूत, किंभूतं ते येन नागतोऽसि[5] ? तात चन्द्रापीड ! पीडिता ब्रवीमि न कोपादुपालभमाना—न युक्तमेतत्तव 'अम्ब, न परिलम्बं मनागपि करोमि' इति तथा मे पुरः प्रतिज्ञायान्यत्र क्वाप्यवस्थातुम् । वत्स, गच्छत एव ते मयाऽस्य हतहृदयस्य शङ्कयैव ज्ञातं दुष्करं मे वत्सस्य पुनर्मुखावलोकनमिति । बलाद्गतोऽसि । किं करोमि । को वात्र दोषो वत्सस्य । मन्दभाग्याया ममैवैतान्यपुण्यानां विलसितानि । भवन्त्यपुण्यवत्योऽपि[6] लोके न पुनर्मया सदृशी पापकारिणी, यस्यास्त्वमेक एवमकाण्ड एवाच्छिद्य[7] क्वापि नीतोऽसि । विप्रलब्धास्मि दग्धवेधसा । वत्स, सुदूरस्यापि[8] पादयोः पतामि ते । निवर्तस्वैकवारम् । अम्बेत्यालपतस्ते वद-

---

किमपरमन्यदयं तपस्वी वराकः । शोच्य इति यावत् । निवेदयिष्यति । दूरतः प्रभृति दूरादारभ्यापसृतो दूरीभूतः प्रहर्षो यस्मादेवंभूतेनोपसर्पणेन समीपागमनेन प्रतिलेखानां ततः प्रहितपत्राणां मालिकाशून्यैः स्रग्रहितैः शिरोभिरुत्तमाङ्गैरासमन्ताद्विषण्णानि विलक्षाणि च दीनानि दुःखितानि च विषण्णानि दीनान्येवंभूतैराननैर्मुखैः, प्रयत्नेनोद्यमेन संरक्षितमश्रुमोक्षणं तेन दुःखिताभ्यां लोचनाभ्यां नयनाभ्यां नेत्राभ्यां, दृष्टैर्दृशो मन्मुखसमक्षं यदधारणमस्थापनं तेन च यदावेदितव्यं निवेदनार्हं तत्सर्वं भवद्भिरावेदितं कथितम् । हा इति खेदे । हे वत्स हे पुत्र, हे जगति लोक एकोऽद्वितीयश्चन्द्र, हे चन्द्रापीड । चन्द्रवदाननं मुखं यस्य तस्य संबोधनम् । चन्द्रवच्छीतला शिशिरा प्रकृतिः स्वभावो यस्य तस्य संबोधनम् । चन्द्रवदभिरामा उज्ज्वला गुणा यस्य तस्य संबोधनम् । लोचनानां नेत्राणामानन्दभूतः प्रमोदभूतस्तस्य संबोधनम् । ते तव किं भूतं किं जातं येन हे तात हे पुत्र, चन्द्रापीड, त्वं नागतोऽसि नायातोऽसि । 'तातः पितरि पुत्रे च' इत्यनेकार्थः । पीडिताहं ब्रवीमि । न कोपात्क्रोधादुपालभमानोपालम्भं ददाना । किं कथितवतीत्याह—**न युक्तमिति** । हे अम्ब हे मातः, न परिलम्बं विलम्बं मनागपि करोमीति तथा तेन प्रकारेण पुरोऽग्रे प्रतिज्ञाय प्रतिज्ञां कृत्वान्यत्रान्यस्मिन्स्थले क्वाप्येवमवस्थातुं न युक्तमेतत् । हे वत्स हे पुत्र, ते तव गच्छत एव व्रजत एव मयास्य हतहृदयस्य हतचेतसः शङ्कयैवातिरेकयैवेति ज्ञातमवगतम् । इतिज्ञाप्यमाह—**दुष्करमिति** । दुष्करं कठिनं मे वत्सस्य पुनर्मुखावलोकनमिति वक्त्रनिरीक्षणमपि । बलाद्धठात्त्वं गतोऽसि । किं करोम्यहम् । अत्र वत्सस्य पुत्रस्य को वा दोषोऽपराधः । मन्दभाग्यायाः स्वल्पदैवाया ममैवापुण्यानामश्रेयसामेतानि विलसितानि विचेष्टितानि । लोकेऽपुण्यवत्योऽपि भवन्ति नार्यः । न पुनर्मया सदृशी पापकारिणी । तत्रार्थे हेतुमाह—**यस्या इति** । यस्या विलासवत्यास्त्वमेक एवमकाण्ड एवाप्रस्ताव एवाच्छिद्योद्दाल्य क्वाप्यनिर्वचनीयस्थले नीतोऽसि प्रापितोऽसि । दग्धवेधसा ज्वलितविधात्राहं विप्रलब्धास्मि वञ्चितास्मि । 'विप्रलब्धस्तु वञ्चितः' इति हैमः । हे वत्स, सुदूरस्याप्यतिदविष्ठस्यापि ते तव पादयोश्चरणयोः पतामि पतनं करोमि नमस्करोमि । एकवारं निवर्तस्व पश्चादागच्छ । अम्बेत्यालपतो

---

टिप्प०—1 'आविषण्णदूनैः (दुःखितैः)', इति पाठः । 2 'किंभूतं ते येन नागतोसि ।' इति पृथग्वाक्यम् । 'तात चन्द्रापीड पीडिता ब्रवीमि न कोपाद्०' इत्यादि पृथग्वाक्यम् । 3 'अपुण्यवत्योऽपि भवन्तु, न पुनर्मया सदृशी' इति पाठः ।

---

पाठा०—१ परतरम्. २ अकृत; अनुद्रुत. ३ दुःखिताभ्याम्. ४ मन्मुखसमवधारणेन. ५ आयासि; आयातोऽसि. ६ अपुण्यवन्त्यः. ७ अवच्छिद्य. ८ दूरं गतस्यापि.

नमवलोकयितुमुत्कण्ठितं मे हृदयम् । जात, दुर्लभक, न जानाम्येव किमाजन्मनः प्रभृति शैशवं ते स्मृत्वात्मानमनुशोचामि उत यौवनाभोगकारिणीं वर्तमानां रूपशोभाम्, आहोस्विदवष्टम्भधीरामुत्प्रेक्ष्योत्प्रेक्ष्यागामिनीं प्रभुताम्' इति । एवं विलपन्तीं मामवलोक्य हृदयस्थितो मैवं कृथाश्चेतसि पुत्र ! यथा विनापि मया जीवत्येव विलासवती । जात, त्वया विना जीवन्त्यापि पितुरेव ते कथं मया वदनं दर्शितम् । न वेद्मि किमपि । प्रियतया ते, किमाकृतेः प्रत्ययात्, उत स्त्रीजनसहभुवो मूढभावादेव, इत्यद्यापि न श्रद्दधाति मे हृदयमनिष्टं ते । येन न सहस्रधा स्फुटति । स्फुटीकर्तुं च वार्तां भीता ते त्वरितकोपनीतामेव नेच्छामि । वरमनाकर्ण्यैवाश्रवणीयमुपरतास्मीति । तात, किं ब्रवीषि, यथा किममुना सुतस्नेहानुचितेन लोकलज्जाकरेण वैक्लव्येनेति । एषा स्थितास्मि ते वत्स, वचनात्तूष्णीम् । न रोदिमि ।' इत्यभिदधानैवासन्नसखीजनावलम्बितशरीरा मोहमगमत् ।

अथानेकसहस्रसंख्येन प्रधावता विलासवतीपरिजनेनावेदिते तस्मिन्वृत्तान्ते, मन्दरास्फा-

---

जल्पतस्ते तव वदनं मुखमास्यमवलोकयितुं वीक्षितुमुत्कण्ठितमुत्सुकं मे मम हृदयं चेतः । जात हे पुत्र, अपत्यादिषु दुर्लभो दुःप्रापस्तस्य संबोधनं हे दुर्लभक, अहं न जानाम्येव न वेद्म्येव । किमाजन्मनः प्रभृत्युत्पत्तेरारभ्य प्रारभ्य ते तव शैशवं बाल्यं स्मृत्वा स्मरणं कृत्वात्मानं स्वमनुशोचामि शोकविषयीकरोमि पश्चात्तापं करोमि । उतेति पक्षान्तरे । यौवनस्य तारुण्यस्याभोगो विस्तारस्तं करोतीत्येवंशीला सा तथा तां, वर्तमानां संप्रतिसमयवर्तिनीं रूपशोभां सौन्दर्यश्रियं स्मृत्वानुशोचामि । तथा । आहोस्विदिति वितर्के । अवष्टम्भः प्रारम्भस्तेन धीरां स्थिरामागामिनीमेष्यत्कालभाविनीं प्रभुतामैश्वर्यमुत्प्रेक्ष्य विमृश्य विमृश्यानुशोचामि । इत्येवं विलपन्तीं विलापं कुर्वन्तीं हृदयस्थितश्चित्तान्तर्गतो मां विलासवतीमवलोक्य निरीक्ष्य मामैवं चेतसि कृथा व्यवस्थाः । किं तदित्याह—**यथेति** । हे पुत्र, यथा मया विनापि चन्द्रापीडं विनापि विलासवती जीवत्येव । तर्हि मृता कथं नेत्याशङ्कायामाह—**जातेति** । जात हे पुत्र हे वत्स, त्वया विना भवद्व्यतिरेकेण जीवन्त्यापि जीवनं धारयन्त्यापि पितुरेव ते तव कथं मया वदनं मुखं दर्शितं दृग्विषयीकारितम् । अत्रार्थे हेतुमाह—**न वेद्मीति** । अहमत्र कारणं किमपि न वेद्मि न जाने संशयारूढत्वेन सम्यक्तया नावबुध्ये इत्यर्थः । एतदेव स्पष्टयन्नाह—**प्रियतयेति** । ते तव प्रियतया वल्लभतया किमाकृतेराकारस्य प्रत्ययाद्विश्वासादुत स्त्रीजनस्य सहभुवः सहोत्पन्नस्य मूढभावादेवाज्ञानभावादेवेत्यद्यापि सांप्रतमपि ते तवानिष्टमशुभं मे मम हृदयं न श्रद्दधाति न श्रद्धत्ते । येन कृत्वा सहस्रधा सहस्रप्रकारेण न स्फुटति न स्फोटं प्राप्नोति । अहं भीता सती ते तव त्वरितकेनोपनीतां प्रापितामेव वार्तां प्रवृत्तिं स्फुटीकर्तुं प्रकटीकर्तुं नेच्छामि नाभिलषामि । अश्रवणीयं श्रवणायोग्यमनाकर्ण्यैव वरमिति उपरतास्मि । हे तात, किं त्वमिति ब्रवीषि वदसि । यथा किं सुतस्नेहस्यानुचितेनायोग्येनामुना वैक्लव्येन वैक्लव्यं विह्वलत्वं तेनेति । एषा विलासवती हे वत्स, ते तव वचनात्तूष्णीं मौनं स्थितास्मि । न रोदिमि । इत्यभिदधानैवेति ब्रुवाणैवासन्नः समीपवर्ती यः सखीजन आलिवर्गस्तेनावलम्बितमवधृतं शरीरं यस्याः सैवंविधा मोहं मूर्च्छामगमदन्वगात् ।

**अथेति** । मूर्च्छागमनानन्तरमनेकसहस्राणि संख्या यस्यैवंभूतेन प्रधावतेतस्ततस्त्वरितगत्या गच्छता विला-

टिप्प०—1 'आत्मनाऽनुशोचामि' इति पाठः । 2 अवष्टम्भो धैर्यावलम्बो लोकावलम्बो वा तेन स्थिराम्, इत्यर्थः ।

---

पाठा०—१ हरिणीम्. २ वर्तमानरूप, वर्तमानस्वरूप. ३ पुनरेवम्. ४ किमिति. ५ वार्तां ते त्वरितकाङ्क्षीतेव. ६ ब्रवीमि. ७ तथा. ८ अनेन स्नेहानुचितेन.

लनोद्वेल इव महाम्भोधिरुद्भ्रान्तचेताः ससंभ्रममुत्थायार्यशुकनासद्वितीयो यामावस्थितां प्रजविनीं करेणुकामारुह्य रयादापिबन्निव पुरो राजमार्गं किं किमेतदित्युन्मुक्तार्तनादकलकलेन सर्वतः प्रधावता जनपदौघेनोकर्षन्निवोद्वासयन्निव पृष्ठतः सगोपुराट्टालकप्राकारभवनतोरणामुज्जयिनीं निर्जगाम नरपतिः । उपेत्य चावन्तीमातृगृहमवतीर्य तिर्यग्विषण्णोद्बाष्पवदनेन, मलयजजलैश्च सिञ्चता, कदलीदलैश्च वीजयता, जलार्द्रैश्च पाणिपल्लवैः संवाहनं कुर्वता, कथंकथमपि चेतनामापाद्यमानां परिजनेनार्धोन्मीलितलोचनयुगामुष्णकालकमलिनीमिव विलासवतीमपश्यत् । दृष्ट्वा च सहसा प्रवृत्तेन नेत्राम्भसा मूर्च्छावशेषापनयनायैव सिञ्चन्समुपविश्य पार्श्वे स्पर्शामृतवर्षिणा करेण ललाटे चक्षुषि कपोलयोरुरसि बाह्वोश्च स्पृशञ्छनैः शनैर्बाष्पगद्गदमवादीत्—'देवि, यदि सत्यमेवान्यादृशं किमपि वत्सस्य चन्द्रा-

---

सवतीपरिजनेन तस्मिन्वृत्तान्त उदन्त आवेदिते ज्ञापिते सति, मन्दरस्य मेरोरास्फालनेनोदूर्ध्वं वेला यस्य स उद्वेलो योऽब्धिः समुद्रस्तद्वदिव । क्वचित् 'आस्फालनेनोच्छलित इव' इति पाठः । उद्भ्रान्तं चेतो यस्य स तथा ससंभ्रमं सभयमुत्थायोत्थानं कृत्वा आर्यशुकनासो द्वितीयो यस्य स तथा । राज्ञो विशेषणम् । यामावस्थितां चतुष्किकास्थितां प्रजविनीं प्रकृष्टवेगवतीं करेणुकां हस्तिनीमारुह्यारोहणं कृत्वा रयाद्वेगात्पुरोऽग्रे राजमार्गं श्रीपथमापिबन्निवापानं कुर्वन्निव । किं किमेतदित्युत्क्रान्त उत्थितो य आर्तनादकलकलः शब्दः कोलाहलस्तेन सर्वतोऽभितः प्रधावता जनपदौघेन नरसमूहेनाकर्षन्निवाकृष्टिं विदधन्निव । 'भवेज्जनपदो देशे जने जनपदेऽपि च' इति विश्वः । पृष्ठतः सगोपुराट्टालप्राकारभवनतोरणाम् । तत्र गोपुरं प्रतोली, अट्टालकं प्राकाराग्रस्थितरणगृहम्, प्राकारो वरणः, भवनानि गृहाः, तोरणानि प्रतीतानि, एतैः सह वर्तते या सा तामुज्जयिनीं विशालामुदवासयन्निवोद्वशीकुर्वन्निवैवंविधो नरपतिस्तारापीडो निर्जगाम निर्ययौ । नगर्या इति शेषः । अवन्तीमातृगृहमुपेत्य समीपमागत्य तिर्यगवतीर्योत्तीर्य विलासवतीं राजापश्यद्ददर्श । अर्धोन्मीलितं लोचनयुगं नेत्रयुग्मं नयनद्वन्द्वं यया सा ताम् । अर्धोन्मीलनसाम्यादुत्प्रेक्षते—उष्णकालकमलिनीमिव ग्रीष्मसमयपद्मिनीमिव । पुनः किं क्रियमाणाम् । कथंकथमपि महता कष्टेन चेतनां चैतन्यं सजीवत्वमापाद्यमानामुत्पाद्यमानाम् । केन । परिजनेन परिच्छदेन परिवारेण । परिजनं विशिनष्टि—**विषण्णेति** । विषण्णानि विलक्षाण्युद्बाष्पाण्युदश्रूणि मुखान्यास्यानि यस्य स तेन । किं कुर्वता । मलयजं मलयभवं चन्दनं तस्य जलैः पानीयैश्च सिञ्चता सेकं कुर्वता । पुनः किं कुर्वता । कदल्यो रम्भास्तासां दलैः पर्णैः पत्रैर्वीजयता वातं कुर्वता । पुनः किं विदधता । जलार्द्रैः पानीयोन्नैः पाणिपल्लवैः करकिसलयैश्च संवाहनमङ्गमर्दनं कुर्वता । दृष्ट्वा च विलोक्य च सहसा सद्यः प्रवृत्तेन प्रादुर्भूतेन प्रकटीभूतेन नेत्राम्भसा नयनाम्भसा नेत्राश्रुणा मूर्च्छाया अवशेष उर्वरितांशस्तस्यापनयनायेव दूरीकरणायेव सिञ्चन्पार्श्वे समीपे निकटेऽन्तिके समुपविश्यावस्थानं कृत्वा स्पर्श एवामृतं पीयूषं वर्षतीत्येवंशीलेन करेण हस्तेन पाणिना ललाटेऽलिके भालस्थले, चक्षुषि नेत्रे, कपोलयोर्गल्लात्परप्रदेशयोः उरसि हृदये वक्षसि बाह्वोश्च भुजयोश्च शनैः शनैः स्पृशन्स्पर्शं कुर्वन्बाष्पगद्गदं यथा स्यात्तथावादीदवोचदब्रवीत्—हे

---

टिप्प०—1 वस्तुतस्तु—'उन्मुक्तार्तनादकलकलेन' इति पाठः । उन्मुक्तः प्रकटितः आर्तनादरूपः कलकलो येन तादृशेन । 2 कोऽयमुद्वशीकारः ? धिक् । जनपदौघेन सगोपुरेत्यादिविशेषणाम् 'उज्जयिनीम् आकर्षन्निव आवर्जयन्निव उद्वासयन्निव विपर्यासयन्निव नरपतिर्निर्जगाम', इति पाठोऽन्वयश्च । तत्र आवर्जयन्निव सहनयन्निव, उद्वासयन्निव वसतिशून्यां कारयन्निव, विपर्यासयन्निव विपर्यस्तां कुर्वन्निवेत्यर्थः ।

---

पाठा०—१ उद्वेलितः. २ आवर्जयन्निव. ३ उद्वास्यन्निपर्यासयन्निव. ४ अवन्ति. ५ एव.

पीडस्य ततो न जीव्यन्त एव। किमर्थमयमात्मा वत्सस्य कृते सकललोकसाधारणेनामुना वैक्लव्योपगमेन तुच्छतां नीयते। इयन्ति शुभान्युपात्तानि कर्माणि। किमपरं क्रियते। नाधिकस्य भाजनं सुखस्य वयम्। अनुपात्तं हि हृदयताडनमपि कुर्वद्भिर्न लभ्यत एवात्रात्मेच्छया। विधिर्नामापरः कोऽप्यत्रास्ते। यत्तस्मै रोचते तत्करोति। नासौ कस्यचिदप्यायत्तः। एवं च पराधीनवृत्तौ सर्वस्मिन्न किं वास्माभिर्लब्धम्। वत्सस्यातिदुर्लभो जन्मोत्सवः संभावितः। अङ्कगतस्य मुखमवलोकितम्। उत्तानशयस्योच्चुम्ब्य चरणावुत्तमाङ्गे कृतौ। जानुसंचारिणो रेणुधूसरशरीरस्याङ्के लुलतः स्पर्शसुखमनुभूतम्। अव्यक्तमनोहारीणि प्रथमजल्पितानि श्रोत्रे कृतानि। विचेष्टमानस्य बालचाटवो दृष्टाः। गृहीतविद्यस्य गुणवत्तयानन्दितं हृदयम्। उपारूढयौवनस्यामानुषी रूपशोभा शक्तिश्च प्रत्यक्षीकृता। अभिषिक्तस्य यौवराज्ये शिरः समाघ्रातम्। दिग्विजयागतस्य प्रणमतः परिष्वक्तान्यङ्गानि। एता-

---

देवि, यदि सत्यमेवावितथमेव किमपि वत्सस्य चन्द्रापीडस्यान्यादृशं वैरूप्यं ततो न जीव्यन्त एव प्राणा न म्रियन्त एव। तर्हि किमर्थं निःप्रयोजनमयमात्मा जीवो वत्सस्य पुत्रस्य सूनोः कृते कार्ये सकललोकसाधारणेन प्राकृतजनानुचीर्णेन पामरजनव्याप्तेनामुनानेन प्रत्यक्षोपलभ्यमानेन वैक्लव्योपगमेन विह्वलतोपगमेन विकलभावोपनतेन तुच्छतां स्वल्पतां नीयते प्राप्यते नीचजनाचीर्णमार्गाश्रयणादिति भावः। इयन्त्येतावन्ति शुभानि कर्माण्युपात्तानि गृहीतान्यार्जितानि। अपरं द्वितीयमन्यत्किं क्रियते अस्माभिः, नाधिकस्य सुखस्य सौभाग्यस्य वयं भाजनमास्पदं पात्रम्। हृदयताडनमपि कुर्वद्भिरात्मेच्छया। हि यस्मात्कारणादनुपात्तमनागृहीतमनुपार्जितं न लभ्यत एव न प्राप्यत एव। नामेति कोमलामन्त्रणे। नाम निश्चयेन। विधिर्विधाता ब्रह्मा अपरो द्वितीयः कोऽप्यत्रास्ते। यत्तस्मै विधये प्रजापतये रोचते रुचिविषयीभवति तत्करोति विदधाति निष्पादयति। नासौ विधिर्ब्रह्मा कस्यचिदप्यायत्तः पराधीनः किन्तु स्वायत्त एव। एवं च सर्वस्मिञ्जने सर्वस्मिंल्लोके पराधीनवृत्तौ सत्यामस्माभिः किं न प्राप्तं किं न लब्धम्। अपि तु सर्वमेव सर्वस्वमेव प्राप्तं लब्धम्। एतदेव प्रदर्शयन्नाह—वत्सस्येति। वत्सस्य पुत्रस्य सुतस्य चन्द्रापीडस्यातिदुर्लभोऽतिदुष्प्रापो जन्मोत्सव उत्पत्तिमहः संभावितो विहितो निष्पादितः। अङ्कगतस्य मुखमवलोकितं वीक्षितं निरीक्षितम्। उत्तानशयस्योर्ध्वाननस्योचास्यशयितस्योच्चुम्ब्योच्चुम्बनं कृत्वा चुम्बनं विधाय पादौ चरणावुत्तमाङ्गे शिरसि कृतौ विहितौ निष्पादितौ। जानुना नलकीलेन संचारिणो गमनशीलस्य गमनस्वभावस्य, अत एव रेणुधूसरस्य धूलिमलिनस्य धूलिकर्दमितस्याङ्के क्रोड उत्सङ्गे लुलतो लुठतः स्पर्शसुखं संश्लेषसातमालिङ्गनसुखमनुभूतम्। अव्यक्तेनाप्रकटत्वेनास्फुटत्वेन मनोहारीणि चारूणि प्रथमजल्पितान्याद्यभाषितानि पूर्ववाक्यानि श्रोत्रे कर्णे कृतानि धारितानि। विचेष्टमानस्य क्रीडां कुर्वाणस्य बालचाटवः शिशुचाटूनि दृष्टा दृष्टिविषयीकृताः। 'चटु चाटु प्रियप्रायम्' इति हैमः। गृहीतविद्यस्य स्वीकृतकलाभ्यासस्य गुणवत्तया गुणस्वभावतया हृदयमानन्दितं प्रमुदितं हर्षितम्। उपारूढयौवनस्य प्राप्ततारुण्यस्य प्राप्तयौवनस्यामानुषी मनुष्येष्वसंभाविनी रूपशोभा सौन्दर्यश्रीर्मनोहरश्रीः शक्तिश्च तदनुयायि सामर्थ्यं च प्रत्यक्षीकृता साक्षात्प्रत्यक्षादवलोकिता निरीक्षिता। यौवराज्ये कौमार्येऽभिषिक्तस्याभिषेकं

---

टिप्प०—1 कोऽयं प्रलापः? अस्तु. 'न जीव्यत एव' इति पाठः। यदि वत्सस्य अशुभं तर्हि न जीव्यत एव, आवाभ्यामिति शेषः। 2 'सति' इति वक्तव्यम्। सत्सप्तम्यां लिङ्गवचनव्यत्ययेन सर्वत्रैवापराध्यति सोयम्।

---

पाठा०—१ जीव्यते. २ नातोऽधिकस्य. ३ उपात्तम्. ४ हृदयस्य. ५ वृत्ते. ६ च. ७ शरीरक. ८ ललतः; लगतः. ९ मनोहराणि.

यदेव मनोरथशतवाञ्छितस्य वस्तुनो न संपन्नं यद्वधूसमेतस्य निजपदे प्रतिष्ठां कृत्वा तपोवने न गतम्[1] । सर्वाभिवाञ्छितप्राप्तिस्तु महतः पुण्यराशेः फलम् । अपरमपि किं वृत्तं वत्सस्यै-तदद्याप्यपरिस्फुटं केनचिदेव[2] न कथितम्[3] । एतावत्तु[4] मयाऽव्यक्तमेव तदैव परिजनात्कथयतः कर्णे कृतम्, यथास्मत्प्रहितैर्लेखहारिभिः सहापरो वत्सस्य मे बालसेवकस्त्वरितकनामायातः । स वेत्ति सर्ववृत्तान्तम् । सोऽपि त्वया न पृष्ट एवेति । तत्तं[5] तु तावत्पृच्छामः । ततो जीवि-तमरणयोरन्यतरदङ्गीकरिष्यामः' इत्यभिवदत्येव राजनि परिजनान्तरितं त्वरितकमाहूय[6] प्रती-हारः 'त्वरितमारान्महीतलनिवेशितोत्तमाङ्गमालोकयतु देवः' इति दर्शितवान् ।

राजा तु तथा तमालोक्य, चन्द्रापीडस्नेहात् 'एह्येहि' इत्याहूय, हस्तेनोत्तमाङ्गे स्पृष्ट्वाऽऽदिष्ट-वान्—'भद्र, कथय किं वृत्तं वत्सस्य[7] येनागमनाय मया तन्मात्राऽमात्येन[8] च लिखितेऽपि[9] ना-यातः[10]? अनागमनकारणं वा किंचिन्न प्रतिलेखितवान्' इति । स त्वेवमादिष्टो राजागमनतः[11] प्रभृति

---

कारितस्य शिरो मस्तकं समाघ्रातं चुम्बितम् । दिशामाशानां ककुभां विजय आत्मसात्करणमात्माधीनमात्म-सात्तस्मादागतस्य प्रणमतः प्रणामं कुर्वेतो[1] नमस्कारं क्रियमाणस्याङ्गानि परिष्वक्तान्यालिङ्गितानि संश्लेषितानि । परमेतावदेवैतदेव मनोरथशतेनाभिलाषशतेन वाञ्छितस्य वस्तुनो न संपन्नं न जातम् । किं तदित्याह—**य-दिति** । वधूसमेतस्यास्य निजपदे स्वपदे प्रतिष्ठां स्थापनां कृत्वा तपोवने मुनिजनाश्रमे न गतं न प्राप्तम् । सर्वं सकलं समग्रं यदभिवाञ्छितमभिलषितं तस्य प्राप्तिश्च महतो गरीयसः पुण्यराशेः सुकृतसमूहस्य फलं साध्यम् । अतः समग्रपुण्याभावात्तन्न प्राप्तमिति भावः । अपरमप्यन्यदप्यन्यतरदपि वत्सस्य पुत्रस्य चन्द्रापीडस्य किं वृत्तं किमाचरणं किं जातम् । एतदद्याप्यपरिस्फुटमप्रकटम् । यतः केनचिदेव पुंसा मे मम न कथितं न निवेदितम् । तर्ह्यत्रागतं कथमित्याशयेनाह—**एतावदिति** । एतावत्तु मयाऽव्यक्तमेवाप्रकटमेवास्फुटमेव तदैव परिजनात्परिवारलोकात्समस्तपरिच्छदलोकात्कथयतो निवेदयतोऽन्योन्यम् । परस्परमिति शेषः । कर्णे कृतं श्रवणे कृतं श्रोत्रे कृतम् । तदेव प्रदर्शयन्नाह—**यथेति** । अस्मत्प्रहितैर्लेखहारिभिः संदेशहारकैः सहापरो-ऽन्यो मे मम वत्सस्य सुतस्य बालसेवक आ बाल्याद्भृत्यतां गतस्त्वरितकनामायातः । सर्ववृत्तान्तं समग्रोदन्तं स वेत्ति स जानाति सोऽपि त्वया भवत्या न पृष्टो न प्रश्नित एवेति । तत् तं तु तावदादौ पृच्छामः प्रश्नयामः । ततस्तदनन्तरं जीवितमरणयोरन्यतरदङ्गीकरिष्यामः स्वीकरिष्यामः । तज्जीविते जीवितं तन्मरणे मरणमिति भावः । इत्यभिवदत्येवेति कथयत्येव राजनि तारापीडे परिजनेन परिच्छदेनान्तरितं व्यवहितं त्वरितकनामानं कुमारभृत्यं कुमारसेवकमाहूयाह्वानं कृत्वा निमन्त्रणं कारयित्वा प्रतीहारो द्वारपालकस्त्वरितं शीघ्रमारात्समीपात् । 'आराद्दूरसमीपयोः' इति हैमः । महीतले वसुधाधोभागे निवेशितं स्थापितमुत्तमाङ्गं शिरो येनैवंभूतमालोकयतु पश्यतु देवो भवानिति दर्शितवानवलोकनं कारितवान् ।

राजा तु नृपस्त्ववनीपस्तु तथा तेन प्रकारेण तं त्वरितकनामानं सेवकमालोक्य विलोक्य निरीक्ष्य चन्द्रापीड-स्य स्नेहात्प्रेम्णः प्रीतेः । एह्येह्यागच्छागच्छेत्याहूयेति निमन्त्र्य हस्तेन करेणोत्तमाङ्गे मस्तके शिरसि स्पृष्ट्वा स्पर्शं कृत्वादिष्टवान्कथितवानित्याह—हे भद्र, कथय ब्रूहि । वत्सस्य पुत्रस्य सूनोः किं वृत्तं किं जातं किमाचरणं निष्पन्नं येन कारणेनागमनाय मया तन्मात्रामात्येन सचिवेन शुकनासेन मन्त्रिणा च लिखितेऽपि लिपीकृतेऽपि नायातो नागतः । अनागमनकारणं वा न किंचित्प्रतिलेखितवानिति प्रतिलेखे लिपीकृतवानिति । स त्वेवमादिष्ट

---

टिप्प०—1 कुर्वत इति वाच्यम् ।

पाठा०—१ गन्तव्यम्. २ इत्येतत्. ३ अत्र कथितं मे. ४ तावत्. ५ तत्तु; तं तु. ६ त्वरितकम्. ७ वत्सस्य मे. ८ चामात्येन च. ९ लिखिते आदिष्टेऽपि. १० स नायातः. ११ राज्ञागमनतः.

यथावृत्तं कथयितुमारेभे । राजा तु चन्द्रापीडहृदयस्फुटनवृत्तान्तं यावदाकर्ण्य[1]तिक्षुभित-शोकार्णवाक्रान्तिविक्लवः प्रसार्य करमार्तस्वरस्त्वरितकमवादीत्—'भद्र, विरम संप्रति । कथितं त्वया कथनीयम् । मयापि श्रुतं यच्छ्रोतव्यम् । पूर्णो मे प्रश्नदोहदः । निवृत्तं श्रवणकौतुकम् । कृतार्थीभूता श्रुतिः । आनन्दितं हृदयम् । उत्पन्ना प्रीतिः । सुखं स्थितोऽस्मि । हा वत्स, त्वयैकाकिना स्फुटतो हृदयस्यानुभूता वेदना । निर्व्यूढा त्वया वैशम्पायनस्योपरि प्रीतिः । वयं दुःखभागिनो निस्त्रिंशाः कर्मचाण्डालाः । येषां तवापीदं हृ[2]दयस्फुटने निर्वि[3]कारमेव । देवि वज्रसारतोऽपि कठिनतरमेवेदमावयोर्हृदयम्, यन्न स्वयं सहस्रधा स्फुटति । न चापि मरणदुःखभीरवोऽमी वत्समनुगच्छन्ति स्वयं प्राणाः । तदुत्तिष्ठ । यावदेवातिदूरं न प्रयात्येकाकी वत्सस्तावदेवानुगमनाय प्र[4]यतामहे । स[5]शोकं शुकनास, किमद्यापि तिष्ठसि । अयं स कालः स्नेहस्य । महाकालायतनसमीपे समादिश सपदि परिचारकांश्चितारचनाय । र[6]चयत झटिति

---

एवं कथितो रा[1]ज्ञ आगमनं तस्मात्प्रभृति यथावृत्तं यथाचरणं यथाभूतं यज्जातं कथयितुं वक्तुमारेभे प्रारम्भं कृतवान् । राजा तु चन्द्रापीडहृदयस्फुटनवृत्तान्तं यावदाकर्ण्य सम्यङ्निशम्य श्रुत्वातिक्षुभितः क्षोभं प्राप्तो यः शोकार्णवः शोकसमुद्रश्चिन्ताजलनिधिस्तस्याक्रान्तिराक्रमणं कम्पनं तेन विक्लवो विह्वलः करं हस्तं प्रसार्य विस्तार्य हस्तप्रसारणं कृत्वार्तस्वरः करुणस्वरो दीनस्वरस्त्वरितकं सेवकं प्रत्यवादीत् । हे भद्र, विरम विरतो भव । यत्कथनीयं कथनार्हं वक्तुं योग्यं तत्त्वया कथितमेव निवेदितमेव । यच्छ्रोतव्यं श्रवणार्हं श्रवणयोग्यं तन्मयापि श्रुतमेवाकर्णितमेव । मे मम प्रश्नदोहदोऽनुयोगश्रद्धा पूर्णः परिपूर्णो जात इत्यर्थः । श्रवणे श्रोत्र आकर्णने कौतुकमाश्चर्यं निवृत्तं स्थितम् । श्रुतिः श्रवणं कृतार्थीभूता कृतकृत्या जाता । निष्पादितानि समग्रकृत्यानि । 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः । आनन्दितं प्रमुदितं प्रहर्षितं हृदयं चेतः । उत्पन्ना संजाता प्रीतिः स्नेहः प्रेम । सुखं स्थितोऽहमस्मि । अभद्रमुखे भद्रमुख इतिवत्सर्वत्र लक्षणया विपरीतार्थो बोध्यः । हा वत्स हा पुत्र हा सूनो, त्वयैकाकिनाऽसहायेन स्फुटतो द्वैधीभवतो हृदयस्य वक्षसो वेदना पीडा बाधानुभूता सेवितानुभवविषयीकृता । त्वया भवता वैशम्पायनस्योपरि प्रीतिः स्नेहो निर्व्यूढा निर्वाहिता । आमरणपर्यन्तं पालिता इत्यर्थः । वयं दुःखभागिनः कृच्छ्रभजनशीलाः कष्टसेवनशीला निस्त्रिंशाः क्रूराः कर्मणा चाण्डालाः श्वपचाः । येषामस्माकं तवापि भवतोऽपि हृदयस्फुट[2]नं इदमस्मद्वक्षो निर्विकारं विकाररहितं निरुपद्रवम् । हे देवि हे पट्टराज्ञि, वज्रसारतः पविमध्यतोऽप्यावयोरिदं हृदयं वक्षः कठिनतरमेव परुषतरमेव यन्न स्वयमात्मना सहस्रधा सहस्रप्रकारेण स्फुटति द्वैधीभवति । मरणदुःखाद्भीरवो भीरुका भयसहिता अमी प्राणा असवो वत्सं पुत्रं चन्द्रापीडं न स्वयं नात्मनानुगच्छन्त्यनुव्रजन्ति । तदिति हेत्वर्थे । उत्तिष्ठोत्थानं कुरु । यावदेवातिदूरमतिदविष्ठमनिकटं न प्रयात्येव न व्रजत्येव एकाकी वत्सस्तावदेवानुगमनाय पृष्ठे यानाय प्रयतामहे प्र[3]यत्नं कुर्महे । सशोकं शोकेन सहवर्तमानं स[4]शोकं यथा स्यात्तथा शुकनास, किमद्यापि तिष्ठस्यवस्थानं करोषि । अयं स कालः स्नेहस्य प्रीतेः । स्वयमात्मना महाकालायतनसमीपे महाकालनामेश्वरचैत्यं शिवालयं तस्य समी-

---

टिप्प०—1 राज्ञः आगमनम् ? कीदृशस्य राज्ञः (न किल चन्द्रापीडो राजा) ? आगमनं च कीदृक् ? गमनम्, उत आगमनम् ? अस्तु. टीकाकारस्य तदिदं पुंगवत्वम् । 'स त्वेवमादिष्टो राज्ञा, गमनतः प्रभृति (चन्द्रापीडस्य इतः प्रस्थानमारभ्य) यथावृत्तं कथयितुमारेभे' इति पाठः । 2 वस्तुतः—'येषां तवापि हृदयस्फुटने निर्विकारमेवेदम्' (इदम्, हृदयम्) इति पाठः । 3 'प्रयतावहे' इत्येव पाठः । 4 'आः (हा) शुकनास' इति पाठः ।

---

पाठा०—१ आक्षुभित. २ हृदयस्फोटने. ३ निर्विकारत्वमेवेदम्. ४ प्रयतावहे. ५ हा शुकनास. ६ उपनयत.

काष्ठानि काष्ठिकाः । किं तिष्ठतैवं संकुचिताः कञ्चुकिनः ? गत्वा निष्क्रामयत हुताशनप्रवेशोपकरणानि । निष्कारणरुदितेन किमधुना ? [1]उपरोधपरिलम्बाद्विना दापयाशेषं देवि, द्विजेभ्यः कोषम्[2] । कस्य कृतेऽद्यापि पाल्यते ? पालनादिकं [3]करणीयमधुना क्षीणं क्षीणपुण्यस्य मे । [4]यात यथाभूमिं भूमिपतयः । [5]उत्सृष्टाः स्थ, यथा च नाद्यै[6]वास्य दुःखं जानन्ति प्रजास्तथा करिष्यथ । कथावशेषीभूतो मे वत्सः, [7]कमपरं संविधाय यामि' एवमा[8]र्तप्रलापिनं तारापीडमचेतितात्मपीडया विलासवत्यैव धृतशरीरमा[9]र्ततरस्त्वरितको व्यज्ञा[10]पयत्—'देव[11], स्फुटिते हृदये ध्रियते शरीरेण युवराजः । शापदोषाद्वैशम्पायनस्य च यथा जन्म तथा निरवशेषं शृणोतु तावद्देवः' इति ।

तारापीडस्तु तदद्भुतमाकर्ण्य कौतुकान्तरितशोकावेगो विगतनिमेषेण चक्षुषाऽऽविष्ट इव दत्तावधानस्तेन कथ्यमानं यथादृष्टं यथाश्रुतं यथानुभूतं च निरवशेषं सत्सर्वमश्रौषीत् । श्रुत्वा

---

पेऽभ्यर्णे निकटे सपदि शीघ्रं परिचारकान्भृत्यान्सेवकांश्चिताया रचनं करणं तदर्थमादिशाज्ञां कुरु । झटिति शीघ्रं भो काष्ठिका दारुरक्षकाः काष्ठरक्षणकारकाः, काष्ठान्येधांसि रचयत रचनां कुरुत गृहाकारेण गृहवद्रचनां कुरुत । भोः कञ्चुकिनः । 'सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते' इति कोशः । एवं संकुचिताः संकोचं प्राप्ता यूयं किं तिष्ठत स्थितिं कुरुत । गत्वा गमनं कृत्वा हुताशने वह्नावग्नौ यः प्रवेशः पतनं तत्रोपकरणानि यन्त्राणि निष्क्रामयत बहिःकर्षणं कारयत । गृहाद्बहिः पूजासामग्रीमानयत समानयतेत्यर्थः । निष्कारणं निष्प्रयोजनं रुदितेन विलपितेन किम् । न किमपीत्यर्थः । हे देवि, अमुनोपरोधेन[1] यः परिलम्बो विलम्बस्तेन विनाशेषं समग्रं कोशं भाण्डागारं द्विजा ब्राह्मणास्तेभ्यो दापय वितरणं कारय । अद्यापि कस्य कृते पाल्यते रक्ष्यते । अधुना सांप्रतं क्षीणपुण्यस्य क्षामश्रेयसो मे मम पालनादिकं रक्षणादिकं क्षीणं रीणम् । भो भूमिपतयो वसुधाधीशा राजानः, यथाभूमि[2]मात्मीयस्थलं यात व्रजत यूयमुत्सृष्टाः स्थ । लटि परस्मैपदे मध्यमपुरुषबहुवचनम् । यथा चाद्यैवास्य चन्द्रापीडस्य प्रजा दुःखं न जानन्ति नावबुध्यन्ते तथा यूयं करिष्यथ विधास्यथ । कथैव वार्तैवावशेष उर्वरितांशो यस्य स तथा एवंभूतो मे मम वत्सश्चन्द्रापीडः । ततः कमपरमन्यमधीशं संविधाय कृत्वा यामि व्रजामि । एवंप्रकारेणार्तं च प्रलापिनं चार्तप्रलापिनं तारापीडमचेतिताऽज्ञातात्मपीडा स्वपीडा ययैवंविधया विलासवत्यैव धृतं धारितं शरीरं विग्रहो यस्य स तं नृपमार्ततरोऽतिपीडितस्त्वरितकः सेवको व्यज्ञापयत् । किं तदित्याह—**देवेति** । हे देव, हृदये वक्षसि स्फुटितेऽपि पाटितेऽपि युवराजः शरीरेण[3] ध्रियते धार्यते । वैशम्पायनस्य च शापदोषादाक्रोशवचनदोषाद्यथा जन्म येन प्रकारेणान्यत्रोत्पत्तिस्तथा निरवशेषं सर्वं देवो भवांस्तावदादौ पूर्वं शृणोत्वाकर्णयत्विति ।

तारापीडस्त्वद्भुतं चित्रमाकर्ण्य श्रुत्वा कौतुकेनाश्चर्येणान्तरितो व्यवहितः शोकावेगो यस्य स तथा विगतनिमेषेण गतनिमेषोन्मेषेण चक्षुषा नेत्रेणात एवाविष्ट इव भूतग्रस्त इव दत्तमवधानं चित्तं येन सः । राज्ञो विशेषणम् । तेन त्वरितकेन कथ्यमानं निवेद्यमानं यथादृष्टं यथावीक्षितं निरीक्षितं यथाश्रुतं यथाकर्णितं यथानुभूतं साक्षा-

---

**टिप्प०—**1 'पुरोधः ! ( हे पुरोहित ) परिलम्बात् ( विलम्बात् ) विना' इत्येव पाठः । 2 'यात यथाभूमि ( अव्ययीभावः ) भूमिपतयः' इत्येव पाठः । 3 नीचैःपाठो मध्यगतोस्ति । अर्थात्—'देव यथा त्वं हृदये संभावयसि न तथा, स्फुटितेपि हृदये ध्रियते शरीरेण युवराजः' इति ।

---

**पाठा०—**१ अवरोधपटलं दापय, पुरोधःपरिलम्बाद्विना प्रविश्य दापय. २ काशम्. ३ करणीयमेव. ४ यात यथाभूमि भूमिपालाः; यात यथाभूमिपतयः. ५ तथोत्सृष्टाः स्थः; दृष्टाः स्थ. ६ अस्य वा दुःखम्; अनाथतादुःखम्. ७ कथमपरं संविधाय यामि; कमपरं संविधापयामि. ८ आर्तं प्रलपन्तं च. ९ आर्तः. १० व्यज्ञपत्. ११ देव, यथा त्वं हृदये संभावयसि न तथा.

च तमनेकचिह्नोत्पादितप्रत्ययमश्रद्धेयं च निरतिशयशोककारणं च विस्मयास्पदभूतं च दुःश्रवं च कौतुककरं च युवराजवैशम्पायनयोर्वृत्तान्तमीषदिव विवर्तिताननो विमर्शस्तिमिततारकां दृष्टिं निर्विशेषावस्थे शुकनासमुखेऽभ्यपातयत्। सुहृदस्तु स्वयं दुःखिता अपि निधानीकृत्यात्मदुःखं सुहृद्दुःखापनोदायैव यतन्ते। यतः शुकनासस्तदवस्थोऽपि स्वस्थवदवनिपतिमुवाच—

'देव, विचित्रेऽस्मिन्संसारे संचरत्सु सुखदुःखमयेषु देवासुरतिर्यग्योनिमानुषेषु, त्रिगुणात्मनः प्रधानस्यापि परिणामात्, परमाण्वादेर्ब्रह्माण्डपर्यन्तस्योत्पत्तिस्थितिप्रलयकारणस्येश्वरस्येच्छया, धर्माधर्मसाधनानामिष्टानिष्टफलसंबन्धकारिणां कर्मणां वा शुभाशुभानां विपाक-

---

त्कृतं च निरवशेषं तत्सर्वमश्रौषीदाकर्णयामास। अनेकचिह्नैरनेकाभिज्ञानैरुत्पादितो जनितो निष्पादितः प्रत्ययो विश्वासो यस्य स तम्। अश्रद्धेयं श्रद्धातुमयोग्यं च निरतिशयो भूयान्यः शोकः शुक् तस्य कारणं निदानं च विस्मयस्य कौतुकस्याश्चर्यस्यास्पदभूतं पात्रभूतं स्थानभूतं च दुःश्रवं च दुःखेन कष्टेनाकर्णनीयं च कौतुककरं च विस्मयकरं चाश्चर्यकरं चैवंविधमेतादृशं युवराजवैशम्पायनयोर्वृत्तान्तमुदन्तं श्रुत्वा चाकर्ण्य चेषदिव विवर्तितं पराङ्मुखीकृतं पश्चान्मुखीकृतमाननं मुखं येन सः। राज्ञो विशेषणम्। विमर्शो विचारो वितर्कस्तेन स्तिमिता निश्चला तारका कनीनिका यस्यामेवंविधामेतादृशीं दृष्टिं दृशम्। निर्गतो विशेषो यस्याः सा निर्गतविशेषा एवंविधावस्था दशा यस्य स तथा तस्मिन्। स्वसदृशावस्थ आत्मसदृशावस्थे शुकनासस्य मुख आननेऽभ्यपातयदस्थापयत्। यतः कारणात्सुहृदस्तु स्वयं दुःखिता अप्यात्मदुःखं निधानीकृत्य सुहृदां मित्राणां दुःखस्य कष्टस्यापनोदायैव दूरीकरणायैव यतन्ते यत्नं कुर्वन्ति। अतः शुकनासस्तदवस्थोऽपि स्वस्थवन्निःशोकवदवनिपतिं राजानमुवाच।

किं तदित्याह—**देवेति**। हे देव, विचित्रे बहुविधेऽस्मिन्संसारे संचरन्ति परिभ्रमन्ति यानि यानि सुखदुःखानि तैर्निष्पन्नेषु तन्मयेषु देवा भवनपत्यादयः, असुरादयोऽधोवासिनः, तिर्यग्योनिकाः शुकादयः, मृत्युलोके मानवा मनुष्या नराः, एतेषां द्वंद्वः। तेषु त्रिगुणाः सत्वरजस्तमोरूपास्त एवात्मा स्वरूपं यस्यैवंभूतस्य प्रधानस्यापि मूलप्रकृतेराद्यस्वभावस्यापि परिणामात्परिणमनात्परमाणुर्निरवयवोऽवयवरहितः क्रियावान्स आदौ प्रथमं यस्यैवंभूतस्य ब्रह्माण्डपर्यन्तस्योत्पत्तिर्जन्म। 'उत्पत्तिर्जन्मजनुषी' इति हैमः। स्थितिरवस्थानं स्थिरीभवनं प्रलयः क्षयो विनाश एतेषां सर्वेषां कारणस्य निदानभूतस्येश्वरस्य महादेवस्येच्छया कृत्या स्पृहया। धर्मोऽदृष्टं तद्विपरीतोऽधर्मस्तयोः साधनानां कारणानां निमित्तभूतानामिष्टानिष्टे ईप्सितानीप्सिते वाञ्छितावाञ्छितफले साध्ये तयोर्द्वयोः संबन्धकारिणां वा शुभाशुभानां कर्मणां विपाकभावाद्वा तदुदयावस्थानुभवनाद्वा, स्वयमेवात्मा-

---

**टिप्प०**—1 द्विवचनमुचितम्। 2 अशुद्धोयं पाठः। 'विस्मृत्याऽऽत्मदुःखम्' इत्येव पाठः। 3 प्रलापमिमं परित्यज्य वाक्यस्याशयं लिखामि पाठं च सूचयामि–संसारे संसरत्सु ( कर्मबन्धाद्भ्रमत्सु ) देवादिमानुषान्तेषु प्रधानस्य ( मूलप्रकृतेः, 'मूलप्रकृतिरविकृतिः०' इत्यादिसांख्यलक्षितायाः ) परिणामात् ( विवर्तात् ), परमाणुमारभ्य ब्रह्माण्डपर्यन्तस्योत्पादयितुरीश्वरस्येच्छया, धर्माधर्मेत्यादिविशेषितानां शुभाशुभकर्मणां विपाकात्, स्वभावाद्वा ( निसर्गाद्वा ) [ ततश्च–'विपाकात् स्वभावाद्वा इति पाठः। टीकाकारेण द्वे चूर्णीकृत्य 'विपाकभावाद्वा' इति निर्मितम् ] स्वयमनेकप्रकारैः उत्पत्तिस्थितिविनाशाननुभवतः स्थावरजङ्गमस्य सर्वाऽप्यवस्था संभवति।

---

पाठा०—१ दृशम्. २ शुकनासे. ३ न्यपातयत्. ४ च. ५ दुःखं दुःखिताः. ६ विस्मृत्य. ७ वर्तन्ते. ८ संचरत्सुखदुःखमयेषु; चरत्सु सुखदुःखमोहमयेषु. ९ मनुष्येषु. १० प्रधानस्य. ११ परिणामादात्मन. १२ विपाकाद्वा; विभावाद्वा; विपाकात्स्वभावाद्वा.

भावाद्वा, स्वयमेवानेकप्रकारमुत्पद्यमानस्य तिष्ठतो विनश्यतो वानियतवृत्तेः स्थावरजङ्गमस्य न कदाचिदवस्था सा या न संभवति । तत्[१]कुतोऽयं देवस्यात्र वस्तुनि विमर्शः ? यदि युक्ते[२]र्विचारात्कियन्त्यत्र युक्तिरहितान्यागमप्रामाण्यादेवा[३]भ्युपगतान्यपि संवा[४]दीनि दृश्यन्ते । मुद्राबन्धाद्ध्यानाद्वा विषप्रसुप्तस्योत्थापने कीदृशी युक्तिः । अयस्कान्तस्य चा[५]यसः समाकर्षणे [६]भ्रमणे वा, मन्त्राणां वैदिकानामवैदिकानां वानेकप्रकारेषु कर्मसु सिद्धौ, नानाविधद्रव्यसंयोगा[७]नां वा[८]मरणं मान्द्याद्युत्पादनापहरणवशीकरणविद्वेषणादिषु, शक्तेः समुत्पादनादन्येषां बहुतराणामेवंविधानां च त[९]त्र तत्र सर्वस्मिन्नेवाग[१०]मः प्रमाणम् । आगमेषु सर्वेष्वेव पु[११]राणरामायणभारतादिषु सम्यगनेकप्रकाराः शापवार्ताः । तद्यथा । महेन्द्रपदवर्तिनो न[१२]हुषस्य राजर्षेरगस्त्यशापादजगरता । सौदासस्य च वसिष्ठसुतशापान्मानुषादत्वम् । असुरगुरुशापाच्च

---

नमेवानेकप्रकारं बहुधा बहुप्रकारं बहुविधमुत्पद्यमानस्य जायमानस्य निष्पद्यमानस्य तिष्ठतः स्थितिं कुर्वतो विनश्यतो विनाशं प्राप्नुवतो वानियतवृत्तेरस्थिरवृत्तेरनिश्चितवर्तनस्यैवंभूतस्य स्थावरजङ्गमस्य चराचररूपस्य न कदाचित्कस्मिन्नपि काले सावस्था दशा या न संभवति न जायते न निष्पद्यते । तत्कुतोऽयं युक्तिविहितो देवस्य निर्जरस्यास्मिन्वस्तुनि विमर्शो विचारो वितर्कः । यदि युक्तेर्विचारात्कियन्त्यत्र युक्तिरहितानि तर्कवर्जितान्यागमप्रामाण्यादेवाभ्युपगतान्यप्यङ्गीकृतान्यपि संवादीन्यव्यभिचारीणि दृश्यन्ते विलोक्यन्ते निरीक्ष्यन्ते । मुद्रा शरीरं तस्या बन्धान्मन्त्रेण बन्धप्रदानाद्ध्यानाद्वा तादृशनागमन्त्र [सर्पमन्त्र] चिन्तनाद्वा विषप्रसुप्तस्य गरलमूर्च्छितस्य विषधारितस्योत्थापने सञ्जीकरणे निर्विषीकरणे कीदृशी युक्तिः । अयस्कान्तस्य दृषदश्मम्बकप्रस्तरस्यायसो लोहस्य समाकर्षण आकृष्टौ भ्रमणे वा शक्तेः समुत्पादनान्निष्पादनात् । तथा वैदिकानां वेदोक्तानामवैदिकानां शाबराणां वा मन्त्राणामनेकप्रकारेषु बहुविधेषु, बहुभेदेषु कर्मसु कृत्येषु सिद्धौ निष्पत्तौ, शक्तेः समुत्पादनात् । तथा नानाविधा बहुप्रकारा बहुविधा ये द्रव्यसंयोगा द्रव्यसमुदायास्तेषां वामरणमामृत्युं मरणं मृत्युः, मदो दर्पः, अहंकारो गर्वः, मान्द्यमपाटवमकुशलमादौ यस्य स मान्द्यादिस्तस्योत्पादनं निष्पादनम्, अपहरणमपहृतिः, वशीकरणं संवननम्, विद्वेषणं विद्वेषोत्पादनम्, एतेषां द्वन्द्वः । एतान्यादौ येषां कर्मणां तेषु शक्तेः समुत्पादनान्निष्पादनादेवंविधानामेतादृशानामेवंप्रकाराणामन्येषां बहुतराणां तत्र तत्र स्थले सर्वस्मिन्नेवागमः प्रमाणम् । पुराणरामायणमहाभारतादिषु सर्वेष्वेवागमेषु शास्त्रेषु सम्यक्प्रकारेणानेकप्रकारा बहुभेदभिन्नाः शापवार्ताः शापप्रदानकिंवदन्त्यः । श्रूयन्त इति शेषः । तदेव प्रदर्शयति—**तद्यथेति** । महेन्द्रपदवर्तिन इन्द्रस्थानस्थायिनः शक्रस्थानस्थायिनो नहुषनाम्नो राजर्षे राज्यावस्थायां मुनिकल्पस्य साधुसदृशस्यागस्त्यमुनेः कुम्भजन्मनः शापादाक्रोशवचनादजगरता पारीन्द्रता । जातेति शेषः । 'आक्रोशाभिषङ्गाक्षेपाः शापः साक्षारणा मता' इति हैमः । सौदासस्य च वसिष्ठस्यारुन्धतीजानेः सुतस्य पुत्रस्य शापान्मानुषादत्वं मनुष्यभक्षकत्वं नरादन्तत्वम् । असुरगुरुः शुक्रस्तस्य शापादाक्रोशाद्ययाते राज्ञस्तारुण्य एव यौवन एव यौवनावस्थायामेव जरसा विस्र-

---

**टिप्प०**—1 अहह धन्या बुद्धिः ! भवत इत्यर्थो विद्यार्थिभिर्बोध्यः । 2 नानाविधद्रव्यसंयोगानां (संयोगस्य वैचित्र्यावहत्वात्) मरणमदमान्द्याद्युत्पादनादिषु या शक्तिः समुत्पद्यते एतस्मात्—कारणात् च, एवंविधानामन्येषां च बहुतराणामाश्चर्यकर्मणाम् तत्र तत्र स्थले आगमाः (शास्त्राणि) प्रमाणभूतानि सन्तीत्याशयः ।

---

**पाठा०**—१ तत्किं कुतोऽयम्. २ मुक्तेः. ३ एव. ४ अविसंवादीनि; विसंवादरहितानि. ५ वा. ६ भ्रामणे. ७ संयोगद्रव्याणाम्. ८ मरणामरणमदनादि; मरणमदमान्द्य. ९ तत्र. १० आगमाः. ११ रामायणमहाभारतादिषु. १२ नहुषस्य.

ययातेस्तारुण्ये एव जरसा भङ्गः । त्रिशङ्कोश्च पितृशापाच्चाण्डालभावः[१] । श्रूयते च स्वर्गवासी महाभिषो[२] नाम राजास्मिँल्लोके शन्तनुरुत्पन्नः[३] । तत्पत्नीत्वमुपगताया[४] गङ्गायाः शापदोषादष्टानामपि वसूनां मनुष्येषूत्पत्तिः । तिष्ठतु तावदन्यः । अयमादिदेवो भगवानजः स एव जमदग्नेरात्मजतामुपगतः[५][६] । श्रूयते च पुनश्चतुर्धात्मानं विभज्य राजर्षेर्दशरथस्य तथैव मथुरायां वसुदेवस्य । तन्मनुष्येषु देवतानामुत्पत्तिर्नैवासंभाविनी[७] । न च पूर्वमनुष्येभ्यो गुणैः परिहीयते देवः । न चापि भगवतः कमलनाभादतिरिच्यते चन्द्रमाः । किमत्रासंभावनीयम्[८] । अपि च गर्भारम्भसंभवे देवेन देव्या वदने विशंश्चन्द्रमा एव दृष्टः, तथा ममापि स्वप्ने पुण्डरीकस्य दर्शनं समुपजातम् । तदुत्पत्तिं प्रति तयोर्नास्त्येव संदेहः । विनष्टयोः शरीरस्याविनाशः कथम्[९], कथं वा पुनर्जीवितप्रतिलम्भ[१०] इत्यत्राखिललोकप्रत्याख्यात[११]प्रभावममृतमेवैकं[१२] कारणमावेदितम् । तच्चन्द्रमसि विद्यत इत्येषास्त्येव वार्ता । तत्सर्वमेतदित्थमेवावगच्छतु[१३] देवः । अन्यच्च तादृशाकारकान्तेरखिललोकाह्लादकारिणोऽन्यत्र[१४] संभव एव नास्ति । तत्कल्याणैर्नचिराच्छापावसाने[१५] निर्वर्तितगन्धर्वसुतोद्वाहमङ्गलस्य[१६] गलन्नयनपयसो वध्वा सह पादयोः

---

सया कृत्वा भङ्गो हानिः । त्रिशङ्कोश्च पितृशापाच्चाण्डालभावः । श्रूयते चाकर्ण्यते च स्वर्गवासी देवलोकवासी महाभिषो नाम राजास्मिँल्लोक इहलोके शन्तनुर्नाम राजोत्पन्नोऽवतरितोऽवतारं प्राप्तः । शापदोषाच्छापप्रभावात्तत्पत्नीत्वं तत्स्त्रीत्वमुपगतायाः प्राप्ताया गङ्गायाः शापदोषादष्टानामष्टसंख्यानामपि वसूनां मनुष्येषूत्पत्तिर्जन्म प्रादुर्भावः प्रकटीभावः । तिष्ठतु तावदन्यः । अयमादिदेवो भगवानजः स एव जमदग्नेरात्मजतां पुत्रतां पुत्रभावमुपगतः प्राप्तो जातः । श्रूयते चाकर्ण्यते च पुनरात्मानं चतुर्धा चतुःप्रकारेण विभज्य विभागीकृत्य राजर्षेर्दशरथस्य तनयत्वमुपगतः प्राप्तः । तथैव मथुरायां मधुपुरि वसुदेवस्य तनयत्वमुपागतः पुत्रत्वं प्राप्तः । तदिति हेत्वर्थे । मनुष्येषु नरेषु देवतानां देवानामुत्पत्तिर्निष्पत्तिर्नैवासंभाविनी नासंभाव्यैव । न च पूर्वमनुष्येभ्यो देवो गुणैः परिहीयते परिहीनो भवति सामस्त्येन न्यूनो भवति । न चापि भगवतः कमलनाभात्सकाशाच्चन्द्रमाः शशाङ्कश्चन्द्रोऽतिरिच्यतेऽधिकीभवति । अतः किमत्रासंभावनीयमसंभाव्यम् । अपि चेति प्रकारान्तरे । गर्भस्यारम्भसंभवे च प्रारम्भसमये देवेन भवता देव्या विलासवत्या वदने मुखे विशन्प्रवेशं कुर्वंश्चन्द्रमा एव दृष्टोऽवलोकितः । तथा ममापि स्वप्ने पुण्डरीकस्य दर्शनं समुपजातम् । ततस्तदुत्पत्तिं प्रति तयोर्द्वयोः पूर्वोक्तयोर्नास्त्येव संदेहो द्वापरः । विनष्टयोः कथं शरीरस्याविनाशः । कथं वा पुनर्जीवितस्य प्रतिलम्भः प्राप्तिरिति । अत्रापीहाप्यखिललोकेषु समग्रलोकेषु प्रत्याख्यातः[1] प्रसिद्धः प्रभावो यस्यैवंभूतममृतमेव पीयूषमेव एकं कारणं निदानमावेदितं कथितम् । तदमृतं चन्द्रमसि चन्द्रे विद्यत इत्येषा वार्ता प्रवृत्तिः किंवदन्त्यस्त्येव । तत्तस्मात्कारणादेतत्सर्वमित्थमेवेति देवोऽवगच्छतु जानातु । अन्यच्च तादृशाकारकान्तेर्द्युतेरखिललोकस्य समग्रजनस्याह्लादकारिणः प्रमोदजननस्यानन्दकारकस्यान्यत्र[2] संभव एव नास्ति । तदिति हेत्वर्थे । कल्याणैर्मङ्गलैर्नचिरादल्पकालेन शापस्याक्षेपवचनस्यावसाने प्रान्ते सति विनिर्वर्तितं विहितं गन्धर्वसुतायाः कादम्बर्या उद्वाहमङ्गलं विवाहमाङ्गल्यं येन स तस्य गलत्क्षर-

---

टिप्प०—1 धन्यधन्यष्टीकाकारो यत्प्रत्याख्यातस्य प्रसिद्धार्थमुपदिशति । अस्तु. 'प्रख्यात' इत्येव पाठः । 2 'संभव एव तस्य (चन्द्रस्य)' इति पाठः ।

---

पाठ०—१ चण्डालभावः. २ महाधिपः. ३ शान्तनुः; शान्तनुपत्नीत्वम्. ४ उपागतायां च गङ्गायाम्; उपागतायाः स्वर्गङ्गायाः; उपगतायां गङ्गायाम्. ५ जामदग्नेः. ६ उपागतः. ७ असंभाविता. ८ संभावनीयम्. ९ कथम्. १० प्रलम्भः. ११ प्रख्यात. १२ अमृतमनेककारणम्; अमृतमेव कारणम्. १३ सत्यमित्थमे. १४ ईदृशस्याकारस्य कान्तेः; ईदृशाकारकान्तेः. १५ अचिरात्. १६ निवर्तित.

पततः पुत्रत्वमुपगतस्य चन्द्रापीडनाम्नान्तरितस्य लोकपालस्येव[1] चन्द्रमसो दर्शनेनाजन्मकृत[2]मेव संतापं परित्यक्ष्यति देवः । तयोरेवं[3] शापोऽस्माकं पुनर्वर एव ।

तदस्मिन्वस्तुनि मनागपि न देवेन देव्या वा शोकः कार्यः । मङ्गलान्यभिधार्यन्ताम्[4] । अभिमतदेवताराधनेन धनातिसर्जनेन चान्यजन्मोपार्जितं कुशलमभिवर्ध्यताम्[5] । अकुशलमपि यमनियमकष्टव्रतोपवासादिना[6] तपःक्लेशेन क्षयमुपनीयताम् । अपरमपि यद्यद्देवंगते[7] श्रेयस्करं श्रूयते ज्ञायते वा तत्तदद्यैवारभ्य क्रियतां कार्यतां च कर्म । न खलु[8] वैदिकानामवैदिकानां वा कर्मणामसाध्यं नाम किंचिदपि । उत्पत्तिरपि[9] च तयोः कृच्छ्रलब्धयोरीदृशेनैव प्रकारेणोपजाता ।'

इत्युक्तवति शुकनासे सशोक एव राजा प्रत्यवादीत्—'सर्वमेतद्यदार्येणाभिहितं कोऽन्योऽवबुध्यते ? केन वाऽपरेण वयं परिबोधनीयाः ? कस्य वापरस्यास्माभिर्वचनं करणीयम् ? किंतु तद्वत्सस्य मे वैशम्पायनदुःखात्स्फुटनं हृदयस्याग्रतो दृष्टिलग्नं सर्वमेवान्यदन्तरयति[10] । तदेव पश्यामि । तदेव शृणोमि । तदेवोत्प्रेक्षे । तदेवमप्रत्यक्षिते[11] वत्सस्य वदने

---

नयनयोर्लोचनयोः पयो जलं यस्य स तस्य वध्वा सह पादयोश्चरणयोः पततोऽभिवादनं कुर्वतः पुत्रत्वं सुततामुपगतस्य प्राप्तस्य चन्द्रापीडनाम्नान्तरितस्य व्यवहितस्य लोकपालस्येव सोमयमवरुणकुबेरस्येव चन्द्रमसश्चन्द्रस्य दर्शनेनावलोकनेन निरीक्षणेनाजन्मनः कृतं जन्ममर्यादीकृत्य कृतमाजन्मकृतमेव संतापहेतुत्वात्संतापं पापं देवः परित्यक्ष्यति दूरीकरिष्यति निष्पापो भविष्यति । विगतपापो भविष्यतीत्यर्थः । तयोर्द्वयोश्चन्द्रापीडपुण्डरीकयोरेवं शापोऽस्माकं पुनर्वर एव ।

तदस्मिन्वस्तुनि मनागपीषदपि स्वल्पमपि देवेन देव्या वा न शोकः कार्यः । मङ्गलानि श्रेयांस्यभिधार्यन्तामभिध्रियन्ताम् । युष्माभिरभिमतदेवताया इष्टवाञ्छितदेवताया आराधनेन सेवनेन धनस्य द्रव्यस्यातिसर्जनेनातिवितरणेन चान्यजन्मोपार्जितं परभवोपार्जितं गतभवनिष्पादितं कुशलमभिवर्ध्यताम् । यमा अहिंसासत्यास्तेयब्रह्माकिंचनतालक्षणाः । 'अहिंसासत्यमस्तेयब्रह्माकिंचनता यमाः' इति हैमः । कष्टव्रतं चान्द्रायणादि, उपवासा औपवस्तानि, एतान्यादौ यस्यैवंभूतेन तपःक्लेशेन कष्टेनाकुशलमप्यकल्याणमप्यशिवमपि क्षयं नाशमुपनीयतां प्राप्यताम् । अपरमप्यन्यदपि यद्यद्देवंगते श्रेयस्करं कल्याणजनकं शुभकारणं श्रूयते आकर्ण्यते ज्ञायतेऽवबुध्यते वा, तत्तदद्यैवारभ्याद्यदिनात्प्रभृति क्रियतां विधीयताम् । कार्यतां कार्यतां च कर्म यज्ञादि शुभकर्मादि । खल्विति निश्चयेन निर्धारणेन । नामेति कोमलामन्त्रणे । वैदिकानामवैदिकानां वा कर्मणां किंचिदपि नासाध्यं वर्तते कष्टतरं वर्तते । अपि चेति युक्त्यन्तरे । तयोः कृच्छ्रलब्धयोः कष्टप्राप्तयोरुत्पत्तिरपीदृशेनैव प्रकारेण पूर्वोक्तहेतुना उपजातोत्पन्ना ।

इत्युक्तवति शुकनासे सशोक एव राजा तारापीडः प्रत्यवादीत्प्रत्यब्रवीत् । सर्वमेतद्यदार्येण भवताभिहितं प्रतिपादितं तत्कोऽन्योऽवबुध्यते जानाति । केन वापरेण त्वदन्येन वयं परिबोधनीयाः परिबोधयितुं योग्याः समर्थाः । कस्य वापरस्य द्वितीयस्यास्माभिर्वचनं वाक्यं करणीयं निष्पादनीयम् । किंत्वित्यव्ययमङ्गीकारे स्वीकारे । तन्मे मम वत्सस्य वैशम्पायनदुःखाद्धृदयस्य स्फुटनमग्रतो दृष्टिलग्नमन्यत्सर्वमेवान्तरयत्याच्छादयति व्यवहितं करोति । तदेव हृदयस्फुटनमेव पश्याम्यवलोकयामि । तदेव शृणोम्याकर्णयामि । तदेवोत्प्रेक्षे वितर्कयामि । तद-

---

पाठा०—१ एव. २ जन्म. ३ तत्तयोरयम्. ४ मङ्गलान्यभिध्यायन्ताम्. ५ अभिवर्धताम्; अभिवर्ध्यताम्. ६ उपार्जितेन कष्टतमेनोपवासादिधर्मैर्नियमेन. ७ यद्देवगतेः; यद्यदवगतम्. ८ कर्मणां खलु वैदिकानामवैदिकानां वासाध्यं नाम किंचिदपि नास्ति. ९ चोत्पत्तिः. १० अन्तरपतितम्. ११ तदेवमप्रत्यक्षमेव मद्वत्सस्य वदनम्.

ययातेस्तारुण्ये एव जरसा भङ्गः । त्रिशङ्कोश्च पितृशापा[1]च्चाण्डालभावः । श्रूयते च स्वर्गवासी म[2]हाभिषो नाम राजास्मिँल्लोके श[3]न्तनुरुत्पन्नः । तत्पत्नीत्व[4]मुपगताया गङ्गायाः शापदोषाद-ष्टानामपि वसूनां मनुष्येषूत्पत्तिः । तिष्ठतु तावदन्यः । अयमादिदेवो भगवानजः स एव [5]जमदग्नेरात्मजता[6]मुपगतः । श्रूयते च पुनश्चतुर्धात्मानं विभज्य राजर्षेर्दशरथस्य तथैव मथु-रायां वसुदेवस्य । तन्मनुष्येषु देवतानामुत्पत्तिर्नै[7]वासंभाविनी । न च पूर्वमनुष्येभ्यो गुणैः परिहीयते देवः । न चापि भगवतः कमलनाभादतिरिच्यते चन्द्रमाः । किम[8]त्रासंभावनी-यम् । अपि च गर्भारम्भसंभवे देवेन देव्या वदने विशंश्चन्द्रमा एव दृष्टः, तथा ममापि स्वप्ने पुण्डरीकस्य दर्शनं समुपजातम् । तदुत्पत्तिं प्रति तयोर्नास्त्येव संदेहः । विनष्टयोः शरीरस्या-विनाशः [9]कथम्, कथं वा पुनर्जीवितं[10]प्रतिलम्भ इत्यत्राखिललोकप्र[11]त्याख्यातप्रभावम[12]मृतमेवैकं कारणमावेदितम् । तच्चन्द्रमसि विद्यत इत्येषास्त्येव वार्ता । [13]तत्सर्वमेतदित्थमेवावगच्छतु देवः । अन्यच्च ता[14]दृशाकारकान्तेरखिललोकाह्लादकारिणोऽन्यत्र संभव एव नास्ति । तत्कल्याणैर-[15]चिराच्छापावसाने निर्व[16]र्तितगन्धर्वसुतोद्वाहमङ्गलस्य गलन्नयनपयसो वध्वा सह पादयोः

---

सया कृत्वा भङ्गो हानिः । त्रिशङ्कोश्च पितृशापाच्चाण्डालभावः । श्रूयते चाकर्ण्यते च स्वर्गवासी देवलोकवासी महा-भिषो नाम राजास्मिँल्लोक इहलोके शन्तनुर्नाम राजोत्पन्नोऽवतरितोऽवतारं प्राप्तः । शापदोषाच्छापप्रभावात्तत्पत्नीत्वं तत्पत्नीत्वमुपगतायाः प्राप्ताया गङ्गायाः शापदोषादष्टानामष्टसंख्यानामपि वसूनां मनुष्येषूत्पत्तिर्जन्म प्रादुर्भावः प्रक-टीभावः । तिष्ठतु तावदन्यः । अयमादिदेवो भगवानजः स एव जमदग्नेरात्मजतां पुत्रतां पुत्रभावमुपगतः प्राप्तो जातः । श्रूयते चाकर्ण्यते च पुनरात्मानं चतुर्धा चतुःप्रकारेण विभज्य विभागीकृत्य राजर्षेर्दशरथस्य तनय-त्वमुपगतः प्राप्तः । तथैव मथुरायां मधुपुरि वसुदेवस्य तनयत्वमुपागतः पुत्रत्वं प्राप्तः । तदिति हेत्वर्थे । मनु-ष्येषु नरेषु देवतानां देवानामुत्पत्तिर्निष्पत्तिर्नैवासंभाविनी नासंभाव्यैव । न च पूर्वमनुष्येभ्यो देवो गुणैः परि-हीयते परिहीनो भवति सामस्त्येन न्यूनो भवति । न चापि भगवतः कमलनाभात्सकाशाच्चन्द्रमाः शशाङ्कश्चन्द्रो-ऽतिरिच्यतेऽधिकीभवति । अतः किमत्रासंभावनीयमसंभाव्यम् । अपि चेति प्रकारान्तरे । गर्भस्यारम्भसंभवे च प्रारम्भसमये देवेन भवता देव्या विलासवत्या वदने मुखे विशन्प्रवेशं कुर्वंश्चन्द्रमा एव दृष्टोऽवलोकितः । तथा ममापि स्वप्ने पुण्डरीकस्य दर्शनं समुपजातम् । ततस्तदुत्पत्तिं प्रति तयोर्द्वयोः पूर्वोक्तयोर्नास्त्येव संदेहो द्वापरः । विनष्टयोः कथं शरीरस्याविनाशः । कथं वा पुनर्जीवितस्य प्रतिलम्भः प्राप्तिरिति । अत्रापीहाप्यखिललोकेषु सम-ग्रलोकेषु प्रत्याख्यातः[1] प्रसिद्धः प्रभावो यस्यैवंभूतममृतमेव पीयूषमेव एकं कारणं निदानमावेदितं कथितम् । तदमृतं चन्द्रमसि चन्द्रे विद्यत इत्येषा वार्ता प्रवृत्तिः किंवदन्त्यस्त्येव । तत्तस्मात्कारणादेतत्सर्वमित्थमेवेति देवो-ऽवगच्छतु जानातु । अन्यच्च तादृशाकारकान्तेर्द्युतेरखिललोकस्य समग्रजनस्याह्लादकारिणः प्रमोदजननस्यानन्द-कारकस्या[2]न्यत्र संभव एव नास्ति । तदिति हेत्वर्थे । कल्याणैर्मङ्गलैरनचिरादल्पकालेन शापस्याक्षेपवचनस्यावसाने प्रान्ते सति विनिर्वर्तितं विहितं गन्धर्वसुतायाः कादम्बर्या उद्वाहमङ्गलं विवाहमाङ्गल्यं येन स तस्य गलत्क्षर-

टिप्प०—1 धन्यधन्यष्टीकाकारो यत्प्रत्याख्यातस्य प्रसिद्धार्थमुपदिशति । अस्तु. 'प्रख्यात' इत्येव पाठः । 2 'संभव एव तस्य (चन्द्रस्य)' इति पाठः ।

पाठ०—१ चण्डालभावः. २ महाधिपः. ३ शान्तनुः; शान्तनुपत्नीत्वम्. ४ उपागतायां च गङ्गायाम्; उपाग-तायाः स्वर्गङ्गायाः; उपगतायां गङ्गायाम्. ५ जामदग्नेः. ६ उपागतः. ७ असंभाविता. ८ संभावनीयम्. ९ कथम्. १० प्रलम्भः. ११ प्रख्यात. १२ अमृतमनेककारणम्; अमृतमेव कारणम्. १३ सत्यमित्थमे. १४ ईदृशस्याकारस्य कान्तेः; ईदृशाकारकान्तेः. १५ अचिरात्. १६ निवर्तित.

पततः पुत्रत्वमुपगतस्य चन्द्रापीडनाम्नान्तरितस्य लोकपालस्येव[1] चन्द्रमसो दर्शनेनाजन्मकृत[2]मेव संतापं परित्यक्ष्यति देवः । तयोरेवं[3] शापोऽस्माकं पुनर्वर एव ।

तदस्मिन्वस्तुनि मनागपि न देवेन देव्या वा शोकः कार्यः । मङ्गलान्यभिधार्यन्ताम्[4] । अभिमतदेवताराधनेन धनातिसर्जनेन चान्यजन्मोपार्जितं कुशलमभिवर्ध्यताम्[5] । अकुशलमपि यमनियमकष्टव्रतोपवासादिना[6] तपःक्लेशेन क्षयमुपनीयताम् । अपरमपि यद्यद्देवंगते[7] श्रेयस्करं श्रूयते ज्ञायते वा तत्तदद्यैवारभ्य क्रियतां कार्यतां च कर्म । न खलु[8] वैदिकानामवैदिकानां वा कर्मणामसाध्यं नाम किंचिदपि । उत्पत्तिरपि[9] च तयोः कृच्छ्रलब्धयोरीदृशेनैव प्रकारेणोपजाता ।'

इत्युक्तवति शुकनासे सशोक एव राजा प्रत्यवादीत्—'सर्वमेतद्यदार्येणाभिहितं कोऽन्योऽवबुध्यते ? केन वाऽपरेण वयं परिबोधनीयाः ? कस्य वापरस्यास्माभिर्वचनं करणीयम् ? किंतु तद्वत्सस्य मे वैशम्पायनदुःखात्स्फुटनं हृदयस्याग्रतो दृष्टिलग्नं सर्वमेवान्यदन्तरयति[10] । तदेव पश्यामि । तदेव शृणोमि । तदेवोत्प्रेक्षे । तदेवमप्रत्यक्षिते[11] वत्सस्य वदने

---

नयनयोर्लोचनयोः पयो जलं यस्य स तस्य वध्वा सह पादयोश्चरणयोः पततोऽभिवादनं कुर्वतः पुत्रत्वं सुततामुपगतस्य प्राप्तस्य चन्द्रापीडनाम्नान्तरितस्य व्यवहितस्य लोकपालस्येव सोमयमवरुणकुबेरस्येव चन्द्रमसश्चन्द्रस्य दर्शनेनावलोकनेन निरीक्षणेनाजन्मनः कृतं जन्ममर्यादीकृत्य कृतमाजन्मकृतमेव संतापहेतुत्वात्संतापं पापं देवः परित्यक्ष्यति दूरीकरिष्यति निष्पापो भविष्यति । विगतपापो भविष्यतीत्यर्थः । तयोर्द्वयोश्चन्द्रापीडपुण्डरीकयोरेवं शापोऽस्माकं पुनर्वर एव ।

तदस्मिन्वस्तुनि मनागपीषदपि स्वल्पमपि देवेन देव्या वा न शोकः कार्यः । मङ्गलानि श्रेयांस्यभिधार्यन्तामभिध्रियन्ताम् । युष्माभिरभिमतदेवताया इष्टवाञ्छितदेवताया आराधनेन सेवनेन धनस्य द्रव्यस्यातिसर्जनेनातिवितरणेन चान्यजन्मोपार्जितं परभवोपार्जितं गतभवनिष्पादितं कुशलमभिवर्ध्यताम् । यमा अहिंसासत्यास्तेयब्रह्माकिंचनतालक्षणाः । 'अहिंसासत्यमस्तेयब्रह्माकिंचनता यमाः' इति हैमः । कष्टव्रतं चान्द्रायणादि, उपवासा औपवस्तानि, एतान्यादौ यस्यैवंभूतेन तपःक्लेशेन कष्टेनाकुशलमप्यकल्याणमप्यशिवमपि क्षयं नाशमुपनीयतां प्राप्यताम् । अपरमप्यन्यदपि यद्यद्देवंगते श्रेयस्करं कल्याणजनकं शुभकारणं श्रूयते आकर्ण्यते ज्ञायतेऽवबुध्यते वा, तत्तदद्यैवारभ्याद्यदिनात्प्रभृति क्रियतां विधीयताम् । कार्यतां कारायतां च कर्म यज्ञादि शुभकर्मादि । खल्विति निश्चयेन निर्धारणेन । नामेति कोमलामन्त्रणे । वैदिकानामवैदिकानां वा कर्मणां किंचिदपि नासाध्यं वर्तते कष्टतरं वर्तते । अपि चेति युक्त्यन्तरे । तयोः कृच्छ्रलब्धयोः कष्टप्राप्तयोरुत्पत्तिरपीदृशेनैव प्रकारेण पूर्वोक्तहेतुना उपजातोत्पन्ना ।

इत्युक्तवति शुकनासे सशोक एव राजा तारापीडः प्रत्यवादीत्प्रत्यब्रवीत् । सर्वमेतद्यदार्येण भवताभिहितं प्रतिपादितं तत्कोऽन्योऽवबुध्यते जानाति । केन वापरेण त्वदन्येन वयं परिबोधनीयाः परिबोधयितुं योग्याः समर्थाः । कस्य वापरस्य द्वितीयस्यास्माभिर्वचनं वाक्यं करणीयं निष्पादनीयम् । किंत्वित्यव्ययमङ्गीकारे स्वीकारे । तन्मे मम वत्सस्य वैशम्पायनदुःखाद्धृदयस्य स्फुटनमग्रतो दृष्टिलग्नमन्यत्सर्वमेवान्तरयत्याच्छादयति व्यवहितं करोति । तदेव हृदयस्फुटनमेव पश्याम्यवलोकयामि । तदेव शृणोम्याकर्णयामि । तदेवोत्प्रेक्षे वितर्कयामि । तद-

---

पाठा०—१ एव. २ जन्म. ३ तत्तयोरयम्. ४ मङ्गलान्यभिध्यायन्ताम्. ५ अभिवर्धताम्; अभिवर्ध्यताम्. ६ उपार्जितेन कष्टतमेनोपवासादिधर्मैनियमेन. ७ यद्देवगतेः; यद्यद्देवगतम्. ८ कर्मणां खलु वैदिकानामवैदिकानां वासाध्यं नाम किंचिदपि नास्ति. ९ चोत्पत्तिः. १० अन्तरपतितम्. ११ तदेवमप्रत्यक्षमेव मद्वत्सस्य वदनम्.

संस्तम्भमेवात्मनो न शक्नोमि कर्तुम्। यत्र च ममायमीदृशः प्रकारस्तत्र देव्याः परिबोधनं दूरापेतमेव। तद्गमनादृतेऽन्य उपाय एव नास्ति जीवितसंधारणायेत्येवमवधारयत्वार्यः।' इत्युक्तवति तारापीडे चिरात्तनयपीडया तत्पुरः[1] परित्याजितलज्जं विलासवती कृताञ्जलिरुच्चैर्जगाद—'आर्यपुत्र, यद्येवं तथापि किमपरं विलम्बितेन। निर्गता एव वयम्। दीयतां प्रयाणम्। उत्ताम्यति मे हृदयं वत्सस्य दर्शनाय। दुःखापनोदार्थं स्फुटनमङ्गीकृतमासीत् तदपि[2] संप्रति दर्शनकाङ्क्षया न रोचत एव। जानामि, वरं[3] दीर्घकालमपि दुःखान्यनुभवन्ती सकृदपि वत्सस्य दर्शनाय जीवितास्मि, न पुनरसह्यदुःखोपशान्तये संप्रत्येव मृतास्मीति। तदस्य पुनर्[4]राशानिर्बन्धनस्य[5] सर्वात्ययनिवारणोपायस्य वत्साननावलोकनोत्सुकस्य[6] गमनमपि हृदयस्य तावद्विनोदतां व्रजतु।'

इति वदन्तीमेव[7] विलासवतीमासाद्यान्यतमः[8] शुकनासस्यात्मसमः[9] परिणतवयाः षट्कर्मा[10] समुपसृत्य स्वस्तिपूर्वकं[11] व्यज्ञापयत्[12]—'देवि, सर्वत[13] एवापरिस्फुटेन[14] वार्ताकलकलेनाकुलीकृत[15]हृदया मनोरमा स्वयमेव धावन्त्यागता। राज्ञो लज्जमाना नोपगता स्थानमिदम्। तदेषा

---

प्रत्यक्षिते परोक्षे च वत्सस्य वदने सत्यात्मनः संस्तम्भमेव कर्तुं न शक्नोमि न समर्थो भवामि। यत्र च ममायमीदृशः प्रकारस्तत्र देव्या विलासवत्याः परिबोधनं दूरापेतमेव। मय्यप्रबुद्धे तस्याः प्रबोधः कुतः स्यादित्यर्थः। जीवितसंधारणाय तत्र गमनादृतेऽन्योऽपर उपायो नास्ति। इत्येवमार्योऽवधारयतु निश्चिनोतु। इत्युक्तवति तारापीडे चिराद्बहुकालात्तनयपीडया सुतार्त्या तत्पुरस्तस्य राज्ञः पुरोऽग्रे परित्याजिता[2] दूरीकृता लज्जा त्रपा यथा स्यात्तथा विलासवती कृताञ्जलिर्नियोजितकरकमलोच्चैर्जगादोवाच। हे आर्यपुत्र, यद्येवं वर्तते तथापि किमपरं विलम्बितेन विलम्बकरणेन। वयं निर्गता एवेतो निःसृता एव। यतः प्रयाणं प्रस्थानं दीयताम्। वत्सस्य दर्शनायालोकनाय मे मम हृदयं वक्ष उत्ताम्यति। उत्पत्तिदुःखस्यापनोदार्थं दूरीकरणार्थं स्फुटनमपि। हृदयस्येति शेषः। अङ्गीकृतं स्वीकृतमासीत्। तदपि संप्रति दर्शनकाङ्क्षया विलोकनलिप्सया न रोचत एव न रुचिविषयीभवति इच्छा न भवति। अहमेतद्वरं जानाम्येवावबुध्ये। दीर्घकालमपि दुःखान्यनुभवन्त्यनुभवविषयीकुर्वन्ती सकृदप्येकवारमपि वत्सस्य दर्शनाय जीवितास्मि न पुनरसह्यं सोढुमशक्यं यद्दुःखं तस्योपशान्तये निवृत्तये संप्रत्येवाधुनैव मृतास्मीति। तदिति हेत्वर्थे अस्याशैव निर्बन्धनं[3] कारणं यस्य तत्तथा तस्य, सर्वात्ययः सर्वविनाशस्तस्य निवारण उपायस्य कारणस्य वत्साननस्यावलोकन उत्सुकस्य निरीक्षण उत्कण्ठितस्य हृदयस्य गमनमपि तावद्विनोदतां कौतुकतामाश्चर्यतां व्रजतु गच्छतु।

इति वदन्तीमेवेति जल्पन्तीमेव विलासवतीमासाद्य प्राप्यान्यतमोऽपरोऽनिर्दिष्टनामा शुकनासस्यात्मसम आत्मतुल्यः परिणतवयाः परिपक्ववयाः षट्कर्मा विप्रः समुपसृत्य समागत्य स्वस्तिपूर्वकं यथा स्यात्तथा व्यज्ञापयत्। किं तदित्याह—**देवीति**। हे देवि, सर्वत एव परित एवापरिस्फुटेनाप्रकटेनाव्यक्तेन वार्ताकलकलेन प्रवृत्तिकोलाहलेन किंवदन्तीकोलाहलेनाकुलीकृतं व्याकुलीभूतं हृदयं यस्याः सा तथा मनोरमा वैशम्पायनप्रसूः स्वयमेव धावन्ती त्वरितगत्या शीघ्रगत्या आगच्छन्त्यागता। राज्ञस्तारापीडाल्लज्जमाना त्रपां कुर्वाणेदं स्थानं नोपगता ना-

---

**टिप्प०**—1 न प्रत्यक्षीकृते सति, इत्याशयः। 2 'पत्युः पुरः परित्यज्य लज्जाम्' इति पाठः। 3 'दुराशानिबन्धनस्य' (दुराशया नितरां बन्धनं स्थितिर्यस्य) इत्येव पाठः।

---

**पाठा०**—१ पत्युः पुरः. २ यदपि दुःखापनोदार्थं स्फुरितमस्याशंसितं हृदयमासीत्. ३ चिरम्. ४ दुराशा. ५ अभिबन्धनस्य. ६ उन्मुखस्य. ७ रुदन्तीम्. ८ आगत्य. ९ आत्मतमः, १० षट्कर्मवान्. ११ स्वस्तीत्युक्त्वा. १२ व्यज्ञपयत्. १३ सर्वत्रैव. १४ अमुना. १५ आकुलीक्रियमाण.

मातृगृहस्य पृष्ठतस्तिष्ठति । पृच्छति च देवीम्—'किमेभिः कथितम् ? जीवति मे वत्सो वैशम्पायनः ? स्वस्थशरीरो वा ? ढौकितो वा पुनर्युवराजस्य । क्व[1] वर्तते । तावागमिष्यतो वा कियद्भिर्दिवसैः' इति । राजा तु तदुपरतिवार्ताया अपि कष्टतममाकर्ण्य दीर्ण इव शुचा, शतगुणीभूतशोकोत्प्लुताङ्गीं[2] विलासवतीमवादीत्—'देवि, न श्रुतं किंचिदपि[3] वत्सयोः प्रियसख्या ते । अन्यतश्च श्रुत्वा कदाचिज्जीवितेनैव वियुज्यते । तदुत्तिष्ठ । स्वयमेव धैर्यमालम्ब्य सर्ववृत्तान्तानुकथनेन संस्थापय[4] प्रियसखीं तथा[5] यथार्यशुकनासेन सह यातव्यम्' इत्येवमुत्थाप्य सपरिजनां विलासवतीं व्यसर्जयत् । आत्मनापि शुकनासेन सह गमनसंविधानमकारयत् ।

अथ तथा प्रस्थिते राजनि राजानुरागाच्चन्द्रापीडस्नेहेन चाश्चर्यदर्शनकुतूहलाय प्रथमगतपितृपुत्रभ्रातृमित्रस्वजनदर्शनाय च गृहरक्षकवर्जमुज्जयिन्याः सकल एव लोको गन्तुमुदचलत् । राजा तु शीघ्रगमनविघातहेतून्समस्तानेव निर्वर्त्य[6] प्रलघुपरिकरः पिबन्निव पन्थानम्, एकदिवसेनैव परापतितुमीहमानः, स्तोकत एवाध्वनः प्रभृत्युत्ताम्यता हृदयेन 'कियत्यध्वन्यद्यापि वर्तामहे, कति-

---

गता न प्राप्ता । तदेषा मनोरमा मातृगृहस्य पृष्ठतः सदनस्य पृष्ठिविभागतस्तिष्ठति स्थितास्ते । देवीं विलासवतीं च पृच्छति प्रश्नं करोति । एभिर्लेखहारिभिः किं कथितं किं प्रतिपादितं संदेशहारकैः किमुक्तम् । मे मम वत्सो वैशम्पायनो जीवति प्राणिति स्वस्थं नीरुजं शरीरं यस्यैवंभूतो वा ढौकितो वा मिलितो वा पुनर्युवराजस्य चन्द्रापीडस्य । क्व वर्तते तिष्ठति । कियद्भिर्दिवसैस्तौ द्वौ चन्द्रापीडवैशम्पायनावागमिष्यत आगमनं करिष्यत इति । राजा तु तदुपरतिवार्ताया मृत(ति)वार्तायाः किंवदन्त्या अपि कष्टतममतिकष्टं[1] समाकर्ण्य शुचा दीर्ण इव शीर्ण इव शतगुणीभूतो यः शोकस्तेनोत्प्लुतं व्याप्तमङ्गं यस्याः सैवंविधां विलासवतीमवादीदब्रवीत् । हे देवि, ते तव प्रियसख्या मनोरमया वत्सयोः पुत्रयोश्चन्द्रापीडवैशम्पायनयोः किंचिदपि न श्रुतं नाकर्णितम् । अन्यतः परेभ्यः श्रुत्वाकर्ण्य कदाचिज्जीवितेनैव प्राणितेनैव वियुज्यते मुच्यते । तत्तस्मात्कारणादुत्तिष्ठोत्थानं कुर्वभ्युत्थानं निष्पादय । स्वयमेवात्मनैव धैर्यमालम्ब्य सर्ववृत्तान्तस्य समग्रोदन्तस्यानुकथनेन पश्चात्कथनेन प्रियसखीं तथा संस्थापय संस्थापनां कुरु यथार्यशुकनासेन सह यातव्यं गन्तव्यं भवति । इत्येवंप्रकारेणोत्थाप्य सपरिजनां सपरिच्छदां सपरिवारां विलासवतीं व्यसर्जयत्तत्र गमनायाज्ञां दत्तवान् । आत्मनापि शुकनासेन सह गमनसंविधानं प्रयाणसामग्रीमकारयच्चलनविधिं व्यधापयन्निष्पादयत् ।

अथ तथा प्रस्थिते तेन प्रकारेण चलिते राजनि नृपे, राज्ञोऽनुरागात्स्नेहात्प्रीतेः, चन्द्रापीडस्य स्नेहेन प्रेम्णा चाश्चर्यस्य दर्शनमवलोकनं तस्मिन्कुतूहलं कौतुकं तस्मै, प्रथममादौ गता ये पितरो जनकाः, पुत्राः सुताः, भ्रातरो बान्धवाः, मित्राणि सुहृदः, स्वजना ज्ञातयः, तेषां दर्शनायावलोकनाय च गृहरक्षकवर्जं सद्मरक्षकान्विहायोज्जयिन्या विशालायाः सकल एव लोको गन्तुं गमनायोदचलदुदपतत् । राजा तु नृपोऽपि शीघ्रं यद्गमनं तस्य विघातहेतून्गमनप्रतिबन्धकारिणः समस्तानेव सर्वानेव निवर्त्य विसर्ज्य, प्रलघुपरिकरः स्वल्पपरिवारः पन्थानं मार्गं पिबन्निव पानं कुर्वन्निव । एकदिवसेनैव परापतितुं प्राप्तुमीहमानोऽभिलषमाणोऽभिवाञ्छमानः स्तोकत एवाध्वनो मार्गात्प्रभृति च हृदयेनोत्ताम्यतोत्तपता वक्षसोत्तपताद्यापि कियत्यध्वनि वर्तामहे

---

**टिप्प०—1 मरणवार्तातोऽपि अतिकष्टकरं मनोरमाया वाक्यं समाकर्ण्येत्यर्थः । उत, न केवलं वैशम्पायनस्य मरणमेव, परं ततोपि कष्टतरं महाश्वेतोपसर्पणादिकं समाकर्ण्येत्यर्थः ।**

पाठा०—१ का वार्ता क्व वा वर्तते. २ उत्प्लुताक्षीम्. ३ वत्सयोः कृते किंचिदपि. ४ संस्तम्भय. ५ तथापि. ६ निर्वर्त्य.

पयैर्दिवसैः परापतामः' इति मुहुर्मुहुस्तुरंगमारोपितं त्वरितकमाहूय[1] पृच्छन्न[2]विच्छिन्नकैः प्रयाणकैर्वहन्नबहुभिरेव दिवसैरासससादाच्छोदम् । आसाद्य च विकल्पशतदोलाधिरोहणदुःस्थितेनान्तरात्मना दूरस्थित एव प्रथममाप्ततमानश्ववारान्वार्तान्वेषणाय त्वरितकेन सार्धं[3] प्रहितवान् ।

अथ तैः सार्धमागच्छन्तम्, उज्झितात्मसंस्कार[4]मलिनकृशशरीरम्, अवनितलनिवेशितोत्तमाङ्गम्, उद्बाष्पदीनतरदृष्टिम्, जीवितलज्जया रसातलमिव प्रवेष्टुमीहमानम्, अहमहमिकया परस्परावरणेनैवात्मदर्शनमभिरक्षन्तम्, अक्षतमपि हतमिव, सपरिच्छदमपि मुषितमिव, जीवन्तमपि मृतमिव, ससंभ्रमकृतागमनमपि प्रतीपमाकृष्यमाणचरणमिव, अङ्गैरेव सह गलितोत्साहम्, चापेनैव सह मुक्तात्मानम्, वैक्लव्येनैव सहोपसर्पन्तं मेघनादपुरःसरं सकलमेव चन्द्रापीडचरणतलनिबद्धजीवितं राजपुत्रलोकमालोक्योल्लसित[6]नयन[7]ः शोकोर्मिवेगाक्रान्तोऽप्युच्छ्वसित इव दृढीभूतचन्द्रापीडदेहाविनाशप्रत्ययेनान्तरात्मना निवृत्य सावरणपर्याणवर्तिनीं विलासवतीमवादीत्—'देवि, दिष्ट्या वर्धसे । ध्रियते सत्यमेव शरीरेण वत्सः । येन सकल एवायं तच्चरणकमलानुजीवी राजपुत्रलोकस्तत्पादमूलादागतः' इति ।

---

कियति मार्गे वयं स्मः, कतिपयैर्दिवसैः परापतामो गच्छाम इति च मुहुर्मुहुस्तुरंगमारोपितं न्यस्तमारूढं त्वरितकनामानं सेवकमाहूयाह्वानं कृत्वामन्त्रणं विधाय पृच्छन्प्रश्नं कुर्वन्नविच्छिन्नकैर्निरन्तरैरन्तररहितैः प्रयाणकैर्गमनैर्वहन् चलन्नबहुभिरेव स्तोकैरेव दिवसैर्वासरैरच्छोदं सर आससाद प्राप्तवान् । आसाद्य च प्राप्य च विकल्पानां संकल्पानां शतं तदेव दोला प्रेङ्खा तदधिरोहणमवस्थानं तेन दुःस्थितेन दुःखितेनैवंविधेनान्तरात्मनान्तःकरणेन दूरस्थितो दविष्ठस्थितः प्रथममादावाप्ततमानतिशयेन यथार्थोपदेष्टॄनश्ववारान्सादिनो वार्तान्वेषणाय वृत्तान्तज्ञप्त्यर्थं त्वरितकेन सार्धं प्रहितवान्प्रेषितवान् ।

**अथेति** । तैः पूर्वप्रेषितैः सार्धं समागच्छन्तमायान्तमुज्झितस्त्यक्त आत्मसंस्कारः क्षालनादिरूपो येन स तम् । मलिनं कश्मलं कृशं क्षामं शरीरं यस्य स तम् । अवनितले निवेशितानि स्थापितान्युत्तमाङ्गानि शिरांसि येन स तम् । उद्बाष्पेणोद्गतनेत्रा[1]श्रुणा दीनतरातिदुःखिता दृष्टिर्यस्य स तम् । जीवितलज्जया प्राणितत्रपया रसातलमिव पातालमिव प्रवेष्टुं प्रवेशं कर्तुमीहमानं स्पृहमानम् । अहमहमिकयाहं पूर्वमहं पूर्वमिति स्वरूपया । 'अहमहमिका तु सा स्यात्परस्परं यो भवत्यहंकारः' इत्यमरः । परस्परमन्योन्यमावरणमाच्छादनं तेनात्मदर्शनं स्वावलोकनमभिरक्षन्तं रक्षां कुर्वन्तम्, अक्षतमप्यखण्डमपि हतमिव कृतक्षतमिव, सपरिच्छदमपि सपरिवारमपि सपरिस्कन्दमपि मुषितमिव लुण्ठितमिव, जीवन्तमप्यसुमन्तमपि मृतमिवोपरतमिव, ससंभ्रमं सादरं दरेण भयेन सहितं सभयं वा कृतं विहितमागमनं येनैवंविधमपि प्रतीपं विलोमम् । पश्चादिति यावत् । आकृष्यमाणौ चरणौ यस्य स तम् । सहाङ्गैरेव गलितश्च्युत उत्साहो यस्य स तम् । चापेन धनुषा सह मुक्तस्त्यक्त आत्मा येन स तम् । वैक्लव्येनैव विह्वलत्वेनैव सहोपसर्पन्तं गच्छ[2]न्तम्, मेघनादः पुरःसरोऽग्रगामी यस्य स तम् । सकलमेव समस्तमेव चन्द्रापीडस्य चरणतलं तत्र निबद्धं स्थापितं जीवितं येन स तम् । एवंविधं राजपुत्रलोकं नृपसुतजनमालोक्य वीक्ष्योल्लसिते नयने लोचने यस्य सः । शोकस्य शोचनस्योर्मयस्तरंगाः कल्लोलास्तेषां वेगो रयस्तेनाक्रान्तोऽपि व्याप्तोऽप्युच्छ्वसित इवोल्लसित इव दृढीभूतः कठिनीभूतो निश्चितश्चन्द्रापीडदेहस्याविनाशप्रत्ययो यस्यैवंभूतेनान्तरात्मना निवृत्य सावरणं यत्पर्याणं पल्ययनं तत्र वर्तिनीं विलासवतीमवादीत् । किं तदित्याह—हे देवि, त्वं दिष्ट्या भाग्येनादृष्टेन वर्धस एधसे । येन कारणेन वत्सः सत्यमेव शरीरेण ध्रियते धार्यते । येन हेतुना सकल एव समग्र एवायं तस्य वत्सस्य चरणकमलं पादसरोजमनुजीवतीत्येवंशीलो राजपुत्रलोको नृपसुतजनस्तस्य चन्द्रापीडस्य चरणमूलादागत इति ।

**टिप्प०**—1 उद्बाष्पा दीनतरा च दृष्टिर्यस्य तमित्यर्थो योग्यः । 2 आगच्छन्तमित्यर्थो योग्यः ।

पाठा०—१ आहूयाहूय. २ अविच्छिन्नैश्च. ३ सह. ४ मलिनीकृत. ५ बाष्पेण. ६ नवीन. ७ तनय..

सा तु तदाकर्ण्य किंचिदात्मपाणिनैवोत्सारितावरणसिचयाञ्चला निश्चलया दृष्ट्या चिरमिवालोक्य[1] तनयनिर्विशेषं राजपुत्रलोकमविच्छिन्नाश्रुधारापि[2] धैर्यमुन्मुच्योच्चैरारटितवती—'हा वत्स, कथं सहपांसुक्रीडितस्यैतावतो राजपुत्रलोकस्य मध्ये त्वमेवैको न दृश्यसे' इति। तथा रटन्तीं तु तां समाश्वास्य, दूरत एव राजा समं सर्वलोकेनावनितलनिवेशितोत्तमाङ्गं मेघनादम् 'इतो ढौकस्व' इत्यादिश्योद्दिश्याप्राक्षीत्[3]—'मेघनाद, कथय को वृत्तान्तो वत्सस्य' इति। स तु व्यज्ञापयत्[4]—'देव, चेतनाविरहाच्चेष्टामात्रकमेवापगतम्, शरीरे पुनर्ज्ञायते दिवसे दिवसेऽप्यधिका कान्तिः समुपजायते' इति। राजा तु तच्छ्रुत्वा जीवितप्रतिलम्भे समुपजातप्रत्याशः 'श्रुतं देव्या मेघनादस्य वचनम्, तदेहि, चिरात्पुनः कृतार्थयामो दर्शनेनात्मानम्, पश्यामो वत्सस्य वदनम्' इत्यभिदधान एवाभिवर्धितगतिविशेषया करेण्वा महाश्वेताश्रममगमत्।

अथ सहसैव तच्चन्द्रापीडगुरुजनागमनमाकर्ण्य पुरः प्रकीर्णतारमुक्तानुकारिनयनबिन्दुसं-

---

**सा त्विति**। सा विलासवती किंचिदात्मपाणिनैव स्वकीयकरेणैवोत्सारितमूर्ध्वीकृतमावरणसिचयस्याच्छादनस्य वस्त्रस्याञ्चलं प्रान्तं यया सा। 'सिचयो वसनं चीराच्छादौ सिक्चेलवाससि। पटप्रान्ताञ्चलस्यान्ते' इति हैमः। निश्चलया निर्निमेषया मेषोन्मेषरहितया दृष्ट्या दृशा चिरमिव बहुकालसदृशं तनयनिर्विशेषं यथा स्यात्तथालोक्य निरीक्ष्याविच्छिन्नाऽत्रुटिताऽश्रुधारा यस्या[1]मेवंविधापि धैर्यं साहसमुन्मुच्य संत्यज्योच्चैर्गाढस्वरेणात्यर्थमारटितवती रोदनं कृतवती, तदेव दर्शयन्नाह—**हा इति**। हा इति खेदे। हे वत्स हे पुत्र हे सुत, कथं सहपांसुक्रीडितस्य सार्धं रजःकालितस्यैतावत इयतो राजपुत्रलोकस्य नृपसुतजनस्य मध्येऽन्तरा त्वमेव भवानेवैको न दृश्यसे त्वत्स[2]दृशो न दृश्यसे न दृग्विषयीभवसि इत्यमुना प्रकारेणानेकप्रकारेण तथा रटन्तीं रुदन्तीं तु तां विलासवतीं समाश्वास्याश्वासनां कृत्वा राजा तारापीडो दूरत एव दविष्ठ एव दूरस्थ एव सर्वलोकेन समं सर्वजनेन सार्धमवनितले वसुधातले निवेशितमुत्तमाङ्गं येनैवंभूतं मेघनादमितो ढौकस्वेति [3]आनीहीत्यादिश्येत्युक्त्वोद्दिश्य[4] नाममात्रग्रहणं कृत्वाप्राक्षीदपृच्छत्। तदेव दर्शयन्नाह—**मेघेति**। हे मेघनाद, कथय ब्रूहि वत्सस्य पुत्रस्य कः कीदृशो वृत्तान्त इति। स तु मेघनादो व्यज्ञापयद्विज्ञप्तिमकार्षीत्। हे देव हे स्वामिन्, चेतनाविरहाज्ज्ञानाभावादज्ञानभावाच्चेष्टामात्रकमेव केवलं चलनादिक्रियामात्रं शरीरे देहे[5] पुनरपगतं निवृत्तं ज्ञायते दिवसे दिवसेऽप्यधिका कान्तिः प्रचुरद्युतिः समुपजायते समुत्पद्यत इति। राजा तु तच्छ्रुत्वा तदाकर्ण्य जीवितप्रतिलम्भे जीवितप्राप्तौ समुपजाता प्रत्याशा स्पृहा यस्य स मेघनादस्य वचनं देव्या श्रुतमाकर्णितम्। तदेहि। चिराच्चिरकालेन प्रचुरकालेन पुनरात्मानं दर्शनेनावलोकनेन निरीक्षणेन कृतार्थयामः कृतार्थीकुर्मः। वत्सस्य वदनं पश्याम इत्यभिदधान एवेति कथयन्नेवेति वदन्नेवाभिवर्धितो वृद्धिं प्रापितो गतिविशेषो यस्याः सा तया करेण्वा हस्तिन्या कृत्वा। तामारुह्येत्यर्थः। महाश्वेताश्रममगमत्।

**अथेति**। तद्गमनानन्तरं सहसैवाकस्मादेव तच्चन्द्रापीडस्य गुरुजनस्य मातृपितृजनस्यागमनमाकर्ण्य श्रुत्वा पुरः प्रकीर्णा विक्षिप्ता[6]स्तारा उज्ज्वलानि यानि मुक्ताफलानि ता अनुकरोतीत्येवंशीलः प्रकीर्णतारमुक्तानुकार्येवं-

---

**टिप्प०**—1 'यस्याः' इत्युचितम्। 2 मार्गे गच्छतः पुनः प्रलापोयम्। सर्वे दृश्यन्ते, त्वमेवैको न दृश्यसे, इत्येवार्थः। 3 ढौकस्व आगच्छ। टीकाकारस्य तु लोकान्तरगतं व्याकरणम्। 4 उद्दिश्येति पाठो भ्रष्टैः परिगृहीत एव। 5 चेष्टामात्रकमेवाऽपगतम्, शरीरे दिवसे दिवसेऽभ्यधिका कान्तिः समुपजायते इति ज्ञायते। अयमन्वयो योग्यः। 6 प्रकीर्णानि इत्यादि क्लीबत्वं वाच्यम्, टीकाकारबुद्ध्या लेखकदोषाद्वा अत्र प्रमादो दृश्यते।

---

**पाठा०**—१ विलोक्य. २ अवच्छिन्न. ३ उद्दिश्योद्दिश्य; इत्यादिश्य. ४ व्यज्ञपयत. ५ पुनः. ६ संदोहम्.

दोहा 'हा, हतास्मि मन्दपुण्या दुःखैकभागिनी । न जानाम्येव विस्मृतमरणा कियद्यावदहमनेनानेकप्रकारं[1] खलीकारदानैकपण्डितेन दग्धवेधसा परं दग्धव्या' इत्यभिदधानैव धावित्वा ह्रिया महाश्वेता गुहाभ्यन्तरमविशत्[2] । चित्ररथतनयापि सत्वरोपसृतसखीकदम्बकावलम्बितशरीरा तूष्णीमेव मोहान्धकारम् । तदवस्थयोश्च तयोः शुकनासावलम्बितशरीरो राजा विवेशाश्रमपदम् । तदनु मनोरमावलम्बिता पुरःप्रधावितोत्प्लुतायततरदृष्टिः 'क्व मे वत्सः' इति पृच्छन्ती विलासवती । प्रविश्य च सह[3] तयैव कान्त्याऽविरहितमुपरतसर्वप्रयत्नं सुप्तमिव[4] तं पुत्रवत्सला[5] तनयमालोक्य यावन्न परापतत्येव तारापीडस्तावद्विलासवती विधारयन्तीं मनोरमामभ्याक्षिप्य दूरत एव प्रसारितबाहुलताद्वया रयोन्मुक्तजर्जराभिर्नयनजलधाराभिः प्रस्रवेण च सिञ्चन्ती महीतलम् 'एह्येहि जात दुर्लभक, चिराद्दृष्टोऽसि, देहि मे प्रतिवचनम् । आलोकय सकृदपि माम्, अनुचितं तात तवैतदवस्थानम् । उत्थायाङ्कोपगमनेन मे संपादय तनयोचितं स्नेहम् । न चानाकर्णितपूर्वं[6] बाल्येऽपि त्वया मद्वचनम्, अद्य किमेवं विलपन्त्या

---

विधो नयनविन्दुर्लोचनविन्दुसंदोहो यस्याः सा तथा । हा अहं हतास्मि पीडितास्मि । कीदृशी । मन्दं स्वल्पं पुण्यं यस्याः सा । पुनः कीदृशी । दुःखमेकं केवलं भजतीत्येवंशीला सा तथा । अहं न जानाम्येव नावबुध्ये एव । विस्मृतं विस्मरणतां गतं मरणं मृत्युर्यस्याः सा । कियद्यावदहमनेन दग्धवेधसा ज्वलितब्रह्मणानेकप्रकारं यथा स्यात्तथा खलीकारस्य स्खलनविधेः प्रदान एकपण्डितेनात्यन्तचतुरेण दग्धव्या दहनीया ज्वालनीया । इत्यभिदधानैवेति कथयन्त्येव ह्रिया त्रपया धावित्वा धावनं कृत्वा महाश्वेता गुहाभ्यन्तरमविशद्दरीमध्यमाविवेश । चित्ररथतनयापि कादम्बर्यपि सत्वरं शीघ्रमुपसृतं पार्श्वे समीप आगतं सखीकदम्बकं तेनावलम्बितं स्तम्भितं शरीरं यस्याः सा तूष्णीमेव मौनमेव मोहान्धकारमाविशन्मूर्च्छामगमत् । तदवस्थयोस्तादृशयोश्च तयोर्महाश्वेताकादम्बर्योर्द्वयोः सत्योः, शुकनासेनावलम्बितं धृतं शरीरं यस्यैवंभूतो राजाश्रमपदं विवेश प्राविशत्प्रवेशं चकार । तदनु पश्चान्मनोरमयावलम्बिता, पुरोऽग्रे प्रधाविता चञ्चलायततरातिदीर्घा दृष्टिर्यस्याः सा क्व मे मम वत्स इति पृच्छन्ती प्रश्नयन्ती विलासवती तयैव मनोरमयैव सह प्रविश्य च प्रवेशं कृत्वैव सहजया स्वाभाविकया कान्त्याऽविरहितं दीप्त्या सहितं (कान्त्या सहित)मुपरतो निवृत्तः सर्वः प्रयत्न[2] उद्यमो यस्मात्स तम् । अत एवोत्प्रेक्षते । सुप्तमिव कृतनिद्रमिव निद्रावशमिव, पुत्रे सुते सूनौ वत्सला हितकारिणी तनयं पुत्रं सुतमालोक्य यावन्न परापतत्येव पश्चादागच्छत्येव तारापीडस्तावद्विलासवती विधारयन्तीं देहावष्टम्भं कारयन्तीं मनोरमामप्याक्षिप्याक्षेपणं कृत्वा दूरत एव दविष्ठत एव प्रसारितं विस्तारितं बाहुलताद्वयं भुजवल्लीयुग्मं यया सा रयेण वेगेनोन्मुक्तात[3] एव प्रान्ते जर्जराः शिथिलास्ताभिर्नयनयोर्जलधाराभिरश्रुसंतानैः प्रस्रवेण स्तनोद्गतदुग्धेन च महीतलं सिञ्चन्ती सेकं कुर्वन्ती सेचनं कुर्वन्ती—हे जात हे पुत्र हे वत्स, एह्येह्यागच्छागच्छ । हे दुर्लभक हे दुष्प्राप, चिराच्चिरकालाद्बहुकालेन दृष्टोऽस्यवलोकितोऽसि निरीक्षितोऽसि । मे मम प्रतिवचनं प्रत्युत्तरं देहि । मां सकृदपि चैकवारमप्यालोकय दृग्विषयीकुरु दृष्ट्यावलोकनं कुरु । हे तात हे पितः, तवैतदवस्थानमनुचितमन्याय्यम् । उत्थायोत्थानं कृत्वाङ्के क्रोडे उत्सङ्गे यदुपगमनं तेन मे मम तनयोचितं पुत्रन्याय्यं तनययोग्यं स्नेहं प्रेम संपादय विधेहि । बाल्येऽपि बाल्यावस्थायामपि त्वया भवता मद्वचनं मातृवचो न चानाकर्णितपूर्वं न चाश्रुतपूर्वम् । अद्य किं जातम् । एव-

---

टिप्प०—1 'प्रविश्य च सहजयैव कान्त्याऽविरहितम्' इत्येव पाठः । 2 निवृत्तसर्वचेष्टमित्यर्थः । 3 उन्मुक्ताः अत एव, इति शुद्धं बोध्यम् । 4 मन्ये, टीकाकारस्य समये समये प्रमाद-वेतालावेशो भवति यत् 'तातः पितरि पुत्रे च' इति स्थाने स्थाने स्वयं लिखन्नपि, अत्र विस्वरं गायति ।

---

पाठा०—१ प्रकार. २ गृहा. ३ सहजया. ४ पुस्तमयमिव; प्रस्तरमयमिव. ५ पुत्रवत्सलः. ६ अनाक्रमितपूर्वम्; अनवकर्णितपूर्वम्.

अपि न शृणोषि ? जात, केन रोषितोऽसि ? एषा तोषयामि वत्सं पादयोर्निपत्य । पुत्र चन्द्रापीड, प्रणम तावत्प्रत्युद्गम्य त्वत्स्नेहादेवातिदूरमागतस्यापि पितुः पादौ । क्व सा गता ते गुरुभक्तिः ? क्व ते गुणाः ? क्व स स्नेहः ? क्व सा धर्मज्ञता ? क्व तत्पितृपक्षपातित्वम् ? क्व सा बन्धुप्रीतिः ? क्व सा परिजनवत्सलता ? कथमभाग्यैर्मे सर्वमेकपद एवोत्सृज्यैवमौ[1]दासीन्यमवलम्ब्यावस्थितोऽसि । अथवा यथा ते सुखं तथा तिष्ठ । वयमुदासीनहृदयास्त्वयि' इति कृतार्तप्रलापा समुपसृत्य पुनः पुनर्गाढमालिङ्ग्याङ्गानि, शिरः समाघ्राय, कपोलौ चुम्बित्वा, चन्द्रापीडस्य चरणावुत्तमाङ्गे कृत्वोन्मुक्तकण्ठमरोदीत् ।

तथा रुदन्तीं तु तामन्तरितनिजपीडस्तारापीडश्चन्द्रापीडमपरिष्वज्यैव सर्वप्रजापीडापहरणक्षमाभ्यां [2]भुजाभ्यामवलम्ब्याब्रवीत्—'देवि, [3]यद्यथाऽऽवयोः सुकृतैर[4]पत्यतामुपगतस्तथापि देवतामूर्तिरेवायमशोचनीयः । त[5]न्मुच्यतामयमिदानीं [6]मनुष्यलोकोचितः शोचितव्यवृत्तान्तः । [7]अस्मिञ्छोके कृते न किंचिदपि भवति । केवलं गल एव स्फुटति, रटतो न हृदयम् ।

---

मनुना प्रकारेण विलपन्त्या प्रलपन्त्या अपि न शृणोषि नाकर्णयसि । हे जात, केन रोषितः क्रोधं प्रापितोऽसूयां प्रापितोऽसि । एषा विलासवती पादयोश्चरणयोर्निपत्य निपतनं कृत्वा प्रणामं कृत्वा वत्सं पुत्रं तोषयामि संतोषयामि तुष्टिमुत्पादयामि । हे पुत्र हे वत्स हे सूनो चन्द्रापीड, प्रत्युद्गम्य संमुखमागम्याभिमुखमागत्य तावदादौ त्वत्स्नेहात्तव प्रेम्णस्त्वत्प्रीतेरेवातिदूरमागतस्यातिदविष्ठमागतस्य पितुस्तारापीडस्य पादौ चरणौ प्रणम नमस्कुरु । सा ते तव गुरुभक्तिः पितर्याराध्यत्वेन ज्ञानं श्रद्धा वा वासना वा क्व गता कुत्र याता । ते तव गुणा भवद्गुणाः शौर्यादयः क्व । स प्राक्तनः स्नेहः प्रेम क्व । सानिर्वचनीया वक्तुमशक्या धर्मज्ञता वृषवेत्तृता धर्मज्ञातृता क्व । तत्सर्वप्रसिद्धं पितृपक्षपातित्वं क्व जनकमताश्रयित्वं क्व । सा बन्धुप्रीतिः क्व स्वजनेषु स्नेहः क्व स्वजनेषु प्रेम क्व । सा परिजने परिच्छदे वत्सलता हितकारिता क्व । ममाभाग्यैर्दुर्दैवैर्मे ममैकपद एव सर्वमुत्सृज्यैव त्यक्त्वैव कथमौदासीन्यं माध्यस्थ्यमवलम्ब्यालम्बनीकृत्यावस्थितोऽसि । अथवेति पक्षान्तरे । यथा ते तव सुखं तथा तेन प्रकारेण तिष्ठावस्थानं कुरु । वयं तूदासीनमुदासतां गतं हृदयं चेतो येषां ते तथोक्तास्त्वयि विषये । इति कृत आर्तप्रलापो यया सैवंविधा विलासवती समुपसृत्य समीपे गत्वा पुनः पुनर्वारंवारमङ्गानि हस्तादीनि गाढं दृढमालिङ्ग्याश्लिष्य शिर उत्तमाङ्गं समाघ्रायाघ्राणं कृत्वा कपोलौ प्रसिद्धौ चुम्बित्वा चुम्बनं कृत्वा चन्द्रापीडस्य चरणौ पादावुत्तमाङ्गे शिरसि कृत्वोन्मुक्तकण्ठं यथा स्यात्तथारोदीद्रुदनं चकार ।

तथाप्रकारेण रुदन्तीं तु तामन्तरिता व्यवहिता निजपीडा येन[1] स एवंभूतस्तारापीडश्चन्द्रापीडमपरिष्वज्यैवानालिङ्ग्यैव सर्वप्रजायाः समग्रलोकस्य सर्वप्रकृतेः सकलजनस्य पीडार्तिस्तस्या अपहरणे दूरीकरणे क्षमाभ्यां समर्थाभ्यां भुजाभ्यां बाहुभ्यामवलम्ब्यालम्बनीकृत्याब्रवीदभ्यधादवोचत् । किं तदित्याह—**देवेति** । हे देवि, यदिति हेत्वर्थे । यथा येन [2]प्रकारेणावयोस्तारापीडविलासवत्योः सुकृतैः पुण्यैरपत्यतां प्रसूतितामुपगतः प्राप्तः । 'सुकृती पुण्यवान्धन्यः' इति कोशः । तथाप्ययं देवतामूर्तिरेव देवस्वरूप एवाशोचनीयो न शोचनीयः शुचं कर्तुमयोग्यः । तत्तस्माद्धेतोरिदानीं सांप्रतमयं मुच्यतां त्यज्यताम् मनुष्यलोकस्योचितो योग्यः शोचितव्यवृत्तान्तः

---

**टिप्प०—1 यस्य, स्वां पीडामगणयन्नित्यर्थः । 2 'यद्यप्यावयोः सुकृतैरपत्यतामुपगतः' इति पाठो मनोरमः ।**

---

पाठा०—१ औदासीन्य; अनुदासीन. २ दोर्भ्याम्. ३ यद्यप्यावयोः. ४ उपगतोऽपत्यताम्. ५ तन्मुच्यताम्. ६ मनुष्यस्नेहोचितशोचितव्यवृत्तान्तस्य; मनुष्यलोकोचितः परिशोचितव्यवृत्तान्तः. ७ न शोके कृते.

निरर्थकं प्रलपितमेव निर्याति वदनान्न जीवितम्। निरासङ्गं नयनजलमेव पतति न शरीरम्। अपि च वत्सस्यादर्शनमात्रमेवावयोः पीडाकरम्। तच्चैवमालोक्यमाने मुखेऽस्य दूरापेतम्। अपरमस्यामवस्थायामावाभ्यामपि तावत्परमवष्टम्भं कृत्वा मनोरमा शुकनासश्च संधारणीयौ ययोर्लोकान्तरितो वैशम्पायनः। तिष्ठतां तावदेतावपि। यस्याः प्रभावात्पुनरनुभवनीयो वत्सस्य जीवितप्रतिलम्भाभ्युदयमहोत्सवः सैवैवं गन्धर्वराजतनया वधूस्तेऽस्मदागमनशोकोर्मिसंक्रान्तिमूढा सनामग्रहणमुन्मुक्ताक्रन्दाभिः प्रियसखीभिर्ग्राह्यमाणाऽद्यापि संज्ञां न प्रतिलभते। तदेनां तावदुत्थाप्याङ्के कृत्वा चेतनां लम्भय। ततो यथेच्छं रोदिष्यसि'।

इत्यभिहिता राज्ञा विलासवती—'क्व सा मे वत्सस्य जीवितनिबन्धनं वधूः' इत्यभिदधत्येव ससंभ्रममुपसृत्याप्रतिपन्नसंज्ञामेवाङ्केनादाय, कादम्बरीं करेण, मूर्च्छानिमीलनाहितद्विगुणतरनयनशोभं वदनमालोक्य, अनवरतनयनसलिलस्नानार्द्रमिन्दुशकलशीतलं स्वकपोलं कपोलयोः, ललाटे ललाटम्, लोचनयोश्च लोचने निवेशयन्ती, चन्द्रापीडस्पर्शशिशिरेण च पाणिना

---

शोचनार्हः शोचितव्यस्तस्य वृत्तान्त उदन्तः। अस्माकं शोके कृते न किंचिदपि भवति नाधिकं किमपि जायते। केवलं रटतो रुदतो गल एव निगरण एव स्फुटति स्फोटं प्राप्नोति न हृदयम्। वदनान्मुखान्निरर्थं व्यर्थं प्रलपितं जल्पितमेव निर्याति बहिरायाति न जीवितं न प्राणितम्। निरासङ्गं निःसंबन्धं नयनजलमेवाश्रुपानीयमेव पतति स्रंसते न शरीरं न देहः। **अपि चेति।** वत्सस्य चन्द्रापीडस्यादर्शनमात्रमेवानवलोकनमात्रमेवानिरीक्षणमात्रमेवावयोः पीडाकरमार्तिजनकम्। अस्य चन्द्रापीडस्यैवमालोक्यमाने मुखे तद्दूरापेतं दविष्ठापेतं दूरापास्तम्। अपरमन्यदस्यामवस्थायां दशायामावाभ्यामपि दम्पतीभ्यामपि परममुत्कृष्टमवष्टम्भं प्रतिबन्धं कृत्वा मनोरमा शुकनासश्च संधारणीयौ। मृत्यो रक्षणीयावित्यर्थः। ययोर्द्वयोर्मध्ये लोकान्तरितो वर्तते वैशम्पायनः। तिष्ठतां वा तावदेतावपि मनोरमाशुकनासावपि तिष्ठतामित्यर्थः। यस्याः कादम्बर्याः प्रभावात्पुनर्वत्सस्य जीवितस्य प्रतिलम्भः प्रकर्षेण लाभस्तस्याभ्युदयस्तस्य मह उत्सवोऽनुभवनीयोऽनुभवविषयीकरणीयः। सैवेयं गन्धर्वराजतनया ते तव वधूरस्माकमागमनेन यः शोकः शुक् तस्योर्मयस्तरङ्गाः कल्लोलास्तेषां संक्रान्तिः संक्रमणं तेन मूढा अज्ञा सनामग्रहणं नामग्रहणपूर्वं यथा स्यात्तथोन्मुक्त आक्रन्दो याभिरेवंविधाभिः प्रियसखीभिर्ग्राह्यमाणा ध्रियमाणा अद्यापि सांप्रतमपि संज्ञां चेतनां न प्रतिलभते। तत्तस्माद्धेतोस्तावदादावेनामुत्थाप्याङ्क उत्सङ्गे कृत्वा चेतनां संज्ञां लम्भय प्रापय। ततो यथेच्छं इच्छा यथा स्यात्तथा रोदिष्यसि रुदनं करिष्यसि।

इति राज्ञाभिहिता कथिता विलासवती मे मम वत्सस्य जीवितनिबन्धनं कारणं वधूः क्वेत्यभिदधत्येवेति कथयन्त्येव ससंभ्रमं संभ्रमेण सहितं ससंभ्रमं सादरं सभयं वोपसृत्य समीपे निकटे गत्वाप्रतिपन्नसंज्ञामेवाप्तचेतनामेवाङ्केनोत्सङ्गेनादाय कादम्बरीं मूर्च्छानिमीलनेनाहिता स्थापिता द्विगुणतरनयनशोभा यस्मिन्नेतादृशं वदनं मुखमालोक्य निभाल्यानवरतं निरन्तरं नयनसलिलेन लोचनजलेन स्नानमाप्लवस्तेनार्द्रमुन्नमत एवेन्दुशकलवच्चन्द्रखण्डवच्छीतलं शिशिरं स्वकपोलं कपोलयोर्ललाटं ललाटे, लोचनयोश्च लोचने, निवेशयन्ती स्थापयन्ती। 'अध-

---

**टिप्प०—1 अपूर्वोऽयमर्थः। ययोर्वर्तमानयोः, ययोर्वैशम्पायनः ( यत्पुत्रो वैशम्पायनः, तथा च संबन्धे षष्ठी ) इत्यर्थो वा योग्यः। 2 टीकाकारकरपवित्रितादस्मात्पाठान्नीचैर्धृतः पाठो रम्यः। व्याख्या स्पष्टा, टीकयाऽनया सुगमा च।**

---

**पाठा०**—१ परं वदनात्. २ तिष्ठ; तिष्ठेताम्. ३ अस्य. ४ गृह्यमाणापि. ५ एताम्. ६ अङ्के कृत्वोत्थाप्य. ७ विलासवती तु तच्छ्रुत्वा ससंभ्रमोन्मुक्तचन्द्रापीडचरणा तत्क सा मे जीवितप्रतिलम्भहेतुर्वत्सस्य वधूरिति धावमाना चोपसृत्य तदवस्थां तु तामुत्थाप्याङ्के कृत्वा मूर्च्छानिमीलनाहितद्विगुणतरनयनशोभं वदनमालोक्य, ८ अप्रतिपत्तिसंज्ञाम्. ९ निमीलित. १० ललाटेन.

हृदये[1] स्पृशन्ती 'समाश्वसिहि मातः[2], त्वया विनाऽद्य प्रभृति केन संधारितं वत्सस्य मे चन्द्रापीडस्य शरीरम् ? मातः, त्वममृतमयीव जातासि, येन वत्सस्य पुनर्वदनमालोकितम्' इत्यवादीत् । कादम्बरी तु तेन चन्द्रापीडनामग्रहणेन तेन च तन्निर्विशेषवृत्तिना[3] विलासवतीशरीरस्पर्शेन लब्धसंज्ञापि लज्जावनम्रमुखी प्रतिपत्तिमूढा मदलेखयाङ्कादवतार्य परवत्येव यथाक्रममकार्यत वन्दनां गुरूणाम् । 'आयुष्मति, दीर्घकालमविधवा भव' इति कृताशीर्वादा च शनैरुत्थाप्यातिनिकटे[4] विलासवत्याः पृष्ठतः समुपवेश्याधार्यत ।

अथ प्रत्यापन्नचेतनायां चित्ररथतनयायां चन्द्रापीडमेवोज्जीवितं मन्यमानो राजा चिरमिवास्य गाढमङ्गमालिङ्ग्य[5] चुम्बंश्च पश्यंश्च स्पृशंश्च स्थित्वा मदलेखामाहूयाहूयादिदेश[6]—'दर्शनसुखमात्रकमस्माकं विधीयमानम्, तच्चास्माभिरासादितम्[7] । तद्यादृशेनैवोपचारेणैतावतो दिवसानुपचरितवती वधूर्वत्सस्य शरीरम्, स एवोपचारो नास्मदनुरोधाल्लज्जया[8] वा मनागपि परिहरणीयः[9] । वयं[10] निष्प्रयोजना द्रष्टार एव केवलम् । किमस्माभिरिह स्थितैर्गतैर्वा ।

---

स्तात्तु स्याच्चिबुकं स्याद्गल्लः सृक्कणः परः । गल्लात्परः कपोलश्च परो गण्डः कपोलतः' इति हैमकोशः । चन्द्रापीडस्पर्शशिशिरेण शीतलेन च पाणिना करेण हृदये वक्षसि स्पृशन्ती स्पर्शं कुर्वन्ती । हे मातः, यथा पुत्रे तात इति प्रयोगस्तथा पुत्रीसमायां सुतातुल्यायां स्नुषायामपि मातृशब्दप्रयोगः । त्वं समाश्वसिह्याश्वासनां कुरु । यतस्त्वया भवत्या विनाद्यप्रभृत्येतद्दिनादारभ्य मे मम वत्सस्य सुतस्य चन्द्रापीडस्य शरीरं वर्ष्म केन संधारितं धृतम् । हे मातः, त्वममृतमयीव पीयूषनिर्मितेव संजाता । येन कारणेन वत्सस्य वदनं सुतस्य वदनं पुनर्द्वितीयवारमवलोकितं निरीक्षितमित्यवादीदित्यब्रवीत् । कादम्बरी तु तेन चन्द्रापीडनामग्रहणेन तेन च तस्माच्चन्द्रापीडस्पर्शान्निर्विशेषवृत्तिना तत्सदृशेन विलासवतीशरीरस्पर्शेन (संज्ञां चेतनां[1] लेभे प्राप्तवती ।) लब्धसंज्ञापि प्राप्तचेतनापि लब्धा प्राप्ता संज्ञा चैतन्यं यया सैवंविधापि लज्जयावनम्रं मुखं यस्याः सा प्रतिपत्तिः[2] सेवा तस्यां मूढाज्ञाधोमुखी नीचैर्मुखी मदलेखयाङ्कादुत्सङ्गादवतार्यावतारणं कृत्वा परवत्येव परायत्तेव गुरूणां चन्द्रापीडमातृपितॄणां यथाक्रममनुक्रमेण वन्दनामकार्यत व्यधाप्यत । 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः । हे आयुष्मति हे चिरजीविते, दीर्घकालमविधवा वैधव्यरहिता भवेति कृत आशीर्वाद आशीःप्रदानं यस्याः सा तथा कृताशीर्वादा च शनैरुत्थाप्यातिनिकटेऽतिसमीपे विलासवत्याः पृष्ठतः पश्चाद्भागे समुपवेश्य सखीजनैरधार्यत ।

**अथेति** । तदनन्तरं प्रत्यापन्नचेतनायां प्राप्तचैतन्यायां तु चित्ररथतनयायां कादम्बर्यां चन्द्रापीडमुज्जीवितमेव मन्यमानो जानानः । तस्या उज्जीवनादिति भावः । राजा तारापीडश्चिरमिव चिरकालमिवास्य चन्द्रापीडस्य गाढं दृढमङ्गमालिङ्ग्य परिष्वज्य चुम्बंश्चुम्बनं कुर्वन्पश्यन्विलोकयन्स्पृशन्स्पर्शं कुर्वंश्च स्थित्वा च कियत्कालं कतिपयकालं मदलेखामाहूयाह्वानं कृत्वादिदेशादिष्टवान् । दर्शनसुखमात्रकं केवलमवलोकनसुखमस्माकं विधीयमानं क्रियमाणं तच्चास्माभिरासादितं प्राप्तम् । तदिति हेत्वर्थे । यादृशेन वोपचारेण प्रतिक्रिययैतावतो दिवसान्वधूः स्नुषा वत्सस्य शरीरमुपचरितवत्युपचारं कृतवती स एवोपचारोऽस्मदनुरोधादस्मत्प्रतिबन्धाल्लज्जया त्रपया वा मनागपीषदपि न परिहरणीयो न परिहार्यः । वयं निष्प्रयोजना निरर्थकाः केवलं द्रष्टार एव विलोकयितार एव । अस्माभिरिह स्थले स्थितैरवस्थितैर्गतैर्वा किम् । यस्या भवत्याः करस्पर्शेनैतदविनाश्यविनश्वरमाप्या-

---

**टिप्प०**—1 व्याख्याया अस्या मूलाक्षराणि न प्राप्यन्ते । 2 प्रतिपत्तिमूढा किंकर्तव्यमिति ज्ञानविकला ।

---

**पाठा०**—१ हृदयम्. २ हेमातः. ३ निर्विशेष. ४ शनैः शनैस्तैरुत्थाप्य; तैरुत्थाप्यमाना; शनैरुत्थाप्यमाना. ५ आलिङ्गन्. ६ आहूय. ७ यत्. ८ उपरोधात्. ९ परिहारणीयः. १० वयं तु.

यस्याः करस्पर्शेनाप्यायितमेतद्[1]विनाशि सैव वधूः पार्श्वेऽस्य तिष्ठतु' इत्यादिश्य निर्जगाम। निर्गत्य चोपकल्पितं निजावासमगत्वैव तपस्विवासोचितेऽन्यतमस्मिन्नासन्न एवाश्रमस्य शुचिशिलातलसनाथे तरुलतामण्डपे समुपविश्य निर्विशेषदुःखं सकलमेव राजचक्रमाहूयाहूय सबहुमानमवादीत्—

'न, भवद्भिरवगन्तव्यं यथाद्य शोकावेगादेवैतदहमङ्गीकरोमि' इति। पूर्वचिन्तित एवायमर्थो यथा वधूसमेतस्य चन्द्रापीडस्य वदनमालोक्य संक्रामितनिजभरेण मया कचिदाश्रमपदे गत्वा पश्चिमं वयः क्षपयितव्यमिति। स चायं मे भगवता कृतान्तेन, पुराकृतैः कर्मभिर्वा विरूपैरेवं समुपनमितः। किमपरं क्रियते? अनतिक्रमणीया नियतिः। अप्रापणीयं नानुभूतमात्मचेष्टाकृतं वत्सस्य [2]सुखम्। प्रजापरिपालन[3]फलं तु पुनर्भवद्भुजेष्वेवम[4]क्षतेष्वविरहितमस्त्येव। [5]अन्यथापि हि चेष्टमानेष्वस्मासु सर्वमेष्वेवावस्थितम्। तदिच्छामि चिरकाङ्क्षितं मनोरथं पूरयितुम्। धन्याश्च जरापीतसारतनवस्तनयेष्वात्मभरमासज्य लघुशरीराः परलोकगमनं साधयन्ति। [6]यच्च बलाद्गले पादमाधाय यदा तदानिच्छतोऽप्या-

---

यितं शीतलीभूतं सैव वधूः स्नुषास्य चन्द्रापीडस्य पार्श्वे तिष्ठत्ववस्थानं करोतु। इत्यादिश्याज्ञां दत्त्वा निर्जगाम निर्ययौ। निर्गत्य च निर्गमनं कृत्वा चोपकल्पितं विहितं निजावासं स्वकीयसौधमगत्वैव तत्र गमनमविधायैव तपस्विवासोचिते मुनिजननिवासयोग्य आश्रमस्य महाश्वेताया आसन्न एव समीपवर्तिनि शुचिभिः पवित्रैः शिलातलैः सनाथे सहितेऽन्यतमस्मिंस्तरुलतामण्डपे तरूणां लता एव वल्ली एव मण्डपाकारेण मण्डपसदृशाकारेण व्यवस्थितास्तरवश्च लताश्च छत्राकारेण स्थिता रोहितास्तरुलतामण्डपा वा तस्मिन्समुपविश्यास्थाय निर्गतो विशेषो यस्मादेतादृशं दुःखं यस्मिन्नेवंभूतं सकलमेव समग्रमेव राजचक्रं नृपसमूहमाहूयाहूय सबहुमानं ससत्कारमवादीदब्रवीत्।

भवद्भिर्नावगन्तव्यं न ज्ञातव्यम्, यथाद्य शोकावेगादेतद्वनवासलक्षणमहमङ्गीकरोमि स्वीकुर्वे इति। अयमर्थः पूर्वं चिन्तित एव प्रागालोचित एव प्रथममालोचित एव। तदेव विशदयति प्रकटयति—**यथेति**। यथा वधूसमेतस्य चन्द्रापीडस्य वदनमाननमास्यं आलोक्य निरीक्ष्य संक्रामितोऽन्यत्र स्थापितो निजभरो राज्यभारो येनैवंभूतेन मया कचिदनिर्दिष्टनामन्याश्रमपदे मुनिस्थानस्थले गत्वा पश्चिमं प्रान्तं वयः क्षपयितव्यं परिपूर्णतां नेयमिति। स चायमर्थः कृतान्तेन यमेन लोकपालत्वाद्भगवता ज्ञानवता पूज्येन, पुराकृतैः पूर्वभवाचीर्णैर्विरूपैरशुभैः कर्मभिर्वैवं पूर्वोक्तप्रकारेण समुपनमितोऽधरीकृतः। अपरं द्वितीयं किं क्रियते, यतोऽनतिक्रमणीयानुल्लङ्घनीया नियतिर्ब्रह्मनिर्मितिरदृष्टं वा। आत्मचेष्टात्मप्रयत्नस्तेन कृतं वत्सस्य चन्द्रापीडस्य सुखमप्रापणीयं प्राप्तुमयोग्यं नानुभूतं नानुभवविषयीकृतम्। प्रजापरिपालनसुखफलं तु पुनरक्षतेष्वखण्डितेषु भवद्भुजेष्वेव सत्स्वविरहितं न वियोगमापन्नमस्त्येव। [1]अन्यथापि ह्यस्मासु चेष्टमानेषु क्रियमाणेषु सर्वमेतेष्वेव भवद्भुजेष्वेवावस्थितं स्थितिमापन्नम्। तदिति हेत्वर्थे। इच्छामि चिरकाङ्क्षितं चिरवाञ्छितं मनोरथं पूरयितुं परिपूर्णीकर्तुम्। धन्याश्च कृतकृत्याश्च जरया विस्रसया पीतं गृहीतं सारं बलं यासामेवंभूतास्तनवो येषां ते तथा तनयेषु पुत्रेष्वात्मभरमासज्य न्यस्य अतएव लघुशरीराः परलोकगमनं भवान्तरगतिं साधयन्ति निष्पादयन्ति। यच्च बलाद्धठाद्गले निगरणे पादं चरणमाधाय स्थापयित्वा दत्त्वा यदा तदा यस्मिंस्तस्मिन्कालेऽनिच्छतोऽप्यनभिलषतोपि कृतान्तेन

---

टिप्प०—1 अस्मासु अन्यथा चेष्टमानेष्वपि ( इत्थं सर्वपरित्यागेन आश्रमपदमधितिष्ठत्स्वपि ) सर्वं प्रजारक्षणादिकम्, एषु ( भवद्भुजेषु, एवावस्थितम् ) भवद्बलायत्तमिति स्पष्टोऽर्थः।

---

पाठा०—१ अविनाशि शरीरम्. २ सुखम्. ३ फलं बल. ४ अविहतम्. ५ अन्यत. ६ तच्च.

च्छिद्यत एव कृतान्तेन, तद्यदि पात्रे क्वचिदपि स्थापयित्वा निजपदं जरापरिभुक्तायुःशेषेण निष्प्रयोजनस्थितिना सर्वसुखबाह्येन मांसपिण्डेन परलोकसुखान्युपार्ज्यन्ते, लाभ एवायम् । तदस्य वस्तुनः कृते भवन्तो मया प्रत्यर्थिताः'—

इत्युक्त्वा संनिहितान्यपि परित्यज्योचितानि सर्वसुखान्यनुचितान्यङ्गीकृत्य वन्यानि । तथा हि—हर्म्यबुद्धिं वृक्षमूलेषु, अन्तःपुरस्त्रीप्रीतिं लतासु, संस्तुतजनस्नेहं हरिणेषु, निवसनरुचिं चीरवल्कलेषु, कुन्तलरचनाभियोगं जटासु, आहारहार्दं कन्दमूलफलेषु, शस्त्रधारणव्यसनमक्षसूत्रेषु, प्रजापरिपालनशक्तिं समित्कुशकुसुमेषु, नर्मालापं धर्मसंकथासु, समररसमुपशमे, जयेच्छां परत्र, कोशस्पृहां तपसि, आज्ञां मौने, सर्वोपभोगरागं च वैराग्ये, तनयस्नेहं तरुषु संक्रमय्य, यांस्तपस्विजनोचिताः क्रियाः कुर्वन्, गन्धर्वलोकोचितानहरहरुपचारान्कादम्बर्या कथमपि समुत्सृष्टलज्जया महाश्वेतया च क्रियमाणाननिच्छन्, अविच्छेदात्सायं प्रातश्चानुभूतचन्द्रापीडदर्शनसुखो दुःखान्यगणयन्नरपतिः सपरिवारः समं देव्या शुकनासेन च तत्रैवातिष्ठत् ।"

---

थमेनाच्छिद्यत एवाकृष्यत एव । तत्ततो यदि पात्र आप्ते क्वचिदपि निजपदं स्वस्थानमात्मभारं स्थापयित्वा स्थापनां कृत्वा जरया परिभुक्त आयुषः शेषो यस्य स तेन, निष्प्रयोजना निरर्थका स्थितिरवस्थानं यस्य स तेन, सर्वसुखात्समग्रसौख्याद्बाह्येन बहिर्भूतेन मांसपिण्डेन पललसंघातेन परलोकसुखानि पारभविकसौख्यान्युपार्ज्यन्त उपार्जनाविषयीक्रियन्ते । अयमेव लाभः फलप्राप्तिः । पुरुषार्थ इति यावत् । तत्तस्मात्कारणादस्य वस्तुनः कृते भवन्तो मया प्रार्थिता अभ्यर्थिताः ।

इत्युक्त्वेत्यभिधाय संनिहितान्यपि समीपवर्तीन्यप्युचितानि योग्यानि सर्वसुखानि परित्यज्य विहाय त्यक्त्वानुचितान्ययोग्यानि अनर्हाणि वन्यानि वनसंबन्धीनि सुखान्यङ्गीकृत्य स्वीकृत्य च । तदेव दर्शयति—**तथाहीति** । तस्य राज्ञो हर्म्यबुद्धिं गृहधियं वृक्षमूलेषु पादपबुध्नेषु, अन्तःपुरस्त्रीप्रीतिमवरोधस्त्रीस्नेहं लतासु वल्लीषु, संस्तुतजनस्नेहं परिचितजनप्रीतिं हरिणेषु कुरङ्गेषु, निवसनरुचिं वस्त्राभिलाषं चीरवल्कलेषु, कुन्तलरचनाया अभियोगमुद्यमं जटासु, आहारहार्दं भोजनप्रेमाभिप्रायो वा कन्दश्च मूलं च फलानि च कन्दमूलफलानि तेषु, शस्त्रधारणव्यसनमक्षसूत्रेषु जपमालिकासु, प्रजापरिपालनशक्तिं समिध एधांसि कुशा दर्भाः कुसुमानि पुष्पाणि तेषु, नर्मालापं क्रीडालापं हास्यालापं धर्मसंकथासु सुकृतप्रबन्धेषु, समररसं सङ्ग्रामरसं युद्धरसमुपशमे शान्तरसे, जयेच्छां जयस्पृहां परत्र लोके परलोके, कोशस्पृहां धनभाण्डागारवाञ्छां तपसि व्रते, आज्ञामनुशासनं मौनेऽभाषणे, सर्वः समग्रः सकलो य उपभोगोऽङ्गनादिकस्तत्र रागं च वैराग्ये विरक्ततायाम्, तनयस्नेहं पुत्रप्रेम सुतस्नेहं तरुषु वृक्षेषु संक्रमय्य संक्रमणं कृत्वा, यांस्तपस्विजनोचितास्तपस्विजनयोग्याः क्रिया अनुष्ठानविशेषाः कुर्वन्विदधन्गन्धर्वलोकस्योचितान्योग्यानहरहः प्रतिदिनं कथंकथमपि महता कष्टेन समुत्सृष्टलज्जया त्यक्तत्रपया विगतलज्जया कादम्बर्या महाश्वेतया च क्रियमाणान्विधीयमानानुपचारान्भक्तिप्रकाराननिच्छन्नवाञ्छन्ननभिलषन्नविच्छेदादव्यवधानात्सायं प्रातश्चानुभूतं चन्द्रापीडदर्शनसुखं येनैवंभूतो नरपतिस्तारापीडो दुःखान्यगणयन्नजानन्सपरिवारः सपरिजनः सपरिस्कन्दः समं देव्या विलासवत्या शुकनासेन मन्त्रिणा च तत्र तस्मिन्स्थले स्थानेऽतिष्ठत् ।

**टिप्प०**—1 'याः' इत्यपपाठः, तत्पदसापेक्षत्वात् । तस्मात् 'तथा तपस्विजनोचिताः क्रियाः कुर्वन्' इत्येव पाठः । 2 'विशेषान्' इति द्वितीया योग्या । 3 वैधेय एव टीकाकारः । 'समुत्सृष्टलज्जया' इति विशेषणं केवलं महाश्वेताया एव, 'हा हतास्मी'त्यादिना तस्या एव गुहाप्रवेशस्य वर्णितत्वात् ।

पाठा०—१ मुक्तशेषेण. २ शरीरकेण. ३ तस्य. ३ प्रार्थनीयाः. ५ उपयोगसुखानि. ६ च वन्यानि तपोवनदुःखानि च. ७ तत्र. ९ अक्षसूत्रे. ९ परलोके. १० यथा; तथा.

इत्येवं च कथयित्वा भगवाञ्जाबालिर्जराभिभवविच्छायं[1] स्मितं कृत्वा हारीतप्रमुखान्सर्वानेव तापसाञ्छ्रावकानवादीत्[3]—'दृष्टमायुष्मद्भिरिदमन्तःकरणापहारिणः कथारसस्याक्षेपसामर्थ्यम्, यत्कथयितुं प्रवृत्तोऽस्मि तत्परित्यज्यैव कथारसात्कथयन्नतिदूरमतिक्रान्तोऽस्मि । तदयः[4] स कामोपहतचेताः स्वयंकृतादेवाविनयाद्दिव्यलोकतः परिभ्रश्यन्मर्त्यलोके वैशम्पायननामा शुकनाससूनुरभवत्,[5] स एवैष[6] पुनः स्वयंकृतेनाविनयेन कोपितस्य पितुराक्रोशान्महाश्वेताकृताच्च सत्याधिष्ठानादस्यां शुकजातौ पतितः'

इत्येवं वदत्येव भगवति जाबालौ बाल्येऽपि मे सुप्तप्रबुद्धस्येव पूर्वजन्मान्तरोपात्ताः समस्ता एव विद्या जिह्वाग्रेऽभवन् । सकलासु च कलासु कौशलमुपजातम् । उपदेशाय मनुजस्येव[10] चेयं विस्पष्टवर्णाभिधाना भारती च[11] संवृत्ता । विज्ञानं च[12] सर्ववस्तुविषयं स्मरणं च संवृत्तम् । किं बहुना । मनुष्यशरीरादृते सर्वमन्यत्तत्क्षणमेव मे [ संवृत्तम् । ] वैशम्पायनस्य[13] स एव चन्द्रापीडस्योपरि स्नेहः, सैव[14] कामपरवशता, स एव महाश्वेतायामनुरागः,

---

इत्येवं च कथयित्वाख्याय भगवाञ्जाबालिर्जराया अभिभवेन विस्रसापराभवेन विच्छायं[1] वैलक्ष्यं स्मितं हास्यं कृत्वा हारीतकप्रमुखान् सर्वानेव तापसाञ्श्रावकानवादीदब्रवीत् । आयुष्मद्भिरिदमन्तःकरणं मनोऽपहरतीत्येवंशीलः स तथा तस्य कथायाः प्रबन्धस्य रसस्तस्याक्षेप आकर्षस्तस्य सामर्थ्यं बलं दृष्टम् । यदिति हेत्वर्थे । कथयितुं वक्तुं प्रवृत्तो वक्तुमुद्युक्तोऽस्मि । तत्परित्यज्यैव विहायैव कथारसात्कथयन्ब्रुवन्नतिदूरमतिदविष्ठमतिक्रान्तोऽतिवाहितोऽस्मि । तत्तस्मात्कारणादयः कामेन कंदर्पेणोपहतं पीडितं चेतो यस्य सः स्वयंकृतादेव स्वाचीर्णादेवाविनयात्प्रातिकूल्याद्दिव्यलोकतः सुरसद्मतः परिभ्रश्यन्निपतन्मर्त्यलोके मनुष्यलोके वैशम्पायननामा शुकनाससूनुरभवत् । स एवैष वैशम्पायनः स्वयंकृतेनात्मना विहितेनाविनयेन कोपितस्य रोषितस्य पितुर्जनकस्याक्रोशादाक्षेपात्कठिनवचनान्महाश्वेता गन्धर्वपुत्री तया कृताद्विहिताच्च सत्यं सूनृतमेवाधिष्ठानमाश्रयो यस्यैवंभूताच्छापाच्चास्यां शुकजातौ पतितः स्रस्तः । अवतीर्ण इत्यर्थः ।

इत्येवं वदति ब्रुवत्येव भगवति जाबालौ बाल्येऽपि शैशवेऽपि सुप्तः शयितः पश्चात्प्रबुद्धो जागरितस्तस्येव पूर्वजन्मनि भवान्तर उपात्ता गृहीताः समस्ताः समग्रा एव विद्याः सकला एव विद्याश्चतुर्दश जिह्वाग्रे रसनाग्रेऽभवन्बभूवुः । सकलासु समग्रासु च कलासु विज्ञानेषु कौशलं दक्षत्वमुपजातं संभूतम् । उपदेशाय कथनाय मनुजस्येव मनुष्यस्येव चेयं विस्पष्टवर्णाभिधाना प्रकटवर्णाभिधाना प्रकटाक्षरनाम्नी[4] भारती सरस्वती च संवृत्ता संजाता । सर्ववस्तुविषयं स्मरणं च संवृत्तम् । किं बहुना कथितेन । मनुष्यशरीरादृते मनुष्यशरीरं विहाय नरविग्रहं त्यक्त्वान्यदपरं सर्वमेव तत्क्षणमेव तत्समयमेव वैशम्पायनस्योपनतम्[5] । स एव चन्द्रापीडस्योपरि स्नेहश्चन्द्रापीडस्योपरि प्रेम, सैव पूर्वानुभूतैव कामपरवशता मदनायत्तता कंदर्पपरवशता, स एव पूर्वप्रतिपादित एव

---

टिप्प०—1 विगता छाया कान्तिर्यस्य तादृशम् । 2 शुकनासस्य, दृश्यतां चन्द्रापीडोपगमे शुकनासस्य कोपावेशो यस्तारापीडेनोपशमितः । 3 धिक्चापलम् । 'सत्याभिध्यानात्' इत्येव पाठः । सत्यमभिध्यानं च 'हे भगवन्, यदि मया देवस्य पुण्डरीकस्य दर्शनात्प्रभृति मनसा नापरः पुमांश्चिन्तितस्तदाऽयमलीककामी मदुदीरितायामेव जातौ पततु' इति पूर्वोक्तम् । 4 प्रकटाक्षरेति न तस्या नाम ! प्रकटाक्षरम् (सुस्पष्टानि अक्षराणि यस्मिन्) अभिधानं कथनं यस्यामीदृशी (वाणी) इत्यर्थः । 5 टीकाकारकृतः सोयं पाठभ्रंशः । 'सर्वमन्यत्तत्क्षणमेव मे संवृत्तम्' इत्येव पाठः ।

---

पाठा०—१ एवम्. २ जाबालिः. ३ तान्. ४ तदयं सः. ५ अभूत्; उत्पन्नः. ६ स एव; स एष. ७ सत्याभिध्यानात्. ८ उपदेशकौशलम्. ९ मनुजस्येव. १० इयं. ११ संपन्ना. १२ बहुवस्तु; यत्सर्ववस्तु. १३ वैशम्पायनस्यैव. १४ कामपरता.

सैव तदवाप्तिं प्रत्युत्सुकतेत्युपगतं सकलमेव । केवलमसंजातपक्षतया मे तस्मिन्समये पूर्वजन्मोपात्ता शरीरचेष्टा नासीत् । तथा चाविर्भूतसकलान्यजन्मवृत्तान्तः समुत्सुकान्तरात्मा किं मातापित्रोः, किं तातस्य तारापीडस्य, किमम्बाया विलासवत्याः, किं वयस्यस्य चन्द्रापीडस्य, उत प्रथमसुहृदः कपिञ्जलस्य, आहोस्विन्महाश्वेताया इति नाज्ञासिषमेवं [1]कस्य कस्य कथं वा स्मृतवानस्मीति । तथा चोत्सुकान्तरात्मा महीतलनिवेशितशिराश्चिरमिव स्थित्वा भगवन्तं जाबालिं निजाविनयश्रवणलज्जया विलीयमान इव विशन्निव पातालतलं कथमपि शनैःशनैर्व्यज्ञपयम्—'भगवन्, त्वत्प्रसादादाविर्भूतज्ञानोऽस्मि संवृत्तः । स्मृताः खलु मया सर्व एव पूर्वबान्धवाः । मूढतायां [2]च यथैव तेषां स्मरणं नासीत्तथैव विरहपीडापि । अधुना पुनस्तान्[3]स्मृत्वा स्फुटतीव मे हृदयम् । न च [4]तान्स्मृत्वापि तथा, यथा चन्द्रापीडम्, यस्य मदुपरतिश्रवण[5]मात्रकात्स्फुटितं हृदयम् । [6]तत्तस्यापि जन्माख्यानेन प्रसादं करोतु भगवान् । येनायं तिर्यग्योनिवासोऽपि मे तेन सहैकत्र वसतो न पीडाकरः संजायते' इति ।

---

प्रथमप्रतिपादित एव महाश्वेतायामनुरागोऽनुरतिरनु पश्चात्प्रेम, सैव तस्या महाश्वेताया अवाप्तिं प्राप्तिं प्रत्युत्सुकतौत्सुक्यमिति सकलमेव समग्रमेवोपगतं प्राप्तम् । असंजातपक्षतयाऽप्रादुर्भूतवाजतया मे मम तस्मिन्समये पूर्वजन्मोपात्ता शरीरचेष्टा चलनादिका नासीन्नाभवत् । तथा चाविर्भूतः प्रकटीभूतः प्रादुर्भूतः सकलः समस्तोऽन्यजन्मवृत्तान्तो भवान्तरोदन्तो यस्यैवंभूतः समुत्सुकान्तरात्मोत्कण्ठितान्तरात्मा किं शुकनासमनोरमयोर्मातापित्रोः, किं तातस्य तारापीडस्य, किमम्बाया विलासवत्याः, किं वयस्यस्य मित्रस्य चन्द्रापीडस्य, उत प्रथमसुहृद आद्यमित्रस्य कपिञ्जलस्य आहोस्विन्महाश्वेताया इत्येवं [1]कस्य कस्यैतन्मध्यवर्तिनः कथं वा केन प्रकारेण वा स्मृतवानस्मि स्मरणं कृतवानस्मीति नाज्ञासिषं नावबोधिषम् । तथा चोत्सुकान्तरात्मा महीतले पृथ्वीतले निवेशितं शिरो येन स चिरमिव बहुकालमिव स्थित्वास्थाय भगवन्तं जाबालिं निजस्य स्वस्याविनयस्य श्रवणमाकर्णनं तस्माद्या लज्जा त्रपा तया विलीयमान इव लीनतामापाद्यमान इव पातालतलं रसातलं विशन्निव प्रवेशं कुर्वन्निव कथंकथमपि महता कष्टेन शनैःशनैर्व्यज्ञपयं विज्ञप्तिमकार्षम् । हे भगवन्, त्वत्प्रसादात्त्वदनुग्रहादाविर्भूतं प्रकटीभूतं ज्ञानं यस्यैवंभूतोऽहं संवृत्तो निष्पन्नोऽस्मि । खलु निश्चयेन मया सर्व एव पूर्वबान्धवाः स्मृताः प्रथमस्वजनाः स्मृताः स्मरणविषयीकृताः । मूढतायां मूर्खतायामज्ञानतायां च यथैव तेषां स्मरणं नासीत्तथैव विरहपीडापि वियोगबाधापि नासीत् । अधुना पुनस्तान्पूर्वोक्तान्स्मृत्वा मे मम हृदयं वक्षः स्फुटतीव स्फोटं प्राप्नोतीव । नच तान् मत्पूर्वबान्धवान् स्मृत्वापि स्मरणविषयत्वेऽपि तथा । स्फुटतीति शेषः । यथा चन्द्रापीडं । स्मृत्वेति योज्यम् । यस्य चन्द्रापीडस्य मदुपरतिश्रवणमात्रकात् मत्संबन्धिनी या उपरतिः [2]स्नेहोपरमस्तस्याः केवलश्रवणेनैव हृदयमन्तःकरणं स्फुटितं शकलायितम् । तत्तस्मात्कारणात्तस्यापि चन्द्रापीडस्यापि जन्माख्यानेन भवान्तरकथनेन भगवान्प्रसादमनुग्रहं करोतु विदधातु । येन कारणेनायं तिर्यग्योनिवासोऽपि मे मम तेन सहैकत्रैकस्मिन्स्थले वसतो न पीडाकरो न व्यथाकृत्संजायते भवतीति ।

टिप्प०—1 सर्वत्र मातुः स्मरतीतिवत् शेषे षष्ठी । 2 धिक् । मम उपरतिः मृत्युः तस्य श्रवणमात्रकात्, इत्यर्थः ।

पाठा०—१ कस्य कथं वा; कस्य कस्य कथं कथं वा. २ च मे. ३ स्मृत्वा स्मृत्वा. ४ तथान्यत्. ५ मात्रात्. ६ दयां करोतु भगवांस्तस्यापि जन्माख्यानप्रसादप्रदानेन.

एवं च विज्ञापितो मया सासूयमिव मामवलोक्य भगवाञ्जाबालिः सस्नेहकोपगर्भं प्रत्यवादीत्—'दुरात्मन्, यथैतावतीं दशामुपनीतोऽसि कथं तामेव तरलहृदयतामनुबध्नासि[1]। अद्यापि पक्षावपि[2] नोद्भिद्येते। तत्संचरणक्षमस्तु तावद्भव। ततो मां प्रक्ष्यसि' इत्येवमुक्ते भगवता, समुपजातकुतूहलो हारीतः पप्रच्छ—'तात, महानयं विस्मयो मे। कथय कथमस्य मुनिजातौ वर्तमानस्य तादृशी कामपरता जाता? यया जीवितमपि न संधारयितुं पारितम्। कथं च दिव्यलोकसंभूतस्य तथा स्वल्पमायुः संवृत्तम्'? इत्येवं च पृष्टः सूनुना भगवाञ्जाबालिरमलाभिः पापमलमिव प्रक्षालयन्[3]दशनदीधितिसलिलधाराभिः प्रत्यवादीत्—'स्पष्टमेवात्र कारणम्। वत्स, अयं हि कामरागमोहमयादल्पसारात्स्त्रीवीर्यादेव केवलादुत्पन्नः। श्रुतौ च पठ्यत एतद्यादृशाद्वै[4] जायते तादृगेव भवतीति। लोकेऽपि च प्रायः कारणगुणभाञ्ज्येव कार्याणि दृश्यन्ते। तथा चैतदायुर्वेदे[5]ऽपि श्रूयते—यः किलाल्पसारात्स्त्रीवीर्यादेव केवलाज्जन्तुर्भवति स खल्वभावात्सारभूतस्य स्थैर्यहेतोः पुरुषवीर्यस्य, यथासारं[6] गर्भे वा विलयमापद्यते, मृतो वा जायते, जातो वा न दीर्घकालं जीवतीति। तदयमुत्पन्न एवेदृशो येनास्य तादृशी

---

एवं च विज्ञापितो मया सासूयमिव सेर्ष्यमिव मामवलोक्य निरीक्ष्य वीक्ष्य भगवाञ्जाबालिः सह स्नेहेन वर्तते यत्तत्सस्नेहं कोपगर्भं च सस्नेहकोपगर्भं प्रत्यवादीत्प्रत्यब्रवीत्—हे दुरात्मन् हे दुष्टात्मन्, यथैतावतीं दशामवस्थां त्वमुपनीतः प्रापितोऽसि कथं तामेव तरलहृदयतां चञ्चलचित्ततामनुबध्नासि करोषि। अद्यापि पक्षावपि वाजावपि नोद्भिद्येते नोद्गच्छतः। तत्तस्मात्कारणात्संचरणक्षमस्तु गमनसमर्थस्तु तावद्भव। ततस्तदनन्तरं मां प्रक्ष्यसि प्रश्नयिष्यसि। इत्येवं भगवतोक्ते कथिते समुपजातं कुतूहलमाश्चर्यं यस्यैवंभूतो हारीतः पप्रच्छ प्रश्नमकार्षीत्। हे तात हे पितः, महानयं मे मम विस्मयो वर्तते। अस्य पुण्डरीकस्य मुनिजातौ वर्तमानस्य तादृशी कामपरता जाता कंदर्पपरवशता जाता। तत्कथय कथम्। यया कामपरतया जीवितमपि संधारयितुं धर्तुं न पारितं न शक्तम्। कथं च दिव्यलोके संभूतस्य तथा स्वल्पमायुः स्तोकमायुः संवृत्तम्। इत्येवं पृष्टश्च सूनुना भगवाञ्जाबालिरमलाभिर्निर्मलाभिर्दशनदीधितिसलिलधाराभी रदनकान्तिवाराभिः पापमलमिव प्रक्षालयन्[1]नुज्ज्वलीकुर्वन्प्रत्यवादीत्प्रत्यब्रवीत्। किं तदित्याह—**स्पष्टमिति**। अत्र कारणं निदानं स्पष्टमेव प्रकटमेव। हे वत्स हे पुत्र, अयं हि पुण्डरीकः कामरागो रताभिलाषो मोहो मौढ्यं ताभ्यां निष्पन्नस्तन्[2]मयस्तस्मादल्पसारादल्पबलात्स्त्रीवीर्यादेव केवलात्पुरुषवीर्यासंभिन्नादुत्पन्नः प्रादुर्भूतः प्रकटीभूतः, तत्पूर्वखण्डे व्याख्यातमेव नेहोच्यते। इत्येतच्छ्रुतौ च वेदे च पठ्यते भण्यते। तदेवाह—**यादृशादिति**। यादृशाद्वै निश्चयेन जायते उत्पद्यते तादृगेव तादृश एव भवत्युत्पद्यते। लोकेऽपि च प्रायो बाहुल्येन न सर्वत्र, कारणं समवायिकारणमिह गृह्यते न निमित्तकारणं व्यभिचारात्तस्य गुणाः शुक्रादयस्तान्भजन्तीत्येवंशीलानि कार्याणि जन्यानि दृश्यन्तेऽवलोक्यन्ते। तथा चैतदायुर्वेदेऽपि वैद्यकशास्त्रेऽपि श्रूयत आकर्ण्यते। किलेत्याप्तवचने। योऽल्पसारात्स्त्रीवीर्यादेव केवलाज्जन्तुः प्राणी संभवत्युत्पद्यते स खल्विति पूर्ववत्, निश्चये वा। सारभूतस्य बलभूतस्य स्थैर्यहेतोः स्थिरताकारणस्य पुरुषवीर्यस्याभावात् यथासारं[3] यथाबलं स्यात्। गर्भे वा विलयं विलीनतामापद्यते, मृतो वा जायते, जातो वोत्पन्नो वा न दीर्घकालं बहुकालं जीवति प्राणिति।

टिप्प०—1 'पापमलमिव प्रक्षालयन्मे' इत्येव पाठः। 'मे' इत्यस्याऽऽवश्यकता च, अन्यथा कस्य तत्र पापप्रक्षालनम्? टीकाकारपुंगवेन न दृष्टमेतत्। 2 सर्वमशुद्धं, तात्पर्यमात्रं ग्राह्यं सहृदयैः। 3 यथासारं सारानुसारं गर्भे विलयमापद्यत इत्यर्थः।

---

पाठ०—१ हृदयतरलताम्. २ पक्षावेव. ३ मे प्रक्षालयन्. ४ यादृशात्. ५ चेति. ६ गर्भे.

कामपरता जाता । मरणं च मदनवेगसंज्वरासहिष्णोस्तथोपपन्नतम्[1] । अधुनापि तादृश एवाल्पायुरयम्[2] । शापावसानानन्तरकालं यदस्याक्षयेणायुषा योगो भविष्यति' इति ।

एतच्छ्रुत्वा पुनरवनितलनिवेशितशिराः प्रणम्य भगवन्तं व्यज्ञापयम्—'भगवन्, अहमपुण्यवानस्यां तिर्यग्योनौ वर्तमानः स्वयं सर्वस्यैवाक्षमः । वागपि मे भगवतः प्रसादात्संप्रत्येवानने संभूता । भूतपूर्वं च ज्ञानमन्तरात्मनि । शरीरं पुनरायुःसंवर्धक[3]कर्मयोग्यं भगवतः प्रसादादन्यस्मिञ्जन्मनि[4] यदि भवेत्, तत्केन[5] प्रकारेणाक्षयं तन्मे महाकर्मसाध्यमाविर्भविष्यतीत्येतदाज्ञापयतु भगवान्' इत्येवं विज्ञापितस्तु मया, दिक्षु विक्षिप्य चक्षुर्भगवानाज्ञापितवान् 'एतदपि यथा, तथा ज्ञास्यस्येव । तावदियं कथास्ताम्[6] । रसाक्षेपादचेतितैवास्माभिः प्रभातप्राया रजनी । प्रभाविरहादनुन्मृष्ट[7]रजतकुम्भाभमिदम[8]परान्तावलम्बि[9] वर्तते रजनिकरबिम्बम् । यथायथोद्गमविस्तारिणी[10] जरत्तामरसपत्त्रारुणा पाण्डुच्छविरुल्लसति सीमन्तयन्ती तमःकेशसंघातमिव पूर्वस्याः ककुभोऽरुणाभ्रकरालोकततिः[11] । इमाः सशेषतिमिरत-

---

तत्तस्मात्कारणादयमीदृश एवोत्पन्नो येन कारणेनास्य पुण्डरीकस्य तादृशी कामपरता मदनायत्तता जाता । मरणं च मृत्युं च मदनवेगात्कंदर्परयाद्यः संज्वरः संतापस्तस्यासहिष्णोरसहनशीलस्य तथाप्रकारेणोपपन्नं प्राप्तम् । अधुनापि सांप्रतमपि तादृश एव तथावस्थ एवायं शुकोऽल्पायुः स्वल्पजीवितः । शापस्यावसानं प्रान्तस्तस्मादनन्तरं कालमव्यवहितकालं यदस्याक्षयेणायुषा सह योगो भविष्यतीति ।

एतच्छ्रुत्वा पुनरवनितलनिवेशितशिरा भगवन्तं प्रणम्य व्यज्ञापयं विज्ञप्तिं कृतवान्विज्ञप्तिं चकार अहम् । किं तदित्याह—**भगवन्निति** । हे भगवन्, अहं त्वपुण्यवान् । अस्यां तिर्यग्योनौ वर्तमानः स्वयमात्मना सर्वस्यैव कार्यस्याक्षमोऽसमर्थः । वागपि वाचापि मे मम भगवत्प्रसादात्संप्रत्येव सांप्रतमेवानने संभूता जाता । पूर्वं भूतं भूतपूर्वं क्वचिदमान्द्यं तस्य परत्वमिति पूर्वशब्दस्य परप्रयोगः । एतादृशं ज्ञानमन्तरात्मनि संभूतम् । शरीरं पुनरायुषः संवर्धकानि यानि कर्माणि कृत्यानि तेषु योग्यं समर्थं भगवतः प्रसादान्माहात्म्यादन्यस्मिञ्जन्मनि यदि भवेत्स्यात्तत्तस्मात्कारणान्मे मम महाकर्मभिः साध्यं महाकर्माणि साध्यानि यस्मिन्निति वा आयुर्जीवितं केन प्रकारेणाक्षयं भविष्यतीत्येतदाज्ञापयतु कथयतु भगवान् । इत्येवं मया विज्ञापितो विज्ञप्तिविषयीकृतः । तु पुनरर्थे । दिक्षु चक्षुर्विक्षिप्य प्रेर्य भगवानाज्ञापितवान् । किं तदित्याह—**एतदिति** । एतदपि त्वदुक्तमपि यथा वर्तते तथा त्वं ज्ञास्यस्येवाग्रे, त्वया ज्ञातं भविष्यत्येव । इयं कथा तावदास्तां तिष्ठतु । रसाक्षेपाद्रसाकर्षादस्माभिः प्रभातप्राया रजनी निशाऽचेतितैवाज्ञातैव । प्रभाविरहाद्द्युतेर्विरहात्कान्तेरभावादनुन्मृष्टोऽसंमार्जितो न स्फोटितो यो रजतकुम्भो रौप्यघटस्तद्वदाभा श्रीर्यस्य तत्तथा । 'आभा राढा विभूषा श्रीः' इति हैमः । इदमपरान्तावलम्बि[1] पश्चिमान्तावलम्बि पश्चिमाशावलम्बि रजनिकरबिम्बं निशाकरप्रतिबिम्बं शशाङ्कमण्डलं वर्तते । **यथायथमिति** । यथा च यथा च यथायथम् । 'नित्यवीप्सयोः' इति द्वित्वम् । यथाप्रकारमुद्गमेनोदयेन विस्तारिणी विस्तरणशीला जरत्पक्वं परिपक्वं यत्तामरसं पद्मम् । रक्तकमलमित्यर्थः । तस्य पत्त्राणि दलानि पर्णानि तद्वदरुणा रक्ता आ ईषत्पाण्डुच्छविः । 'रक्तोत्पलं तामरसम्' इति हैमः । पूर्वस्याः ककुभ ऐन्द्र्या दिशस्तमोलक्षणं केशसंघातमलकसमूहं सीमन्तयन्तीव सीमन्तं कुर्वन्तीवोल्लसत्युल्लासं प्राप्नोति । अरुणस्य रविसारथिनोऽभ्रकरा-

---

**टिप्प०**—1 कस्य अपरान्तम्? इति सापेक्षमेव । अतः 'अपराम्बरान्तावलम्बि (पश्चिमाकाशविलम्बि)' इति पाठो योग्यः ।

---

**पाठा०**—१ उपगतम्. २ अस्य. ३ संवर्धनीयम्. ४ अस्मिन्. ५ केनचित्. ६ आस्तां तावदियं कथा. ७ उन्मृष्ट. ८ दर्पणाभम्. ९ अम्बरान्तरावलम्बि; अपराम्भरान्तावलम्बि. १० यथायथोद्गमन. ११ आलोकवर्तिः; आलोकान्तरिताः.

याम्बराकाण्डकलुषं भास्वत्प्रभालोकमारब्धाः क्रमेण यथासूक्ष्मं तारकाः प्रवेष्टुम् । एष पम्पासरःशायिनां प्रबोधाशंसी समुच्चरति कोलाहलः श्रोत्रहारी विहंगमानाम् । एते च निशीथिनीपरिमलशीतलाश्चलितवनकुसुमपरिमलग्राहिणो वातुं प्रवृत्ताः प्रभातपिशुना वायवः । प्रत्यासन्नाग्निविहारवेला' इत्यभिदधान एव गोष्ठीं भङ्क्त्वोदतिष्ठत् ।

अथोत्थिते भगवति जाबालौ वीतरागापि निष्कौतुकापि मोक्षमार्गावस्थानापि समस्तैव सा तपस्विपरिषत्कथारसाद्विस्मृतगुरूचितप्रतिपत्तिः शृण्वतीवोत्कण्ठिततया विस्मयोत्फुल्लमुखी

---

णामालोकः प्रकाशस्तस्य ततिः पङ्क्तिः । श्रेणिरित्यर्थः । 'राजिर्लेखा ततिर्वीथिः' इति हैमः । इमाः प्रत्यक्षदृश्याः सह शेषेण वर्तते तत्सशेषम् । स्वल्पमित्यर्थः । एतादृशं यत्तिमिरं ध्वान्तं तस्य भावस्तत्ता तयाम्बरे व्योम्न्याकाशेऽकाण्डकलुषमप्रस्तावमलिनमसमयमलिनं भास्वत्प्रभालोकं सूर्यदीप्तिप्रकाशं सहस्रदीधितिकान्ति उद्योतं तारकास्ताराः क्रमेण यथासूक्ष्मं सूक्ष्मं यथा स्यात्तथा प्रवेष्टुं प्रवेशं कर्तुमारब्धाः प्रारब्धा आरम्भं कृतवत्यः । एषोऽसौ पम्पाभिधानं सरः पम्पा नाम सरोवरं तत्र तस्मिञ्शायिनां सुप्तानां विहंगमानां पक्षिणां श्रोत्रयोः कर्णयोर्हारी मनोहरः, प्रबोधो विनिद्रत्वं तदाशंसति कथयतीत्येवंशीलः स तथैवंविधः कोलाहलः कलकलः समुच्चरति सम्यक्प्रसरति विस्तरति । एते च प्रत्यक्षगम्या निशीथिन्यां त्रियामायां परिगतो मलो यस्मात्स परिमलोऽङ्गरागस्तेन शीतलाः शिशिराः । माघकाव्य उक्तमस्ति—'नवपरिमलगन्धः केन शक्यो वरीतुम्' इत्यत्र परिमलशब्देनाङ्गराग एव विवक्षितः । अन्यथा गन्धशब्दस्य वैयर्थ्यं स्यात् । चलितानि कम्पितानि यानि वनानि तेषां कुसुमानां परिमलो गन्धस्तं गृह्णन्तीत्येवंशीलास्ते तथा प्रभातस्य प्रत्यूषस्य पिशुनाः सूचका एवंविधा वायवः पवनाः समीरणा वातुं यातुं प्रवृत्ताः प्रवर्तितवन्तः । 'व्युष्टं विभातं प्रत्यूषम्' इति हैमः । प्रत्यासन्ना समीपवर्तिनी निकटस्थायिनी । पदैकदेशे पदसमुदायोपचारात् अग्निशब्देनाग्निहोत्रं तत्र विहारो विहरणम् । गमनमिति यावत् । तस्य वेलावसरः प्रस्तावसमयः । 'वेला वारामवसरे' इति कोशः । इत्यभिदधान एवेतिब्रुवाण एव गोष्ठीं श्रवणार्थमिलितजनसमूहात्मिकां भङ्क्त्वा दूरीकृत्योदतिष्ठदुत्थितो बभूव । 'समज्या परिषद्गोष्ठी सभासमितिसंसदः' इत्यमरः ।

अथोत्थिते भगवति जाबालौ वीतरागापि नीरागापि निष्कौतुकापि विगतकुतूहलापि गताश्चर्यापि मोक्षमार्गे निर्वाणमार्गेऽवस्थानमवस्थितिर्यस्या एवंविधाप्येतादृश्यपि समस्तैव सर्वापि तपस्विपरिषन्मुनिजनसभा कथाया वार्ताया रसाद्विस्मृता विस्मरणं प्राप्ता । गुरावुचिता योग्या प्रतिपत्तिः सेवा यस्याः सा तथा । शृण्वतीवाकर्णयन्तीवोत्कण्ठिततया रणरणकतया विस्मयेनाश्चर्येणोत्फुल्लं विकसितं मुखं यस्याः सा तथा । युगपदेकवारमा-

---

टिप्प०—1 अरुणा सूर्यस्याऽऽलोकराजिः तमोरूपं केशसंचयं सीमन्तयन्तीव (सीमन्त(केशपाश)-रूपे परिणमयन्तीव) उल्लसतीत्यर्थः । वास्तवे तु भागद्वयविभाजितस्य केशपाशस्य मध्यवर्तिनी रेखा सीमन्तः । अत एव हि तत्र सिन्दूरारुणतास्पर्शाय तामरसपत्रारुणेति विशेषणम् । एवं सत्त्वे—तमःकेशसंघातं सीमन्तयन्तीति कवेरुक्तिः—तमःकेशपाशं (प्रति) सीमन्तयन्ती (सीमन्तमिवात्मानमाचरन्ती) इति यथा कथंचित्संगमनीया स्यादिति मार्मिकैर्विमृश्यम् । 2 अकाण्डे कलुषो भास्वत्प्रभालोकः ? किमिति ? अविचाररस्योयं पाठः । 'अम्बरैककाण्डपटकलुषम्' इति पाठः । ततश्च—तिमिरावशेषसहिततया अम्बरस्य (आकाशस्य) एककाण्डपट(तिरस्करिणी)वत् कलुषो (मलिनो) यः सूर्यप्रभालोकः तं तारकाः यथासूक्ष्मं प्रवेष्टुमारब्धाः । किञ्चिदन्धकारसहिते सूर्यालोके स्वल्पप्रकाशं प्रथमं, ततः परमधिकप्रकाशमिति क्रमेण नक्षत्राण्यदृश्यान्यभवन्नित्याशयः ।

---

पाठा०—१ अङ्ककलुषम्; एककाण्डपटकलुषम्. २ परिमलने; परिमलम्. ३ विहरण. ४ निष्कासुकापि. ५ उत्कण्टकिततया; उत्कण्टकितकाया.

युगपदागलितशोकानन्दजन्मनयनसलिला हाकष्टशब्दानुबन्धिनी[१] स्तम्भितेव चिरमिव स्थित्वा यथास्थानं जगाम । हारीतस्तु मां संनिहितेऽपि मुनिकुमारकजने निजकरेणैवोत्क्षिप्यात्मपर्णशालां नीत्वा शनैः शनैः स्वशयनीयैकदेशे[२] स्थापयित्वा प्राभातिकक्रियाकरणाय निर्ययौ ।

निर्गते च तस्मिंस्तेन सर्वकार्याक्षमेण तिर्यग्जातिपतनेन[३] देहेन पीडितान्तरात्मा चिन्तां प्राविशम् । अत्र तावदनेकभवसुकृतसहस्राधिगम्यं मानुष्यमेव दुर्लभम् । तत्राप्यपरं[४] सकलजातिविशिष्टं ब्राह्मण्यम् । ततोऽपि[५] विशिष्टतरमासन्नामृतपदं मुनित्वम् । तस्यापि विशेषान्तरं किमपि दिव्यलोकनिवासित्वम् । तद्येनैतावतः स्थानात्स्वदोषैरात्मा पातितस्तेन कथमधुना सर्वक्रियाविहीनेनास्यास्तिर्यग्जातेः समुद्धृतः स्यात् । कथं वा पूर्वजन्माहितस्नेहैः सह समागमसुखमनुभूतम् । अननुभवतश्च तन्निष्प्रयोजनेनामुना जीवितेन किं मे परिरक्षितेन । पततु यत्र[६] तत्र क्वापि यातनाशरीरम् । सुखं तु नानुभवितव्यममुना दुःखैकभाजनेन । तत्परित्यजाम्येनम् । पूर्यतामस्मद्व्यसनदानैकचिन्तादुःस्थितस्य विधेर्मनोरथः' इत्येवं च जीवि-

---

गलितं पतितं शोकानन्दाभ्यां जन्म यस्यैवंभूतं नयनसलिलं यस्याः सा तथा । हाकष्टमिति यः शब्दस्तमनुबन्धितुं शीलं यस्याः सा तथा स्तम्भितेव कीलितेव चिरमिव स्थित्वा बहुकालमिव स्थित्वा यथास्थानं यथास्थलं जगामागमत् । हारीतस्तु मां मुनिकुमारकजने तापसशिशुजने संनिहितेऽपि समीपवर्तिन्यपि सति निजकरेणैवात्मपाणिनेवोत्क्षिप्योत्पाट्यात्मपर्णशालां स्वकीयतृणकुटीं नीत्वा प्रापय्य शनैः शनैर्मन्दं मन्दं शयनीयस्य शय्याया एकदेशेन्यतरप्रदेशे स्थापयित्वा संस्थाप्य प्राभातिकक्रियाकरणाय प्रत्यूषविधिविधानाय निर्ययौ निरगात् ।

तस्मिन्हारीतमुनौ निर्गते च सति तेन सर्वाणि समग्राणि यानि कार्याणि कृत्यानि तेष्वक्षमेणासमर्थेन तिर्यग्जातिपतनेन[1] पक्षिजात्यन्तर्गतेन देहेन विग्रहेण शरीरेण पीडितोऽन्तरात्मा यस्यैवंभूतोऽहं चिन्तामार्तिं प्राविशं प्रविष्टोऽभूवम् । **अत्रेति** । अस्मिंल्लोके तावदादावनेकभवानामसंख्यजन्मनां सुकृतसहस्रैः पुण्यसहस्रैरधिगम्यं प्राप्यमेवंविधं मानुष्यमेव मनुजत्वमेव मनुष्यत्वं दुर्लभं दुष्प्रापम् । तत्रापि मनुष्यत्वेऽप्यपरमन्यत्सकलजातिषु समग्रवर्णेषु विशिष्टं विशेषेणाधिकं ब्राह्मण्यं ब्राह्मणत्वं सारमधिकतरम् । ततोऽपि ब्राह्मण्यतोऽप्यतिशयेन विशिष्टं श्रेष्ठं विशिष्टतरं किंचिदाधिक्यमासन्नं समीपवर्ति निकटवर्त्यमृतपदं मोक्षपदम् । 'महानन्दोऽमृतं सिद्धिः' इति हैमः । यस्मिन्नेतादृशं मुनित्वं यतित्वमधिकतरम् । तस्यापि मुनित्वस्यापि यतित्वस्यापि किमपि विशेषान्तरं किंचिदाधिक्यं दिव्यलोकनिवासित्वं स्वर्गलोकस्थायित्वम् । तत्तस्मात्कारणाद्येनैतावतः पूर्वोक्तस्थानात्स्वदोषैर्निजदूषणैरात्मा पातितस्तेन मया सर्वाः समग्राः क्रियाः स्नानादिकास्ताभिर्विहीनेन रहितेनाधुना सांप्रतमिदानीमस्यास्तिर्यग्जातेः कथमात्मा समुद्धृत उद्धारं प्रापितः । स्यादिति शेषः । पूर्वजन्मनि पूर्वभवे गतजन्मन्याहितः स्थापितः स्नेहः प्रीतिर्येषु तैः सह समागमसुखं मेलापकसौख्यं कथमनुभूतं साक्षात्कृतम् । भवतीति[2] शेषः । तत्समागमसुखमननुभूतवतः साक्षादकृतवतश्च मे मम निष्प्रयोजनेन निरर्थकेनामुना जीवितेन परिरक्षितेन किम् । न किंचिदित्यर्थः । यत्र तत्र क्वापीदं यातनाशरीरम् । 'यातना नरकवेदना' इति हैमः । नरकदेहम् । तीव्रवेदनाक्षममित्यर्थः । पततु पतनं करोतु । सुखं तु नानुभवितव्यममुनानेन दुःखस्य कष्टस्यैकभाजनेनैकपात्रेण शरीरेण । अत एतत् शरीरं परित्यजामि मुञ्चामि । अस्माकं व्यसनदानं कष्टप्रदानं तस्यैकाद्वितीया या चिन्ता तया दुःस्थितस्य दुःखितस्य विधेर्विधातुर्मनोरथोऽभिलाषः पूर्यतां परिपूर्णीभूयताम् । चेत्येवं इत्येवं प्रकारेण या जीवित-

---

टिप्प०—1 महाऽनभिज्ञत्वमेतद् यत् तदिदं विशेषणीक्रियते । अतः 'तिर्यग्जातिपतितेन' इत्येव पाठः । 2 'स्यात्' इत्येव पूर्वानुषङ्गः । 3 हा हन्त ! किं प्रलपति ।

पाठा०—१ अनुबन्धिनी पराधीनेव. २ वेदिदेशे. ३ तीर्यग्जातिपतितेन. ४ परम्. ५ तत्रापि. ६ तत्रापरत्र क्वापि यातु यत्र शरीरम्.

तपरित्यागचिन्तानिर्मीलितं मां समुच्छ्वासयन्निव विकासहासिना मुखेन सहसा प्रविश्य हारीतोऽभ्यधात्—'भ्रातर्वैशम्पायन, दिष्ट्या वर्धसे । पितुस्ते भगवतः श्वेतकेतोः पादमूला-त्कपिञ्जलस्त्वामेवान्विष्यन्नायात' इति ।

अहं तु तच्छ्रुत्वा तत्क्षणेनोत्पन्नपक्ष इवोत्पत्य तत्समीपमेव प्राप्तुमभिवाञ्छन्नुद्ग्रीवावलोकी 'क्वासौ' इति तमप्राक्षम् । स त्वकथयत्—'एष तातपादमूले वर्तते' इति । एवंवादिनं तु तमहं पुनरवदम्—'यद्येवं ततः प्रापयतु मां तत्रैव भगवान् । उत्ताम्यति मे हृदयं तद्दर्शनाय' इत्येवं वदन्नेवाग्रतो गगनागमनवेगादयथास्थितजटाकलापम्, अनिलपथसंचरणचलितैकाञ्चलोत्तरीयम्, तरुत्वचा दृढाबद्धपरिकरम्, अर्धत्रुटितयज्ञोपवीतसनाथास्थिशेषोरस्कम्, निःशेषसुरपथावतरणश्रमोच्छ्वसितशरीरम्, समीरणापहृतमपि मरुत्पथोत्पतनखेदसंभृतम्, उदकप्रवेशान्निस्यन्दमानस्वेदमाननेन मंदवलोकनदुःखोद्गतं च बाष्पजललवविसर-

परित्यागचिन्ता तया निमीलितं मुद्रितं मां विकासेन हसतीत्येवंशीलेन विकासहासिना मुखेनाननेन समुच्छ्वासयन्निवाश्वासयन्निव सहसातर्कितः प्रविश्य प्रवेशं कृत्वा हारीतकोऽभ्यधादवोचत् । किं तदित्याह—**भ्रातरिति** । हे भ्रातर्हे बन्धो वैशम्पायन, त्वं दिष्ट्या भाग्येन वर्धसे । ते तव भगवतो महाश्वेतकेतोः पितुः पादमूलाज्जनकचरणसमीपात्त्वामेवान्विष्यन्गवेषयन्कपिञ्जल आयात इति ।

अहं तच्छ्रुत्वाकर्ण्य तत्क्षणेन तत्कालेनोत्पन्नपक्ष इव संजातवाज इवोत्पत्त्योड्डीय तस्य कपिञ्जलस्य समीपमभ्यर्णं निकटं प्राप्तुमासादयितुमभिवाञ्छन्नभिलषन्नुद्ग्रीवः सन्नवलोकत इत्येवंशील उद्ग्रीवावलोकी क्वासाविति तं हारीतकमप्राक्षम् । स तु हारीतक एव तातस्य पादमूले वर्तत इत्यकथयदित्यभ्यधात् । एवंवादिनमेवं ब्रुवाणं तु हारीतमहं पुनरवदमकथयम् । यद्येवं वर्तते ततो भगवान्मां तत्र प्रापयतु नाययतु । तद्दर्शनाय तदवलोकनाय मे मम हृदयमुत्ताम्यत्युत्पततीत्येवं वदन्नग्रतः पुरो दुरात्माहं कपिञ्जलमद्राक्षं व्यलोकयमिति दूरेणान्वयः । इतः कपिञ्जलं विशिनष्टि—**गगनेति** । गगने व्योम्न्याकाश आगमनं यानं तस्य वेगाद्रयादयथास्थितोऽस्थानस्थितो जटाकलापो यस्य स तम् । 'जटा लग्नकचे मूले लक्ष्मांसिकयोर्जटा' इति विश्वः । अनिलपथ आकाशे संचरणं संचलनं गमनं तेन चलितः कम्पित एकोऽञ्चलो वस्त्रप्रान्तो यस्यैवंभूतमुत्तरीयं संव्यानं यस्य स तम् । 'प्रच्छादनं प्रावरणं संव्यामं चोत्तरीयकम्' इति हैमः । तरूणां वृक्षाणां त्वचा कृत्वा दृढ आबद्धः परिकरो येन स तम् । 'भवेत्परिकरो व्राते पर्यङ्कपरिवारयोः । प्रगाढगात्रिकाबन्धे विवेकारम्भयोरपि' इति विश्वः । अर्धत्रुटितं यज्ञोपवीतं यज्ञसूत्रं तेन सनाथं सहितमस्थिशेषं कीकसावशेषमुरो यस्य स तम् । निःशेषं समग्रं यत्सुरपथमाकाशं तस्मादवतरणं तस्माद्यः श्रमः खेदस्तेनोच्छ्वसितं शरीरं यस्य तम् । 'नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्' इत्यमरः । समीरणेन वायुनापहृतमपि पीडितमपि मरुत्पथे यदुत्पतनं तस्माद्यः खेदस्तेन संभृतं निचितम् । जलप्रवेशाद्व्योमगङ्गाजलान्तर्गमनादाननेन मुखेन निस्यन्दमानः क्षरन्स्वेदो घर्मो यस्य स तम् । किं कुर्वन्तम् । वाष्पजललवविसरं नेत्रजलकणस-

टिप्प०—1 हा विचारशून्यम् ! 'उदकप्रवेशादिव निस्यन्दमानं स्वेदम् आननेन, बाष्पलवविसरं ईक्षणाभ्यां युगपदुत्सृजन्तम्' इति प्रत्यक्षं दृष्ट्वापि अत्र बहुव्रीहिः क्रियते । धिगीदृशं टीकाकारम् । अस्तु. अत्र 'निस्यन्दमानं स्वेदम्' इत्येव पाठो बोध्यः ।

पाठा०—१ कपिञ्जलकः. २ तत्क्षणोत्पन्न. ३ तत्समीपं विहाय सहसैव प्राप्तुमभिवाञ्छन्; समीपं विहायसैव प्राप्तुमभिवाञ्छन्. ४ उद्वेगादव्यवस्थित. ५ संचरणविघटितचरणैकाञ्चलोत्तरीयं तरुत्वचा; संचरणवेगचलितैकाञ्चलयोत्तरीयतरुत्वचा. ६ आयासित. ७ अपहृतम्. ८ उत्पतन. ९ मद्विलोकन. १० दुःखागतम्.

मीक्षणाभ्यां युगपदुत्सृजन्तम्, मुमुक्षुमपि मत्स्नेहेनामुक्तम्, वीतरागमपि मत्प्रियहितरतम्, निःसङ्गमपि मत्समागमोत्सुकम्, निःस्पृहमपि मदर्थसंपादनपर्याकुलम्, निर्ममममप्युपारूढस्नेहम्, निरहंकारमप्यहमेवायमिति मां मन्यमानम्, समुज्झितक्लेशमपि मदर्थे [1]क्लिश्यन्तम्, समलोष्टकाञ्चन[2]तासुखितमपि [3]मद्दुःखदुःखितम्, कृतज्ञमकृतज्ञः, स्नेहलप्रकृतिं [4]रूक्षचेताः, सुकृतिनमपुण्यवान्, अनुगतं वामस्वभावः, भावार्द्रहृदयमेकान्तनिष्ठुरः, मित्रं वैरी, वचनकरमनाश्रवः, महात्मानं दुरात्मा, कपिञ्जलमहमद्राक्षम्। दृष्ट्वा च निर्भरगलितनयनपयास्तादृशोऽपि कृताभ्युद्गमनप्रयत्नः [5]पूत्कृत्य तमवदम्—'सखे कपिञ्जल, एवं जन्मद्वयान्तरितदर्शनमपि त्वां दृष्ट्वा किं सरभसमुत्थाय दूरत एव प्रसारितभुजद्वयो [6]गाढालिङ्गनेन सुखमनुभविष्यामि। किं करं करेणावलम्ब्यासनपरिग्रहं कारयिष्यामि। किं सुखासीनस्य गात्रसंवाहनं कुर्वञ्छ्रममपनेष्यामि' इत्येवमात्मानमनुशोचन्तमेव मां कपिञ्जलः करेणोत्क्षिप्य

---

मूहमीक्षणाभ्यां लोचनाभ्यामुत्सृजन्तं त्यजन्तम्। कीदृशं जललवविसरम्। ममावलोकनं तस्माद्यद्दुःखं तस्मादुद्गतं प्रादुर्भूतं प्रकटीभूतम्। मोक्तुमिच्छुर्मुमुक्षुरेवंभूतमपि मत्स्नेहेन मत्प्रीत्याऽमुक्तमत्यक्तमखण्डितम्। वीतो गतो रागोऽनुरागो यस्मादेतादृशमपि मत्प्रिय इष्टे रतमासक्तम्। निर्गतः संगोऽन्यजनसंपर्कः परजनसंयोगो यस्य स तमेतादृशमपि मम समागमो मेलापस्तत्र तस्मिन्नुत्सुकमुत्कण्ठितम्। निर्गता स्पृहा वाञ्छा यस्मादेवंभूतमपि ममार्थो मदर्थस्तस्य संपादनाय निष्पादनकरणाय परि सामस्त्येनाकुलं व्याकुलम्। निर्ममममपि निर्गतममत्वमपि ममत्वभावो नास्ति। मयि विषय उपारूढः स्थापितः स्नेहः प्रेमा येन स तम्। निर्गतोऽहंकारो गर्वो यस्मादेतादृशमप्यहमेवायं [1]कपिञ्जल इति मन्यमानं ज्ञायमानम्। समुज्झितस्त्यक्तः क्लेशो येनैवंभूतमपि मदर्थे मत्कृते क्लिश्यन्तं क्लेशं प्राप्नुवन्तम्। समे सदृशे तुल्ये लोष्टकाञ्चने यस्य स समलोष्टकाञ्चनस्तस्य भावस्तत्ता तया सुखितं संजातसौख्यमेवंविधमेतादृशमपि मम दुःखेन दुःखितं संजातदुःखम्। कृतं जानातीति कृतज्ञस्तं कृतज्ञमकृतज्ञः। स्नेहला प्रकृतिः स्वभावो यस्य स तं रूक्षं स्नेहवर्जितं प्रेमरहितं चेतो यस्य स तथा। सुकृतिनं सुकृतवन्तं पुण्यवन्तं न विद्यते पुण्यं यस्य सोऽपुण्यवान्। अनुगतमनुकूलं वामः प्रतिकूलो वक्रः स्वभावो यस्य सः। भावेनाध्यवसायेनार्द्रमुन्नं हृदयं चेतो यस्य स तमेकान्तेन निष्ठुरः। मित्रं सुहृद् वैरी शत्रुः। वचनं करोतीति वचनकरस्तमनाश्रवोऽवचनेस्थितः। 'वचनेस्थित आश्रवः' इत्यमरः। महात्मानं महापुरुषं दुरात्मा दुष्टात्मा। द्वितीयान्तं कपिञ्जलस्य विशेषणम्, प्रथमान्तं पुण्डरीकस्येति स्वयं बोध्यम्। दृष्ट्वा च विलोक्य च निर्भरं परिपूर्णं संपूर्णं गलितं नयनयोः पयो यस्य स तादृशोऽप्यसमर्थोऽपि कृतोऽभ्युद्गमे प्रत्युत्थाने प्रयत्नो येन सः। पूत्कृत्य पूत्कारं कृत्वा तं कपिञ्जलमवदमब्रवम्। हे सखे कपिञ्जल, एवं जन्मद्वयान्तरितदर्शनमपि भवान्तरव्यवहितावलोकनमपि त्वां दृष्ट्वा विलोक्य निरीक्ष्य सरभसं सवेगमुत्थायोत्थानं कृत्वा दूरत एव दविष्ठ एव प्रसारितं विस्तारितं भुजद्वयं बाहुद्वयं येन सः। गाढालिङ्गनेन तीव्रसंश्लेषेण किं सुखमनुभविष्यामि साक्षात्प्रत्यक्षं करिष्यामि। करं हस्तं करेण पाणिना हस्तेनावलम्ब्यासनपरिग्रहं विष्टरस्वीकारं किं कारयिष्यामि किं विधापयिष्यामि किं निष्पादयिष्यामि। सुखासीनस्य सुखोपविष्टस्य गात्रसंवाहनमङ्गमर्दनं कुर्वञ्छ्रमं खेदं परिश्रममपनेष्यामि दूरीकरिष्यामि। 'संवाहनं मर्दनं स्यात्' इत्यमरः। इत्येवमात्मानं स्वमनुशोचन्तमेव मां कपिञ्जलः करेण पाणिनोत्क्षिप्योत्पाट्य मम विरहो वियोगस्तेन दुर्बले कृशे वक्षसि चिरमिव निवेश्य संस्थाप्यान्तर्मध्ये

---

टिप्प०—1 पुनः प्रलापः। अयं पुण्डरीकोपि मदभिन्न इति मन्यमानमित्याशयः।

---

पाठा०—१ क्लिश्यमानम्. २ सुखम्. ३ दुःखितम्. ४ रूक्षात्मा. ५ फूत्कृत्य. ६ गाढालिङ्गनसुखम्.

मद्विरहदुर्बले वक्षसि निवेश्य चिरमिवान्तःप्रवेशयन्निवालिङ्गनसुखं किल तथा मेऽनुभूय भूयसा मन्युवेगेनोत्तमाङ्गे कृत्वा मच्चरणावितरवदरोदीत् ।

तथा रुदन्तं च[1] तं वाङ्मात्रप्रतीकारः पुनरवदम्—'सखे कपिञ्जल, सकलक्लेशपरिभूतस्य पापात्मनो[2] ममेदं युज्यते[3] यत्त्वया प्रारब्धम् । त्वं पुनर्बालोऽप्यस्पृष्ट एवामीभिः[4] संसारबन्धात्मकैर्निर्वाणमार्गपरिपन्थिभिर्दोषैः । तत्किमधुना[5] मूढजनगतेन वर्त्मना । समुपविश्य तावत्कथय यथावृत्तं[6] तस्य वार्ताम् । अपि[7] कुशलं तातस्य ? स्मरति वा माम् ? दुःखितो[8] वा मदीयेन दुःखेन ? मद्वृत्तान्तमाकर्ण्य किमुक्तवान् ? कुपितो न वा' इति । स त्वेवमुक्तो मया हारीतशिष्योपनीते पल्लवासने समुपविश्याङ्के मां कृत्वा हारीतोपनीतेनाम्भसा[9] प्रक्षाल्य मुखमाख्यातवान्—'सखे, कुशलं तातस्य । अयं चास्मद्वृत्तान्तः प्रथमतरमेव तातेन दिव्येन चक्षुषा दृष्टः । दृष्ट्वा च प्रतिक्रियायै कर्म प्रारब्धम् । समारब्ध एव कर्मणि तुरगभावाद्विमुक्तो गतोऽस्मि तातस्य पादमूलम् । गतं च मां दूरत एवोद्बाष्पदृष्टिर्विषण्णदीनवदनं भयादनुपसर्पन्तमालोक्याहूयाज्ञापितवान्—'वत्स कपिञ्जल, परित्यज्यतां स्वदोषशङ्का । ममैवायं

---

प्रवेशयन्निव प्रवेशं कारयन्निव मे ममालिङ्गनसुखम् । किलेति सत्ये । तथानुभूय साक्षात्कृत्य मन्युः शोकः । 'मन्युशोकौ तु शुक्स्त्रियाम्' इत्यमरः । भूयसा बहुलेन वेगेन रयेण मच्चरणौ मत्पादौ मदङ्घ्री उत्तमाङ्गे मस्तके कृत्वा इतरवत्प्राकृतजनवत् । 'इतरः प्राकृतो नीचः' इति हैमः । अरोदीद्रुदनमकार्षीत् । 'विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः' इत्यमरः ।

तथा रुदन्तं च तथा विलपन्तं च वाङ्मात्र एव प्रतीकारः प्रतिक्रिया यस्य सः । पुनरवदमब्रुवम् । सखे कपिञ्जल, सकलक्लेशेन समग्रदुःखेन कष्टेन परिभूतस्याभिभूतस्य पराभवितस्य पापात्मनो मे ममेदं युज्यत इदं घटते यत्त्वया भवता प्रारब्धम् । रुदनमित्यर्थः । त्वं पुनर्बालोऽप्यमीभिः संसारबन्धात्मकैः संसृतिबन्धस्वरूपैर्निर्वाणमार्गस्य मोक्षमार्गस्य परिपन्थिभिः शत्रुभिर्दोषैर्दूषणैरस्पृष्ट एव । तत्तस्माद्धेतोर्मूढजनगतेन मूर्खजनाचीर्णेन वर्त्मना मार्गेण रुदनलक्षणेन । अधुना किम् । न किमपीत्यर्थः । उपविश्यास्थाय तावत्पूर्वमादौ यथावृत्तं यथोपनतं तथा तस्य वार्तां किंवदन्तीं कथय ब्रूहि । अपि तातस्य पितुः कुशलं कल्याणम् । मां पुण्डरीकं स्मरति स्मृतिगोचरीकरोति न वा । मदीयेन मामकीनेन दुःखेन दुःखितो वा । मद्वृत्तान्तं मदुदन्तमाकर्ण्य श्रुत्वा किमुक्तवान्किं कथितवान् । कुपितो न वा रोषं गतो न वा इति । स तु कपिञ्जल एवं मयोक्तः कथितः सन्हारीतस्य शिष्येण विनेयेनोपनीत आनीते समानीते पल्लवासने नवीनपत्रविष्टरे समुपविश्य मां वैशंपायनाभिधानं शुकमङ्क उत्सङ्गे क्रोडे कृत्वा हारीतोपनीतेन हारीतानीतेनाम्भसा पानीयेन जलेन मुखं वदनं प्रक्षाल्य प्रक्षालनं कृत्वा धावनं कृत्वाख्यातवान्कथितवान् । किं तदित्याह—सखे इति । हे सखे पुण्डरीक, तातस्य महाश्वेतकेतोः कुशलं वर्तते । अयं चास्मद्वृत्तान्त एतदुदन्तः प्रथमतरमेवादावेव तातेन जनकेन पित्रा दिव्यचक्षुषा ज्ञाननेत्रेण दृष्टोऽवलोकितो निरीक्षितः । दृष्ट्वा च तत् प्रतिक्रियायै कर्म प्रारब्धं कर्तुमारब्धम् । समारब्धे एव कर्मणि तुरगभावादश्वशापाद्विमुक्तोऽहं तातस्य जनकस्य पादमूलं चरणमूलं गतोऽस्मि । गतं च मां दूरत एवोद्बाष्पदृष्टिरुद्गताश्रुनयनो भयाद्भीतेर्विषण्णं विलक्षं दीनं दुःखितं वदनं मुखं यस्यैवंभूतं मामुपसर्पन्तमागच्छन्तमालोक्य निरीक्ष्याहूयाह्वानं कृत्वाज्ञापितवान्कथितवान् । हे वत्स कपि-

---

टिप्प०—1 अनुपसर्पन्तम् ( न अभिसरन्तम् ) इत्युचितम् ।

---

पाठा०—१ तु. २ मन्दात्मनः. ३ न युज्यते. ४ अमीभी रागादिभिः. ५ अमुना. ६ यथावृत्तम्. ७ अयि. ८ न दुःखितः. ९ स्वरितोपनीतेन.

खलु शठमतेः सर्व एव दोषः, येन जानताप्युत्पत्तिसमय एव वत्सस्य कृते नेदमायुष्करं कर्म निर्वर्तितम् । अधुना सिद्धप्रायमेवेदम् । न दुःखासिका भावनीया । मत्पादमूले तावत्स्थीयताम्' इत्येवमाज्ञापितस्तु तातेन विगतभीर्व्यज्ञापयम्[3]—

'तात यदि प्रसादोऽस्ति ततो यत्रैवासावुत्पन्नस्तत्रैव गमनायाज्ञापयतु मां तातः' इत्येवं विज्ञापितस्तु मया पुनराज्ञापितवान्—'वत्स, शुकजातावसौ पतितः । तद्गत्वापि तमद्य नैव वेत्सि नाप्यसौ त्वां वेत्तीति । तत्तिष्ठतु तावत्' इति । अद्य च प्रातरेवाहूय मामाज्ञापितवान्—'वत्स कपिञ्जल, महामुनेर्जाबालेराश्रमपदं सुहृत्ते प्राप्तः । जन्मान्तरस्मरणं चास्योपजातम् । तद्गच्छ संप्रति तं द्रष्टुम् । मदीयया चाशिषानुगृह्य वक्तव्योऽसौ—वत्स, यावदिदं कर्म परिसमाप्यते तावत्त्वयास्मिन्नेव जाबालेः पादमूले स्थातव्यमिति । अपि च त्वद्दुःखदुःखिताम्बा ते श्रीरपि तस्मिन्नेव कर्मणि परिचारिका वर्तते । तया तु शिरस्युपाघ्रायैतदेव पुनःपुनः संदिष्टम् । एवमुक्त्वाऽकठोरशिरीषकुसुमशिखासूक्ष्माग्रोद्भेदपक्ष्मलानि गात्राणि पुनःपुनः पाणिना परामृश्यान्तर्हृदयेनादूयत । तथा दूयमानहृदयं च तमवदम्—

---

ञ्जल, स्वदोषस्य निजदूषणस्य शङ्कारेका परित्यज्यतां मुच्यताम् । खल्विति निश्चयेन । शठमतेर्मूर्खबुद्धेर्ममैवायं दोषः, येन कारणेन जानताप्यवबुध्यतापि मया श्वेतकेतुनोत्पत्तिसमय एव वत्सस्य पुण्डरीकस्य कृत आयुष्करं दीर्घजीवितकारि कर्म न निर्वर्तितं न कृतम् । अधुना सांप्रतमिदानीमिदं कार्यं सिद्धप्रायमेव संजातमेव । अतो दुःखासिका[1] न भावनीया । मनसि दुःखं नानेयमित्यर्थः । मत्पादमूले मच्चरणतले तावदवस्थीयतामवस्थानं क्रियतामित्येवं तातेनाज्ञापितस्तु कथितस्तु विगतभीरहं व्यज्ञापयं विज्ञप्तिमकरवम् ।

हे तात हे पितः, यदि प्रसादः प्रसन्नतास्ति ततो यत्रैव यस्मिन्स्थलेऽसौ पुण्डरीक उत्पन्नस्तत्रैव तस्मिन्स्थले गमनाय मामाज्ञापयत्वाज्ञां ददातु तातः इत्येवं विज्ञापितस्तु मया पुनर्मामित्याज्ञापितवानाज्ञां दत्तवान् । इतियोत्यमाह—**वत्स इति** । हे वत्स हे पुत्र हे सूनो, शुकजातावसौ पतितस्तस्माद्धेतोर्गत्वापि तत्र तमद्य त्वं नैव वेत्सि । नाप्यसौ शुकस्त्वां भवन्तं वेत्ति । तावत्सांप्रतं तद्गमनं तिष्ठत्वास्ताम् । अद्य च प्रातरेव प्रत्यूष एवाहूय मामाज्ञापितवानाज्ञां दत्तवान् । हे वत्स कपिञ्जल, महामुनेर्जाबालेराश्रमपदं सुहृन्मित्रं ते तव प्राप्तः । अस्य शुकस्य जन्मान्तरस्य स्मरणं च भवान्तरज्ञानं चोपजातम् । संप्रतीदानीं तद्गच्छ व्रज तं शुकं द्रष्टुं विलोकयितुम् । मदीययाशिषाऽऽशीर्वादेनानुगृह्यानुग्रहविषयीकृत्यासौ शुक इति वक्तव्यो भणितव्यः । इतियोत्यमाह—**हे वत्सेति** । हे वत्स, यावदिदं पूर्वोक्तं कर्म परिसमाप्यते परिपूर्णक्रियते तावत्कालमस्मिन्नेव जाबालेः पाद[2]मूले त्वया स्थातव्यं स्थेयम् । अपि च तव दुःखेन दुःखिता पीडिता ते तवाम्बा माता श्रीरप्येतस्मिन्नेव कर्मणि परिचारिका सपर्याकारिणी वर्तते । तयाप्यम्बयापि शिरस्युत्तमाङ्गे मस्तक उपाघ्राय चुम्बित्वैतदेव पूर्वोक्तं पुनःपुनः संदिष्टं कथितमुक्तम् । इत्येवमुक्त्वा प्रतिपाद्याऽकठोराण्यकठिनानि कोमलानि मृदूनि यानि शिरीषकुसुमानि तेषां शिखा तस्याः सूक्ष्मोऽणुरग्रस्य य उद्भेदस्तद्वत्पक्ष्मलानि कोमलानि गात्राणि शरीराणि पुनःपुनः पाणिना हस्तेन परामृश्य परामर्शनं कृत्वा हृदयेन चेतसादूयताखिद्यत । तथा दूयमानहृदयं खिद्यमानचेतसं च

---

टिप्प०—1 दुःखपूर्विका आसनक्रिया ( धात्वर्थनिर्देशे ण्वुल् ), दुःखेनाऽवस्थानमित्याशयः । 2 यदा 'अस्मिन्नेव' इति विशेष्यते तर्हि 'पादमूले' इति न युज्यते । अत एव 'आश्रमे' इत्येव पाठो योग्यः । 3 अनुपपदात् ल्यब् न युज्यते ।

---

पाठा०—१ आयुःकामं कर्म. २ निवर्तितम्. ३ व्यज्ञपयम्. ४ तदा. ५ न परिसमाप्यते. ६ आश्रमे. ७ गात्राणि मे.

'सखे कपिञ्जल, किं दूयसे ? त्वयापि मन्दपुण्यस्य मम कृते तुरंगमतामापन्नेन[1] पराधीनवृत्तिना बहुतराण्येव दुःखान्यनुभूतानि। कथं सोमपानोचितेनामुनाऽऽस्येन समुत्पादितसफेनरक्तस्रवाः खरखलीनक्षतयो विसोढाः ? कथमयमकठोरकिसलयशयनीयैकैसेवासुकुमारः[2] सदा पर्याणितस्य न शीर्णः पृष्ठवंशः ? कथमेषु कुसुमोच्चयापतित[3]बालवनलतास्पर्शमात्राक्षमेषु[4] गात्रेषु कशाभिघाता निपतिताः[5] ? कथं च ब्रह्मसूत्रोद्वाहिनि देहेऽस्मिन्वध्रोत्पीडनकृताः[6] पीडाः समुपजाताः ?' इत्येभिरन्यैश्च पूर्ववृत्तान्तालापैस्तत्कालविस्मृततिर्यग्जातिदुःखः सुखमतिष्ठम्[7]।

उपारोहति[8] च मध्याह्नं सवितरि हारीतः सह कपिञ्जलेन मां यथोचितमाहारमकारयत्। कृताहारश्च कपिञ्जलः क्षणमिव स्थित्वा मामब्रवीत्—"अहं हि तातेन त्वां समाश्वासयितुम्, 'जाबालिपादमूलादा कर्मपरिसमाप्तेर्न त्वया चलितव्यम्' इत्येतच्चादेष्टुं विसर्जितः। अन्यदहमपि[9] तत्रैव कर्मणि व्यग्रतर एव। तद्व्रजामि संप्रति।" अहं तु तच्छ्रुत्वा विषण्णवदनस्तं प्रत्यवदम्—'सखे कपिञ्जल, एवंगते किं ब्रवीमि। किं च तातस्याम्बाया वा संदिशामि। सर्वं त्वमेव वेत्सि' इति। स त्वेवमुक्तो मया, पुनःपुनस्तत्रावस्थानाय मां संविधाय[10] हारीतं

---

तं कपिञ्जलमहमवदमकथयम्। किं तदित्याह—**सखे इति**। हे सखे कपिञ्जल, किं दूयसे किं खिद्यसे। त्वयापि भवतापि मन्दपुण्यस्य स्वल्पसुकृतस्य मम कृते तुरंगमतामश्वतामापन्नेन प्राप्तेन पराधीनवृत्तिना परायत्तवृत्तिना परवशवृत्तिना बहुतराण्येवानेकान्येव दुःखानि कृच्छ्राण्यनुभूतानि साक्षात्कृतानि। कथं केन प्रकारेण सोमः सोमवल्ली तस्याः पानं तत्रोचितेन योग्येनामुनास्येन मुखेन समुत्पादितो विहितः सफेनः सडिण्डीरो रक्तस्रावो रुधिरच्युतिर्याभिरेवंविधाः खरं कठिनं यत्खलीनं कविका कवियं मुखयन्त्रणं तस्य क्षतयो व्रणा विसोढाः क्षान्ताः। कथमकठोरं सुकुमारं यत्किसलयशयनीयं तस्यैकसेवयैकसपर्यया सुकुमारः सुकोमलः सदा पर्याणितस्य संजातपल्ययनस्यायं पृष्ठवंशो रीढकः। 'रीढकः पृष्ठवंशः स्यात्पृष्ठं तु चरमं तनोः' इति हैमः। न शीर्णः शटितः। कथं कुसुमानामुच्चयोऽवचयस्तस्मादापतिताः स्रस्ता बालवनलतास्तासां स्पर्शमात्रेणाक्षमेष्वसमर्थेष्वेषु गात्रेषु कशाभिघाता वर्मदण्डप्रहारा निपतिताः। कथं च ब्रह्मसूत्रोद्वाहिनि यज्ञोपवीतधारकेऽस्मिन्देहे शरीरे वध्रं चर्म तेन यदुत्पीडनं बन्धनं तेन कृता विहिताः पीडा बाधाः समुपजाताः समुत्पन्नाः। इत्येभिरन्यैश्च पूर्ववृत्तान्तालापैः प्राचीनोदन्तसंभाषणैस्तत्कालं तदात्वं विस्मृतं विस्मरणतामापन्नं तिर्यग्जातिदुःखं यस्यैवंभूतोऽहं सुखमन्वतिष्ठमस्थाम्।

सवितरि सूर्ये मध्याह्नमह्नो मध्यमुपारोहत्यधिरोहणं कुर्वति सति हारीतः कपिञ्जलेन सह मां वैशम्पायनं यथोचितं योग्यमाहारं भोजनमकारयदकल्पयत्। कृताहारश्च विहितभोजनश्च कपिञ्जलः क्षणमिव स्थित्वा मामब्रवीदवोचत्। अहं हि कपिञ्जलस्तातेन पित्रा त्वां भवन्तं समाश्वासयितुमाश्वासनां कर्तुं जाबालिपादमूलादाकर्मपरिसमाप्तेः कृत्यपरिपूर्तिं मर्यादीकृत्य न त्वया चलितव्यं नान्यत्र गन्तव्यम्। अन्यत्र गमनं न करणीयम्। इत्येतच्चादेष्टुं कथयितुं विसर्जितो विसृष्टस्त्यक्तः। अन्यदहमपि तत्र कर्मणि पूर्वोक्तकृत्ये व्यग्रतरोऽतिशयेन व्याकुल एव। तत्तस्माद्धेतोः संप्रतीदानीं व्रजामि गच्छामि। अहं तु वैशम्पायनस्तच्छ्रुत्वा समाकर्ण्य सम्यगाकर्ण्य विषण्णवदनो विलक्षास्यस्तं कपिञ्जलमवदमब्रवम्। हे सखे कपिञ्जल, एवंगते एवंप्राप्तेऽहं किं ब्रवीमि किं वच्मि। किंच तातस्य पितुर्जनकस्याम्बाया मातुः सवितुः किं संदिशामि किं कथयामि किमाज्ञापयामि। सर्वं समस्तं त्वमेव भवानेव वेत्सि जानासीति। स तु मयैवमुक्तो भणितः पुनःपुनर्मां तत्रावस्थानाय हारीतं संवि-

---

**टिप्प०**—1 तत्रावस्थानाय माम्, हारीतं च संविधाय अनुरुध्य (सावधानीकृत्य), इत्यन्वयो योग्यः।

---

पाठा०—१ तुरंगताम्. २ एकमुखसेवा. ३ पातित; पतित. ४ मात्रक्षमेषु. ५ निपातिताः. ६ बद्ध. ७ अन्वतिष्ठम्. ८ उपरोहति. ९ अहमपि; अस्मि तदहमपि. १० संनिधाय.

च, अनुभूतास्मदालिङ्गनसुखो विस्मयोन्मुखेन मुनिकुमारकजनेनेक्ष्यमाणोऽन्तरिक्षमतिक्रम्य क्वाप्यद[1]र्शनमगात् । गते च तस्मिन्हारीतः समाश्वास्य मां शारीरस्थितिकरणायोदतिष्ठत् । उत्थाय चा[2]न्यं मुनिकुमारकं मत्पार्श्वे स्थापयित्वा निरगमत् । [3]निर्वर्तितस्नानादिक्रियाकलापश्चात्मनैव सहा[4]पराह्णसमये पुनर्मामाहारमकारयत् ।

एवं चा[5]वहितचेतसा हारीतेन संवर्ध्यमानः कतिपयैरेव दिवसैः संजातपक्षोऽभवम् । उत्पन्नोत्पतनसामर्थ्यश्च चेतस्यकरवम्—'गमनक्षमस्तु संवृत्तोऽस्मि, तत्र ना[6]म चन्द्रापीडोत्पत्तिपरिज्ञानम् । महाश्वेता पुनः सैवास्ते । तत्किमुत्पन्नज्ञानोऽपि तद्दर्शनेन विनात्मानं निमेषमपि दुः[7]खं स्थापयामि । भवतु । तत्रैव गत्वा तिष्ठामि' इति निश्चित्यैकदा प्रातर्विहारनिर्गत एवोत्तरां ककुभं गृहीत्वावहम् । अबहुदिवसाभ्यस्तगमनतया स्तोकमेव गत्वावशीर्यन्त इव मेऽङ्गानि श्रमेण । [8]शुष्यच्च[9]ञ्चुपुटः पिपासया, नाडिंधमेना[10]कम्पितकण्ठः श्वासेन, तद्-

---

धाय नियुज्य चानुभूतं मदालिङ्गनसुखं येनैवंभूतो विस्मयोन्मुखेन कौतुकोर्ध्वीकृताननेन मुनिकुमारकजनेन तापसशिशुजनेनेक्ष्यमाणो विलोक्यमानोऽन्तरिक्षमाकाशमतिक्रम्योल्लङ्घ्य क्वाप्यदर्शनमनवलोकनमगाद्ययौ । गते च तस्मिन्कपिञ्जले हारीतो मां समाश्वास्याश्वासनां दत्त्वा शारीरस्थितिकरणाय स्नानादिकृत उदतिष्ठदुत्थितो बभूव । उत्थाय चान्यं मुनिकुमारकं तापसकुमारकं मत्पार्श्वे मदभ्यर्णे मत्समीपे स्थापयित्वा संन्यस्य निरगमन्निर्ययौ निर्जगाम । निर्वर्तितो विहितः स्नानादिकायाः क्रियायाः कलापः समुदायो येन सोऽपराह्णसमये तृतीयप्रहरे पुनरात्मनैव सह स्वेनैव समं मामाहारमशनमकारयद्यधापयत् ।

एवं चावहितचेतसा सावधानचित्तेन हारीतेन संवर्ध्यमानो वृद्धिं प्राप्यमाणः कतिपयैः कियद्भिरेव दिवसैः संजातौ सुनिष्पन्नौ पक्षौ वाजौ यस्यैवंभूतोऽभवमजनिषम् । 'पक्षो गरुच्छदश्चापि पिच्छं वाजस्तनूरुहम्' इति हैमः । उत्पन्नं संजातमुत्पतनस्योड्डयनस्य सामर्थ्यं बलं यस्य एवंविधश्च चेतसीत्यकरवमरचयम् । गमने चलने क्षमः समर्थस्त्वहं संवृत्तो निष्पन्नोऽस्मि । नामेति कोमलामन्त्रणे । चन्द्रापीडस्योत्पत्तिर्जन्म तस्य परि[1]ज्ञानमवबोधः । चन्द्रापीडोत्पत्तिपरिज्ञानं तु जातमेवास्तीत्यर्थः । महाश्वेता च पुनः सैवास्ते विद्यते । तत्तस्मात्कारणादुत्पन्नज्ञानोऽपि संजातजातिस्मरणोऽपि तस्या दर्शनेनावलोकनेन विनात्मानं किं किमर्थं निमेषमप्यक्षिस्पन्दमात्रमपि दुःखं स्थापयामि । भवतु जायताम् । तत्रैवाच्छोदोपान्ते गत्वा तिष्ठाम्यवस्थानं करोमीति निश्चित्य निर्णयं कृत्वैकदैकस्मिन्समये प्राप्तः प्रभाते विहारार्थं यात्रार्थं निर्गत एवोत्तरामुदीचीं ककुभं दिशं गृहीत्वावहमचलम् । अबहुदिवसैः स्तोकदिनैरभ्यस्तं प्रारब्धं गमनं येन स तस्य भावस्तत्ता तया, स्तोकमेव स्वल्पमेव गत्वा मे ममाङ्गानि हस्तपादादीनि श्रमेण प्रयासेनावशीर्यन्त इव स्फुट्यन्त इव । पिपासयोदन्यया शुष्यञ्शोषं प्राप्नुवच्चञ्चुपुटं त्रोटिपुटं यस्य सः । 'चञ्चुस्त्रोटिरुभे स्त्रियौ' इत्यमरः । नाडिं धमतीति नाडिंधम एवंविधेन श्वासेन श्वस-

---

टिप्प०—1 तत्र नाम चन्द्रापीडोत्पत्तिपरिज्ञानम् ? किमग्रे विवक्षितम् ? ( उत्पत्तिपरिज्ञानं तु जातमेवास्तीति किमाधाराद्रुच्यते, क्वोत्पत्तिरस्य सूचिता ?) तस्मादिदमपि टीकाकारपुंगवत्वमेव । 'तत्र न मे चन्द्रापीडोत्पत्तिपरिज्ञानम्, ( तत्र गमनक्षमावस्थायामपि चन्द्रापीडोत्पत्तिपरिज्ञानं न मे जातम् )' इत्येव पाठः । 2 'अवशीर्यन्त इव मेऽङ्गानि' इतिरूपेण पूर्ववाक्ये यदा तत्तत्क्रियाया एव प्राधान्येन निर्देशः प्रक्रान्तस्तर्हि अग्रेपि सोयमेव प्रक्रमो निर्वाह्यः । ततश्च—'अशुष्यच्चञ्चुपुटं पिपासया, नाडिन्धमेन आध्मायत कण्ठः श्वासेन,' इत्येव पाठो ग्रन्थाभिमतः । टीकाकारस्तु केवलं पर्यायशूरः क्रूरः स्वारस्ये ।

---

पाठा०—१ अदर्शनपथम्. २ अन्यतमम्. ३ निवर्तित. ४ अपराह्णसमये; सायाह्नसमये. ५ आहित. ६ नाम तावत्. ७ दुःखे. ८ अशुष्यत्. ९ चञ्चुपुटम्. १० अकम्पत; अध्मायत.

वस्थश्च शिथिलायमानपक्षतिरत्र पताम्यत्र पतामीति परवानेवान्यतमस्य तमस्विनीतिमिर-संघातस्येवार्ककरतिरस्कारिणो घनहरितपल्लवभरावनम्रस्यासन्नतरस्य सरस्तीरतरुनिकुञ्जस्योपर्यात्मानममुञ्चम् । चिरादिवोन्मुक्ताध्वश्रमक्लमोऽवतीर्य शीतलतरुतलच्छायास्थितो दलगहनसंरोधशिशिरमरविन्दकिंजल्करजोवाससुरभि बिसरसकषायमापीयमानमेवोत्पादितपुनरुत्कपानस्पृहमा तृप्तेः पयो निपीय, यथाप्राप्तैरकठोरकमलकर्णिकाबीजैर्वीरतरुपर्णाङ्कुरफलैश्च कृत्वा क्षुधः प्रतीकारम्, अपराह्णसमये पुनः कियन्तमप्यध्वानं यास्यामीति मनसि कृत्वा, अध्वश्रमनिःसहान्यङ्गानि विश्रामयितुमन्यतमामविच्छिन्नच्छायां शाखामारुह्य तरोर्मूलभाग एवावातिष्ठम् । तथास्थितश्चाध्वश्रमसुलभां निद्रामगच्छम् ।

चिरादिवं च लब्धप्रबोधो बद्धमात्मानमनुन्मोचनीयैस्तन्तुपाशैरपश्यम् । अग्रतश्च पाश-

---

नेनाकम्पितः प्रचलितः कण्ठो निगरणो यस्य स तादृश्यवस्था यस्य सः । तदवस्थश्च शिथिलायमाना श्लथायमाना पक्षतिः पक्षमूलं यस्यैवंभूतः । 'स्त्री पक्षतिः पक्षमूलम्' इत्यमरः । अत्र पतामि अत्र पतामीति परवानेव परायत्त एव सरस्तीरे यस्तरुनिकुञ्जस्तस्योपर्यात्मानं स्वममुञ्चं मुक्तवान् । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः । इतो निकुञ्जं विशेषयन्नाह—**अन्येति** । अन्यतमस्यानिर्दिष्टनामकस्य तमस्विनी यामिनी तस्यास्तिमिरसंघातस्येव ध्वान्तसमूहस्येवार्ककरतिरस्कारिणो रविकिरणन्यक्कृतिविधायिनो घनो निबिडो हरितो नीलो यः पल्लवभरः किसलयसंभारस्तेनावनम्रस्यावनतस्यासन्नतरस्यातिसमीपवर्तिनोऽतिनिकटवर्तिनः । चिरादिव चिरकालेन बहुवर्षेण दिवसेनोन्मुक्तो गतः अध्वश्रमक्लमः प्रवासखेदो यस्य सोऽवतीर्यावरोहणं कृत्वा शीतला शिशिरा या तरोश्छाया आतपाभवस्तस्यां स्थितः कृतावस्थानः । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । दलैः पत्रैर्गहनं निबिडम् । अर्थाद्वनान्तरस्य संरोधेनावरणेन शिशिरं शीतलम् अरविन्दं कमलं तस्य किंजल्कं केसरं तस्य रजः परागस्तस्य वासो गन्धस्तेन सुरभि सुगन्धं बिसरसेन तन्तुलमधुना कषायं तुवररसम् । 'तुवरस्तु कषायोऽस्त्री' इत्यमरः । आपीयमानमेवास्वाद्यमानमेवोत्पादिता पुनरुत्कयोत्कण्ठया पानस्पृहा वाञ्छा येन तत् । यद्वानुत्पादिता पुनः पानस्पृहा वाञ्छा येन तदित्यर्थः । आ तृप्तेः सौहित्यपर्यन्तं पयो जलं निपीय पानं कृत्वा जलं पीत्वा, यथाप्राप्तैर्यथालब्धैरकठोरा सुकुमाराऽकठिना या कमलकर्णिका वराटकस्तस्या बीजैः फलैर्वीरतरुररुष्करः । 'वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु' इत्यमरः । तस्य पर्णानि पत्राण्यङ्कुराः प्ररोहा नवाङ्कुराः फलानि सस्यानि च तैः क्षुधो बुभुक्षायाः प्रतीकारं तत्प्रशमनोपायं कृत्वा विधायापराह्णसमये तृतीयप्रहरे पुनः कियन्तमप्यध्वानं मार्गं यास्यामि गमिष्यामीति मनसि कृत्वेति चित्ते विचिन्त्य विचारयित्वाध्वश्रमेण मार्गखेदेन निःसहान्यशक्तान्यसमर्थान्यङ्गानि विश्रामयितुं विश्रामं कारयितुमन्यतमामन्यतरामविच्छिन्नात्रुटिता छाया यस्यां निरन्तरा छाया यस्यामेतादृशीं शाखामारुह्यारोहणं कृत्वा तरोर्मूलभाग एवावातिष्ठमुपाविशम् । तथास्थितश्च तथावस्थश्चाध्वश्रमेण मार्गखेदेन सुलभां सुप्रापां निद्रां प्रमीलामगच्छमप्रापम् ।

चिरादिव च चिरकालसदृशमिव बहुकालसदृशमिव । अत्रेवशब्दः सदृशार्थे । लब्धः प्रातः प्रबोधो जागरो येन सोऽनुन्मोचनीयैरुन्मोचयितुमशक्यैस्तन्तुपाशैरात्मानं स्वं बद्धं संयमितमपश्यं व्यलोकयम् । अग्रतश्च पुर-

**टिप्प०—**1 प्रलाप एव । 2 न जाने किं वक्ति । दलगहन( निबिड )तया यः सूर्यरश्मीनां संरोधस्तेन शिशिरम्, इति स्पष्टोर्थः । 3 उत्कण्ठापर्याय उत्काशब्दो न प्रसिद्धः ( उत्कण्ठितापर्यायोस्ति ) तस्मात् 'पुनरुक्तपानस्पृहम्' ( पुनरुक्ता द्विरावृत्ता ( अधिका ) पानस्पृहा येन ) इति पाठः । 4 अतिष्ठमित्येव ग्रन्थपाठः । 'अव'पूर्वकत्वे तु आत्मनेपदं स्यात् ।

**पाठा०—**१ पतत्रैवाहितगमनप्रयत्नः. २ दृष्टिहारिणां हरितघननिबिडपल्लवभरावनम्रासन्नतरस्य सरस्तीरजम्बूनिकुञ्जस्य. ३ निबिड. ४ कषायमधुरम्. ५ अपुनरुक्त. ६ निपीयमानप्राप्तैः. ७ तीरतरु. ८ अङ्कुरपत्रैश्च; अङ्कुरैः फलैश्च. ९ विश्रमयितुम्. १० इव.

विरहितमिव कालपुरुषम्, अतिकठिनतया कालिम्ना च वपुषः कालायसपरमाणुभिरिव केवलैर्निर्मितम्, प्रेतपतिमिवापरम्, प्रतिपक्षमिव पुण्यराशेः, [1]आशयमिव पाप्मनः, विनापि क्रोधकारणादाबद्धभीषण[2]भ्रूकुटिरौद्रतरेणाननेन[3]ारक्तकेकरतरकनीनिकेन च[4] चक्षुषा सकलजनभयंकरस्य भगवतः कृतान्तस्यापि भयमिवोपजनयन्तम्, आशये केशेषु चास्निग्धम्, आनने ज्ञाने चान्धकारितम्, वर्णे चरिते च कृष्णम्, निवसने कर्मणि च मलिनम्, वचसि वपुषि च परुषम्[5], अदृष्टाश्रुतानुरूपमप्याकारप्रत्ययादेवानुमीयमानक्रौर्यदोषं पुरुषमद्राक्षम्। आलोक्य च तं तादृशमात्मन उपरि निष्प्रत्याश एवापृच्छम्—'भद्र कस्त्वम्? किमर्थं [6]वा त्वया बद्धोऽस्मि। यद्यामिषतृष्णया, तत्किमिति सुप्त एव न व्यापादितोऽस्मि। किं मया निरागसा बन्धदुःख[7]मनुभावितेन। अथ केवलमेव कौतुकात्। ततः कृतं कौतुकम्। मुञ्च मामिदानीं त्वं भद्रमुखः। मया खलु [8]वल्लभजनोत्कण्ठितेन दूरं गन्तव्यम्। अकालक्षेपक्षमं वर्तते मे[9] हृदयम्। भवानपि [10]प्राणिधर्मे वर्तते' [11]एवमुक्तः स मामुक्[12]तवान्—

---

तच्च पाशविरहितं कालपुरुषमिव यममिवातिकठिनतयातिकठोरतया वपुषो देहस्य कालिम्ना कृष्णत्वेन च केवलैः कालायसपरमाणुभिर्लोहाणुभिरिव निर्मितं रचितमपरं प्रेतपतिं यममिव पुण्यराशेः सुकृतसङ्घातस्य प्रतिपक्षमिवासहनमिव पाप्मनः पापिष्ठस्याशयमिवाभिप्रायमिव। क्रोधकारणाद्विनापि मन्युहेतुं विनाप्याबद्धा या भीषणा भैरवा भृकुटयस्ताभी रौद्रतरेण भीषणतरेणाननेन मुखेनारक्ता लोहिता केकरतरा अतिवक्रा कनीनिका यस्यैवंभूतेन च चक्षुषा नयनेन कृत्वा सकलजनभयंकरस्य भगवतः कृतान्तस्यापि भयमिव भीतिमिवोपजनयन्तमुत्पादयन्तं निष्पादयन्तम्, आशयेऽभिप्राये केशेषु चालकेषु चास्निग्धं रूक्षमानने मुखे ज्ञाने चावबोधे चान्धकारितं प्राप्तान्धकारम्, वर्णे देहगुणे चरित आचरणे च कृष्णं श्यामम्, निवसने वस्त्रे कर्मणि क्रियायां च मलिनं कश्मलम्, वचसि वाचि वपुषि शरीरे च परुषं कठिनम्, अदृष्टश्रुतमनुरूपं स्वरूपं यस्यैवंभूतमप्याकारप्रत्ययादाकृतेर्ज्ञानादेवानुमीयमानमनुमानेन ज्ञायमानं क्रौर्यदोषं क्रूरतादूषणं यस्य स तमेवंविधं पुरुषं नरमद्राक्षं व्यलोकयम्। आलोक्य च निरीक्ष्य च तं तादृशमात्मनः स्वस्योपरि निष्प्रत्याशो निराश एवाहमपृच्छमप्रश्नयम्। हे भद्र, कस्त्वम्। किमर्थं किंप्रयोजनं वाहं बद्धोऽस्मि। यद्यामिषतृष्णया मांसलिप्सया तत्तस्माद्धेतोः सुप्त एव निद्रां गत एव किमिति न व्यापादितो न हतोऽस्मि। किं बन्धदुःखमनुभावितेन प्रापितेन मया निरगसा निरपराधिना। अथ केवलमेव कौतुकादाश्चर्यादिति चेत्कृतं कौतुकं विहितं कुतूहलम्। 'कौतूहलं कौतुकं च कुतुकं च कुतूहलम्' इत्यमरः। भद्रमुखः कल्याणकृद्वदनस्त्वमिदानीं सांप्रतं मां मुञ्च त्यज। वल्लभजने प्रणयिनि जन उत्कण्ठितेन मयोत्केन मया वैशम्पायनेन दूरं दविष्ठं गन्तव्यं गमनीयं चलनीयम्। मम हृदयं चेतो मानसमकालक्षेपक्षमं कालविलम्बे समर्थं न वर्तते। भवानपि प्राणिधर्म एव वर्तते मनुष्योऽसीति तद्धर्मान्वेत्सि। एवमुक्तः कथितो मामित्युक्तवान्भणितवान्।

टिप्प०—1 अविचार एवायम्। आश्रयमित्येव पाठः। 2 अनुरूपं स्वरूपमिति नवीनम्। अस्तु 'अदृष्टाश्रुताननुभूतमपि आकारप्रत्ययादेवानुमीयमानक्रौर्यदोषम्' इत्येव पाठः। न दृष्टं न श्रुतं न अनुभूतमपि, इति तदर्थः।

पाठा०—१ आश्रयम्. २ भ्रुकुटी. ३ आरक्तकेकरतल; रक्ततर. ४ चक्षुषा च. ५ अदृष्टश्रुतानुरूपम्; अदृष्टश्रुतानुभूतम्. ६ च. ७ अनुभावितेनापि. ८ जनदर्शन. ९ मद्धृदयम्. १० प्राणिधर्मे प्रवर्तते; प्राणिधर्मेषु वर्तत एवेति. ११ स त्वेवमुक्तः. १२ प्रत्यवादीत्.

'महात्मन्, अहं खलु क्रूरकर्मा जात्या चाण्डालः। न च मया त्वमामिषलुब्धेन कुतूहलेन[1] वा बद्धः। मम खलु स्वामी पक्कणाधिपतिरितो नातिदूरे मातङ्ग[2]कप्रतिबद्धायां भूमौ कृतावस्थानः। तस्य दुहिता कौतुकमये प्रथमे वयसि वर्तते। तस्यास्त्वं केनापि दुरात्मना कथितो यथा[3] जाबालेराश्रम एवंगुणविशिष्टो महाश्चर्यकारी शुकस्तिष्ठतीति[4]। तया च श्रुत्वोत्पन्नकौतुकात्त्वद्ग्रहणाय बहव[5] एवापरे मादृशाः समादिष्टाः। तदद्य पुण्यैर्मयासादितोऽसि। तदहं तत्पादमूलं त्वां प्रापयामि[6]। बन्धमोक्षे[7] चाधुना सा ते प्रभवति' इति।

अहं तच्छ्रुत्वा मुक्ताशनिनेव[8] ताडितः शिरसि, संविग्नान्तरात्मा चेतस्यकरवम्—'अहो मे मन्दपुण्यस्य दारुणतरः कर्मणां विपाकः। येन मया सुरासुरशिरःशेखराभ्यर्चितचरणसरसिजायाः श्रियो जातेन[9], जगत्त्रयनमस्यस्य महामुनेः श्वेतकेतोः स्वहस्तसंवर्धितेन, दिव्यलोका[10]श्रमनिवासिना भूत्वा म्लेच्छजातिभिरपि दूरतः परिहृतप्रवेशमधुना पक्कणं प्रवेष्टव्यम्[11]।

---

किं तदित्याह—**महात्मन्निति**। हे महात्मन् हे महानुभाव, अहं खलु निश्चयेन क्रूरकर्मा निस्त्रिंशकर्मा कठिनकर्मा जात्या जन्मना। 'जातिः सामान्यजन्मनोः' इत्यमरः। चाण्डालः श्वपचः। न च मया चाण्डालेनामिषलुब्धेन मांसगृध्नुना कुतूहलेन कौतूहलेन[1] वा त्वं बद्धः संदानितः। खलु निश्चये। मम स्वामी पक्कणाधिपतिः पक्कणः शबरावासस्तस्याधिपतिरीश इतः स्थानान्नातिदूरे नातिदविष्ठे मातङ्गकैरन्त्यजैः प्रतिबद्धायां कृतगृहादिरचनायां भूमौ कृतमवस्थानं येन सः। तत्र कृतनिवास इत्यर्थः। 'पक्कणः शबरावासो घोषस्त्वाभीरपल्लिका' इति हैमः। तस्य पक्कणाधीशस्य दुहिता सुता कौतुकमय आश्चर्यमयेऽत्यद्भुत[2]रूपवत्त्वात्प्रथम आद्ये वयसि दशायां वर्तते। केनाप्यज्ञाताभिधानेन दुरात्मना तस्या दुहितायास्त्वं[3] कथितो निवेदितो यथा जाबालेर्मुनेराश्रम एवंगुणैर्विशिष्टो महाश्चर्यकारी महाकौतुककृच्छुकस्तिष्ठत्यास्त इति। तया च पक्कणाधिपतिसुतया श्रुत्वाकर्ण्योत्पन्नकौतुकात्संजातकुतूहलात्त्वद्ग्रहणाय त्वदानयनाय बहव एवापरे मादृशा मत्सदृशाः समादिष्टा आज्ञापिताः। तदिति हेत्वर्थे। अद्य पुण्यैः सुकृतैस्त्वं समासादितः प्राप्तोऽसि तत्तस्माद्धेतोस्तस्याः पादमूलं चरणसमीपमहं श्वपचस्त्वां प्रापयामि नयामि। अधुना सांप्रतमिति हेतोस्ते तव बन्धमोक्षे[5] सैव चाण्डालसुतैव प्रभवति समर्था भवति। नाहम्।

अहं वैशम्पायनस्तच्छ्रुत्वाकर्ण्य मुक्तो योऽशनिर्वज्रं तेन शिरस्युत्तमाङ्गे ताडित इव संविग्न उद्विग्नोऽन्तरात्मा यस्यैवंभूत इति चेतसि चित्तेऽकरवं व्यथामन्वतिष्ठम्। अहो इति खेदे। मे मम मन्दपुण्यस्य स्वल्पसुकृतस्य कर्मणां कृतशुभाशुभानां दारुणतरोऽतिभयावहो विपाकोऽनुभवनकालः येन कारणेन मया सुरासुराणां देवदैत्यानां शिरःशेखरैर्मौलिमुकुटैरभ्यर्चितं पूजितं चरणसरसिजमङ्घ्रिपद्मं यस्या एवंविधायाः श्रियो लक्ष्म्या जातेनोत्पन्नेन जगत्त्रयनमस्यस्य त्रिभुवननमस्करणीयस्य महामुनेः श्वेतकेतोः स्वहस्तैर्निजपाणिभिः संवर्धितेन वृद्धिं प्रापितेन दिव्यो देवयुक्तो य आश्रमो मुनिस्थानम्। 'आश्रमस्तु मुनिस्थानम्' इति हैमः। तत्र निवासिनावस्थानशीलेन भूत्वा 'पुलिन्दा नाहला निष्ठा शबरा वरुटा भटाः। माला भिल्लाः किराताश्च सर्वेऽपि म्लेच्छजातयः॥' एतैर्म्लेच्छजातिभिरपि दूरतः परित्यक्तः प्रवेशो यस्मिन्नेतादृशमधुना सांप्रतं पक्कणं प्रवेष्टव्यं तत्र

---

टिप्प०—1 पूर्वं धर्मिनिर्देशादत्रापि समविशेष्यः 'कुतूहलिना (कौतुकयुक्तेन)' इत्येव पाठः सम्यक्। 2 अज्ञानं व्याख्यातुः, कौतुकमये कौतुकबहुले। प्रथमे वयसि (कौमारे) सर्वस्य किल कौतुकानि प्रतिपदं भवन्ति। 3 व्याख्यातुर्यथेच्छं व्याकरणम्, विद्यार्थिभिस्तु 'दुहितुः' इति रूपं ज्ञेयम्। 4 भ्रष्टः पाठः। 'उत्पन्नकौतुकया' इत्येव पाठः। 5 बन्धे मोक्षे चेत्येव पाठः।

---

पाठा०—१ कुतूहलिना. २ मातङ्ग. ३ यथा किल. ४ तिष्ठतीति. ५ बहव एवापरेऽपि; अपरिमिता. ६ नयाम्यहम्. ७ बन्धमोक्षे च. ८ शुष्काशनिना. ९ सुरासुरशिखराभ्यर्चिते चरणसरसिजया श्रिया जनित्वा. १० आश्रय. ११ द्रष्टव्यम्.

चण्डालैः सहैकत्र स्थातव्यम् । जरन्मातङ्गाङ्गनाकरोपनीतैः कवलैरात्मा पोषणीयः । चण्डालबालकजनस्य क्रीडनीयेन भवितव्यम् । दुरात्मन् पुण्डरीकहतक, धिग्जन्मलाभं ते, यस्य कर्मणामयमीदृशः[2] परिणामः, किमर्थं प्रथमगर्भ एव न सहस्रधा शीर्णोऽसि ? मातः श्रीः, अशरणजनशरणचरणपङ्कजेऽतिगहनभीषणाद्रक्ष मामस्मान्महानरकपातात् । तात भुवनत्रयत्राणक्षम, त्रायस्व कुलतन्तुमेकम्[3] । त्वयैव संवर्धितोऽस्मि । वयस्य कपिञ्जल, यदि परापत्य त्वयास्मात्पापान्न मोचितोऽस्मि तदा जन्मान्तरेऽपि पुनर्मा कृथा मत्समागमप्रत्याशाम्' इति । एतानि चान्यानि च चेतसा विलप्य पुनस्तमभ्यर्थनादीनमवदम्—'भद्रमुख, जातिस्मरो मुनिरस्मि जात्या । तत्तवापि मामस्मान्सहतः पापसंकटादुद्धृत्य धर्मो भवत्येवादृष्टसुखहेतुः[4] । दृष्टेऽपि च[5] केनचिदपरेणादृष्टस्य मन्मुक्तिकृतः प्रत्यवायो नास्त्येव । तन्मुञ्चतु मां भद्रमुखः' इत्यभिदधानश्च पादयोरपतम्[6] । स तु विहस्य मामब्रवीत्—

---

प्रवेशः कर्तव्यः । चण्डालैरन्तेवासिभिः सहैकत्रैकस्मिन्स्थाने स्थातव्यमवस्थानं कर्तव्यम् । जरत्यश्च ता मातङ्गानामङ्गनाः स्त्रियो युवत्यश्च तासां करोपनीतैर्हस्तानीतैः कवलैर्गण्डोलकैरात्मा पोषणीयः । चण्डालबालकजनस्य क्रीडनीयेन क्रीडां कर्तुं योग्येन भवितव्यम् । हे दुरात्मन् हे पापात्मन्, हे पुण्डरीकहतक हे पुण्डरीकमारक, ते तव जन्मलाभं धिगस्तु । यस्य कर्मणामयमीदृशः परिणामो विपाकः । प्रथमगर्भे एव सहस्रधा सहस्रप्रकारेण किमर्थं न शीर्णः शटितोऽसि । हे मातः श्रीः, अशरणजनानां शरणमाश्रयं चरणपङ्कजं चरणकमलं यस्यास्तस्याः संबोधनम् । अतिगहनं दुरवगाहनं च तद्भीषणं चेति कर्मधारयः । अतिगहनं भीषणं तस्मादस्मान्महानरकपातान्महादुर्गनिपतनात्त्वं मां वैशम्पायनं रक्ष पाहि त्राहि । तस्मात्कारणाद्धे तात हे पितः हे जनक, भुवनत्रयस्य विष्टपस्य त्राणं रक्षणं तत्र क्षम समर्थ, एकं कुलतन्तुं कुलपांसुलं वा मां त्रायस्व रक्ष । 'पांसुलः पुंश्चले शंभोः खट्वाङ्गे पांसुला भुवि' इति विश्वः । त्वयैव भवतैव संवर्धितोऽस्मि वृद्धिं प्रापितोऽस्मि । हे वयस्य कपिञ्जल, यदि परापत्यागत्य त्वयास्मात्पापान्न मोचितोऽस्मि न त्याजितोऽस्मि तदा जन्मान्तरेऽपि भवान्तरेऽपि गतजन्मन्यपि[1] पुनर्मत्समागमप्रत्याशां मन्मेलापकस्पृहां मा कृथा मा व्यधत्था इत्येतानि चान्यानि च चेतसा मनसा विलप्य विलापं कृत्वा पुनस्तमभ्यर्थना प्रार्थना तया दीनं यथा स्यात्तथावदमवोचम् । हे भद्रमुख हे कल्याणमुख, जातिस्मरो निजजातिस्मरणवानहं जात्या मुनिरस्मि जन्मना यतिरस्मि । तत्तस्मात्कारणाज्जात्या कृत्वा मामस्मात्पापसंकटात्पापकष्टाद्दंहःकष्टादुद्धृत्योद्धारं कृत्वा तवाप्यदृष्टश्चासौ सुखहेतुश्चेति कर्मधारयः । एवंविधो धर्मो भवत्येव । दृष्टेऽपि दूषणं नास्तीत्याशयेनाह—**दृष्टेऽपीति** । अदृष्टस्यानवलोकितस्य मन्मुक्तिकृतो मन्मोचनकर्तुरपरेण केनचिद्दृष्टेऽपि[2] वीक्षितेऽपि प्रत्यवायः प्रायश्चित्तं नास्त्येव । 'धर्मः क्षरति कीर्तनात्' इति स्मृतेः । तेन दृष्टादृष्टसुकृतसमाचरणेऽपि न दोष इति ध्वनितम् । तदिति हेत्वर्थे । एष भद्रमुखो मां मुञ्चतु त्यजत्वित्यभिदधान इतिब्रुवाणश्चाहं पादयोश्चरणयोरपतं पतितवान् । स तु भद्रमुखो

---

**टिप्प०—**1 आगामिजन्मन्यपीति योग्यम् । 2 यत्किञ्चित्प्रलपिता सर्वथाऽनधिकारी ग्रन्थमपि स्प्रष्टुम् । अदृष्टसुखहेतुर्धर्मस्तु भवेदेव, किन्तु दृष्टेऽपि दर्शनविषयेऽस्मिन् लोकेपि, केनचिदन्येन अवीक्षितस्य मम मोचनं कुर्वतस्ते दोषो नास्ति । पूर्वं मां निबद्ध्य ततो मुक्तवानिति न त्वं केनचिद्दृष्टः । अतो न ते स्वामिदुहितुः सविधे दोषोद्घोषः स्यादित्याशयः । 'मामुद्धृत्य ते धर्मो भवेत्' इति यदि ग्रन्थस्य यथास्थितं वाक्यं ? तर्हि समाधानसापेक्षम्, उद्धृत्य इति उद्धारस्य त्वं कर्ता, भवेत् इत्यस्य च धर्मः कर्ता । क्त्वाप्रत्यये च द्वयोरेककर्तृकत्वमपेक्षितमित्यलं पौरोभाग्येन ।

---

**पाठा०—**१ जनंगमानां करोपनीतैः; जनङ्गमाङ्गनयोपनीतैः. २ कर्मणः. ३ पांशुलम्. ४ भवेत्. ५ ते; च ते. ६ पुनः पुनः पादयोः.

'रे मोहान्ध, यस्य शुभाशुभकर्मसाक्षिभूताः पञ्च लोकपालास्तवैवात्मशरीरस्थिता न पश्यन्ति सोऽन्यस्य भयादकार्यं नाचरति । तन्नीतोऽसि मया स्वाम्याज्ञया' इत्येवमभिदधान एव मामादाय पक्कणाभिमुखमगच्छत् ।

अहं तु तेन तद्वचसाभिहत इव मूर्ध्नि, मूकतामापन्नः केषां पुनः कर्मणामिदं मे फलमित्यन्तरात्मनाभिध्यायन्प्राणपरित्यागं प्रति कृतनिश्चयोऽभवम् । नीयमानश्च तथा तेन तन्मोचनप्रत्याशयैवाग्रतो दत्तदृष्टिराविष्टैरिव बीभत्सविन्यासैर्व्यावृत्तैश्चावर्तकानायपरिभ्रमणानिभृतैश्च मृगावपाटितजीर्णवागुरासंग्रन्थनव्यग्रैश्चोत्रुटितकूटपाशसंग्रन्थनायस्तैश्च हस्तस्थितसकाण्डकोदण्डैश्च प्रासप्रचण्डपाणिभिश्च सेलग्राहिभिश्च नानाविधग्राहकविहंगवाचाल-

---

विहस्य स्मितं कृत्वा मामब्रवीदभ्यधात् । किं तदित्याह—**रे इति** । रे मोहान्ध हे मोहेन गताक्ष, शुभाशुभकर्मणोर्धर्माधर्मयोः साक्षिभूताः स्थेयीभूता इन्द्रयमवरुणसोमकुबेराख्याः पञ्च लोकपालास्तवैवात्मशरीरस्थिता यस्य न पश्यन्ति नावलोकयन्ति स पुमानन्यस्य भयादकार्यमकृत्यं नाचरति न करोति । अहं तु पञ्चभिर्विलोक्यमानोऽप्यकृतं करोमीति भावः । अतो मम दोषो नास्तीत्याशयेनाह—**तदिति** । तत्तस्मात्कारणान्मया स्वामिनोऽधीशस्याज्ञया निदेशेन न स्वातन्त्र्येण नीतोऽस्यत्र प्रापितोऽसि । अतो न दूषणं ममेति भावः । इत्येवमभिदधान एवेत्येवंब्रुवाण एव मामादाय गृहीत्वा पक्कणस्य शबरावासस्याभिमुखमगच्छदगमत् ।

अहं तु तेन भद्रमुखेन तद्वचसा तद्वाक्येन मूर्ध्नि शिरस्यभिहत इव ताडित इव मूकतामापन्नो मूकभावं प्राप्तः । इदं केषां कर्मणां फलमित्यन्तरात्मनाभिध्यायन्विचारयन्प्राणपरित्यागमसुमोक्षणं प्रति कृतनिश्चयो विहितनिर्णयोऽभवम् । तथा तेन प्रकारेण तेन चाण्डालेन नीयमानश्च तस्माद्यन्मोचनं मोक्षणं तस्य प्रत्याशा वाञ्छा तयैवाग्रतः पुरो दत्ता दृष्टिर्येन सोऽहं दूरत एव पक्कणं शबरनिवेशमपश्यं व्यलोकयमिति दूरेणान्वयः । इतः पक्कणं विशिनष्टि—**आवेष्ट्यमानमिति** । आवेष्ट्यमानं परिवेष्टनविषयीक्रियमाणम् । कैस्तदेवाह—आविष्टैरिव भूतग्रस्तैरिव । बीभत्सो रौद्रो विन्यासो रचना येषां तैः । व्यावृत्तैश्च आखेटकान्निवृत्तैः । आवर्त एवावर्तकः । 'आवर्तः पयसां भ्रमः' इत्यमरः । तत्रानायस्य मत्स्यबन्धनस्य परिभ्रमणमितस्ततः परिक्षेपणं तेनानिभृतैश्चञ्चलैः । 'आनायो मत्स्यबन्धनम्' इत्यमरः । मृगैर्हरिणैरवपाटिता विदारिता द्विधाकृता जीर्णवागुरा मृगबन्धनी तस्याः संग्रन्थनं गुम्फनं तेन व्यग्रैर्व्याकुलैः । उत्त्रुटित उच्छिन्नो यः कूटपाश उन्माथस्तस्य संग्रन्थनं गुम्फनं तेनायस्तैर्व्यग्रैश्च । 'उन्माथः कूटयन्त्रं स्याद्वागुरा मृगबन्धनी' इत्यमरः । हस्तस्थितानि सकाण्डानि सबाणानि कोदण्डानि धनूंषि येषां तैश्च । प्रासैः कुन्तैः प्रचण्डा रौद्राः पाणयो हस्ता येषां तैः । सेलं[2] गृह्णन्तीत्येवंशीलाः सेलग्राहिणस्तैश्च[3] । नानाविधा अनेकप्रकारा ये ग्राहकविहंगाः शिञ्जनैकप्रमुखास्तेषां वाचाल-

---

टिप्प०—1 'तवैव'''अन्यस्य कस्य'''इत्येव पाठः । तव शरीरे स्थिताः पञ्च लोकपाला यथा अकार्यं न पश्यन्ति [ अत एव त्वया दुष्कृतं कृत्वा फलमिदं भुज्यत इत्याक्षेपो ध्वन्यते ] तथा यस्य न पश्यन्ति सः अन्यस्य कस्य वा भयात् अकार्यं नाचरति ? अपि तु अन्यस्य भयनिवृत्तौ अकार्यमाचरत्येव । [ मां मुञ्चन् न त्वं विलोकित इति कुतो दोष इत्यस्य प्रत्युत्तरमिदम् ] टीकाकारस्तु तदिदं चूर्णयांचकार । 2 भाषायां प्रसिद्धं स्यान्न संस्कृते, 'भल्लग्राहिभिश्च' इत्येव पाठः । 3 मध्यगतानि 'लगुडिभिश्च' इत्यादीनि विशेषणान्यपि नीचैः पाठान्तरे द्रष्टव्यानि, यानि टीकाकारेण न धृतानि ।

---

पाठा०—१ तवैव. २ आत्मशरीरे स्थिताः; आत्मस्थिताः. ३ अन्यस्य कस्य. ४ आत्मनो मोचन. ५ बीभत्सविन्यासैर्व्यावृत्तैश्च वर्तकानादाय परिभ्रमणानिवृत्तैश्च; बीभत्सुविन्यासैर्व्यावृत्तैश्च वर्तकानामुपरि भ्रमणनिभृतैश्च. ६ निग्रन्थन; ग्रन्थन. ७ पाशप्रचण्डदण्ड; प्रसरद्दण्डप्रचण्ड. ८ भल्लग्राहिभिश्च लगुडिभिश्च लासकग्राहिभिश्च. ९ सेलग्राहक. १० वाचालकुशलैः; वाचालनाकुशलैः.

नकुशलैः कौलेयकमुक्तिसंचारणचतुरैश्चण्डालशिशुभिर्वृन्दशो दिशि दिशि मृगयां क्रीडद्भिर्दूरत एवावेष्ट्यमानम्, इतस्ततो विस्रगन्धिधूमोद्गमानुमीयमानसान्द्रवंशवनान्तरितवेश्मसंनिवेशम्, सर्वतः करङ्कप्रायवृत्तिवाटम्, अस्थिप्रायरथ्यावकरकूटम्, उत्कृत्तमांसमेदोवसासृक्कर्दमप्रायकुटीराजिरम्, आखेटप्रायाजीवम्, पिशितप्रायाशनम्, वसाप्रायस्नेहम्, कौशेयप्रायपरिधानम्, चर्मप्रायास्तरणम्, सारमेयप्रायपरिवारम्, धवलीप्रायवाहनम्, स्त्रीमद्यप्रायपुरुषार्थम्, असृक्प्रायदेवताबलिपूजम्, पशूपहारप्रायधर्मक्रियम्, आकारमिव सर्वनरकाणाम्, कारणमिव सर्वाकुशलानाम्, संनिवेशमिव सर्वश्मशानानाम्, पत्तनमिव सर्वपापानाम्, आयतनमिव सर्वयातनानाम्, स्मर्यमाणमपि भयंकरम्, श्रूयमाणमप्युद्वेगकरम्, दृश्यमानमपि पापजननम्, जन्मकर्मतो मलिनतरजनम्, जनतो निस्त्रिंशतरलोकहृदयम्,

---

नमभिवादनं तत्र कुशलैश्चतुरैः । कौलेयकानां शुनां मुक्तौ जीवोपरि मोचने संचारण इतस्ततः परिभ्रमणे चतुरैरभिज्ञैः । 'कौलेयकः सारमेयः कुक्कुरो मृगदंशकः' इत्यमरः । एतादृशैश्चण्डालशिशुभिः श्वपचदारकैः । वृन्दैश्च वृन्दैश्च वृन्दशः । दिशि दिशि मृगयामाखेटकं क्रीडद्भिः क्रीडां कुर्वद्भिः आवेष्ट्यमानमित्यनेन संबन्धः । पुनः प्रकारान्तरेण विशेषयन्नाह—इतस्तत इति । इतस्ततो यत्र तत्र विस्रगन्धिरामगन्धो यो धूमोद्गमो दहनकेतनस्तस्योद्गमेनोर्ध्वगमनेनानुमीयमानं सान्द्रं निविडं वंशवनं वेणुकाननं तेनान्तरितो व्यवहितो वेश्मसंनिवेशो यस्य स तम् । करङ्कप्राया शरीरास्थिबहुला या वृतिरावेष्टकस्तस्यां वाटो निःसरणमार्गो यस्मिन्स तथा । 'वाटो वृतौ च मार्गे च वाटी च गृहनिष्कुटे' इति विश्वः । अस्थीनि प्रायो बाहुल्येन यस्यामेवंविधा रथ्या मार्गस्तस्यामवकरकूटः संकरसमूहो यस्मिन् । 'संकरावकरौ तुल्यौ' इति हैमः । उत्कृत्तमुत्कलिपतं यन्मांसं पललं मेदोऽस्थिकृद्वसा शुद्धमांसस्य स्नेहोऽसृग्रुधिरमेतेषां कर्दमः पङ्कः प्रायो बाहुल्येन यस्मिन्नेवंभूतं कुटीराणामजिरमङ्गणं यस्मिन्स तम् । 'अजिरं चत्वराङ्गणम्' इति हैमः । आखेटकप्रायं आजीवो जीवनं यस्मिन्स तम् । 'आजीवो जीवनं वार्ता जीविका वृत्तिचेतनम्' इति कोशः । पिशितं मांसं प्रायो बाहुल्येनाशनं भोजनं यस्मिन्स तथा तम् । वसा मांसस्नेहः सैव प्रायः स्नेहो यस्मिन्स तथा तम् । कौशेयं कृमिकोशोत्थं तदेव प्रायः परिधानमधोंशुकं यस्मिन्स तथा तम् । 'कौशेयं कृमिकोशोत्थं परिधानं त्वधोंशुकम्' इति हैमः । चर्माजिनं प्रायो बाहुल्येनास्तरणं यस्मिन्स तम् । सारमेयाः कुकुरास्त एव प्रायः परिवारो यस्मिन्स तम् । धवली गौः सैव प्रायो वाहनं युग्यं यस्मिन्स तम् । स्त्रीमद्ये एव प्रायः पुरुषार्थः पुरुषप्रयत्नसाध्यः पदार्थो यस्मिन्स तम् । असृग्रुधिरं तदेव प्रायो देवतानां बलिपूजा यस्मिन्स तम् । पशूनामुपहारो बलिः स एव धर्मक्रिया सुकृताचरणं यस्मिन्स तम् । सर्वनरकाणां सर्वदुर्गतानामाकारमिव स्वरूपमिव । सर्वेषामकुशलानामश्रेयसां कारणमिवाकल्याणानां कारणमिव निदानमिव । सर्वेषां श्मशानानां पितृतर्पणानां संनिवेशमिव स्थानकमिव । सर्वेषां पापानामधर्माणामंहसां पत्तनमिव पुटभेदनमिव । सर्वासां यातनानां तीव्रवेदनानामत्यन्तकष्टानामायतनमिव गृहमिव । स्मर्यमाणमपि स्मृतिगोचरीक्रियमाणमपि भयंकरं प्रतिभयावहम् । श्रूयमाणमप्याकर्ण्यमानमप्युद्वेगकरमरतिजनकमसुखनिष्पादकम् । दृश्यमानमप्यालोक्यमानमपि पापजननमंहसामुत्पादकम् । जन्मतः कर्मतश्चातिशयेन मलिना मलिनतरा जना यस्मिन्स तम् । जनतो नीचजनेभ्यः । 'जनो लोके

---

टिप्प०—1 'क्रीड'धातुरकर्मकः । अत एव 'मृगयया' इत्येव पाठः । 2 धिग्वालिशम्, धूमेन वनस्य किमनुमानम् । धूमोद्गमेन अनुमीयमानः सान्द्रवंशवनान्तरितः वेश्मसंनिवेशो यस्मिन् इत्येव विग्रहः । 3 अस्थिप्रायाः (अस्थिबहुलाः) रथ्यासु अवकरकूटाः (संमार्जनीक्षिप्त'जञ्जाल'राशयः) यस्मिन् तथोक्तम् । एवं व्याख्यातव्यम् ।

---

पाठा०—१ संवरण. २ मृगया; मृगयया. ३ आवेद्यमानम्. ४ वंशी. ५ वादम्. ६ वसाकर्दम. ७ निःस्पर्शतर.

लोकहृदयेभ्योऽपि निर्घृणतरसर्वसंव्य[1]वहारसमस्तपुरुषम्, अविशेषाचारबालयुवस्थविरम्, अव्यवस्थितगम्यागम्याङ्गनोपभोगम्, अपुण्यकर्मै[2]कापणं पक्कणमपश्यम् ।

दृष्ट्वा च तं तादृशं न[3]रकवासिनोऽप्युद्वेगकरं समुत्पन्नघृणोऽन्तरात्मन्यकरवम्—'अपि नाम सा चाण्डालदारिका दूरत एव मामालोक्योत्पन्नकरुणा मोचयेत्? न जातिसदृशमाचरिष्यति? भविष्यन्त्येवंविधानि मे पुण्यानि? न निमेषमप्यत्र पदं कुर्याम्' इत्येवं कृताशंसमेव मां नीत्वा स चण्डालस्तदा दु[4]र्दर्शनाकारवेषायै दू[5]रतः स्थितः प्रणम्य 'एष स मया प्राप्तः' इति तस्यै चण्डालदारिकायै दर्शितवान् । सा तु प्रहृष्टतरवदना 'शोभनं कृतम्' इति तमभिधाय तत्करात्स्वकरयु[6]गेनादाय माम् 'आः पुत्रक, प्राप्तोऽसि । सांप्रतं कापरं गम्यते । व्यपनयामि ते सर्वमिदं कामचारित्वम्' इत्यभिदधानैव धावमानचण्डा[7]लबालकोपनीतेऽर्धा[8]श्यानलोमशदुर्गन्धिगोचर्मवध्रिकावनद्धे दृढबद्धदारुमयपानभोजनपात्रे मनागुद्घाटितद्वारे

---

महर्लोकात्परलोके च पामरे' इति विश्वः । अतिशयेन निस्त्रिंशं निस्त्रिंशतरमतिक्रूरं लोकानां हृदयं यस्मिन्स तथा तम् । 'क्रूरे नृशंसनिस्त्रिंश—' इति हैमः । लोकहृदयेभ्य इतरजनचित्तेभ्योऽपि निर्घृणतरो निर्दयतरः सर्वः संव्यवहारो व्यवहृतिर्येषामेवंविधाः समस्ताः समग्राः पुरुषा यस्मिन्स तम् । अविशेषो विशेषवर्जित आचारो येषामेवंभूता बालयुवस्थविराः पाकतरुणज्यायांसो यस्मिन्स तम् । अव्यवस्थितोऽनिश्चितो गम्यागम्याङ्गनायाः सेव्यासेव्यस्त्रिय उपभोगो यस्मिन्स तम् । अपुण्यकर्मणामश्रेयसकृत्यानामेकमद्वितीयमापणं हट्टमहं पक्कणमपश्यमित्यन्वयस्तु पूर्वमुक्तः ।

नरकवासिनोऽपि दुर्गतिस्थायिनोऽप्युद्वेगकरमरतिकरं तं तादृशमुक्तस्वरूपं दृष्ट्वा निरीक्ष्य च समुत्पन्नघृणः संजातजुगुप्सोऽन्तरात्मनि चित्तेऽकरवमकल्पयम् । किं तदित्याह—**अपीति** । अपि नाम कोमलामन्त्रणे । सा चाण्डालदारिका म्लेच्छबालिका दूरत एव दविष्ठत एव मामालोक्योत्पन्नकरुणा संजातकारुण्या मोचयेन्मुक्तिं कुर्यात्? जातिसदृशं कुलतुल्यं नाचरिष्यति न करिष्यति । एवंविधानि मे मम पुण्यानि श्रेयांसि भविष्यन्ति । निमेषमप्यक्षिस्पन्दनमात्रमप्यत्र पदं स्थानं न कुर्यां न विदध्याम् । इत्येवंप्रकारेण कृता विहिताशंसा स्पृहा वाञ्छा येनैवंभूतमेव मां नीत्वा स चण्डालो दुर्दर्शनं आकारो वेषश्च यस्याः सा तस्यै दूरतः स्थितः प्रणम्य नमस्कृत्य स एष मया प्राप्त इति तस्यै चण्डालदारिकायै दर्शितवान्दृग्गोचरीकारितवान् । सा तु चण्डालदारिका प्रहृष्टतरं प्रमुदिततरं वदनं मुखं यस्याः सा, शोभनं शुभं कृतमिति तं भद्रमुखमभिधाय तत्करात्तत्पाणेस्तद्धस्तात्स्वकरयुगेनात्महस्तयुगेन स्वीयपाणिद्वयेनादाय गृहीत्वा माम् । आः पुत्रक सुत, त्वं प्राप्तोऽसि । अतोऽस्मात्स्थानादिति गम्यम् । सांप्रतं कापरमग्रे गम्यते गमनं क्रियते । ते तव सर्वं कामचारित्वं स्वेच्छाविहारित्वं व्यपनयामि दूरीकरोमि । इत्यभिदधानैवेति ब्रुवाणैव धावमानस्त्वरितगत्या गच्छमानो यश्चण्डालबालकस्तेनोपनीत आनीतेऽर्धमाश्यानं शुष्कं लोमशं लोमयुक्तं दुर्गन्धि विस्रगन्धि यद्गोचर्म तस्य वध्रिका नध्री तयावनद्धे बद्धे । 'पूतिगन्धिस्तु दुर्गन्धो विस्रं स्यादामगन्धि यत्' इत्यमरः । दृढं बद्धानि दारुमयानि काष्ठम-

---

**टिप्प०**—1 'नाचरेत्?' इत्येव पाठः, पूर्वप्रयुक्तेन लिङा समन्वयात् । सर्वत्र च आरम्भोपात्तेन अपिना सूचितः प्रश्नो वाक्यार्थः । 2 स्थूलबुद्धिष्टीकाकारः । अग्रे सेयं शापभ्रष्टा लक्ष्मीः संपत्स्यते । नास्या वैरूप्यं कवेरभिप्रेतम्, अत एव 'अनुद्धततरवेषायै (न उग्रतरः 'सौम्यः' वेषो यस्याः)' इति पाठः ।

---

**पाठा०**—१ व्यवहार. २ समस्तपुरुष एककारणम्. ३ नरकवासिनाम्. ४ अनुद्धततरवेषायै. ५ दूरस्थितः; दूरत एवावस्थितः. ६ युगलेन, ७ बहुलबालक. ८ अर्धश्यान.

दारुपञ्जरे समं महाश्वेतावलोकनमनोरथैराक्षिप्यार्गलितद्वारा[1] सा[2] मामवदत्—'यथात्र निर्वृतः[3] संप्रति तिष्ठ' इत्यभिधाय तूष्णीमस्थात् ।

अहं तु तथा संरुद्धश्चेतस्यकरवम्[4]—'महासंकटे[5] पतितोऽस्मि । यदि तावदावेदितात्मावस्थः शिरसा प्रणिपत्य मुक्तये विज्ञापयाम्येनां तदा य एव मे गुणो दोषतामापद्य बन्धायोपजातः स एव संवर्धितो भवति । साधु[6] जल्पतीत्येवाहमनया ग्राहितः । कास्या[7] मदीयया बन्धपीडया पीडा । नाहमस्यास्तनयो न भ्राता न बन्धुः । अथ मौनमालम्ब्य तिष्ठामि, तत्रापि[8] शाठ्यप्रकुपिता[9] कदाचिदतोऽप्यधिकामवस्थां[10] प्रापयति माम् । नृशंसतमा हि जातिरियम् । अथवा वरमितोऽप्यधिकमुपजातं[11] न पुनश्चाण्डालैः सह वागपि विमिश्रिता[12] । अपि च गृहीतमौनं निर्वेदात्कदाचिन्मुञ्चत्येव । वदंस्तु पुनर्न मोक्तव्य एवाहमनया । अपि च यद्दिव्यलोकभ्रंशः[13], यन्मर्त्यलोके जन्म, यत्तिर्यग्जातौ[14] पतनम्, यच्चाण्डालहस्तागमनम्, यच्चेदमेवंविधं पञ्जरबन्धदुःखम्, सर्व एवायमनियतेन्द्रियत्वस्यैव दोषः । तत्किमेकया[15] वाचा,

---

यानि पानभोजनपात्राणि यस्मिन्मनागीषदुद्घाटितमुन्मुद्रितं द्वारं यस्मिन्नेतादृशे दारुपञ्जरे काष्ठनिर्मितविहंगरक्षणे महाश्वेतावलोकनमनोरथैः महाश्वेतानिरीक्षणमनोरथैः सममाक्षिप्य निवेश्य स्थापयित्वार्गलितं द्वारं यया सा मामवददवोचत् । यथा अत्र स्थलेऽत्र स्थाने संप्रतीदानीमधुना निर्वृतः सुखी तिष्ठ । इत्यभिधायेत्युक्त्वा तूष्णीं जोषं मौनमस्थात्तस्थौ ।

अहं तु तथाप्रकारेण संरुद्धो निरुद्धश्चेतसि मनस्यन्तःकरणेऽकरवं व्यधाम् । महासंकटे महाकष्टे पतितोऽस्मि निक्षिप्तोऽस्मि । यदि तावदादावावेदिता निवेदिता कथिता आत्मनोऽवस्था दशा येनैवंभूतोऽहं शिरसा प्रणिपत्य मस्तकेन नमस्कृत्यैनां चण्डालदारिकां विज्ञापयामि विज्ञप्तिं करोमि तदा य एव मे मम गुणो वक्तृत्वलक्षणो दोषतां दूषणतामापद्य प्राप्य बन्धाय बन्धनहेतुरुपजात उत्पन्नः प्राप्तः स एव दोषतां दूषणत्वं प्राप्तो गुणः संवर्धितो वृद्धिं नीतो भवति । तदेव दर्शयति—**साध्विति** । साधु जल्पति शुभं वदतीत्येवं हेतोरनयाहं ग्राहितो ग्रहणं कारितः । अस्याश्चण्डालदारिकाया मदीयया बन्धपीडनया का पीडा । एतदेव विशेषतो दर्शयन्नाह—**नेति** । अहमस्यास्तनयः सुतो न, न भ्राता सहोदरः, न च बन्धुः स्वजनः । अथेति प्रकारान्तरे । यदि मौनमालम्ब्य तूष्णीं भूत्वा तिष्ठामि तत्रापि तत्कृतेऽपि शाठ्येन प्रकुपिता रोषिता सती अतोऽप्यधिकां विशेषाधिकामवस्थां दशां कदाचिन्मां प्रापयति नयति । हि यस्मात्कारणादियं नृशंसतमा क्रूरतमा जातिः । अथवेति पक्षान्तरे । इतोऽप्यस्मादप्यधिकमुपजातं वरं शुभम् । तत्रार्थे हेतुमाह—**न पुनरिति** । चाण्डालैः सह वागपि विमिश्रिता प्रत्युत्तरप्रदानेन संसक्तीकृता । मौनावस्थायां गुणं प्रदर्शयन्नाह—**अपि चेति** । कदाचिदिति संभावनायाम् । निर्वेदात्स्वावमानाद्गृहीतमौनं स्वीकृतावचनव्यापारं मां मुञ्चत्येव मोचनं विदधात्येव । वदंस्तु जल्पंस्त्वहमनया चण्डालदारिकया न मोक्तव्य एव न त्यजनीय एव । अपि चेति युक्त्यन्तरे । यद्दिव्यलोकाद्भ्रंशः पातः, यन्मर्त्यलोके मनुष्यलोके जन्मोत्पत्तिः, यत्तिर्यग्जातौ पक्षिजातौ पतनं पातः, यच्चाण्डालस्य श्वपचस्य हस्ते गमनं यानम्, यदेवंविधमेतादृशं पञ्जरबन्धदुःखम् । यत्तदोर्नित्याभिसंबन्धादाह—**सर्वेति** । स सर्वोऽयमनियतेन्द्रियत्वस्यैवानियन्त्रितेन्द्रियस्यैव दोषो दूषणम् । तत्किमेकया वाचा स्यात् । सर्वाण्येवेन्द्रियाणि

---

पाठा०—१ द्वारपिधाना. २ समवदत्; समावेदयत्. ३ संनिवृत्ता. ४ पञ्जरे संरुद्धः. ५ अहो संकटे. ६ संजल्पति. ७ कस्याः. ८ तत्रापि; तथापि. ९ प्रकोपिता. १० अतोऽभ्यधिककष्टतरम्. ११ उपनतम्. १२ मिश्रिता. १३ दिव्यलोकतो भ्रंशः. १४ तिर्यग्योनौ. १५ तत्किं मम.

'सर्वेन्द्रियाण्येव नियमयामि' इति निश्चित्य मौनग्रहणमकरवम्। आलप्यमानोऽप्यातर्ज्यमानोऽप्याहन्यमानोऽपि त्रुट्यमानोऽपि च बलान्न किंचिदप्यवदम्। केवलमुच्चैश्चीत्कारमेवामुञ्चम्। उपनीतेऽपि च पानाशने तं दिवसमनशनेनैवात्यवाहयम्।

अन्येद्युश्चातिक्रामत्यशनकाले मे दूयमाने हृदये च सा स्वपाणिनोपनीय नानाविधानि पक्वान्यपक्वानि च फलानि, सुरभि शीतलं च पानीयमप्रतिपन्नतदुपभोगं मामारोपितलोचना स्निह्यन्तीवावोचत्—'क्षुत्पिपासार्दितानां हि पशुपक्षिणां निर्विचारचित्तवृत्तीनामुपनतेष्वाहारेष्वनुपयोगो न संभवत्येव। तद्यद्येवंविधस्त्वं कोऽपि भोज्याभोज्यविवेककारी पूर्वजातिस्मरोऽस्मदीयमाहारं परिहरसि, तथापि तावद्भक्ष्याभक्ष्यविवेकरहितायां तिर्यग्जातौ वर्तमानस्य ते किं वाऽभक्ष्यं यन्न भक्षयसि? येन चोत्कृष्टतमां जातिं प्राप्यात्मनैवेदृशं कर्म कृतं येन तिर्यग्योनौ पतितः, स किमपरं विचारयसि? प्रथममेवात्मा न विवेके स्थापितः। अधुना स्वकर्मोपात्तजातिसदृशमाचरतस्ते नास्त्येव दोषः। अपि च येषामपि भक्ष्याभक्ष्यनियमोऽस्ति, तेषामप्यापत्काले प्राणानां संधारणमभक्ष्योपयोगेनापि तावद्विहितम्, किं पुनस्त्वा-

---

करणानि नियमयामि नियन्त्रयामीति निश्चित्येति निर्णयं कृत्वा मौनग्रहणमकरवम्। आलप्यमानोऽपि संभाष्यमाणोऽप्यातर्ज्यमानोऽपि तर्जनां क्रियमाणोऽप्याहन्यमानोऽपि ताड्यमानोऽपि बलाद्धठात्त्रुट्यमानोऽपि छिद्यमानोऽपि च न किंचिदप्यहमवदमब्रुवम्। केवलमुच्चैस्तारस्वरं चीत्कारं पूत्कृतिविशेषममुञ्चम्। उपनीतेऽपि चानीतेऽपि च पानाशने जलप्राशने तं दिवसमशेषं समग्रमनशनेनैवाभोजनेनैवात्यवाहयं व्यतिक्रामम्।

**अन्येद्युश्चेति।** अन्यस्मिन्नहन्यशनकाले भोजनकालेऽतिक्रामति सति, मे मम हृदये चित्ते दूयमाने पीड्यमाने सति च, सा चण्डालदारिका स्वपाणिना निजहस्तेनोपनीयानीय नानाविधान्यनेकप्रकाराणि पक्वानि परिणतान्यपक्वान्यपरिणतानि च फलानि सस्यानि सुरभि सुगन्धं शीतलं शिशिरं च पानीयं जलं चाप्रतिपन्नोऽस्वीकृतस्तेषां फलजलानामुपभोगो ग्रहणं येन स तथैवंभूतं मामारोपितलोचना संस्थापितनयना स्निह्यन्तीव स्नेहं कुर्वन्तीवावोचदब्रवीत्। किं तदित्याह—**क्षुदिति।** क्षुत्पिपासाभ्यामर्दितानां पीडितानाम्। हीति निश्चितम्। पशुपक्षिणां निर्गतो विचारो वितर्को यस्या एवंविधा चित्तवृत्तिर्येषां ते तथा तेषामुपनतेष्वानीतेष्वाहारेष्वनुपयोगोऽनाभोगो न संभवत्येव नास्त्येव। तद्यदि त्वं भवानेवंविध एतादृशः कोऽप्यनिर्वचनीयस्वरूपो भोज्याभोज्ययोर्भक्ष्याभक्ष्ययोर्विवेकः पृथगात्मता तं करोतीत्येवंशीलः पूर्वजातिस्मरोऽस्मदीयमास्माकीनमाहारं भोज्यं परिहरसि त्यजसि,तथापि तथात्वेऽपि तावद्भक्ष्याभक्ष्याविवेकरहितायां भोज्याभोज्यविवेचनवर्जितायां तिर्यग्जातौ वर्तमानस्य स्थितवतस्ते तवाभक्ष्यमभोज्यं किं किमिव, यद्यस्मात्कारणान्न भक्षयसि नात्सि? येन च कारणेनोत्कृष्टतमां प्रकृष्टतरामुत्कृष्टतरां जातिं प्राप्यासाद्यात्मनैवेदृशं कर्म कृतं येन कर्मणा तिर्यग्योनौ पतितः, स त्वमपरमन्यत्किं विचारयसि किं विमर्शयसि? प्रथममेवादावेवात्मा न विवेके तत्त्वातत्त्वविचारे स्थापितः। अधुना सांप्रतं स्वकर्मणोपात्ता प्राप्ता या जातिस्तस्याः सदृशमनुकूलमाचरतः कुर्वतस्ते तव नास्त्येव दोषः। अपि चेति युक्त्यन्तरे। येषामपि पुरुषाणां भक्ष्याभक्ष्ययोर्भोज्याभोज्ययोर्नियमो विरतिरस्ति, तेषामपि जनानामापत्काले विपत्समये प्राणानां संधारणं रक्षणमभोज्योपयोगेनाप्यभक्ष्यग्रहणेनापि तावद्विहितं तदा त्वादृशस्य भवत्सदृशस्य किं

---

**टिप्प०**—1 त्रुट्यतिरकर्मकः, अत एव 'तुद्यमानः' (पीड्यमानः) इत्येव पाठः। 2 पानं च अशनं च पानाशनम् (समाहारः) तस्मिन्। 3 'आलोहितलोचना' इति पाठः।

---

**पाठा०**—१ अपरेद्युश्च. २ दूयमानहृदयेव. ३ उपयोगम्. ४ आरोपित; आरोधित. ५ अर्चितानाम्. ६ निर्विकार. ७ परिहासि. ८ त्वम्. ९ विवेकेन. १० येषां च.

दृशस्य । न चेदृशं किंचिदप्याहाराय मयोपनीतं यादृशेन चाण्डालाशनशङ्का समुत्पद्यते । फलानि तु ततोऽपि प्रतिगृह्यन्त एव । पानीयमपि चाण्डालभाण्डादपि भुवि पतितं पवित्रमेवेत्येवं जनः कथयति, तत्किमर्थमात्मानं क्षुधा पिपासया वा पातयसि ? यन्न भक्षयस्यमूनि मुनिजनोचितानि वनफलानि, न पिबसि वा पानीयम्' इति । अहं तु तेन तस्याश्चाण्डालजात्यनुचितेन वचसा विवेकेन च विस्मितान्तरात्मा तथेति प्रतिपद्य, शापनिघ्नो घृणां परित्यज्य जीविततृष्णया क्षुत्पिपासोपशमायाऽशनक्रियामङ्गीकृतवानस्मि, मौनं तु पुनर्नात्याक्षम् ।

एवमतिक्रामति च काले क्रमेण तरुणतामापन्ने मय्येकदा प्रभातायां च यामिन्यामुन्मीलितलोचनोऽद्राक्षमस्मिन्कनकपञ्जरे स्थितमात्मानम्, चाण्डालदारिकामीदृशीं यादृशी देवेनापि दृष्टैव । सकलमेव तत्पक्कणममरपुरसदृशमालोक्य चापगतचाण्डालवसतिसंवेगो विस्मितान्तरात्मा किमेतदिति कुतूहलात्प्रष्टुकामो यावन्न परित्यजाम्येव मौनम्, तावदेषा मामादाय देवपादमूलमायाता । तत्केयम् ? किमर्थमनया चाण्डालताऽऽत्मनः ख्यापिता ? किमर्थं वाऽहं बद्धः ? बद्धा वा किमर्थमिहानीत इत्यत्र वस्तुन्यहमपि देव इवानपगतकुतूहल एव' इति ।

---

पुनर्भण्यते । ईदृशं किंचिदपि ते तवाहाराय भक्षणाय मया नोपनीतं नानीतम्, यादृशेन चाण्डालस्याशनशङ्का श्वपचभक्ष्यारेका समुत्पद्यते संजायते । फलानि तु ततो गृह्यन्त एवादीयन्त एव । पानीयमपि जलमपि चाण्डालभाण्डादपि श्वपचपात्रादपि भुवि पतितं भूक्षिप्तं पवित्रं पावनमेवेत्येवं जनः कथयति वक्ति । तदिति हेत्वर्थे । किमर्थं किंप्रयोजनं क्षुधा बुभुक्षया पिपासयोदन्यया वात्मानं स्वं पातयस्यात्मपातं करोषि । अमूनि मुनिजनोचितानि तापसयोग्यानि वनफलानि न भक्षयसि नात्सि । पानीयं जलं वा न पिबसि नास्वादयसि । अहं तु वैशम्पायनस्तस्याश्चाण्डालजातेरनुचितेनायोग्येन तेन पूर्वोक्तेन वचसा वाक्येन विवेकेन च विस्मितान्तरात्मा कौतुकापन्नचेतस्कः । तथेति यद्भवत्या उक्तं तत्तथेति प्रतिपद्याङ्गीकृत्याङ्गीकारं कृत्वा शापनिघ्नः शापायत्तो घृणां जुगुप्सां परित्यज्य विहाय त्यक्त्वा जीविततृष्णया प्राणितवाञ्छया क्षुत्पिपासोपशमाय क्षुत्तृषोपशमार्थमशनक्रियां भक्षणक्रियामङ्गीकृतवानस्मि । मौनं तूष्णीं पुनर्नात्याक्षं नामुचम् ।

एवमतिक्रामति च गच्छति च काले क्रमेण परिपाट्या तरुणतां यूनतामापन्ने प्राप्ते मय्येकदा प्रभातायां विभातायां यामिन्यां रजन्यामुन्मीलितलोचनो विकसितनयनोऽहमस्मिन्कनकपञ्जरे स्थितमात्मानमद्राक्षं व्यलोकयम् । चाण्डालदारिकामीदृशीं यादृशी देवेनापि भवता दृष्टैवावलोकितैव निरीक्षितैव । सकलमेव समग्रमेव तत्पक्कणममरपुरसदृशं देवनगरतुल्यमालोक्य निरीक्ष्य चापगतो दूरीभूतश्चाण्डालेषु वसतिर्निवासस्तस्याः संवेगः संभ्रमो यस्य स विस्मितो विस्मयं प्राप्तोऽन्तरात्मा मनो यस्य सः । किमेतद्दृश्यमानमिति कुतूहलात्प्रष्टुकामः प्रश्नं कर्तुमना यावन्न परित्यजाम्येव न दूरीकरोम्येव मौनम्, तावदेषा मामादाय गृहीत्वा देवस्य पादमूलमायाता । तत्तस्मात्कारणात्केयम् । किमर्थं किंप्रयोजनमनयात्मनः स्वस्य चाण्डालता ख्यापिता कथितोक्ता । किमर्थं वाहं बद्धः संदानितः । बद्धा वा बन्धनं कृत्वा वा किमर्थमिहानीत इत्यत्र वस्तुन्यहमपि देव इवानपगतं कुतूहलं यस्मात्स एवेति ।

**टिप्प०—1 'आयासयसि ( क्लेशयसि )' इति पाठः सम्यक् । 2 युवतामापन्ने, इत्युचितम् ।**

**पाठा०—**१ अपरिहाराय. २ चण्डालाशनेन शङ्का; चण्डालाशनाशङ्का. ३ आयासयसि. ४ स्थितिमापन्नमात्मानम्. ५ सापि चाण्डालदारिका यादृशी तादृशी देवेनापि दृष्टैव; चाण्डालदारिकामीदृशी सापि चाण्डालकन्यका यादृशी देवेन दृष्टैव. ६ कौतुक.

राजा तु तच्छ्रुत्वा समुपजाताभ्यधिककुतूहलस्तदाह्वानाय पुरःस्थितां प्रतीहारी[1]मादिदेश । [2]नचिरादेव तयोपदिश्यमानमार्गा प्रविश्य सा, पुरस्तादूर्ध्वस्थितैव राजान[3]मभिभवन्ती धा[4]म्ना, प्रा[5]गल्भ्येन बभाषे—'भुवनभूषण, रोहिणीपते, ताररमण, कादम्बरीलोचनानन्द, चन्द्र, सर्वस्त्वयाऽस्य दुर्मतेरात्मनश्च पूर्वजन्मवृत्तान्तः श्रुत एव । अत्रापि जन्मनि यथायं निषिद्धोऽपि पित्रा, कामरागान्धः पितुराज्ञामुल्लङ्घ्य वधूसमीपं प्रस्थितस्त[6]थाप्यनेन स्वयमेव कथितम् । तदहमस्य दुरात्मनो जननी श्रीस्तथा प्रस्थितमेनं दिव्येन चक्षुषा दृष्ट्वाऽस्य पित्राहं समादिष्टास्मि—'सर्व एव ह्य[7]विनयप्रवृत्तोऽनुतापाद्विना न निवर्तते । तदयं ते तनयः कदाचिदस्या अपि तिर्यग्जातेरधस्तान्निपतति । तद्यावदिदं कर्म न [8]परिसमाप्यते तावदेनं मर्त्यलोक एव बद्ध्वा धारय । यथा चानुतापोऽस्य भवति तथा प्रतिविधेयमस्य' इति । तदस्य विनयायेदं विनिर्मि[9]तं म[10]या । सर्वमधुना तत्कर्म परिसमाप्तम् । शापावसानसमयो वर्तते । शापावसानेन च युवयोः सममेव सुखेन भवितव्यमिति त्वत्समीपमानीतो मयायम् । अत्रापि यच्चाण्डालजातिः ख्यापिता तल्लोकसंपर्कपरिहाराय । तदनुभवतां संप्रति द्वावपि सममेव

---

राजा तु नृपोऽपि तच्छ्रुत्वा समुपजातमभ्यधिकं कुतूहलमाश्चर्यं यस्य स तस्याश्चाण्डालदारिकाया आह्वानायामन्त्रणं कृत्वाहूतिकृते पुरःस्थितामग्रस्थितां प्रतीहारीं द्वारपालिकामादिदेशाज्ञां दत्तवान् । नचिरादेव स्तोककालेनैव तयोपदिश्यमानमार्गा कथ्यमानपथा सा प्रविश्य प्रवेशं कृत्वा पुरस्तादूर्ध्वस्थितैव धाम्ना तेजसा राजानमभिभवन्ती तिरस्कुर्वन्ती प्रागल्भ्येन धार्ष्ट्येन बभाषेऽवोचत् । किं तदित्याह—**भुवनेति** । हे भुवनभूषण हे जगद्विभूषण हे विष्टपशृङ्गार, हे रोहिणीपते हे रोहिणीनाथ हे चन्द्र, हे ताररमण हे तारकाविनोदक, हे कादम्बरीलोचनानन्द हे गन्धर्वकन्यकानयनप्रमोदक, हे रजनिकर हे चन्द्र कुमुदबान्धव, सर्वः समग्रस्त्वयास्य दुर्मतेः पुण्डरीकस्यात्मनः स्वस्य च पूर्वजन्मवृत्तान्तः पूर्वभवोदन्तः श्रुत एवाकर्णित एव । अत्रापि जन्मनि यथायं पित्रा जनकेन निषिद्धोऽपि प्रतिषिद्धोऽपि कामरागान्धः कन्दर्परागान्धः पितुराज्ञां जनकादेशमुल्लङ्घ्यातिक्रम्य वधूसमीपं पत्नीपार्श्वं युवतीनिकटं प्रस्थितश्चलितः, त[1]थाप्यनेन स्वयमेव कथितमात्मनैव निवेदितम् । तत्तस्मात्कारणादस्य दुरात्मनः पुण्डरीकस्य जननी माता दिव्येन चक्षुषा ज्ञानदृशा तथा प्रस्थितं तथा चलितमेनं वैशम्पायनं दृष्ट्वा विलोक्यास्य पुण्डरीकस्य पित्रा श्वेतकेतुना समादिष्टा दत्ताज्ञाहं श्रीरस्मि । सर्व एव हि जनोऽविनयेन प्रवृत्तोऽनुतापात्पश्चात्तापाद्विना न निवर्तते न निवृत्तो भवति । तत्तस्माद्धेतोरयं ते तव तनयोऽसौ भवदीयसुतः कदाचिदस्या अपि तिर्यग्जातेर्विहंगमजातेरधस्तान्निपतत्यधः प्रयाति । तद्यावदिदं कर्म न परिसमाप्यते न परिपूर्णीभवति, न संपूर्णीभवति, तावदेनं वैशम्पायनं मर्त्यलोक एव बद्ध्वा बन्धनं कृत्वा धारयावस्थापय । यथा चानुतापः पश्चात्तापोऽस्य भवति, तथा प्रतिविधेयं तथा करणीयमिति । तदस्य वैशम्पायनस्य विनयाय मर्यादायै [2]इदं मया सर्वं विनिर्मितं विहितम् । अधुना सर्वं तत्कर्म तत्कृत्यं परिसमाप्तं परिपूर्णीकृतम् । शापस्यावसानसमयः प्रान्तकालो वर्तते । शापावसाने[3]न च युवयोर्भवतोः सममेव सुखेन सातेन भवितव्यमित्यतस्त्वत्समीपं त्वदभ्यर्णं मयायमानीतः प्रापितः । अत्रापि यच्चाण्डालजातिः ख्यापिता कथितोक्ता तल्लोकानां जनानां संपर्कः संबन्धस्तस्य परिहाराय दूरीकरणाय । तत्संप्रतीदानीं द्वावपि शूद्रकवैशम्पाय-

---

टिप्प०—1 'तदप्यनेन' इत्येव पाठः । 2 पञ्जरबन्धनादिकम् । 3 अविचारटीकाकृतः । 'शापावसाने' इत्येव पाठः ।

---

पाठा०—१ अदिशत्. २ अचिरात्. ३ अभिभवन्तीव. ४ स्वधाम्ना. ५ प्रागल्भ्येन च. ६ तदपि. ७ स्वाविनयन. ८ समाप्यते. ९ च निर्मितम्. १० मया सर्वं कृतम्; अधुना तु तत्कर्म समाप्तम्.

जन्मजराव्याधिमरणादिदुःखबहुले[1] तनू परित्यज्य यथेष्टजनसमागमसुखम्' इत्यभिदधानैव सा झटिति[2] रणद्भूषणारवबधिरितान्तरिक्षमुत्फुल्ललोकलोचनोद्वीक्षिता क्षितेर्गगनमुदपतत् ।

अथ राज्ञस्तद्वचनमाकर्ण्य संस्मृतजन्मान्तरस्य 'सखे वैशम्पायनाख्यपुण्डरीक, दिष्ट्या तुल्यकालक्षयमेवावयोः शापावसानं संजातम्' इत्यभिदधत[3] एवाकर्णाकृष्टकार्मुको[4] मकरकेतुरग्रतः परमास्त्रं कादम्बरीं कृत्वा जीवितापहरणाय प्रतिरोधक इव निरुद्धसर्वांशोऽन्तरा[5] पदं चकार । तत्पदाक्रान्तिनिर्वासितमिव कादम्बरीशरणमुपजगामान्तःकरणम्[6] । तन्मार्गणाभिहतिभीता इव देहमुत्सृज्य निर्जग्मुरजडाः श्वासमरुतः । तद्बाणपक्षवाताहतमिवाकम्पत तरलं शरीरम् । तच्छरशल्य[7]भरालसोत्कण्टकिनी[8] तनुरजायत । तद्विशिखरजोरूषितमिव नयन-

---

नावपि सममेव समकालमेव जन्मोत्पत्तिर्जरा विस्रसा व्याधिरामयो मरणं मृत्युरेवंभूतं दुःखं तेन बहुले[1] ईदृशेऽस्मिँल्लोके तनू शरीरे परित्यज्यानुभवतां यथेष्टजनानां समागमो मेलापकस्तस्मात्तस्य वा सुखं सातम् । इत्यभिदधानेतिब्रुवाणैव सा चाण्डालदारिका झटिति शीघ्रं रणन्ति यानि भूषणान्याभरणानि तेषां रवः शब्दस्तेन बधिरीकृतमन्तरिक्षमाकाशं यथा स्यात्तथोत्फुल्लानि विकसितानि यानि लोकलोचनानि जननयनानि तैरुत्प्राबल्येन वीक्षितावलोकिता निरीक्षिता क्षितेः पृथिव्याः सकाशाद्गगनमाकाशमुदपतदुत्पतिता बभूव ।

**अथेति** । तदनन्तरं तद्वचनमाकर्ण्य श्रुत्वा संस्मृतं स्मृतिगोचरीभूतं जन्मान्तरं भवान्तरं यस्य स तथा तस्य । हे सखे वयस्य हे भ्रातः, वैशम्पायन इत्याख्ययेतिनाम्ना पुण्डरीक, दिष्ट्या भाग्येन पुण्येनावयोः पुण्डरीकचन्द्रमसोः तुल्यकालक्षयमेव समकालमेव युगपदेवैककालमेव शापावसानं संजातं शापमुक्तिः संजातेत्यभिदधत एवेति कथयत एव राज्ञः शूद्रकस्य मकरकेतुः कामः कन्दर्पोऽन्तरा मध्ये । अर्थाद्धृदयस्येति बोध्यम् । पदं निवासं चकार निर्ममे । कीदृशो मकरकेतुः । आकर्णं कर्णं यावदाकृष्टं कर्षितं कार्मुकं धनुर्येन सोऽग्रतः पुरः परमास्त्रमत्युत्कृष्टशस्त्रं कादम्बरीं कृत्वा विधाय शापावसानत्वाद्यजीवितस्यापहरणं ग्रहणं तस्मै प्रतिरोधक इव प्रतिबन्धक इव निरुद्धा आवृताः सर्वे अंशा अवयवा येन सः । अथवा संरुद्धा आशा दश दिशो येनेत्यर्थः । मकरकेतुरन्तः पदं चकारेत्यन्वयस्तु प्रागेवोक्तः । तस्य कामस्य पदं स्थानं तेनाक्रान्तिराक्रमणं तेन निर्वासितमिव बहिःकृतमिवान्तःकरणं मनः कादम्बर्याः शरणं त्राणमुपजगामोपागमत् । 'शरणं गृहरक्षित्रोः' इत्यमरः । तस्य कामस्य मार्गणास्तेषामभिहतिरुपघातस्तस्या भीताः त्रस्ता इव देहं शरीरमुत्सृज्य त्यक्त्वाऽजडाः सचेतनाः श्वासमरुतः श्वसितवायवो निर्जग्मुर्निर्गतवन्तः । तस्य कन्दर्पस्य बाणाः शरास्तेषां पक्षवातास्तैराहतमिव ताडितमिव तरलं चञ्चलं शरीरमकम्पतावेपत । तस्य शरस्य बाणस्य शल्यं तस्य भरस्तेनालसेव मन्थरेवोत्कण्टकिनी रोमाञ्चिनी तनुरजायताभूत् । तस्य कामस्य विशिखा बाणास्तेषां रजो धूलिस्तेन रूषितमिव रुक्षमिव नयनयुगलं

---

टिप्प०—1 हन्त घोरमज्ञानम् । जन्म-जरादिदुःखं बहुलम् ( अधिकम् ) ययोः ईदृशौ नरतनू परित्यज्य, इत्यर्थः । 2 प्रतिरोधकः मार्गमवरुध्य स्थितो दस्युरिव निरुद्धाः सर्वा आशाः दिशो जीवनप्रत्याशाश्च येन ईदृशो मकरकेतुरित्युभयपक्षेऽर्थः । टीका तु भ्रमस्य । 3 'कादम्बरीं शरणमुपजगाम करणम्' इत्येव पाठः । करणं शरीरम् इन्द्रियं वा, कादम्बरीं शरणम् ( रक्षकत्वेन ) उपजगाम इत्यर्थः । 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इत्यमरः । 4 शल्याऽऽघाते सति कस्यचिदालस्यं भवति ? अत एव—'तच्छरशल्यनिकरकीलितेवोत्कण्टकिनी तनुरजायत' इत्येव पाठः । तस्य शराणां शल्यनिकरैः ( फलकनिचयैः ) कीलितेव ( संजातकीलकेव, शङ्कुनिचितेव ) उत्कण्टकिनी रोमाञ्चवतीत्यर्थः ।

---

पाठा०—१ बहुलां तनुम्. २ झगिति; झणिति. ३ रोधत. ४ आकर्णयतस्तदैवाकृष्टकार्मुकः. ५ अन्तः पदम्. ६ करणम्. ७ तच्छल्य. ८ भरालसेवोत्कण्टकिनी; निकरकीलितेवोत्कण्टकिनी.

युगलमश्रुजलमुत्ससर्ज । [१]पाण्डुतां च [२]वदनलावण्यमयासीत् । तद्धनुर्गुणध्वानाकर्णनोद्वेजित-मिव हृदयवेदनाकूणितत्रिभागं नयनयुगलमभवत् । अन्तर्ज्वलिष्यतो मदनदहनस्य धूमोपह-तमिव वेपमानमधरकिसलयं शोषमगात् । [३]तत्तापविरसमाननान्निष्पीडितं सरागं हृदयमिव ताम्बूलमपतत् । आर्द्रस्य [४]दारुण इव दह्यमानस्याङ्गेभ्यो निरगमत्स्वेदः । मदनशरकीलितानीव तावतैव क्षणेनाङ्गानि परवशान्यजायन्त । तथा च कादम्बरीं पुरस्कृत्य [५]कुसुमधन्वनायास्यमा-नस्य तदवयवरूपशोभाविनिर्जितानि तापापहरणक्षमाण्यपि [६]तस्याकिंचित्कराण्यभवन् । तथा-हि । कमलकिसलयानि [७]पाणिपादेन, कुवलयदलस्रजो दृष्ट्या, मणिदर्पणाः कपोलेन, मृणा-लानि बाहुलतिकया, शशाङ्करश्मयो नखमयूखैः, घनसारधूलिः स्मितप्रभया, मुक्तादामानि दशनकिरणैः, अमृतकरबिम्बं मुखेन, ज्योत्स्ना लावण्येन, [८]मणिवेदिकाकुट्टिमानि नितम्बेन ।

---

नेत्रयुग्ममश्रुजलं नेत्रपानीयमुत्ससर्जोत्प्राबल्येन तत्याज । वदनलावण्यं च पाण्डुतामीषच्छुक्लतां चायासीदगात् । तस्य कामस्य धनुश्चापं तस्य गुणः शिञ्जिनी तस्य ध्वानः शब्दस्तस्याकर्णनं श्रवणं तेनोद्वेजितमिवोद्वेगं प्रापितमिव हृदयवेदनया कूणितं ईषद्वक्रीकृतस्त्रिभागस्तृतीयांशो यस्य तदेवंभूतं नयनयुगलं नेत्रयुग्ममभवद्बभूव । अन्तर्मध्ये ज्वलिष्यतः प्रज्वलिष्यतो मदनदहनस्य कामवह्नेर्धूमोपहतमिव दहनकेतनोपहतमिव वेपमानं कम्पमानमधरकिसलयं दन्तच्छदपल्लवं शोषमगाज्जगाम । तस्य कामस्य तापस्तेन विरसं[1] मानं विरसतां भजमानमतिनिष्पीडितं सरागं हृदयमिव ताम्बूलमपतदस्रंसत । आर्द्रस्योन्नस्य दारुण इव काष्ठस्येव दह्यमानस्य ज्वलमानस्याङ्गेभ्यो हस्तपादादिभ्यः स्वेदो घर्मजलं निरगमन्निरगात् । मदनशरेण कामबाणेन कीलितानीव यन्त्रितानीव तावतैव क्षणेन स्वल्पकालेनाङ्गानि परायत्तान्यजायन्त समपद्यन्त । **तथा चेति** । कादम्बरीं पुरस्कृत्याग्रे कृत्वा कुसुमधन्वना कामेनायास्यमानस्य पीड्यमानस्य । तस्या[2]वयवा हस्तपादादयस्तेषां रूपं सौन्दर्यं तस्य शोभा श्रीस्तया विनिर्जितान्यभिभूतान्यत एव तापस्य तप्तेरपहरणे दूरीकरणे क्षमाण्यपि समर्थान्यपि निर्जितत्वात्तस्याकिंचित्कराणि निष्प्रयोजनान्यभवन्नासन् । तदेव दर्शयति—**तथेति** । कमलकिसलयानि पद्मनवपत्राणि । पाणी च पादौ च पाणिपादम् । 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकवद्भावः । तेन निर्जितानीति सर्वत्र संबन्धः । कुवलयानामुत्पलानां दलानि पत्राणि तेषां स्रजो माला दृष्ट्या दृशा । मणिदर्पणा रत्नादर्शाः कपोलेन गल्लात्परप्रदेशेन । मृणालानि तन्तुलानि बाहुलतिकया भुजवल्ल्या । शशाङ्करश्मयश्चन्द्रकिरणा नखमयूखैः पुनर्भवरश्मिभिः । घनसारधूलिः कर्पूररजः स्मितप्रभया हास्यकान्त्या । मुक्तादामानि मुक्ताकलापा दशनकिरणैर्दन्तरश्मिभिः । अमृतकरबिम्बं चन्द्रमण्डलं मुखेनास्येन । ज्योत्स्ना चन्द्रिका लावण्येन कान्तिविशेषेण । 'मुक्ताफलस्य छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इत्येके । 'सद्गमनसन्निरीक्षणसजल्पनमिति वदन्ति लाव-

---

टिप्प०—1 तापेन विरसं शुष्कं निष्पीडितं व्यथितं चर्वितं च सरागं सलोहितवर्णं सानुरागं च हृदयमिव ताम्बूलम् आननात् अपतत् । इत्यर्थः । टीका तु प्रलापपरा । 2 टीकाकारः स्वयं भ्रान्तो भ्रामयत्यन्यान् । अयमर्थः—कुसुमधन्वना आयास्यमानस्य तस्य ( शूद्रकरूपधारिणश्चन्द्रापीडस्य ), तदवयवशोभाविनिर्जितानि ( तस्याः कादम्बर्याः अवयवानां रूपशोभया विनिर्जितानि ) तापापहरणक्षमाणि ( कमल-मृणालादीनि वस्तूनि ) अकिञ्चित्कराणि व्यर्थान्यभवन् । निर्जितो हि पदार्थो निष्प्रयोजनो भवति । तथा च निःसारैरेभिस्तापप्रतिक्रियारहितः सोयं दशमीं दशामगमदित्यर्थः । केन किं निर्जितमित्याह-पाणिपादेन कमलकिसलयानि । इत्यादि ।

---

पाठ०—१ आपाण्डुताम्. २ यौवनलावण्यम्. ३ तत्तापविरसमानमतिनिःपीडितम्; तत्तापविरसमाननिःपीडितम्. ४ दारुणो द्रव इव. ५ कुसुमधन्वनः. ६ अस्य. ७ पाणिना पादेन. ८ मणिकुट्टिमवेदिका.

एवं च विहतसर्वबाह्यप्रतिक्रियस्य हृदयेऽप्यसुखायमानसकलान्यविनोदस्य तामेवाभिध्यायतस्तामेवोत्प्रेक्ष[1]माणस्य तामेवा[2]भिलषतस्तामेव पश्यत[3]स्तामेवालपतस्तामेवालिङ्गतस्तया सह तिष्ठतस्तां प्रकोपयतस्तामनुनयतस्तस्याः पादयोः पततस्तया सह केलिं कुर्वतस्तां रममाणस्य मुक्तसर्वान्यक्रियस्य दिवाप्यनुन्मीलितलोचनस्य रात्रावप्यनुपजातनिद्रस्य सुहृज्जनमप्य[4]संभाषयतः का[5]र्योपगतानप्यजानतो गुरुर्ज[6]नमप्यनमस्यतो धर्मक्रियामप्यकुर्वाणस्य सुखादप्यनर्थिनो दुःखादप्यनुद्विजमानस्य मरणादप्यबिभ्यतो गुरुभ्योऽप्यपेतलज्जस्यात्मन्यपि विग[7]लितस्नेहस्य किं बहुना कादम्बरीसमागमेऽप्यनुद्यमस्य केवलमस्य मुहुर्मुहुर्मूर्च्छोप[9]गमच्छलेन जीवितोत्सर्गयोग्यां[10]मिव कुर्वतो विहस्तेनापि प्रतिपन्नविविधोपकरणेन, गलितनय[11]नपयसाप्युच्छु-

---

ण्यम्' इत्यन्ये । मणिवेदिकायाः कुट्टिमानि बद्धभूमयो नितम्बेनारोहेण । **एवं चेति** । एवममुना प्रकारेण विहता निराकृता सर्वबाह्या बहिर्भूता प्रतिक्रिया प्रतीकारो यस्य स तस्य । पुनः कीदृशस्य । राज्ञो हृदयेऽपि चित्तेऽप्यसुखायमानो दुःखवदाचरमाणः सकलः समग्रोऽन्यविनोदोऽन्यक्रीडा यस्य स तस्य । तां कादम्बरीमेवाभिध्यायतश्चिन्तयतः । तामेवोत्प्रेक्षमाणस्योत्प्रेक्षाविषयीक्रियमाणस्योत्प्राबल्येन विलोकमानस्य । तामेवाभिलषतोऽभिवाञ्छतः स्पृहयतः । तामेव पश्यतो विलोकयतः । तामेवालपतः संभाषणं कुर्वतस्तामेवालापं कुर्वतः । तामेवालिङ्गतः परिष्वजत आलिङ्गनं कुर्वतः । तया गन्धर्वराजपुत्र्या सह तिष्ठतः स्थितिं कुर्वतः । तां प्रकोपयतो रोषयतः । तामनुनयतः प्रसन्नीकुर्वतः । तस्या गन्धर्वपुत्र्याः पादयोः क्रमयोश्चरणयोः पततः पतनं विदधतः । तया सह केलिं रतिक्रीडां कामकेलिं प्रेमक्रीडां कुर्वतो विदधतः । तां रममाणस्य क्रीडां कुर्वतः । मुक्तास्त्यक्तास्त्याजिताः सर्वाः समग्रा अन्यक्रिया इतरव्यापारा येन स तस्य मुक्तसर्वान्यक्रियस्य । दिवापि वासरेऽपि दिवसेऽप्यनुन्मीलिते मुद्रिते लोचने यस्य स तथा तस्य । रात्रावपि निशायामपि यामिन्यामप्यनुपजाताऽप्राप्ता नागता निद्रा प्रमीला यस्य स तथा तस्य । सुहृज्जनमपि मित्रजनमपि वल्लभजनमप्यसंभाषयतोऽनालापयतः । कार्यार्थमुपगतं प्राप्तमप्यजानतोऽज्ञातवतः । गुरुजनमपि पूज्यजनमपि वृद्धजनमप्यनमस्यतो नमस्कारमकुर्वतः । धर्मक्रियामपि सुकृतकृत्यान्यपि पुण्यकृत्यान्यप्यकुर्वाणस्याविदधानस्य । सुखादपि सौख्यादप्यनर्थिनोऽनभिलाषुकस्य । दुःखादपि कृच्छ्रादपि कष्टादप्यनुद्विजमानस्यानुद्वेगं प्राप्यमाणस्य । मरणादपि मृत्योरप्यबिभ्यतो भयमकुर्वतः । गुरुभ्योऽपि धर्मोपदेशकेभ्योऽप्यपेतलज्जस्य विगतत्रपस्य त्यक्तलज्जस्य । आत्मन्यपि स्वस्मिन्नपि विगलितो गतः स्नेहो हार्दं यस्य स तथा तस्य । किं बहुना कथनेन । कादम्बरीसमागमेऽप्यनुद्यमस्यानुद्यतस्य गतोद्यमस्य केवलमस्य राज्ञो मुहुर्मुहुर्वारंवारं मूर्च्छाया मोहस्योपगमच्छलेनागमनमिषेण जीवितस्योत्सर्गस्त्यागस्तस्य योग्यामिव कुर्वतो विहस्तेनापि व्याकुलेनापि प्रतिपन्नमङ्गीकृतं विविधमुपकरणं तन्त्रं येन स तेन । अत्रापिशब्दो विरोधालंकृतिद्योतनार्थः । यो विहस्तो भवति स प्रतिपन्नोपकरणो न स्यादिति विरोधः । तत्परिहारस्तु विहस्तो व्याकुल इत्यर्थात् । 'विहस्तव्याकुलौ व्यग्रे' इति हैमः । गलितं स्रस्तं नयनपयो नेत्रजलं यस्यैवंभूतेना-

---

**टिप्प०**—1 ल्यब्लोपे पञ्चमी । सुखजनकं प्राप्यापि अनर्थिनः अर्थमभिलाषं न वहतः, इत्यर्थः । 2 जीवितोत्सर्गयोग्यां कां कुर्वतः ? किमिदमसंबद्धमालपसि रे ? अस्तु. 'मुहुर्मूर्च्छोपगमनच्छलेन जीवितोत्सर्गयोग्यामिव तनुं कुर्वतः' इति पाठः । अस्य बाह्यस्तापप्रतीकारो विहतोभवत्, तथा आन्तरिकश्चापि लज्जा-नमनादिको व्यापारो निवृत्तः । किं बहुना, कादम्बरीप्राह्युद्यमोपि विगतः । ततश्च शून्यात्मकस्यास्य तनुः त्यागयोग्या जातेत्यर्थः । अत एव विहस्तेत्यादिविशेषितेन आप्तपरिजनेन उपचर्यमाणस्यापि देहः काष्ठमयो जातः, यस्य हि कामानलो दाहहेतुर्बभूव, कथाशेषतां जगामेति सर्वस्याशयः ।

---

पाठा०—१ उत्प्रेक्ष्यमाणस्य. २ लिखतः. ३ तामेव लपतः; तामालपतः. ४ असंभाषितः. ५ कार्यापगतमपि. ६ गुरून्. ७ अस्नेहस्य. ८ एव. ९ उपगमन. १० इव तनुम्. ११ सलिलेन.

ष्कानने, मुषितवचनावकाशेनापि वैशम्पायनेक्रोशनपरेण, अनवरतमा चरणाद्विकीर्णचन्दनचर्चेन, चरणतलनिवेशितार्द्रारविन्दिनीदलेन, करार्पितकर्पूरक्षोददन्तुरतुषारखण्डेन, हृदयविनिहितहिमार्द्रहारदण्डेन, कपोलतलस्थापितस्फटिकमणिदर्पणेन, ललाटतटघटितचन्द्रमणिना, अंसदेशावस्थापितमृणालनालेन, कदलीदलव्यजनवाहिना, आनर्तिततालवृन्तेन, जलार्द्रानिलसंचारिणा, कुसुमतल्पकल्पनाकुलेन, धारागृहजलयन्त्रप्रवर्तनाहृतार्तिना, मणिकुट्टिमक्षालनाग्रहस्तेन च, सजलकिञ्जल्कजलजोपचारप्रकरसंभ्रान्तेन च शिशिरभूगृहाभ्यन्तरप्रत्यवेक्षणदक्षेण चोद्यानदीर्घिकातटलतागहनमण्डपसेकतापहारिणा च मलयजरसचन्द्रार्द्रजलचन्द्राश्रयावधानदानोद्यतेन चाप्तपरिजनेनोपचर्यमाणस्यापि काष्ठीभूतदेहस्य दाहक्षमो झटित्येवारुरोह परां कोटिं कामानलः। राज्ञ एव तुल्यावस्थस्य महाश्वेतोत्कण्ठया पुण्डरीकात्मनो वैशम्पायनस्य च।

---

ष्युच्छुष्कमाननं मुखं यस्य स तेन। मुषितो गृहीतो वचनस्यावकाशोऽवगाहः प्रवेशस्थलं यस्यैवंभूतेनाप्याक्रोशनं तत्र परेणासक्तेनानवरतं निरन्तरमा चरणाच्चरणौ मर्यादीकृत्य विकीर्णा विक्षिप्ता चन्दनचर्चा मलयजपूजा येन स तेन। चरणतले निवेशितानि स्थापितान्यार्द्राण्युन्नान्यरविन्दिनीनां दलानि कमलिनीनां पत्राणि येन स तथा तेन। करे हस्तेऽर्पितः प्रदत्तो वितरितः कर्पूरक्षोदेन घनसारचूर्णेन दन्तुरो विषमोन्नतस्तुषारखण्डो हिमशकलं यस्य स तथा तेन। हृदये वक्षसि विनिहितः स्थापितो हिमेनार्द्रो हारदण्डो येन स तथा तेन। कपोलतले स्थापितो विधृतः स्फटिकमणिदर्पणो येन स तथा तेन। ललाटतटेऽलिकतटे घटितः संघट्टितश्चन्द्रमणिश्चन्द्रकान्तो येन स तथा तेन। अंसदेशे स्कन्धप्रदेशेऽवस्थापितं न्यस्तं मृणालनालं बिसनालं येन स तथा तेन। कदलीदलानां रम्भापत्राणां व्यजनं वहतीत्येवंशीलेनानर्तितो भ्रमं नीतस्तालवृन्तो येन स तथा तेन। जलेनाम्भसार्द्रो योऽनिलो वायुस्तं संचारयति प्रवर्तयतीत्येवंशीलः स तथा तेन। कुसुमैः पुष्पैर्या तल्पकल्पना शय्याविरचना तेनाकुलेन व्याकुलेन। धारागृहस्य जलयन्त्राणां प्रवर्तनात्प्रक्षरणादा ईषद्धृता दूरीकृतार्तिर्यस्य स तेन। मणिकुट्टिमस्य क्षालना धावनं तत्राग्रहस्तो यस्य स तेन। 'आयस्तेन' इति पाठ आयस्तेन खिन्नेनेत्यर्थः। सजलानि जलसहितानि किञ्जल्कजलजानि केसरोपयुक्तकमलानि तेषामुपचारः प्रकार उपचरणं तेन संभ्रान्तेन मूढेन। शिशिरं शीतलं यद्भूगृहं भूमिस्थं सदनं तस्य अभ्यन्तरं मध्यं तस्य प्रत्यवेक्षणं गवेषणं तत्र दक्षेण चतुरेण। उद्यानस्य दीर्घिका वापी तस्यास्तटं तीरं तस्य लतागहनमण्डपो जनाश्रयस्तत्र यः सेकः सिञ्चनं तेन तापमपहरतीत्येवंशीलः स्वभावः स तथा तेन। मलयजरसश्चन्दनद्रवश्चन्द्रः कर्पूर आर्द्रं जलं चन्द्रस्य शशाङ्कस्याश्रय आश्रयणमेतैरवधानदानं समाधिदानं तत्रोद्यतेनोद्युक्तेन। 'अवधानसमाधानप्रणिधानानि तु समाधौ स्युः' इति हैमः। आप्तो विश्वस्तो यः परिजनः परिच्छदस्तेनोपचर्यमाणस्योपचारविषयीक्रियमाणस्यापि काष्ठीभूतदेहस्य दारुसादृश्यमापन्नशरीरस्य दाहे क्षमः समर्थः कामानलो मदनवह्निः क्षणेन परां कोटिं झटित्येव तत्कालमेवारुरोहारूढवान्। राज्ञ एव तुल्यावस्थस्य सदृशावस्थस्य महाश्वेताया उत्कण्ठयोत्कलिकया पुण्डरीकात्मनो वैशम्पायनस्य च। मदनानलः परां कोटिमारुरोहेत्यत्रापि संयोज्यम्। तृतीयान्तानि सर्वाण्याप्तपरिजनस्य विशेषणानि।

---

**टिप्प०—1 वैशम्पायनस्य आक्रोशस्तिरस्कारस्तत्र तत्परेण, शुकरूपेण तेनैवागत्य कथाकीर्तने कृते अस्येयं दशा जातेति। 2 धन्या बुद्धिः! मृतस्य तापदूरीकरणे का शक्तिः? धारागृहात् जलयन्त्रप्रवर्तनयापि आहृता ( समन्ततः प्रवर्तिता ) आर्तिर्येन, इत्यर्थः।**

---

पाठा०—१ दुःखित. २ क्रोशपरेण. ३ वितीर्ण. ४ विनिहितार्द्र. ५ स्फाटिकरफुटित; स्फाटिक. ६ मृणालेन. ७ सकुसुमतल्प. ८ आहत; आहित; अकृत. ९ आयस्तेन. १० सजलपङ्कजकिञ्जल्ककह्लारप्रकरप्रचारणसंभ्रान्तेन. ११ अन्धकारशिशिर. १२ संतापापहारिणा; संतापकारिणा. १३ मलयजरसचन्द्रार्द्रजलार्द्रचन्द्राश्रय; मलयजजलार्द्रचन्द्राश्रय. १४ दाहहेतुः.

तस्मिन्नेव चान्तरे तत्संधुक्षणायेव प्रवर्तयन्सरसकिसलयलतालास्योपदेशदक्षं दक्षिणानिलम्, आलोलरक्तपल्लवप्रालम्बान्कम्पयन्नशोकशाखिनः, वाञ्छितमुकुलमञ्जरीभरेण नम्रयन्बालसहकारान्, उत्कोरकयन्कुरुबकैः सह बकुलतिलकचम्पकनीपान्, आपीतयन्किंकिरातैः ककुभान्, विकिरन्नतिमुक्तकामोदम्, उद्दामयन्किंशुकवनानि, निरङ्कुशयन्कामिजनमनांसि, निर्मूलयन्मानम्, अपमार्जयँल्लज्जाम्, अपाकुर्वन्कोपम्, अपनयन्ननुनयव्यवस्थाम्, व्यवस्थापयन्हठचुम्बनालिङ्गनरतस्थितिम्, समुल्लासयन्मकरध्वजरक्तध्वजानिव किंशुकानि, सकलमेव महारजतमयमिव रागमयमिव मदनमयमिवोन्मादमयमिव प्रेममयमिवोत्सवमयमिवौत्सुक्यमयमिव जनयञ्जीवलोकम्, किसलयितसकलकान्तारकाननोपवनतरुरुत्फुल्लचूतद्रुमामोदवासितदशाशान्तरो मधुमदमधुरकोकिलालापदुःखिताध्वगजनश्रुतिरनवरतमकरन्दसीकरासार-

---

तस्मिन्नेव चान्तरे विचाले तस्य संधुक्षणायेव तदुद्दीपनायेव सुरभिमासो वसन्तः प्रावर्तत प्रवृत्तो बभूव । 'सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः । गन्धोत्पले सौरभेय्यां शल्लकीमातृभेदयोः । सुगन्धे च मनोज्ञे च वाच्यवत्सुरभि स्मृतम्' इति विश्वः । किं कुर्वन् । प्रवर्तयन्प्रवृत्तिं कारयन् । कम् । दक्षिणानिलं मलयमारुतम् । कीदृशम् । सरसानि रसोपयुक्तानि किसलयानि यासामेवंविधा लता वल्ल्यस्तासां लास्योपदेशो नृत्योपदेशस्तत्र दक्षं चतुरम् । आलोलाश्चपलाश्चञ्चला रक्तपल्लवा लोहितकिसलयास्तेषां प्रालम्बाः समूहा येषु तानशोकशाखिनः केसरवृक्षान्कम्पयन् । वाञ्छिते मुकुलमञ्जर्यौ कुड्मलवल्लर्यौ तयोर्भरेण बालसहकारान्नवीनचूतान्नम्रयन्नम्रतां नयन् । कुरवकैर्वृक्षविशेषैः सह बकुलः केसरः, तिलको वृक्षविशेषः, चम्पको हेमपुष्पकः, नीपः कदम्बः, एतानुत्प्राबल्येन कोरकयन्कलिकामुत्पादयन् । 'कलिका कोरकः पुमान्' इत्यमरः । किंकिरातैः कुरण्टकैः सह ककुभानर्जुनवृक्षानापीतयन्पीतान्कुर्वन् । 'ककुभो वीणाप्रसवे रागभेदेऽर्जुनद्रुमे' इत्यनेकार्थः । अतिमुक्तकस्य माधवीलताया आमोदं परागं विकिरन्विक्षिपन् । किंशुका ब्रह्मपादपास्तेषां वनान्युद्दामयन्नुत्कटयन् । कामिनो जनास्तेषां मनांसि चेतांसि निरङ्कुशयन्नुच्छृङ्खलयन् । मानं गर्वं निर्मूलयन्नुन्मूलयन्नुत्पाटयन् । लज्जां त्रपामपमार्जयन्स्फोटयन् । कोपं क्रोधम् । अर्थात् कामिजनकृतम् । अपाकुर्वन्दूरीकुर्वन्निराकुर्वन् । अनुनयव्यवस्थां प्रणिपातमर्यादामपनयन्निराकुर्वन् । हठेन बलेन चुम्बनमास्यलेहनम्, आलिङ्गनमुपगूहनम्, रतिः संभोगः, एतासां स्थितिं मर्यादां व्यवस्थापयन्व्यवस्थां कुर्वन् । मकरध्वजस्य कामस्य रक्तध्वजानिव किंशुकानि किंशुकपुष्पाण्यरुणवैजयन्त्य इव समुल्लासयन्प्रकाशयन् । महारजतमयमिव सुवर्णमयमिव, रागमयमिवानुरागमयमिव मदनमयमिव कंदर्पमयमिव, उन्मादमयमिव चित्तविप्लवमयमिव, प्रेममयमिव स्नेहमयमिव, उत्सवमयमिव महोमयमिव, औत्सुक्यमयमिव रणरणकमयमिव, एवंविधं सकलमेव समग्रमेव जीवलोकं विष्टपं जनयन्विदधन् । किसलयिताः संजातकिसलयाः सकलाः समग्राः कान्तारकाननोपवनतरवो येन सः । तत्र कान्तारं शून्याटवी काननं निर्मानुषं वनमुपवनं नगरसमीपवर्तिवनम् । उत्फुल्लाः प्रफुल्ला ये चूतद्रुमा आम्रवृक्षास्तेषामामोदः परिमलस्तेन वासितं सुरभीकृतं दशदिशामन्तरं विचालं येन सः । मधुनो यो मदस्तेन मधुरो मिष्टो यः कोकिलालापस्तेन दुःखिता अध्वगजनाः पान्थजनास्तेषां श्रुतिः श्रवणं

टिप्प०—1 कामानलस्य । 2 भ्रष्टः पाठः । 'विकसितमुकुलमञ्जरीभरेण' इत्येव । 3 वसन्ते हि मानशैथिल्ये सति अनुनय(मानमोचन)व्यवस्था क्रियते, न त्वपनीयते । अतएव—'उपनयन्ननुनयव्यवस्थाम् (अविनीतचेष्टाम्)' इति पाठः । 4 उत्सववाचको 'मह'शब्द एव दृष्टः । 5 दुःखिता अध्वगजनानां कर्णा यत्र ।

पाठा०—१ तत्क्षणमेव. २ प्रलम्बान्. ३ स्तबकयन्. ४ विकसित. ५ आनम्रयन्; आनमयन्. ६ आपातयन्. ७ ककुभः. ८ उपनयन्. ९ उपस्थापयन्; आस्थापयन्. १० हृढ. ११ रक्तध्वजांशुकानि; रक्तांशुकानि. १२ रतिमयमिवोत्सवमयमिव दानमयमिव प्रेममयमिव कलिमयमिवौत्सुक्य. १३ मधुकर. १४ उल्लाप.

दुर्दिनोन्मादितसकलजीवलोकहृदयो मदाकुलभ्रमद्भ्रमरझंकारकातरितविरहातुरमनोवृत्तिरात्मसंभवैकोल्लासकारी भरात्प्रावर्तत सुरभिमासः ।

येन च कुसुमधन्वनः परमास्त्रेण मधुना पर्याकुलितहृदया कादम्बरी, संप्राप्ते भगवतः कामदेवस्य महे, महता प्रयत्नेन कथंकथमप्यतिवाहितदिवसा, श्यामायमानदशदिशि सायाह्ने स्नात्वा, निर्वर्तितकामदेवपूजा तस्य पुरश्चन्द्रापीडमतिसुरभिशीतलैः स्नापयित्वाम्भोभिरा चरणाद्विलिप्य मृगमदामोदिना हरिचन्दनेन, सुरभिकुसुमस्रग्भिरुद्ग्रथितं कुन्तलकलापं कृत्वा, एककर्णार्पितसत्किसलयाशोकस्तबककर्णपूरं कर्पूरकुसुमप्रचुरैः प्रसाध्याभरणविशेषैः, विस्मृतनिमेषा पिबन्तीव भावार्द्रया दृशा सुचिरमालोक्य, उत्कण्ठानिर्भरा, पुनःपुनर्निश्वस्योत्कम्पमाना साध्वसेन स्विन्नसर्वाङ्गी, समुत्कण्टकिततनूरुच्छुष्यदधरवदना महाश्वेतावलोकनभयान्मुहुर्मुहुर्दिक्षु विक्षिप्तोच्चकितदृष्टिः, अतिचिरमिवोपसृत्य, पुनःपुनः स्थित्वाविष्टेव परं-

---

यस्मिन्सः । अनवरतं निरन्तरं यो मकरन्दसीकरासारो मकरन्दवातास्तबिन्दुवेगवद्वृष्टिस्तदेव दुर्दिनं मेघजं तमस्तेनोन्मादितान्युन्मादं प्रापितानि सकलजीवलोकहृदयानि येन सः, मदाकुला ये भ्रमन्तो भ्रमराः शिलीमुखास्तेषां झंकारा झंकृतयस्तैः कातरिता कातरीकृता विरहातुरजनानां मनोवृत्तिर्येन सः । आत्मसंभवस्य कामस्यैकोऽद्वितीय उल्लासकारी प्रकाशकारी सुरभिमासः प्रावर्ततेत्यन्वयस्तु प्रागुक्त एव ।

येन कुसुमधन्वनः कंदर्पस्य परमास्त्रेणात्युत्कृष्टशस्त्रेण मधुना वसन्तेन पर्याकुलितहृदया व्याकुलितचित्ता कादंम्बरी भगवतः कामदेवस्य महे उत्सवे संप्राप्ते समागते सति महता प्रयत्नेनोद्यमेन कथंकथमपि महता कष्टेनातिवाहितदिवसा अतिक्रान्तवासरा । श्यामायमानाः कृष्णायमानाः दशदिशो यस्मिन्नेवंभूते सायाह्ने संध्यायां स्नात्वा स्नानं कृत्वा निर्वर्तिता विहिता कामदेवस्य पूजार्चा यया सा, तस्य कामदेवस्य पुरोऽग्रे चन्द्रापीडमतिसुरभिशीतलैरतिसुगन्धिशिशिरैरम्भोभिः पानीयैः स्नापयित्वा स्नानं कारयित्वा, चरणाच्चरणावभिव्याप्य मृगमदः कस्तूरिका तस्या आमोदः परिमलो विद्यते यस्मिन्नेवंभूतेन हरिचन्दनेन विलिप्य विलेपनं कृत्वा । 'हरिचन्दनमाख्यातं गोशीर्षे सुरपादपे । ज्योत्स्नायां कुङ्कमे च' इति विश्वः । सुरभीणि यानि कुसुमानि तेषां स्रग्भिर्मालाभिरुद्ग्रथित उद्बद्धः कुन्तलकलापः केशसमूहो यस्य स तं कृत्वा विधायैककर्णेऽर्पितो न्यस्तः सन्ति शोभनानि किसलयानि यस्मिन्नेवंभूतोऽशोकस्तबकः कङ्केलिगुच्छकः स एव कर्णपूरो यस्य स तम् । कर्पूरकुसुमप्रचुरैराभरणविशेषैः प्रसाध्य प्रसाधनं कृत्वा विस्मृतनिमेषा त्यक्तनिमेषोन्मेषा पिबन्तीव । अत्यादरेणावलोकनं पानमुच्यते । भावेन चित्तसमुद्भवेनार्द्रया सजलया दृशा सुचिरं बहुकालं चिरकालमालोक्य निरीक्ष्योत्कण्ठाया निर्भरोऽतिशयो यस्यां सा । पुनःपुनर्निश्वस्य निश्वासं मुक्त्वोत्प्रावल्येन कम्पमानातिवेपमाना साध्वसेन भयेन स्विन्नं प्रस्विन्नं सर्वाङ्गं यस्याः सा । समुत्कण्टकिता तनूः शरीरं यस्याः सा । उच्छुष्यन्ती शोषं प्राप्यमाणेऽधरा वदने दन्तच्छदमुखे यस्याः सा । महाश्वेताया अवलोकनं तस्माद्भयं भीतिस्तस्मान्मुहुर्मुहुर्वारंवारं दिक्षु विक्षिप्तप्रेरितोच्चकितोत्त्रस्ता दृष्टिर्यया सा । अतिचिरमिव बहुकालमिवोपसृत्य समीपमागत्य पुनःपुनः स्थित्वावस्थानं

---

टिप्प०—1 उच्छुष्यन्नधरो यस्मिन्नीदृशं वदनं यस्याः सा, इति बहुव्रीहिगर्भो बहुव्रीहिः । अन्यथा वदनस्य शोष एवाधरस्यापि शोषो निरूपितो भवेत्, अधरस्य वदनान्तर्गतत्वात् ।

---

पाठा०—१ भ्रमयन्. २ चकित. ३ महोत्सवे. ४ निर्वर्तित. ५ कृत्वैव कर्णा. ६ आरोपित. ७ प्रसरत्किसलय; सकिसलय. ८ दृष्ट्या. ९ तनुः. १० परवतीव.

वती, परित्याजिता बलाल्लज्जया सहाबलाजनसहजां भीतिं भगवता भुवनत्रयोन्मादकारिणा मन्मथेन, आत्मानमपारयन्ती संधारयितुमेकान्ते निःसहा सहसा तमभिपद्य मुकुलित[4]नयनपङ्कजा जीवन्तमिव निर्भरं कण्ठे जग्राह ।

चन्द्रापीडस्य तु तेनामृतसेकाह्लादिना कादम्बरीकण्ठग्रहेण सद्यः सुदूरगतमपि कण्ठस्थानं पुनर्जीवितं प्रत्यपद्यत । दिव[2]सक्लमामीलितं कुमुदमिव शरज्ज्योत्स्नानिपातादुच्छ्वसितमा[3] बन्धनाद्धृदयम् । उषःपरामृष्टेन्दीवरमुकुललीलयोदमीलत्कर्णान्तायतं चक्षुः । अम्भोरुहविभ्रमेण वाजृम्भत वदनम् । एवं च सुप्तप्रतिबुद्ध इव प्रत्यापन्नसर्वाङ्गचेष्टश्चन्द्रापीडस्तथा कण्ठलग्नां कादम्बरीं चिरविरहदुर्बलाभ्यां दोर्भ्यां गाढतरं कण्ठे गृहीत्वा, वाताहतां बालकदलीमिव भयोत्कम्पमानाङ्गयष्टिम्, उद्गाढतरामीलिताक्षीं वक्षस्येव प्रवेष्टुमीहमानाम्, न मोक्तुं न ग्रही-

---

कृत्वाविष्टा भूतग्रस्तेव । परवती परायत्ता बलाद्धठाल्लज्जया त्रपया परित्याजिता परि[1]त्यक्ता अबलाजनः स्त्रीजनस्तस्य सहजां सहोत्पन्नां भीतिं भगवता माहात्म्यवता भुवनत्रयस्योन्मादकारिणा चित्तविप्लवजनकेन मन्मथेन कंदर्पेणात्मानं संधारयितुं धारणां कर्तुमपारयन्त्यसमर्था एकान्ते विजने निःसहा परिश्रान्ता सहसा एकपदे तमभिपद्य गत्वा मुकुलिते संकुचिते नयनपङ्कजे यस्याः सा । जीवन्तमिव श्वसन्तमिव निर्भरं यथा स्यात्तथा कण्ठे निगरणे जग्राह गृहीतवती ।

चन्द्रापीडस्य तु तेनामृतस्य सेकः सिञ्चनं तद्वदाह्लादिना प्रमोदजनकेनैवंविधेन कादम्बरीकण्ठग्रहेण सद्यस्तत्कालं सुदूरगतमपि दविष्ठदेशप्राप्तमपि जीवितं प्राणितं पुनः कण्ठस्थानं निगरणदेशं प्रत्यपद्यत स्वीचक्रे । दिवसक्लमं वासरसंबन्धिश्रमस्तेनामीलितं संकुचितं शरत्कालीना या ज्योत्स्ना चन्द्रिका तस्या निपातात्पतनादाबन्धना[2]दावृन्तात्कुमुदमिव कैरवमिवोच्छ्वसितमुल्लसितं हृदयं भुजान्तरम् । उषसा प्रत्यूषेण परामृष्टं कृतस्पर्शं यदिन्दीवरमुकुलं नीलसरोजकुड्मलं तस्य लीलयेवेति लुप्तोपमा । कर्णं यावदायतं विस्तीर्णं चक्षुः । जात्येकवचनम् । उदमीलद्विकस्वरं बभूव । 'व्युष्टं विभातं प्रत्यूषं कल्यप्रत्युषसी उषः' इति हैमः । अम्भोरुहं कमलं तस्य विभ्रमेण विलासेनेव अत्र वाशब्द इवार्थे । वदनमजृम्भत विकसितमभूत् । एवं चादौ सुप्तः पश्चात्प्रतिबुद्धो जागरित इव प्रत्यापन्ना सर्वाङ्गचेष्टा येनैवंभूतश्चन्द्रापीडस्तथा तेन प्रकारेण कण्ठलग्नां कादम्बरीं चिरकालीनो यो विरहस्तेन दुर्बलाभ्यां कृशाभ्यां दोर्भ्यां भुजाभ्यां गाढतरं कण्ठे गृहीत्वा, वाताहतां समीरान्दोलितां बालकदलीमिव भयेनोत्कम्पमाना वेपमानाङ्गयष्टिर्यस्याः सा[3] । उत्प्राबल्येन गाढतरं दृढतरमामीलिते संकोचिते अक्षिणी यया सा । वक्षसि भुजान्तरे प्रवेष्टुं प्रवेशं कर्तुमीहमाना स्पृहयमाना न मोक्तुं न ग्रहीतुमादातुमात्मना स्वेनापारयन्तीमप्रभवतीं श्रोत्रे कर्णे हृदयं भुजान्तरं ताभ्यां गृह्यत

---

टिप्प०—1 प्रमादोयम् । मन्मथेन लज्जया सह अबलाजनसहजां भीतिं बलात् परित्याजिता [ कादम्बरीकर्तृके भीतिकर्मकपरित्यागे मन्मथः प्रयोजकः कर्ता, मन्मथः कादम्बरीद्वारा भीतिं परित्याजितवान्, इति तात्पर्यम् ], अत एव आत्मानं संधारयितुमपारयन्ती । 2 वस्तुतस्तु–'उच्छ्वसितमाबबन्ध हृदयम्' इति पाठः । हृदयम् ( कर्तृ ) शरज्ज्योत्स्नाऽभिपातात्कुमुदमिव, उच्छ्वासं निश्वासम् आबबन्ध तत्याज । 3 पुनर्भ्रान्तष्टीकाकारः । वेपमाना अङ्गयष्टिर्यस्यास्ताम्, आमीलिते आक्षिणी यया ताम्, प्रवेष्टुम् ईहमानाम्, चन्द्रापीडं न मोक्तुम् ( उत्कण्ठावशात् ), न च ग्रहीतुम् ( लज्जावशात् ) आत्मना स्वेन पारयन्तीम्, इति सर्वत्र द्वितीया ।

---

पाठा०—१ लोचन. २ दिवसनिमीलितम्; दिवसक्लमनिमीलित. ३ आ निबन्धनात्; आबध्नन्. ४ लोचनाभ्यां पिबन्निव.

तुमात्मना पारयन्तीम्, श्रोत्रहृदयग्राहिणाऽनुभूतपूर्वेण स्वरेणानन्दयन्नवादीत्—'भीरु, परित्यज्यतां भयम् । प्रत्युज्जीवितोऽस्मि तवैवामुना कण्ठग्रहेण । त्वं खल्वमृतसंभवादप्सरसां कुलादुत्पन्ना । किं न स्मरसि तन्मे वचनमिदम् । तत्तेजोमयं वपुः स्वत एवाविनाशि विशेषतोऽमुना कादम्बरीकरस्पर्शेनाप्यायितमिति । तदेतावन्त्येव दिनानि पाणिना ते स्पृश्यमानोऽपि न यत्प्रत्युज्जीवितोऽस्मि तच्छापदोषात् । अद्य स तु मे द्वितीयवारं त्वदर्थमेवानुभूतदुःसहमदनज्वरदाहवेदनापरमदुःखस्य व्यपगतः शापः । परित्यक्ता सा मया त्वद्विरहदुःखदायिनी मानुषी शूद्रकाख्या तनुः । एषापि च तवास्यां रुचिरुत्पन्नेति त्वत्प्रीत्या प्रतिपन्ना प्रतिपालिता च । तदयं लोकश्चन्द्रलोकश्च ते द्वावप्यधुना चरणतलप्रतिबद्धौ । अपि च प्रियसख्या अपि ते महाश्वेतायाः प्रियतमो मयैव सह विगतशापः ।' इत्यभिदधत्येव चन्द्रापीडशरीरान्तरितवपुषि चन्द्रमसि, चन्द्रलोकावस्थानलग्नममृतपरिमलमेव केवलमधिकमुद्वहन्, अङ्गैरन्यतमस्तादृशेनैव वेषेण यादृशेन महाश्वेतौत्कण्ठ्योपरतः, तथैव कण्ठेनैकावलीं धार-

---

इत्येवंशीलेनानुभूतपूर्वेणाकर्णितपूर्वेण स्वरेण शब्देनानन्दयन्प्रमोदयन्नवादीदवोचत् । किं तदित्याह—**भीर्विति** । हे भीरु हे कातरे, भयं त्रासं परित्यज्यतां दूरीक्रियताम् । तवैवामुना कण्ठग्रहेणाहं प्रत्युज्जीवितः पुनर्जीवनं प्रापितोऽस्मि । खल्विति निश्चये । त्वममृतसंभवात्पीयूषोत्पन्नादप्सरसामुर्वशीप्रभृतीनां कुलादभिजनादुत्पन्ना संजाता । इदं[1] तन्मे मम वचनं किं न स्मरसि न स्मृतिगोचरीकरोषि । इदं किमित्याशयेनाह—**तदिति** । तच्चन्द्रापीडवपुस्तेजोमयं ज्योतिर्मयं स्वत एव स्वभावत एवाविनाश्यविनश्वरम् । विशेषतोऽमुना कादम्बरीकरस्पर्शेनाप्यायितं शीतलीकृतमिति । तत्तस्मात्कारणादेतावन्त्येव दिनानि ते तव पाणिना करेण स्पृश्यमानोऽप्याश्लिष्यमाणोऽपि कृतदर्शनोऽपि यन्न प्रत्युज्जीवितोऽस्मि तच्छापदोषादेवेति मन्तव्यम् । अद्य त्वस्मिन्नहनि द्वितीयवारं[2] त्वदर्थमेवानुभूतं दुःसह उत्कटो यो मदनज्वरदाहस्तस्य वेदना पीडा तस्याः परमदुःखं येनैवंभूतस्य मे मम स शापो व्यपगतो नाशं गतो दूरं गतः । त्वद्विरहदुःखदायिनी मानुषी शूद्रकाख्या तनुः सा मया परित्यक्तोज्झिता । तव भवत्या अस्यां चन्द्रापीडतनौ रुचिरुत्पन्ना । अत एषा मया प्रतिपन्नाङ्गीकृता प्रतिपालिता च रक्षिता च । तदिति हेत्वर्थे । अयं लोको मर्त्यलोकश्चन्द्रलोकश्च द्वावपि लोकावधुना सांप्रतं ते तव चरणतलप्रतिबद्धौ पादतलाश्रितौ । अपि चान्यच्च ते तव प्रियसख्या वल्लभवयस्यया अपि महाश्वेतायाः प्रियतमो वल्लभो मयैव चन्द्रापीडेनैव सह विगतशापः संजात इत्यभिदधत्येव कथयत्येव चन्द्रापीडशरीरेणान्तरितं व्यवहितं वपुर्यस्य स तस्मिंश्चन्द्रमसि सति, चन्द्रलोके यदवस्थानं गतं तेन लग्नमासक्तममृतपरिमलमेव पीयूषामोदमेव केवलमधिकं[3]मुद्वहन्धारयन् । तादृशेनैव वेषेण नेपथ्येन यादृशेन वेषेण महाश्वेताया उत्कण्ठयोत्कलिकयोपरतो मृतस्तथैव पूर्वोक्तप्रकारेणैव कण्ठेन निगरणेनैकावलीमेकयष्टिकां धारय-

---

टिप्प०—1 पुनः स्खलति टीकाकारः । 'किं न स्मरसि तत् मे (चन्द्ररूपस्य) वचनम्?' 'इदं तत्तेजोमयं वपुः स्वतः' इति वाक्यविभागः । परोक्षे भूतकालिके चन्द्रवचने तदिति विशेषणस्यैव, तस्मिन् काले प्रत्यक्षं वर्तमानस्य चन्द्रेणाङ्गुल्या निर्दिश्यमानस्य वपुषः कृते तु 'तदिदम्' इति परामर्शस्यैवौचित्यात् । 2 'स तु मे द्वितीयवारम्' इत्यादिको भ्रान्तिजनकः पाठो नास्त्येव । 'अद्य तु स मे व्यपगतः शापः' इत्येव सुस्पष्टः पाठः । 3 मूले स्वयं स्वीकृतम् 'अङ्गैः' 'अन्यतमः' इति पदद्वयं विस्मृतवान् टीकाकारः । ततश्च—'अमृतपरिमलमेव केवलमुद्वहन्नङ्गैः, अन्यतमः (भिन्नरूपः, पूर्वतोऽप्यधिकसौन्दर्यशाली) तादृशेनैव वेषेण०' इत्यादिरन्वयो व्याख्यार्थश्च बोध्यः ।

यन्, तथैवाकल्पनिःसहैरङ्गैः, तथैवापाण्डुक्षामकपोलवाहिना मुखेनाम्बरतलादवतरन्नदृश्यत कपिञ्जलकरावलम्बी पुण्डरीकः।

दृष्ट्वा च तं दूरत एवोन्मुक्तचन्द्रापीडवक्षःस्थला कादम्बरी स्वयमेव धावित्वा दत्तकण्ठग्रहा महाश्वेतां पुण्डरीकागमनमहोत्सवेन यावन्न वर्धयत्येव, तावदवतीर्य पुण्डरीकः परमोपकारिणे चन्द्रापीडवपुषे शशाङ्कायाढौकत। चन्द्रापीडस्तु तं कण्ठे गृहीत्वाब्रवीत्—'सखे पुण्डरीक, यद्यपि प्राग्जन्मसंबन्धाज्जामातासि तथाप्यनन्तरजन्माहृतसुहृत्स्नेहसद्भावेनैव मया सह वर्तितव्यं भवता' इत्येवं च वदत्येव चन्द्रापीडे चित्ररथहंसौ दिष्ट्या वर्धयितुं केयूरको हेमकूटमगमत्। मदलेखापि धावमाना निर्गत्य मृत्युंजयजपव्यग्रस्य तारापीडस्य विलासवत्याश्च पादयोः पतित्वा 'देव, देव्या सह दिष्ट्या वर्धसे। प्रत्युज्जीवितो युवराजः समं वैशम्पायनेन' इत्यानन्दनिर्भरमुच्चैर्जगाद।

राजा तु तच्छ्रुत्वा शरीरसंस्कारविरहोद्गताविरलदीर्घपरुषपलितलोमशप्रकोष्ठाभ्यां दोर्भ्यां

---

न्बिभ्रत्। तथैव पूर्वोक्तप्रकारेणैव ईषत्पाण्डू शुक्लौ क्षामौ कृशौ कपोलौ वहतीत्येवंशीलेन मुखेनाननेन कपिञ्जलकरं कपिञ्जलहस्तमवलम्बत इत्येवंशीलः पुण्डरीकोऽम्बरतलाद्व्योमतलादाकाशतलादवतरन्नवतरणं कुर्वन्नदृश्यतावालोक्यत। जनैरिति शेषः।

दूरत एव दविष्ठ एव दृष्ट्वा च निरीक्ष्य च तं पुण्डरीकमुन्मुक्तं त्यक्तं च चन्द्रापीडवक्षःस्थलं यया सैवंभूता कादम्बरी स्वयमेवात्मनैव धावित्वा धावनं कृत्वा दत्तः कण्ठग्रहो यस्या एतादृशीं महाश्वेतां पुण्डरीकस्यागमनमहोत्सवस्तेन यावन्न वर्धयत्येव वर्धापनं न करोत्येव तावत्तस्मिन्समये पुण्डरीकोऽवतीर्योत्तरणं कृत्वा परमोपकारिणे परमोपकृतिविधायिने चन्द्रापीडस्येव वपुः शरीरं यस्य स तथा तस्मै शशाङ्काय चन्द्रमसे चन्द्रायाढौकेत। चन्द्रापीडस्तु तं पुण्डरीकं कण्ठे गृहीत्वा कण्ठग्रहं कृत्वा कण्ठाश्लेषं गृहीत्वाब्रवीदवोचत्। एतदेव दर्शयन्नाह—**सखे इति**। हे सखे हे वयस्य पुण्डरीक, यद्यपि प्राग्जन्मसंबन्धाद्भवान्तरसंबन्धात्त्वं जामातासि। महाश्वेतायाश्चन्द्रवंशोत्पन्नत्वेन चन्द्रमसः पुत्रीत्वादस्याः पतित्वेन चास्य जामातृत्वमिति भावः। तथाप्यनन्तरजन्मनि शूद्रकभव आहृतोऽर्जितो यः सुहृत्स्नेहो मित्रप्रेम तस्य सद्भावेनैव मया सह वर्तितव्यं चलितव्यं भवता। एवं च वदति कथयति चन्द्रापीडे चित्ररथहंसौ कादम्बरीमहाश्वेतापितरौ दिष्ट्या भाग्येन वर्धयितुं वर्धापनं कर्तुं केयूरको हेमकूटमगमद्ययौ। मदलेखापि निर्गत्य धावमाना धावनं कुर्वाणा मृत्युञ्जयो महादेवस्तस्य जपो जापस्तेन व्यग्रस्य व्याकुलस्य तारापीडस्य विलासवत्याश्च पादयोश्चरणयोः पतित्वाभिवादनं कृत्वा हे देव, देव्या सह दिष्ट्या वर्धसे। समं वैशम्पायनेन युवराजः प्रत्युज्जीवित इत्यानन्दनिर्भरं यथा स्यात्तथोच्चैर्गाढस्वरेण जगादात्यर्थमवोचत्।

तच्छ्रुत्वाकर्ण्य शरीरस्य संस्कारविरहोऽधिवासनराहित्यं तेनोद्गतानि प्रादुर्भूतानि प्रकटीभूतान्यविरलानि निबिडानि दीर्घाण्यायतानि परुषाणि कठिनानि यानि पलितानि तैर्लोमशौ प्रकोष्ठौ ययोरेवंभूताभ्यां दोर्भ्यां

---

**टिप्प०**—1 सर्वत्र पर्यायशब्दोद्गिरणायोच्छलन्नपि मूकोऽत्र टीकाकारमहोदयः!! शशाङ्काय अढौकत, शशाङ्कमुपागमत् इत्यर्थः। 'गत्यर्थकर्मणी'त्यादिना कर्मणि चतुर्थी।

---

पाठा०—१ समुत्सृष्टशुकशरीरः पुण्डरीकः. २ दत्तकण्ठग्रहम्; दत्तकण्ठग्रहा.

परिष्वज्य ताम्, तदनु हर्षपरवशो विलासवतीं कण्ठेऽवलम्ब्य, [1]जराभङ्गवलिपरिशिथिलितमूलेन बाहुनोत्क्षिप्तोत्तरीयांशुकाञ्चलः, स्वयमेवाशिक्षितलयविसंष्ठुलैः पदैर्नृत्यन्निवोत्फुल्लवदननरपतिसहस्रपरिवृतोऽम्भोजाकर इव मलयमारुतप्रेङ्खोलनाविवर्तितः, मदलेखां 'कासौ कासौ' इति पुनःपुनः पृच्छन्पुनःपुनर्निर्विशेषहर्षवृत्तिं शुकनासं कण्ठे संभावयंस्तत्रैवागच्छत् । दृष्ट्वा च तथा पुण्डरीककण्ठे लग्नं चन्द्रापीडमानन्दनिर्भरः शुकनासमवादीत्—'दिष्ट्या, मया नैकाकिना तनयप्रत्युज्जीवनोत्सवसुखमनुभूतम्' इति । चन्द्रापीडस्तु तथा हर्षपरवशं पितरमालोक्य ससंभ्रमोन्मुक्तपुण्डरीकः पुरेव पृथ्वीतलनिवेशितशिराश्चरणयोरपतत् । अथ सत्वरोपसृतस्तं तथा प्रणतमुन्नमय्य तारापीडोऽभ्यधात्—'पुत्र, यद्यपि पिताहं तव [2]शापदोषात्स्वपुण्यैर्वा संजातः, तथापि जगद्वन्दनीयो लोकपालस्त्वम् । अपि च मय्यपि नमस्यो यो[3]ऽशः सोऽपि मया त्वय्येव संक्रामितः । तदुभयथापि त्वमेव नमस्कार्यः' इत्यभिदधदेव समं राजपुत्रलोकसहस्रैः प्रतीपमस्य पादयोरपतत् । विलासवती तु तथा पित्रा प्रणते तस्मिन्परितोषेण स्वाङ्गेष्विवासंमान्ती, तं पुनः शिरसि पुनर्ललाटे पुनश्च कपोलयो-

---

बाहुभ्यां तां परिष्वज्याश्लिष्य तदनु पश्चाद्धर्षपरवशः प्रमोदपरतन्त्रः कण्ठे विलासवतीमवलम्ब्यावलम्बनं कृत्वा ........................................................................ हे पुत्र हे सुत, यद्यपि शापदोषात्स्वपुण्यैर्वाहं तव पिता संजातः, तथाप्येवं सत्यपि त्वमेव जगतां वन्दनीयो नमस्कार्यः । यतो लोकपालस्त्वम् । अपि युक्त्यन्तरे । मय्यपि मयि विषयेऽपि नमस्यो योंऽशः । जात्येकवचनम् । सोऽपि मया त्वय्येव संक्रामितस्तदुभयथापि लोकपालत्वेन मदंशसंक्रमणेन च त्वमेव भवानेव नमस्कार्यो नमस्करणीय इत्यभिदधदेवेति कथयन्नेव राजपुत्रलोकसहस्रैः समं प्रतीपं विलोममस्य चन्द्रापीडस्य पादयोरपतत्पतितवान् । विलासवती तु तथा तेन प्रकारेण पित्रा तारापीडेन प्रणते नते तस्मिंश्चन्द्रापीडे परितोषेण हर्षेण स्वाङ्गेष्विवासंमान्ती प्रवेशमलभमाना । एतेन प्रमोदातिरेकः सूचितः । तं सुतं पुनः शिरस्युत्तमाङ्गे, पुनर्ललाटेऽलिके भालस्थले, पुनः

---

टिप्प०—1 टीकासापेक्षोंऽशः—जरसा भङ्गेन (अभिभवेन) या वल्यः चर्मसंकोचलहर्यः ताभिः शिथिलितं मूलं यस्य, ईदृशेन बाहुना उत्क्षिप्तः (स्कन्धोपरि निहितः) उत्तरीयाञ्चलो येन सः । उत्फुल्लनयनेन नरपतिसहस्रेण परिवृतः । न शिक्षितः (अनुवर्तितुं नाऽभ्यस्तः) यो लयः (वाद्यादिगत्या सह स्वरस्य साम्यम्) तेन विसंष्ठुलैः विषमगतिभिः पदैः (पदन्यासैः) नृत्यन्निव, अत एव मलयमारुतद्वारा या प्रेङ्खोलना (संचालनम्) तेन विवर्तितः (क्षोभं प्रापितः) अम्भोजाकर इव कमलखण्ड इव, (नृत्यन् राजा पवनतरलजलाशयस्थानीयः, उत्फुल्लानि नरपतिमुखानि कमलस्थानीयानि, इति कमलाकरसाम्यम्) । हर्षेण निर्विशेषा (अभिन्ना, समाना) वृत्तिर्यस्य ईदृशं शुकनासं पुनः पुनः कण्ठालिङ्गनेन संमानयन् । दिष्ट्या (भाग्याभिनन्दनस्यावसरः) तनयप्रत्युज्जीवनस्य सुखं न मया एकाकिना, अपि तु त्वयाप्यनुभूतम् । ससंभ्रमम् उन्मुक्तः (कण्ठग्रहात् दूरीकृतः) पुण्डरीको येन । पुरेव पूर्वमिव (उज्जयिन्यां तारापीडं पितरं मत्वा यथा प्राणंसीत्तथा) भूतलन्यस्तमस्तकः । सत्वरं शीघ्रम् उपसृतः (समीपमागतः) तारापीडः अभ्यधात् अभाषत । 2 तव शापदोषात्, अहं च स्वस्य पुण्यैः (तव पिता जातः) । 3 अहं नरपाल इति यो नमनीयत्वांशः—'अष्टानां लोकपालानां मात्राभिर्निर्मितो नृपः' इति, सोपि त्वयि संक्रमितः, राज्यं दत्तमित्यर्थः । 4 अवकाशमलभमाना, इत्यर्थ उचितः ।

---

पाठा०—१ जरामित्यारभ्य-तारापीडोऽभ्यधादित्यन्तं व्याख्यायां त्रुटितोंऽश इति ज्ञेयम्.

श्चुम्बित्वा गाढतरं सुचिरमालिलिङ्ग । उन्मुक्तश्च मात्रोपसृत्य पुनःपुनः कृतनमस्कारः शुकनासं प्रणनाम । आशीःसहस्राभिवर्धितश्च तेनात्मनोपसृत्य यथानुक्रमं पित्रोः शुकनासस्य मनोरमायाश्चैष वो वैशम्पायन इति पुण्डरीकं विनयविलक्षावनम्रवदनमदर्शयत् ।

तस्मिन्नेव च प्रस्तावे समुपसृत्य कपिञ्जलः शुकनासमवादीत्—'एवं संदिष्टमार्यस्य भगवता श्वेतकेतुना । अयं खलु पुण्डरीकः संवर्धित एव केवलं मया । आत्मजः पुनस्तव । अस्यापि भवत्स्वेव लग्नः स्नेहः । तद्वैशम्पायन एवायमित्येवमवगत्याविनयेभ्यो निवारणीयः । परोऽयमिति कृत्वा नोपेक्षणीयः । यच्चापगतशापोऽप्यात्मसमीपं नानीतस्तत्तवैवायम्, इति । अन्यच्चात्मानमस्मिन्नाचन्द्रकालीनायुषि स्थापयित्वा कृतार्थः । संप्रत्यस्माद्दिव्यलोकादप्युपरिष्टाद्गन्तुमुद्यतं मे सत्त्वाख्यं ज्योतिः' इति । शुकनासस्तु विनयावनतं पुण्डरीकं पाणिनांऽसेऽवलम्ब्य कपिञ्जलं प्रत्यवादीत्—'कपिञ्जल, सकलजगदाशयज्ञेन सता भगवता किमित्यादिष्टम् । सर्वथा स्नेहस्यायमसंतोषः' इति ।

एवंविधैश्च पूर्वजन्मवृत्तान्तानुस्मरणालापैः परस्परावलोकनसुखोत्फुल्ललोचनानां सर्वेषा-

---

कपोलयोर्गल्लातपरप्रदेशयोश्चुम्बित्वा चुम्बनं कृत्वा गाढतरमतिदृढं सुचिरं बहुकालमालिलिङ्ग । आलिङ्ग्य उन्मुक्तश्च मात्रा विलासवत्या, उपसृत्य समीपे गत्वा पुनः पुनः कृतनमस्कारो विहितनमस्कृतिः शुकनासं प्रणनाम नमस्कृतिं चक्रे । तेन शुकनासेनाशीःसहस्रैर्माङ्गल्याभिवादनसहस्रैरभिवर्धितोऽभिनन्दितश्चात्मना स्वयमुपसृत्योपसरणं कृत्वा यथानुक्रमं यथाक्रमं पित्रोः शुकनासस्य मनोरमायाश्चैष वो युष्माकं वैशम्पायन इति पुण्डरीकं विनयेन विलक्षं विस्मयान्वितम् । 'विलक्षो विस्मयान्विते' इत्यमरः । अवनम्रमवनतं वदनं यस्य स तमदर्शयद्दर्शयामास ।

तस्मिन्नेव प्रस्तावे समये समुपसृत्य पार्श्वे समागत्य कपिञ्जलः शुकनासमवादीदवोचत् । आर्यस्य भवतः श्वेतकेतुना भगवतैव संदिष्टं कथितं वर्तते । खल्विति निश्चये । अयं पुण्डरीकः केवलं मया संवर्धित एव वृद्धिं प्रापित एव । आत्मजः पुत्रः पुनःपुनस्तव भवतः । अस्यापि पुण्डरीकस्यापि भवत्स्वेव स्नेहो लग्नः संबद्धः । तदिति हेत्वर्थे । वैशम्पायन एवायं पुण्डरीक इत्येवमवगत्य ज्ञात्वाऽविनयेभ्यो निवारणीयो दूरीकार्यः । अयं परोऽन्य इति ज्ञात्वा नोपेक्षणीयो नोपेक्षाविषयीकर्तव्यः । यच्चापगतशापोऽप्यात्मसमीपं स्वसविधं नानीतो न प्रापितस्तस्मात्तवैव भवदीय एवायमिति । अन्यच्च चन्द्रकालश्चन्द्रापीडावस्थानलक्षणस्तत्र भवमायुस्तस्मिन् । 'आत्मा वै जायते पुत्रः' इति श्रुतेः । आत्मानं पुत्रं स्थापयित्वा यावत्कालं चन्द्रापीडः स्थास्यति तावत्कालमयमिति भावः । अत एव कृतार्थः कृतकृत्यः । संप्रतीदानीमस्माद्दिव्यलोकादप्युपरिष्टाद्गन्तुं मे मम सत्त्वाख्यं ज्योतिरुद्यतं कृतप्रयत्नमिति । शुकनासस्तु सुष्ठु विनयादवनतं नम्रीभूतं पुण्डरीकं पाणिना हस्तेनांसे स्कन्धेऽवलम्ब्य कपिञ्जलं प्रत्यवादीत्प्रत्यवोचत् । तदेव दर्शयन्नाह—**कपिञ्जलेति** । हे कपिञ्जल, सकलजगतः समग्रविश्वस्याशयज्ञेनाभिप्रायवेदिना सता भगवता पूज्येन किमित्यादिष्टं कथितम् । सर्वथा स्नेहस्यायं पुण्डरीकोऽसंतोषोऽधृतिस्थानम् । कदाचिदस्मिन्स्नेहो न निवर्तित इति भावः ।

इत्येवंविधैश्च पूर्वजन्मवृत्तान्तस्य भवान्तरोदन्तस्यानुस्मरणानि तेषामालापैः संभाषणैः परस्परमन्योन्यमवलोकनं वीक्षणं तस्य सुखं तेनोत्फुल्ललोचनानां संफुल्लनेत्राणाम् । 'प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः' इत्यमरः ।

---

**टिप्प०**—1 आशीर्वचनसहस्रैः । 2 आचन्द्रकालिकम् आयुर्यस्य ईदृशे अस्मिन् ( पुण्डरीके ) आत्मानं निजस्वरूपम् ( निजतत्त्वम् ) स्थापयित्वा, इत्यर्थः । 3 स्नेहस्य अपरितृप्तिः । सर्वज्ञतया ममाशयं जानतापि महर्षिणा यदेतत्संदिष्टं तत् केवलमस्मासु स्नेहप्रकटनमिति भावः ।

---

**पाठा०**—१ सविनयवैलक्ष्य. २ एव. ३ आचन्द्रसमकालीनायुषि. ४ असत्. ५ संसरण.

मेव तेषामचेतितैव सा क्षणदा प्रयाता । प्रातरेव च सकलगन्धर्वलोकानुगतौ सममेचिरा-गौरीभ्यां चित्ररथहंसौ गन्धर्वराजावपि तत्रैवाजग्मतुः । आगतयोश्च तयोर्लज्जितात्मजोपगमसमुदितहृदययोर्जामातृदर्शनसमुत्फुल्लनयनयोस्तारापीडशुकनासाभ्यां सहानुभूतसंबन्धकोचितसंवादकथयोः सहस्रगुण इव महोत्सवः प्रावर्तत ।

अथ प्रवर्तमान एव तस्मिंश्चित्ररथस्तारापीडमवादीत्—'विद्यमाने स्वभवने किमर्थमयमरण्ये महोत्सवः क्रियते ? अपि च यद्यप्यस्माकमयमेव परस्पराभिरुचिनिष्पन्नो धर्म्यो विवाहस्तथापि लोकसंव्यवहारोऽनुवर्तनीय एव । तद्गम्यतां तावदस्मदीयमवस्थानम् । ततः स्वभूमिं चन्द्रलोकं वा गमिष्यथ ।' तारापीडस्तु तं प्रत्यवादीत्—'गन्धर्वराज, यत्रैव निरतिशयं संपत्सुखं तदेव वनमपि भवनम् । तदीदृशं कापरत्र संपत्सुखं प्राप्तम् ? अन्यच्च संप्रति सर्वगृहाण्येव[3] मया जामातरि ते संक्रामितानि । तद्वयस्य, वधूसमेतं तमेवादाय गम्यतां गृहसुखानुभवनाय' इति । चित्ररथस्तु तथाभिहितः 'राजर्षे,[4] यथा ते रोचते' इत्युक्त्वा चन्द्रापीडमादाय हेमकूटमगात् । गत्वा च चित्ररथः कादम्बर्या सह समग्रमेव स्वं राज्यं चन्द्रापीडाय न्यवेदयत् । पुण्डरीकायापि समं महाश्वेतया निजपदं हंसो न्यवेदयत् । तौ तु हृदयरुचितवधूलम्भमात्रकेणैव कृतार्थौ न किंचिदप्यपरं प्रत्यपद्येताम् ।

---

सर्वेषामेव तेषामचेतितैवाज्ञातैव सा क्षणदा रात्रिः प्रयाता गता । प्रातरेव च प्रत्यूषे च सकलगन्धर्वलोकैः समप्रदेवगायनजनैरनुगतौ सहितावचिरागौरीभ्यां महाश्वेताकादम्बरीजननीभ्यां समं चित्ररथहंसौ कादम्बरीमहाश्वेतापितरौ गन्धर्वराजौ गन्धर्वनायकावपि तत्रैवाजग्मतुराययतुः । आगतयोश्च तयोर्लज्जिते त्रपिते ये आत्मजे पुत्र्यौ तयोरुपगमः प्राप्तिस्तेन मुदितं हर्षितं हृदयं ययोस्तौ तयोर्जामातृदर्शनेन दुहितुः पत्यवलोकनेन समुत्फुल्ले विकसिते नयने ययोस्तौ तयोः । क्वचित् 'वदनयोः' इति पाठः । तारापीडशुकनासाभ्यां सहानुभूतः संजातो यः संबन्धकस्तस्योचिता योग्याः संवादकथा ययोस्तौ तयोः सहस्रगुण इव महोत्सवः प्रावर्तत प्रवृत्तोऽभूत् ।

**अथेति** । तदनन्तरं प्रवर्तमाने संजायमान एव तस्मिन्महोत्सवे चित्ररथस्तारापीडमवादीदब्रवीत् । तदेवाह—**विद्यमान इति** । स्वभवने स्वकीयसद्मनि विद्यमाने वर्तमानेऽयं महोत्सवः किमर्थं किंप्रयोजनमरण्ये क्रियतेऽटव्यां विधीयते । अपि च प्रकारान्तरे । यद्यप्यस्माकमयमेव परस्परमन्योन्यं याऽभिरुचिरभिलाषस्तया निष्पन्नो धर्म्यो विवाहस्तथापि लोकसंव्यवहारोऽनुवर्तनीय एव रक्षणीय एव । तदस्मदीयमास्माकीनमवस्थानमास्पदं तावद्गम्यताम् । ततस्तदनन्तरं स्वभूमिं चन्द्रलोकं वा गमिष्यथ यास्यथ । तारापीडस्तु तं चित्ररथं प्रत्यवादीत्प्रत्यवोचत् । हे गन्धर्वराज, यत्रैव निरतिशयमधिकं संपत्सुखं तदेव वनमपि भवनं गृहम् । तदीदृशमपरत्रान्यत्र क्व कुत्र मया संपत्सुखं प्राप्तं लब्धम् । अन्यच्च संप्रतीदानीं सर्वगृहाण्येव मया ते तव जामातरि दुहितुः पत्यौ संक्रामितानि संकल्पितानि । तत्तस्माद्धेतोर्हे वयस्य हे मित्र, वधूसमेतं तमेव वरमेवादाय गृहीत्वा गृहसुखस्यानुभवनं साक्षात्करणं तस्मै गम्यतां व्रज्यताम् । चित्ररथस्तु तथाभिहितस्तेन प्रकारेणोक्तः राजर्षे, यथा ते तुभ्यं रोचते इत्युक्त्वा चन्द्रापीडमादाय हेमकूटमगाद्ययौ । गत्वा च चित्ररथः कादम्बर्या सह समग्रमेव सकलमेव स्वमात्मीयं राज्यं चन्द्रापीडाय न्यवेदयन्निवेदितवान् । पुण्डरीकायापि महाश्वेतया समं निजपदं हंसो न्यवेदयत् । तौ तु चन्द्रापीडपुण्डरीकौ तु हृदये चित्ते रुचिते ईप्सिते ये वध्वौ तयोर्लम्भमात्रकेणैव प्राप्तिमात्रकेणैव कृतार्थौ कृतकृत्यौ न किंचिदप्यपरमन्यत्प्रत्यपद्येतां स्वीकुर्वाताम् ।

---

टिप्प०—1 स्वयं 'मदिरा' इति नाम पूर्वं लिखितवानप्येवमाह । धन्यः !

---

पाठा०—१ प्रभाता. २ मदिरा. ३ सर्वगृहसुखान्येव. ४ राजर्षिणा.

अन्यदा जन्माभिवाञ्छितहृदयवल्लभलाभमुदितसर्वस्वजनमध्योपगमननिर्वृतापि[1] काद-म्बरी वाष्पोत्तरललोचना विषण्णमुखी वासभवनागतं चन्द्रापीडमूर्तिं चन्द्रमसमप्राक्षीत्—'आर्यपुत्र, सर्वे खलु वयं[2] मृताः सन्तः प्रत्युज्जीविताः परस्परं संघटिताश्च । सा पुनर्वराकी पत्रलेखास्माकं मध्ये न दृश्यते । न विद्मः किं तस्याः केवलाया वृत्तम् ?' इति । चन्द्रापीडमूर्तिः प्रीतान्तरात्मा[3] तां प्रत्यवादीत्—"प्रिये, कुतोऽत्र सा हि खलु मद्दुःखदुःखिनी[4] रोहिणी शप्तं मामुपश्रुत्य 'कथं त्वमेकाकी मर्त्यलोकनिवासदुःखमनुभवसि'—इत्यभिधाय निवार्यमाणापि मया प्रथमतरमेव[5] मच्चरणपरिचर्यायै मर्त्यलोके जन्माग्रहीत् । इतश्च[6] जन्मान्तरं गच्छता मया मदुपरमसममुन्मुक्तशरीरा पुनरपि मर्त्यलोकमवतरन्ती बलादावर्ज्यात्मलोकं[7][8] विसर्जिता तत्र पुनस्तां द्रक्ष्यसि" इति । कादम्बरी तु तच्छ्रुत्वा रोहिण्यास्तदोदारतया[9] स्नेह-लतया महानुभावतया संपतिव्रततया[10] पेशलतया च विस्मितहृदया परं लज्जिता न किंचि-दपि वक्तुं शशाक ।

अत्रान्तरे जन्मद्वयाकाङ्क्षितं कालं[11] प्रभोश्चन्द्रमसः कादम्बरीसंभोगसुखमिवोपपादयितुम-

---

अन्यदान्यस्मिन्काले जन्मन्यभिवाञ्छितो यो हृदयवल्लभलाभस्तेन मुदिता हर्षिताः सर्वे ये स्वजनाः कुटु-म्बिनस्तेषां मध्योपगमनं मध्ये समागमनं तेन निर्वृतापि सुखं प्राप्तापि च कादम्बरी बाष्पेणाश्रुणोत्प्राबल्येन तरले चञ्चले लोचने यस्याः सा । विषण्णं खेदाकुलं मुखं यस्याः सा । वासभवनागतं वसतिसद्मागतं चन्द्रापीड-मूर्तिं चन्द्रापीडशरीरं चन्द्रमसं शशाङ्कमप्राक्षीत्प्रश्नं कृतवती । इतियोत्यमाह—**आर्येति** । हे आर्यपुत्र, सर्वे खलु वयं मृताः सन्तः प्रत्युज्जीविताः परस्परमन्योन्यं संघट्टिताः मिलिताश्च । सा पुनर्वराकी तपस्विनी पत्रलेखै-कास्माकं मध्ये न दृश्यते न दृग्गोचरीक्रियते । न विद्मो न जानीमस्तस्याः केवलाया एकाकिन्याः किं वृत्तं किं जातम् । चन्द्रापीडमूर्तिः प्रीतान्तरात्मा संतुष्टात्मा तां कादम्बरीं प्रत्यवादीत्प्रत्यवोचत्—हे वल्लभे, अत्र सा पत्रलेखा कुतः स्यात् । हि यस्मात्कारणात् । खल्विति निश्चये । मम दुःखेन दुःखिनी एवंविधा रोहिणी ब्राह्मी शप्तं शापग्रस्तं मामुपश्रुत्याकर्ण्य कथं त्वमेकाक्यसहायो मर्त्यलोकनिवासदुःखं मनुष्यनिवसनकष्टमनुभवस्यनुभव-विषयीकरोषीत्यभिधायेत्युक्त्वा निवार्यमाणापि प्रतिषिध्यमानापि मया चन्द्रमसा प्रथमतरमेवादावेव मम चन्द्र-मसश्चरणपरिचर्यायै पादसेवायै मर्त्यलोके मनुष्यक्षेत्रे जन्माग्रहीत् । इतश्च जन्मान्तरं भवान्तरं गच्छता व्रजता मया चन्द्रमसा मदुपरमेण सममुन्मुक्तं शरीरं यया सा पुनरपि द्वितीयवारमपि मर्त्यलोकमवतरन्त्यवतारं गृह्णन्ती बलाद्धठादावर्ज्यावर्जनां कृत्वात्मलोकं चन्द्रलोकं विसर्जिता । प्रेषितेत्यर्थः । तत्र संप्रति पुनस्तां द्रक्ष्यसि विलोकयिष्यसीति । कादम्बरी तु तच्छ्रुत्वा तदाकर्ण्य रोहिण्यास्तदोदारतया स्नेहलतया वत्सलतया महानुभाव-तया महाप्रभावतया सपतिव्रततया एकपतितया पेशलतया सहृदयतया च विस्मितहृदया चमत्कृतचित्ता परम-त्यन्तं लज्जिता लज्जां प्राप्ता न किंचिदपि वक्तुं कथयितुं शशाक समर्था बभूव ।

अत्रान्तरेऽस्मिन्समये जन्मद्वयाकाङ्क्षितं भवान्तरद्वयाभिलषितं कालं प्रभोश्चन्द्रमसः कादम्बरीसंभोगसुखमि-

---

**टिप्प०**—1 हृदयवल्लभलाभः कादम्बर्यां न तु सर्वेषाम् । अतएव—'जन्माभिवाञ्छितहृदयवल्लभ-लाभमुदिता सर्व-स्वजनमध्योपगमननिर्वृतापि' इत्येव पाठः । 2 संभोगसुखमुपपादयितुमिव वासरः अप-ससार, तर्हि 'कालम्' किं कर्तुम् ? तस्मात् 'कालप्रभोः' इत्येव पाठः । कालप्रभोः कालनियन्तुश्चन्द्रमसः जन्मद्वयाकाङ्क्षितं कादम्बरीसंभोगसुखमुपपादयितुमिव वासरोऽपससारेत्यन्वयः ।

---

**पाठा०**—१ उपयमन. २ वयं खलु. ३ अर्दित. ४ दुःखिता. ५ प्रथमम्. ६ दिवश्च. ७ आतर्ज्य. ८ अमरलो-कम्. ९ तया; तथा. १० सपतिव्रतया; पातिव्रततया. ११ कालप्रभोः.

पससार वासरः। अनुरागपताकेवोल्लसदपरसंध्यावधूत्रपावरणायेव वितस्तार वासतेयी। चन्द्रोदयाभिरामं च समग्रमेव जगदभवत्। एवं च भरेणावतीर्णायां रजन्यां चन्द्रापीडश्चिराभिलषितमुन्मीलितनयनकुवलयमुत्स्रस्तनीवीप्रसृतकरनिवारणानुबन्धमनुभूतप्रत्यालिङ्गनसुखमभिप्रार्थितसुरतपरिसमाप्तित्रपासुभगं कादम्बरीप्रथमसुरतसुखमनुभूयैकदिवसमिव दशरात्रं स्थित्वा परितुष्टहृदयाभ्यां श्वशुराभ्यां विसर्जितः पितुः पादमूलमाजगाम।

आगत्य च समकालमेवानुभूतक्लेशं राजलोकमात्मसमं कृत्वा, समारोपितराज्यभारः पुण्डरीके, परित्यक्तसर्वस्वकार्ययोः पित्रोः पादावनुचरन्, कदाचिदत्यद्भुतोत्फुल्लनयननैगमजनावलोकितो जन्मभूमिस्नेहादुज्जयिन्याम्, कदाचिद्गन्धर्वराजगौरवेणानुपमरमणीयतममहिम्नि हेमकूटे, कदाचिदमृतपरिमलाधिवाससुरभिशिशिरसर्वप्रदेशहारिणि रोहिणीबहुमाननेन चन्द्रलोके, कदाचिदहर्निशोत्फुल्लसहस्रपत्रनिवहोदवाहिनि पुण्डरीकप्रीत्या लक्ष्मीनिवाससरसि,

---

वोपपादयितुं निष्पादयितुं वासरो दिवसोऽपससारापसृतो बभूव। अनुरागस्यानुरतेः पताकेव वैजयन्तीवोल्लसन्ती यापरसंध्या पश्चिमसंध्या सैव वधूः स्त्री तस्यास्त्रपा लज्जा तस्या आवरणायाच्छादनायेव वासतेयी रात्रिर्वितस्तार प्रससार। चन्द्रोदयेन शशाङ्कप्रकाशेनाभिरामं मनोहरं च समग्रमेव सकलमेव जगदभवत्संजज्ञे। एवममुना प्रकारेण भरेण संभारेणावतीर्णायां संजातायां रजन्यां त्रियामायां चन्द्रापीडश्चिरकालं यावदभिलषितं वाञ्छितमुन्मीलितानि विकसितानि नयनकुवलयानि नेत्रोत्पलानि यत्र तत्। उत्स्रस्ता शिथिलिता श्लथीजाता या नीव्युच्चयस्तस्यां प्रसृतो विस्तृतो यः करो हस्तस्तस्य निवारणं दूरीकरणं तदेवानुबन्धः प्रतिबन्धो यत्र तदनुभूतं साक्षात्कृतं प्रत्यालिङ्गनसुखं तथा दीयमानोपगूहनसातं यस्मिंस्तत्तथा अभिप्रार्थिताभियाचिता सुरतस्य संभोगस्यापरिसमाप्तिर्यस्यामेवंविधा या त्रपा लज्जा तया सुभगं मनोहरमेतादृशं कादम्बर्याः प्रथमं सुरतस्य सुखं सातमनुभूय साक्षात्कृत्यैकदिवसमिव दशरात्रं दशदिवसं स्थित्वास्थाय परितुष्टहृदयाभ्यां संतुष्टचित्ताभ्यां श्वशुराभ्यां चित्ररथहंसाभ्यां विसर्जितो दत्ताज्ञः पितुस्तारापीडस्य पादमूलं चरणसमीपमाजगामायर्यौ।

आगत्य चागमनं कृत्वा च समकालमेवैकवारमेवानुभूतः क्लेशो दुःखं यैरेवंभूतं राजलोकं नृपजनमात्मसमं निजसदृशं स्वतुल्यं कृत्वा विधाय, पुण्डरीके समारोपितो न्यस्तो राजभार आधिपत्यधूर्येन सः। परित्यक्तमुज्झितं सर्वं स्वकार्यं सांसारिककृत्यं याभ्यां तौ माता च पिता च पितरौ। एकशेषः। तयोः पित्रोः पादौ चरणावनुचरन्सेवयन्। कदाचित्कस्मिंश्चिदवसरेऽत्यद्भुतोत्फुल्लनयना विकसितनेत्रा ये नैगमजना वणिग्जनास्तैरवलोकितो वीक्षितो जन्मभूमिस्नेहादुत्पत्तिवसुधाप्रीतेरुज्जयिन्यां विशालायाम्। कदाचित्कस्मिंश्चित्प्रस्तावे गन्धर्वराजस्य गौरवेणात्यादरेणानुपमो मनोहरो रमणीयतमोऽतिशयेन रन्तुं योग्यो महिमा माहात्म्यं यस्मिन्नेतादृशे हेमकूटे। कदाचिद्रोहिणीबहुमाननेन ब्राह्मी···कारेणामृतस्य पीयूषस्य परिमल आमोदस्तस्याधिवासेन संस्कारेण सुरभिः सुगन्धो यः शिशिरः शीतलः सर्वप्रदेशः समग्रस्थलं तेन हारिणि मनोहरे चन्द्रलोके। कदाचिदहर्निशमहोरात्रमुत्फुल्लानि विस्वराणि सहस्रपत्राणि तेषां निवहः समूहो यस्मिन्नेतादृशमुदं जलं वहतीत्येवंशीले। उदकस्योदादेशः। पुण्डरीकप्रीत्या पुण्डरीकस्नेहेन लक्ष्म्या रमाया निवाससरस्यवस्थानसरसि कासारे। क्वचित्

---

टिप्प०—1 वस्तुतस्तु—'अनुरागकवोष्णतया (अनुरागेण च अस्तकालिकलौहित्येन च, ईषदुष्णतया च ईषदविनयोन्मुखतया च) अपरसन्ध्यावधूत्रपावरणायेव वितस्तार तमोवासो वासवी।' इत्येव पाठः। सन्ध्यया सह स्नेहवशात् वासवी (प्राची) अन्धकाररूपं वसनं विस्तारितवती। अन्धकाराविर्भावेन अविनयोन्मुखायाः सन्ध्याया लज्जां निवारयामासेत्याशयः। 2 द्विवचनमुचितम्। 3 प्राप्तसुखं समृद्धियुक्तं च। 4 उदकं जलं वहतीत्येव वक्तव्यम्, पेषंवासेत्यादिना उदकस्योदादेशः।

---

पाठा०—१ उल्लास. २ वा रजनी; तमोवासो वासवी. ३ अप्रार्थित. ४ रमणीयतर; रमणीयता. ५ मोद; निवहौघ.

कादम्बरीरुच्या च सर्वत्रैवापरेष्वपि रम्यतरेषु[1] तेषु तेषु स्थानेषु तया सह जन्मद्वयाकाङ्क्षयैवापरिसमाप्तान्यपुनरुक्तानि च तानि तानि न केवलं चन्द्रमाः कादम्बर्या सह, कादम्बरी महाश्वेतया सह, महाश्वेता तु पुण्डरीकेण सह, पुण्डरीकोऽपि चन्द्रमसा सह, परस्पराबियोगेन सर्व एव सर्वकालं सुखान्यनुभवन्तः[2] परां कोटिमानन्दस्याध्यगच्छन् ॥

---

'सहस्रपत्रामोदवाहिनि' इति पाठः । कादम्बरीरुच्या च कादम्बर्याः स्पृहया चापरेष्वपीतरेष्वपि रम्यतरेष्वतिमनोहरेषु तेषु तेषु स्थानेषु प्रदेशेषु । सर्वत्रैव तया कादम्बर्या सह जन्मद्वयाकाङ्क्षयैव भवान्तरद्वयवाञ्छयैवापरिसमाप्तान्यपरिपूर्णान्यपुनरुक्तानि च कदाचिदसेवितानि । प्रतिदिननवीनानीत्यर्थः । तानि तानि च वक्तुमशक्यानि न केवलं चन्द्रमाः कादम्बर्या सह, किं तु कादम्बरी महाश्वेतया सह, महाश्वेता पुण्डरीकेण, पुण्डरीकोऽपि चन्द्रमसा सह, परस्परमन्योन्यमवियोगेनाप्रलम्भेन सर्व एव सर्वकालं समग्रसमयं सुखानि सातान्यनुभवन्तोऽनुभवविषयीकुर्वन्त आनन्दस्य प्रमोदस्य परां कोटिं परमामवस्थामध्यगच्छन्प्राप्तवन्तः ॥

**इति श्रीपादशाहश्रीअकब्बरजलालदीनसूर्यसहस्रनामाध्यापकश्रीशत्रुंजयतीर्थकरमोचनाद्यनेकसुकृतविधापकमहोपाध्यायश्रीभानुचन्द्रगणितच्छिष्याष्टोत्तरशतावधानसाधकप्रमुदितपादशाहश्रीअकब्बरप्रदत्तखुस्युहदमापराभिधानमहोपाध्यायश्रीसिद्धचन्द्रगणिविरचितायां कादम्बरीटीकायामुत्तरखण्डटीका समाप्ता ॥**

---

पाठा०—१ रम्यवनेषु तेषु तेषु. २ सुखम्; सर्वसुखानि.

कादम्बरी स्वमहसाऽन्यविजित्वरीयं
दुष्पाठपांसुनिकरैस्तिमिराऽऽवृताभूत् ।
चन्द्रद्वये[1]ऽपि मिलिते न चकास्ति कामं
कामं प्रपूरयति त'च्चषकं' बुधानाम् ॥ १ ॥

जयपुरवैभव[2]-साहित्यवैभवादीनि यत्कृतिस्तेन ।
सन्मञ्जुनाथनामश्रीमथुरानाथशास्त्रिणा व्यरचि ॥ २ ॥

तैलङ्गान्वयमञ्जुमण्डनमणि'श्रीमण्डना'[3]ऽऽस्थानभृत्
भास्वद्वंशविभूषणाऽम्बरपते[4]र्वंशक्रमादाश्रितः ।
गाथासप्तशती[5]-मुखानि कृतवान् श्रीमञ्जुनाथाऽपराभिख्योऽसौ रसनन्दनन्दकुमिते वर्षे व्यलेखीदिदम् ॥ ३ ॥

**इति श्रीजयपुरमहाराजाधिराजसंमानित–तैलङ्गभट्टान्ववायसंभूत–मञ्जुनाथोपनामक–कविशिरोमणिदेवर्षिभट्टश्रीमथुरानाथशास्त्रिसाहित्याचार्यनिर्मितं कादम्बरीचषकोत्तरार्द्धमपूर्यत ।**



---

१ प्रकृतटीकाकारद्वयम् । २ नवीनैरेव छन्दोभिर्निबद्धं भारतसुप्रसिद्धैर्विद्वद्भिः प्रशस्तमनेकचित्रमनोहरमपूर्वमिदं वैभवद्वयम्–'मथुरानाथशास्त्री, रेज़िडेन्सीरोड, जयपुर'तः प्राप्यम् । ३ टिप्पणीकर्तुः पूर्वजः, एतत्परिचयः साहित्यवैभवात्प्राप्यः । ४ आम्बेर(जयपुर)राज्याधिपतेः । ५ सटीका 'गाथासप्तशती' ('निर्णयसागर, मुम्बई'तः प्राप्या) एतत्प्रमुखानि काव्यानि ।